THE
KASHI SANSKRIT SERIES
( HARIDAS SANSKRIT GRANTHAMĀLĀ )
NO. 69.
( Kāvya Section, No. 9 )

# THE SIŚUPĀLAVADHA

By

MAHĀKAVI MĀGHA.

With two Commentaries–
THE SANDEHAVIṢAUṢADHI BY VALLABHA DEVA,
and
THE SARVAṄKAṢĀ BY MALLINĀTHA.

*Edited by*
*Sāhityopādhyāya Anantarāma S'āstrī Vetāl*
&
*Carried through the press by*
*Sāhityopādhyāya Jagannāth S'āstrī Hos'ing*

PRINTED, PUBLISHED & SOLD BY
JAI KRISHNADAS-HARIDAS GUPTA,
*The Chowkhamba Sanskrit Series Office, Vidya Vilas Press,*
*North of Gopalmandir, Benares City.*

1929.

Printed-Published & sold by
JAI KRISHNADAS-HARIDAS GUPTA,
The Chowkhamba Sanskrit Series Office,
VIDYA VILAS PRESS,
North of Gopal Mandir,
. BENARES CITY.

*Printed by Jai Krishna Das Gupta
at the Vidya Vilas Press. Benares,*

Agents:
1 Otto Harrassowitz, Leipzig:
GERMANY.
2 Arthur Probsthain,
Oriental & Foreign Bookseller,
London.
3 The Oriental Book-supplying Agency,
POONA.

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़्पुस्तकमालायाः
६९
काव्यविभागे(९)नवमं पुष्पम् ।

॥ श्रीः ॥

श्रीमन्माघकविनिर्मितं

# शिशुपालवधम्

श्रीवल्लभदेवकृतया सन्देहविषौषधिव्याख्यया
तथा
महोपाध्याय-श्रीमल्लिनाथकृतया सर्वङ्कषाव्याख्यया
समेतम् ।

साहित्योपाध्याय-वेताल-श्री-अनन्तरामशास्त्रिणा सम्पादितम् ।
तथा
साहित्योपाध्याय-होशिङ्ग-श्री-जगन्नाथशास्त्रिणा परिष्कृतम् ।

प्रकाशकः—
जयकृष्णदास—हरिदासगुप्तः—
चौखम्बा संस्कृत सीरिज आफिस, विद्याविलास प्रेस,
गोपालमंदिर के उत्तरफाटक, बनारस सिटी ।

१९८५

॥ श्रीः ॥

# भूमिका ।

## उपक्रमः ।

अथेदमिदानीं संमुद्य प्रकाशयितुं प्रस्तूयते सव्याख्यं महाकाव्यं महाकविश्रीमन्माघनिर्मितं शिशुपालवधं नाम । काव्यमिदं मल्लिनाथकृतया सर्वङ्कषाख्यया व्याख्यया सह मोहमय्यादिषु कतिधा मुद्रितम्, उपलभ्यते च साम्प्रतं तत्र तत्र । परमद्यावधि कुत्राप्यमुद्रिता मल्लिनाथात्प्राचीनेन वल्लभदेवेन निर्मिता सन्देहविषौषधिर्नाम व्याख्या मुद्रयितव्येति मनसिकृत्य श्रेष्ठिवरश्रीजयकृष्णदासमहोदयेन प्रेरितैः सोत्साहमेतत्सम्पादनादिकर्मणि प्रवृत्तमस्माभिः। तदिदं सपरिश्रमं संशोध्य सन्देहविषौषधि-सर्वङ्कषाख्येन व्याख्याद्वयेन समन्वितं महाकाव्यं साम्प्रतं ससंमदं साहित्यविद्यानुरागजुषां विदुषां पुरस्तादुपहारीक्रियते ।

## काव्यविचारः ।

तत्र पूर्वं काव्यं तावदालोचयामः- यत्किल चमत्कृतिमच्छब्दश्रवणसमनन्तरमेव सहृदयानां हृदये कमप्यनिर्वचनीयं विच्छित्तिविशेषमुन्मेषयति, तन्निगद्यते काव्यम् । यशोऽर्थसाधनं व्यवहारचातुर्यसम्पादनमनर्थोन्मूलनं काव्यं हि शब्दार्थप्रधानेभ्यः प्रभुसुहृत्संमितेभ्यो वेदपुराणादिभ्यो विलक्षणतया गुणीभूतशब्दार्थव्यापारव्यङ्ग्यमर्यादया नेत्रत्रिभागावलोकनादिभिः सरसताऽऽपादनपुरःसरं कान्तासंमितत्वेनाऽभिमुखीकृत्य सत्कार्ये प्रवर्तयति निवर्तयति चाऽसत्कार्यतः सहृदयान् । एतदेव प्रतिपादितं काव्यप्रकाशे—

> काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
> सद्यःपरनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥

इत्यनया कारिकया श्रीमन्मम्मटभट्टैः । चतुर्वर्गफलप्रापके परमानन्दसन्दोहसाधने काव्यशास्त्रे च यथा सर्व एव सहृदयाः साभिनिवेशं प्रवर्तमाना दृश्यन्ते, न तथा शास्त्रान्तरेष्विति काव्यस्योपादेयत्वं व्यक्तमेव प्रतीयते । काव्यलक्षणादिकं तु तत्र तत्र तैस्तैः प्रतिपादितं ततस्ततोऽवगन्तव्यम् ।

तदिदं काव्यं दृश्यश्रव्यरूपेण भेदद्वयेन द्विविधं व्यवस्थितम् । तत्र तावदभिनयात्मकं दृश्यं काव्यं नाटकादिभिरष्टादशभिर्भिन्नं, शाकुन्तल-रत्नावल्यादिकमिदानीमप्रकृतमस्माकमनुद्देश्यम् । गद्यात्मकं पद्यात्मकं चेति द्विविधं निगद्यते श्रव्यं काव्यम् । गद्यकाव्यं हि कादम्बर्यादिकं प्रसिद्धमेव । खण्डकाव्यं महाकाव्यं चेत्युभयविधं व्यवहारमालम्बमाने पद्यकाव्येऽपि-मेघदूतादिकं खण्डकाव्येषु, महाकाव्येषु च रघुवंशादिकं परिगण्यते । महाकाव्ये किल अष्टाधिकाः सर्गा अपेक्ष्यन्ते, वर्ण्यन्ते च शैलषड्ऋतुपुष्पावचयजलकेलिमधुपानसुरतसायङ्कालचन्द्रोदयप्रभातप्रभृतयो विषयाः । महाकाव्यलक्षणमन्यदपि तद्विषयकं वस्तु-

ज्ञातमाकरशास्त्रादुन्नेतव्यम् । यत्र च गद्यपद्ययोरुभयोरपि संमिश्रणमुपलभ्यते, तत्काव्यं चम्पूरित्युच्यते नलचम्पूप्रभृतिकम् । शिशुपालवधनामधेयं प्रस्तुतमेतन्माघकाव्यं हि महाकाव्यलक्षणलक्षितत्वेन महाकाव्यमित्येवं व्यहारं भजते ।

## माघस्य वैशिष्ट्यं, लोकोक्तयश्च ।

समुन्मीलत्स्वपि तेषु तेषु भूयःसु हरविजय—द्विसन्धानप्रभृतिषु महाकाव्येषु, रघुवंशं कुमारसम्भवं किरातार्जुनीयं शिशुपालवधं नैषधीयचरितं चेति पञ्चैव महाकाव्यानि सर्वतः प्रसिद्धिमापन्नानि पठनपाठनादिषु लोके सर्वतोमुखं प्रचारं प्राप्नुवन्ति विलोक्यन्ते। परमत्रापि पञ्चके यथा यथावत्काव्यलक्षणलक्षितं गुणालङ्कारभूयिष्ठं व्याकरणप्रयोगप्रचुरं शिशुपालवधमेव महाकाव्यमूर्धन्यतामधिगच्छति, न तथा चतुष्कम् । अत एव 'काव्येषु माघः कविकालिदासः' इति प्रथतेतरां सूक्तिः ।

वैलक्षण्यमिदमेवात्र काव्ये विशेषतो लक्ष्यते—यत् प्रसिद्धाः सर्व एव शब्दाः कविना सनैपुणं तथाऽस्मिन्निवेशिताः, यथा तदतिरिक्ताः प्रसिद्धा नूतनास्ते नावशिष्यन्ते । प्रतिज्ञातमेतच्च—'नवसर्गगते माघे नवशब्दो न विद्यते' इत्युक्त्या केनापि ।

इदं हि काव्यं माघकविना स्वस्मात्पूर्वभाविनः किरातार्जुनीयनिर्मातुः भारवेः स्पर्धया प्रणीतमित्येतस्मिन् काव्ये बहुत्र स्थलेपु प्रतीयते । क्वचित् तेनैव रूपेण, क्वचिच्च रूपान्तरपर्यायेण समुपलभ्यते शिशुपालवधे किरातार्जुनीयसादृश्यम् । तथाहि-यथा भारविणा उपक्रमे 'श्रियः'इति पदं प्रयुज्य वस्तुनिर्देशात्मकं मङ्गलाचरणं कृतं,तथा माघेनापि । तत्काव्यं प्रतिसर्गान्तिमश्लोके 'लक्ष्मी'शब्दाङ्कितम्, इदं च 'श्री'शब्दाङ्कितम् । द्वितीयसर्गे भीमसेनोक्तौ तत्रेव राजनीतिवर्णनमत्रापि द्वितीयसर्गे उद्धवोक्तौ दृश्यते । किरातार्जुनीये यथा हिमाचलवर्णनं बहुविधच्छन्दोऽलङ्कृतं चित्रबन्धाङ्कितं च वर्तते, तथैव शिशुपालवधेपि रैवतकपर्वतवर्णनम् । उभयत्रापि—जलक्रीडावर्णनमष्टमे सर्गे प्रहर्षिणीच्छन्दसा, सायङ्कालचन्द्रोदयवर्णनं नवमे सर्गे, पानगोष्ठीसुरतकेलिवर्णनं च स्वागताच्छन्दसा विहितं विलोक्यते । चित्रकाव्यनिर्माणकौशलीं च युद्धवर्णनप्रसङ्गे यथा तत्र प्रदर्शितवान् भारविः, तथाऽत्रापि माघः । अन्यच्च षड्तुपुष्पावचयप्रभातवर्णनादिकं काव्यद्वयेऽपि नयनपथाऽतिथितां प्रयातीति । एतेन—भारविणा प्रणीतं किरातार्जुनीयमुद्वीक्ष्य तद् ध्रुवं निष्प्रभतां प्रापयितुमेव सस्पर्धं काव्यमिदं प्राणायि माघेन । तदेतत्सर्वम्—'तावद्भा भारवेर्भाति यावन्माघस्य नोदयः' इति प्रसिद्धोक्तिरेवोद्धोपयति । किञ्च—'माघमासमहिम्ना हतोत्साहानां शीताऽऽतुराणां तरणिकिरणस्मरणकारिणां कपीनां यथा पदात्पदमपि प्रचलितुं नोत्साहश्चित्ते पदं धत्ते, तथा भारवेः काव्यं सम्यग्विचार्य तद्वासत्साहाय्यानामपि अनन्तरं परिशीलिते माघकाव्ये तत्सर्वं तदधिकं चोपलभ्य भारविकाव्ये किमप्यपूर्वमपश्यतां कवीनां पदरचनासु नोत्साहशक्तिः परिस्फुरती'त्यभिप्रेत्य कस्यापि सूक्तमिदम्—

> माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे ।
> स्मरन्तो भा-रवेरेव कवयः कपयो यथा ॥

इति ।

अन्या अपि लोके सूक्तयः समुपलभ्यन्ते माघकाव्यविषये सर्वतोमुख्यः। ता अपि साम्प्रतं प्रदर्शयामः। 'मुरारिकवेः कृतेरतिक्लिष्टतया तदर्थावबोधार्थं यथोचितशब्दार्थज्ञान-जननं माघकाव्यं पूर्वं परिशीलनीयम्, अथच मुरारेः श्रीकृष्णस्य चरणारविन्दप्राप्तिचिन्ताया-पस्थितायां पापेभ्यो मानसी प्रवृत्तिः परावर्तनीया' इत्येतमर्थं सकौशलमर्धावृत्तियमका-ऽलङ्कारविशेषेण बोधयन्ती—

मुरारिपदचिन्ता चेत्तदा माघे रतिं कुरु।
मुरारिपदचिन्ता चेत्तदा माऽघे रतिं कुरु॥

इत्येवंविधा कस्यापि सुश्लिष्टा सूक्तिः समुज्जृम्भते। श्रूयते किल, कस्यापि वर्षीयसः पण्डितेन्द्रस्य समीपमुपसृप्य केनापि जिज्ञासुना 'किं तावत्परिशीलितं श्रीमद्भि-रित्थंविधपाण्डित्यप्राप्तये' इति सादरं पृष्टे सति, मेघदूतं माघकाव्यं चेति द्वयमेवाऽऽजन्म परिशीलयता 'मेघे माघे गतं वयः' इत्येवमुत्तरितं पण्डितेन्द्रेण।

इदानीम्—

उपमा कालिदासस्य भारवेरर्थगौरवम्।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः॥

इत्युक्तिमवलम्ब्य 'माघे सन्ति त्रयो गुणाः' इत्येतस्योदाहारणानि माघकाव्या-दुद्धृत्य कानिचित् संक्षेपतः प्रदर्श्यन्ते। अत्र किलोपमालङ्कारास्तत्र तत्राऽतितरामुप-लभ्यन्ते। तत्र च सहृदयहृदयानन्दसन्दोहदायिन्यः काश्चिदुपमा उदाह्रियन्ते—

विद्वद्भिरागमपरैर्विवृतं कथञ्चिच्छ्रुत्वापि दुर्ग्रहमनिश्चितधीभिरन्यैः।
श्रेयान् द्विजातिरिव हन्तुमघानि दक्षं गूढार्थमेष निधिमन्त्रगणं बिभर्ति॥ ४.३७.

निधिगणं बिभ्राणे पर्वते मन्त्रसमूहशालिब्राह्मणोत्तमसाम्यप्रदर्शनस्य कौशलमुल्लसति श्लोकेऽस्मिन् कवेः। पौराणिकीं कथामनुसृत्य कविना प्रयुक्तम्, निम्बदलेन समं कवलितं चूतपल्लवमुद्वमति कस्मिंश्चिदुष्ट्रे म्लेच्छमध्यस्थितं मुखगतं गलं दहन्तं ब्राह्मणमुज्झित-वता गरुत्मता सादृश्यं प्रकाशयत्यपरोऽयं श्लोकः—

साधं कथञ्चिदुचितैः पिचुमन्दपत्रैरास्याऽन्तरालगतमाम्रदलं म्रदीयः।
दासेरकः सपदि संवलितं निषादैर्विप्रं पुरा पतगराडिव निर्जगार॥ ५.६६.

निशावसानसमये प्राप्तबुद्धिवैशद्यानां गहनमर्थजातं विचिन्तयतां कवीनां महीपतीनां च मनोहरं साम्यमुन्मीलयदपरं पद्यमिदम्—

क्षणशयितविबुद्धाः कल्पयन्तः प्रयोगानुदधिमहति राज्ये काव्यवद् दुर्विगाहे।
गहनमपररात्रप्राप्तबुद्धिप्रसादाः कवय इव महीपाश्चिन्तयन्त्यर्थजातम्॥ ११.६.

प्रभाते राजभवनेभ्यो निर्यान्तीनां वारवनितानां रजनीनां च श्लेषेणौपम्यं समुद्भावय-त्ययमपरो मनोहरः श्लोकः—

लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा रजनय इव निद्राक्लान्तनीलोत्पलाक्ष्यः।
तिमिरमिव दधानाः स्रंसिनः केशपाशानवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः॥ ११.२०.

सर्वतोभद्रचक्रगोमूत्रिकादिरूपरचनाविशेषदुष्प्रवेशे चैद्यसैन्ये सर्वतोभद्रचक्रगोमूत्रिका-

प्रभृतिनामधेयप्रसिद्धबन्धविशेषदुर्बोधमहाकाव्यसादृश्यप्रतिपादकमेकमिदं पद्यं यथा—

विषमं सर्वतोभद्रचक्रगोमूत्रिकादिभिः ।
श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद्बलम् ॥ १९.४१.

इति ।

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।
शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥ २.११२.

कविरत्र श्लोके श्लाघनीयां श्लेषकौशलीमात्मनो व्याकरणविद्यावैदुर्षी च प्रदर्शयन् कथं नाम हृदयङ्गमं राजनीतौ शब्दविद्यासादृश्यं प्राचीकशत् । इदमपरं जलधरनीलस्य मुक्तालताऽलङ्कृतस्य श्रीकृष्णवक्षसः साम्यं दुर्लभं मनसिकृत्य कविना प्रदर्शितं सम्भाव्योपमाया विचित्रमुदाहरणम्—

उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तेनोमपीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥ ३.८.

इत्यादीनि बहून्युपमायाः सहृदयहृदयङ्गमाया उदाहरणानि शिशुपालवधादुन्नेतुं शक्यन्ते । अर्थगौरवमप्यत्र काव्ये पर्याप्तं विलसतीति ग्रन्थावलोकनतः स्फुटं प्रतीयेत । अस्यापि कानिचिदुदाहरणान्युपन्यस्यन्ते ।

अपशङ्कमङ्कपरिवर्तनोचिताश्चलिताः पुरः पतिमुपेतुमात्मजाः ।
अनुरोदितीव करुणेन पत्रिणां विरुतेन वत्सलतयैष निम्नगाः ॥ ४.४७.

'भर्तारमुपयातुं प्रचलिताः सुता इवोत्सङ्गपरिभ्रमणयोग्या नदीः समुद्रं गन्तुं प्रवृत्ता अवेक्ष्य पितेव रैवतकपर्वतोऽयं वात्सल्येन पक्षिणां कूजितेनाऽनुक्रोशतीवे'त्युत्प्रेक्षमाणेन कविना निर्मितोऽयं श्लोकः कथमिवाऽर्थगौरवचमत्कारमुद्भावयतीति न तावदप्रत्यक्षं सहृदयानाम् ।

उदयशिखरिशृङ्गप्राङ्गणेष्वेष रिङ्खन् सकमलमुखहासं वीक्षितः पद्मिनीभिः ।
विततमृदुकराग्रः शब्दयन्त्या वयोभिः परिपतति दिवोऽङ्के हेलया बालसूर्यः ॥११.४७.

अत्र किल पक्षिणां कूजितैराह्वयन्त्या जनन्या दिव उत्सङ्गे परिपततो रवेर्बाल्यावस्थाविशेषं परिदर्श्य कविना परमरमणीयमर्थगौरवं प्राकाशि ।

सपदि कुमुदिनीभिर्मीलितं हा क्षपाऽपि क्षयमगमदपेतास्तारकास्ताः समस्ताः ।
इति दयितकलत्रश्चिन्तयन्नङ्गमिन्दुर्वहति कृशमशेषं भ्रष्टशोभं शुचेव ॥ ११.२४.

'कुमुदिनीरजनीतारकाः प्रियपत्नीर्विनाशं गता अवेक्ष्य शोकेनेव कृशं कान्तिहीनं वपुरुह्यते चन्द्रमसे'त्युत्प्रेक्ष्यमाणार्थगौरवमत्र श्लोके श्लाघनीयम् ।

अरुणजलजराजीमुग्धहस्ताग्रपादा बहलमधुपमालाकज्जलेन्दीवराक्षी ।
अनुपतति विरावैः पत्रिणां व्याहरन्ती रजनिमचिरजाता पूर्वसन्ध्या सुतेव ॥११.४०.

अत्र रजन्या सह क्षीयमाणायां प्रातःसन्ध्यायां सुतात्वमुत्प्रेक्ष्य तदुचितमर्थगौरवं कविना प्रदर्शितं साधु शोभते । अपिच—

प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ ९.६.

अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।
निरकासयद्रविमपेतवसं वियदालयादपरदिग्गणिका ॥ ९.१०.
रुचिधाम्नि भर्तरि भृशं विमलाः परलोकमभ्युपगते विविशुः ।
ज्वलनं त्विषः कथमिवेतरथा सुलभोऽन्यजन्मनि स एव पतिः ॥ ९.१३.

अमीषु श्लोकेषु लोकप्रसिद्धार्थमवलम्ब्य सूर्यास्तवर्णनं कविः कथङ्कारं सुन्दरं कृतवानिति स्वत एव सुधीभिः प्रत्यक्षीकर्तव्यम् । एवमन्यान्यपि श्लेषाद्यलङ्कारचमत्कारसाराणि भूयांस्युदाहरणान्यर्थगाम्भीर्यं पुष्णन्ति विद्यन्ते माघकाव्ये । पदलालित्यविषये तु न विशेषतो लेखनस्याऽऽवश्यकतां पश्यामः । तत्किल यमकादिस्थलेषु तत्र तत्र बहुशो विलसति । द्वित्राणि पद्यानि केवलं दिग्दर्शनविधयोदाह्रियन्ते—

वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया ॥ ६. १४.
मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥ ६. २०.
विकचकमलगन्धैरन्धयन् भृङ्गमालाः सुरभितमकरन्दं मन्दमावाति वायुः ।
समदमदनमाद्यद्यौवनोद्दामरामारमणरभसखेदस्वेदविच्छेददक्षः ॥ ११. १९.

पद्येष्वेतेषु पदलालित्यं कीदृशमिति तावत्प्रत्यक्षमेव । इत्येतान्युदाहरणानि उपमाऽर्थगौरवपदलालित्यसूचकानि सम्यगालोचयद्भिर्विद्वद्भिः 'माघे सन्ति त्रयो गुणाः' इति प्रसिद्धोक्तेर्वास्तविकत्वमवगन्तुं शक्येत ।

## माघकवेः शास्त्रीयं पाण्डित्यम् ।

काव्यशास्त्र इव शास्त्रान्तरेष्वपि माघकवेः प्रगाढं पाण्डित्यमासीदित्यपि निःशङ्कं वक्तुं पारयामः । एतदप्युदाहरणप्रदर्शनेन स्पष्टीक्रियते । तत्र सांख्यशास्त्राभिमतमर्थं निबध्नतः कवेः सांख्यशास्त्रप्रावीण्यं समुल्लसति पद्यद्वयेऽस्मिन्—

उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथञ्चन ।
बहिर्विकारं प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः ॥ १. ३३.
तस्य सांख्यपुरुषेण तुल्यतां बिभ्रतः स्वयमकुर्वतः क्रियाः ।
कर्तृता तदुपलम्भतोऽभवद्वृत्तिभाजि करणे यथर्त्विजि ॥ १४. १९.

योगशास्त्रप्रावीण्यं च स्वकीयं प्रकटीक्रियते कविनाऽमुना श्लोकद्वयेन—

मैत्र्यादिचित्तपरिकर्मविदो विधाय क्लेशप्रहाणमिह लब्धसबीजयोगाः ।
ख्यातिं च सत्त्वपुरुषाऽन्यतयाधिगम्य वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम् ॥ ४.५५.
सर्ववेदिनमनादिमास्थितं देहिनामनुजिघृक्षया वपुः ।
क्लेशकर्मफलभोगवर्जितं पुंविशेषममुमीश्वरं विदुः ॥ १४. ६२.

बौद्धशास्त्रप्रवीणताया अप्येकमिदमुदाहरणम्—

सर्वकार्यशरीरेषु मुक्त्वाऽङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्माऽन्यो नास्ति मन्त्रो महीभृताम् ॥ २. २६.

मीमांसानैपुण्यमपि स्फुटीभवत्येताभ्यां श्लोकाभ्याम्—

प्रतिशरणमशीर्णज्योतिरग्न्याहितानां विधिविहितविरिब्धैः सामिधेनीरधीत्य ।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यैर्हुतमयमुपलीढे साधु सान्नाय्यमग्निः ॥ ११. ४१.

शब्दितामनपशब्दमुच्चकैर्वाक्यलक्षणविदोऽनुवाक्यया ।
याज्यया यजनधर्मिणोऽत्यजन् द्रव्यजातमपदिश्य देवताम् ॥ १४. २०.

मानवधर्मशास्त्रपाण्डित्यमपि विलसत्यस्मिन् पद्ये—

पूर्वमेष किल सृष्टवानपस्तासु वीर्यमनिवार्यमादधौ ।
तच्च कारणमभूद्धिरण्मयं ब्रह्मणोऽसृजदसाविदं जगत् ॥ १४. ६७.

सङ्गीतशास्त्रपरिशीलनकौशलमपि प्रत्यक्षीभवति पद्ययोरनयोः—

रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।
स्फुटीभवद्ग्रामविशेषमूर्छनामवेक्षमाणं महतीं मुहुर्मुहुः ॥ १. १०.

श्रुतिसमधिकमुच्चैः पञ्चमं पीडयन्तः सततमृषभहीनं भिन्नकीकृत्य षड्जम् ।
प्रणिजगदुरकाकिश्रावकस्निग्धकण्ठाः परिणतिमिति रात्रेर्मागधा माधवाय॥ ११.१.

श्लेषसौन्दर्यसमलङ्कृतं नाट्यशास्त्रनैपुण्यस्याप्युदाहरणद्वयमिदम्—

दधतस्तनिमानमानुपूर्व्या बभुरक्षिश्रवसो मुखे विशालाः ।
भरतज्ञकविप्रणीतकाव्यग्रथिताङ्का इव नाटकप्रपञ्चाः ॥ २०. ४४.

स्वादयन् रसमनेकसंस्कृतप्राकृतैरकृतपात्रसङ्करैः ।
भावशुद्धिविहितैर्मुदं जनो नाटकैरिव बभार भोजनैः ॥ १४. ५०.

व्याकरणविद्यावैदुष्यं च 'अनुत्सूत्रपदन्यासा' इति श्लोके पूर्वोक्ते प्रदर्शितमेव । अपरमपीदमुदाहरणं श्लिष्टं यथा—

निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम् ।
पाणिनीयमिवाऽऽलोचि धीरैस्तत्समराऽजिरम् ॥ १९. ७५.

राजनीतिनैपुण्यमप्यतिगाढं प्रकाशते श्लोकयुगलेऽमुष्मिन्—

उदेतुमत्यजन्नीहां राजसु द्वादशस्वपि ।
जिगीषुरेको दिनकृदादित्येष्विव कल्पते ॥ २. ८१.

बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः ।
चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥ २. ८४.

अन्यान्यपि बहुविधान्युदाहरणानि राजनीतेरुद्धवोक्तौ द्वितीयसर्गे समुपलभ्यन्ते । कामशास्त्रप्रवीणताऽपि दशमे सर्गे सुरतकेलिवर्णने भूयसी समवलोक्यते कवेः । अश्वशास्त्रं गजशास्त्रं च समीचीनं परिशीलितमासीत् कविना । तत्र अश्वशास्त्रविज्ञानकौशलमुन्मीलयति कवेः श्लोकयोर्द्वितयमेतत्—

तेजोनिरोधसमताऽवहितेन यन्त्रा सम्यक्कशात्रयविचारविदा नियुक्तः ।
आरट्टजश्चटुलनिष्ठुरपातमुच्चैश्चित्रं चकार पदमर्धपुलायितेन ॥ ५. १०.

अव्याकुलं प्रकृतमुत्तरधेयकर्मधाराः प्रसाधयितुमव्यतिकीर्णरूपाः ।
सिद्धं मुखे नवसु वीथिषु कश्चिदश्वं वल्गाविभागकुशलो गमयाम्बभूव ॥ ५. ६०.

गजविज्ञानवैदुष्यमप्युदाहरणयोरनयोरुपलभ्यते—

गण्डूषमुज्झितवता पयसः सरोषं नागेन लब्धपरवारणमारुतेन ।
अम्भोधिरोधसि पृथुप्रतिमानभागरुद्धोरुदन्तमुसलप्रसरं निपेते ॥ ५. ३६.

जज्ञे जनैर्मुकुलिताक्षमनाददाने संरब्धहस्तिपकनिष्ठुरनोदनाभिः ।
गम्भीरवेदिनि पुरः कवलं करीन्द्रे मन्दोऽपि नाम न मनागवगृह्य साध्यः ॥५. ४९.

इति । एवञ्चमेव उत्प्रेक्षारूपकश्लेषाऽर्थान्तरन्यासप्रभृतयोऽलङ्कारा अपि अतितरां चमत्काराऽङ्कुरानुत्पादयन्ति रसिकजनमनःसु । अहो ! कियच्चिरं लिखामो माघकाव्यस्याऽस्य विषये । यत्किमपि यावल्लिख्येत, तत्तावदल्पमेव स्यादिति तदुपसंहृत्याऽधुना माघकवेरमुष्य विषये किमपि प्रपञ्चयामः ।

## माघकवेः परिचयः ।

एष किल नदीष्णः शास्त्रेषु पण्डितमण्डलीमण्डनायमानो लब्धप्रसिद्धिः माघनामा महाकविर्ब्राह्मणवंश्यो गुर्जरदेशीयः श्रीमालीनामिकामवान्तरजातिं स्वजन्मनाऽलङ्कृतवानित्यस्ति प्रसिद्धिः। गुर्जरदेशश्चास्य निवासभूमिरासीदित्यत्र तत्कृतं गुर्जरप्रान्तान्तिकस्थरैवतकपर्वतवर्णनमेव प्रमाणकोटौ निक्षेप्तव्यम् ।

उदयास्ताचलगामिनोः सूर्याचन्द्रमसोर्मध्यगते रैवतकपर्वते विलम्बमानघण्टायुगलाऽलङ्कृतगजेन्द्रसादृश्यं प्रतिपादयतः—

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चाऽस्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥ ४.२०.

एतत्पद्यस्य व्याख्यावसरे वल्लभदेवेन 'अनेनैव श्लोकेन कविना 'घण्टामाघ' इति नाम लब्धम्' इत्युल्लिखितम् । अतश्च 'घण्टामाघ' इत्युपाधिर्माघस्यासीदिति प्रतीयते ।

अस्य पिता दत्तको नाम धर्मशीलः क्षमावानुदात्तचित्तः सर्वेषामाश्रयभूतत्वेन सर्वैः सङ्केतितं 'सर्वाश्रय' इति नामान्तरं लब्धवान् । पितामहश्च सुप्रभदेवो नाम देव एवाऽपरः श्रीवर्मलाऽभिधानस्य राज्ञो धर्मसचिव आसीत् । राजा च यस्योपदेशवचनमात्मनीनमनुल्लङ्घनीयं मन्यते स्म(१) ।

अथ दत्तकपुत्रस्य सुप्रभदेवपौत्रस्य माघस्य समयनिर्णयं कर्तुं प्रवृत्ताः स्मो वयम् । कस्यापि समयनिर्णयस्तावत् प्रत्यक्षप्रमाणाभावे यथोचितं किमपि प्रमाणान्तरमन्तरेण कर्तुं दुःशक एव । पूर्वे किल सूरयः प्रायः स्वकीयसमयसूचनं नाम पातकमिवाऽमंसत । एवं स्थितौ–एके पुनरन्वेषका यथोपलब्धप्रमाणोपष्टम्भेन यं कञ्चन समयं निश्चेतुं चेष्टन्ते, तदितरे तद्भिन्नं स्वोपलब्धप्रमाणानुसारेण निर्णयन्ति समयम् । एतेन तत्तद्विचारविपर्ययेण कस्यापि यथावत्समयज्ञानं कर्तुं वञ्चिता भवन्त्युदासीनाः । इत्थमेव स्थितिरेतस्यापि माघस्य समयनिर्णयविषये समुपस्थिता सम्प्रति ।

तत्र तावदेके–भोजप्रबन्धे बल्लालकविकृतेन माघस्य भोजराजाश्रयप्राप्तिवर्णनेन माघम् एकादशशताब्दीसमुद्भूतस्य भोजस्य समकालीनमुदाहरन्ति । परं, बल्लालेन कालिदास-

(१) एतच्च ग्रन्थसमाप्तौ कविवंशवर्णने द्रष्टव्यम् ।

प्रभृतीनां सर्वेषां भोजराजाश्रयप्राप्तजीविकत्वं वर्णयता वर्णनमात्रकौतुकितया सर्वे विद्वांसः समानकालीनतां प्रापिता इति तत्तत्कविसमयनिर्णयविषये भोजप्रबन्धो न प्रमाणपक्षे निक्षेप्तुं शक्यते । एवमेव माघं भोजराजाश्रितं प्रतीपादयती प्रबन्धचिन्तामणि-प्रभावक-चरिते अपि न प्रमाणीकरणीये । एतेषु भोजप्रबन्धादिषु च भूयोभिर्निर्णीतानामतिप्रसिद्धानामपि केषाञ्चन विषयाणां वैपरीत्यवर्णनस्योपलब्धेरत्र विश्वासो नैव कर्तुं युज्यते ।

अन्ये पुनः—'अनुत्सूत्रपदन्यासा' इत्यादिश्लोके कविकर्तृकन्यासग्रन्थनामोल्लेखात् न्यासकर्तुर्जिनेन्द्रबुद्धेरर्वाचीनोऽयं कविरष्टम्यां शताब्द्यामासीदिति कल्पयन्ति । इदमपि न प्रत्ययमुत्पादयति चित्ते, जिनेन्द्रबुद्धेः पूर्वमपि न्यासग्रन्थान्तराणामुपलम्भात् तत्र तत्पूर्व-कालिकन्यासग्रन्थस्याऽप्युल्लेखसम्भवात् ।

इत्थमेव मिस डफ् ( Duff ) महोदययाऽपि लिखितः '८६०' इत्येवंरूपो माघस्य समयः प्रमाणाभावादुपेक्षणीयः ।

इदन्तु निर्विवादं कल्पयितुं शक्यम्, काश्मीरेषु ८५५–८८३ यावद्राज्यासनमधितिष्ठतः अवन्तिवर्मभूपतेः समये विद्यमानेन खीस्ताब्दीयायां नवम्यां शताब्द्यां सञ्जातेन श्रीमदानन्दवर्धनाचार्येण निर्मिते ध्वन्यालोकग्रन्थे माघश्लोकोपलब्धेः नवमशताब्दीतः प्राचीनोऽयमिति । तत्रापि सूक्ष्मविचारे क्रियमाणे—एतत्पितामहसुप्रभदेवाश्रयदातुः वर्मल-नामधेयस्य महीपतेः शिलालेख एकः '६८२' संमितवैक्रमाब्दीयः साम्प्रतमाधुनिकैरन्वे-षकवरैर्विद्वद्भिरनवरतपरिश्रमेभ्यो वसन्तगढनगरेऽलभ्यत । एतेन '७८२' मिते वैक्रमाब्दे '६२५' मिते च खीस्ताब्दे वर्तमानस्य सुप्रभदेवस्य समयस्तावत् सप्तमं शतकमित्यत्र न काऽपि संशीतिः । पितामहपौत्रयोश्च समये स्वल्पमप्यन्तरं तु किमपि कल्पयितुं नाऽसाम्प्रतम् । अतः सप्तमशतकस्याऽन्ते अष्टमशतकस्याऽऽरम्भे वा माघकविरासीदिति निःशङ्कं शक्यते वक्तुम् ।

अस्य च माघकवेः कृतिः शिशुपालवधादन्या नोपलभ्यते । परम्,

बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते ।
न विद्यया केनचिदुद्धृतं कुलं हिरण्यमेवाऽर्जय निष्फलाः कलाः ॥

पद्यमिदं तत्त्वौचित्यप्रत्युदाहरणरूपं क्षेमेन्द्रेणौचित्यविचारचर्चायां समुद्धृतं माघनाम्ना। सुभाषितावलौ वल्लभदेवश्च(१)—

शीलं शैलतटात्पतत्वभिजनः सन्दह्यतां वह्निना
मा श्रौषं जगति श्रुतस्य विफलक्लेशस्य नामाप्यहम् ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु मे सर्वदा
येनैकेन विना गुणास्तृणबुसप्रायाः समस्ता अमी ॥

नारीनितम्बफलके प्रतिबध्यमाना हंसीव हेमरशना मधुरं रराप्त ।
तन्मोचनार्थमिव नूपुरराजहंसाश्चक्रन्दुरार्तमुखरं चरणावलग्नाः ॥

पद्यद्वयमिदं माघनाम्ना समुद्धृतवान् । अतश्च कश्चिदन्योऽपि माघेन ग्रन्थो निर्मित आसीदित्यनुमीयते । सुभाषितस्फुटश्लोका अपि कदाचिदेते स्युरित्यपि सम्भाव्यते ।

---

(१) चतुर्दशशतकोत्पन्नोऽयं वल्लभदेवः प्रकृतवल्लभदेवादन्य एव कश्चित् ।

## व्याख्यान्तराणि, प्रकृतव्याख्यापरिचयश्च ।

एतेन माघकविना कृतस्य शिशुपालवधस्य व्याख्यासु–सन्देहविषौषधिनाम्नी वल्लभदेवनिर्मिता, रङ्गराजनिर्मिता, एकनाथविरचिता, चारित्रवर्धनप्रणीता, सर्वङ्कषाख्या मल्लिनाथविहिता, सुबोधा नाम भरतमल्लिकविरचिता, सुबोधिनीनामिका दिनकरमिश्रप्रणीता, हसन्तीनाम गोपालकृता चेति वसुसंख्या व्याख्या अद्य यावदवगताः सन्तीति 'निर्णयसागर'मुद्रणालये मुद्रितस्यैतद्ग्रन्थस्य भूमिकायामुल्लिखितं वर्तते। एतासु व्याख्यासु प्राचीना काश्मीरेष्वतिप्रसिद्धिं गता सन्देहविषौषधिर्नाम व्याख्या कुत्राप्यद्य यावन्न मुद्रिता । उपलभ्यते केवलमेतस्याः शर्मण्यदेशीयभाषायां विहितोऽनुवादो मुद्रितः ।

एषा च व्याख्या वल्लभदेवेन खण्डान्वयमवलम्ब्य तथा निरमायि यथा सुस्पष्टं तात्पर्यार्थः सर्वैरपि बोद्धुं शक्येत । कवेर्भाषा चैतस्यां व्याख्यायां सारल्यातिशयं वहन्ती विद्यार्थिनां मनःसु सत्वरं प्रविशन्ती सन्देहदूरीकरणक्षमा सन्देहविषौषधिरिति नाम्नः सार्थकत्वं प्रकाशयति । इयं च रचनाविषये प्रौढिमानमनावहन्ती विद्वज्जनमनसे कदाचिन्न रोचेत, परमेतदीयं सारल्यसूचकं रचनाशैथिल्यमपि मन्ये विद्यार्थिनां गुणायितं भवेत्। भाषायाः प्रौढिमानमवलोक्य विद्यार्थिनस्तात्पर्यमनवगच्छन्तो भृशं मुह्येयुरिति तेषामेवोपकाराय सरलताऽञ्चितां रचनाशैलीमवलम्ब्य वल्लभदेवेन व्याख्येयं निर्मिता ।

विद्वज्जनमनःप्रीणनविषये तु मल्लिनाथकृता सर्वङ्कषाख्या व्याख्यैव व्याख्यान्तरमूर्धन्यायिताऽतितरां प्रकाशते । एतस्याः प्रौढिमपूर्णतायां परिमितार्थसूचकतायां च न किमपि लेखनीयं नाम । तत्किल प्रत्यक्षमेव सर्वेषां विदुषां समालोचिततद्व्याख्यासौष्ठवानाम्। एतद्व्याख्याद्वयमन्तरा नोपलभ्यते प्रायः सम्प्रति व्याख्यान्तरं शिशुपालवधस्य ।

इदानीं सन्देहविषौषधि–सर्वङ्कषाख्यव्याख्याद्वयप्रणेतारौ वल्लभदेव–मल्लिनाथपण्डितावुद्दिश्य क्रमेण तयोः परिचयादिप्रदानं प्रस्तूयते—

## वल्लभदेवमल्लिनाथयोः परिचयः ।

तत्र सन्देहविषौषधिप्रणेता विद्वत्कुलालङ्कारहीरोपमो वल्लभदेवः सोऽयमानन्ददेवाल्लब्धजन्मा काश्मीरानध्यवात्सीत् । 'परमात्मचिन्ह' इत्यस्य नामान्तरमपि दृश्यते एतत्कृतमेघदूतव्याख्या समाप्तिसूचनिकायाम् । तत्रैव 'राजानक' इत्युपाधिरप्यानन्ददेवस्यैतत्पितुरुपलभ्यते । एतेन सम्भाव्यते, प्रायो ब्राह्मणजातीय एष आसीदिति ।

वल्लभदेवस्यैतस्य समयनिर्णयविषये तु—एतेन रुद्रटालङ्कारे विवरणमेकं विरचितमिति, नवमशतकस्यान्ते दशमशतकस्य चारम्भे विद्यमानात् रुद्रटादुत्तरकालिकोऽयमासीदिति वक्तुं व्यक्तमेव शक्नुमः । अत्रापि सूक्ष्मविचारे—एतत्पौत्रेण कय्यटेन प्रणीताया आनन्दवर्धनकृतदेवीशतकव्याख्यायाः समाप्तौ वर्तमानं वक्ष्यमाणं पद्यद्वयं शरणीकरणीयम् ।

सा च व्याख्या भीमगुप्तनामनि काश्मीरके राजनि राज्यं शासति सति, '४०७८' संमिते कलावतीते काश्मीरप्रसिद्धे वर्षे च द्विपञ्चाशन्मिते, '९७७' मिते खीस्ताब्दे निरमायि कय्यटेन । भीमगुप्तस्य राज्यशासनसमयस्तावत् '९७५' मितखीस्तवर्षादुपक्रम्य सपादसंवत्सरचतुष्टयीं यावदुपलभ्यते । एतेन दशमशतकस्योत्तरार्धे कय्यटस्य सत्ता

सिध्यति। पितामहस्य पौत्रस्य च समये किमप्यन्तरमवश्यमेव कल्पनीयम्। ततश्च दशमशतकस्य पूर्वार्धे वल्लभदेव आसीदित्यत्र नास्ति सन्देहस्य लेशोऽपि।

अस्य पुत्रश्चन्द्रादित्यः पौत्रश्च कय्यट आसीत्। तदेतत्सर्वं सूचयति—

वल्लभदेवायनितश्चन्द्रादित्यादवाप्य जन्मेमाम्।
कय्यटनामाऽरचयद्विवृतिं देवीशतकस्तोत्रे॥
वसुमुनिगगनोदधिसमकाले याते कलेस्तथा लोके।
द्वापञ्चाशे वर्षे रचितेयं भीमगुप्तनृपे॥

श्लोकद्वयमिदम्(१)।

अस्य गुरुः प्रकाशवर्षो नाम कश्चिदासीदित्येतत्सूचकम् 'अत्राहोपाध्यायः प्रकाशवर्षः' इति प्रमाणं ग्रन्थेऽस्मिन्नुपलभ्यते।

एष किल वल्लभदेवः रघुवंशकुमारसम्भवमेघदूतनामभिः प्रसिद्धाया लघुत्रय्याः प्रणीतवान् व्याख्याम्। महाकविरत्नाकरकृतायां वक्रोक्तिपञ्चाशिकायामप्यस्य पञ्चिका व्याख्योपलभ्यते। आनन्दवर्धनकृते देवीशतकेऽपि संक्षिप्तं विवरणमनेन कृतमित्युपलभ्यते। सूर्यशतकरुद्रटालङ्कारयोरपि व्याख्ये एतेन विरचिते। तत्र मेघदूतव्याख्या मुद्रिता नयनगोचरतामागता। वक्रोक्तिपञ्चाशिकायाः पञ्चिका च काव्यमालायां प्रथमगुच्छे दृश्यते मुद्रिता।

सङ्कुपाख्यव्याख्याकर्तुः सर्वत्र प्रसिद्धिं गतस्य मल्लिनाथकवेर्विषये किं तावद्विशेषतो लेखनीयम्। रघुवंशादिषु ग्रन्थेषूपलभ्यमानाष्टीका एवैतस्य योग्यताविशेषस्य परिचयं विश्राणयितुं प्रभवन्ति। असौ किल 'महोपाध्याय'पदवीसमलङ्कृतो द्राविडदेशीयो विविधागमपारावारपारीण आसीत्। 'कोलाचले'ति विरुदमप्यदसीयं समुपलभ्यते। समयश्चैतस्य चतुर्दशी शताब्दी तत्र तत्र तैस्तैरैतिहासिकैर्निरणीयत।

एतेन कृताः रघुवंश-कुमारसम्भव-किरातार्जुनीयेषु काव्येषु व्याख्या मुद्रिता उपलभ्यन्त एव। शिशुपालवधव्याख्या च सेयं पुरस्तादेवास्ति। नैषधीयचरितेऽप्येष टीकां प्राणैषीत्। सा च परिमितार्थप्रकाशिका तात्पर्यार्थं झटिति चित्ते निवेशयन्ती 'जीवातु'नामधेया व्याख्या तादृशरूपेण साम्प्रतं नोपलभ्यते।

साम्प्रतं पुस्तकपरिचयं दत्त्वोपसंह्रियते—

## पुस्तकपरिचयः, उपसंहारश्च।

हस्तलिखितं वल्लभदेवव्याख्यायाः पुस्तकमेकं सपरिश्रममितस्ततोऽन्विष्य चिरादुपलभ्य च तन्मुद्रयितुकामेन 'विद्याविलास'मुद्रणालयस्वामिना श्रीजयकृष्णदासमहोदयेनाऽस्मत्पुरस्तादुपन्यस्य तत्संशोधनादिकार्यभारः सानुरोधमारोपितोऽस्मासु। अस्माभिश्च स्वशिरस्यारोपितं कार्यभारमङ्गीकृत्य अमुद्रितचरं तत्पुस्तकप्रचिकाशयिषयैव कथमप्येकमेव पुस्तकमवलम्ब्य तत्सम्पादनादिकर्मसु प्रवृत्तम्।

---

(१) अत्र विषये काव्यमालामुद्रिता 'वक्रोक्तिपञ्चाशिका'टिप्पणी द्रष्टव्या।

प्रस्तुते च तदौपयिके कर्मणि, लेखकमहोदयप्रसादात्पुस्तके समापतिता भूयोविधास्तास्ता अशुद्धीः सुचिरं विचारानन्तरं ग्रन्थकारस्याशयमवबुध्य यथोचितं तत्तदक्षराद्यनुकूलं संशोध्य स्थलविशेषे कैश्चिन्महानुभावैः सह विचार्य चाऽवशिष्टेषु विशिष्टेषु सन्देहस्थलेषु प्रश्नचिन्हान्युपाक्षिप्यन्त। क्वचिच्च स्वाभिमतो विचारः कोष्ठकेऽपि प्रदर्शितः। मल्लिनाथव्याख्यायाश्च पुस्तकं 'निर्णयसागर'मुद्रणालये मुद्रितमवालम्ब्यत।

व्याख्याकारयोरुभयोस्तत्र तत्र विचारविपर्ययादुपलब्धेषु मूलश्लोकपाठभेदेषु वल्लभदेवसंमतं पाठमुपरिष्टाद्विन्यस्य टिप्पण्यामुट्टङ्कितो मल्लिनाथाभिमतः पाठः। उभयविधपाठविचारविषये च काशीस्थराजकीयसरस्वतीभवनस्थेन मुद्रितेन शर्मण्यदेशीयभाषाऽनुबद्धवल्लभदेवव्याख्यानुवादरूपेण पुस्तकेन च महत्साहायकं समजायत। क्वचिच्च स्पष्टार्थाऽवबोधार्थं ग्रन्थेऽस्मिन् यथोपयोगं टिप्पण्योऽपि प्रकल्पिताः।

अत्र च पुस्तके—शिशुपालवधकथाजिज्ञासुजनोपकारार्थं ग्रन्थस्यारम्भे संक्षिप्तः कथासारांशः, समाप्तौ च चित्रबन्धचक्राणि, श्लोकसूची, ग्रन्थेऽस्मिन्नुपलब्धानां तत्तद्ग्रन्थग्रन्थकाराणां नामानि चेत्येतत्सर्वं समावेश्यत।

अत्र च कार्ये यैः किल सहजस्नेहमवलम्ब्य केनापि रूपेण सहायता प्रदत्ता, तेषां स्मरणमकृत्वा भूमिकासमापनं नाम कृतघ्नतां प्रकाशयतीति श्रीमद्बटुकनाथशर्म एम्० ए० महाशयाः श्रीगङ्गाधरशास्त्रिभारद्वाजमहोदया अन्ये च केचन महानुभावाः साम्प्रतं न कथं धन्यवादार्हाः। तदुपकारप्रदर्शनार्थं च न तेषां स्मरणमिदम्, किन्तु हृदयादेव स्वतः स्फुरितं तदकृत्वा कथमपि हृदयं निर्वृतिं नाऽलम्बतेत्यवशतया तेषां स्मरणमिदं समापतितम्।

अन्ते च-सर्वदा सहजं वात्सल्यभावमावहतां परमकारुणिकानां प्रतीक्ष्यचरणानां श्रीमत्पूज्यगुरुवराणां चरणारविन्दयुगलीमादरेण सविनयं भक्त्याऽभिवन्द्य, दुर्लभैतद्ग्रन्थप्रकाशकं श्रीजयकृष्णदासमहोदयञ्चाऽऽशिषाऽभिवर्ध्य, कार्यमिदं निर्विघ्नं पूर्णतां प्रापितवन्तं श्रीमन्तं करुणाकरं परमेश्वरं च सभक्तिभावमन्तः स्मृत्वा, त्वरया मुद्रितेऽस्मिन् ग्रन्थे समुपलब्धा अशुद्धीः संशोध्य विद्वांसो ग्रन्थमेनमवलोकयेयुरित्यभ्यर्थयमानैरस्माभिर्विरम्यते विस्तरादिति शम्।

॥ श्रीः ॥

# शिशुपालवधस्य कथासारांशः ।

## उपक्रमः ।

श्रीमान् माघनामा कविः महाकाव्यं चिकीर्षुः श्रीमहाभारतीयां श्रीकृष्णसम्बन्धिनीं शिशुपालवधरूपां कथां मनसिकृत्य महाकाव्यलक्षणलक्षितं 'शिशुपालवधा'ख्यं महाकाव्यं इत्थङ्कं निबबन्ध । तत्र च या प्रतिसर्गं कथा रचिता, तस्य सारांशोऽधस्ताद्विन्यस्य पिपठिषूणां यत्किञ्चित्साहाय्यं वितन्यते ।

## प्रथमसर्गे—

अथैकदा तत्रभवान् श्रीकृष्णः प्रजाः पालयितुकामः स्वपितुर्वसुदेवस्य सद्मन्यतिष्ठत् । तदा च तत्राऽनवरतभगवद्भक्तिरूमारूक्तचेता ब्रह्मणो मानसः पुत्रो मुनिर्नारद आकाशादवतीर्य समाससाद । पुराणमुनिः श्रीकृष्णोऽपि समागतमवलोक्य तं मुनिं शिष्टाचारमनुस्मरन् स्वासनादुत्थाय तमुपवेश्य सम्पूज्य चाऽर्घ्यादिभिस्तेन कृतप्रोक्षणः कुशलप्रश्नपूर्वकमागमननिमित्तजिज्ञासुः स्वाशयमाविष्कृतवान् । तदुत्तरदानं समीहमानो नारदमुनिरपि तं नैकविधाभिः स्तुतिभिः प्रशस्य तद्दर्शनमेव मुख्यमागमनहेतुं पुरस्कृत्य पश्चात् 'साम्प्रतं शिशुपालवधविधानमेव साम्प्रतमतस्तदर्थं प्रयत्यता'मितीन्द्रसन्देशमुपेन्द्राय समाचष्ट । तत्प्रसङ्गेन च तस्य हिरण्यकशिपुरावणरूपेण जगत्पीडनमस्य च नृसिंहरामादिरूपेण तद्वधं च सम्यगस्मारयत् । अपुपच्च स्वकीयामुक्ति'मेतत्कार्यं भवतैव विधेयमस्ती'ति ध्वनयन् । सेत्स्यति च भवत इदं पुरन्दरस्य कार्यमित्याशंसितवांश्च । श्रीकृष्णोऽपि ततो भ्रुकुटिबन्धव्याजेन चैद्यं प्रति क्रोधं प्रदर्शयन् नारदोक्तिमाश्रुत्य तस्मिन् प्रतिनिवृत्ते सति मन्त्रणाय तात्कालिकीं सभां व्यसृजत् ॥

## द्वितीयसर्गे—

तदनन्तरमेव राजसूययज्ञचिकीर्षया श्रीमता युधिष्ठिरेणाऽपि साहाय्यसम्पादनाय समाहूतः स श्रीकृष्णः 'चैद्याऽभियानराजसूययागगमनयोः कतरदस्माभिरनुष्ठेय'मिति संशयानो निश्चयाय स्वपितृव्यस्वाग्रजाभ्यां श्रीमदुद्धवबलरामाभ्यां सह मन्त्रयितुं तदुचितं स्थानं ताभ्यां सहैव समासदत्, परस्परं विरुद्धं तत् कार्यद्वयं च द्वयोरपि गुर्वोः पुरस्तादुत्क्षिप्तवान् । तत्र च 'युधिष्ठिरस्तु विनाऽप्यस्माननुजानां भीमार्जुनादीनां साहाय्येन यागाय समर्थः, शत्रुस्तु जगदुद्वेगकारी नोपेक्ष्य' इति स्वल्पया गिरा प्रतिपाद्य व्यरमत् । ततश्च समिद्धाऽमर्षो बलराम उद्धवं वक्तुकाममपि सिद्धान्तपक्षे स्थापयन् स्वयमेव प्रोद्धटया वाचा माधवमतं सपत्नाऽभियानरूपमेव नानाविधयुक्त्युपन्यासेन समपूपुषत्, बिलम्बं च तत्र नाऽसहिष्ट । तदुत्तरं च श्रीकृष्णेनाऽक्षिसङ्केतद्वारा स्वमतप्रदर्शनाय प्रार्थितः स उद्धवो नीतिनिपुणतया बलदेवोक्तीर्युक्त्या पूर्वविरुद्धबलवद्विविधराजनीत्यन्तर-

प्रसङ्गाऽवधानाद्युपपादनेन च खण्डयित्वा युधिष्ठिरस्य यज्ञे साहाय्यदानाय गमनेनैव द्विविधमप्यस्माकं 'यज्ञे गमनं तत्र च साहाय्यप्रदानं, तत्रैव भक्त्यतिशयेन युधिष्ठिरेण करिष्यमाणाया मुख्यायाः श्रीकृष्णपूजाया जातकोपेन शिशुपालेन विहितमपशब्दोच्चारणादिरूपमेतदपराधशतं सोढुं पितृस्वस्रा सार्धं कृतया प्रतिज्ञया कृष्णेन शान्तिपूर्वकमपराधमर्षणादेतस्मिन्नतिसन्तसमतस्तदानीमेव युद्धाय सन्नद्धं तं प्रति अभियानं चेति कार्यं सेत्स्यतीति सुस्पष्टमाख्यत्। श्रीकृष्णोऽपि पितृव्यस्य श्रीमत उद्धवस्योक्तिं प्रसङ्गोचितामाकलय्य तामेव ज्यायसीं मन्वानस्तथैव कर्तुमनुमेने। कार्यान्तरसम्पादनसमीहया तत्संसदो विसर्जनाय स्वासनमुत्थानेन परित्यक्तवान्॥

## तृतीयसर्गे—

अथ सद्यो युद्धविचारस्य शान्ततया स्थिरतया च यज्ञगमनस्य सुतरां प्रसन्नाऽन्तःकरणः श्रीकृष्णो भगवान् प्रसाध्याऽङ्गान्यलङ्करणैर्गृहीतच्छत्रचामरदिव्यास्त्रादिः सपरिकरो राजयोग्यं सेनासमुदयमादाय पताकातोरणाद्यलङ्कृतरथ्यायाः समस्तपौरजनसमीप्सितभगवद्दर्शनाया अत एव परिपूर्णमार्गान्तरालायाः श्रीशालिन्याः श्रीद्वारिकानगर्याः चतुर्विधसैन्यसमारोहनिष्क्रमणादिपुरस्सरं निर्याय कल्लोलिनं रत्नादिपरिपूर्णगर्भं तटप्रान्तेषु विकसदनेकविधद्रुमततिं कृतसरिदाश्लेषं वितीर्णाम्भोधराम्भसमुच्चैर्नेदन्तं पुरोवर्तमानं समुद्रमद्राक्षीत। क्रमशश्च समन्ततस्तदीयां मनोहारिणीं सुषमां लोचनाभ्यामुपोषिताभ्यामिव पिबन् पुरः प्रासर्पत्॥

## चतुर्थसर्गे—

ततश्च प्रस्थितः स हरिः समुद्रदर्शनानन्तरं पुरस्तादागतं मध्येमार्गं नानावर्णविचित्रितभागमभ्रंलिहशिरसं निर्मलसलिलविलसिताऽन्तःप्रदेशमुपभोगयोग्यं कविवचसां वर्णनीयविषयं विस्मयनीयरूपं रैवतकं गिरिं सस्पृहमालोकयत्। प्रसङ्गेन च दारुकद्वारा पर्वतस्य रमणीयतमत्वं समुपस्थितस्य भगवतः कृते समुत्थानादिनैकविधकल्पनामिषेण सौन्दर्यातिशयं च वर्णयामास कविः। मध्ये एव विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रसादृश्यं पर्वते परिकल्पयामास॥

## पञ्चमसर्गे—

ततो रैवतकपर्वतसुषमाकृष्टमना महामनाः श्रीकृष्णः परमरमणीयं बहुविधरम्यकुञ्जलतादिविलसदनेकप्रदेशं तमेव महीधरं रिरंसिषया ससैन्यं समाजगाम। तत्र च क्वचित् पत्तयः स्वं स्वं निवेशं व्यदधन्। क्वचिच्च मदाविला दन्तावलाः चरणशृङ्खलाद्याकर्षणेन समुद्धतानुर्वीरुहोऽनमयन्। कुत्रचिच्च हेषादिभिः समुत्तुङ्गास्तुरङ्गाः सर्वमेव तं भागं मुखरितं व्यदधन्। अन्यतश्च स्यन्दना अपि सकलमेव तद्वनमाकुलयन्। इत्थं समन्ततः कियदवधि भगवद्बलाक्रान्त इव स शैलो व्यराजत॥

## षष्ठसर्गे—

यदा हि भगवान् वासुदेवः शिखरिणं समुपाश्रित्य विहारं कर्तुमियेष, तदा युगपदेव तत्र षडप्यृतवः संसेवितुं भगवन्तं समुल्लेसुः। तेषु वसन्तः पल्लवानि कोमलयन्,

कुरबकस्तबकं समुल्ललयन्, मधुकरनिकुरम्बं ध्वनयन्, युवतिजनमनांसि समाकुलयन् सर्वतः प्रसर्पन्नानन्दयत् । ग्रीष्मोऽपि शिरीषनवमल्लिकासौगन्ध्यं स्थिरयन्, प्रतिकूलेतर-दक्षिणाऽनिलप्रवाहेन यौवतमुत्कयन्, घर्मतप्तजनं सरसचन्दनाद्यनुलेपनव्यवहारप्रसितमारचयन् स्वीयं चातुर्यमदर्शयत् । एवमेव वर्षा अपि गम्भीराम्भोधरनिर्घोषं स्मारं शासनपटहमिवोद्घोषयन्त्यः, तडित्प्रकाशैर्मध्येमध्ये तिमिरततिमुच्छेदयन्त्यः, प्रियतमा एकान्त एव कान्ताभिसरणसमुत्सुका विदधत्यः, स्वशरीरे भगवच्छरीरसाम्येन महान्तं मदमुद्भाव्य त्रिपुलीभवन्त्य आचक्रुषुः श्रीमतो वसुदेवसूनोश्चेतः । इत्थं च शरदपि जलधरकालविलुप्तं मार्गं पुनरपि प्रकाशयन्ती, निम्नगासु तनिमानं विदधती, काशादिसुमनःशोभां विस्तारयन्ती, शशधरकरनैर्मल्येन विलासिवर्गे स्नेहाधिक्यमुद्भावयन्ती मुदं वितनुते स्म । हेमन्तश्च सतुहिनेन मरुता वियोगिवर्गमतिशयेन समुद्दीपयन्, सीत्कारादिशिक्षा अनुशासत्, वास्तविकमाश्लेषसुखमुत्पादयन् मदयति स्म दयितासङ्गिनं शार्ङ्गिणम् । शिशिरोऽपि लोध्ररजसा दिशो धवलयन्, नातिशीतोष्णेन समयेन लोकानुपकुर्वन्, हेमन्तमवस्कन्द्य वसन्तायाऽवसरमुपकल्पयन् विलसति स्म । इत्थं तत्तदृतुगतमानन्दमानन्दकन्दो भगवाननन्वभूत् । कविरपि यमकादिचातुरीमस्मिन् सर्गे विशेषतः प्रादर्शयत् ॥

## सप्तमसर्ग—

इत्थमृतुगणविलासे प्रसृते सानुचरो भगवान् वनविहारमप्यातेने । तत्र क्वचित् युवदम्पती परस्परं चरणपातमिष्टमृदुभाषणादिनाऽनुकूलौ भूत्वा वनक्रीडामनुभूतवन्तौ । क्वचिच्च परस्परं सख्य एव पुरः पश्चाद् व्रजन्त्यः सङ्घर्षाऽक्षिमीलनपुष्पावचयादिभिरनुभूय वनसौख्यं तृप्तिमाययुः । एवं नैकविधाभिः क्रीडाभिः कञ्चित्कालं गमयित्वा जलक्रीडौत्सुक्यमन्ते न्यरूपयत् कविः ॥

## अष्टमसर्ग—

जलक्रीडार्थमवतीर्णासु तासु काश्चित् परस्परं व्यात्युक्षिकां, काश्चन परस्परमुपरि सरसिरुहाऽवपातनं, कतिचन सखीसिसिक्षामिषेण प्रतिप्रतियुवमनुकूलयितुमञ्जलिबन्धम्, अपराः प्रेयोभिः सह पानीयविहारमाचरन्त्यो दृशमरुणां व्यदधुः । इत्थमेव यथेच्छं तत्र सरसि विहृतमभूत् । अथ च विधाय जलकेलीर्निर्गत्य सरसो वासांसि परिधाय संनिवेशमुपाजग्मुः ॥

## नवमसर्ग—

एवं भगवति वनविहारजलकेलीरनुभवति सति सायंसमयः समागतः । क्रमशश्च भास्करोऽपि जलकेलिकौतुकितया निमज्जन्नम्भसि कमलिनीरपि मलिनीचकार । अन्धकारोऽपि प्राप्तावसरः सर्वत्रैव स्वीयं साम्राज्यं स्थिरीकर्तुं समन्ततः प्रससार । ततश्च तारागणो नभसि समुदयं लेभे । अनन्तरं च मन्दंमन्दं गलहस्तितताऽन्धकारः कलाऽर्धखण्डपूर्णरूपेण विरहिविरोधी सर्वजनाभीप्सितदर्शनो मदनोद्दीपको निशानाथः प्रादुर्भवन् प्रौढिमासेदिवान् । तेन च सर्वत्रैव परमानन्दः पदमविन्दत । उदिते च तस्मिन् दयितमनोहारि नेपथ्यादिविधानं दूतीप्रेषणादि च तत्र लब्धपदमभूत् ॥

## दशमसर्ग—

विलासिनीनां मधुपानं तदुपयोगिसामग्रीसंनिधानसमन्वितमुपवर्ण्य तज्जनितस्खलिता-दिनाऽनुभावानुभवानन्तरं प्रेक्षणभाषणाश्लेषणचुम्बनात्मकं बाह्यं रतं प्रदर्श्याऽभ्यन्तरं च विस्रम्भविहाररूपं, सुरताऽवसानमिषेण तत्तच्चिह्नानुभावादिवर्णनं समाप्य पूर्वार्धमपि महाकाव्यस्य समापयत् कविः॥

## एकादशसर्गे—

प्रसङ्गतः किल चन्द्रमसोऽस्तगमनं क्रमशोऽरुणोदयमन्धकारनिरसनं सवितुरुदयमति-प्रसन्नया गिरा वर्णयन् भगवदुत्थानाय मागधाद्युपश्लोकनादि सर्वं प्राभातिकं प्रदर्शयन् जगतः सुप्रभातमाचकाङ्क्ष कविः॥

## द्वादशसर्गे—

प्रभाते कृतप्रस्थानक्षमनेपथ्यविधानःससैन्यस्तोरणाद् बहिरनुद्धातसुखेन पथा गच्छन् श्रीकृष्णो मध्येमार्गं गवां विहरणं पश्यन्, गोपीनां कलमगोप्त्रीणां मधुरं गीतं शृण्वन्, राज्ञां महीभृतां च शिरसि सैन्यरेणून् स्थापयन् गुरूनपि गिरीनतिक्रम्य कलिन्दप्रभवाया यमस्वसुः कृष्णाया अपि जनानां मालिन्यमपहर्त्र्याः सूर्यतनयाया यमुनायाः सौन्दर्य-मपश्यत्॥

## त्रयोदशसर्गे—

अथ स हरिः कालिन्दीमतीत्य यावत् पुरस्तात् प्रचलति, तावदेव तनावमान्तमतनु-मानन्दं बिभ्रत् सानुजो राजा युधिष्ठिरः स्वनगरात् प्रभुमादरेणाऽऽनेतुमभिमुखः समाजगाम। तदानीं हर्षप्रकर्षेण प्रवृत्तदुन्दुभिध्वनिबधिरितान्तराले दिगवकाशे हस्तसंज्ञैव केवलं सङ्केत-ग्रहणाय प्रभुरभूत्। ततश्च द्वयोरपि श्रीकृष्णधर्मराजयोः परस्परं मेलनमजनि, युधिष्ठिरश्च प्रणनाम भगवन्तम्। एवं नमन्तमालोक्य तं विभुः सद्य एव वेगेन समाश्लिक्षत्, क्षिति-भुजोऽन्यानपि योग्यसत्कारैरसभाजयत्। युधिष्ठिरप्रार्थनया कृतरथाधिरोहणः सह सर्वैः पुरं प्रविशन् पौरनारीभिः सप्रेमकौतुकं निरीक्षितः स कृष्णो मयनिर्मितां नवहाटकेष्टकमणिमय-प्रस्तरादिनिर्मितमलघुकान्तिनिधि सभाद्वारमासाद्य रथादवतीर्य नृपदर्शितमार्गः सदसोऽभ्य-न्तरे रुचिरमासनमलञ्चकार। तस्मिन् क्षणे तौर्यत्रिकमपि तत्राऽभवत्। नामग्राहपूर्वमाबालं सर्वानपि कुशलप्रश्नादिना सभाजयित्वा चिराय युधिष्ठिरेण सह वार्तालापजन्यं सुखमनुभव-न्नतिष्ठत्॥

## चतुर्दशसर्गे—

अथ युधिष्ठिरो यज्ञकर्मसमनुतिष्ठासया स्तवेन कृष्णमभिमुखीकृत्य 'देव! अस्ति मे यज्ञचिकीर्षा, तदर्थमेव भवानाहूतो मया, इदानीं तदनुष्ठानायाऽऽज्ञाप्रदानेन मामुपकुरु, त्वयि स्थिते कीदृशोऽप्यन्तरायो न तत्रोद्भवेत्, मदीप्सितं पुनः सेत्स्यति, तत्प्रसीद' इति प्रार्थयते स्म। कृष्णोऽपि 'त्वां विहाय राजसूययागः केन विधेयः, यस्य ते निदेशे धन-ञ्जयादयो जागरूका अनुजाः, बुद्धिश्च नीतिसम्पादितसकलसम्पत्। अपि च सुदर्शनोऽपि ते सहायकः स्यात्' इत्युत्तरयामास। ततो हृष्टः स धर्मराजः शिवस्याऽष्टमूर्तिष्वन्यतमा-

मष्टमीं मूर्तिं यजमानाख्यामासाद्य कृष्णे सर्वद्रष्टृत्वं विन्यस्य ऋत्विजो वृत्वा यथाविधि यागं समपादयत् । अवसिते यज्ञकर्मणि विप्रेभ्यो दक्षिणा अन्नादि च दत्तवान् । एवं यज्ञे प्रस्तुते धर्मशास्त्रमनुस्मरन् धर्मराजः सदस्यपूजामुद्दिश्य पितामहं भीष्माचार्यमपृच्छत् । स च 'स्नातकगुरुबन्धुजामातृराजर्त्विजः षडमी, ब्राह्मणाः, क्षत्रियाश्च गुणिनः पूजनीयाः। एक एव वाऽधिकगुणराशिः पूज्यः । अत्र च सर्व एव समुपस्थिताः सन्ति, तर्हि तत्र सर्वाधिकगुणशाली जगदुत्पत्तिस्थितिसंहृतिकर्ता भक्तवत्सलः कृष्ण एव तदर्हो मन्मतेन' इत्यभिधाय कृष्णं स्तुतिप्रसङ्गेन वराहनृसिंहवामनदत्तात्रेयपरशुरामरामकृष्णाऽवतारैरस्तवीत् । भीष्मवचःश्रवणसमनन्तरमेव युधिष्ठिरोऽग्र्यां पूजां मधुसूदनस्याऽकरोत् ॥

पञ्चदशसर्गे—

ततो युधिष्ठिरकृतया कृष्णपूजया परमं कुपितः शिशुपालः करावधूय पादाभ्यां भूमिमुल्लिख्य दन्तैर्दन्तान् सङ्घट्टयन् रक्तीकृतनेत्रो मुहुरुष्णं श्वसन् निष्ठुरतराऽक्षरया गभीरया वाचा धर्मराजं विनिन्द्य कृष्णमाक्षिप्य भीष्ममपि तिरस्कृत्य पुनरपि कृष्णं नानाविधैर्वचोभिरुपालब्धवान् , नरकात्मजस्य वेणुदारिणो हस्ते हस्ततालं दत्त्वोच्चैर्जहास च । श्रीकृष्णस्तु मौनमेवाऽवललम्बे, मनसाऽपराधानगणयच्च । गाङ्गेयस्तु चैद्यकृतं तन्निन्दनमसहमानः क्षुब्धोऽम्बुधिर्मरुतेव गर्जितेन भुवं कम्पयन् जगाद— 'अद्य मयाऽच्युतार्चा विहितेति यस्य न मता सा, स धनुरारोपयतु' इति भीष्मवचसा विकृताः शिशुपालपक्षीयाः क्षितिभृतो बाणद्रुमवेणुदारिदन्तवक्त्रोत्तमौजोरुक्मिणसुबलप्रमुखा रभसादुत्थाय सदोमण्डपं त्यक्तुं सन्नद्धा अभूवन् । भूयोऽपि विषमिव वचनमुद्वमन् युद्धाय समाहूय चैद्यः श्रीकृष्णं तस्मादास्थानान्निर्गत्य सेनां समनाहयत् । तदा च भृशमशकुनानि तत्सेनासन्नाहकाले 'क्व यासि, तिष्ठे'त्यादीनि समुदभवन् । पाण्डवास्तु निसर्गदक्षिणाः शान्तमनसः क्षणमपि नाऽकुप्यन् , तत्पक्षीया अपि तथैवाऽतिष्ठन् ॥

षोडशसर्गे—

अथ सेनासन्नाहं विधाय योद्धुकामः किल चेदिपतिः कञ्चन दूतं राजसदसि कृष्णाय सन्दिशन् प्रैषयत् । स च तत्सद उपगम्य चातुर्यपूर्णया वाण्या श्लेषेण कृष्णं विनिन्दन्तं स्तुवन्तं च सन्देशं श्रावयामास । तस्य तद्वच आकर्ण्य रथाङ्गपाणिनोदितः सात्यकिः प्रत्युत्तरयामास । भूयोऽपि स सन्देशहरः प्रतिभावान् सात्यकेरुत्तरस्यापि प्रत्युत्तरणेन खण्डनं विधाय 'सर्वेभ्योऽप्यतीव शूरो विद्वज्जनसमादरणीय ईश्वरादप्यधिको भवतः सर्वान् विनिपात्य यादवाङ्गना निरलङ्काराः कुर्वन् युधि जयश्रियमधिगमिष्यति शिशुपालः' इत्यप्यभिधाय तूष्णीं बभूव ॥

सप्तदशसर्गे—

एतेन दूतवाक्येन श्रीकृष्णप्रमुखाः सर्वेऽपि तत्पक्षीयाः क्रोधेन महताऽऽविष्टा बभूवुः, परमुद्धवस्य मुखे न कोपि विकारः पदमलभत । कृष्णप्रेरिता चमूराजये समनह्यत । इत्थं च सा हरेरनीकिनी गच्छन्ती रिपुसैन्यस्याऽभिमुखं ययौ । सापि महताऽऽडम्बरेण स्थिता स्वशत्रुसेनाभियानं प्रतीक्षमाणा स्वं स्थानमशून्यमिव कुर्वाणा व्यराजत । इत्थं चोभयोरपि सेनयोः परस्परं युद्धमभूत् ॥

## अष्टादशसर्गे—

उभे अपि कृष्णचैद्यसेने पथि सङ्गते युद्धमारेभाते । तत्र कस्यचित् करच्छेदः, कस्यचन पादाऽवलूनं,मपरस्य कबन्धत्वमिति हस्त्यारोहिसादिपत्तिरथिनां परस्परं यथाक्रममयथाक्रमं च तुमुलं युद्धं प्रवृत्तम् । तेन च गगनाङ्गणे वरणाय गृहीतस्रजः सुरकामिन्यस्तदानीमभीप्सितान् वरानलभन्त । युधि च पतिताः शूराणामवयवा हिंस्रैः शृगालादिभिर्गृध्रादिभिः पशुपक्षिभिः ससन्तोषं मांसरुधिराशया असेव्यन्त । एवं चिराय युध्यमानयोरुभयोः सैन्ययोः कदाचित् शत्रुपक्षजयः, कदाचिच्च स्वपक्षजय इति दोलायुद्धमभूत् ॥

## एकोनविंशसर्गे—

इत्थं तुमुले रणेऽवसिते बहूनां सैन्यानां शस्त्राणां च भङ्गेन सैनिकेषु परमप्रवीणा योधा द्वन्द्वयुद्धं विधातुं प्रावर्तन्त । तत्र वेणुदारिणं बलभद्रः, उल्मुको द्रुमं, प्रद्युम्नः शत्रुचर्मं बाणं च गतप्राणमकरोत् । ततश्च क्रुद्धो महीपतिश्चैद्यो महत्या सेनया प्रद्युम्नमाक्रान्तवान् । तदानीं च श्लोकैरिव महाकाव्यं सर्वतोभद्रगोमूत्रिकादिभिर्व्यूहैर्विषमं तद्बलं परः पुमान् कृष्णः पञ्चत्वमनयत् । अत्र सर्गे कविना बन्धा अपि विन्यस्ताः, अन्तिमे च पद्ये कवेः काव्यस्य च नाम्नोरुद्धारश्चक्रबन्धेन कृतः ॥

## विंशसर्गे—

एतावता महति सैन्ये सम्पराये शीर्णतां याते चेदिराट् केशवमाह्वत । अनन्तरं च तयोरुभयोरस्त्रैः शस्त्रैश्च चिराय समरमभूत् । अन्ते च द्वावपि तौ नियुद्धेनाऽयुध्येताम् । ततो वाग्बाणव्यापारमेवाऽतनोत् स शिशुपालः । ततः स मुरारिराक्रोशतस्तस्य चैद्यस्य वपुरपमूर्धमकरोत । तुष्टा देवादयः स्तुवन्त एव चैद्यवपुषो निर्गत्य कृष्णशरीरं प्रविशत्तेजोऽपश्यन् , तेन विस्मिताश्च समभूवन् ॥

## कविवंशवर्णनस्य सारांशः ।

आसीत्कश्चन श्रीवर्मलाभिधानो नरपतिः, तस्य सुप्रभदेवो नाम महामात्यो बभूव । तस्य सर्वाश्रय इत्यपराख्यो दत्तकनामा पुत्रोऽभूत् । तत्सुतो माघ इदं रुच्यङ्कं कविकीर्तिदुराशया शिशुपालवधाख्यं काव्यं श्रीकृष्णचरितवर्णनात्मकं विहितवान् ॥

## उपसंहारः ।

उपरि प्रदर्शितेन महाकाव्यकथासारांशेन पिपठिषूणां कश्चन स्वल्पोऽप्युपकारो यदि स्यात्तर्हि प्रकाशकमहोदयस्याऽभिलाषः परिपूर्णतां यायादित्यनुमीयत इति शम् ॥

॥ श्रीः ॥

श्रीमन्माघकविप्रणीतं

# शिशुपालवधम् ।

## वल्लभदेवकृतया सन्देहविषौषधिव्याख्यया मल्लिनाथकृतया सर्वङ्कषाव्याख्यया च समेतम् ।

## प्रथमः सर्गः ।

### सन्देहविषौषधिः ।

यस्य भृङ्गावलिः कण्ठे दानाम्बुराजिभूषिते ।
भाति रुद्राक्षमालेव स वः पायाद्गणाधिपः ॥
अभीष्टफलसम्पत्तिहेतुं स्मृत्वा सरस्वतीम् ।
शिशुपालवधे काव्ये सारटीका विधीयते ॥
कृता महद्भिर्यत एव टीका ममाऽपि यत्नस्तत एव युक्तः ।
ब्रह्माच्युताभ्यर्चितपादपद्मो न पूज्यते किं मनुजैर्गिरीशः ॥
सत्यरम्याणि वस्तूनि दूषयन्त्यविमत्सराः ।
किन्तु केचित्प्रमाणज्ञा दृश्यन्ते पक्षपा नराः ॥

अभिलषितसिद्ध्यर्थं मङ्गलादि काव्यं कर्तव्यमिति स्मरणात् कविः श्रीशब्दमादौ प्रयुङ्क्ते—

**श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ॥**
**वसन् ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥ १ ॥**

**श्रिय इति ॥** हरिर्मुनिं ददर्श इति सम्बन्धः । ननु हरयो दश संख्याता वर्तन्ते—

अर्कमर्कटमण्डूकविष्णुवासववायवः ।
तुरङ्गसिंहशीतांशुयमाश्च हरयो दश ॥

कोऽसौ हरिरित्याह—श्रियः पतिः लक्ष्मीनाथो विष्णुरित्यर्थः । मुनिं कमित्याह—हिरण्यगर्भाङ्गभुवं ब्रह्मतनयं नारदमित्यर्थः । यद्यपि ब्रह्मत्वेनासौ तदा हरिणाऽज्ञायि, येन

केनचिच्छब्देन निर्देशे कर्तव्ये मुनिशब्दः प्रयुक्तः कविना ज्ञात एव, तस्य चैतद्वचनम्। कदा-ऽद्राक्षीत् क्व वसुदेवसद्मनि शूरसेनपुत्रगृहे श्रीमति सर्वसमृद्धियुक्ते वसन् तिष्ठन् । कलिद्वा-परसन्धावित्यर्थः । ननु भगवान् पुरातनमुनिर्बदर्याश्रमनिवासो किमिति तत्रोवासेत्याह— किं कर्तुं जगच्छासितुं त्रिभुवनं रक्षितुं पालयितुम् । एतेन कर्माधीनत्वं भगवतो निरस्तम् । कीदृशो हरिः जगन्निवासः भुवनानां निवासः आधारः । निवसन्त्यस्मिन्निति निवासः । कीदृशम् अम्बरादाकाशादवतरन्तं पतन्तम्, मुनेर्विशेषणम् । अङ्गभूशब्द उपचारान्मानसे-ऽपि पुत्रे वर्तते । यथा सरसिजशब्दः स्थलकमलेऽपि। तथा हि किरातार्जुनीये काव्ये—

उत्फुल्लस्थलनलिनीवनादमुष्मादुद्धूतः सरसिजसम्भवः परागः ।
वात्याभिर्वियति विवर्तितः समन्तादाधत्ते कनकमयातपत्रलक्ष्मीम् ॥

अत्र केचिदनुवदन्—शौरिर्जगच्छासितुं वसुदेवसद्मनि वसन्नम्बरादवतरन्तं नारदं ददर्शे-त्यनेनैव विवक्षितार्थस्योक्तत्वात् पदान्तरोपादानं वृत्तभरणार्थमेवेति । तदसम्यक्, यतोऽत्रैवं सत्यनुप्रासः शब्दालङ्कारस्त्यक्तः स्यात् । विरोधाभासश्चालङ्कारः—यः किल साक्षात् श्रीपतिः स कथं श्रीमति गृहे वसति, यश्च जगन्निवासः स परगृहे वसतीति । मङ्गलादित्वं च काव्य-स्य प्रोक्तं न स्यात् । किञ्चित्स्वरूपप्रतिपादनाय विशेषणानि प्रयोक्तव्यानि इति केनचि-न्नियमः कृतः । श्रीमतीत्युक्ते कंसादीनां वधः प्रतिपादितः, न हि तेषु सत्सु तद्गृहस्य श्रीमत्ता भवतीति । तथा यदि नारद इत्येतावदुच्यते ततस्तस्य पूजार्हितुर्ब्रह्मपुत्रता नोक्ता स्यात्, चयस्त्विपामित्यादि निरवतारं स्यात् । इति सर्वमेव निरवद्यम् । सर्गेऽस्मिन् वंशस्थं वृत्तम् । उशन्ति वंशस्थमिदं जतौ जरौ ॥ १ ॥

## सर्वङ्कषा ।

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥

दन्ताञ्चलेन धरणीतलमुन्नमय्य पातालकेलिषु धृतादिवराहलीलम् ।
उल्लाघनोत्फणफणाधरगीयमानक्रीडावदानमिभराजमुखं नमामः ॥

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदास्माकं संनिधिं संनिधिं क्रियात् ॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासिकीमन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां लोकेऽभूयदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥

मल्लिनाथः सुधीः सोऽयं महोपाध्यायशब्दभाक् ।
विधत्ते माघकाव्यस्य व्याख्यां सर्वङ्कषाभिधाम् ॥

ये शब्दार्थपरीक्षणप्रणयिनो ये वा गुणालङ्क्रियाशिक्षाकौतुकिनो विहर्तुमनसो ये च ध्वनेरध्वनि ।
क्षुभ्यद्भावतरङ्गिते रससुधापूरे निमङ्क्तुं ये तेषामेव कृते करोमि विवृतिं माघस्य सर्वङ्कषाम् ॥
नेताऽस्मिन् यदुनन्दनः स भगवान्वीरः प्रधानो रसः शृङ्गारादिभिरङ्गवान् विजयते पूर्णा पुनर्वर्णना ।
इन्द्रप्रस्थगमाद्युपायविषयश्चैद्यावसादः फलं धन्यो माघकविर्वयं तु कृतिनस्तत्सूक्तिसंसेवनात् ॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥

अथ तत्र भवान्माघकविः

'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे' ॥

इत्यालङ्कारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनतां, 'काव्यालापांश्च वर्जयेत्' इति निषेधस्यासत्काव्यविषयतां च पश्यञ्शिशुपालवधाख्यं काव्यं चिकीर्षुश्चिकीर्षितार्थाविघ्नपरिसमाप्तिसंप्रदायाविच्छेदलक्षणफलसाधनत्वात् 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्याशीराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च काव्यफलशिशुपालवधबीजभूतं भगवतः श्रीकृष्णस्य नारददर्शनरूपं वस्तु आदौ श्रीशब्दप्रयोगपूर्वकं निर्दिशन् कथामुपक्षिपति—

**श्रिय इति** ॥ तत्रादौ श्रीशब्दप्रयोगाद्वर्णगणादिशुद्धेरभ्युच्चयः । तदुक्तम्—

'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा' ॥

इति । श्रियो लक्ष्म्याः पतिः । अनेन रुक्मिणीरूपया श्रिया समेत इति सूचितम् । 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि' इति **विष्णुपुराणात्** । जगन्निवासो जगतामाधारभूतः । कुक्षिस्थाखिलभुवन इति यावत् । तथापि जगत् लोकं शासितुं दुष्टनिग्रहशिष्टानुग्रहाभ्यां नियन्तुं श्रीमति लक्ष्मीयुक्ते वसुदेवसद्मनि वसुदेवरूपिणः कश्यपस्य वेश्मनि वसन् कृष्णरूपेण तिष्ठन् हरिर्विष्णुरम्बरादवतरन्तम् । इन्द्रसन्देशकथनार्थमिति भावः । हिरण्यस्य गर्भो हिरण्यगर्भो ब्रह्मा ब्रह्माण्डप्रभवत्वात्, तस्याङ्गभुवं तनूजम् । अथ वा तस्याङ्गं दवयवादुत्सङ्गाख्याद्भवतीति हिरण्यगर्भाङ्गभूस्तं मुनिम् । नारदमित्यर्थः । 'उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयंभुवः' इति **भागवतात्** । ददर्श । कदाचिदिति शेषः । अत्राल्पीयसि वसुदेवसद्मनि सकलजगदाश्रयतया महीयसो हरेराधेयत्वकथनादधिकप्रभेदोऽर्थालङ्कारः । तदुक्तम्—'आधाराधेययोरानुरूप्याभावोऽधिको मतः' इति । जगन्निवासस्य जगदेकदेशनिवासित्वमिति विरोधश्च । तथा तकारसकारादेः केवलस्यासकृदावृत्त्या जगज्जगदिति सकृद्व्यञ्जनद्वयसादृश्याच्च वृत्त्यनुप्रासभेदौ शब्दालङ्कारौ । एषां चान्योन्यनैरपेक्ष्येणैकत्र समावेशात् तिलतण्डुलवत्संसृष्टिः । सर्गेऽस्मिन्वंशस्थं वृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥ १ ॥

**कीदृशं मुनिमद्राक्षीदित्याह—**

**गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ॥**
**पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ॥ २ ॥**

**गतमिति** ॥ जनैः सामान्यलोकैः इति अस्मात्कारणात् आकुलं ससम्भ्रममीक्षितमवलोकितं दृष्टम् । तदेव कारणमाह–एतत् धाम तेजः अधोऽधस्तात् पतति सरति किं तत् । सर्वस्यां दिशि विसारि व्यापि किमेतत, किं वस्त्वेतद्भवेदित्यर्थः । स्वरूपनिर्देशार्थ इतिरिति त्वन्ये । इतीत्थमाकुलमनिश्चितमीक्षितमित्यर्थः । कदाचित्सावित्रमेतत्तेजो भवेन्नेत्याह—अनूरुसारथेः रवेः तिरश्चीनं तिर्यक् गतं सम्प्रसारणं प्रसिद्धं प्रतीतम्, एतच्चाधः पतति । कदाचित्काशानवं स्यान्नेत्याह—हविर्भुजोऽग्नेरूर्ध्वज्वलनं प्रसिद्धं प्रतीतम् एतच्च सर्वतो विसारि, अतः किमेतत् स्यात् । प्रसिद्धशब्दोऽत्रोभयेनापि सम्बध्यते । गतमिति भावे क्तः । अविद्यमानौ ऊरू यस्यासावनूरुः । ईक्षितमिति कर्मणि निष्ठायां कर्मण्यभिहिते पूर्वक्रियापेक्षा द्वितीया । अत्रापि चोदयति—ऊनमिदं वाक्यं साध्याहारत्वात् । अत्र हि संशये कविना विकल्पौ न निबद्धौ–'द्विधाकृतात्मा किमयं दिवाकरो विधूमरोचिः किमयं हुताशनः' । गतमित्यादि, पतत्यधो धामेत्यादीतिपादद्वयसाध्याहारोऽयं श्लोक इति । युज्यते । एतत्केवलं संशयालङ्कारत्वे सति । सङ्करालङ्कारत्वे तु न कश्चिद्दोषः । यतः कश्चिदत्रोत्तरालङ्कारः कश्चित् संशयांशः ।

**उत्तरवचनात्पूर्ववचनोन्नयनं यत्रेत्युत्तरलक्षणम् । अधो धामेति द्वे पदे ॥ २ ॥**

तदानीं जनैर्विस्मयादीक्षितुं प्रवृत्तमित्याह —

**गतमिति** ॥ अविद्यमानावूरू यस्य सोऽनूरुः स सारथिर्यस्य तस्यानूरुसारथेः सूर्यस्य गतं गतिः । भावे क्तः । तिरश्चीनं तिर्यग्भूतम् । 'विभाषाऽञ्चेरदिक्स्त्रियाम्' इति तिर्यक्शब्दादञ्चत्यन्तात्प्रातिपदिकात्स्वार्थे खप्रत्ययः । हविर्भुजोऽग्नेरूर्ध्वज्वलनमूर्ध्वस्फुरणं प्रसिद्धम् । इदं तु सर्वतो विसारि धामाऽधः पतति । किमेतदिति सूर्याग्निविलक्षणमदृष्टपूर्वमिदं धाम किमात्मकं स्यादित्याकुलं विस्मयात्संभ्रान्तं यथा तथा जनैरीक्षितमीक्षणं कृतम् । सकर्मकादप्यविवक्षिते कर्मणि भावे क्तः । 'प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' इति वचनात् । केचित्कर्मणि क्तान्तं कृत्वा ईक्षितं मुनिं ददर्शेति पूर्वेण योजयन्ति । अत्रोपमेयस्य मुनिधाम्नः सूर्याग्निभ्यामुपमानाभ्यामधःप्रसरणधर्मेणाधिक्यवर्णनाद्व्यतिरेकः । तदुक्तं **काव्यप्रकाशे**—'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः' इति । 'धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः' इति **हेमचन्द्रः** । **दिवाकरस्तु वृत्तरत्नाकरटीकायां** प्रथमपठितेन 'द्विधाकृतात्मा किमयं दिवाकरो विधूमरोचिः किमयं हुताशनः' इति चरणद्वयेन सहेममेव श्लोकं षट्पदच्छन्दस उदाहरणमाह । तत्राद्यचरणद्वयेन सन्देहाकारो गतमिति तन्निरासश्च बोध्य इत्युपरिष्टात् ॥ २ ॥

किं यथा जनैः संशयः कृतः तथा हरिणा नेत्याह—

**चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम् ॥**
**विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥ ३ ॥**

**चय इति** ॥ स विभुः सर्वव्यापी हरिरमुं मुनिं क्रमान्नारद इति अबोधि नारदत्वेन निश्चिकाय । तामेव परिपाटीं विशेषणमुखेनाह—कीदृशममुं पुरा पूर्वं त्विषां चयः दीप्तीनां पुञ्ज इत्यवधारितं लक्षितं ज्ञातं, ततः किञ्चित्सामीप्यात् विभाविताकृति लक्षिताकारं सन्तं शरीरीत्यवधारितम् । देहवानयं पतति न तु तेज एवेत्यनेन प्रकारेण ज्ञातस्वरूपमित्यर्थः । ततोऽपि सामीप्याद्विभक्तावयवं प्रकटितश्मश्रुभुजं पुमानित्यवधारितम् । पुमानयं पतति न तु पक्ष्यादिजातिरिति बुद्धवानित्यर्थः । ततो नैकट्यादमुं नारद इत्यबोधि । विभक्ता विभागेन उपलभ्यमाना अवयवा ऊर्वादयो यस्य सः तम् । इतिशब्दः सर्वत्र प्रातिपदिकार्थमात्रत्वव्यवस्थापनार्थः । यदि हि नारदमित्यबोधि इत्युच्यते तथा सति धर्मान्तरयोगे नारदस्य कर्मभावः प्रतीयेत, नारदत्वेनाऽबुद्धेत्ययं त्वर्थो न गम्येत । अत एव प्रातिपदिकार्थत्वे सति नारदात् द्वितीया न भवति । नारद इतीत्यतः पदसमुदायादप्यसौ नैव भवितुमर्हति, अप्रातिपदिकत्वात् । अर्थवत्समुदायानां समासग्रहणं नियमार्थमुक्तम् । प्रातिपदिकाच्च विभक्तय उक्ताः । यत्तत्प्रातिपदिकं च ततो भवत्येव, यथाऽमुमिति । एवमन्यत्र । केचित्त्वनुभूतकर्मत्व एव नारद इति नामस्वरूपनिरूपणाय प्रत्ययवमृश्यते इत्याहुः ॥ ३ ॥

अथ भगवान्निरणैषीदित्याह —

**चय इति** ॥ विभुर्वस्तुतत्त्वावधारणसमर्थः स हरिः पुरा प्रथमं त्विषां चय इत्यवधारितं तेजःपुञ्जमात्रत्वेन विनिश्चितम् । ततः प्रत्यासन्ने विभाविता विमृष्टा आकृतिः संस्थानं यस्य तं तथोक्तम् । अत एव शरीरी चेतन इत्यवधारितम् । ततो विभक्ता विविच्य गृहीता अवयवा मुखादयो यस्य तं तथोक्तम् । अत एव पुमानित्यवधारितम् । अमुमागच्छन्तं व्यक्तिविशेषं नारदं, वास्तवाभिप्रायेणेति पुंलिङ्गनिर्वाहः । क्रमात्पूर्वोक्तसामान्यविशेषज्ञानक्रमेण । लोकदृष्ट्येदमुक्तम् , हरिस्तु सर्वं वेदैवेति तत्त्वम् । नारद इत्यबोधि । नारदं बुद्धवानित्यर्थः । नारदस्य कर्मत्वेऽपि निपातशब्देनाभिहितत्वान्न द्वितीया, तिङामुपसंख्यानस्योपलक्षणत्वात् । यथाह **वामनः**—'निपातेनाभिहिते कर्मणि न कर्मविभक्तिः, परिगणनस्य प्रायिकत्वात्'

इति । बुध्यतेः कर्तरि लुङ् । 'दीपजन—'इत्यादिना चिण् । 'चिणो लुक्' इति तस्य लुक् । अत्र विभाविताकृतिं विभक्तावयवमित्यादिना आकृतिविभावनावयवविभावनयोः पदार्थयोर्विशेषणवृत्त्या शरीरित्वपुंस्त्वावधारणहेतुत्वेनोपन्यासात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति लक्षणात् ॥ ३ ॥

कीदृशममुमिति तद्वर्णनमाह—

**नवानधोऽधो बृहतः पयोधरान्समूढकर्पूरपरागपाण्डुरम् ॥**
**क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना स्फुटोपमं भूतिसितेन शम्भुना ॥ ४ ॥**

**नवानिति ॥** कीदृशं मुनिं नवान् सजलान् बृहतः स्थूलान् पयोधरान् मेघान् अधोऽधः घनानामधस्तात्समीपे भवन्तं वर्तमानं, मुनिं किंभूतं समूढं परिपक्वं शोधितं यत्कर्पूरं घनसारः तस्य यः परागो रजस्तदिव पाण्डुरम् । 'शुक्लो हि नारदः' इत्यागमः । पुनः कथंभूतम् अत एव शम्भुना श्रीमहादेवेन सह स्फुटोपमं सदृशं, शिवसदृशमित्यर्थः । किंभूतेन शम्भुना भूतिसितेन भस्मोद्धूलितेन, पुनः कथंभूतेन क्षणं क्षणमात्रं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना क्षणं स्वल्पकालं क्षणे उत्सवे अभिनयवशात उत्क्षिप्ता ऊर्ध्वीकृता भुजवनस्योपरि कृता गजेन्द्रकृत्तिः करिचर्म येन सः तेन । पूर्वं तस्य दैत्यस्य ईदृशो वरोऽस्ति—यदा किल गजासुरचर्म भूमौ लगति तदा स जीवति, अतो हरेण धृतम् । अधोऽध इति उपर्यधोऽधीनां सामीप्ये द्विता, तद्योगे च पयोधरान् इति 'अभिसर्वतसो'रित्यादिना षष्ठ्यपवादो द्वितीया । अभितो ग्राममुभयतो ग्राममित्यादीनि वाक्यानि एतावन्त्येव प्रयोगभाञ्जि स्युः । शम्भुनेति 'तुल्यार्थै'रिति तृतीया । अतुलोपमेति प्रतिषेधो न भवति, समासे गुणीभूतत्वादुपमाशब्दस्य । यद्येवं तृतीयाऽपि न स्यात्तुल्यार्थस्याप्रधानत्वात् । 'तेनैकदिगि'ति ज्ञापकाद्भविष्यति । अत्र हि एकशब्दः समासेऽन्तर्भूत इति कथं तेनेति तृतीयाऽसमर्थविभक्तिरुत्पद्यते । प्रतिषेधे तु द्वितीयाभावः(१) । अथ वा तुलोपमाशब्दयोगे उपमेयात्तृतीया निषेध्यते न तूपमानात् । यथा—तुला देवदत्तस्य नास्ति, उपमा कृष्णस्य न विद्यते । अत्र च शम्भुरुपमानम् । केचित्तु शम्भुना सह स्फुटोपममिति सहार्थं, अन्ये तु करणे तृतीयामाहुः ॥ ४ ॥

अथ सप्तभिर्मुनिं विशिनष्टि —

**नवानिति ॥** कीदृशममुम् । नवान्सद्यःसंभृतसलिलान् । अतिनीलानिति यावत् । बृहतो विपुलान् पयोधरान्मेघानधोऽधः मेघानां समीपाधःप्रदेशे । स्थितमिति शेषः । 'उपर्यध्यधसः सामीप्ये' इति द्विर्भावः, तद्योगे द्वितीया । 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु' इत्यादिवचनात् । समूढः पुञ्जीकृतः । 'समूढः पुञ्जिते भुग्ने' इति विश्वः । कर्पूरस्य परागश्चूर्णं तद्वत्पाण्डुरम् । अत एव क्षणं मेघसमीपावस्थानक्षणे । अत्यन्तसंयोगे द्वितीया । क्षणेषु ताण्डवोत्सवेषु । 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्युभयत्राप्यमरः । उत्क्षिप्ता उपरि धारिता गजेन्द्रस्य कृत्तिश्चर्म येन तेन । 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः । भूत्या भस्मना सितेन । 'भूतिर्भस्मनि सम्पदि' इत्यमरः । शम्भुना स्फुटा उपमा सादृश्यं यस्य तं स्फुटोपमम् । स्फुटशम्भूपममित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । सदृशपर्याययोस्तुलोपमाशब्दयोः 'अतुलोपमाभ्याम्—'इति निषेधात्सादृश्यवाचित्वे तृतीयेत्याहुः । केचिदिमं श्लोकं चयस्त्विषामित्यतः प्राग्लिखित्वा व्याचक्षते । तेषां पुंस्त्वावधारणात्प्राक् तेजःपिण्डमात्रस्य शम्भूपमौचित्यं चिन्त्यम् ॥ ४ ॥

(१) द्वितीयस्य ज्ञापकस्याभाव इत्यर्थः । तथा च स्फुटोपममित्यत्र उपमाशब्दस्य समासे गुणीभूतत्वेऽपि तेनैकदिगिति ज्ञापकात् शम्भुनेति तृतीयासद्भावः । प्रतिषेधस्तु ज्ञापकाभावान्न भवतीति स्पष्टार्थः ।

**दधानमम्भोरुहकेसरद्युतीर्जटाः शरच्चन्द्रमरीचिरोचिषम् ॥**
**विपाकपिङ्गास्तुहिनस्थलीरुहो धराधरेन्द्रं व्रततीततीरिव ॥ ५ ॥**

**दधानमिति** ॥ अमुं किं कुर्वाणं जटाः दधानं बिभ्राणं धारयन्तं, किंभूता जटाः अम्भोरुहकेसरद्युतीः पद्मकिञ्जल्कगौराः, पुनः कीदृशं शरच्चन्द्रमरीचिरोचिषं शरदिन्दुकिरणदीप्तिम्। अतश्चोपमीयते—धराधरेन्द्रं हिमाचलं व्रततीततीः दधतं यथा कश्चित्पश्यति। किंभूता लताः विपाकपिङ्गाः परिणामकपिशाः पक्ववर्णाः, पुनः किंभूताः तुहिनस्थलीरुहः तुहिनयुक्ता स्थली तुहिनस्थली, तुहिनस्थलीति शाकपार्थिवादिदर्शनान्मध्यमपदलोपी समासः। तत्र रोहन्ति जायन्ते इति तुहिनस्थलीरुहः। क्विप्, शत्। एवं द्युतीरिति। ननु हिमाधिष्ठितायां भुवि लताः पच्यन्ते इति चिन्त्यम्। केचित् विषकीटकन्यायमाहुः—विषस्य मध्ये कीट उत्पद्यते पश्चात्तेनैव विषाहारेण स जीवति, न हि विषोत्पन्नः कीटो विषेण म्रियते। तथा हिमवति हिमान्तर्लताः परिपाकं गच्छन्तीति भावः। कर्मण उपमानं तद्विभक्त्यैव निर्दिश्यत इति धराधरेन्द्रमिति द्वितीयोत्पत्तिः। न हि भिन्नविभक्तिकयोरौपम्यं घटते। केचित्तु तद्दर्शनक्रियापेक्षतामेवमाहुः, यथा—कश्चिदेवंविधं नागेन्द्रं पश्यति एवमसौ नारदं ददर्शेत्यर्थः। एवं सर्वत्र ॥ ५ ॥

दधानमिति ॥ पुनः। अम्भोरुहकेसरद्युतीः पद्मकिञ्जल्कप्रभापिशङ्गीरित्यर्थः। जटा दधानम्, स्वयं तु शरच्चन्द्रमरीचिरिव रोचिर्यस्य तम्। धवलमित्यर्थः। अत एव विपाकेन परिणामेन पिङ्गाः पिङ्गलाः तुहिनस्थल्यां तुषारभूमौ रोहन्तीति तुहिनस्थलीरुहः व्रततीततीर्लताव्यूहान। 'वल्ली तु व्रततिर्लता' इत्यमरः। दधानम्। धराधरेन्द्रो हिमवान्, तुहिनस्थलीति लिङ्गात्सारदोपमानत्वाच्च तामिव स्थितम् ॥५॥

**पिशङ्गमौञ्जीयुजमर्जुनच्छविं वसानमेणाजिनमञ्जनद्युति ॥**
**सुवर्णसूत्राकलिताधराम्बरां विडम्बयन्तं शितिवाससस्तनुम् ॥ ६ ॥**

**पिशङ्गेति** ॥ किंभूतं मुनिं पिशङ्गमौञ्जीयुजं हरिद्राऽरुणां मेखलां धारयन्तं, पिशङ्गी कपिशा हरिद्राऽरुणा या मौञ्जी मेखला तां युनक्ति धारयतीति पिशङ्गमौञ्जीयुक् तं, पुनः किंभूतम् अर्जुनच्छविं शुक्लवर्णम्। किं कुर्वाणम् एणाजिनं वसानं हारिणं चर्म परिदधानं, किंभूतमेणाजिनम् अञ्जनद्युति कज्जलकृष्णम्। अत एव किंकुर्वन्तं शितिवाससो नीलाम्बरस्य सीरपाणेः बलभद्रस्य तनुं विडम्बयन्तं शरीरमनुकुर्वन्तं, किंभूतां तनुं सुवर्णसूत्राकलिताधराम्बरां सुवर्णसूत्रेण तपनीयदोरकेण आकलितं बद्धमधराम्बरं कटीवासो यस्यां सा ताम्। मौञ्ज्याः सुवर्णदोरक उपमानं, कृष्णाजिनस्य नीलवासः। शितिशब्देन नीलाम्बरग्रहणम्, तद्धि नाम्नैवाक्षिप्तम्। मुनेश्च हली। पूर्वमवगतमपि नारदशौक्ल्यं प्रतिश्लोकं कविनोपमासिद्धये तदुपादीयते। न चेह सूत्राणि व्याख्यायन्ते येन गुरुलाघवं चिन्त्यते, उत्तरत्र वाऽनुवृत्तिर्भवति। मुञ्जस्य विकारो मेखला मौञ्जी। प्राणिरजतादिभ्योऽञ्। शितिर्नीलो भवेद्वर्णः ॥ ६ ॥

पिशङ्गेति ॥ पुनः कीदृशम्। मुञ्जस्तृणविशेषः तन्मयी मेखला मौञ्जी, पिशङ्गया मौञ्ज्या युज्यत इति पिशङ्गमौञ्जीयुक् तम्। 'सत्सूद्विष—'इत्यादिना क्विप्। 'स्त्रियाः पुंवत्-'इति पिशङ्गशब्दस्य पुंवद्भावः। अर्जुनच्छविं धवलकान्तिम्। 'वलक्षो धवलोऽर्जुनः' इत्यमरः। अञ्जनद्युत्यञ्जनवर्णमेणाजिनं कृष्णमृगचर्म वसानमाच्छादयन्तम्। 'वस आच्छादने' इति धातोः शानच्। सुवर्णसूत्रेण कनकमेखलया आकलितं बद्धमधराम्बरमन्तरीयं यस्यास्तां शितिवाससो नीलाम्बरस्य रामस्य तनुं विडम्बयन्तम् अनुकुर्वाणमित्यर्थः। आर्थीयमुपमा ॥ ६ ॥

**विहङ्गराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभिः ॥**
**कृतोपवीतं हिमशुभ्रमुच्चकैर्घनं घनान्ते तडितां गुणैरिव(१) ॥ ७ ॥**

**विहङ्गेति** ॥ पुनः कीदृशममुं हिरण्मयोर्वीरुहवल्लितन्तुभिः सुवर्णलतावृक्षसूत्रैः कृतोपवीतम्, अपरं किंभूतं हिमशुभ्रं तुहिनधवलं कीदृशैः तन्तुभिः विहङ्गराजाङ्गरुहैरिव आयतैः गरुडपक्षैरिव दीर्घैः । तेऽपि सौवर्णा भवन्ति । अतश्चोत्प्रेक्ष्यते–घनान्ते वर्षाक्षये घनमिव अभ्रमिव निर्जलमेघमिव । सितमेघसदृशमित्यर्थः । किंभूतं घनं तडितां गुणैः विद्युद्दामभिरुपलक्षितम् । कृतोपवीतमिव कृतोपवीतं समृद्धमित्यर्थः । यदि वा तडितां गणैरुपलक्षितम् । पुनः किंभूतम् उच्चकैः उन्नतम् । उभयमपि विशेषणं घनान्ते शरन्मुखे तत्र च निर्जलानामपि मेघानां विद्युतो भवन्त्येव । हिरण्यस्य विकारो हिरण्मयमिति निपातः ॥ ७ ॥

**विहङ्गेति** ॥ पुनः । विहङ्गराजाङ्गरुहैरिव गरुत्मल्लोमतुल्यैरायतैर्दीर्घैः । हिरण्यस्य विकारो हिरण्मयी । 'दाण्डिनायन—'इत्यादिना मयटि यलोपनिपातः । तस्यामुर्व्यां रुहा रूढाः । इगुपधलक्षणः कप्रत्ययः । तासां वल्लीनां तन्तुभिस्तुल्यैः उपादानगुणात् हिरण्मयैः कृतोपवीतं शोभार्थं कल्पितयज्ञसूत्रं स्वयं हिमशुभ्रम् । अत एव घनान्ते शरदि तडितां गणैरुपलक्षितम् । 'तडित्सौदामिनी विद्युत्' इत्यमरः । उच्चैरेवोच्चकैरुन्नतं घनं मेघमिव स्थितम् ॥ ७ ॥

**निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा लसद्बिसच्छेदसिताङ्गसङ्गिना ॥**
**चकासतं चारुचमूरुचर्मणा कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥ ८ ॥**

**निसर्गेति** ॥ पुनः किंभूतं चकासतं शोभमानं केन चारुचमूरुचर्मणा, चारु मनोज्ञं यत् चमूरुचर्म चमूरवश्चित्रलमृगास्तेषां चर्मणा । चमूरुश्चित्रलमृगः । किंभूतेन निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा निसर्गेण स्वभावेन चित्राणि नानावर्णानि उज्ज्वलानि दीप्तिमन्ति सूक्ष्माणि मृदूनि पक्ष्माणि रोमाणि यस्य तेन, पुनः किंभूतेन लसन् विलसन् स्फुरन् योऽसौ बिसच्छेदो मृणालभङ्गस्तद्वत् सितं श्वेतं यदङ्गं शरीरं तत्र सङ्गः सम्पर्को विद्यते यस्य चर्मणः तत्तेन । छेदस्य सिततरत्वादुपमानत्वम् । भावानयने द्रव्यानयनमिति स्फुटता बिसेनौपम्यमत्र न तु छेदमात्रेण । उत्प्रेक्ष्यते–इन्द्रवाहनं नागेन्द्रमिव ऐरावणमिव किंभूतं नागेन्द्रं कुथेन पञ्चवर्णकम्बलेन चकासतं शोभमानं कं नागेन्द्रमित्याह । इन्द्रवाहनमैरावतः 'शुक्लो हि ऐरावत' इत्यागमः । कुथोऽपि चित्रसूक्ष्मरोमा सिताङ्गसङ्गी च । कुथः स्याद्वर्णकम्बलः । यद्यपि अक्षिरोमसु पक्ष्मा स्त्रीलिङ्गः कुथशब्द इति वररुचिस्तथापि विपर्ययो महाकवीनां दृश्यते । यथा–कामणिकउलपक्ष्मपरितनुअक्षुद्धिविहायोऽपीति(?), उत्सृष्टध्वजकुथकङ्कटा इति । चकासतमिति जक्षादित्वादभ्यस्तसंज्ञा । वहतीति वाहनः । कृत्यल्युटो बहुलम्, निर्देशाद् वृद्धिः ॥ ८ ॥

**निसर्गेति** ॥ पुनः । निसर्गात्स्वभावादेव चित्राणि शबलान्युज्ज्वलानि भास्वराणि सूक्ष्माणि पक्ष्माणि लोमानि यस्य तेन, लसन् यो बिसच्छेदो मृणालखण्डः । 'छेदः खण्डेऽस्त्रियाम्' इति **त्रिकाण्डशेषः** । तद्वत्सितेऽङ्गे वपुषि सङ्गिना सक्तेन चारुणा मनोहरेण चमूरुचर्मणा मृगत्वचा कुथेन पृष्ठास्तरणेन । 'प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः' **इत्यमरः** । इन्द्रवाहनं नागेन्द्रमैरावतमिव चकासतं शोभमानम् । इन्द्रस्य वाहनमिति स्वस्वामिभावमात्रस्य विवक्षितत्वात् 'वाहनमाहितात्' इति न णत्वम् । यथाह **वामनः**— 'नेन्द्रवाहनशब्दे णत्वमाहितत्वस्याविवक्षितत्वात्' इति । चकासतेः शतरि 'नाभ्यस्ताच्छतुः' इति नुमभावः । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा ॥ ८ ॥

---

( १ ) गणैरिव ।

**अजस्रमास्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ॥**
**पुरः प्रवालैरिव पूरितार्धया विभान्तमच्छस्फटिकाक्षमालया ॥ ९ ॥**

**अजस्रमिति ॥** अपरं कथंभूतम् अच्छस्फटिकाक्षमालया विभान्तं शोभमानम्, अच्छा निर्मला ये स्फटिकाः चन्द्रकान्तमणयस्तेषां याऽक्षमाला जपमाला अच्छस्फटिकाक्षमाला तया, स्फटिका एव अक्षाः पद्मबीजानीव निर्मलत्वाज्जपोपयोगित्वाच्च तेषां स्रक् तया, कीदृश्या अजस्रमास्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया अजस्रं निरन्तरमास्फालिता वादनायाऽऽहता ये वल्लकीगुणा वीणाविशेषतन्त्र्यः तैः क्षत उद्घृष्टोऽत एव स्वभावादुज्ज्वलो योऽसावङ्गुष्ठनखस्तस्य अंशुभिः किरणैर्भिन्ना व्याप्ता विच्छुरिता या सा तया। अतश्चोत्प्रेक्ष्यते-पूर्वस्मिन् भागे प्रवालैः विद्रुमैः पूरितार्धयेव। अस्या जपमालाया अर्धं प्रवालैः प्रोतमिव, यतो नखमरीचिभिरारक्तीकृतमित्यर्थः। अच्छग्रहणं लौहित्यासादनस्यातिशयप्रदर्शनार्थम्। निर्मलं हि नितरां वर्णान्तरं गृह्णाति। आश्रावितेऽपि यावेवादितेत्यर्थः(१)। जसेर्नञ्पूर्वात् 'नमिकम्पिस्म्यजसकमहिंसदीपो र' इति रे कृते अजस्रमिति रूपम् ॥ ९ ॥

**अजस्रमिति** ॥ पुनः । अजस्रं प्राचुर्येणास्फालितास्ताडिताः । सौष्ठवपरीक्षार्थं स्युन्जाङ्गुष्ठेन तन्त्रीताडनं प्रसिद्धम्। तेषां वल्लकीगुणानां वीणातन्त्रीणां क्षतेन संघर्षणेनोज्ज्वलैरङ्गुष्ठनखांशुभिर्भिन्नया मिश्रया। तद्रागरक्तयेत्यर्थः। अत एव पुरः पुरोभागे प्रवालैर्विद्रुमैः। 'अथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम्' इत्यमरः। पूरितार्धयेव स्थितया अच्छस्फटिकाक्षमालया स्वच्छस्फटिकानां मालया। जपमालयेत्यर्थः। 'अच्छो भल्लूके स्फटिकेऽमलेऽच्छाभिमुखेऽव्ययम्' इति हेमचन्द्रः। तथा प्रसिद्धस्फटिकग्रहणादृषेर्मोक्षार्थित्वं व्यज्यते। 'स्फटिको मोक्षदः परम्' इति मोक्षार्थिनां स्फटिकाक्षमालाभिधानात्। विभान्तं भासमानम्। भातेः शतृप्रत्ययः। अत्र नखांशुभिन्नयेति स्वगुणत्यागेनान्यगुणस्वीकारलक्षणस्तद्गुणालङ्कार उक्तः। 'तद्गुणः स्वगुणत्यागात्' इति ॥ ९ ॥

**रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ॥**
**स्फुटीभवद्ग्रामविशेषमूर्छनामवेक्षमाणं महतीं मुहुर्मुहुः ॥ १० ॥**

**रणद्भिरिति ॥** पुनरपि कथंभूतं मुहुर्मुहुर्वारंवारं महतीं सप्ततन्त्रीकां वीणां विस्मयात्पुनःपुनः अवेक्षमाणम्।

रुद्रस्य वीणा नालम्बो महती नारदस्य च।
कच्छपी तु सरस्वत्या गणानां च प्रभावती ॥

विस्मयस्य निमित्तमाह-कथंभूतां महतीं स्फुटीभवद्ग्रामविशेषमूर्छनां स्फुटीभवन्त्योऽनुभूयमाना ग्रामविशेषस्य गान्धारस्य षड्जस्य मध्यमस्य च वा मूर्छनाः स्वरसारणा यस्यां सा ताम्। षड्जगान्धारमध्यमप्रभृतिष्विति स्वरान्तरगमनं स्वरसारणा भण्यते। कैः स्वरैः सप्तस्वरैरिति।

सप्त स्वरास्त्रयो ग्रामा मूर्छनास्त्वेकविंशतिः।
ताना एकोनपञ्चाशदेतद्देयस्य लक्षणम् ॥

किंभूतैः स्वरैः पृथग्विभिन्नश्रुतिमण्डलैः पृथक् ग्रामत्रयेण विभिन्नमवस्थितभेदं गतं

---

(१) 'अवादिताऽपि या वादितेवेत्यर्थः' इत्येवमक्षरयोजनया कथञ्चिदर्थसङ्गतिरत्र कर्तुं शक्यते। परमर्थानुसन्धानेन वाक्यमिदमुत्तरस्मिन् श्लोके यथा सङ्गतं भवति तथा नाभेति। कदाचित्तत्रत्यमेवेदं वाक्यं लेखकप्रमादादत्र पतितं स्यात्।

श्रुतिमण्डलं ध्वनिचक्रविशेषो येषु ते तैः । ननु स्वरा अपि अनाहताः कथं रेणुरित्याह— किं कुर्वद्भिः नभस्वतः वायोः आघट्टनया आस्फालनया रणद्भिः शब्दायमानैः । स्वरा हि श्रुतिभिरारब्धदत्तसारणाया वीणाया वातस्पर्शात् वादिता इव । ग्रामव्यक्त्या विस्मयमानमिति श्लोकार्थः । अन्ये तु वैदग्ध्यख्यापनाय प्राहुः । तत्र श्रुतयो द्वाविंशतयः(१) ।

अराविनी विश्वभृता चान्द्री हेमा कपर्दिनी ।
मैत्री बार्हस्पता चैतास्त्वेकविंशतिमूर्छनाः ॥

स्वराः षड्जऋषभगान्धारमध्यमपञ्चमधैवतनिषादाः सप्तस्वराः । षड्जमध्यमौ द्वौ ग्रामौ गान्धारश्च । अस्य तु स्वरूपं स्वस्वरादेव ज्ञातुं शक्यते तत्स्थत्वात् ।

उत्तरमन्द्रा रजनी तृतीया तूत्तरायता ।
चतुर्थी शुद्धषड्जा तु पञ्चमी मत्सरी मता ॥
अश्वक्रान्ता तु षष्ठी स्यात् सप्तमी याऽभिरुद्गता ।
स्वरक्रमकृता विद्यात् सप्तैताः षड्जमूर्छनाः ॥
सौवीरी मध्यमग्रामे हारिणाश्वा तथैव च ।
स्यात्कलोपनता चैव चतुर्थी शुद्धमध्यमा ॥
मार्गी च पौरवी चैव हृष्यका च यथाक्रमम् ।
सर्वास्तु पञ्च षट् सप्त साधारणमतास्स्मृताः ॥

श्रुतीनां त्वयं विभागः—

षड्जत्वेन गृहीतो यः षड्जग्रामे ध्वनिर्भवेत् ।
तत ऊर्ध्वं तृतीयः स्यात् ऋषभो नात्र संशयः ॥
ततो द्वितीयो गान्धारश्चतुर्थो मध्यमस्ततः ।
मध्यमात्पञ्चमस्तद्वत् तृतीयो धैवतस्ततः ॥
निषादोऽतो द्वितीयस्तु ततः षड्जश्चतुर्थकः ।
पञ्चमो मध्यमो नाम मध्यमान्तस्तृतीयकः ॥
एवं ध्वनिविशेषान् यः सर्वान् षड्जादिसंज्ञितान् ।
व्यवस्थितान् स्वरान् वेत्ति स वेत्ति स्वरमण्डलम् ॥

कुलकम् ॥ १० ॥

रणद्भिरिति ॥ पुनः । नभस्वतो वायोराघट्टनया आघातेन पृथगसङ्कीर्णं रणद्भिर्ध्वनद्भिः । अनुरणनोत्पयमानैरित्यर्थः । 'श्रुत्यारब्धमनुरणनं स्वरः' इति लक्षणात् । तदुक्तं रत्नाकरे—

'श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः ।
स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते' ॥

इति । श्रुतिर्नाम स्वरारम्भकावयवः शब्दविशेषः । तदुक्तम्—

'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः ।
सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा' ॥

इति । विभिन्नानि प्रतिनियतसंख्यया व्यवस्थितानि श्रुतीनां मण्डलानि समूहा येषां तैर्विभिन्नश्रुति-

---

(१) विंशत्यादीनां शब्दानामेकत्वस्य नियतत्वादत्र बहुत्वं चिन्त्यम् ।

मण्डलैः। श्रुतिसंख्यानियमश्च दर्शितः—

'चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः।
द्वे द्वे निषादगान्धारौ त्रिस्त्रिर्ऋषभधैवतौ'॥

षड्जादयः सप्तोक्तलक्षणाः। तदुक्तम्—

'श्रुतिभ्यः स्युः स्वराः षड्जर्षभगान्धारमध्यमाः।
पञ्चमो धैवतश्चाथ निषाद इति सप्त ते॥
तेषां संज्ञाः सरिगमपधनीत्यपरा मताः'।

इति। तैः स्वरैः स्फुटीभवन्त्यो ग्रामविशेषाणां षड्जाद्यपरनामकानां स्वरसंघातभेदानां त्रयाणां मूर्छनाः स्वरारोहावरोहक्रमभेदा यस्यां तां महतीं महतीनाम्नीं निजवीणाम्।

'विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती।
महती नारदस्य स्यात्सरस्वत्यास्तु कच्छपी'॥

इति **वैजयन्ती**। मुहुर्मुहुरवेक्षमाणम्। तन्त्रीयोजनभेदलक्षणमहिम्ना पुरुषप्रयत्नमन्तरेणैवाविसंवादं ध्वनतीति कौतुकादनुसन्दधानमित्यर्थः। अथ ग्रामलक्षणम्—

'यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि।
तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते॥
षड्जग्रामो भवेदादौ मध्यमग्राम एव च।
गान्धारग्राम इत्येतद् ग्रामत्रयमुदाहृतम्'॥

इति। तथा—

'नन्द्यावर्तोऽथ जीमूतः सुभद्रो ग्रामकास्त्रयः।
षड्जमध्यमगान्धारास्त्रयाणां जन्महेतवः'॥

इति। मूर्छनालक्षणं च—

'क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम्।
सा मूर्छेत्युच्यते ग्रामस्था एताः सप्त सप्त च'॥

ग्रामत्रयेऽपि प्रत्येकं सप्त सप्त मूर्छना इत्येकविंशतिमूर्छना भवन्ति। तत्रेह नामानि तु 'नानपेक्षितमुच्यते' इति प्रतिज्ञाभङ्गभयान्न लिख्यन्ते इति सर्वमवदातम्। अत्र पुंव्यापारमन्तरेण स्वराद्याविर्भावोक्त्या कोऽपि लोकातिक्रान्तोऽयं शिल्पसौष्ठवातिशयो वीणायाः प्रतीयते। तेन सह स्वतःप्रसिद्धातिशयस्याभेदेनाध्यवसितत्वात्तन्मूलातिशयोक्तिरलङ्कारः। सा च महत्याः पुंव्यापारं विना मूर्छाद्यसम्बन्धेऽपि सम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपतया पुंव्यापाराख्यरूपकारणं विनापि मूर्छनादिकार्योत्पत्तिद्योतनाद्विभावना व्यज्यत इत्यलङ्कारध्वनिरिति संक्षेपः॥ १०॥

**निवर्त्य सोऽनुव्रजतः कृतानतीनतीन्द्रियज्ञाननिधिर्नभःसदः॥**
**समासदत् सादितदैत्यसम्पदः पदं महेन्द्रालयचारु चक्रिणः॥ ११॥**

**निवर्त्येति॥ स मुनिश्चक्रिणो वासुदेवस्य पदं स्थानं समासदत् प्राप। श्रीकृष्णस्य धवलगृहसमीपं समीयादित्यर्थः। किं कृत्वा नभःसदो देवान् निवर्त्य प्रस्थाप्य विसृज्य। किंभूतान् अनुव्रजतः पृष्ठतः समागच्छतः पुनः किंभूतान् कृतानतीन् विहितनमस्कारान्, कृता नतिर्मूर्ध्ना प्रणामो यैस्तान्। अनुज्ञातो हि शिरो नमयतीत्याचारः। ननु देवाः सन्तः कस्मादेवंविधं गौरवं तस्य कुर्वन्तीत्याह—यतः किंभूतो नारदः अतीन्द्रियज्ञाननिधिः, यस्य मुनेर्ज्ञानमिन्द्रियाणामगोचरम्। अतीन्द्रियस्यातिक्रान्तस्य परोक्षस्य ज्ञानस्य सर्वविलक्षणस्य यस्मात्स निधिः स्थानम्। किंभूतस्य चक्रिणः सादिता नाशिता दैत्यसम्पत् दानवलक्ष्मीर्येन क्षयनीतरिपुलक्ष्मीकस्य। इति भङ्ग्या आगमनस्य साफल्यकथनम्। किंभूतं पदं महे-**

**न्द्रालयचारु स्वर्गवद्रम्यम् । नभसि सीदन्तीति नभःसदो देवाः । समासददिति पदसं-स्कारपक्षाश्रयणेन भूतसामान्यवत्त्वम्, लृदित्त्वादङादेशश्च ॥ ११ ॥**

**निवर्त्येति** ॥ अतीन्द्रिया इन्द्रियमतिक्रान्ता देशकालस्वरूपाद्विप्रकृष्टार्थाः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः । 'द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु परलिङ्गताप्रतिषेधो वक्तव्यः' इति विशेष्यलिङ्गत्वम् । तेषां ज्ञानं तस्य निधिः । सर्वार्थद्रष्टेत्यर्थः । कृताननतीन् कृतप्रणामाननुव्रजतोऽनुगच्छतः नभस्याकाशे सीदन्ति गच्छन्तीति नभःसदः सुरान् । 'सत्सूद्विष' इत्यादिना क्विप् । निवर्त्य प्रतिषिध्य स मुनिः सादितदैत्यसम्पदः सादिताः विध्वस्तीकृताः दैत्यानां सम्पदो येन तस्य चक्रिणः कृष्णस्य पदं स्थानं महेन्द्रालयचारु इन्द्रभवनमिव भासमानं समासदत । समाङ्पूर्वात्षद्लृधातोर्लुङ् । 'पुषादि—'इत्यङ् । अत्र नतीननतीपदः पदमिति च द्वयोर्व्यञ्जनयुग्मयोरसकृदावृत्त्या छेकानुप्रासः । अन्यत्र वृत्त्यनुप्रास इत्यनयोः संसृष्टिः ॥११॥

**पतन् (१)पतङ्गप्रतिमस्तपोनिधिः पुरोऽस्य यावन्न भुवि व्यलीयत ॥**
**गिरेस्तडित्वानिव तावदुच्चकैर्जवेन पीठादुदतिष्ठदच्युतः ॥ १२ ॥**

**पतन्निति ॥ यावत्तपोनिधिर्नारदः अस्य श्रीकृष्णस्य पुरोऽग्रे भुवि पृथिव्यां न व्यलीयत न तस्थिवान् नोपाविशत्, तावदेवाच्युतः श्रीवासुदेवः जवेन वेगेन पीठादुदतिष्ठत् सिंहासनादुत्थितवान् । प्रत्युत्थानं चकारेत्यादरातिशयः । यावत्तावच्छब्दौ क्रियायास्तुल्यतामाहतुः । किंभूतात् उच्चकैः उन्नतात्, क इव कस्मादुत्थितवान् तडित्वान् मेघ इव । यथा तडित्वान् उच्चकैः गिरेर्मेरोः पर्वतादुत्तिष्ठति । किंभूतो मुनिः पतन् आकाशादवतरन् अपरं कथंभूतः पतङ्गप्रतिमः पतङ्गेन सूर्येण तेजस्वित्वात्प्रतिमोपमा यस्य सः पतङ्गप्रतिमः, यदि वा पतङ्गेन प्रतिमः सूर्यसमकान्तिः । व्यलीयतेति लीङो दैवादिकात्कर्तरि लङ् । तडित्वानिति 'तसौ मत्वर्थे' इति भसंज्ञा, तेन पदाश्रयं दत्वं न भवति ॥ १२ ॥**

**पतन्निति** ॥ पतन् यः पतङ्गः सूर्यः स प्रतिमोपमानं यस्य सः । 'पतङ्गौ पक्षिसूर्यौ च' इत्यमरः । तपोनिधिर्मुनिरस्य हरेः पुरो भुवि पुरःप्रदेशे यावन्न व्यलीयत नातिष्ठत् । 'लीङ् गतौ' इति धातोर्दैवादिकात्कर्तरि लङ् । तावदच्युतो हरिर्गिरेः शैलात् । तडितोऽस्य सन्तीति तडित्वान्मेघ इव । 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इति मतुपो मकारस्य वकारः । 'तसौ मत्वर्थे' इति भसंज्ञायामेकसंज्ञाधिकारेणापदत्वान्न जश्त्वम् । उच्चकैरुन्नतात्पीठादासनाज्जवेनोदतिष्ठत् । मुनिचरणस्य भूस्पर्शात्प्रागेव स्वयमुत्थितवान् ।

'ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते' ॥

इति शास्त्रमनुस्मरन्निति भावः । 'उदोऽनूर्ध्वकर्मणि' इति नियमादिहोर्ध्वकर्मणि नात्मनेपदम् । पतत्पतङ्ग इत्यत्र पतनासम्भवादियमभूतोपमेत्याचार्यदण्डिप्रभृतयो बभणुः । अत एवाप्रसिद्धस्योपमानत्वायोगादुत्प्रेक्षेत्याधुनिकालङ्कारिकाः सर्वे वर्णयन्ति ॥ १२ ॥

**अथ प्रयत्नोन्नमितानमत्फणैर्धृते कथञ्चित्फणिनां गणैरधः ॥**
**न्यधायिषातामभिदेवकीसुतं सुतेन धातुश्चरणौ भुवस्तले ॥ १३ ॥**

**अथेति ॥ अथानन्तरं धातुः सुतेन ब्रह्मणः पुत्रेण नारदेन अभिदेवकीसुतं श्रीकृष्णमभिलक्षीकृत्य चरणौ पादौ भुवस्तले भूमिपृष्ठे न्यधायिषातां निक्षिप्तौ । यत्र कृष्णः समुपविष्टोऽभूत्तत्र गगनादवतीर्ण इत्यर्थः । कीदृशे भुवस्तले अधः अधोविभागे पाताले फणिनां गणैर्नागवृन्दैः कथञ्चित् महता कष्टेन धृते ऊढे । किंभूतैः फणिनां गणैः प्रयत्नेन आदरातिशयेन उन्नमिता ऊर्ध्वीकृता गौरववशात् पुनरानमन्तः कुटिलाः फणाः शिरांसि येषां ते तैः । एतेनानयोर्म-**

(१) पतत्पतङ्ग०।

हापुरुषलक्षणं गौरवातिशयः प्रतिपाद्यते । उन्नमितेति ण्यन्तान्निष्ठा अमन्तत्वान्मित्संज्ञा । न्यधायिषातामिति निपूर्वाद्धधातेः कर्मणि लुङ् 'स्यसिच्सीयुट्तासि'ष्वित्यादिना 'स्था-घ्वोरिच्चे'ति विधिपरत्वात् अजादित्वाच्चिण्वद्भावः(१)। अभिदेवकीसुतमिति लक्षणेनाभिप्रती आभिमुख्ये ॥ १३ ॥

अथेति ॥ अथाच्युताभ्युत्थानानन्तरं धातुः सुतेन नारदेन प्रयत्नोन्नमितास्तथापि मुनिपादन्यासभारादानमन्त्यः फणा येषां तैः फणिनां गणैरधोऽधःप्रदेशे कथञ्चित् धृते स्थापिते भुवस्तले भूपृष्ठे। अभिदेवकीसुतं देवकीसुतमभि । लक्ष्यीकृत्येत्यर्थः । 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः । चरणौ पादौ । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । न्यधायिषातां निहितौ । दधातेः कर्मणि लुङ् । 'स्यसिच्सी—' इत्यादिना चिण्वदिटि युक् । अत्र फणानां नमनोन्नमनासम्बन्धेऽपि मुनेर्गौरवाय तत्सम्बन्धाभिधानादतिशयोक्तिभेदः ॥ १३ ॥

**तमर्घ्यमर्घा(२)दिकयाऽऽदिपूरुषः सपर्यया साधु स पर्यपूपुजत् ॥**
**गृहानुपैतुं प्रणयादभीप्सवो भवन्ति नापुण्यकृतां मनीषिणः ॥ १४ ॥**

तमिति ॥ स आदिपूरुषो भगवान् तं मुनिं प्रजापतिपुत्रमर्घादिकया सपर्यया साधु सम्यक् यथा भवति एवं पर्यपूपुजत् अर्चितवान्। यतः किंभूतम् अर्घ्यं पूजार्हम्, अर्घमर्हतीत्यर्घ्यः । दण्डादिभ्यो यः । अर्घादिकयेत्यादिग्रहणं गव्यमधुपर्काद्यर्थम् । सामान्यविशेषभावकरणं दृश्यते यथोष्ट्रासिकामास्ते, इति पूजयाऽसौ अपूपुजदिति वचनं न विरुध्यते । आदिपुरुषेणापि सता यद् ब्राह्मणोऽर्चित एतन्नायुक्तमित्यर्थान्तरन्यासेनाह—यतः कारणान्मनीषिणो विद्वांसः अपुण्यवतां निराचाराणां प्रणयात् प्रीत्या स्नेहात् गृहानुपैतुं गेहमागन्तुमभीप्सवो न भवन्ति अभिलाषुका न जायन्ते । भगवांश्च पुण्यवान् नारदस्तु तद्गेहमागत इति युक्तमेव तस्यार्चनम् । यदि हि हरिरतिथेः सपर्यां न कुर्यात् ततो मुनिर्नागच्छेदित्यर्थः । पुरुष एव पूरुषः, 'अन्येषामपि दृश्यते' इति दीर्घः । सपर्ययेति कण्ड्वादिषु सपरशब्दस्य पठितत्वात् यक्प्रत्ययः । पर्यपूपुजदिति पूजेर्णिजन्ताल्लुङ् , णिश्रिद्रुस्रुभ्यः कर्तरि चङ् णिलोपः णौ चङ्युपधाया ह्रस्वः दीर्घो लघोः हलादिः शेषः । एवमभिन्यवीविशदिति । अभीप्सवः इति 'सनाशंसे'त्युः, उपैतुमिच्छति इच्छार्थेषु लिङ्लोटौ समानकर्तृकेषु तुमुन् । मनीषा बुद्धिः, सा विद्यते येषामिति प्रशंसायां 'व्रीह्यादिभ्यश्चे'तीन् ॥ १४ ॥

तमिति ॥ आदिपूरुषः पुराणपुरुषः । 'अन्येषामपि दृश्यते' इति वा दीर्घः । स कृष्णः अर्घं पूजामर्हतीत्यर्घ्यः । दण्डादिभ्यो यः । तं नारदम् । अर्घार्थं द्रव्यमर्घ्यम् । 'पादार्घाभ्यां च' इति यत्प्रत्ययः । 'मूल्ये पूजाविधावर्घः' 'षट् तु त्रिष्वर्घ्यमर्घार्थे' इति चामरः । अर्घ्यमादिर्यस्यास्तयार्घ्यादिकया । 'शेषाद्विभाषा' इति विकल्पेन कप्प्रत्ययः । सपर्यया पूजया । 'पूजा नमस्याऽपचितिः सपर्यार्चार्हणाः समाः' इत्यमरः । साधु यथा तथा पर्यपूपुजत्परिपूजितवान् । णौ चङन्तं कर्तव्यम् । युक्तं चैतादित्यर्थान्तरं न्यस्यति—गृहानिति । मनस ईषिणो मनीषिणः सन्तः । पृषोदरादित्वात्साधुः । अपुण्यकृतां पुण्यमकृतवताम् । 'सुकर्मपापमन्त्रपुण्येषु कृञः' इति भूते क्विप् । गृहान्प्रणयादुपैतुमभीप्सवः प्राप्तुमिच्छवः । आप्नोतेः सन्नन्तादुप्रत्ययः । 'आप्ज्ञप्यृधामीत्' इतीकारः । न भवन्ति किन्तु पुण्यकृतामेव । अतः कृच्छ्रलभ्याः सन्तः पूज्या इत्यर्थः ॥ १४ ॥

**न यावदेतावुदपश्यदुत्थितौ जनस्तुषाराञ्जनपर्वताकृती(३) ॥**
**स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशत् ॥ १५ ॥**

---

(१) स्थाघ्वोरिच्चेति इद्विधेः परत्वात् अज्झनग्रहदृशां मध्ये आदिभूताऽच्पदमाद्यत्वाच्चिण्वद्भाव इत्यर्थः ।
(२) ०मर्घ्यादिकया । (३) पर्वताविव ।

**न यावदिति** ॥ यावज्जनो लोकः एतौ नारदनारायणौ उत्थितौ नोदपश्यत् न दृष्टवान् तावच्चिरन्तनो मुनिः श्रीनारायणः मुनिं नारदमासने अभिन्यवीविशत् सिंहासने संमुखमुपवेशयामास । एतेन संभ्रमः कथ्यते । किंभूते आसने स्वहस्तदत्ते निजकरढौकिते । किंभूतौ तौ तुषाराञ्जनपर्वताकृती तुषारः पर्वतो हिमवान् अञ्जनपर्वतोऽञ्जनाचलस्तद्वत् आकृतिर्वर्णो ययोस्तौ । हिमवत्सदृशो मुनिः, अञ्जनगिरिनिभः कृष्णः । उदपश्यदित्यत्र दर्शनमात्रं धात्वर्थो न तूत्प्रेक्षा । यदि वा उत्थिततुषाराञ्जनपर्वतसदृशावेतौ इति यावन्नोदपश्यदूहं न चकारेत्युत्प्रेक्षैव धात्वर्थः । अभिन्यवीविशदिति कर्तुरभिप्रायः क्रियाफलाविवक्षायाम्, 'णिचश्चे'ति तङभावः । 'नेर्विश' इत्येतत्प्रकृत्यन्तरत्वान्न ॥ १५ ॥

**न यावदिति** ॥ उत्थितावेतौ मुनिकृष्णौ जनस्तुषाराञ्जनयोः पर्वताविव यावन्नोदपश्यन्नोत्प्रेक्षितवान्, तावच्चिरन्तनः पुराणो मुनिः कृष्णः । 'पुरा किल भगवान् बदरिकारण्ये नारायणावतारेण तपसि स्थितवान्' इति पुराणात् । 'सायंचिरम्–'इत्यादिना ट्युप्रत्ययस्तुडागमश्च । स्वहस्तेन दत्ते आसने मुनिं नारदमभिन्यवीविशत् स्वाभिमुखेनोपवेशितवान् । अभिनिपूर्वाद्विशतेर्ण्यन्ताल्लुङि 'णिश्रि–' इति चङ् ॥ १५ ॥

**महामहानीलशिलारुचः पुरो निषेदिवान् कंसकृषः स विष्टरे ॥**
**श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम् ॥ १६ ॥**

**महामहेति** ॥ स मुनिः चन्द्रमसोऽभिरामतामचूचुरत् चन्द्रस्य शोभामनुचकार चोरितवान् । किंभूतो मुनिः कंसकृषो वासुदेवस्य पुरोऽग्रे विष्टरे आसने निषेदिवान् उपविष्टः । अनुकार एवात्र चौर्यम् । किंभूतस्य कंसकृषो महामहानीलशिलारुचः महती या महानीलशिला इन्द्रनीलदृषत् तद्वद्रुक् कान्तिर्यस्य सः महामहानीलशिलारुक् तस्य कृष्णस्येत्यर्थः । किंभूतस्य शशिनः श्रितोदयाद्रेः आश्रितोदयाचलस्य, क्व अभिसायं दिनान्ताभिमुखं श्रितोऽधिष्ठित उदयपर्वतो येन तस्य । उच्चकैः विष्टरे । सन्ध्यासमयः कृष्णस्योपमानं नित्यकालत्वात्, मुनेः शशी, विष्टरस्योदयाद्रिः । कंसं कृष्टवान् कंसकृट् तस्य । अभिरमन्त एतस्मिन् मनांसीत्यभिरामः, घञ् । निषेदिवानिति सदेः 'भाषायां सदवसश्रुवः' इति क्वसुः ॥ १६ ॥

**महामहेति** ॥ महत्या महानीलशिलायाः सिंहलद्वीपसंभवेन्द्रनीलोपलस्य रुगिव रुग् यस्य तस्येत्युपमालङ्कारः । 'सिंहलस्थाकरोद्भूता महानीलास्तु ते स्मृताः' इति भगवानगस्त्यः । कंसकृषो हरेः पुरोऽग्रे उच्चकैरुन्नते विष्टर आसने । 'वृक्षासनयोर्विष्टरः' इति षत्वम् । निषेदिवानुपविष्टवान् । 'भाषायां सदवसश्रुवः' इति क्वसुः । स मुनिरभिसायं सायंकालाभिमुखम् । अव्ययीभावसमासः । सायंकालस्य कार्ष्ण्यात्कृष्णोपमानत्वम् । श्रित आश्रित उदयाद्रिरुदयाचलो येन तस्य चन्द्रमसोऽभिरामतां शोभामचूचुरच्चोरितवान् । प्राप्तवानित्यर्थः । 'चुर स्तेये' णिश्रि— इति चङ् । अन्यस्यान्यधर्मसम्बन्धासम्भवाच्चन्द्रमसोऽभिरामतामिवाभिरामतामित्यौपम्यपर्यवसानादसम्भवद्वस्तुसम्बन्धरूपो निदर्शनाभेदः, स चोक्तोपमयाङ्गाङ्गिभावेन सङ्कीर्यते ॥ १६ ॥

**विधाय तस्यापचितिं प्रसेदुषः प्रकाममप्रीयत यज्वनां प्रियः ॥**
**ग्रहीतुमार्यान् परिचर्यया मुहुर्महानुभावा हि नितान्तमर्थिनः ॥ १७ ॥**

**विधायेति** ॥ यज्वानो यायजूकास्तत्प्रियः कृष्णः याज्यत्वात्तस्य नारदस्य अपचितिं पूजां विधाय प्रकाममतिशयेन अप्रीयत तुतोष हृष्टो बभूव । किंभूतस्य मुनेः प्रसेदुषः प्रसन्नस्य । हरिर्नारदं प्रति कृतपूजया कस्मादप्रीयतेत्याह–हि यस्मात् महानुभावा उन्नतचित्ताः

पुरुषा आर्यान् साधून् मुहुर्वारंवारं परिचर्यया ग्रहीतुमाराधयितुं नितान्तमर्थिनोऽभिलाषुका भवन्ति । महात्मानो गुणवदाराधनमेव वाञ्छन्तीत्यर्थः । चिञो भावे अपचितिशब्दः । अप्रीयतेति प्रीञो दैवादिकस्य कर्तरि लङ् । यज्वन्निति सुयजोर्ङ्वनिप् । ग्रहीतुमिति समानकर्तृकेषु तुमुन् 'ग्रहोऽलिटी'ति दीर्घः । अर्थिरिच्छार्थः, अर्थयन्तेऽभीक्ष्णमित्यर्थिनः । परिचरणं परिचर्येति निपातः ॥ १७ ॥

विधायेति ॥ यज्वानो विधिनेष्टवन्तः । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । 'सुयजोः-' इति यजिधातोर्ङ्वनिप् । तेषां प्रियो हरिः प्रसेदुषः प्रसन्नस्य । सदेः क्वसुः इत्युक्तम् । तस्य मुनेरपचितिं पूजाम् । 'पूजा नमस्याऽपचितिः' इत्यमरः । विधाय विशेषेण मनोवाञ्छायकर्मभिस्तत्परतया कृत्वा प्रकाममत्यर्थमप्रीयत प्रीतोऽभूत् । प्रीयतेर्दैवादिकात्कर्तरि लङ् । मुनिपूजायाः प्रीतिहेतुत्वेऽर्थान्तरं न्यस्यति-महानुभावा महात्मान आर्यान् पूज्यान्परिचर्यया मुहुर्ग्रहीतुं वशीकर्तुम् । 'ग्रहोऽलिटि दीर्घः' इतीटो दीर्घः । नितान्तमर्थिनोऽभिलाषवन्तो हि भवन्ति । अर्थनमर्थोऽभिलाषः स एषामस्तीति मत्वर्थ इनिर्न तु णिनिः । 'कृद्वृत्तेस्तद्धितवृत्तिर्बलीयसी' इति भाष्यात् ॥ १७ ॥

**अशेषतीर्थोपहृताः कमण्डलोर्निधाय पाणावृषिणाभ्युदीरिताः ॥**
**अघौघविध्वंसविधौ पटीयसीर्नतेन मूर्ध्ना हरिरग्रहीदपः ॥ १८ ॥**

अशेषेति ॥ हरिः श्रीकृष्णः अपोऽग्रहीत् जग्राह । केन मूर्ध्ना नतेन नम्रेण, किंभूता अपः ऋषिणा नारदेन कमण्डलोः कमण्डलुतः पाणौ निधाय हस्ते कृत्वा अभ्युदीरिता अभिमुक्ताः, पुनः कथंभूता अशेषतीर्थोपहृताः निखिलपुण्यजलाशयेभ्य आनीताः, पुनः किंभूताः अघौघविध्वंसविधौ पटीयसीः पापपूगशमने समर्थाः । सुष्ठु पटव्यः पटीयस्यः ईयसुन्, तुरिष्ठेमेयःसु 'टे'रिति टिलोपः ॥ १८ ॥

अशेषेति ॥ अशेषेभ्यस्तीर्थेभ्य उपहृता आहृतास्तथा पाणौ निधाय । कमण्डलोरुदकपात्रादुद्धृत्य पाणौ निधायेत्यर्थः । क्रियान्तराक्षिप्तक्रियापेक्षया कमण्डलोरपादानत्वम् । 'अक्षी कमण्डलुः कुण्डी' इत्यमरः । ऋषिणाभ्युदीरिता आक्षिता अत एवाघौघानां पापसमूहानां विध्वंसविधौ विनाशकरणे पटीयसीः समर्थतराः । पटुशब्दादीयसुनि 'उगितश्च' इति ङीप् । अपो जलानि हरिर्नतेन मूर्ध्नाऽग्रहीत्स्वीकृतवान् । ग्रहेर्लुङ् ॥ १८ ॥

**स काञ्चने यत्र मुनेरनुज्ञया नवाम्बुदश्यामवपुर्न्यविक्षत ॥**
**जिगाय जम्बूजनितश्रियः श्रियं सुमेरुशृङ्गस्य तदा तदासनम् ॥ १९ ॥**

स काञ्चन इति॥ स भगवान् काञ्चने सुवर्णमये यत्र यस्मिन् आसने मुनेर्नारदस्य अनुज्ञया आदेशेन न्यविक्षत उपाविशत् उपविष्टः किंभूतो भगवान् नवाम्बुदश्यामतनुः सजलजलदेहः, तदा तस्मिन् काले तत् आसनं सुमेरुशृङ्गस्य कनकाद्रिशिखरस्य श्रियं जिगाय शोभामनुचकार । किंभूतस्य सुमेरुशृङ्गस्य जम्बूरसितवृक्षविशेषः तेन जनिता उत्पादिता श्रीर्यस्य तत् जम्बूजनितश्रि तस्य । हेमपीठस्य मेरुशृङ्गमुपमानं कृष्णस्य जम्बूः । काञ्चनस्य विकारः काञ्चनमासनम्, 'अनुदात्तादञ्चे'ति अञ्, रजतादित्वाद्वा । न्यविक्षतेति 'नेर्विशः' इत्यात्मनेपदम् । जिगायेति जेर्गित्वम् ॥ १९ ॥

स काञ्चन इति ॥ नवाम्बुदश्यामतनुः स हरिर्मुनेरनुज्ञया काञ्चने काञ्चनविकारे । वैकारिकोऽण्प्रत्ययः । यत्रासने न्यविक्षतोपविष्टवान् । निपूर्वविशो लुङि 'नेर्विशः' इत्यात्मनेपदे शल इगुपधादनिटः क्सः । तदासनं तदा हर्युपवेशनसमये, जम्बूर्नीलफलविशेषः । 'जम्बूः सुरभिपत्रा च राजजम्बूर्महाफला' इत्यभिधानरत्नमालायाम् । तया जनिता श्रीर्यस्य तत्तथोक्तस्य । भाषितपुंस्कत्वात्पक्षे पुंवद्भावान्नुमभावः । सुमेरु-

शृङ्गस्य श्रियं जिगाय । अभिभावितवानित्यर्थः । 'सन्लिटोर्जेः' इति कुत्वम् । उपमानुप्रासयोः संसृष्टिः १९॥

**स तप्तकार्तस्वरभास्वराम्बरः कठोरताराधिपलाञ्छनच्छविः ॥**
**विदिद्युते वाडवजातवेदसः शिखाभिराश्लिष्ट इवाम्भसां निधिः ॥२०॥**

**स तप्तेति** ॥ स श्रीकृष्णो विदिद्युते शुशुभे बभौ । स कीदृक् तप्तकार्तस्वरभास्वराम्बरः तप्तं द्रुतं विलीनं यत् कार्तस्वरं सुवर्णं तद्दिव भास्वरे देदीप्यमाने पीते अम्बरे वाससी यस्य सः । अग्निपतितसुवर्णमुज्ज्वलतरं भवतीति तप्तग्रहणम् । पुनः कीदृशः कठोरताराधिपलाञ्छनच्छविः कठोरोऽतिजरठः परिपूर्णो यस्ताराधिपः शशी तस्य लाञ्छनं तद्वच्छविर्द्युतिर्यस्य सः । कृष्ण इत्यर्थः । एवंविधं चोपमानमसिद्धत्वादलङ्कारविद्भिर्नेष्यते । क्षीणस्य शशिनो मलं दुर्लभं भवतीति कठोरग्रहणम् । अतश्च यदा पीतवासाः कृष्णस्तदोपमीयते । अम्भसां निधिरिव समुद्र इव, कथंभूतः समुद्रः वाडवजातवेदसः और्वाग्नेः शिखाभिर्ज्वालाभिराश्लिष्टः आलिङ्गितः, और्वाग्निज्वालालिङ्गितसमुद्रतुल्यः । विदिद्युते इति द्युतिस्वाप्योः सम्प्रसारणम् । वडवेव वाडवः स चासौ जातवेदाश्च वाडवजातवेदाः ॥ २० ॥

**स तप्तेति** ॥ तप्तं पुटपाकशोधितं कार्तस्वरं सुवर्णम् । 'रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम' इत्यमरः । तद्वद्भास्वरं दीप्यमानमम्बरं यस्य सः । पीताम्बर इत्यर्थः । कठोरताराधिपस्य पूर्णेन्दोर्लाञ्छनस्य छविरिव छविर्यस्य स इत्युपमानपूर्वपदो बहुव्रीहिरुत्तरपदलोपश्च । स हरिर्वाडवजातवेदसो वाडवाग्नेः शिखाभिर्ज्वालाभिराश्लिष्टो व्याप्तोऽम्भसां निधिरिव समुद्र इव विदिद्युते बभौ ॥ २० ॥

**रथाङ्गपाणेः पटलेन रोचिषामृषित्विषः संवलिता विरेजिरे ॥**
**चलत्पलाशान्तरगोचरास्तरोस्तुषारमूर्तेरिव नक्तमंशवः ॥ २१ ॥**

**रथाङ्गपाणेरिति** ॥ ऋषित्विषः विरेजरे सितमुनिभासः बभुः । किंभूताः रथाङ्गपाणेर्विष्णोः रोचिषां दीप्तीनां पटलेन निकरेण संवलिताः मिश्रिताः । उत्प्रेक्षते—नक्तं क्षपायां चन्द्रमसो मयूखा इव, किंभूताः तरोश्चलत्पलाशान्तरगोचराः तरोर्वृक्षस्य चलन्ति यानि पत्राणि तेषामन्तरं विवरान्तः गोचरो विषयो येषां ते । अंशवो वायुधूततरुपर्णमध्यप्रविष्टा इत्यर्थः । रथाङ्गं चक्रं पाणौ यस्य स रथाङ्गपाणिः । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ । तुषारा शीतला मूर्तिः शरीरं यस्य सः तुषारमूर्तिः । नक्तमिति अधिकरणप्रधानं रात्रिपर्यायोऽव्ययम् ॥ २१ ॥

**रथाङ्गपाणेरिति** ॥ रथाङ्गं चक्रं पाणौ यस्य तस्य हरेः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति पाणेः परनिपातः । रोचिषां छवीनां पटलेन समूहेन संवलिता मिलिता ऋषित्विषो नक्तं रात्रौ । सप्तम्यर्थेऽव्ययम् । तरोश्चलतां पलाशानां पत्राणामन्तराणि विवराणि गोचर आश्रयो येषां ते, तुषारा मूर्तिर्यस्य तस्येन्दोरंशव इव विरेजिरे चकाशिरे ॥ २१ ॥

**प्रफुल्लतापिच्छनिभैरभीषुभिः शुभैश्च सप्तच्छदपांसुपाण्डुभिः ॥**
**परस्परेण च्छुरितामलच्छवी तदैकवर्णाविव तौ बभूवतुः ॥ २२ ॥**

**प्रफुल्लेति** ॥ तदा तस्मिन् काले तौ मुनिकृष्णौ सदृशवर्णाविवाभूताम् । किंभूतौ छुरितामलच्छवी मिश्रितोज्ज्वलकान्ती, कथं परस्परेण अन्योन्यं कैरभीशुभिः किरणैः किम्भूतैः किरणैः प्रफुल्लतापिच्छनिभैः प्रफुल्लं विकसितं यत् तापिच्छं कालाञ्जनिकं तमालं वा तत्तुल्यैः कृष्णैरित्यर्थः, काकतुण्डसदृशकिरणैः । तापिच्छं तमालमाहुः । यद्वा तापिच्छः काकतुण्डिका । कार्ष्णी हि च्छविरसिता । तथाऽपरैः सप्तच्छदपांसुपाण्डुभिः सप्तच्छदः

सप्तपर्णस्तरुस्तस्य पांसुर्धूलिस्तद्वत्सितैः । सितमुनेरंशवो हि सिताः । किंभूतैः शुभैः चारुभिः अनुपहतैर्वा पापक्षयकरैर्वा ॥ २२ ॥

प्रफुल्लेति ॥ प्रफुल्लतीति प्रफुल्लं विकसितम् । 'फुल्ल विकसने' इति धातोः पचाद्यजन्तम् । फलेर्निष्ठायाम् 'अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः' इति निपातनात्प्रफुल्लमित्येवेति क्षीरस्वामी । तापिच्छस्य तमालस्य पुष्पं तापिच्छम् । 'फले लुक्' इति तद्धितलुक् । 'द्विहीनं प्रसवे सर्वम्' इति नपुंसकत्वम् । 'कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि' इत्यमरः । तेन सदृशैः प्रफुल्लतापिच्छनिभैः । नित्यसमासत्वादस्वपदविग्रहः । अत एव 'स्युत्तरपदे त्वमी' इति, 'निभसङ्काशनीकाशप्रतीकाशोपमादयः' इत्यमरः । सप्त छदाः पर्णानि पर्वसु यस्येति सप्तच्छदो वृक्षभेदः । 'सप्तपर्णो विशालत्वक्शारदो विषमच्छदः' इत्यमरः । संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवदित्युक्तं भाष्ये । शेषं तापिच्छवत् । तस्य पुष्पाणि सप्तच्छदानि तेषां पांसुवत्पाण्डुभिः शुभ्रैरभीषुभिरन्योन्यरश्मिभिः 'अभीषुः प्रग्रहे रश्मौ' इति शाश्वतः । परस्परेण छुरिते रूषिते अमले छवी अन्योन्यकान्ती ययोस्तौ । छव्योरभीषूणामवयवावयविभावाद्भेदानिर्देशः । तौ हरिनारदौ तदैकवर्णाविव बभूवतुः । उभयप्रभामेलनादुभयोरपि सर्वाङ्गीणो गङ्गायमुनासङ्गम इव स्फटिकेन्द्रनीलमणिप्रभामेलनप्रायः कश्चिदेको वर्णः प्रादुर्बभूव। तन्निमित्ता चेयमनयोरेकवर्णत्वोत्प्रेक्षा ॥२२॥

**युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत ॥**
**तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ॥ २३ ॥**

युगान्तेति ॥ नारदागमनोद्भूताः प्रीतयः कैटभद्विषः कृष्णस्य तत्र तस्यां तनौ वपुषि न ममुः, तासां बहुत्वात् । कदाचिदणीयसीत्वात् न किञ्चित्तत्र माति तन्न चित्रमित्याह—यस्यां तन्वां जगन्ति चतुर्दश भुवनानि सविकासं सविस्तरमसम्बाधमासत उषितानि । किंभूतस्य युगान्तकालप्रतिसंहृतात्मनः कल्पक्षयसङ्कुचितमूर्तेरपि । अधिकनामाऽयमलङ्कारः । ममुरिति मातेर्लिट् । आसतेति आसः कर्तरि लङ् ॥ २३ ॥

युगान्तेति ॥ युगान्तकाले प्रतिसंहृतात्मनः आत्मन्युपसंहृता आत्मानो जीवा येन तस्य कैटभद्विषो हरेर्यस्यां तनौ जगन्ति सविकासं सविस्तरमासताऽतिष्ठन् । 'आस उपवेशने' लङ् । तत्र तनौ देहे तपोधनाभ्यागमेन सम्भवन्तीति सम्भवाः सम्भूताः । पचाद्यच् । मुदः सन्तोषा न ममुः । अतिरिच्यन्ते स्मेत्यर्थः । चतुर्दशभुवनभरणपर्याप्ते वपुषि अन्तर्न मान्तीति कविप्रौढोक्तिसिद्धातिशयेन स्वतःसिद्धस्याभेदेनाध्यवसितातिशयोक्तिः । सा च मुदामन्तःसम्बन्धेऽप्यसम्बन्धोक्त्या सम्बन्धासम्बन्धरूपा ॥ २३ ॥

**निदाघधामानमिवाधिदीधितिं मुदा विकासं मुनिमभ्युपेयुषी ॥**
**विलोचने बिभ्रदधिश्रितश्रिणी स पुण्डरीकाक्ष इति स्फुटोऽभवत् ॥२४॥**

निदाघेति ॥ स विष्णुस्तदा पुण्डरीकाक्ष इति नाम्ना स्फुटः प्रकटोऽभवत् । अन्वर्थतया सत्यार्थो बभूवेत्यर्थः । किञ्चास्माभिरज्ञायि तस्य पुण्डरीकाक्ष इत्यत्र यथार्थसहिता संज्ञा । पुण्डरीकतुल्ये पुण्डरीकमेव वा अक्षिणी यस्य स पुण्डरीकाक्ष- इत्ययमस्मिन्नस्त्यवयवार्थः, स च भगवति विद्यते । किं कुर्वन् विलोचने बिभ्रत् चक्षुषी धारयन् किंभूते अधिश्रितश्रिणी धृतशोभे अधिश्रिता धृता श्रीः शोभा याभ्यां ते अधिश्रितश्रिणी धृतलक्ष्मीके, किं कृतवती मुनिमभिलक्ष्यीकृत्य नारदसंमुखं मुदा हर्षेण विकासं विस्तारमुपेयुषी गतवती प्राप्ते इत्यर्थः । नारददर्शनात्प्रसृते इत्यर्थः । कीदृशं मुनिम् अधिदीधितिमधिकतेजसम् । अधिका दीधितिर्यस्य अथ वा अधिगता दीधितिर्येन सः तं कमिव निदाघधामानमिव रविमिव, निदाघमुष्णं धाम तेजो यस्य सः तम्। पद्मस्य चायमेव स्वभावो यदादित्यदर्शनात्सविकासं भवति लक्ष्म्या चाधिश्रितम् । उपेयुषीत्युपपू-

र्वादिणः क्वसौ द्वित्वे च कृते अभ्यासदीर्घ इट्सहितत्वं निपात्यते धातोर्यणादेशः, 'नपुंसका-च्चे'त्यौङः शीभावः वसोः सम्प्रसारणम् । अधिश्रितश्रिणी इति 'इकोऽचि विभक्ता'-विति नुम् । बिभ्रदित्यभ्यस्तत्वान्नुमभावः । पुण्डरीकाक्ष इति बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ॥ २४ ॥

निदाघेति ॥ निदाघमुष्णं धाम किरणो यस्य तथोक्तम् । 'निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि' इति विश्वः । अर्कमिवाधिदीधितिमधिकतेजसं मुनिमभिलक्ष्य । 'अभिरभागे' इति लक्षणे कर्मप्रवचनीयसंज्ञा कर्मप्रवचनीययुक्ते द्वितीया । मुदा विकासमभ्युपेयुषी उपगते । क्वसुप्रत्ययान्तो निपातः । अत एव अधिश्रिता प्राप्ता श्रीर्याभ्यां ते तथोक्ते । 'इकोऽचि विभक्तौ' इति नुमागमः । विलोचने बिभ्रत् । 'नाभ्यस्ताच्छतुः' इति नुमभावः । स हरिः पुण्डरीकाक्ष इत्येवं स्फुटोऽभवत्, सूर्यसन्निधाने श्रीविकासभावादक्ष्णां पुण्डरीकसाधर्म्यात् । पुण्डरीके इवाक्षिणी यस्येत्यवयवार्थलाभे पुण्डरीकाक्ष इति व्यक्तम् । अन्वर्थसंज्ञोऽभूदित्यर्थः । बिभ्रत्स्फुटो-ऽभवदिति पदार्थहेतुकस्य काव्यलिङ्गस्य निदाघधामानमिवेत्युपमासापेक्षत्वादनयोरङ्गाङ्गिभावेन सङ्करः ॥ २४ ॥

**सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन् ॥**
**द्विजावली(१)व्याजनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः ॥२५॥**

सितमिति ॥ अथानन्तरमच्युतो हरिर्वाचमवोचत् गिरं जगाद । विशेषणसङ्ग्रहणार्थं वाग्ग्रहणम् । किंभूतां वाचम् शुचिस्मितां धवलेषद्धसितां, शुचि धवलमदुष्टं वा स्मितमीषद्धसितं यस्याः ताम् । महात्मानो हि स्मितपूर्वाभिभाषिणः । किं कुर्वन् मुनेर्नारदस्य वपुः शरीरं सुतरामतिशयेन सितिम्ना लम्भयन् श्वेतत्वं प्रापयन् । किंभूतं सितं धवलं, कैः द्विजावलीव्याजनिशाकरांशुभिः द्विजावलीव्याजो दन्तपङ्क्तिच्छद्मा यो निशाकरश्चन्द्रस्तस्यांशुभिः, दन्तपङ्क्तिच्छद्मकिरणैः किंभूतैः विसारिभिः प्रसृतैः । कमिव सौधमिव धवलगृहमिव । यथा निशाकरश्चन्द्रमाः सौधं सितिम्ना लम्भयति । सितिम्नेति कर्तरि तृतीया, द्वितीया तु न भवति लभेरगत्यर्थत्वात् । सितिमा वपुर्लभते तं विष्णुर्लम्भयति । (अत्र तु) 'गतिबुद्धी' त्यादिना कर्मसंज्ञाभावः । गतिफलं हि प्राप्त्यर्थः । तयोस्तु क्वचिदभेदो दृश्यते । द्विजावली व्याजो यस्य स चासौ निशाकरश्च । चन्द्रेण हि सितमपि हर्म्यतलमंशुभिः सिततरीक्रियते । अवोचदिति लुङ् ॥ २५ ॥

सितमिति ॥ अथोभयोरुपवेशनानन्तरमच्युतो हेतुकर्ता विसारिभिरभीक्ष्णं प्रसरद्भिः । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । द्विजावलिर्दन्तपङ्क्तिः । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । सैव व्याजः कपटं यस्य सः । तद्रूप इत्यर्थः । स चासौ निशाकरश्च तस्यांशुभिः किरणैः सितं स्वभावशुभ्रं मुनेर्वपुः सौधं प्रासादमिव सुतरामत्यन्तम् । अव्ययाद्बहादाम्प्रत्ययः । सितिम्ना धावल्येन प्रयोज्यकर्त्रा लम्भयन्व्यापारयन् । अतिधवलयन्नित्यर्थः । लभेरत्र गत्युपसर्जनप्राप्त्यर्थत्वेनागत्यर्थत्वात् 'गतिबुद्धि—' इत्यादिना अणि कर्तुर्न कर्मत्वम् । तथाह वामनः— 'लभेर्गत्यर्थत्वाण्णिचयणौ कर्तुः कर्मत्वाकर्मत्वे' इति । प्राप्त्युपसर्जनगत्यर्थत्वे तु कर्मत्वमेवेति रहस्यम् । 'लभेश्च' इति नुमागमः । शुचिस्मितां वाचमवोचदुक्तवान् । ब्रुवो वच्यादेशः लुङ्, 'वच उम्' इत्युमागमे गुणः । अत्र सौधमिवेत्युपमायाः सितिम्ना लम्भयन्नित्यसम्बन्धरूपातिशयोक्तेः द्विजावलिव्याजनिशाकरेति च्छलादिशब्दैरसत्यत्वप्रतिपादनरूपापह्नवस्य च मिथो नैरपेक्ष्यात्संसृष्टिः ॥२५॥

**किमुक्तवानित्याह—**

**हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ॥**
**शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥ २६ ॥**

---

(१) द्विजावलि० ।

हरतीति ॥ हे मुने ! भवदीयं दर्शनं तावकमालोकनं कालत्रितयेऽपि भूतसम्प्रतिभविष्यत्कालेऽपि योग्यतां भव्यतां व्यनक्ति प्रकटयति प्रकटीकरोति, केषां शरीरभाजां प्राणिनाम्। यतः-सम्प्रति वर्तमानमघं पापं हरति नुदति। किंभूतं दर्शनम् एष्यत आगमिष्यतः शुभस्य पुण्यस्य हेतुः कारणम्। पुनः किंभूतं पूर्वाचरितैः अतीतजन्मोपार्जितैः शुभैः पुण्यैः कृतं विहितम्। न हि पुण्यैर्विना त्वं दृश्यसे नापि पापिनं त्वं पश्यसि। महात्मानः प्रकृत्या च पेशलभाषिणः सर्वस्य विशेषतो गृहमागतस्येति नानुचितमेतद्भगवतो वचनम्। एवमुत्तरत्र। प्रभवति योगाय योग्यः योगाद् यच्च, अभावोनूपचारात(?) ॥ २६ ॥

हरतीति ॥ भवदीयदर्शनं शरीरभाजाम्। द्रष्टॄणामित्यर्थः। भजो ण्विः। कालत्रितये भूतादिकालत्रितयेऽपि योग्यतां पवित्रतां व्यनक्ति गमयति। कुतः—सम्प्रति दर्शनकाले अघं पापं हरति। एष्यतो भाविनः शुभस्य श्रेयसो हेतुः। तथा पूर्वाचरितैः प्रागनुष्ठितैः शुभैः सुकृतैः कृतम्। एवं त्रैकाल्येऽपि कार्यत्वेन कारणत्वेन च पुंसि सुकृतसमवायमवगमयते। अत एतादृशं दर्शनं कस्य न प्रार्थ्यमिति भावः। अत्र हरतीत्यादिवाक्यत्रयस्यार्थस्य शरीरेत्यादिवाक्यत्रयोक्त्या वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २६ ॥

**जगत्यपर्याप्तसहस्रभानुना न यन्नियन्तुं समभावि भानुना ॥**
**प्रसह्य तेजोभिरसंख्यतां गतैरदस्त्वया नुन्नमनुत्तमं तमः ॥ २७ ॥**

जगतीति ॥ अद एतत्तमो ध्वान्तमज्ञानरूपं त्वया प्रसह्य झटिति एव बलाद्वा नुन्नं निरस्तम्। कैः तेजोभिर्धामभिः किंभूतैः असंख्यैः, किन्तत् यद्भानुनापि रविणापि नियन्तुं निराकर्तुं न समभावि न सम्भावितं न शङ्कितं, तमोऽभ्यन्तरमज्ञानस्वरूपमित्यर्थः। अत एवानुत्तममनुत्कृष्टं निन्द्यमित्यर्थः। अविद्यमानमुत्तमं यस्मादित्यनुत्तमं स्वकार्यसाधकत्वात्, निःकृष्टं वा पापरूपत्वात् अज्ञानरूपं वा। कथं भानुना निरसितुं न सम्भावितमित्याह— जगति अपर्याप्तसहस्रभानुना अपर्याप्तं ऊनं सहस्रं भानवो रश्मयो यस्य सः तेन, असम्पूर्णसहस्रकिरणेन। जगच्छब्देन गिरिगह्वरादयोऽपि पदार्था उच्यन्ते। एतदुक्तं भवति-या रविकिरणदशशती सा बाह्यमेव रूपादिसंस्थं तमो निरसितुं समर्था कुत आभ्यन्तरम्। त्वया त्वतितेजस्त्वात् प्रसह्यैतदान्तरमपि तमो निरस्तम्। त्वद्दर्शनेन वयं तमोरहिताः सम्पन्नाः। उक्तं च-

> अर्कः स्वकरसम्पर्कोद्दिवा हन्ति बहिस्तमः।
> साधोस्तु दर्शनादेव बहिरन्तर्दिवानिशम् ॥

समभावीति कर्मणि लुङ्। प्रसह्येति बलात्कारार्थो निपातो न प्रकृतिप्रत्ययार्थोऽस्तीति। नुन्नमिति 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्या'मिति नत्वं न विभाषितम् ॥ २७ ॥

जगतीति ॥ जगत्यपर्याप्ता अपरिच्छिन्नाः सहस्रं भानवोंऽशवो यस्य तेन भानुनाऽर्केण। 'भानवोऽर्कहरांशवः' इति वैजयन्ती। यत्तमो नियन्तुं निवारयितुं न समभावि न शेके। भावे लुङ्। अविद्यमानमुत्तमं यस्मात्तदनुत्तमं सर्वाधिकमदस्तमो मोहात्मकमसंख्यतां गतैस्तेजोभिः प्रसह्य बलात्त्वया नुन्नं छिन्नम्। अतः श्लाघ्यदर्शनो भवानिति भावः। 'नुदविद-' इत्यादिना विकल्पान्निष्ठानत्वभावः। अत्रोपमानाद्भानोर्मुनेराधिक्यप्रतिपादनाद्व्यतिरेकालङ्कारः ॥ २७ ॥

**कृतः प्रजाक्षेमकृता प्रजासृजा सुपात्रनिक्षेपनिराकुलात्मना ॥**
**सदोपयोगेऽपि गुरुस्त्वमक्षयो निधिः श्रुतीनां धनसम्पदामिव ॥ २८ ॥**

कृत इति ॥ भगवन् ! प्रजासृजा ब्रह्मणा त्वं श्रुतीनां वेदानां निधिः कृतः आश्रयो

विहितः । निधीयते अस्मिन् इति निधिः । किंभूतः अक्षयः अविनाशी, सदोपयोगेऽपि अजस्रशिष्यनिष्पादनेऽपि, किंभूतेन प्रजासृजा प्रजाक्षेमकृता लोकहितविधात्रा । लोकानां हि वेदैः श्रेयो भवति, तत्र हि हिताहितयोर्विचारात् । तथा सुपात्रनिक्षेपनिराकुलात्मना सुपात्रे योग्ये निक्षेपेण न्यासेन निराकुलः स्वस्थ आत्मा चेतो यस्य । त्वयि वेदानां न्यासेन ब्रह्मा शोभते । स्थाने मया न्यासः कृत इति मनसि कृत्वा सुखमास्ते । त्वं कीदृश इति विशेषणद्वारेण सुपात्रत्वमाह—शिष्यप्रशिष्यप्रबन्धेन सदाऽजस्रमुपयोगेऽपि गुरुः अक्षतिः अविद्यमाना वेदानां क्षतिर्यस्य, अनपचयः । वेदानामुपयोगः शिष्यप्रशिष्यप्रतिपादनम्, तस्मिन् सत्यप्यक्षयो यतो महान् । गुरुराचार्यः । यो हि स्वल्पचित्तस्तस्याशु व्याख्याक्षतिरुत्पद्यते । कीदृशीनां श्रुतीनां धनसम्पदामिव अभिलषितावाप्त्यार्थराशितुल्यानाम् । यो हि प्रजासृट् राष्ट्रहितकृत राजा स धनसम्पदां निधिं करोति । यथा केनचित्कश्चित्पुमान् धनसम्पदामक्षयो निधिः क्रियते । सः अलुब्धे च तं निक्षिप्य निश्चिन्तो भवति । पूर्वविशेषयुक्तो भवतीति निधिरपि गुरुत्वान्नित्योपयोगेऽप्यक्षयो भवति ॥ २८ ॥

कृत इति ॥ प्रजानां जनानामपत्यानां च क्षेमकृता कुशलकारिणा । 'प्रजा स्यात्सन्ततौ जने' इत्यमरः । सुपात्रे योग्यपुरुषे कटाहादिदृढभाजने च निक्षेपेण निधानेन निराकुलात्मना स्वस्थचित्तेन । 'योग्यभाजनयोः पात्रम्' इत्यमरः । प्रजासृजा ब्रह्मणा पुत्रिणा च त्वं धनसम्पदामिव श्रुतीनां वेदानां सदोपयोगे दानभोगाभ्यां व्ययेऽप्यक्षयः । एकत्राऽऽम्नानादन्यत्रानन्त्याच्चेति भावः । गुरुरुपदेष्टा संप्रदायप्रवर्तक इति यावत्, अन्यत्र महान् । निधीयत इति निधिः निक्षेपः कृतः । उपसर्गे घोः किः । श्रुतिसंप्रदायद्वारा धर्माऽधर्मव्यवस्थापकतया जगत्प्रतिष्ठाहेतूनां भवादृशां दर्शनं कस्य न श्लाघ्यमिति भावः । अत्र शब्दमात्रसाधर्म्यात् श्लेषोऽयं प्रकृतविषय इत्याहुः ॥ २८ ॥

मुनेर्वचनावकाशप्रदर्शनायाह—

**विलोकनेनैव तवामुना मुने ! कृतः कृतार्थोऽस्मि निबृंहितांहसा(१) ॥**
**तथापि शुश्रूषुरहं गरीयसीर्गिरोऽथ वा श्रेयसि केन तृप्यते ॥ २९ ॥**

विलोकनेनेति ॥ हे देवर्षे ! तवामुना दर्शनेनैव कृतार्थोऽस्मि अहं कृतः कृतकृत्योऽहं सम्पादितः । किंभूतेन निबृंहितांहसा अपनीतपापेन । एवावधारणे । तथापि ते तव गरीयसीर्गिरः शुश्रूषुरस्मि श्रोतुकामोऽस्मि । नैतच्चित्रं, यतः—श्रेयसि केन तृप्यते न कश्चित् तृप्तिमुपैति । तेन ममैतत् पिष्टपेषणं न भवतीति भावः । तवेति कर्तरि षष्ठी । एवं केनेति तृतीया । तृप्यत इति भावे लकारः । अतिशयेन गुर्व्यो गरीयस्यो महार्थाः । 'प्रियस्थिरे'त्यादिना गरादेशः ॥ २९ ॥

विलोकनेनेति ॥ हे मुने ! निबर्हितांहसाऽपहृतपाप्मना अत एवामुना तव विलोकनेनैव कृतार्थं कृतोऽस्मि, तथाप्यहं गरीयसीरर्थवत्तराः । 'द्विवचन–' इत्यादिना ईयसुन्प्रत्ययः 'उगितश्च' इति ङीप् 'प्रियस्थिर–' इत्यादिना गुरोर्गरादेशः । गिरस्तव वाचोऽपि शुश्रूषुः श्रोतुमिच्छुरस्मि । शृणोतेः सन्नन्तादुप्रत्ययः । न चैतद् वृथेत्याह—अथ वा, तथा हीत्यर्थः । अथ वेति पक्षान्तरप्रसिद्ध्योरिति गणव्याख्यानात् । श्रेयसि विषये केन तृप्यते । न केनापीत्यर्थः । कृतार्थताया इयत्ताभावादिति भावः । भावे लिट् ॥ २९ ॥

आगमनप्रयोजनं पिपृच्छिषुराह—

**गतस्पृहोऽप्यागमनप्रयोजनं वदेति वक्तुं व्यवसीयते यया ॥**
**तनोति नस्तामुदितात्मगौरवो गुरुस्तवैवागम एष धृष्टताम् ॥ ३० ॥**

---

( १ ) निबर्हितांहसा ।

गतस्पृहोऽपीति ॥ हे नारद ! एष तवागम आगमनमेव तां धृष्टतां वैयात्यं तनोति विस्तारयति, केषां नोऽस्माकम् । किंभूत उदितात्मगौरवः उत्पन्नात्मबहुमानः तथा गुरुर्महान् । किमिति तनोतीत्याह-यया धृष्टतया इति वक्तुं व्यवसीयते, इतीति किम् आगमनप्रयोजनं वद इति । कथंभूतोऽपि गतस्पृहोऽपि गताभिलाषुकोऽपि । अर्थिनां हि राजभिः प्रयोजनमर्थः, त्वं च तपोधनस्ततः किमर्थमागतोऽसीति यदुच्यसे एष त्वदीयागमनस्यैवापराध इत्यर्थः । उदितं कथितमात्मगौरवं येन स उदितात्मगौरवः आगमः । भवदागमनेन ह्यस्माकमात्मनि बहुमान उत्पन्नः । कीदृशा वयं पुण्यभाजनं यद्गम्यो नारदोऽप्यागतः, यतो गुरुर्महान् दुर्लभः । अथ गुरुः परिपाट्यागमः श्रुतं सोऽवश्यं धृष्टतां प्रतिभां तनोतीत्युक्तिलेशः ॥ ३० ॥

गतस्पृहोऽपीति ॥ गतस्पृहो विरक्तोऽपि त्वमागमनप्रयोजनं वदेति वक्तुं यया धृष्टतया व्यवसीयते उद्यम्यते । स्यतेर्भावे लट् । उदितमुत्पन्नमुक्तं वा आत्मनो मम गौरवं येन स गुरुः श्लाघ्य एष तवागमः आगमनमेव नोऽस्माकं धृष्टतां तनोति विस्तारयति । तनु विस्तारे लट् । भवतो निःस्पृहत्वेऽपि प्रेक्षावत्प्रवृत्तेः प्रयोजनव्याप्त्या सावकाशः प्रश्न इति भावः ॥ ३० ॥

**इति ब्रुवन्तं तमुवाच स व्रती न वाच्यमित्थं पुरुषोत्तम ! त्वया ।**
**त्वमेव साक्षात्करणीय इत्यतः किमस्ति कार्यं गुरु योगिनामपि ॥३१॥**

इतीति ॥ तं हरिमित्येवं वचनं ब्रुवाणं स व्रती मुनिः उवाच इत्यूचे हे पुरुषोत्तम ! हे नारायण ! भवता त्वया इत्थं पूर्वोक्तप्रकारेण गतस्पृहेत्यादि न वक्तव्यम् । यतो योगिभिः कपिलसनत्कुमारादिभिरपि त्वमेव साक्षात्करणीयः प्रत्यक्षीकार्यः त्वमेव दृश्य इत्यतः अतोऽन्यद् गुरु कार्यं किं विद्यते, यद्वक्ष्ये गतस्पृहोऽपि । त्वद्दर्शनमेव अस्माकमागमनप्रयोजनमित्यर्थः । अन्यतशब्दोऽत्र वाक्यार्थबलादध्याह्रियते । तद्योगे चाऽत इति पञ्चमी । इति हेतौ । यस्त्वं प्रत्यक्षीकार्योऽतः प्रत्यक्षीकरणादन्यत् किं कार्यं भवत्वित्यर्थः । योगिनामिति कृत्यानां कर्तरि षष्ठी ॥ ३१ ॥

इतीति ॥ इति ब्रुवन्तं तं हरिं स व्रती मुनिरुवाच । किमिति । हे पुरुषोत्तम ! पुरुषेषु श्रेष्ठ ! 'न निर्धारणे' इति षष्ठीसमासप्रतिषेधः । त्वया इत्थं 'गतस्पृहोऽपि' इति न वाच्यम् , निस्पृहस्याप्यत्र प्रयोजनसम्भवादिति भावः । तदेवाह-योगिनामपि त्वमेव साक्षात्करणीयः प्रत्यक्षीकर्तव्य इत्यतोऽस्मादन्यद् गुरु कार्यं किमस्ति । न किञ्चिदित्यर्थः । तस्मान्न प्रयोजनान्तरप्रश्नावकाश इति भावः ॥ ३१ ॥

त्वमेव साक्षात्करणीय इत्येतदेव साधयितुमाह—

**उदीर्णरागप्रतिरोधकं जनैरभीक्ष्णमक्षुण्णतयाऽतिदुर्गमम् ॥**
**उपेयुषो मोक्षपथं मनस्विनस्त्वमग्रभूमिर्निरपायसंश्रया ॥ ३२ ॥**

उदीर्णेति ॥ हे पुरुषोत्तम ! मोक्षपथं मोक्षमार्गमुपेयुषः प्राप्तस्य मनस्विनस्त्वमग्रभूमिः प्रान्तभूमिः । त्वमेव तेषां प्राप्य इत्यर्थः । भगवत्सायुज्यं साङ्गत्यं हि मोक्षः । कीदृशम् उदीर्णरागप्रतिरोधकम् उद्रिक्तविषयाभिलाषप्रतिबन्धकम् । उदीर्ण उद्रिक्तो यो रागो विषयाभिलाषः स एव प्रतिरोधकः प्रतिबन्धस्तत्करो यत्र सः । रागे हि सति कुतो मोक्षः । तथा जनैः सामान्यलोकैरतिदुर्गमं नितरां दुष्प्रापं, कया अभीक्ष्णमक्षुण्णतया पुनःपुनः अदृष्टत्वेन । न हि सर्वैः परां भूमिं प्राप्नोति । कीदृशी अग्रभूमिः निरपायसंश्रया निरपायो निर्बाधः परिच्युतिरहितः

संश्रयः परिग्रहो यत्र। तां प्राप्य च्युतिर्न भवति इत्यर्थः। संसारदुःखं भूयो नानुभूयते इति यावत्। यो हि दुर्गमं मार्गं प्रस्थितः सोऽग्रभूमिं प्राप्य स्वस्थो भवति। तत्रापि पथि उदीर्णरागतुल्यः प्रतिरोधकश्चोरो भवति। जनैश्च अवहमानत्वात् सोऽतिदुर्गमः। प्रतिरोधकचौरैकागारिकमलिम्लुचाः स्तेनाः। उदीर्णं इति ऋगतावित्यस्य उत्पूर्वस्य क्ते रूपम्। क्षुद्यत इति क्षुण्णः। अतिदुःखेन गम्यत इति दुर्गमः 'ईषद् दु'रित्यादिना खल्। मोक्षश्चासौ पन्थाश्चेति ऋक्पूरब्धूः पथामानक्षे॥ ३२॥

यदुक्तं योगिनामपि त्वमेव साक्षात्करणीय इति, तदेव द्रढयति—

उदीर्णेति॥ उदीर्ण उद्रिक्तो रागो विषयाभिलाषः स एव प्रतिरोधकः प्रतिबन्धकः पाटच्चरश्च यस्मिन्। 'प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः' इत्यमरः। अभीक्ष्णमक्षुण्णतयाऽनभ्यस्तत्वेनाप्रतिहतत्वेन च जनैरतिदुर्गमं मोक्षपथमपवर्गमार्गं कान्तारं चोपेयुषः प्राप्तवतः। 'उपेयिवान्-' इत्यादिना क्वस्वन्तो निपातः। मनस्विनः सुमनसः धीरस्य च। प्रशंसायां विनिः। त्वमेव निरपायः पुनरावृत्तिरहितः संश्रयः प्राप्तिर्यस्याः सा तथोक्ता। 'न स पुनरावर्तते' इति श्रुतेः। अग्रभूमिः प्राप्यस्थानम्। 'अग्रमालम्बने प्राप्ये' इति विश्वः। 'सोऽहम्' इत्यादिश्रुतेस्तत्प्राप्तेरेव मोक्षत्वादिति भावः। तस्मान्मुमुक्षूणामपि त्वमेव साक्षात्करणीय इति सिद्धम्। 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेः। यथा कस्यचित्कुतश्चित्सङ्कटान्निर्गतस्य केनचित्कान्तारेण गतस्य किञ्चिन्निर्बाधस्थानप्राप्तिरभयाय कल्पते, तथा त्वमपि मुमुक्षोरिति ध्वनिः॥ ३२॥

इदानीं सांख्यदर्शनेन भगवतो निःक्रियत्वमाह—

**उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथञ्चन॥**
**बहिर्विकारं प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः॥ ३३॥**

उदासितारमिति॥ त्वां पुराविदः सनत्कुमारप्रभृतयश्चिरन्तनाः पुरातनं पुरुषं विदुः पुराणपुरुषं बुबुधिरे। क्षेत्रज्ञं त्वामामनन्तीत्यर्थः। कीदृशं पुरुषमुदासितारं निःक्रियम्। सांख्या हि साक्षिमात्रं पुरुषमाहुः। तथा निगृहीतमानसैर्वश्यात्मभिरध्यात्मदृशा उपनिषद्दर्शनेन कथंकथमपि महता कष्टेन गृहीतं ज्ञातम्। न हि पुरुषः सुज्ञानः। तथा विकारेभ्यो महदादिभ्यो बहिर्बाह्यं बहिर्विकारम्। त्रयोविंशतिविकारविलक्षणमित्यर्थः। तथा प्रकृतेः प्रधानात् पृथक् अन्यम्। त्वं नापि प्रकृतिर्नापि विकृतिरित्यर्थः। तदुक्तम्—'न प्रकृतिर्न विकृतिः पुरुषः' इति। सत्त्वरजस्तमांस्यनुद्भूतपाटवानि स्वकार्याक्षमाणि प्रकृतिशब्देनोच्यन्ते। एतच्च सर्वं योगशास्त्रादेव सुज्ञानम्। इह परमुक्तिमात्रं त्वमात्मा किञ्च न प्रकृतिर्विकारबाह्यो योगिज्ञेयः इति तु वाक्यार्थः। मन एव मानसं 'प्रज्ञादिभ्यश्चे'त्यण्। आत्मन्यधि अध्यात्ममिति विभक्त्यर्थेऽव्ययीभावः 'अनश्चे'ति टच्। तत्र दृक् स एव दृक् ज्ञानम्। विकारेभ्यो बहिर्बहिर्विकारः 'अपपरिबहिरञ्चवः पञ्चम्याः' इत्यव्ययीभावः। विदुरिति विदो लटो वा। पुराभवं पुरातनं सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यस्तनट्। अबाधकान्यपि हि निपातनानि भवन्ति। पुरा पूर्वं कालं विदन्तीति पुराविदोऽतीतज्ञाः॥ ३३॥

ननु प्रकृतिविविक्तपुरुषसाक्षात्कारान्मोक्षो नात्मत्साक्षात्कारादित्याशङ्क्य सोऽपि त्वमेवेत्याह—

उदासितारमिति॥ पुराविदः पूर्वज्ञाः कपिलादयस्त्वां निगृहीतमानसैरन्तर्निबद्धचित्तैर्योगिभिः। आत्मनि अधि इत्यध्यात्मम्। विभक्त्यर्थेऽव्ययीभावः 'अनश्च' इति समासान्तष्टच्। अध्यात्मं या दृक् ज्ञानं तयाध्यात्मदृशा प्रत्यग्दृष्ट्या कथञ्चन गृहीतं साक्षात्कृतम्। केन रूपेण गृहीतमित्यत आह—उदासितारमुदासीनम्। प्रकृतौ स्वार्थप्रवृत्तायामपि स्वयमप्राकृतत्वादस्पृष्टमित्यर्थः। आसेस्तृच्। विकारे-

भ्यो बहिः बहिर्विकारम् । महदादिभ्यः पृथग्भूतमित्यर्थः । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । किञ्च प्रकृतेस्त्रैगुण्यात्मनो मूलकारणात्पृथग्भिन्नम् । 'प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे' इति यादवः । पुराभवं पुरातनमनादिम् । 'सायंचिरम्–' इत्यादिना ट्युप्रत्ययः । पुरुषं पुरुषपदवाच्यं विज्ञानघनं विदुर्विदन्ति । 'विदो लटो वा' इति झेरुसादेशः । यथाहुः—

'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः' ॥

इति । 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादिश्रुतिश्च । सोऽपि त्वमेव, 'तत्त्वमसि' इत्यादिवाक्यैरैक्यश्रवणात् । तस्मात्त्वमेव साक्षात्करणीय इति सुष्ठूक्तमिति भावः ॥ ३३ ॥

**सांख्यदर्शनेन हि निःक्रियत्वं प्रतिपाद्याधुना पञ्चरात्रदर्शनेन कर्तृत्वमाह—**

**निवेशयामासिथ हेलयोद्वृतं(१) फणाभृतां छादनमेकमोकसः ॥**
**जगत्त्रयैकस्थपतिस्त्वमुच्चकैरहीश्वरस्तम्भशिरःसु भूतलम् ॥ ३४ ॥**

**निवेशयामासिथेति** ॥ उद्वृतं चलितमुर्वीतलमुन्नतेषु शेषस्थूणाफणेषु हेलया अनास्थया अनादरेण त्वं निवेशयमासिथ नियोजितवान् । उद्धृतमिति पाठान्तरम् । कीदृक् भूतलं फणाभृतामोकसः पातालस्य एकं छादनं पटलम् । त्वं कीदृशः जगत्त्रयैकस्थपतिः जगत्त्रये त्रिभुवने एकः स्थपतिः प्रधानकर्ता त्रिभुवनैकप्रधानकर्ता । पृथ्वीतलमुच्चकैरुच्चमतिशयेन वा । त्वद्वर्जमन्येन न केनचित्त्रिभुवनं निर्मितमित्यर्थः । अन्योऽपि स्थपतिः तक्षादिः सूक्ष्मचलितं हर्म्यादिच्छादनं स्तम्भेषु हेलया अवश्यमेव योजयतीत्युक्तिलेशः । ओक इति उचेरसुनि बहुलत्वात् कुत्वम् ॥ ३४ ॥

एवं भगवतो निर्गुणस्वरूपमुक्त्वा सम्प्रति प्रस्तुतोपयोगितया सगुणमाश्रित्य षड्भिः स्तौति—

**निवेशयामासिथेति** ॥ जगत्त्रयस्यैकस्थपतिरेकाधिपतिरेकशिल्पी च । 'स्थपतिरधिपतौ तक्षिण बृहस्पतिसचिवयोः' इति वैजयन्ती । त्वं हेलयोद्धृतम् । वराहावतारे इति भावः । फणाभृतामोकसः आश्रयस्य सद्मनश्च । 'ओकः सद्मनि चाश्रये' इति विश्वः । एकं छादनमावरणं भूतलमुच्चकैरुन्नतेषु अहीश्वरः शेष एव स्तम्भस्तस्य शिरःसु मूर्धसु अग्रेषु च । फणासहस्रेष्विति भावः । निवेशयामासिथ निवेशितवानसि । विशतेर्ण्यन्ताल्लिटि थल् । 'कृञ्चानुप्रयुज्यते लिटि' इत्यस्तेरनुप्रयोगः । अत्र श्लिष्टाश्लिष्टरूपकयोर्हेतुहेतुमद्भावात् श्लिष्टं परम्परितरूपकम् ॥ ३४ ॥

**अनन्यगुर्व्यास्तव(२) केन केवलः पुराणमूर्तेर्महिमावगम्यते ॥**
**मनुष्यजन्मापि सुरासुरान्गुणैर्भवान्भवोच्छेदकरैः(३) करोत्यधः ॥ ३५ ॥**

**अनन्येति** ॥ हे कृष्ण ! तव या पुराणमूर्तिः तस्याः केन केवलः कृत्स्नो महिमा अवगम्यते । तव दृश्यरूपस्य यस्य तत्त्वं न बुध्यते इत्येतदप्यत्रोक्त्याऽभिहितम् । कथंभूतायाः पुराणमूर्तेः अनन्यगुर्व्याः सर्वोत्कृष्टायाः, न विद्यते अन्या गुर्वी गरीयसी यस्याः सा तस्याः । दुर्ज्ञेयाया इत्यर्थः । (४)['वोतो गुणवचना'दिति ङीप् विकल्पितः । समासार्थाश्रयस्त्वनुपसर्जनाधिकारान्न भवति । अथ वा नास्त्यन्यो गुरुर्यस्याः । व्याख्याग्रहणान्नदीसंज्ञा दुर्लभा, ग्रामण्ये स्त्रियै इति । अनन्यगुर्व्या इति तु अपपाठात् कप्प्रसङ्गात् । यदि वा समासार्थविधिरनित्यः] । तवेति पूराणमूर्तेरिति च व्यधिकरणे षष्ठ्यौ । यतो भवान् त्वं मनुष्यजन्मापि मनुष्यभावं प्राप्तोऽपि सुरासुरान् देवदैत्यान् अधःकरोति निर्जयति । कैः गुणैः ज्ञानवैराग्यादिभिः, किंभूतैः गुणैः भवोच्छेदकरैः संसारक्षयकारिभिः । सुरासुरानिति विरोधा-

(१) हेलयोद्धृतम् । (२) भवच्छेदकरैः । (३) ०गुर्वीस्तव । (४) [ ] एतच्चिह्नान्तर्गतो ग्रन्थांशो विचारणीयः ।

विवक्षयैकवद्भावाभावः शाश्वतिकाभावादिति उपाध्यायः प्रकाशवर्षः। कार्यकृतो हि देवासुराणां विरोधो न जात्या । यदि वा सुरसहिता असुराः सुरासुराः इति शाकपार्थिवादित्वात्तत्पुरुषः ॥ ३५ ॥

अनन्येति ।। न विद्यतेऽन्यो गुरुर्यस्यास्तस्या अनन्यगुर्वाः इत्यनीकारान्तः पाठः । समासान्तप्राङ्कीषि 'नद्यृतश्च' इति कप्प्रसङ्गः स्यात्, पश्चात्त्वनुपसर्जनाधिकारात् 'वोतो गुणवचनात्' इति प्राप्नोति । 'ङिति ह्रस्वश्च' इति वा नदीसंज्ञात्वात् 'आण्नद्याः' इत्याडागमः । केचित्तु समासान्तविधिरनित्य इति कपं वारयन्ति । तस्याः सर्वोत्तमायास्तव पुराणमूर्तेरमानुषस्वरूपस्य केवलः कृत्स्नः । 'केवलः कृत्स्न एकः स्यात्केवलश्चावधारणे' इति विश्वः । महिमा केनावगम्यते । न केनापीत्यर्थः । कुतः—मनुष्याज्जन्म यस्य स मनुष्यजन्मा भवान् । 'अवर्ज्यो हि बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनः । भवच्छेदकैः संसारनिवर्तकैर्गुणैर्ज्ञानादिभिः सुरासुरान् । सुरासुरविरोधस्य कार्योपाधिकत्वेनाशाश्वतिकत्वात् 'येषां च विरोधः शाश्वतिकः' इति न द्वन्द्वैकवद्भाव इत्याहुः । अधः करोति । 'शेषे प्रथमः' इति प्रथमपुरुषः, भवच्छब्दस्य युष्मदस्मदन्यत्वेन शेषत्वादिति । मानुष एव ते महिमा दुरवगाहः, अमानुषस्तु किमिति तात्पर्यार्थः । द्वितीयार्थेऽसकृद्व्यञ्जनावृत्त्या छेकानुप्रासः ॥ ३५ ॥

मनुष्यजन्माऽपीत्युक्तम्, किमर्थमसौ देवदेवो मनुष्येष्ववतीर्ण इति भङ्ग्या दर्शयति—

लघूकरिष्यन्नतिभारभङ्गुराममूं किल त्वं त्रिदिवादवातरः ॥
उदूढलोकत्रितयेन साम्प्रतं गुरुर्धरित्री क्रियतेतरां त्वया ॥ ३६ ॥

लघूकरिष्यन्निति ॥ किलेत्यागमे । हे कृष्ण ! त्वममूं धरित्रीं लघूकरिष्यन् लघुं कर्तुं त्रिदिवात् स्वर्गात् अवातरः अवतीर्णः, किंभूतां भूमिमतिभारभङ्गुरां अतिशयेन भाराक्रान्ताम् । पुनः साम्प्रतमिदानीमुदूढलोकत्रितयेन सता जगन्निवासेन सता त्वया धरित्री गुरुः श्लाघ्या क्रियते गौरवास्पदं नितरां विधीयते । यत्र हि भगवान् साक्षादेव वसति साऽवश्यमेव श्लाघ्या भवति । अथ चोपहसनम्—किलेत्युल्लुण्ठनायाम् । यो भूमेर्भारं निरसितुमागतस्तेन सा भाराक्रान्ता विधीयते । एष एवार्थो गुरुशब्दस्योभयार्थत्वात् । एतच्चार्थान्तरं प्रस्तुतार्थपरिपोषकम् । सति तस्मिन् वाक्यमेव सुतरां सालङ्कारम् । एवमन्यत्र । लघूकरिष्यन्निति 'लृट् शेषे चे'ति क्रियायां क्रियार्थायामुपपदे लृट्, शतृ । क्रियतेतरामिति 'तिङश्चे'ति तरप् 'किमेत्तिङि'त्यामागमः ॥ ३६ ॥

लघूकरिष्यन्निति ॥ त्वमतिभारेणोर्जेन स्वरूपेण भङ्गुरां स्वयं भज्यमानाम् । भञ्जभासमिदो घुरच् । भङ्गुरः कर्मकर्तरि इति वामनः । अमूम् । भुवमित्यर्थः । लघूकरिष्यन्निर्भारां करिष्यन् किल । 'कृभ्वस्ति—' इत्यादिना अभूततद्भावे च्विः 'च्वौ च' इति दीर्घः । तृतीया द्यौस्त्रिदिवः स्वर्गस्तस्मात् । घञर्थे कविधानम् । वृत्तिविषये संख्याशब्दस्य पूरणार्थत्वं त्रिभागादिवत् । अवातरः अवतीर्णोऽसि । साम्प्रतं सम्प्रत्युदूढलोकत्रितयेन । कुक्षाविति शेषः । त्वया धरित्री गुरुः पूज्या, भारवती च क्रियतेतरामतिशयेन क्रियते । 'तिङश्च' इति तरप् । 'किमेत्तिङव्ययघात्—' इत्यादिना आमुप्रत्ययः । लघुकर्ता गुरुकर्तेति विरोधाभासोऽलङ्कारः । 'आभासत्वे विरोधस्य विरोधाभास उच्यते' इति लक्षणात् ॥ ३६ ॥

निजौजसोज्जासयितुं जगद्द्रुहामुपाजिहीथा न महीतलं यदि ॥
समाहितैरप्यनिरूपितस्ततः पदं दृशः स्याः कथमीश ! मादृशाम् ॥३७॥

निजौजसेति ॥ हे ईश ! हे जगत्पते ! यदि चेत् त्वं महीतलं न उपाजिहीथाः पृथिवीलोकं नागच्छेः मनुष्यलोकं नावतरः, ततो मादृशां मन्दधियां दृशः पदं कथं स्याः दृष्टिगोचरः त्वं कथं भवेः । यतस्त्वं समाहितैरपि अनिरूपितः योगनिष्णातैरपि न दृश्यसे ।

आत्मसंज्ञं हि ज्योतिः दुर्दर्शम् । किमर्थं भूतलमागतः निजौजसा स्वाभाविकेन ओजसा जगद्द्रुहां भुवनतापिनां दैत्यानामुज्जासयितुं हिंसितुमिति भङ्ग्याऽऽगमनप्रयोजनसूचकम् । जसु ताडने इत्यस्यैतद्रूपम् । जगद्भयो द्रुह्यन्ति जगद्द्रुहः । 'जासिनि प्रहणे'ति कर्मणि षष्ठी । एवं पेष्टुं भुवनद्विषामिति । उपाजिहीथा इत्योहाङ् गतावित्यस्य लिङ् सीयुट् 'श्नाभ्यस्तयोरात' इति आकारलोपः । क्रियातिपत्तिर्न विद्यते तेन लृङभावः । मादृशामित्यहमिव दृश्यन्ते । 'त्यदादिषु दृश' इति क्विप् 'प्रत्ययोत्तरपदयोश्चे'ति मादेशः, आ सर्वनाम्नः । अनौद्धत्यख्यापनार्थं चैतत् ॥ ३७ ॥

निजौजसेति ॥ निजौजसा स्वतेजसा जगद्भ्यो द्रुह्यन्तीति जगद्द्रुहः कंसादयः । 'सत्सूद्विष—' इत्यादिना क्विप् । तेषामुज्जासयितुम् । तान् हिंसितुमित्यर्थः । 'जासिनिप्रहण—' इत्यादिना कर्मणि शेषे षष्ठी । 'जसु हिंसायाम्' इति चुरादिः । महीतलं नोपाजिहाथाः यदि नावतरेश्चेत् । ओहाङ् गतौ लङि थासि रूपम् । ततस्तर्हि समाहितैः समाधिनिष्ठैरपि । सकर्मकादाप्याशितादिवदविवक्षिते कर्मणि कर्तरि क्तः । अथ वा समाहितैः । समाहितचित्तैरित्यर्थः । विभक्तधनेषु 'विभक्ता भ्रातरः' इतिवदुत्तरपदलोपो द्रष्टव्यः । गम्यमानार्थस्याप्रयोग एव लोप इति कैयटः । अनिरूपितोऽगृहीतस्त्वमीश ! मादृशाम् । चर्मचक्षुषामिति भावः । विनयोक्तिरियम् । दृशो दृष्टेः पदं गोचरः कथं स्याः । न कथञ्चिदित्यर्थः । तस्मात्त्वत्साक्षात्कार एवागमनप्रयोजनमिति भावः ॥ ३७ ॥

ननु यतिरसमाहितः, ननु च शिशुपालवधे भवान् समर्थ इति स्तुतिमुखेन सूचयितुमाह—

**उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर ! विश्वमीशिषे ॥**
**ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः ॥ ३८ ॥**

उपप्लुतमिति ॥ हे विश्वम्भर ! जगन्निवास ! अदः एतत् विश्वं भुवनं पातुं निष्कण्टकीकर्तुं त्वमेव ईशिषे त्वमेव प्रभवसि नान्यः । किंविशिष्टं विश्वं मदोत्कटैर्मदोद्धतैः दानवैरसुरादिभिरुपप्लुतं बाधितं पीडितम् । अमुमेवार्थं दृष्टान्तेन द्रढयन्नाह–युक्तोऽयमर्थः, यतः कारणात् क्षपातमस्काण्डमलीमसं निशान्धकारमलिनं नभः आकाशं रवेः ऋते सूर्यं विना क्षालयितुं निर्मलीकर्तुं कः समर्थो भवेत् । कृष्णतरं तमः तमस्काण्डम् । मलमस्यास्तीति मलीमसम् । ईश ऐश्वर्ये ईन् (?) 'ईशः से' इतीट् । ऋतेयोगे पञ्चमी ॥ ३८ ॥

ननु कोऽयं नियमो यन्ममैवायं दुष्टनिग्रहाधिकार इत्याशङ्क्यानन्यसाध्यत्वमेवाह--

उपप्लुतमिति ॥ विश्वं बिभर्तीति विश्वम्भरस्तत्सम्बुद्धौ हे विश्वम्भर ! विश्वत्रातः ! 'संज्ञायां भृतृवृजि--' इत्यादिना खच्प्रत्यये मुमागमः । मदोद्धतैः कंसादिभिरुपप्लुतं पीडितम् अदो विश्वं पातुं त्वमेव ईशिषे शक्तोऽसि । विश्वम्भरत्वादिति भावः । ईश ऐश्वर्ये लटि थासि रूपम् । अत्र वैधर्म्येण दृष्टान्तमाह—क्षपायास्तमस्काण्डैस्तमोवर्गैः । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः । 'कस्कादिषु च' इति विसर्जनीयस्य सत्वम् । मलीमसं मलिनम् । 'मलीमसं तु मलिनं कच्चरं मलदूषितम्' इत्यमरः । 'ज्योत्स्नातमिस्रा—' इत्यादिना मत्वर्थीयो निपातः । नभः क्षालयितुं रवेः ऋते रविं विना । 'अन्यारादितरर्ते—' इति पञ्चमी । कः क्षमेत शक्नुयात् । न कोऽपीत्यर्थः । अत्र वाक्यद्वये समानधर्मस्यैकस्य ईशिषे क्षमेतेति शब्दद्वयेन वस्तुभावेन निर्देशात्तत्रापि व्यतिरेकमुखत्वाद्वैधर्म्येण प्रतिवस्तूपमालङ्कारः । तदुक्तम्--सर्वस्य वाक्यार्थगतत्वेन सामान्यस्य वाक्यद्वयेन पृथङ्निर्देशे प्रतिवस्तूपमा ॥ ३८ ॥

**करोति कंसादिमहीभृतां वधाज्जनो मृगाणामिव यत्तव स्तवम् ॥**
**हरे ! हिरण्याक्षपुरःसरासुरद्विपद्विषः प्रत्युत सा तिरस्क्रिया ॥ ३९ ॥**

करोतीति ॥ हे हरे ! कंसादिमहीभृतां कंसकालनेमिप्रभृतीनां राज्ञां वधात् जनो

लोको यत् तव स्तवं करोति भवतः स्तुतिं विधत्ते, प्रत्युत वैपरीत्येन ह्रासादेव सा तव तिरस्क्रिया निन्दा । किंभूतस्य तव हिरण्याक्षपुरस्सरासुरद्विपद्विषः हिरण्यकशिपुप्रभृतिप्रधानदैत्यकुञ्जररिपोः कस्येव हरेरिव । यथा मतङ्गजयूथदारिणो हरेः सिंहस्य मृगाणां हरिणानां वधात् यत् पौरुषवर्णनं प्रत्युत ह्रासात् सा तस्य तिरस्क्रिया निन्दा । उक्तं च—

मृगारिं वा मृगेन्द्रं वा द्वयं व्याहरतां सताम् ।
तस्य द्वयमपि व्रीडा क्रीडादलितदन्तिनः ॥

अधिकं वचनं स्तवो न ऊनम् । अविवक्षितो लोको जनः । यदिति वाक्यार्थनिर्देशः । यमिति पाठान्तरम् । हरिः शौरिः सिंहश्च । द्वेष्टीति द्विट् शत्रुः । सेति विधीयमाना तिरस्क्रियैव निर्दिश्यते । सर्वनामा हि कदाचिदनूद्यमानस्य लिङ्गं गृह्णाति कदाचिद्विधीयमानस्य ॥ ३९ ॥

करोतीति ॥ किञ्च जनो मृगाणामिव कंसादिमहीभृतां वधाद्धेतोः स्तवं स्तोत्रम् । 'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यमरः । करोतीति यत् । हे हरे ! हे कृष्ण ! हे सिंहेति च गम्यते । सा स्तुतिक्रिया हिरण्याक्षपुरःसरा हिरण्याक्षप्रभृतयो येऽसुरास्त एव द्विपास्तेषां द्विषः । हन्तुरित्यर्थः । तस्य तव प्रत्युत वैपरीत्येन । 'प्रत्युतेत्युक्तवैपरीत्ये' इति गणव्याख्यानात् । तिरस्क्रिया अवमानः । यदिति सामान्ये नपुंसकम् । सेति विधेयलिङ्गम् । गजघातिनः सिंहस्य मृगवधवर्णनमिव महासुरहन्तुस्तव कंसादिक्षुद्रनृपवधवर्णनं तिरस्कार एवेत्यर्थः । अत्रासुरद्विपानामिति हरिवद्धरिरिति श्लिष्टपरम्परितरूपकं मृगाणामिवेत्युपमयाऽङ्गाङ्गिभावेन सङ्कीर्यते ॥ ३९ ॥

इदानीं प्रकटमेव कार्यं विवक्षुराह—

**प्रवृत्त एव स्वयमुज्झितश्रमः क्रमेण पेष्टुं भुवनद्विषामसि ॥**
**तथापि वाचालतया युनक्ति मां मिथस्त्वदाभाषणलोलुपं मनः ॥ ४० ॥**

प्रवृत्त इति ॥ हे हरे ! स्वयमेव त्वमुज्झितश्रमः परित्यक्तसमरखेदः सन् भुवनद्विषां दैत्यानां पेष्टुं निहन्तुं प्रवृत्त एव प्रस्तुत एव । वैरिवधे न वाच्योऽसीति भावः । यद्यप्येवं परं तथापि मनः कर्तृभूतं मां वाचालतया युनक्ति बहुरटितत्वेन योजयति । कथंभूतं मनः मिथः एकान्ते त्वदाभाषणलोलुपं त्वया सह आभाषणे आलपने लोलुपमत्यर्थं साभिलाषम् वाचालमित्यर्थः । रहसि त्वया सह वक्तुमिच्छतीति भावः । असम्बद्धं बहु वक्तीति वाचालः ॥ ४० ॥

एवं स्तुत्या देवमभिमुखीकृत्यागमनप्रयोजनं वक्तुमुपोद्घातयति—

प्रवृत्त इति ॥ त्वमुज्झितश्रमस्त्यक्तश्रमः सन् क्रमेण भुवनानि द्विषन्तीति भुवनद्विषो दुष्टास्तेषां पेष्टुम् । तान् हिंसितुमित्यर्थः । 'जासिनिप्रहण—' इत्यादिना कर्मणि शेषे षष्ठी । स्वयमपरप्रेरित एव प्रवृत्तोऽसि । एवं तर्हि पिष्टपेषणं किमिति चेत्तत्राह —तथापि स्वतः प्रवृत्तेऽपि मिथो रहसि त्वदाभाषणे त्वया सह संलापे लोलुपं लुब्धम् । 'लुब्धोऽभिलाषुकस्तृष्णक्समौ लोलुपलोलुभौ' इत्यमरः । मनो मां वाचालतया सह युनक्ति । वाचालं करोतीत्यर्थः । वाचो बह्व्योऽस्य सन्तीति वाचालः । 'आलजाटचौ बहुभाषिणि' इत्यालच् । 'स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्' इत्यमरः ॥ ४० ॥

**तदिन्द्रसन्दिष्टमुपेन्द्र ! यद्वचः क्षणं मया विश्वजनीनमुच्यते ॥**
**समस्तकार्येषु गतेन धुर्यतामहिद्विषस्तद्भवता निशम्यताम् ॥ ४१ ॥**

तदिन्द्रेति ॥ तदिति वाक्योपसंहारे । किं बहुना उक्तेन । हे उपेन्द्र ! शक्रानुज ! मया क्षणं मुहूर्तमेव यद्वच उच्यते कथ्यते तद्वचः भवता त्वया निशम्यतां श्रूयताम् । किंभूतं वचः

इन्द्रसन्दिष्टमिन्द्रकथितं पुनः किंभूतं वचः विश्वजनीनं विश्वजनेभ्यो हितं विश्वजनीनं सार्वजनिकम् । कथंभूतेन त्वया अहिद्विषो देवराजस्य समस्तकार्येषु अशेषकृत्येषु धुर्यतां गतेन साहाय्यं प्राप्तेन । अहिः सर्पे च वृत्रे च । विश्वे च ते जना विश्वजनाः तेभ्यो हितं विश्वजनीनम् । धुरं भारं वहतीति धुर्यः । अहिं दानवविशेषं द्वेष्टीति अहिद्विट् तस्य ॥४१॥

अथ स्ववाक्यश्रवणं सहेतुकं प्रार्थयते—

तदिन्द्रेति ॥ तत्तस्मादिन्द्रमुपगतः उपेन्द्र इन्द्रावरजः । अत एवेन्द्रसन्दिष्टम् । श्रोतव्यमिति भावः । किञ्च विश्वस्मै जनाय हितं विश्वजनीनम् । आत्मन्विश्वजनभोगोत्तरपदात्खः । यद्वचः क्षणं नतु चिरं मयोच्यते, तद्वचोऽहिद्विषो वृत्रघ्नः । 'सर्पे वृत्रासुरेऽप्यहिः' इति वैजयन्ती । समस्तकार्येषु धुर्यतां धुरन्धरत्वं गतेन । अतोऽपि भवता निशम्यताम् । प्रार्थनायां लोट् । धुरं वहतीति धुर्यः । 'धुरो यड्ढकौ' इति यत्प्रत्ययः । स्फुटमत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४१ ॥

तदेव वक्तुमाह—

**अभूदभूमिः प्रतिपक्षजन्मनां भियां तनूजस्तपनद्युतिर्दितेः ॥**
**यमिन्द्रशब्दार्थनिषूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते ॥ ४२ ॥**

अभूदिति ॥ हे कृष्ण ! दितेस्तनूजोऽभूत् दैत्योऽजनि । किंविशिष्टः प्रतिपक्षजन्मनां भियामभूमिः शत्रुसमुत्थनां भीतीनामविषयः । शत्रुभ्यो न बिभेतीत्यर्थः । पुनः कीदृशः तपनद्युतिः सूर्यसमकान्तिः । बहुत्वात्तेषामनिश्चये सत्याह—बुधा विद्वांसो यं दैत्यं हिरण्यपूर्वं कशिपुं प्रचक्षते नाम्ना हिरण्यकशिपुं वदन्ति । किंभूतं हरेः देवराजस्य इन्द्रशब्दार्थनिषूदनं परमैश्वर्यनाशकम् । शक्रस्य महीन्द्र इति क्रियाद्वारेण संज्ञा । इन्दनादिन्द्रः, तच्च तेनापास्तम् । हरयेन राज्यं हृतमित्यर्थः । 'हिरण्यपूर्वं कशिपुं प्रचक्षते' 'धनुरुपपदमस्मै वेदमभ्यादिदेश' 'देवपूर्वं गिरि'मित्यादि काव्यमविचारितरमणीयं न त्वलङ्कारविदामभिमतम् । हिरण्यादीनां शब्दपरत्वेऽपि वा विवक्षतार्थस्य कष्टकल्पनया प्रतीतेः । तनूजशब्द औणादिकः । निषूदतीति निषूदनः कृत्यल्युटो बहुलम् । अत्र च शिशुपालस्त्वया हन्तव्य इति बोद्धव्यम् । यदा तु हिरण्यकशिपुरावणयोर्वर्णनं तत्तस्यैव महत्ताख्यापनाय । जन्मान्तरेऽपि तयोस्त्वमेव वधको नान्य इत्येतत्प्रतिपादनार्थम् ॥ ४२ ॥

अथ शिशुपालो हन्तव्य इति वक्तुं तस्यावश्यवध्यत्वेऽनन्यवध्यत्वज्ञापनौपयिकतया औद्धत्यप्रकटनार्थं जन्मान्तरवृत्तान्तं तावदुद्घाटयति —

अभूदिति ॥ प्रतिपक्षाच्छत्रोः जन्म यासां तासां भियामभूमिरविषयः । निर्भीक इत्यर्थः । तपनद्युतिः सूर्यतापो दितस्तनूजो दैत्योऽभूत् । कोऽसावत आह—हरेरिन्द्रस्य इन्द्रशब्दार्थनिषूदनम्, इन्दतीति इन्द्रः इदि परमैश्वर्ये । 'ऋज्रेन्द्र–' इत्यादिना रन्प्रत्ययान्त औणादिकनिपातः । तस्य इन्द्रइतिशब्दस्य इन्द्रइतिसंज्ञापदस्य योऽर्थः परमैश्वर्यलक्षणस्तस्य निषूदनं निवर्तकम् । कर्तरि ल्युट् । हरेरैश्वर्यनिहन्तारमित्यर्थः । यं दैत्यं हिरण्यशब्दपूर्वं कशिपुशब्दं प्रचक्षते । हिरण्यकशिपुमाहुरित्यर्थः । अत्र हिरण्यशब्दपूर्वकत्वं कशिपुशब्दस्यैव न तु संज्ञिनस्तदर्थस्येति शब्दपरस्य कशिपुशब्दस्यार्थगतत्वेनाप्रयोज्यस्य प्रयोगादवाच्यवचनाख्यार्थदोषमाहुः । 'यदेवावाच्यवचनमवाच्यवचनं हि तत्' इति । समाधानमेवंविधविषये शब्दपरेणार्थलक्षणेति कथञ्चित्सम्पाद्यमित्युक्तमस्माभिः 'देवपूर्वं गिरिं ते' इति 'धनुरुपपदमस्मै वेदमभ्यादिदेश' इत्येतद्व्याख्यानावसरे सञ्जीविन्यां घण्टापथे च । विशेषश्चात्राऽयम्—दैत्यमुद्दिश्य हिरण्यपूर्वं कशिपुं प्रचक्षते संज्ञात्वेन प्रयुङ्क्ते ॥ ४२ ॥

**समत्सरेणाऽसुर इत्युपेयुषा चिराय नाम्नः प्रथमाभिधेयताम् ॥**
**भयस्य पूर्वावतरस्तरस्विना मनस्सु येन द्युसदां न्यधीयत ॥ ४३ ॥**

समत्सरेणेति ॥ हे कृष्ण ! येन हिरण्यकशिपुना द्युसदां देवानां मनस्सु चित्तेषु भयस्य भीतेः पूर्वावतरः प्रथमप्रादुर्भावो न्यधीयत निहितः । प्रथमं तत एव देवा बिभ्युरित्यर्थः । कीदृशेन समत्सरेण सकोपेन असोढपरोन्नतिना तथा तरस्विना बलिष्ठेन तथा असुर इति नाम भवति (१) । चिरायेति चतुर्थ्यन्तप्रतिरूपको निपातः । तरस्विनेति भूम्नः प्रशंसा । दिवि सीदन्तीति द्युसदः 'सत्सूद्विषे'त्यादिना क्विप् । न्यधीयत इति कर्मणि लङ्, तेनैव च कर्मणोऽभिहितत्वादवतराद् द्वितीयाऽभावः ॥ ४३ ॥

समत्सरेणेति ॥ समत्सरेणान्यशुभद्वेषसहितेन । 'मत्सरोऽन्यशुभद्वेषे' इत्यमरः । अस्यतीत्यसुरः । असेरुरन् । असुर इति नाम्नः चिराय चिरकालेन । 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यमरः । प्रथमाभिधेयतामुपेयुषा अन्वर्थतया मुख्यार्थतां गतेन तरस्विना बलवता । 'तरसी बलरंहसी' इति विश्वः । येन हिरण्यकशिपुना दिवि सीदन्तीति द्युसदां देवानां मनस्सु भयस्य पूर्वावतारः प्रथमप्रवेशः । ऋदोरप् । न्यधीयत निहितः । धाञः कर्मणि लङ् । अस्मादेव देवानां प्रथमं भयस्योत्पत्तिरभूदित्यर्थः ॥ ४३ ॥

**दिशामधीशांश्चतुरो यतः सुरानपास्य तं रागहताः सिषेविरे ॥**
**अवापुरारभ्य ततश्चला इति प्रवादमुच्चैरयशस्करं श्रियः ॥ ४४ ॥**

दिशामिति ॥ हे श्रीकृष्ण ! श्रियः सम्पदः तदारभ्य तद्दिनात्प्रभृति हिरण्यकशिपुकालादारभ्य उच्चैः सर्वव्यापिनमिति प्रवादं कलङ्कं निन्दावचनमवापुर्लेभिरे । इतीति किं श्रियश्चलाः चञ्चला अस्थिरा एव । किंभूतं प्रवादमयशस्करमकीर्तिजनकम् । किमेतदधीनतयैव तासां प्रवाद इत्याह—यतो यस्मात्कारणाच्चतुरः सुरान् इन्द्रवरुणयमधनदान् चतुरो देवानपास्य परित्यज्य तमसुरं सिषेविरे भेजुः । तर्हि दरिद्रास्ते स्युर्नेत्याह—किंविशिष्टान् दिशामधीशान् दिक्पालान्। कदाचिद्दैववशात् तं सिषेविरे नेत्याह—किंभूताः रागहृताः, 'अये ! रम्यो वीर' इति तत्प्रेक्षाहृतचित्ताः । अत एव प्रवादः । या किल नारी आत्मपतिं परित्यज्य रागहृता सती पुरुषान्तरं सेवते साऽवश्यमेव महान्तं प्रवादं प्राप्नोति । प्रवादो गर्हा । अयशस्करमिति 'अतः कृकमी'ति सत्वम् ॥ ४४ ॥

दिशामिति ॥ श्रियः सम्पदो यतः यदेत्यर्थः, दिशामधीशान दिक्पतीनापि चतुरः सुरानिन्द्रवरुणयमकुबेरानपास्य त्यक्त्वा तं हिरण्यकशिपुं रागहृताः रागकृष्टाः सत्यः । न तु बलादिति भावः । सिषेविरे । यतो वीरप्रियाः श्रिय इति भावः । तत आरभ्य तदाप्रभृति अयशः करोतीत्ययशस्करम् । दुष्कीर्तिहेतुमित्यर्थः । 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टप्रत्ययः । 'अतः कृकमि–' इत्यादिना विसर्जनीयस्य सत्वम् । उच्चैः प्रचुरं चला अस्थिरा इति प्रवादं जनापवादमवापुः । दिगीशानामपि सर्वस्वहारित्वात्तदौद्धत्यस्य प्राकट्यमिति भावः ॥ ४४ ॥

**पुराणि दुर्गाणि निशातमायुधं बलानि शूराणि घनाश्च कञ्चुकाः ॥**
**स्वरूपशोभैकगुणानि(२) नाकिनां गणैस्तमाशङ्क्य तदादि चक्रिरे ॥ ४५ ॥**

पुराणीति ॥ नाकिनां गणैर्देवसमूहैस्तदादि तत्प्रथममिदं चक्रिरे । किं कृत्वा तमसुरमाशङ्क्य । तस्य भयादित्यर्थः । किं कृतमित्याह–तावत्पुराणि नगराणि दुर्गाणि दुर्गरूपाणि चक्रिरे । तथा सपत्नाभावान्न कश्चिदायुधं दध्रे, तदा तु निशातं तीक्ष्णमायुधं कृतम् । तथा प्रथमं भयाभावात्सर्व एव एकाकी अचेष्टत, तदा शूराणि तेजोयुक्तानि बलानि सैन्यानि चक्रिरे । तथा पूर्वतरं सन्नाहस्य नामापि कश्चिन्नाज्ञासीत्, तदा तु घनाः प्रहारक्षमाः कञ्चुकाः

---

( १ ) अत्र किञ्चित् त्रुटितमिवाभाति । ( २ ) ०फलानि नाकिनां गणैर्य० ।

सन्नाहाः चक्रिरे । सर्वमेतत् यदि गुणाय बभूव तदा न केनचिदपि किञ्चित्कृतमित्याह— किंविशिष्टानि स्वरूपशोभैकगुणानि स्वरूपस्य शोभैव एको गुणो येषां तानि । यतः पुराणि दुर्गेणैव शोभन्ते तेषामियं स्वरूपशोभा । अन्यदायुधं तीक्ष्णमेव भाति । चित्रवत् स्वरूपशोभैव, बभूवेति न कार्यक्षमता, तदपि पराभूता इत्यर्थकथनम् ॥ ४५ ॥

पुराणीति ॥ किञ्च नाकिनां सुराणां गणैः यं हिरण्यकशिपुमाशङ्क्य बाधकत्वेनोत्प्रेक्ष्य स कालः आदिर्यस्मिंस्तदादि तदाप्रभृति स्वरूपशोभैवैकफलं मुख्यं प्रयोजनं येषां तेषां सुरादीनां तानि तथोक्तानि । प्रागीदृगसाध्यशत्रोरभावादिति भावः । नपुंसकमनपुंसकेन—' इत्यादिना नपुंसकशेषः । पुराणि दुर्गाणि प्राकारपरिखादिना अगम्यानि चक्रिरे । 'सुदुरोरधिकरणे' इति गमेर्डः । आयुधं निशातं निशितं चक्रे इति विभक्तिविपरिणामेनान्वयः । 'शो तनूकरणे' इति धातोः क्तः । 'शाच्छोरन्यतरस्याम्' इतीत्वविकल्पात्पक्षे आत्वम् । बलानि सैन्यानि शूराणि शौर्यवन्ति चक्रिरे सम्पादितानि । कञ्चुका वारबाणाः । लोहवर्माणीत्यर्थः । 'कञ्चुको वारबाणोऽस्त्री' इत्यमरः । घना दुर्भेदाश्चक्रिरे । इत्थं नित्यसन्नद्धा जाग्रति स्मेत्यर्थः ।

स सञ्चरिष्णुर्भुवनान्तरेषु यां यदृच्छयाऽशिश्रियदाश्रयः श्रियः ॥
अकारि तस्यै मुकुटोपलस्खलत्करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः ॥ ४६ ॥

स इति ॥ हे कृष्ण ! सोऽसुरः स दैत्यः हिरण्यकशिपुः भुवनान्तरेषु त्रिभुवनमध्येषु संक्रमितुकामः सन् यदृच्छया स्वेच्छया यां दिशमशिश्रियत् भेजे तस्यै दिशे त्रिदशैर्देवैः त्रिसन्ध्यं नमोऽकारि प्रणामो विहितः । उक्तं च—

हिरण्यकशिपू राजा यां यां दिशमुदैक्षत ।
तस्यै तस्यै नमश्चक्रुर्देवाः ऋषिगणैः सह ॥

किंविशिष्टोऽसुरः।श्रियामाश्रयः सम्पदामाधारः । किंभूतैः त्रिदशैः मुकुटोपलेषु स्खलन्तः ततः सम्भ्रमवशाल्लुठन्तः करा हस्ता येषां ते तैः । शिरसि बद्धाञ्जलिभिरित्यर्थः । सञ्चरिष्णुरिति साधुकारिणि ताच्छील्ये वा इष्णुच् । अन्यानि भुवनानि भुवनान्तराणि तेषु । यदृच्छाशब्दः स्वेच्छार्थो व्युत्पत्तिरहितः । न ह्यत्रावयवानुसारिणी व्युत्पत्तिर्विद्यते । तिसृणां सन्ध्यानां समाहारस्त्रिसन्ध्यम् तद्धितार्थोत्तरपदसमहारेषु संख्यापूर्वो द्विगुः द्विगुरेकवचनं स नपुंसकं ह्रस्वो नपुंसके प्रातिपदिकस्य कालाध्वनोरत्यन्तसंयोगे द्वितीया । नमः पूजायां, तद्योगे च 'नमःस्वस्ती'ति चतुर्थी ॥ ४६ ॥

स इति ॥ अन्येषु भुवनेषु भुवनान्तरेषु । 'सुप्सुपा' इति समासः । सञ्चरिष्णुः सञ्चरणशीलः । 'अलंकृञ्—' इत्यादिना चरेरिष्णुच् । श्रियो लक्ष्म्या आश्रयः स हिरण्यकशिपुः यदृच्छया स्वैरवृत्त्या । 'यदृच्छा स्वैरवृत्तिः' इत्यमरः । यां दिशमाशिश्रियदगमत् । श्रयतेर्लुङ् 'णिश्रि—' इत्यादिना चङि द्विर्भावः इयङादेशः । मुकुटोपलेषु मौलिरत्नेषु स्खलन्तः करा येषां तैः । शिरसि बद्धाञ्जलिभिरित्यर्थः । उपलः प्रस्तरे रत्ने' इति विश्वः । तिस्रो दशा बाल्यकौमारयौवनानि जन्मसत्तावृद्धयो वा येषां तैस्त्रिदशैर्देवैः । यद्वा त्रिर्दश परिमाणमेषामिति 'बहुव्रीहौ संख्येये डजबहुगणात्' इति समासान्तः । तिस्रः सन्ध्याः समाहृतास्त्रिसन्ध्यम् । 'तद्धितार्थोत्तरपद—' इत्यादिना समाहारे द्विगुः, द्विगुरेकवचनम् । वा टाबन्त इति पक्षे नपुंसकत्वम् । अत्यन्तसंयोगे द्वितीया । तस्यै दिशे करैर्हस्तैः । 'नमःस्वस्ति—' इत्यादिना चतुर्थी । नमः नमस्कारोऽकारि कृतम् । कृञः कर्मणि लुङ् । 'चिण् भावकर्मणोः' इति चिण् । सन्ध्यावन्दनेऽपि दिङ्नियमं परित्यज्य तदागमनभयात्तस्यै दिशे नमस्कारः कृत इति भावः ॥ ४६ ॥

सटाच्छटाभिन्नघनेन बिभ्रता नृसिंह ! सैंहीमतनुं तनुं त्वया ॥
स मुग्धकान्तास्तनसङ्गभङ्गुरैरुरोविदारं प्रतिचस्करे नखैः ॥ ४७ ॥

**सटाच्छटेति** ॥ हे नृसिंह ! त्वया स हिरण्यकशिपुनामा दैत्यः उरोविदारं प्रतिचस्करे वक्षो विदार्य विक्षिप्तः। मारित इत्यर्थः। कैरिति नखैः कथंभूतैर्नखैः मुग्धकान्तास्तनसङ्गभङ्गुरैः मुग्धा नववयःकामा मनोज्ञा अभिनवा याः कान्तास्तासां स्तनसङ्गः कुचसम्पर्कस्तेन भङ्गुरैर्वक्रैः, इत्ययत्नो दर्श्यते। किं कुर्वता त्वया सैंहीं तनुं बिभ्रता सिंहस्य तनुं धारयता किंविशिष्टां तनुमतनुं प्रौढतरीं, किंभूतेन त्वया सटाच्छटाभिन्नघनेन सटाच्छटाभिः केसरप्रान्तैर्भिन्ना विदारिता घना अभ्राणि येन सः तेनेति उच्चत्वोक्तिः। सटाशब्दः पुंस्यपि वर्तते। तेषां छटा प्रान्तो विच्छित्तिर्वा प्रहारोऽपीति केचित्। श्रेष्ठो ना नृसिंहः, प्रशंसावचनम्। उरोविदारमिति दृधातुः द्वितीयायां स्वाङ्गे ध्रुवे 'परि क्लिश्यमाने चे'ति णमुल्। प्रतिचस्करे इति कर्मणि लकारः किरतौ लवने 'हिंसायां प्रतेश्चे'ति सुडागमः॥४७॥

अथ सोऽपि त्वयैव हत इत्याह—

**सटाच्छटेति** ॥ हे नृसिंह ! नरः सिंह इवेत्युपमितसमासः। ना चासौ सिंहश्चेत्यपि, प्रस्तावात्। सिंहस्येमां सैंहीं तनुं कायं बिभ्रता। नृसिंहावतारभाजेत्यर्थः। किंभूताम् अतनुं विस्तीर्णाम्। अत एव सटाच्छटाभिः केसरसमूहैः भिन्ना घना मेघा येन। अभ्रङ्कषविग्रहत्वादिति भावः। 'सटा जटाकेसरयोः' इति, 'तनुः काये कृशेऽल्पे च' इति च विश्वः। त्वया स दैत्यः मुग्धौ नवौ। 'मुग्धः सौम्ये नवे मूढे' इति वैजयन्ती। यौ कान्तास्तनौ तयोः सङ्गेनापि भङ्गुरैः कुटिलैर्नखैरुरोविदारमुरो विदार्य। 'परिक्लिश्यमाने च' इति णमुल्प्रत्ययः। प्रतिचस्करे हतः। किरतेः कर्मणि लिट्। 'ऋच्छत्यॄताम्' इति गुणः। 'हिंसायां प्रतेश्च' इति सुडागमः। वज्रकठिनोऽपि नखैर्विदारित इति वाङ्मनसयोरगोचरमहिम्नस्ते किमसाध्यमिति भावः॥ ४७॥

**विनोदमिच्छन्नथ दर्पजन्मनो रणेन कण्ड्वास्त्रिदशैः समं पुनः ॥**
**स रावणो नाम निकामभीषणं बभूव रक्षः क्षतरक्षणं दिवः ॥ ४८ ॥**

**विनोदमिति** ॥ हे कृष्ण! अथ कदाचित् काले सरति स एव हिरण्यकशिपुरेव दैत्येन्द्रो भूयः पुनरपि रक्षो बभूव, किंनाम रावणो नाम। किंभूतं रक्षः निकामभीषणमतिशयभयावहं दशकण्ठविंशतिभुजत्वात्, तथा दिवः स्वर्गस्य क्षतरक्षणं, क्षणु हिंसायां क्षतप्रयोगः। क्षता निर्जिता रक्षणा दिवः पालका देवा येन तत्, जितपरिपालकम्। अथ वा क्षतं रक्षणं येन। सर्वस्याऽयत्नप्रासस्तदा स्वर्गोऽभवदित्यर्थः। किं कुर्वन् किमिव जन्मान्तरमाश्रयदित्याह- कण्ड्वाः कण्डूतेः विनोदं विनाशमिच्छन् अभिलषन् केन रणेन संग्रामेण, कथं त्रिदशैः समं देवैः सार्धं कथंभूतायाः कण्ड्वा दर्पजन्मनः मदोत्थितायाः। पूर्वं तस्य युद्धश्रद्धा न निवृत्तासीत्, सम्प्रति तु रक्षोरूपेण तामपासितुकाम इत्यर्थः। रावणरक्षःशब्दयोराविष्टलिङ्गत्वाद्भिन्नलिङ्गत्वेनापि सामानाधिकरण्यम्। नामशब्दोऽयं प्रसिद्धिद्योतको निपातः। भीषयतीति भीषणं नन्द्यादिभ्यो ल्युः ॥ ४८ ॥

अथास्य जन्मान्तरचेष्टितान्याचष्टे—

**विनोदमिति** ॥ अथ स हिरण्यकशिपुः पुनर्भूयोऽपि त्रिदशैः समं सह। 'साकं सार्धं समं सह' इत्यमरः। रणेन दर्पादन्तःसाराज्जन्म यस्यास्तस्याः कण्ड्वाः भुजकण्डूतेर्विनोदमपनोदमिच्छन्। प्राग्भवनखक्षतैस्तदपनोदाभावादित्यर्थः। दिवः स्वर्गस्य क्षतं नष्टं रक्षणं रक्षा येन तत्। क्षतगुरक्षणमित्यर्थः। सापेक्षत्वेऽपि गमकत्वात्समासः। अनेन देवसर्वस्वापहारित्वमुक्तम्। भीषयत इति भीषणम्। नन्द्यादित्वात् ल्युः। 'भियो हेतुभये षुक्' इति षुक्। निकामं भीषणम्। 'सुप्सुपा' इति समासः। रावणो नाम रावण इति प्रसिद्धं रक्षो बभूव। राक्षसयोनौ जात इत्यर्थः। विश्रवसोऽपत्यं पुमान् रावण इति विग्रहः। 'तस्यापत्यम्' इत्याणि

कृते 'विश्रवसो विश्रवणरवणौ' इति प्रकृते रवणादेशः । पौराणिकास्तु रावयतीति व्युत्पादयन्ति । तदुक्त-मुत्तरकाण्डे—

'यस्माल्लोकत्रयं चैतद्रावितं भयमागतम् ।
तस्मात्त्वं रावणो नाम नाम्ना वीरो भविष्यसि' ॥

इति । रौतेर्ण्यन्तात्कर्तरि ल्युट् । रावणरक्षसोर्नियतलिङ्गत्वाद्विशेषणविशेष्यभावेऽपि स्वलिङ्गता ॥ ४८ ॥

कीदृशोऽसाविति इदानीं तद्वर्णनमाह—

**प्रभुर्बुभूषुर्भुवनत्रयस्य यः शिरोऽतिरागाद्दशमं चिकर्तिषुः ॥**
**अतर्कयद्विघ्नमिवेष्टसाहसः प्रसादमिच्छासदृशं पिनाकिनः ॥ ४९ ॥**

**प्रभुरिति ॥** यो रावणः पिनाकिनः श्रीमहादेवस्य प्रसादं शिवप्रसादं वरदानलक्षणं विघ्नमेव अतर्कयत् अन्तरायतुल्यं विवेद व्यचारयत्, किं कर्तुमिच्छुः अतिरागात् भक्त्यतिशयात् दशमं शिरश्चिकर्तिषुः छेत्तुकामः । शिरश्छेदे किं कारणमित्याह—किंविशिष्टः भुवनत्रयस्य प्रभुः बुभूषुः त्रिभुवनस्य स्वामी भवितुमिच्छुः । त्रिभुवनैश्वर्येच्छया नवापि शिरांसि छित्त्वाऽतिरभसाद्दशमं शिरोऽपि चिच्छित्सुरित्यर्थः। तर्हि प्रसादः स्वल्पो भविष्यति नेत्याह—किंभूतं प्रसादमिच्छासदृशमभिलषितानुरूपम् । तर्हि कुत एव शिरः छेत्तुकामो विचारात्प्रसादं विघ्नमिवातर्कयदित्याह—यतः किंभूतः इष्टसाहसः अभीष्टाभिमानः।अविचार्य प्रवृत्तिः साहसं, हिताहितमनपेक्ष्य यत्कर्म तत्साहसम् । इष्टं साहसं यस्य सः ॥ ४९ ॥

अथास्यौद्धत्यमष्टादशश्लोक्याऽऽचष्टे—

**प्रभुरिति ॥** यो रावणः भुवनत्रयस्य प्रभुः स्वामी बुभूषुर्भवितुमिच्छुः । भुवः सन्नन्तादुप्रत्ययः । अतिरागादुत्साहात्, न तु फलविलम्बननिर्वेदादिति भावः । दशमं शिरः चिकर्तिषुः कर्तितुं छेत्तुमिच्छुः । 'कृती छेदने' इति धातोः सन्नन्तादुप्रत्ययः । इष्टसाहसः प्रियसाहसः अत एवेच्छासदृशमिच्छानुरूपं पिनाकिनः प्रसादं वरं विघ्नमिवातर्कयदुत्प्रेक्षितवानिति परमसाहसिकत्वोक्तिः । इत आरभ्य श्लोकषट्केऽपि यच्छब्दस्य स रावणो नाम रक्षो बभूवेति पूर्वेणान्वयः । रङ्गराजस्तु 'न चक्रमस्याक्रमताधिकन्धरम्' इति उपरिष्टादन्वय इत्याह । तदसत् । 'गुणानां च परार्थत्वात्' इति न्यायादारुण्यादिवत्प्रत्येकं प्रधानान्वयिनां मिथः सम्बन्धायोगादित्यलं शाखाचङ्क्रमणेन । पुरा किल रावणः काम्ये कर्मणि पशुपतिप्रीणनाय नव शिरांस्यग्नौ हुत्वा दशमारम्भे सन्तुष्टात्तस्मात्त्रैलोक्याधिपत्यं वव्रे इति पौराणिकी कथात्रानुसन्धेया ॥४९॥

**समुत्क्षिपन् यः पृथिवीभृतां वरं वरप्रदानस्य चकार शूलिनः ॥**
**त्रसत्तुषाराद्रिसुतससम्भ्रमस्वयङ्ग्रहाश्लेषसुखेन निष्क्रयम् ॥ ५० ॥**

**समुत्क्षिपन्निति ॥** यो रावणः शूलिनः महादेवस्य सम्बन्धिनो वरप्रदानस्य प्रसादस्य निष्क्रयं निष्कृतिं चकार संशुद्धिमिव विदधे । प्रतिमोचनात्पर्वतोच्चालनात् तत्प्रत्युपकारः कथं भवतीत्यत आह—केन त्रसत्तुषाराद्रिसुतससम्भ्रमस्वयङ्ग्रहाश्लेषसुखेन त्रसन्ती पर्वतकम्पाद्बिभ्यती याऽसौ तुषाराद्रिसुता तया ससम्भ्रमं सचकितं स्वयङ्ग्रहेण प्रार्थनया य आश्लेषः परिष्वङ्गः स एव सुखं निर्वृतिः तेन, सभयस्वयंदत्तालिङ्गनसुखेन। किं कुर्वन् पृथिवीभृतां वरं कैलासं समुत्क्षिपन् उन्मूलयन् उत्पाटयन् । उक्तं च—दशवदनचण्डदोर्दण्डमण्डपोच्चलितकैलासशृङ्गचलनभयचकितरणरणितमणिनूपुरमधुररवमुखरितगौरीकुचकलशकुङ्कुमपङ्कलाञ्छितशरीरः स ईशः नित्याभिमानी । स्वयङ्ग्रहं वर्जयित्वा अन्य ईश्वरस्य प्रत्युपकारो न । ग्रहणं ग्रहः अप् ॥ ५० ॥

अथ कैलासोत्क्षेपणवृत्तान्तमाह—

समुत्क्षिपन्निति ॥ यो रावणः पृथिवीभृतां पर्वतानां वरं श्रेष्ठं कैलासं समुत्क्षिपन् । दर्पादिति शेषः । शूलिनो वरप्रदानस्य पूर्वोक्तस्य । प्रसन्न्याः शैलचलनेन बिभ्यत्यास्तुषाराद्रिसुतायाः पार्वत्याः ससम्भ्रमो यः स्वयङ्ग्रहः प्रियप्रार्थनां विना कण्ठग्रहणम् । 'सुप्सुपा–' इति समासः । तेन आश्लेषः सम्मेलनं तेन यत्सुखं तेन । त्रैलोक्याधिपत्यसुखादुत्कृष्टेनेति भावः । निष्क्रयं प्रत्युपकारनिर्गतिं चकार । ' निष्क्रयो बुद्धियोगे स्यात्सामर्थ्ये निर्गतावपि' इति वैजयन्ती । यद्वा निष्क्रयं चकार क्रयेण व्यवहारेण याच्ञादोषदैन्यं ममार्जेत्यर्थः । अत्र सुखवरदानयोर्विनिमयात्परिवृत्तिरलङ्कारः ॥ ५० ॥

**पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हराऽमराङ्गनाः ॥**
**विगृह्य चक्रे नमुचिद्विषा वशी(१)य इत्थमस्वास्थ्यमहर्निशं दिवः ॥५१॥**

**पुरीमिति** ॥ यो रावणः अहर्निशमहोरात्रं दिवः स्वर्गस्य स्वर्गवासिनाम् इत्थममुना प्रकारेण अस्वास्थ्यं चक्रे उपद्रवं चकार, किं कृत्वा नमुचिद्विषा इन्द्रेण सह विगृह्य वैरं विधाय । किं किमस्वास्थ्यं चकारेत्याह तावत्—पुरीमवस्कन्द अमरावतीं बभञ्ज । अभिषेणयामासेत्यर्थः । अपरं नन्दनं लुनीहि देवोद्यानं लुलाव चिच्छेद, तथा रत्नानि पुष्पकप्रभृतीन्युत्कृष्टवस्तूनि मुषाण मुमोष चोरयामास । अपरम् अमराङ्गना देववधूर्हर जहार । सत्यप्सरसां रत्नत्वे प्राधान्यख्यापनाय पृथगुपादानम् । कथमेवं तस्य घटते इत्याह—किंभूतः वशी जगद्विश्वं वशं नयतीति वशी समर्थः । अवस्कन्देत्यादौ क्रियासमभिहारे अतीते काले पञ्चम्या(२) मध्यमैकवचनम् । कालकारकविभक्तिविशेषावगमस्तु अनुप्रयोगवशात् । अनुप्रयोगस्तु चक्रे इति 'समुच्चये सामान्यवचनस्ये'त्यनेन । ये तु प्रैष एव लोटमाहुस्तेऽविशेषविदोऽनुत्तरार्हाः । एवं मुषाणेति हलः श्नः शानज्झौ । अभीक्ष्णमीष्टे वशी । अहर्दिवमिति पाठे वीप्सायां निपातः । अहन्यहनीत्यर्थः ॥ ५१ ॥

पुरीमिति ॥ यो बली बलवान्रावणो नमुचिद्विषा इन्द्रेण विगृह्य विरुध्य पुरीममरावतीमवस्कन्दावरुरोध । नन्दनमिन्द्रवनम् । 'नन्दनं वनम्' इत्यमरः । लुनीहि चिच्छेद । 'ई हल्यघोः' इतीकारः । रत्नानि श्रेष्ठवस्तूनि मणीन्वा । 'रत्नं श्रेष्ठे मणावपि' इति विश्वः । मुषाण मुमोष । मुष स्तेये, 'हलः श्नः शानज्झौ' इति श्नः शानजादेशः । अमराङ्गनाः हर जहार । सर्वत्र पौनःपुन्येनेत्यर्थः । इत्थमनेन प्रकारेण अहनि च दिवा चाहर्दिवम् । अहन्यहनीत्यर्थः । 'अचतुर–' इत्यादिना सप्तम्यर्थवृत्तौ द्वन्द्वे समासान्तो निपातः । दिवः स्वर्गस्यास्वास्थ्यमुपद्रवं चक्रे । अत्रावस्कन्देत्यादौ 'क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः' इत्यनुवृत्तौ 'समुच्चयेऽन्यतरस्याम्' इति विकल्पेन कालसामान्ये लोट् । तस्य यथोपग्रहं सर्वतिङादेशो हिस्वौ च । प्रकरणादिना त्वर्थविशेषावसानम् । 'अतो हेः' इति यथायोग्यं हिलुक् । पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः । अवस्कन्दनादिक्रियाविशेषाणां समुच्चयः क्रियासमभिहारः । तत्सामान्यस्य करोतेः 'समुच्चये सामान्यवचनस्य' इत्यनुप्रयोगः चक्रे इति । 'अत्र तिङ्वैचित्र्यात्सौशब्द्याख्यो गुणः । 'सुपां तिङां परावृत्तिः सौशब्द्यम्' इति लक्षणात् । समुच्चयालङ्कारः ॥ ५१ ॥

**सलीलयातानि न भर्तुरभ्रमोर्न चित्रमुच्चैःश्रवसः पदक्रमम् ॥**
**अनुद्रुतः संयति येन केवलं बलस्य शत्रुः प्रशशंस शीघ्रताम् ॥ ५२ ॥**

**सलीलेति** ॥ बलस्य शत्रुर्देवराजः अभ्रमोर्भर्तुरैरावतस्य केवलम् अलोलगमनाय शीघ्रतां प्रशशंस ऐच्छत् वेगवत्तामभिललाष न सलीलयातानि न सविलासगमनानि । तथा उच्चैःश्रवसो देवाश्वस्य केवलं शीघ्रतामैच्छत् न चित्रं पदक्रमं नानाविधं पदक्रमं पाद-

---

( १ ) बली······महर्दिवम् । ( २ ) पञ्चमीशब्देन लोटो ग्रहणं, २ सर्गे ६५ श्लोक तथैव सङ्केतितत्वात् ।

न्यासम् । अश्वानां गतिविशेषः पदक्रम इत्यन्ये । यतः-संयति संभ्रमे तेन रावणेनाद्रुतः अनुगतः द्रुताऽटितः । तदा वेगयानमेव तस्य प्रियं बभूवेत्यर्थः । अभ्रमुः ऐरावणसहचरी आदिजा करेणुः । यातशब्दो भावसाधनः ॥ ५२ ॥

सलीलेति ॥ संयति युद्धे । 'समुदायः स्त्रियां संयत्समित्याजिसमिद्युधः' इत्यमरः । येन रावणेन अनुद्रुतोऽनुधावितः बलस्य शत्रुरिन्द्रः अभ्रमोर्भर्तुरैरावतस्य सलीलयातानि सभङ्गीकगमनानि न प्रशशंस । तथा उच्चैःश्रवसः स्वाश्वस्य चित्रं नानाविधं पदक्रमं पादविक्षेपम् । अर्धपुलायितादिगतिविशेषमित्यर्थः । न प्रशशंस । किन्तु केवलं शीघ्रतां शीघ्रगामित्वमेव प्रशशंस । अन्यथा शीघ्रं मामास्कन्द्य ग्रहीष्यतीति भयादिति भावः ॥ ५२ ॥

**अशक्नुवन् सोढुमधीरलोचनः सहस्ररश्मेरिव यस्य दर्शनम् ॥**
**प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः ॥ ५३ ॥**

**अशक्नुवन्निति** ॥ आदित्यतुल्यस्य यस्य रावणस्य दर्शनं कातरनयनत्वात् सोढुमशक्नुवन् असहमानः सन् कौशिकः इन्द्रो मेरुदरीगेहविवरं प्रविश्य दिवसान्निनाय सभयत्वादतिवाहयामास, किंभूतः बिभ्यत् सभयः । यस्य कस्येव सहस्ररश्मेरिव । यथा कौशिकः उलूकोऽपि अपटुनयनत्वात् भास्करालोकमसहमानो गुहान्तरे एव दिवसान्नयते । सोढुमिति शक्यार्थे तुमुन् । सहस्रं रश्मयो यस्य सः । बिभ्यदित्यभ्यस्तत्वान्नुमभावः पुंनपुंसकलिङ्गयोः स्थितः । कौशिकः इन्द्र उलूकश्च ॥ ५३ ॥

अशक्नुवन्निति ॥ अधीरलोचनोऽस्थिरदृष्टिः कौशिको महेन्द्रः उलूकश्च । 'महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः' इत्यमरः। सहस्ररश्मेः सूर्यस्येव यस्य रावणस्य विक्रमकर्मणो दर्शनं सोढुमशक्नुवन् । हेमाद्रेर्गुहैव गृहं तस्यान्तरं प्रविश्य बिभ्यत्तथापि वेपमान एव । बिभेतेः शतरि 'नाभ्यस्ताच्छतुः' इति नुमभावः । दिवसानि वासराणि निनाय । 'वा तु क्लीबे दिवसवासरौ' इत्यमरः । यथा पेचकः सूर्योदये भीतः सन् तिष्ठति तथा सोऽपीति भावः । कौशिक इत्यभिधायाः प्रस्तुतैकगोचरत्वेनोभयश्लेषेऽपि विशेष्यश्लेषासम्भवादुलूकविषयशब्दशक्तिमूलो ध्वनिः । सहस्ररश्मेरिवेत्युपमानानिर्वाहकत्वाद्वाच्यासिद्ध्यङ्गम् ॥ ५३ ॥

**बृहच्छिलानिष्ठुरकण्ठघट्टनाविकीर्णलोलाग्निकणं सुरद्विषाम्(१) ॥**
**जगत्प्रभोरप्रसहिष्णु वैष्णवं न चक्रमस्याक्रमताधिकन्धरम् ॥ ५४ ॥**

**बृहच्छिलेति** ॥ अस्य सुरद्विषां प्रभो राक्षसेश्वरस्य अधिकन्धरं ग्रीवायां वैष्णवं चक्रं सुदर्शनं नाम न आक्रमत प्रतिहतं बभूव। नष्टशक्ति कुण्ठोऽभूदित्यर्थः(२) । कदाचिन्नित्यमेवासामर्थ्यं स्यान्नेत्याह—जगदप्रसहिष्णु भुवनान्यभिभविष्णु । क्रुद्धं सज्जगदपि भस्मीकर्तुं क्षममित्यर्थः । एवमस्यां व्याख्यायां न वस्तुनि दोषो नापि शब्दे । कीदृशं तर्हि ग्रीवासंस्पर्शवशादभूदित्याह—बृहच्छिला इव अखण्डपाषाणवन्निष्ठुरः कठिनो यो रावणीयः कण्ठस्तस्य तत्र वा घट्टना संश्लेषः प्रतिघातस्तया विकीर्णा उद्भ्रान्ता लोलाः प्रसारिणोऽग्निकणा वह्निस्फुलिङ्गा येन तत्तथोक्तम् । क्रमतेरुदात्तेत्त्वात् 'वृत्ती'त्यादिनात्मनेपदम् । वृत्तिरप्रतिबन्धः । कन्धरायामधि अधिकन्धरमिति विभक्त्यर्थे 'अव्ययीभावश्चे'ति नपुंसकत्वम्, ह्रस्वः ॥ ५४ ॥

बृहच्छिलेति । बृहति शिलेव निष्ठुरे कण्ठे घट्टनादभिघाताद्विकीर्णा विक्षिप्ताः लोलाश्चाग्निकणाः स्फुलिङ्गा यस्य तत् । अत एवाप्रसहिष्णु अनभिभावकम् । प्रसहनमभिभव इति वृत्तिकारः । 'अलंकृञ्—' इत्यादिना इष्णुच् । वैष्णवं चक्रं सुदर्शनं जगत्प्रभोः सकललोकैकस्वामिनः अस्य सुरद्विषो रावणस्य कन्धरायामधि अधिकन्धरमधिग्रीवम् । विभक्त्यर्थेऽव्ययीभावः । 'अव्ययीभावश्च' इति नपुंसक-

(१) ०द्विकीर्ण.........द्विषः । (२) पुंस्त्वं चिन्त्यम् ।

त्वात् 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम् । 'कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि' इत्यमरः । नैक्रमतापतिहतं न क्रमते स्म न प्रवर्तते स्म । किन्तु प्रतिहतमेवेत्यर्थः । 'वृत्तिसर्गतायनेषु क्रमः' इति वृत्तावात्मनेपदम् । वृत्तिरप्रतिबन्धः ॥ ५४ ॥

**विभिन्नशङ्खः कलुषीभवन्मुहुर्मदेन दन्तीव मनुष्यधर्मणः ॥**
**निरस्तगाम्भीर्यमपास्तपुष्पकं प्रकम्पयामास न मानसं न सः ॥ ५५ ॥**

**विभिन्नेति ॥** स रावणो मनुष्यधर्मणो धनदस्य मानसं मनो न न प्रकम्पयामास अपि धैर्यादचालयदेव । अभीषयतेत्यर्थः । क इव दन्तीव । यथा हस्ती ऐरावणो नाम मानसं सरः क्षोभयति । अधुना श्लेषः । कीदृशः सः विभिन्नो युध्यमानस्ताडितः शङ्खो निधिर्येन, अन्यच्च अपास्तोऽपहृतः पुष्पको धनदविमानं येन । गजोऽपि शङ्खाख्यान् प्राणिनो मानसेऽवचूर्णयति । अथ वा विभिन्नौ मदवशात् स्फुटितौ शङ्खौ कपोलौ यस्य सः विभिन्नशङ्खः स्रुतगण्डः । अपास्तानि इतस्ततः क्षिप्तानि पुष्पाणि माला येन सोऽपास्तपुष्पकः । मनः कीदृशं मदेन दर्पेण रावणीयेन मुहुः कलुषीभवत् क्षुभ्यत् । बलीयसा हि बलवानभिभूतः कलुषीभवति । तथा निरस्तं त्यक्तं गाम्भीर्यं चेतोगुणो येन यस्मिन् वा ।

यस्य प्रसादादाकारक्रोधहर्षभयादयः ।
भावस्था नोपलक्ष्यन्ते तद्गाम्भीर्यमुदाहृतम् ॥

सरोऽपि मदेन दानाम्बुना कलुषमाविलं भवति । निरस्तं गाम्भीर्यं निश्चलत्वमगाधत्वं वा येन तन्निरस्तगाम्भीर्यम् । अगाधेऽपि सरसि ऐरावणो न ब्रुडति । तडागादिलुठनत्वाद्वा गाधत्वाभावः ॥ ५५ ॥

विभिन्नेति ॥ स रावणो मदेन दर्पेण इभदानेन च । 'मदो दर्पेभदानयोः' इति विश्वः । दन्तीव गज इव विभिन्नो विपाटितः शङ्खो निधिभेदः कम्बुश्च येन सः सन् । 'शङ्खो निध्यन्तरे कम्बुललाटास्थिनखेषु च' इति विश्वः । अकलुषं कलुषं क्षुब्धमाविलं च भवत्कलुषीभवत् । निरस्तं गाम्भीर्यमविकारित्वमगाधत्वं च यस्य तत् । अपास्तानि पुष्पाणि पुष्पकं विमानं च यस्मात्तत् । पुष्पपक्षे वैभाषिकः कप्रत्ययः । मनुष्यस्येव धर्मः श्मश्रुलत्वादिर्यस्येति स्वामी । तस्य मनुष्यधर्मणः । 'धर्मादनिच् केवलात्' इत्यनिच् । मानसं चित्तं तदीयं सरश्च । 'मानसं सरसि स्वान्ते' इति विश्वः । मुहुर्न कम्पयामास न क्षोभयामासेति न । किन्तु कम्पयामासैवेत्यर्थः । कुबेरस्य महामहिमतया सम्भावितापकम्पित्वनिवारणाय नञ्द्वयम् । 'सम्भाव्यनिषेधनिवर्तने नञ्द्वयम्' इति वामनः । अत्र दन्तिरावणयोः प्रकृताप्रकृतयोः श्लेषः ॥५५॥

**रणेषु तस्य प्रहिताः प्रचेतसा सरोषहुङ्कारपराङ्मुखीकृताः ॥**
**प्रहर्तुरेवोरगराजरज्जवो जवेन कण्ठं सभयाः प्रपेदिरे ॥ ५६ ॥**

**रणेष्विति ॥** तस्य रावणस्य युद्धेषु प्रचेतसा वरुणेन उरगराजरज्जवो नागपाशाः क्षिप्ताः सत्यः प्रहर्तुरेव वरुणस्यैव जवेन वेगेन कण्ठं गलं प्रपेदिरे प्राप्ताः । वरुणमेव बबन्धुरित्यर्थः । भये कारणमाह—कथंभूताः सत्यः सरोषहुङ्कारपराङ्मुखीकृताः सरोषो यो हुङ्कारो हुमितिशब्दस्तेन पराङ्मुखीकृताः प्रतिनिवर्तिता अतः सभयाः ॥ ५६ ॥

रणेष्विति ॥ किञ्च रणेषु प्रचेतसा वरुणेन प्रहिताः प्रयुक्ता उरगराजा महासर्पास्ते रज्जव इव उरगराजरज्जवः । नागपाशा इत्यर्थः । तस्य रावणस्य सरोषहुङ्कारेण पराङ्मुखीकृता व्यावर्तिताः अत एव सभयाः सत्यः जवेन वेगेन प्रहर्तुः प्रयोक्तुः प्रचेतस एव कण्ठं प्रपेदिरे प्राप्ताः । अत्र परहिंसाप्रयुक्तस्यायुधस्य वैपरीत्येन स्वकण्ठग्रहणादनर्थोत्पत्तिरूपो विषमालङ्कारः । 'विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्य वा वा भवेत्' इति लक्षणात् ॥ ५६ ॥

**परेतभर्तुर्महिषोऽमुना धनुर्विधातुमुत्खातविषाणमण्डलः ॥**
**हृतेऽपि भारे महतस्त्रपाभरादुवाह दुःखेन भृशानतं शिरः ॥ ५७ ॥**

**परेतुभर्तुरिति** ॥ परेतभर्तुः प्रेतपतेर्यमस्य सम्बन्धी महिषो वाहनं दुःखेन कृच्छ्रेण शिर उवाह दध्रे, यतो भृशानतमत्यर्थमधोगतम् । कदाचिद्भाराक्रान्तं तत्स्यादित्याह-भारे हृतेऽपि । कथमपनीतभारमित्याह—अमुना रावणेन उत्खातविषाणमण्डलः उद्धृतवलयाकारशृङ्गः, किमर्थं धनुर्विधातुं कोदण्डं कर्तुम् । तर्हि कथमानतमित्याह—महतो लज्जाभरात् । यद्यपि अलघीयान् विषाणभारोऽपास्तस्तथापि तदपासनाद् दुःसहो व्रीडाभार आरोपितः । तथापि तद्वशात् भृशानतं शिरः कथमप्युवाह । जानीत(?)कथमिदानीमेतन्न पततीत्यर्थः । अत्र च त्रपाभरादिवोत्प्रेक्षा बोद्धव्या । यो ह्यपमानितः सोऽवश्यमेव परिभूतत्वात् लज्जयाऽधोमुखो भवति । एतेन चत्वारो लोकपालास्तेनोपद्रुता इत्युक्तं भवति । भृञो भरः, भृणातेर्भारः ॥ ९७ ॥

परेतभर्तुरिति ॥ अमुना रावणेन धनुः शार्ङ्गं विधातुं निर्मातुमुत्खातमुत्पाटितं विषाणयोः शृङ्गयोर्मण्डलं वलयं यस्य सः परेतभर्तुर्यमस्य महिषः । वाहनभूत इति भावः । भारे विषाणरूपे । भृञो घञ् । हृतेऽपि महतस्त्रपैव भरस्तस्मात् । ततोऽपि दुर्भरादिति भावः । भृधातोः क्रैयादिकात् 'ऋदोरप्' इत्यप्प्रत्ययः । भृशमत्यर्थमानतं नम्रं शिरो दुःखेनोवाह वहति स्म । 'असंयोगाल्लिट् कित्' इति कित्त्वात् 'वचिस्वपि—' इत्यादिना सम्प्रसारणम् । हृतेऽपि भारे नतमिति विरोधः । तदनुप्राणिता चेयमवनतिहेतुत्वसाधर्म्यात्त्रपाभरत्वोत्प्रेक्षा ॥ ५७ ॥

**स्पृशन्सशङ्कः समये शुचावपि स्थितः कराग्रैरसमग्रपातिभिः ॥**
**अघर्मघर्मोदकबिन्दुमौक्तिकैरलञ्चकाराऽस्य वधूरहस्करः ॥ ५८ ॥**

**स्पृशन्निति** । अस्य रावणस्य वधूर्भार्याः अहस्करो दिवाकरोऽलञ्चकार अभूषयत । कैः अघर्मं शीतलं यत् घर्मोदकं स्वेदवारि तस्य ये बिन्दवः कणास्त एव मौक्तिकानि कुटुम्बास्तैः । एतेन एतावन्मात्रं रविस्तपति येन परं स्वेदोदबिन्दव उत्पद्यन्ते इत्युक्तं भवति । कदाचित्तुषारकालः स्यात् तन्न चित्रमित्याह—शुचावपि समये आषाढमासेऽपि स्थितः, ग्रीष्मकालेऽपीत्यर्थः । कीदृशोऽहस्करः असमग्रपातिभिरसकलपतितैः कराग्रैः मयूखपर्यन्तैः स्पृशन् आमृशन्, यतः-सशङ्कः । तीक्ष्णातपे सति रावणाद्भयमाशङ्कते । अन्योऽपि शुचावपि समये शुद्धेऽपि आचारे स्थितो निशान्ते नरपतिवधूर्मौक्तिकैरलङ्कुर्वन् असमग्रपातिभिः कराग्रैः स्पृशति सशङ्कश्च ईश्वरभयात् । न हि सेर्ष्या गुणिनमगुणिनं वा विचारयन्ति । मुक्तानां समूहो मौक्तिकम्, स्वार्थे वा विनयादिभ्यष्ठक् । अहस्कर इत्यह्नः रः विसर्गः 'अतः कृकमिकंसकुम्भे'त्यादिना सकारः ॥ ९८ ॥

स्पृशन्निति ॥ अहः करोतीत्यहस्करः सूर्यः । 'दिवाविभानिशा—' इत्यादिना टप्रत्ययः । कस्कादित्वात्सत्वम् । शुचौ समये ग्रीष्मकाले अनुपहते आचारे च स्थितोऽपि ।

'शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोरपि ।
ग्रीष्मे हुतवहेऽपि स्यात्—'

इति विश्वः । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । असमग्रपातिभिः । सङ्कुचितवृत्तिभिरित्यर्थः । कराणामंशूनां हस्तानां चाग्रैः । 'बलिहस्तांशवः कराः' इत्यमरः । सशङ्कः स्पृशन् । अविश्वासभयादिति भावः । अघर्मा अनुष्णा घर्मोदकबिन्दवः । 'मन्थौदन—' इत्यादिना विकल्पादुदकशब्दस्योदादेशाभावः । तैरेव मौक्तिकैरस्य वधूरलञ्चकार । ग्रीष्मे तद्भयान्नासह्यं तपतीत्यर्थः । अत्र प्रस्तुतसूर्यविशेषणमात्रसाम्यादप्रस्तुतनृपसाधकप्रतीतेः समासोक्तिरलङ्कारः ॥ ५८ ॥

कलासमग्रेण गृहानमुञ्चता मनस्विनीरुत्कयितुं पटीयसा ॥
विलासिनस्तस्य वितन्वता रतिं न नर्मसाचिव्यमकारि नेन्दुना ॥५९॥

कलासमग्रेणेति ॥ तस्य विलासिनः शृङ्गारिणः इन्दुना चन्द्रेण नर्मसाचिव्यं क्रीडासचिवत्वं न न अकारि, अपि तु कृतम् । पीठमर्दविटविदूषकास्त्रयो नायकस्य क्रीडासहाया उक्ताः । अत्र तु पीठमर्दक एव विवक्षितस्तस्यैवोक्तगुणयोगात् । कीदृशेन्दुना कलासमग्रेण अन्यूनेन । अखण्डमण्डलेनेत्यर्थः । तथा गृहानमुञ्चता सदैव तत्र वसता, तथा मनस्विनीर्मानिनीः उत्कयितुमुन्मनीकर्तुं पटीयसा चतुरेण । चन्द्रोदये हि मानः शैथिल्यमुपैति । अत एव रतिं वितन्वता रावणस्य प्रीतिमुत्पादयता । एतेन सर्वाभिः कलाभिः सर्वदा चन्द्र इत्युक्तं भवति । यो हि नर्मसचिवः स एवंविध एव भवति। कलाभिर्गेयवाद्यादिभिः समग्रः सर्वकलाभिज्ञ इत्यर्थः। गृहे च नायकस्य नित्यसंनिहितः कुपितकामिनीप्रसादनोपायचतुरश्च। अत एव विलासिरतिजनकः। उत्कान् करोति उत्कयति। विलसितुंशीलो विलासी । उक्तं च—

सेवाभिज्ञः कलादक्षः शुचिर्विश्रम्भरतः सदा ।
स्यान्नर्मसचिवस्तस्य कुपितस्त्रीप्रसादकः ॥ ॥ ५९ ॥

कलासमग्रेणेति ॥ कलाभिः षोडशांशैः शिल्पविद्याभिश्च समग्रेण सम्पूर्णेन । 'काले शिल्पे वित्तवृद्धौ चन्द्रांशे कलने कला' इति वैजयन्ती । गृहानमुञ्चता सदा तद्गृहेष्वेव वसता । दण्डभयात्सेवाधर्मत्वाच्चेति भावः । मनस्विनीर्मानिनीरुत्का उत्सुकाः कर्तुम् उत्कयितुम् । 'उत्क उन्मनाः' इति निपातनादुत्कशब्दात् 'तत्करोति–' इति ण्यन्तात्तुमुन् । पटीयसा । मानभेदचतुरेणेत्यर्थः । कुतः—रतिं वितन्वता चन्द्रिकाभिश्चतुरोक्तिभिश्च रागं वर्धयता इन्दुना विलासिनो विलसनशीलस्य । 'वौ कषलस–' इत्यादिना घिनुण्प्रत्ययः । तस्य रावणस्य नर्मसाचिव्यं क्रीडासम्बन्ध्यधिकारित्वे सचेष्टत्वम् । 'लीला क्रीडा च नर्म च' इत्यमरः । नाकारीति न । किन्त्वकार्येवेत्यर्थः । अनौचित्यात्प्राप्तनर्मसाचिव्यनिषेधनिवारणार्थं नञ्द्वयम् । 'सम्भाव्यनिषेधनिवर्तने नञ्द्वयम्' इति वामनः । अत्रेन्दोः प्रकृतस्याप्रकृतेन नर्मसचिवेन श्लेषः॥५९॥

विदग्धलीलोचितदन्तपत्रिकाचिकीर्षया(१) नूनमनेन मानिना ॥
न जातु वैनायकमेकमुद्धृतं विषाणमद्यापि पुनः प्ररोहति ॥ ६० ॥

विदग्धेति ॥ इह विनायकस्य गणपतेर्दंष्ट्रा दन्तो दैवैः केनचित् कारणान्तरेणोत्खातोऽद्यापि न जायते । अयं तु कविर्नारदमुखेनोत्प्रेक्षां चक्रे—वैनायकमेकं विषाणं दन्तो नूनं निश्चितमनेन रावणेन मानिना साहङ्कारेण न त्वन्त्येनोत्पाटितं सत् अद्यापि जातु कदाचिदपि पुनर्न प्ररोहति न जायते । पुनरुत्खननभयात् समूलोद्धरणाद्वेति भावः । किमर्थमनेनोत्खातमित्याह—कया विदग्धा अग्राम्या याऽसौ लीला वेषः, अथ वा विदग्धानां नागरिकाणां लीला विलासस्तत्र उचिता योग्या दन्तपत्रिका दन्तपत्रलता कर्णाभरणविशेषो वा तस्याश्चिकीर्षया विधातुमिच्छया । शोभनो दन्तः क्व विद्यते येन दन्तपत्रिकां करोमीति चिन्तयित्वा तेन नूनमस्य समूलं विषाणमुत्खातमित्यर्थः ॥ ६० ॥

विदग्धेति ॥ मानिनाऽहङ्कारिणा अनेन रावणेन विदग्धलीलाः । चतुरविलासिन्य इत्यर्थः । तासामुचिताश्च ता दन्तपत्रिकाश्च कर्णभूषणानि । 'विलासिनीविभ्रमदन्तपत्रिका' इति साधीयान् पाठः । अन्यथा विप्रकृष्टार्थप्रतीतिकत्वेन कष्टाख्यार्थदोषापत्तेः । 'कष्टं तदर्थावगमो दूरायत्तो भवेत्' इति लक्षणात् । विलासिनीनां या विभ्रमदन्तपत्रिका विभ्रमार्थानि यानि दन्तमयपत्राणि । विभ्रमदन्तशब्दयोः षष्ठीसमासपर्यवसानात्तादर्थ्यलाभः । तासां विधित्सया विधातुमिच्छया । विपूर्वाद्दधातेः 'सनि मीमा–' इत्यादिना अच इस् ।

(१) विधित्सया ।

'सः सि' इति तकारः । 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । ततः 'स्त्रियाम्' इत्यनुवृत्तौ 'अप्रत्ययात्' इत्यकारप्रत्यये टाप् । नूनं निश्चितं जातु कदाचिदपि । 'कदाचिज्जातु' इत्यमरः । उद्धृतमुत्पाटितं विनायकस्य गणेशस्येदं वैनायकमेकं विषाणं दन्तः । 'विषाणं पशुशृङ्गे स्यात्क्रीडाद्विरददन्तयोः' इति विश्वः । अद्यापि पुनर्न प्ररोहति न प्रादुर्भवति । प्रपूर्वात् 'रुह प्रादुर्भावे' इत्यस्माल्लट् । किमन्यदकार्यमस्येति भावः । एतदन्यथा कथं गजाननस्यैकदन्तत्वमुत्प्रेक्ष्यते नूनमिति ॥ ६० ॥

**निशान्तनारीपरिधानधूननस्फुटागसाऽप्यूरुषु लोलचक्षुषः ॥**
**प्रियेण तस्यानपराधबाधिताः प्रभञ्जनेना(१)नुचकम्पिरे सुराः ॥ ६१ ॥**

**निशान्तेति ॥ प्रभञ्जनेन वायुना सुरा देवा अनुचकम्पिरे अनुकम्पिता आश्वासिताः दयया स्पृष्टाः । किंभूताः यतोऽपराधाभावेन बाधिताः रावणेन अपराधरहितपीडिताः । वायुना तु स्फुटागसा प्रकटापराधेनाऽपि तस्य रावणस्य प्रियेण वल्लभेन । परिभूतश्च अपरिभूतेन सब्रह्मचारिणाऽवश्यमेवानुकम्प्यता दृश्यते । केचित्त्वनुकम्पयांचक्रिरे इति ण्यर्थमाहुः । कीदृशेन वायुनेति सापराधत्वमाह—निशान्तनार्यः शुद्धान्तमहिलास्तासां परिधानधूननेन वासश्चालनेन स्फुटं प्रकटमागोऽपराधो यस्य तेन । कथं तर्हि तस्य प्रिय-इत्याह--ऊरुषु लोलानि दर्शनलम्पटानि चक्षूंषि यस्येति रावणविशेषणम् । यद्यसौ महिषीणां वासांसि न धुनुयात्तत् कथं हाटकशिलासदृक्पीवरोरुदर्शनं तस्य घटते । अत एव च तस्य प्रियः । तदेतेन तत्प्रभुत्वं ख्याप्यते–ये सापराधास्ते न बाधिता निरागसस्तु पीडिताइति । निशान्तग्रहणेनात्र अपराधवत्त्वं सूच्यते । निशान्तनार्यो नतु यत्रतत्रस्थाः । केचित्तु राज्यवसानं निशान्तमाहुः ॥ ६१ ॥**

निशान्तेति ॥ निशान्तं गृहम् । 'निशान्तं गृहशान्तयोः' इति विश्वः । तत्र या नार्यः । शुद्धान्तस्त्रिय-इत्यर्थः । तासां परिधानान्यन्तरीयाणि । 'अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके' इत्यमरः । तेषां धूननं चालनम् । धूञो ण्यन्ताल्ल्युट् । 'धूञ्प्रीञोर्नुग्वक्तव्य' इति नुक् । तेन स्फुटागसा व्यक्तापराधेनापि । अन्तःपुरद्रोहस्य महापराधत्वादिति भावः । ऊरुषु तासां सक्थिषु लोलचक्षुषः सतृष्णदृष्टेः । 'सक्थि क्लीबे पुमानूरुः' इति, 'लोलश्चलसतृष्णयोः' इति चामरः । अत एव रावणस्य प्रियेण प्रमोदास्पदभूतेन । अङ्गीकृता म्लानिर्न दोषायेति न्यायादिति भावः । प्रकम्पनेन वायुना अनपराधेऽपराधाभावेऽपि बाधिताः । राजपुरुषैरिति शेषः । सुरा अनुचकम्पिरे । स्वयमुपायेनान्तः प्रावेश्यानपराधबाधानिवेदनेन मोचयता वायुनाऽनुकम्पिता इत्यर्थः । एकस्य वैदग्ध्याद्बहवो जीवन्तीति भावः ॥ ६१ ॥

**तिरस्कृतस्तस्य जनाभिभाविना मुहुर्महिम्ना महसां महीयसाम् ॥**
**बभार बाष्पैर्द्विगुणीकृतं तनुस्तनूनपाद्धूमवितानमाधिजैः ॥ ६२ ॥**

**तिरस्कृत इति ॥ तनूनपादग्निर्धूमवितानं धूमपुञ्जं बभार दध्रे, कीदृशम् आधिजैः शोकोत्थैर्मनःपीडितोत्पन्नैर्बाष्पैरश्रुभिर्द्विगुणीकृतं घनीकृतं घनत्वमापादितम् । जलेन हि बहुलतरो धूमो भवति । अत एव तनुरल्पोऽपि । कीदृशोऽग्निरिति शोककारणमाह–तस्य रावणस्य महसां तेजसां महिम्ना माहात्म्येन मुहुः शश्वत् तिरस्कृतः, किंभूतः किंभूतानां महसां महीयसां प्रचुराणामुदग्रप्रभावाणां, किंभूतेन महिम्ना जनाभिभाविना लोकपराभवकारकेण । अग्निर्हि नित्यमेवाभिमानी तस्मात्तीक्ष्णस्तेजस्वी नास्त्यन्यः । यदाऽनेन तेजसा निःप्रभावीकृतः तदा शोकाद्रोदिति । अत एव तनुः । यः किल नरः परिभूतः सोऽवश्यमेव धूयमानो रोदिति दुर्बलश्च स्यात् । अतिशयेन महान् महीयान् ॥ ६२ ॥**

---

( १ ) प्रकम्पनेना० ।

तिरस्कृत इति ॥ किञ्च तस्य रावणस्य जनाभिभाविना लोकातिरस्कारिणा महीयसामतिमहता महसा तेजसा महिम्ना महत्त्वेन । 'पृथ्वादिभ्य इमनिज्वा' इतीमनिच् । मुहुस्तिरस्कृतः अत एव तनुः कृशः । तनुं न पातयति जाठररूपेण शरीरं धारयतीति तनूनपादग्निरिति स्वामी । 'नभ्राट्–' इत्यादिसूत्रेण निपातनान्नञो नलोपाभावः । आधिजैर्दुःखोत्थैर्बाष्पैः निःश्वासोष्मभिः । 'बाष्पो नेत्रजलोष्मणोः' 'पुंस्याधिर्मानसी व्यथा' इति विश्वामरौ । द्वौ गुणावावृत्ती यस्य स द्विगुणः । ततश्च्विः । द्विगुणीकृतं द्विरावृत्तम् । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती । धूमवितानं धूममण्डलं बभार । अग्निरपि तत्सन्निधौ निस्तेजस्को धूमायमान आस्त इत्यर्थः । धूमद्वैगुण्यासम्बन्धे सम्बन्धाभिधानादतिशयोक्तिः ॥ ६२ ॥

**(१)तदीयमातङ्गघटाविघट्टितैः कटस्थलप्रोषितदानवारिभिः ॥**
**गृहीतदिक्कैरपुनर्निवर्तिभिश्चिराय याथार्थ्यमलम्भि दिग्गजैः ॥ ६३ ॥**

तदीयेति ॥ दिग्गजैराशाद्विरदैश्चिराय चिरेण कल्पान्तं यावत् याथार्थ्यमन्वर्थत्वमलम्भि सार्थकत्वं लब्धं, किंविधैः गृहीतदिक्कैः आश्रितदिग्भिः। अत एव सार्थकं नाम बभूव । पुनः कीदृशैः तदीयमातङ्गघटाविघट्टितैः रावणीयकुञ्जरपंक्तिप्रेरितैः भग्नैः, अपरं किंभूतैः कटस्थलाद् गण्डतलान्नष्टमदजलैः, प्रोषितं व्यपगतं दानं बाहुल्याद्वारीव दानं वारि । अन्यत्किंभूतैः अपुनर्निवर्तिभिः नव्याघुटितैः भयाद्दिक्षु एव स्थितैः। अत एव दिग्गज इति नाम्नः सार्थकत्वमासीत् । पुनर्निवर्तन्तेऽभीक्ष्णमिति पुनर्निवर्तिनस्ततो नञ्समासः । अर्थेऽनुगता यथार्था इत्यर्थपदेन विग्रहः । तद्भावो याथार्थ्यम् ॥ ६३ ॥

तदीयेति ॥ तदीयमातङ्गानां घटाभिर्व्यूहैः विघट्टितैरभिहतैः । 'गजानां घटना घटा' इत्यमरः । अत एव कटस्थलेभ्यः प्रोषितान्यपगतानि दानवारीणि येषां तैः । गृहीताः पलाय्य संश्रिता दिशा येस्तैर्गृहीतदिक्कैः । 'शेषाद्विभाषा' इति कप् । अपुनर्निवर्तिभिर्भयात्तत्रैव स्थितैर्दिग्गजैः चिराय याथार्थ्यं दिक्षु स्थिता गजा दिग्गजा इत्यनुगतार्थनामकत्वमलम्भि लब्धम् । लभेर्ण्यन्तात्कर्मणि लुङ् । 'विभाषा चिण्णमुलोः' इति विकल्पान्नुमागमः ॥ ६३ ॥

**परस्य मर्माविधमुज्झतां निजं द्विजिह्वतादोषमजिह्मगामिभिः ॥**
**तमिद्धमाराधयितुं सकर्णकैः कुलैर्न भेजे फणिनां भुजङ्गता ॥ ६४ ॥**

परस्येति ॥ फणिनां कुलैः सर्पाणां समूहैः तं रावणमाराधयितुं भुजङ्गता न भेजे सर्पधर्मो नाश्रितः । कीदृशं तमिद्धमुग्रप्रतापं प्रचण्डरूपं किंभूतैः कुलैः सकर्णकैः उपदेशग्रहणावहितैः सावधानैः सेवाकुशलैः । भुजङ्गधर्माभावं दर्शयति–किं कुर्वतां फणिनां निजं स्वाभाविकं द्विजिह्वतादोषं दशनात्मकमुज्झतां त्यजताम् । द्विजिह्वताया दोषो द्विजिह्वतादोषः । कथंविधं तं दोषं परस्य दष्टस्य मर्माविधमरुन्तुदं पीडाजनकं, किंभूतैः कुलैः अजिह्मगामिभिः नित्यमेव तत्रस्थैः निषिद्धकुटिलगामित्वैः । गमनं ह्यत्र प्राधान्येन निषिध्यते, तस्मिंश्च निषिद्धे कुटिलगामित्वमेव निषिद्धं भवति । अथ वा अकुसृतिव्यवहारैस्तथा सकर्णकैर्विदग्धैरुपदेशग्रहणावहितैरित्यर्थः । अत एव सर्पत्वं न भक्तम् । चक्षुःश्रवसो ह्येतद्विलक्षणा भवन्ति । अथ चोक्तिः–अन्योऽपि यः किल सकर्णकः प्राज्ञः स इद्धं राजानं तोषयितुं भुजङ्गतां विटतां सहेलत्वं न सेवते, परस्य च मर्मस्पृशं द्विजिह्वतामेव दोषं पैशुन्यं त्यजति, अथ जिह्मत्वं च न याति । मर्माणि विध्यतीति मर्मावित् 'नहिवृतिवृषी'ति दीर्घः ॥ ६४ ॥

---

( १ ) मल्लिनाथीयव्याख्यायां ६३–६४ श्लोकयोः ६५–६६ श्लोकयोश्च पौर्वापर्यविपर्ययः ।

परस्येति । किञ्च इद्धं दीप्तम् उग्रमित्यर्थः । इन्धी दीप्तौ कर्तरि क्तः । तं राक्षसमाराधयितुं सेवितुं परस्य स्वेतरस्य मर्माणि हृदयादिजीवस्थानानि कुलाचारव्रतानि च विध्यति भिनत्तीति मर्मावित् । विध्यतेः क्विप् 'ग्रहिज्या-' इति सम्प्रसारणम् । 'नहिवृति-' इत्यादिना पूर्वस्य दीर्घः । तं मर्माविधं निजं स्वीयं द्विजिह्वतायां सर्पत्वे यो दोषो दृष्टिविषत्वादिस्तम् । अन्यत्र द्विजिह्वता पिशुनता । 'द्विजिह्वौ सर्पसूचकौ' इत्यमरः । सैव दोषस्तमुज्झतां त्यजतां फणिनां सम्बन्धिभिरजिह्मगामिभिः करचरणादिमद्भिग्रहधारित्वादृजुगातिभिस्तैः । अकपटचारिभिश्च । तथा कर्णाभ्यां सह वर्तन्त इति सकर्णकास्तैः । चक्षुःश्रवस्त्वं विहाय आविष्कृतकर्णैरित्यर्थः । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'शेषाद्विभाषा' इति कप् । अन्यत्र कर्णयति सर्वं शृणोतीति कर्णको नियन्ता । कर्णयतेर्ण्वुल् । ततः पूर्ववत्समासे सकर्णकैः । सनियामकैरित्यर्थः । फणिनां सर्पाणां कुलैर्वर्गैर्भुजङ्गता सर्पता विटत्वं च । 'भुजङ्गो विटसर्पयोः' इति हलायुधः । न भेजे त्यक्ता । भुजैर्गच्छन्तीति भुजङ्गाः । गमेः सुपि खच् स च डिद्वा वाच्यः । तस्मिन्नियन्तरि खले खलत्वमपि सर्पैः सर्पत्वमपि विहाय वेषभावक्रियाभिः सौम्यत्वं श्रितमित्यर्थः । अत्र प्रस्तुतसर्पविशेषणसाम्यादप्रस्तुतखलव्यवहारप्रतीतेः समासोक्तिः ॥ ६४ ॥

**तपेन वर्षाः शरदा हिमागमो वसन्तलक्ष्म्या शिशिरः समेत्य च ॥**
**प्रसूनक्लृप्तं (१)ददतः सदर्तवः पुरेऽस्य वास्तव्यकुटुम्बितां ययुः ॥६५॥**

**तपेनेति ॥ ऋतवो वसन्ताद्याः अस्य रावणस्य पुरे नगरे सदा वास्तव्यकुटुम्बितां ययुः । दधुः पाठे बभुः । वसन्तीति वास्तव्याः वसेस्तव्यत् । ते च कुटुम्बिनश्च तद्भावं दधुः कुटुम्बित्वं बिभ्रतो नित्यमूषुरित्यर्थः । किं कुर्वतः प्रसूनक्लृप्तं ददतः प्रसूनं पुष्पफलं तदेव क्लृप्तं भाटकं ददतो ददानाः । कुटुम्बिधर्ममाहुः । किं कृत्वा तपेन ग्रीष्मेण पुंसा वर्षाः स्त्रियः समेत्य मिलित्वा, तथा शरदा नार्या सह हिमागमो हेमन्तो भर्ता मिलित्वा, तथा वसन्तलक्ष्म्या सह शिशिरः समेत्य । एतेन कुटुम्बिधर्म उक्तः । कुटुम्बिनो हि सकुटुम्बाः परावसथे वसन्तो भूपतये क्लृप्तं गृहभाटकं ददति । कुटुम्बदाराः षड्ऋतवः स्वचिह्नान्विता अजस्रं तत्र संनिहिता इति श्लोकार्थः । प्रसूयत इति प्रसूनम् 'उदितश्चे'ति निष्ठानत्वम् ॥ ६५ ॥**

तपेनेति । सदा नित्यं न तु यथाकालं प्रसूनक्लृप्तिं कुसुमसम्पत्तिम् । 'प्रसूनं कुसुमं सुमम्' इत्यमरः । दधतो धारयन्तः ऋतवो वर्षाः प्रावृट् तपेन ग्रीष्मेण । 'उष्ण ऊष्मागमस्तपः' इति, 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत्स्त्रियाम्' इति चामरः । तथा हिमागमो हेमन्तः शरदा, तथा शिशिरो वसन्तलक्ष्म्या च समेत्य मिथुनीभावेन मिलित्वा अस्य रावणस्य पुरे वसन्तीति वास्तव्याः वस्तारः । 'वसेस्तव्यत्कर्तरि णिच्च' इति तव्यत्प्रत्ययः । ते च कुटुम्बिनश्च तेषां भावं तत्ताम् । प्रतिवासित्वमित्यर्थः । ययुः । समेत्य ययुरिति समुदायसमुदायिनोरभेदविवक्षया समानकर्तृत्वम् । अत्र पुरे युगपत्सर्वर्तुसम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपातिशयोक्तिः ॥ ६५ ॥

**अभीक्ष्णमुष्णैरपि तस्य सोष्मणः सुरेन्द्रबन्दीश्वसितानिलैर्यथा ॥**
**सचन्दनाम्भःकणकोमलैस्तथा वपुर्जलार्द्रापवनैर्न निर्ववौ ॥ ६६ ॥**

**अभीक्ष्णमिति ॥ तस्य यातुधानस्य वपुः शरीरं यथा येन प्रकारेण सुरेन्द्रबन्दीश्वसितानिलैः सुराधिपगृहिणीनिःश्वासपवनैर्निर्ववौ निर्वृतिं भेजे, तथा न जलार्द्रापवनैः । सजलं वासो जलार्द्रा जलार्द्रायाः पवना जलार्द्रापवनाः तैः । श्रीखण्डाम्बुयुतं वस्त्रं जलार्द्रेत्यभिधीयते । हृता हठाद्धारी बन्दी भण्यते । बाहुल्येन कविभिः स्त्रीलिङ्गनिपातः कथितः ।**

---

( १ ) क्लृप्तिं दधतः ।

कदाचिद्वदनमारुताः शीतला भविष्यन्ति । किंभूतैः अभीक्ष्णमतिशयेन उष्णैरपि । दुःखितस्य हि निःश्वासा अत्यर्थं तप्ता भवन्ति । तर्हि पद्ममारुताः उष्णा भवेयुः । कथंभूतैः सचन्दनाम्भःकणकोमलैः सचन्दना ये अम्भःकणा जलबिन्दवः तैः कोमलैः मृदुभिर्मनोज्ञैः । तर्हि कथमेष विपर्ययः, कथंभूतस्य सोष्मणः सदर्पस्य बलोष्मणा ध्मातस्य । मानिनश्चैतदेवाधिकं सुखं यत्तु नार्यो बद्धा रुदन्ति । न तु पराभिभूतस्य विषयोपभोगः । निर्पूर्वो वातिरुपशमे वर्तते ॥६६॥

अभीक्ष्णमिति ॥ ऊष्मणा स्मरज्वरेण सहितः सोष्मा तस्य सोष्मणस्तस्य रावणस्य वपुरभीक्ष्णं भृशमुष्णैरपि । शोकादिति भावः । सुरेन्द्रस्य बन्द्यः स्त्रियः तासां श्वसितानिलैर्निःश्वासमारुतैर्यथा निर्ववौ निर्वृतम् । निर्वाणे निर्वृतौ मोक्षे' इति वैजयन्ती । तथा सचन्दनाम्भःकणाः चन्दनोदकबिन्दुसहिताः ते च ते कोमला मृदुलाश्च तैर्जलार्द्राणां जलोक्षिततालवृन्तानां पवनैर्न निर्ववौ ।

'धवित्रं तालवृन्तं स्यादुत्क्षेपव्यजनं च तत् ।
जलेनार्द्रं जलार्द्रा स्यात्—'

इति वैजयन्ती । अत्र सन्ततस्योष्णोपचारान्निर्वृतिरिति कारणविरुद्धकार्योत्पत्तिरूपो विषमालङ्कारः ॥६६॥

अन्यच्च कीदृशोऽसावित्याह—

**अमानवं जातमजं कुले मनोः प्रभाविनं भाविनमन्तमात्मनः ॥**
**मुमोच जानन्नपि जानकीं न यः सदाभिमानैकधना हि मानिनः ॥६७॥**

अमानवमिति ॥ यो रावणः अजं विष्णुं मनोः कुले जातं कार्यार्थं सूर्यवंशे रामरूपेण अवतीर्णं जानन्नपि जानकीं न मुमोच सीतां न तत्याज, कथंभूतम् अमानवममनुष्यं देवरूपिणं तथा अजम् । विरुद्धं चैतत्–यो हि जातः स कथमजो भवेत् , यश्च मनुवंशे समुत्पन्नः स कथममानवः । तथा प्रभाविनं शक्तमत एव आत्मनः अन्तमवसानकारकं भाविनं भविष्यन्तम् । यदि सः अजमात्मनोऽन्तं भाविनमवसानकारकं भविष्यन्तमज्ञासीत् विष्णुरयं मद्वधार्थमेव भूमावुत्पन्नः इत्यमंस्त, तर्हि कुतो न मुमोच इत्याह—हीति हेतौ, यतो हेतोः मानिनोऽभिमानवन्तः सदा अभिमानैकधनाः, अभिमान एव एकं धनं येषां ते तथा । ते हि मृत्यावपि प्राप्ते मानं न त्यजन्तीत्यर्थः ॥ ६७ ॥

स चायमासन्नविनाशस्तुभ्यमपि दुग्ध्वा पुनस्त्वयैव हत इति युग्मेनाह—

अमानवमिति ।। मनोरयं मानवः । 'तस्येदम्' इत्यण्प्रत्यये पर्यवसानाज्जातावेकवचनम् । अन्यथा मनोर्जातमित्येव स्यात् । अमानवममानुषम् । न जायत इत्यजम् । 'अन्येष्वपि दृश्यते' इति डप्रत्ययः । तथापि मनोः कुले जातं रामस्वरूपेणोत्पन्नमिति विरोधः । स चाभासत्वादलङ्कार इत्याह-प्रभाविनामिति । महानुभावे तस्मिंश्च कश्चिद्विरोध इति भावः । 'आभाक्ष्ण्ये णिनिः' इति णिनिः । इनिर्वा मत्वर्थीयः । भवन्तामिति शेषः । आत्मनः स्वस्यान्तम् । अन्तं करोतीत्यन्तम् । अन्तशब्दात् 'तत्करोति—' इति ण्यन्तात्पचाद्यच् । भाविनं भविष्यन्तम् । भविष्यति गम्यादयः । जानन्नपि यो रावणः जनकस्यापत्यं स्त्री जानकी सीता तां न मुमोच नामुञ्चदित्यन्वयः । जानतोऽप्यमोचने कारणमाह -मानिनः सदा प्राणात्ययेऽप्यभिमानएवैकं मुख्यं धनं येषां ते । प्राणात्ययेऽपि न मानं मुञ्चन्तीत्यर्थः । कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः ॥६७॥

**स्मरत्यदो दाशरथिर्भवन्भवानमुं वनान्ताद्वनितापहारिणम् ॥**
**पयोधिमाविद्ध(१)चलज्जलाविलं विलङ्घ्य लङ्कां निकषा हनिष्यति ६८**

स्मरतीति ॥ हे कृष्ण ! भवान् अमुं रावणं लङ्कां निकषा लङ्कायाः समीपे हनिष्यति अवधीत्, अदः स्मरति एतदभिजानाति । किं कुर्वन् दाशरथिः दशरथस्यापत्यं रामनामा भवन्

(१) ०माबद्ध० ।

सन् किं कृत्वा पयोधिं विलङ्घ्य समुद्रमुत्तीर्य । काका प्रश्नमाह—कीदृशममुं वनान्तात् दण्डकारण्यसमीपात् वनितापहारिणं सीताचोरं, कीदृशं पयोधिमाबिद्धचलज्जलाविलम् आविद्धं पर्वतन्यासोत्क्षुभितम् अत एव चलत् यत्तोयम् तेन आविलं कलुषम् इति भङ्ग्या सेतुं स्मरयति । निकषासमयाहाधिक्अन्तरान्तरेणयुक्ते द्वितीया । हनिष्यतो'त्यभिज्ञावचने लृडि'ति भूते लट । यच्छब्दयोजना चात्र न कार्या 'न यद्री'ति लृण्निषेधप्रसङ्गात् । भवन्निति 'अत्वसन्ते'त्यादिना दीर्घः कथं न स्यात् । (?) तथा च—

शत्रदन्तक्विबन्तानां क्वसन्तानां तथैव च ।
तृजन्तानां तु लिङ्गानां धातुत्वं नोपहन्यते ॥ ॥ ६८ ॥

स्मरतीति ॥ भातीति भवान् । भातेर्डवतुः । दशरथस्यापत्यं पुमान्दाशरथिः । 'अत इञ्' इतीञ्प्रत्ययः । भवन् रामः सन्नित्यर्थः । भवतेर्लटः शत्रादेशः । वनान्ताद्दण्डकारण्याद्वनितापहारिणं सीतापहर्तारममुं रावणम् । आबद्धः प्रक्षिप्ताद्रिभिर्बद्धसेतुः अत एव चलन्ति जलानि यस्य स च । अत एव आविलश्च तमाबद्धचलज्जलाविलं पयोधिं विलङ्घ्य लङ्कां निकषा लङ्कासमीपे । 'समयानिकषाशब्दौ सामीप्ये त्वव्यये मतौ' इति हलायुधः । 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' इति द्वितीया । हनिष्यति अवधीत् । 'अभिज्ञावचने लट्' इति भूते लट् । अदो हननं भवान्स्मरतीति काकुः । प्रत्यभिजानासि किमित्यर्थः । शेषं प्रथम ॥ ६८ ॥

अथोपपत्तिं छलनापरोऽपरामवाप्य शैलूष इवैष भूमिकाम् ॥
तिरोहितात्मा शिशुपालसंज्ञया प्रतीयते सम्प्रति सोऽप्यसः परैः ॥ ६९ ॥

अथेति ॥ अथानन्तरमनन्ते सरति काले एष रावणोऽपरामुपपत्तिं जन्मान्तरमवाप्य रूपान्तरं प्राप्य सम्प्रति इदानीं सोऽपि सन् परैः असः प्रतीयते लोकैरन्यो ज्ञायते । कथंभूतः शिशुपालसंज्ञया तिरोहितात्मा संवृतदेहः स्थगितात्मस्वरूपः, यतः किंविधः छलनापरः वञ्चनाप्रधानः । भूयोऽपि रावण एव शिशुपालरूपेणावतीर्णः लोकान् बाधितुमित्यर्थः । क इव कामवाप्य स एवान्यो बुध्यत इत्यत आह—क इव शैलूष इव नट इव । यथा शैलूषो नटोऽपरां भूमिकां पात्रान्तरत्वं प्राप्य सोऽपि सन् लोकैः असः प्रतीयते । भीमसेनभूमिकातो ह्यर्जुनभूमिकां प्राप्तोऽपि नटोऽन्य एव इति भ्रान्तिर्भवति । सोऽपि छलनापरः चमत्कृतिजनकः सामाजिकानाम् । अपरां भूमिकां पात्रान्तरत्वं प्राप्य तिरोहित आत्मा येनेति कार्यसिद्धये योजनीयम् ॥ ६९ ॥

अथेति ॥ अथ राक्षसदेहत्यागानन्तरं सम्प्रति छलनापरः परप्रतारणापरः एष रावणः शैलूषो नटः तस्य भूमिका रूपान्तरमिव ।

'शैलूषो नटभिल्लयोः ।
भूमिका रचनायां स्यान्मूर्त्यन्तरपरिग्रहे' ॥

इति विश्वः । अपरामुपपत्तिम् । जन्मान्तरमित्यर्थः । अवाप्य शिशुपालसंज्ञया तिरोहितात्मा तिरोहितस्वरूपः सन् सोऽपि रावण एव सम्प्रति परैरितरैः स न भवतीत्यसः तस्मादन्य एव । 'नञ्' इति नञ्समासः । अत एव 'एतत्तदोः सुलोपो—' इत्यादिना न सुलोपः । प्रतीयते ज्ञायते इति प्रतिपूर्वादिणः कर्मणि लट् । यथैक एव शैलूषो रूपान्तरमास्थाय तद्देशभाषादिभिरन्य एव प्रतीयते तद्वदयमपि मानुषदेहपरिग्रहादन्य इव भाति । दौर्जन्यं तु तदेवेत्यवश्यं संहार्य इति भावः ॥ ६९ ॥

स बाल आसीद्वपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभस्त्रिलोचनः ॥
युवा कराक्रान्तमहीभृदुच्चकैरसंशयं सम्प्रति तेजसा रविः ॥ ७० ॥

स बाल इति ॥ हे कृष्ण ! स शिशुपालः बालः सन् वपुषा शरीरेण चतुर्भुज आसीत्

चतुःप्रकोष्ठः सञ्जातः । अपरं मुखेन त्रिलोचनः त्रिभिर्नयनैः युक्तः किंभूतः पूर्णेन्दुनिभः शशितुल्यः अखण्डशशितुल्यवदनः । अन्यत् सम्प्रति साम्प्रतं युवा तरुणः सन् असंशयं निश्चितं तेजसा रविरासीत् सूर्यतुल्यो बभूव, कथंभूतः उच्चकैरतिशयेन कराक्रान्तमहीभृत् करेण दण्डेनाक्रान्ताः पराभूता महीभृतो येन सः । अथ वा उच्चकैः उन्नतः, करैर्बलिभिः आत्मवशं नीता महीभृतो राजानो येन । रविः कीदृशः कराक्रान्तमहीभृत् करैः किरणसमूहैः आक्रान्ताः सन्तापिता महीभृतः पर्वता येन सः । उक्तं च—

शिशुपालः पुरा जातस्त्रिनेत्रश्च चतुर्भुजः ।
पितरौ वाथ तं दृष्ट्वा हातुं वै चक्रतुर्मतिम् ॥
उच्चचाराथ नभसि वागेवमशरीरिणी ।
नैष त्याज्यो महाराज ! श्रीमान् वीरो भविष्यति ॥
स चास्य वधको भावी यं दृष्ट्वा निपतिष्यतः ।
बाहू नेत्रं च सहसा तद् बुद्ध्वा पाल्यतामयम् ॥

अत्र च अर्थान्तरप्रतीत्या तस्य सर्वदेवमयत्वमुक्तम् । चतुर्भुजो नारायण इन्दुः शशी त्रिलोचनः शिवो रविरादित्यः । रविरपि करैः महीभृतः आक्रमते अधितिष्ठतीत्यवयवश्लेषोऽयम् ॥ ७० ॥

अथैतदौर्जन्यं त्रिभिराविष्करोति—

**स बाल इति** ॥ स शिशुपालो बालः सन् वपुषा चतुर्भुजो भुजचतुष्टयवानासीत् । विष्णुरिति ध्वनिः । मुखेन पूर्णेन्दुनिभस्तत्तुल्यः त्रिलोचनो लोचनत्रयवानासीत् । त्र्यम्बक इति ध्वनिः । बालविशेषणात्सम्प्रति तत्सर्वमन्तर्हितमिति भावः । सम्प्रति तु युवा सन् करेण बलिना आक्रान्तमहीभृदाधिष्ठितराजकः सन् अन्यत्रांशुव्याप्तशैलः । 'बलिहस्तांशवः कराः' इत्यमरः । उच्चकैस्तेजसा रविरसंशयम् । संशयो नास्तीत्यर्थः । अर्थाभावेऽव्ययीभावः । वपुषा मुखेन चेति 'येनाङ्गविकारः' इति तृतीया, हानिवदाधिक्यस्यापि विकारत्वात् । तथा च वामनः—'हानिवदाधिक्यमप्यङ्गविकारः' इति । तेजसेति 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । कराक्रान्तेत्यादिना श्लेषानुप्राणितेयमुत्प्रेक्षा । रविरसंशयमिति तस्य पूर्णेन्दुनिभ इत्युपमया संसृष्टिः । हरिहरादितुल्यमहिमत्वादतिदुर्धर्षः स इति भावः ॥ ७० ॥

**स्वयं विधाता सुरदैत्यरक्षसामनुग्रहापग्रहयो(१)र्यदृच्छया ॥**
**दशाननादीनभिराद्धदेवतावितीर्णवीर्यातिशयान्हसत्यसौ ॥ ७१ ॥**

**स्वयमिति** ॥ असौ शिशुपालो दशाननादीन् रावणहिरण्याक्षप्रभृतीन् सुरशत्रून् हसति अशक्तान् मन्यते । यतः कारणात् सुरदैत्यरक्षसां देवासुरनैरृतानां यदृच्छया स्वेच्छया अनुग्रहापग्रहयोः प्रसादापमानयोः स्वयं विधाता आत्मनैव कर्ता । देवादीनां प्रभुरित्यर्थः । किंभूतान् दशाननादीन् अभिराद्धाभिस्तपसा तोषिताभिः देवताभिर्दत्तविक्रमसम्पदः इति । महीयानेष विशेषः-यो हि देवानां प्रभुर्यस्य तु ते ईश्वरास्तयोः कीदृगन्तरम् । देव एव देवता । वीरेषु साधु वीर्यं यदि वा वीरस्य भावः कर्म वा वीर्यम् । निपातनाद्वृद्धेरभावः ॥ ७१ ॥

**स्वयमिति** ॥ यदृच्छया स्वेच्छया स्वयं सामर्थ्येन । न तु देवताप्रसादबलादिति भावः । सुरदैत्यरक्षसां देवदानवयातुधानानामनुग्रहावग्रहयोः प्रसादनिग्रहयोर्विधाता कर्ता असौ शिशुपालः अभिराद्धाभिराराधिताभि-

---

(१) ०वग्रहयो० ।

दैवताभिरीश्वरादिभिर्वितीर्णो दत्तो वीर्यातिशयः प्रभावातिशयो येषां तान्दशाननादीन्हसति । अनन्यप्रसादलब्धैश्वर्ये मयि कथं याचकैस्तुल्यतेति गर्वाद्धसतीत्यर्थः ॥ ७१ ॥

**बलावलेपादधुनापि पूर्ववत्प्रबाध्यते तेन जगज्जिगीषुणा ॥**
**सतीव योषित्प्रकृतिः सुनिश्चिता(१) पुमांसमन्वेति भवान्तरेष्वपि ॥७२॥**

बलेति ॥ तेन जिगीषुणा मानिना शिशुपालेन पूर्ववत् हिरण्यकशिपुरावणवत् अधुनापि साम्प्रतमपि जगद्विश्वं प्रबाध्यते त्रिभुवनं दूयते । कस्मात् बलावलेपात् बलं शक्तिः सम्पत्तिः अवलेपः परेष्ववज्ञा, बलं च अवलेपश्च बलावलेपं तस्मात् । युक्तोऽयमर्थः । यतः कारणात् सुनिश्चिता प्रकृतिः सदभ्यस्तः स्वभावो भवान्तरेष्वपि जन्मान्तरेष्वपि पुमांसमन्वेति अनुयाति पुरुषं प्राप्नोति । अन्यथा कथं पूर्ववदिदानीमपि जगद्बाधते इति भावः । का इव सती योषिदिव । यथा सती योषित् भर्तृशरणा नारी भवान्तरेष्वपि पुमांसमात्मीयभर्तारं लभते ॥ ७२ ॥

बलेति ॥ जिगीषुणा नित्योत्साहवतेत्यर्थः । तेन शिशुपालेन बलावलेपाद्बलगर्वादधुनापि पूर्ववत्पूर्वजन्मनीव जगत्प्रबाध्यते । तथा हि—सती पतिव्रता योषिदिव सुनिश्चलाऽतिस्थिरा प्रकृतिः स्वभावो भवान्तरेषु जन्मान्तरेष्वपि पुमांसमभ्येति ।

'पतिं या नाभिचरति मनोवाक्कायसंयता ।
सा भर्तुर्लोकमाप्नोति सद्भिः साध्वीति चोच्यते' ॥

इति मनुः । उपमोपमेयपुरस्कृतोऽर्थान्तरन्यासः ॥ ७२ ॥

**तदेनमुल्लङ्घितशासनं विधेर्विधेहि कीनाशनिकेतनातिथिम् ॥**
**शुभेतराचारविपक्त्रिमापदो निपादनीया हि सतामसाधवः ॥ ७३ ॥**

तदेनमिति ॥ तदिति वाक्योपसंहारे । किं बहुनोक्तेन हे कृष्ण! एनं चैद्यं कीनाशनिकेतनातिथिं यमगृहगामिनं विधेहि कुरु । व्यापादयेत्यर्थः । कथंभूतं विधेर्दैवस्योल्लङ्घितशासनं प्रजाबाधनात् उल्लङ्घितं त्यक्तं शासनमाज्ञा मर्यादा येन सः तम् । दैवमगणयन्तमित्यर्थः । अथ यद्यसौ त्यक्तमर्यादः एतावता मम किं, येनाहं व्यापादयामीत्याह—हि यस्मात् सतां सद्भिः असाधवो व्यापादनीया हन्तव्या एव दुष्टा निग्रहणीयाः । कृत्यानां कर्तरि षष्ठी । यतः कीदृशा असन्तः शुभेतराचारविपक्त्रिमापदः शुभादितरः पापो य- आचारो व्यवहारस्तेन विपाकेन निर्वृत्ता आपदो येषाम् । अशुभेन विपाकं गतमरणा य- इत्यर्थः । यतस्तेषामयं पापोपभोगकालः, सद्भिश्च पापा निग्रहणीयाः । तेन भवांस्तं मारयेदित्यर्थः । एनमिति द्वितीयादौ एनादेशः । तमेवमिति पाठान्तरे तं चैद्यमेवं पूर्वोक्तेन प्रकारेण विधेस्त्यक्ताज्ञमिति योज्यम् । विधेहि इति एत्वमभ्यासलोपश्च । विपाकेन निर्वृत्ता विपक्त्रिमाः । सर्गो हि वंशस्थवृत्तेन जगतीच्छन्दोभेदेन ॥ ७३ ॥

तदेनमिति ॥ तत्तस्माद्विधेर्विधातुरप्युल्लङ्घितशासनम् । स्वयं विधातेत्याद्युक्तरीत्यातिक्रान्तदैवशासनमित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । एनं शिशुपालं कीनाशनिकेतनातिथिं कीनाशो यमस्तस्य निकेतनं गृहं तत्रातिथिं प्राधुणिकं विधेहि कुरु । यमगृहं प्रेषयेत्यर्थः । 'कीनाशः कर्षके क्षुद्रे कृतान्तोपांशुघातिनोः' इति विश्वः । न चैतन्नाघुणिकहस्तेन सर्पमारणं, भवादृशामवश्यकर्तव्यत्वादित्याह—शुभेतराचारेण दुराचारेण विपक्त्रिमाः परिपाकेन निर्वृत्ताः कालपरिपाकेन प्राप्ता आपदो येषां ते तथोक्ताः । 'ड्वितः क्त्रिः' इति पचेः क्त्रिप्रत्ययः । 'क्त्रेर्मम्नित्यम्' इति तद्धितो मप्प्रत्ययः । असाधवो दुष्टाः सतां भवादृशां

---

( १ ) सुनिश्चला पुमांसमभ्येति ।

जगन्नियन्तॄणां निपातनीयाः वध्या हि। न च नैर्घृण्यदोषः। स्वदोषेणैव तेषां विनाशे निमित्तमात्रत्वादस्माकमित्याशयेन शुभेतराचारेत्यादिविशेषणोक्तिः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ ७३॥

एवं सति यत्फलं सम्पद्यते तदिन्द्रस्याशीर्द्वारेण वाक्यसमासावाह—

**हृदयमरिवधोदयादवाप्त(१)द्रढिम दधातु पुनः पुरन्दरस्य॥**
**घनपुलकपुलोमजाकुचाग्रद्रुतपरिरम्भनिपीडनक्षमत्वम्॥ ७४॥**

**हृदयमिति॥** हे विष्णो! पुरन्दरस्य इन्द्रस्य हृदयं वक्षः पुनर्भूयो घनपुलकपुलोमजाकुचाग्रद्रुतपरिरम्भनिपीडनक्षमत्वं दधातु प्रियतमसंस्पर्शवशात् घनपुलकौ संहतरोमाञ्चौ अतिकण्टकितौ यौ पुलोमजाकुचौ इन्द्राणीस्तनौ तयोरग्रं प्रान्तः तेन द्रुतं शीघ्रं रभसात् यः परिरम्भः आलिङ्गनं तेन निपीडनं समुपमर्दः तत्क्षमत्वं तत्सहत्वं पीडनसामर्थ्यं दधातु धारयतु। कीदृशं वक्षः अरिवधोदयात् अवाप्तद्रढिम अरेः शिशुपालस्य वधेन य उदयोऽभ्युदय उत्पत्तिर्वा तस्मात् प्राप्तदृढत्वम्। अथ वा अरिवधोदयात् उपोढद्रढिम अरेश्चैद्यस्य वधेन य उदय उत्पत्तिस्तेन वा उभयोः अभ्युदयः स एव वा उदयस्तेनोपोढद्रढिम प्राप्तदार्ढ्यम्। अद्य हि चैद्येनोपद्रुतत्वात् हृदयं मृदु, तस्मिन् हते निःशल्यत्वात् प्राप्तदार्ढ्यम्। दृढस्य भावः द्रढिमा 'वर्णदृढादिभ्यः ष्यञ्चे'ति इमनिच्। अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा। अत्र मुनेः शृङ्गारवर्णनमनुचितिमिति केचिद् दोषमुद्भावयन्ति, तमन्ये परिहरन्ति। स्वयं करणं यतेरनुचितं न तु वर्णनं दोषायेति॥ ७४॥

किञ्चैवं दुष्टनिग्रहे शिष्टानुग्रहः स्यादित्याह—

**हृदयमिति॥** अरिवधोदयाद्रिपुनाशलाभात् उदूढद्राढिम नैश्चिन्त्याद् धृतदार्ढ्यम्। स्वस्थमिति यावत्। पृथ्वादित्वाद् दृढशब्दादिमनिच्प्रत्ययः। 'र ऋतो हलादेर्लघोः' इति ऋकारस्य रेफादेशः। पुरः शत्रुपुराणि दारयतीति पुरन्दर इन्द्रः। 'पूःसर्वयोर्दारिसहोः' इति खच्प्रत्ययः। 'खचि ह्रस्वः' इत्युपधाह्रस्वः। 'वाचंयमपुरन्दरौ च' इति निपातनाददन्तत्वं मुमागमश्च। तस्य हृदयं पुनर्भूयोऽपि। पूर्ववदेवेति भावः। घनपुलकयोः सान्द्ररोमाञ्चयोः, पुलोम्नो जाता पुलोमजा शची तस्याः कुचाग्रयोर्द्रुतपरिरम्भः औत्सुक्याच्छीघ्रालिङ्गनं तत्र यत्पीडनं तस्य क्षमत्वं सहत्वं दधातु। प्राक्चित्तविक्षेपात्स्यक्तभोगेन शक्रेण सम्प्रति त्वत्प्रसादान्निष्कण्टकं स्वकीयं राज्यं भुज्यतामित्यर्थः। अत्र दार्ढ्यपदार्थस्योदूढद्रढिमेति विशेषणगत्या निपीडनक्षमत्वं प्रति हेतुत्वोक्त्या पदार्थहेतुकं काव्यलिङ्गम्। हृदयनिपीडनक्षमत्वसबन्धेऽप्यसम्बन्धोक्त्या सम्बन्धेऽसम्बन्धरूपातिशयोक्तिरित्यर्थालङ्कारो वृत्त्यनुप्रासश्च तैरन्योन्यं संसृज्यते। पुष्पिताग्रा वृत्तम्। 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात्॥ ७४॥

**ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाचं नभ-**
**स्तस्मिन्नुत्पतिते पुरः सुरमुनाविन्दोः श्रियं बिभ्रति॥**
**शत्रूणां नितरां(२) विनाशपिशुनः कर्तुर्मतिं(३) संयति**
**व्योम्नीव भ्रुकुटिच्छलेन वदने केतुश्चकारास्पदम्॥ ७५॥**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये कृष्णनारद-
सम्भाषणं नाम प्रथमः सर्गः॥ १॥

---

(१) ०दुदूढ०। (२) शत्रूणामनिशम्। (३) क्रुद्धस्य चैद्यं प्राति।

**ओमिति** ॥ अथानन्तरं शार्ङ्गिणो नारायणस्य वदने मुखे केतुरुत्पात आस्पदं चकार प्रतिष्ठां बबन्ध । उत्प्रेक्षा । केन भ्रुकुटिच्छलेन भ्रूभङ्गव्याजेन कीदृशस्य शार्ङ्गिणः ओमिति उक्तवतः एव । ॐ इति अङ्गीकारे । चैद्यवधं प्रति कृतप्रतिज्ञस्येत्यर्थः । यतः कीदृशस्य संयति संग्रामविषये मतिं कर्तुः इच्छां विधातुः । कदा केतुरुदियायेत्याह— तस्मिन् सुरमुनौ नारदे पुरोऽग्रतः इति पूर्वोक्तां वाणीं व्याहृत्य अभिधाय नभ आकाशमुत्पतिते सति किंभूते सुरमुनौ इन्दोः श्रियं बिभ्रति चन्द्रतुल्ये, किंविधः केतुः शत्रूणां रिपूणां नितरामत्यर्थं विनाशपिशुनः अभावसूचकः । नारदे गते सति हरेः शिशुपालं जिघांसोः कोपवशान्मुखे या भ्रुकुटिरुत्पादिता सा ज्ञायते चैद्यस्य विनाशसूचकः उत्पात- इत्यर्थः । किंभूते मुखे व्योम्नीव कृष्णत्वादाकाशोपमे । अन्यस्यापि केनचिद्वधे विधित्सितेऽवश्यमेवाकाशे केतुरभावसूचकः स्थितिं करोतीति । बिभ्रतीति सप्तमी । कर्तुरिति तृन्नन्तः । शार्दूलविक्रीडितं वृत्तम्-म्सौ ज्सौ तौ गुरुकं च सूर्यतुरगैः शार्दूलविक्रीडितम् । सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् । अत्रोत्प्रेक्षोपमासङ्करोऽलङ्कारः । श्रीशब्दरम्यः काव्यं वेदः । प्रतिसर्गान्तं श्लोके श्रीशब्दप्रयोगः इति भद्रम् ।

इत्यानन्ददेवायनिवल्लभविरचितायां शिशुपालवधसारटीकायां सन्देहविषौषधि-
व्याख्यायां नारदागमनं नाम प्रथमः सर्गः ।

**ओमिति** ॥ तस्मिन्सुरमुनौ नारदे इति इत्थंभूतां वाचं व्याहृत्योक्त्वा नभ उत्पतिते समुद्गते पुरोऽग्रे इन्दोः श्रियं बिभ्रति सति । अथ मुनिवाक्यानन्तरमोमित्युक्तवतस्तथास्त्वित्यङ्गीकृतवतः । 'ओम्प्रश्नेऽङ्गीकृतौ रोषे' इति विश्वः । चेदीनां जनपदानामयं चैद्यः शिशुपालः । 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इति ञ्यङ्प्रत्ययः । प्रति क्रुद्धस्य शार्ङ्गिणो वदने व्योम्नीवानिशं सर्वदा । अव्यभिचारेणेत्यर्थः । शत्रूणां विनाशस्य पिशुनसूचकः । 'चन्द्रमभ्युत्थितः केतुः क्षितीशानां विनाशकृत्' इति शास्त्रादिति भावः । केतुरुत्पातविशेषः । 'केतुर्द्युतौ पताकायां ग्रहोत्पातारिलक्ष्मसु' इत्यमरः । भ्रुकुटिच्छलेन भ्रूभङ्गव्याजेनास्पदं प्रतिष्ठां स्थितिं चकार । 'आस्पदं प्रतिष्ठायाम्' इति निपातनात्सुडागमः । अनेन वाक्यार्थभूतस्य वीररससहकारिणो रौद्रस्य स्थायी क्रोधः स्वानुभावेन भ्रुकुट्या कारणभूतोऽनुमेय इत्युक्तम् । तथा तदविनाभूतस्य स्थायी प्रयत्नोपनेय उत्साहोऽप्युत्पन्न एवेत्यनुसन्धेयम् । इन्दोः श्रियं बिभ्रतीत्यत्र मुनेरिन्दुश्रियोऽयोगात्तत्सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धरूपो निदर्शनालङ्कारः । वदने व्योम्नीवेत्युपमा । भ्रुकुटिच्छलेन केतुरिति छलादिशब्देनासत्यत्वप्रतिपादनरूपोऽपह्नवः । तत्र शत्रुविनाशसूचकं त्वपेक्षितेन्दुसान्निध्यव्योमावस्थानसम्पादकत्वं निदर्शनोपमयोरपह्नवोपकारसत्त्वादङ्गाङ्गिभावेन सङ्करः । चमत्कारकारितया मङ्गलाचरणरूपतया च सर्गान्त्यश्लोकेषु श्रीशब्दप्रयोगः । यथाह भगवान् भाष्यकारः—'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते, वीरपुरुषाण्यायुष्मत्पुरुषाणि च भवन्ति, अध्येतारश्च प्रवक्तारो भवन्ति' इति । शार्दूलविक्रीडितं वृत्तम् । 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात् । सर्गान्तत्वाद्वृत्तभेदः । यथाह दण्डी—

'सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसन्धिभिः ।
सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जकम्' ॥ इति ॥ ७५ ॥

अथ कविः कविकाव्यवर्णनीयाख्यानपूर्वकसर्गसमाप्तिं कथयति—इतीति । इतिशब्दः समाप्तौ । माघकृताविति कविनामकथनम् । महाकाव्ये इति महच्छब्देन लक्षणसम्पत्तिः सूचिता । शिशुपालवध इति काव्यनामकथनम् । प्रथमः सर्ग इति । समाप्त इतिशेषः । एवमुत्तरत्रापि द्रष्टव्यम् ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवध-
काव्यव्याख्याने सर्वङ्कषाख्ये प्रथमः सर्गः ॥ १ ॥



# द्वितीयः सर्गः ।

अधुना मन्त्रविचारः । स चानेककार्यसंनिपाते भवत्यतः कार्यद्वयमत्र सर्गे मन्त्रावतारणार्थमाह—

**यियक्षमाणेनाहूतः पार्थेनाऽथ मुरं(१)द्विषन् ॥**
**अभिचैद्यं प्रतिष्ठासुरासीत्कार्यद्वयाकुलः ॥ १ ॥**

**यियक्षमाणेनेति** ॥ अथ अनन्तरं मुरं द्विषन् मुरारिः कार्यद्वयाकुलः आसीत् । तदेव कृत्यद्वयमाह—किंविशिष्टः यियक्षमाणेन यज्ञं कर्तुमिच्छता पार्थेन युधिष्ठिरेण आहूतः निमन्त्रितः, अपरम् अभिचैद्यं प्रतिष्ठासुः शिशुपालमभिलक्ष्यीकृत्य विग्रहार्थं सेनया अभियातुमिच्छुः अभिषिषेणयिषुः । कार्यद्वये आपतिते यदि पार्थं पूर्वं व्रजति ततश्चैद्य उपेक्षितो भवति, अथैनमास्कन्दति ततः पाण्डवो रुष्यति । अत एव कार्यद्वयाकुलः आसीत् । किमिदं करोमि किमिदमिति सन्दिग्धमना बभूवेत्यर्थः । यष्टुमिच्छति यियक्षते । आहूत इति ह्वेञ् धातुः आङ्पूर्वः, सम्प्रसारणम् । पृथाया अयं पार्थः 'तस्येद'मित्यण् । द्विषन्निति 'द्विषोऽमित्रे' इति शतृ, तद्योगे च मुरमिति 'न लोकाव्ययनिष्ठाखलर्थतृना'मिति कर्मणि षष्ठीनिषेधः । चेदीनां जनपदानां राजा चैद्यः वृद्धेत्कोसालाजादाञ्ञ्यङ्, तस्य राजन्यपत्यवत् । लक्षणेऽभिः कर्मप्रवचनीयसंज्ञः । प्रस्थातुमिच्छुः प्रतिष्ठासुः 'सनाशंसे'ति उः, इण्कोः 'आदेशप्रत्यययो'रिति षत्वम् । 'अस्तिसिचोऽपृक्त'इति लङीडागमः । कार्यमिति ऋहलोर्ण्यत् । सर्गेऽस्मिन् अनुष्टुप्छन्दः ॥ १ ॥

अस्मिन्सर्गे मन्त्रवर्णनाय बीजं वपति—

**यियक्षमाणेनेति** ॥ अथेन्द्रसन्देशश्रवणानन्तरं यियक्षमाणेन यष्टुमिच्छता । यजतेः सन्नन्ताल्लटः शानच् । पार्थेन पृथापुत्रेण युधिष्ठिरेण । 'तस्येदम्' इत्यण् । अन्यथा स्त्रीभ्यो ढक् स्यात् । ततः पार्थेय-इति स्यात् । आहूत आकारितः । ह्वयतेः कर्मणि क्ते सम्प्रसारणदीर्घौ । तथा अभिचैद्यं शिशुपालं प्रति । 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः । 'अभिरभागे' इति कर्मप्रवचनीयत्वे तद्योगे द्वितीया वा । प्रतिष्ठासुः प्रस्थातुमिच्छुः । तिष्ठतेः सन्नन्तादुप्रत्ययः । मुरं द्विषन्मुरारिः । 'द्विषोऽमित्रे' इति शतृप्रत्यये 'न लोका—' इत्यत्र 'द्विषः शतुर्वा' इति वैकल्पिकः षष्ठीप्रतिषेधः । कार्यद्वयेन सुरकार्यसुहृत्कार्यरूपेणाकुलो विप्रतिषेधादावश्यकत्वाच्च द्वयोः सन्दिहान आसीत् । अतो मन्त्रस्यायमवसर इति भावः ॥ १ ॥

**गुरुकाव्यानुगां बिभ्रच्चान्द्रीमभिनभः श्रियम् ॥**
**सार्धमुद्धवसीरिभ्यामथाऽसावासदत्सदः(२) ॥ २ ॥**

**गुरुकाव्येत** ॥ अथ पश्चात् असौ हरिर्निश्चयार्थमुद्धवसीरिभ्यां सार्धं पवनव्याभ्रिहलधराभ्यां सह सदः समासदत् मन्त्रमण्डपं प्राविक्षत् प्रविष्टः । किं कुर्वन् अभिनभः आकाशे चान्द्रीं श्रियं शशिशोभां बिभ्रत् धारयन्, किंभूतां श्रियं गुरुकाव्यानुगां गुरुर्बृहस्पतिः काव्यः शुक्रः तौ अनुगच्छति अनुयातीति गुरुकाव्यानुगा ताम् । जीवशुक्रसंयुतेन शशिना सदृशइत्यर्थः । हरेश्चन्द्र उपमानम्, उद्धवस्य गुरुः, हलिनः काव्यः, मन्त्रावरकस्य नभः । शून्ये हि मन्त्रः कार्यः । अभिनभ इति सप्तम्यर्थे अव्ययीभावः । 'लक्षणेनाभिप्रती आभिमुख्ये' इति वा । आसददिति लुङ्, लदित्त्वादङ् ॥ २ ॥

---

( १ ) द्विषन्मुरम् । ( २ ) व्याख्यान्तरे च श्लोकोऽयं पूर्वोत्तरार्धव्यत्यासेन पठितः ।

एवं मन्त्रबीजसन्देहमुपन्यस्य मन्त्रोचितं देशमाह—

**सार्धमिति** ॥ अथ सन्देहानन्तरमसौ हरिः अभिनभः। पूर्ववदव्ययीभावः। कर्मप्रवचनीयत्वे वा द्वितीया। गुरुकाव्यौ बृहस्पतिशुक्रावनुगावनुयायिनौ यस्यां ताम्। 'गीष्पतिर्धिषणो गुरुः' इति, 'शुक्रो दैत्यगुरुः काव्यः' इति **चामरः**। चन्द्रस्येमां चान्द्रीं श्रियं बिभ्रत्। अत्र श्रीतुल्यां श्रियमिति निदर्शनाभेदः। उद्धवसीरिभ्यां सार्धमुद्धवरामाभ्यां सह सदः सभामासददगमत्। राजसदसः प्रासादत्वादिति भावः। सदेर्लुङि 'पुषादि—'इति च्लेरङादेशः। अत्र मनुः—

'गिरिपृष्ठं समारुह्य प्रसादं वा रहो गतः।
अरण्ये निःशलाके वा मन्त्रयेद्भावभाविनौ' ॥

इति ॥ २ ॥

**जाज्वल्यमाना जगतः शान्तये समुपेयुषी ॥**
**व्यद्योतिष्ट सभावेद्यामसौ नरशिखित्रयी ॥ ३ ॥**

**जाज्वल्यमानेति** ॥ असौ नरशिखित्रयी प्रभावातिशयात् नरा एव शिखिनो वह्नयः तेषां त्रयी त्रिसंख्या असौ नरशिखित्रयी हरिहल्युद्धवाख्या व्यद्योतिष्ट शुशुभे, क्व सभावेद्यां सभैव वेदिः अग्निस्थानं तत्र। किंविधा नरशिखित्रयी जाज्वल्यमाना परैरप्रतिहततेजस्त्वात् देदीप्यमाना, तथा जगतः शान्तये समुपेयुषी त्रिभुवनसंरक्षणार्थं सङ्गतवती मङ्गलार्थं मिलिता। मन्त्रेण च जगद्रक्षा भवति। शिखिनोऽपि त्रयो दक्षिणाग्न्याहवनीयगार्हपत्याख्या वेद्यां जगतः शान्तये जाज्वल्यमानाः सङ्गताः सन्तोऽत्यर्थं द्योतन्ते। व्यद्योतिष्टेति लुङ् अनुदात्तेत्त्वादात्मनेपदं सिच् इडागमः ॥ ३ ॥

**जाज्वल्यमानेति** ॥ जगतः शान्तयेऽनुपद्रवाय समुपेयुषी मिलिता जाज्वल्यमाना भृशं ज्वलन्ती। धातोरेकाचो हलादेः क्रियासमभिहारे यङ्। ततो लटः शानजादेशे टाप्। असौ नराः पुरुषा एव शिखिनोऽग्नयस्तेषां त्रयी। 'द्वित्रिभ्याम्—' इत्यादिना तयस्यायजादेशे कृते 'टिड्ढाणञ्—' इत्यादिना ङीप्। सभा आस्थानी सैव वेदिः। 'वेदि परिष्कृता भूमिः' **इत्यमरः**। तस्यां व्यद्योतिष्ट दीप्यते स्म। 'द्युद्भ्यो लुङि' इति वा तङ्। रूपकालङ्कारः ॥ ३ ॥

**रत्नस्तम्भेषु संक्रान्तप्रतिमास्ते चकाशिरे ॥**
**एकाकिनोऽपि परितः पौरुषेयवृता इव ॥ ४ ॥**

**रत्नेति** ॥ ते त्रयोऽपि चकाशिरे बभुः, कीदृशास्ते रत्नस्तम्भेषु संक्रान्तप्रतिमाः प्रतिबिम्बितशरीराः। अतश्चोपमीयन्ते—एकाकिनोऽप्यन्योन्यापेक्षया असहाया अपि परितः समन्तात् पौरुषेयवृता इव नरवृन्दयुक्ता इव। चकाशिरे इति लिट्। एक एव एकाकी। एकाकिन्शब्दोऽसहायार्थः, बहुत्वाद्बहुवचनम्। यथा—एकादाकिनिच्चासहाये। परित इति 'पर्यभिभ्यां च'ति तसिल्। पुरुषाणां समूहः पौरुषेयं 'पुरुषाद्वधविकारसमूहतेनकृतेष्विति कर्तव्य'मिति ढञ् ॥ ४ ॥

रत्नेति ॥ रत्नानां स्तम्भा इति षष्ठीसमासविशेषे पर्यवसानाद्विकारार्थत्वम्। तेषु संक्रान्तप्रतिमाः संक्रान्तप्रतिबिम्बाः। 'प्रतिमानं प्रतिबिम्बं प्रतिमा—' **इत्यमरः**। ते त्रय एकाकिनोऽसहाया अपि। 'एकादाकिनिच्चासहाये' इत्याकिनिच्प्रत्ययः। परितोऽभितः सर्वतः। पर्यभिभ्यां च इति तसिल्प्रत्ययः। स च सर्वोभयार्थाभ्यामिष्यते। पौरुषेयेण प्रतिबिम्बभूयस्त्वात्पुरुषसमूहेनावृता इवेत्युत्प्रेक्षा। चकाशिरे। सर्वपुरुषाभ्यां णढञौ 'पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यम्' इति समूहे ढञ्प्रत्ययः। एतेन विजनत्वमुक्तम्। यद्यपि—

'निस्तम्भे निर्गवाक्षे च निर्भित्त्यन्तरसंश्रये।
प्रासादाग्रे त्वरण्ये वा मन्त्रयेद्भावभाविनौ' ॥

इति कामन्दकीये मन्त्रभूमेः स्तम्भप्राचुर्यनिषेधो गम्यते, तथापि तस्यापि विजनोपलक्षणत्वाददोष-इति भावः ॥ ४ ॥

**अध्यासामासुरुत्तुङ्गहेमपीठानि यान्यमी ॥**
**तैरूहे केसरिक्रान्तत्रिकूटशिखरोपमा ॥ ५ ॥**

**अध्यासामासुरिति** ॥ अमी त्रयोऽपि यानि उत्तुङ्गहेमपीठानि उच्चकनकासनानि अध्यासामासुः आरूरुहुः उपविष्टाः, तैर्विष्टरैः केसरिक्रान्तत्रिकूटशिखरोपमा सिंहाधिष्ठितसुवेलशृङ्गसादृश्यमूहे । आसनानां त्रिसंख्यत्वात् यथार्थनाम त्रिकूट उपमानम् । अध्यासामासुरिति दयायासश्च । यानीति अधिशीङ्स्थासां कर्म । ऊहे इति कर्मणि वहेर्लकारः॥ ५॥

अध्यासामासुरिति ॥ अमी त्रयो यान्युत्तुङ्गहेमपीठान्यासनानि अध्यासामासुरधितष्ठुः । येषूपविष्टा-इत्यर्थः । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् । 'आस उपवेशने' लिट् । 'दयायासश्च' इत्याम्प्रत्ययः । 'कृञ्चानुप्रयुज्यते लिटि' इत्यस्तेरनुप्रयोगः ।'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' इति कृञ एवेति नियमादस्तेर्नात्मनेपदम् । तैः पीठैः केसरिभिः सिंहैः क्रान्तानां त्रिकूटस्य त्रिकूटाद्रेः शिखराणामुपमा सादृश्यमूहे ऊढा । वहेः कर्मणि लिट् सम्प्रसारणम् । त्रीणि कूटान्यस्येत्यन्वर्थसंज्ञा । 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः । उपमालङ्कारः ॥ ५ ॥

**गुरुद्वयाय गुरुणोरुभयोरथ कार्ययोः ॥**
**हरिर्विप्रतिषेधं तमाचचक्षे विचक्षणः ॥ ६ ॥**

**गुरुद्वयायेति** ॥ अथानन्तरं हरिः श्रीकृष्णः तयोः पूर्वोक्तयोरुभयोः कार्ययोस्तं विप्रतिषेधं विरोधं गुरुद्वयाय गुरुरूपाय हलिने उद्धवाय च आचचक्षे कथयामास । किंभूतयोः कार्ययोः गुरुणोः महतोः अननुष्ठेयत्वात् कर्तुमशक्यत्वात् युगपदनुष्ठातुमशक्यत्वात् । सहाऽनवस्थानलक्षणोऽत्र विरोधः । यत्र बहुकार्याणां मध्यादेकं कार्यं कर्तुं मनसि अनिश्चयो भवति स विप्रतिषेधः । किंभूतो हरिः विचक्षणो विद्वान् आचारज्ञः । प्रष्टव्या हि गुरव-इति पृच्छति, न तु अज्ञानतयेत्यर्थः। अन्योऽपि विचक्षणो वैयाकरणो गुरवे पण्डिताय द्वयोर्विरोधमाचष्टे कथयति । गुरूभयस्मै इति पाठे गुर्वोरुभयं गुरूभयं तस्मै गुरूभयस्मै । क्रियाग्रहणमपि कर्तव्यमिति सम्प्रदानसंज्ञा । सर्वादित्वात् सर्वनामत्वमिष्यते । तत्र तदन्तविधिः, सर्वनाम्नः स्मै । गुरुणोरिति 'इकोऽचि विभक्ता'विति नुम् । आचचक्षे इति 'वा लिटो'ति ख्याञ् विभाषितः । विचक्षणः इति 'अके अने चे'ति प्रतिषेधः ॥ ६ ॥

गुरुद्वयायेति ॥ अथोपवेशनानन्तरं विचष्टे इति विचक्षणो वक्ता । कर्तरि ल्युडिति न्यासकारः । 'असनयोश्च प्रतिषेधो वक्तव्यः' इति चाक्षिङः ख्याञादेशाभावः । हरिर्गुर्वोरुद्धवरामयोः पितृव्यज्येष्ठभ्रात्रोर्द्वयाय । द्वाभ्यामित्यर्थः । गुरुणोर्महतोरुभयोः कार्ययोः पूर्वोक्तयोः तं विप्रतिषेधं विरोधमाचचक्षे आख्यातवान् । तुल्यबलविरोधो विप्रतिषेधः ॥ ६ ॥

**द्योतितान्तःसभैः कुन्दकुड्मलाग्रदतः स्मितैः ॥**
**स्नपितेवाभवत्तस्य शुद्धवर्णा सरस्वती ॥ ७ ॥**

**द्योतितेति** ॥ तस्य हरेः श्रीकृष्णस्य ब्रुवतः सरस्वती वाक् शुद्धवर्णाऽभवत् । शुद्धा दोषरहिता वर्णा अक्षराणि यस्यां सा । किंभूतस्य हरेः कुन्दकुड्मलाग्रदतः कुन्दस्य कुड्मलं कलिका तस्याग्रं प्रान्तस्तदिव शुक्लत्वात्तीक्ष्णत्वाच्च दन्ता यस्य । अग्रान्तेति दत्रादेशः । उत्प्रेक्षते—स्मितैः स्नपितेव उल्बणहसितैः क्षालितेव । महात्मानो हि स्मित-

पूर्वाभिभाषिणः । यत्र वस्तु क्षाल्यते तत् शुद्धवर्णं धवलगुणं भवति । किंविधैः द्योतितान्तःसभैः द्योतिता प्रकाशिता अन्तर्मध्ये सभा यैस्तानि तैः ॥ ७ ॥

द्योतितेति ॥ कुन्दं माघभवः पुष्पविशेषः । 'माघ्यं कुन्दम्' इत्यमरः । कुन्दकुड्मलाग्राणीव दन्ता यस्य तस्य कुन्दकुड्मलाग्रदतः । 'अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च' इत्यग्रान्तपूर्वपदबहुव्रीहेः समासान्तो वैभाषिको दत्रादेशः । तस्य हरेः सरस्वती अन्तःप्रधाना सभा अन्तःसभा । सभाभ्यन्तरमित्यर्थः । सा द्योतिता प्रकाशिता यैस्तैः स्मितैः स्नापितेव क्षालितेव । स्नातेर्ण्यन्तात् क्तः । 'अर्तिह्री—' इत्यादिना पुगागमः । मितां ह्रस्वः । शुद्धवर्णा स्फुटाक्षरत्वात्स्वच्छकान्तिरभवत् । अत्र स्वाभाविकवर्णशुद्धेः स्नानहेतुकत्वमुत्प्रेक्ष्यते । स्मितपूर्वाभिभाषी हरिरिति भावः ॥ ७ ॥

किमुवाच, प्रथमं तावत् गुरूणामग्रे पूर्वाभिभाषितदोषपरिजिहीर्षुरिदमाह—

> **भवद्भिरामवसरप्रदानाय वचांसि नः ॥**
> **पूर्वरङ्गः प्रसङ्गाय नाटकीयस्य वस्तुनः ॥ ८ ॥**

**भवद्भिरामिति** ॥ हे गुरो ! नोऽस्माकं वचांसि वचनानि भवद्भिरामवसरप्रदानाय भवद्वाचां प्रस्तावदानार्थम् । युवां वाचयितुमहं वच्मीत्यर्थः । एतदेव दृष्टान्तेन द्रढयति—यतः कारणात् पूर्वरङ्गः प्रथमनाट्यारम्भः नाटकीयस्य वस्तुनः प्रसङ्गाय प्रस्तावदानाय भवति । आदावेव तु यन्नाट्यं पूर्वरङ्गः स उच्यते । यथा नाटकीयस्यार्थस्यावसरार्थं पूर्वरङ्गः, न तु स एव तत्र साध्यः । पूर्वरङ्गो गेयवाद्यनृत्यान्विता देवस्तुतिः । पूर्वरङ्गः प्रत्याहारमार्जनीगीतिविधिताण्डवयोगब्रह्मयोगाचारप्ररोचनाद्याख्यैरङ्गैर्युतः । तथा सम्प्रेक्षणीयस्यार्थस्यावसरदानार्थः स्यात् । उक्तं च—

> पञ्चसन्धि चतुर्वृत्ति चतुःषष्ट्यङ्गसंयुतम् ।
> षट्त्रिंशल्लक्षणोपेतं नाटकं कवयो विदुः ॥

रज्यतेऽस्मिन् इति रङ्गः । नाटके भवो नाटकीयः वृद्धाच्छः ॥ ८ ॥

कार्यविप्रतिषेधं निवेद्य तत्र स्वमतमाविष्कुर्वन्पण्डितमानित्वं तावत्परिहरति—

**भवद्भिरामिति** ॥ भवद्गिरां युष्मद्वाचामवसरप्रदानाय । प्रसञ्जनायेत्यर्थः । नोऽस्माकं वचांसि सिद्धान्तोन्नयनार्थमुच्यन्ते । न तु सिद्धान्तत्वेनेत्यर्थः । तथा हि—पूर्वं रज्यतेऽस्मिन्निति पूर्वरङ्गः नाट्यशाला, तत्स्थं कर्मापि पूर्वरङ्ग इति **दशरूपके** । अतः पूर्वरङ्गो नाम रङ्गप्रधानाख्यो रङ्गविघ्नशान्तिकारी नान्दीपाठगीतवादित्राद्यनेकाङ्गविशेषो नाट्यादौ कर्तव्यः कर्मविशेषः । तदुक्तं **वसन्तराजीये**—

> 'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
> कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः प्रकीर्तितः' ॥

इति । स पूर्वरङ्गः, नाटके भवं नाटकीयम् । तत्र वर्ण्यमित्यर्थः । वृद्धाच्छः । तस्य 'आयने—'इतीयादेशः । तस्य वस्तुनः प्रवृत्तस्य प्रसङ्गाय प्रसञ्जनाय । प्रवर्तनायेति यावत् । अतः प्रथमवादो न दोषायेति भावः । पूर्वरङ्गः प्रस्तावनेति **रङ्गराजः** । तच्चिन्त्यम् ।

> 'पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते ।
> प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥
> प्रथमं पूर्वरङ्गश्च ततः प्रस्तावनेति च ।
> आरम्भे सर्वनाट्यानामेतत्सामान्यमिष्यते' ॥

इति दशरूपकाद्युक्तभेदाविरोधादिति । अत्र हरिवाक्यपूर्वरङ्गयोः प्रसञ्जकत्वस्वरूपसामान्यस्य वाक्यद्वये शब्दान्तरे पृथङ्निर्देशात्प्रतिवस्तूपमालङ्कारः । तल्लक्षणं तूक्तम् ॥ ८ ॥

इदानीं कार्यद्वयं कथयन्नात्मीयं मतमुपन्यस्यति—

**करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम् ॥**
**विनाऽप्यस्मदलं भूष्णुरिज्यायै तपसः सुतः ॥ ९ ॥**

**करदीकृतेति** ॥ तपसः सुतो धर्मात्मजो युधिष्ठिरः अस्मद्विनापि अस्मानन्तरेणापि इज्यायै अलं भूष्णुः यागाय समर्थो भवति । कथंभूतः भ्रातृभिः भीमार्जुनयमैः करदीकृतभूपालः करदीकृता वशं नीता भूपाला राजानो येन सः, कीदृशैः भ्रातृभिः दिशां जित्वरैः ककुभां जयनशीलैः । तस्मात्तत्र न व्रजामीति भावः । केचित्तु-'इज्यायै अलं समर्थो यतो भूष्णुः साधुर्भवति स भावयुक्त इत्यर्थ' इति व्याचक्षते । जित्वरैरिति सृजीण्नशां क्वरप् । अस्मदिति पञ्चमीबहुवचनम् । भूष्णुरिति ग्लाजिस्थश्च ग्स्नुः । इज्यायै इति व्रजयजोर्भावे क्यप्, नमःस्वस्तिस्वाहेतियोगे चतुर्थी ॥ ९ ॥

सम्प्रति स्वमतमाह—

**करदीकृतेति** ॥ दिशां जित्वरैर्जयनशीलैः । इण्नशजिसर्तिभ्यः क्वरप् । कृद्योगात्कर्मणि षष्ठी । भ्रातृभिर्भीमादिभिर्हेतुभिः करदाः षष्ठभागप्रदाः । 'भागधेयः करो बलिः' इत्यमरः । ततश्च्विः । 'ऊर्यादिच्विडाचश्च' इति गतिसंज्ञायां 'कुगतिप्रादयः' इति नित्यसमासः । अकरदाः करदाः सम्पद्यमानाः कृताः करदीकृता भूपालाः यस्य सः वशीकृतराजमण्डलः तपसः सुतो धर्मपुत्रः । 'तपश्चान्द्रायणादौ स्याद्धर्मे लोकान्तरेऽपि च' इति विश्वः । अस्मद्विना । अस्माभिर्विनापीत्यर्थः । 'पृथग्विनानाना—'इत्यादिना तृतीयाविकल्पात्पञ्चमी । इज्यायै यागाय । यजेर्भावेऽपि क्यप् । 'वचिस्वपि—'इत्यादिना सम्प्रसारणम् । 'नमःस्वस्ति—'इत्यादिना चतुर्थी । अलं समर्थो भूष्णुर्भवनशीलः । 'भूष्णुर्भविष्णुर्भविता' इत्यमरः । 'ग्लाजिस्थश्च ग्स्नुः' इति ग्स्नुप्रत्ययः । 'क्ङिति च' इत्यत्र गकारप्रश्लेषाद् गुणाभावः । तथा च जयादित्यः—तत्रैव गकारोऽपि च तत्त्वभूतो निर्दिश्यते । अतो जैत्रयात्रैव कार्या न यज्ञयात्रेति भावः ॥ ९ ॥

(१)तथा धर्मः । अतश्चैद्य एव यातव्य इत्येतदाह—

**उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ॥**
**समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥ १० ॥**

**उत्तिष्ठमान इति** ॥ तु पुनः पुरुषेण परः शत्रुः उत्तिष्ठमानो वर्धमानो नोपेक्ष्यः न प्रतीक्षितव्यः, किं कुर्वता पथ्यमिच्छता आत्मनो हितमभिलाषुकेण । हि यस्मात् कारणात् शिष्टैः चरकचाणक्यादिभिः पण्डितैः एतौ द्वौ वर्त्स्यन्तौ वर्धिष्यमाणौ समौ आम्नातौ तुल्यौ कथितौ। द्वौ कौ आमयो रोगः स च शत्रुश्च । व्याधिवत् शत्रुर्वृद्धाववर्ज्य इत्यर्थः । एतदुभयं वर्धमानं नोपेक्ष्यम् । उक्तं च भारविणा—अल्पीयसोऽप्यामयतुल्यवृत्तेर्महापकाराय रिपोर्विवृद्धिः । योऽपि पथ्यमिच्छति सोऽपि व्याधिं वर्धमानं नोपेक्षते । उत्तिष्ठमान इति उदोऽनूर्ध्वचेष्टायामात्मनेपदम् । वर्त्स्यन्ताविति 'वृद्भ्यः स्यसनो'रिति आत्मनेपदं विभाषितम्, 'न वृद्भ्यश्चतुर्भ्यः' इतीडभावः । आमयतीत्यामयः अच् । पूर्वस्माद्विशेषात् पार्थपुरगमनं न युक्तम्, अनपेक्ष्यमित्यर्थः ॥ १० ॥

ननु यज्ञान्ते जैत्रयात्रायामुभयानुसरणं स्यात्तत्राह—

**उत्तिष्ठमान इति** ॥ उत्तिष्ठमानो वर्धमानः । 'उदोऽनूर्ध्वकर्मणि' इत्यात्मनेपदम् । परः शत्रुः पथोऽनपेतं पथ्यं हितमारोग्यं चेच्छता । पुंसेति शेषः । नोपेक्ष्यो नौदासीन्येन द्रष्टव्यः । कुतः—हि

---

(१) अत्र वाक्यांशस्त्रुटितः प्रतिभाति ।

यस्माद्वस्त्वर्थं तौ वर्धिष्यमाणौ । 'लटः सद्वा' इति सदादेशे 'वृद्भ्यः स्यसनोः' इति विभाषया परस्मैपदम् । 'न वृद्भ्यश्चतुर्भ्यः' इतीडभावः । आमयो व्याधिः । 'रोगव्याधिगदामयाः' इत्यमरः । सः शत्रुश्च शिष्टैर्नीतिज्ञैः समौ तुल्यवृत्ती आम्नातावाख्यातौ ।

'अल्पीयसोऽप्यरेर्वृद्धिर्महानर्थाय रोगवत् ।
अतस्तस्यानुपेक्ष्यत्वादुभयानुसृतिः कुतः' ॥

इति भावः । उपमालङ्कारः ॥ १० ॥

न तु स्वकार्ये वैरायमाणस्य ममैष यत्न इति दर्शयितुमाह—

**न दूये सात्वतीसूनुर्यन्मह्यमपराध्यति ॥**
**यत्तु दन्दह्यते लोकमतो (१) दुःखाकरोति माम् ॥ ११ ॥**

नेति ॥ सात्वतीसूनुः शिशुपालः यत् मह्यमपराध्यति मयि विषये सापराद्धः, अतोऽहं न दूये न खिद्ये । तु पुनः यदसौ लोकं दन्दह्यते गर्हितं दहति निःकारणमुपतापयति निरागसं लोकं पीडयति, अतो मां दुःखाकरोति पीडयति । प्रातिलोम्येन दुःखयतीत्यर्थः । दूये इति दूङः कर्मकर्तरि लकारः । सत्वतोऽपत्यं स्त्री सात्वती श्रुतश्रवा नाम क्षत्रिया भगवतः कृष्णस्य पितृष्वसा । उत्सादिभ्योऽञ् । तस्याः सूनुः । मह्यमिति 'क्रुधद्रुहे'ति सम्प्रदानत्वम् । गर्हितं दहति दन्दह्यते 'लुपसदचरे'त्यादिना यङ् 'जपजभदहदशभञ्जपशां चे'ति नुक्, ततः कर्तरि लट् । दुखाकरोतीति 'दुःखात्प्रातिलोम्ये'इति डाच्प्रत्ययः ॥ ११ ॥

नन्वेवं स्वार्थपरत्वदोषः स्यादिति चेन्न, लोकानुग्रहार्थत्वादस्याः प्रवृत्तेरित्याशयेनाह—

नेति ॥ सत्वतोऽपत्यं स्त्री सात्वती नाम हरेः पितृष्वसा । उत्सादिभ्योऽञ् । तस्याः सूनुश्चैद्यः । बन्धुरपि खलो न मृष्यत इति भावः । यन्मह्यमपराध्यति दुह्यतीति यावत् । 'क्रुधद्रुह—'इत्यादिना चतुर्थी । तत इति शेषः, यत्तदोर्नित्यसम्बन्धात् । न दूये न परितप्ये । दूङो दैवादिकात्कर्तरि लट् । उत्तमपुरुषैकवचनम् । किन्तु लोकं दन्दह्यते । गर्हितं यथा स्यादेवं दहतीति यावत् । 'लुपसदचरजप—' इत्यादिना गर्हायां यङ् । 'जपजभदहदशभञ्जपशां च' इत्यभ्यासस्य नुगागमः । अदो लोकदहनं मां दुःखाकरोति । दुःखमनुभावयतीत्यर्थः । 'दुःखात्प्रातिलोम्ये' इति डाच्प्रत्ययः । अतश्चैद्य एवाभियातव्यः, पार्थस्तु प्रार्थनयापि पश्चात्समाधेय इत्यर्थः ॥ ११ ॥

अथोपसंहरन्नाह—

**मम तावन्मतमदः (२)श्रूयतामङ्ग ! वामपि ॥**
**ज्ञातसारेऽपि(३) खल्वेकः सन्दिग्धे कार्यवस्तुनि ॥ १२ ॥**

ममेति ॥ अङ्गेति प्रियाह्वाने आमन्त्रणे । हे गुरो ! तावदिति वाक्योपसंहारे । तावन्ममादः एतन्मतम् । अहमभिलषामीत्यर्थः । वामपि युवयोरपि मया मतं श्रूयताम् । इदानीं युवामपि ब्रुवातामित्यर्थः । ननु भवान् निजमेव मतं कस्मान्न करोति किमस्मदीयमतेन, इदानीं स्वभणितं दृष्टान्तेन द्रढयति—खलु यस्मात्कारणात् कार्यवस्तुनि कृत्यशरीरे ज्ञातसारेऽपि अवगतपरमार्थेऽपि एकोऽसहायः सन्दिग्धे संशयं कुरुते । इति क्रियागोपितकोऽयम् । तस्मात्किं कर्तव्यमेतन्न वेति कथ्यताम् । उक्तं च—

सुविमृष्टे स्वयं सम्यक् सुहृद्भिः सुपरीक्षिते ।
नैवारम्भे विपन्नेऽपि वाच्यतां यान्ति सूरयः ॥

---

(१) लोकमदो । (२) ०मिदम् । (३) ज्ञातसारोऽपि ।

कार्यमालोचिताऽपार्यं मतिमद्भिर्विवेचितम् ।
न केवलं हि सम्पत्तौ विपत्तावपि शोभते ॥

कार्यं च तद्वस्तु च कार्यवस्तु ॥ १२ ॥

स्वमतं निगमयन्परमतं शुश्रूषुः पृच्छति—

ममेति । तावत् । भवन्मतश्रवणपर्यन्तमित्यर्थः । मम मतमिदम् । अङ्गेत्यामन्त्रणेऽव्ययम् । 'अथ सम्बोधनार्थकाः । स्युः प्याट् पाडङ्ग हे है भोः' इत्यमरः । वां युवयोः । 'युष्मदस्मदोः षष्ठीचतुर्थी—' इत्यादिना वामादेशः । मतं श्रूयताम् । विधौ लोट् । तदिदं मया श्रोतव्यम् । अन्यथा सन्देहाऽनिवृत्तेरिति भावः । विदुषस्ते कुतः सन्देहस्तत्राह—ज्ञातसारः ज्ञाततत्त्वार्थोऽप्येक एकाकी कार्यवस्तुनि कर्तव्यार्थे सान्दिग्धे संशेते । खलु निश्चये । अतो मयापि सन्दिह्यत इत्यर्थः । दिह उपचये कर्तरि लट् । घत्वधत्वे । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १२ ॥

**यावदर्थपदां वाचमेवमादाय माधवः ॥**
**विरराम महीयांसः प्रकृत्या मितभाषिणः ॥ १३ ॥**

यावदिति ॥ माधवः श्रीकृष्णः विरराम मौनं भेजे, किं कृत्वा एवं पूर्वोक्तप्रकारेण वाचमादाय उक्त्वा । कीदृशां वाचं यावदर्थपदां, यावदर्थो यावदर्थं यावदर्थं पदानि यस्याः सा ताम् । यावदवधारणे । यावदर्थस्तावन्ति पदानि । वाच्यसमपदाम् । छन्दःपूरणार्थमनुपकृतं यस्यां न किञ्चिदुक्तमित्यर्थः । निरर्थकपदरहितामित्यर्थः । अल्पैरक्षरैरेतेन वाच्यमुक्तम् न बहुभिरित्यत्रार्थान्तरमाह—यतः कारणात् महीयांस उत्तमाः प्रकृत्या स्वभावेन मितभाषिणः । निरर्थकं कदाचिदपि न जल्पन्तीत्यर्थः ॥ १३ ॥

यावदिति ॥ माधवो हरिर्यावानर्थो यावदर्थम् । 'यावदवधारणे' इत्यव्ययीभावः । यावदर्थं पदानि यस्यास्ताम् । अभिधेयसंमिताक्षरामित्यर्थः । एवमुक्तप्रकारेण वाचमादाय गृहीत्वा । उक्त्वेत्यर्थः । विरराम तूष्णीमास । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । तथा हि—महीयांसः उत्तमाः प्रकृत्या स्वभावेन मितभाषिणः । भवन्तीति शेषः । वृथालापनिषेधादिति भावः । पूर्ववदलङ्कारः ॥ १३ ॥

अष्टाभिः कुलकम्—

**ततः सपत्नापनयस्मरणानुशयस्फुरा ॥**
**ओष्ठेन रामो रामोष्ठबिम्बचुम्बनचुञ्चुना ॥ १४ ॥**

ततइति ॥ ततो भगवद्वचनान्तरं रामो जगाद बलभद्र उवाच, किंविधो बलभद्रः ओष्ठेन उपलक्षितः । किंभूतेन ओष्ठेन सपत्नापनयस्मरणानुशयस्फुरा सपत्नस्य वैरिणः शिशुपालस्य योऽपनयः अपराधो लोकबाधा तस्य स्मरणमनुध्यानं तेन योऽनुशयः कोपः तेन स्फुरति कम्पते यः सः तेन, चैद्यापराधस्मरणकोपेन कम्पिना । एतेन वीरत्वकथनम् । पुनः किंविशिष्टेन रामोष्ठबिम्बचुम्बनचुञ्चुना रामा कान्ता रेवती तस्या ओष्ठबिम्बे यत् चुम्बनं तेन चुञ्चुर्विदितः प्रसिद्धः प्रतीतो यः तेन । तेन वित्तश्चुञ्चुप्चणपौ, वित्तस्थाने चुञ्चुः क्रियते । ओष्ठो लौहित्यात् बिम्बफलमिव । ओष्ठबिम्बम् 'उपमितं व्याघ्रादिभि'रिति समासः । एतेन विलासित्वकथनम् ॥ १४ ॥

अथाष्टभिः कुलकेन रामं वर्णयंस्तद्वाक्यमवतारयति—

तत इति ॥ ततो रामो जगादेत्युत्तरेणान्वयः । सपत्नो रिपुः । 'रिपौ वैरिसपत्नारि—'इत्यमरः । तस्यापनयोऽपकारः तस्य स्मरणेन योऽनुशयः पश्चात्तापः । 'भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः' इति विश्वः । तेन स्फुरतीत्यनुशयस्फुः तेन स्फुरा । ओष्ठो बिम्बमिवेत्युपमितसमासः । रामाया ओष्ठ-

बिम्बस्य चुम्बनेन वित्तो रामोष्ठबिम्बचुम्बनचुञ्चुः । 'तेन वित्तश्चुञ्चुपूचणपौ' इति चुञ्चुप्रत्ययः । ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम् । तेनौष्ठेनोपलक्षितः । समरसुरतयोः समरस इति भावः । उपमानुप्रासयोः संसृष्टिः ॥ १४ ॥

**विवक्षितामर्थविदस्तत्क्षणं(१) प्रतिसंहृताम् ॥**
**प्रापयन्पवनव्याधेर्गिरमुत्तरपक्षताम् ॥ १५ ॥**

**विवक्षितामिति ॥ किं कुर्वन् पवनव्याधेः उद्धवस्य वाणीमुत्तरपक्षतां प्रापयन् सिद्धान्ततां नयन् । किंभूतां विवक्षिताम् उद्धवेन वक्तुमिष्टां वक्तुमारब्धाम्, अपरं तत्क्षणं प्रतिसंहृतां तथैव निर्वर्तितां, यतः किंभूतस्यार्थविदः प्रवीणस्य । मूर्खः कोपनश्चायमनर्थं करिष्यति, तावच्छृणुमः पश्चाद्वयं वक्ष्याम इति हृदि कृत्वाऽऽस्ते ॥ १५ ॥**

विवक्षितामिति ॥ विवक्षितां वृद्धत्वाभिमानादग्रे वक्तुमिष्टाम् । वचेर्ण्यन्तात्कर्मणि क्तः । तत्क्षणे विवक्षाक्षणे एव । इत्यविलम्बोक्तिः । प्रतिसंहृतां रामानुरोधादुपसंहृताम् अर्थविदः कार्यज्ञस्य अत एव पवनव्याधेरुद्धवस्य गिरमुत्तरपक्षतां सिद्धान्तपक्षतां प्रापयन् । स्वयमसत्पक्षावलम्बित्वादिति भावः । अनेन रामस्य व्यग्रतोक्ता ॥ १५ ॥

**घूर्णयन्मदिरास्वादमदपाटलितद्युती ॥**
**रेवतीदशनो(२)च्छिष्टपरिपूतपुटे दृशौ ॥ १६ ॥**

**घूर्णयन्निति ॥ अपरं किं कुर्वन् जगाद दृशौ घूर्णयन् चक्षुषी भ्रमयन् । किंभूते दृशौ मदिरास्वादमदपाटलितद्युती वारुणीपानेन यो मदः क्षीवता तेन आरक्तीकृतकान्ती, पुनः किंभूते रेवतीदशनोच्छिष्टपरिपूतपुटे रेवत्याः सम्बन्धि यत् दशनोच्छिष्टं दन्तपदं तेन परिपूतौ मनोज्ञौ पवित्रीकृतौ पुटौ कपाटौ ययोः ते, दन्तपदैर्हि नितरां शोभने । उच्छिष्टशब्दः पदपर्यायः ॥ १६ ॥**

घूर्णयन्निति ॥ पुनः । मदिरास्वादेन मद्यपानेन यो मदस्तेन पाटलिता ईषद्रक्तीकृता द्युतिर्ययोस्ते, रेवत्या देव्याः वदने यदुच्छिष्टं मद्यलेपताम्बूलादि । अक्षिचुम्बनसंक्रान्तमिति भावः। तेन परिपूते शुद्धे पुटे ययोस्ते दृशौ घूर्णयन् भ्रामयन्निति मद्यविकारोक्तिः । उच्छिष्टपरिपूते इत्यत्र 'रतिकाले मुखं स्त्रीणां शुद्धमाखेटके शुनाम्' इति स्मरणात् उच्छिष्टस्य पावित्र्यजनकत्वविरोधस्याभासत्वाद्विरोधाभासोऽलङ्कारः । 'आभासत्वे विरोधस्य विरोधाभास उच्यते' इति लक्षणात् ॥ १६ ॥

**आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम् ॥**
**म्लापयन्नभिमानोष्णैर्वनमालां मुखानिलैः ॥ १७ ॥**

**आश्लेषेति ॥ अपरं किं कुर्वन् अभिमानोष्णैः अभिमानसोष्मभिर्मुखानिलैर्मुखश्वासैर्वनमालां नीलोत्पलमयीमापादपद्ममालां म्लापयन् म्लानां कुर्वन् । किंभूतां मालाम् आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम् आश्लेषे आलिङ्गनविषये लोलुपा साभिलाषा या या वधूः रेवती तस्याः स्तनकार्कश्यसाक्षिणीं साक्षाद्द्रष्ट्रीम् । तद्वर्जमन्येन केनचित् कुचकार्कश्यस्य अननुभूतत्वात् । अन्येन कुचकार्कश्यं न दृष्टमित्यर्थः ॥ १७ ॥**

आश्लेषेति ॥ पुनः । आश्लेषे लोलुपाया आलिङ्गनलुब्धाया वध्वाः स्तनयोः कार्कश्यस्य काठिन्यस्य साक्षिणीमुपद्रष्ट्रीम् । नित्यं पीडयन्तामिति भावः । 'साक्षाद्द्रष्टरि संज्ञायाम्' इति साक्षाच्छब्दादिनिप्रत्ययः । वनमालामभिमानोष्णैरहङ्कारतप्तैर्मुखानिलैः निश्वासमारुतैर्म्लापयन् म्लापयन् । म्लायतेर्ण्यन्ताल्लटः शत्रादेशः । 'आदेच—'इत्यात्वे पुगागमः । अम्लाने म्लानसम्बन्धादतिशयोक्तिः ॥ १७ ॥

(१) तत्क्षणप्रति० । (२) वदनो० ।

दधत्सन्ध्याऽरुणव्योमस्फुरत्तारानुकारिणीः ॥
द्विषद्द्वेषोपरक्ताङ्गसङ्गिनीः स्वेदविप्रुषः ॥ १८ ॥

दधदिति ॥ अपरं किं कुर्वन् जगाद स्वेदविप्रुषः दधत् घर्माम्बुकणान् धारयन् । स्त्रीलिङ्गविशेषकाः । किंभूताः द्विषद्द्वेषोपरक्ताङ्गसङ्गिनीः द्विषद्द्वेषेण रिपुकोपेन उपरक्तं लोहितमङ्गं वपुस्तत्संयोगो यासां ताः,अपरं किंविधाः सन्ध्याऽरुणव्योमस्फुरत्तारानुकारिणीः सन्ध्याकालेऽरुणमारक्तं यत् व्योम आकाशं तत्र स्फुरन्त्यो यास्तारा नक्षत्राणि ताः अनुकुर्वन्तीत्येवंशीलाः सन्ध्याऽरुणव्योमस्फुरत्तारानुकारिण्यः ताः ॥ १८ ॥

दधादिति ॥ पुनः । सन्ध्यायामरुणे व्योम्नि स्फुरन्तीस्तारा अनुकुर्वन्तीति तथोक्ताः । कुतः—द्विषतः शत्रो र्द्वेषेण क्रोधेनोपरक्तेऽङ्गे वपुषि सङ्गिनीः सक्ताः स्वेदविप्रुषः स्वेदबिन्दून । 'पृषन्तिबिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम्' इत्यमरः । दधद्धानः । 'नाभ्यस्ताच्छतुः' इति नुमभावः । उपमालङ्कारः ॥ १८ ॥

प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विषा ॥
कृष्णोत्तरासङ्गरुचं विदधच्चूतपल्लवीम्(१) ॥ १९ ॥

प्रोल्लसदिति ॥ अपरं किं कुर्वन् कृष्णोत्तरासङ्गरुचं कृष्णोत्तरीयकान्तिं चूतपल्लवीं पीतां विदधत् । नीलवर्णमध्येपीतत्वं प्रापयन्नित्यर्थः । आभीरदेशे नीलपीतं वासः चूतपल्लवो भण्यते । अन्ये तु चूतपल्लवस्येव आम्रतरुप्रवालस्येवेयं चौतपल्लवीत्याहुः । एतच्चास्य कर्त्रेर्न विवक्षितम् । अत्र तडिताया रुचिर्वर्तते । कया प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विषा प्रकर्षेणोल्लसन्ति दीप्यमानानि यानि कुण्डलानि तत्र प्रोतानि यानि पद्मरागदलानि हीरकखण्डानि तेषां त्विट् तया ॥ १९ ॥

प्रोल्लसादिति ॥ पुनः । प्रकर्षेणोल्लसतो कुण्डलयोः प्रोतानां स्यूतानां पद्मरागदलानां माणिक्यशकलानां त्विषा कान्त्या । प्रोतेति प्रपूर्वाद्वेञः कर्मणि क्तः । यजादित्वात्सम्प्रसारणम् । कृष्णोत्तरासङ्गो नीलोत्तरीयम् ।

'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ।
संव्यानमुत्तरीयं च—'

इत्यमरः । तस्य रुचं चूतपल्लवस्येमां चौतपल्लवीं विदधत् । कृष्णलोहितमिश्रवर्णचूतपल्लववद् धूम्रां कुर्वन्नित्यर्थः । 'धूम्रधूमलौ कृष्णलोहिते' इत्यमरवचनात् । अत्रान्यरुचोऽन्यदीयत्वायोगात्सादृश्याक्षेपान्निदर्शनालङ्कारः ॥ १९ ॥

ककुद्मिकन्यावक्त्रान्तर्वासलब्धाधिवासया ॥
मुखामोदं मदिरया कृतानुव्याधमुद्वमन् ॥ २० ॥

ककुद्मीति ॥ अपरं किं कुर्वन् मुखामोदमुद्वमन् वदनसौरभ्यमुद्गिरन् । कीदृशं मुखामोदं मदिरया कृतानुव्याधं सुरया कृतोऽनुव्याधः सम्पर्को गन्धातिशयो यस्य, सुरया विहितपरिमलातिशयम् । किंभूतया मदिरया ककुद्मिकन्यावक्त्रान्तर्वासलब्धाधिवासया ककुद्मिकन्याया रेवत्या वक्त्रान्तर्वासेन मुखमध्यावस्थितया लब्धोऽधिगतः प्राप्तोऽधिवासः सौरभ्यं यया मदिरया सा तया । माल्यैर्गन्धैश्च संस्कारमधिवासं विदुर्बुधाः । एवंप्रकृतिसुरभिरेवतीवदनातिशयसुरभितमुखसुरया सुरभितरीकृतवदनवासितमन्त्रमण्डप इति वाक्यार्थः ॥ २० ॥

(१) ०चौतपल्लवीम् ।

कुकुद्मीति ॥ पुनः । कुकुद्मिकन्याया रेवत्या वक्षस्यान्तरभ्यन्तरे वासेन स्थित्या लब्धोऽधिवासो वासना यया तया । तन्मुखसौरभवासितयेत्यर्थः । संस्कारो गन्धमाल्याद्यैराधिवासनमुच्यते । मदिरया कृतानुव्याधं कृतसंसर्गम् । प्रियागण्डूषगन्धिनमित्यर्थः । 'व्यधजपोरनुपसर्गे-' इत्यनुपसृष्टादप्प्रत्ययविधानादुपसृष्टाद्व्यधेर्घञ्प्रत्ययः । मुखामोदं स्वमुखगन्धविशेषम् । 'आमोदः सोऽतिनिर्हारी' इत्यमरः । उद्वमन्नुद्गिरन् । अत्र मदिरारामुखगन्धयोः स्वगन्धतिरोधानेन रामामुखतद्गण्डूषमद्यगन्धस्वीकारात्तद्गुणयोस्तत्रोत्तरस्यात्मविशेषकत्वेन पूर्वसापेक्षत्वादङ्गाङ्गिभावेन सङ्करः । 'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाहृतिः' इति लक्षणात् ॥ २० ॥

**जगाद वदनच्छद्मपद्मपर्यन्तपातिनः ॥**

**नयन्मधुलिहः श्वैत्यमुदंशु(१)दशनांशुभिः ॥ २१ ॥**

**जगादेति ॥ किं कुर्वन् मधुलिहो भ्रमरान् श्वैत्यं नयन् श्वेतत्वं प्रापयन् । जीवत्वोरिति ( ? ) कर्मसङ्केतः । कैः उदंशुदशनांशुभिः उदंशव उन्नताभा ये दशनास्तेषामंशुभिर्मयूखैः उज्ज्वलदन्तकिरणैः, किंविधान् भ्रमरान् वदनच्छद्मपद्मपर्यन्तपातिनः वदनच्छद्म मुखव्याजं यत् पद्मं तस्य पर्यन्तः प्रान्तस्तत्र पतन्तीत्येवंशीलाः तान् । पुण्डरीकभ्रान्त्या मुखसमीपगतान् अलीन् सितदशनकिरणैः शुक्लान् विदधदित्यर्थः । उत्प्रेक्षासंशयगुणजातिविरोधानां साङ्कर्यात् सङ्करालङ्कारोऽयम् कुलकम् । ॥२१॥**

जगादेति ॥ वदनमेव छद्म कपटं यस्य तत्पद्मम् । वदनमेव पद्ममित्यर्थः । छद्मशब्देनासत्यत्वप्रतिपादनरूपोऽपह्नवः । तस्य पर्यन्तपातिनः प्रान्तसञ्चारिणः मधु लिहन्तीति मधुलिहस्तान्मधुपान् । क्विप् । उदग्रैरुच्छ्रितैः दशनांशुभिः श्वैत्यं धावल्यं नयन्नेवं जगाद । तद्गुणालङ्कारः । तस्य मधुपसान्निध्यापकवदनापह्नवसापेक्षत्वात्तेन सङ्करः । कुलकम् ॥ २१ ॥

**किमुवाचेत्याह—**

**यद्वासुदेवेनाऽदीनमनादीनवमीरितम् ॥**

**वचसस्तस्य सपदि क्रिया केवलमुत्तरम् ॥ २२ ॥**

**यदिति ॥ सिद्धान्तसूत्रमेतत् । यद्वचः वासुदेवेन श्रीकृष्णेन ईरितमुच्चरितं, तस्य वचसः सपदि तत्कालमेव क्रियैव केवलमुत्तरं कर्तव्यतैव उत्तरम् । अनुष्ठेयमेतदित्यर्थः । कथंभूतं वचः अदीनमुद्धतम् ओजस्वि, अत एव अनादीनवं निर्दोषम् । नैतत् लज्जावहं महितं चेत्यर्थः । सत्यमेतत्कर्तव्यमेव ॥ २२ ॥**

रामो जगादेत्युक्तम् । किं तदित्याकाङ्क्षायामाह—

यदिति ॥ वासुदेवेन न दीनमित्यदीनमकातरं नादीनवोऽस्येत्यनादीनवं निर्दोषम् । 'दोष आदीनवो मतः' इत्यमरः । यद्वच ईरितम् । 'उत्तिष्ठमानस्तु परः' इत्यादिपक्षमाश्रित्य यदुक्तमित्यर्थः । तस्य सपदि क्रिया केवलं द्वयोरनुष्ठानमेवोत्तरम् । सिद्धान्तस्यैवोक्तत्वादिति भावः ॥ २२ ॥

अथ तदेव प्रतिपादयिष्यन्नन्यातिशयतयोपस्करोति—

**अत्र द्वित्रिश्लोकैः स्वल्पमुक्तं हरिणा । अतो वाक्प्रपञ्चे नसत्यत्वात्कथमनुष्ठेयमित्याह—**

**नैतल्लघ्वपि भूयस्या वचो वाचाऽतिशय्यते ॥**

**इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥ २३ ॥**

**नैतदिति ॥ उद्धवमुद्दिश्याह—एतद्भगवदुक्तं वचः अन्यया वाचा नातिशय्यते जेतुं न शक्यते नातिक्रम्यते । वाचस्पतेरप्येतदलङ्घ्यमित्यर्थः । कथंभूतं लघ्वपि स्वल्प-**

---

( १ ) ०मुद्रम ।

मपि, कर्मभूतया वाचा भूयस्या सविस्तरया । अत्र साधकदृष्टान्तमाह—यतः कारणादग्निर्वैश्वानरः त्विषा कान्त्या पूषणं न अत्येति सूर्यं नातिक्रामति । अग्निना न कदाचिदपि विवस्वान् जीयत इत्यर्थः । कीदृशोऽग्निः इन्धनौघधगपि दारुसमूहदाहकोऽपि । दहतीति धक् क्विप् दादेर्धातोर्घः 'एकाचो बशो भष् झषन्तस्य स्ध्वो'रिति धः, झलां जशोऽन्ते । पूषणमिति 'सौ चे'ति वचनाद्दीर्घाभावः ॥ २३ ॥

नैतादिति ॥ लघु संक्षिप्तमप्येतद्वचो भूयस्या बहुतरया । विस्तृतयाऽपीत्यर्थः । 'द्विवचनविभज्य-' इत्यादिना ईयसुनि 'बहलोपो भू च बहोः' इतीकारलोपो बहोश्च भूरादेशः । वाचा नातिशय्यते नातिरिच्यते । गुर्वर्थत्वादिति भावः । शीङः कर्मणि लटि यक् । 'अयङ् यि क्ङिति' इत्ययङादेशः । तथा हि—इन्धनौघान्दहतीतीन्धनौघधक् काष्ठराशिदाहकः । भूयानपीत्यर्थः । क्विपि घत्वधत्वे भष्भावः । अग्निस्त्विषा प्रभया पूषणं सूर्यम् । अल्पीयांसमपीति भावः । न अत्येति नातिक्रामति । तेजसः प्रभावस्त्वमिव वचसोऽर्थवत्त्वमलङ्घ्यत्वहेतुरित्यर्थः । अत्र समानधर्मबिम्बितया दृष्टान्तालङ्कारः ॥ २३ ॥

उद्धवमुद्दिश्यात्मनो वाग्विभवस्यावसरदानाय सन्दानितकमाह—

**विरोधिवचसो मूकान्वागीशानपि कुर्वते ॥**
**जडानप्यनुलोमार्थान्प्रवाचः कृतिनां गिरः(१) ॥ २४ ॥**
**संक्षिप्तस्याप्यतोऽस्यैव वाक्यस्यार्थगरीयसः ॥**
**सुविस्तरतरा वाचो भाष्यभूता भवन्तु मे ॥ २५ ॥**

विरोधीति ॥ युग्मम् । कृतिनां प्रवीणानां गिरो वाण्यः वागीशान् सर्वज्ञान् वाचालानपि पुरुषान् मूकान् निर्वचनान् कुर्वते । यतः किंविधान् विरोधिवचसः विरुद्धवचनान् । निश्चितार्थनिषेधकानित्यर्थः । प्रकृतार्थविरोधोद्भावनादिति भावः । कृतित्वाद्धि ना तावदुद्ग्राहयति, यावत्पण्डितवचनं युक्तमपि मूर्खचित्ते विरुद्धरूपं विपरिणमति । अपरं जडानपि मादृशान् मूर्खानपि प्रवाचः कुर्वते प्रकृष्टवाणीकान् कुर्वते, किंविधान् अनुलोमार्थान् सम्बद्धाभिभाषिणः । अनुलोमार्थः युक्ताभिधेयः । प्रकृष्टा वाक् येषां ते । 'अन्येषामपि दृश्यत' इति क्विप्, दीर्घः । प्रतिवादिनस्तावदुद्ग्राहयन्ते यावद्विरुद्धमपि पक्षवचनं त्याज्यम् । तद्भावनेनानुलोमार्थान् कुर्वन्तीत्यर्थः । तदेतदुक्तं भवति—यद्यहं हरिवाक्यस्य भाष्यं न करोमि ततोऽयमुद्धवः कृतित्वात् युक्तमप्येतद्वचनं विघटयते । विवरणे तु कृत्यर्थावबोधेन प्रत्युतैतन्मनसैवास्माभिर्दूष्यते । तस्मान्मम वचनस्यायमवसरः । शास्त्रेण वर्धिता धीर्येषां ते कृतिनः सुनीतिशास्त्रविद उपदिशन्ति । विचार्य राज्ञा व्यवहर्तव्यम् । तन्मन्त्र्यतां तावत्किं हरिणा युक्तमुक्तमुतान्यथेति । तत्कथमुच्यते तस्य वचसः सपदि क्रिया केवलमुत्तरमित्याह—संक्षिप्तस्येत्यादि । यतः प्रवीणानां गिरः इदं पूर्वोक्तं कुर्वते, अतोऽस्मात्कारणादस्यैव कृष्णोक्तस्य वाक्यस्य संक्षिप्तस्यापि लघुनोऽपि अतिविस्तृतत्वात् सुविस्तरतरा मे मम वाचोऽन्येषामविघटनार्थं भाष्यभूता भवन्तु विवरणरूपाः सम्पद्यन्ताम् । अविवृतं शास्त्रमबुद्ध्वा सर्वो दूषयतीत्यर्थः । कथंभूतस्य वाक्यस्य संक्षिप्तस्यापि लघुनोऽपि, अपरं पुनः अर्थगरीयसः महार्थस्य । अपि विस्मये । संक्षिप्तं हि न तथा महार्थं भवति ।

---

(१) सर्वङ्कषायां तु 'संक्षिप्तस्य, विरोधिवचसः, षड्गुणाः, अनिर्लोठितकार्यस्य, सर्वकार्यशरीरेषु' इत्येवं क्रमो दृश्यते ।

अन्यस्यापि कात्यायनादिकृतस्य लघुनोऽपि महार्थस्य वाक्यस्य भाष्यं पतञ्जलिप्रभृतिभिः कृतं भवति। एतेन सीरपाणिरपि तमेवार्थं विस्तरमारोपयतीत्यर्थः॥ २४-२५॥

यदि हरिवचः नातिशय्यते, अलं तर्हि तवापि वागारम्भैरत आह—

इत्थं यानं सिद्धान्तयित्वा तत्रोद्भवप्रतिरोधं हृदि निधाय त्रिभिः प्रत्याचष्टे—

विरोधीति॥ कृतिनो कुशलानां गिरः कर्त्र्यः विरोधिवचसः प्रतिकूलवादिनो वागीशान्वाक्पतीनपि। 'वागीशो वाक्पतिः समौ' इत्यमरः। मूकान्निर्वाचः कुर्वते। जडयन्तीत्यर्थः। अनुलोमोऽनुकूलोऽर्थोऽभिधेयः येषां तेऽनुकूलार्था अनुकूलवादिनः तान् जडान्मन्दानपि प्रवाचः प्रगल्भवाचः कुर्वते। अतोऽस्मद्गिरः प्रवाच्या इति भावः। अत्र वागीशानां मूकीकरणाज्जडानां प्रवाक्त्वकरणाच्च शक्यवस्तुकरणरूपो विशेषोऽलङ्कारः असम्बन्धे सम्बन्धातिशयोक्तिप्रतिभोत्थापित इति सङ्करः॥ २७॥

नन्वात्मनीनेन स्वामिना 'बुद्धेः फलमनाग्रहः' इति न्यायेन शात्रववचनं प्रतिकूलमपि ग्राह्यमेवेत्याशङ्क्याह—

संक्षिप्तस्येति॥ अतो हरिवचसोऽनातिशयनीयत्वादेव सुविस्तरतराः प्रपञ्चतराः। 'प्रथने वावशब्दे' इति घञः प्रतिषेधः। 'ऋदोरप्' इत्यप्। मे वचसः संक्षिप्तस्याल्पाक्षरस्याप्यर्थेन गरीयसः। सूत्रकल्पस्येत्यर्थः।

'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः'॥

इति लक्षणात्। अस्यैव वाक्यस्य नान्यस्य भाष्यभूता भाष्यैः समाः। नित्यसमासः। 'क्षमादौ जन्ता भूतं क्लीबं समेऽतीते चिरे त्रिषु' इति वैजयन्ती। व्याख्यानरूपा भवन्तीत्यर्थः। सूत्रव्याख्यानविशेषो भाष्यम्।

'सूत्रस्थं पदमादाय वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः'॥

इति। मया तु तदेव विशेषप्रकाशनाय व्याख्यायते, नत्वतिशयाय प्रत्याख्यायते इत्यदोष इत्यर्थः। उपमालङ्कारः॥ २९॥

**सर्वकार्यशरीरेषु मुक्त्वाऽङ्गस्कन्धपञ्चकम्॥**
**सौगतानामिवात्माऽन्यो नास्ति मन्त्रो महीभृताम्॥ २८॥**

सर्वेति॥ हे श्रीकृष्णोद्धवौ! महीभृतां राज्ञां सर्वकार्यशरीरेषु समस्तकृत्यदेहेषु अङ्गस्कन्धपञ्चकं अङ्गान्येव स्कन्धपञ्चकं मुक्त्वा पञ्चाङ्गमन्त्रं वर्जयित्वा अन्यो मन्त्रो नास्ति मन्त्रान्तरं न विद्यते। कर्मणामारम्भोपायः पुरुषद्रव्यसम्पत् देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गो राजमन्त्रः।

सहायाः साधनोपाया विभागो देशकालयोः।
विपत्तेश्च प्रतीकारो मन्त्रः पञ्चाङ्ग इष्यते॥

इति कामन्दकः। एतद्वर्जमन्यो मन्त्रो नास्ति, तत किमत्र मन्त्र्यते। केषां यथा केषु किंवर्जं किमन्यन्नास्तीत्याह—केषामिव सौगतानामिव बौद्धानामिव। यथा—बौद्धानां रूपवेदनासंज्ञासंस्कारविज्ञानलक्षणं स्कन्धपञ्चकं मुक्त्वा वर्जयित्वा सर्वशरीरेषु अन्य आत्मा न विद्यते। बौद्धा हि रूपादिव्यतिरिक्तमात्मानं नेच्छन्ति न मन्यन्ते। रूपमाकारः, वेदना सुखदुःखानुभवः, संज्ञा चैतन्यं, संस्कारः शास्त्रादिवपुरलङ्कारः, अधीतस्याविस्मरणं विज्ञानम्, अङ्गम्। इत्यर्थः शास्त्रज्ञानां भणितः। सुगते बुद्धे भक्तिरेषां ते सौगताः बौद्धाः॥ २६॥

इत्थं षाड्गुण्यादिपाठमात्रं न मन्त्र इति सिद्धे सम्प्रति स्वयं मन्त्रस्वरूपमाह—

सर्वेति ॥ सर्वाणि कार्याणि सन्ध्यादीनि तानि शरीराणी वेत्युपमितसमासः । सौगतानामिवेति । लिङ्गान्तेषु सर्वकार्यशरीरेषु सर्वेषु शरीरेष्विव । सर्वकार्येष्वित्यर्थः । अङ्गानि स्कन्धा इवेत्युपमितसमासः । तेषां पञ्चकं मुक्त्वा । स्कन्धपञ्चकमिवाङ्गपञ्चकं हित्वेत्यर्थः । पञ्च परिमाणमस्येति पञ्चकम् । 'संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इति कप्रत्ययः । सुगतो भक्तिर्भजनीय एषां सौगता बौद्धाः । 'भक्तिः' इत्यण्प्रत्ययः । तेषामन्य आत्मेव महीभृतामन्यो मन्त्रो नास्ति । कर्मणामारम्भोपायः, पुरुषद्रव्यसम्पत्, देशकालविभागः, विपत्तिप्रतीकारः, कार्यसिद्धिश्चेति पञ्चाङ्गानि । यथाह कामन्दकः—

'सहायाः साधनोपायः विभागो देशकालयोः ।
विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते' ॥

इति । रूपवेदनाविज्ञानसंज्ञासंस्काराः पञ्च स्कन्धाः । तत्र विषयप्रपञ्चो रूपस्कन्धः, तज्ज्ञानप्रपञ्चो वेदनास्कन्धः, आलयविज्ञानसन्तानो विज्ञानस्कन्धः, नामप्रपञ्चः सञ्ज्ञास्कन्धः, वासनाप्रपञ्चः संस्कारस्कन्धः । एवं पञ्चधा परिवर्तमानो ज्ञानसन्तान एवात्मा इति बौद्धाः । एवं यथा बौद्धानां सर्वेषु शरीरेषु स्कन्धपञ्चकातिरिक्त आत्मा नास्ति, तथा राज्ञामङ्गपञ्चकातिरिक्तो मन्त्रो नास्तीत्युपमालङ्कारः । तच्चास्माकं समग्रमेवेत्ययमेव यात्राकाल इति भावः ॥ २६ ॥

ननु अन्योऽपि षड्गुणादिको मन्त्रोऽस्ति तत्कथं मन्त्रान्तरं नास्तीति भवानाह—

**षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः ॥**
**ग्रन्थानधीत्य व्याकर्तुमिति दुर्मेधसोऽप्यलम् ॥ २७ ॥**

षडिति ॥ दुर्मेधसोऽपि जडधियोऽपि इति व्याकर्तुमित्येतत् व्याख्यातुमलं समर्थाः, किं कृत्वा ग्रन्थानधीत्य चाणक्यादीनि अर्थशास्त्राणि पठित्वा । इतीति किम् , यत्—षड् गुणाः, सन्धिविग्रहयानासनसंश्रयद्वैधीभावाः षड् गुणाः । पणबन्धः सन्धिः, विग्रहोऽपकारः, यानमभ्युच्चयः, आसनमुपेक्षणं, परस्योपसर्पणं संश्रयः, एकेन सह सन्धायाऽपरेण सह विग्रहकरणं द्वैधीभावः । तिस्रः शक्तयः प्रभुमन्त्रोत्साहलक्षणास्तिस्रः शक्तयः । कोशो दुर्गः दण्डसम्पत् प्रभुशक्तिः । कोशो भाण्डागारः, दुर्गः प्राकारः, दण्डश्चतुरङ्गबलम् । विज्ञानसम्पत् मन्त्रशक्तिः । पराक्रमसम्पदुत्साहशक्तिः । तिस्रः सिद्धयः भूहिरण्यमन्त्रलक्षणाः । शक्तित्रयजनितानि त्रीणि सुखानि । अपरं चयापचयस्थानलक्षणास्त्रय उदयाः । चयो वृद्धिः, अपचयः क्षयः, चयापचयरहिता अवस्था स्थानम् । इति व्याख्यातुं जडधियोऽप्यलम् । षड्गुणादिविज्ञानं तावद्वाक्संस्कारमात्रफलं न तूपादेयम् । मन्त्रस्त्वङ्गपञ्चकमेवेत्यर्थः । षड्गुणादिभ्यो नारदवद् द्वितीया न भवति ॥ २७ ॥

षाडिति ॥ दुष्टा मेधा येषां ते दुर्मेधसः मन्दबुद्धयोऽपि । 'नित्यमसिच्प्रजामेधयोः' इति समासान्तोऽसिच्प्रत्ययः । ग्रन्थानौशनसादीन् अधीत्य पठित्वा, 'गुणाः सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्याः षट् । शक्तयः प्रभुत्वमन्त्रोत्साहाख्यास्तिस्रः । सिद्धयः पूर्वोक्तशक्तित्रयसाध्याः पुरुषार्थलाभात्मिकाः । ताश्च तिस्रः प्रभुसिद्धिर्मन्त्रसिद्धिरुत्साहसिद्धिश्चेति । उदयाः वृद्धिक्षयस्थानानि छत्रिन्यायेनोदया उच्यन्ते । तत्र वृद्धिक्षयौ स्वशक्तिसिद्धयोः पूर्वावस्थानादुपचयापचयौ स्थानं ते च त्रयः इति व्याकर्तुं व्याख्यातुमलं समर्थाः । 'पर्याप्तिवचनेष्वलमर्थेषु' इति तुमुन् । पञ्चाङ्गनिर्णयशक्तिविकलानां सन्ध्यादिरूपसंख्यामात्रपाठकानामशास्त्रज्ञत्वादुद्धवादयो न ग्राह्यवचना इत्याभिसन्धिः । अत्रामरः—

'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ।
षड् गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः ॥
क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्' ॥

इति । तत्रारिविजिगीष्वोर्व्यवस्थाकरणमैक्यं सन्धिः । विरोधो विग्रहः । विजिगीषोररिं प्रति यात्रा यानम् । तयोर्मिथः प्रतिबद्धशक्त्योः कालप्रतीक्षया तूष्णीमवस्थानमासनम् । दुर्बलप्रबलयोर्वाचिकमात्मसमर्पणं द्वैधीभावः । अरिणा पीड्यमानस्य बलवदाश्रयणं संश्रयः । कोशदण्डोत्थं तेजः प्रभावः । कर्तव्यार्थेषु स्थेयान्प्रयत्न उत्साहः । षड्गुणचिन्तनं मन्त्रः । गतमन्यदिति सङ्क्षेपः ॥ २७ ॥

अलं बहुना, रटनेन किं प्रयोजनम् । सर्वथा कार्यतत्त्वमेवावगन्तव्यमित्येतद्दर्शयितुमाह—

**अनिर्लोठित(१)कार्यस्य वाग्जालं वाग्मिनो वृथा ॥**
**निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम् ॥ २८ ॥**

**अनिर्लोठितेति ॥ वाग्मिनो वावदूकस्य वाचालस्य वाग्जालं भारतीप्रपञ्चो वृथा निरर्थकं, कथंभूतस्य वाग्मिनः अनिर्लोठितमनिष्टङ्कितं भिन्नं ननिश्चितं कार्यं येन सः तस्य अपर्यालोचितकृत्यस्य अस्पष्टकृत्यस्य । अज्ञाते कार्यासारे मन्त्रः प्रलाप इत्यर्थः । कस्येव धनुर्धरस्येव । यथा धानुष्कस्य वल्गितं वृथा वल्गनिका निरर्थिका । शरव्यमभङ्क्त्वा अङ्गभङ्गादिकं खलूपहासायैव । कथंभूतस्य निमित्तात् अपराद्धेषोर्वेध्यात् भ्रष्टसायकस्य । स भवेदपराद्धेषुर्यस्य लक्ष्यात् च्युतः शरः । धनुः प्रहरणमस्य धानुष्कः 'प्रहरण'मिति 'प्राग्वहती'ति धनुषष्ठक्, इसुसुक्तान्तात्कः ॥ २८ ॥**

ननु शास्त्रोक्तार्थव्याख्यातैव शास्त्रज्ञः, स एव ग्राह्यवचनश्चेत्याशङ्क्याह—

**अनिर्लोडितेति ॥** अनिर्लोडितं नालोकितं कार्यं येन तस्य । कार्याकार्यमजानत इत्यर्थः । वाचोऽस्य सन्तीति वाग्मी वावदूकः । 'वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि' इत्यमरः । 'वाचो ग्मिनिः' इति ग्मिनिप्रत्ययः । तस्य वाग्जालं वागाडम्बरो निमित्ताल्लक्ष्यात् । 'वेध्यं लक्ष्यं निमित्तं च शरव्यं च समं विदुः' इति वैजयन्ती । अपराद्धेषोः स्खलितबाणस्य । धनुः प्रहरणमस्येति धानुष्को धन्वी । 'प्रहरणम्' इति ठक् । इसुसुक्तान्तात्कः ।

'अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः ।
धन्वी धनुष्मान्धानुष्कः—'

इत्यमरः । तस्य वल्गितमिव वृथा निष्फलम् । कार्यज्ञस्य वचो ग्राह्यं न तु वाचालस्येति भावः ॥ २८ ॥

किञ्च मन्त्रशक्तिर्दोषायेति दर्शयितुमाह—

**मन्त्रो योध इवाधीरः सर्वाङ्गैः कल्पितैरपि(२) ॥**
**चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया ॥ २९ ॥**

**मन्त्र इति ॥ मन्त्रश्चिरं बहुकालं स्थातुं न सहते दीर्घकालं न क्षमते, कैः सर्वाङ्गैः कल्पितैरपि कर्मोपायादिभिः पञ्चभिः सन्नद्धैरपि । यतः किंविधः अधीरः बहुकालावस्थाऽसहः, कया परेभ्यो भेदशङ्कया । चिरकालमन्त्रकरणात् कदाचिन्मन्त्रभेदो भवति । भेदऊहश्रुतिः । मन्त्रभेदाद्विनष्टं कार्यं दुःसाध्यं भवति । क इव अधीरो योध इव । यथा अधीरः कातरो योधः सर्वाङ्गैः हस्तशिरःपादादिभिः सकलावयवैः कल्पितैः सन्नद्धैरपि प्रतियोधप्रहारशङ्कया चिरं स्थातुं न शक्नोति । तस्मान्मुहूर्तमात्रं मन्त्रो विधेयः । युध्यतीति योधः पचादित्वादच् । स्थातुमिति 'शकधृषे'ति तुमुन् ॥ २९ ॥**

अथ मन्त्रितार्थक्रियाविलम्बे दोषमाह—

**मन्त्र इति ॥** संवृतैर्गुप्तैः सर्वाङ्गैः पूर्वोक्तैरुपायादिभिरुरःस्थलादिभिश्चोपलक्षितोऽपि । सर्वाङ्गसंवृ-

---

(१) अनिर्लोडित । (२) संवृतैरपि ।

तोऽपीत्यर्थः। मन्त्रो विचारः अधीरो भीरुः, युध्यत इति योधो भट इव । पचाद्यच् । परेभ्योऽन्येभ्योऽरिभ्यश्च । 'परं दूरान्यमुख्येषु परोऽरिपरमात्मनोः' इति वैजयन्ती । भेदो विदारणं तृतीयगामित्वं च तस्य शङ्कया चिरं स्थातुम् । विलम्बितुमित्यर्थः । न सहते न क्षमः । 'शकधृष-'इत्यादिना तुमुन्प्रत्ययः । अतो न विलम्बितव्यम्, अन्यथा मन्त्रभेदे कार्यहानिः स्यादिति भावः ॥ २९ ॥

ननु मन्त्रकरणं नीतिरिति बुधैर्व्यवस्थापितं, तत्कथं भवता निषिध्यत इत्याह—

**आत्मोदयः परज्यानिर्द्वयं नीतिरितीयती ॥**

**तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते ॥ ३० ॥**

**आत्मोदय इति** ॥ इति इयती नीतिः इयानेष नयः। इति किं यद् द्वयं, किं तद् द्वयम् आत्मोदयः स्ववृद्धिः परज्यानिः शत्रुक्षयः। तस्मादेतद्द्वयातिरिक्ताऽन्या नीतिर्न काचिद्विद्यते । एष एव मन्त्रः इत्यर्थः । कृतिभिः प्रवीणैः तद् द्वयमूरीकृत्य अङ्गीकृत्य वाचस्पत्यं वागीशत्वं प्रातायते विस्तार्यते । द्वयमेतद्बीजभूतं गृहीत्वाऽत्रैवोपचर्य नान्यदुच्यते इत्यर्थः । एतस्माच्चाकं विद्यते इति दर्शयिष्यते । तस्मात्कालक्षेपेण न किञ्चित्प्रयोजनमिति भावः । ज्यानिशब्दः औणादिकः । इदं परिमाणमस्या इयती किमिदंभ्यां वो घः । ऊरीकृत्येति 'ऊर्यादिच्विडाचश्चे'ति गतिसंज्ञा । प्रतायत इति कर्मणि लकारः । तनोतेर्यकि वा आत्वम् । विभवार्थं युद्धमिह, स त्वमित्रे स्वल्पोऽस्ति इत्याशङ्क्य एतच्चास्माकमस्ति तस्मात्कालक्षेपो न विधेय इत्यर्थः ॥ ३० ॥

किञ्च नीतिसर्वस्वपर्यालोचनयाऽपि न विलम्बः कार्य इत्यभिप्रेत्याह—

**आत्मोदय इति** ॥ आत्मन उदयो वृद्धिः परस्य शत्रोर्ज्यानिर्हानिः । 'वीज्याहाज्वरिभ्यो निः' इत्यौणादिको निःप्रत्ययः। इति द्वयम् । इदं परिमाणमस्या इति इयती एतावती । 'किमिदम्भ्यां वो घः' इति मतुपो वस्य घश्च । 'उगितश्च' इति ङीप् । नीतिर्नीतिसङ्ग्रहः । एतद्द्वयातिरिक्तो न कश्चिन्नीतिपदार्थोऽस्तीत्यर्थः । यदन्यत्षाड्गुण्यादिवर्णनं तत्सर्वमस्यैव प्रपञ्च इत्याह—तदिति । तद् द्वयमूरीकृत्याङ्गीकृत्य । 'ऊरीकृतमुररीकृतमङ्गीकृतम्' इत्यमरः। 'ऊर्यादिच्विडाचश्च' इति गतिसंज्ञायां 'कुगतिप्रादयः' इति समासे क्त्वो ल्यप् । कृतिभिः कुशलैः वाचस्पत्यं वाग्मित्वम् । कस्कादित्वादलुक्सत्वे । 'षष्ठ्याः पतिपुत्र-' इत्यादिना सत्वमिति स्वामी तन्न, तस्य छन्दोविषयत्वात् । ब्राह्मणादित्वाद्भावे ष्यञ्प्रत्ययः । प्रतायते विस्तीर्यते । कर्मणि लट् । 'तनोतेर्यकि' इत्यात्वम् । तस्मादात्मोदयार्थिभिरविलम्बाच्छत्रुरुच्छेत्तव्यः, तन्नान्तरीयत्वात्तस्येति भावः ॥ ३० ॥

ननु उदयार्थं परेषु यात्रोदयः पराभिसन्धानस्य प्रधानं प्रयोजनं, स चास्माकं विद्यत एवातः परज्यानिर्मा भूदिति किं यात्रयेत्याह—

**तृप्तियोगः परेणापि महिम्ना न महात्मनाम् ॥**

**पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥ ३१ ॥**

**तृप्तियोग इति** ॥ महात्मनां विपुलमतीनां पुरुषाणां परेणापि उत्कृष्टेनापि महिम्ना आधिपत्येन न तृप्तियोगः न वितृष्णया सम्बन्धः तृप्तिर्न जायते । तव तु कियानुदयो येन सन्तुष्यते किमत्र । निदर्शनमाह—अत्र अस्मिन् अर्थे महार्णवः समुद्रो दृष्टान्तः निदर्शनम् । कीदृशः पूर्णः सम्पूर्णोऽपि, अपरम् अधिकवृद्धये चन्द्रोदयाकाङ्क्षी । चन्द्रोदयमिच्छतीत्यर्थः । यदि हि वृद्धिमात्रेणैव सन्तोषः स्यात् तत्कथमर्णवो महान् पूर्णस्तु शशयुगमं प्रार्थयेत् । अर्णो जलं विद्यते यस्येत्यर्णवः अर्णसः सलोपो वश्च । दृष्टान्तः प्रकृतार्थनिश्चयोऽस्मिन्निति । दृश्यते तन्निदर्शनम् ॥ ३१ ॥

ननु लब्धोदयस्य किं परोच्छित्त्येत्याह—

तृप्तियोग इति ॥ महीयसा महात्मना परेणापि प्रभूतेनापि महिम्ना ऐश्वर्येण तृप्तियोगः सन्तोषलाभो न । अत्र तृप्त्यभावे पूर्णः सन् चन्द्रोदयाकाङ्क्षी । वृद्ध्यर्थमिति भावः । महार्णवो दृष्टान्तः । दृष्टः अन्तो निश्चयो यस्मिन् दृष्टान्तो निदर्शनम् । उपमानमिति यावत् । राज्ञा वृद्धौ अलंबुद्धिर्न कार्या ।

'असन्तुष्टा द्विजा नष्टाः सन्तुष्टाश्च महीभुजः ।

सलज्जा गणिका नष्टा निर्लज्जा च कुलाङ्गना' ॥

इति न्यायादिति भावः । नायं दृष्टान्तालङ्कारः । बिम्बप्रतिबिम्बभावेनौपम्यस्य गम्यत्वे तस्योत्थानात् । किन्तु दृष्टान्तशब्देन तस्याभिधानादुपमालङ्कारः । अत एव दृष्टान्तोदाहरणनिदर्शनरूपाः शब्दा न प्रयोक्तव्याः पौनरुक्त्यापत्तेरित्येकावल्यलङ्कारः ॥ ३१ ॥

**किञ्च सन्तुष्टस्योदय एव न भवति इति दर्शयितुमाह—**

**सम्पदा सुस्थितंमन्यो(१) भवति स्वल्पयाऽपि यः ॥**

**कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ ३२ ॥**

**सम्पदेति** ॥ यः पुरुषः स्वल्पया अपि सम्पदा ऊनया अपि विभूत्या सुस्थितंमन्यो भवति । सुस्थितं सुखिनमात्मानं मन्यते सुस्थितंमन्यः आत्ममाने खश्प्रत्ययः । अहंमन्यो जायते । विधिर्दैवं तस्य पुरुषस्य तां समृद्धिं न वर्धयति बहुलां न करोति । यतः कीदृशो विधिः कृतकृत्यः विहितकार्यः । विधिना हि सर्वस्येच्छा पूरणीया । यश्च सन्तोषेणाधिकं न कामयते तस्याधिकदानेनाऽसौ न क्लेशमनुभवति, उपकाराभावात् । वाक्यार्थस्य कर्मत्वादत्र द्वितीयाभावः ॥ ३२ ॥

तथापि सन्तोषे दोषमाह—

सम्पदेति ॥ यः स्वल्पयाऽपि सम्पदा सुस्थिरमात्मानं मन्यत इति सुस्थिरंमन्यः स्वस्थमानी भवति । 'आत्ममाने खश्च' इति खश्प्रत्यये मुमागमः । तस्याल्पसन्तुष्टस्य तां स्वल्पसम्पदं कृतकृत्यस्तावतैव कृतार्थो विधिर्दैवमपि न वर्धयति अहमिति मन्ये । पौरुषहीनादैवमपि जुगुप्सते, तत्प्रवृत्तेः पारार्थ्यादिति भावः ॥३२॥

**यत्तु भवान् आत्मोदयश्चेत्परो नाऽभिसन्धेयः, किं शत्रुगमनेन तत्र । यतः अरिक्षयहेतुक एवात्मोदय इति दर्शयितुमाह—**

**समूलघातमघ्नन्तः परान्नोद्यन्ति मानिनः ॥**

**प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः ॥ ३३ ॥**

**समूलेति** ॥ मानिनः पुरुषाः परान् शत्रून् समूलघातमघ्नन्तः आमूलादविनाशयन्तोऽनुन्मूलयन्तः सन्तो न उद्यन्ति उदयं न कुर्वते । शत्रुक्षयः सम्पदां कारणमित्यर्थः । उक्तं च—

असन्तुष्टा द्विजा नष्टाः सन्तोषेण तु पार्थिवाः ।

सलज्जा गणिका नष्टा निर्लज्जाश्च कुलस्त्रियः ॥

एतेन भूपतिना सता सन्तोषो न कार्यः । तत्र तस्मिन्नर्थे भगवान् रविः उदाहरणं दृष्टान्तः, किंभूतो रविः प्रध्वंसितान्धतमसः क्षपिततमस्काण्डः । स हि भगवान् तमश्छेदपूर्वकमुदेति नान्यथा । तदुक्तम्—अविभिद्य निशाकृतं तमः प्रभया नांशुमताऽप्युदीयते । समूलघातमिति समूले हन्तेर्णमुल् क्त्वास्थाने, कषादिषु यथाविध्यनुप्रयोगः ।

---

(१) ०सुस्थिरंमन्यो० ।

धातंशब्दार्थश्चात्र न विद्यते। समूलमघ्नतः इत्ययमेव ह्यत्रार्थः । अघ्नन्त इति शतृ । उद्यन्तीति इणो यण् । अन्धयतीति अन्धः अन्धवत्समोऽन्धतमसम्, अवसमन्धेभ्यस्तमसः । उदाह्रियतेऽनेनार्थयोः साध्यसाधनभाव इत्युदाहरणम् । दृष्टान्तः इत्यर्थः ॥ ३३ ॥

किञ्च पराक्रमलब्ध एवोदयो नान्यलब्ध इत्याह—

समूलेति॥मानिनोऽभिमानिनः परान् शत्रून् समूलं हत्वा समूलघातम् अघ्नन्तः।अनुन्मूलयन्त इत्यर्थः 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति णमुल्प्रत्ययः । 'कषादिषु यथाविध्यनुप्रयोगः' इति हन्तेरनुप्रयोगः । नोद्यन्ति । किन्तु हत्वैवोद्यन्तीत्यर्थः । तत्र हत्वैवोदये, अन्धयतीत्यन्धं गाढं तमोऽन्धतमसम् । 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः । 'अवसमन्धेभ्यस्तमसः' इत्यच्प्रत्ययः । प्रध्वंसितमन्धतमसं येन सः । उदयात्प्रागिति भावः । रविरुदाहरणं दृष्टान्तः । अत्रापि 'दृष्टान्तोऽत्र महार्णवः' इतिवदुपमालङ्कारो न तु दृष्टान्त इति द्रष्टव्यम्॥३३॥

अलब्धोदयेन सपत्नोच्छेदमन्तरेणावस्थानं दुर्लभमिति दर्शयितुमाह—

**विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा ।**
**अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ॥ ३४ ॥**

विपक्षमिति ॥ खलु यस्मात् कारणात् विपक्षं शत्रुमखिलीकृत्य समूलमनुन्मूल्य अचूर्णयित्वा प्रतिष्ठा दुर्लभा, खलु पूर्वोक्ताक्षेपं कुर्वन् अवधारणे । आस्तां तावदुदयः, पदबन्ध एव दुरासदः इत्यर्थः । अत्र दृष्टान्तमाह—यतः कारणादुदकं कर्तृ धूलिं कर्म पङ्कताम् अनीत्वा कर्दमत्वमप्रापय्य न अवतिष्ठते अवस्थानं न बध्नाति । समवप्रविभ्यः स्थः आत्मनेपदम् । 'व्यवस्थायामसंज्ञाया'मिति ज्ञापकात् प्रतिष्ठाशब्दे 'स्थागापापचो भावे' इत्यङपवादः क्तिन् न भवति । सामान्यापेक्षवत् ज्ञापकं स्यादेतत् ॥ ३४ ॥

किञ्च अनुच्छिन्नशत्रोः प्रतिष्ठैव दुर्घटेत्याह—

विपक्षमिति ॥ विपक्षं शत्रुमखिलीकृत्य खिलमुत्सन्नमकृत्वा । अनुन्मूल्येत्यर्थः । प्रतिष्ठा दुर्लभा खलु । तथा हि—उदकं कर्तृ धूलिम् । स्वपरिभाविनीमिति भावः । पङ्कतामनीत्वा । नाधःकृत्येत्यर्थः । नावतिष्ठते । किन्तु नीत्वैव तिष्ठतीत्यर्थः । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । वाक्यभेदेन प्रतिबिम्बनापेक्षो दृष्टान्तालंकारः ॥ ३४ ॥

अन्ये अरयो न स्युः शिशुश्चैकः किं करिष्यति इति चेद्दर्शयितुमाह—

**ध्रियते यावदेकोऽपि रिपुस्तावत्कुतः सुखम् ॥**
**पुरः क्लिश्नाति सोमं हि सैंहिकेयोऽसुरद्रुहाम् ॥ ३५ ॥**

ध्रियत इति ॥ दूरे तिष्ठन्तु बहवोऽमित्राः, यावदेकोऽपि रिपुर्ध्रियते एक एव विपक्षो जीवति तावत्कुतः सुखं कुतः श्रेयः । लब्धोदयस्यारिलेशः सन्नपि दुःखायैव भवति । हि यस्मात् असुरद्रुहां देवानां पुरोऽग्रतः सैंहिकेयो राहुः सोमं चन्द्रमसं क्लिश्नाति ग्रसत एव । सोमग्रहणमुपलक्षणं, रविमपीत्येवम् । तस्माच्चैद्यं याम इति भावः ॥ ३५ ॥

नन्वयं शिशुपाल एकाकी नः किं करिष्यतीत्याशङ्क्याह—

ध्रियत इति ॥ एकोऽपि रिपुर्यावद् ध्रियतेऽवतिष्ठते।'धृङ् अवस्थाने'इति धातोस्तौदादिकात्कर्तरि लट् । 'रिङ्शयग्लिङ्क्षु' इति रिङादेशः । तावत्तदवधि सुखं कुतः । 'यावत्तावच्च साकल्येऽवधौ' इत्यमरः । तथा हि-सिंहिकाया अपत्यं पुमान्सैंहिकेयो राहुः।'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' इत्यमरः । स्त्रीभ्यो ढक् । असुरद्रुहां देवानां पुरोऽग्रे सोमं क्लिश्नाति बाधते । प्राचुर्यात्सोमग्रहणम । सूर्यं चेति भावः । तस्मादेकोऽपि शत्रुरुच्छेत्तव्य इति भावः । 'अग्नेः शेषमृणाच्छेषं शत्रोः शेषं न शेषयेत्' इति तात्पर्यम् । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३५ ॥

स्यादेतन्न चैद्योऽस्माकं रिपुः स्वाभाविकोऽपि तु कृत्रिमोऽपि लघुस्तत्कोऽस्य पैतृष्वस्रीयस्योपरि क्षोभ इत्याशङ्क्य गरीयस्त्वमेव प्रतिपादयितुमाह—

**सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्यतः ॥**
**स्याताममित्रौ मित्रे च सहजप्राकृतावपि ॥ ३६ ॥**

**सखेति** ॥ इह शास्त्रे त्रिविधौ मित्रामित्रौ उक्तौ, सहजौ प्राकृतौ कृत्रिमौ चेति तत्र सहजं मित्रं मातुलतुल्यमातृष्वस्रीयादिकम् । प्राकृतं मित्रं शत्रुविषयानन्तरं पितृपरम्परागतं वा । कृत्रिमं मित्रं सामदानाद्यावर्जितम् । शत्रुरपि त्रिविधः । सहजशत्रुः कुल्यः पितृव्यस्तत्सुतादिः । प्राकृतः स्वविषयानन्तरः । अपराद्धोऽपराद्धा वा कृत्रिमः । एतयोः सहजप्राकृतकृत्रिममित्रामित्रयोर्मध्यात्सखा मित्रं शत्रुश्च कृत्रिमो गरीयान् कृत्रिमः प्रधानः । हि यस्मात्कारणात् तौ कृत्रिमौ मित्रामित्रौ कार्यतः कार्यवशात् अमित्रौ मित्रे च स्यातां न केवलं तौ कृत्रिमौ मित्रामित्रौ अपरं सहजप्राकृतावपि कार्यवशात् अमित्रौ मित्रे च स्याताम् । अत एव कृत्रिमावेव मित्रामित्रौ प्रधानौ । इदं व्याख्यानमपरेषाम् । अस्मन्मते तु प्रियहितकारी अप्रियहितकारी च कुत इत्याह—यस्मात्तावपि सहजप्राकृतौ मित्रामित्रौ कार्यतः प्रयोजनवशात् अमित्रौ च भवेतां मित्रे चेति कृत्रिमत्वं प्रधानम् । अतश्च कृत्रिमौ मित्रामित्रौ बलवत्तरौ बलवन्तौ । तथा च भगवान् **पाराशर्यः**—

नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते ।
कार्ययोगाद्विजायन्ते मित्राणि रिपवस्तथा ॥
मित्रं च शत्रुतामेति कदाचित्कालपर्यये ।
शत्रुश्च मित्रतां याति स्वार्थो हि बलवत्तरः ॥
अमित्रो मित्रतां याति मित्रं चापि प्रदुह्यति ।
सामर्थ्ययोगात्कार्याणामनित्या हि सदा गतिः ॥

इति कृत्रिमत्वमेव प्रधानं नान्यत् । अन्यच्च कृत्रिमे एव शत्रुमित्रे बलवती । लोके चैतदुक्तमपि दृश्यते । शत्रुरपि उपकारयोगान्मित्रीभवति । मित्रमप्यपकारसम्बन्धादमित्रीभवति । तदेतेन मित्रामित्रयोस्त्रिधा बलाबलत्वं चोक्तमनित्यता च रागद्वेषयोः । अपिशब्दोऽत्र भिन्नक्रमो विस्मये, तावित्यस्यानन्तरं बोद्धव्यः । हिर्हेतौ ॥ ३६ ॥

ननु क्षुद्रोऽयं चैद्यः किं नः करिष्यतीत्याशङ्क्य तस्य बलवत्तां वक्तुं मित्रामित्रबलाबलविवेकं तावत्करोति—

**सखेति** ॥ क्रियया उपकारापकारान्यतररूपया निर्वृत्तः कृत्रिमः । ड्वितः क्त्रिः क्त्रेर्मम्नित्यम् । सखा सुहृत् शत्रुश्च कृत्रिमो गरीयान् । कुतः—हि यस्मात्तौ कृत्रिममित्रशत्रू कार्यत उपकारापकाररूपकार्यवशात् । निर्वृत्ताविति शेषः । उक्तकार्योपाधेर्यावज्जीवमनपायात् अनयोर्मित्रामित्रभावोऽप्यनपायीति गरीयांस्त्वमिति भावः । सहजप्राकृतौ तु नैवमित्याह—स्यातामिति । सह जातः सहजः एकशरीरावयवत्वात् । तत्र सहजं मित्रं मातृष्वसेयपितृष्वसेयादि । सहजशत्रुस्तु पितृव्यतत्पुत्रादिः । प्रकृत्या सिद्धः प्राकृतः । पूर्वोक्तसहजकृत्रिमलक्षणराहित इत्यर्थः । तत्र विषयानन्तरः प्राकृतः शत्रुः । तदनन्तरः प्राकृतं मित्रम् । अपि त्वर्थे । तौ सहजप्राकृतौ शत्रुमित्रे च स्यातां तावात्मकार्यवशादनियमेनोभयरूपतामापद्येते न कृत्रिमशत्रुमित्रे । कृत्रिमः शत्रुः शत्रुरेव मित्रं च मित्रमेवेति कृत्रिमावेव मित्रामित्रौ गरीयांसौ । न तु सहजौ नापि प्राकृतावित्यर्थः । अनेन कृत्रिमत्वं सर्वापवादीति सिद्धम् ॥ ३६ ॥

इदानीमेतयो रेव ग्राह्याग्राह्यत्वमाह—

**उपकर्त्राऽरिणा सन्धिर्न मित्रेणापकारिणा ॥**
**उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥ ३७ ॥**

**उपकर्त्रेति** ॥ अरिणा सह सन्धिर्विधेयः, किंभूतेन उपकर्त्रा उपकारकेण । अपरं मित्रेण सह सन्धिर्न कार्यः, कीदृशेनापकारिणा द्रोहकारिणा । उक्तं च—

यस्त्वमित्रेण सन्धत्ते मित्रेण च विरुध्यते ।
अर्थयुक्तिं समालोच्य स महद्विन्दते फलम् ॥

यतः कारणात् एतयोः मित्रामित्रयोरुपकारापकारौ लक्षणं लक्ष्यं ज्ञातव्यं न त्वन्यत् । अरिमित्रेति अत्र परप्रसिद्ध्योक्तम् । यथा वर्णेषु ये वर्णैकदेशास्ते वर्णग्रहणेन गृह्यन्त इति। अपकर्तृणेति पाठे 'इकोचि'इति नुम् ॥ ३७ ॥

एवं चेदस्माकं पैतृष्वसेयः शिशुपालः सहजमित्रत्वात्सन्धातव्यो न तु यातव्य इत्यत आह—

**उपकर्त्रेति** ॥ उपकर्त्रोपकारकारिणा अरिणापि सहजेन । प्राकृतेन चेति शेषः । सन्धिः कार्यः । अरित्वापवादेन कृत्रिमामित्रताया बलीयस्या यावज्जीवभाविन्यास्तत्रोत्पन्नत्वादिति भावः । एवमपकारिणा मित्रेणापि । सहजेन प्राकृतेन वेति शेषः । सन्धिर्न कार्यः । मित्रत्वापवादेन कृत्रिमशत्रुताया बलीयस्या यावज्जीवभाविन्यास्तत्रोत्पन्नत्वादिति भावः । ननु साक्षादरिणा सन्दध्यात् मित्रेण कथं विरुन्ध्यादित्याशङ्क्य क्रियया तयोर्वैपरीत्याददोष इत्याह—हि यस्मादुपकारापकारावेव तयोर्मित्रामित्रयोर्लक्षणं स्वरूपं लक्ष्यं द्रष्टव्यम् । उपकर्तैव मित्रम् अपकर्तैव शत्रुरित्यर्थः । तस्मात्सहजामित्रत्वेऽपि चैद्यः क्रियया शत्रुत्वाद्यातव्य एवेति भावः ॥ ३७ ॥

एवं सामान्येनैतदभिधाय प्रकृते चैद्यस्य कृत्रिमशत्रुत्वं दर्शयन्नाह—

**त्वया विप्रकृतश्चैद्यो रुक्मिणीं हरता हरे ! ॥**
**बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ॥ ३८ ॥**

**त्वयेति** ॥ हे हरे ! त्वया चैद्यः शिशुपालो विप्रकृतः पराभूतः, किं कुर्वता रुक्मिणीं हरता पित्रा तस्मै दत्ता त्वया हृतवता । रुक्मिण्या विष्णोः पुरस्तादिति कथापितम्—यदहं रुक्मराज्ञो गृहे रुक्मिणीरूपेण लक्ष्मीरवतीर्णास्मि । यदि मां कोऽप्यन्यः परिणेष्यति तदहं तदुपरि आत्मघातं करिष्यामि । ततोऽनन्तरं विष्णुना बलभद्रेण च तत्र गत्वा चैद्याय प्रदत्ता सती आहूता इति वार्ता । अथ यदि नाम कन्याऽपहृता त्वया, न दोष इत्याह—हि यस्मात्कारणात् वैरतरोर्विरोधपादपस्य स्त्रियो महन्मूलं दृढकारणम् । चतुर्विंशतिसहस्रं रामायणं सपादलक्षं श्रीमहाभारतं स्त्रीतः सञ्जातम् । किंभूतस्य वैरतरोः बद्धमूलस्य दृढप्रतिष्ठस्य । स्त्रीभिर्मूलभूताभिर्बद्धं महद्वैरमित्यर्थः । बद्धमूलस्य कारणान्तरेण लब्धप्रतिष्ठस्य वैरतरोर्नार्यो महन्मूलं प्रधानं कारणमिति त्वन्ये । वैरं समूलत्वात्तरुरिव, उपमितसमासः ॥ ३८ ॥

अथ चैद्यस्य कृत्रिमशत्रुत्वं चतुर्भिराह—

**त्वयेति** ॥ हे हरे ! रुक्मिणीं हरता । बन्धुभिस्तस्मै प्रदत्तां राक्षसधर्मेणोद्वहतेत्यर्थः । 'राक्षसो युद्धहरणात्' इति याज्ञवल्क्यः । 'गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ' इति मनुः । त्वया चैद्यो विप्रकृतः विप्रियं प्रापितः । तथा हि बद्धमूलस्य रूढमूलस्य वैरतरोः स्त्रियो महत्प्रधानं मूलम् । हि निश्चये । रूपकसंसृष्टोऽयं सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३८ ॥

तदेतेन त्वया स बाधित इत्युक्तम्, इदानीं तेनाप्युपद्रुतस्त्वमिति दर्शयन्नाह—

**त्वयि भौमं गते जेतुमरौत्सीत्स पुरीमिमाम् ॥**
**प्रोषितार्यमणं मेरोरन्धकारस्तटीमिव ॥ ३९ ॥**

त्वयीति ॥ हे कृष्ण ! स सिशुपालः इमां पुरीं द्वारावतीमरौत्सीत् अवेष्टयत्, क सति त्वयि भौमं नरकासुरं जेतुं गते सति । यतो लब्धावसरोऽयम् । क इव अन्धकार-इव । यथान्धकारो मेरोः कनकशिखरिणः तटीं रुणद्धि, कथंभूतां तटीं प्रोषितार्यमणमस्त-मितसूर्यम् । शौरेः सूर्य उपमानं, चैद्यस्य ध्वान्तं, पुरः उत्कृष्टत्वात् मेरुतटी । प्रोषितो-ऽस्तमितोऽर्यमा रविर्यस्या असौ प्रोषितार्यमा । 'अनो बहुव्रीहे'रि ति ङीबभावः । 'सा'विति नियमाद्दीर्घाभावः ॥ ३९ ॥

अथ तेनापि त्वं विप्रकृत इत्याह—

त्वयीति ॥ त्वयि भूमेरपत्यं पुमांसं भौमं नरकासुरं जेतुं गते सति स चैद्य इमां पुरीं द्वारकां प्रोषितोऽर्यमा सूर्यो यस्यास्तां मेरोस्तटीं सानुमन्धकार इवारौत्सीत् रुद्धवान् । रुधेरनिटो लुङि सिचि वृद्धिः । उपमालङ्कारः ॥ ३९ ॥

क्रोधोद्दीपनार्थमपराधान् स्मारयन्नाह—

**आलप्याऽलमिदं बभ्रोर्यत्स दारानपाहरत् ॥**
**कथाऽपि खलु पापानामलमश्रेयसे यतः ॥ ४० ॥**

आलप्येति ॥ हे कृष्ण ! स चैद्यो बभ्रोर्विष्णुवंश्यस्य दारान् कलत्रमपाहरत् जहार, इदं दारापहरणमालप्य अलं पूर्यताम् उक्त्वा न वक्तव्यम् । 'अलं खल्वो'रिति क्त्वा । यतः कारणात् खलु निश्चयेन पापानां दुरात्मनां दर्शनसहवासादिकमास्तां, कथापि कीर्तनमपि अश्रेयसे अकल्याणायाऽशुभाय अलं समर्था । अश्रेयसे अलमिति 'नमःस्वस्ति'इत्यादिना चतुर्थी । खलु वाक्यालङ्कारे ॥ ४० ॥

अपकारान्तरमाह—

आलप्येति ॥ स चैद्यो बभ्रोर्यादवभेदस्य दारान्भार्याम् ! 'भार्या जायाऽथ पुंभूम्नि दाराः स्यात्तु कुटु-म्बिनी' इत्यमरः । अपाहरदिति यदिदं दारापहरणं आलप्योच्चार्याऽलम् । अनालपनीयमित्यर्थः । 'अलंख-ल्वोः प्रतिषेधयोः प्राचां क्त्वा' इति क्त्वाप्रत्यये समासे ल्यबादेशः । यतः पापानां पाप्मनां कथनमुच्चारण-मपि । 'चिन्तिपूजिकथिकुम्बि' इत्यङ्प्रत्ययः । अश्रेयसेऽनर्थायालं समर्थं खलु । 'नमःस्वस्ति–' इत्यादिना चतुर्थी । अत्र निषिध्यमानालपननिषेधनसमर्थनात्कार्येण कारणसमर्थकोऽर्थान्तरन्यासः ॥ ४० ॥

कृत्रिमत्वमथोपसंहरन्नाह—

**विराद्ध एवं भवता विराद्धा बहुधा च नः ॥**
**निर्वर्त्यतेऽरिः क्रियया स श्रुतश्रवसः सुतः ॥ ४१ ॥**

विराद्ध इति ॥ हे कृष्ण ! स श्रुतश्रवसः सुतः सात्वतीसूनुः क्रियया अरिर्निर्वर्त्यते क्रियानिर्वृत्तः शत्रुः कृत्रिमशत्रुः सम्पद्यते, न सहजः प्राकृतो वा । तेनाऽऽस्कन्द्य इति भावः । कथंभूतः एवं पूर्वोक्तप्रकारेण भवता त्वया विराद्ध उपद्रुतः रुक्मिणीहरणात् । अपरं च पुनः सोऽपि नः अस्माकं बहुधा विराद्धा द्रोग्धा अनेकप्रकारेण विरोधयिता । आत्मनस्तु सापराधः अत एव सोढुं न युक्तम् । विराद्ध इति क्तान्तः, विराद्धा तृजन्तः । श्रुतश्रवा दमघोषगृहिणी ॥ ४१ ॥

फलितमाह—

**विराद्ध इति** ॥ एवं भवता विराद्धो विप्रकृतः । राधेरनिटः कर्मणि क्तः । बहुधा नोऽस्माकं च विराद्धा विप्रकर्ता, श्रुतश्रवा नाम हरेः पितृष्वसा तस्याः सुतः । पैतृष्वसेयत्वात्सहजामित्रमपीति भावः । स चैद्यः क्रियया पूर्वोक्तान्योन्यापक्रियया अरिर्निर्वर्त्यते कृत्रिमः शत्रुः क्रियते । अतो बलीयस्त्वादनुपेक्ष्य इति भावः ॥४१॥

**एवमपि च तुल्येऽपराधे तस्यैवास्माकमपि नोद्यमो युक्त इत्याह—**

**विधाय वैरं सामर्षे नरोऽरौ य उदासते ॥**
**प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥ ४२ ॥**

**विधायेति ॥ हे कृष्ण ! ये नरः सामर्षे सक्रोधे अरौ शत्रौ वैरं विधाय उदासते उदासीना भवन्ति निरुद्यमाः तिष्ठन्ति ते पुरुषा अभिमारुतं वाताभिमुखं वातमभिलक्षीकृत्य कक्षे तृणसमूहे उदर्चिषं जाज्वल्यमानमग्निं प्रक्षिप्य शेरते शयनं कुर्वन्ति । कक्षे अग्निं प्रज्वाल्य स्वपनं यथा स्वविनाशाय, एवं निःक्रियस्य बलवद्विरोध इत्यर्थः ॥४२॥**

अत्राप्युपेक्षायां दोषमाह—

**विधायेति** ॥ ये नरः पुमांसः । 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः' **इत्यमरः** । सामर्षे प्रागेव सरोषेऽरौ वैरं विधाय । स्वयं चाऽपकृत्येत्यर्थः । उदासते उपेक्षन्ते ते नरः कक्षे गुल्मे । 'कक्षस्तु गुल्मे दोर्मूले पापे जीर्णवने तृणे' इति **वैजयन्ती** । उदर्चिषमधिकज्वालमग्निं प्रक्षिप्य अभिमारुतम् । आभिमुख्येऽव्ययीभावः । शेरते स्वपन्ति । तद्वन्नाशहेतुरित्यर्थः । 'शीङो रुट्' इति रुडागमः । अत्र ये उदासते ते शेरते इति विशिष्टौदासीन्यशयनयोर्वाक्यार्थयोर्निर्दिष्टैकत्वासम्भवात्सादृश्यलक्षणायामसम्भवद्वस्तुसम्बन्धो वाक्यार्थनिर्वृत्तिरिति निदर्शनाभेदः । न चायं दृष्टान्तः । वाक्यभेदेन प्रतिबिम्बकारणाक्षेपे तस्योत्थानात् । अत्र तु वाक्यार्थे वाक्यार्थसमारोपाद्वाक्यैकवाक्यतायां तदभाव इत्यलङ्कारसर्वस्वकारः ॥ ४२ ॥

**किञ्च तस्य पौनःपुन्येन अत्यर्थमपराधित्वादुच्छेद्यत्वं दर्शयन्नाह—**

**मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी ॥**
**क्रियासमभिहारेण विराध्यन्तं क्षमेत कः ॥ ४३ ॥**

**मनागिति ॥ हे कृष्ण ! यः पुमान् क्षमी क्षमावान् स मनाक् ईषद् वा अनभ्यावृत्त्या अपौनःपुन्येन विराध्यन्तं द्रुह्यन्तं पुमांसं काममित्यनुमतौ क्षाम्यतु सहताम् । तस्य तत्सहनमनुमन्यत इत्यर्थः । पुनः क्रियासमभिहारेण क्रियाभ्यावृत्त्या पौनःपुन्येन भृशं वा विराध्यन्तमपकुर्वन्तं कः पुमान् क्षमेत सहेत । अपि तु न कोऽपीत्यर्थः । तव चासौ क्रियासमभिहारेणापराध्यति,तस्मान्नक्षम्यत इति भावः । पौनःपुन्यं भृशार्थता वा क्रियासमभिहारः। काममित्यनुमतौ । क्षमीति शमित्यष्टाभ्यो घिनुण् । क्रियाग्रहणमत्राधिकप्रायम् ॥ ४३ ॥**

तथापि बान्धवत्वात्सोढव्य इत्याशङ्क्याह—

**मनागिति** ॥ यः क्षमी सहनः । 'शमित्यष्टाभ्यो घिनुण्' इति घिनुण्प्रत्ययः । स सोढा मनागल्पम् । अभ्यावृत्तावपीति भावः । अनभ्यावृत्त्या सकृद्वा । अनल्पत्वेऽपीति भावः । विराध्यन्तमपकुर्वाणं कामं भृशं क्षाम्यतु क्षमताम् । सम्भावनायां लोट् । शमामष्टानां दीर्घः श्यनि । क्रियासमभिहारेण भृशं पौनःपुन्येन चेत्यर्थः । न च पुंवाक्येष्वनेकार्थत्वं दोषाय । विराध्यन्तं कः क्षमेत सहेत सोढुं शक्नुयात् । न कोऽपीत्यर्थः । 'शकि लिङ्—' इति शक्यार्थे लिङ् । 'क्षमू सहने' दैवादिको भौवादिकश्च ॥ ४३ ॥

**स्यादेतत्, यद्यपि सापराधः तथापि क्षमास्थानं भविष्यतीत्याह—**

**अन्यदा भूषणं पुंसः शमो(१) लज्जेव योषितः ॥**
**पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥ ४४ ॥**

---

(१) क्षमा ।

अन्यदेति ॥ पुंसः पुरुषस्य अन्यदा परपरिभवाभावे सति शमो भूषणं क्षमैव मण्डनम् । अपरं शत्रूणां परिभवे सति पराक्रमो भूषणं पौरुषमाभरणम् । कस्या इव योषित इव केष्विव सुरतेष्विव । यथा योषितः स्त्रियः अन्यदा गुरुजनसन्निधौ लज्जा भूषणम् । अपरं सुरतेषु वैयात्यं भूषणं संभोगकालेषु धृष्टता निर्लज्जत्वं भूषणम् । तादृशे क्षन्तव्यं येनापराधोऽपि कृतो न परिभव इत्यर्थः । भूषणशब्द आविष्टलिङ्गः सामान्यशब्दोऽभेदान्नात्र भिन्नलिङ्गानामौपम्यं दोषायेति रुद्रटः । वियातो धृष्ट उच्यते ॥ ४४ ॥

ननु सर्वदा क्षमैव पुंसो भूषणम्, अतोऽपराधेऽपि क्षन्तव्यमत आह—

अन्यदेति ॥ अन्यदा सुरतव्यतिरिक्ते काले योषितो लज्जेव पुंसोऽन्यदा अपरिभवे क्षमा शमो भूषणम् । परिभवे तु योषितः सुरतेषु वैयात्यं धार्ष्ट्यमिव । 'धृष्टे धृष्णुर्वियातश्च' इत्यमरः । पराक्रमः पौरुषं भूष्यतेऽनेनेति भूषणमाभरणम् । एवं चाक्रियावचनत्वान्नियतलिङ्गत्वाद्विरोध इति वल्लभोक्तं प्रत्युक्तम् ॥ ४४ ॥

अमुमेवार्थं श्लोकत्रयेण पोषयितुमाह—

**मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति ॥**
**तस्याऽजननिरेवास्तु जननीक्लेशकारिणः ॥ ४५ ॥**

मा जीवन्निति ॥ यः परावज्ञादुःखदग्धोऽपि जीवति स मा जीवन् । परावज्ञा रिपुपरिभवः स एव दुःखं तेन दग्धः सन्तापितो जीवति स म्रियताम् । माङ्योगे त्वाक्रोशे शतृ । असम्बद्धानिहितं (?) मा जीवन्निति । तस्याऽजननिरेव अजन्मैव अस्तु भवतु । मैवाऽसावुत्पादीदित्यर्थः । कथंभूतस्य जननीक्लेशकारिणः । मातृप्रसवदुःखं वर्जयित्वाऽन्यन्न किञ्चित्तस्योत्पत्तौ फलमित्यर्थः । उक्तं च—

दाने तपसि शौर्ये च यस्य न प्रथितं यशः ।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥ ४९ ॥

अथ परिभवेऽप्यपराक्रमे त्रिभिर्निन्दामाह -

मा जीवन्निति ॥ यः परस्यापकर्तुरवज्ञया अवमानेन यद् दुःखं तेन दग्धस्ततोऽत एव मा जीवन्गर्हितजीवी सन् । 'माङ्याक्रोशे' इति लटः शत्रादेशः । जीवति प्राणान्धारयति । जनन्याः क्लेशकारिणो गर्भधारणप्रसवादिवेदनाकारिणः । तद्व्यतिरिक्तार्थक्रियाहीनस्येत्यर्थः । तस्या अजननमजननिरनुत्पत्तिरेवास्तु । जननीक्लेशनिवृत्त्यर्थमिति भावः । 'आक्रोशे नञ्यनिः' इति नञ्पूर्वाज्जनिधातोरनिप्रत्ययः ॥ ४५ ॥

**पादाहतं यदुत्थाय मूर्धानमधिरोहति ॥**
**स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥ ४६ ॥**

पादेति ॥ अपमानेऽपि स्वस्थात् निश्चिन्तात् शत्रुभवात्परिभवात्सुखिनो देहिनः पुंसः पार्श्वात् तत् रज एव वरं धूलिरपि श्रेष्ठा । तत्किं रजः यद्रजः पादाहतं चरणाक्रान्तं सत् उत्थाय मूर्धानमधिरोहति अतिक्रामति । यदुक्तमाङ्घ्र्याक्रान्त्या शतगुणं भवति तद्रजो निश्चेतनमपि पराभवं न सहते इति वाक्यार्थः । एवकारो भिन्नक्रमः, असहनं तत् रज एव वरमिति ॥ ४६ ॥

पादेति ॥ यद्रजो धूलिः पादेनाहतं सदुत्थायोड्डीय मूर्धानमाहन्तुरेव शिरोऽधिरोहत्याक्रमति तद्रजः । अचेतनमपीति भावः । अपमाने सत्यपि स्वस्थात्सन्तुष्टाद्देहिनश्चेतनाद्वरं श्रेष्ठम् । व्यतिरेकालङ्कारः ॥ ४६ ॥

**असम्पादयतः कञ्चिदर्थं जातिक्रियागुणैः ॥**
**यदृच्छाशब्दवत्पुंसः संज्ञायै जन्म केवलम् ॥ ४७ ॥**

असम्पादयत इति ॥ तस्य पुंसः पुरुषस्य जन्म केवलं संज्ञायै देवदत्तादिनामकरणायैव । निरर्थकमित्यर्थः । किं कुर्वतः जातिक्रियागुणैः कञ्चिदर्थमसम्पादयतः अनिष्पादयतः । जात्या ब्राह्मणादिकया, क्रियया अध्ययनादिकया गुणेन शौर्यादिकेन न किञ्चित्प्रयोजनं निष्पादयतः । स नाममात्रेणैव पुरुष उच्यते इत्यर्थः । किंवत् यदृच्छाशब्दवत् । यदृच्छाशब्दस्य डित्थडवित्थरूढशब्दस्य उत्पत्तिः केवलं संज्ञायै । सोऽपि जातिक्रियागुणैः गोपाचकशौक्ल्यशब्दवत् कञ्चिदर्थं न साधयति । संज्ञा तस्य केवलं प्रवृत्तिनिमितम् । शब्दानां हि प्रवृत्तिश्चतुष्टयी चतुःप्रकारा, द्रव्यजातिक्रियागुणमयीत्यर्थः ॥ ४७ ॥

असम्पादयत इति ॥ किञ्च जातिर्ब्राह्मणत्वादिः, क्रिया इज्याध्ययनादिः, गुणः शौर्यादिः, तैः साधनैः । करणे तृतीया । कञ्चिदर्थं सुकृतकीर्त्यादिपौरुषार्थम्, अन्यत्र गोत्वपाचकत्वशौक्ल्यादिभिः स्वाभिधेयभूतैः करणैः कञ्चिदर्थं व्यवहाररूपं प्रयोजनमसम्पादयतः । उभयत्र तादृग्जात्याद्यसम्भवादिति भावः । पुंसो जन्म सत्तालाभः यदृच्छाशब्दवत् इच्छाप्रकल्पितस्य जात्यादिप्रवृत्तिनिमित्तशून्यस्य डित्थादिशब्दस्येव । 'तत्र तस्येव' इति वतिप्रत्ययः । 'स्वेच्छा यदृच्छा स्वच्छन्दः स्वैरता चेति ते समाः' इति केशवः । संज्ञायै केवलं संज्ञार्थमेव । एकत्र पारिभाषिकं किञ्चिन्नाममात्रमनुभावितुम्, अन्यत्र तादृङ्नामनुभवितुमित्यर्थः ॥ ४७ ॥

तदेतेन निरीहत्वं निरस्तमधुना तेजस्वित्वमाह—

**तुङ्गत्वमितरा नाद्रौ नेदं सिन्धावगाधता ॥**
**अलङ्घनीयताहेतुरुभयं तन्मनस्विनि ॥ ४८ ॥**

तुङ्गत्वमिति ॥ मनस्विनि पुरुषे गुरुकार्योद्वहनसमर्थे पुंसि तदुभयं द्वयमेवास्ति । किंभूतमुभयम् अलङ्घनीयताहेतुः अनाक्रमणीयताकारणम् । स्थावररूपेषु गिरिसमुद्रप्रभृतिषु तदेकैकमप्यस्तीत्याह तावत्–अद्रौ पर्वते तुङ्गत्वमुच्चैस्तरत्वमलङ्घनीयताहेतुः । एकमेव औन्नत्यमस्ति इत्यर्थः । न तु इतरा अगाधता । तथा सिन्धौ समुद्रे अगाधता गाम्भीर्यमलङ्घनीयताहेतुः न तुङ्गत्वम् । मनस्विनि पुनरुभयमपि बोद्धव्यम् ॥ ४८ ॥

एवमपौरुषं दूषयित्वा पौरुषं भूषयति—

तुङ्गत्वमिति ॥ अद्रौ पर्वते तुङ्गत्वम् । औन्नत्यमस्तीति शेषः । अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीत्यादिभाष्यात् । भवन्तीति पूर्वाचार्याणां लटः संज्ञा । इतराऽगाधता नास्ति । सिन्धौ समुद्रेऽगाधता गम्भीरताऽस्ति, इदं तुङ्गत्वं नास्ति । मनस्विनि वीरे त्वलङ्घनीयताहेतुरलङ्घ्यत्वकारणं तदुभयं तुङ्गत्वमगाधता च । तस्मादद्रिसिन्धुभ्यामधिको मनस्वीति व्यतिरेकालङ्कारः ॥ ४८ ॥

भूयोऽपि अन्वयव्यतिरेकाभ्यां तेजस्वितायाः गुणवत्तामाह—

**तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् ॥**
**हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥ ४९ ॥**

तुल्ये इति ॥ हे कृष्ण ! यत् स्वर्भानुः सैंहिकेयः तुल्येऽपराधेऽपि समानेऽप्यागसि भानुमन्तं श्रीसूर्यं चिरेण ग्रसते कवलयति, चिरकालेन विरलमेव सूर्यग्रहणं भवति । अपरं हिमांशुं चन्द्रमसमाशु शीघ्रं ग्रसते निरन्तरमेव कवलयति, तत्स्फुटं निश्चितं म्रदिम्नः फलं मार्दवस्य विपाकः मृदुतायाः स गुणः । यदि शीतरश्मिस्तीक्ष्णोऽभविष्यत् तद्रविमिव तमपि चिरेणाऽभ्रपिशाचो निरगरिष्यत् । अमृतविभागकाले देवरूपी राहुरर्केन्दुभ्यां मुरमथनाय विष्णवे कथितस्ततस्तेनाऽनिगीर्णामृतस्यैव तस्य शिरः कृत्तमित्युभयोस्तुल्योऽपराधः । 'तदादि वाऽसौ वैरेण तौ निजेगिल्यते' इत्यागमः ॥ ४९ ॥

सम्प्रति शत्रौ मार्दवमनर्थायेत्याह—

तुल्ये इति ॥ स्वर्भानू राहुरपराधे तुल्येऽपि भानुमन्तं सूर्यं चिरेण ग्रसते, हिमांशुं चन्द्रमाशु शीघ्रं ग्रसते गिलतीति यत् । 'ग्रसितं गिलितं गीर्णम्' इत्यभिधानात् । तस्मादिम्नो मार्दवस्य फलं स्फुटम् । 'पृथ्वादिभ्य इमनिच्' इतीमनिच्प्रत्ययः । तस्माद्विपक्षे तीव्रेण भवितव्यम्, अन्यथा मृदुः सर्वत्र बाध्यते इति भावः । एतच्च प्रस्तुतमप्रस्तुतार्केन्दुकथनेन सारूप्यात्प्रतीयते इत्यप्रस्तुतप्रशंसाभेदोऽयम् ॥४९॥

'अप्रस्तुतस्य कथनात्प्रस्तुतं यत्र गम्यते ।
अप्रस्तुतप्रशंसेयं सारूप्याद्विनियन्त्रिता' ॥

इति लक्षणात् ॥ ४९ ॥

स्यादेतदेवमपि सन्धिर्वरं, युद्धस्य संशयविनाशादिदोषदुष्टत्वादित्याह—

**स्वयं प्रणमतेऽल्पेऽपि परवायावुपेयुषि ॥**
**निदर्शनमसाराणां लघुर्बहुतृणं नरः ॥ ५० ॥**

**स्वयमिति ॥ यो नरः स्वल्पेऽपि परवायौ रिपुप्रभञ्जने उपेयुषि आगते सति स्वयमात्मनैव प्रणमते प्रार्थनां विना प्रह्वो भवति सन्धिं करोति, स पुरुषोऽसाराणां भीरूणां तुच्छतया निदर्शनं दृष्टान्तः । कीदृशः लघुः अतितुच्छः दीनः । अत एव कीदृशः बहुतृणम् । स्वभावात्तृणतुल्य इत्यर्थः । तृणादूनो बहुतृणम् । ईषदपरिसमाप्तं तृणमिति बहुच् प्रकृतिलिङ्गकः । तृणमपि लघुत्वान्मदवायुयोगात् नम्रं भवति । असाराणां वा अकठिनानां निदर्शनम् । परः शत्रुरेव वायुरुपरि आगमनात्, परवायुः रिपुवातः । तृणादूने बहुच् स च पूर्वश्च । प्रणमते इति कर्मवद्भावेन आत्मनेपदं यक् तु 'न दुहस्नुनमा'-मिति निषिद्धः ॥ ५० ॥**

एतदेव भङ्ग्यन्तरेणाह—

**स्वयमिति** ॥ असाराणां दुर्बलानां निदर्शनं दृष्टान्तः । अत एव ईषदसमाप्तं तृणं बहुतृणम् । तृणकल्पमित्यर्थः । 'विभाषा सुपो बहुच्पुरस्तात्—' इति बहुच्प्रत्ययः प्रकृतेः पूर्वं च भवति । 'स्यादीषदसमाप्तौ तु बहुच्प्रकृतिलिङ्गके' इति वचनात्प्रकृतिलिङ्गता । लघुर्निष्पौरुषो नरोऽल्पेऽपि, परो वायुरिवेत्युपमितसमासः । बहुतृणमिति । स्पष्टोपमासाहचर्यात्कल्पब्देश्यदेशीयदेश्यादीति **दण्डिना** कल्पबादीनामौपम्यवाचकेष्वभिधानात् । तस्मिन्नुपेयुषि प्राप्ते सति स्वयं प्रणमते स्वयमेव प्रह्वीभवति । 'कर्मवत्कर्मणा तुल्यक्रियः' इति कर्मवद्भावात् 'भावकर्मणोः' इत्यात्मनेपदम् । न दुहस्नुनमां यक्चिणौ' इति यक्प्रतिषेधः । वायुना तृणमिवाल्पीयसापि रिपुणा लघुरक्लेशेन परिभूयत इत्यर्थः । उपमालङ्कारः ॥ ५० ॥

भूयोऽपि तेजोमहिमानमाह—

**तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते ॥**
**पञ्चमः पञ्चतपसस्तपनो जातवेदसाम् ॥ ५१ ॥**

**तेजस्वीति ॥ तेजस्वी तेजोऽधिको दवीयानपि दूरतरोऽपि तेजस्विगणनायां प्रस्तुतायां तेजस्विमध्ये गण्यते संख्यायते । दूरस्थादपि ततो भीयत इत्यर्थः । दृष्टान्तमाह—यथा पञ्चतपसो मुनिविशेषस्य चतुर्णां जातवेदसां मध्ये पञ्चमोऽग्निः तपनः सूर्यो दूरस्थोऽपि आकाशस्थोऽपि गण्यते । तस्मात्तेज आश्रयितव्यं न मार्दवम् । पञ्चाग्निकं नाम तपो भवति । यस्तु ग्रीष्मकाले चतुर्षु अग्निषु मध्ये उपरि च आदित्ये चरति स पञ्चतपा उच्यते । प्रकृष्टो दूरः दवीयान्, गुणादिष्ठेयसू, ईयसुन् । 'स्थूलदूर'त्यादिना अन्तस्थरेफलोपो गुणश्च ॥ ५१ ॥**

पुनः पौरुषे गुणमाह—

**तेजस्वीति** ॥ दवीयानपि दूरस्थोऽपि । 'स्थूलदूर–' इत्यादिना पूर्वगुणयणादिपरलोपौ । तेजस्वी तेजस्विनां मध्ये गण्यते संख्यायते । तथा हि–पञ्चाग्निसाध्यं तपो यस्य स तथा तस्य पञ्चतपसः पञ्चाग्निमध्ये तपस्यतः तपनोऽर्को जातवेदसामग्नीनां पञ्चमः पञ्चानां पूरणः । पञ्चमो जातवेदा भवतीत्यर्थः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५१ ॥

किञ्च यो यः शूरस्तस्य मार्दवेन यश एव न भवतीति दर्शयितुमाह—

**अकृत्वा हेलया पादमुच्चैर्मूर्धसु विद्विषाम् ॥**
**कथंकारमनालम्बा कीर्तिर्द्यामधिरोहति ॥ ५२ ॥**

**अकृत्वेति** ॥ कीर्तिः कथंकारं किंकृत्वा केन कारणेन द्यां स्वर्गमधिरोहति, कथंभूता कीर्तिः अनालम्बा निरालम्बा । किं कृत्वा उच्चैरुन्नतेषु शत्रूणां मस्तकेषु हेलया अनायासेन लीलया पादमकृत्वा । यो हि कुत्राप्यधिरोहति स आलम्बनभूतेषु सोपानेषु पदं विधत्ते । शत्रवो हि यदि बलान्नाभिभूयन्ते ततो दुर्लभं यश इति वाक्यार्थः । अत्र च कीर्तिकीर्तिमतोरभेदविवक्षायां कीर्तिमत्पुरुषस्य व्यापारारोपणात् समानकर्तृत्वसद्भावः । कथंकारमिति 'अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चे'दिति णमुल् । दिवासमानार्थो द्योशब्दोऽपि विद्यते, तस्यैव 'औतोऽम्शसो'रित्याकारे एकादेशे कृते द्यामिति भवति ॥ ५२ ॥

गुणान्तरं च व्यतिरेकेणाह–

**अकृत्वेति** ॥ उच्चैरुन्नतेषु विद्विषां मूर्धसु हेलया पादमकृत्वा अनिधाय । 'अनञ्पूर्वे' इति निषेधात्समासेऽपि न ल्यबादेशः । कीर्तिः कथंकारम् । कथमित्यर्थः । 'अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्' इत्यनर्थकादेव करोतेः कथंपूर्वाण्णमुल् । अनालम्बा निराधारा कीर्तिर्द्यां दिवमधिरोहति । न कथञ्चिदित्यर्थः । किञ्चिन्निःश्रेण्यादिकमनाक्रम्य उच्चसौधस्य दुरारोहत्वादिति भावः । तस्मात्कीर्तिमिच्छता पौरुषमेवाश्रयणीयमिति श्लोकतात्पर्यम् । कीर्तितद्वतोरभेदोपचारात्समानकर्तृतानिर्वाहः । अत्र प्रस्तुतायाः कीर्तेर्विषयमहिम्ना अप्रस्तुतप्रासादारोहणकर्तृव्यवहारप्रतीतेः समासोक्तिः ॥ ५२ ॥

किञ्च शत्रूणां यथा बलादाक्रमणं श्रेयो न तथा सन्धिरिति दर्शयितुमाह—

**अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः ॥**
**केसरी निष्ठुरक्षिप्तमृगपूगो(१)मृगाधिपः ॥ ५३ ॥**

**अङ्केति** ॥ हे कृष्ण ! चन्द्रमा अङ्काधिरोपितमृगः सन् मृगलाञ्छन उच्यते । सम्पर्कात् शश एव तस्य मलं सम्पन्नमित्यर्थः । अपरं केसरी सिंहो मृगाधिप उच्यते । तर्हि स मृगान् पालयते, कीदृशः निष्ठुरक्षिप्तमृगपूगः सक्रोधं मृगपूगं क्षिपति क्षिणोति वा सः निर्दयहतहरिणसमूहः । तदेतदुक्तं भवति–यदि त्वं चैद्येन सह सन्धत्से तत्ते लोके कीर्तिर्नश्यति यतः समूलभूतः । अथ तं क्षिपसि तत्सुप्रभुरुच्यसे । अत्र शशिमृगराजौ निदर्शनम् ॥ ५३ ॥

पौरुषमेवाश्रयणीयमित्यत्रान्वयव्यतिरेकदृष्टान्तावाचष्टे—

**अङ्केति** ॥ अङ्कमुत्सङ्गमधिरोपितो मृगो येन स चन्द्रमाः मृगलाञ्छनः मृगाङ्कः । तथा निष्ठुरं यथा तथा क्षिप्तो हतो मृगयूथो मृगसमूहो येन स केसरी सिंहो मृगाधिपः । उभयत्रापि ख्यात इति शेषः । तस्माच्छत्रौ मार्दवं दुष्कीर्तये, पौरुषं तु कीर्तये इति भावः । अत्राप्रस्तुतकथनात्प्रस्तुतार्थप्रतीतेरप्रस्तुतप्रशंसा ॥ ५३ ॥

---

(१) यूथो ।

आस्तां तर्हि सन्धिस्तथाऽपि पूर्वं पूर्वोपायप्रयोगो युक्त इत्याशङ्कामसहमान आह—

**चतुर्थोपायसाध्ये तु शत्रौ(१) सान्त्वमपक्रिया ॥**

**स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति ॥ ५४ ॥**

**चतुर्थोपायेति** ॥ तु पुनश्चतुर्थोपायसाध्ये दण्डवशे शत्रौ विषये सान्त्वं सामवादः अपक्रिया अपायः अपकारः । अद एव द्रढयति-यतः कारणात् कः प्राज्ञः पुरुषः आमज्वरमपक्वज्वरं तरुणज्वरमम्भसा पानीयेन परिषिञ्चति, अपि तु न कोऽपि । कथंभूतं स्वेद्यं स्वेदार्हमुष्णोपचारसाध्यम् । शीतोपचारस्तस्यापक्रियेत्यर्थः । स्वेद्यमिति अर्हे कृत्यतृचश्च। आम इति 'अम रोग' इत्यस्य णिचि सिद्धिः, मित्त्वं च 'न कम्यमिचमा'मिति वचनान्न भवति । पचाद्यच् ॥ ५४ ॥

ननु सामादि सुकरोपायमपेक्ष्य किं पाक्षिकसिद्धिना दण्डेन । यथाह मनुः—

'साम्ना भेदेन दानेन समस्तैरुत वा पृथक् ।
विजेतुं प्रयतेतारीन्न युद्धेन कदाचन' ॥

इति । तस्मात्सान्त्वमेव युक्तमित्याशङ्क्य द्वाभ्यां निराचष्टे--

**चतुर्थोपायेति** ॥ चतुर्थोपायसाध्ये दण्डसाध्ये रिपौ सान्त्वं साम । 'साम सान्त्वमुभे समे' इत्यमरः । अपक्रियापकारः । तथा हि—स्वेद्यं स्वेदार्हम् । स्वेदनकार्यमित्यर्थः । 'स्वेदस्तु स्वेदने धर्मे' इति विश्वः । आमज्वरमपक्वज्वरं प्राप्य । 'आमो रोगे रोगभेदे आमोऽपक्वे तु वाच्यवत्' इति विश्वः । कः प्राज्ञः पाण्डितोऽम्भसा जलेन परिषिञ्चति । न कोऽपीत्यर्थः । ज्वरितस्याम्भःसेकवत्क्रुद्धस्य सान्त्वमुद्दीपनकरं स्यात् । अतो दण्डय एवेति भावः । वाक्यभेदेन प्रतिबिम्बकरणापेक्षो दृष्टान्तालङ्कारः ॥ ५४ ॥

किञ्च क्रियते सान्त्वं यदि स बहु मन्यते च, न तत् गृह्णातीति दर्शयितुमाह—

**सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः ॥**

**प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥ ५५ ॥**

**सामवादा इति** ॥ तस्य चैद्यस्य चतुर्थोपायसाध्यस्य शत्रोः सकोपस्य सतः सामवादाः प्रत्युत वैपरीत्येन दीपका भवन्ति कोपवर्धका न तु शान्तये । के इव तोयबिन्दव इव । यथा प्रतप्तस्य क्वथितस्य अभितप्तस्य सर्पिषो घृतस्य सहसा पाकानन्तरं वेगेन तोयबिन्दवः शीता अपि प्रत्युत दीपका भवन्ति ॥ ५५ ॥

**सामवादा इति** ॥ सकोपस्य रूढवैरस्य तस्य चैद्यस्य सामवादाः प्रियोक्तयः सहसा प्रतप्तस्य क्वथितस्य सर्पिषो घृतस्य तोयबिन्दव इव प्रत्युत वैपरीत्येन दीपकाः प्रज्वलनकारिणः । न तु शान्तिकरा इत्यर्थः । तस्माद्दण्डय एव सः । मनुवचनं त्वप्ररूढवैरविषयमिति भावः ॥ ५५ ॥

ये त्वत्र सन्धिं मन्यन्ते ते मूर्खाः परिहर्तव्या इत्युद्धवोद्देशेनाह—

**गुणानामायथातथ्यादर्थं विप्लावयन्ति ये ॥**

**अमात्यव्यञ्जना राज्ञां दूष्यास्ते शत्रुसंज्ञिताः ॥ ५६ ॥**

**गुणानामिति** ॥ ये सचिवा अमात्या गुणानां सन्धिविग्रहादीनामायथातथ्यात् असम्यक्प्रेरणात् विपर्ययेण प्रयोगात् राज्ञां प्रभूणामर्थं विप्लावयन्ति विघटयन्ति । कार्यं विनाशयन्तीत्यर्थः । तेऽमात्यव्यञ्जना अमात्या अधमा भृत्याः सचिवाः । अतश्च ते दूष्याः निन्द्याः त्यक्तव्याः । यतः शत्रुसंज्ञिताः रिपुतुल्याः । विपक्षोऽपि स्वार्थनाशं चिकी-

---

(१) रिपौ ।

र्षति । अत एव रिपुतुल्याः । अन्ये त्वमात्यव्यञ्जनमुभयवेतनमाहुः । उभयमूल्यग्राहकाः अत एव दूष्याः। शत्रुसंहितं च शत्रूणामैकार्थ्यमापन्नम् । अतश्चैवं व्याख्यायते-गुणानामायथातथ्याद्येऽर्थं विनाशयन्ति, ते उभयव्यञ्जनदूष्याः उभयवेतनलक्षणं दोषं ग्राहयितव्याः । भेद्या इत्यर्थः । यतस्ते शत्रूणां संहिता मिलिताः तत्त्वतः शत्रुसंहिताः । तस्यैव तु कार्यार्थं सेवन्ते इत्यर्थः । आयथातथ्यादिति यथातथायथापुरयोः पर्यायेण ॥ ५६ ॥

एवं स्थिते यदि केचिदुद्धवादयः प्रत्याचक्षीरंस्तान्प्रत्याह--

गुणानामिति ॥ सन्ध्यादीनां गुणानामायथातथ्यात् । तथात्वमनतिक्रम्य यथातथम् । यथायोग्यमिति यावत् । 'यथार्थे तु यथातथम्' इत्यमरः । यथार्थेऽव्ययीभावः । 'स नपुंसकम्' इति नपुंसकत्वम् । 'ह्रस्वो नपुंसके-' इति ह्रस्वत्वम् । ततो नञ्समासे अयथातथं, तस्य भावः आयथातथ्यम् । ब्राह्मणादित्वात् ष्यञ्प्रत्ययः । 'यथातथायथापुरयोः पर्यायेण' इति विकल्पान्नञ्पूर्वपदवृद्धिः । तस्मादायथातथ्यादयथायोग्यत्वात् । अन्यकालेऽन्यप्रयोगादित्यर्थः । अर्थं प्रयोजनं ये विप्लावयन्ति निघ्नन्ति । कार्यहानिं कुर्वन्तीत्यर्थः । अमात्यानां व्यञ्जनं चिह्नं येषां ते तथोक्ताः । तद्वेषधारिण इत्यर्थः । अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनः । वस्तुतस्तु शत्रुरिति संज्ञा एषां सञ्जाता शत्रुसंज्ञिताः शत्रव एव ते कूटमन्त्रिणो राज्ञां दूषयितुमर्हाः दूष्या गर्ह्याः । त्याज्या इति यावत् । 'कृत्यानां कर्तरि वा' इति कर्तरि षष्ठी । अतः स्वोक्तं न प्रतिरोद्धव्यमिति भावः ॥ ५६ ॥

स्यादेतद्यथा सन्धिरयुक्तस्तथा यात्राऽपीति तद्भवता न युक्तमुक्तमित्याह—

**स्वशक्त्युपचये केचित्परस्य व्यसनेऽपरे ॥**
**यानमाहुस्तदासीनं त्वामुत्थापयति द्वयम् ॥ ५७ ॥**

**स्वेति** ॥ इह केचिदर्थशास्त्रज्ञाः स्वशक्त्युपचये निजशक्तिसमृद्धौ सत्यां यानमाहुः यानं गमनं प्रयाणं कथयन्ति । यदा स्वशक्तेः प्रभुशक्तेः कोशदण्डलक्षणाया उपचयो वृद्धिः परस्याऽऽपद्भवति, तदा यात्रा विधेया । अपरे नीतिज्ञाः परस्य शत्रोः व्यसने आपदि यानं प्रयाणमाहुः । अन्ये त्वाहुः-शत्रोश्च व्यसनं शक्तिक्षयः स्वशक्त्यनपेक्षमेवाऽसावास्कन्द्यः । तत् द्वयं त्वामुत्थापयति उद्यमयुक्तं करोति । कीदृशं त्वाम् आसीनमालस्ययुक्तम् । निरुद्योगमित्यर्थः । एतदुभयमस्तीति भावः । आसीनमिति आसः । द्वयमिति द्वित्रिभ्यां तयस्याऽयच् ॥ ५७ ॥

ननु यातव्योऽपि काले यातव्य इत्याशङ्क्य अयमेव काल इत्याह--

स्वेति ॥ केचिद्वृद्धाः स्वस्य शक्त्युपचये सामर्थ्यातिरेके यानं यात्रामाहुः । यथाह कामन्दकः—

'प्रायेण सन्तो व्यसने रिपूणां यातव्यमित्येव समादिशन्ति ।
तथा विपक्षे व्यसनाऽनपेक्षी क्षमो द्विषन्तं मुदितः प्रतीयात्' ॥

इति । अपरे वृद्धाः परस्य शत्रोर्व्यसने विपदि । 'व्यसनं विपदि भ्रंशे' इत्यमरः । यानमाहुः । अत्र मनुः—'तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः' इति । तद् द्वयमुक्तपक्षद्वयं कर्तृ आसीनमनुद्युञ्जानम् । 'ईदासः' इति शानजाकारस्येकारादेशः । त्वामुत्थापयति प्रेरयति । तदुभयलाभादीदृक्कालो न कदापि लक्ष्यत इत्यर्थः ॥ ५७ ॥

अत्र स्वशक्त्युपचयं तावदाह—

**लिलङ्घयिषतो लोकानलङ्घ्यानलघीयसः ॥**
**यादवाम्भोनिधीन् रुन्धे वेलेव भवतः क्षमा ॥ ५८ ॥**

**लिलङ्घयिषत इति** ॥ हे कृष्ण ! भवतः क्षमा त्वदीयतितिक्षा तवालस्यं यादवाम्भोनिधीन् यादवा एव समुद्राः तान् रुन्धे पराक्रमान्निवर्तयति । कीदृशान् यादवाम्भो-

निर्धीन् लोकान् जगन्ति लिलङ्घयिषतः लङ्घयितुमिच्छतः आक्रमितुकामान्, कीदृशान् लोकान् अलङ्घ्यान् अनतिक्रमणीयान् अन्यैरजेयान्, यतोऽलघीयसः गुरुतरान् बहून्। त्वं चेदनुजानासि तदधुनैव अरयो जिता इत्यर्थः। केव रुणद्धि वेला इव। यथा वेला मर्यादा अम्भोनिधीन् समुद्रान् रोधयति। वेला प्रजापतिविहिता। कीदृशान् समुद्रान् लोकान् लिलङ्घयिषतः। पूर्ववत् विशेषणानि ॥ ५८ ॥

तत्र स्वशक्त्युपचयं तावल्लक्षयति—

**लिलङ्घयिषत इति** ॥ लोकाल्लङ्घयितुमिच्छतो लिलङ्घयिषतः। लङ्घयतेः सन्नन्ताल्लटः शतरि शप्। अलङ्घ्यान्स्वयं दुर्लङ्घ्यान्। कुतः-अलघीयसोऽतिगुरून्। अत एव यादवा अम्भोनिधय इवेत्युपमितसमासः, वेलेवेति लिङ्गात्। तान् यादवाम्भोनिधीन्भवतः क्षमा तितिक्षा वेलेव कूलमिव। 'वेला कूलेऽपि वारिधेः' इति विश्वः। रुन्धे प्रतिबध्नाति। अन्यथा प्रागेव सर्वं संहरेयुरिति भावः ॥ ५८ ॥

नायं कश्चित्तवायासो येन क्लेशभयान्नानुजानासीति दर्शयितुमाह—

**विजयस्त्वयि सेनायाः साक्षिमात्रेऽपदिश्यताम् ॥**
**फलभाजि समीक्ष्योक्ते बुद्धेर्भोग इवात्मनि ॥ ५९ ॥**

**विजय इति** ॥ सेनायाः सम्बन्धी विजयः त्वयि विषये अपदिश्यतामुद्घोष्यताम्। कृष्णो जयतीत्युच्यतामित्यर्थः। कीदृशे त्वयि साक्षिमात्रे उदासीने तथा फलभाजि, फलमाधिपत्यलक्षणं भजत इति फलभाक् तस्मिन्। एतदुक्तं भवति-त्वं केवलं वीक्षस्व यत्कर्तव्यं तदखिलं सेनैव करिष्यति। विजयश्च लोके तवैव न तु सेनायाः। तत्फलं त्वमेव भजसे न चमूः। क इव बुद्धेः सम्बन्धी भोग इव। यथा बुद्धेर्धियः सम्बन्धी भोगोऽनुभवः संसारापवर्गलक्षणः समीक्ष्योक्ते सांख्योक्ते बौद्धशास्त्रनिर्दिष्टे अपदिश्यते। तत्रा हीदं दर्शनम्—आत्मा वेदयिता बुद्धिर्वेद्या। बुद्धिर्बध्यते मुच्यते सर्वमनुभवति। आत्मा नैव बध्यते न किञ्चिदुपभुङ्क्ते। परमित्युच्यते—पुरुषो बद्धः पुरुषो मुक्तः आत्मनः सुखमात्मनो दुःखम्। इत्येवं बुद्धेर्भोगः साक्षिमात्रे दृष्टमात्रे उदासीने क्षेत्रज्ञे आत्मनि कथ्यते। एवं सेनाया विजयः त्वय्युदासीने योज्यताम्, न कश्चित्तवायासः ॥ ५९ ॥

अभ्युच्चयश्चायमपरो यदक्लेशेनैव ते विजयलाभ इत्याह—

**विजय इति** ॥ सेनायाः कर्त्र्या विजयः साक्षिमात्रे उदासीने एव फलभाजि त्वयि समीक्ष्योक्ते साङ्ख्योक्ते। 'साङ्ख्यं समीक्ष्यम्' इति त्रिकाण्डः। आत्मनि बुद्धेर्महत्तत्त्वस्य मूलप्रकृतेः प्रथमविकारस्य कर्त्र्याः भोगः सुखदुःखानुभव इवापदिश्यतां व्यवह्रियताम्। भृत्यजयपराजययोः स्वामिगम्यत्वादिति भावः। साङ्ख्या अप्याहुः 'कर्तेव भवत्युदासीन' इति, 'सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः' इति च ॥५९॥

अथ व्यसनमाह—

**हते हिडिम्बरिपुणा राज्ञि द्वैमातुरे युधि ॥**
**चिरस्य मित्रव्यसनी सुदमो दमघोषजः ॥ ६० ॥**

**हते इति** ॥ हिडिम्बरिपुणा भीमसेनेन द्वैमातुरे राज्ञि जरासन्धे युधि संग्रामे हते सति दमघोषजः शिशुपालः सुदमः साम्प्रतं सुखेन जीयते सुखसाध्योऽस्ति। सुखेन दम्यते जीयत इति सुदमः। कीदृशः चिरस्य सदैव मित्रव्यसनी जरासन्धवधदुःखमद्यापि तस्य विद्यते। द्वयोर्मात्रोरपत्यं द्वैमातुरः मातुरुत्संख्यासम्भद्रपूर्वायाः। चिरस्येत्यनेनैव एतद्दर्शयति-तस्याद्यापि न तादृशं मित्रमस्ति ॥ ६० ॥

अथ परस्य व्यसनमाह—

**हते इति** ॥ हिडिम्बारिपुणा भीमेन द्वयोर्मात्रोरपत्यं पुमान्द्विमातुरः । 'मातुरुत्संख्यासम्भद्रपूर्वायाः' इत्यण्प्रत्ययः उकारश्चान्तादेशो रेफपरः । तस्मिन्राज्ञि जरासन्धे । स हि द्वाभ्यां पत्नीभ्यामर्धशः प्रसूतो जरया नाम पिशाच्या सन्धितश्चेति कथयन्ति । युधि हते सति चिरस्य चिरकालेन । 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यमरः । मित्रव्यसनी मित्रभ्रंशवानिति यावत् । 'व्यसनं विपदि भ्रंशे' इत्यमरः । दमघोषाज्जातो दमघोषजश्चैद्यः सुखेन दम्यत इति सुदमः । एकाकित्वात्सुसाध्य इत्यर्थः ॥ ६० ॥

एवं नीत्या परमतेन यानं प्रतिपाद्य विक्रमैकरसिकतया आत्ममतेन प्रतिपादयितुमाह—

**नीतिरापदि यद्गम्यः परस्तन्मानिनो ह्रिये ॥**
**विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय सः ॥ ६१ ॥**

**नीतिरिति** ॥ हे श्रीकृष्ण ! इति नीतिः एष न्यायः—यत् परः शत्रुः आपदि गम्यः व्यसने सति हन्तव्यः, तत् मानिनः साहङ्कारस्य ह्रिये त्रपाकरणाय भवति । पुनः स रिपुः पूर्णः सन् परिपूर्णः समृद्धः सन् उत्सवाय हर्षाय भवति । कस्येव विधुन्तुदस्येव राहोरिव । विधुन्तुदस्य राहोर्विधुश्चन्द्रमाः पूर्ण एव उत्सवाय भवति न खण्डः । पूर्वार्धेऽत्र व्याख्यार्थे परामर्शकसम्बन्धापादनाय इतिशब्दोऽध्याहारार्थः, अन्यथा ह्यखण्डवाक्यमेतत् स्यात् । तत् स एव वाक्यार्थो यच्छब्देन निर्दिश्यते । नीतिशब्देन स एवोच्यते । आपदि परो गम्य इति नीतिरित्यर्थः । विधुं तुदतीति विधुन्तुदः विध्वरुषोस्तुदः अरुर्द्विषदजन्तस्य मुम् ॥ ६१ ॥

कष्टश्चायं पक्षोऽभ्युपेत्यवादेनोक्तः, वस्तुतस्तु शूराणामग्रिमपक्ष एवेष्टः शास्त्रसंवादी । यथाह कामन्दकः—

'यदा समस्तं प्रसभं निहन्तुं पराक्रमादूर्जितमप्यमित्रम् ।
तदाऽभियायादहितानि कुर्वन्नुपान्ततः कर्षणपीडनानि' ॥

इति । इत्यभिप्रेत्याह—

**नीतिरिति** ॥ परः शत्रुरापदि गम्यो गमनार्हः नीतिरिति यत् तदापदि गमनं मानिनः शौर्याभिमानिनो ह्रिये । लज्जाकरमित्यर्थः । किन्तु पूर्ण उपचितगात्रः स शत्रुस्तस्य मानिनः, विधुश्चन्द्रः विधुं तुदति हिनस्तीति विधुन्तुदो राहुः । 'विध्वरुषोस्तुदः' इति खश्प्रत्यये मुमागमः । तस्येवोत्सवाय । अत एव बलिना बलवानेन यातव्यः, बलिनश्च वयामिति भावः ॥ ६१ ॥

यद्येवं तर्हि शास्त्रोल्लङ्घनं कृतमिति निराकर्तुमाह—

**अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम् ॥**
**सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ॥ ६२ ॥**

**अन्यदिति** ॥ उच्छृङ्खलं सत्त्वं स्वतन्त्रं प्राणी पुरुषगुणो यदुच्यते तदन्यत् । यच्च शास्त्रे नियन्त्रितं स्वतन्त्रीकृतं, तदन्यदेव । एतेन कश्चित् प्राणी निरर्गलो भवति अन्यः प्राणी शास्त्रप्रयुक्तो भवति । रुचेर्भेदात् कश्चिन्नीतिमपेक्षते कश्चिन्नेत्यर्थः । अथ किमिति अन्ये भवतः उभे अपि नैकस्मिन् शास्त्रे तिष्ठतः, अत्र दृढीकरणायार्थान्तरन्यासः—हि यस्मात्कारणात् तेजस्तिमिरयोः प्रकाशतमसोः कुतः सामानाधिकरण्यं सहभावः । यथा तेजस्तिमिरे वैलक्षण्यादेकस्मिन् आधारे नावतिष्ठेते, तथा स च शास्त्रनियन्त्रितेत्यर्थः । एतेन वयं तेजोरूपा नीतिशास्त्रं न मन्यामह इति तात्पर्यम् ॥ ६२ ॥

तर्हि पूर्वोदाहृतमन्वादिशास्त्रविरोधः स्यादित्याशङ्क्याह—

**अन्यादिति** ॥ अन्यदुच्छृङ्खलमनर्गलम् । प्रसह्य पीडनक्षममिति भावः । सत्त्वं बलमन्यत् । शास्त्रेण

मन्वादिशास्त्रेण नियन्त्रितमुदाहृतं परव्यसनकाले निर्मितं सत्त्वमन्यत् । उत्कटानुत्कटलक्षणवैलक्षण्यमन्यशब्दार्थः । तयोः सापेक्षत्वनिरपेक्षत्वाभ्यां मिथो विरोधान्नैकशास्त्रत्वं सम्भवतीत्यर्थः । अत्र दृष्टान्तमाह— तेजस्तिमिरयोः, समानमधिकरणं ययोस्तयोर्भावः सामानाधिकरण्यमेकाश्रयत्वं कुतः । न कुतश्चित्, तयोः सहाऽवस्थानविरोधादिति भावः । तस्मादुभयोरुदिताऽनुदितहोमवाद्भिन्नविषयत्वादितरेतरशास्त्रविरोधो न बाधक इति भावः ॥ ६२ ॥

एतदेव उपसंहरन् प्रकृतं वक्तुमाह—

**इन्द्रप्रस्थगमस्तावत्कारि मा सन्तु चेदयः ॥**
**आस्माकदन्तिसान्निध्याद्वामनीभूतभूरुहः ॥ ६३ ॥**

**इन्द्रप्रस्थेति ॥ हेकृष्ण ! तावत् त्वया इन्द्रप्रस्थे गमो मा कारि युधिष्ठिरपुरगमनं मा क्रियताम् । कर्मणि लुङ् । किं तर्हि विधेयमित्याह—चेदयो डाहलदेशाः शिशुपालनगराणि आस्माकदन्तिसान्निध्याद्वामनीभूतभूरुहः सन्तु अस्मदीया ये दन्तिनो गजास्तन्नैकट्येन वामनीभूता ह्रस्वत्वं प्राप्ता भूरुहो वृक्षा येषु ते तथोक्ताः । एतेन नगरीरोधो विधीयतामित्युक्तं भवति । तन्निरोधावसरे वृष्णिमहेभास्तरुषु बध्यन्ताम् । अस्माकमिमे आस्माकाः तस्मिन्नणि च युष्माकास्माकौ ॥ ६३ ॥**

तर्हि नः किमिदानीं कार्यमत आह—

इन्द्रप्रस्थेति ॥ इन्द्रप्रस्थस्य पार्थनगरस्य गमो गमनम् । 'ग्रहवृदृनिश्चिगमश्च' इत्यप्प्रत्ययः । तावदिदानीं, मा कारि तावत् । न क्रियतामेवेत्यर्थः । 'यावत्तावत्परिच्छेदे कार्त्स्न्ये मानावधारणे' इति विश्वः । कृञः कर्मणि लुङ् । 'माङि लुङ्' इत्याशीरर्थे । 'न माङ्योगे' इत्यट्प्रतिषेधः । किन्तु चेदयश्चेदिदेशाः । अस्माकमिमे आस्माकाः । 'युष्मदस्मदोरन्यतरस्यां खञ्च' इति विकल्पादण्प्रत्ययः । 'तस्मिन्नणि च युष्माकास्माकौ' इत्यस्माकादेशः । सन्निधिरेव सान्निध्यम् । स्वार्थे ष्यञ्प्रत्ययः । आस्माकानां दन्तिनां सान्निध्याद्वामनीभूताः शाखाभङ्गात्खर्वीभूता भूरुहो वृक्षा येषां ते तथोक्ताः सन्तु । चेदियात्रैव क्रियतामित्यर्थः । सा च प्रस्तुता प्रस्तुतेनैव स्वकार्येण गम्यते इति पर्यायोक्तालङ्कारः ।

'कारणं गम्यते यत्र प्रस्तुतात्कार्यवर्णनात् ।
प्रस्तुतत्वेन सम्बन्धात्पर्यायोक्तः स उच्यते' ॥

इति लक्षणात् ॥ ६३ ॥

तदाह—

**निरुद्धवीवधासारप्रसारां (१)गा इव व्रजम् ॥**
**उपरुन्धन्तु दाशार्हाः पुरीं माहिष्मतीं द्विषः ॥ ६४ ॥**

**निरुद्धेति ॥ दाशार्हा यादवाः माहिष्मतीं पुरीं शिशुपाल(नगरीं) द्विषः शत्रून् उपरुन्धन्तु । माहिष्मत्यां पुर्यां शत्रून् वेष्टयन्त्वित्यर्थः । कां इव गा इव । यथा कश्चित् गोपालः व्रजं गाः रुणद्धि व्रजे घोषे गा उपरुणद्धि इत्यनायासः प्रतिपाद्यते । रुधिर्द्विकर्मकः 'अकथितं च'ति पुर्या व्रजस्य कर्मसंज्ञा । केचित्तु 'त इव व्रज'मिति पठन्ति । ते चेदयो व्रजमस्मद्घोषं यथोपरुरुधुः एवं द्विषः सम्बन्धिनीं पुरीं यादवाः उपरुन्धन्त्विति व्याचक्षते । युज्यते एतत्, किन्तु विशेषलक्षणं त्यक्तं स्यात् । अयं च कविः प्रायशः तच्छीलः । कीदृशीं पुरीं निरुद्धवीवधासारप्रसारां, वीवधशब्दः पथि पाथेये च वर्तते । आसारो मित्रबलं प्रसारो जनार्जीव्यघासकाष्ठादि, एते निरुद्धा यस्यां ताम् । वेष्टनवशान्निवृत्ता इत्यर्थः ॥ ६४ ॥**

---

( १ ) प्रसारा ।

निरुद्धेति ॥ किञ्च दाशार्हा यादवाः वीवधो धान्यादिप्राप्तिः, आसारः सुहृद्बलम्, प्रसारस्तृण-काष्ठादेः प्रवेशः ।

धान्यादेर्वीवधः प्राप्तिरासारस्तु सुहृद्बलम् ।
प्रसारस्तृणकाष्ठादेः प्रवेशः—'

इति वैजयन्ती । ते निरुद्धा यैस्ते तथोक्ताः, अन्यत्र निरुद्धौ वीवधानां पर्याहारापरनाम्नां स्कन्धवा-ह्यक्षीराद्याहरणसाधनभारविशेषाणामासारप्रसारौ प्रवेशनिर्गमौ यैस्ते तथोक्ताः । 'विवधो वीवधो भारे पर्या-हाराध्वनोरपि' इति हेमचन्द्रः । व्रजं गोष्ठम् । 'व्रजः स्याद्गोकुलं गोष्ठम्' इति वैजयन्ती । गा इव माहिष्मतीं पुरीं द्विषोऽरीनुपरुन्धन्तु । व्रजे गा इव माहिष्मत्यामरीनावृण्वन्त्वित्यर्थः । 'दुहियाचिरुधि-' इति द्विकर्मकत्वम् । तत्र पुरीव्रजावकथितं कर्म, अन्यदीप्सितं कर्म ॥ ६४ ॥

नन्वेवं सति युधिष्ठिर उपेक्षितो भवति इत्याशङ्क्याह—

**यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः ।**
**वयं हनाम द्विषतः सर्वः स्वार्थं समीहते ॥ ६५ ॥**

**यजतामिति ॥ तावत् पाण्डवो युधिष्ठिरो यजतां यज्ञं करोतु, अपरम् इन्द्रः स्वर्गमवतु रक्षतु, अपरम् इनः सूर्यस्तपतु द्योतताम्, वयमपि द्विषतः शत्रून् हनाम । अतः सर्वः कोऽपि स्वार्थं समीहते इच्छति स्वार्थं प्रत्यात्मोद्देशेनेहते चेष्टते न परार्थम् । प्रतीयत इति पाठः । स्वार्थं प्रतीयते प्रतिपद्यते अनुतिष्ठति, न परार्थम् । अर्केन्द्र-तुल्योऽस्माकं युधिष्ठिर इत्यर्थः । पार्थेन्दुसूर्याः यज्ञादि कुर्वन्तु । इङ् गताविति दैवादि-कस्य कर्तरि लकारः । तदेतेनैतदुक्तं भवति—यथार्केन्द्रपार्थाः स्वकार्याण्यवतिष्ठमानाः परार्थं नापेक्षन्ते तथा वयमपि स्वकार्यमपेक्षामहे । तद्वदर्केन्द्रयोरपि कथं साहायके न याम इति । हनामेति प्राप्तकाले लोट् पञ्चमी, यजतामित्यादावपि । सर्वेषां कामचारानुज्ञानमिति सर्वे यागादि कुर्वतां यथेष्टं वा । न तेषामास्माकी चिन्ता नाप्यस्माकं तदीयेत्यर्थः ॥६५॥**

तर्हि पार्थप्रार्थनायाः का गतिरित्याशङ्क्य, उपेक्षैव गतिरित्याह—

यजतामिति ॥ पाण्डवो युधिष्ठिरो यजतां यागं करोतु । इन्द्रः स्वर्गमवतु रक्षतु । इनोऽर्कः 'इनः पत्यौ नृपार्कयोः' इति मेदिनी । तपतु प्रकाशताम् । वयं द्विषोऽरीन्हनाम मारयाम । 'आडुत्तमस्य पिच्च' इत्याडागमः । सर्वत्र प्राप्तकाले लोट् । तथा हि—सर्वो जनः स्वार्थं स्वप्रयोजनं समीहतेऽनुसन्धत्ते । इन्द्रा-दिसमानयोगक्षेमो नः पार्थ इत्यर्थः । अर्थान्तरन्यासः ॥ ६५ ॥

अथ वा वचनसमासावाशिषः प्रयुङ्क्ते प्रार्थयते वा—

**प्राप्यतां विद्युतां सम्पत्सम्पर्कादर्करोचिषाम् ।**
**शस्त्रैर्द्विषच्छिरश्छेदप्रोच्छलच्छोणितोक्षितैः ॥ ६६ ॥**

**प्राप्यतामिति ॥ तावत् शस्त्रैरस्मदायुधैर्विद्युतः सौदामिन्याः सम्पत् शोभा प्रा-प्यतां, कस्मात् अर्करोचिषां सम्पर्कात् रविकिरणसंयोगात् । ननु शस्त्राणि कृष्णानि भव-न्ति, किंभूतैः द्विषच्छिरश्छेदप्रोच्छलच्छोणितोक्षितैः द्विषतां यानि शिरांसि तेषां यः छेदस्तेन प्रोच्छलत्तिर्यगूर्ध्वं प्रसरत् यच्छोणितं तेनोक्षितैः स्नापितैः । प्राप्यतामिति कर्मणि आशिषि लोट् प्रार्थनायां वा । सर्वकाले वा रुधिररससिक्तं हि शस्त्रं तेजः-सन्निधौ सौदामिनीसदृशं भवतीत्यर्थः ॥ ६६ ॥**

प्राप्यतामिति ॥ किञ्च द्विषतां शिरश्छेदेन प्रोच्छलतोद्गच्छता शोणितेनोक्षितैः सिक्तैः शस्त्रैरर्करो-चिषां सम्पर्कात्सम्बन्धाद्विद्युतां सम्पल्लक्ष्मीः प्राप्यतामिति निदर्शनालङ्कारः ॥ ६६ ॥

**इति संरम्भिणो वाणीर्बलस्यालेख्यदेवताः ॥**
**सभाभित्तिप्रतिध्वानैर्भयादन्ववदन्निव ॥ ६७ ॥**

**इतीति** ॥ आलेख्यदेवताः कर्तृभूता बलस्य बलभद्रस्य इति पूर्वोक्ता वाणीः अन्ववदन्निव अनूचुरिव, कैः सभाभित्तिप्रतिध्वानैः मन्त्रगृहकुड्यप्रतिशब्दैः। अङ्गीकरणार्थमेवमेतदिति । उक्ताः कस्मादनुवादं कुर्वन्ति, भयात् । मूर्खोऽयं मारयिष्यति । किंभूतस्य बलस्य संरम्भिणः कोपात् साटोपस्य हलधरवाचो वेगोक्त्या मन्त्रमण्डपकुड्येषु प्रतिफलिताः । तत्र कश्चिदुत्प्रेक्षां चक्रे—इति पूर्वोक्ता अस्य वाचः सदःकुड्यप्रतिश्रुत्या भित्तिचित्रदेवता भयेन अन्वदन्निव । यतोऽसौ हलधरः क्रुद्धः, ताः यदि नाङ्गीकुर्वते तच्चूर्णयति । संरम्भशब्दे 'रभेरशब्लिटो'रिति रभेर्नुम् ॥ ६७ ॥

इतीति ॥ इतीत्थं संरम्भिणः क्षुभितस्य बलभद्रस्य वाणीरालेख्यदेवताश्चित्रलिखितदेवताः सभायाः सदोगृहस्य भित्तीनां प्रतिध्वानैः । प्रतिध्वनिव्याजेनेत्यर्थः । भयादन्ववदन्नन्वमोदयन्निवेत्युत्प्रेक्षा ॥ ६७ ॥

**निशम्य ताः शेषगवीरभिधातुमधोक्षजः ॥**
**शिष्याय बृहतां पत्युः प्रस्तावमदिशद् दृशा ॥ ६८ ॥**

**निशम्येति** ॥ अधोक्षजः श्रीकृष्णो बृहतां पत्युः बृहस्पतेः शिष्याय उद्धवाय अभिधातुं वक्तुं प्रस्तावमदिशत् अवसरं ददौ, कया दृशा दृष्ट्या । किं कृत्वा ताः शेषगवीः निशम्य बलभद्रवाणीराकर्ण्य । भणेत्यक्षिनिकोचनेन, हलिगौरवार्थं नावोचदित्यर्थः। शेषस्य गावः शेषगव्यो रामवाचः, गोरतद्धिताभिधेये । शेषावतारत्वात् शेषः ॥ ६८ ॥

निशम्येति ॥ अधः कृतमक्षजमिन्द्रियजं ज्ञानं येन सोऽधोक्षजो हरिः ताः शेषस्य शेषावतारस्य बलभद्रस्य गाः वाचः शेषगवीः । 'गोरतद्धितलुकि' इति टच् । टित्वान्ङीप् । निशम्य श्रुत्वा । 'निशाम्यतीति श्रवणे तथा निशमयत्यपि' इति भट्टमल्लः। तत्र शाम्यतेरिदं रूपम्। अन्यथा निशमय्येति स्यात् । अत एव वामनः—'निशम्यनिशमय्यशब्दौ प्रकृतिभेदात्' इति । बृहतां वाचां पत्युर्बृहस्पतेस्तस्य शिष्यायोद्धवायाभिधातुं वक्तुं दृशा दृक्संज्ञया प्रस्तावमवसरमदिशदतिसृष्टवान् । 'प्रस्तावः स्यादवसरः' इत्यमरः ॥ ६८ ॥

**भारतीमाहितभरामथाऽनुद्धतमुद्धवः ॥**
**तथ्यामुतथ्यानुजवज्जगादाऽग्रे गदाग्रजम् ॥ ६९ ॥**

**भारतीमिति** ॥ अथ भ्रूक्षेपानन्तरमुद्धवो गदाग्रजं भारतीं जगाद विष्णुं वाचमवोचत् । गदिरुभयकर्मकः । क्व अग्रे विष्णोः पुरस्तात् । वागुपादानं विशेषणयोगार्थम् । तदाह—किंभूतां भारतीम् आहितभरामर्पितवाग्गौरवामुत्पादितमहार्थां वा अभिप्रायसम्पदत्र भरः । कथं यथा भवति अनुद्धतं सौम्यं सप्रश्रयं यथा स्यात् । न तु हलधरवत् कोपेन । पुनः कीदृशीं तथ्यां सत्यां नीतिशास्त्रानुसारिणीं, किंवत् उतथ्यानुजवत् बृहस्पतेरिव । एतेन मन्त्रप्रावीण्यमुक्तम् । उतथ्यो बृहस्पतेर्ज्येष्ठो भ्राता । गदस्तु हरेः कनीयान् । गुरुजनशीलमनुसरन्ति प्रायेण शिष्याः ॥ ६९ ॥

भारतीमिति ॥ अथ कृष्णानुज्ञानन्तरमुद्धवः आहितो भरोऽर्थगौरवं यस्यां सा तां तथ्यां यथार्थां भारतीं वाचम् । अनुद्धतमगर्वितं यथा तथा गदस्याग्रजं कृष्णम् । अग्रे पुरत इति प्रागल्भ्योक्तिः, उतथ्यस्य महर्षेरनुजो बृहस्पतिः । 'उतथ्यावरजो जीवः' इति विश्वः । तद्वत्तेन तुल्यं जगाद । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिः । तद्धितगेयमुपमा ॥ ६९ ॥

अनुद्धतं जगादेत्युक्तम्, तदाह—

**सम्प्रत्यसाम्प्रतं वक्तुमुक्ते मुसलपाणिना ॥**
**निर्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम् ॥ ७० ॥**

**सम्प्रतीति** ॥ हे कृष्ण ! इदानीं सम्प्रति मुसलपाणिना बलभद्रेण उक्ते सति अस्माकं वक्तुमसाम्प्रतमयुक्तम् । एतेन सर्वमुक्तमित्यर्थः । तदेव दृष्टान्तेन द्रढयति–खलु यस्मात् लेखेन अर्थे निर्धारिते सति कार्ये निर्णीते निश्चिते सति वाचिकं वचनसन्देशमुक्त्वा खलु न वक्तव्यम् । अलं खलु एतौ प्रतिषेधवाचकौ । खलु पूर्यताम् । लेखहारकेण लेखादेवार्थावगते या वाच उक्तिस्तत्पिष्टपेषणम् । अपि च मुसलपाणिरिति साभिप्रायमत्र नाम, मुशलमस्य पाणौ । वहनाय योग्यो, न तु मन्त्रक्षमोऽयम् । यदेतेनेदमिदमुक्तं तदेव मया । न किञ्चित् प्रयोजनमित्यर्थः। सम्प्रत्येव साम्प्रतं 'प्रज्ञादिभ्यश्चे'त्यण् । स्वभावाच्चायं युक्तार्थः क्रियाभिधायी च तेन वक्तुमिति तुमुन् विरुध्यते । लिख्यतेऽस्मिन्निति लेखः 'हलश्चे'ति घञ् । खलूक्त्वेति 'अलंखल्वो'रिति क्त्वा । वाचिकमिति 'वाचो व्याहृतार्थाया'मिति स्वार्थे ठक् ॥ ७० ॥

किं जगादेत्याह—

**सम्प्रतीति** ॥ सम्प्रति मुसलपाणिना बलभद्रेण । केवलं शूरेणेति ध्वनिः । उक्ते सति वक्तुमसाम्प्रतमयुक्तम् । साधूक्तत्वादभ्याससमानयोगक्षेमप्रसङ्गादिति ध्वनिः । साम्प्रतशब्दस्याहार्थत्वात्तद्योगे 'शकधृष' इत्यादिना तुमुन् । तथा हि लेख्येन पत्रेणार्थे वाच्ये निर्धारिते निर्णीते सति वाचिकं व्याहृतार्थां वाचम् । सन्देशवचनमित्यर्थः ।'सन्देशवाग्वाचिकं स्यात्' इत्यमरः । 'वाचो व्याहृतार्थायाम्' इति ठक् । उक्त्वा खलु । न वाच्यं खल्वित्यर्थः । खलुराद्यः प्रतिषेधे, अन्यो वाक्यालङ्कारे । 'निषेधवाक्यालङ्कारे जिज्ञासानुनये खलु' इत्युभयत्राप्यमरः । 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' इति क्त्वाप्रत्ययः । इह न पादादौ खल्वाद्य इति निषेधस्योद्वेजकाभिप्रायत्वात् नञर्थखलुशब्दस्यानुद्वेजकत्वात् नञ्वदेव पादादौ प्रयोगो न दुष्यत्यनुसन्धेयम् । लिखितार्थे वाचिकमिव बलोक्ते मदुक्तिरनवकाशेति वाक्यार्थप्रतिबिम्बकरणात् स्पष्टदृष्टान्तवद् दृष्टान्तः । स्तुतिव्याजेन निन्दावगमाद् व्याजस्तुतिश्च । लक्षणं चाग्रे वक्ष्यते ॥ ७० ॥

तद्यदि खलूक्त्वा, तन्मूक इवास्तां किमारटितेनेति वचनावकाशं दित्सुराह—

**तथापि यन्मय्यपि ते गुरुरित्येष(१) गौरवम् ॥**
**तत्प्रयोजककर्तृत्वमुपैति मम जल्पतः ॥ ७१ ॥**

**तथापीति** ॥ हे कृष्ण ! यद्यपि एवं वचनं न्याय्यं, तथापि यत् ते तव मयि स्वल्पबुद्धौ विषये इति गौरवं सन्मान आदरातिशयो वर्तते । इतीति किम् एष गुरुः अपि निश्चयेन । मम जल्पतो भणतः सतः तत्प्रयोजककर्तृत्वमुपैति । हेतुकर्तृत्वं प्राप्नोति । यन्मां जल्पयतीत्यर्थः । प्रयोजकश्चासौ कर्ता च प्रयोजककर्ता । द्विविधो हि कर्ता स्वतन्त्रो हेतुप्रेरकवृद्धश्च । अपिशब्देन आत्मनो हीनत्वं प्रयुञ्जन्ननौद्धत्यं प्रकाशयति । इति स्वरूपनिर्देशे, एवावधारणे । गुरुत्वेनैव तु सचिवत्वान्नेत्यर्थः । नो चेत्तावदहं मूर्खः कथञ्चिदपि वक्तुं जानामि । अपरं गौरवमेव मां वक्तुं प्रेरयतीत्यर्थः ॥ ७१ ॥

तर्हि किं तूष्णींभूतेन भाव्यं नेत्याह—

**तथापीति** ॥ तथापि बलेन निर्णीतेऽपि ते नव मय्यपि । बलभद्र इवेत्यपिशब्दार्थः । गुरुरित्येव

(१) ०रित्यस्ति ।

यद्गौरवमादरः यद्गौरवं जल्पतः जल्पने प्रयोज्यकर्मणो मे प्रयोजककर्तृत्वं प्रेरकत्वमुपैति। अतो वक्ष्यामीत्यर्थः। न हि पण्डितैः सादरं पृष्टस्य विशेषज्ञस्याऽज्ञवत्तूष्णींभावो युक्त इति भावः ॥ ७१ ॥

ननु च भणितव्यं विद्यते इति वाङ्मयविस्मयद्वारेण प्रतिपादयितुमाह—

**वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव ॥**

**अनन्ता वाङ्मयस्याहो ! गेयस्येव विचित्रता ॥ ७२ ॥**

**वर्णैरिति** ॥ अहो विस्मये, वाङ्मयस्य विचित्रता अनन्ता न विद्यतेऽन्तो यस्याः सा। अनेकरूपं कदा कारणबाहुल्यं स्यात्तत्र चित्रमित्याह—कथंभूतस्य वाङ्मयस्य कतिपयैरेव वर्णैः द्विपञ्चाशदक्षरैः ग्रथितस्य बद्धस्य, यदि परं त्रिषष्टिर्वा वर्णाः। अथ च वेदादिभेदेन अपारं वाङ्मयं न क्वचिदपि सादृश्यम्। कस्येव गेयस्येव। यथा गेयस्य गानस्य विचित्रता अनन्ता। कीदृशस्य कतिपयैरेव स्वरैः षड्जादिभिर्ग्रथितस्य। स्वरा अपि सप्त। तदपि गेयं समुद्रवदनन्तं यथा, तथा वाङ्मयमपि अनेकरूपं विचित्रमित्यर्थः। यद्यपि हलिनोक्तं, तथाप्यहमन्यदेव विचित्रतरं वच्मि इति तात्पर्यार्थः। उक्तं च—

णयताणघडयअवहीण ते दीसन्ति कहंवि पुल्सा।

जे विघूमावियाणं अछावासु कविवाणीणम्(?) ॥

वाचां विकारोऽवयवो वा, एकस्वरान्नित्यमयट्। गीयते इति गेयम् अचो यत्। उपमानयोरुपमेययोश्च द्वित्वात् इवशब्दावपि द्वावेव न्याय्यौ। यत्र त्वेवंविधे विषये एक स प्रयुज्यते तत्र वाक्यार्थस्यौपम्यं बोद्धव्यम्। एवमन्यत्र ॥ ७२ ॥

ननु रामेणैव सर्वं प्रपञ्चेनोक्तम्, सम्प्रति किं ते वाच्यमस्तीत्याशङ्क्य वृथा प्रपञ्चोऽयमिति हृदि निधाय स्तुवन्नाह त्रयेण—

**वर्णैरिति** ॥ कतिपयैः परिमितैर्वर्णैः पञ्चाशतैव मातृकाक्षरैः, कतिपयैः सप्तभिरेव स्वरैर्निषादादिभिर्ग्रथितस्य गुम्फितस्य वाङ्मयस्य शब्दजालस्य। 'एकाचोऽपि नित्यं मयटमिच्छन्ति' इति स्वार्थे मयट्। गीयत इति गेयं तस्य गानस्येव विचित्रता रचनाभेदादनन्ता अपरिमिता भवतीत्यर्थः। अहो। अतस्तेन साधूक्तेऽपि विशेषानन्त्यान्ममापि वक्तव्यमस्तीत्येको भावः। तस्य दुरुक्तत्वान्ममैवास्तीत्यन्यः। प्रत्ययवयमिवोपादानादेकैवेयमुपमा ॥ ७२ ॥

अथ हलधरवचनाक्षेपद्वारेण आत्मवचनस्य ग्राह्यत्वमाह—

**बह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते ॥**

**अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः ॥ ७३ ॥**

**बह्वपीति** ॥ कामं निश्चितं स्वेच्छया आत्ममनीषया नीतशास्त्रव्यतिरेकेण प्रकीर्णमसमञ्जसमसम्बद्धं बह्वपि घनमप्यभिधीयते उच्यते। परं प्रबन्धो नीतिशास्त्रक्रमो दुरुदाहरः दुःखेन वक्तुं शक्यते। कीदृशः प्रबन्धः अनुज्झितार्थसम्बन्धः अनुज्झितोऽपरित्यक्तोऽर्थसम्बन्धः कार्यानुक्रमो यत्र। उक्तं च—

वाक्संयमो मे नृपते ! सुदुष्करतमो मतः।

अर्थवच्च विचित्रं च न शक्यं बहु भाषितम् ॥

तदेतेन-सीरिणा लाकुटिन्यायेनोक्तं, मया नीतिशास्त्रान्वितमभिधीयते इत्युक्तं भवति ॥ ७३ ॥

**बह्वपीति** ॥ स्वेच्छया स्वप्रतिभानुसारेण प्रकीर्णसमङ्गतं बह्वपि कामं यथेष्टमभिधीयते। किन्तु

अनुज्झितोऽर्थसम्बन्धः पदार्थसङ्गतिर्यस्मिन्स प्रबन्धः सन्दर्भः दुरुदाहरो दुर्वचः। हरतेः खल्प्रत्ययः। रामेण तु सङ्गतमेवोक्तमिति स्तुतिः, असङ्गतमेवोक्तमिति निन्दा च गम्यते ॥ ७३ ॥

सामान्यद्वारेण आत्मवचनस्तुतिमाह—

**म्रदीयसीमपि घनामनल्पगुणकल्पिताम् ॥**
**प्रसारयन्ति कुशलाश्चित्रां वाचं पटीमिव ॥ ७४ ॥**

**म्रदीयसीमिति** ॥ हे कृष्ण ! कुशला नीतिविदः एवंविधां वाचं प्रसारयन्ति विस्तारयन्ति । वदन्तीत्यर्थः । कथंभूतां म्रदीयसीं कोमलां प्रसन्नत्वात् सुबोधामपि घनां महार्थाम् । यच्च घनं दार्ढ्यादिना तन्मृदु न भवति । विरोधच्छायाप्रतिपादनोऽपिशब्दः । पुनः कीदृशीम् अनल्पगुणकल्पिताम् अनल्पैर्महद्भिर्गुणैर्माधुर्यौदार्यादिभिः कल्पितां रचिताम्, अपरं कीदृशीं चित्रामनेकरूपां नानाशास्त्रानुगतत्वादाश्चर्यकारिणीम् । कामिव पटीमिव । यथा केचित् कुशलास्तन्तुवायाः पटीं विस्तारयन्ति विधानाय वितानयन्ति तथा वाचं केचिदेवेत्यर्थः । कीदृशीं म्रदीयसीमपि सुकुमारामपि घनां दृढां, तथा बहुभिर्गुणैस्तन्तुभी रचितां तथा चित्रां नानावर्णाम् । चित्रापटी हैमनो वासोविशेषः ॥७४॥

**म्रदीयसीमिति** ॥ कुशलो वक्तारो म्रदीयसीमतिसुकुमाराक्षरां श्लक्ष्णतरां च तथापि घनामर्थगुर्वीम्, अन्यत्र सान्द्राम् । कदलीदलकल्पामित्यर्थः । अनल्पैर्बहुभिर्गुणैः श्लेषादिभिः तन्तुभिश्च कल्पितां रचितां निर्मितां च चित्रां शब्दादिविचित्रां विचित्ररूपां च वाचं पटीं शाटीमिव प्रसारयन्ति । रामवागप्येवंविधेति स्तुतिः, रामवाक्तु नैवंविधेति निन्दा च गम्यते । अत्र श्लेषस्य शुद्धविषयासम्भवेन सर्वालङ्कारबाधकत्वादुपमाप्रतिभोत्थापितः प्रकृताप्रकृतश्लेषोऽयमित्यलङ्कारसर्वस्वकारः । एवं च पूर्णोपमाया निर्विषयत्वप्रसङ्गात् श्लेषप्रतिभोत्थापितेयमुपमैवेत्यन्ये ॥ ७४ ॥

इदानीं भगवतो नुतिद्वारेणात्मनोऽनौद्धत्यमाह—

**विशेषविदुषः शास्त्रं यत्तवोद्ग्राह्यते पुरः ॥**
**हेतुः परिचयस्थैर्ये वक्तुर्गुणनिकैव सा ॥ ७५ ॥**

**विशेषेति** ॥ हे कृष्ण! यत्तव पुरोऽग्रे शास्त्रमुद्ग्राह्यते उच्यते, किंभूतस्य तव विशेषविदुषः विशेषज्ञस्य । सा वाणी वक्तुः उद्ग्राहयितुः पुरुषस्य गुणनिकैव अविस्मरणार्थमभ्यास एव । विद्याभ्यासो गुणनिका । किंभूता परिचयस्थैर्यहेतुः विद्याया अविस्मरणे स्थिरत्वे कारणं प्रकर्षदृढबन्धत्वे कारणम् । गुणनेनैव हि शास्त्रस्याविस्मरणार्थमभ्यासं कुर्मः । त्वमेव विशेषविद्वान् तस्य विशेषज्ञस्य । अथ विशेषेणातिशयेन विद्वान् पण्डित इति तु केचित, तस्य विशेषविदुषः । वसोः सम्प्रसारणम् । हेतुराविष्टलिङ्गः । परिचयो बोधप्रकर्षः तस्य स्थैर्यमविस्मरणम् । गुणनमेव गुणनिका अभ्यासः, संज्ञायां कन् ॥ ७५ ॥

अथोद्धवः स्वसिद्धान्तं वर्णयिष्यन् स्तुत्या गर्वं परिहरन् हरिमभिमुखीकरोति—

**विशेषेति** ॥ विशेषानवान्तरभेदान्वेत्ति विशेषविद्वान् तस्य विशेषविदुषो विशेषज्ञस्य । गतिगम्यादिपाठाद् द्वितीयासमासः । तव पुरोऽग्रे शास्त्रं नीतिशास्त्रमुद्ग्राह्यत उपन्यस्यत इति यत् । 'उद्ग्राहितमुपन्यस्तम्' इति वैजयन्ती । सा । तदुद्ग्रहणमित्यर्थः । विधेयप्राधान्यात्स्त्रीलिङ्गत्वम् । वक्तुरुद्ग्राहयितुः परिचयस्थैर्येऽभ्यासदार्ढ्ये हेतुर्गुणनिका । आम्रेडितमेवेति यावत् । न तु वैदुष्यप्रकटनामिति भावः । गुण आमेडने चौरादिकात 'ण्यासश्रन्थो युच्' इति युच् । ततः संज्ञायां कन् । कात्पूर्वस्येकारः ॥ ७५ ॥

एवं वचनावकाशं दत्वा प्रकृतमर्थं विवक्षुराह—

**प्रज्ञोत्साहावतः स्वामी यतेताधातुमात्मनि ॥**
**तौ हि मूलमुदेष्यन्त्या जिगीषोरात्मसम्पदः ॥ ७६ ॥**

**प्रज्ञेति** ॥ हे कृष्ण ! स्वामी विजिगीषुरतोऽस्मात्कारणात् प्रज्ञोत्साहौ नीतिपराक्रमौ आत्मनि आधातुं यतेत उत्पादयितुं यत्नं कुर्यात । द्वादशराजमण्डलीनाभिगतो राजा विजिगीषुः । मन्त्रशक्तिः प्रज्ञा, पराक्रमसम्पदुत्साहः । हि यस्मात्कारणात् जिगीषो राज्ञ उदेष्यन्त्या उदयं गमिष्यन्त्या आत्मसम्पदः प्रभुशक्तेः तौ प्रज्ञोत्साहौ बुद्धिपराक्रमौ मूलं कारणम् । मन्त्रशक्त्युत्साहशक्तिभ्यां प्रभुशक्तिर्यतो भवत्यस्तते अर्थनीये इत्यर्थः । तावेव प्रभुशक्तेर्बीजमित्यर्थः । जिगीषुर्नयज्ञो भवन् जेतुमुद्यतो राजन्यकप्रधानमुच्यते ॥ ७६ ॥

सम्प्रति स्वमतमुपन्यस्यति—

**प्रज्ञेति** ॥ अतोऽस्मात्कारणात् स्वमस्यास्तीति स्वामी प्रभुः । 'स्वामिन्नैश्वर्ये' इति निपातः । प्रज्ञोत्साहौ मन्त्रोत्साहशक्ती आत्मनि स्वस्मिन्नाधातुं सम्पादयितुं यतेत । स्वयमुभयशक्तिमान्भवेदित्यर्थः । कुतः—हि यस्मात्तौ प्रज्ञोत्साहौ उदेष्यन्त्याः वर्त्स्यन्त्याः जिगीषोरात्मनः सम्पदः प्रभुशक्तेर्मूलं निदानम् । अत्रोत्साहग्रहणं दृष्टान्तार्थम् । यथोत्साहस्तथा मन्त्रोऽपि ग्राह्यो, न तु केवलोत्साह इति बलभद्रापवादः ॥७६॥

प्रज्ञोत्साहौ मूलमित्युक्तम्, तत्र प्रज्ञाया मूलत्वं स्तुतिद्वारेण श्लोकचतुष्टयेन वक्तुमाह—

**सोपधानां धियं धीराः स्थेयसीं खट्वयन्ति ये ॥**
**तत्रानिशं निषण्णास्ते जानते जातु न श्रमम् ॥ ७७ ॥**

**सोपधानामिति** ॥ हे कृष्ण ! ये धीरा अव्याकुला धियं बुद्धिं खट्वयन्ति व्यवहारयन्ति व्यापारयन्ति । अभिलषितसिद्धये विनियुञ्जत इत्यर्थः । कीदृशीं सोपधानां युक्तियुक्ताम्, अपरं किंभूतां स्थेयसीं स्थिरतरां निश्चलाम् । ते पुरुषाः तत्र तस्यां बुद्धौ आनिशं निषण्णाः सन्तस्तत्परायणा आसक्ताः कृतावस्थाना सन्तो जातु कदाचिदपि श्रमं न जानते आयासं नावगच्छन्ति । विचारपूर्वस्य कार्यस्य साफल्यादिति भावः । अथ चोक्तिलेशः-ये किल खट्वयन्ति खट्वामारोहन्ति खट्वामिव कुर्वन्ति खट्वां कुर्वते, तेऽपि तस्यां खट्वायामानिशं दिवारात्रिं यावद्वा निषण्णाः सन्त उपविष्टाः सन्तः श्रमं न जानन्ति खेदं न विन्दन्ति । किंभूतां खट्वां सोपधानां सगण्डुकामुच्छीर्षकसहितां, पुनः कीदृशीं स्थेयसीमस्फुटां दृढाम् । तत्र खट्वोपसर्जनभूता, तया बुद्ध्या विभज्य विशेषयोगो बोद्धव्यः । अतिशयेन स्थिरा स्थेयसी 'प्रियस्थिरे'ति स्थिरस्य स्थ आदेशः । खट्वां करोति 'तत्करोती'ति णिच् । निशाया आ आनिशम् 'आङ् मर्यादाभिविध्यो'रिति समासः ॥७७॥

उत्साहवत्प्रज्ञापि ग्राह्येत्युक्तं तस्याः प्रयोजनमाह—

**सोपधानामिति** ॥ ये धीरा धीमन्तः सोपधानां सविशेषाम् । युक्तियुक्तामित्यर्थः । अन्यत्र सगेन्दुकाम् । सोपबर्हामित्यर्थः । 'उपधानं विशेषे स्याद्गेन्दुके प्रणयेऽपि च' इति विश्वः । स्थेयसीं स्थिरतरामचपलां द्रढीयसीं च । स्थिरशब्दादीयसुनि 'प्रियस्थिर—' इत्यादिना स्थादेशः । धियं खट्वन्ति खट्वां पर्यङ्कं कुर्वन्ति । आश्रयन्तीत्यर्थः । 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः । 'तत्करोति तदाचष्टे' इति णिच् । ते धीरास्तत्र धीखट्वायामनिशमश्रान्तं निषण्णा विश्रान्ताः सन्तो जातु कदाचिदपि श्रमं खेदं न जानते न विदन्ति । श्रमः खेदो रत्यादेरिति लक्षणम् । धीपूर्वक एवोत्साहः सेव्यो न केवल इति सर्वथा धीराश्रयणीयेत्यर्थः । अत्र धिय आरोप्यमाणायाः प्रकृतश्रमापनोदरूपोपकारपर्यन्ततया परिणामालङ्कारः । 'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति लक्षणात् ॥ ७७ ॥

**स्पृशन्ति शरवत्तीक्ष्णाः स्तोकमन्तर्विशन्ति च ॥**
**बहुस्पृशाऽपि स्थूलेन स्थीयते बहिरश्मवत् ॥ ७८ ॥**

**स्पृशन्तीति** ॥ हे कृष्ण ! तीक्ष्णाः कुशाग्रवत्तीक्ष्णबुद्धयः प्रज्ञाः स्तोकं स्पृशन्ति च अन्यत् अन्तर्विशन्ति तत्त्वमालोचयन्ति कार्यतत्त्वस्याभ्यन्तरं प्रविशन्ति । स्वल्पं ब्रुवन्तः कार्यतत्त्वशरीरं सकलं जानते इत्यर्थः । किंवत् शरवत् । यथा शरा मनाक् स्पृशन्ति स्तोकं व्रणं कुर्वते पुनरन्तर्विशन्ति च देहस्याभ्यन्तरं प्रविशन्ति द्वितीयं पार्श्वं यावन्निस्सरन्ति । परं स्थूलेन जडबुद्धिना मूर्खेण बहुस्पृशाऽपि बहुभाषिणाऽपि बहिः स्थीयते । तेन बहु रट्यते पुनः कार्यतत्त्वं न विद्यते । तत्रापि कार्यशरीराद्बहिः स्थीयते । निःशेषमपि कार्यमालोचयतो नैव तस्य हृदयं बुध्यते इत्यर्थः । किंवत् अश्मवत् । यथा अश्मना यन्त्रपाषाणेन बहु स्पृश्यते परं बहिः स्थीयते शरीराभ्यन्तरं न प्रविश्यते । एतेन प्रज्ञाविशेष उक्तः ॥ ७८ ॥

अथ प्रज्ञाप्रज्ञयोर्द्वाभ्यां वैषम्यमाह—

**स्पृशन्तीति** ॥ तीक्ष्णा निशितप्रज्ञाः शरवच्छरेण तुल्यं स्तोकमल्पमेव स्पृशन्ति, अन्तः कार्यस्याभ्यन्तरं विशन्ति । अल्पायासेन बहु कार्यं साधयन्तीत्यर्थः । बहुस्पृशा व्यापिना, स्थूलेन मन्देन बृहता च अश्मनोपलेन तुल्यमश्मवत् । तेन तुल्यं क्रिया चेद्वतिः । बहिरेव । कार्यस्याकार्यस्य चेति भावः । स्थीयते स्थितिः क्रियते । मूढो हि अल्पस्य हेतोर्बहु प्रयासं करोति । मूषकग्रहणाय शिखरिखननं परिहासास्पदं भवतीति भावः । तद्धितगतेयमुपमा ॥ ७८ ॥

**आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च ॥**
**महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ ७९ ॥**

**आरभन्त इति** ॥ अज्ञा मूर्खा अल्पमेव कार्यमारभन्ते परं काममतिशयेन व्यग्रा आकुला भवन्ति दीपवत् । पुनः कृतधियः शास्त्रज्ञा महारम्भा महोदयं कार्यमारभन्ते अथ निराकुलास्तिष्ठन्ति अव्यग्रा भवन्ति सूर्यवत् । न जानन्तीति अज्ञाः । शास्त्रेण कृता वर्धिता धीर्येषां ते कृतधियः शास्त्रपरिणतबुद्धयः ॥ ७९ ॥

**आरभन्त इति** ॥ किञ्च अज्ञा अल्पं तुच्छमेवारभन्ते प्रक्रमन्ते काममत्यन्तं व्यग्राः त्वरिताश्च भवन्ति । न च पारं गच्छन्तीति भावः । कृतधियः शिक्षितबुद्धयस्तु महारम्भा महोद्योगा भवन्ति निराकुला अव्यग्राश्च भवन्ति । पारं गच्छन्तीति भावः ॥ ७९ ॥

न चात्मबुद्धिमदात्प्रमादो विधेय इति दर्शयितुमाह—

**उपायमास्थितस्यापि नश्यन्त्यर्थाः प्रमाद्यतः ॥**
**हन्ति नोपशयस्थोऽपि शयालुर्मृगयुर्मृगान् ॥ ८० ॥**

**उपायमिति** ॥ प्रमाद्यतो निरवधानस्य पुंसोऽर्था नश्यन्ति कार्यं विघटन्ते । तर्हि उपायरहितो भविष्यति, कथंभूतस्य उपायं सामादिकमास्थितस्यापि आश्रितस्यापि । इत्यर्थे दृष्टान्तमाह—यतो मृगयुर्लुब्धको मृगं हरिणं न हन्ति, किंभूतो लुब्धकः उपशयस्थोऽपि समीपस्थस्तथा शयालुः अजागरूकः सुप्तश्च । तस्मात् प्रमादो जिगीषुणा न विधेयः । एतेन यदुक्तम्—नीतिरापदि यद् गम्यः, तदपास्तम् । शेते तच्छीलः शयालुः आलुचि शीङ्ग्रहणम् ॥ ८० ॥

अथ प्रज्ञानावपि न प्रमाद्येदित्याह—

**उपायमिति** ॥ उपायमास्थितस्य प्राप्तस्यापि । उपायेनैव कार्यं साधयतोऽपीत्यर्थः । किमुत व्यग्रतयेति भावः । प्रमाद्यतोऽनवधानस्य । 'प्रमादोऽनवधानता' इत्यमरः । अर्थाः प्रयोजनानि नश्यन्ति । तथा हि—शयालुर्निद्रालुः । आलुचि शीङो वक्तव्यत्वादालुच् । मृगान् यातीति मृगयुर्व्याधः । 'मृगय्वादयश्च

इत्यौणादिकः कुप्रत्ययान्तो निपातः। 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च सः' इत्यमरः। उपशेरतेऽस्मिन्नित्युपशयो मृगमार्गस्थायिनो व्याधस्यात्मगुप्तिस्थानं गर्तविशेषः। 'एरच्' इत्यच्प्रत्ययः। तत्र तिष्ठन्नीत्युपशयस्थोऽपि मृगान् न हन्ति। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ८० ॥

एतत्प्रदर्श्य साम्प्रतमुत्साहं प्रस्तोतुमाह—

**उदेतुमत्यजन्नीहां राजसु द्वादशस्वपि ॥**
**जिगीषुरेको दिनकृदादित्येष्विव कल्पते ॥ ८१ ॥**

उदेतुमिति॥ द्वादशस्वपि राजसु मध्ये जिगीषुरेक एव कल्पते प्रधानः सम्पद्यते समर्थो भवति, किं कुर्वन् उदेतुमुदयाय ईहामत्यजन् उत्साहमपरिहरन्। जिगीषुर्जेतुमिच्छुर्निरीहश्च कथं जयतीति भावः। केष्विव आदित्येष्विव। यथा द्वादशसु आदित्येषु अदितिसुतेषु शक्रादिषु मध्यात् दिनकृत् एक एव सम्पद्यते अहस्कर एक उदेति सम्भवति। य उद्गच्छति स एव दिनकृदुच्यते, अन्ये त्वदिनकृत एव। यतः यो दिनं कुरुते स दिनकृत्। तत्रेमे द्वादशादित्याः—

इन्द्रो धाता भगः पूषा मित्रोऽथ वरुणोऽर्यमा।
अर्चिर्विवस्वांस्त्वष्टा च सविता विष्णुरेव च॥

द्वादशादित्यानां नामानि। द्वादशराजमण्डलीमाह—अरिः, मित्रम्, अरेर्मित्रं, मित्रमित्रम्, अरिमित्रमित्रं, विजिगीषुः, पार्ष्णिग्राहः, आक्रन्दः, पार्ष्णिग्राहासारः, आक्रन्दासारः, मध्यमो भूम्यन्तरः, उदासीनश्चेति। भवन्ति चात्र श्लोकाः—

अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम्।
तथाऽरिमित्रमित्रं च विजिगीषोः पुरः स्मृताः॥
पार्ष्णिग्राहः स्मृतः पश्चादाक्रन्दस्तदनन्तरः।
आसारावनयोश्चैवं विजिगीषोश्च पृष्ठतः॥
अरेश्च विजिगीषोश्च मध्यमो भूम्यन्तरः।
अनुग्रहे संहतयोर्व्यस्तयोश्च वधे प्रभुः॥
मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः।
अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः॥

विजिगीषोर्नाभिस्थानीयराजचक्रस्य पार्ष्णिग्राहमिव यो गृह्णाति स पार्ष्णिग्राहः। तन्निरोधाद्विजिगीषुसहाय आक्रन्दः, आक्रन्दविरोधाच्च पार्ष्णिग्राहासारः, एतन्निरोधाच्च आक्रन्दासारः। एवंविधराजमण्डलीमध्ये जिगीषुरेक एव भवति॥ ८१ ॥

एवं प्रज्ञाया आवश्यकत्वमुक्तम्, तथोत्साहस्याप्याह—

**उदेतुमिति**॥ जेतुमिच्छुर्जिगीषुरेक एव द्वादशस्वपि राजसु मध्ये द्वादशस्वादित्येषु दिनकृद् यो दिनकरणे व्याप्रियमाण आदित्यः स इव ईहामुत्साहमत्यजन्प्रयुञ्जान एव। न तु निरुद्योग इति भावः। उदेतु कल्पते उदयाय प्रभवति। उत्साहशक्तिरेव प्रभुशक्तेरपि मूलमित्यर्थः। 'नानालिङ्गत्वादृतूनां नानासूर्यत्वम्' इति श्रुतेः। प्रतिमासमादित्यभेदाद् द्वादशत्वं, तच्चैकस्यैव द्वादशात्मकत्वम्। 'द्वादशात्मा दिवाकरः' इत्यभिधानात्। ते चार्यमादयः पुराणोक्ता द्रष्टव्याः। राजानस्तु—

'अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम्।
तथारिमित्रमित्रं च विजिगीषोः पुरस्सराः॥

पश्चाति शेषः।

'पार्ष्णिग्राहास्ततः पश्चादाक्रन्दस्तदनन्तरम् ।
आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः' ॥

पार्ष्णिग्राहासारः, आक्रान्दसारश्चेत्यर्थः । अत्र चत्वार इति शेषः । एवं नव भवन्ति । विजिगीषुर्दशमः ।

'अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः ।
अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे ।
मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः' ॥

इति मध्यमोदासीनाभ्यां सह द्वादश वेदितव्याः । पूर्णोपमा ॥ ८१ ॥

कथमसावेको विजिगीषुः कल्पते इति तस्य मण्डलचिन्तामाह—

**तन्त्रावापविदा योगैर्मण्डलान्यधितिष्ठता ॥**
**सुनिग्रहा नरेन्द्रेण फणीन्द्रा इव शत्रवः(१) ॥ ८२ ॥**

**तन्त्रेति ॥ एवंविधेन नरेन्द्रेण शत्रवः सुनिग्रहाः सुखेन दमयितुं शक्याः । कीदृशेन तन्त्रावापविदा । स्वशक्त्युत्पत्तिविधानलक्षणं तन्त्रं परशक्तीनामात्मन्यध्यारोपणमावापः, तौ वेत्तीति तन्त्रावापविदा, पुनः किंभूतेन योगैः प्रच्छन्नप्रणिधिभिः मण्डलानि पराराष्ट्राणि अधितिष्ठता आक्रमता । एवंविधेन उत्साहेनाऽसौ विजिगीषुः सम्पद्यत इत्यर्थः । के यथा केन सुनिग्रहा इत्याह—के इव फणीन्द्रा इव सर्पा इव । यथा नरेन्द्रेण गारुडिकेन फणीन्द्राः सर्पाः सुनिग्रहा अङ्कुशेन दमयितुं शक्यन्ते । तेनापि कीदृशेन तन्त्रावापविदा, तन्त्रं गारुडं शास्त्रम् आवापः सर्षपादिक्षेपः तौ वेत्ति इति तन्त्रावापवित् तेन । जाङ्गुलीविद्यया सर्षपाक्षेपः क्रियते, सर्पाणामाकृष्टिर्भवति । तथा योगैर्ध्यानैः सामादिभिः मण्डलानि वायव्यादीनि अधितिष्ठता आक्रमता ॥ ८२ ॥**

उपायमास्थितस्येत्यत्र राजा न प्रमाद्येदित्युक्तम्, अप्रमादप्रकारमाह—

**तन्त्रेति** ॥ तन्त्रावापौ स्वपरराष्ट्रचिन्तनम् , अन्यत्र तन्त्रावापं शास्त्रौषधप्रयोगं च वेत्ति यस्तेन तन्त्रावापविदा ।

'तन्त्रं स्वराष्ट्रचिन्तायामावापः परचिन्तने ।
शास्त्रौषधान्तमुख्येषु तन्त्रम्–'

इति **वैजयन्ती** । योगैः सामाद्युपायैः, अन्यत्र देवताध्यानैश्च । 'योगः संनहनोपायध्यानसङ्गतियुक्तिषु' इत्य**मरः** । मण्डलानि स्वपरराष्ट्राणि माहेन्द्रादिदेवतायतनानि च अधितिष्ठताऽतिक्रमता नरेन्द्रेण राज्ञा विषवैद्येन च । 'नरेन्द्रो वार्तिके राज्ञि विषवैद्ये च कथ्यते' इति **विश्वः** । शत्रवः फणीन्द्रा इव सुनिग्रहाः सुखेन निग्राह्याः । एवं च प्रकृताप्रकृतविषयः श्लेषः । उपमैवेति केचित् ॥ ८२ ॥

यदुक्तं तौ हि मूलमुदेष्यन्त्या इति दर्शयति—

**करप्रचेयामुत्तुङ्गः प्रभुशक्तिं प्रथीयसीम् ॥**
**प्रज्ञाबलबृहन्मूलः फलत्युत्साहपादपः ॥ ८३ ॥**

**करेति ॥ उत्साह एव पादपो वृक्षः पराक्रमवृक्षः प्रभुशक्तिं फलति कोशं चतुरङ्गं बलं फलति जनयति । कीदृशीं करप्रचेयां करेण दण्डेन प्रचीयते वर्धते करप्रचेया तां दण्डवर्धनीयां, तथा प्रथीयसीमतिमहतीम् । कीदृशः उत्तुङ्गः उन्नतः महाप्रभावः, तथा प्रज्ञाबलबृहन्मूलः प्रज्ञाबलं मन्त्रशक्तिस्तदेव बृहन्मूलं कारणं यस्य । मन्त्रसहितेनोद्यमेन प्रभुशक्तिर्ज-**

(१) अयमग्रिमश्च श्लोको मल्लिनाथीयटीकायां 'स्थायिनोऽर्थे प्रवर्तन्ते' इत्यस्यानन्तरं दृश्येते ।

न्यते इति वाक्यार्थः । पादपो वृक्षो महतीं फलसम्पत्तिं जनयति । किंभूतः उत्तुङ्गः उन्नतः तथा बृहन्मूलश्च, किंभूतां फलसम्पत्तिं करप्रचेयां हस्तप्राप्यां, सम्पत्तिं फलदानलक्षणाम् । (१)अपि बृहन्मूलो भवति ॥ ८३ ॥

'प्रज्ञोत्साहावतः स्वामी' इत्यत्रैव तावेव प्रभुशक्तेर्मूलमित्युक्तं, तदेव व्यनक्ति—

करेति ।। उत्तुङ्गो महोन्नतः प्रज्ञाबलं मन्त्रशक्तिरेव बृहत्प्रधानं मूलं यस्य सः उत्साह एव पादपः करेण बलिना प्रचेयां वर्धनीयां हस्तग्राह्यां च 'बलिहस्तांशवः कराः' इत्यमरः । प्रथीयसीं पृथुतराम् । 'र ऋतो हलादेः-' इति रेफादेशः । प्रभुशक्तिं तेजोविशेषम् । 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरः । फलति । प्रसूते इत्यर्थः । फल निष्पत्तौ । मन्त्रपूर्वक एवोत्साहः फलति । विपरीतस्तु छिन्नमूलो वृक्ष इव शुष्यतीति भावः । रूपकालङ्कारः ॥ ८३ ॥

शक्तित्रययोगे राजशब्दः प्राप्यते नान्यथेति दर्शयितुमाह—

बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः ॥
चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥ ८४ ॥

बुद्धिशस्त्र इति ॥ एवंविधो यः कोऽपि पुरुषः स पार्थिवो राजा न सर्वः । पुरुषविशेषः कोऽपि राजन्य उच्यते, बुद्धिशस्त्रादियोगे सति राजा भूयत इति यावत् । इतश्च षड् गुणा इत्यादिना शक्तीनामाप्रधान्यत्वमुक्तमिति भावः । अथ चैवंविधो यः पार्थिवः स कोऽपि पुरुषः पुरुषलक्षणोऽसौ बोद्धव्यः इति वक्रोक्तिः । तमेव विशेषमाह—किंभूतः बुद्धिशस्त्रः बुद्धिः प्रज्ञैव शस्त्रं प्रहरणमस्य सः । अन्यो ह्यायुधेन जिघांसति, स तु बुद्ध्यैव इति विशेषः । उक्तं च—

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥

पुनः कीदृशः प्रकृत्यङ्गः प्रकृतय एव पौरा अमात्या एव अङ्गानि यस्य सः । अन्यस्य हि पाणिपादादीनि अङ्गानि भवन्ति, स तु तत्कर्म प्रकृतिभिरेव कुरुते । उक्तं च—

स्वामी जनपदोऽमात्यः कोशो दुर्गं बलं सुहृत् ।
राज्यं सप्तप्रकृत्यङ्गं नीतिज्ञाः सम्प्रचक्षते ॥

अपरं कथंभूतः घनसंवृतिकञ्चुकः घना या संवृतिर्मन्त्रगोपनं सैव कञ्चुकः सन्नाहो यस्य सः । अन्यस्य हि सन्नाहः शस्त्रमयो भवति, स तु मन्त्ररक्षयैवात्मानं रक्षति । अपरं कीदृशः चारेक्षणः चाराः प्रणिधय एव ईक्षणे चक्षुषी यस्य सः । अन्यस्यापि स्वमुखे एव चक्षुषी भवतः, स तु चारैरेवाखिलमवलोकयति । उक्तं च—

गावः पश्यन्ति गन्धेन वेदैः पश्यन्ति वाडवाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥

दूता एव मुखं यस्य । अन्यस्य हि शरीरलग्नं मुखं भवति, स तु मुखकार्यं भाषणादिकं दूतत एव कुरुते । अत एव पुरुषः कोऽपि पार्थिवः । तदेतेन यो मन्त्रशक्त्या युक्तः स राजोच्यते नान्य इत्युक्तं भवति ॥ ८४ ॥

विमृष्यकारिणस्तु विश्वमपि विधेयं स्यादिति श्लोकेनाह—

बुद्धिशस्त्र इति ॥ बुद्धिरेव शस्त्रं यस्य स बुद्धिशस्त्रः । अमोघपातित्वात्तस्या इति भावः । प्रकृतयः

---

(१) इदमधिकं भाति ।

स्वाम्यादिराज्याङ्गानि । 'राज्याङ्गानि प्रकृतयः' इत्यमरः । ता एवाङ्गानि यस्य सः । तद्वैकल्ये राज्ञो वैकल्यं स्यादिति भावः । घना दुर्भेदा संवृतिर्मन्त्रगुप्तिरेव कञ्चुकः कवचो यस्य स तथोक्तः । मन्त्रभेदे राज्यभेदादिति भावः । चरतीति चरः । पचाद्यच् । स एव चारो गूढपुरुषः । प्रज्ञादित्वात्स्वार्थिकोऽण्प्रत्ययः । 'चारश्च गूढपुरुषः' इत्यमरः । स एवेक्षणं चक्षुर्यस्य स चारेक्षणः । अन्यथा स्वपरमण्डलवृत्तान्तादर्शनात् । 'अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे' इति भावः । दूतः सन्देशहरः । 'स्यात्सन्देशहरो दूतः' इत्यमरः । स एव मुखं वाग्यस्यासौ दूतमुखः । अन्यथा मूकस्येव वाग्व्यवहारासिद्धौ तत्साध्यासाध्यकार्यप्रतिबन्धः स्यादिति भावः । एवंभूतः पार्थिवः कोऽपि पुरुषोऽन्य एवायम् । लोकविलक्षणः पुमानित्यर्थः । अतो राज्ञा बुद्ध्यादिसम्पन्नेन भवितव्यम् । एतदेवाप्रमत्तत्वम् । अन्यथा स्वरूपहानिः स्यादिति भावः । अत्र कोऽपीति राज्ञो लोकसम्बन्धेऽपि तदसम्बन्धोक्त्या तद्रूपातिशयोक्तिः । सा च बुद्धिशस्त्र इत्यादिरूपकनिर्व्यूढेति तेन सहाङ्गाङ्गिभावेन सङ्करः ॥ ८४ ॥

इदानीं केवलतेजःसमाश्रयणेन यदभिहितं मा जीवन्निति दूषयितुमुपक्रमते—

**तेजः क्षमा वा नैकान्तात्(१) कालज्ञस्य महीपतेः ॥**
**नैकमोजः प्रसादो वा रसभाग(२)विदः कवेः ॥ ८५ ॥**

**तेज इति ॥ कालज्ञस्य समयज्ञस्य महीपतेः राज्ञ एकान्तात् निरन्तरं न तेजः शौर्यम्, वा अथ वा एकान्ततो निरन्तरं न क्षमा न मार्दवम् । कस्येव कवेरिव । यथा कवेः काव्यकर्तुः एकं केवलं न ओजः, वा अथवा केवल एव न प्रसादः । बहु समासवती वृत्तिरोजः, असमासवती वृत्तिः प्रसादः । किंभूतस्य कवेः रसभागविदः रसभागज्ञस्य । रसाः—**

**शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।**
**बीभत्साद्भुतशान्ताश्च ॥**

**तेषां भागो विषयः तं वेत्तीति रसभागवित् तस्य । यश्च रसभागं कविर्जानाति तेनैक एव गुणः ओजः प्रसादो वा नाश्रयणीयः । यथा शृङ्गारकरुणयोः प्रसाद एव शोभामावहति, रौद्रे तु ओज एव इति जानातीत्यर्थः । केचित्तु रसभावविद इति पठन्ति, तत्पुनर्न युज्यते । रसभावयोरेकयोगक्षेमत्वात् । भाव एव रसो भवति । किञ्च रसेष्वेव रीतयो विभक्ता न च भावेषु ॥ ८९ ॥**

चतुर्थोपायसाध्य इत्यादिना यत्क्षात्रमेव कर्तव्यमुक्तं तत्रोत्तरमाह—

**तेज इति** ॥ कालं जानातीति कालज्ञस्तस्य । अयं काल इति विदुष इत्यर्थः । आतोऽनुपसर्गे कः, न तु 'इगुपध—' इत्यादिना कविधिः । समासे कर्मोपपदस्यैव वलवत्त्वभाषणात् । तस्य महीपतेस्तेजः क्षात्रमेवेति वा एकान्तं नियमो न नास्ति । किन्तु यथाकालमुभयमप्याश्रयणीयमित्यर्थः । तथा हि—रसान् शृङ्गारादीन्भावान् निर्वेदादींश्च वेत्ति यस्तस्य रसभावविदः । भावग्रहणं सम्पातायातम् । कवेः कवितुरेकं केवलमोजः प्रौढप्रबन्धत्वं वा, एकः प्रसादः सुकुमारप्रबन्धत्वं वा न । किन्तु तत्र हि रसानुगुण्येन यथायोग्यमुभयमप्युपादेयम् । दृष्टान्तालङ्कारः ॥ ८५ ॥

न चाप्यकाले तेजस्विता फलवती भवतीति दर्शयितुमाह—

**कृतापराधोऽपि(३) परैरनाविष्कृतविक्रियः ॥**
**असाध्यः कुरुते कोपं प्राप्ते काले गदो यथा ॥ ८६ ॥**

**कृतापराध इति ॥ यो विचक्षणः स परैः शत्रुभिः कृतापराधोऽपि विहितद्रोहोऽपि काले प्राप्ते कोपं कुरुते लब्धबलः सन् तेजस्वितामाश्रयति । यतस्तदा असावसाध्यः**

---

( १ ) नैकान्तम् । ( २ ) रसभाव । ( ३ ) पचारोऽपि ।

अजय्यः, पूर्वमुपद्रुतोऽप्यशक्तित्वात्। कथंभूतः सः अनाविष्कृतविक्रियः अदर्शितक्रोधः। तेन यदा शक्तिसम्पन्नवति तदाऽपराधिषु तैक्ष्ण्यमाश्रयणीयम्, न सर्वदेत्युक्तं भवति। उक्तं च—

वहेदमित्रं स्कन्धेन यावत्कालविपर्ययः।
तमेव चागते काले भिन्द्याद् घटमिवाश्मनि॥

क इव गद इव। यथा गदो रोगः जनैः कृतापथ्योऽपि काले प्राप्ते सत्यनुच्छेद्यत्वात् कोपं कुरुते विकारं प्रकटयति तथा रीत्या राजा इति॥ ८६॥

यदुक्तं 'क्रियासमभिहारेण विराध्यन्तं क्षमेत कः' इति, तदनन्तरमाह—

**कृतापचार इति**॥ परैः शत्रुभिः कृतः अपचारोऽपकारः अपथ्यं च यस्य सः, तथाऽप्यनाविष्कृत विक्रियोऽन्तर्गूढविकारः। अत एवासाध्योऽप्रतिसमाधेयः सन् गदो यथा रोग इव। 'इववद्वा यथाशब्द'- इति **दण्डी**। काले बलक्षयावसरे प्राप्ते सति कोपं कुरुते। प्रकुप्यतीत्यर्थः। तदुक्तम्—

'वहेदमित्रं स्कन्धेन यावत्कालविपर्ययः।
तमेव चागते काले भिन्द्याद् घटमिवाश्मना'॥

इति॥ ८६॥

न चाप्यकालेष्वेकान्ततो दारुणेन भवितव्यमिति दर्शयितुमाह—

**मृद्वव्यवहितं तेजो भोक्तुमर्थान्प्रकल्पते॥**
**प्रदीपः स्नेहमादत्ते दशया ह्यन्तर(१)स्थया॥ ८७॥**

**मृद्विति**॥ तेजः शौर्यं मृदुव्यवहितं मार्दवमिश्रं सत् अर्थान् भूम्यादीन् भोक्तुं प्रकल्पते समर्थं भवति। युक्तोऽयमर्थः। हि यस्मात्कारणात् प्रदीपः तेजःस्वभावोऽपि अन्तरन्थया दशया स्नेहमाधत्ते मृद्व्या मध्यवर्तिन्या सत्या वर्त्या तैलं गृह्णाति। मृदुगुणवर्ती दशां विना तेजोवानपि दीपः तैलं भोक्तुमलं न स्यात्। उक्तं च—

मृदुमप्यवमन्यन्ते तीक्ष्णादुद्विजते जनः।
एतद् बुद्ध्वा महाराज! मा तीक्ष्णो मा मृदुर्भव॥ ॥ ८७॥

इतश्च क्षन्तव्यमिदानीमित्याह—

**मृद्विति**॥ मृदुना मृदुवस्तुना व्यवहितमन्तर्हितं तेजः अर्थान्भोक्तुं प्रकल्पते प्रभवति। तथा हि— प्रदीपोऽभ्यन्तरस्थया मध्यस्थया दशया वर्त्या। 'दशा वर्ताववस्थायां स्नेहस्तैलादिके रस' इति **विश्वः**। स्नेहं तैलादिकमर्थमादत्ते। अन्यथा स्वयमेव निर्वायादिति। ततः क्षान्तिपूर्वमेव क्षात्रं फलतीति सर्वथा प्रथमं क्षन्तव्यमिति भावः। विशेषेण सामान्यसमर्थनादर्थान्तरन्यासः॥ ८७॥

नापि दैवमुल्लङ्घ्य समारम्भयितव्यमिति दर्शयितुमाह—

**नालम्बते दैष्टिकतां न निषीदति पौरुषे॥**
**शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते॥ ८८॥**

**नालम्बत इति**॥ यो हि विद्वान् शास्त्रज्ञः स द्वयमपेक्षते आश्रयति। तदेव स्वरूपेण दर्शयति—दैष्टिकतां दैवपरतां शास्त्रैकविषयं केवलं नालम्बते नाश्रयति, नापि पौरुषे पुरुषकारे निषीदति अवतिष्ठते। क इव सत्कविरिव। यथा सत्कविर्बाणप्रभृतिर्द्वौ शब्दार्थौ काव्येष्वपेक्षते। न हि केवलान् शब्दालङ्कारान् उपादत्ते नापि केवलान् अर्थालङ्कारानपि तु निरवद्यं स्वकाव्यं कर्तुं द्वयमपि अपेक्षते। उक्तं च—'शब्दार्थौ काव्य'मिति। तत्केवलेन

(१) ऽभ्यन्तर।

पौरुषाश्रयेण चैद्यो न जेय इत्युक्तं भवति। दिष्टे मतिरस्य दैष्टिको दैवशरणोऽत्र विविक्षितः। 'अस्ति नास्ति दिष्टं मति'रिति ठक् । पुरुषाणां कर्म पौरुषं युवादित्वादण् ॥ ८८ ॥

तर्हि पौरुषं मा भून्नित्यं क्षममाणस्य दैवमेव श्रेयो विधास्यतीत्याशङ्क्याह—

**नालम्बते इति** ॥ विद्वानभिज्ञः दिष्टे मतिर्यस्येति दैष्टिकः । दैवप्रमाणक इत्यर्थः । 'दैवं दिष्टं भागधेयम्' इत्यमरः । 'अस्तिनास्तिदिष्टंमतिः' इति ठक् । तद्भावं दैष्टिकतामेव नालम्बते । सर्वथा यद्भविष्यस्य विनाशादिति भावः । तथा पौरुषं केवलपुरुषकारेऽपि । युवादित्वादण्प्रत्ययः । न निषीदति न तिष्ठति । दैवप्रातिकूल्ये तस्य वैफल्यादिति भावः । किन्तु सत्कविः सत्कविता शब्दार्थाविव । तयोः काव्यशरीरत्वादिति भावः । यथाह वामनः—'अदोषो सगुणौ सालङ्कारौ शब्दार्थौ काव्यम्' इति । द्वयं पौरुषं दैवं चापेक्षते । अतः पौरुषमप्यावश्यकम्, किन्तु काले कर्तव्यमिति विशेषः । पौरुषाऽदृष्टयोः परस्परसापेक्षत्वादिति भावः ॥ ८८ ॥

जिगीषुरेकः कल्पते इत्युक्तं, तत्रैव किं नाम जिगीषुत्वमुच्यते यस्योपरि नेतर इति तद्गुणानाह—

**स्थायिनोऽर्थे प्रवर्तन्ते भावाः सञ्चारिणो यथा ॥**
**रसस्यैकस्य भूयांसस्तथा नेतुर्महीभुजः(१) ॥ ८९ ॥**

**स्थायिन इति** ॥ हे कृष्ण ! यथा सञ्चारिणो व्यभिचारिणो भावा निर्वेदादयस्त्रयस्त्रिंशत्संख्याकाः स्थायिनः स्थिरतस्य रसस्य अर्थे कार्ये प्रवर्तन्ते । भावा एवातिसेविताः सन्तो रसतां यान्ति रसीभवन्ति । तथा तेन प्रकारेण नेतुर्नायकस्य जिगीषोरर्थे कार्ये एकादशसंख्याकाः महीभुजो राजानो वर्तन्ते । किंभूतस्य नेतुः स्थायिनः एकदेशस्थस्य महीभुजः, कीदृशाः सञ्चारिणः घटनशीलाः । तथा नेता नायको विजिगीषुर्यो महीपः स्थायी स्थिरएकादशस्थो वा तस्यार्थे प्रयोजनेऽन्ये सञ्चारिणो घटनशीला राजानः प्रयतन्ते । यथा स्थायिनो रसस्यैकस्यार्थेऽन्ये सञ्चारिणो भावाः । उक्तं च—

दीपयन्तः प्रवर्तन्ते ये पुनः स्थायिनं रसम् ।
ते तु सञ्चारिणो ज्ञेया न ते स्थायित्वमागताः ॥

व्यभिचारिणो भावा निर्वेदादयस्त्रयस्त्रिंशत् । उक्तं च—

निर्वेदोऽथ तथा ग्लानिः शङ्काऽसूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ताऽपस्मार एव च ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रा मोहः स्मृतिर्धृतिः ॥
स्वप्नं विबोधोऽमर्षश्चाप्यवहित्थं तथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदिमे भावाः समाख्यातास्तु नामतः ॥

अत्र तु रसहेतुत्वात् स्थायीभावः उत्पादको रसो विवक्षितः । तथा च—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयशमाः स्थायिभावाः प्रकीर्तिताः ॥

(१) महीभृतः ।

चिरं चित्तेऽवतिष्ठन्ते सम्बध्यन्तेऽनुबन्धिभिः ।
रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽपि ते ॥

रसाः शृङ्गारादयो नव—शृङ्गारहास्यरौद्रकरुणा वीरभयानकाः बीभत्साऽद्भुतशान्ताख्याः । निर्वेदादयो भावाः, ते स्थायिनं भावं रसीभवन्तं पोषयितुं प्रवर्तन्ते । अथ वा शृङ्गारादिवचन एव रसशब्दः स्थायिभावहेतुत्वात्, तस्य स्थायित्वं यथाश्लोकम् । स्थायिन इति षष्ठ्येकवचनम् । ये तु जसन्तमाहुः, स्थायिनो भावाः सञ्चारिणश्चेति व्याचक्षते। तदयुक्तं, यत एकस्य रसस्य स्थायी एक एव भावोऽर्थे प्रवर्तते न च बहवः । स्थाय्येव रसीभवेदिति विरुद्धं स्यात् । उपमेयसाम्यं न स्यात्, तत्र स्थायिशब्दस्य एकवचनान्तत्वात् । तदेतेन विजिगीषुमहिमा कथितः ॥ ८९ ॥

अथ क्षान्तेः फलमाह—

स्थायिन इति ॥ रस्यते स्वाद्यते इति रसः शृङ्गारादिः, रसतेः स्वादनार्थत्वाद्रस्यन्त इति ते रसा इति निर्वचनात् । तस्य रसस्य रसीभवतः स्थायिभावस्य रत्यादेः ।

'रतिर्हासश्च क्रोधश्च शोकोत्साहभयानि च ।
जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिताः' ॥

इत्युक्तत्वात् । एकस्यैवार्थे स्वादुभावरूपे प्रयोजने भूयांसः सञ्चारिणो व्यभिचारिणो भावा निर्वेदादयः । विभावादीनामुपलक्षणमेतत् । यथा प्रवर्तन्ते । तदुक्तम्—

'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वादुत्वं स्थायिभावो रसः स्मृतः' ॥

इति । तथा स्थायिनः स्थिरस्य । क्षान्त्या कालं प्रतीक्षमाणस्येत्यर्थः । एकस्यैव नेतुर्विजिगीषोर्नायकस्यार्थे प्रयोजने भूयांसो महीभृतो राजानः प्रवर्तन्ते । स्वयमेवास्य कार्यं साधयन्तीत्यर्थः । ततः क्षन्तव्यमिति भावः । केचित्तु भावपदस्यापि रसपरत्वमाश्रित्य यथा सञ्चारिणः प्रसङ्गादागन्तुका अन्ये रसाः स्थायिनः स्थिरस्यैकस्य मुख्यस्यार्थे प्रवर्तन्ते, तथाऽस्मिन्नेव काव्ये वीरस्य शृङ्गारादय इति व्याचक्षते । उपमालङ्कारः॥८९॥

अथ कथं ते नेतुरर्थे प्रवर्तन्ते इत्याह—

अनल्पत्वात्प्रधानत्वादंश(१)स्येवेतरे स्वराः ॥
विजिगीषोर्नृपतयः प्रयान्ति परिवारताम् ॥ ९० ॥

अनल्पत्वादिति ॥ विजिगीषोर्नृपचक्रनाभितुल्यस्य राज्ञोऽन्ये नृपतयः परिवारतां प्रयान्ति परिच्छदत्वं व्रजन्ति । कर्मकराः सम्पद्यन्त इत्यर्थः । कस्मात् अनल्पत्वात् अखिलशक्तियोगात अपरं प्रधानत्वात् । राजगुणयोगात् प्रधानत्वम् । क इव इतरे स्वरा इव । यथाऽन्ये स्वरा अनुदात्तादयः अंशस्य अंशाभिधानस्वरस्य उदात्तस्वरस्य बहुलध्वनेः परिवारतां गच्छन्ति । सोऽपि सकृदुच्चारणादनल्पो भवति । उक्तं च 'योऽत्यन्तबहुलो यत्र वादी चांशस्य तत्र स' इति । अत एव प्रधानत्वम् । इतरस्वरपरिभावुकत्वेन वा इतरस्वरात् परिभवति । अत एव प्रधानश्च ॥ ९० ॥

क्षान्तिपक्ष एव गुणान्तरमाह—

अनल्पत्वादिति ॥ अनल्पत्वात्प्रज्ञोत्साहाधिकत्वादत एव प्रधानत्वान्मण्डलाभिज्ञत्वात्, अन्यत्राल्पत्वादुच्चैस्तरत्वात् प्रधानत्वान्नायकस्वरत्वाच्च वंशस्य वंशवाद्यस्वरस्य इतरे स्वरा वीणागानादिशब्दा इव । अथ वा आश्रयत्वाद्वंश इव वंशस्तत्कालविहितः स्वर उच्यते । तस्य स्वरस्येतराः षड्जादयः विजिगीषोर्नृपत-

---

(१) ०र्वंश० ।

योऽन्ये मण्डलपरिवर्तिनो राजानः परिवारतां पोष्यतां प्रयान्ति। तत्कार्यमेव साधयन्तीत्यर्थः। तस्माद्विमृष्य कर्तव्यमित्यर्थः॥ ९० ॥

एतदेवोज्ज्वलयति—

**अप्यनारभमाणस्य विभोरुत्पादिताः परैः॥**
**व्रजन्ति गुणतामर्थाः शब्दा इव विहायसः॥ ९१ ॥**

**अपीति॥** विभोर्विजिगीषो राज्ञोऽनारभमाणस्यापि निःक्रियस्यापि अर्था भूम्यादयो गुणतां व्रजन्ति उपकरणतां यान्ति। तदीया भवन्तीत्यर्थः। किंविधाः परैरन्यै राजभिरुत्पादिता अर्जिताः। क इव शब्दा इव। यथा शब्दा ध्वनयो विहायस आकाशस्य गुणतां व्रजन्ति। शब्दो ह्यम्बरगुणः। कीदृशाः शब्दा अन्यैः पटहादिभिर्वादित्रैरुत्पादिताः, किंभूतस्य अनारभमाणस्यापि उदासीनस्यापि। अन्यैर्हि पटहादिभिः शब्द उत्पाद्यते विभोः सर्वव्यापिनो निःक्रियस्य चाकाशस्य गुण इति कथ्यते। तदेतेन प्रभुत्वे महिमानं दर्शयित्वाऽऽश्रयणीयत्वमुक्तम्। विभुः प्रभुः शक्तियुक्तः सर्वव्यापी वा। अपि विस्मये॥ ९१॥

**अपीति॥** किञ्च अनारभमाणस्य स्वयमकिञ्चित्कुर्वाणस्यापि विभोः प्रभोः व्यापकस्य च परैरन्यैर्नृपतिभिः शङ्खभेर्यादिभिश्च उत्पादिताः, सम्पादिताः जनिताश्चार्थाः प्रयोजनानि विहायस आकाशस्य शब्दा इव गुणतां विशेषणतां कारणत्वाद् गुणत्वं व्रजन्ति। शक्तो हि राजा स्वयमुदासीन एवाकाशवत्स्वमहिम्नैव कार्यदेशं व्याप्नुवन् शब्दानिव सर्वार्थानपि स्वकीयतां नयतीत्यर्थः। 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती॥ ९१ ॥

इत्यादीनां तेजस्वितामाह—

**यातव्यपार्ष्णिग्राहादिमालायामधिकद्युतिः॥**
**एकार्थतन्तुप्रोतायां नायको नायकायते॥ ९२ ॥**

**यातव्येति॥** नायको विजिगीषुर्यातव्यपार्ष्णिग्राहादिमालायां नायकायते तरलमणिवदाचरति। तेजोयुक्तो राजा सर्वेषां प्रधान इत्यर्थः। यातव्योऽभिगम्यः प्राकृतोऽरिः, पार्ष्णिग्राहः पाश्चात्यो राजा। आदिग्रहणमाक्रन्दाद्यर्थम्। माला पङ्क्तिः सैव माला स्रक् तस्यां नायकायते नायको मध्यमणिस्तरल इवाचरति। कर्तुः क्यङ्। तत्र यातव्यः अर्यादिकः, पार्ष्णिग्राहादि मध्यमादि। किंभूतायां मालायामेकार्थतन्तुप्रोतायाम्। एकश्चासावर्थश्च एकार्थः पृथ्वीलक्षणः स एव तन्तुः तत्र प्रोतायां लग्नायाम्। माला अपि तन्तुभिः सह सम्बध्यते। यतः कीदृशो नायकः अधिकद्युतिः उत्कृष्टतेजाः। तदेतेन पृथिव्यर्थिनां राज्ञां स एव सार्वभौमो भवति यस्तेजस्विताया अधिकद्युतिर्भवति इति तेजस आश्रयणीयत्वमुक्तम्॥ ९२ ॥

**यातव्येति॥** किञ्च एकार्थे एकप्रयोजनं स एव तन्तुः सूत्रं तत्र प्रोतायाम्। एकाभीष्टाभिलाषिण्यामित्यर्थः। प्रपूर्वाद्वेञः कर्मणि क्तः। 'वचिस्वपि-' इत्यादिना सम्प्रसारणम्। यातव्योऽभिषेणयितव्योऽरिः पार्ष्णिं गृह्णातीति पार्ष्णिग्राहः पृष्ठानुधावी। कर्मण्यण्। तावादी येषां ते पूर्वोक्ताः पङ्क्तिशः स्थितास्त एव माला रत्नमालिका तस्यामधिकद्युतिर्महातेजा नायकः शक्तिसम्पन्नो जिगीषुर्नायकायते मध्यमणिरिवाचरति। स्वयमेव सर्वोत्कर्षेण वर्तते इत्यर्थः। तस्माद्विमृष्य कर्तव्यमिति भावः। 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि' इति विश्वः। 'उपमानादाचारे' इति क्यङ्। 'अकृत्सार्वधातुक-'इति दीर्घः। नायकायते इत्युपमा, अन्यथाऽनुशासनविरोधात्। एकार्थतन्त्वित्यत्र तु रूपकम्। अधिष्ठानतिरोधानेनारोप्यमाणतन्तुत्वस्यैवोद्भटत्वात्प्रोतत्वसिद्धेस्तदेव युक्तम्। तद्बलात्पार्ष्णिग्राहादिमालायामित्यत्रापि रूपकमेव। तदनुप्राणिता चेयमुपमेत्यङ्गाङ्गिभावेन तयोः सङ्करः॥ ९२ ॥

षाड्गुण्यादि भूषयितुमाह—

**षाड्गुण्यमुपयुञ्जीत शक्त्यपेक्षं(१) रसायनम् ॥**
**भवन्त्यस्यैवमङ्गानि स्थास्नूनि बलवन्ति च ॥ ९३ ॥**

**षाड्गुण्यमिति** ॥ षाड्गुण्यमुपयुञ्जीत षडेव गुणाः सन्ध्यादयः तेषां भावः षड्भावः षाड्गुण्यं तदुपयुञ्जीत व्यवहरेत । कथं शक्त्यपेक्षं यथाशक्ति शक्तेरनतिक्रमेण, न राभसिकतया न तु दर्पेण वा । आत्मसामर्थ्यं बुद्ध्वा य एव गुणो हितः सन्धिर्वा विग्रहादिर्वा, स एव विधेय इत्यर्थः । कीदृशं षाड्गुण्यं रसायनम्, अय्यते प्राप्यतेऽनेनेति अयनं रसाया भुवोऽयनं रसायनम् । पृथिवीप्रापकमित्यर्थः । षाड्गुण्येन हि विचार्य प्रयुक्तेन पृथिवी प्राप्यते । किमेवं सति सिध्यतीत्याह—एवं यथाबलं षाड्गुण्यप्रयोगे सति अस्य राज्ञोऽङ्गानि प्रकृतयः स्थास्नूनि अविचलानि बलवन्ति समर्थानि च भवन्ति । अन्यथा तु तानि त्रुट्येयुः । शास्त्रपूर्वको व्यवहार उदयायेति तात्पर्यार्थः । उक्तं च—

मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम् ।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम् ॥

अथ चोक्तिः—रसायनमिव रसायनं, यथा कश्चित् षड्रससंयुक्तं रसायनमौषधं शरीरशक्तिमपेक्ष्योपयुङ्क्ते । तस्याऽप्यङ्गानि पाणिपादादीनि सबलानि भवन्ति ॥ ९३ ॥

अथ विमृष्यकरणप्रकारमाह—

**षाड्गुण्यमिति** ॥ शक्तिं प्रभावादित्रयं बलं चापेक्षत इति शक्त्यपेक्षः सन् । पचाद्यच् । 'शक्तिर्बले प्रभावादौ' इति विश्वः । षड् गुणा एव षाड्गुण्यं सन्धिविग्रहादिषट्कम् । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः । तदेव रसायनमौषधविशेषमुपयुञ्जीत सेवेत । 'रसायनं विहङ्गेऽपि जराव्याधिभिदौषधे' इति विश्वः । एवं सत्यस्य प्रयोक्तुरङ्गानि स्वाम्यादीनि ।

'स्वामी जनपदोऽमात्यः कोशो दुर्गबलं सुहृत् ।
राज्यं सप्तप्रकृत्यङ्गं नीतिज्ञाः सम्प्रचक्षते' ॥

इति । गात्राणि च स्थास्नूनि स्थिराणि । कालान्तरक्षमाणीत्यर्थः । 'ग्लाजिस्थश्च—' इति ग्स्नुः । बलवन्ति च परपीडाक्षमाणि च भवन्ति । श्लिष्टपरम्परितरूपकम् ॥ ९३ ॥

अथ शक्त्यनपेक्षमारम्भतः किं भवतीति स्थानवृद्धिक्षयाख्यास्त्रय उदया विद्यन्ते तन्निरूपयितुमाह—

**स्थाने शमवतां शक्त्या व्यायामे वृद्धिरङ्गिनाम् ॥**
**अयथाबलमारम्भो निदानं क्षयसम्पदः ॥ ९४ ॥**

**स्थाने इति** ॥ अङ्गिनां राज्ञां स्थाने चयापचयरहितायामवस्थायां वृद्धिर्भवति । सप्त प्रकृत्यङ्गानि येषां तेऽङ्गिनो राजानस्तेषाम्, किंभूतानां शमवतां श्रितसन्धिगुणानां सन्धिगुणयुक्तानां पुनरपरम् अङ्गिनां राज्ञां शक्त्या व्यायामे विग्रहे सति वृद्धिर्भवति । यथास्थानावस्थाभेदात् शम आश्रयणीयः । यदा तु शक्तीः पश्येत्तदोदयाय पौरुषमाश्रयणीयमित्यर्थः । पुनः अयथाबलं शक्त्यतिक्रमेण आत्मबलमनवलोक्य आरम्भो यत्, तत् क्षयसम्पदो निदानं महत्याः आपदः कारणम् । अशक्ति विग्रहे सति नाशः प्राप्यते इत्यर्थः । अथ चोक्तिः—यः किल अङ्गी शरीरपोषकः स स्थाने ग्रीष्मादौ शमी भवति । स्त्र्यादि न

---

( १ ) शक्त्यपक्षो० ।

सेवत इत्यर्थः । व्यायामे शमे सति शक्त्या सहितो भवति, तस्य वृद्धिः कायस्थौल्यं भवति । यस्तु देहबलमनपेक्ष्य व्यायामस्तेनासौ क्षयं प्राप्नोति ॥ ९४ ॥

स्थाने इति ॥ किञ्च स्थाने शक्यविषये शमवतां क्षमावतामङ्गिनां सप्ताङ्गिनां राज्ञां शरीरिणां च शक्त्या प्रभावाद्यनुसारेण बलेन च व्यायामे व्यापारे षाड्गुण्यप्रयोगे गमनादौ च । सतीत्यर्थः । वृद्धिरुपचयः । राज्यस्य शरीरस्य चेति भावः । विपक्षे बाधकमाह—अयथाबलं शक्त्यतिक्रमेण । 'यथा सादृश्ये' इत्यव्ययीभावे नञ्समासः । आरम्भो व्यायामः क्षयसम्पदोऽत्यन्तहानेर्निदानमादिकारणम् । अङ्गानामिति भावः । तस्मादस्माकमकस्माच्चैद्यास्कन्दनमश्रेयस्करमिति भावः । अत्र विशेष्यस्यापि श्लिष्टत्वात् शब्दशक्तिमूलो वस्तुना वस्तुध्वनिः । अतो द्वयानामङ्गिनामौपम्यं च गम्यते इति संक्षेपः ॥ ९४ ॥

एवं च सामान्यरूपेण नीतिशास्त्रमभिधाय प्रकृते योजयितुमाह—

**तदीशितारं चेदीनां भवांस्तमवमंस्त मा ॥**
**निहन्त्यरीनेकपदे य उदात्तः स्वरानिव ॥ ९५ ॥**

**तदिति** ॥ यतोऽयथाबलमारम्भो निदानं क्षयसम्पदः, तस्मात्तत् । तदिति वाक्योपसंहारे । किं बहुनोक्तेन, हे कृष्ण ! भवान् त्वं तं चेदीनामीशितारं चैद्यं शिशुपालं मा वमंस्त असमर्थोऽयमिति मा वज्ञासीत् । अशक्त एष इत्यवहेलनं तं प्रति मा त्वं वृथा कृथाः इत्यर्थः । यश्चैवं, यथा उदात्तस्वरः अन्यान् स्वरान् एकपदे एकस्मिन् पदे निहन्ति, तथा चैद्य उदात्त उन्नतो महाबलः सन् अरीन् युगपदेव निहन्ति हिनस्ति । 'अनुदात्तं पदमेकवर्ज'मिति । तस्माद्राभसिकतया चैद्यो नावस्कन्द्य इति भावः । अवमंस्तेति माङि लुङ् ॥ ९५ ॥

फलितमाह—

**तदिति** ॥ तत्तस्मादशक्यार्थस्याकार्यत्वात्तं चेदीनामीशितारं शिशुपालं भवान्मा वमंस्त नावमन्यस्व । मन्यतेर्माङि लुङ् । अनुदात्तत्वान्नेडागमः । कुतः—यश्चैद्यः उदात्तः स्वराननुदात्तानिवारीनेकपदे एकस्मिन् पदन्यासे सुप्तिङन्तलक्षणे च निहन्ति हिनस्ति नीचैः करोति च । अतिशूरत्वात्, 'अनुदात्तं पदमेकवर्जम्' इति परिभाषाबलाच्चेति भावः ॥ ९५ ॥

न चासौ स्वशक्त्यैव युक्तः किन्तु बाह्यबलेनापीति दर्शयितुमाह—

**मा वेदि यदसावेको जेतव्यश्चेदिराडिति ॥**
**राजयक्ष्मेव रोगाणां समूहः स महीभृताम् ॥ ९६ ॥**

**मा वेदीति** ॥ हे कृष्ण ! त्वया इति मा वेदि मा ज्ञायि ईदृशं न ज्ञातव्यम् । इति किं, यदसौ चेदिराट् एकोऽसहायो जेतव्यः एकत्वाज्जय्यः इति मा ज्ञायताम् । यतः कारणात् स चैद्यो महीभृतां महीभुजां समूहः स्थानं चयः । क इव राजयक्ष्मेव । यथा राजयक्ष्मा क्षयव्याधिः रोगाणां व्याधीनां समूहः । क्षये हि सर्वव्याधयो रोगाः अरोचकाऽऽलस्यातीसारादयः संमिलन्तीति भावः । मा वेदीति लुङ् लकारः । कर्म तु वाक्यार्थः। च्लेश्चिण् 'चिणो लुगि'ति लुक् । चेदिषु राजत इति चेदिराट् । इतिशब्दो वाक्यार्थपरामर्शकः, क्रियान्तरसम्बन्धो यथा स्यात् । अन्यथा हि जेतव्यः चेदिराट् भवता मा वेदीत्यात्मीयार्थः । यथा परतन्त्रवाक्ययोर्दशदाडिमादिवाक्यवदसम्बद्धता स्यात् ॥ ९६ ॥

न चायमेकाकी किं नः करिष्यतीति मन्तव्यमित्याह—

**मा वेदीति** ॥ असौ चेदिराट् एकः एकाकी अतो जेतव्यः सुजय इति मा वेदि मा ज्ञायि । केन:

कर्मणि माङि लुङ्। यत् यस्मात्स चेदिराट्, राजश्चन्द्रस्य यक्ष्मा राजा चासौ यक्ष्मेति वा राजयक्ष्मा क्षयरोगः रोगाणामिव महीभृतां समूहः समष्टिरूपः। यथाह वाग्भटः—

अनेकरोगानुगतो बहुरोगपुरःसरः।
राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः॥
नक्षत्राणां द्विजानां च राज्ञोऽभूद्यदयं पुरा।
यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः' ॥'

इति। अतो दुर्जय इति भावः। एतेन 'चिरस्य मित्रव्यसनी सुदमो दमघोषजः' इति निरस्तम् ॥९६॥

तामेव सहायसम्पदं स्वरूपेण दर्शयितुमाह—

**सम्पादितफलस्तेन सपक्षः परभेदतः(१)॥**
**कार्मुकेणेव गुणिना बाणः सन्धानमेष्यति ॥ ९७ ॥**

**सम्पादितेति ॥** हे कृष्ण! बाणो बाणासुरस्तेन सह सन्धानमेष्यति ऐक्यं यास्यति। कथंभूतो बाणः सम्पादितफलः कृतोपकारः पूर्वं चैद्येन दत्ताश्वगजदेशः, पुनः कीदृशः सपक्षः सपरिवारः, कस्मात् परभेदतः परभेदात्। परभेदेनैव सम्पादितं प्रयोजनं यस्य। बाणस्यापि त्वं शत्रुरेव। अतो यदासौ इति ज्ञास्यति यत् चैद्यस्य तव भेद उत्पन्नः, ततो मे चैद्येनोपकृतमिति मत्वा तेन सह सन्धिं करिष्यति। कथंभूतेन तेन गुणिना शौर्यादिगुणयुक्तेन, केनेव कार्मुकेणेव। यथा कार्मुकेण धनुषा सह बाणः सन्धानमेति। किंभूतः शरः सम्पादितफलः योजितफलकः। सतोमर इत्यर्थः। तथा सपक्षः सपुङ्खः सवाजश्च पिच्छसहितः। परभेदतो लक्ष्यभेदार्थं सन्धानं कुरुते। कीदृशेन धनुषा गुणिना सज्येन गुणदोरसहितेन ॥९७॥

अथास्य सर्वराजसमष्टितामेव द्वाभ्यां व्याचष्टे—

**सम्पादितेति॥** सम्पादितं फलं लाभो बाणाग्रं च यस्य सः। 'फलं लाभशराग्रयोः' इति शाश्वतः। सपक्षः ससुहृत् कङ्कादिपत्त्रयुतश्च। परेषां भेदकः शत्रुविदारणः। बाणो बाणासुरः शरश्च। गुणिना शौर्यादिगुणवता अधिज्येन च तेन चैद्येन। कर्मणे प्रभवति कार्मुकम्। कर्मण उकञ्। तेनेव सन्धानं सन्धिमेष्यति। अतो नैकाकीति भावः। अत्राप्युपमा श्लेषो वा मतभेदात् ॥ ९७ ॥

भूयोऽपि सहायसम्पत्तिं दर्शयन्नाह—

**ये चान्ये कालयवनशाल्वरुक्मिद्रुमादयः॥**
**तमःस्वभावास्तेऽप्येनं प्रदोषमनुयायिनः॥ ९८॥**

**ये चेति ॥** हे कृष्ण! य एते कालयवनशाल्वरुक्मिद्रुमादयो राजानः तेऽपि एनं चैद्यमनुयायिनः पश्चादागमिष्यन्ति, किंभूतमेनं प्रदोषं प्रकृष्टदोषम्। राजानः कीदृशाः तमःस्वभावाः क्रोधप्रकृतयः तामसाः। सदृशाः सदृशैर्युज्यन्ते। अथ च प्रदोषं रात्रिमुखं तमांस्यवश्यमेवानुयान्तीत्युक्तिलेशः। न चैते राजानस्त्वय्यनुकूलाः, येन तं न यास्यन्ति। यथा वृक्षाः प्रदोषं सन्ध्यासमयमनुयान्ति, कीदृशाः तमःस्वभावाः कृष्णच्छवयः॥ ९८ ॥

**ये चेति ॥** ये चान्ये कालयवनशाल्वरुक्मिद्रुमादयो राजानस्तमःस्वभावास्तमोगुणात्मका अत एव तेऽपि प्रदोषं प्रकृष्टदोषम्। 'प्रदोषो दुष्टराड्वंशौ' इति वैजयन्ती। तामसमेवैनं चैद्यमनुयायिनोऽनुयास्यन्ति। सादृश्यादिति भावः। 'भविष्यति गम्यादयः' इति णिनिर्भविष्यदर्थे। 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठीप्रतिषेधाद् द्वितीया। यथा ध्वान्तं रजनीमुखमनुयाति तद्वदिति वस्तुनाऽलङ्कारध्वनिः॥ ९८ ॥

(१) परभेदनः।

न च तस्य तानात्मीकर्तुं कश्चित् क्लेश इति दर्शयति—

**उपजापः कृतस्तेन तानाकोपवतस्त्वयि ॥**
**आशु दीपयितालपोऽपि साग्नीनेधानिवानिलः ॥ ९९ ॥**

**उपजाप इति** ॥ हे कृष्ण ! तेन चैद्येन भवता सह उपजापो भेदः कृतः प्रपञ्चो विहितः, भेद उपजापः प्रपञ्चः कथ्यते । सोऽल्पोऽपि तान् कालयवनादीन् नृपान् आशु झटिति दीपयिता क्षोभयिष्यति । यतः कीदृशान् आकोपवतः सक्रोधान् त्वयि विषये, क इव अनिलो वायुरिव। यथाऽल्पोऽनिलः साग्नीन् सवैश्वानरान् एधान् इध्मान्(१) दीपयति ज्वलयति ॥ ९९ ॥

ननु बाणादयोऽस्माभिः कृतसन्धाना इदानीं न विराध्यन्तीत्यत आह—

उपजाप इति ॥ तेन चैद्येन कृतोऽल्पोऽप्युपजापो भेदः। 'भेदोपजापौ' इत्यमरः। त्वय्याकोपवतस्तान् बाणादीन् अनिलः साग्नीनेधानिन्धनानीव । 'काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम्' इत्यमरः । आशु दीपयिता सद्यः प्रज्वलयिष्यति । दीपेर्ण्यन्ताल्लुट् । अन्तर्वैराः संहिताः आपदि सति रन्ध्रे सद्यो विश्लिष्यन्तीति भावः ॥ ९९ ॥

एवं च स्वयं दुर्बलेनाऽसहायत्वादसावजय्य इति दर्शयितुमाह—

**बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ॥**
**सम्भूयाम्भोधिमभ्येति महानद्या नगापगा ॥ १०० ॥**

**बृहदिति** ॥ हे कृष्ण ! क्षोदीयानपि तनुरपि बृहत्सहायः सन् गुरुमित्रबलः सन् कार्यान्तं प्रयोजनपारं गच्छति । यतः कारणात् नगापगा पर्वतनदी स्वल्पाऽपि महानद्या विस्ताराधिकया सरिता सह सम्भूय मिलित्वा अम्भोधिमभ्येति समुद्रं प्राप्नोति । अतिशयेन क्षुद्रः क्षोदीयान् ईयसुन् 'स्थूलदूरे'त्यादिना गुणो रेफलोपश्च स्यात् ॥ १०० ॥

ततः किमत आह—

बृहदिति ॥ बृहत्सहायो महासहायवान्क्षोदीयान्क्षुद्रतरोऽपि । 'स्थूलदूर—' इत्यादिना यणादिपरलोपः पूर्वगुणश्च । कार्यस्यान्तं पारं गच्छति । तथा हि—अपां समूह आपम् । 'तस्य समूहः' इत्यण् । तेन गच्छतीत्यापगा नगापगा गिरिनदी महानद्या गङ्गादिकया सम्भूय मिलित्वाम्भोधिमभ्येति । क्षुद्रोऽप्येवं तादृक् । महावीरश्चैद्यस्तु किमु वक्तव्य इत्यपिशब्दार्थः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥१००॥

ननु दानमानादिभिरावर्जितत्वात् गौरवेण च मामेव सर्वे पार्थिवास्तिष्ठन्ति, तस्य तु कतिपय इति कीदृशी तस्य सहायसम्पदित्याशङ्क्याह—

**तस्य मित्राण्यमित्रास्ते ये च ये चोभये नृपाः ॥**
**अभियुक्तं त्वयैनं ते गन्तारस्त्वामतः परे ॥ १०१ ॥**

**तस्येति** ॥ हे कृष्ण ! ते राजानः एनं चैद्यं गन्तारः गमिष्यन्ति सहाया भविष्यन्ति, किंभूतं चैद्यं त्वया अभियुक्तम् उत्तमं (?) ग्रहीतुमारब्धम्। के ते ये तस्य मित्राणि तव तु न केचित् । तथा ये तवापि अमित्राः रिपवः, तस्य तु न केचित् । ये च उभये द्विरूपा नृपास्तस्य मित्राणि तव चामित्रास्तस्य च मित्रामित्राणि तव च अमित्रामित्राणि, तेऽपि एनं चैद्यं गमिष्यन्ति । एभ्यो येऽन्ये राजानः ते त्वामनुयास्यन्ति, ते के तव मित्राणि तस्य तु न केचित् । तथा ये तस्य अमित्रास्तव तु न केचित् । ये च उभये तवापि मि-

---

(१) अत्र क्लीबत्वं युक्तम् ।

त्राणि तस्य चामित्राः, तव च मित्रमित्राणि तस्य चामित्रमित्राणि, ते त्वामनुगमिष्यन्ति। तस्मान्न तवाधिका सहायसम्पदिति भावार्थः। पूर्वं बाणादीनामुपन्यासः प्राधान्यख्यापनार्थः। गन्तार इति लुट् ॥ १०१ ॥

किञ्च न केवलं शत्रोरसाध्यत्वं मित्रविरोधश्चाधिकोऽनर्थकर इत्याह द्वयेन—

तस्येति ॥ ये च तस्य चैद्यस्य मित्राणि नृपाः, ये च ते तवामित्रा नृपास्ते उभये त्वयाऽभियुक्तमभियातमेनं चैद्यं गन्तारो गमिष्यन्ति। गमेः कर्तरि लुट्। अतः परे उक्तोभयव्यतिरिक्ताः। तव मित्राणि तस्यामित्राश्चेत्यर्थः। त्वां गन्तारः ॥ १०१ ॥

एवं सत्यपरोऽनर्थ आयातीति दर्शयितुमाह—

मखविघ्नाय सकलमित्थमुत्थाप्य राजकम् ॥
हन्त ! जातमजातारेः प्रथमेन त्वयारिणा ॥ १०२ ॥

मखेति ॥ हन्त इति खेदे, हे कृष्ण ! अजातारेः युधिष्ठिरस्य प्रथमेन अरिणा त्वया जातम् आद्येन शत्रुणा भवता सम्पन्नम्। किं कृत्वा इत्थममुना प्रकारेण सकलं राजकमुत्थाप्य समग्रं नृपसमूहं क्षोभयित्वा चालयित्वा, किमर्थं मखविघ्नाय यज्ञविध्वंसनाय न तु कार्यान्तरार्थम्। तस्य हि अजातशत्रुरिति सार्थकं नाम। यदा तु त्वं सकलराजन्यकक्षोभद्वारेण यज्ञं विध्वंसयसि विघ्नयसि तदा तस्य त्वमेव प्रथमः शत्रुः, तत्कार्यकारणात्। राज्ञां समूहो राजकम् 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्ये' ति अकञ्। जातमिति भावे क्तः। हन्तेति खेदे ॥ १०२ ॥

ततः किमत आह—

मखेति ॥ इत्थमनेन प्रकारेण। 'इदमस्थमुः' इति थमुप्रत्ययः। मखविघ्नाय मखविघाताय सकलं राजकं राजसमूहम्। 'गोत्रोक्ष—' इत्यादिना वुञ्। उत्थाप्य क्षोभयित्वा। हन्त इति खेदे। अजातारेरजातशत्रोर्युधिष्ठिरस्य त्वया प्रथमेनारिणा जातमजनि। नपुंसके भावे क्तः ॥ १०२ ॥

न च तवैतत्साम्प्रतमिति दर्शयितुमाह—

सम्भाव्य त्वामतिभरक्षमस्कन्धं सुबान्धवः(१) ॥
सहायमध्वरधुरां धर्मराजो विवक्षते ॥ १०३ ॥

सम्भाव्येति ॥ हे कृष्ण ! धर्मराजो युधिष्ठिरोऽध्वरधुरां विवक्षते यज्ञभारं वोढुमिच्छति, किं कृत्वा त्वां सहायं सम्भाव्य निरूप्य। कीदृशं त्वाम् अतिभरक्षमस्कन्धं महाभारसहस्कन्धम्। सहाय उत्साहो वा तस्य। अन्योऽपि विपुलं साहाय्येन भारं वहति। कीदृशो युधिष्ठिरः सुबान्धवः शोभना बान्धवास्त्वादृशा यस्य सः। तदेतेन 'विनाऽप्यस्मदलं भूष्णुरिति, यजतां पाण्डव' इति च निराकृतम्। अध्वर एव धूर्भारोऽध्वरधूरा ताम् ॥ १०३ ॥

अस्तु सोऽपि शत्रुः को दोषस्तत्राह—

सम्भाव्येति ॥ बन्धुरेव बान्धवः स धर्मराजः अतिभरस्य क्षमः स्कन्धो यस्य स तम्। समानस्कन्धमित्यर्थः। त्वां सहायं सम्भाव्याभिसन्धाय। अध्वरस्य धुरमध्वरधुराम्। 'ऋक्पूर–' इत्यादिना समासान्तोऽप्रत्ययः। समासान्तानां प्रकृतिलिङ्गत्वात्तत्पुरुषे परवल्लिङ्गत्वे टाप्। विवक्षते वोढुमिच्छति। वहतेः स्वरितेतः सन्नन्ताल्लिट्। तथा हि विरोधे विश्वासघातो बन्धुद्रोहश्च द्वौ स्यातामिति भावः। विशेषणसाम्यादप्रस्तुतयागधर्मप्रतीतेः समासोक्तिः ॥ १०३ ॥

(१) स बान्धवः।

**महात्मानोऽनुगृह्णन्ति भजमानान् रिपूनपि ॥**
**सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः ॥ १०४ ॥**

**महात्मान इति ॥** महात्मानो विपुलधियः पुरुषा रिपूनपि शत्रूनपि भजमानान् आश्रितान् अनुगृह्णन्ति अङ्गीकुर्वन्ति । दृष्टान्तमाह–यथा सिन्धवो महानद्यः कर्त्र्यः सपत्नीरपि नगनदीः आश्रितत्वादब्धिं प्रापयन्ति । नगनदीनामपि समुद्रः पतिः । समानः पतिरासां ताः सपत्नीः 'नित्यं सपत्न्यादि'ष्विति ङीप्नकारौ प्रत्ययौ । आपो धीयन्तेऽस्मिन्निति अब्धिः 'कर्मण्यधिकरणे चे'ति किः । निम्नं गच्छन्तीति निम्नगाः अन्यत्राऽपि डप्रत्ययः । तथा च **भारविः**–अल्पीयसोऽप्यामयतुल्यवृत्तेर्महापकाराय रिपोर्विवृद्धिः । इति चैद्यगमनमेवानुष्ठितमिति दर्शितम् ॥ १०४ ॥

ननु प्रतिश्रुत्याऽकरणे दोषः प्रागेव, परिहारे तु को दोष इत्यत आह—

**महात्मान इति ॥** महात्मानो निग्रहानुग्रहसमर्था भजमानान् शरणागतान् रिपूनप्यनुगृह्णन्ति । किमुत बन्धूनिति भावः । अर्थान्तरं न्यस्यति—सिन्धवो महानद्यः समान एकः पतिर्यासां ताः सपत्नीः । 'नित्यं सपत्न्यादिषु' इति ङीप् नकारश्च । नगनिम्नगा गिरिनिर्झरिणीरब्धिं प्रापयन्ति । स्वसौभाग्यं ताभ्यः प्रयच्छन्तीति भावः । अतः परिहारोऽप्यनर्थ इति भावः ॥ १०४ ॥

**चिरादपि बलात्कारो बलिनः सिद्धयेऽरिषु ॥**
**छन्दानुवृत्तिदुःसाध्याः सुहृदो विमनीकृताः ॥ १०५ ॥**

**चिरादपीति ॥** हे कृष्ण ! बलिनः पुरुषस्य चिरादपि कालान्तरेणापि अरिषु शत्रुषु विषये बलात्कारः पौरुषं सिद्धयेऽभिमतनिष्पत्तये भवति । कालान्तरेणापि बलिष्ठः शत्रून् उत्साहेन वशीकरोतीत्यर्थः । ये पुनः सुहृदो मित्राणि पूर्वं विमनीकृता रोषिताः, ते छन्दानुवृत्तिदुःसाध्याः । कोपयित्वा छन्दानुवर्तनेन आराधयितुं न शक्यन्ते इत्यर्थः । तदेतेन 'उत्तिष्ठमानस्तु पर' इत्यादि परिहृतम् । पौरुषपर्यायोऽयं बलात्कारशब्दः पृषोदरादित्वात्साधुः। चिरादिति पञ्चम्यन्तप्रतिरूपको निपातः। अविमनसो विमनसः कृता विमनीकृताः अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च, 'अस्य च्वा'वितीत्वम् ॥ १०५ ॥

तर्हि सम्प्रत्युपेक्षायामपि पश्चात्प्रार्थनया पार्थमार्जवयेयमित्यत आह—

**चिरादिति ॥** बलिनः स्वयं बलवतोऽप्यरिषु विषये बलात्कारो दण्डश्चिराच्चिरकालेनापि । सद्यो मा भूदिति भावः । सिद्धये वशंवदत्वसिद्धये । भवतीति शेषः । अविमनसो विमनसः सम्पद्यमानाः कृता विमनीकृताः । वैमनस्यं प्रापिता इत्यर्थः । 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' इति च्विप्रत्ययलोपौ । 'अस्य च्वौ' इतीकारः । शोभनं हृदयं येषां ते सुहृदो मित्राणि तु । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातः । छन्दस्याभिप्रायस्यानुवृत्त्या चित्तानुरोधेनापि दुःसाध्याः । आर्जवयितुमशक्या इत्यर्थः । 'अभिप्रायश्छन्द आशयः' इत्यमरः । शनैः शत्रुर्दण्डेनापि वशो भवति, मित्रे वैमनस्ये न साम्नाऽपीति भावः ॥ १०५ ॥

यत् कृष्णेन पूर्वमुक्तं 'न दूय' इत्यादि तत्प्रत्युत्तरं दित्सुराह—

**मन्यसेऽरिवधः श्रेयान्प्रीतये नाकिनामिति ॥**
**पुरोडाशभुजामिष्टमिष्टिं (१)कर्तुमलन्तराम् ॥ १०६ ॥**

**मन्यस इति ॥** हे कृष्ण ! त्वं नाकिनां देवानां प्रीतये हिताय इति मन्यसे एवं

( १ ) ०मिष्टं ।

विचारयसे, यत अरिवधश्चैद्यनाशः श्रेयान् पार्थगमनाऽऽक्रव्य इति मन्यसे इति काकुप्रयोगः । असज्ञानासीत्यर्थः । यतः कारणात्पुरोडाशभुजां देवानामिष्टिं कर्तुं यज्ञं विधातुम् अलन्तरामतिशयेन इष्टमभीष्टम् । यज्ञकरणमेव तेषां वल्लभमित्यर्थः। ते चेष्टिपिण्डाशिनः यागे च तैर्भवितव्यम् । बुभुक्षितो हि किं शत्रुनाशेन कुरुते इति भावः । इतिर्वाक्यार्थपरामर्शकः । द्वितीयाभावः पूर्ववत् । अन्ये तु इष्टमिति पाठं पठन्ति । एकोऽत्र इष्टशब्दो यागपर्यायो यजेर्भावसाधनः । अपरोऽभिमतार्थः इष्टकर्मसाधनः । कर्तुमिति समानकर्तृकेषु तुमुन् ॥ १०६ ॥

ननु सुहृत्कार्यात्सुरकार्यं बलीय इत्यत्राह--

**मन्यस इति** ॥ नाकिनां देवानां प्रीतयेऽरिवधः श्रेयान्प्रशस्ततरः । 'प्रशस्यस्य श्रः' इति आदेशः । इति मन्यसे चेत्तर्हि पुरोडाशभुजां हविर्भोजिनाम् । अत एव नाकिनामिष्टमभीप्सितं कर्तुम् । इषेः कर्मणि क्तः । इष्टमिष्टिः । याग इति यावत् । यजेर्भावे क्तः । 'वचिस्वपि--' इत्यादिना सम्प्रसारणम् । अलन्तरामतिपर्याप्तम् । अव्ययादामुप्रत्ययः । शत्रुवधादतिप्रियकरो याग एव । नाकिनां भुक्त्वापि शत्रुवधस्य सुकरत्वादिति भावः ॥ १०६ ॥

यतो युधिष्ठरस्य त्वया कृत्वा यज्ञभङ्गेन देवानां महद् दुःखं भविष्यतीति अमृतेनैव देवास्तृप्ता इति चेद्दर्शयितुमाह—

**अमृतं नाम यत्सन्तो मन्त्रजिह्वेषु जुह्वति ॥**
**शोभैव मन्दरक्षुब्धक्षुभिताम्भोधिवर्णना ॥ १०७ ॥**

**अमृतमिति** ॥ नामशब्दोऽवधारणेऽभ्युपगमे वा । अहो ! सन्तः षट्कर्माणो यत् मन्त्रजिह्वेषु जुह्वति हविर्ददति तदेवामृतम् । तद्वाऽमृतमभ्युपगतमित्यर्थः । ननु समुद्रादुत्पन्नममृतं श्रूयते नान्यदित्याह—यतो मन्दरक्षुब्धक्षुभिताम्भोधिवर्णना शोभैव मन्दरक्षुब्धेन मन्दराचलमन्थनेन क्षुभितस्य विलोडितस्य अम्भोधेः समुद्रस्य वर्णना सा शोभैव। तदलङ्कारमात्रमित्यर्थः(१) । मन्दर एव क्षुब्धो वैशाखः । क्षुभ्यते मथ्यतेऽनेन इति कृत्वा क्षुब्धः 'स्वान्तध्वान्ते'ति इडभावः । क्षुभित इत्यत्र भवत्येवाऽर्थान्तरत्वात् । क्षुब्धीति पाठे क्षोभः क्षुब्धिः ॥ १०७ ॥

तथाप्यमृताशिनां तेषां देवानां किमेभिः पिष्टभक्षणप्रलोभनैरत आह—

**अमृतमिति** ॥ अमृतं नाम सन्तो विद्वांसः मन्त्रा एव जिह्वा येषां तेषु मन्त्रजिह्वेष्वग्निषु । 'मन्त्रजिह्वः सप्तजिह्वः सुजिह्वो हव्यवाहनः' इति **वैजयन्ती** । यत्पुरोडाशादिकं जुह्वति । तदेवेति शेषः । यत्तदोर्नित्यसम्बन्धात् । मन्दर एव क्षुब्धो मन्थनदण्डः । 'क्षुब्धध्वान्त---' इत्यादिनास्मिन्नर्थे निपातनात्सिद्धम् । तेन क्षुभितस्य मथितस्याम्भोधेर्वर्णना शोभैवालङ्कार एव । अब्धिमन्थनेनामृतमुत्पादितमिति यतः कीर्तिमात्रम् , अतो हुतमेवामृतमिति भावः। वाक्यार्थयोर्हेतुहेतुमद्भावाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥१०७॥

आस्तां तावन्नीतिशास्त्रं कारणान्तरेणापि भवतश्चैद्यगमनं न युक्तमिति दर्शयितुमाह—

**सहिष्ये शतमागांसि प्रत्यश्रौषीः (२) किलेति यत् ॥**
**प्रतीक्ष्यं तत्प्रतीक्ष्यायै पितृष्वस्रे प्रतिश्रुतम् ॥ १०८ ॥**

**सहिष्य इति** ॥ हे कृष्ण ! यत्त्वं पितृष्वस्रे श्रुतश्रवसे इति प्रत्यश्रौषीः अङ्गीकृतवान् । इतीति किम्, किलेति सत्ये अहं तव सुतस्य शतमागांसि सहिष्येऽपराधशतं क्षमि-

---

( १ ) 'मदकाव्यमेतादित्यर्थः' इत्यादर्शपुस्तके । ( २ ) सूनोस्त इति यत्त्वया ।

स्यामि । तदङ्गीकृतं तत्प्रतिश्रुतं त्वया प्रतीक्ष्यं त्वया प्रतिपालनीयं, पूज्यत्वात् । कीदृश्यै पितृष्वस्रे प्रतीक्ष्यायै । शतं च स्वाभाविकमिति, आगांसि शतमिति सामानाधिकरण्यं न विरुध्यते । प्रत्यश्रौषीरिति लुङ् । प्रतिश्रुतोऽभ्युपगतः । किलेति सत्ये । इतिः क्रियान्तरसम्बन्धे वाक्यार्थपरामर्शकः । 'सूनोस्त इति यत् त्वया' पाठः । इतीति किम् , यत्तु ते तव सूनोः पुत्रस्येति सम्बन्धः ॥ १०८ ॥

यात्रायाः प्रतिबन्धः कश्चिद् दुस्तरस्तवास्तीत्याह—

सहिष्य इति ॥ प्रतीक्ष्यायै पूज्यायै । 'पूज्यः प्रतीक्ष्यः' इत्यमरः । 'पितृष्वस्रे पितृभगिन्यै । 'विभाषा स्वसृपत्योः' इति विकल्पादलुगभावः । 'मातृपितृभ्यां स्वसा' इति षत्वम् । ते तव सूनोः शतमागांस्यपराधान् । 'आगोऽपराधो मन्तुश्च' इत्यमरः । सहिष्ये सोढाहं इति यत्त्वया प्रतिश्रुतं प्रतिज्ञातं तत्प्रतीक्ष्यं प्रतिपालनीयम् । अन्यथा महादोषस्मरणादिति भावः ॥ १०८ ॥

न चैतद्वचनमनुपालयिष्ये इति वक्तुं न तव युज्यते इति दर्शयितुमाह—

> **तीक्ष्णा नारुन्तुदा बुद्धिः कर्म शान्तं प्रतापवत् ॥**
> **नोपतापि मनः सोष्म वागेका वाग्मिनः सतः ॥ १०९ ॥**

तीक्ष्णेति ॥ यतः कारणात् सतः साधोर्वाग्मिनोऽपि एका अद्वितीया सत्या वाक् सत्यभाषणम् । विरुद्धं चैतत्–यो हि वाग्मी विशृङ्खलवाक् भवति तस्य कथमेकसंख्या वाक् भवेत् । अविरोधस्तु अर्थान्तराश्रयणेनोक्त एव । अतः सत्यवादिन इत्येतावदर्थे प्रकृतार्थ उपयोगी । तीक्ष्णेत्यादि प्रसङ्गाददोषस्य विधित्सया चोक्तम् । तथा सतः साधोर्बुद्धिस्तीक्ष्णाऽपि नारुन्तुदा, तीक्ष्णा कुशाग्रीया सूक्ष्मार्थदर्शिन्यपि न मर्मावित् न पीडाकारिणी । यच्च तीक्ष्णं शस्त्रादि तन्मर्मावित् भवतीति विरोधः । यथा सतो बुद्धिस्तीक्ष्णाऽपि नारुन्तुदा एवं वाग् विशृङ्खलाऽप्येकेत्यौपम्यम् । एवमन्यत्र । अपरं साधोः कर्म प्रतापवदपि शान्तं प्रतापवद्विपक्षोद्वेगजनकं शान्तं हिंसादिरहितम् । यश्च प्रकृष्टप्रतापयुक्तो भवति अग्न्यादिः, स कथं शान्तस्तापरहितः स्यादिति विरोधः । अपरं साधोर्मनश्चित्तं सोष्मापि साभिमानमपि न उपतापि अपीडाकरम् । यच्च सोष्म उष्णं सूर्यादि, तत्सन्तापकरं भवतीति विरोधः । औपम्यं पूर्ववत् ॥ १०९ ॥

सत्यमस्ति प्रतिश्रुतं, किन्त्वस्योन्मत्तत्वादौद्धत्यादपि जिहासितमत आह—

तीक्ष्णेति ॥ सतः सत्पुरुषस्य बुद्धिस्तीक्ष्णा निशिता स्यादिति विद्धीत्यध्याहारः । एवमुत्तरत्रापि । तथाप्यरुस्तुदतीत्यरुन्तुदा शस्त्रवन्मर्मच्छेदिनी न भवेत् । अहिंसयैव परं पीडयेदित्यर्थः । कर्म व्यापारः प्रतापवत्तेजस्वि भयदं स्यात् , तथापि शान्तं स्यात् । न तु सिंहादिवद्धिंस्रं भवेदित्यर्थः । मनश्चित्तं सोष्म अभिमानोष्णं स्यात्तथापि उपतापयतीत्युपतापि अग्न्यादिवत्परसन्तापि न स्यात् । वाग्मिनो वक्तुर्वागेका एकरूपा स्यात् । वाग्मी सत्यमेव वदेदित्यर्थः । अतः सत्यसन्धस्य प्रतिश्रुतार्थहानिरनर्हेति भावः । अत्र प्रकृताया वाचोऽप्रकृतानां बुद्धिकर्ममनसां च तुल्यधर्मादौपम्यावगमाद्दीपकालङ्कारः ।

> 'प्रकृताप्रकृतानां च साम्ये तु तुल्यधर्मतः ।
> औपम्यं गम्यते यत्र दीपकं तन्निगद्यते' ॥

इति लक्षणात् । बुद्ध्यादीनां शस्त्रादिव्यतिरेको व्यज्यते ॥ १०९ ॥

अतश्च सत्यवाक्त्वात् यावत् आगःशतं न सम्पूर्णं तावन्नासौ वधार्ह इति दर्शयितुमाह—

> **स्वयङ्कृतप्रसादस्य तस्याह्नो भानुमानिव ॥**
> **समयावधिमप्राप्य नान्तायाऽलं भवानपि ॥ ११० ॥**

स्वयङ्कृतेति॥ हे कृष्ण! तस्य चैद्यस्य अन्ताय वधाय भवानपि नालं न समर्थः, किं कृत्वा समयावधिमप्राप्य वचनसीमानमसमाप्य । यावदागःशतं न पूर्णमित्यर्थः । समयो वचनं कालश्च । किंभूतस्य स्वयमात्मनैव त्वया कृतप्रसादस्य विहितानुग्रहस्य । क इव भानुमान् इव । यथा भानुमान् श्रीसूर्यः अह्नो दिवसस्य अन्ताय वधाय न अलं न समर्थः समयावधिं सन्ध्यासमयमप्राप्य । तेनापि तस्य स्वयमेव प्रसादः प्रसन्नत्वं विधीयते । यदि ह्यसौ नोद्गच्छेत् तत्कथं तन्निस्तमो भवेत् ॥ ११० ॥

अशक्यश्चाऽकाले चैद्यवध इत्याह—

स्वयङ्कृतेति ॥ किञ्च अह्नो भानुमानिव स्वयं कृतः प्रसादोऽनुग्रहः प्रकाशश्च यस्य तस्य चैद्यस्यान्ताय समयावधिं नियतकालावसानमप्राप्य भवानपि नालं शक्तो न ।तथा च वृथाऽपकीर्तिरेव। अन्यत्र किञ्चित्फलं स्यादिति भावः ॥ ११० ॥

एवं चैद्यं प्रति यात्रां निषिध्य तस्यानुपेक्षामाह—

कृत्वा कृत्यविदस्तीर्थैरन्तः(१) प्रणिधयः पदम् ॥
विदाङ्कुर्वन्तु महतस्तलं विद्विषदम्भसः ॥ १११ ॥

कृत्वेति ॥ यतोऽसौ नावस्कन्द्यः, अतोऽस्मात्कारणात् अतोऽनन्तरं वा । हे कृष्ण ! प्रणिधयश्चरा विद्विषदम्भसो रिपुहृदयस्य तलं विदांकुर्वन्तु प्रतिष्ठां जानन्तु । कीदृश्यः कियत्यो वाऽस्य शक्तय इत्यन्तरं गवेषयन्त्वित्यर्थः । . कैस्तीर्थैः विप्रश्रमणादिविशेषैरष्टादशभिः पदमवस्थानं विधाय । कीदृशाश्चराः कृत्यविदः कार्यज्ञाः, अथ कृत्याः क्रुद्धलुब्धभीतावमानितास्तान् विदन्ति कृत्यविदः । केऽस्य क्रुद्धाः केऽस्य लुब्धाः केऽस्य भीताः केऽस्यावमानिता इति ये जानते इत्यर्थः । क्रुद्धान् साम्ना, लुब्धान् दानेन द्रव्येण, भीतान् त्राणेन, अवमानितान् सन्मानेन तान् कार्यान् इति जानन्तीत्यर्थः । किंभूतस्य विद्विषदम्भसः महतः अगाधस्य । यथा कश्चित्पुरुषः अगाधस्याम्भसस्तीर्थैः सोपानैः पदं कृत्वा तलं जानाति, तथा त्वं रिपूणां चरैर्जानीहि इत्यर्थः ॥ १११ ॥

तर्हि किमयमुपेक्ष्य एव नेत्याह—

कृत्वेति ॥ किन्तु कृत्यविदः कार्यज्ञाः विधिज्ञाश्च प्रणिधीयन्त इति प्रणिधयो गूढचारिणः । 'प्रणिधिर्गूढपुरुषः' इति हलायुधः । तरन्त्येभिरिति तीर्थानि मन्त्र्याद्यष्टादशस्थानानि जलावताराश्च ।

'योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि ।
पुण्यक्षेत्रे तथा पात्रे तीर्थं स्यात्' ॥

इति हलायुधः । तेष्वन्तःपदं स्थानं पादप्रक्षेपं कृत्वा महतो दुरवगाहस्य पूज्यस्य च विद्विषतः शत्रोरेवाम्भस्तस्य तलं स्वरूपम् । प्रमाणमिति यावत् । 'अधःस्वरूपयोरस्त्री तलम्' इत्यमरः । विदाङ्कुर्वन्तु विदन्तु । विद ज्ञाने लोट् । 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति विकल्पादाम्प्रत्ययनिपातः । अम्भस इव शत्रोः कृततीर्थस्य सुप्रवेशत्वात्प्रागन्तः प्रविश्य परीक्ष्येत्यर्थः । श्लिष्टपरम्परितरूपकम् ॥ १११ ॥

प्रणिधयश्चावश्यं राज्ञा विधेया इति तत्प्रशंसामुखेनाह—

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ॥
शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥ ११२ ॥

अनुत्सूत्रेति ॥ राजनीतिः पार्थिवस्थितिः एवं गुणयुक्ताऽपि अपस्पशा चररहिता नो

---

(१) ०स्तीर्थेष्वन्तः ।

भाति न शोभते । अपगताः स्पशाश्चरा यस्यां सा । कीदृशी राजनीतिः अनुत्सूत्रपदन्यासा सूत्रं नीतिशास्त्रं तदुत्क्रान्तोऽतिवृत्तः उत्सूत्रः न उत्सूत्रोऽनुत्सूत्रः पदेषु सामादिषु न्यासः पदन्यासः अनुत्सूत्रः सूत्रानुवर्ती पदन्यासो यस्याः सा स्वीकरणादिनियोगो यस्याः सा तथोक्ता । यत् यस्य पुरुषस्य सामादेर्वा स्थानमर्थशास्त्रैर्निर्दिष्टं तत्तत्रैव यस्यां निर्दिष्टमित्यर्थः। उक्तं च—

धार्मिकान् धर्मकार्येषु अर्थकार्येषु पण्डितान् ।
क्लीबान् स्त्रीषु नियुञ्जीत नीचान् नीचेषु कर्मसु ॥
तत्र साम प्रयोक्तव्यं साधुषु गुणवत्सु च ।
दानं लुब्धेषु भेदश्च शङ्कितेष्विति निश्चयः ॥
दण्डः सर्वेषु पतत्सु नित्यकालं दुरात्मसु ।

अन्यत् कीदृशी सद्वृत्तिः सती प्रधाना वृत्तिर्व्यापारो यस्याः सा, अथ वा सती पूर्णा वृत्तिः जीवनोपायो यस्याम् । पुनः किंविधा सन्निबन्धना सन्ति रम्याणि निबन्धनानि शासनपट्टकादीनि यस्यां सा । निबध्यते निश्चिलीक्रियते स्थितिरेभिरिति निबन्धनानि । केव नो भाति शब्दविद्येव नाद्रियते । यथा शब्दविद्या व्याकरणविद्या सद्गुणापि अपस्पशा अनुक्तप्रयोजना न शोभते प्रयोजनग्रन्थरहिता सती न भाति । अविद्यमानः पस्पशः प्रयोजनग्रन्थो यस्याः सा अपस्पशा । यावद्यथा न तत्रोक्तम्–'रक्षोहागमलघ्वसन्देहाः प्रयोजन'मिति, तावन्न तथा तत्र गौरवं स्यात् । प्रयोजनग्रन्थं विना व्याकरणं न प्रतिभाति । सा कीदृशी अनुत्सूत्रपदन्यासा सूत्रं पाणिनिप्रणीतमष्टकं, पदं शेषाहिरचितं भाष्यं, न्यासो जिनेन्द्रकृतः, पदं च न्यासश्च पदन्यासौ सूत्रमुत्क्रान्तौ उत्सूत्रौ न उत्सूत्रौ अनुत्सूत्रौ अनुत्सूत्रौ सूत्रानुगतौ पदन्यासौ यस्यां सा । पुनः किंभूता सद्वृत्तिः सती वृत्तिः काशिका यस्याः सा, सन्निबन्धना सन्ति शोभनानि निबन्धनानि धातुपाठोणादिशिक्षापरिभाषाव्यञ्जनधातुकादीनि यस्याः सा। केचित्तु पदं वाक्यमाहुः, निबन्धनं भाष्यम् । एवंविधाऽपि शब्दविद्या अपस्पशा नो भाति । उक्तं च—

सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् ।
यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते ॥

इति ॥ ११२ ॥

आवश्यकं चैतदित्याह—

**अनुत्सूत्रेति** ॥ उत्सूत्र उच्छास्त्रो नीतिशास्त्रविरुद्धः पदन्यासः एकपदप्रक्षेपोऽपि । स्वल्पव्यवहारोऽपीति यावत् । स नास्ति यस्यां साऽनुत्सूत्रपदन्यासा । नीतिपूर्वकसर्वव्यवहारेत्यर्थः । अन्यत्रानुत्सूत्रपदन्यासा अनुत्सृष्टसूत्राक्षरः इष्ट्युपसङ्ख्याननैरपेक्ष्येण सूत्राक्षरैरेव सर्वार्थप्रतिपादको न्यासो वृत्तिव्याख्यानग्रन्थविशेषो यस्यां सा तथोक्ता । तथा सती यथार्थे कल्पनया शोभना वृत्तिर्भृत्यामात्यादीनामाजीविका यस्यां सा सद्वृत्तिः, अन्यत्र सती वृत्तिः काशिकाख्यसूत्रव्याख्यानग्रन्थविशेषो यस्यां सा। 'वृत्तिर्ग्रन्थजीवनयोः' इति **वैजयन्ती** । सन्ति निबन्धनान्यनुजीव्यादीनां क्रियावसानेषु दत्तानि गोहिरण्यदिशाश्वतपारितोषिकदानानि यस्यां सा । एतच्च 'दत्त्वा भूमिनिबन्धं च'त्येतद्वचनव्याख्याने **मिताक्षरायां** द्रष्टव्यम् । अन्यत्र सन्निबन्धनं भाष्यग्रन्थो यस्यां सा । एवंभूतापि राजनीती राजवृत्तिः । अपगतः स्पशः चारो यस्याः साऽपस्पशा चेत् । 'यथार्थवर्णो मर्मज्ञः स्पशो हरक उच्यते' इति **हलायुधः** । अन्यत्र अविद्यमानः पस्पशः शास्त्रारम्भसमर्थक उपोद्घातसन्दर्भग्रन्थो यस्याः सा अपस्पशा । शब्दविद्या व्याकरणविद्येव नो

भाति न शोभते। तस्माच्चरप्रेषणमावश्यकम्, तद्रहितस्य राज्ञोऽन्धप्रायत्वादिति भावः। अत्रापस्पशेत्यत्र जतुकाष्ठवच्छब्दयोरेव श्लिष्टत्वाच्छब्दश्लेषः। सद्वृत्तिः सन्निबन्धनेत्यत्रैकवृन्तावलम्बिफलद्वयवदर्थश्लेषः। अनुत्सूत्रपदन्यासेत्यत्र तूभयसम्भवादुभयश्लेषः। शब्दविद्येवेति पूर्णोपमा व्यक्तैव। तयोः सापेक्षत्वात्सङ्करः॥

शत्रुशक्तिं बुद्ध्वा ततस्त्वया भेदोऽनेन विधिना प्रयोक्तव्य इति वक्तुमाह—

**अज्ञातदोषैर्दोषज्ञैरुद्दूष्योभयवेतनैः।**

**भेद्याः शत्रोरभित्यक्त(१)शासनैः सामवायिकाः॥ ११३॥**

**अज्ञातेति॥** विजिगीषुणा राज्ञा शत्रोर्वैरिणः सामवायिकाः प्रधाना भेद्याः चालनीयाः। समवायं समूहं समवयन्ति प्रविशन्तीति सामवायिकाः। कथमिति तदुपदेशमाह—किं कृत्वा उद्दूष्य दोषमुद्भाव्य। दोषाध्यारोपणं तेषां विधायेत्यर्थः। कैः कृत्वा उद्दूष्य उभयवेतनैः। ये तत्त्वतो जिगीषुसम्बन्धिनस्तत्कार्यसिद्धये शत्रुमण्डले प्रविश्य सेवका इव तिष्ठन्ति ते उभयवेतनाः उच्यन्ते। उभयस्मात् वेतनं येषां ते तैः। कीदृशैः अज्ञातदोषैः अज्ञातः अविदितः दोषः उभयवेतनलक्षणो येषां ते तैः। 'खलीकृतास्तेन वयमतो भवन्तं शरणार्थिनः आगताः' इत्याद्युपदिश्य तथा तैः विधेयं यथा तद्दोषं न जानाति। तेषां कृतं दोषमरिर्न लक्षयतीत्यर्थः। अपरं कथंभूतैः दोषज्ञैः परदोषावहितैः। तेऽपि कथं दूषयन्तीत्याह-कैः अभित्यक्तशासनैः। केनचित्कारणेन ये वध्याःते ऽभित्यक्ता- उच्यन्ते। तेषां हस्ते शासनानि व्यवस्थापत्राणि अभित्यक्तशासनानि, तैः शासनैः पत्तलैः पत्तलादिभिर्व्यवस्थापत्रैः करणभूतैः। एतदुक्तं भवति-जिगीषुरुभयवेतनैः सह सम्प्रधार्य प्रपञ्चं विधाय वध्यहस्ते रिपुसचिवानां पत्तलाः प्रेषयेत्। 'इमानि वो जीवनानि, एवं वचःप्रतिपत्ति'रिति शासनलिखितमित्यर्थः। ताश्च तैरङ्गीकृता अनभ्युपगता वा उभयवेतनो रिपोर्दर्शयेदेवंविधास्तवैते सामवायिका इति। तत्क्षणं चासौ तान् परित्यजति बन्धयति वा तमभित्यक्तं घातयति। एवं जिगीषोर्भेदः सिद्धो, वध्यश्च हतो, लोके वा न परो जिगीषुः, सम्बन्धिनस्तत्कार्यं सिद्धमिति। अथ वा अभित्यक्तशासनैः शासनं लिखित्वा राजद्वारे त्यजन्ति, पश्चात् तत् नृपस्य दर्शयन्तीत्यर्थः। अथ वा अभिव्यक्तशासनैः स्पष्टव्यवस्थापत्रैः। राजादेशिनोऽस्माकं चटिता इत्याह (?)। अभिव्यक्तशासनैरितीदानीन्तनः पाठः। एतेन चरैः शत्रुशक्तिमवगम्येत्थं भेदो भवता विधेय इति प्रकृते उक्तं भवति॥ ११३॥

न केवलं चारमुखेन वृत्तान्तज्ञानम्, अपि तूपजापश्च कर्तव्य इत्याह—

**अज्ञातेति॥** किञ्चाज्ञातदोषैः परैरज्ञातस्वकर्मभिर्दोषज्ञैः स्वयं परमर्मज्ञैरभिव्यक्तानि भेद्यस्याग्रे प्रकटितानि शासनानि तदमात्याद्यविश्वासकराणि कूटलिखितानि येषां तैः उभयवेतनैरुभयत्र भेद्ये स्वामिनि च वेतनं भृतिर्येषां तैरुभयजीविकाग्राहिभिः। भेद्यनगरवास्तव्यैश्चरैरित्यर्थः। 'भृतयो भर्म वेतनम्' इत्यमरः शत्रोः सम्बन्धिनः समवायं समवयन्तीति सामवायिकाः सङ्घमुख्याः सचिवादयः। 'समवायान्समवैति' इति ठक्। उद्दूष्य द्विषामेते दत्तहस्ता अस्माभिरेषां लिखितान्येव गृहीतानीत्युच्चैर्दूषयित्वा भेद्याः विघटनीयाः॥११३॥

युधिष्ठिरपुरगमने चरविधाने च गुणान्तरमाह—

**उपेयिवांसि कर्तारः पुरीमाजातशात्रवीम्॥**

**राजन्यकान्युपायज्ञैरेकार्थानि चरैस्तव॥ ११४॥**

**उपेयिवांसीति॥** हे कृष्ण! तव चरैः त्वदीयप्रणिधिभिः राजन्यकानि नृपवृन्दानि

---

(१) ०रभिव्यक्त।

एकार्थानि कर्तारः त्वत्कार्यपराणि करिष्यन्ते । किंविशानि आजातशात्रवीं यौधिष्ठिरीं पुरीमुपेयिवांसि आगतानि । यत्र यज्ञे यानि मिलितानीत्यर्थः । चाराः कथमेकार्थानि कुर्वन्तीति विशेषणद्वारेण कारणमाह—कीदृशैश्चारैः उपायज्ञैः सामादिप्रयोगेषु कृत्याकृत्यकुशलैः। क्रुद्धोऽयं ततः साम्ना वश्यः, लुब्धोऽयं ततो दानेन वश्यः, भीतोऽयं ततः त्राणेन वश्यः इत्यादि ये जानन्ति इत्यर्थः । एवं च ते तत्रैव भवतो मिलिष्यन्तीति सहायसम्पद्दर्शिता । उपेयिवांसीति क्वस्वन्ताज्जसः शिः । कर्तार इति कर्मणि लुट्, चिण्वद्भावो विकल्पितः । अजातशत्रोरियम् आजातशात्रवी 'अनुशतिकादीनां चे'त्युभयपदवृद्धिः । राजन्याः क्षत्रियाः असुराश्च, राजन्यानां समूहो राजन्यकम् ॥ ११४ ॥

उपेयिवांसीति ॥ किञ्च उपायज्ञैः कार्यसाधनकुशलैस्तव चरन्तीति चारैर्गूढचारिभिः । पचाद्यच् । एकार्थानि त्वया सहैकप्रयोजनानि राजन्यानां समूहा राजन्यकानि । 'गोत्रोक्ष-' इत्यादिना वुञ् । अजातशत्रोरिमामाजातशात्रवीं पुरीमिन्द्रप्रस्थमुपेयिवांसि । 'उपेयिवान्-' इत्यादिना क्वसुप्रत्ययान्तो निपातः । कर्तारः करिष्यन्ते । कृञः कर्मणि लुट् । इन्द्रप्रस्थेऽस्माकं महत्कार्यं भविष्यति तदध्वरयाजव्याजेन सत्रद्वेरागन्तव्यामिति गूढं सन्दिश्य तत्र सर्वे मेलयितव्या इत्यर्थः ॥ ११४ ॥

एवं च यदस्माभिः कर्तव्यं तद्रिपव एव करिष्यन्ति इति दर्शयितुमाह—

> **सविशेषं सुते पाण्डोर्भक्तिं भवति तन्वति ॥**
> **वैरायितारस्तरलाः स्वयं मत्सरिणः परे ॥ ११५ ॥**

**सविशेषमिति** ॥ हे कृष्ण ! परे शत्रवः स्वयं वैरायितारः आत्मना वैरं करिष्यन्ति । क सति पाण्डोः सुते युधिष्ठिरे सविशेषं सादरं यथा भवति एवं त्वयि भवति विषये भक्तिं पूजां वितन्वति विस्तारयति सति । अतः कीदृशाः मत्सरिणः साऽहङ्काराः तरलाश्चपलाः असहिष्णवः । युधिष्ठिरः त्वामुपतिष्ठति, तेषां किं नष्टं यत्कलहायन्ते । सविशेषग्रहणं तेषामपमानितां गमयति । सविशेषत्वाच्चाक्षमा । सुत इति सप्तमी विषये । वैरं करोति वैरायते , शब्दवैरकलहादिभ्यश्च आयः, तत आत्मनेपदम् ॥ ११५ ॥

ननु तत्राध्वरकर्मणि को युद्धावकाश इत्याशङ्क्य तत्रैव महत्कलहबीजं सम्पादयति—

सविशेषमिति ॥ पाण्डोः सुते युधिष्ठिरे भवति पूज्ये त्वयि सविशेषं यथा तथा भक्तिं तन्वति सति तरलाश्चपला मत्सरिणो द्वेषवन्तः परे शत्रवः स्वयमेव वैरायितारो वैरं कर्तारः । 'शब्दवैरकलह-' इत्यादिना क्यङ् । ततः कर्तरि लुट् ॥ ११५ ॥

एवं च तत्साधनस्यार्थसिद्धिरित्याह—

> **य इहात्मविदो विपक्षमध्ये सहसंवृद्धियुजोऽपि भूभुजः स्युः ॥**
> **बलिपुष्टकुलादिवान्यपुष्टैः पृथगस्मादचिरेण भाविता तैः ॥ ११६ ॥**

**य इति** ॥ हे कृष्ण ! इह अत्र एवंविधे वैरे सति विपक्षमध्ये ये आत्मविदः प्राज्ञा भूभुजो राजानः स्युः वर्तन्ते, तैर्नृपैरस्माच्चैद्यात् अचिरेण तत्क्षणादेव पृथक् भाविता भविष्यते । आत्मानं विचिन्त्य ते तं हास्यन्ति इत्यर्थः । कीदृशाः भूभुजः सह संवृद्धियुजोऽपि सहपांसुक्रीडिता अपि सहवृद्धा अपि । कैः नृपैः, कैरिव कस्मादिव पृथक् स्थीयते अन्यपुष्टैर्बलिपुष्टकुलादिव । यथा अन्यपुष्टैः कोकिलैर्बलिपुष्टकुलात् काकसमूहात् सहवृद्धैरप्यात्मविस्वात् स्वजातिपरिज्ञानात् पृथक् भूयते । अन्यपुष्टा अपि सहसंवृद्धाआत्मविदः स्वजातिज्ञाश्च भवन्ति खलु । पिकशिशून् ध्वांक्षा धारयन्तीति विधिनियोगः,

अत एव अन्यपुष्टाः । सहसंवृद्धिः 'सुप्सुपे'ति समासः तां युञ्जन्तीति सहसंवृद्धियुजः क्विप्, शस् । भावितेति कर्तरि तृतीया । वृत्तमौपच्छन्दसिकम् ॥ ११६ ॥

किं तेऽपि सर्वे वैरायिष्यन्ते नेत्याह—

य इति ॥ ये इह विपक्षमध्ये शत्रुमध्ये सहसंवृद्धियुजोऽपि चैद्येन सहैश्वर्यं गता अपि । 'सत्सूद्विष'- इत्यादिना क्विप् । ये भूभुजो राजान आत्मविदः स्वाभिजनवेदिनः स्युः, यद्वा स्वात्मस्वरूपवेदिनः स्युस्तैर्भू- भुग्भिः बलिपुष्टकुलात्काककुलात् । 'काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः' इत्यमरः । अन्यपुष्टैः परभृतै- रिवाचिरेण सद्योऽस्माद्विपक्षमध्यात् । 'अन्यारात्-' इत्यत्रान्यशब्दस्यार्थपरत्वात्पृथगादिप्रयोगेऽपि पञ्चमी । पृथग्भाविता पृथग्भविष्यते । भावे लुट् । चिण्वदिटि वृद्धिः । तेष्वपि केचिदस्माभिः सङ्गच्छन्ते इत्यर्थः । औपच्छन्दसिकं वृत्तम् ॥ ११६ ॥

एवं सति यत्फलं सम्पद्यते तदाशीर्द्वारेण दर्शयितुमाह—

> सहजचापलदोषसमुद्धतश्चलितदुर्बलपक्षपरिग्रहः ॥
> तव दुरासदवीर्यविभावसौ शलभतां लभतामसुहृद्गणः ॥ ११७ ॥

सहजेति ॥ हे कृष्ण ! असुहृज्जनो वैरिवर्गः तव दुरासदवीर्यविभावसौ दुरभिभवपरा- क्रमवह्नौ दुर्धर्षपौरुषदहने शलभतां लभतां पतङ्गत्वं प्राप्नोतु । दह्यतामित्यर्थः । शलभा ह्यग्नौ पतन्ति । कीदृशः सहजचापलदोषसमुद्धतः स्वाभाविको यश्चापलाख्यो दोषस्तेन समुद्धतः प्रेरितः अवलिप्तो वा । पुनः कीदृशः चलितदुर्बलपक्षपरिग्रहः चलितो दुर्बलत्वात् पक्षपरिग्रहः सहायकसंश्रयो यस्य भेदितदुर्बलपरिवारः । पक्षपरिग्रह इति कर्तरि षष्ठी । अशक्त- त्वात् यस्य सहायाश्चलिता इत्यर्थः । पतङ्गो हि निजचापलदोषप्रेरितो वह्नौ पतति, अग्नि- पतितश्च दुर्बलपक्षपरिग्रहो भवति । चपलस्य भावः कर्म वा चापलं, युवादित्वादण् । दुःखेना- साद्यतेऽभिभूयते दुरासदः । लभतामित्याशिषि लोट् । द्रुतविलम्बितं छन्दः ॥ ११७ ॥

अथ फलितं निगमयन्नाशिषं प्रयुङ्क्ते—

सहजेति ॥ सहजं स्वाभाविकं चापलं दुर्विनीतत्वम् अनवस्थितत्वं च । 'चपलः पारदे शीघ्रे दुर्वि- नीतेऽनवस्थिते' इति वैजयन्ती । तेनैव दोषेण समुद्धतो दृतः पक्षः सहायो गरुच्च । 'पक्षः पार्श्वगरु- त्साध्यसहायबलभित्तिषु' इति वैजयन्ती । चलितोऽस्थिरो दुर्बलपक्षपरिग्रहो यस्य सः असुहृद्गणः शत्रु- वर्गस्तव दुरासदवीर्यविभावसौ दुःसहतेजोवह्नौ 'वीर्यं शुक्रे प्रभावे च तेजःसामर्थ्ययोरपि' 'सूर्यवह्नी विभा- वसू' इति विश्वामरौ । शलभतां पतङ्गत्वम् । 'समौ पतङ्गशलभौ' इत्यमरः । भावे तल् । लभतां गच्छतु । रूपकालङ्कारः । द्रुतविलम्बितं वृत्तम् ॥ ११७ ॥

> इति विशकलितार्थामौद्धवीं वाचमेना-
> मनुगतनयमार्गामर्गलां दुर्नयस्य ॥
> जनितमुदमुदस्थादुच्चकैरुच्छ्रितोरः-
> स्थलनियतनिषण्णश्रीश्रुतां शुश्रुवान् सः ॥ ११८ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये मन्त्रवर्णनं नाम द्वितीयः सर्गः ॥ २ ॥

इतीति ॥ भगवान् उदस्थात् उत्थितः । किं कुर्वन् औद्धवीम् एनां वाचमुद्धवोक्तां वाणीं शुश्रुवान् अङ्गीकुर्वन् । अनुमतमशृणोदित्यर्थः । तत्र विशेषणद्वारेण कारणमाह-कीदृशीं वाचमिति पूर्वोक्तप्रकारेण विशकलितार्थां निर्लोचितार्थां पर्यालोचितकार्याम् , पुनः किंवि- धाम् अनुगतनयमार्गां नीतिशास्त्रानुसारिणीम् , अपरं कथंभूतां दुर्नयस्य अर्गलामसद्वे-

छितस्य प्रतिपन्थिनीम् । अत एव किंविधां जनितमुदमुत्पादितहर्षाम्, अपरं कीदृशीम् उच्छ्रितोरःस्थलनियतनिषण्णश्रीश्रुताम् उच्छ्रितं विशालं विकटं यत् उरःस्थलं तत्र नित्यमेव निषण्णा उपविष्टा या श्रीर्लक्ष्मीः तया श्रुतामिति मन्त्रगुप्तिः । सदा सन्निहितत्वात् परं लक्ष्म्यैव श्रुतां न त्वन्येनेत्यर्थः । किंभूतो भगवान् उच्चकैः आजानुभुजः । दुर्नयस्येति उपसर्गप्रतिरूपको निपातो दुःशब्दः, तेन णत्वाभावः । उदस्थात् लुङ्, ऊर्ध्वक्रियात्वात् तङभावः 'गातिस्थे'ति सिचो लुक् । विशेषरूपस्योच्चैस्त्वस्याऽज्ञातत्वात् उच्चकैरित्यत्र 'अज्ञाते' इत्यकच् । शुश्रुवान् इति 'भाषायां सदवसश्रुव' इति लिटः क्वसुः । मालिनी वृत्तम् । सर्वगुणयुक्तत्वादुद्धवगुरुनिरूपितं हरिरङ्गीकृत्य युधिष्ठिरगमनायोदचलदिति श्लोकार्थः॥ ११८॥

इत्यानन्ददेवायनिकायस्थवल्लभदेवविरचितायां माघकाव्यटीकायां द्वितीयः सर्गः ।

इतीति ॥ स हरिरित्थं विशकलितार्थां विवेचितार्थामनुगतनयमार्गां नीतिमार्गानुसारिणीं दुर्नयस्य बलभद्रायुक्तस्येत्यर्थः । अर्गलां निवारयित्रीमिति वैधर्म्येण रूपकालङ्कारः । 'तद्विष्कम्भोऽर्गलं न ना' इत्यमरः । अत एव जनितमुदं हरेः कृतानन्दाम् उच्छ्रिते उन्नते उरःस्थले नियतं निषण्णया अविश्रान्तमाश्रितया श्रिया श्रुतां नान्ययेति मन्त्रगुप्तिः । उद्धवस्येमामौद्धवीमेनां पूर्वोक्तां वाचं शुश्रुवाञ्शुश्रुतवान् । 'भाषायां सदवसश्रुवः' इति क्वसुः । उच्चैरेवोच्चकैरुन्नतः सन् । 'अव्ययसर्वनाम्नामकच्प्राक्टेः' इत्यकच्प्रत्ययः । उदस्थादासनादुत्थितवान् । 'उदोऽनूर्ध्वकर्मणि' इत्यस्य प्रत्युदाहरणमेतत् । रूपकानुप्रासालङ्कारौ । मालिनी वृत्तम् ॥ ११८ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवधव्याख्याने सर्वङ्कषाख्ये द्वितीयः सर्गः ॥ २ ॥



## तृतीयः सर्गः ।

कौबेरदिग्भागमपास्य मार्गमागस्त्यमुष्णांशुरिवावतीर्णः ॥
अपेतयुद्धाभिनिवेशसौम्यो हरिर्हरिप्रस्थमथ प्रतस्थे ॥ १ ॥

कौबेरेति ॥ अथ मन्त्रानन्तरं हरिर्विष्णुरिन्द्रप्रस्थं यौधिष्ठिरं पुरं प्रतस्थे गन्तुमारेभे । कीदृशो हरिः अपेतो निवृत्तो युद्धाभिनिवेशो रणरसिकत्वं तेन सौम्यः निवृत्तरणरसिकत्वनिराकुलः । पूर्वं ह्युक्तमासीत् कार्यद्वयाकुलः । क इव सौम्य इत्याह–उष्णांशुरिव । यथा सूर्यः कौबेरं दिग्भागमपास्य उत्तराशां त्यक्त्वा आगस्त्यमगस्त्यर्षिसेवितं मार्गं दक्षिणां दिशमवतीर्णः प्राप्तः सौम्यो भवति तेजोऽतीक्ष्णत्वात् दृश्यः । युद्धाभिनिवेशस्य कौबेरो मार्गः, हरिप्रस्थस्य त्वागस्त्यः । विष्णोः सूर्य उपमानम् । यथा सूर्यः उत्तरस्याः प्रदेशं परित्यज्य आगस्त्यं मार्गमवतीर्णश्चलितः सन् रम्यो भवति । सोम इव सौम्यः, शाखादिभ्यो यः । प्रतस्थे इति समवप्रविभ्यः स्थः । सर्गेऽत्र उपजातिच्छन्दः ॥ १ ॥

कौबेरेति । अथोद्धववाक्यश्रवणानन्तरम् अपेतो युद्धेऽभिनिवेश आग्रहो यस्य सः । शान्तक्रोध इत्यर्थः । अत एव सौम्यः प्रसन्नः । अत एव कौबेर्या दिशो भागम् । उत्तरायणमित्यर्थः । 'स्त्रियाः पुंवत्—' इत्यादिना पुंवद्भावः । तमपास्य त्यक्त्वाऽगस्त्यस्येममागस्त्यं मार्गमवतीर्णः । दक्षिणायनं गत इत्यर्थः । उष्णांशुरिव स्थितः । अनेन हरेः क्रोधः कार्यवशादाकालमन्तः स्तम्भितो, न त्वेकान्ततो

निवृत्त इति सूचितम्। हरिः कृष्णो हरिप्रस्थमिन्द्रप्रस्थं प्रतस्थे प्रचचाल । 'इन्द्रो दुश्च्यवनो हरिः' इति हलायुधः। 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति गन्तव्यस्य कर्मत्वम्। उपमालङ्कारः। सर्गेऽस्मिन्निन्द्रोपेन्द्रवज्रामिश्रणादुपजातिवृत्तम् । 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति लक्षणात् ॥ १ ॥

इदानीं प्रयाणमेव वर्ण्यते । आतपनिवारणार्थं भगवतः छत्रं धृतमिति कश्चिदज्ञासीदिति कविर्भक्त्यतिशयप्रतिपादनायाह—

**जगत्पवित्रैरपि तं न पादैः स्प्रष्टुं जगत्पूज्यमयुज्यताऽर्कः ॥**
**यतो बृहत्पार्वणचन्द्रचारु तस्यातपत्रं बिभराम्बभूवे ॥ २ ॥**

**जगदिति** ॥ अर्कः सूर्यः तं कृष्णं पादैः किरणैः स्प्रष्टुं छोप्तुं न अयुज्यत योग्यो न बभूव। कथंभूतं तं जगत्पूज्यं त्रैलोक्यवन्द्यं, पादैः किंविधैः जगत्पवित्रैरपि विश्वपावनसमर्थैरपि। अतः कारणात् तेन तस्य कृष्णस्य आतपत्रं बिभराम्बभूवे। किंभूतं बृहत् बृहन्मण्डलो यः पार्वणचन्द्रः प्रातिपदश्चन्द्रः तद्वच्चारु मनोहारि, शैत्यशौक्ल्यादियोगात् न त्वातपसहत्वेन । यत इति पूर्वार्धे योज्यम् । यत्तदोर्नित्यसम्बन्धार्थं तेनेत्यध्याहार्यम्। यदि वा तस्यातपत्रं धृतं यतोऽर्कस्तं पादैः स्प्रष्टुं न युक्त इति योजनीयं, न किञ्चिदध्याहार्यम् । तथा त्वन्ये व्याचक्षते—अर्कस्तं पादैः स्प्रष्टुं नायुज्यत योगं न ययौ समर्थो न बभूव, यतः कारणात् आतपत्रं छत्रं बिभराम्बभूवे। तथा न किञ्चिदुक्तं भवेत्। यस्य हि छत्रं ध्रियते तस्यावश्यमेव रविकिरणयोगो न भवति। एतस्य चार्थस्यास्मद्व्याख्यानपरिपोषकत्वेन व्याख्यायाः(?)। कदाचित्सूर्यकिरणाः अपावनाः स्युरित्याह—जगत्पवित्रैः। तर्हि स न योग्य इत्याह—जगत्पूज्यमिति। यो हि गुणैः सर्ववन्द्यस्तस्य कथमन्यैः पवित्रमपि पादस्पर्शं कर्तुं युक्तमिति कविरतिभक्तत्वात् शब्ददुष्टं पादस्पर्शं न सहते। कीदृशं सम्पूर्णेन्दुमण्डलरम्यम्। बृहदिति वा पृथक् पदम्। पर्वशब्देनात्र पौर्णमासी लक्ष्यते। पर्वणि भव इति लक्षणवाक्येनाऽण् भवार्थे। कालाट्ठञ् यच्च। तत्र सन्धिवेलादिषु पार्वणः पाठः। तत्रैव शशिनश्चारुत्वयोगात्। यतो बृहत्पार्वणचन्द्रचारु इति पाठे अतो बृहत्पार्वणचन्द्रभामम्। अयुज्यतेति कर्तरि लङ्। आतपात् त्रायत इति आतपत्रम्। बिभराम्बभूवे इति कर्मणि लिट् 'भीह्रीभृहुवां श्लुवच्चे'ति आम् कर्तर्येव भवति इति न सर्वगतम्। बभूव इति मूलपाठो ज्ञातव्यः। इत्येवमन्यत् ॥ २ ॥

अथास्य प्रस्थानसन्नाहं वर्णयन्नादौ छत्रधारणमाह—

**जगदिति** ॥ अर्को जगत्पूज्यं तं हरिम् अत एव जगत्पवित्रैरपि पादैश्चरणैः किरणैश्च स्प्रष्टुं नायुज्यत नार्हत। युजेर्दैवादिकात्कर्तरि लङ्। कुतः—यतस्तस्य हरेर्बृहद्विपुलं पार्वणचन्द्रचारु पूर्णेन्दुसुन्दरमित्युपमालङ्कारः। आतपात् त्रायत इत्यातपत्रं छत्रम्। 'सुपि' इति योगविभागात्कः। बिभराम्बभूवे दध्रे। भृञः कर्मणि लिट् 'भीह्रीभृहुवाम्'— इति विकल्पादाम्प्रत्ययः । आतपत्रान्तर्हितस्य द्युरपि पादैः स्प्रष्टुमशक्यत्वादित्यर्थः। जगत्पूज्यस्य हरेः पादेन स्पर्शनिषेधादिति भावः ॥ २ ॥

**मृणालसूत्राऽमलमन्तरेण स्थितश्चलच्चामरयोर्द्वयं सः ॥**
**भेजेऽभितःपातुकसिद्धसिन्धोरभूतपूर्वां रुचमम्बुराशेः ॥ ३ ॥**

**मृणालेति** ॥ स देवोऽम्बुराशेः समुद्रस्य रुचं भेजे शोभामाप । कीदृशो हरिः चलच्चामरयोर्द्वयमन्तरेण एतत्प्रकीर्णकद्वयस्य मध्यस्थितः वर्तमानः, कीदृशं चामरयोर्द्वयं मृणालसूत्राऽमलं बिसतन्तुशुभ्रं पद्मिनीतन्तुवन्निर्मलम्। कथंभूतस्याम्बुराशेः अभितः पार्श्वद्वये

पातुकसिद्धसिन्धोः पक्षद्वये प्रविशत्त्रिपथगस्य । ननु प्रवाहद्वयं न कदाचिदपि गङ्गायाः समुद्रे पतति, तत्कथमसदुपमानं दीयते इत्याह–कथंभूताम् अभूतपूर्वां पूर्वं भूता भूतपूर्वा न भूतपूर्वा अभूतपूर्वा ताम् उत्पादनीयां कृत्रिमप्रयुक्ताम् । यद्युभयतः पातुका गङ्गाऽब्धेर्भवेत्, ततस्तेन चामरद्वयमध्यस्थः कृष्ण उपमीयते । द्वयमिति 'अन्तरान्तरेण युक्ते' इति द्वितीया । अन्तराऽन्तरेणयुक्तयोः पृथग्विभक्तिनिर्दिष्टयोर्द्वितीयेति तत् सर्वमतं, सूत्रे वाक्ये वा निर्देशात् । अत् चामरयोर्द्वयमिति कथं भेदनिर्देशः, तदस्येत्यनुवृत्त्या विहितया तस्यावयविना सामानाधिकरण्यं न्याय्यम् । यथा द्वयी गतिः चतुष्टयी शब्दानां प्रवृत्तिरिति । अत्रोच्यते–अत्रापि समुदायधर्मो वाच्यः । द्वाववयवौ यस्य समुदायस्य तद् द्वयं, द्वयात्मकसमुदाय इत्यर्थः । कयोश्चासौ समुदाय इत्याशङ्कायां बुद्धिकृतं भेदमाश्रित्य चामरयोरिति विशेषनिर्देशः । यदा च साक्षादवयवी निर्दिश्यते तदा अवयवस्य धर्मेलिङ्गत्वम् । यथा द्वयी गतिः उभये देवमनुष्या इति । यदा तु धर्ममात्रद्वितीयान्तनिर्देशावयविसामान्यं प्रातीतिकं, तदा स्त्रीस्थितिरन्तरङ्गत्वमेव(?) । यथा भुवनानां त्रयं वेदानां चतुष्टयमिति साधु । पतन्ति पातुकाः 'लषपते'त्युकञ् । सिद्धसिन्धुर्देवनदी गङ्गा ॥ ३ ॥

अथ चामरधारणमाह—

मृणालेति ॥ मृणालसूत्राऽमलं बिसतन्तुविशदमित्युपमा । चलन्ती च ते चामरे च चलच्चामरे । वीजनादिति भावः । तयोर्द्वयमन्तरेण स्थितः । द्वयस्य मध्ये स्थित इत्यर्थः । 'अन्तरान्तरेण युक्ते' इति द्वितीया । स हरिरभितःपातुका उभयतःपातिनी सिद्धसिन्धुराकाशगङ्गा यस्य स तथोक्तः । 'पर्यभिभ्यां च' इति तसिल्प्रत्ययः । 'सर्वोभयार्थवर्तमानाभ्यामिष्यते' इत्युभयार्थत्वम् । 'सुप्सुपे'ति समासः । पातुकेति 'लषपत--' इत्यादिनोकञ् प्रत्ययः । तस्याम्बुराशेः समुद्रस्याभूतपूर्वां पूर्वमभूताम् । 'सुप्सुपे'ति समासः । रुचं कान्तिं भेजे । अत एव निदर्शना । सा चाम्बुराशेः सम्भावनामात्रोक्त्या अभितःपातुकसिद्धसिन्धुसम्बन्धमूलया असम्बन्धे सम्बन्धरूपातिशयोक्त्या स्वोपजीवकसंयोगेन सङ्कीर्यत इति संक्षेपः ॥ ३ ॥

**चित्राभिरस्योपरि मौलिभाजां भाभिर्मणीनामनणीयसीभिः ।**
**अनेकधातुच्छुरिताश्मराशेर्गोवर्धनस्याऽऽकृतिरन्वकारि ॥ ४ ॥**

चित्राभिरिति ॥ मणीनां भाभिर्मरीचिभिर्गोवर्धनस्य पर्वतस्य आकृतिरन्वकारि सादृश्यं धृतम् । रूपमनुकृतमिति भावः । ननु मणयः क स्युः, किंभूतानां मणीनाम् अस्य श्रीकृष्णस्य मौलिभाजां मुकुटावबद्धानां, किंभूताभिर्भाभिः अनणीयसीभिः सान्द्राभिः बहुलाभिः पुनः कीदृशीभिः चित्राभिः नानारूपाभिः, अपरं किंभूताभिः उपरि लग्नाभिः ऊर्ध्वप्रसृताभिः । किंभूतस्य गोवर्धनस्य अनेकधातुच्छुरिताश्मराशेः अनेकैर्बहुजातीयैर्धातुभिः गैरिकमनःशिलादिभिः छुरिता मिश्रीभूताः सम्भिन्ना अश्मराशयः शिलासङ्घा यस्य सः तस्य । गोवर्धनस्य कृष्णः उपमानं, भासां तु धातवः । यद्येवं, भासां धातव एवानुकर्तुं न्याय्यं, न तु गोवर्धनः । स हि कृष्णेनैवानुक्रियते । अतश्चैवं वक्तुं न्याय्यम्–मौलिमणिमरीचिभिरस्योपरि लग्नाभिः छुरिता गोवर्धनधातवो नानाविधा अन्वकारिषत । यदि वा मौलिमणिमरीचिभिः भूषितेन कृष्णेनानेकधातुभिश्छुरिताश्मराशेर्गोवर्धनस्याकृतिरन्वकारीति । सत्यमेतत्, किन्तु विचित्राः कविसूक्तयः, वस्तु सर्वथा ग्राह्यं, सर्वासां भासामुक्तीनां वस्तु न भिद्यते । अतिशयत्वविशिष्टात् अणुशब्दादीयसुनि टिलोपे ङीपि नञ्समासे च कृते अनणीयसीभिरिति रूपम् । अन्वकारीति कर्मणि लुङ् ॥ ४ ॥

अथाष्टभिरस्य प्रसाधनाविधिं वर्णयन्मुकुटधारणमाह--

**चित्राभिरिति** ॥ अस्य हरेरुपर्यूर्ध्वदेशे मौलिभाजां मुकुटगतानां मणीनामनणीयसीभिर्महतीभिश्चित्राभिरनेकवर्णाभिर्भाभिः प्रभाभिः कर्त्रीभिः। 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः। सान्तपक्षे 'भोभगो—' इत्यादिना रोर्यकारे तस्य 'हलि सर्वेषाम्' इति लोपः। अनेकैर्धातुभिर्गैरिकादिभिश्छुरितानां रूषितानामश्मनां मणीनां राशिः समूहो यस्य तस्य गोवर्धनाख्यपर्वतस्याकृतिरन्वकार्यनुकृता। तत्सादृश्यमभाजीत्यर्थः। पूर्णोपमेयम् ॥ ४ ॥

**तस्योल्लसत्काञ्चनकुण्डलाग्रप्रत्युप्तगारुत्मतरत्नभासा ॥**
**अवाप बाल्योचितनीलकण्ठपिच्छावचूडाकलनामिवोरः ॥ ५ ॥**

**तस्येति** ॥ तस्य श्रीकृष्णस्य उरो वक्षः बाल्योचितनीलकण्ठपिच्छावचूडाकलनामिव अवाप बालत्वयोग्यमयूरबर्हचामरबन्धनमिव लेभे। शौरिवक्ष इन्द्रनीलरुचा मयूरपक्षसम्पर्कमिव भेजे। बालभावे हि मयूरपिच्छानां मुखकूर्चिका बध्यते। कया अवाप उल्लसत्काञ्चनकुण्डलाग्रप्रत्युप्तगारुत्मतरत्नभासा उल्लसन्ती देदीप्यमाने ये काञ्चनकुण्डले सुवर्णकर्णिके तयोर्यदग्रं प्रान्तं तत्र प्रत्युप्ते स्यूते ये गारुत्मतरत्ने मरकतमणी तयोर्भासा दीप्त्या, बाल्ये शैशवे उचितं योग्यं यन्नीलकण्ठपिच्छं चन्द्रकिचन्द्रकं तदवचूडं चिह्नं तेनाकलना योजना तामिव प्रासवत्। अनेकदीप्तियोगात् बुध्यते मयूरपत्रं धृतमनेनेत्यर्थः। गारुत्मतं मरकतम्। बालशब्दाद् ब्राह्मणादित्वात् ष्यञ् ॥ ५ ॥

कुण्डले च धृते इत्याह--

**तस्येति** ॥ तस्य हरेरुरः उरस्थलमुल्लसन्त्या काञ्चनकुण्डलाग्रयोः प्रत्युप्तानां खचितानां गारुत्मतरत्नानां मरकतमणीनां भासा दीप्त्या। उरसि प्रसरन्त्येति भावः। बाल्यं शैशवम्। ब्राह्मणादित्वात् ष्यञ्। तत्रोचितमभ्यस्तं यन्नीलकण्ठपिच्छं मयूरबर्हम्। 'अभ्यस्तेऽप्युचितं न्याय्ये' इति यादवः। 'पिच्छबर्हे नपुंसके' इत्यमरः। तेन निर्मितावचूडा मालिका तस्याः कलनामामोचनमवमोचनं वा अवापेत्युत्प्रेक्षा।

'यत्रान्यधर्मसम्बन्धादन्यदेवोपतार्कितम्।
प्रकृते हि भवेत्प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते' ॥

इति लक्षणात् ॥

**तमङ्गदे मन्दरकूटकोटिव्याघट्टनोत्तेजनया मणीनाम् ॥**
**बंहीयसा दीप्तिवितानकेन चकासयामासतुरुल्लसन्ती ॥ ६ ॥**

**तमङ्गदे इति** ॥ अङ्गदे तं श्रीकृष्णं चकासयामासतुः केयूरे आदीपयताम्। किंभूते अङ्गदे उल्लसन्ती देदीप्यमाने चकासमाने, केन मणीनां दीप्तिवितानकेन तेजःपुञ्जेन, कथंभूतेन बंहीयसा घनेन बहुलेन। अतिशयेन बहुलो बंहीयान् ईयसुन् 'प्रियस्थिरे'त्यादिना बहुलस्थाने बंहादेशः। बंहीयस्त्वस्य कारणमाह—कया मन्दरकूटकोटिव्याघट्टनोत्तेजनया मन्थाचलशृङ्गाग्रघर्षणोत्तेजनया मन्दराचलशृङ्गाग्रेण या घट्टना आहननं तेन या उत्तेजना नैर्मल्यं तेन हेतुना बहुलतरेण। अमृतमथनकाले हि हरिबाहवो मन्थिता जाताः। तदा मन्दरशृङ्गाग्रसम्पर्षवशात् उज्ज्वले सम्पन्ने। उत्तेजनात्तेजः प्रादुर्भवति। चकासयामासतुः अङ्गदे, चकासृ दीप्ताविति ण्यन्तादाम् ॥ ६ ॥

तमङ्गदे इति ॥ तं हरिं मन्दरकूटकोटिव्याघट्टनं मन्दराचलशिखराग्रसङ्घर्षणं सैवोत्तेजना शाणोल्लेखना तया बंहीयसा बहुतरेण। 'प्रियस्थिर—' इत्यादिना बहुलशब्दस्येयसुनि बंहादेशः। मणीनां दीप्तिवितानकेन प्रभापटलेनोल्लसन्ती दीप्यमाने। 'आच्छीनद्योर्नुम्' इति नुमागमः। अङ्गदे केयूरे। 'केयूर-

मङ्गदं तुल्य' इत्यमरः । चकासयामासतुः शोभयांचक्रतुः । अङ्गदं धृतवानित्यर्थः । चकास्तेर्ण्यन्ताल्लिटि आम्प्रत्ययेऽस्तेरनुप्रयोगः : अत्राङ्गदयोः प्राग्भवीयाङ्गदभेदेऽप्यभेदोक्तिमुत्प्रेक्ष्य तयोर्मन्दरकूटकोटयसम्बन्धेऽपि सम्बन्धोक्त्या द्वयोरतिशयोक्त्योः सङ्करः ॥ ६ ॥

**निसर्गरक्तैर्वलयावनद्धताम्राश्मरश्मिच्छुरितैर्नखाग्रैः ॥**

**अद्योतता(१)ऽद्यापि सुरारिवक्षोविक्षोभजाऽसृक्स्नपितैरिवासौ ॥७॥**

**निसर्गेति ॥ असौ श्रीवासुदेवः नखाग्रैः करप्रान्तैरद्योतत शुशुभे । किंभूतैः निसर्गरक्तैः पुनः कीदृशैः वलयावनद्धताम्राश्मरश्मिच्छुरितैः कङ्कणप्रोतपद्मरागमणिकिरणसम्मिलितैः । उत्प्रेक्षते-अद्याऽपि साम्प्रतमपि सुरारिवक्षोविक्षोभजाऽसृक्स्नपितैरिव हिरण्यकशिपूरोविदारणोत्पन्नरुधिरक्षालितैरिव । अपि विस्मये । अद्योततेति लङ् ॥ ७ ॥**

निसर्गेति ॥ असौ हरिर्निसर्गरक्तैः स्वभावलोहितैः, किञ्च वलये कटके । 'कटकं वलयोऽस्त्रियाम्' इत्यमरः । तयोरवनद्धानां प्रत्युप्तानां ताम्राश्मनां पद्मरागाणां रश्मिभिः छुरितैः । अत एवाद्यापि सुरारेर्हिरण्यकशिपोर्वक्षसो विक्षोभेण विदारणेन जाता याऽसृक् तया स्नपितैः सिक्तैरिव स्थितैरित्युत्प्रेक्षा । स्नातेर्ण्यन्तात् क्तः । 'अर्तिह्री-' इत्यादिना पुगागमः । मितां ह्रस्वः । नखाग्रैर्व्यद्योतत । कटके च धृतवानित्यर्थः ॥७॥

**उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ॥**

**तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥ ८ ॥**

**उभाविति ॥ यदि चेत् आकाशगङ्गापयसः स्वर्गनदीजलस्य उभौ प्रवाहौ व्योम्नि आकाशे पृथक् पतेतां भिन्नौ वहेतां, तत्तेन नभसा सह अस्य श्रीकृष्णस्य वक्षः उपमीयेत उपमां प्राप्येत । किंभूतं वक्षः तमालनीलं तमालाख्यतरुश्यामं पुनः कीदृशम् आमुक्तमुक्तालतं बद्धमौक्तिकहारम् । सदृशीक्रियेतेति तु उपमा । उत्पाद्यानाम उपमेयम् । कृष्णवक्षसः आकाशमुपमानं, मुक्तावल्या गङ्गाप्रवाहौ ॥ ८ ॥**

उभाविति ॥ तमालवन्नीलम् आमुक्ते आसञ्जिते मुक्तालते लतादीर्घत्वसाम्येन मौक्तिकहारौ यस्मिंस्तत् अस्य हरेर्वक्षः, आकाशगङ्गायाः पयस उभौ प्रवाहौ व्योम्नि यदि पृथक्पतेतां प्रवहेतां चेत् । सम्भावनायां लिङ् । तेन व्योम्नोपमीयेत समीक्रियेत । नास्योपमानं किञ्चित्पश्याम इति भावः । मुक्ताहारं धृतवानित्यर्थः । अत्र व्योम्नो गङ्गाप्रवाहद्वयासम्बन्धेऽपि सम्भावनायां सम्बन्धकथनादतिशयोक्तिः । तदेतत् 'पुष्पं प्रवालोपहितं यदि स्या'दित्याद्युदाहृत्याऽलङ्कारसर्वस्वकारः स्पष्टीचकार ॥ ८ ॥

**तेनाम्भसां सारमयः पयोधेर्दध्रे मणिर्दीधितिदीपिताशः ॥**

**अन्तर्वसन् बिम्बगतस्तदङ्गे साक्षादिवालक्ष्यत यत्र लोकः ॥ ९ ॥**

**तेनेति ॥ तेन श्रीकृष्णेन मणिर्दध्रे रत्नं धृतम् । ननु मणयो बहवः सन्ति, कोऽसौ मणिः पयोधेः समुद्रस्य अम्भसां सारमयः प्रधानभूतः । अन्तःसारकौस्तुभ इत्यर्थः । शुद्धे स्वार्थे मयडत्र वाचकः । स च दुर्लभः कीदृशो मणिः दीधितिदीपिताशः दिनकरकरनिर्भासितदिक्कः । यत्र यस्मिन् मणौ लोकः साक्षादिव अलक्ष्यत दृष्टः । कथंभूतो लोकः तदङ्गे कृष्णशरीरेऽन्तर्वसन् अन्तरे निवसन्, अपरं किंभूतो लोकः बिम्बगतः । मणिदेहं प्रविष्ट इत्यर्थः । उत्प्रेक्षते-तदङ्गे देवशरीरे वसन् । अन्तरे वसति यो लोकः स एव तत्र वसन् साक्षादिवाऽलक्ष्यत प्रत्यक्ष इव अदृश्यतेत्यर्थः । बिम्बं गतो बिम्बगतः । दध्रे इति कर्मणि लिट् । एवमलक्ष्यतेति लङ् ॥ ९ ॥**

---

( १ ) व्यद्योतता० ।

तेनेति ॥ तेन हरिणा दीधितिभिर्दीपिता आशा येन सः । दिगन्तविश्रान्ततेजा इत्यर्थः । पयोऽभ्भः रम्भसां सारस्य विकारः सारमयो मणिः । समुद्रमन्थनोत्थः कौस्तुभाख्य इत्यर्थः । दध्रे धृतः । धृञ् धारणे । कर्मणि लिट् । यत्र मणौ बिम्बगतः प्रतिबिम्बगतो लोको बाह्यप्रपञ्चस्तदङ्के तस्य हरेः शरीरे साक्षात् । बहिः प्रत्यक्षेण लक्ष्यमाण इत्यर्थः । अन्तर्वसन्नन्तर्गतो लोक इवालक्ष्यत । यत्र मणौ प्रतिबिम्बितो बाह्यलोकस्तदङ्क एव नैर्मल्याद्बहिः प्रतिफलितः कुक्षिस्थलोक इवालक्ष्यतेत्युत्प्रेक्षा ॥ ९ ॥

**मुक्तामयं सारसनावलम्बि भाति स्म दामाऽऽप्रपदीनमस्य ॥**
**अङ्गुष्ठनिष्ठ्यूतमिवोर्ध्वमुच्चैस्त्रिस्रोतसः सन्ततधारमम्भः ॥ १० ॥**

**मुक्तामयमिति** ॥ अस्य श्रीकृष्णस्य मुक्तामयदाम मौक्तिककलापः मौक्तिकहारो भाति स्म शुशुभे । मुक्ताः प्रकृताः प्राचुर्येण प्रोता यत्र तन्मुक्तामयम्, प्रकृतवचने मयट् । किंभूतं दाम सारसनावलम्बि सारसनं कटिसूत्रं तदवलम्बते भजते इति । दोरेण ग्रथितमित्यर्थः । पुनः कथंभूतम् आप्रपदीनं पादान्तप्रापि । अतीव दीर्घमित्यर्थः । आप्रपदं प्राप्नोतीति । उत्प्रेक्ष्यते—त्रिस्रोतसः गङ्गाया ऊर्ध्वम् अङ्गुष्ठनिष्ठ्यूतमङ्गुष्ठनिःसृतं सन्ततधारमविच्छिन्नप्रवाहमम्भ इव । उत्प्रेक्षा एषा नोपमा । सदुपमानमुपमा, असदुपमानमुत्प्रेक्षा । तेनोर्ध्वं गमनमम्भसो न सम्भवतीति न चोद्यम् । त्रीणि स्रोतांसि प्रवाहा यस्याः सा त्रिपथगा विष्णुपदी । कथंभूतस्य हरेः उच्चैः उन्नतस्य । अथ कीदृशं दाम उच्चैः उन्नतं, कथंभूतं पयः उच्चैः उच्चैस्तरम् । उच्चैर्दाम पयो वा भगवतो वा ॥ १० ॥

मुक्तामयमिति ॥ अस्य हरेर्मुक्तामयं मुक्ताप्रचुरम् । तत्प्रकृतवचने मयट् । सारसने कटिसूत्रेऽवलम्बते इति सारसनावलम्बि । 'क्लीबे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु' इत्यमरः । आप्रदीनम् । आ समन्तात्प्रपदं प्राप्नोतीति खञ् प्रत्ययः । 'पादाग्रं प्रपदं पादः' इत्यमरः । दाम मुक्तासरः, अङ्गुष्ठेन निष्ठ्यूतम् । विसृष्टमित्यर्थः । गौणार्थत्वादग्राम्यत्वम् । यथाह दण्डी—

'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते' ॥

इति । ऊर्ध्वमूर्ध्वप्रवाहमुच्चैरुन्नतं त्रिस्रोतसो मन्दाकिन्याः सन्ततधारमविच्छिन्नसंपातमम्भ इव भाति स्मेत्युत्प्रेक्षा ॥ १० ॥

**स इन्द्रनीलस्थलनीलमूर्ती रराज कर्चूरपिशङ्गवासाः ॥**
**विसृत्वरैरम्बुरुहां रजोभिर्यमस्वसुश्चित्र इवोदभारः ॥ ११ ॥**

**स इति** ॥ अथ वा स कृष्णः भगवान् रराज शुशुभे यमुनोदकपुञ्ज इवाऽभादित्युपमा । कस्मादित्याह—किंभूतः इन्द्रनीलस्थलनीलमूर्तिः इन्द्रनीलस्थलमसितमणिकुट्टिमं तद्वन्नीला श्यामा मूर्तिर्यस्येति सः असितमणिकुट्टिमश्यामदेहः । साधारणं विशेषणम् । पुनः कथंभूतः कर्चूरपिशङ्गवासाः । सुवर्णपीतवस्त्रं कर्चूरं काञ्चनं गन्धद्रव्यविशेषो वा, तदिव पीते वाससी यस्य सः । काञ्चनमध्यसुगन्धद्रव्यादिक्षोदः कर्चूरो वा । उत्प्रेक्षते–यमस्वसुः यमुनाया उदभार इव उदकपुञ्ज इव । सोऽपि कीदृशः इन्द्रनीलस्थलनीलमूर्तिः, तथा अम्बुरुहां रजोभिश्चित्रः हेमकमलरेणुभिरनेकप्रकारः पिङ्गः, किंभूतैः रजोभिर्विसृत्वरैः विसारिभिः प्रसरणशीलैः । रजोभिः पिङ्ग इत्यर्थः । मूर्ती रराजेति रलोपो दीर्घश्च । विसृत्वरैरिति इण्नशजिसर्तिभ्यः क्वरप् । यमस्वसा कालिन्दी । उदकस्य भारः उदभारः 'मन्थौदनसक्तुबिन्दुवज्रभारे'ति उदादेशः ॥ ११ ॥

स इति ॥ इन्द्रनीलस्थलमिव नीलमूर्तिः श्यामाङ्गः । संहितायां 'रोरि' इति रेफलोपः । 'ढ्रलोपे पूर्वस्य—' इति दीर्घः । कर्चूरं हरितालमिव पिशङ्गं वासो यस्य सः पीताम्बरो हरिः । 'हरितालं तु कर्चूरम्' इति वैजयन्ती । स हरिर्विमृत्वरैर्विसृमरैः । इण्नशजिसर्तिभ्यः क्वरप् । अम्बुरुहामम्बुजानाम् । रुहेः क्विप् । रजोभिः परागैश्चिश्चिवर्णो यमस्वसुर्यमुनाया उदकस्य भारः पूर उदभारः स इव रराज । 'मन्थौदन—' इत्यादिनोदकस्योदादेशः ॥ ११ ॥

**प्रसाधितस्यास्य मधुद्विषोऽभूदन्यैव लक्ष्मीरिति युक्तमेतत् ॥**
**वपुष्यशेषेऽखिललोककान्ता साऽनन्यकामा(१)ह्युरसीतरा तु ॥१२॥**

**प्रसाधितस्येति** ॥ मधुद्विषः श्रीविष्णोः इति पूर्वोक्तप्रकारेण प्रसाधितस्य अलङ्कृतस्य सतः, अथानन्तरं यदन्यैव द्वितीया लक्ष्मीरभूत् एतत् युक्तमुचितमेव । अवर्णनीयैव कान्तिर्यदभूत् तद्युक्तं भूषितत्वादिति भावः । अथ च अन्यैव लक्ष्मीर्द्वितीया श्रीरिति शब्दच्छलेनार्थान्तरप्रतीतिः । तदेव अन्यत्वं युक्तं चाह—हि यस्मात् कारणात सामान्या लक्ष्मीः शोभात्मिका श्रीः अशेषे वपुषि समस्तशरीरे अखिलशरीरव्यापिनी, अपरम् अखिललोककान्ता सर्वजनाभिलषणीया अखिलानां समग्राणां च लोकानामिष्टा । भगवच्छोभा हि सर्वस्यैव हृदयहारिणी, सर्व एव वा अस्य देहभूषां कामयते । तु पुनः इतरा लक्ष्मीः हरिप्रिया उरसि स्थिताऽखिले वपुषि । अपरम् अनन्यकामा न अन्यैः काम्यते अन्येषां न अभिलषणीया अनन्याभिलषणीया । न हि भगवतः ऋते कश्चित् कामयते । तस्मादन्यत्वं युक्तमेव । एतदेवालोढं कपाटेत्यादिपाठान्तरश्लोकान्तरं विद्यते । तदेतेनैव व्याख्यातप्रायम् ॥ १२ ॥

प्रसाधितस्येति । प्रसाधितस्यालङ्कृतस्यास्य मधुद्विषो हरेः अन्यैवासदृशी विभिन्ना च । 'अन्यौ विभिन्नासदृशौ' इति वैजयन्ती । लक्ष्मीः शोभा पद्मा च । 'शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरपि गद्यते' इति विश्वः । अभूदित्येतद्युक्तम् । कुतः—हि यस्मात्सा प्रसाधनरूपा लक्ष्मीरशेषे वपुषि । वसतीति शेषः । किञ्चाखिललोकस्य कान्ता प्रिया । इतरा नित्या त्वन्यस्य कान्ता प्रिया न भवतीत्यनन्यकान्ता । किन्तु तस्यैवेत्यर्थः । उरसि । उरस्येव वसतीत्यर्थः । अत्र हरेः प्रसाधनादसाधारणी शोभा जातेति पारमार्थिको वाक्यार्थः । अत्र लक्ष्मीशब्देन श्लेषमहिम्ना वाच्यायाः शोभायाः प्रतीयमानायाः श्रीदेव्या सहाऽभेदाध्यवसायादियमन्यैव लक्ष्मीरित्यभेदे भेदरूपातिशयोक्तिरलङ्कारः ॥ १२ ॥

**कपाटविस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य तस्य ॥**
**आनन्दिताशेषजना बभूव सर्वाङ्गसङ्गिन्यपरैव लक्ष्मीः ॥ १३ ॥**

**कपाटेति** ॥ तस्य हरेरपरैव द्वितीया लक्ष्मीर्बभूव । कथंभूता सर्वाङ्गसङ्गिनी समस्तदेहावतीर्णा, पुनः कथंभूता आनन्दिताशेषजना हर्षनीतसमस्तलोका । कथंभूतस्य तस्य कपाटविस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य कपाटविस्तीर्णमनोरमे उरःस्थले स्थिता श्रीललना लक्ष्मीकान्ता यस्य सः तस्य । ललना कान्ता ॥ १३ ॥

अथैनमेवार्थं भङ्ग्यन्तरेणाह—

कपाटेति ॥ कपाटवद्विस्तीर्णे मनोरमे चोरःस्थले स्थिता श्रीरिति ललना कान्ता यस्य तस्य हरेरानन्दिताशेषजना सर्वाङ्गसङ्गिनी सकलदेहव्यापिनी अत एव अपरैवासाधारण्येव श्रीदेव्या अन्यैव लक्ष्मीः शोभा रमा च बभूव । स एवालङ्कारः । प्रायेणैकार्थमप्यनेकं श्लोकमुक्तिविशेषलाभाल्लिखन्ति कवयः । यथा हि नैषधे—आदावेव 'निपीय'त्यादि श्लोकद्वयं, तथा 'स्वकेलिलेशे'त्यादि श्लोकद्वयं चेति ॥ १३ ॥

---

(१) कान्ता ।

दैत्याधिपप्राणमुषां नखानामुपेयुषा (१)भूषणतां क्षतेन ॥
प्रकाशकार्कश्यगुणौ दधानाः स्तनौ तरुण्यः परिवव्रुरेनम् ॥ १४ ॥

दैत्याधिपेति ॥ तरुण्यो नायिका एनं विष्णुं परिवव्रुः वेष्टयामासुः । किंभूताः स्तनौ दधाना धारयन्त्यः । स्तनाविति प्रत्येकं सम्बन्धविवक्षायां द्विवचनम् । कीदृशौ स्तनौ नखानां क्षतेन नखव्रणेन उल्लिखितौ, किंभूतेन नखक्षतेन भूषणतामुपेयुषा भूषणत्वं प्राप्तेन । कदाचित्करजाः कोमलाः स्युर्नेत्याह–किंविशिष्टानां नखानां दैत्याधिपहिरण्यकशिपुहृदयविदारिणाम् । अत एव किंविधौ स्तनौ प्रकाशकार्कश्यगुणौ प्रकाशः प्रकटो लोकख्यातः कार्कश्यगुणोऽतिकाठिन्यं ययोस्तौ । यैर्दैत्येन्द्रो विदारितस्तेषां नखानां क्षतं शोभा ययोः अकारि, तौ कठिनावित्यवश्यमेव सर्वेण सुज्ञानम् ॥ १४ ॥

अथ देवीसहचरस्यैवास्य यात्रेति सूचयन्प्रसाधनविधेः फलमाह—

**प्राणेति** ॥ भूषणतामुपेयुषाम् । न तु प्रहरततामिति भावः । दैत्यपतेः हिरण्यकशिपोः प्राणच्छिदां प्राणमुषां प्राणापहारिणाम् । वज्रादपि कठोराणामित्यर्थः । नखानां क्षतेन व्रणेन प्रकाशो व्यक्तः कार्कश्यमेव गुणो ययोस्तौ स्तनौ । स्तनानित्यर्थः । जातावेकवचने प्राप्ते जातिभूयस्सु स्तनादिषु जातेर्द्वित्वविशिष्टत्वाद् द्विवचनम् । यथाह वामनः—'स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेण' इति । दधानास्तरुण्यो युवतयः । 'वयसि प्रथमे' इति ङीप् । एनं हरिं परिवव्रुः । अत्र हरिनखानां नरहरिनखभेदेऽप्यभेदोक्त्या स्तनयोश्च तादृक्काठिन्यासम्बन्धेऽपि तत्सम्बन्धोक्त्यातिशयोक्ती, तयोश्च सापेक्षत्वात्सङ्करः ॥१४॥

आकर्षतेवोर्ध्वमपि क्रशीया(२)नभ्युन्नतत्वात् कुचमण्डलेन ॥
ननाम मध्योऽतिगुरुत्वभाजा नितान्तमाक्रान्त इवाङ्गनानाम् ॥१५॥

आकर्षतेवेति ॥ याभिरसौ परिवृतस्तासामङ्गनानां मध्यो ननाम क्षीणामुदरमनमत् । उत्प्रेक्षते—कुचमण्डलेन नितान्तमाक्रान्त इव भारनमित इव । अत्र रूपान्तरारोपणरूपोत्प्रेक्षा । किंभूतेन कुचमण्डलेन अतिगुरुत्वभाजा अतिशयस्थूलेन, कीदृशो मध्यः क्रशीयान् कृशतरः मुष्टिग्राह्यः । कृशत्वान्नम्रभावमवहदित्यर्थः । किंभूतेन कुचमण्डलेन अभ्युन्नतत्वादूर्ध्वमिव आकर्षता । यः किल अतिकृशः स भाराक्रान्तोऽवश्यमेव नमति । अत्यर्थोर्ध्वमुखत्वादूर्ध्वमाकर्षता इव उत्प्लावयतेव मध्यमिति उत्प्रेक्षान्तरम् । अपिशब्दो विरोधप्रतिपादनार्थः । ऊर्ध्वमप्याकृष्ट इव तत्रापि मध्यो ननाम । यो ह्युत्प्लवते तेनोन्नतेन भवितव्यम् । अन्योऽपि क्रशीयान् दरिद्रः केनचिदभ्युन्नतत्वान्महाप्रभावत्वादूर्ध्वमाकृष्टो महासम्पदं प्रापितो नमतीत्युक्तिलेशः । क्रशीयानिति र ऋतो हलादेर्लघोः । अतिक्रशीयानिति इदानीन्तनानां पाठः । मध्यमर्धवाचि ॥ १५ ॥

**आकर्षतेवेति** ॥ अभ्युन्नतत्वाद्धेतोः ऊर्ध्वमाकर्षतेव, नमन्तं मध्यमुन्नमयतेव स्थितेनेत्युत्प्रेक्षा । अतिगुरुत्वमतिभारत्वम् अतिप्रवृद्धत्वं च भजतीति भाक् । भजो ण्विः । तेनाङ्गनानां कुचमण्डलेनातिक्रशीयानत्यन्तकृशतरः तनीयान् क्षीणश्च । 'र ऋतो हलादेर्लघोः' इति रेफादेशः । मध्यो नितान्तमाक्रान्तः पीडित इव ननाम नतः प्रणतश्च । अत्र मध्यकुचमण्डलयोर्विशेषणसाम्यादरिविजिगीषुराजप्रतीतेः समासोक्तिः । तथा वाच्ययोः प्रतीयमानाभेदेनाक्रमणक्रियाकर्मकर्तृभावसम्भावितेयं नमनस्याक्रमणहेतुकत्वोत्प्रेक्षा, इत्यनयोः सङ्करः । उत्प्रेक्षयोस्तु नैरपेक्ष्यादसंसृष्टिरेवेति विवेकः ॥ १५ ॥

---

(१) प्राणच्छिदां दैत्यपतेर्नखानामुपेयुषाम् । (२) ०मतिक्रशीयानत्युन्नतत्वात् ।

**यां यां प्रियः प्रैक्षत कातराक्षीं(१) सा सा ह्रिया नम्रमुखी बभूव ॥**
**निःशङ्कमन्याः सममाहितेर्ष्यै(२)स्तत्रान्तरे जघ्नुरमुं कटाक्षैः ॥ १६ ॥**

**यां यामिति** ॥ प्रियः श्रीकृष्णः अर्थात् तासामेव अङ्गनानां मध्यात् यां यां कातराक्षीं सारङ्गलोचनां प्रैक्षत अद्राक्षीत्, सा सा स्त्री ह्रिया लज्जया नम्रमुखी बभूव अधोमुखी सञ्जाता । स्वभाव एवायं स्नेहस्य, यत्कान्तावलोकनेन अवनतवदनत्वम् । अन्या नार्यः पुनः तत्रान्तरे तत्रावसरेऽमुं श्रीकृष्णं समं युगपदेव कटाक्षैर्जघ्नुः कथं यथा भवति निःशङ्कं निर्भयं यथा स्यात् । किंभूतैः कटाक्षैः आहितेर्ष्यैः समत्सरैः । अन्याविशेषणं वा, या भगवता नैक्षिषत ता एनमताडयन् ॥ १६ ॥

यांयामिति ॥ प्रियो हरिर्यांयामङ्गनाम् । 'नित्यवीप्सयोः' इति वीप्सायां द्विर्भावः, एकपदम् । प्रैक्षतालोकयत सासा । पूर्ववद् द्विर्भावः । कातराक्षी साध्वससाचकितलोचना सती ह्रिया नम्रमुखी बभूव । एतेन कार्यद्वारा लज्जासाध्वसभावोदय उक्तः । अन्यासामीर्ष्याभावोदयमाह—अन्या अप्रेक्षिताङ्गना आहितेर्ष्याः कृताक्षमाः सत्यः । 'परोत्कर्षाक्षमेर्ष्या स्यात्' इति लक्षणात् । तत्रान्तरे तस्मिन्नीक्षणावसरे । 'क्लीबेऽन्तरे चावकाशे तादर्थ्येऽवसरेऽवधौ' इति वैजयन्ती । निःशङ्कं तदनीक्षणादेव विस्रब्धं यथा तथा समं युगपत्कटाक्षैरमुं हरिं जघ्नुः प्रजघ्नुः सरोषमद्राक्षुः ॥ १६ ॥

**तस्याऽतसीसूनसमानभासो भ्राम्यन्मयूखावलिमण्डलेन ॥**
**चक्रेण रेजे यमुनाजलौघः स्फुरन्महावर्त इवैकबाहुः ॥ १७ ॥**

**तस्येति** ॥ तस्य हरेरेको बाहुः रेजे शुशुभे, केन चक्रेण सुदर्शनेन । कीदृशेन भ्राम्यन्मयूखावलिमण्डलेन देदीप्यमानकिरणपटलेन, कथंभूतस्य अतसीसूनसमानभासोऽतसीपुष्पसमकान्तेः । एकबाहुरुत्प्रेक्ष्यते—यमुनाजलौघ इव कालिन्दीनीरनिकरनिभः। किंभूतो जलौघः स्फुरन्महावर्तः भ्राम्यत्कुम्भिनीकः । भ्राम्यत्कल्लोला हरेर्यमुनोपमानं, बाहोर्जलौघः, चक्रस्यावर्तः । यथा स्फुरद्भिर्महावर्तैर्यमुना चकास्ति एवं तस्य सुदर्शनेन बाहुर्बभावित्यर्थः । अत्रावलिशब्दमलङ्कारविदः प्रायेणाधिकं मन्यन्ते, मण्डलशब्देनैव तदर्थस्योक्तत्वात् । एकश्चासौ बाहुश्चेति 'पूर्वकाले'ति समासः ॥ १७ ॥

अथास्य पञ्चभिर्दिव्यास्त्रसन्निधानमाह—

**तस्येति** ॥ अतसीसूनेन क्षुमाकुसुमेन समानभासस्तुल्यकान्तेः । स्निग्धश्यामस्येत्यर्थः । 'अतसी स्यादुमा क्षुमा' **इत्यमरः** । तस्य हरेरेकबाहुः, भ्राम्यदावर्तमानं मयूखावलीनां मण्डलं चक्रवालं यस्य तेन चक्रेण सुदर्शनेन स्फुरन्महानावर्तो भ्रमो यस्य सः । 'स्यादावर्तोऽम्भसां भ्रमः' **इत्यमरः** । यमुनाजलानामोघः पूर इव रेजे । चक्रं दधाविन्यर्थः ॥ १७ ॥

**विरोधिनां विग्रहभेददक्षा मूर्तेव शक्तिः क्वचिदस्खलन्ती ॥**
**नित्यं हरेः सन्निहिता निकामं कौमोदकी मोदयति स्म चेतः ॥ १८ ॥**

**विरोधिनामिति** ॥ कौमोदकी गदा हरेः श्रीकृष्णस्य चेतश्चित्तं निकाममतिशयेन मोदयति स्म अतूतुषत् अपिप्रीणत् तोषयमास । किंभूता कौमोदकी नित्यं सन्निहिता सदैव हरेः करस्था, तथा विरोधिनां शत्रूणां विग्रहभेददक्षा शरीरमथनसमर्था, अपरं कीदृशी क्वचिदपि अस्खलन्ती अप्रतिहता सर्वत्र लब्धप्रसरा । अतश्च ज्ञायते उत्प्रेक्ष्यते—मूर्ता इव देहधारिणी शक्तिरिव भगवतो वपुःसामर्थ्यमिव । साऽपि रिपुविरोधविनाशचतुरा सदा समीपस्था

(१) कातराक्षी । (२) ०माहितेर्ष्या० ।

अस्खलिता च । विग्रहः शरीरं वैरं च । अस्खलन्तीति असमर्थसमासः, नञः क्वचिच्छब्देन सम्बन्धात् । यथा असूर्यम्पश्या राजदारा इति । क्वचिदस्खलन्ती क्वचिदपि न स्खलन्तीत्यर्थः । अन्यथा तु क्वचिदस्खलन्ती न सर्वत्रेत्युक्तं स्यात् । अथ चेदपिशब्दाध्याहार- इति क्वचिदप्यस्खलन्तीति, सर्वं सुस्थम् । कुमोदको विष्णुस्तस्येयं कौमोदकी ॥ १८ ॥

विरोधिनामिति ॥ विरोधिना वैरिणां विग्रहभेदे शरीरविदारणे दक्षा । 'शरीरं वर्ष्म विग्रहः' इत्यमरः । क्वचित्काप्यस्खलन्ती । सर्वत्राप्रतिहतवृत्तिरित्यर्थः । नित्यं सन्निहिता अनपायिनी । अत एव मूर्ता मूर्तिमती शक्तिः सामर्थ्यमिव स्थितेत्युत्प्रेक्षा । कौमोदकी गदा हरेश्चेतो निकामं मोदयति स्म । स्वसान्निधानेनेति भावः ॥ १८ ॥

न केवलं यः स्वतया मुरारेरनन्यसाधारणतां दधानः ॥
अत्यर्थमुद्वेजयिता परेषां नाम्नापि तस्यैव स नन्दकोऽभूत् ॥ १९ ॥

न केवलमिति ॥ यः खड्गः अनन्यसाधारणतां भगवदेकविषयत्वं दधानः सन् न केवलं स्वतया आत्मीयत्वेन मुरारेः श्रीवासुदेवस्य नन्दकोऽभूत् । नन्दयतीति नन्दकः । अपरं नाम्नाऽपि तस्यैव हरेर्नन्दकोऽभूत् । तमेवानन्दयदित्यर्थः । यतः परेषां शत्रूणामत्यर्थमुद्वेजयिता परं खेदजनकः । नन्दकशब्दयोरुभयार्थत्वात् दोषो नोक्तेः । नन्दकस्य हि उभयरूपतास्ति, विष्णोः सम्बन्धित्वमानन्दकत्वं च । यतो नन्दयतीति नन्दकः व्युत्पत्तिः । तत्र कश्चिद् बुध्यते मुरारेरयं केवलमात्मीयत्वेनैव सम्बन्धी, नन्दकस्तु सर्वस्यैवेति कविराह—न केवलमित्यादि । हरेर्नन्दकः इत्यत्र न केवलं शेषलक्षणैव षष्ठी, भगवदपेक्षया यावत्कर्मषष्ठ्यपीति तात्पर्यार्थः । दधान इति शानजन्तः । ये तु दधारेति पठन्ति तैस्तद्भावे युक्तिर्वक्तव्या, धृङ आत्मनेपदित्वात् दध्रे इति भवितव्यम् । यथा ध्रियते । तुदादावपि 'धि धारणे' इतीकारान्तस्य पाठः । धयतीति रूपं, यथा स्यात् क्षियतीति ॥ १९ ॥

न केवलमिति ॥ अन्यस्य साधारणो न भवतीत्यनन्यसाधारणस्तस्य भावस्तत्ता तां दधानः, तथापि यो नन्दकः स्वतया केवलं गजाश्वादिवत्स्वत्वेनैव मुरारेर्नन्दको न किन्तु परेषां शत्रूणामत्यर्थमुद्वेजयिता भीषयिता सन्, अत एव नाम्नापि चन्द्रादिवन्नन्दयतीति नन्दक इत्यन्वर्थसंज्ञाबलेनापि । नन्दयितृत्वेनापीति यावत् । तस्यैव तदीय एव योऽनन्यसाधारणत्वात्परोद्वेजकत्वाच्च तस्यैव नन्दको नन्दयिता चेत्यर्थः । स नन्दको नन्दकाख्यः खड्गोऽभूत् । सन्निहितोऽभूदित्यर्थः । सम्बन्धानुवादेन सन्निधानमेवात्र विधेयं, प्रकरणात् । अत्रानन्यसाधारणत्वपरोद्वेजकत्वपदार्थाभ्यां विशेषणगत्या नन्दकस्य तदीयतासमर्थनात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १९ ॥

न नीतमन्येन नतिं कदाचित्कर्णान्तिकप्राप्तगुणं क्रियासु ॥
विधेयमस्याऽभवदन्तिकस्थं शार्ङ्गं धनुर्मित्रमिव द्रढीयः ॥ २० ॥

न नीतमिति ॥ शार्ङ्गं धनुः अस्य हरेः अन्तिकस्थमभवत् समीपस्थं बभूव । रथस्योपरि स्थापितमित्यर्थः । कीदृशं धनुः अन्येन भगवद्व्यतिरिक्तजनेनान्येन असामर्थ्यात् केनचित्कदाचिदपि नतिं न नीतं नम्रतां न प्रापितं सज्यं न कृतम् , अपरं कथंभूतं कर्णान्तिकप्राप्तगुणं कर्षणवशात् कर्णान्तिकमपाङ्गप्रदेशं प्राप्तो गुणो ज्या यस्य, श्रवणसमीपागतमौर्वीकं, तथा क्रियासु परघातनादिषु विधेयं वश्यम् आक्रष्टुं भगवता शक्यं, तथा द्रढीयः अभङ्गुरम् । अत एव किमिव अन्तिकस्थं बभूव मित्रमिव सुहृत्तुल्यम् । यथा मित्रं मित्रस्य अन्तिकस्थं भवति, एवमस्य तद्भूदित्यर्थः । तदपि किम्भूतम् अन्येन इतरेण कदाचिदपि नतिं

न नीतं न नम्रीभूतम्, अन्येन मित्रद्विष्टेन न कदाचिदपि नतिं नीतम् । तथा कर्णान्तिकप्राप्तगुणं गुणाश्च तदीया अद्रोहौदार्यादयः कर्णान्तिकमागच्छन्ति श्रूयन्ते । तथा क्रियासु गतादिकासु विधेयं वश्यमादेशकरं भवति, तथा द्रढीयः अविचलं सबलं वा । र ऋतो हलादेर्लघोः ॥ २० ॥

न नीतमिति ॥ अन्येन पुरुषान्तरेण नतिमाकर्षणं भेदेन स्वानुकूल्यं च न नीतं प्रापितम्, क्रियासु रणकर्मसु हिताहितकृत्येषु च कर्णान्तिकं कर्णगोचरं प्राप्तो गुणो मौर्वी आततधर्मश्च यस्य तद्विधेयं क्रियासु वश्यं द्रढीयः दृढतरम् । पीडासहतरमिति यावत् । शृङ्गस्य विकारः शार्ङ्गं नाम धनुः मित्रमिवास्य हरेरन्तिकस्थं सन्निहितमभवत् ॥ २० ॥

प्रवृद्धमन्द्राऽम्बुदनादधीरं(१) कृष्णार्णवाभ्यर्णचरैकहंसः ॥
मन्दानिलापूरकृतं दधानो निध्वानमश्रूयत पाञ्चजन्यः ॥ २१ ॥

प्रवृद्धेति ॥ पाञ्चजन्यः शङ्खो निध्वानं शब्दं दधानः सन् अश्रूयत आकर्णितः । पाञ्चजन्यशब्दश्रवणादुपचारेण स एवाऽश्रूयत इत्युक्तम् । किंविधं शब्दं प्रवृद्धमन्द्राम्बुदनादधीरं दीर्घमधुरमेघघोषगम्भीरं प्रवृद्धो दीर्घो मन्द्रो गम्भीरो यो मेघघोषस्तद्वत् धीरं गम्भीरं, तथा मन्दानिलापूरकृतं स्वल्पनिःश्वासपवनाध्मातजनितं मन्दवातसमन्तात्पूरितम् । समरसमये हि जवेन शङ्खो ध्मायते । किंभूतः पाञ्चजन्यः कृष्ण एव महत्त्वात् अर्णवस्तस्याभ्यर्णचरः समीपवर्ती सचासौ एकहंसश्चेति विशेषणसमासः, विष्णुसमुद्रनिकटस्थराजहंसः । यथा कश्चिदुदधिनिकटस्थस्य राजहंसस्य मेघनादमिश्रं शब्दं शृणोति एवमसौ श्रुत इत्यर्थः । अभ्यर्णः अभ्यर्देः क्तः, 'अभेश्चाविदूर्ये' इतीडभावः । रदाभ्यां निष्ठातो नः पूर्वस्य च दः नत्वम् । अश्रूयतेति कर्मणि लङ् । पञ्चजने भवः पाञ्चजन्यः 'बहिर्देवपञ्चजनेभ्यश्चे'ति ञ्यः॥ २१ ॥

प्रवृद्धेति ॥ धियं रातीति धीरो मनोहरः मन्द्रो गम्भीरोऽम्बुदस्य मेघस्येव धीरश्च नादः प्रवृद्धो येन सः प्रवृद्धमन्द्राम्बुदधीरनाद इत्युपमा । कृष्ण एवार्णवः समुद्रस्तस्याभ्यर्णचरोऽन्तिकचरः । 'उपकण्ठान्तिकाभ्यर्णा—' इत्यमरः । स चासावेकहंसश्चेति श्लिष्टपरम्परितरूपकम् । मन्दानिलस्यापूर आपूरणं तेन कृतं जनितं निध्वानं दधानः । अनाध्मातोऽपि मन्दमारुतप्रवेशादेव ध्वनतीति पाटवादतिशयोक्तिः, ध्वन्यसम्बन्धेऽपि सम्बन्धकथनात् । पञ्चजनो नाम कश्चिदसुरस्तत्र भवः पाञ्चजन्योऽस्य शङ्खः । 'बहिर्देवपञ्चजनेभ्यश्च वक्तव्यम्' इति ञ्यप्रत्ययः । अश्रूयत श्रूयते स्म । पाञ्चजन्योऽपि सन्निहितोऽभूदित्यर्थः । वाणी श्रूयते, पुष्पाण्याघ्रायन्ते इत्यादिवद्धर्मधर्मिणोरभेदोपचारात्पाञ्चजन्यस्य श्रवणोक्तिः ॥ २१ ॥

रराज सम्पादकमिष्टसिद्धेः सर्वासु दिक्ष्वप्रतिषिद्धमार्गम् ॥
महारथः पुष्यरथं रथाङ्गी क्षिप्रं क्षपानाथ इवाधिरूढः ॥ २२ ॥

रराजेति ॥ रथाङ्गी भगवान् चक्रपाणिः पुष्यरथमधिरूढ आरूढः सन् रराज शुशुभे । क्रीडारथः पुष्यरथो भण्यते । असंग्रामिको मङ्गलरथः । किंभूतं पुष्यरथम् अर्थसिद्धेरभिलषितनिष्पत्तेः साधकं सम्पादकं निष्पादकं समर्थं, तथा क्षिप्रमाशुगामिनम् । अत एव सर्वासु दिक्षु अप्रतिषिद्धमार्गमशेषास्वाशासु अनिषिद्धमार्गं चतुर्दिक्षु सर्वत्रापि अनिवारितपथम् । किंभूतो रथाङ्गी महारथः । सर्वयुद्धव्यवहारं यो वेत्ति शूरः स महारथः । क इव क्षपानाथ इव । यथा क्षपानाथश्चन्द्रमाः पुष्यरथमधिरोहति पुष्यनक्षत्रे याति । पुष्यमेव रथः पुष्यरथः । चन्द्रोऽपि पुष्यरथसम्बद्धः शोभते । कथंभूतम् अर्थसिद्धेः सम्पादकम् । पुष्येन्दुयोगे

(१) धीरनादः ।

प्रारब्धं कार्यं न निष्फलं भवतीत्यर्थः । पुष्यन्त्यस्मिन्नर्था इति पुष्यः । सर्वासु दिक्षु अप्रतिषिद्धो मार्गो येन, यात्रिको ह्यसौ । तथा क्षिप्रं जवनं चेति ॥ २२ ॥

रराजेति ॥ महान्रथो यस्य स महारथो रथिकविशेषः ।

'आत्मानं सारथिं चाश्वान्रक्षन्युध्येत यो नरः ।
स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः' ॥

इति । रथाङ्गं चक्रमस्यास्तीति रथाङ्गी हरिः इष्टसिद्धेः सम्पादकं लक्षणवत्त्वात् । 'पुष्यः सर्वार्थसाधकः' इति शास्त्रादिति भावः । सर्वासु दिक्ष्वप्रतिषिद्धमार्गम् । अनिषिद्धगमनमित्यर्थः । अधिष्ठानशक्तेर्निरङ्कुशत्वात् । 'पुष्यो हस्तो मैत्रमथाश्विनं च चत्वार्याहुः सर्वदिग्द्वारकाणि' इति शास्त्रादिति भावः । क्षिप्रं क्षिप्रगामिनम्, अन्यत्र क्षिप्रनामकम् । 'क्षिप्रं चाश्विदिनेशपुष्यम्' इति शास्त्रात् । पुष्यरथं क्रीडारथम् । 'असौ पुष्यरथश्चक्रयानं न समराय यत्' इत्यमरः । अधिरूढः सन्, पुष्यो रथ इव तं पुष्यरथमधिरूढः पुष्यनक्षत्रगतः क्षपानाथश्चन्द्र इव रराज ॥ २२ ॥

**ध्वजाग्रधामा ददृशेऽथ शौरेः संक्रान्तमूर्तिर्मणिमेदिनीषु ॥**
**फणावतस्त्रासयितुं रसायास्तलं विविक्षन्निव पन्नगाऽरिः ॥ २३ ॥**

ध्वजाग्रेति ॥ अथानन्तरं पन्नगाऽरिर्गरुडो ददृशे । कथंभूतः शौरेः श्रीवासुदेवस्य ध्वजाग्रधामा पताकाग्रस्थितः, चिह्नकोटिषु वसति । पुनः कीदृशः मणिमेदिनीषु संक्रान्तमूर्तिः स्फटिककुट्टिमेषु प्रतिबिम्बितशरीरः । उत्प्रेक्ष्यते–रसायास्तलं पातालं विविक्षन्निव प्रवेष्टुकाम इव । किं कर्तुं फणावतस्त्रासयितुं सर्पान् भीषयितुम्, यतोऽसौ पन्नगाऽरिः । ददृशे इति कर्मणि लिट् । फणाशब्दः स्त्रीलिङ्गोऽपि कविभिरनुमीयते । मेदिन्यास्तलं पातालं विविक्षन् भगवदादेशं याचमानः ऊर्ध्वं विलोकितवान् इत्यर्थः । 'रसातलान्नागकुलानि जित्वाऽत्यर्थं प्रयास्यन्निव पन्नगाऽरिः' पाठान्तरम् ॥ २३ ॥

ध्वजाग्रेति ॥ अथ रथारोहणानन्तरं शौरेः कृष्णस्य ध्वजाग्रं धाम स्थानं यस्य सः मणिमेदिनीषु मणिमयकुट्टिमेषु संक्रान्तमूर्तिः प्रतिबिम्बिताङ्गः सन् पन्नगाऽरिर्गरुत्मान् फणावतः सर्पांस्त्रासयितुं द्रावयितु रसायास्तलं पातालं विविक्षन् । प्रवेष्टुमिच्छन्नित्युत्प्रेक्षा । विशतेः सन्नन्ताल्लटः शत्रादेशः । ददृशे दृष्टः । सोऽपि सन्निहितोऽभूदित्यर्थः ॥ २३ ॥

**यियासतस्तस्य महीध्ररन्ध्रभिदापटीयान्पटहप्रणादः ॥**
**जलान्तराणीव महार्णवौघः शब्दान्तराण्यन्तरयाञ्चकार ॥ २४ ॥**

यियासत इति ॥ तस्य श्रीकृष्णस्य पटहप्रणादः दुन्दुभिशब्दः शब्दान्तराणि अश्वहेषितगजगर्जितरथचीत्कारादीनि अन्तरयाञ्चकार अपजुह्नुवे अपललाप । किं कुर्वतो हरेः यियासतः इन्द्रप्रस्थं जिगमिषतः । कीदृशो निनादः महीध्ररन्ध्रभिदापटीयान् प्रतिशब्दतया गिरिकन्दरविदारणसमर्थः । भिदेति क्विबन्तात् तृतीया । यदि वा भङ्ग एव भिदेत्यङन्तः । महान् शब्देन नगरन्ध्राणि विदारयति, सोऽपि पर्वतविवरविदारणसमर्थः । ध्रै तृप्तौ, महीं ध्रापयन्ति महीध्राः, मूलविभुजादित्वात्कः । 'बहुलमन्यत्रापि संज्ञाछन्दसो'रिति णिलुक् । भिदेति 'भिदिर् विदारणे' इत्यङन्तः ॥ २४ ॥

यियासत इति ॥ यातुमिच्छतो यियासतः । यातेः सन्नन्ताल्लटः शत्रादेशः । तस्य हरेः सम्बन्धी, महीं धरन्तीति महीध्राः पर्वताः । मूलविभुजादित्वात्कप्रत्ययः । यदाह वामनः—'महीध्रादयो मूलविभुजादिदर्शनात्' इति । तेषां रन्ध्राणि बिलानि तेषां भिदा भेदनम् । षिद्भिदादिभ्योऽङ् । तस्यां पटीयान्समर्थतरः पटहप्रणाद आनकघोषः महार्णवस्यौघः समुद्रस्य प्रवाहः । अन्यानि जलानि जलान्तराणीव । 'सुप्सुपे'ति

समासः । अन्यान् शब्दान् शब्दान्तराणि । पूर्ववत्समासः । अन्तरयाञ्चकाराऽन्तर्हितानि चकार । छादयामासेत्यर्थः । अन्तरशब्दादन्तर्धानार्थात् 'तत्करोति-' इति ण्यन्ताल्लिट् । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्युभयत्राप्यमरः ॥ २४ ॥

**यतः स भर्ता जगतां जगाम धर्त्रा धरित्र्याः फणिना ततोऽधः ॥**
**महाभराभुग्नशिरःसहस्रसाहायकव्यग्रभुजं प्रसस्रे ॥ २५ ॥**

**यत इति** ॥ स जगतां भर्ता जगन्निवासः यतो येन प्रदेशेन यस्मिन् मार्गे वा जगाम ततस्तेन प्रदेशेन तस्मिन् प्रदेशे वा अधः अधोविभागे पाताले फणिना सर्पेण प्रसस्रे प्रसृतम् । किंभूतेन फणिना धरित्र्या धर्त्रा भूमेः वोढ्रा । शेषेणेत्यर्थः । कथं यथा भवति महाभराभुग्नशिरःसहस्रसाहायकव्यग्रभुजं यथा स्यात् महाभरेण गौरवेण आभुग्नं वक्रीकृतं कुब्जीभूतं निःसहं यत् शिरःसहस्रं फणादशशतं तत्र साहायके साहाय्ये व्यग्रौ व्याकुलौ भुजौ बाहू यत्र । प्रसारणे महापुरुषलक्षणं गुरुत्वमित्याहुः । अत्र जगद्धारणं गुरुत्वे हेतुः । प्रसस्रे इति भावे लिट् ॥ २५ ॥

**यत इति** ॥ जगतां भर्ता धारयिता । कुक्षिस्थाखिललोक इत्यर्थः । 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । स हरिर्यतो येन भूमार्गेण जगाम ततस्तस्मिन्भूभागे अधः पाताले धरित्र्या धरण्याः धर्त्रा धारयित्रा । पूर्ववत्षष्ठी । फणिना शेषेण महता भरेण आसमन्ताद् भुग्नस्य कुब्जीभूतस्य शिरःसहस्रस्य साहायके सहायकर्मणि । योपधाद् गुरूपोत्तमाद्वुञ् । व्यग्रास्त्वरमाणा भुजा यस्मिंस्तद्यथा तथा प्रसस्रे प्रसृतम् । भावे लिट् । हरिश्चचालेत्यर्थः । अत्र शेषस्य विशिष्टप्रसरणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ २५ ॥

**अथोच्चकैस्तोरणसङ्गभङ्गभयावनम्रीकृतकेतनानि ॥**
**क्रियाफलानीव सुनीतिभाजं सैन्यानि सोमान्वयमन्वयुस्तम् ॥२६॥**

**अथेति** ॥ अथानन्तरं सैन्यानि तं सोमान्वयं सोमवंश्यं श्रीकृष्णमन्वयुः अनुजग्मुः । पश्चाद्भूतानीत्यर्थः । किंभूतानि सैन्यानि उच्चकैस्तोरणसङ्गभङ्गभयावनम्रीकृतकेतनानि उच्चकैरुन्नतं यत्तोरणं तेन यः सङ्गः सम्पर्कः तस्माद्यो भङ्गो विनाशः ततो यद्भयं तस्तेन अवनम्रीकृतानि केतनानि ध्वजाः यैः । कानीव क्रियाफलानीव । यथा कर्तव्यफलानि सुनीतिभाजं नयज्ञमनुयान्ति । हरिमेव वा सुनीतिभाजं यथा क्रियाफलान्यनुयान्तीति योज्यम् । सेनां समवयन्ति सैन्यानि, परिषदो ण्यः सेनाया वा । सामान्यविवक्षायां क्लीबत्वम् । केचित् स्थितिलिङ्गं सैन्यशब्दमाहुः । सामूहिकस्त्वत्र दुर्लभः । अन्वयः प्रबन्धः । अन्वयुरिति यातेर्लङ्, 'लङः शाकटायनस्ये'ति झेर्जुश्च ॥ २६ ॥

**अथेति** ॥ अथ हरिचलनानन्तरमुच्चकैरुन्नते तोरणे द्वारदारुणि सङ्गेन भङ्गस्तस्माद्भयेनावनमीकृतानि केतनानि यैस्तानि सैन्यानि, सोमस्यान्वयः सन्तानः तं सोमान्वयं हरिं सुनीतिभाजं सुष्ठुनीतिमन्तं, क्रियाः सामाद्युपायप्रयोगास्तासां फलानि हिरण्यभूमिमित्रादिलाभा इवान्वयुरन्वगच्छन् । यातेर्लङ् 'लङः शाकटायनस्य' इति झेर्जुस् ॥ २६ ॥

**श्यामारुणैर्वारणदानतोयैरालोडिताः काञ्चनभूपरागाः ॥**
**आनेमिमग्नैः शितिकण्ठपक्षक्षोदद्युतश्चुक्षुदिरे रथौघैः ॥ २७ ॥**

**श्यामेति** ॥ रथौघैः स्यन्दनसमूहैः काञ्चनभूपरागाः सुवर्णोर्वीरजांसि चुक्षुदिरे क्षुण्णाः पिष्टाः चूर्णिताः । 'चुक्षुभिरे' पाठे क्षोभिताः उत्प्राविताः । किंभूताः काञ्चनभूपरागाः वारणदानतोयैः करिमदाम्बुभिः आलोडिताः पङ्किताः पङ्कत्वं प्रापिताः, किंभूतैर्दानतोयैः

श्यामारुणैः नीललोहितैः। अत एव किंविधाः शितिकण्ठपक्षक्षोदद्युतः मयूरबर्हचूर्णद्युतयः। कथंभूतै रथौघैः आनेमिमग्नैः चक्रपर्यन्तं यावत् क्षुदितैः। चक्रधारा प्रधिर्नेमिः। श्यामानि च तानि अरुणानि इति 'वर्णो वर्णेने'ति समासः। क्षुभिरत्रान्तर्भूतण्यर्थः सकर्मकः। यथा राजयुध्वा इति युधिः। चुक्षुदिरे इति न्याय्यः पाठः॥ २७॥

श्यामेति॥ श्यामानि चारुणानि च तैः श्यामारुणैः कृष्णलोहितैः। 'वर्णो वर्णेन' इति समासः। वारणदानतोयैर्गजमदोदकैरालोडिताः संमिलिता अत एव शितिकण्ठपिच्छक्षोदा मयूरबर्हचूर्णा इव द्योतन्त इति तथोक्ताः। क्विप्। उपमालङ्कारः। काञ्चनस्य भूः काञ्चनभूस्तस्याः परागाः पांसवः। आनेमि नेमिमभिव्याप्य। 'चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री' इत्यमरः। 'आङ् मर्यादाभिविध्योः' इत्यभिविधावव्ययीभावः। मग्नै रथौघैः चक्षुदिरे। पिष्टा इत्यर्थः। परागाणां विशिष्टपेषणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः। तथा च महती गजरथसम्पत्तिर्व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः॥ २७॥

**न लङ्घयामास महाजनानां शिरांसि नैवोद्धतिमाजगाम॥**
**अचेष्टताऽष्टापदभूमिरेणुः खुराहतो(१) यत्सदृशं गरिम्णः॥ २८॥**

**नेति**॥ अष्टापदभूमिरेणुः सुवर्णमहोपरागः खुराहतः सन् यत् गरिम्णः सदृशं गुरुत्वस्योचितं, तत् अचेष्टत चकार। उत्थित एव गौरवादधो जगामेत्यर्थः। किमचेष्टतेत्याह तावत्—महाजनानां शिरांसि जनताया मस्तकानि न लङ्घयामास नाधिरुरोह, अपरम् उद्धतिं नैवाजगाम उत्प्लुतिं न ययौ। अथ च गरिम्णो विपुलहृदयस्य यदनुरूपं तच्चकारेत्युक्तिः। यो हि महान् स कोपितोऽपि साधूनामवमानं न कुरुते, नाप्युद्धतं क्षोभं याति॥ २८॥

नेति॥ अष्टसु धातुषु पदं प्रतिष्ठा अस्येत्यष्टापदं सुवर्णम्। 'रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्' इति सुवर्णपर्यायेष्वमरः। तस्य भूमिस्तस्या रेणुः काञ्चनभूरजः पदाहतः। रथाश्वादिचरणताडितोऽपि सन्नित्यर्थः। महाजनानां बहुजनानां पूज्यानां च शिरांसि न लङ्घयामास नाक्रामति स्म। किं बहुना उद्धतिमुत्पवनं दर्पं च नैवाजगाम। कुतः—यद् यस्माद्गरिम्णो गुरुत्वगुणस्य माहात्म्यस्य च। 'प्रियस्थिर—' इत्यादिना गुरोर्गरादेशः। सदृशमनुरूपं यथा तथाऽचेष्टत। अलङ्घनव्यवहारे गुरुत्वस्यौद्धत्यप्रतिबन्धकत्वादिति भावः। अत्रानौद्धत्यादिप्रस्तुतसुवर्णपरागविशेषणसाम्यादप्रस्तुतसुजनप्रतीतेः समासोक्तिरलङ्कारः॥ २८॥

**निरुध्यमाना यदुभिः कथञ्चिन्मुहुर्यदुच्चिक्षिपुरग्रपादान्॥**
**ध्रुवं गुरून्मार्गरुधः करीन्द्रानुल्लङ्घ्य गन्तुं तुरगास्तदीषुः॥ २९॥**

**निरुध्यमाना इति**॥ अग्रे हस्तिनो नीयन्ते पश्चादश्वा इति प्रयाणस्थितिः। स्वभाव एव जात्यश्वानां, चञ्चलत्वम्। अत्र कविरुत्प्रेक्षाञ्चक्रे—तुरगा अश्वा यदुभिर्यादवैः कथञ्चिन्महता कष्टेन निरुध्यमाना आकृष्यमाणाः संयम्यमाना यत् मुहुः वारंवारमग्रपादौ उच्चिक्षिपुः चरणौ ऊर्ध्वीचक्रुः, तत् ध्रुवमुत्प्रेक्षायाम्। अहमिति शङ्के, निश्चितं वा गुरून् करीन्द्रान् उल्लङ्घ्य गन्तुमीषुः यातुमभिलेषुः, किंभूतान् मार्गरुधः गुरुत्वादध्वानमावृत्य स्थितान्। गमनप्रतिपन्थिन इत्यर्थः। अग्रे पादौ अग्रपादौ, अग्रौ च तौ पादौ इति वा। यत्तदौ हेत्वर्थौ। ईषुरिति इच्छार्थः॥ २९॥

निरुध्यमाना इति॥ तुरगा यदुभिः। आरूढैरिति भावः। कथञ्चिदतिप्रयत्नेन निरुध्यमाना बल्गाकर्षणेन वार्यमाणा अपि यत् यस्मात् अग्राश्च ते पादाश्च तानग्रपादान्। 'हस्ताग्राग्रहस्तादयो गुणगुणिनोरभेद-

---

(१) पादाहतो।

भेदयोगात्' इति वामनः । सामानाधिकरण्येन समासः । मुहुरुपाक्षिप्तपुरुक्षिततवल्गतः तत्तस्मात्मार्गं रुन्धन्तीति मार्गरुधो मन्दगमनेन मार्गरोधिनः । क्विप् । गुरून्महतः पूज्यांश्च । अलङ्घ्यानपीति भावः । करीन्द्रानुल्लङ्घ्य गन्तुमीषुरिच्छन्ति स्म । ध्रुवमित्युत्प्रेक्षायाम् । गुरवोऽपि सन्मार्गरोधकाः परैरुल्लङ्घ्यन्त इत्यलङ्कारेण वस्तुध्वनिः ॥ २९ ॥

**अवेक्षितानायतवल्गमग्रे तुरङ्गिभिर्यत्ननिरुद्धवाहैः ॥**
**प्रक्रीडितान् रेणुभिरेत्य तूर्णं निन्युर्जनन्यः पृथुकान्पथिभ्यः ॥३०॥**

**अवेक्षितानिति** ॥ जनन्यो मातरस्तूर्णमेत्य त्वरितमागत्य मथनभयात् पथिभ्यो मार्गेभ्यः पृथुकान् डिम्भान् निन्युः अपास्थन् । किंविधान् रेणुभिः प्रक्रीडितान् धूलिभिर्विहृतान्, तथा तुरङ्गिभिरश्ववारैरग्रेऽवेक्षितान् निरूपितान्, कथं यथा भवति आयतवल्गं यथा स्यात् आयता आकृष्टा वल्गा रश्मिर्यत्र । अवेक्षणक्षणे स्तम्भयित्वा रक्षितानित्यर्थः । किंभूतैः तुरङ्गिभिः यत्ननिरुद्धवाहैः यत्नधृताश्वैः । वाह्यन्ते इति वाहाः अश्वाः वहेर्ण्यन्तात् अच् । तूर्णमिति च त्वरेः क्तः । वा 'रुष्यमत्वरसंघुषाऽऽस्वना'मितीडभावः, पक्षे 'ज्वरत्वरे'त्यूठादेशः ॥ ३० ॥

**अवेक्षितानिति** ॥ आयता आकृष्टा वल्गा मुखरज्जुर्यस्मिन्कर्मणि तद्यथा तथा यत्नेन दुर्वारवेगत्वादतिप्रयत्नेन निरुद्धा वाहा वाजिनो यैस्तैः । 'वाजिवाहार्वगन्धर्व' इत्यमरः । तुरङ्गिभिरश्वसादिभिरग्रे पुरोदेशेऽवेक्षितानालोकितान् रेणुभिः प्रक्रीडन्तीति प्रक्रीडितान्पांसुक्रीडाकरान् । कर्तरि क्तः । पृथुकान् शिशून् । 'पृथुकः शावकः शिशुः' इत्यमरः । जनन्यस्तूर्णमेत्य पथिभ्यो निन्युः अपसारयाञ्चक्रुरिति स्वभावोक्तिः ॥३०॥

**दिदृक्षमाणाः प्रतिरथ्यमायु(१)र्मुरारिमारादनघं जनौघाः ॥**
**अनेकशः संस्तुतमप्यनल्पा नवंनवं प्रीतिरहो ! करोति ॥ ३१ ॥**

**दिदृक्षमाणा इति** ॥ जनौघा लोकपूगाः अनघं पुण्यभाजं हरिं द्रष्टुकामाः सन्तः प्रतिरथ्यं प्रतिमार्गम् आरात् दूरादपि आयुः आजग्मुः । आराद् दूरसमीपयोः । ननु सर्वे एव नगरनिवासिनोऽहर्निशं भगवन्तमीक्षन्ते, तत्किमिति तेषां तदालोकनकुतूहलमित्याशङ्क्य पूर्वार्थसाधकमर्थान्तरमाह—अहो ? चित्रम्, अनल्पा महती प्रीतिः अनेकशोऽनेकवारान् संस्तुतमपि परिचितमपि नवंनवं करोति प्रत्यग्रीकुरुते । तेन तेषां हरिदर्शनहर्षो युक्तः इति भावः । दिदृक्षमाणाः इति सनि 'ज्ञाश्रुस्मृदृशां सन' इत्यात्मनेपदम् । प्रतिरथ्यमिति वीप्सा । विस्तृतत्वात् रथमर्हतीति रथ्या 'दण्डादिभ्य' इति यत् । आयुरिति आङ्पूर्वात् लङ् । नवंनवमिति मकारप्रश्लेषः । अन्यथा कर्मधारयत्वात् सुब्लुकि सति नवनवमिति च स्यात् । द्वित्वं वाऽऽदेशिकम् ॥ ३१ ॥

**दिदृक्षमाणा इति** ॥ अनघमकलङ्कं मुरारिं दिदृक्षमाणा द्रष्टुमिच्छन्तः । दृशेः सन्नन्ताल्लटः शानजादेशः । 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम् । 'आराद् दूरसमीपयोः' इत्यमरः । ईयुर्जग्मुः । इणो लिट् । 'दीर्घ इणः किति' इत्यभ्यासदीर्घः । ननु नित्यपरिचिते का दिदृक्षेत्यत्राह—अनेकश इति । अनेकशो बहुवारमित्यर्थः । 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' इति शस्प्रत्ययः । संस्तुतं परिचितमपि वस्तु । जनेनेति शेषः । 'संस्तवः स्यात्परिचयः' इत्यमरः । अनल्पाधिका प्रीतिः प्रेम कर्त्री, नवंनवम् । आभीक्ष्ण्येन नवं करोति । 'नित्यवीप्सयोः' इति द्विर्भावः । अहोशब्दः पुराणस्यापि नूतनत्वमित्याश्चर्ये । यथा परप्रेमास्पदं वस्तु नित्यदृष्टमप्यदृष्टचरमिव प्रतिक्षणं दिदृक्ष्यते, भगवानपि तथैवेति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३१ ॥

---

(१) ०मीयु० ।

**उपेयुषो वर्त्म निरन्तराभिरसौ निरुच्छ्वासमनीकिनीभिः ॥**
**रथस्य तस्यां पुरि दत्तचक्षुर्विद्वान् विदामास शनैर्न यातम् ॥३२॥**

**उपेयुष इति ॥** असौ विद्वान् हरी रथस्य यातं गमनं न विवेद नाबुद्ध, यतस्तस्यां पुरि दत्तचक्षुः निहितलोचनः। द्वारावतीगतहृदय इत्यर्थः। कीदृशस्य रथस्य शनैर्मन्दं वर्त्म मार्गमुपेयुषः गतवतः, किंभूतं मार्गमनीकिनीभिर्निरुच्छ्वासं पूर्णं सङ्कटं, किंभूताभिः निरन्तराभिः बहुलाभिः। सङ्कटे च जवेन यातुं न युज्यते। सङ्कटे हि शनैर्गम्यते, अतो यातं न युज्यते। सङ्कटे हि शनैर्गच्छन्वाहो याति न वेति न बुध्यते। रथस्य यातं शनैः किञ्चिदपि न विवेदेति योज्यम्। विद्वान् न विवेदेति विरोधाभासः। अविद्यमानमन्तरं विवरमासामिति निरन्तराः संहताः। निरुच्छ्वासं पूर्णम्। उच्छ्वासोऽपि यत्र न वर्तते इति, कृत्वा निर्गत उच्छ्वासोऽपि यत्र वर्तते इति वा निरुच्छ्वासम्। विद्वानिति विदेः शतुर्वसुः। विदामासेति तु उषविदजागृभ्यो वा आम्। यातमिति भावे क्तः ॥ ३२ ॥

उपेयुष इति ॥ विद्वानभिज्ञः अत एव तस्यां पुरि नगर्यां दत्तचक्षुर्निमृष्टदृष्टिरसौ हरिर्निरन्तराभिर्नीरन्ध्राभिरनीकिनीभिः सेनाभिर्निरुच्छ्वासमतिसङ्कटं वर्त्मोपेयुषः प्राप्तस्य रथस्य शनैर्यातं सम्बन्धानिबन्धनं मन्दगमनं न विदामास न विवेद। 'उषविदजागृभ्योऽन्यतरस्याम्' इत्याम्प्रत्ययः। अयासङ्गादसंवेदनं न तु तत्त्वाज्ञानादिति भावः। अयासङ्गस्य पदार्थत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ ३२ ॥

तस्यां पुरीत्युक्तमिति सा काऽसावित्याह—

**मध्येसमुद्रं ककुभः पिशङ्गीर्या कुर्वती काञ्चनवप्रभासा ॥**
**तुरङ्गकान्तामुखहव्यवाहज्वालेव भित्त्वा जलमुल्ललास ॥ ३३ ॥**

**मध्येसमुद्रमिति ॥** या मध्येसमुद्रं समुद्रमध्ये जलं भित्त्वा उल्ललास दिदीपे, तस्यां पुरीति योज्यम्। किंभूताऽसाविति तद्वर्णनम्—या पुरी काञ्चनवप्रभासा सुवर्णप्राकारदीप्त्या दिशः पिशङ्गीः पीताः कुर्वती कुर्वाणा उल्ललासेति सम्बन्धः। अतश्चोत्प्रेक्ष्यते—जलं भित्त्वा तुरङ्गकान्तामुखहव्यवाहज्वालेव तोयं विदार्य वडवानलज्वालेवोत्थिता। सापि दिशः स्वर्णरुचा पिशङ्गयति। तुरङ्गोऽश्वस्तत्कान्ता वडवा तत्तुल्यं मुखं यस्य हव्यवाहस्याग्नेः स वडवानलः। अलङ्कारविद्यामनिच्छयैवमुक्तिः। मध्येसमुद्रमित्येकम्। पारे मध्ये एदन्तं, षष्ठ्या समासः। पिशङ्गीरिति 'पिशङ्गादुपसंख्यान'मिति ङीप्। हूयते इति हव्यं हविस्तद्वहतीति हव्यवाहः ॥ ३३ ॥

अथैकत्रिंशच्छ्लोकैर्द्वारकां वर्णयति—

**मध्येसमुद्रमिति ॥** समुद्रस्य मध्ये मध्येसमुद्रम्। 'पारे मध्ये षष्ठ्या वा' इति विकल्पादव्ययीभावः। मध्यशब्दस्य तत्संनियोगादेकारान्तत्वम्। काञ्चनवप्रभासा हेमप्राकारप्रभया ककुभो दिशः पिशङ्गीः पिङ्गलवर्णाः। गौरादित्वान्ङीष्। कुर्वती या पूः जलं समुद्रोदकं भित्त्वा। उत्थितेति शेषः। तुरङ्गकान्ताया वडवाया मुखे हव्यं वहतीति हव्यवाहोऽग्निः। कर्मण्यण्प्रत्ययः। तस्य वाडवाग्नेर्ज्वालेवोल्लल्लास उद्बभासे। अत्र समुद्रान्तर्लीनायां वडवानलज्वालायां कदाचित्सम्भाव्यमानस्य मध्योल्लसनस्य पुरि दर्शनाभेदाध्यवसायेनास्या ज्वालात्वमुत्प्रेक्ष्यते। इवशब्दोऽयमुत्प्रेक्षाया एव व्यञ्जको नोपमायाः। ईदृग्ज्वालाया अप्रसिद्धत्वेनोपमानत्वायोगात्।

> 'मन्ये शङ्के ध्रुवं नूनं प्राय इत्येवमादिभिः।
> उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः' ॥

इत्याचार्यदण्डी ॥ ३३ ॥

अन्यच्च कीदृशी असौ इत्याह—

कृतास्पदा भूमिभृतां सहस्रैरुदन्वदम्भःपरिवीतमूर्तिः ॥
अनिर्विदा या विदधे विधात्रा पृथ्वी पृथिव्याः प्रतियातनेव ॥ ३४ ॥

कृतास्पदेति ॥ स्निग्धाञ्जनश्यामेति यावत्त्रिशतश्लोकैः सा एव वर्ण्यते । अनिर्विदा अनिर्विण्णेन खेदरहितेन प्रजासृजा या पृथ्वी विशाला चक्रे कृता । किंविशिष्टा भूमिभृतां सहस्रैः कृतास्पदा विहितावस्थितिः, तथा उदन्वदम्भःपरिवीतमूर्तिः समुद्रजलवेष्टिततनुः । किंभूता, उत्प्रेक्ष्यते–पृथिव्याः प्रतियातनेव प्रतिबिम्बमिव भूप्रतिबिम्बतुल्या । सापि महीधरैर्विहितप्रतिष्ठा समुद्रमेखला विस्तीर्णा च । निर्विद्यते उद्विज्यते इति निर्वित्, न निर्वित् अनिर्वित् तेन 'सत्सूद्विषे'ति क्विप् । विदधे इति कर्मणि लकारः । प्रतियातना प्रतिच्छन्दः ॥ ३४ ॥

कृतास्पदेति ॥ भूमिभृतां राज्ञां गिरीणां च सहस्रैः कृतास्पदा कृताधिष्ठाना । 'आस्पदं प्रतिष्ठायाम्' इति निपातः । उदकमस्यास्तीत्युदन्वानुदधिः । 'उदन्वानुदधिः सिन्धुः' इत्यमरः । 'उदन्वानुदधौ च' इति निपातनात्साधुः । तस्याम्भोभिः परिवीता परिवेष्टिता मूर्तिः स्वरूपं यस्याः सा, पृथ्वी पृथुः । 'वोतो गुणवचनात्' इति ङीप् । एवंभूता या पूः न निर्विद्यते न खिद्यते इत्यनिर्वित् । विदेर्ज्ञानार्थत्वान्निःपूर्वात् 'सत्सूद्विष-' इत्यादिना क्विप् । तेनानिर्विदा अखिन्नेन । अन्यथा शिल्पसौष्ठवासिद्धेरिति भावः । विधात्रा, प्रथत इति पृथिवी भूः । प्रथेरीणादिकः षिवन् । 'षिद्गौरादिभ्यश्च' इति ङीष् । तस्याः प्रतियातना प्रतिकृतिरिव विदधे विहिता । 'प्रतियातना प्रतिच्छाया । प्रतिकृतिः' इत्यमरः । भूप्रतिनिधित्वोत्प्रेक्षया पुरो वैचित्र्यविस्तारादिवस्तु व्यज्यते ॥ ३४ ॥

त्वष्टुः सदाभ्यासगृहीतशिल्पविज्ञानसम्पत्प्रसरस्य सीमा ॥
अदृश्यताऽऽदर्शतलाऽमलेषु छायेव या स्वर्जलधेर्जलेषु ॥ ३५ ॥

त्वष्टुरिति ॥ तथा आदर्शतलाऽमलेषु दर्पणपृष्ठसच्छायेषु उदधिजलेषु या पुरी अदृश्यत जलवेष्टिता जलनिधिनीरेष्वपि क्षिप्ता दृष्टा । समुद्रमध्ये या तिष्ठतीत्यर्थः । अतश्चोत्प्रेक्ष्यते–स्वः स्वर्गस्य छायेव प्रतिबिम्बमिव । या त्वष्टुर्विश्वकर्मणः सम्बन्धिना सदाऽभ्यासेन गृहीतस्य शिल्पविज्ञानसम्पत्प्रसरस्य क्रियाकौशलातिप्रयोगस्य सीमा मर्यादा । ततोऽन्यन्न किञ्चिद्भूतले विधात्रा सुन्दरं निर्मितमित्यर्थः । यतश्च जले एवंविधं वस्तु प्रतिबिम्बीभवत्यतो ज्ञायते सुरपुरमेवात्र प्रतिच्छन्दितमिति क्रियाविशेषणम् । प्रसरः प्रवृत्तिः कार्येषु योजिता । सीमेति 'मन' इति ङीबभावः । अदृश्यत भावे लकारः । स्वःशब्दोऽव्ययम् ॥ ३९ ॥

त्वष्टुरिति ॥ त्वष्टुर्विश्वकर्मणः सदाभ्यासेन गृहीतो लब्धो यः शिल्पविज्ञानसम्पदः प्रसरः प्रकर्षस्तस्य सीमावधिः । अप्रतिमेति यावत् । या पूरादर्शतलामलेषु दर्पणपृष्ठस्वच्छेषु । 'दर्पणे मुकुरादर्शौ' इत्यमरः । जलधेर्जलेषु स्वः स्वर्गस्य । 'स्वरव्ययं स्वर्गनाक—' इत्यमरः । छाया प्रतिबिम्बमिवादृश्यतेत्युत्प्रेक्षा । 'छाया त्वनातपे कान्तौ प्रतिबिम्बार्कजाययोः' इति वैजयन्ती ॥ ३९ ॥

रथाङ्गभर्त्रेऽभिनवं वराय यस्याः पितेव प्रतिपादितायाः ॥
प्रेम्णोपकण्ठं मुहुरङ्कभाजो रत्नावलीरम्बुधिराबबन्ध ॥ ३६ ॥

रथाङ्गेति ॥ अम्बुधिर्यस्याः पुर्याः उपकण्ठं समीपे प्रेम्णा स्नेहेन मुहुर्वारंवारं रत्नावलीर्मणिपङ्क्तीराबबन्ध व्यरचयत, किंभूतायाः अङ्कभाजः मध्यवर्तिन्याः । अत एव एकत्र

वासात् प्रेम रथाङ्गभर्त्रे चक्रपाणये हरये वराय सर्वश्रेष्ठाय अभिनवं तत्कालं यथा भवति प्रतिपादितायाः दत्तायाः। क इव पितेव। यथा वराय दत्तायाः कन्यायाः पिता स्नेहेन रत्नावलीरसकृदुपकण्ठं कण्ठे योजयति। उपकण्ठं समीपे कण्ठे च ॥ ३६ ॥

रथाङ्गेति ॥ अम्बुधिः पितेव वराय श्रेष्ठाय जामात्रे च। 'वरो जामातरि श्रेष्ठे' इति विश्वः। रथाङ्गभर्त्रे चक्रधराय हरयेऽभिनवं यथा तथा प्रतिपादितायाः, अङ्कः समीपम् उत्सङ्गश्च तद्भाजः। 'अङ्कः समीप उत्सङ्गे चिह्ने स्थानापराधयोः' इति केशवः। यस्याः पुर उपकण्ठमन्तिके। अत्यन्तसंयोगे द्वितीया। अन्यत्र कण्ठे। विभक्त्यर्थेऽव्ययीभावः। मुहुः प्रेम्णा रत्नावलीराबबन्ध आसमन्ताद् बबन्ध। श्लेषानुप्राणितेयमुपमेति सङ्करः ॥ ३६ ॥

**यस्याश्चलद्वारिधिवारिवीचिच्छटोच्छलच्छङ्खकुलाकुलेन ॥**
**वप्रेण पर्यन्तचरोडुचक्रः सुमेरुवप्रोऽन्वहमन्वकारि ॥ ३७ ॥**

**यस्या इति** ॥ यस्या वप्रेण प्राकारेण सुमेरुवप्रो मेरुतटोऽन्वहमनुदिनमन्वकारि अनुकृतः। कीदृशेन स्खलत् क्षुभ्यत् यद्वारिधिवारि समुद्रार्णः तस्य या वीचिच्छटाः कल्लोलविच्छित्तयः ताभ्योऽन्वहमहर्दिवम् उच्छलन्निर्यत् शङ्खकुलं कम्बुपूगः तेन आकुलं व्याप्तम्, तेनेत्यर्थः। कीदृशो वप्रः पर्यन्तचरोडुचक्रः उच्चत्वात्पर्यन्तचरं निकटवर्ति उडुचक्रं तारकानिकरो यस्य सः तथोक्तः। शङ्खानामुडून्युपमानम्। अहनि अहनि अन्वहम् इत्यव्ययीभावः, 'अनश्च'ेति टच् समासान्तः। अन्वकारीति कर्मणि लुङ् ॥ ३७ ॥

**यस्या इति** ॥ चलन्तीनां वारिधिवारिवीचीनां छटासु परम्परासूच्छलद्भिरुत्पतद्भिः शङ्खानां कुलैराकुलेन सङ्कीर्णेन यस्याः पुरो वप्रेण प्राकारेण पर्यन्ते चरतीति तत्तादृशमुडुचक्रं नक्षत्रमण्डलं यस्य सः सुमेरोर्वप्रः सानुः। 'सानुप्राकारयोर्वप्रम्' इत्युभयत्रापि सज्जनः। अहन्यहनीत्यन्वहम्। 'अव्ययं विभक्ति—' इत्यादिना यथार्थेऽव्ययीभावः। 'अनश्च' 'नपुंसकादन्यतरस्याम्' इति समासान्तोऽच्। अन्वकार्यनुकृतः। तत्साम्यं प्रापित इत्यर्थः। मेरूपमानाद्वप्रस्य तत्तुल्यमौन्नत्यं व्यज्यते ॥ ३७ ॥

**वणिक्पथे पूगकृतानि यत्र भ्रमागतैरम्बुभिरम्बुराशिः ॥**
**लोलैरलोलद्युतिभाञ्जि मुष्णन् रत्नानि रत्नाकरतामवाप ॥ ३८ ॥**

**वणिक्पथे इति** ॥ यत्र यस्यां पुरि अम्बुराशिः समुद्रः रत्नानि मुष्णन् मणीनपहरन् रत्नाकरतामवाप मणिनिलयत्वं लेभे न तु स्वभावत इत्युत्प्रेक्षा विनापि इवेन युज्यते। तदर्थस्तु सामर्थ्याद् गम्यते। किं भूतानि रत्नानि वणिक्पथे हट्टे पूगकृतानि राशीकृतानि, तथा अलोलद्युतिभाञ्जि अलोलां स्थायिनीं द्युतिं प्रकाशं भजन्ते सेवन्ते इत्यलोलद्युतिभाञ्जि। कैर्मुष्णन् अम्बुभिः, कीदृशैः भ्रमागतैः जलनालकप्रविष्टैः, तथा लोलैः प्रसारिभिः। यः किल लोलश्चपलः स मुष्णाति चोरयति। वणिजां पन्थाः वणिक्पथः। ऋक्पूरब्धूः पथामानक्षे। अपूगाः पूगाः कृताः 'श्रेण्यादयः कृतादिभि'रिति समासः। रत्नाकरतां मणिनिलयत्वं लेभे, (तथा) विश्वविभावितः। आकरः स्थानम् ॥ ३८ ॥

**वणिक्पथे इति** ॥ यत्र यस्यां पुरि वणिजां पथि वणिक्पथे आपणे अपूगाः पूगाः सम्पद्यमानानि कृतानि पूगकृतानि पुञ्जीकृतानि। 'श्रेण्यादयः कृतादिभिः' इति समासः। 'श्रेण्यादिषु च्व्यर्थवचन'मिति च्व्यर्थता। अलोलद्युतिभाञ्जि स्थिरप्रभावन्ति रत्नानि लोलैश्चलैः। अत एव भ्रमागतैर्जलनिर्गममार्गादागतैः 'भ्रमाश्च जलनिर्गमाः' इत्यमरः। अम्बुभिर्मुष्णन्नपहरन्नम्बुराशिरर्णवः। जलमात्रसारोऽपीति भावः। रत्नाकरतामवाप प्राप। न तु प्रागिति भावः। अम्बुराशेः प्राक् रत्नसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः। तथा च पुर्याः समुद्रातिशायिनी रत्नसमृद्धिर्वस्तु व्यज्यते ॥ ३८ ॥

**अम्भश्च्युतः कोमलरत्नराशीनपांनिधिः फेनपिनद्धभासः ॥**
**यत्रातपे दातुमिवोपतल्पं(१) विसारयामास तरङ्गहस्तैः ॥ ३९ ॥**

**अम्भश्च्युत इति** ॥ यत्र यस्यामपांनिधिः समुद्रः तरङ्गहस्तैः कल्लोलकरैरुपतल्पमट्टसमीपे कोमलरत्नराशीन् उत्तमरत्नपूगान् विसारयामास विचिक्षेप । उत्प्रेक्ष्यते—आतपे दातुं शोषयितुमिव निरास्त । यतोऽम्भश्च्युतः सलिलस्राविणः, तथा फेनपिनद्धभासः डिण्डीराच्छादितदीप्तीन् । क्लिन्नं हि वस्तु अवश्यमातपे स्थाप्यते ॥ ३९ ॥

**अम्भश्च्युत इति** ॥ यत्र पुरि अपांनिधिः समुद्रः । अम्भश्च्योतन्ति क्षरन्तीत्यम्भश्च्युतो जलस्राविणः अत एव फेनैः पिनद्धभासः पिहितकान्तीन् । अपिपूर्वान्नह्यतेः कर्मणि क्तः, 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यपेरकारलोपः। कोमलानुत्कृष्टान् रत्नराशीनातपे दातुं शोषणार्थं निधातुमिवेति फलोत्प्रेक्षा । तल्पेष्वट्टेषु अधितल्पम् । 'तल्पं शय्याट्टदारेषु' इत्यमरः । विभक्त्यर्थेऽव्ययीभावः । तरङ्गैरेव हस्तैर्विस्तारयामास प्रसारितवान् । अत्रातपदानस्य तरङ्गहस्तसाध्यत्वेनोत्प्रेक्षारूपकयोः सङ्करः ॥ ३९ ॥

**यत्साल(२)मुत्तुङ्गतया विजेतुं दूरादुदस्थीयत सागरस्य ॥**
**महोर्मिभिर्व्याहतवाञ्छितार्थैर्व्रीडादिवाभ्याशगतैर्विलिल्ये ॥ ४० ॥**

**यत्सालमिति** ॥ सागरस्य अब्धेः महोर्मिभिः कल्लोलैर्दूरात् उदस्थीयत उत्थितं, किं कर्तुम् उत्तुङ्गतया यत्सालं विजेतुम् उच्चत्वेन यस्याः प्राकारं परिभवितुं लघूकर्तुमिव उत्प्रेक्षा । अनन्तरं तदभ्याशगतैः सालोपशयस्थैः समीपस्थैर्विलिल्ये विलीनम् । नष्टमित्यर्थः । उभयत्रापि भावे लकारः । उत्प्रेक्ष्यते—व्रीडादिव । यतो व्याहतवाञ्छितार्थैः असम्पन्नमनोरथैरिव व्रीडया विलिल्ये । यः किल केनचिद् गुणेन जिगीषितं न जयति सोऽवश्यमेव ह्रिया अदर्शनं याति । व्रीडाशब्दः स्त्रीपुंसोः ॥ ४० ॥

**यच्छालमिति** ॥ सागरस्य महोर्मिभिः कर्तृभिर्यच्छालं यस्याः प्राकारम् । 'प्राकारो वरणः शालः' इत्यमरः । उत्तुङ्गतया औन्नत्यगुणेन । जेतुमिवेत्यर्थः । फलोत्प्रेक्षेयं व्यञ्जकाप्रयोगाद्गम्या । दूरादुदस्थीयतोत्थितम् । भावे लङ् । अभ्याशगतैः समीपगतैः । 'समीपे निकटाभ्याशसंनिकृष्टसनीडवत्' इत्यमरः । व्याहतो वाञ्छितार्थः शालविजयरूपो येषां तैः । विजयाक्षमैरित्यर्थः । अत एव व्रीडादिवेति हेतूत्प्रेक्षा । ऊर्मिभिर्विलिल्ये विलीनम् । लीयतेर्भावे लिट् । अत्र शक्तस्याप्यविजिगीषोर्व्रीडानुदयात्सापेक्षत्वेनोत्प्रेक्षयोः सङ्करः ॥ ४० ॥

**कुतूहलेनेव जवादुपेतः(३) प्राकारभित्त्या सहसा निषिद्धः ॥**
**रसन्नरोदीद्भृशमम्बुवर्षव्याजेन यस्या बहिरम्बुवाहः ॥ ४१ ॥**

**कुतूहलेनेवेति** ॥ अम्बुवाहो जलधरो यस्या बहिः रसन् गर्जन् अम्बुवर्षव्याजेन वारिधारावृष्टिच्छलेन भृशमत्यर्थमरोदीत् अश्रु तत्याजेत्युत्प्रेक्षा । किमित्यरोदीदित्याह—कौतुकेनेव वेगादागतः सन् यतः सालेन कुड्येन सहसा झटिति बलान्निषिद्धः निवारितः। यः किल कौतुकादागतः प्रवेशान्निषिध्यते सोऽवश्यमेव परिभवात्सशब्दं रोदिति । जवादुपेत्यारोदीदिति पौर्वकाल्यमत्र । अरोदीत् इति लङ् 'रुदश्च पञ्चभ्यः' इतीडागमः ॥ ४१ ॥

**कुतूहलेनेवेति** । अम्बु वहतीत्यम्बुवाहो मेघः । कर्मण्यण् । कुतूहलेनान्तःप्रवेशकौतुकेनेवेति हेतूत्प्रेक्षा । जवादुपेत्य यस्याः प्राकारभित्त्या सहसा निषिद्धो निवारितः अत एव बहिरेव रसन्गर्जन् । दुःखात् क्रन्दंश्चेति श्लेषः । अम्बुवर्षव्याजेन भृशमरोदीदश्रूणि मुक्तवान् । रुदिर् अश्रुविमोचने लङ् 'रुदश्च पञ्चभ्यः' इतीडागमः । अत्राम्बुवर्षव्याजेनोत्पादकस्याक्रन्दश्लेषोत्प्रेक्षासापेक्षत्वात्सङ्करः ॥ ४१ ॥

---

(१) ०मिवाधितल्पं विस्तारयामास । (२) यच्छाल० । (३) ०दुपेत्य ।

**यदङ्गनारूपसरूपतायाः कञ्चिद् गुणं भेदकमिच्छतीभिः ॥**
**आराधितोऽद्धा मनुरप्सरोभिश्चक्रे प्रजाः स्वाः सनिमेषचिह्नाः ॥४२॥**

**यदङ्गनेति ॥** मानव्यः प्रजाः स्वभावतः सनिमेषास्तत्र कविर्निमित्तान्तरारोपरूपामुत्प्रेक्षामकरोत्—अद्धा निश्चितम्, अप्सरोभिराराधितो मनुः प्रजापतिः स्वाः प्रजाः आत्मीयाः मानुषीलक्षणाः सनिमेषचिह्नाः सङ्कोचविकासोपलक्षिताः चक्रे व्यधत्त । नन्वेवमेव किमर्थं स्वर्गस्त्रीभिस्तोषितः इत्याह—यदङ्गनेत्यादि । यस्यां द्वारावत्यां वसन्त्यो या अङ्गनास्तासां यद्रूपं लावण्यातिशयो वपुर्वा तेन यत्सारूप्यं सादृश्यं ततः कञ्चिद्भेदकं विशेषकारिणं गुणं कामयमानाभिः अप्सरोभिराराधितो मनुरन्तरं चकार । एतेन पुरस्त्रीभ्योऽप्सरसामनिमेषत्वं विशेषो, न त्वन्यः इति रूपातिशयस्तासामुक्तः । कटाक्षेक्षणादियोगाच्च भङ्ग्या तासामेवाप्सरोभ्यो विशेषो ध्वनितः । निमेषणं निमेषः स्थगनं तदेव चिन्हं, सह तेन वर्तन्ते इति सनिमेषचिन्हाः ॥ ४२ ॥

**यदङ्गनेति** । यस्यां पुर्यामङ्गनानां रूपं सौन्दर्यमाकारो वा । 'रूपं स्वभावे सौन्दर्य आकारश्लेषयोरपि' इति विश्वः । तस्य सरूपतायाः सारूप्याद्भेदकं व्यावर्तकं कञ्चिद् गुणं धर्ममिच्छतीभिरपेक्षमाणाभिः । 'आच्छीनद्योर्नुम्' इति विकल्पान्नुमभावः । अप्सरोभिराराधितः प्रार्थितो मनुर्मानुषसृष्टिकर्ता स्वाः स्वकीयाः प्रजाः, निमेषः पक्ष्मपात एव चिह्नं व्यावर्तकं तेन सह वर्तन्त इति सनिमेषचिह्नाः । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । चक्रे, अद्धा तत्त्वमित्युत्प्रेक्षा । 'तत्त्वे त्वद्धाऽञ्जसा द्वयोः' इत्यमरः । अत्र स्वाभाविकानिमेषस्याप्सरसः प्रार्थनाहेतुकत्वोत्प्रेक्षया द्वारकाङ्गनानां निमेषमात्रभिन्नममानुषं सौन्दर्यं वस्तु व्यज्यते ॥ ४२ ॥

**स्फुरत्तुषारांशुमरीचिजालैर्विनिह्नुताः स्फाटिकसौधपङ्क्तीः ॥**
**आरुह्य नार्यः क्षणदासु यस्यां नभोगता देव्य इव व्यराजन् ॥ ४३ ॥**

**स्फुरदिति ॥** यस्यां नार्यः स्त्रियः क्षणदासु रात्रिषु नभोगता देव्य इव स्वःस्थदेवता इव व्यराजन् बभुः, उत्प्रेक्षा । किं कृत्वा स्फाटिकसौधपङ्क्तीरारुह्य स्फटिकोपलरचितप्रासादमाला अधिरुह्य । यतो हर्म्यावलयः स्फुरत्तुषारांशुमरीचिजालैः उल्लसच्छिशिरकिरणकरनिकरैर्विनिह्नुता आच्छादिताः सारूप्यादलक्ष्यतां नीताः । श्वेतत्वं प्रापिता इत्यर्थः । इति तद्गुणोऽलङ्कारः । अतश्च हर्म्यादि न दृश्यते । ताश्च सञ्चरन्त्यो लक्ष्यन्ते । अतो ज्ञायन्ते आकाशस्था देवता इति ॥ ४३ ॥

**स्फुरदिति ॥** यस्यां पुरि क्षणदासु रात्रिषु नार्यः स्फुरद्भिस्तुषारांशोश्चन्द्रस्य मरीचिजालैश्चन्द्रिकाभिः विनिह्नुता अपह्नुताः । तदेकरूपतापत्तेरगृह्यमाणा इत्यर्थः । अत एव सामान्यालङ्कारः । 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् । स्फाटिकानां स्फटिकविकाराणां सौधानां पङ्क्तीरारुह्य नभोगता देव्यो देवाङ्गना इव । देवशब्दस्य पचादिषु देवडिति पाठात् 'टिड्ढाणञ्—' इत्यादिना ङीप् । व्यराजन् । सौधानामग्रहणादभ्रङ्कषत्वात् तत्र लक्ष्यमाणाः स्त्रियः खेचर्य इव रेजुरित्यर्थः । अत्र नभोगतत्वोत्प्रेक्षायाः पूर्वोक्तसामान्यसापेक्षत्वात्सङ्करः ॥ ४३ ॥

**कान्तेन्दुकान्तोपलकुट्टिमेषु प्रतिक्षपं हर्म्यतलेषु यत्र ॥**
**उच्चैरधःपातिपयोमुचोऽपि समूहमूहुः पयसां प्रणाल्यः ॥ ४४ ॥**

**कान्तेति ॥** यत्र प्रणाल्यो द्रोण्यः प्रतिक्षपमनुनिशं हर्म्यतलेषु सौधपृष्ठेषु पयसां समूहं प्रवाहं जलराशिमूहुः बभ्रुः । कदाचिन्मेघपयः स्यादित्याह—कीदृश्यः प्रणाल्यः अधःपातिपयोमुचोऽपि अधःप्रसरज्जलधराः अधःप्रसरज्जलधरा अपि कुत इत्याह—किंभूतेषु हर्म्येषु

उच्चैरुन्नतेषु । कथं तर्हि क्षरन्तीत्याह—पुनः किंभूतेषु कान्तेन्दुकान्तोपलकुट्टिमेषु कान्तानां सच्छायानामिन्दुकान्तोपलानां चन्द्रकान्तमणीनां कुट्टिमेषु कुट्टनेन निर्वृत्तेषु हर्म्यतलेषु रम्यचन्द्रकान्तमणिबद्धभूमिषु। तत्र हि भूमिः इन्दुकान्तमणिनिर्मिता । रात्रौ चन्द्रकरव्यतिषङ्गात्ते जलं स्यन्दन्ते । अतश्च तत् प्रणाल्यो बिभ्रति । आर्थश्च शशिकरव्यतिकरः क्षपाग्रहणेनाक्षिप्तः, अन्यथा न किञ्चित् प्रतिस्फुटमित्यनेनोक्तं स्यात् । ऊहुरिति वहेर्लिट् ॥४४॥

कान्तेति ॥ यत्र पुरि क्षपासु रात्रिषु प्रतिक्षपम् । विभक्त्यर्थेऽव्ययीभावः । कान्तानि रम्याणीन्दुकान्तोपलानां चन्द्रकान्तमणीनां कुट्टिमानि बद्धभूमयो येषु तेषु । 'कुट्टिमं बद्धभूमिः स्यात्' इति हलायुधः । हर्म्यतलेषूच्चैरुन्नताः प्रणाल्यो जलमार्गाः । 'द्वयोः प्रणाली पयसः पदव्याम्' इत्यमरः । अधःपातिनोऽधश्चराः पयोमुचो मेघा यासां ताः । अधःकृतमेघमण्डलत्वात् अज्ञातवृष्टिपाता अपीत्यर्थः । विरोधालङ्कारः । पयसां समूहं पयःपूरमूहुर्वहन्ति स्म । चन्द्रकान्तनिस्यन्दैरिति भावः । वहेर्लिट् । 'वचिस्वपि–' इत्यादिना सम्प्रसारणम् । अत्र सौधानां प्रणालीनां च तादृगौन्नत्यपयःपूरासम्बन्धेऽपि तत्सम्बन्धोक्त्यातिशयोक्तिः ॥

**रतौ ह्रिया यत्र निशम्य (१)दीपाञ्जालागताभ्योऽधिगृहं गृहिण्यः ॥**
**बिभ्युर्बिडालेक्षणभीषणाभ्यो वैदूर्यकुड्येषु शशिद्युतिभ्यः ॥ ४५ ॥**

रताविति ॥ यत्र नगर्यो गृहिण्यः कामिन्योऽधिगृहं गृहेषु वैदूर्यकुड्येषु शशिद्युतिभ्यो बिभ्युः चन्द्रकान्तिभ्यः भीताः, कथंभूताभ्यः जालागताभ्यः गवाक्षविवरं प्रविष्टाभ्यः । यानि वैदूर्यकुड्यानि वैदूर्यभित्तयस्तत्र या गवाक्षप्रविष्टाश्चन्द्रभासस्ताभ्यो बिभयाम्बभूवुः भयं चक्रुः । न तु ज्योत्स्नाभ्यो भयम् । कीदृशीभ्यः इत्याह—बिडालेक्षणभीषणाभ्यः इति । वैदूर्यं शितिवर्णं तत्सम्पर्काच्च ज्योत्स्नास्तदाकारत्वमागताः, अतश्च मुग्धत्वात्ता जानन्ते मार्जारनेत्राण्येतानि । अथ किं प्रकाश्यं तत्र नास्ति येन शङ्काकुलास्ता इत्याह—किं कृत्वा दीपान्निशम्यापि बिभ्युः । किमिति प्रद्योतिकाः शमिता इत्याह—कया ह्रिया । लज्जाया अपि किं कारणमित्याह—क्व रतौ । सुरतसमये हि रमणैः वसनापहाराल्लज्जिताः सत्यस्ताः दीपान् शमयन्ति । अतश्चालोकाभावान्न पदार्थानां सम्यक् ज्ञानम् । प्रशमय्येत्यत्रार्थे निशम्येति नोपपद्यते इति शब्दार्थविदः । गृहेष्वधि अधिगृहमित्यव्ययीभावः, तृतीयासप्तम्योर्बहुलम् । बिभ्युरित्याम् विभाषितः । भीषण इति भियः षुक् । शशिद्युतिभ्य इति भीत्रार्थानां भयहेतुः ॥ ४५ ॥

रताविति ॥ यत्र पुरि गृहेष्वधिगृहम् । विभक्त्यर्थेऽव्ययीभावः । गृहिण्यः कुलाङ्गनाः अत एव रतौ रतिकाले ह्रिया दीपान्निशाम्य निर्वाप्य । शमेर्मित्वाद्ध्रस्वादशाभावश्चिन्त्यः । जालागताभ्यो गवाक्षमार्गप्रविष्टाभ्यः । 'जालं गवाक्ष आनायः' इति विश्वः । विदूरात्प्रभवन्तीति वैदूर्याणि बालवायजानि मणयः 'वैदूर्यं बालवायजम्' इति विश्वः । 'विदूराञ्ञ्यः' इति ञ्यप्रत्ययः । अत्र विदूरशब्दो बालवायस्यादेशः पर्यायो वा तत्रोपचरितो वा । तेन बालवायाद्रिरसौ प्रभवति न विदूरान्नगरात् । तत्र तु संस्क्रियत इत्याक्षेपः प्रत्युक्तः । यदुक्तम् —

> 'बालवायो विदूरं च प्रकृत्यन्तरमेव वा ।
> न वै तत्रेति चेद् ब्रूयाज्जित्वरीवदुपाचरेत्' ॥

इति । तेषां कुड्येषु भित्तिषु । संक्रान्ताभ्य इति शेषः । अत एव तच्छायापत्त्या पैङ्गल्याद्बिडालेक्षणवद्भीषयन्त इति भीषणाभ्यो भयङ्कराभ्यः । नन्द्यादित्वात्कर्तरि ल्युप्रत्यये टाप् । शशिद्युतिभ्यो बिभ्युर्भीताः ।

---

(१) निशाम्य ।

मौग्ध्यादिति भावः । बिभेतेर्लिट् । अत्र लज्जावारणाय दीपनिर्वापणे न केवलं तदसिद्धिः प्रत्युत भयं चोत्पन्नमित्यनर्थोत्पत्तिरूपो विषमभेदः ।

'विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत् ।
विरूपघटना या स्याद्विषमालङ्कृतिर्मता' ॥

इति लक्षणात् ॥ ४५ ॥

**यस्यामतिश्लक्ष्णतया गृहेषु विधातुमालेख्यमशक्नुवन्त ॥**
**चक्रुर्युवानः प्रतिबिम्बिताङ्गाः सजीवचित्रा इव रत्नभित्तीः ॥ ४६ ॥**

**यस्यामिति॥ यस्यां पुरि युवानस्तरुणा गृहेषु वेश्मसु रत्नभित्तीः सजीवचित्रा इव चक्रुः सप्राणालेख्या इव व्यधुः । किंभूता रत्नभित्तीः प्रतिबिम्बिताङ्गाः प्रतिबिम्बितमङ्गं शरीरं यासां यासु वा प्रतिफलितशरीराः । अथ किं मणिकुड्येषु रागो न कृतो येन प्रतिफलितमङ्गमित्याह—किं कुर्वन्तः आलेख्यं विधातुमशक्नुवन्तः चित्रं कर्तुमसमर्थाः,कया अतिश्लक्ष्णतया अतिमसृणतया। रत्नभित्तीनां श्लक्ष्णतया तूलिका पदं न बध्नाति । अतश्च आलेख्यं कर्तुं न शक्यते । ते च प्रतिबिम्बिताः, अतो ज्ञायते सजीवं चित्रमाभिः कृतमिति ॥४६॥**

यस्यामिति ॥ यस्यां पुरि गृहेष्वतिश्लक्ष्णतया रत्नभित्तीनामतिस्निग्धतया आलेख्यं चित्रं विधातुं निर्मातुमशक्नुवन्तो युवानः प्रतिबिम्बिताङ्गाः स्वयं तासु संक्रान्तमूर्तयः सन्तो रत्नभित्तीः सजीवचित्राः सचेतनचित्रवतीरिव चक्रुरित्युत्प्रेक्षा ॥ ४६ ॥

**सावर्ण्यभाजः प्रतिमागताया लक्ष्यैः स्मरापाण्डुतया तरुण्याः(१) ॥**
**यस्यां कपोलैः कलधौतधामस्तम्भेषु भेजे मणिदर्पणश्रीः ॥ ४७ ॥**

**सावर्ण्येति ॥ यस्यां कलधौतधामस्तम्भेषु सुवर्णगृहस्थूणेषु तरुण्याः कपोलैर्मणिदर्पणश्रीर्भेजे स्फटिकादर्शशोभा प्राप्ता । कीदृश्यास्तरुण्याः प्रतिमागतायाः प्रतिबिम्बितायाः, तथा सावर्ण्यभाजः कलधौतेनैव सदृशवर्णायाः । गौर्या इत्यर्थः । कथं तर्हि तत्तुल्यवर्णाः प्रतिफलिता इत्याह—स्मरापाण्डुतया लक्ष्यैः कन्दर्पस्य आसमन्तात्पाण्डुरत्वेन दृश्यैरीक्षितुं शक्यैः । यद्यपि ता गौर्यस्तथापि कपोलाः कामवशात् पाण्डुराः, अतो वैवर्ण्यात् प्रतिफलिताः सन्तः 'रत्नादर्शाः काञ्चनस्तम्भेष्वेते कृता' इति ज्ञायन्त इत्यर्थः । स्तम्भेषु हि सर्वत्रमणिमुकुराः क्रियन्ते । केवलो मणिशब्दः प्रायशः स्फटिके वर्तते । कपोलैरिति जातौ बहुवचनम् । भेजे इति कर्मणि लकारः, 'तफले'त्यादिना एत्वाभ्यासलोपौ ॥ ४७ ॥**

सावर्ण्येति ॥ यस्यां पुरि कलधौतधामस्तम्भेषु हेमागारस्तम्भेषु । 'कलधौतं रौप्यहेम्नोः' इति विश्वः । प्रतिमागतानां प्रतिबिम्बगतानां सावर्ण्यभाजाम् । तत्सावर्ण्यादगृहीतभेदानामित्यर्थः । अत एव सामान्यालङ्कारः । 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् । अङ्गनानां स्मरापाण्डुतया लक्ष्यैः । विभिन्नवर्णत्वाद्भेदेन गृह्यमाणैरित्यर्थः। कपोलैर्मणिदर्पणानां स्फटिकमुकुराणां श्रीरिव श्रीर्भेजे प्राप्ता इति निदर्शना । सा चोक्तसामान्यप्रसादलब्धेति तेनास्याः सङ्करः ॥ ४७ ॥

**शुकाङ्गनीलोपलनिर्मितानां लिप्तेषु भासा गृहदेहलीनाम् ॥**
**यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमयगोमुखानि ॥ ४८ ॥**

**शुकाङ्गेति ॥ यस्यां पुरि मुग्धाङ्गना मुग्धनार्योऽलिन्देषु प्रघाणेषु गोमयमुखानि**

---

( १ ) सावर्ण्यभाजां प्रतिमागतानां लक्ष्यैः स्मरापाण्डुतयाऽङ्गनानाम् ।

गोपुरीषानुलेपनानि न विदधुरेव । यतो गृहदेहलीनां भासा लिप्तेषु छुप्तेषु । देहली गृहस्थानविशेषः, यामतिक्रम्य गृहे प्रविश्यते। यस्या लोके 'न्यास' इति प्रसिद्धिः। अलिन्दस्तु गृहाद्बहिः । गोमुखमनुलेपनम् । कीदृशानां देहलीनां शुकाङ्गमिव ये नीला अश्मानो मरकताख्यास्तैर्निर्मितानां रचितानाम् । तत्र हि देहल्यो मरकतमय्यस्तासां नीलया रुचा अलिन्दाः छुरिताः । अतश्चाप्रौढा नार्यो जानते कृतमेवात्र गोमयेन लेपनमन्यथा कुतो नीलमिति श्लोकार्थः ॥ ४८ ॥

**शुकाङ्गेति** ॥ यस्यां पुरि मुग्धाङ्गनाः शुकाङ्गवन्नीलोपला नीलमणयः । मरकतानीत्यर्थः । 'उपलः प्रस्तरे मणौ' इति **विश्वः** । तैर्निर्मितानां गृहाणां देहल्यो गृहद्वारशाखाधारदारूणि । 'गृहावग्रहणी देहली' **इत्यमरः** । तासां भासा लिप्तेष्वालिन्देषु द्वारबहिर्भागेषु । 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' **इत्यमरः** । गोः पुरीषं गोमयम् । 'गोश्च पुरीषे' इति मयट् । तस्य गोमुखानि विलेपनानि । 'गोमुखं कुटिलाकारे वाद्यभाण्डे विलेपने' इति **विश्वः** । न चक्रुरेव । मरकतप्रभायां विलेपनभ्रान्त्येति भावः । अत एव भ्रान्तिमदलङ्कारः । 'कविसंमतसादृश्याद्वस्त्वन्तरमतिर्हि यत् । स भ्रान्तिमान्' **इत्यलङ्कारसर्वस्वकारलक्षणात्** ४८

**गोपानसीषु क्षणमास्थितानामालम्बिभिश्चन्द्रकिणां कलापैः ॥**
**हरिन्मणिश्यामतृणाभिरामैर्गृहाणि नीध्रैरिव यत्र रेजुः ॥ ४९ ॥**

**गोपानसीष्विति ॥ यत्र पुरि आलम्बिभिर्दीर्घैः चन्द्रकिणां बर्हिणां कलापैर्बर्हैर्वेश्मानि रेजुः गृहाणि बभुः, नीध्रैरिवाच्छादनैर्यथा । कीदृशानां मयूराणां गोपानसीषु चन्द्रशालिकासु मनाक् स्थितानां, कलापैः कीदृग्भिः हरिन्मणिवत् मरकतवत् श्यामानि यानि तृणानि तद्वदभिरामैः मनोहरैः नीलैः इन्द्रनीलतृणरमणीयैः । तीव्राण्यपि नीलतृणैः रम्याणि भवन्ति । वलभीं छादनं दारु वक्रं गोपानसीं विदुः । असितानामिति कर्तरि 'गत्यर्थाकर्मकश्लिषशीङ्स्थासे'ति क्तः । गृहशब्दो नार्यादिः ॥ ४९ ॥**

**गोपानसीष्विति** ॥ यत्र पुरि गृहाणि गोपानसीषु वलभीषु । छादनाधारेषु वंशपञ्जरेष्वित्यर्थः । अत एव 'गोपानसी तु वलभी छादने वक्रदारुणि' इत्यत्र पटलाधारवंशपञ्जरे इत्याह **स्वामी** । क्षणमीषत्कालम् । अत्यन्तसंयोगे द्वितीया । आस्थितानामासीनानां, चन्द्रकाः । 'समौ चन्द्रकमेचकौ' **इत्यमरः** । तद्वतां चन्द्रकिणां मयूराणामालम्बिभिर्लम्बमानैः कलापैर्बर्हैः । 'कलापो भूषणे बर्हे' **इत्यमरः** । हरिन्मणयो मरकतानि । 'गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः' **इत्यमरः** । तद्वच्छ्यामैस्तृणैरभिरामाणि । हरिततृणमयानीत्यर्थः । तैर्नीध्रैः पटलप्रान्तैरिव रेजुः । 'वलीकनीध्रे पटलप्रान्तेऽथ पटलं छदिः' **इत्यमरः** । छादनपर्यायौ पटलच्छदी । छद्यश्चलवाचिनी वलीकनीध्रे । छदेराधारो वंशपञ्जरो गोपानसीति विवेकः । अत एव हरितत्वालम्बनादिगुणक्रियानिमित्तत्वान्नीध्रैरिवेति जातस्वरूपोत्प्रेक्षा ॥ ४९ ॥

**बृहत्तुलैरप्यतुलैर्वितानमालाऽवनद्धै(१)रपि चाऽवितानैः ॥**
**रेजे विचित्रैरपि या सचित्रैर्गृहैर्विशालैरपि भूरिशालैः ॥ ५० ॥**

**बृहदिति ॥ या पूः गृहैर्वेश्मभिः रेजेऽभासत । कीदृशैः बृहत्तुलैर्महास्तम्भैर्महापट्टैर्वा, तथा अतुलैरसदृशैः सर्वोत्कृष्टैः । विरुद्धं चैतत्, यत्र हि बृहत्यस्तुला विद्यन्ते तत्र कथं ता एव न स्युः, न सन्ति चेत्–न तर्हि बृहत्तुलैरिति । सर्वत्रैकार्थोद्भावनेन विरोधः, भिन्नार्थाश्रयेण तु परिहारः । तथा वितानमालावनद्धैः कङ्काजियुक्तैः उल्लोचराजिसहितैः, अवितानैः अशून्यैः । धनिजनपरिपूर्णैरित्यर्थः । यत्र वितानाभावः तत्र कथं तद्योगः । तथा**

(१) पिनद्धै० ।

विचित्रैः अनेकविच्छित्तिरचितैः सचित्रैः सालेख्यैः । यत्र च चित्रं विगतं, तत्र कथं तदेव भवेत् । यदि वा चित्राभावः, कथं चित्रमिति विरोधः । तथा विशालैः विस्तीर्णैः भूरिणा सुवर्णेन शालन्ते श्लाघन्ते इति भूरिशालैः । यदि वा भूरिशालैः प्रभूतगृहैः। अथ वा सुवर्ण-प्राकारैः । यत्र शाला न सन्ति तत्र कथं ता एव बह्वयः स्युरिति शाब्दो विरोधः । अपिशब्दो विरोधप्रतिपादनार्थः । रेजे इति 'फणां च सप्ताना'मित्येत्वाभ्यासलोपौ ॥५०॥

बृहदिति ॥ या पूः बृहत्यस्तुला उपरिस्थाप्यदार्वाधारभूतानि स्तम्भाग्रपीठानि येषु तैः बृहत्तुलै-स्तथाप्यतुलैस्तद्रहितैरिति विरोधः । अनुपमैरित्यविरोधः ।

'तुला माने पलशते सादृश्ये राशिभाण्डयोः ।
गृहाणां दारुबन्धाय पीठ्याम्-'

इति हैमः । वितानानामुल्लोचानां मालाभिः पङ्क्तिभिः पिनद्धैराच्छादितैः तथाप्यवितानैस्तद्रहितै-रिति विरोधः । अशून्यैरित्यविरोधः । समस्तवस्तुसमृद्धैरित्यर्थः । 'अस्त्री वितानमुल्लोचः' 'वितानं त्रिषु तुच्छकम्' इत्युभयत्राप्यमरः । विचित्रैरालेख्यरहितैरपि सचित्रैः तत्सहितैरिति विरोधः । विचित्रैरद्भुतै-रिति परिहारः । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । विगताः शाला गृहैकदेशा येषां तानि । 'शाला गृहे तरुस्कन्धे शाखागारैकदेशयोः' इति विश्वः । तैः विशालैरपि भूरिशालैः प्रचुरगृहैकदेशविशिष्टैरिति विरोधः । विशालैः पृथुलैरित्यविरोधः । 'विशालं पृथुलं महत्' इत्यमरः । 'वेः शालच्छङ्कटचौ' इति शाल-च्प्रत्ययः । गृहैः रेजे । अपिरयं सर्वत्र विरोधे । विरुद्धवदाभासो विरोधालङ्कारः । 'विरोधः सोऽविरोधेऽपि वि-रुद्धत्वेन यद्वचः' इति काव्यप्रकाशलक्षणात् ॥ ५० ॥

**चिक्रंसया कृत्रिमपत्त्रिपङ्क्तेः कपोतपालीषु निकेतनानाम् ॥**
**मार्जारमप्यानत(१)निश्चलाङ्गं यस्यां जनः कृत्रिममेव मेने ॥ ५१ ॥**

चिक्रंसयेति ॥ यस्यां पुरि जनो लोको मार्जारमपि कृत्रिममेव मेने तावत् किमपि कृत्रिममेवाज्ञासीत् । किंभूतं निकेतनानां कपोलपालीषु आनतनिश्चलाङ्गं गृहाणां प्रदेश-विशेषेषु आनतं नम्रीभूतं निश्चलमप्रकम्पमङ्गं कायो यस्य तम् । छादनस्याधस्तद्धारणार्थं कुटिलानि काष्ठानि क्रियन्ते, येषु तक्ष्णा सिंहादयः पक्षिणश्चोत्पाद्यन्ते । सा कपोतपालीति भण्यते । यस्या लोके 'सिंहवाटिके'ति प्रसिद्धिः । तात्त्विकं मार्जारं कस्माल्लोकः कृत्रिममे-वाऽबोधीत्याह—यतः आनतनिश्चलाङ्गम् । किमर्थमेवंविधमित्याह—कृत्रिमायाः पत्त्रिपङ्क्तेः पक्षिमालायाः चिक्रंसया चिक्रमिषया जिघृक्षया । कपोतपाल्यां हि कृत्रिमां पक्षिमालाम-वबुध्यमानेन ओतुना जिघांसया जातिस्वभावात् वक्रितं निश्चलीकृतं शरीरम् । अतो जनो जानीते अयमपि कृत्रिम इति वाक्यार्थः । चिक्रंसयेति 'स्नुक्रमो'रितीडभावश्चिन्त्यः । जिघांसयेति इदानीन्तनः पाठः । करणेन निर्वृत्तः कृत्रिमः, क्त्रिः मप् नित्यम् ॥ ५१ ॥

चिक्रंसयेति ॥ यस्यां पुरि निकेतनानां वेश्मनाम् । 'वेश्म सद्म निकेतनम्' इत्यमरः । कपोतान् पक्षिणः पालयन्तीति कपोतपाल्यो विटङ्कापरनामानः स्तम्भाग्रप्रसारिता दारुविशेषाः । 'कपोतपालिकायां तु विटङ्कं पुंनपुंसकम्' इत्यमरः । कर्मण्यणि ङीप् । तासु कृत्रिमपत्त्रिणां दारुमयपक्षिणां पङ्क्तेः । कर्म-णि षष्ठी । चिक्रंसया क्रमितुमिच्छया । जिघृक्षयेत्यर्थः । क्रमेः सन्नन्तात् 'अप्रत्ययात्' इत्यकारप्रत्यये टाप् । 'स्नुक्रमोरनात्मनेपदनिमित्ते' इतीडागमो न भवति । अत्र क्रमेर्वृत्त्यादिभ्यातिरिक्तार्थेऽपि 'अनुपसर्गा-द्वा' इति वैकल्पिकस्यात्मनेपदनिमित्तस्यानुपसर्गत्वस्य वैवक्षिकस्य सम्भवात् । आयतमानतं वा निश्चलमङ्गं यस्य तं मार्जारं बिडालमपि । 'ओतुर्बिडालो मार्जारः' इत्यमरः । जनः कृत्रिमं क्रियानिर्वृत्तमेव मेने ।

( १ ) ०मप्यायत ।

न तु वास्तवमित्यर्थः। 'ड्वितः क्त्रिः' 'क्त्रेर्मम्नित्यम्' इति मप्प्रत्ययः। अनेन कृत्रिमाकृत्रिमभेदो दुर्ग्रह इति शिल्पज्ञानातिशयोक्तिः। अत्र कविकल्पितसादृश्यान्मार्जाररजनयोः कृत्रिमाकृत्रिमेषु विपरीतमतिवर्णनाद् भ्रान्तिमदलङ्कारः ॥ ५१ ॥

**क्षितिप्रतिष्ठोऽपि मुखारविन्दैर्वधूजनश्चन्द्रमधश्चकार ॥**
**अतीतनक्षत्रपथानि यत्र प्रासादशृङ्गाणि मुधा(१)ऽध्यरोहत् ॥ ५२ ॥**

**क्षितीति ॥ यत्र कामिनीलोको भूमिस्थोऽपि वदनकमलैः शशिनमधश्चकार जिगाय व्यजेष्ट। विरुद्धं चैतत्, यो हि भूमिस्थः स कथं खस्थमिन्दुमधः कुर्यात्। प्रांशुप्रासादारोहणं तर्हि तासामनर्थकम्, अतीतेत्यादि। अतीत उल्लङ्घितो नक्षत्रपथो ज्योतिर्मार्गो यैस्तानि प्रासादशृङ्गाणि हर्म्यशिखराणि मुधा निरर्थकमेवाध्यरोहत्। ऊर्ध्वस्थमिन्दुमधःस्थो जनोऽधः कृतवान्–शब्दच्छलेन एषोक्तिर्न तु तत्त्वतः। न ह्यसौ चन्द्राधश्चिकीर्षया सौधान्यारूढः, अपि तु उपभोगेच्छया ॥ ५२ ॥**

**क्षितीति** ॥ यस्यां पुरि वधूजनः क्षितौ प्रतिष्ठा यस्य स भूमिस्थितोऽपि चन्द्रम्। दिवि स्थितमिति भावः। तत्रापि मुखैरेवारविन्दैरधश्चकारेति विरोधः। स्वलावण्यमहिम्नाऽधरीचकारेति परिहाराद्विरोधालङ्कारः। अतीतानि नक्षत्रपथमतीतनक्षत्रपथानि। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः। 'द्विगुप्राप्तापन्ना–' इत्यादिना परवल्लिङ्गताप्रतिषेधः। प्रासादशृङ्गाणि वृथा अध्यरुक्षदधिरोहति स्म। अनधिरुह्यैवाधःकरणादिति भावः। रोहतेर्लुङ्। 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशः। अत्राधःकरणवाक्यार्थस्य श्लेषविरोधोपजीव्यवैयर्थ्ये हेतुत्वात्सङ्कीर्णः काव्यलिङ्गभेदः ॥ ५२ ॥

**रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्धयन्तीः ॥**
**यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः ॥ ५३ ॥**

**रम्या इति ॥ यस्यां द्वारकायां तरुणा वधूभिः समं कान्तासहाया वलभीरुपरिवसतीर्भेजिरे। कीदृशीः रम्या इति रम्यत्वात् वैजयन्तीः प्राप्ताः, तथा विविक्ता इति अनुपहतत्वात् निर्जनत्वात् रागं कामं चित्रार्थं वा मनःशिलासिन्दूरादिकं वर्धयन्तीः। शोभने हि स्थानेऽसकृद् बहुविचित्रं क्रियते। तथा नमत् कुटिलं वलीकं छादनान्तो यासु। इतिशब्दावत्र हेत्वर्थौ। अथ च वधूभिः समं वलभीर्भेजिरे वधूरपि सिषविरे इत्यर्थान्तरप्रतीतिः। कीदृशीः यतो रम्या इति एवं पताकां कीर्तिं प्राप्तवतीः। पताका नाटकाद्यंशे ध्वजे सौभाग्यचिह्नयोः। इतिशब्दः स्वरूपनिर्देशे। तथा विविक्ता रूपवेषान्विता इति रागमुत्कण्ठा वर्धयन्तीः, तथा नमन्त्यो निम्ना वलयो मध्यरेखा यासां ता नमद्वलीकाः। 'नद्यृतश्चे'ति कप्। अर्थवशाद्विभक्तिविपरिणामः ॥ ५३ ॥**

**रम्या इति** ॥ यस्या पुरि युवानो रम्या रमणीया इति हेतोः पताकाः प्राप्तवतीः। उत्क्षिप्तध्वजा इत्यर्थः। अन्यत्र रम्या इत्येवं पताकाः प्राप्तवतीः। प्रसिद्धिं गता इत्यर्थः। 'पताका वैजयन्त्यां च सौभाग्येऽर्कध्वजेऽपि च', 'इति हेतौ प्रकरणे प्रकारादिसमाप्तिषु' इत्युभयत्रापि विश्वः। विविक्ता विजना विमलाश्च इति हेतो रागं वर्धयन्तीः। 'विविक्तौ पूतविजनौ' इत्युभयत्राप्यमरः। नमद्वलीका नमनीध्राः। 'वलीकनीध्रे पटलप्रान्ते' इत्यमरः। अन्यत्र नमन्त्यो वल्यस्त्रिवल्याख्या मध्यरेखा यासां ता नमद्वलीकाः। 'नद्यृतश्च' इति कप्प्रत्ययः। 'वली मध्यमरेखोर्मिजीर्णत्वग्गृहदारुषु' इति वैजयन्ती। वलभीः कूटागाराणि। 'कूटागारं तु वलभी' इत्यमरः। वधूभिः सममसेवन्त। वधूसहिता असेवन्तेत्यर्थः। अत्र वधूनां वलभीनां च प्रकृतानामेव धर्मसाधर्म्येणौपम्यावगमात्केवलप्रकृतगोचरा तुल्ययोगिता, न श्लेषः। तत्र विशेष्यस्यापि श्लिष्ट-

---

(१) वृथाऽध्यरुक्षत।

त्वनियमात् । यथाहुः—

'प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः ।
औपम्यं गम्यते यत्र सा मता तुल्ययोगिता' ॥

इति ॥ ५३ ॥

**सुगन्धितामप्रतियत्नपूर्वां बिभ्रन्ति यत्र प्रमदाय पुंसाम् ॥**
**मधूनि वक्त्राणि च कामिनीनामामोदकर्मव्यतिहारमीयुः ॥ ५४ ॥**

**सुगन्धितामिति** ॥ यत्र मधूनि मद्यमैरेयादीनि युवतीनां च मुखानि आमोदकर्मणो विभावनक्रियाया व्यतिहारं विनिमयमीयुः जग्मुः । वक्त्रैर्मधूनां मधुभिश्च वक्त्राणां सौगन्ध्यं यत्राधिकं कृतमित्यर्थः । कीदृशि तानि प्रियाणां प्रीत्यै अप्रतियत्नपूर्वां स्वाभाविकीं सुगन्धितां सौरभं बिभ्रन्ति वहमानानि इत्युभयविशेषणम् । असतो गुणान्तरस्योपादनं प्रतियत्नः । बिभ्रन्तीति शतृ, जसः शि 'वा नपुंसकस्य' इति नुम् । ईयुरिति इणो लिट् । 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इति सुगन्धिता ॥ ५४ ॥

सुगन्धितामिति ॥ यत्र पुरि न प्रतियत्नः संस्कारः पूर्वो यस्यास्तामप्रतियत्नपूर्वामकृत्रिमाम् । स्वाभाविकीमित्यर्थः । 'प्रतियत्नस्तु संस्कारः' इति वैजयन्ती । शोभनो गन्धो येषां तेषां भावस्तत्ता तां सुगन्धितां सौरभ्यम् । 'गन्धस्येत्–' इतीकारः । बिभ्रन्ति बिभ्राणानि । 'वा नपुंसकस्य' इति नुमागमः । मधूनि मद्यानि कामिनीनां वक्त्राणि च यूनां प्रमदाय प्रीत्यै आमोदकर्मणो वासनाधानस्य व्यतिहारं परस्परकरणमीयुः । अन्योन्यगन्धेनान्योन्यं वासयामासुरित्यर्थः । इणो लिट् । अत्रापि मधूनां वक्त्राणां च प्रकृतत्वात्तत्पूर्वक एव तुल्ययोगिताभेदः । तेन यूनां मधुवासितवधूवदनपानं वदनवासितगण्डूषपानं च वस्तु व्यज्यते । तेन च निरातङ्कभोगाः पौरा इति गम्यते ॥ ५४ ॥

**रतान्तरे यत्र गृहान्तरेषु वितर्दिनिर्यूहविटङ्कनीडः ॥**
**रुतानि शृण्वन्वयसां गणोऽन्तेवासित्वमाप स्फुटमङ्गनानाम् ॥ ५५ ॥**

**रतान्तर इति** ॥ यत्र वयसां पक्षिणां शुकसारिकादीनां वृन्दं स्फुटमखण्डं कामिनीनामन्तेवासित्वं शिष्यतामाप लेभे । यतो रतान्तरे निधुवनावसरे रुतानि सीत्कारादीनि आकर्णयन्, तथा गृहमध्ये या वितर्दयो वेदिकास्तासां यो निर्यूहो निर्गतो दारुविशेषस्तस्य यो विटङ्क उन्नतो भागः अग्रभागः स एव तत्र वा नीडमालयो यस्य । गृहे स्थित इत्यर्थः । यो हि शिष्यः स उपाध्यायात् शृणोति तद्गृहे च व सति । श्रुवः शृ च । सुखमन्ते वसतीत्यवश्यम्, अन्तेवासी शिष्यः । आवश्यकाधमर्ण्ययोर्णिनिः 'शयवासवासिष्वकालात्' इति ङेरलुक् ॥ ५५ ॥

रतान्तरे इति ॥ यत्र पुरि गृहान्तरेषु वितर्दयो विहारवेदिकाः । 'स्याद्वितर्दिस्तु वेदिका' इत्यमरः । तासां निर्यूहा मत्तवारणाख्या अपाश्रयाः । 'निर्यूहो मत्तवारणः' इति वैजयन्ती । तेषां विटङ्का उपरितन्यः कपोतपालिकाः त एव नीडाः कुलाया यस्य सः । 'कुलायो नीडमस्त्रियाम्' इत्यमरः । वयसां शुकसारिकादिपक्षिणां गणः । 'वयः पक्षिणि बाल्यादौ' इति विश्वः । अङ्गनानाम् । वितर्दिषु रममाणानामिति भावः । रतान्तरे रुतानि रतिकूजितानि शृण्वन्, अन्ते समीपे वसन्त इत्यन्तेवासिनः शिष्याः । 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः । 'शयवासवासिष्वकालात्' इत्यलुक् । तेषां भावस्तत्त्वमाप । समीपे प्रतिशब्दं यथाश्रुतमुच्चारणादेवमुत्प्रेक्ष्यते । अत एव स्फुटमिति व्यञ्जकप्रयोगः ॥ ५५ ॥

**छन्नेष्वपि स्पष्टतरेषु यत्र स्वच्छानि नारीकुचमण्डलेषु ॥**
**आकाशसाम्यं दधुरम्बराणि न नामतः केवलमर्थतोऽपि ॥ ५६ ॥**

छन्नेष्वपीति ॥ यत्राङ्गनास्तनभारेषु यान्यम्बराणि वासांसि तानि न केवलं नाम्ना नामतो गगनसादृश्यं दधुः, यावदर्थतः कार्यतोऽपि कार्येणापि दधिरे । यतः सूक्ष्माणि स्वच्छानि, अत एव छादितेष्वपि अम्बरैः कुचेषु प्रकटतरेषु । आकाशेनाप्यावृतं वस्तु नाऽपिधीयते, शून्यत्वात्तस्य । छन्नशब्दो 'वा दान्तशान्ते'त्यादिना क्तान्तो निपातितः ॥ ५६ ॥

छन्नेष्विति ॥ यत्र पुरि छन्नेष्वाच्छादितेषु । 'वा दान्त-' इत्यादिना वैकल्पिको निपातः । स्पष्टतरेषु । स्फुटतरं लक्ष्यमाणेष्वित्यर्थः । नारीकुचमण्डलेषु स्वच्छानि स्फटिकादिवदतिरोधायकान्यम्बराणि वस्त्राणि केवलं नामतोऽम्बरमिति नाम्नैवाकाशसाम्यं न दधुः । 'अम्बरं व्योम्नि वाससि' इति विश्वः । किन्त्वर्थ-तोऽप्यर्थक्रिययापि तत्साम्यं दधुः । स्वयमतिसूक्ष्मत्वादव्यवधायकत्वं दृष्ट्यादेर्मूर्तेनान्तरङ्गत्वविघातित्वं चेत्या-दिनापि साम्यं दधुरित्यर्थः । उपमालङ्कारः ॥ ५६ ॥

यस्यामजिह्मा महतीमपङ्काः सीमानमत्यायतयोऽत्यजन्तः ॥
जनैरजातस्खलनैर्न जातु द्वयेऽप्यमुच्यन्त विनीतमार्गाः ॥ ५७ ॥

यस्यामिति ॥ यस्यां जनैः वास्तव्यलोकैरुभयेऽपि विनीतमार्गाः सदाचारराजपथाः जातु कदाचिदपि नामुच्यन्त न मुक्ताः । इदानीं तयोः साम्यम्—विनीतमार्गास्तावत्की-दृशाः अजिह्मा अवक्रचेष्टाः । धर्म्या इत्यर्थः । हट्टमार्गा अप्यजिह्माः सरलाः । प्राकारवेश्म-रथ्यारहिता इत्यर्थः । विनयमार्गा महतीं सीमानं मर्यादां विस्तारं न जहति, अत एवा-ऽपङ्का निष्कर्दमाः । सङ्कटे हि पथि पङ्कः पदं बध्नाति । सत्पथाः अत्यायतयः शोभना आयतिः आगामिकालो येषां तेः अत्यायतयः । शोभना राजमार्गा अपि सुष्ठु आयतिः आयामो येषां ते अत्यायतयः दीर्घदीर्घाः । जनैः कीदृशैः अजातं स्खलनं निवृत्तिरुपघातो येषां तैः । सदाचाराऽत्यागिभिः सदा चरणाऽत्यागिभिश्चेत्यर्थः । द्वावयवौ येषामिति द्वये । बहुत्वेऽपि राश्यपेक्षं द्वित्वं, द्वित्रिभ्यां तयाऽयौ । अमुच्यन्तेति कर्मणि लिङ् ॥ ५७ ॥

यस्यामिति ॥ यस्यां पुरि अजिह्मा अवक्राः, अन्यत्राकपटाः । दम्भादिरहिता इत्यर्थः । 'आचेर-न्त्दृशीं वृत्तिमजिह्मामशठां तथा' इति स्मरणादिति भावः । 'जिह्मः कपटवक्रयोः' इति विश्वः । अपङ्काः कर्दमरहिताः निष्पापाश्च । 'पङ्कोऽघे कर्दमे' इति हैमः । महतीं सीमानं राजकल्पितक्षेत्रमानमर्यादां कुला-गतानुष्ठानस्थितिं चात्यजन्तः । अत्यक्तमहामयादा इत्यर्थः । अतिमात्रा आयतिरायामः उत्तरकालश्च येषां ते अत्यायतयः । 'आयतिस्तूत्तरे काले संयमाऽऽयामयोरपि' इति विश्वः । द्वये द्विरूपा अपि । 'प्रथम-चरमतया-' इत्यादिना जसि विभाषया सर्वनामसंज्ञा । विनीतमार्गाः सुरचितपुरवीथयः सुशिक्षिताचार-पद्धतयश्च न जातं स्खलनं पाषाणादिप्रतिघातो विरुद्धाचरणं च येषां तैर्जनैर्जातु कदाचिदपि नामुच्यन्त न त्यक्ताः । न कदाचित्खिलीकृता इत्यर्थः । अत्र मार्गशब्दस्य साधर्म्यादेकवृन्तावलम्बिफलद्वयवदेकशब्दे-नार्थद्वयप्रतीतेः, द्वयानामपि मार्गाणां प्रकृतत्वाच्च केवलप्रकृतविषयोऽर्थश्लेषः । विशेष्यस्यापि श्लिष्टत्वान्न तुल्ययोगिता ॥ ५७ ॥

परस्परस्पर्धिपरार्ध्यरूपाः पौरस्त्रियो यत्र विधाय वेधाः ॥
श्रीनिर्मितिप्राप्तघुणक्षतैकवर्णोपमावाच्यमलं ममार्ज ॥ ५८ ॥

परस्परेति ॥ यत्र यस्यां नगर्यां पौरस्त्रियो नागरिकनायिकाः विधाय निष्पाद्य वेधा ब्रह्मा श्रीनिर्मितिप्राप्तघुणक्षतैकवर्णोपमावाच्यमलं ममार्ज अक्षालयत् । एकश्चासौ वर्णोऽक्षरमेकवर्णः घुणेन प्राणिविशेषेण क्षत उल्लिखितो घुणक्षतः घुणक्षतश्चासौ एकवर्णश्च घुणक्षतैकवर्णः तेन सह उपमानं साम्यकरणं तदुपमा, श्रीनिर्मित्या प्राप्ता श्रीनिर्मितिप्राप्ता

चासौ घुणक्षतैकवर्णोपमा च श्रीनिर्मितप्राप्तघुणक्षतैकवर्णोपमा तया वाच्यमयशः तदेव मलं कलङ्कः तं ममार्ज अनीनशत् । केचित् घुणक्षतैकवर्णोपमावाच्यं तदलं सुष्ठु अत्यर्थं ममार्ज । वेधसो हि नित्यमेव लोके वाच्यता—यत् शोभनं वस्तु निर्मातुमयं न समर्थः । या तु श्रीः सा घुणाक्षरन्यायेन । घुणोऽपि काष्ठमुल्लिखन् कदाचिदेकं वर्णं निष्पादयति । श्रीनिर्माणेन प्राप्तां घुणाक्षरोपमां सकलनगरवनितारूपविधानात् ममार्जेत्यर्थः । किंभूताः स्त्रियः परस्परस्पर्धिपरार्घ्यरूपा अन्योन्यस्पर्धाशीलोत्कृष्टरूपाः । परस्परस्पर्धीन्यहमहमिकयाऽन्योन्यसङ्घर्षीणि परार्घ्यानि रूपाणि यासां ताः । तदा हि न कश्चित् घुणाक्षरन्यायमुद्ग्राहयति, सर्वासां सुरूपत्वात् । परार्घ्यं ब्रुवते श्रेष्ठम् । अर्धाद्यत्, परावराधमोत्तमपूर्वाच्च । निर्मितिरित्युपसर्गप्रतिरूपको निपातो निःशब्द इत्यद्रव्या कृतिः ॥ ९८ ॥

परस्परेति ॥ यत्र पुरि परस्परस्पर्धीन्यहमहमिकयान्योन्यसामर्षाणि परार्घ्यानि श्रेष्ठानि रूपाणि सौन्दर्याणि यासां ताः । 'रूपं स्वरूपे सौन्दर्ये' इति विश्वः । पुरे भवाः पौरास्ताः स्त्रियः पौरस्त्रियः । 'स्त्रियाः पुंवत्–' इत्यादिना पुंवद्भावः । विधाय निर्माय वेधाः स्रष्टा श्रियो लक्ष्मीदेव्याः निर्मित्या निर्माणेन प्राप्तं यत् घुणेन वज्रकीटेन क्षतस्योत्कीर्णस्यैकवर्णस्योपमया साम्येन वाच्यमपवादः तदलमत्यन्तम् । तदेव मलमिति केचित् । ममार्ज । घुणाक्षरवद्यादृच्छिकमिदं श्रीदेवतासौन्दर्यशिल्पं न कौशलमित्ययशः क्षालितवानित्यर्थः । अनया चातिशयोक्त्या पौरस्त्रीणां रमासमानसौन्दर्यं वस्तु व्यज्यते ॥ ९८ ॥

**क्षुण्णं यदन्तःकरणेन वृक्षाः फलन्ति कल्पोपपदास्तदेव ॥**
**अध्यूषुषस्तामभवञ्जनस्य याः सम्पदस्ता मनसोऽप्यभूमिः(१) ॥९९॥**

क्षुण्णमिति ॥ कल्पोपपदा वृक्षास्तदेव फलन्ति यत् अन्तःकरणेन क्षुण्णमभिवाञ्छितम् । मनसा पर्यालोचितमेवार्थं दिशन्ति न त्वधिकम् । कल्पशब्द उपपदे पूर्वे येषां ते । कल्पवृक्षा इत्यर्थः । अपरं तां पुरीमध्यूषुषः अधिवसतः जनस्य याः सम्पदो लक्ष्म्योऽभवन् ता मनसोऽपि चित्तस्यापि अभूमिः अविषयाः, मनोरथानामप्यगोचराः । प्रार्थिताद्धिकं यत्र घटते मनसाऽप्यभिलषितुं न शक्यते इति भावः । अध्यूषुष इति अधिवसतः क्वसुः । तामिति 'उपान्वध्याङ्वस' इत्याधारस्य कर्मत्वम् ॥ ९९ ॥

क्षुण्णमिति ॥ यदन्तःकरणेन क्षुण्णमभ्यस्तम् । ममेदं भूयादिति भूयोभूयः सङ्कल्पितमित्यर्थः । कल्पयन्ति सङ्कल्पितार्थानिति कल्पाः, कल्पा इत्युपपदं व्यावर्तकं येषां ते कल्पोपपदा वृक्षाः कल्पवृक्षाः तदेव फलन्ति निष्पादयन्ति । 'फल निष्पत्तौ' इति धातोर्लट् । कुतः—यां पुरमध्यूषुषो यस्यामुषितवतः 'उपान्वध्याङ्वसः' इति कर्मत्वम् । 'भाषायां सदवसश्रुवः' इति क्वसुप्रत्ययः । जनस्य याः सम्पदोऽभवन् ता मनसोऽप्यगम्याः । वाचामभूमय इति किमु वक्तव्यमिति भावः । गृहे गृहे कल्पवृक्षसम्बन्धातिशयोक्त्या पौराणां दैवेन्द्रभोगो व्यज्यते । इह कल्प इत्युपपदं स्वसंज्ञैकदेशो येषामिति व्याख्याने हिरण्यपूर्वं कशिपुमित्यादिवदवाच्यवचनदोषावकाशः ॥ ९९ ॥

**कला दधानः सकलाः स्वभाभिरुद्भासयन् सौधसिताभिराशाः ॥**
**यां रेवतीजानिरियेष हातुं न रौहिणेयो न च रोहिणीशः ॥ १०० ॥**

कला इति ॥ रौहिणेयो हलधरो रोहिणीशश्च यां द्वारकां हातुं परित्यक्तुं न इयेष न चकमे । शौरिताराधिपौ यत्रोषतुरित्यर्थः । तयोरधुना श्लेषः–शौरिः कला गीतवाद्यादिकाः सकलाश्चतुःषष्टिसंख्या बिभ्रत्, चन्द्रस्तु कला लेखाः सकलाः षोडशापि । किंभूतः शौरिः चन्द्रश्च सौधसिताभिः स्वभाभिः आशाः उद्भासयन् । सितत्वाच्चोभावपि धवलगृहधव-

(१) ऽप्यगम्याः ।

लाभिरात्मीयरुचिभिर्दिशो दीपयन्तौ । रेवती ककुद्मिकन्या तारा च ते जाये ययोः तौ रेवतीजानी । जायाया निङ् । रोहिण्या अपत्यं रौहिणेयो हलधरः । स्त्रीभ्यो ढक् । रोहिण्या स्तारायां ईशो भर्ता मृगाङ्कः ॥ ६० ॥

कला इति ॥ सकलाः समग्राः कलाश्चतुःषष्टिविद्याः षोडशभागांश्च दधानः । 'कला शिल्पे कालभेदे' इति, 'कला तु षोडशो भागः' इति चामरः । सुधयाऽवलिप्तं सौधं तद्वल्सिताभिः स्वभाभिराशा दिश-उद्भासयन् रेवती ककुद्मिकन्या पूषकं भं च जाया यस्य स रेवतीजानिः । 'जायाया निङ्' इति समासान्तो निङादेशः । 'लोपो व्योर्वलि' इति यलोपः । रोहिण्या अपत्यं पुमान्रौहिणेयो बलभद्रः । स्त्रीभ्यो ढक् । यां पुरीं हातुं त्यक्तुं न इयेष नेच्छति स्म । लिट् । रोहिणीशश्चन्द्रश्च हातुं न इयेष । अत्र रौहिणेयरोहिणीशयोः परोत्कर्षावहत्वेन द्वयोः प्रकृतत्वाद्विशेष्यस्याश्लिष्टत्वाच्च केवलप्रकृतविषया तुल्ययोगिता । गतमन्यत् ॥

**बाणाहवव्याहतशम्भुशक्तेरासत्तिमासाद्य जनार्दनस्य ॥**
**शरीरिणा जैत्रशरेण यत्र निःशङ्कमूषे मकरध्वजेन ॥ ६१ ॥**

बाणाहवेति ॥ यत्र यस्यां नगर्यां मकरध्वजेन कन्दर्पेण निःशङ्कं निर्भयं यथा भवति एवमूषे उषितम् । किंभूतेन मकरध्वजेन शरीरिणा मूर्तिमता पुनः किंभूतेन जैत्रशरेण जैत्रा जिष्णवो वशकारिणः शरा यस्य तेन अमोघबाणप्रसरेण । ननु हरादस्य भयेन भवितव्यमित्याह—किं कृत्वा जनार्दनस्य आसत्तिमासाद्य समीपं प्राप्य, किम्भूतस्य बाणाहवव्याहता बाणासुरसङ्ग्रामनिर्वर्तिता शम्भोः शक्तिर्बलं येन तस्य बाणासुरसङ्ग्रामस्खलितरुद्रप्रभावस्य । अत एव निःशङ्कम् । आहूयतेऽस्मिन्नित्याहवः 'आङि युद्धे' इति सम्प्रसारणम्, अप्प्रत्ययश्च । जैत्रेति जयतेष्ट्रः । ऊषे इति भावे लकारः ॥ ६१ ॥

बाणाहवेति ॥ यत्र पुरि बाणाहवे बाणासुरयुद्धे व्याहता क्षयं नीता शम्भुशक्तिर्येन तस्य हरविजयिनो जनार्दनस्य कृष्णस्यासत्तिं प्रत्यासत्तिमासाद्य । पुत्रत्वं प्राप्येत्यर्थः । शरीरिणा विग्रहवता । न त्वनङ्गेनेति भावः । जेतार एव जैत्रा जयशीलाः । तृन्नन्तात्प्रज्ञादित्वादण्प्रत्ययः । ते शरा यस्य तेन मकरध्वजेन कामेन । प्रद्युम्नरूपेणेति भावः । निःशङ्कं निर्भीकमूषे उषितम् । वस निवासे, भावे लिट् । 'वचिस्वपि—' इत्यादिना सम्प्रसारणम् । 'शङ्का वितर्कभययोः' इति विश्वः । अत्र शम्भुशक्तिव्याघातपदार्थस्य विशेषणगत्या निःशङ्कनिवासहेतुत्वोक्तेः काव्यलिङ्गभेदः । पुरा किल भगवान्भक्तवत्सलो धूर्जटिर्बाणप्रेम्णा बाणाभियोधिनं हरिमभियुज्य निर्जित इति पौराणिकाः कथयन्ति ॥ ६१ ॥

**निषेव्यमाणेन शिवैर्मरुद्भिरध्यास्यमाना हरिणा चिराय ॥**
**उदग्रश्मिरत्नाङ्कुरधाम्नि सिन्धावाह्वास्त मेरावमरावतीं या ॥ ६२ ॥**

निषेव्यमाणेनेति ॥ या नगरी अमरावतीमाह्वास्त स्पर्धया स्वर्गपुरीमाहूतवती । इन्द्रपुरीं स्पर्धापूर्वमाकारयदित्यर्थः । किंभूता द्वारका सिन्धौ समुद्रे वर्तमाना, किंभूताममरावतीं मेरौ मेरुपर्वते वर्तमानाम् । आह्वास्तेति 'स्पर्धायामाङः' इत्यात्मनेपदं, च्लेः सिच् 'आत्मनेपदेष्वन्यतरस्या'मित्यङ् विकल्पतः । इदानीं श्लेषः—द्वारका कीदृशी हरिणा कृष्णेन अध्यास्यमाना चिराय अजस्रमुपभुज्यमाना सेव्यमाना, किम्भूतेन शिवै रेकादशभिः रुद्रैर्मरुद्भिर्देवैः सेव्यमानेन । किम्भूते सिन्धौ मेरौ च उदग्रश्मिरत्नाङ्कुरधाम्नि उदग्रश्मय-उर्ध्वकिरणाः ये रत्नाङ्कुरा मणिशलाकास्तेषां धाम स्थानम् । अमरा देवा विद्यन्ते यस्या मित्यमरावती, 'मतौ बह्वचोऽनजिरादीना'मिति दीर्घः ॥ ६२ ॥

निषेव्यमाणेनेति ॥ शिवैर्मरुद्भिर्मन्दमारुतैः, अन्यत्र शिवै रुद्रैः मरुद्भिः मरुद्गणैश्च चिराय निषेव्यमाणेन हरिणा श्रीकृष्णेन शक्रेण चाध्यास्यमाना अधिष्ठीयमाना उदश्मीनां रत्नाङ्कुराणां धाम्नि स्थाने । एकत्र रत्नाकरत्वादन्यत्र रत्नसानुत्वाच्चेति भावः । सिन्धौ स्थितेति शेषः । या पूर्मेरौ स्थिताम्, अमरा यस्यां सन्तीन्यमरावतीमिन्द्रनगरीम् । 'मतौ बह्वचोऽनजिरा—' इति दीर्घः । संज्ञायाम् 'मादुपधायाश्च—' इति वत्वम् । अह्वास्त स्पर्धयाऽऽहूतवती । अमरावतीमनुचकारेत्यर्थः । ह्वयतेर्लुङ् 'स्पर्धायामाङः' इत्यात्मनेपदम् । 'लिपि सिचि ह्वश्च' इति 'आत्मनेपदेष्वन्यतरस्याम्' इति च्लेरङभावपक्षे सिजादेशः । अत्र प्रथमार्धे श्लेषेऽपि सिन्धौ मेरौ स्थितेति प्रतिबिम्बाभावेन साधर्म्योक्तेः श्लेषानुप्राणितेयमुपमेति सङ्करः । आह्वास्तेति सादृश्यप्रतिपादकः शब्दः । स्पर्धते ह्वयते द्वेष्टीत्यनुशासनात् ॥ ६२ ॥

**स्निग्धाञ्जनश्यामरुचिः सुवृत्तो वध्वा इवाऽध्वंसितवर्णकान्तेः ॥**
**विशेषको वा विशिशेष यस्याः श्रियं त्रिलोकीतिलकः स एव ॥६३॥**

स्निग्धेति ॥ स एव त्रिलोकीतिलकस्त्रिभुवनचूडामणिः वासुदेवो यस्याः नगर्याः श्रियं शोभां लक्ष्मीं च विशिशेष अधिकां चकार । क इव कस्याः श्रियं विशेषयति, यतोऽसौ विशेषको वा तिलकतुल्यः । वाशब्द इवार्थे । कस्या इव वध्वा इव । यथा विशेषकः तिलकं कस्याश्चित् वध्वाः स्त्रियः श्रियं विशेषयति । किंभूतो हरिः स्निग्धाञ्जनश्यामरुचिः स्निग्धस्याऽरूक्षस्य अञ्जनस्येव कज्जलस्येव श्यामा कृष्णा रुचिः कान्तिर्यस्य सः तैलाभ्यक्तकज्जलवत् श्यामकान्तिः, तथा सुवृत्तः सदाचारः । पुर्याः कीदृश्या अध्वंसिता असङ्कीर्णा वर्णानां ब्राह्मणक्षत्रियविट्शूद्राणां कान्तिः शोभा यस्यामिति तद्धर्मानयने द्रव्याक्षेपः । वध्वा इव वधूतुल्यायाः । विशेषकः कीदृक् कस्तूरिकादिद्रव्यरचनात् कालाञ्जनेन वा श्यामशोभः सुवृत्तः वर्तुलाकारः परिणाही भूयां विशेषयत्येवं स तस्या विशेषकः । वध्वाः कीदृश्याः अध्वंसितवर्णकान्तेः अनष्टरूपशोभायाः । नगरीपक्षे निजतेजोयुक्ताश्चतुर्वर्णा जना यस्यामित्यर्थः । त्रिलोकीतिलक इति तिलकशब्दस्य प्रशंसार्थत्वान्नाधिक्यदोषः । यथा—

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥

इतीन्दुशब्दस्य । यथा च—

स्तनस्तबकपर्यन्तन्यस्तहस्तैकपल्लवा ।
लतेवाकृष्टमुक्तान्या चकम्पे प्रमदालता ॥

इति लताशब्दस्य । त्रयाणां लोकानां समाहारस्त्रिलोकी । अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते, इति 'द्विगो'रिति ङीप् ॥ ६३ ॥

स्निग्धेति ॥ स्निग्धं यदञ्जनं तद्वत्तेन च श्यामरुचिः सुवृत्तः सद्वृत्तिः वर्तुलश्च । त्रयाणां लोकानां समाहारस्त्रिलोकी । 'तद्धितार्थ—' इत्यादिना समासः । 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञा । 'आकारान्तोत्तरपदो द्विगुः स्त्रियामिष्यते' इति स्त्रीत्वे 'द्विगोः' इति ङीप् । तस्यास्तिलको भूषणभूतः स हरिरेव, विशेषको वा । तिलक इवेत्यर्थः । 'इववद्वा यथाशब्दा' इत्यनुसाशनात् ।

'तमालपत्रतिलकाचित्रकाणि विशेषकम् ।
द्वितीयं च तुरीयं च न स्त्रियाम्' ॥

इत्यमरः । अध्वंसिता वर्णानां ब्राह्मणादीनां कान्तिरौज्ज्वल्यं यस्यास्तस्याः पुरः, अन्यत्राध्वंसितो वर्णो गौरादिः कान्तिर्लावण्यं च यस्यास्तस्याः । 'वर्णो द्विजादौ शुक्लादौ' इत्युभयत्राप्यमरः । वध्वा इव श्रियं विशिशेष विशेषितवान् । अनेकशब्देयमुपमेत्येके । शब्दमात्रसादृश्याच्छ्लेष इत्यन्ये । श्लेषोपमेत्याह दण्डी ६३

**तामीक्षमाणः स पुरं पुरस्तात्प्रापत् प्रतोलीमतुलप्रतापः ॥**
**वज्रप्रभोद्भासिसुरायुधश्रीर्या देवसेनेव परैरलङ्घ्या ॥ ६४ ॥**

**तामिति** ॥ सः श्रीकृष्णः पुरस्तात् अग्रे वर्तमानां प्रतोलीं प्रापत् आससाद । किं कुर्वाणः तां पुरं द्वारवतीमीक्षमाणः अवलोकमानः, किंभूतः अतुलप्रतापः अपरिनिर्मितवीर्यः, तां कां या पुरी परैः शत्रुभिरलङ्घ्या जेतुमशक्या, किंभूता वज्रप्रभोद्भासिसुरायुधश्रीः वज्रो मणिभेदस्तस्य प्रभा तयाऽऽक्रान्ता सुरायुधस्येन्द्रधनुषः श्रीः शोभा यया । अतएव देवसेनेव देवसेनातुल्या । यथा देवचमूः परैः शत्रुभिरलङ्घ्या, तस्यामपि वज्रस्य पवेः प्रभया सुरायुधानां देवहेतीनां श्रीराक्रान्ता अभिभूता भवति ॥ ६४ ॥

**तामिति** ॥ अतुलप्रतापः स हरिस्तां पूर्वोक्तां पुरमीक्षमाणः पुरस्तात्पूर्वस्यां दिशि । सप्तम्यर्थे तासिल् प्रत्ययः । प्रतोलीं रथ्याम् । 'रथ्या प्रतोली विशिखा' इत्यमरः । प्रापत्प्राप्तवान् । लुङि 'पुषादि —' इत्यादिना च्लेरङादेशः । वज्राणां तोरणप्रासादादिगतहीरकादिमणीनां प्रभाभिरुद्भासिनी सुरायुधश्रीरिन्द्रचापलक्ष्मीर्यस्यां सा । इह वज्रग्रहणं मणिमात्रोपलक्षणम् , अन्यथेन्द्रायुधासाम्यादिति भावः । अन्यत्र वज्रस्य कुलिशस्य प्रभाभिरुद्भासिनी सुरायुधानामितरदेवतायुधानां श्रीर्यस्याः सा । 'वज्रोऽस्त्री हीरके पवौ' इत्यमरः । या प्रतोली देवसेना सुरचमूरिव परैः शत्रुभिरलङ्घ्या दुष्प्रधर्षा ॥ ६४ ॥

**प्रजा इवाङ्गादरविन्दनाभेः शम्भोर्जटाजूटतटादिवापः ॥**
**मुखादिवाऽथ श्रुतयो विधातुः पुरान्निरीयुर्मधुजि(१)द्ध्वजिन्यः ॥६५॥**

**प्रजा इति** ॥ अथ क्रमेण पुरात् नगरात् मधुजिद्ध्वजिन्यो माधवपृतना निरीयुः निसस्रुः । का इव कुत इत्याह—अरविन्दनाभेः पद्मनाभस्य शरीरात् प्रजा इव भूतानीव इति बाहुल्योक्तिः । अपरं का इव शम्भोर्जटाजूटतटात् आप इव यथा शम्भोर्हरस्य जटाबन्धप्रदेशात् आपो गङ्गाजलानि निरीयुः इतिकलकलोक्तिः । पुनः का इव विधातुर्मुखात् श्रुतय इव यथा विरिञ्चिवदनात् श्रुतयो वेदाश्चत्वारो निरीयुः । विरिञ्चिवदनाच्चतुर्वेदा इवेत्यविनश्वरोक्तिः । स्नानभस्मादिरूक्षकेशा जटास्तासां जूटो बन्धविशेषः स एव तटो रोधः । तटाद्धि जलानि निष्क्रामन्ति ॥ ६५ ॥

**प्रजा इति** ॥ अरविन्दनाभेर्विष्णोरङ्गात्प्रजा इव । 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतेरिति भावः । शम्भोर्जटाजूटतटादाप इव गङ्गाजलानीव विधातुर्मुखाच्छ्रुतय इव मुरजितो हरेर्ध्वजिन्यः सेनाः पुरान्निरीयुर्निर्गताः । मालोपमेयम् ॥ ६५ ॥

**श्लिष्यद्भिरन्योन्यमुखाग्रसङ्गस्खलत्खलीनं हरिभिर्विलोलैः ॥**
**परस्परोत्पीडितजानुभागा दुःखेन निश्चक्रमुरश्ववाराः ॥ ६६ ॥**

**श्लिष्यद्भिरिति** ॥ अश्ववाराः सादिनो दुःखेन क्लेशेन निश्चक्रमुर्निष्क्रान्ताः । किंभूताः विलोलैः आकुलैर्हरिभिरश्वैः करणभूतैः परस्परोत्पीडितजानुभागाः आकुलत्वादन्योन्यस्योत्पीडिता निखिलीकृता जानुभागा येषाम् । विलोलत्वमेव कुत इत्याह–किंभूतैरश्वैः अन्योन्यमुखाग्रसङ्गस्खलत्खलीनं यथा भवत्येवं श्लिष्यद्भिः मिलद्भिः अन्योन्यस्य इतरेतरस्य यो मुखाग्रसङ्गस्तुण्डव्यतिकरस्तेन स्खलन्ति खलीनानि कविकाः यत्र श्लेषे इति जातिबन्धः ॥ ६६ ॥

**श्लिष्यद्भिरिति** ॥ अन्योन्येषां मुखाग्रेषु सङ्गेन स्खलन्तः खलीनाः कविका यस्मिन्कर्मणि तद्यथा

---

(१) ०मुरजि० ।

तथा । 'कविका तु खलीनोऽस्त्री' इत्यमरः । श्लिष्यद्भिः सङ्घृष्यद्भिर्विलोलैः मुहुश्चलद्भिर्हरिभिस्तुरङ्गैः करणैः । अश्वान्वारयन्ति ये तेऽश्ववारा अश्वारोहाः परस्परेणोत्पीडितजानुभागाः सन्तो दुःखेन निश्चक्रमुर्निर्जग्मुः । अत्र स्वभावोक्त्यातिशयोक्तेः सङ्करः ॥ ६६ ॥

**निरन्तरालेऽपि विमुच्यमाने दूरं पथि प्राणभृतां गणेन ॥**
**तेजोमहद्भिस्तमसेव दीपैर्द्विपैरसम्बाधमयाम्बभूवे ॥ ६७ ॥**

निरन्तराले इति ॥ द्विपैर्हस्तिभिर्निरन्तरालेऽपि सङ्कटेऽपि पथि मार्गे असम्बाधमसङ्कटं सुखेन अयाम्बभूवे जग्मे अगामि। भावे लकारः, 'दयायासश्चे'ति अय आम्। ननु निरुच्छ्वासेऽपि पथि कथं विरलं गम्यते इत्याह—किंभूते पथि प्राणभृतां गणेन प्राणिसमूहेन दूरं दूरात् निरन्तरभयेन त्यज्यमाने, किंभूतैः द्विपैः तेजोमहद्भिः । तेजोमहान्तो बलिनो द्विपाः, षष्टिवर्षा इत्यर्थः । कैरिव दीपैरिव । यथा तमसा अन्धकारेण निर्विवरेऽपि पथि तेजोमहद्भिर्महाज्वालैः दीपैः सुखं गम्यते । तत्रापि दीपवशात्तमो मार्गं मुञ्चति । द्विपैरिति कर्तरि तृतीया, दीपैरिति करणे तृतीया । एवंविधमौपम्यं न तथाङ्गीकृतं यस्माद्दीपैरित्युपचारेण दीपवन्तः पुरुषा बोद्धव्याः, यथा यष्टीः प्रवेशयेति कर्तर्येव तृतीयेति वयं न विद्मः॥६७॥

निरन्तराले इति ॥ तमसा तिमिरेणेव प्राणभृतां गणेन प्राणिवर्गेण कर्त्रा निरन्तरालेऽपि पूर्वं स्वैर्नैवातिसङ्कटेऽपि पथि सम्प्रति दूरं दूरत एव विमुच्यमाने सति । एकत्र दीपभयादन्यत्र द्विपभयाच्चेत्यर्थः । तेजोमहद्भिर्बलाधिकैः प्रभासम्पन्नैश्च । 'तेजो बलं प्रभा तेजः' इति विश्वः । द्विपैर्दीपैरिवासम्बाधमसङ्कीर्णमयाम्बभूवे जग्मे । न त्वश्वैरिव कृच्छ्रादिति भावः । अय गतौ भावे लिट् 'दयायासश्च' इत्याम्प्रत्ययः । स्वतेजसैव दूरोत्सारिततमस्के दीपा इव तथोत्सारितप्राणिके पथि निरर्गलं द्विपाः प्रययुरित्यर्थः । तमसीति सप्तम्यन्तपाठे तु तमसः पथ्युपमानत्वे द्विपागमनात्पथ इव तमसो दीपागमनात्प्राकृतप्राणिवर्गेण निरन्तरालत्वं पश्चान्मुच्यमानत्वं च न सम्भवतीत्युपमानोपमेययोर्वैरूप्यं स्यात् । तृतीयान्तपाठे तमसः प्राणिवर्गोपमानत्वे तत्सारूप्यसाकल्यात्स एव साधीयानित्यालङ्कारिकाणां पन्थाः ॥ ६७ ॥

**शनैरनीयन्त रयात्पतन्तो रथाः क्षितिं हस्तिनखादखेदैः ॥**
**सयत्नसूताऽऽयतरश्मिभुग्नग्रीवाग्रसंसक्तयुगैस्तुरङ्गैः ॥ ६८ ॥**

शनैरिति ॥ तुरङ्गैर्वाजिभिः हस्तिनखात् पुरद्वारसमीपाच्च प्रदेशात् रथाः शनैर्मन्दं मन्दं क्षितिमनीयन्त समां भूमिं प्रापिताः । किं कुर्वन्तः रयात् पतन्तः वेगेनाधः पतन्तः । श्लक्ष्णोन्नताद्धि प्रदेशात् चक्रमवियुक्तं जवेनाधः पतति । किंभूतैस्तुरङ्गैः अखेदैः अश्रान्तैः, तथा सयत्नसूतायतरश्मिभुग्नग्रीवाग्रसंसक्तयुगैः सयत्नः सावधानो यः सूतः सारथिस्तेन आयतः आकृष्टो यो रश्मिः रज्जुबन्धः तेन भुग्ना वक्रीभूता या ग्रीवा कण्ठस्तस्या अग्रं तदन्तस्तत्र संसक्तं लग्नं युगं काष्ठविशेषो येषां ते तैः । पूर्द्वारि परिकूटं तु सन्तो हस्तिनखं विदुः । अनीयन्त इति कर्मणि लकारः । यौतिवाप्ररुभ्योगगिति(?) बाहुलकाद्युगशब्दः ६८

शनैरिति ॥ रयात्पतन्तो धावन्तो रथाः सयत्नैः सूतैः सारथिभिः । 'सूतः क्षत्ता च सारथिः' इत्यमरः । आयता आकृष्टा ये रश्मयः प्रग्रहाः । 'किरणप्रग्रहौ रश्मी' इत्यमरः । तैर्भुग्नेषु प्रह्वेषु ग्रीवाणामग्रेषु संसक्ता युगा युग्याः स्कन्धवाह्या दारुविशेषा येषां तैः, अत एवाखेदैरश्रमैस्तुरङ्गैः हस्तिनखात् । हस्तिनखः पूर्द्वारि मृत्कूटः । 'कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्' इत्यमरः । तस्माच्छनैः क्षितिमनीयन्त नीता इति स्वभावोक्तिः, यथावद्वस्तुवर्णनात् ॥ ६८ ॥

**वलोर्मिभिस्तत्क्षणहीयमानरथ्याभुजाया वलयैरिवास्याः ॥**
**प्रायेण निष्क्रामति चक्रपाणौ नेष्टं पुरो द्वारवतीत्वमासीत् ॥ ६९ ॥**

बलोर्मिभिरिति ॥ चक्रपाणौ श्रीवासुदेवे प्रायेण बाहुल्येन निष्क्रामति निःसरति सति अस्याः पुर्याः द्वारवतीत्वं स्वरूपमिष्टमभिप्रेतं न आसीत् । स धन्यो देशो यत्र देवः साक्षात्तिष्ठति । तच्छून्यया मया किं क्रियते इत्यबोधोत्यर्थः । या स्त्री बहुद्वारा भवति सा पुरुषेण चापल्येन त्यज्यते । अथ च द्वारवतीत्वं बहुद्वारत्वं तस्या नेष्टमभूत् । यदि हि मम बहूनि द्वाराणि नाभविष्यन् तत्कथमच्युतो बहिरयास्यत इति द्वारबहुत्वं निनिन्द । किंभूतायाः बलोर्मिभिः सेनावृन्दैः तत्क्षणहीयमानरथ्याभुजायाः तत्कालमेव हीयमाना-स्त्यज्यमाना रथ्या एव भुजा यस्याः सा । उत्प्रेक्षते—बलोर्मिभिः वलयैरिव कङ्कणैरिव । अन्यस्या अपि महिलायाः पत्युर्देशान्तरं गच्छतः आत्मा नैव बहुमतो भवति । खेदाच्च बाहुभ्यां वलयानि त्यजति । वलयं कटकम् ॥ ६९ ॥

बलोर्मिभिरिति ॥ बलान्यूर्मय इव तैर्बलोर्मिभिर्वलयैः कङ्कणैरिव तत्क्षणे हरिनिष्क्रमणक्षण एव हीयमाना अपरिच्यमाना रथ्या भुजेव यस्तास्तस्या । अत एवास्याः पुरो द्वारवत्याश्चक्रपाणौ कृष्णे निष्क्रामति निर्गच्छति सति प्रायेण भूम्ना द्वारवतीत्वं द्वारकात्वम् । स्वस्वरूपमिति यावत् । इष्टं नासीत् । हरिविरहे तद्वैफल्यादिति भावः । द्वारवतीशब्दस्य संज्ञात्वात् 'त्वतलोर्गुणवचनस्य' इति न पुंवद्भावः । अन्यत्र द्वारवतीत्वं द्वारवत्त्वं नेष्टं तस्य हरिनिष्क्रमणहेतुत्वादित्युभयथाऽप्युपमितभुजवलयगलनहेतुत्वा-दुपमासङ्कीर्णेयमनिष्टत्वोत्प्रेक्षा प्रायेणेत्यनेन व्यज्यते ॥ ६९ ॥

पारेजलं नीरनिधेरपश्यन्मुरारिरानीलपलाशराशीः ॥
वनावलीरुत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवलाभाः ॥ ७० ॥

पारेजलमिति ॥ मुरारिर्हरिः नीरधेः समुद्रस्य पारेजलं जलस्य पारं वनावलीरपश्यत् काननराजीर्विलोकयामास । कीदृशीः वनावलीः आनीलपलाशराशीः आनीला ईषत् नीलाः श्यामाः पलाशराशयः पर्णनिचया यासु, तथा उत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवलाभाः उत्कलिकासहस्रैः कल्लोलसमूहैः प्रतिक्षणं वारंवारम् उत्कूलितं कूलं प्रापितं शैवलं तद्वत् आभा कान्तिर्यासां ताः । अथ वा वनावलीः शैवलाभाः अपश्यत्, शैवालमित्युत्प्रेक्षाङ्के इत्येवं योज्यमिति । पारेजलमिति 'पारे मध्ये षष्ठ्या वे'ति समासः । एवं कूलमुत्प्रावयत्युत्कूलयति प्रातिपदिकाद्वा णिच्, ततः कर्मणि निष्ठा ॥ ७० ॥

अथासर्गसमाप्तेः समुद्रं वर्णयति—

पारेजलमिति ॥ मुरारिर्नीरनिधेः समुद्रस्य जलानां पारे परतीरे पारेजलम् । 'पारावारे परार्वाची तीरे' इत्यमरः । 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः । तत्संयोगादेकारान्तत्वं च पारेशब्दस्य । आसमन्तान्नीलाः पलाशानां पत्राणां राशयो यासां ताः । हरितपर्णपूर्णा इत्यर्थः । 'पत्रं पलाशं छदनम्' इत्यमरः । अत एवोत्कलिका ऊर्मयः । 'ऊर्मिरुत्कलिकोल्लोलकल्लोललहरिस्तथा' इति हलायुधः । तासां सहस्रैः प्रतिक्षणमुत्कूलिताः कूलमुन्नताः । कूलं प्रापिता इत्यर्थः । उत्कूलशब्दात् 'तत्करोति—' इति ण्यन्तात्कर्मणि क्तः । तेषां शैवलानामाभेवाभा यासां ताः । तत्सदृशीरित्यर्थः । वनावलीरपश्यत् । अत्रोत्कूलितशैवलस्य स्वतःसिद्धसन्देहादुपमोत्प्रेक्षयोः सन्देहसङ्करः ॥ ७० ॥

लक्ष्मीभृतोऽम्भोधितटाधिवासान्द्रुमानसौ नीरदनीलभासः ॥
लतावधूसम्प्रयुजोऽधिवेलं बहूकृतान्स्वानिव पश्यति स्म ॥ ७१ ॥

लक्ष्मीभृत इति ॥ असौ श्रीकृष्णः अधिवेलं वेलायां द्रुमान् पश्यति स्म वृक्षान् ददर्श । किंभूतान् वृक्षान् लक्ष्मीभृतः शोभाधारिणः, तथा अम्भोधितटाधिवासान् समुद्राग्रे कृतवसतीन्, तथा नीरदनीलभासः मेघवत् कालकान्तीन्, तथा लतावधूसम्प्रयुजः लता एव

वध्वः ताः सम्प्रयुञ्जते श्लिष्यन्तीति लतावधूसम्प्रयुजः, क्विप्, वल्लीकलत्रसंयुक्तान्। वल्लीसम्बद्धानित्यर्थः। उत्प्रेक्ष्यते—बहूकृतान् अनेकत्वमापादितान् स्वानिव आत्मदेहानिव ददर्श आत्मतुल्यान् मेने। अवबोधोऽत्र दृशेरर्थो नावलोकनम्। वेलासु विषये प्रचुरीकृतान् आत्मदेहानिव मेने। मदीया इवैते बहवो देहा (इति) अबोधीत्यर्थः। यतो लक्ष्मीभृतः। ये भगवदात्मानस्तेऽवश्यमेव वक्षसि श्रीभृतः समुद्रजलशायिनः मेघश्यामाश्च सत्यभामा-रुक्मिणीप्रभृतिवधूसंयुक्ताश्च। वेलायामधिवेलम्। वेला जलकृतमर्यादा ॥ ७१ ॥

लक्ष्मीभृत इति ॥ असौ हरिर्लक्ष्मीं शोभां श्रीदेवीं च बिभ्रतीति लक्ष्मीभृतस्तान् अम्भोधितटेऽधिवासो येषां तान्नीरदवन्नीलभासो नीलवर्णान् लता वध्व इवेत्युपमितसमासः। अन्यत्र लता इव वध्वः इति शाकपार्थिवादित्वान्मध्यमपदलोपी समासः। ताभिः सम्प्रयुज्यन्त इति सम्प्रयुजः सङ्गतान्। क्विप्। अधिवेलं वेलायाम्। विभक्त्यर्थेऽव्ययीभावः। द्रुमान्बहूकृताननेकीकृतान्स्वान्। स्वकीयविग्रहानिवेत्यर्थः। एवं च पुंलिङ्गतानिर्वाहः। आत्मपरत्वे नपुंसकत्वापातः। 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः। पश्यति स्म। श्लेषसङ्कीर्णेयमुत्प्रेक्षा ॥ ७१ ॥

आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ॥
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥ ७२ ॥

आश्लिष्टेति ॥ असौ हरिः आपगानां पतिं समुद्रम् अपस्मारिणमाशशङ्के भूताविष्टमबुद्ध उत्प्रेक्षाञ्चक्रे। किंभूतम् आश्लिष्टभूमिमाश्रितभुवं, तथा उच्चैरतिशयेन वा रसितारं शब्दायमानं, तथा लोलन्तश्चपला बाहुसदृशा महान्तः कल्लोला यस्य, तथा फेनायमानं, डिण्डीरान् वमन्तम्। अपस्मार्यपि भूताविष्टोऽपि भूमिमालिङ्गति उच्चैः रटति चपलभुजश्च भवति फेनं श्लेष्माणं चोद्वमति। 'फेनाच्चेति वक्तव्य'मिति क्यङ् ॥ ७२ ॥

आश्लिष्टेति ॥ आश्लिष्टभूमिमालिङ्गितभूतलमुच्चैस्तारं रसितारं क्रन्दितारं लोलतां चञ्चलतामितस्ततः पततां भुजानामाकार इवाकारो येषां ते बृहत्तरङ्गा यस्य तं तथोक्तं फेनायमानं फेनमुद्वमन्तम्। 'फेनाच्चेति वक्तव्यम्' इति क्यङ्। अपां समूह आपम्। 'तस्य समूहः' इत्यण्। तेन गच्छन्तीत्यापगास्तासां पतिं समुद्रम् असौ हरिरपस्मारिणमपस्माररोगिणमाशशङ्के। तत्कर्मयोगात्तथोत्प्रेक्षाञ्चक्रे इत्यर्थः। यथाहुर्नैदानिकाः—

'क्रुद्धैर्धातुभिराहतेऽथ मनसि प्राणी मनः सन्दिशन्दन्तान्खादति फेनमुद्गिरति दोःपादौ क्षिपन्मूढधीः।
पश्यन्रूपमसत्क्षितौ निपतति व्यर्थां करोति क्रियां बिभ्यत्स स्वयमेव शाम्यति गते वेगे त्वपस्माररुक्' ॥

पीत्वा जलानां निधिनाऽतिगार्ध्याद् वृद्धिं गतेऽप्यात्मनि नैव मान्तीः ॥
क्षिप्ता इवेन्दोः स रुचोऽधिवेलं मुक्तावलीराकलयाञ्चकार ॥ ७३ ॥

पीत्वेति ॥ स कृष्णः अधितीरं तटे मुक्तावलीः मौक्तिकानि आकलयाञ्चकार ददर्श मौक्तिकपङ्क्तीरपश्यत्। उत्प्रेक्ष्यते—इन्दोश्चन्द्रमसः रुच इव। किंभूता रुचः जलानां निधिना समुद्रेण अतिगार्ध्यादतिलौल्यात् अतिलाम्पट्यात् स्नेहवशाद्वापि च क्षिप्ता उद्वान्ताः। कुत एव क्षिप्ताः कीदृशीः आत्मनि विषये नैव मान्तीः अवर्तमानाः, किंभूते आत्मनि वृद्धिं गतेऽपि उल्लसितेऽपि। शशिकरव्यतिकरात् किलोदधिरुल्लसतीत्यागमः। अन्योऽपि बहु जग्ध्वा पीत्वा च उद्वमति ॥ ७३ ॥

पीत्वेति ॥ जलानां निधिना समुद्रेण गर्ध एव गार्ध्यम्। औपम्यादिवच्चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्। तदतिमात्रमतिगार्ध्यं तस्मात्। तृष्णाभरादित्यर्थः। गृध्नोः पुनरोगुणः 'वान्तो यि प्रत्यये' इति गार्ध्यमिति स्यात्। पीत्वा, क्षेपणक्रियापेक्षया पूर्वकालता। अथ वृद्धिं गते आत्मनि देहे। चन्द्रोदये समुद्रस्य वृद्धि-

रित्यागमः । नैव मान्तीरमान्तीः । अतिरिच्यमाना इत्यर्थः । मातेः शतरि ङीप् । आच्छीनद्योर्नुम् । चित्ता उद्गीर्णा अतितृष्णयोत्कटं पीत्वा । अन्तरमानाद्बहिरुद्रान्ता इत्यर्थः । इन्दो रुचो मरीचीरिवेत्युत्प्रेक्षा । स हरिरधिवेलमधितीरम् । 'वेला कूलविकारयोः' इति विश्वः । मुक्तावलीराकलयाञ्चकाराकलयामास । कलतिः कामधेनुः ॥ ७३ ॥

**साटोपमुर्वीमनिशं नदन्तो यैः प्लावयिष्यन्ति समन्ततोऽमी ॥**
**तान्येकदेशान्निभृतं पयोधेः सोऽम्भांसि मेघान्पिबतो ददर्श ॥ ७४ ॥**

**साटोपमिति** ॥ स कृष्णो मेघान् ददर्श जलदान् अपश्यत् । किं कुर्वतः पयोधेः समुद्रस्य एकदेशात् एकस्मात् प्रदेशात् निभृतं निःशब्दं यथा भवति तथा तानि अम्भांसि पिबतः गृह्णतः । तानि कानीत्याह—यैरम्भोभिरमी मेघाः समन्ततः सर्वदिक्षु उर्वीं पृथ्वीं प्लावयिष्यन्ति आपूरयिष्यन्ति कल्पान्ते जलमग्नां करिष्यन्ति । किंभूताः मेघाः साटोपं साडम्बरं यथा भवति एवमनिशमहोरात्रं नदन्तः गर्जन्तः । एतेन पृथुत्वकथनमब्धेः । यैः किल जलैरुर्वी पूर्यते स तस्यैकदेशः । अन्योऽपि कश्चिन्महाधनः कस्मैचित् स्वल्पमपि एतावत् ददाति न सर्वमपि, परमदरिद्रं कुरुते । आटोपः आस्फोटः आडम्बर इत्यर्थान्तरम् ॥ ७४ ॥

**साटोपमिति** ॥ अमी मेघाः साटोपं ससम्भ्रमम् । 'सम्भ्रमाटोपसंरम्भाः' इति **यादवः** । अनिशं नदन्तो गर्जन्तो यैस्तोयैरम्भोभिरुर्वीं समन्ततः प्लावयिष्यन्ति तान्यम्भांसि पयोधेरेकदेशादेककोणान्निभृतं निश्चलं यथा तथा पिबतो मेघान् स हरिर्ददर्श । एतेन समुद्रस्यापरिच्छिन्नरूपत्वं व्यज्यते ॥ ७४ ॥

**उद्धृत्य मेघैस्तत एव तोयमर्थं मुनीन्द्रैरिव सम्प्रणीताः ॥**
**आलोकयामास हरिः पतन्तीर्नदीः स्मृतीर्वेदमिवाम्बुराशिम् ॥ ७५ ॥**

**उद्धृत्येति** ॥ हरिः श्रीनारायणोऽम्बुराशिं समुद्रं पतन्तीः प्रविशन्तीर्नदीरालोकयामास अद्राक्षीत् । का इव कं पतन्तीरित्याह—स्मृतीरिव । यथा कश्चित् स्मृतीर्मन्वादिप्रणीतानि धर्मशास्त्राणि वेदं पतन्तीः अन्तर्भवन्तीः तेन सहैकार्थं यान्तीर्विलोकयति । अर्थसारूप्यमेव स्मृतीनां श्रुतिषु निपातः । कीदृशीर्नदीः अत एव समुद्रादेव मेघैर्जलदैस्तोयमुद्धृत्य जलं गृहीत्वा सम्प्रणीताः । वृद्धिं नीता इत्यर्थः । मेघमुखेन हि समुद्रादेव नदीनामुत्पत्तिः । कैरिव यथा मुनीन्द्रैः मनुयाज्ञवल्क्यपराशरादिभिः तत एव वेदादेव अर्थमुद्धृत्य स्मृतयः प्रणीता निष्पादिताः । स्मृतयो हि मन्वादिभिः ऋषिश्रेष्ठैः वेदादेवाभिधेयं गृहीत्वा सम्प्रणीताः रचिताः । यदा हि वेदान्न कश्चिद् बुध्यते तदा लोकहिताय मुनिभिः तदर्थ एव स्मृतिषु निबद्धः । उत्पद्यन्ते च तत्रैव ता विलीयन्ते । मेघा मुनिभिरुपमीयन्ते, तोयमर्थेन, नद्यः स्मृतिभिः, उदधिर्वेदेन । तत इवादयोऽनेके एव न्याय्या इत्थमभियुक्ताः । यथा कालिदासस्य—'ततः प्रतस्थे कौबेरी'मित्यादि ॥ ७५ ॥

**उद्धृत्येति** ॥ मुनीन्द्रैस्ततो वेदाद्वेदार्थमिव मेघैस्ततोऽम्बुराशेरेव तोयमुद्धृत्य सम्प्रणीताः कृता अम्बुराशिं पतन्तीः प्रविशन्तीर्नदीर्वेदं पतन्तीः स्मृतीर्मन्वादिसंहिता इव हरिरालोकयामास । श्रुतिमूलत्वेनैव प्रामाण्यात्स्मृतीनाम् । तत्संवाद एव तत्संप्रवेशः । अनेकैवेयमुपमा ॥ ७५ ॥

**विक्रीय दिश्यानि धनान्युरूणि द्वैप्यानसावुत्तमलाभभाजः ॥**
**तरीषु तत्रत्यमफल्गु भाण्डं सांयात्रिकानावपतोऽभ्यनन्दत् ॥ ७६ ॥**

**विक्रीयेति** ॥ असौ हरिः सांयात्रिकान् पोतवणिजोऽभ्यनन्दत् श्लाघे प्रशशंस ।

तानग्रतः शकुनभूतानालोक्य तुतोषेत्यर्थः । किंभूतान् द्वैप्यान् द्वीपान्तरसम्बन्धिनः, किं कुर्वतः तत्रत्यं सामुद्रं भाण्डमर्घं तरीषु वेडासु आवपतः निक्षिपतः । राशीकुर्वाणानित्यर्थः । कीदृशं भाण्डम् अफल्गु उत्तमं महत्, मूल्यमित्यर्थः । किं कृत्वा तरीषु राशीकुर्वतः दिश्यानि दिगन्तरभवानि धनानि तत्रान्यत्र वा विक्रीय, किंभूतानि उरूणि महामूल्यानि, कीदृशाः उत्तमलाभभाजः उत्तममनूनं लाभमधिकं धनं भजन्ते इत्युत्तमलाभभाजः । मूल्यादतिरिक्तं द्रव्यं लाभः । अन्यतो भाण्डमानीय तत्र विक्रीयापरं तत्रत्यं वाऽन्यतो नयन्त-इत्यर्थः । दिशि भवं दिश्यं दिगादिभ्यो यत् । द्वीपे भवा द्वीप्याः द्वीपादनुसमुद्रं यञ् । जलयानपात्रं तरी । तत्र भवं तत्रत्यम् अव्ययात् त्यप् । संयान्त्यनेनेति संयात्रं यानपात्रं, ष्ट्रन् ,(१) तेन तरन्ति प्लवन्ते इति सांयात्रिकाः पोतवणिजः, 'तरती'ति ठक् । आवपतइति शतृ, शस्(२) ॥ ७६ ॥

विक्रीयेति ॥ दिक्षु भवानि दिश्यानि । दिगन्तराऽऽनीतानीत्यर्थः । दिगादिभ्यो यत् । उरूणि महान्ति धनानि नानाद्रव्याणि विक्रीय मूल्येन दत्त्वा उत्तमलाभं द्वैगुण्यादिकं भजन्तीति तानुत्तमलाभभाजः । तत्रत्यं. द्वैप्यमित्यर्थः । अव्ययात्त्यप् । अफल्गु सारवत् । 'फल्गु तुच्छमसारं च' इति यादवः । भाण्डं मूलधनम् । पण्यद्रव्यमित्यर्थः । 'वणिङ्मूलधने पात्रे भाण्डं भूषाश्वभूषयोः' इति वैजयन्ती । तरीषु नौषु । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । 'अविस्तरिस्तन्त्रिः-'इत्यौणादिक इकारप्रत्ययः । आवपत आदधतः। वपतेः शतृप्रत्ययः । द्वैप्यान्समुद्रद्वीपवासिनः । 'द्वीपादनुसमुद्रं यञ्' इति यञ्प्रत्ययः । संयात्रा सम्भूय यात्रा, सा प्रयोजनमेषां तान्सांयात्रिकान्पोतवणिजः । 'सांयात्रिकः पोतवणिक्' इत्यमरः । 'प्रयोजनम्' इति ठक् । असौ हरिरभ्यनन्दत् ॥ ७६ ॥

**उत्पित्सवोऽन्तर्नदभर्तुरुच्चैर्गरीयसा निःश्वसितानिलेन ॥**
**पयांसि भक्त्या गरुडध्वजस्य ध्वजानिवोच्चिक्षिपिरे फणीन्द्राः ॥७७॥**

उत्पित्सव इति ॥ फणीन्द्राः सर्पश्रेष्ठाः निःश्वसितानिलेन फूत्कारेन पयांसि उच्चिक्षिपिरे उर्ध्वं प्रेरयन्ति स्म । किंभूतेन गरीयसा बलवता, सर्पाः किंभूताः नदभर्तुः समुद्रस्य अन्तर्मध्यात् उत्पित्सवः उत्पतितुकामाः । जातिस्वभाव एव तेषां यदुत्पतन्ति, प्लवनकृतेरूर्ध्वं जलानि प्रेरयन्ति । उत्प्रेक्ष्यते—गरुडध्वजस्य श्रीकृष्णस्य भक्त्या सेवया उच्चैः ध्वजानिव चिह्नानीवोच्चिक्षिपुः । यतोऽसौ गरुडध्वजः गरुडस्याऽहिर्भक्ष्यः, अत एव तस्मादातङ्कं त्वमस्माकं निवर्तयेरिति बुद्ध्या शौरेर्ध्वजसाधारण्येनैव सेवा भवेदित्यर्थः । उत्पित्सव इति 'सनि मीमे'ति इस्, अभ्यासलोपः । उच्चिक्षिपिरे इति कर्मणि लकारः ७७

उत्पित्सव इति ॥ नदभर्तुः समुद्रस्यान्तरभ्यन्तरादुत्पित्सव उत्पतितुमिच्छवः । पततेः सन्नन्तादुप्रत्ययः । 'सनि मीमा-' इत्यादिना इसादेशः । 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । फणीन्द्राः सर्पा भक्त्या गरुडध्वजस्य हरेर्ध्वजानिव गरीयसाऽतिमहता निःश्वसितानिलेन मुखमारुतेन पयांस्युच्चैरुच्चिक्षिपिरे उत्क्षिप्तवन्तः । उत्प्रेक्षा । स्वरितेत्त्वादात्मनेपदम् ॥ ७७ ॥

**तमागतं वीक्ष्य युगान्तबन्धुमुत्सङ्गशय्याशयमम्बुराशिः ॥**
**प्रत्युज्जगामेव गुरुप्रमोदप्रसारितोत्तुङ्गतरङ्गबाहुः ॥ ७८ ॥**

तमिति ॥ सोल्लासत्वात् बहुवीचित्वाच्चाब्धेः कविरुत्प्रेक्षते—अम्बुराशिः समुद्रः तं कृष्णमागतं वीक्ष्य प्रत्युज्जगामेव अग्रत एव निर्ययौ । प्रत्युत्थानमिव चकारेत्यर्थः ।

---

( १ ) 'हुयामाश्रुभसिभ्यस्त्रन्' इत्युणादिसूत्रेणेत्यर्थः । ( २ ) आवपन्ते इति शानच्—मूलपुस्तके ।

यतो युगान्ताबन्धुं कल्पान्तमित्रम् । कुतः कल्पान्तसुहृत्त्वं तस्येत्याह—उत्सङ्गशय्याशयमङ्कशय्याशायिनम् । कस्मादेवं भवानुत्प्रेक्षते इत्याह—किंभूतः गुरुप्रमोदप्रसारितोत्तुङ्गतरङ्गबाहुः गुरुणा प्रमोदेन हर्षेण प्रसारिता दीर्घिता उत्तुङ्गा उन्नतास्तरङ्गाः कल्लोला एव बाहवो येन सः तथोक्तः । यो हि देशान्तरादागतं सुहृदं प्रत्युद्गच्छति, स आलिङ्गनाय हर्षेण बाहू प्रसारयति । शेतेऽस्यामिति शय्या, क्यप्, तत्र शेते 'अधिकरणे शेतेः' इत्यच् ॥७८॥

तमिति ॥ अम्बुराशिर्युगान्तबन्धुम् । आपद्बन्धुमित्यर्थः । उत्सङ्ग एव शय्या तस्यां शेत इति तथोक्तम् । 'अधिकरणे शेतेः' इत्यच्प्रत्ययः । आगतमभ्यागतं तं हरिं वीक्ष्य गुरुणा प्रमोदेन प्रसारिता-उत्तुङ्गास्तरङ्गा एव बाहवो यस्य सः सम्प्रत्युज्जगाम संमेलनार्थमागतवानिवेति क्रियास्वरूपोत्प्रेक्षा ॥७८॥

उत्सङ्गिताम्भःकणिको (१)नभस्वानौदन्वतः स्वेदलवान्ममार्ज ॥
तस्यानुवेलं व्रजतोऽधिवेलमेलावना(२)स्फालनलब्धगन्धः ॥ ७९ ॥

उत्सङ्गितेति ॥ औदन्वतः सामुद्रो नभस्वान् वायुः तस्य हरेरनुवेलं वेलासमीपे व्रजतः सतः स्वेदलवान् घर्मकणिकाः अतिवेलमतिशयेन ममार्ज स्फेटयामास । कीदृग्वायुः उत्सङ्गिताम्भःकणिकः उत्सङ्गिता ऊर्ध्वीकृता इतस्ततः प्रेरिताः अथ उत्सङ्गिता मध्ये गृहीताः अम्भःकणिका जलविप्रुषो येन सः, तथा एलावनस्यास्फालनेन सङ्गेन लब्धो गन्धः सौरभं येन । अनुवेलमिति सामीप्ये विभक्त्यर्थेऽव्ययीभावः । वेलामतिक्रान्तमतिवेलमिति क्रियाविशेषणम् ॥ ७९ ॥

उत्साङ्गितेति ॥ उत्साङ्गिनः संसर्गिणः कृता उत्सङ्गिताः । 'तत्करोति-'इति ण्यन्तात्कर्मणि क्तः । उत्सङ्गिता अम्भःकणा येनेति । 'शेषाद्विभाषा' इति कप् । एलालतानामास्फालनेन सङ्घर्षणेन लब्धगन्धः एवं शिशिरसुरभिरुदन्वतो नभस्वान्समुद्रस्य वायुरधिवेलं वेलायाम् । विभक्त्यर्थेऽव्ययीभावः । व्रजतस्तस्य हरेः स्वेदलवाननुवेलं प्रतिक्षणम् । यथार्थेऽव्ययीभावः । ममार्ज जहार । 'वेला कूले च जलधेर्वेला तीरविकारयोः' इति विश्वः । काव्यलिङ्गम् ॥ ७९ ॥

उत्तालतालीवनसम्प्रवृत्तसमीरसीमन्तितकेतकीकाः ॥
आसेदिरे लावणसैन्धवीनां चमूचरैः कच्छभुवां प्रदेशाः ॥ ८० ॥

उत्तालेति ॥ चमूचरैः सेनाचरैः लावणसैन्धवीनां क्षीरोदधिसम्बन्धिनीनां कच्छभुवां कच्छभूमीनां प्रदेशाः भागाः आसेदिरे प्राप्ताः । कीदृशाः उत्तालतालीवनसम्प्रवृत्तसमीरसीमन्तितकेतकीकाः उत्तालमुन्नतं यत्तालीवनं वृक्षविशेषकाननं तस्मात्सम्प्रवृत्तो निःसृतो यः समीरः सदागतिः तेन सीमन्तिता द्विधाकृताः केतक्यो लताभेदास्तत्कुसुमानि वा यत्र ते तथोक्ताः इति सौगन्ध्योक्तिः । नद्यृदन्ताद्बहुव्रीहौ कः । सीमन्तशब्दोऽत्रौपचारिकः । केतक्याः पुष्पमिति विवक्षायां 'पुष्पमूलेषु बहुल'मिति विकारेऽणो लुक् । आसेदिरे कर्मणि लकारः । लवणसिन्धुरपरसमुद्रस्तस्येमा लावणसैन्धव्यः, 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य चे'त्युभयपदवृद्धिः । कच्छभूस्तदन्तरं निकटो वा विषमो भागः ॥ ८० ॥

उत्तालेति ॥ चमूषु चरन्तीति चमूचराः सैनिकाः । 'चरेष्टः' इति टप्रत्ययः । तैरुत्तालेषून्नतेषु तालीवनेषु सम्प्रवृत्तेन समीरेण मारुतेन सीमन्तिताः सीमन्तिन्यः कृताः । सीमन्तशब्दान्मत्वन्तात् 'तत्करोति-' इति ण्यन्तात्कर्मणि क्तः । णाविष्ठवद्भावे विन्मतोर्लुक् । ताः केतक्यो येषु ते तथोक्ताः । 'नद्यृतश्च' इति कप् । लवणसिन्धोरिमा लावणसैन्धव्यः । 'तस्येदम्' इत्यण् । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य-' इत्यु-

(१) कणको नभस्वानुद० । (२) ०मेलालता ।

भयपदवृद्धिः । तासां कच्छभुवामनूपभूमीनाम् । 'जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः' इत्यमरः । प्रदेशा देशा आसेदिरे प्राप्ताः । सीदतेः कर्मणि लिट् । अत्र स्वभावोक्तिरनुप्रासश्चालङ्कारौ । ओजःश्लेषसौशब्दसौकुमार्याद्यनेकगुणसम्पत्तिः स्पष्टा ॥ ८० ॥

**लवङ्गमालाकलितावतंसास्ते नारिकेलान्तरपः पिबन्तः ॥**
**आस्वादितार्द्रक्रमुकाः समुद्रादभ्यागतस्य प्रतिपत्तिमापुः(१) ॥ ८१ ॥**

**लवङ्गेति** ॥ ते चमूचराः समुद्रात् अब्धिसकाशात् अभ्यागतस्य अतिथेः सम्बन्धिनीं प्रतिपत्तिं पूजामापुर्लेभिरे । यथा आगन्तुकः पूज्यते, तथा समुद्रेण तेऽभ्यर्चिता इत्यर्थः । किंभूतास्ते लवङ्गमालाभिः सुगन्धिवृक्षस्रग्भिराकलिता ग्रथिता अवतंसाः शेखरा यैस्ते, तथा नारिकेलस्य सुगन्धिफलविशेषस्य अन्तरभ्यन्तरे या आपोऽम्भः ताः पिबन्तः, तथा आस्वादितानि आर्द्राणि सरसाणि क्रमुकानि पूगफलानि यैस्ते तथोक्ताः । योऽप्यभ्यागतः तस्मै पुष्पाणि पानं ताम्बूलं च दीयते । नारिकेलान्तरप इति पृथक् पदे । अन्तःशब्दोऽधिकरणप्रधानः । सर्गेऽत्र वृत्तमुपजातयः ॥ ८१ ॥

**लवङ्गेति** ॥ लवङ्गमालाभिर्लवङ्गकुसुममाल्यैः कलितावतंसाः कृतभूषणाः । नारिकेलान्तरित्यव्ययम् । नारिकेलाभ्यन्तर इत्यर्थः । अप इति पृथक्पदम्, समासे 'ऋक्पूर—'इत्यादिना समासान्तप्रसङ्गात् । पिबन्तः, आस्वादिता भक्षिता आर्द्रक्रमुका आर्द्रपूगीफलानि यैस्ते । 'घोण्टा तु पूगः क्रमुकः' इत्यमरः । ते चमूचराः समुद्रादभ्यागतस्यातिथेः प्रतिपत्तिं गौरवं सत्कारमीयुः । 'प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च' इति विश्वः । अत्राभ्यागतप्रतिपत्तिप्राप्तेर्विशेषणगत्या अवतंसकलनादिपदार्थहेतुत्वात्काव्यलिङ्गमलङ्कारः । तेन समुद्रचमूचराणां गृहस्थाभ्यागतोपम्यप्रतीतेरलङ्कारेणालङ्कारध्वनिः ॥ ८१ ॥

**तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः**
**प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता ॥**
**परिचलतो बलानुजबलस्य पुरः सततं धृतश्रिय-**
**श्चिरविगतश्रियो जलनिधेश्च तदाऽभवदन्तरं महत् ॥ ८२ ॥**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये पुरीप्रस्थानं नाम तृतीयः सर्गः ॥ ३ ॥

**तुरगेति** ॥ तदा तस्मिन् काले बलानुजबलस्य बलो हलधरस्तस्यानुजः कनीयान् भ्राता कृष्णस्तस्य बलं सैन्यं तस्य कृष्णसैन्यस्य जलनिधेः समुद्रस्य च महदन्तरं व्यवधानमभवत । समुद्रात्तद्बलं दूरं गतमित्यर्थः । किंभूतस्य बलस्य पुरः पुर्याः परिचलतः सञ्चरतः । अथ वाऽन्तरं विशेषो महानेवाऽभवदित्युक्त्या कथितं तदत्र विशेषणद्वारेणाह—कारुशस्य सैन्यस्य परितः समन्तात् तुरगशतैरदर्वीयैराकुलस्य व्याप्तस्य, समुद्रस्य किंभूतस्य केवलमेकस्य तुरङ्गस्योच्चैःश्रवसो जन्मोत्पत्तिर्यतस्तस्यैकतुरङ्गजन्मनः । बलस्य प्रतिपथं मार्गे प्रमथिताः चूर्णीकृताः भूभृतो विपक्षा राजानः पर्वता वा येन तस्य, उदधेः अत्यर्थं महीभृता मन्दरेण मथितस्य । बलस्य सर्वदा सश्रीकस्य शोभायुक्तस्य वा, अम्बुधेः पुनः चिरं बहुकालं विगता निवृत्ता श्रीर्लक्ष्मीर्यस्य । एवं बलमश्वीयवृतं मथितभूभृत सश्रीकं च, समुद्रस्तु निस्तुरङ्गो भूभृता मथितो निःश्रीकश्चेति महदेवैतदन्तरम् । व्यतिरेकोऽलङ्कारः । रुचिरा वृत्तम् ॥ ८२ ॥

इत्यानन्ददेवायनिवल्लभविरचितायां शिशुपालवधटीकायां
सन्देहविषौषधिव्याख्यायां तृतीयः सर्गः ।

---

(१) ०मीयुः ।

तुरगेति ॥ परितस्तुरगशतैराकुलस्य । अपरिमिताश्वस्येत्यर्थः । प्रतिपथं प्रतिमार्गम् । यथार्थेऽव्ययीभावे समासान्तः । प्रमथिताः क्षुण्णा भूभृतो राजानो गिरयश्च येन तस्य । न तु स्वयं केनापि मथितस्येति भावः । सततं धृता श्रीः शोभा रमा च येन तस्य धृतश्रियः, पुरोऽग्रे नगराद्वा परिचलतः परिगच्छतः बलो रामस्तस्यानुजस्य हरेर्बलस्य । 'बलं सैन्ये बलो रामे' इत्युभयत्रापि शाश्वतः । परं केवलमेकस्यैव तुरङ्गस्य जन्म जन्ममात्रं यस्मात्तस्यैकतुरङ्गजन्मनः । एकोऽपि जात एव न त्वस्तीति भावः । महीभृता मन्दराद्रिणा राज्ञा च माथितस्य । न तु स्वयं कस्यापि मन्थिता । सततं विगतश्रियः । उत्पत्त्यनन्तरमेवास्या हरिस्वीकरणादिति भावः । जलनिधेश्च तदा प्रस्थानसमये महदन्तरं दूरगमनादिव्यवधानम् उक्तरीत्या महत्तारतम्यं चाभवत् । अत्रोपमेयस्य हरिबलस्योपमानाज्जलधेराधिक्यवर्णनाद् व्यतिरेकालङ्कारः । पञ्चकावली वृत्तम् । 'नभजजजा जरौ नरपते ! कथिता भुवि पञ्चकावली' इति लक्षणात् । धृतश्रीवृत्तमिति कश्चित् । 'नभजपुरस्कृता जजजरा रचिता भुवि रुद्रदिक्पतिः' इति लक्षणात् ॥ ८२ ॥

इति श्रीमहोपाध्यायकोलाचमल्लिनाथसूरिविरचिते शिशुपालवधकाव्यव्याख्याने सर्वङ्कषाख्ये तृतीयः सर्गः ॥ ३ ॥

---

# चतुर्थः सर्गः ।

**निःश्वासधूमं सह रत्नभाभिर्भित्त्वोत्थितं भूमिमिवोरगाणाम् ॥**
**नीलोपलस्यूतविचित्रधातुमसौ गिरिं रैवतकं ददर्श ॥ १ ॥**

**निःश्वासेति** ॥ असौ हरिर्गच्छन् रैवतकं गिरिं ददर्श रैवतकाख्यं पर्वतमद्राक्षीत् । कथंभूतं नीलोपलस्यूतविचित्रधातुं नीलोपलैरिन्द्रनीलमणिभिः स्यूताः सम्बद्धाः संमिलिता विचित्रा नानाविधा धातवो गैरिकमनःशिलाद्या यस्य सः तम् । अतश्चोत्प्रेक्ष्यते— उरगाणां निःश्वासधूममिव तत्कृतोष्माणमिव । किंभूतं भूमिं भित्त्वा उत्थितं पृथ्वीं विदार्य उत्पन्नं, कथं रत्नभाभिः सह शिरोमणिभिः सार्धम् । धूमसंस्थानीया नीलोपलाः, रत्नरुचिनिभा धातवः । उरसा गच्छन्तीत्युरगाः 'उरसो लोपश्चे'ति डः सलोपश्च । अत्र सर्गार्धे इन्द्रवज्रोपेन्द्रवज्रासंयोगेन द्वादशप्रभेदाः उपजातयो वृत्तम् ॥ १ ॥

निःश्वासेति ॥ नीलोपलैरिन्द्रनीलमणिभिः स्यूताः प्रोता विचित्रा नानावर्णा धातवो गैरिकादयो यस्य तम् । अत एव रत्नभाभिर्मणिप्रभाभिः सह भूमिं भित्त्वोत्थितमूर्ध्वं निर्गतम् उरगाणां निःश्वासधूमं फूत्कारबाष्पमिव स्थितं रैवतकाख्यं गिरिमसौ हरिर्ददर्श । स्यूतेति सीव्यतेः कर्मणि क्तः । 'च्छ्वोः शूडनुनासिके च' इत्यूठादेशे यणादेशः । अत्र गिरेर्विशिष्टवर्णनीयत्वेन विशिष्टधूमत्वोत्प्रेक्षणाद् गुणनिमित्तजातिस्वरूपोत्प्रेक्षा । सर्गेऽस्मिन्नानावृत्तानि । तत्रादावष्टादशोपजातयः । तल्लक्षणं तूक्तमतीतानन्तरसर्गादौ । अत्रासर्गसमाप्तेर्गिरिवर्णनमेव ॥ १ ॥

**गुर्वीरजस्रं दृषदः समन्तादुपर्युपर्यम्बुमुचां वितानैः ॥**
**विन्ध्यायमानं दिवसस्य भर्तुर्मार्गं पुना रोद्धुमिवोन्नमद्भिः ॥ २ ॥**

**गुर्वीरिति** ॥ कीदृशमसौ रैवतकमद्राक्षीत् अम्बुमुचां वितानैर्मेघवृन्दैः अजस्रं सदा विन्ध्यायमानं विन्ध्याद्रिमिव आचरन्तम् । कीदृशैः समन्तात् सर्वतः दृषदः शिला उपरि उपरि स्थितैः समीपे निषण्णैः, किंभूताः दृषदः गुर्वीः महतीः, किं कुर्वद्भिः उन्नमद्भिः ऊर्ध्वं गच्छद्भिः । अत श्चोत्प्रेक्ष्यते—दिवसस्य भर्तुः श्रीसूर्यस्य मार्गं पुनः भूयोऽपि रोद्धुमिव निवारयितुमिवोन्नतम् । अत एव विन्ध्यायमानम् । विन्ध्येन हि आत्मानं दीर्घीकृत्य

सूर्यस्य गतागतं निवर्तितमासीत इत्यागमः । इवशब्दोऽत्र युक्ततरः । कवयस्त्वन्ये न तथा प्रयुञ्जते । विन्ध्य इवाचरति । दृषद इति उपर्यधोधीनां सामीप्ये द्वितीया ॥ २ ॥

गिरिं ददर्शेत्युक्तम् , कीदृगित्याकाङ्क्षायामेकान्वयेनाष्टाभिर्विशिनष्टि—

**गुर्वीरिति** ॥ गुर्वीर्महतीर्दृषदः । शिलातटीरित्यर्थः । 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः । उपर्युपरि दृषदां समीपे । उपरिप्रदेश इत्यर्थः । 'उपर्यध्यधसः सामीप्ये' इति द्विर्भावे तद्योगाद् द्वितीयेति । यथाह वामनः—'उपर्यादिषु सामीप्ये द्विरुक्तेषु द्वितीया' इति । समन्तादजस्रमुन्नमद्भिः । देशकालाविच्छेदेनोत्पतद्भिरित्यर्थः । अत एव तैरम्बुमुचां वितानैर्मेघवृन्दैर्निमित्तैर्दिवसस्य भर्तुः सूर्यस्य मार्गं पुना रोद्धुम् । संहितायां 'रोरि' इति रलोपः 'ढ्रलोपे-' इति दीर्घः । विन्ध्यायमानमिव विन्ध्यवदाचरन्तम् । तद्वद्वर्धमानमिव स्थितमित्यर्थः । आचारे क्यङन्ताल्लटः शानजादेशः । अत्राविच्छिन्नमेघोन्नमनेन विन्ध्यायमानत्वोत्प्रेक्षणात्क्रियानिमित्तक्रियास्वरूपोत्प्रेक्षा ॥ २ ॥

**क्रान्तं रुचा काञ्चनवप्रभाजा नवप्रभाजालभृतां मणीनाम् ॥**
**श्रितं शिलाश्यामलताऽभिरामं लताभिरामन्त्रितषट्पदाभिः ॥ ३ ॥**

**क्रान्तमिति** ॥ कीदृशं गिरिं ददर्श नवप्रभाजालभृतां अभिनवकान्तिपटलधारिणां मणीनां रुचा भासा क्रान्तं व्याप्तम् । किंभूतया रुचा काञ्चनवप्रभाजा काञ्चनस्य सुवर्णस्य वप्रं तटं भजते इति काञ्चनवप्रभाक् तया, अन्यत् कीदृशं लताभिः श्रितं वल्लीभिः सेवितं, कीदृशीभिः सौगन्ध्यवशात् आमन्त्रितपट्पदाभिः आमन्त्रिता आहूता इव षट्पदा भ्रमरा याभिः, ततः पुनः कीदृशं नगं शिलाश्यामलताभिरामं शिलानां श्यामलतया कृष्णत्वेन अभिरामं रम्यम् । श्याम एव श्यामलः । अथवा श्यामं गुणं लान्ति गृह्णन्तीति श्यामलास्तद्भावः श्यामलता । श्यामत्वयुक्ताभिराममित्यर्थः ॥ ३ ॥

**क्रान्तमिति** ॥ पुनर्नवानि प्रभाजालानि बिभ्रतीति नवप्रभाजालभृतस्तेषां मणीनां सम्बन्धिन्या काञ्चनवप्रभाजा स्वर्णसानुप्रसृतया रुचा दीप्त्या क्रान्तं व्याप्तम् । पुनः शिलानां मेचकोपलानां इन्द्रनीलानां वा श्यामलतया श्यामलिम्ना अभिरामम् । तथा आमन्त्रितषट्पदाभिर्मकरन्दपूरितत्वादाहूतभृङ्गाभिर्लताभिः श्रितं व्याप्तम् । इतः परं श्लोकान्तरमेकं यमकं वक्ष्यति । तत्र तदेवालङ्कारः । अर्थालङ्कारस्त्वभ्युच्चेय इति यथासम्भवमूह्यम् । यमकलक्षणं त्वाचार्यदण्डिनोक्तम्—

'अव्यपेतव्यपेतात्मा या वृत्तिर्वर्णसंहतेः ।
यमकं तच्च पादानामादिमध्यान्तगोचरम् ॥
एकद्वित्रिचतुष्पादयमकानां प्रकल्पना ।
आदिमध्यान्तमध्यान्तमध्याद्यन्तसर्वतः ॥
अत्यन्तं बहवस्तेषां भेदाः सम्भेदयोनयः ।
सुकरा दुष्कराश्चैव दृश्यन्ते तत्र केचन' ॥

इति ॥ ३ ॥

**सहस्रसंख्यैर्गगनं शिरोभिः पादैर्भुवं व्याप्य वितिष्ठमानम् ॥**
**विलोचनस्थानगतोष्णरश्मिनिशाकरं साधुहिरण्यगर्भम् ॥ ४ ॥**

**सहस्रेति** ॥ अपरं किंभूतं नगं सहस्रसंख्यैरनेकगणनैः शिरोभि शिखरैः गगनं व्योम, अपरं पादैः पर्यन्तपर्वतैः भुवं पृथ्वीं व्याप्य वितिष्ठमानं स्थितम् । पुनः कीदृशं नगं विलोचनस्थानगतोष्णरश्मिनिशाकरं विलोचनस्थानं मध्यप्रदेशः तत्र गतौ स्थितौ उष्णरश्मिनिशाकरौ अर्केन्दू यस्य सः तम् इति उच्चत्वोक्तिः ।;पुनः किंविधं साधुहिरण्यगर्भं साधु-

शोभनं हिरण्यं सुवर्णं गर्भे मध्ये यस्य सः तम्, अथ वा साधुहिरण्यगर्भमिव साधुहिरण्यगर्भं साधु अखण्डमेव हिरण्यगर्भं ब्रह्माणमित्यधिकः श्लेषः । ब्रह्मापि एवंविधः, सहस्रसंख्यैर्मस्तकैः खमाकाशं पादैश्चरणैर्भुवमापूर्य स्थितः, चक्षुषोश्चन्द्रादित्यौ च वहति । उक्तं च वेदे—'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' इति । तथा—

यथाग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ।
सूर्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः ॥　　　　॥ ४ ॥

सहस्रेति ॥ सहस्रमिति संख्या येषां तैः सहस्रसंख्यैः शिरोभिः शिखरैः शीर्षैश्च गगनं तथा तत्संख्यैः पादैः प्रत्यन्तपर्वतैश्चरणैश्च भुवं च व्याप्य वितिष्ठमानमवतिष्ठमानम् । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । विलोचनयोर्नेत्रस्थानं योग्यदेशस्तद्गतावुष्णरश्मिनिशाकरौ यस्य तम् । अन्यत्र नेत्रीकृतार्केन्दुमित्यर्थः । अतः साधु सत्यं हिरण्यगर्भं ब्रह्माणमिवेत्युत्प्रेक्षा । 'सहस्रशीर्षा' इत्यादिश्रुतेरिति भावः । हिरण्यगर्भो निधिगर्भश्च ॥ ४ ॥

क्वचिज्जलाऽपायविपाण्डुराणि धौतोत्तरीयप्रतिमच्छवीनि ॥
अभ्राणि बिभ्राणमुमाङ्गसङ्गविभक्तभस्मानमिव स्मरारिम् ॥ ५ ॥

क्वचिदिति ॥ किं कुर्वाणं नगं क्वचित् कस्मिंश्चित् प्रदेशे अभ्राणि बिभ्राणं मेघान् उद्वहन्तम् । किंभूतान्यभ्राणि जलापायविपाण्डुराणि तोयवृष्ट्या श्वेतानि । अत एव धौतोत्तरीयप्रतिमच्छवीनि धौतं प्रक्षालितं यदुत्तरीयमुत्तरासङ्गवस्त्रं तत्प्रतिमा छविः कान्तिर्येषां तानि क्षालितोत्तरासङ्गसमानकान्तीनि । अतश्चोपमीयते—स्मरारिमिव गौरीशमिव । किंभूतं स्मरारिमुमाङ्गसङ्गविभक्तभस्मानम् उमाङ्गसङ्गेन गौरीशरीरसङ्गेन विभक्तं विभागेनावस्थितं भस्म भसितं यस्य सः तम् । क्वचिदेव सौवर्णा देशा मेघैराच्छादिताः तदा गौरीश्वरतुल्यम् । सौवर्णभागस्य उमाङ्गमुपमानं, सिताभ्रपिहितस्य हरभागः । सौवर्णत्वं रैवतकस्य मेरुशृङ्गैर्विरचितत्वात् प्रसिद्धम् ॥ ५ ॥

क्वचिदिति ॥ पुनः क्वचिदेकदेशे जलानामपायेनापगमेन विपाण्डुराणि शुभ्राणि अत एव धौतं क्षालितं यदुत्तरीयं तत्प्रतिमा तत्समा छविर्येषां तान्यभ्राणि मेघान्बिभ्राणं दधानम् । भृञः कर्तरि शानच् । अत एवोमायाः पार्वत्या अङ्गसङ्गेनार्धभागेन विभक्तमेकभागस्थापितं भस्म यस्य तं स्मरारिं हरमिव स्थितमित्युपमालङ्कारः ॥ ५ ॥

छायां निजस्त्रीचटुलालसानां मदेन किञ्चिच्चटुलाऽलसानाम् ॥
कुर्वाणमुत्पिञ्जलजातपत्रैर्विहङ्गमानां जलजाऽऽतपत्रैः ॥ ६ ॥

छायामिति॥ पुनः कीदृशं विहङ्गमानां हंसभ्रमरादीनां जलजातपत्रैः कमलच्छत्रैः छायां कुर्वाणं विदधानम् । किंभूतैः उत्पिञ्जलजातपत्रैः उत् ऊर्ध्वानि पिञ्जलानि कपिशानि जातानि पत्राणि पर्णानि येषां तानि । उत्शब्द ऊर्ध्वार्थः । पिञ्जरमेव पिञ्जलं, रलयोरैक्यस्मरणात् । केचित्तूत्पिङ्गलमाहुः । कथंभूतानां विहङ्गमानां निजस्त्रीचटुलालसानां निजस्त्रीषु सहचरीषु चटु चाटु प्रियं बिसपानमधुपानादिका लालसा येषां तेषां, पुनः कीदृशानां मदेन किञ्चिच्चटुलालसानां मदेन मकरन्दपानोत्थक्षीबतया किञ्चिच्चटुला ईषल्लम्पटाः अपरम् अलसा मन्थरास्तेषाम् ॥ ६ ॥

छायामिति ॥ पुनः निजस्त्रीणां चटुषु प्रियवचनेषु लालसा लोलुपाः । 'लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि च' इति यादवः । तेषां निजस्त्रीचटुलालसानां मदेन किञ्चिदीषच्चटुलाश्चपलास्तेऽल-

साश्च । विशेषणयोरपि मिथो विशेषणविशेष्यभावविवक्षया विशेषणसमासः । तेषां चटुलालसानां विहङ्गमानां हंसादीनामुत्पिञ्जलानि जातान्युत्पिञ्जलजातानि । पूर्ववत्समासः । तानि पत्राणि येषां तैरुत्पिञ्जलजातपत्रैः । उत्पिञ्जरीभूतदलैरित्यर्थः । रलयोरभेदः । जलजातपत्रैर्जलजैरेवातपत्रैश्छायां कुर्वाणम् । एतेन महती कमलाकरसमृद्धिर्व्यज्यते । यमकरूपकयोः सङ्करः ॥ ६ ॥

**स्कन्धाधिरूढोज्ज्वलनीलकण्ठानुर्वीरुहः श्लिष्टतनूनहीन्द्रैः ॥**
**प्रनर्तितानेकलताभुजाग्रान्रुद्राननन्तानिव(१) धारयन्तम् ॥ ७ ॥**

**स्कन्धेति ॥ पुनः कीदृशं नगम् अनन्तान् बहून् उर्वीरुहो वृक्षान् धारयन्तं बिभ्राणम् । किंभूतान् स्कन्धाधिरूढोज्ज्वलनीलकण्ठान् स्कन्धे काण्डे अधिरूढाः स्थिता उज्ज्वला मनोज्ञा नीलकण्ठा मयूरा येषां ते तान्, पुनः किंविशिष्टान् अहीन्द्रैर्महोरगैः श्लिष्टतनून् आलिङ्गितवपुषः, अपरं किंभूतान् प्रनर्तितानेकलताभुजाग्रान् प्रनर्तिता वायुवशाच्चलिता अनेका लता एव भुजाग्राणि येषां ते तान् । उपमीयते—रुद्रानिव एकादशदेवविशेषानिव । तेषामपि स्कन्धे अधिरूढो विश्रान्त उज्ज्वलो मनोज्ञश्च नीलः श्यामः कण्ठो भवति । अपरम् अहीन्द्रेण वासुकिना वेष्टितदेहान्, प्रनर्तितानि अभिनयवशाच्चालितानि अनेकलता-तुल्यानि भुजाग्राणि यैः ते तान्, अनन्तान् एकादश अक्षयान् वा ॥ ७ ॥**

स्कन्धेति ॥ पुनः स्कन्धं प्रकाण्डमधिरूढा उज्ज्वला नीलकण्ठा मयूरा येषां तान्, अन्यत्र स्क-न्धाधिरूढा अंसस्थिता नीलाः कण्ठा येषां तान् । 'अंसप्रकाण्डयोः स्कन्धः' इति विश्वः । अहीन्द्रैः श्लिष्टतनून् व्याप्तदेहान् । एकत्र तदावासत्वादन्यत्र तद्भूषणत्वाच्चेति भावः । प्रनर्तितान्यनेकलतानामेव भुजानां लतानामिव च भुजानामग्राणि येषां तान्, अत एवानन्तानसंख्यान्रुद्रानिव स्थितानित्युत्प्रेक्षा । उर्वीरुहो वृक्षान्धारयन्तमुद्वहन्तम् ॥ ७ ॥

**विलम्बिनीलोत्पलकर्णपूराः कपोलभित्तीरिव रोध्र(२)गौरीः ॥**
**नवोलपालङ्कृतसैकताभाः शुचीरपः शैवलिनीर्दधानम् ॥ ८ ॥**

**विलम्बीति ॥ पुनः किंभूतम् अपो जलानि दधानं वहमानम् । किंभूताः अपः शैवलिनीः शैवालयुक्ताः, अपरं किंविधाः शुचीः निर्मलाः । अत एव कीदृशीः नवोलपालङ्कृतसैक-ताभाः नवं यत् उलपं नीलतृणं तेन अलङ्कृतं यत् सैकतं पुलिनम् तद्वत् आभा कान्तिर्यासां ताः । उत्प्रेक्ष्यते—कपोलभित्तीरिव गण्डस्थलीतुल्याः । किंभूताः कपोलभित्तीः विलम्बि-नीलोत्पलकर्णपूराः विलम्बीनि लम्बमानानि नीलोत्पलान्येव कर्णपूराः कर्णाभरणानि यासाम्, अपरं किंभूताः रोध्रगौरीः रोध्ररजोभेदेन गौरकान्तीः । अपामुपमा सैकते, शैवलस्य तु उपमा उलपे । केचित्तु सर्वाण्येतानि विशेषणानि अपामेव व्याचक्षते । उपमानं तु कपोल-भित्तय इव, ततः श्लेषः । सिकता विद्यन्ते यस्य तत् । सिकताशर्कराभ्यां 'देशे लुबिलचौ चेत्यण् । उलपं नीलतृणम् ॥ ८ ॥**

**विलम्बीति** ॥ विलम्बिनो नीलोत्पलान्येव कर्णपूराः कर्णावतंसा यासां ताः लोध्रेण लोध्ररजसा गौरीरवदाताः । 'षिद्गौरादिभ्यश्च' इति ङीष् । कपोलभित्तीः स्त्रीणां गण्डस्थलीरिव स्थिताः । उपमान्तर-माह—नवा उलपा बल्वजतृणानि । 'उलपा बल्वजाः प्रोक्ताः' इति विश्वः । तैरलङ्कृतानां सैकतानां-माभेवाभा यासां ताः । कुतः—शुचीः शुद्धाः शैवलिनीः शैवलवतीरपो दधानम् । शुचित्वशैवलत्वाभ्यां बिम्बप्रतिबिम्बभावेनोपमाद्वयम् ॥ ८ ॥

---

(१) रुद्राननेका० । (२) लोध्र ।

**राजीवराजीवशलोलभृङ्गं मुष्णन्तमुष्णं ततिभिस्तरूणाम् ॥**
**कान्ताऽलकान्ता ललनाः सुराणां रक्षोभिरक्षोभितमुद्वहन्तम् ॥ ९ ॥**

**राजीवेति** ॥ किंभूतं नगेशं राजीवराजीवशलोलभृङ्गं राजीवराज्यः पद्मावल्यः तासु वशा आयत्ता लोलाश्चपला भृङ्गा भ्रमरा यत्र सः तं, तथा तरूणां ततिभिः वृक्षाणां पङ्क्तिभिः उष्णमातपं मुष्णन्तमपहरन्तम् । किं कुर्वन्तं सुराणां ललना देवयोषित उद्वहन्तं बिभ्राणं, किंभूताः कान्ताऽलकान्ताः कान्तो मनोहरोऽलकानामन्तोऽग्रं यासां ताः, अपरं किंभूतं रक्षोभिः राक्षसैः अक्षोभितं अनुपद्रुतम् । असेव्यमित्यर्थः ॥ ९ ॥

राजीवेति ॥ पुनः राजीवराजीनां पद्मपङ्क्तीनां वशा अधीना लोलाश्चला भृङ्गा यस्मिंस्तं राजीवराजीवशलोलभृङ्गं तरूणां ततिभिः सङ्घैरुष्णमातपं मुष्णन्तं हरन्तं, कान्ता रम्या अलकान्ताश्चूर्णकुन्तलाग्राणि यासां ताः कान्ताऽलकान्ताः । 'अलकाश्चूर्णकुन्तलाः' इत्यमरः । सुराणां ललनाः स्त्रियोऽप्सरसः रक्षोभी राक्षसैरक्षोभितमनभिभूतं यथा तथोद्वहन्तम् ॥ ९ ॥

**मुदे मुरारेरमरैः सुमेरोरानीय यस्योपचितस्य शृङ्गैः ॥**
**भवन्ति नोद्दामगिरां कवीनामुच्छ्रायसौन्दर्यगुणा मृषोद्याः ॥ १० ॥**

**मुदे इति** ॥ यस्य रैवतकस्य उच्छ्रायसौन्दर्यगुणाः प्रांशुत्वरामणीयकविशेषाः कवीनां मृषोद्या मिथ्याकथनीया न भवन्ति । कविभिरलीका नोच्यन्ते इत्यर्थः । किंभूतानां कवीनामुद्दामगिरामुद्भटवाचाम् । कवीनां मिथ्यावाक्त्वं प्राप्तं, यथेष्टभाषिणां स्वतन्त्रभारतीकानामवश्यमेव अधिकार्थवचनशीलता । कथं तर्हि न मृषोद्या इत्याह—अमरैः देवैः कर्तृभिः सुमेरोः शृङ्गैः शिखरैरुपचितस्य वर्धितस्य आनीय प्रकृतत्वान्मेरुशृङ्गाण्येव, किमर्थं मुरारेर्मुदे हरेर्हर्षाय । यः सुरपर्वतशिखरविरचितः साक्षादच्युतप्रीतये, तस्य कथमिव वैरूप्यं सम्भाव्यते । कवीनां तद् गुणा मृषोद्या न भवन्तीत्युचितम् । उच्छ्राय इति 'उदिश्रयती'त्यादिना घञ् । कवीनामिति कर्तरि षष्ठी । मृषा उद्यन्ते इति मृषोद्याः कर्मणि क्यप् ॥ १० ॥

नन्वल्पीयानयं कश्चिद्रैवतको नाम शिलोच्चयः कथमियद्वर्ण्यत इति शङ्कां निरस्यति—

मुदे इति ॥ मुरारेर्मुदे सन्तोषायाऽमरैः कर्तृभिः सुमेरोः शृङ्गैः करणैरानीयोपचितस्य वर्धितस्य । आनीतैः शृङ्गैरुपचितस्येत्यर्थः । उपचये करणानां शृङ्गाणामर्थादानयनकर्मत्वम् । यस्य शैलस्योच्छ्राय औन्नत्यं सौन्दर्यं च तयोर्गुणा उत्कर्षा उद्दामगिरां प्रगल्भवाचां कवीनां मृषा उद्यन्त इति मृषोद्य मिथ्यावाच्या न भवन्ति । मेरुशृङ्गेषु सर्वगुणसम्भवादिति भावः । 'राजसूयसूर्यमृषोद्य—' इत्यादिना वदः क्यबन्तो निपातः । उत्कृष्टः श्राय उच्छ्राय इति घञन्तेनोपसर्गस्य समासः । न तूपसृष्टाद्धञ्प्रत्ययः । 'श्रिणीभुवोऽनुपसर्गे' इति नियमात् । मुद इत्यादिश्लोकसप्तके यच्छब्दस्य दृष्टोऽयं शैलः स इत्यनेनान्वयः । मेरुशृङ्गासम्बन्धेऽपि सम्बन्धवर्णनादतिशयोक्तिः ॥ १० ॥

**यतो महार्घाणि(१) भृतान्यनूनैः प्रस्थैर्मुहुर्भूरिभिरुच्छिखानि ॥**
**आढ्यादिव प्रापणिकादजस्रं जग्राह रत्नान्यमितानि लोकः ॥ ११ ॥**

**यत इति** ॥ यस्माद्रैवतकात् जनः अजस्रं सदा अमितानि असंख्यानि रत्नानि आदद जग्राह । कीदृशानि महार्घाणि बहुमूल्यानि, किंभूतानि अनूनैः महाप्राणैः भूरिभिः प्रभूतैः प्रस्थैः सानुभिः मुहुर्वारंवारं भृतानि ऊढानि, पुनः किंभूतानि उच्छिखानि उद्गता शिखा

---

(१) यतः परार्ध्यानि ।

कान्तिर्दीप्तिर्येषां तानि। कस्मादिव आढ्यात्प्रापणिकादिव। यथा ईश्वराद्वाणिजकाल्लोको रत्नानि गृह्णाति। तान्यपि ऐश्वर्यात् प्रस्थैर्दारुमयैर्मानैर्भ्रियन्ते मीयन्ते। शेषं समानम् ११

यत इति॥ लोकः परार्ध्यानि श्रेष्ठान्यनूनैर्महाद्भिर्भूरिभिः प्रभूतैः। 'प्रभूतं प्रचुरं प्राज्यं भूरि' इत्यमरः। प्रस्थैः सानुभिर्मानविशेषैश्च। 'प्रस्थोऽस्त्री सानुमानयोः' इत्यमरः। भृतानि सम्भृतानि मितानि च उच्छ्रिखान्युद्दश्मीनि अमितान्यपरिमितानि रत्नानि यतः शैलादाढ्याद्धनिकात्। 'इभ्य आढ्यो धनी' इत्यमरः। प्रपणो व्यवहारः प्रयोजनमस्य प्रापणिको वणिक्। 'तदस्य प्रयोजनम्' इति ठक्। 'पण्याजीवाः प्रापणिका वैदेहा नैगमाश्च ते वणिजः' इति वैजयन्ती। तस्मादिवाजस्रं मुहुर्जग्राह। उपमालङ्कारः॥ ११॥

**अखिद्यताऽऽसन्नमुदग्रतापं रविं दधानेऽप्यरविन्दधाने॥**
**भृङ्गावलिर्यस्य तटे निपीतरसा नमत्तामरसा न मत्ता॥ १२॥**

अखिद्यतेति॥ यस्य तटे रोधसि भृङ्गावलिश्चञ्चरीकावलिर्नाऽखिद्यत न खिन्ना। खेदे कारणमाह—कीदृशे तटे रविं दधाने अर्कं बिभ्रति, कीदृशं रविमासन्नमपि निकटस्थमपि, तथा उदग्रतापमुल्बणभासम्। एवं खेदो युक्तः। अपि विस्मये। कीदृशे तटे अरविन्दधाने अरविन्दानां पद्मानां धाने स्थाने, अरविन्दा निधीयन्तेऽस्मिन्निति अरविन्दधानम्। तर्हि कथं न खिन्नेत्याह—कीदृशी भृङ्गावलिः मत्ता क्षीबा, किंभूता सती निपीतरसा आस्वादितमधुः, नमत्तामरसा नमन्ति तामरसानि अब्जानि यस्याः सा। खेदाभावे हेत्वन्तरम्। न मत्तेति न क्रियापदेन योज्यः। खिद् दैन्ये दिवादौ स्वरितेति पठ्यते॥ १२॥

अखिद्यतेति॥ आसन्नमौन्नत्यात्सन्निहितमत एवोदग्रतापं दुःसहतापं रविं दधानेऽपि अरविन्दधाने इति विरोधः। अरविन्दानां धाने निधाने इति परिहारः। धीयतेऽस्मिन्निति धानम्। अधिकरणे ल्युट्। शब्दश्लेषमूलो विरोधालङ्कारः। यस्य गिरेस्तटे निपीतरसा नितरां पीतमकरन्दा, नमन्ति तामरसानि पङ्केरुहाणि भारभूतया यया सा नमत्तामरसा। 'पङ्केरुहं तामरसम्' इत्यमरः। अत एव मत्ता भृङ्गावलिर्नाखिद्यत न खिन्ना। खिदेर्दैवादिकात्कर्तरि लङ्। अत्यन्तसूर्यसन्निधानेऽप्यरविन्दाऽऽकरविहारान्मधुकरास्तापं नापुरित्यर्थः॥ १२॥

**यत्राधिरूढेन महीरुहोच्चैरुन्निद्रपुष्पाक्षिसहस्रभाजा॥**
**सुराधिपाधिष्ठितहस्तिमल्ललीलां दधौ राजतगण्डशैलः॥ १३॥**

यत्रेति॥ यस्मिन् पर्वते राजतगण्डशैलः रूप्यस्थूलगलितपाषाणः उन्निद्रपुष्पाक्षिसहस्रभाजा प्रफुल्लप्रसूननयनदशशतयुक्तेन उच्चैर्महीरुहा उच्चतरुणा अधिरूढेन उपरिस्थितेन हेतुना सुराधिपाधिष्ठितहस्तिमल्ललीलां दधौ शक्राधिरूढैरावणशोभां बभार। इन्द्रसनाथस्यैरावणस्य शोभां यत्र रूप्याश्मा कुसुमिततरुभूषितश्चकारेत्यर्थः। हस्तिमल्लो गण्डशैलस्य, शक्रो वृक्षस्य, पुष्पाणामक्षिसहस्रमुपमानम्॥ १३॥

यत्रेति॥ यत्र शैले रजतस्य विकारो राजतः। 'प्राणिरजतादिभ्योऽञ्' इत्यञ्प्रत्ययः। स चासौ गण्डशैलश्च। 'गण्डशैलास्तु च्युताः स्थूलोपला गिरेः' इत्यमरः। उन्निद्राणि विकसितानि पुष्पाण्यक्षीणीत्युपमितसमासः। तेषां सहस्रं भजतीति तद्भाजा अधिरूढेनोच्चैर्महीरुहा वृक्षेण, सुराधिपेन देवेन्द्रेणाधिष्ठितो यो हस्ती मल्ल इव तस्यैरावतस्य लीलां शोभां दधौ। ऐरावतस्य धावल्यादिति भावः। 'हस्तिमल्लोऽभ्रमातङ्गे हस्तिमल्लो विनायके' इति विश्वः। अत्र लीलामिव लीलामिति सादृश्याक्षेपान्निदर्शनालङ्कारः॥ १३॥

**विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या॥**
**रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः॥ १४॥**

विभिन्नेति॥ यस्मिन् रैवतके सूर्यस्य रथ्याः रथाश्वाः रत्नैः सर्वव्यापिन्या रुचा

करणेन भूयः स्वां रुचमानिन्यिरे आत्मीयं वर्णं प्रापिताः, किंभूतया रुचा परितः स्फुरन्त्या सर्वतो व्यापिन्या । स्वकान्तित्यागे कारणमाह—किंभूताः सन्तः गरुडाग्रजेन अरुणेन विभिन्नवर्णा रक्तीकृताः । कै रत्नैरित्याह—वंशकरीरनीलैः वंशाङ्कुरहरितैः । इन्द्रनीलैरित्यर्थः । वा वंशाः करीरपर्णाः । तद्गुणोऽयमलङ्कारः । रथं वहन्ति रथ्याः यत् । आनिन्यिरे इति कर्मणि लकारः ॥ १४ ॥

विभिन्नेति ॥ गरुडाग्रजेनारुणेन विभिन्नवर्णा अन्यथाकृतवर्णाः । अरुणिमानमापादिता इत्यर्थः । सूर्यस्य सम्बन्धिनो रथं वहन्तीति रथ्या रथाश्वाः । 'तद्वहति रथयुगप्रासङ्गम्' इति यत्प्रत्ययः । यत्र शैले वंशकरीरनीलैर्वंशाङ्कुरश्यामै रत्नैः । मरकतैरित्यर्थः । 'वंशाङ्कुरे करीरोऽस्त्री' इत्यमरः । वंशशब्दस्याऽम्लानताहेतोरलूनतायाः प्रतिपत्त्यर्थत्वादपौनरुक्त्यम् । अत एव एकार्थपदमप्रयोज्यमित्युक्त्वा करिकलभकर्णावतंसादिषु प्रतिपत्तिविशेषकरेषु न दोष इत्याह वामनः । न विशेषश्चेदिति । परितः स्फुरन्त्या रुचा स्वप्रभया करणेन पुनः स्वां रुचं निजहरितवर्णमेवानिन्यिरे आनीताः । नयतेर्द्विकर्मकात्प्रधाने कर्मणि लिट् । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति वचनात् । अत्र विभिन्नवर्णा इत्येकस्तद्गुणः, रथ्यानां स्वगुणत्यागेन गरुडाग्रजगुणग्रहणात्पुनस्तत्त्यागेन मरकतगुणग्रहणादपरस्तद्गुणस्तदुपजीवीति सजातीययोः सङ्करः । तेन गिरेः सूर्यमण्डलपर्यन्तमौन्नत्यं वस्तु व्यज्यते । तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः ॥ १४ ॥

**यत्रोज्झिताभिर्मुहुरम्बुवाहैः समुन्नमद्भिर्न समुन्नमद्भिः ॥**
**वनं बबाधे विषपावकोत्था विपन्नगानामविपन्नगानाम् ॥ १५ ॥**

यत्रेति ॥ यत्र विषपावकोत्था विपत् विषाग्निसमुद्भवो दाहः नगानां तरूणां वनं काननं समूहं वा न बबाधे । विषत्य कारणमाह—किंभूतानां नगानाम् अविपन्नगानामविगतसर्पाणाम् , न विगताः पन्नगा येषामिति । कथं वनं न दग्धमित्याह—मुहुः पुनः पुनः अम्बुवाहैः मेघैः उज्झिताभिः वर्षिताभिरद्भिर्जलैः समुन्नम् आर्द्रीकृतम् । यतः क्लिन्नं नाग्निना बाध्यते । किंभूतैर्मेघैः समुन्नमद्भिः उन्नतैः, वर्षार्थं गृहीतयत्नैः । न क्रियापदेन योज्यः । बबाधे इति कर्तरि । समुन्नमिति उन्देः क्तः ॥ १५ ॥

यत्रेति ॥ यत्र शैले समुन्नमद्भिः समुत्पतद्भिरम्बुवाहैरुज्झिताभिस्त्यक्ताभिरद्भिर्मुहुः समुन्नं सम्यगुन्नं क्लिन्नम् । सिक्तमित्यर्थः । 'उन्दी क्लेदने' इति धातोः कर्मणि क्तः । 'नुदविद–' इत्यादिना निष्ठानत्वम् । विपन्नगा विगतसर्पा न भवन्तीत्यविपन्नगाः । सपन्नगा इत्यर्थः । तेषामविपन्नगानां नगानां वृक्षाणां वनं वषपावकोत्था विषाग्निसमुत्था विपदापत् न बबाधे । नित्यं वर्षानुषङ्गाद्विषाग्निक्षोभो वृक्षाणामकिञ्चित्कर इति भावः ॥१५॥

**फलद्भिरुष्णांशुकराभिमर्शात्कार्शानवं धाम पतङ्गकान्तैः ॥**
**शशंस यः पात्रगुणाद् गुणानां संक्रान्तिराक्रान्तगुणान्तरेति(१) ॥१६॥**

फलद्भिरिति ॥ योऽद्रिः उष्णांशुकराभिमर्शात् रविकिरणसंस्पर्शात् कार्शानवमाग्नेयं धाम तेजः फलद्भिः वमद्भिः सूर्यकान्तैः करणैः इति शशंस आख्यत, किं—गुणानां विशेषाणां या संक्रान्तिः स्थानान्तरगमनं सा पात्रगुणात् आधारविशेषाद्धेतोः आक्रान्तगुणान्तरा अधिष्ठितविशेषान्तरा भवति । यदि ह्येवं न स्यात्तत्तदेव सूर्यकान्तगतमग्नित्वं न दध्यादिति भावः । तथा च भारविः—

प्राप्यते गुणवतापि गुणानां व्यक्तमाश्रयवशेन विशेषः ।
तत्तथा हि दयिताननदत्तं व्यानशे मधु रसातिशयेन ॥

(१) संक्रान्तिमाक्रान्तगुणातिरेकाम् ।

वाक्यस्याकर्मकत्वात् 'पश्य मृगो धावती'तिवत् द्वितीयाभावः । संक्रान्तिमिति पाठे संक्रान्ति शशंसेति योज्यम् । विशेषणत्वे इतिशब्देन प्रातिपदिकार्थे स्थापनात् द्वितीयाऽभावः, यथा—'क्रमादमुं नारद इत्यबोधि सः', इति पूर्वपाठो रम्यतरः । कृशानोरिदं काशानवम् । पतङ्गः सूर्यः ॥ १६ ॥

फलद्भिरिति ॥ यः शैल उष्णांशुकराभिमर्शादर्ककरसम्पर्कात् कृशानोरिदं काशानवमाग्नेयं धाम तेजः फलद्भिराद्रिरद्भिः । अग्निकरसामर्थ्याभिव्यञ्जकैरिति भावः । पतङ्गकान्तैः सूर्यकान्तैः । दृष्टान्तभूतैरिति भावः । गुणानां संक्रान्तिमन्यत्र संक्रमणम् । सक्रान्तगुणानित्यर्थः । पात्रगुणादाधारगुणसहकारादाक्रान्तः प्राप्तो गुणातिरेकः कार्यविशेषाधानरूपो गुणोत्कर्षो यस्यास्तां शशंस प्रतिपादयामास । अर्कत्विषां सर्वत्र संक्रमणाविशेषेऽपि सूर्यकान्तेष्वेव ज्वलनजननदर्शनात्सर्वत्रापि संक्रम्यकारिणां गुणानामाधारगुणसहकारात्कार्यविशेषाधायकत्वमिति निश्चयोऽत्रैव जायत इत्यर्थः । ततश्च सहकारशक्तिविरहिणी सहजशक्तिरनुपकारिणीति भावः । वृत्त्यनुप्रासोऽलङ्कारः ॥ १६ ॥

दृष्टोऽपि शैलः स मुहुर्मुरारेरपूर्ववद्विस्मयमाततान ॥
क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः ॥ १७ ॥

दृष्टोऽपीति ॥ स नगो मुहुरवलोकितोऽपि हरेरपूर्ववत् अदृष्ट इव विस्मयमाततान कौतुकमवर्धयत । ननु यदसकृन्निरूपितं न तत्र कुतूहलस्यावसर इत्याशङ्क्य साधकमर्थान्तरन्यासमाह—रमणीयतायाः तदेव रूपं रामणीयकस्य स एव स्वभावः, यत् क्षणे क्षणे नवतामुपैति यदनुक्षणं वस्तु अपूर्वमिव भवति । यथा वाच्यमाने भारतरामायणे । मुहुःशब्दो वीप्साप्रधानोऽत्र बोद्धव्यः १७ ॥

दृष्टोऽपीति ॥ मुहुर्दृष्टोऽपि स शैलो मुरारेरपूर्वेणादृष्टपूर्वेण तुल्यमपूर्ववत् । 'तेन तुल्यं क्रिया चेत्-' इति वतिः । विस्मयमाततान । अतिरमणीयत्वादिति भावः । तथा हि—क्षणे क्षणे प्रतिक्षणम् । वीप्सायां द्विर्भावः । नवतामपूर्ववद्भावमुपैतीति यत्, तन्नवत्वोपगमनमेव रमणीयतायाः रूपं स्वरूपम् । लक्षणमित्यर्थः । अत्र रमणीयत्वलक्षणस्य वाक्यार्थस्य विस्मयं हेतुत्वसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः॥१७॥

उच्चारणज्ञोऽथ गिरां दधानमुच्चा रणत्पक्षिगणास्तटीस्तम् ॥
उत्कं धरं द्रष्टुमवेक्ष्य शौरिमुत्कन्धरं दारुक इत्युवाच ॥ १८ ॥

उच्चारणज्ञ इति ॥ अथानन्तरं दारुकः सूतः इति वक्ष्यमाणमूचे । कथने निमित्तमाह—किं कृत्वा शौरिं हरिं तं धरं रैवतकं द्रष्टुमुत्कं सकौतुकं दृष्ट्वा अवेक्ष्य । तदुत्कण्ठा कथं तेनावगतेत्याह—यतः उत्कन्धरमूर्ध्वग्रीवम् । यस्य हि दिदृक्षा उत्पद्यते स ग्रीवामुत्क्षिप्य वर्तते । कीदृशो दारुकः गिरां वाणीनामुच्चारणज्ञः, उच्चारणं भाषणं जानातीति वाग्मी । किं कुर्वाणं धरं तटीः रोधांसि बिभ्राणं, कीदृशीः तटीः उच्चाः उन्नताः, तथा रणत्पक्षिगणाः कूजद्विहङ्गश्रेणीः । एता उपजातयोऽधुना नानावृत्तानि ॥ १८ ॥

उच्चारणज्ञ इति ॥ अथ हरिविस्मयानन्तरं गिरां वाक्यानामुच्चारणं जानातीत्युच्चारणज्ञ उक्तिकुशलः । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः, न 'इगुपध-'इत्यादिना । 'आकारादनुपपदात्कर्मोपपदो भवति विप्रतिषेधेन' इति वचनात् । दारुकः कृष्णसारथिरुच्चा उन्नता रणन्तः शब्दायमानाः पक्षिगणा यासु ताः रणत्पक्षिगणास्तटीर्दधानं तं पूर्वोक्तं धरतीति धरं पर्वतम् । पचाद्यच् । 'अहार्यधरपर्वताः' इत्यमरः । द्रष्टुमुत्कमुन्मुकम् । 'उत्क उन्मनाः' इति निपातः । उत्कन्धरमौत्सुक्यादुन्नमितकन्धरं शौरिमवेक्ष्य इति वक्ष्यमाणक्रमेण वाचमुवाच । न हीङ्गितज्ञोऽवसरेऽवसीदतीति भावः ॥ १८ ॥

आच्छादितायतदिगम्बरमुच्चकैर्गामाक्रम्य संस्थितमुदग्रविशालशृङ्गम् ॥
मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेनमुद्वीक्ष्य को भुवि न विस्मयते नगेशम् १९

**आच्छादितेति** ॥ एनं नगेशमुद्वीक्ष्य रैवतकं दृष्ट्वा को भुवि पृथिव्यां न विस्मयते न चित्रीयते । सर्वोऽपि कौतुकं यातीत्यर्थः । कीदृशम् आच्छादिताः पिहिता आयता दीर्घा दिशः काष्ठा अम्बरमाकाशं येन सः, तथा उच्चकैः उन्नतं, तथा गां भूमिमाक्रम्य व्याप्य संस्थितं, तथा उदग्रविशालशृङ्गम् उच्चानि विस्तीर्णानि शिखराणि यस्य । अत एव मूर्ध्नि स्खलत्तुहिनदीधितिकोटिं शिरसि परिष्वजच्चन्द्रकलं, कमिव नगेशमिव गिरीशमिव । श्लेषः, यथा–गिरीशं साक्षाद्भुवि वीक्ष्य को न आश्चर्यं यायात् । कीदृशं शिवम् आच्छादिताः परिहिता आयता दिश एवाम्बरं येन सः तम् । दिगम्बरो हि भगवान् । नग्न-इत्यर्थः ॥ १९ ॥

इतः प्रभृति यमकानन्तरश्लोकेषु वसन्ततिलकावृत्तं नियमेनाह—

**आच्छादितेति** ॥ आच्छादितान्यावृतानि आयतानि दीर्घाणि दिशोऽम्बरं खं च दिगम्बराणि येन तम्, अन्यत्राच्छादितं वासितमायतं दिगेवाम्बरं वासो येन तं तथोक्तम् । उच्चैकरुन्नतां गां भुवमाक्रम्य व्याप्य संस्थितम् । तथोदग्राण्युन्नतानि विशालानि च शृङ्गाणि शिखराणि यस्य तम् । अन्यत्रोदग्रे विशाले शृङ्गे विषाणे यस्य तम् उच्चैकरुन्नतं गां वृषभमाक्रम्य अधिष्ठाय, संस्थितमित्यर्थः । 'शृङ्गं विषाणे शिखरं' इति,

> 'गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रमसि स्मृतः ।
> अर्जुनीनेत्रदिग्बाणभूवाग्वारिषु गौर्मता' ॥

इति च विश्वः । मूर्ध्नि शिखरे अन्यत्र शिरसि स्फुरन्ती तुहिनदीधितेरिन्दोः कोटिः रश्मिः कला च यस्य तमेनं नगेशं नगश्रेष्ठं रैवतकं कैलासनायकमीश्वरं चोद्वीक्ष्य को न विस्मयते । सर्वोऽपि विस्मयत-इत्यर्थः । नेयं तुल्ययोगिता, प्रकृताप्रकृतविषये तदनुत्थानात् । नापि समासोक्तिः, तस्या विशेषणसाम्य-जीवित्वात् । नापि श्लेषः, उभयश्लेषे विशेष्यश्लेषयोगात् । तस्मात्प्राकरणिकार्थमात्रपर्यवसिताभिधाव्यापारेणापि शब्देनार्थान्तरधीकृद्ध्वनिरित्याहुः । तदुक्तं काव्यप्रकाशे—

> 'अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
> संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्' ॥

इति । वृत्तलक्षणं तु—'उक्ता वसन्ततिलका तभजा जगौ गः' इति ॥ १९ ॥

**उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ॥**
**वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥२०॥**

**उदयतीति** ॥ अयं गिरिः रैवतकाचलो विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलां वहति विलम्बि विलम्बमानं यत् घण्टाद्वयं किङ्किणीयुगलं तेन परिवारितः परिष्कृतो विभूषितो वारणेन्द्रो हस्तिराजस्तस्य लीलां शोभां धारयति । घण्टाद्वयशोभितं द्विरदमनुकरोतीत्यर्थः । कदा अहिमरुचौ सूर्ये उदयति सति, चन्द्रे च अस्तं याति सति । कीदृशे रवौ चन्द्रे च विततोर्ध्वरश्मिरज्जौ विततः प्रसृताः अतिदीर्घा ऊर्ध्वरश्मय एव रज्जवो यस्येति उभयविशेषम् । घण्टे हि रज्जुर्ग्रथ्यते । अर्केन्दू घण्टयोरुपमानं, रज्जवो रश्मीनां, नगस्य करी । अनेनैव श्लोकेन कविना 'घण्टामाघ' इति नाम लब्धम् । अत्र इट कट कटी गतौ इति उदयतीति रूपम् । केचित् अय गताविति पठन्ति । पुष्पिताग्रा वृत्तम् ॥ २० ॥

**उदयतीति** ॥ वितता ऊर्ध्वाश्च रश्मिरज्जवो रश्मयो रज्जव इव यस्य तस्मिन्विततोर्ध्वरश्मिरज्जौ अहिमरुचौ सूर्ये उदयत्युदयमाने । 'अय गतौ' इति स्वरितेतं केचिदिच्छन्ति । ततः शतरि सप्तमी । तथा विततोर्ध्वरश्मिरज्जौ हिमधाम्नि चन्द्रे चास्तं यात्यस्तमयमाने । यातेः शतरि सप्तमी । अयं गिरि-

विलम्बिना विशेषं लम्बमानेन घण्टाद्वयेन परिवारितस्य वेष्टितस्य वारणेन्द्रस्य लीलां शोभां वहति । अत्र लीलामिव लीलामिति सादृश्याक्षेपान्निदर्शना । तथा सूर्याचन्द्रमसावस्य कुक्षिसमानकक्षां बिभृत इति महदौन्नत्यं व्यज्यते । पुष्पिताग्रा वृत्तम् । अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ॥

**वहति यः परितः कनकस्थलीः सहरिता लसमाननवांशुकः ॥**
**अचल एष भवानिव राजते स हरितालसमाननवांशुकः ॥ २१ ॥**

**वहतीति** ॥ स एषः अचलो रैवतको भवानिव राजते, यः सहरिताः सदूर्वाः कनकस्थलीः काञ्चनभूमीः सर्वतो वहति धारयति । तथा लसमाननवांशुकः सौवर्णत्वाल्लसमाना द्योतनशीला नवा अजर्जरा अंशवो भासो यस्य सः । 'शेषाद्विभाषे'ति कप् । लसमानेति ताच्छील्ये चानश् । भवान् कीदृशः हरितालसमाननवांशुकः हरितालसमाने काञ्चनतुल्ये नवे नूतने अंशुके वाससी यस्य सः । पीतवासा इत्यर्थः । कनकस्थलीनां पीतवाससी उपमानम् । अथ वा शब्दोपमेयम्, अर्थसारूप्यं भवतु मा वा भून्न तत्रापेक्षा । एतदस्माभी रुद्रजटालङ्कारे विवेचितम् । द्रुतविलम्बितं छन्दः ॥ २१ ॥

**वहतीति** ॥ लसमाना दीप्यमाना नवांशवो यस्य स लसमाननवांशुकः । शैषिकः कप्प्रत्ययः । योऽचलः सहरिताः सदूर्वाः । 'हरितेति च दूर्वायां हरिद्वर्णयुतेऽन्यवत्' इति विश्वः । कनकस्य स्थलीः स्वर्णभूमीः । 'जानपद-' इत्यादिना अकृत्रिमार्थे ङीष् । परितो वहति, स एषोऽचलः हरितालेन कर्चूरेण समानं नवमंशुकं वासो यस्य स हरितालसमाननवांशुकः पीताम्बरो भवानिव राजते । द्रुतविलम्बितं वृत्तम् । 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् ॥ २१ ॥

**पाश्चात्यभागमिह सानुषु सन्निषण्णाः पश्यन्ति शान्तमलसान्द्रतरांशुजालम् ॥**
**सम्पूर्णलब्धललनालपनोपमानमुत्सङ्गसङ्गिहरिणस्य मृगाङ्कमूर्तेः ॥ २२ ॥**

**पाश्चात्येति** ॥ इहाद्रौ सानुषु शृङ्गेषु सन्निषण्णाः सन्निविष्टा आसीना मृगाङ्कमूर्तेः शशिनः पाश्चात्यभागमपरं पार्श्वभागं पश्यन्ति ईक्षन्ते, उच्चत्वकथनम् । कीदृशं शान्तमलसान्द्रतरांशुजालं शान्तमलं निष्कलङ्कम् अत एव सान्द्रतरमतिघनमंशुजालं किरणनिकरो यस्य । अधोभाग एव तदपेक्षया शशिनः शोभा विद्यते । तदाह—उत्सङ्गसङ्गिहरिणस्य अङ्कारूढमृगस्य, कीदृशं भागं सम्पूर्णलब्धललनालपनोपमानं पश्चाद्भागस्य(१) नैर्मल्यात् सम्पूर्णमखण्डमेव लब्धं ललनालपनेन अङ्गनामुखेन उपमानं सादृश्यं येन तम् । इहत्यभागे हि समतलत्वात् विमलवनितावदनोपमानं विसदृशम् । पश्चात् भवः पाश्चात्यः, दक्षिणापश्चात्पुरसस्त्यक् । हिमाः शीतला अंशवो मूर्तौ यस्य सः हिमांशुमूर्तिः । वसन्ततिलका वृत्तम् ॥ २२ ॥

**पाश्चात्येति** ॥ इहाद्रौ सानुषु सन्निषण्णाः स्थिता जनाः शान्तमलं कलङ्कस्य पुरोवर्तित्वान्निष्कलङ्कमत एव सान्द्रतरमंशुजालं यस्य तं सम्पूर्णं परिपूर्णं लब्धं प्राप्त ललनालपनोपमानं स्त्रीमुखसादृश्यं येन तम् । 'आननं लपनं मुखम्' इत्यमरः । कुतः—उत्सङ्गसङ्गिहारिणस्याङ्कस्थमृगस्य मृगाङ्का मृगचिह्ना मूर्तिर्यस्य तस्य मृगाङ्कमूर्तेश्चन्द्रस्य पश्चाद्भवः पाश्चात्यः । दाक्षिणापश्चात्पुरसस्त्यक् । स चासौ भागश्च तं पाश्चात्यभागं पृष्ठभागं पश्यन्ति । पाश्चात्यभागदर्शनातिशयोक्त्या तादृगौन्नत्यध्वनिः । वसन्ततिलका वृत्तम् ॥२२॥

**कृत्वा पुंवत्पातमुच्चैर्भृगुभ्यो मूर्ध्नि ग्राव्णां जर्जरा निर्झराधाः ॥**
**कुर्वन्ति द्यामुत्पतन्तः स्मरार्तस्वर्लोकस्त्रीगात्रनिर्वाणमत्र ॥ २३ ॥**

---

( १ ) पश्चात् अतश्च—मूलपुस्तके ।

कृत्वेति ॥ अत्राद्रौ निर्झरौघाः पतज्जलपूराः स्मरार्तस्वर्लोकस्त्रीगात्रनिर्वाणं कुर्वन्ति कामपीडिताऽमरवधूदाहोपशमनं विदधति । किं कुर्वन्तः द्यां स्वर्गमुत्पतन्तः आरोहन्तः, किं कृत्वा उच्चैः उच्चेभ्यो भृगुभ्यस्त्वतटेभ्यः ग्राव्णां मूर्ध्नि दृषदामुपरि पातं कृत्वा, अत एव जर्जराः शीकरतां गताः । के इव पुंवत् पुरुषा यथा । केचित् स्वर्गार्थिनो भृगुभ्यः कालञ्जरादिभ्यः श्वभ्रेभ्यो मध्यपतनं कृत्वा खण्डशो गताः सन्तो दिवमारूढाः कामार्ताप्सरःशरीरसुखं कुर्वते । भृगुभ्य इति पञ्चमी । द्योशब्दस्य द्यामिति रूपम् । निर्वाणमिति वातेः निर्पूर्वस्य क्तः, 'निर्वाणोऽवाते' इति नत्वम् । शालिनी वृत्तम् ॥ २३ ॥

कृत्वेति ॥ अत्राद्रौ निर्झरौघा गिरिनदप्रवाहाः । 'प्रवाहो निर्झरो झरः' इत्यमरः । चूतवृक्ष इत्यादिवत्सामान्यविशेषभावादपुनरुक्तिः । पुंवत्पुंभिस्तुल्यम् । 'तेन तुल्यं क्रिया चेत्—' इति वतिः । उच्चैर्भृगुभ्याऽतटेभ्यः । 'प्रपातस्त्वतटो भृगुः' इत्यमरः । ग्राव्णां शिलानां मूर्ध्नि पातं कृत्वा पतित्वा जर्जराः शकलीभूता यामाकाशं प्रत्युत्पतन्तः स्मरार्तानां स्वर्लोकस्त्रीणां खचरीणामप्सरसां गात्रनिर्वाणमङ्गनिर्वृतिं कुर्वन्ति ।

'अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्यतः ।
भृग्वग्निजलसम्पातैर्मरणं प्रविधीयते' ॥

इति विहितभृगुपातिनां पुंसां स्वर्लोकगामिनामिहोपमानता । शालिनी वृत्तम् । 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति ॥ २३ ॥

**स्थगयन्त्यमूः शमितचातकाऽऽर्तस्वरा जलदास्तडित्तुलितकान्तकार्तस्वराः ॥**
**जगतीरिह स्फुरितचारुचामीकराः सवितुः क्वचित्कपिशयन्ति चाऽमी कराः ॥ २४**

स्थगयन्तीति ॥ इहाद्रौ मेघाः क्वचिदमूः जगतीः स्थलीः स्थगयन्ति, क्वचिद्रवेः अमी कराः कपिशयन्ति पिञ्जरयन्ति । कीदृशाः जलदाः शमितचातकाऽऽर्तस्वराः शमितः निवर्तितश्चातकानां पक्षिविशेषाणामार्तः तृषादीनः स्वरः यैस्ते निवर्तितबप्पीहक(?)दीनस्वराः, तथा तडित्तुलितकान्तकार्तस्वराः तडिद्भिः सौदामिनीभिः तुलितं सदृशीकृतं कान्तमुज्ज्वलं कार्तस्वरं सुवर्णं यैस्ते । जगतीः किंभूताः स्फुरितचारुचामीकराः स्फुरितं देदीप्यमानं चारु स्निग्धं चामीकरं सुवर्णं यासां ताः । अमूरिति स्त्रियाम्, अमी इति पुंसि। आर्त इति ऋगतौ आङ्पूर्वः क्तः 'उपसर्गादृति धातौ' इति वृद्धिरेकादेशो रेफः । पथ्या वृत्तम् ॥ २४ ॥

स्थगयन्तीति ॥ इहाद्रौ क्वचिदमूर्जगतीर्भूमीः । 'जगती भुवने भूमौ' इति विश्वः । शमिताश्चातकानामार्तस्वरा यैस्ते शमितचातकार्तस्वराः । 'सर्वसहापतितमम्बु न चातकानाम्' हति भूमिगतस्य तेषां विषाभत्वादभौमाम्बुदानेनोज्जीवयन्तीत्यर्थः । किञ्च तडिद्भिस्तुलितान्युपमितानि कान्तानि कार्तस्वराणि सुवर्णानि यैस्ते तडित्तुलितकान्तकार्तस्वराः । तडित्स्फुरणे तेषामपि तद्वत्स्फुरणादिति भावः । ते जलदाः स्थगयन्त्याच्छादयन्ति । 'स्थग आच्छादने' इति चौरादिकः । क्वचित्तु स्फुरितान्युल्लसितानि चारूणि चामीकराणि सुवर्णानि यैस्ते स्फुरितचारुचामीकरा अमी सवितुः कराः आतपाश्च कपिशयन्ति कपिशिताः कुर्वते । क्वचिद् वृष्टिः क्वचिदातपश्चेति महदाश्चर्यमिति भावः । पथ्या वृत्तम् । सजसा यलौ च सह गेन पथ्या मता ॥

**उत्क्षिप्तमुच्छ्रितसितांशुकरावलम्बैरुत्तम्भितोडुभिरतीवतरां शिरोभिः ॥**
**श्रद्धेयनिर्झरजलव्यपदेशमस्य विष्वक्तटेषु पतति स्फुटमन्तरिक्षम्(१) ॥ २५ ॥**

उत्क्षिप्तमिति ॥ अस्य रैवतकस्य विष्वक् तटेषु सर्वतो रोधस्सु प्रस्थेषु वा स्फुटं निश्चितमन्तरिक्षं खं पतति । खं चेदायाति कथं न दृश्यते, इत्याह–किंभूतं खं श्रद्धेयनिर्झरजलव्यपदेशं श्रद्धेयः सम्भाव्यो निर्झरजलव्यपदेशो यस्य तत् । निर्झरजलव्याजेन पत-

---

(१) ०मन्तरीक्षम् ।

तीत्यर्थः। इति उत्प्रेक्षा। एतेन तोयस्योच्चत्वं प्राचुर्यं चोक्तम्। किमिति नभः पततीत्याह– शिरोभिः शिखरैः अतीवतराम् अतिशयेन उत्क्षिप्तमुदस्तम्। स्वस्थानाच्चालितं यत इत्यर्थः। अतिशयेन उत्क्षिप्यमाणं वस्तु पाषाणवत् पतति। कीदृग्भिः शिरोभिः उच्छ्रितसितांशुकरावलम्बैः उच्छ्रिता उर्ध्वमुखा ये सितांशुकराश्चन्द्ररश्मयः तानवलम्बन्ते संयुञ्जते यानि तैः। ऊर्ध्वमुखशशिकरस्पृष्टैरित्यर्थः। इति उच्चत्वोक्तिः। अन्योऽपि यो भारं शिरसा उत्क्षिपति स कस्यचित्करमवलम्बते। अत एवौन्नत्यादुत्तम्भितोडुभिः उत्तम्भितानि उडूनि तारा यैः तैः। उत्तम्भित इति स्तम्भुः सौत्रो धातुः, स्वार्थे णिच् क्तः। अतीवेति निपातसमुदायोऽतिशयार्थः। तरपा अतिशयस्य अतिशयः प्रतिपाद्यते। स्वार्थे वा। श्रद्धेयः श्रद्धातव्यः। समधिगम्य श्रद्धामारोप्य सम्भाव्यते इति अर्थान्तरम्॥ २५॥

**उत्क्षिप्तमिति**॥ उच्छ्रिता उत्क्षिप्ताः सितांशोश्चन्द्रस्य करा अंशवो हस्ताश्चावलम्बो येषां तैः, उत्तम्भितान्युडूनि यैस्तैः। उडूनि चावष्टभ्येत्यर्थः। शिरोभिः शिखरैर्मस्तकैश्चातीवतरां भृशतरम्। अतीवशब्दादव्ययादामुप्रत्ययः। उत्क्षिप्तमुद्यम्य धृतमन्तरीक्षं श्रद्धेयः सादृश्याद्विश्वसनीयो निर्झरजलमिति व्यपदेशो व्यवहारो यस्य तत्। दृढतरां निर्झरजलाधियं कुर्वदित्यर्थः। अस्याद्रेस्तटेषु विश्वक्समन्तात्पतति स्फुटं सत्यम्। इन्दुकरानुडूनि चावष्टभ्य शिरोभिर्ध्रियमाणमपि दुरुद्धरत्वाद् भ्रश्यदन्तरीक्षमेवेदं न तु जलम्। सादृश्यात्तु व्यपदेशो दुर्वार इति सर्वतःपातिना, निर्झरजलं चोत्प्रेक्ष्यते। तेनोत्सेधविस्तारावस्य व्यज्येते॥ २५॥

**एकत्र स्फटिकतटांशुभिन्ननीरा नीलाश्मद्युतिभिदुराऽम्भसोऽपरत्र॥**
**कालिन्दीजलजनितश्रियः श्रयन्ते वैदग्धीमिह सरितः सुरापगायाः॥२६॥**

**एकत्रेति**॥ इहाद्रौ सरितो नद्यः सुरापगायाः वैदग्धीं सादृश्यं सारूप्यं भजन्ते। किंभूतायाः गङ्गायाः कालिन्दीजलजनितश्रियः यमुनातोयोत्पादितशोभायाः। शुक्लाऽसिता भवन्तीत्यर्थः। वैदग्धी विचित्रच्छायाविच्छित्तिः, सादृश्यमित्येके। अकस्मात् प्रयागशोभां वहन्तीत्यर्थः। किंभूता नद्य एकस्मिन् प्रदेशे स्फटिकतटांशुभिन्ननीराः सूर्योपलरोधोरश्मिच्छुरितजालाः, अपरत्र अन्यत्र इन्द्रनीलदीधितिविशेषिततोयाः। भिन्नं छुरितं, नीरं जलम्। स्वयं भिद्यते विशेषं गच्छतीति भिदुरं, भिदुरमम्भो यासां ताः। प्रहर्षिणी वृत्तम्॥२६॥

**एकत्रेति**॥ एकत्र एकस्मिन्भागे स्फटिकस्य यत्तटं तस्यांशुभिर्विभिन्ननीरा मिश्रोदकाः। शुभ्रजला इत्यर्थः। अपरत्रापरस्मिन्भागे नीलाश्मनामिन्द्रनीलानां द्युतिभिर्भिदुराणि मिश्राण्यम्भांसि यासां ताः। नीलसलिला इत्यर्थः। इहाद्रौ सरितः कलिन्दस्याद्रेरपत्यं स्त्री कालिन्दी यमुना। 'कालिन्दी सूर्यतनया यमुना शमनस्वसा' इत्यमरः। तस्या जलैर्जनिता श्रीः शोभा यस्यास्तस्याः। तत्सङ्गताया इत्यर्थः। सुरापगाया गङ्गाया वैदग्धीं शोभां श्रयन्ते भजन्ति। विदग्धस्य भावो वैदग्धी। ब्राह्मणादित्वात् 'गुणवचन—' इत्यादिना ष्यञ्प्रत्ययः। 'षिद्गौरादिभ्यश्च' इति ङीष्। सोऽपीत्वस्य बाहुलकत्वादिह वैकल्पिकः। अत एव 'ष्यञः षित्करणादीकारो बहुलम्' इति वामनः। अत्र सितासितमणिगुणग्रहणात्सरितां यमुनासङ्गतगङ्गाशोभासादृश्याक्षेपात्तद्गुणोत्थापिता निदर्शना। प्रहर्षिणी वृत्तम्। म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्॥ २६॥

**इतस्ततोऽस्मिन्विलसन्ति मेरोः समानवप्रे मणिसानुरागाः॥**
**स्त्रियश्च पत्यौ सुरसुन्दरीभिः समा नवप्रेमणि सानुरागाः॥ २७॥**

**इतस्तत इति**॥ अस्मिन्नद्रौ मेरोः समानवप्रे सुराद्रिसदृशतटे मणिसानुरागाः रत्नमयशृङ्गभाग इतस्ततो विलसन्ति द्योतन्ते। तथा च पुनः स्त्रियोऽपि नार्योऽपि पत्यौ भर्तरि सानुरागाः प्रीतिमत्यः सत्यो विलसन्ति क्रीडन्ति सुरसुन्दरीभिः देववधूभिः समाः

सदृश्यः । कीदृशे पत्यौ नवप्रेमणि नूतनस्नेहे । अनन्यगतचित्ते इत्यर्थः । रज्यतेऽनेनेति रागो रश्मिः । नवप्रेमणीति विभाषया अलोपः । उपेन्द्रवज्रा छन्दः ॥ २७ ॥

इतस्तत इति ॥ मेरोः समानवप्रे तुल्यप्रस्थे अत एवास्मिन्नद्रावितस्ततो मणिसानुरागा रत्नतटकान्तयो विलसन्ति प्रसरन्ति । किञ्च नवं प्रेम यस्य तस्मिन्नवप्रेमणि पत्यौ अनुरागेण सह वर्तन्त इति सानुरागाः सुरसुन्दरीभिः समाः सरूपा स्त्रियश्चेतस्ततो विलसन्ति क्रीडन्ति । अन्योन्यमनुरागिणोऽनुरूपाश्चेह विलासिनस्तदनुरूपाणि च विहारस्थलानि सन्तीति भावः ॥ २७ ॥

**उच्चैर्महारजतराजिविराजिताऽसौ दुर्वर्णभित्तिरिह सान्द्रसुधासवर्णा ॥**
**अभ्येति भस्मपरिपाण्डुरितस्मरारेरुद्वह्निलोचनललामललाटलीलाम् ॥२८॥**

उच्चैरिति ॥ इहाद्रौ पर्वते दुर्वर्णभित्ती रूप्यकुड्यं भस्मपरिपाण्डुरितस्मरारेरुद्वह्निलोचनललामललाटलीलामभ्येति ( भस्म )धवलितहरस्य साग्निनयनभूषणललाटशोभां प्राप्नोति । यतः कीदृशी उच्चैः उन्नता, तथा महारजतराजिविराजिता महारजतराज्या कनकलेखया विराजिता भूषिता, तथा पुनः कीदृशी सान्द्रसुधासवर्णा सान्द्रा दीप्ता नूत्ना सुधा तया समानवर्णा । घन(?)मर्कोपलसिताया रजतभित्तेः भूतिसितं ललाटमुपमानं, कनकरजेः अग्निगर्भं तृतीयं नेत्रम् । उद्गतो वह्निर्यस्मात् उद्वह्नि साग्नि, लोचनं, ललामं चिन्हं भूषणं वा, ललाटं कपालं, लीला विच्छित्तिः । अभ्येतीति आभिमुख्येन प्राप्नोति ॥ २८ ॥

उच्चैरिति ॥ इहाद्रौ सान्द्रया सुधया लेपविशेषेणामृतेन वा सवर्णा समानवर्णा । 'ज्योतिर्जनपद--' इत्यादिना समानस्य सादेशः । 'लेपभेदेऽमृते सुधा' इति वैजयन्ती । महारजतराजिविराजिता काञ्चनरेखाशोभिता असौ पुरोवर्तिनी उच्चैरुन्नता दुर्वर्णभित्ती रजतभित्तिः । 'महारजतकाञ्चने' इति, 'दुर्वर्णं रजतं रूप्यम्' इति चामरः । भस्मना परिपाण्डुरितस्य स्मरारेरुद्वह्नि उद्गतार्चिर्लोचनमेव ललामं भूषणं यस्य तस्य ललाटस्य लीलां शोभामभ्येति भजतीति निदर्शनालङ्कारः । 'ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु' इत्यमरः ॥ २८ ॥

**अयमतिजरठाः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः ॥**
**सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्ति ॥ २९ ॥**

अयमिति ॥ अयं गिरिः तटीः पुलिनानि बिभर्ति धारयति । कीदृशीस्तटीः अतिशयेन जरठाः कठोराः परुषपाषाणाः प्रकामगुर्वीरत्यन्तविस्तीर्णाः, तथा अलघुविलम्बिपयोधरोपरुद्धाः सपयस्त्वात् बृहद्भिर्विलम्बमानैर्मेघैर्विष्वक् व्याप्ताः सदा च प्राणिनामगम्यरूपाः अयिशयदुर्गमाः । सुष्ठु अगम्या अगम्यरूपाः, प्रशंसायां रूपप्रत्ययः । अथ वा अगम्यं रूपं संस्थानं यासां ताः । तथा परिणतदिक्करिकाः परिणता दत्तप्रहाराः दिक्करिणो दिग्गजा यासु ताः । 'शेषाद्विभाषे'ति कः । परिणतदिक्करिका इव वृद्धकुमारीतुल्यास्तटीर्बिभर्तीत्युक्तिः । इवार्थो द्रष्टव्यः । ता अपि परिणतत्वादतिजर्जराः प्रकामगुर्वीः स्थूलदेहाः अलघुभिर्विलम्बिभिः पतितैः पयोधरैः कुचैरुपरुद्धा व्याप्तदेहाः अत एव तरुणानाम् असेव्यवपुषः । गमिरत्र मैथुने वर्तते, यथा—'न जरतीं स्त्रियं गच्छेत्' इति । दिक्करिकाः कुमार्यः । पुष्पिताग्रा वृत्तम् ॥ २९ ॥

अयमिति ॥ अयं गिरिरतिजरठा अतिकठिनाः अतिजरतीश्च । 'जरठः कठिने जीर्णे' इति वैजयन्ती । प्रकामं गुर्वीः श्रेष्ठाः स्थौल्याद् दुर्भराश्च प्रकामगुर्वीः । 'गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे' इति शब्दार्णवः । विस्पष्टपटुवत् 'मयूरव्यंसकादयश्च' इति समासः । अलघुभिर्विलम्बिभिर्लम्बमानैः पयोधरैर्मेघैः स्तनैश्च । 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः । उपरुद्धा आवृताः निबद्धाः सततं सर्वदा असुमता

प्राणभृतामगम्यरूपा अत्युन्नतत्वाद् दुरारोहस्वरूपाः, अन्यत्र वृद्धत्वाद्गमनाऽनर्हविग्रहाः । 'त्यजेदन्त्यकुलोत्पन्नां वृद्धां स्त्रीं कन्यकां तथा' इति गमननिषेधादिति भावः । परिणतास्तिर्यग्दन्तप्रहारिणो दिक्करिणो दिग्गजा यासु ताः परिणतदिक्करिकाः । 'तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः' इति **हलायुधः** । 'इनः स्त्रियाम्' इति समासान्तः कप्रत्ययः । अन्यत्र परिणताः किणीभूता दिशो दन्तक्षतविशेषाः करिकाः नखव्रणाश्च यासां ताः । 'दिग्दष्टे वर्तुलाकारे करिका नखरेखिका' इति **वैजयन्ती** । तटीर्बिभर्ति । अत्र प्रकृततटीविशेषणमहिम्ना अप्रकृतवृद्धाङ्गनाप्रतीतेः समासोक्तिः । पुष्पिताग्रा वृत्तमुक्तम् ॥ २९ ॥

**धूमाकारं दधति पुरः सौवर्णे वर्णेनाग्नेः सदृशि तटे पश्याऽमी ॥**
**श्यामीभूताः कुसुमसमूहेऽलीनां लीनां श्रेणीमिह(१) तरवो बिभ्राणाः ॥ ३० ॥**

**धूमाकारमिति** ॥ पुरोऽग्रे तटे पुलिने पश्य विलोकय, इह अमी वृक्षा धूमाकारं धूमसादृश्यं धारयन्ति । कीदृशे तटे सौवर्णे काञ्चनमये, अत एव वर्णेन अग्नेः सदृशि तुल्ये । पिशङ्गे इत्यर्थः। तरवः कीदृशाः कुसुमसमूहे पुष्पगुच्छे लीनां संलग्नामलीनां भ्रमराणां पङ्क्तिं बिभ्राणा धारयन्तः, अत एव श्यामीभूताः कृष्णत्वं प्राप्ताः, अत एव सादृश्यं दधति । वाक्यार्थस्याऽकर्मकत्वाद्द्वितीयाऽभावः । सौवर्णं तटं बुध्यतेऽग्निः, तरवस्तु धूम इति तात्पर्यार्थः। दधतीति अभ्यस्तत्वादनुषङ्गलोपः(२) । म्भौस्मौ ख्याता जलधरमालाऽब्ध्यङ्कैः ॥३०॥

**धूमाकारमिति** ॥ इहाद्रौ पुरोऽग्रे वर्णेनाग्नेः सदृशि समाने । अग्निसमानवर्ण इत्यर्थः । सौवर्णे सुवर्णविकारे तटे कुसुमसमूहे लीनां स्थिताम् । 'ल्वादिभ्यश्च' इति निष्ठानत्वम् । अलीनां भृङ्गाणामालीमावलीं बिभ्राणा अत एव श्यामीभूता अमी तरवो धूमसाम्यं दधाति, त्वं पश्य । स्वर्णतटमग्निवद्भाति, श्यामास्तरवो धूमवद्भान्तीत्युपमा । जलधरमाला वृत्तम् । 'अब्ध्यङ्कैः स्याज्जलधरमालाम्भौ स्मौ' इति लक्षणात् ॥३०॥

**व्योमस्पृशः प्रथयता कलधौतभित्तीरुन्निद्रपुष्पचणचम्पकपिङ्गभासः ॥**
**सौमेरवीमधिगतेन निकुञ्ज(३)शोभामेतेन भारतमिलावृतवद्विभाति ॥ ३१ ॥**

**व्योमेति** ॥ एतेनाद्रिणा भारतं वर्षं मनुष्यलोक इलावृतवद्विभाति स्वर्गतुल्यं शोभते । मेरुसमीपे इलावृतो नाम लोकोऽस्ति तत्र सर्वमेव सौवर्णं द्वादशवर्षसहस्राणि च जीव्यते । कुतस्तद्विभाति, किंभूतेन सौमेरवीं स्वर्णपर्वतसम्बन्धिनीं निकुञ्जशोभां गहनप्रदेशलक्ष्मीमधिगतेन प्राप्तेन । एतदेव कथं, किं कुर्वता कलधौतभित्तीः सुवर्णशृङ्गाणि प्रथयता विस्तारयता, कीदृशीः व्योमस्पृशो गगनलग्नाः, तथा उन्निद्रैः विकसितैः पुष्पैः प्रतीता उन्निद्रपुष्पचणा ये चम्पका वृक्षविशेषास्तैः पिङ्गाः पिशङ्गा भासो दीप्तयो यासां ताः । वित्तेऽर्थे चणप्प्रत्ययः, तेन वित्तश्चुञ्चुप्चणपौ । इलावृतोऽप्येवंविधो मेरुणा शोभते । सुमेरोरियं सौमेरवी ॥ ३१ ॥

**व्योमेति** ॥ व्योमस्पृशोऽभ्रङ्कषाः उन्निद्रैर्विकसितैः पुष्पैर्वित्ता उन्निद्रपुष्पचणाः । 'तेन वित्तः–' इति चणप्प्रत्ययः । ते च ते चम्पकाश्च तद्वत्पिङ्गभासः पिङ्गवर्णाः कलधौतभित्तीः कनकतटीः । 'कलधौतं रौप्यहेम्नोः' इति **विश्वः** । प्रथयता प्रकटयता अत एव सौमेरवीं सुमेरुसम्बन्धिनीं नितम्बशोभां कटकलक्ष्मीमधिगतेन प्राप्तवता । 'गत्यर्थाकर्मक–' इत्यादिना गमेः कर्तरि क्तः । एतेन रैवतकाद्रिणा भारतं भरतस्य राज्ञ इदं भारताख्यं वर्षं भूखण्डम् । 'स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम्' **इत्यमरः** । इलावृतवदिलावृतवर्षमिव विभातीत्युपमा । नवखण्डस्य जम्बूद्वीपस्य हिमाद्रेर्दक्षिणभूखण्डं हैमवतापरनामकं भारतवर्षं सुमेरुयोगात्सौमेरवापराख्यं मध्यमखण्डमिलावृतवर्षम् । अत एव –

'नाम्नेदं भारतं वर्षं हिमाद्रेस्तच्च दक्षिणे ।

---

(१) लीनामालीमिह । (२) 'श्नाभ्यस्तयोरातः' इत्याकारलोप इति यावत् । (३) नितम्ब ।

तेन हैमवतं नाम परेष्वप्येवमुन्नयेत् ॥
इलावृतं सौमेरवं सुमेरोः परितो हि तत्' ॥
इति वैजयन्ती ॥ ३१ ॥

**रुचिरचित्रतनूरुहशालिभिर्विचरितैः (१)परितः प्रियकव्रजैः ॥**
**विविधरत्नमयैरभिभात्यसाववयवैरिव जङ्गमतां गतैः ॥ ३२ ॥**

**रुचिरेति ॥** एषोऽद्रिः प्रियकव्रजैः मृगविशेषयूथैः अभिभाति परितः शोभते । कीदृशैः रुचिरचित्रतनूरुहैः लोमभिः शालन्ते श्लाघन्ते ये तैः, तथा परितः समन्तात् विचरितैः चरितुं प्रवृत्तैः । उत्प्रेक्ष्यते—अवयवैरिव स्वाङ्गैरिव । किंभूतैः जङ्गमतां गतैः जीवत्वं प्राप्तैः तथा विविधरत्नमयैः । अवयवाः अवयवसंस्थानविशेषाः, विविधरत्नतुल्यानि तनूरुहाणि ॥ ३२ ॥

**रुचिरेति ॥** असौ गिरिः रुचिरैरुज्ज्वलैश्चित्रैर्नानावर्णैस्तनूरुहैर्लोमभिः शालन्त इति तथोक्तैः परितः प्रचलितैः प्रसरद्भिः, प्रियकाः कम्बलप्रकृतयो मृगविशेषाः । 'प्रियको रोमाभिर्युक्तो मृदूच्चमसृणैर्घनैः' इति **वैजयन्ती** । तेषां व्रजैः समूहैर्जङ्गमतां चरिष्णुतां गतैर्विविधरत्नमयैरवयवैः स्वाङ्गैरिव अतिभातीत्युत्प्रेक्षा । द्रुतविलम्बितं वृत्तम् ॥ ३२ ॥

**कुशेशयैरत्र जलाशयोषिता मुदा रमन्ते कलभा विकस्वरैः ॥**
**प्रगीयते सिद्धगणैश्च योषितामुदारमन्ते कलभाविकस्वरैः ॥ ३३ ॥**

**कुशेशयैरिति ॥** अत्राद्रौ जलाशयोषिता सरःस्थिताः कलभाः करिपोतका विकस्वरैः विकासिभिः कुशेशयैः कमलैर्मुदा हर्षेण रमन्ते क्रीडन्ति, तथा सिद्धगणैश्च देवविशेषैर्योषितामन्ते प्रियासमीपे उदारमुत्कृष्टं गीयते सुष्ठु गानं क्रियते । कीदृशैः कलभाविकस्वरैः कलो मधुरो भाविकः सरसः स्वरो वाक् येषां तैः । कुशे जलमध्ये शेरते इति कुशेशयानि । आशयः स्थानम्, आशेरतेऽस्मिन्निति कृत्वा पुंसि संज्ञायां घः प्रायेण । विकसन्तीति शीलानि विकस्वराणि, स्थेशभासपिसकसो वरच् । प्रगीयते इति भावे लकारः कर्मणि वा । भावा रसा उपचारात् भावना वा, कलत्वं कलभावः स विद्यते यस्यासौ कलभाविकः, अत इनिठनौ । उशन्ति वंशस्थवृत्तम् ॥ ३३ ॥

**कुशेशयैरिति ॥** अत्राद्रौ जलाशयोषिता जलाशयेषु ह्रदेषु उषिता वसन्तः । 'गत्यर्थाकर्मक–'इत्यादिना वसतेः कर्तरि क्तः, सम्प्रसारणम् । 'मतिबुद्धिपूजार्थेभ्यश्च' इति चकाराद्वर्तमानार्थता । कलभास्त्रिंशद्वर्षकरिणः । 'त्रिंशद्वर्षस्तु कलभः' इति **वैजयन्ती** विकस्वरैर्विकसनशीलैः । स्थेशभासपिसकसो वरच् । कुशेशयैः शतपत्रैः । 'शतपत्रं कुशेशयम्' इत्यमरः । मुदा प्रीत्या रमन्ते क्रीडन्ति । करिविहाराणां कमलाकराणामयमाकर इति भावः । किञ्च कला अव्यक्तमधुराः । विकारो मानसो भावः स प्रयोजनमेषां भाविकाः । उद्दीपका इत्यर्थः । कला भाविकाश्च स्वराः षड्जादयो येषां तैः कलभाविकस्वरैः सिद्धगणैः सुरसङ्घैर्योषितां स्वस्त्रीणामन्ते समीपे उदारमुच्चैः प्रगीयते च । भूस्वर्गोऽयमिति भावः ॥ ३३ ॥

**आसादितस्य तमसा नियतेर्नियोगादाकाङ्क्षतः पुनरपक्रमणेन कालम् ॥**
**पत्युस्त्विषामिह महौषधयः कलत्रस्थानं परैरनभिभूतममूर्भजन्ते(२) ॥३४॥**

**आसादितस्येति ॥** इह नगे अमूर्महौषधयस्त्विषां पत्युः सूर्यस्य कलत्रस्थानं रुचामाश्रयत्वं भजन्ते श्रयन्ति । तिष्ठन्त्यस्मिन्निति स्थानम्, कलत्रं दाराः, त्विषां पत्युश्च त्विष एव कलत्रम् । तेन महौषधिषु अमृतसञ्जीविनीप्रभृतिषु त्विषो निक्षिप्य रविरस्तं यतीति तात्पर्यार्थः । किंभूतस्य त्विट्पतेः नियतेर्नियोगाद्विधेरादेशात् तमसा अन्ध-

(१) विचलितैः । (२) वहन्ति ।

कारेणास्तंगमनेन वा आसादितस्य प्राप्तस्य । पितामहाज्ञयाऽपि रविरस्तं याति । पुनर्भूयः अपक्रमणेन उदयाचलगमनेन कालं स्वसमयमाकाङ्क्षतः वाञ्छतः । गत्या हि दिनकृदुदयं लभते । कीदृशं स्थानं परैरन्धकारादिभिः अपरिभूतमानाक्रान्तम् । न हि रात्रावोषधिषु तमो बाधते, तेजोरूपत्वात् । अथोक्तिश्लेषः—यः किल महापुरुषो दैववशात्तमसा दारिद्र्येण शत्रुभिरासादितः सन् क्वापि गृहादावपि अपरिभूते स्थाने दारान् क्षिपति, ततः पुनरपक्रमणेन चेष्टया कालमाकाङ्क्षति । चन्द्रस्त्वपां पतिरिति न तथा हृदयहारि ॥ ३४ ॥

**आसादितस्येति** ॥ इहाद्रौ अमूर्महौषधयो नियतेर्नियोगादस्मिन्काले इदं भावीति दैवशासनात् तमसाऽन्धकारेण तत्प्रायेण व्यसनेन वा आसादितस्याक्रान्तस्य पुनरपक्रमणेन पुनरावृत्त्या कालं समागमकालमाकाङ्क्षतः । पुनरागत्य सङ्गन्तुमिच्छत इत्यर्थः । त्विषां पत्युः सूर्यस्य सम्बन्धि परैस्तेजोऽन्तरैः पुरुषान्तरैश्च अनभिभूतमतिरस्कृतमनुपहतं च कलत्रस्थानं कलत्रभूतानां त्विषां स्थानं स्थितिं वहन्ति । निर्वहन्तीत्यर्थः । स्त्रीणां स्त्रीष्वेव रक्षणं कार्यमिति भावः । यथा केनचिदापदि न्यासीकृतानि कलत्राणि संरक्ष्य कालान्तरे साधवस्तस्मै प्रयच्छन्ति, तद्वदोषधयोऽपि त्विषस्त्विषां पत्युरर्पयन्तीत्यर्थः । एतच्च तासां सूर्यास्तमये प्रज्वलनादुदये विपर्ययाच्चोपचर्यते । अत्र विशेषणसाम्यादर्कादीनामापन्नादिसाम्यप्रतीतेः समासोक्तिरलङ्कारः ॥ ३४ ॥

**पुरः पति(१)स्कन्धनिषण्णबालप्रवालहस्ताः प्रमदा इवात्र ॥**
**पुष्पेक्षणैर्लम्बित(२)लोचकैर्वा मधुव्रतव्रातवृतैर्व्रतत्यः ॥ ३५ ॥**

**पुर इति** ॥ अत्राऽद्रौ व्रतत्यो लताः प्रमदा इव अङ्गनातुल्याः । इदानीं श्लेषः- कीदृश्यो लताः पुरोऽग्रे पतिर्वृक्षस्तस्य स्कन्धे प्रकाण्डे निषण्णाः संलग्नाः बाला नवाः प्रवालाः किसलयान्येव हस्ताः कराः यासां ताः । प्रमदा अपि भर्तृस्कन्धदत्तपल्लवसमकरा भवन्ति । लता हि निकटं तरुं वेष्टयन्ति प्रमदा अपि अग्रेवर्तिनः पत्युरुत्सङ्गे प्रवालतुल्यं पाणिं प्रायशः कुर्वते । तथा पुष्पाण्येव चक्षूंषि तैरुपलक्षिताः, नार्योऽपि पुष्पतुल्यैर्नेत्रैः शोभन्ते । कीदृशैः मधुव्रतव्रातवृतैः मधु किञ्जल्कं व्रतयन्ति भक्षयन्तीति मधुव्रताः षट्पदास्तेषां व्रातः समूहः तेन वृतैर्व्याप्तैः, लम्बितलोचकैर्वा, वा इवार्थे । लम्बितलोचकैरिव । ग्राम्यनारीशिरोवस्त्रं लोचकः प्रायेण कृष्णः तनीयान् । ग्राम्या हि मुखे लोचकान् कुर्वते । यथा—

> **यो गोपीजनवल्लभः कुचतटव्याभोगलब्धास्पदं**
> **छायावात्रविरक्तको ( ? ) बहुगुणश्चारुश्चतुर्हस्तकः ।**
> **कृष्णः सोऽपि हताशयाऽप्यपहृतः सत्यं कयाऽप्यद्य मे**
> **किं राधे ! मधुसूदनो न हि न हि प्राणप्रियो लोचकः ॥ ॥ ३९ ॥**

**वनस्पतीति** ॥ अत्राद्रौ वनस्पतयो वृक्षाः । 'वनस्पतिर्वृक्षमात्रे विना पुष्पफलद्रुमे' इति विश्वः । तेषां स्कन्धेषु प्रकाण्डेषु अंसेषु च निषण्णाः सक्ता बालप्रवाला बालपल्लवा हस्ता इव यासां तास्तथोक्ताः । मधूनि व्रतयन्ति भुञ्जते इति मधुव्रता मधुपास्तेषां व्रातेन वृन्देन वृतैरच्छैः । अत एव लम्भिताः प्रापिता लोचकास्तारकाणि कज्जलानि च यैस्तैर्वा तैरिव स्थितैरित्युत्प्रेक्षा । इवार्थे वाशब्दः, तद्वदुत्प्रेक्षाया चोक्तः । 'लोचको मांसपिण्डे स्यादक्षितारे च कज्जले' इति विश्वः । पुष्पैरीक्षणैरिव पुष्पेक्षणैरुपलक्षिता व्रतत्यो लताः प्रमदा इव, लक्ष्यन्त इति शेषः । 'न प्रसिद्धे क्रियाध्याहारदोषः' इत्याह वामनः, लिङ्गाध्याहारवदिति ॥३५॥

---

( १ ) वनस्पति । ( २ ) लम्भित ।

**विहगाः कदम्बसुरभाविह गाः कलयन्त्यनुक्षणमनेकलयम् ॥**
**भ्रमयन्नुपैति मुहुरभ्रमयं पवनश्च धूतनवनीपवनः ॥ ३६ ॥**

**विहगा इति** ॥ इह गिरौ कदम्बपुष्पसुरभौ सुगन्धे विहगाः पक्षिणः अनुक्षणं वारंवारं गाः कलयन्ति वाच उच्चारयन्ति गायन्तीत्यर्थः । अनेकलयं द्रुतमध्यविलम्बितभेदेन त्रिविधो लयो गुणो वा यत्र गाने । लयो गीतादिसाम्यम् । अन्यच्च अयं पवनो वायुः उपैति वाति । कीदृशः अभ्रं मेघं मुहुर्वारंवारं भ्रमयन् प्रेरयन्, इति शैत्यमृदुत्वोक्तिः । तथा धूतं कम्पितं नवं सरसं नीपवनं वार्षिककदम्बकुसुमवृन्दं येन, धूतकदम्बकुसुमसमूहः इति सौरभोक्तिः । प्रमिताक्षरा वृत्तम् ॥ ३६ ॥

विहगा इति ॥ कदम्बैः सुरभिः सुगन्धिस्तस्मिन्कदम्बसुरभाविहाद्रौ विहगाः पक्षिणोऽनुक्षणं प्रतिक्षणम् अनेके बहुविधा लया विच्छेदा यस्मिन्कर्मणि तद्यथा तथा गाः वाचः । शब्दानित्यर्थः । कलयन्त्युच्चारयन्ति । 'अर्जुनीनेत्रदिग्बाणभूवाग्वारिषु गौर्मता' इति विश्वः । किञ्च धूतानि कम्पितानि नवानि नीपवनानि कदम्बकाननानि येन सः धूतनवनीपवनः । 'नीपप्रियककदम्बास्तु हलिप्रिय' इत्यमरः । अयं पवनः मुहुरभ्रं मेघं भ्रमयन्नुपैति । प्रमिताक्षरा वृत्तम् । 'प्रमिताक्षरा सजससैरुदिता' इति लक्षणात् ॥ ३६ ॥

**विद्वद्भिरागमपरैर्विवृतं कथञ्चिच्छ्रुत्वाऽपि दुर्ग्रहमनिश्चितधीभिरन्यैः ॥**
**श्रेयान्द्विजातिरिव हन्तुमघानि दक्षं गूढार्थमेष निधिमन्त्रगणं बिभर्ति ॥३७॥**

**विद्वद्भिरिति** ॥ एषोऽद्रिः निधय एव मन्त्रास्तेषां गणं वृन्दं बिभर्ति धारयति । निधानं कीदृशं विद्वद्भिः प्राज्ञैः आगमपरैस्तालशास्त्रप्रवीणैः कथञ्चित् क्लेशेन विवृतं प्रकटितम् । तालज्ञा एवं विधानं जानते । तथा अन्यैरनिश्चितधीभिः अतालज्ञैः श्रुत्वापि 'अत्र विद्यते निधान'मित्यन्यतो बुद्ध्वाऽपि दुर्ग्रहं दुष्प्रापं, तथा अघानि दारिद्र्यादिदुःखानि हन्तुं विनाशयितुं क्षमं शक्तं, तथा गूढार्थमप्रकटितद्रव्यम् अत एव कथञ्चित् विवृतं दुर्ग्रहं च । कीदृशोऽद्रिः श्रेयान् सर्वश्रेष्ठः, क इव बिभर्ति द्विजातिरिव विप्रतुल्यः । श्रेयान् सानुष्ठानो द्विजातिः मन्त्रगणं बिभर्ति, कीदृशम् आगमपरैः सिद्धान्तनिष्ठैरपि दुःखेन व्याख्यातम्, अन्यैश्चावलिप्तैः श्रुत्वा दुर्ग्रहमज्ञातं, यतो गूढार्थं छिन्नवाच्यम् । दुर्बोधमित्यर्थः । तथा पापानि विध्वंसयितुं समर्थम् । वेदवाक्यैर्हि यथान्यस्तैस्त्रिविधमशुभं क्षीयते ॥ ३७ ॥

विद्वद्भिरिति ॥ एषोऽद्रिः श्रेयान् श्रेष्ठः द्विजातिर्ब्राह्मण इव आगमो निधिकल्पो मन्त्रशास्त्रं च स एव परं प्रधानं येषां तैरागमपरैर्विद्वद्भिर्निधीनां मन्त्राणां च साधनविधानज्ञैः कथञ्चिद्विवृतं स्वरूपतः प्रकाशितम् । नास्ति निश्चिता इदमित्थमिति निश्चयात्मिका धीर्येषां तैरनिश्चितधीभिरन्यैरशास्त्रज्ञैः श्रुत्वापि 'इह निधिरस्ति, ईदृक्चैमा असौ मन्त्र' इति चाप्तमुखादाकर्ण्यापि दुर्ग्रहं दुःसाधनम् । अघानि दुःखान्येनांसि च हन्तुं दक्षं समर्थम् । 'दुःखैनोव्यसनेष्वघम्' इति वैजयन्ती । गूढः संवृतोऽर्थो धनमभिधेयं च यस्मिस्तं गूढार्थम् । निधयो मन्त्रा इव, अन्यत्र निधय इव मन्त्रास्तेषां गणं बिभर्ति । द्विजातिर्मन्त्रगणमिव निधिगणमेष बिभर्तीत्युपमार्थः ॥ ३७ ॥

**बिम्बोष्ठं बहु मनुते तुरङ्गवक्त्रश्चुम्बन्तं मुखमिह किन्नरं प्रियायाः ॥**
**श्लिष्यन्तं मुहुरितरोऽपि तं निजस्त्रीमुत्तुङ्गस्तनभरभङ्गभीरुमध्याम् ॥ ३८ ॥**

**बिम्बोष्ठमिति** ॥ इहाऽद्रौ अश्वमुखः मनुष्यमुखं किन्नरं बहु मन्यते गुरु यथा तथा अवबुध्यते एष शोभन इति जानाति । किं कुर्वन्तं प्रियाया मुखं बिम्बीफलरक्ताधरं

चुम्बन्तं पिबन्तं, तस्य अश्वमुखत्वाच्चुम्बनं दुर्घटमतस्तस्मै स्पृहयते । इतरोऽपि अश्वशरीरस्तमश्वमुखं बहु मन्यते, यतो निजप्रियां वरशरीरे आलिङ्गन्तम्, अश्वशरीरे आलिङ्गनं नास्ति । कीदृशीं कान्ताम् उत्तुङ्गः ऊर्ध्वमुखो यः स्तनभारः कुचाभोगस्तेन यो भङ्गः स्फुटनं ततो भीरु त्रस्तं मध्यमुदरं यस्याः सा ताम् । पीनपयोधरां कृशोदरीं वा इत्यर्थः । स्त्रीमिति 'वाऽम्शसो'रिति इयङ्विकल्पः । द्विधा किंपुरुषाः, केचित् अश्वमुखाः पुरुषशरीराः केचित् मनुष्यमुखा अश्वदेहाश्च। तत्रान्योन्यं साभिलाषौ इति तात्पर्यार्थः। प्रहर्षिणी छन्दः३८

बिम्बोष्ठमिति ॥ इहाद्रौ तुरगस्य वक्त्रमिव वक्त्रं यस्य स तुरङ्गवक्त्रो देवयोनिविशेषः। सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्चेत्युष्ट्रमुखवत्समासः । बिम्बकल्प ओष्ठो यस्य तं बिम्बोष्ठमित्युपमालङ्कारः । 'ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम्' इत्योकारः । प्रियाया मुखं चुम्बन्तं किन्नरं मानुषमुखमश्वाङ्गं देवयोनिविशेषं बहु गुरु यथा तथा मनुतेऽवबुध्यते । तुरङ्गवक्त्रस्य चुम्बनासम्भवादिति भावः । इतरः किन्नरोऽप्युत्तुङ्गस्तनभरेण यो भङ्गस्तस्माद्भीरुर्मध्यो यस्यास्तां निजकां स्वस्त्रियम् ।'वाऽमूशसोः'इति विकल्पादियङादेशाभावः ।मुहुः श्लिष्यन्तं मानुषाङ्गत्वादालिङ्गन्तं तुरङ्गवक्त्रं बहु यथा मनुते। तुरङ्गवपुषः किन्नरस्याश्लेषासम्भवादिति भावः । दुर्लभं प्रियं भवतीति रहस्यम् । मध्यस्याभङ्गेऽपि भङ्गोक्तेरातिशयोक्तिरुपमया संसृज्यते । प्रहर्षिणी वृत्तमुक्तम् ॥ ३८ ॥

**यदेतदस्याऽनुतटं विभाति वनं तताऽनेकतमालतालम् ॥**
**न पुष्पिताऽत्र स्थगितार्करश्मावनन्तताने कतमा लताऽलम् ॥ ३९ ॥**

यदेतदिति ॥ अस्याद्रेः अनुतटं पुलिनसमीपे यदेतद्वनं काननं शोभते, अत्र वने कतमा लता वल्ली अलमत्यर्थं न पुष्पिता । सर्वा सञ्जातकुसुमेत्यर्थः । कीदृग्वनं ततानेकतमालतालं तमालाश्च तालाश्च तमालतालं ततं विस्तीर्णमनेकतमालतालं यत्र । अत एव स्थगितार्करश्मौ पिहितरविकिरणे, तथा अनन्तताने अनन्तस्तानो विस्तारो यस्मिन्, महाभोगे ॥ ३९ ॥

यदेतदिति ॥ अस्याद्रेरनुतटं तटेषु । विभक्त्यर्थेऽव्ययीभावः । तता विस्तृता अनेके बहवस्तमालास्तालाश्च यस्मिंस्तत्ततानेकतमालतालं यदेतत्पुरोवर्ति वनं विभाति स्थगितार्करश्मौ तिरोहितातपे अनन्तताने ऽपारविस्तारेऽत्र वने कतमा लता का वा लता अलमत्यन्तं न पुष्पिता सञ्जातपुष्पा न । भवतीति शेषः । सर्वापि पुष्पितेत्यर्थः ॥ ३९ ॥

**दन्तोज्ज्वलासु विमलोपलमेखलान्ताः सद्रत्नचित्रकटकासु बृहन्नितम्बाः ॥**
**अस्मिन्भजन्ति घनकोमलगण्डशैला नार्योऽनुरूपमधिवासमधित्यकासु ॥४०॥**

दन्तोज्ज्वलास्विति ॥ अस्मिन् रैवतके अधित्यकासु उपरितनभूमिषु नार्योऽनुरूपं श्रेष्ठमुचितं वा अधिवासं स्थानं भजन्ति सेवन्ते । उपभोगयोग्यान् प्रदेशान् आश्रयन्त इत्यर्थः। कीदृशीषु दन्तोज्ज्वलासु उच्चपाषाणरम्यासु तथा सद्रत्नचित्रकटकासु सद्रत्नैः परार्ध्यमणिभिश्चित्रकटकासु नानारूपसानुषु । नार्यः कीदृश्यः विमलोपला मेखलान्ताः काञ्चीपर्यन्ता यासु ताः तथोक्ताः, तथा बृहन्नितम्बाः पीवरजघनाः तथा घनकोमलगण्डशैलाः घनाः परिपूर्णाः कोमलाः सुस्पर्शा गण्डशैलाः कपोलभित्तयो यासु ताः । अथ वाऽनुरूपमात्मतुल्यं स्थानमधित्यकासु भजन्ते इति अर्थान्तरप्रतीतिः । एवं चानुरूप्यं भवति, यदि नार्योऽधित्यकाश्च सदृशो भवन्ति । तेनेह नार्योऽधित्यकाश्च सदृशा इति तात्पर्यार्थः । न च विभागोपपन्नैर्विशेषणैरत्र शब्दसाम्यमर्थसादृश्यं वा विद्यते । तथा पञ्चापि विशेषणा-

न्येकैकमुभाभ्यामप्यर्थवशाद्विभक्तिविपरिणामेन योजनीयानि । तत्र यानि न व्याख्यातानि तानि योज्यन्ते । नार्यः किंभूताः दन्तैर्दशनैरुज्ज्वला मनोहराः तथा उत्तममणिनानारूपवलयाः । अधित्यकासु कीदृशीषु स्फटिकमध्यप्रदेशासु, तथा बृहन्नितम्बासु विस्तीर्णप्रदेशविशेषासु, तथा निबिडसुस्पर्शगलितपाषाणासु ॥ ४० ॥

**दन्तोज्ज्वलास्विति** ॥ अस्मिन्नद्रौ दन्ता निकुञ्जा दशनाश्च । 'दन्तो निकुञ्जे दशने' इति **विश्वः** । तैरुज्ज्वलासु रुचिरासु सद्रत्नैश्चित्राणि कटकानि सानूनि वलयानि च यासां तासु । 'कटकं वलये सानौ' इति **विश्वः** । अधित्यकासूर्ध्वभूमिषु । 'भूमिरूर्ध्वमधित्यका' **इत्यमरः** । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इत्यधिशब्दात्त्यकन्प्रत्ययः । विमलोपला उज्ज्वलशिला उज्ज्वलमणयो वा मेखलाः काञ्च्यो नितम्बभूमयश्च । 'मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः' इति **विश्वः** । ताभिरन्ता रम्याः । 'मृताववसिते रम्ये समाप्तावन्त इष्यते' इति **शब्दार्णवे** । बृहन्तो नितम्बाः कटिपश्चाद्भागाः शिखराणि च यासां ताः । 'नितम्बो रोधसि स्कन्धे शिखरेऽपि कटेरधः' इति **विश्वः** । घना विपुलाः कोमलाः श्लक्ष्णा गण्डशैलाः गण्डस्थलानि स्थूलोपलाश्च यासां ताः नार्योऽनुरूपमिच्छासदृशम् आत्मसदृशं वाऽधिवासं भजन्ति । अत्र नारीणामधित्यकानां च प्रकृतत्वात्केवलप्रकृतगोचरा श्लेषोपस्थापिता तुल्ययोगिता । अत एवोभयविशेषणान्युभयत्र विभक्तिविपरिणामेन योज्यानि ॥ ४० ॥

**अनतिचिरोज्झितस्य जलदेन चिरस्थितबहुबुद्बुदस्य पयसोऽनुकृतिम् ॥**
**विरलविकीर्णवज्रशकला सकलामिह विदधाति धौतकलधौतमही ॥ ४१ ॥**

**अनतिचिरेति** ॥ इहाद्रौ धौतकलधौतमही निर्मलरूप्यभूमिः मेघेन साम्प्रतमुक्तजलस्य अत एव चिरस्थितानेकफेनलवस्य सकलामखण्डामनुकृतिं सारूप्यं विदधाति करोति । कीदृक् मही विरलानि अघनानि विकीर्णानि विक्षिप्तानि वज्रशकलानि हीरकखण्डानि यस्याः सा । पयसः किंभूतस्य जलदेन अनतिचिरं तत्क्षणं त्यक्तवृष्टस्य अत एव चिरस्थिता बहवो बुद्बुदाः फेना यस्य । चिरोज्झितं पयो न शुक्लं भवति नापि सबुद्बुदमित्यनतिचिरग्रहणम् । रूप्यभूमेर्मेघपय उपमानं, वज्राणां बुद्बुदाः ॥ ४१ ॥

**अनतिचिरेति** ॥ इहाद्रौ विरलं यथा तथा विकीर्णाः प्रसरणशीला वज्रशकलाः श्वेतहीरखण्डानि यस्यां सा धौता शुभ्रा कलधौतमही रजतभूमिः । 'कलधौतं रूप्यहेम्नोः' इति **विश्वः** । जलदेनानतिचिरोज्झितस्य तत्कालमुक्तस्य । शुभ्रस्येति भावः । चिरस्थिताश्चिरस्थायिनो बहवश्च बुद्बुदा जलस्फोटा यास्मस्तस्य पयसोऽम्भसः सकलामनुकृतिं समग्रसादृश्यं विदधाति । अत्र मेघोज्झितजलस्य स्थिरबुद्बुदासम्बन्धेऽपि सम्भावनया सम्बन्धोक्तेरतिशयोक्तिः । कुररीरुता वृत्तम् । 'कुररीरुता नजभजैर्लगयुक्' इति लक्षणात् ॥ ४१ ॥

**वर्जयन्त्या जनैः सङ्गमेकान्ततस्तर्कयन्त्या सुखं सङ्गमे कान्ततः ॥**
**योषयैष स्मरासन्नतापाङ्गया सेव्यतेऽनेकया सन्नताऽपाङ्गया ॥ ४२ ॥**

**वर्जयन्त्येति** ॥ एषोऽद्रिरनेकया योषया यौवतेन सेव्यते, कीदृश्या योषया जनैः सङ्गं वर्जयन्त्या । किमर्थं लोकसङ्गं परिहरतीत्याह–सङ्गमे सङ्गे सति कान्ततः प्रियात् एकान्ततो रहसि सुखं जानत्या, सत्यपि प्रियसन्निधाने जनसमक्षं न किञ्चित् सुरतसुखमासाद्यते इति शङ्कमानयेत्यर्थः । यतः स्मरासन्नतापाङ्गया कामेन हेतुना आसन्नतापं निकटज्वरमङ्गं शरीरं यस्याः तया । समदनज्वरयेत्यर्थः । तथा सन्नतौ निम्नौ अपाङ्गौ अक्षिपर्यन्तौ यस्याः तया । स्रग्विणी वृत्तम् ॥ ४२ ॥

**वर्जयन्त्येति** ॥ एकान्तत एकान्ते । रहसीत्यर्थः । कान्ततः कान्तेन । प्रियेणेत्यर्थः । उभयत्रापि

-मार्थविभक्तिकस्तसिः। सङ्गमे सति सुखं तर्कयन्त्या उत्प्रेक्षमाणया। विस्रब्धं विहारमाकाङ्क्षन्त्येत्यर्थः। अत एव जनैः सङ्गं वर्जयन्त्या। कुतः—स्मरेणासन्नतापानि प्राप्तज्वराण्यङ्गानि यस्यास्तया स्मरासन्नतापाङ्ग्या। 'अङ्गगात्रकण्ठेभ्यश्चेति वक्तव्यम्' इति विकल्पादिह पक्षे टाप्। सन्नतौ नम्रावपाङ्गौ यस्यास्तया सन्नतापाङ्ग्या स्मरतापात्कूणितनेत्रया अनेकया योषया। अनेकाभिर्योषाभिरित्यर्थः। जातावेकवचनम्। 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः। एषोऽद्रिः सेव्यते। इच्छाविहारस्थानानीह सन्तीति भावः। स्रग्विणी वृत्तम्। 'रैश्चतुर्भिर्युता स्रग्विणी सम्मता' इति लक्षणात्॥ ४२॥

**सङ्कीर्णकीचकवनस्खलितैकवालविच्छेदकातरधियश्चलितुं चमर्यः॥**
**अस्मिन्मृदुश्वसनगर्भतदीयरन्ध्रनिर्यत्स्वर(१)श्रुतिसुखादिव नोत्सहन्ते॥४३॥**

**सङ्कीर्णेति॥ इह चमर्यो वालप्रियाश्चलितुं नोत्सहन्ते गन्तुं नेच्छन्ति। यतः किंभूताः सङ्कीर्णं संहतं यत् कीचकवनं सच्छिद्रवंशकाननं तत्र स्खलितः संलग्नो यः एको वालः कचस्तस्य विच्छेदेन त्रुटनेन कातरधियस्त्रस्तबुद्धयः खिन्नचिताः। जातिस्वभावात् आमरणमप्यङ्गीकुर्वते न वालभङ्गम्। उत्प्रेक्ष्यते-मृदुश्वसनगर्भं कोमलमारुतपूर्णं यत्तदीयरन्ध्रं कीचकविवरं ततो निर्यन् निर्गच्छन् स्वरः शब्दः स्वराः षड्जादयः तेषां श्रुतिराकर्णनं तया यत् सुखं तस्मादिव न चलन्ति। यो हि सरसः स जिगमिषुरपि गेयवाद्याकर्णने न नूनं याति॥ ४३॥**

सङ्कीर्णेति॥ अस्मिन्नद्रौ सङ्कीर्णा मिथः सन्दष्टाः कीचका वेणुविशेषाः। 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः। तेषां वने स्खलितस्यैकवालस्यैकरोम्णो विच्छेदात्कातरा त्रस्ता धीर्यासां ताश्चमर्यो, मृदुश्वसनो मन्दमारुतो गर्भे येषां तेभ्यस्तदीयरन्ध्रेभ्यः कीचकविवरेभ्यो निर्यतो निर्गच्छतः स्वनस्य श्रुत्या श्रवणेन यत्सुखं तस्मादिवेति हेतूत्प्रेक्षा, चलितुं नोत्सहन्ते। वस्तुतस्तु वालप्रियत्वादिति भावः। 'शकधृष--' इत्यादिना तुमुन्प्रत्ययः॥ ४३॥

**मुक्तं मुक्तागौरमिह क्षीरमिवाभ्रैर्वापीष्वन्तर्लीनमहानीलदलासु॥**
**शस्त्रीश्यामैरंशुभिराशु द्रुतमम्भश्छायामच्छामृच्छति नीलीसलिलस्य॥४४॥**

**मुक्तमिति॥ इहाद्रौ वापीषु अम्भः सलिलं नीलीसलिलस्य गुलिकाजलस्य अच्छां निर्मलां छायां कान्तिमृच्छति प्राप्नोति। नीलं भवतीत्यर्थः। किमिव क्षीरमिव, यथा दुग्धं नीलरश्मिच्छुरितं नीलां कान्तिं प्राप्नोति। कीदृशं पयः मेघैर्वृष्टम्। कदाचित् मेघपयो नीलं स्यात् तन्न चित्रमित्याह-मुक्तागौरं मुक्तासितम्, अत एव क्षीरतुल्यम्। कथं तर्हि नीलवर्णमित्याह-किंभूतं क्षुरिकावदसितैः किरणैराशु तत्क्षणं द्रुतं छुरितं भिन्नम्। कृष्णकिरणानां पुष्करिणीषु कुत आगम इत्याह-किंभूतासु वापीषु अन्तर्मध्ये लीनानि श्लिष्टानि महानीलदलानि इन्द्रनीलखण्डानि यासु। सितगुणं दुग्धं यन्नीलयति तदुत्कृष्टं महानीलमित्यभिप्रायः। नीली नीलवर्णा ओषधिस्तया विभावितं जलं नीलीसलिलम्। ऋच्छतीति ऋ गतावित्यस्य रूपम्। नीलीति जानपदादिसूत्रेण ङीप्। मत्तमयूरवृत्तम्॥ ४४॥**

मुक्तमिति॥ इहाद्रावन्तर्लीनानि महानीलदलानीन्द्रनीलविशेषखण्डानि यासु तासु। 'सिंहलस्थाकरोद्भूता महानीलास्तु ते मताः' इति भगवानगस्त्यः। वापीषु दीर्घिकास्वभ्रैर्मेघैर्मुक्तं वृष्टं मुक्तागौरं मौक्तिकशुभ्रम् अत एव क्षीरमिव स्थितम्। शस्त्री छुरिका। 'स्याच्छस्त्री चासिपुत्री च च्छुरिका चासिधेनुका' इत्यमरः।

(१) स्वन।

'बह्वादिभ्यश्च' इति ङीष् । शार्वीवच्छायैरंशुभिरन्तर्गतेन्द्रनीलमरीचिभिराशु तत्क्षणमेव द्रुतं लोलितं सत् । छुरितमित्यर्थः । नीलीसलिलस्य नीलाख्यौषधिपत्ररसस्य । 'नीली काला क्लीतकिका' इत्यमरः । अच्छां छायां कान्तिमृच्छति । तत्सदृशीं छायां गच्छतीत्यर्थः । अतो निदर्शनालङ्कारः । स च मुक्ता-गौरं क्षीरमिव शार्वीर्यैमिरिति चोपमाश्रयेणान्तर्लीनमहानीलदलासु वापीष्विति पदार्थहेतुकं काव्यलिङ्गं तेनोत्थापितेनांशुभिर्द्रुतमिति तद् गुणोत्थापित इत्यङ्गाङ्गिभावेन सङ्करः । क्षीरमिवेत्यनेनेन्द्रनीलानां सौष्ठवं सूचितम् ।

'क्षीरमध्ये क्षिपेन्नीलं क्षीरं चेन्नीलतां व्रजेत् ।
इन्द्रनीलमिति ख्यातम्—'

इति लक्षणसम्भवात् । तेनात्र नीलीरसोपमानेन तद्वर्णा एवेति सूचितम् । 'नीलीरसनिभाः केचिच्छ-म्भुकण्ठनिभाः परे' इत्यादिनाऽगस्त्येन रत्नशास्त्रे एषामेकादशविधच्छायाभिधानादिति । मत्तमयूरं वृत्तम् । 'वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम्' इति लक्षणात् ॥ ४४ ॥

**या न ययौ प्रियमन्यवधूभ्यः सारतरागमना यतमानम् ॥**
**तेन सहेह बिभर्ति रहः स्त्री सा रतरागमनायतमानम् ॥ ४५ ॥**

**या नेति ॥** या वधूः यतमानं प्रार्थयमानमपि प्रियं न ययौ नाभिससार, सा नारी तेन कान्तेन सह इह नगेन्द्रे रहः एकान्ते रतरागं सुरताभिषङ्गं बिभर्ति । मनस्विन्योऽपीह मानं मुञ्चन्तीत्यर्थः । कीदृशी स्त्री अन्यवधूभ्यः सपत्नीभ्यः सकाशात् सारतरं हर्षोत्पत्त्यो-त्कृष्टतरमागमनं यस्याः सा । अत एव प्रार्थ्यते । कीदृशं रतरागम् अनायतोऽदीर्घो मानो रोषो यत्र रतरागे तम् । निर्मानमित्यर्थः । रहःशब्दोऽव्ययमधिकरणप्रधानो निर्जनार्थः । अनव्ययोऽपि विद्यते, यथा—'शङ्करो रहसि सेव्यता'मिति । दोधकवृत्तम् ॥ ४५ ॥

**या नेति ॥** इहाद्रावन्यवधूभ्यः स्त्र्यन्तरेभ्यः । 'पञ्चमी विभक्ते' इति पञ्चमी । सारतरं श्रेष्ठमागमनं यस्याः सा सारतरागमना । श्लाघ्यसङ्गमेत्यर्थः । या स्त्री यतमानं स्वप्राप्त्यै प्रयतमानम् । प्रार्थयमानमि-त्यर्थः । यती प्रयत्ने, शानच् । प्रियं न ययौ । सा तथा प्रतिकूलापि स्त्री रहस्तेन प्रियेण सह अनायतमान-मदीर्घरोषं यथा तथा रतरागं सुरताभिलाषं बिभर्ति । अयमतिमानवतीरपि सद्य एवोद्दीपयतीति भावः । दोधकवृत्तम् । 'दोधकवृत्तमिदं भभभा गौ' इति लक्षणात् ॥ ४५ ॥

**भिन्नेषु रत्नकिरणैः किरणेष्विहेन्दोरुच्चावचैरुपगतेषु सहस्रसंख्याम् ॥**
**दोषाऽपि नूनमहिमांशुरसौ किलेति व्याकोश(१)कोकनदतां दधते नलिन्यः ॥ ४६ ॥**

**भिन्नेष्विति ॥** इहाद्रौ निश्चितं दोषापि रात्रावपि पद्मिन्यो व्याकोशकोकनदतां दधते विकसितपद्मत्वं बिभ्रति । उत्फुल्लाब्जा भवन्तीत्यर्थः । कुतो हेतोः असौ चन्द्रः किल अहिमांशुः सहस्ररश्मिः सूर्य इति हेतोः । केषु सत्सु चन्द्रस्य रश्मिषु सहस्रसंख्यामुपग-तेषु प्राप्तेषु, किंभूतेषु रश्मिषु रत्नकिरणैर्मणिमयूखैः भिन्नेषु मिश्रितेषु, किंभूतैः उच्चावचैः नानाविधैः । पद्मिनीभिः किल तावत् सूर्यदर्शनेनावश्यं विकसितव्यम् । इन्दोश्च किरणा यदा मणिकरनिकरैः बाहुल्यमापादितास्तदा सहस्ररश्मिभ्रान्त्या नूनं ता विचकसुरिति वाक्यार्थः उक्तिमात्रम् । न तु रात्रौ पद्मिनीविकासः । उच्चावचैरिति मयूरव्यंसकादि । दोषेति रहःशब्दवत् । किलेत्यसत्ये उपहासे वा । इतिशब्दो हेतौ ॥ ४६ ॥

**भिन्नेष्विति ॥** इहाद्राविन्दोः किरणेषु उदञ्चश्च अवाञ्चश्च तैरुच्चावचैः । अनेकविधैरित्यर्थः । 'उच्चावचं नैकभेदम्' इत्यमरः । मयूरव्यंसकादिषूच्चनीचाचपराचोच्चावचाकिंचनाकुतोभयानीति तत्पुरुषे निपा-

(१) व्याकोच ।

नयनात्साधु । रत्नकिरणैर्भिन्नेषु मिश्रेषु अत एव सहस्रसंख्यामुपगतेषु सत्सु, नलिन्यः पद्मिन्यः । 'नलं पद्मे नलं तृणम्' इति शाश्वतः । असौ प्रकाशमानोऽहिमांशुः । किलेति । सहस्रकिरणत्वात्सूर्य एवेति सम्भावनाबुद्ध्येत्यर्थः । 'वार्तासम्भाव्ययोः किल' इत्यमरः । दोषापि रात्रावपि । सप्तम्यर्थेऽव्ययम् । 'दिवाह्नीत्यथ दोषा च नक्तं च रजनौ' इत्यमरः । व्याकोचकोकनदता विकचपद्मतां दधते स्वीकुर्वन्ति । नूनमित्युत्प्रेक्षायाम् । 'अथ रक्तसरोरुहम् । रक्तोत्पलं कोकनदम्' इति, 'व्याकोचविकचस्फुटाः' इति चामरः । इह देवभूमित्वान्नित्यपद्मा नलिन्य इति भावः । इह नलिनीनां दोषातनविकासासम्बन्धेऽपि तत्सम्बन्धरूपयाऽतिशयोक्त्या तस्येन्दावर्कभ्रान्त्या भ्रान्तिमदलङ्कारो व्यज्यते ॥ ४६ ॥

**अपशङ्कमङ्कपरिवर्तनोचिताश्चलिताः पुरः पतिमुपेतुमात्मजाः ॥**
**अनुरोदितीव करुणेन पत्रिणां विरुतेन वत्सलतयैष निम्नगाः ॥४७॥**

**अपशङ्कमिति** ॥ एषोऽद्रिः निम्नगा नदीः पत्रिणां शब्दितेन करुणेन अनु पश्चाद्रोदितीव । रोदने निमित्तमाह-यतः आत्मजाः स्वयं जाताः, कया वत्सलतया सस्नेहतया, किंभूताः पुरोऽग्रे पतिं समुद्रमुपैतुं प्राप्तुं चलिताः प्रवृत्ताः, तथा अपशङ्कं निर्भयमङ्कपरिवर्तनोचिता उत्सङ्गपरिभ्रमणयोग्याः । यथा किलः वत्सल पिता स्वसुताः पतिगृहं गन्तुं प्रवृत्ता अनुरोदिति, तथा अयमपि नदीरित्यर्थः । ता अपि निर्यन्त्रणमुत्सङ्गपरिवर्तनशालिन्यः । रोदितीति 'रुदादिभ्यः सार्वधातुके' इतीट् । सुमङ्गला वृत्तम्(१) ॥ ४७ ॥

अपशङ्कमिति ॥ अपशङ्कं निःशङ्कमङ्कपरिवर्तनेषूत्सङ्गलुण्ठनेषूचिताः परिचिताः पतिं भर्तारमुपैतुं पुरोऽग्रे चलिताः प्रयाता आत्मजाः स्वसम्भवा दुहितॄश्च निम्नगा नदीः करुणेन दीनेन पत्रिणां पक्षिणां विरुतेन क्रोशनेन निमित्तेनैषोऽद्रिर्वत्सलतया वात्सल्येन । स्नेहेनेत्यर्थः । 'प्रीमान्स्निग्धस्तु वत्सलः' इत्यमरः । 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययः । अनुरोदितावानुक्रोशतीवेत्युत्प्रेक्षा । 'रुदश्च पञ्चभ्यः' इति गुणः । 'रुदादिभ्यः सार्वधातुके' इतीट् ॥ ४७ ॥

**मधुकरविटपानमितास्तरुपङ्क्तीर्बिभ्रतोऽस्य विटपाऽऽनमिताः ॥**
**परिपाकपिशङ्गलतारजसा रोधश्चकास्ति कपिशं गलता ॥ ४८ ॥**

**मधुकरेति** ॥ अस्याद्रेः रोधस्तटं चकास्ति शोभते । कीदृशस्य वृक्षततीः धारयतः, किंभूताः मधुकरविटपानमिताः मधुकरा भ्रमरा एव विटा मत्तबालकास्तेषां पानमिताः आस्वादनं प्राप्ताः । द्विरेफा हि ताभ्यो रहः पिबन्ति । तथा विटपानमिताः विटपैः प्रकाण्डैः आनमिता ईषत्कुटिलीभूताः । किंभूतं रोधः परिपाकपिशङ्गलतारजसा कपिशं परिपाकेन पिशङ्गाः पीता या लता व्रतत्यः तासां रजसा रेणुना कपिशं पिङ्गं, किंभूतेन गलता पतता । यद्वा तरुपङ्क्तीनां परिपाकपिशङ्गलता इति विशेषणम् । रजसेति भिन्नं पदम् । चकासृ दीप्ताविति चकास्ति रूपम् । स्कन्धकच्छन्दः ॥ ४८ ॥

मधुकरेति ॥ मधुकरा एव विटास्तेषां पानं चुम्बनमिताः प्राप्ताः । इणः कर्तरि क्तः । विटपैः शाखाविस्तारैरानमिताः विटपानमिताः । 'विस्तारो विटपोऽस्त्रियाम्' इत्यमरः । तरुपङ्क्तीर्बिभ्रतोऽस्याद्रेः रोधो नितम्बो गलता पतता परिपाकेण पिशङ्गीनां लतानां रजः पुष्परेणुस्तेन परिपाकपिशङ्गलतारजसा कपिशं पिशङ्गं चकास्ति । मात्रावृत्तेष्वियमार्यागीतिरष्टगणा । 'अर्धे वसुगण आर्यागीतिः' इति पिङ्गलनागः ॥४८॥

**प्राग्भारतः(२) पतदिहेदमुपत्यकासु शृङ्गारिताऽऽयतमहेभकराभमम्भः ॥**
**संलक्ष्यते विविधरत्नकराऽनुविद्धमूर्ध्वप्रसारितसुराधिपचापचारु ॥ ४९ ॥**

**प्राग्भारत इति** ॥ इहाद्रौ प्राग्भारतः शिखरसमीपात् अभ्रादुपत्यकासु अधोभूमिषु

(१) वृत्तमिदं 'मञ्जुभाषिणी'ति 'सुनन्दिनी'ति च प्रसिद्धमन्यत्र । (२) प्राग्भागतः ।

पतत् इदमम्भो जलं शृङ्गारितायतमहेभकराभं संलक्ष्यते शृङ्गारितः सुधागैरिकादिरञ्जितः आयतो दीर्घो यो महेभकरो हस्तिहस्तस्तस्येव आभा कान्तिर्यस्य तत । किमिव दृश्यते– किंभूतम् ऊर्ध्वप्रसारितसुराधिपचापचारु ऊर्ध्वं प्रसारितमूर्ध्वीकृतं यत् सुराधिपचापं शक्रधनुस्तदिव चारु रमणीयम् । उपमोत्प्रेक्षा । किंभूतं सत् विविधरत्नकरानुविद्धम् अनेकवर्णमणिकरनिकरच्छुरितम् । शिखरसमीपं प्राग्भारः ॥ ४९ ॥

प्राग्भागत इति ॥ इहाद्रौ प्राग्भागत ऊर्ध्वप्रदेशादुपत्यकास्वधःप्रदेशेषु । 'उपत्यकाद्रेरासन्ना' इत्यमरः । 'उपाधिभ्याम्–' इत्यादिनोपशब्दात्त्यकन्प्रत्ययः । पतत् । शृङ्गारः सिन्दूरादिमण्डनमस्य सञ्जातः शृङ्गारितः । 'शृङ्गारः सुरते नाट्ये रसे दिग्गजमण्डने' इति विश्वः । आयतो दीर्घस्तस्य महेभकरस्याभेवाभा यस्य तत् विविधरत्नानां करैरंशुभिरनुविद्धमनुरञ्जितमिदमम्भ ऊर्ध्वप्रसारितं यत्सुराधिपचापमिन्द्रधनुस्तद्वच्चारु संलक्ष्यते । अत्रेन्द्रचापस्योर्ध्वत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । अभूतोपमेति मतान्तरम् । तिरोहिताविवक्षायां तूपमानस्य प्रसिद्धत्वादुपमैवेयम् ॥ ४९ ॥

**दधति च विकसद्भिर्विचित्रकल्पद्रुमकुसुमैरभिगुम्फितानिवैताः ॥**
**क्षणमलघुविलम्बिपिच्छदाम्नः शिखरशिखाः शिखिशेखरानमुष्य ॥५०॥**

दधतीति ॥ अमुष्याऽद्रेः एताः शिखरशिखाः शृङ्गकोटयः शृङ्गचूडा वा शिखिशेखरान् मयूरावतंसकान् क्षणं मुहुर्दधति बिभ्रति । किंभूतान् अलघुविलम्बिपिच्छदाम्नः अलघूनि विलम्बीनि पिच्छानि बर्हाण्येव दामानि मालागुणा येषां तान् । अतश्चोत्प्रेक्षते—विकसद्भिः विचित्रैः कल्पद्रुमपुष्पैरभिगुम्फितानिव अन्तराऽन्तरा ग्रथितानिव । पिच्छानां देवतरुकुसुमान्युपमानम् । अन्योऽपि शिखायां नानापुष्पाधिकां मालां कुरुते । पुष्पिताग्रा वृत्तम् ५०

दधतीति ॥ किञ्चेति चार्थः । अमुष्याद्रेरेताः शिखराणि शृङ्गाण्येव शिखाः केशपाश्यः । 'शिखा चूडा केशपाशी' इत्यमरः । विकसद्भिर्विचित्रैर्नानावर्णैः कल्पद्रुमकुसुमैरभिगुम्फितान्ग्रथितानिव स्थितानित्युत्प्रेक्षा । अलघूनि विलम्बीनि लम्बमानानि च पिच्छान्येव दामानि स्रजो येषु तान् शिखिनः केकिन एव शेखरानापीडान्क्षणं दधतीव । 'शिखावलः शिखी केकी' इति, 'शिखास्वापीडशेखरौ' इति चामरः । अत्र कुसुमगुम्फेनोत्प्रेक्षालिङ्गेन पिच्छादीनां दामादिरूपकसिद्धिस्तदुत्थापिता चोत्प्रेक्षेति सङ्करः । पुष्पिताग्रा वृत्तमुक्तम् ॥ ५० ॥

**सवधूकाः सुखिनोऽस्मिन्ननवरतममन्दराऽऽगताऽमरसदृशः ॥**
**नासेवन्ते रसवन्न नवरतममन्दरागतामरसदृशः ॥ ५१ ॥**

सवधूका इति ॥ इहाद्रौ सुखिनः कामिनोऽनवरतं सततं नवरतमपूर्वनिधुवनं न न आसेवन्ते अपि तु भजन्त्येव । अनवरतमविच्छेदेन न आसेवन्ते इत्यस्य निषेधरूपस्य वाक्यार्थस्य निषेधात् प्रतिज्ञारूपोऽत्र विधिः प्रतीयते । तदुच्यते–द्वौ प्रतिषेधौ सन्तौ स्वयं प्रकृतमर्थं ब्रूत इति। कीदृशाः सुखिनः सवधूकाः वधूसहिताः अत एव सुखिनः, तथा अमन्दरागता अपि अमरसदृशा देवसमा इति विभावना । मन्दरे हि सर्वश्रेष्ठा देवा विद्यन्ते, तैरेव साक्षात् अमृतस्योत्पादितत्वात् । अथ वा मन्दरग्रहणेन स्वर्गमात्रमुपलक्ष्यते । दृश्यते हि विशेषः सामान्योपलक्षकः । यथा 'काकेभ्यो दधि रक्ष्यता'मिति। अमन्दरागताश्च ते अमरसदृशाश्चेति समासः । ततोऽयमर्थः—भूस्था अपि देवतुल्याः । अथ वा अनवरतममन्दरादागता ये अमरास्तत्सदृशा इति योज्यम् । तथा अमन्दरागमुत्कृष्टवर्णं यत्तामरसं पद्मं तदिव दृशो नेत्राणि येषां ते तथा । कीदृशं नवरतं रसवत् सशृङ्गारम् । आर्या गीतिः ॥ ५१ ॥

सवधूका इति ॥ अस्मिन्नद्रौ अवरे न भवन्तीत्यनवराः श्रेष्ठा अनवरतमाः श्रेष्ठतमाश्च मन्दरागतै-

रमैः सदृशः सरूपाश्च अनवरतममन्दरागतामरसदृशः अमन्दरागाण्यतिरक्तानि तामरसानि पङ्केरुहाणीव दृशो येषां तेऽमन्दरागतामरसदृशो रक्तनेत्राः। 'पङ्केरुहं तामरसम्' इत्यमरः। सुखिनो भोगिनः सह वधूभिः सवधूकाः सन्तः। 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः। 'नद्यृतश्च' इति कप्। रसवत्सानुरागम्। 'गुणे रागे द्रवे रसः' इत्यमरः। नवरतं नूतनसुरतं नासेवन्त इति न। किन्त्वासेवन्त इवेत्यर्थः। 'सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति वामनः। विशिष्टसुरतानां सेवनस्य सामान्यतः प्रसक्तेः। उपमालङ्कारः। गतेयमार्यागीतिः॥ ५१॥

**आच्छाद्य पुष्पपटमेष महान्तमन्तरावर्तिभिर्गृहकपोतशिरोधराभैः॥**
**स्वाङ्गानि धूमरुचिमागुरवीं दधानैर्धूपायतीव पटलैर्नवनीरदानाम्॥५२॥**

**आच्छाद्येति**॥ एषोऽद्रिः नूतनमेघानां वृन्दैःआत्मीयानवयवान् धूपायतीव। किं कुर्वाणैः यतः आगुरवीं धूमसक्तां धूमरुचिं बिभ्राणैः, अत एव गृहकपोतग्रीवानीलैः चटकगलकृष्णैः। वानेया हि कपोता धूलिवर्णा भवन्ति इति गृहग्रहणम्। तथा अन्तर्मध्ये आवर्तिभिः भ्रमद्भिः, किं कृत्वा धूपायतीत्याह—महान्तं पुष्पपटं धवलत्वात् कुसुममेव वस्त्रमाच्छाद्य परिधाय। अन्योऽपि विलासी महान्तं पुष्पवासितं पटं वासोविशेषं वा परिधाय अन्तर्वर्तिनं वाऽगुरुधूपं कृत्वा आत्मानं धूपायति। अगुरु गन्धं, तस्येयमागुरवी। धूपायतीति 'गुपूधूप'ेति स्वार्थे आयप्रत्ययः॥ ५२॥

**आच्छाद्येति**॥ एषोऽद्रिर्महान्तं पुष्पाण्येव पट इति रूपकं तमाच्छाद्य अन्तः पटाभ्यन्तर आवर्तिभिरभीक्ष्णं भ्रमद्भिः। 'बहुलमाभीक्ष्ण्ये' इति णिनिः। गृहकपोतशिरोधराभा गृहपारावतकण्ठस्येवाभा येषां तैरित्युपमा। 'पारावते कपोतः स्यात्' इति विश्वः। अगुरोः कालागुरोरिमामागुरवीम्। 'कालागुर्वगुरुः स्यात्' इत्यमरः। धूमरुचिं धूमकान्तिम्। तत्सदृशीमित्यर्थः। अत एव निदर्शना। दधानैर्नवनीरदानां पटलैः स्वाङ्गानि धूपायतीव धूपैरिवाधिवासयतीवेत्युत्प्रेक्षा रूपकोपमानिदर्शनाभिरङ्गैः सङ्कीर्यते। 'धूप सन्तापे' इति धातोः 'गुपूधूपविच्छिपणिपनिभ्य आयः' इत्यायप्रत्ययः॥ ५२॥

**अन्योन्यव्यतिकरचारुभिर्विचित्रैरत्रस्यन्नवमणिजन्मभिर्मयूखैः॥**
**विस्मेरान् गगनसदः करोत्यमुष्मिन्नाकाशे रचितमभित्ति चित्रकर्म॥५३॥**

**अन्योन्येति**॥ अमुष्मिन् अस्मिन् नगे आकाशे किरणै रचितं चित्रकर्म गगनसदो देवान् विस्मेरान् करोति विस्मापयते, यतोऽभित्ति कुड्यरहितम्। भित्तौ हि आलेख्येन भाव्यम्। कीदृग्भिर्मयूखैः विचित्रैः नानावर्णैः। अनेकजातीयत्वादनेकरागा भवन्ति। किंभूतैः सद्भिः अन्योन्यव्यतिकरचारुभिः परस्परमयूखसम्बन्धरम्यैः, तथा अत्रस्यन्नवमणिजन्मभिः अत्रस्यन्तः अस्फुटिता ये नवमणयस्ततो जन्म येषाम्। गगने सीदन्ति सञ्चरन्तीति गगनसदो देवाः। विस्मेर इति 'नमिकम्पिस्मी'ति रः। प्रहर्षिणी वृत्तम्॥ ५३॥

**अन्योन्येति**॥ अमुष्मिन्नद्रावन्योन्येषां व्यतिकरेण मिश्रणेन चारुभिः। अत एव विचित्रैर्नानावर्णैरत्रस्यन्तस्त्रासदोषेणादुष्यन्तः। 'त्रासो भीमणिदोषयोः' इति विश्वः। 'वा भ्राश—' इत्यादिना वैकल्पिकः श्यन्प्रत्ययः। तेभ्यो नवमणिभ्यो जन्म येषां तैर्मयूखैराकाशे रचितमभित्ति अकुड्यम्। अनाधारमित्यर्थः। चित्रकर्म कर्तृ। गगनसदः खेचरान्विस्मेरान्विस्मयशीलान्करोति। 'नमिकम्पि—' इत्यादिना रप्रत्ययः। अत्र मणिमयूखेषु खे चित्रकर्मभ्रान्तिमतामेवाभित्तिचित्रकर्मेत्यकारणकार्योत्पत्तिवर्णनाद् भ्रान्तिमदलङ्कारोत्थापिता विभावनेति सङ्करः। 'कारणेन विना कार्यस्योत्पत्तिः स्याद्विभावना' इति। प्रहर्षिणी वृत्तम्॥ ५३॥

**शमीरशिशिरः शिरःसु वसतां सतां जवनिका निकामसुखिनाम्॥**
**बिभर्ति जनयन्नयं मुदमपामपायधवला बलाहकततीः॥ ५४॥**

**समीरेति**॥ अयं नगेशः बलाहकततीर्मेघमालाः बिभर्ति धारयति। कीदृशः समी-

रशिशिरः वायुशीतलः, किंकुर्वन् मुदं जनयन् प्रीतिमुत्पादयन् । किंभूताः बलाहकततीः निकामसुखिनां सदासुखिनां शिरस्सु वसतां शृङ्गेषु स्थितानां सतां साधूनां जवनिकाः तिरस्करणीः, तथा अपामपायेन तोयवृष्ट्या धवलाः सिताः । जवनिका अपि प्रायेण धवला भवन्ति । रसैर्जसजसा जलोद्धतगतिः ॥ ५४ ॥

समीरेति ॥ समीरेण मारुतेन शिशिरः शीतलः शिरःसु शिखरेषु वसतां निकामसुखिनामत्यन्तसुखिनां सतां पुण्यवतां मुदं जनयन्नयमद्रिरपामम्भसामपायेनापगमेन धवला बलाहकततीर्मेघपङ्क्तीरेव जवनिकास्तिरस्करिणीर्बिभर्ति । अनावृतेष्वपि शिखरेषु क्रीडने मेघैरेवावरणतां सम्पाद्य मुदं जनयतीत्यर्थः । अत्र बलाहकततिष्वारोप्यमाणानां जवनिकानां मुदं जनयन्निति प्रकृतोपयोगिवर्णनात्परिणामालङ्कारः । 'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति लक्षणात् । रूपके तूपरञ्जनमात्रमिति भेदः । जलोद्धतगतिर्वृत्तम् । 'रसैर्जसजसा जलोद्धतगतिः' इति लक्षणात् ॥ ५४ ॥

मैत्र्यादिचित्तपरिकर्मविदो विधाय क्लेशप्रहाणमिह लब्धसबीजयोगाः ॥
ख्यातिं च सत्त्वपुरुषाऽन्यतयाधिगम्य वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम्॥

मैत्र्यादीति ॥ इहाऽस्मिन् रैवतके समाधिभृतो योगिनः सत्त्वपुरुषान्यतया प्रकृतिपुरुषभिन्नत्वेन ख्यातिं ज्ञानविशेषमधिगम्य प्राप्य अनन्तरं तामपि निरोद्धुं निवर्तयितुं वाञ्छन्ति अभिलपन्ति । चेतस एकाग्र्यं समाधिः, स च योगाङ्गोपलक्षणम् । यमनियमासनप्राणायामप्रत्याहारध्यानधारणसमाधीन् अष्टावपि हि ते बिभ्रति । न केवलं चित्तवृत्तीर्यावत्ख्यातिमप्युपादेयकल्पां परिजिहीर्षन्तीत्यपिशब्दार्थः । चशब्दो वर्णनीयप्रकारसमुच्चयार्थः । न केवलं पूर्वोक्तगुणविशिष्टोऽयं नगो यावदयमपि प्रकारोऽत्र क्रियते इत्यर्थः । एवमन्यत्र । प्रकृतिपुरुषयोर्भेदज्ञानं ख्यातिर्भवति । तेन अन्या बुद्धिः अन्यश्चात्मा इत्येवं प्रथममभ्यस्य पश्चात् आत्मानमेव पुरुषमेव निर्गुणं विजिज्ञासन्ते इत्यर्थः । कीदृशाः समाधिभृत इति विशेषणद्वारेण ख्यातिप्राप्तमाह—मैत्र्यादिचित्तपरिकर्मविदः मैत्र्यादि यच्चित्तपरिकर्म चेतसः प्रसादनं तद्विदन्ति जानते ये ते । मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणामभ्यासेन चेतसः प्रसादनं चित्तपरिकर्म । सुखितेषु मैत्रीं न मात्सर्यं कुर्यात्, दुःखितेषु कारुण्यं, पुण्यवत्सु अनुमोदनं, पापेपूपेक्षा । अतश्च रजस्तमोनाशाच्चेतः प्रसीदति । अपरं किंभूताः लब्धसबीजयोगाः, क्लेशप्रहाणं विधाय अविद्याऽस्मितारागद्वेषाऽभिनिवेशाख्याः पञ्च क्लेशाः तेषां प्रहाणं त्यागं कृत्वा ॥ ५५ ॥

मैत्र्यादीति ॥ इहाद्रौ समाधिं योगं बिभ्रतीति समाधिभृतो योगिनः । मैत्री, करुणा, मुदिता, उपेक्षेति चतस्रश्चित्तवृत्तयः । तत्र पुण्यकृत्सु मैत्री, दुःखिषु करुणा, सुखिषु मुदिता अनुमोदनम्, पापिषु उपेक्षा । मैत्री आदिर्येषां तानि चित्तस्य परिकर्माणि प्रसाधकानि । शोधकानीत्यर्थः । तानि विन्दन्ति लभन्ते इति तद्विदस्तद्राजः तैः । क्षीणान्तःकरणमला इत्यर्थः । अत एव क्लेशप्रहाणं विधाय । अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः । तत्रानित्येषु नित्यत्वाभिमानः अनात्मनि च देहेन्द्रियादावात्मधीरित्यादिविभ्रमोऽविद्या, अस्मिता अहङ्कारः, रागोऽभिमतविषयाभिलाषः, द्वेषोऽनभिमतेषु रोषः, अभिनिवेशः कार्याकार्येष्वाग्रहः । ते हि पुरुषं क्लिश्यन्तीति क्लेशाः क्लेशहेतवः । पचाद्यच् । तेषां प्रहाणं क्षयः । 'कृत्यचः' इति णत्वम् । तद्विधाय । क्लेशान्हित्वेत्यर्थः । अतो लब्धः सबीजः सावलम्बनो योगो यैस्ते लब्धसबीजयोगाः सन्तः । आलम्बनमेव व्यनक्ति—सत्त्वेति । सत्त्वपुरुषयोः प्रकृतिपुरुषयोरन्यतयाऽन्यत्वेन मिथो भिन्नत्वेन ख्यातिं ज्ञानं चाधिगम्य । प्रकृतिपुरुषौ भिन्नाविति ज्ञात्वेत्यर्थः । प्रकृतिपुरुषयोर्विवेकाग्रह-

णात्संसारः, विवेकग्रहणान्मुक्तिरिति सांख्याः । अथ तां ख्यातिमपि निरोद्धुं निवर्तयितुं वाञ्छन्ति वृत्तिरूपाम् । तां निवर्त्य स्वयंप्रकाशतयैव स्थातुमिच्छन्तीत्यर्थः । 'प्रकृतावुपरतायां पुरुषस्वरूपेणावस्थानं मुक्तिः' इति सांख्यसिद्धान्तः । न केवलं भोगभूरियं, किंतु मोक्षक्षेत्रमपीति भावः ॥ ५५ ॥

**मरकतमयमेदिनीषु भानोस्तरुविटपान्तरपातिनो मयूखाः ॥**
**अवनतशितिकण्ठकण्ठलक्ष्मीमिह दधति स्फुरिताऽणुरेणुजालाः ॥ ५६ ॥**

**मरकतेति ॥ इहाऽस्मिन् गिरौ मरकतमयमेदिनीषु गारुत्मतमयभूमिषु भानोः श्रीसूर्यस्य मयूखा रश्मयः अवनतशितिकण्ठकण्ठलक्ष्मीम् आनम्रकलापिगलश्रियं दधति बिभ्रति । किंभूताः मयूखाः तरुविटपान्तरपातिनः वृक्षविस्तृतशाखावकाशसञ्चारिणः, पुनः किंभूताः स्फुरिताऽणुरेणुजालाः विलसितसूक्ष्मरजःसमूहाः ॥ ५६ ॥**

**मरकतेति** ॥ इहाद्रौ मरकतानां विकारा मरकतमय्यस्तासु मेदिनीषु । 'स्त्रियाः पुंवत्-' इत्यादिना पुंवद्भावः । तरूणां विटपाः पल्लवास्तेषामन्तरैरवकाशैः पतन्तीति तथोक्ताः । 'विटपः पल्लवे षिड्गे विस्तारे स्तम्बशाखयोः' इति विश्वः । स्फुरिता अणुरेणूनां सूक्ष्मरजसां जालानि येषु ते भानोर्मयूखाः अवनतस्य शितिकण्ठकण्ठस्य मयूरकन्धराया लक्ष्मीं दधतीति निदर्शनालङ्कारः । पुष्पिताग्रा वृत्तम् ॥ ५६ ॥

**या बिभर्ति कलवल्लकीगुणस्वानमानमतिकालिमाऽऽलया ॥**
**नात्र कान्तमुपगीतया तया स्वानमा नमति काऽलिमालया ॥ ५७ ॥**

**या बिभर्तीति ॥ अत्रैतस्मिन्नचले तयाऽलिमालया भृङ्गश्रेण्या उपगीतया समीपे प्रारब्धगानया सत्या का कान्ता कान्तं वल्लभं न नमति स्वयं नम्रीभूय न सेवते । अपि तु सर्वापीत्यर्थः । किंभूता स्त्री अस्वानमा सुखेन आनम्यत इति स्वानमा, ततो नञ्समासः । सुखेन नमयितुमशक्येत्यर्थः । तया कयेत्याह--या अलिमाला कलवल्लकीगुणस्वानमानं बिभर्ति मधुरवीणातन्त्रीशब्दसाम्यं धारयति । किंभूता भ्रमरपङ्क्तिः अतिकालिमालया कालिम्नः आलयाः अञ्जनकोकिलतमःकाकादयः कृष्णत्वेनातिक्रान्ता यया । केचित्तु 'अति अतिशायी योऽसौ कालिमा कृष्णत्वं तस्यालयः स्थानभूता, अतिकृष्णेत्यर्थः' इति व्याचक्षते । एवं स्त्रीत्वं दुर्लभं स्यात्, आलयशब्दस्य पुंल्लिङ्गत्वात् । स्वान इति 'स्वनहसोर्वे'ति घञ् । रथोद्धता वृत्तम् ॥ ५७ ॥**

**या बिभर्तीति** ॥ अत्राद्रावत्यन्तः कालिमा कार्ष्ण्यं यस्याः साऽतिकालिमा । अतिश्यामेत्यर्थः । न विद्यते लयो लयनं क्वचिदवस्थानं यस्याः सा अलया । भ्रमन्तीत्यर्थः । अत एव सस्वनेति भावः । या आलिमाला कलोऽव्यक्तमधुरः वल्लकीगुणस्वानस्य वीणातन्त्रीशब्दस्य मानमुपमानं बिभर्ति । तन्त्रीवद् ध्वनतीत्यर्थः । उपमालङ्कारः । उपगीतया समीपे गातुं प्रवृत्तयैव, न तु पूर्वं गायन्त्येवेति भावः । 'आदिकर्मणि क्तः कर्तरि च' इति क्तः । तयाऽलिमालया भृङ्गावल्या स्वानमा सुखेनाऽऽनमयितुमाक्रष्टुं शक्या । 'ईषद्दुस्-' इत्यादिना खल्प्रत्ययः । का वा स्त्री कान्तं प्रियं न नमति । सर्वापि मानं विहाय कान्तं सद्यः प्रणमत्येव । तथोद्दीपकत्वाद्गानस्येत्यर्थः । रथोद्धता वृत्तम् । 'रो नराविति रथोद्धता लगौ' इति लक्षणात् ॥ ५७ ॥

**सायं शशाङ्ककिरणाहतचन्द्रकान्तनिष्यन्द(१)नीरनिकरेण कृताभिषेकाः ॥**
**अर्कोपलोल्लसितवह्निभिरह्नि दीक्षा(२)स्तीव्रं महाव्रतमिवात्र चरन्ति वप्राः ॥५८॥**

**सायमिति ॥ हे भगवन्! इह पर्वते वप्रास्तटास्तीव्रं दुश्चरं महाव्रतमिव चरन्ति । असकृदग्निप्रवेशो महाव्रतम् । पञ्चाग्निसाधनं कुर्वन्ति । यतः किंविशिष्टाः सायं सन्ध्या-**

(१) निस्यन्दि । (२) तता० ।

समये शशाङ्ककिरणाहतचन्द्रकान्तनिष्यन्दनीरनिकरेण कृताभिषेकाः चन्द्रमयूखसृष्टेभ्यः चन्द्रकान्तमणिभ्यो निष्यन्देन स्रुतेन नीरनिकरेण विहितस्नानाः, पुनः कीदृशाः अह्नि दिवसे अर्कोपलोल्लसितवह्निभिः सूर्यकान्तनिःसृताग्निभिः दीप्ताः सन्तप्ताः । अन्योऽपि यः किल व्रतमाचरति स स्नात्वा वह्नौ प्रविशति ॥ ५८ ॥

सायमिति ॥ इहाद्रौ वप्राः सानवः । 'वप्रोऽस्त्री सानुमानयोः' इत्यमरः । सायं रात्रौ शशाङ्ककिरणैराहतेभ्यश्चन्द्रकान्तेभ्यो निस्यन्दिना प्रस्राविणा नीरनिकरेण जलपूरेण कृताभिषेकाः कृतस्नानाः । अह्नि अर्कोपलेभ्यः सूर्यकान्तेभ्य उल्लसितैरुत्थितैर्वह्निभिस्तप्ताः सन्तस्तीव्रमुग्रं दुश्चरं महाव्रतं महातपश्चरन्तीवेत्युत्प्रेक्षा॥५८

**एतस्मिन्नधिकपयःश्रियं वहन्त्यः संक्षोभं पवनभुवा जवेन नीताः ॥**
**वाल्मीकेररहितरामलक्ष्मणानां साधर्म्यं दधति गिरां महासरस्यः ॥ ५९ ॥**

**एतस्मिन्निति** ॥ हे भगवन् ! एतस्मिन् पर्वते महासरस्यः अतिविस्तृतसरांसि वाल्मीकेर्वल्मीकजन्मनो मुनेः गिरां वाचां रामायणरूपाणां साधर्म्यं साम्यं दधति धारयन्ति । किंभूताः सरस्यः अधिकपयःश्रियं वहन्त्यः अधिकां बह्वीं पयःश्रियं जलसमृद्धिं धारयन्त्यः, अपरं किंभूताः पवनभुवा वायुसमुत्थेन जवेन वेगेन संक्षोभमाकुलत्वं नीताः । वायुना कम्पिता इत्यर्थः । पुनः किंभूताः अरहितरामलक्ष्मणाः अरहितरामाः सहचरीसहचरिता लक्ष्मणाः सारसा यत्र ताः। वाल्मीकेर्गिरोऽप्येवंविधाः । कीदृश्यः अधिकपयः अधिकृताः वर्णनीयत्वेन प्रस्तुताः कपयो वानरा यासु ताः । अर्थवशाद्विभक्तिविपरिणामेन विशेषणानि योजनीयानि । किंभूतानां गिरामधिकवानराणां, पुनः किंविधा गिरः श्रियं सीतास्वरूपिणीं वहन्त्यः, अथ वा श्रियं छन्दोऽलङ्कारयुक्तां लक्ष्मीं बिभ्रत्यः गुरुतां वहन्त्यः तया, पवनभुवा हनूमता जवेन समुद्रलङ्घनाग्निदाहादिना वेगेन संक्षोभं वीररसत्वं नीताः प्रापिताः, तथा अरहितरामलक्ष्मणा अरहितौ विद्यमानौ परस्परमवियुक्तौ रामलक्ष्मणौ दाशरथी यत्र यासां वा । विभक्तिविपरिणामं विना हि साधर्म्यं न स्यात् । समानो धर्मो येषां ते सधर्मास्तद्भावः साधर्म्यम् । प्रहर्षिणी वृत्तम् ॥ ५९ ॥

**एतस्मिन्निति** ॥ एतस्मिन्नद्रावधिकपयःश्रियमाधिकां जलसमृद्धिं वहन्त्यः, अन्यत्र तु अधिकाः कपयः सुग्रीवादयो वर्ण्यत्वेन यासु ताः अधिकपयः श्रियं गुणालङ्कारादिशोभां वहन्त्यः । पवनाद्भवतीति पवनभूस्तेन पवनभुवा वायुजन्येन जवेन वेगेन संक्षोभं चलनं नीताः, अन्यत्र तु जवेन जविना । 'जवो जविनि वेगे स्यात्' इति विश्वः । पवनभुवा हनुमता संक्षोभमौद्धत्यं नीताः । हनुमद्वेगवर्णनया प्रागल्भ्यं नीता इत्यर्थः । वाक्पक्षे सर्वत्र षष्ठ्या विपरिणामः कार्यः । महासरस्यो महासरांसि अरहितावविवर्जितौ रामलक्ष्मणौ याभिस्तासाम्, अन्यत्र तु रामो रमणः अरहितरामा अवियुक्तरामाः लक्ष्मणाः सारसयोषितो यासु ताः । केचित्तु अरहितरामा अवियुक्तस्त्रीकाः लक्ष्मणाः सारसा इति पुंपक्षिपरत्वेन व्याचक्षते, तेषां 'हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा'. 'लक्ष्मणौषधिसारस्योः' इत्याद्यमरविश्वप्रकाशादिवाक्यगतनियतस्त्र्यर्थताविरोधः । तासां वाल्मीकेर्गिरां साधर्म्यं सादृश्यं दधति । अत्र पवनभुवा जवेनेत्यत्रैकवृन्तावलम्बिफलद्वयवदभग्नैकपादगतत्वेनार्थद्वयप्रतीतेरर्थश्लेषः । अन्यत्र पदभङ्गेनार्थद्वयप्रतीतेर्जतुकाष्ठवच्छब्दयोरेव मिथः श्लिष्टत्वाच्छब्दश्लेष इत्युभयसाहित्यादुभयश्लेषोऽयं प्रकृताप्रकृतगोचरः, उपमा त्वङ्गमिति सङ्करः॥५९॥

**इह मुहुर्मुदितैः कलभै रवः प्रतिदिशं क्रियते कलभैरवः ॥**
**स्फुरति चानुवनं चमरीचयः कनकरत्नभुवां च मरीचयः ॥ ६० ॥**

**इहेति** ॥ हे भगवन् ! इहाऽस्मिन् पर्वते प्रतिदिशं सर्वासु दिक्षु कलभैः करिपोतैः मुहुर्वारंवारं रवः क्रियते बृंहितं विधीयते । किंभूतैः मुदितैः प्रमत्तैः, रवः कीदृशः कलभैरव

कलशश्चासौ भैरवश्च सुमधुरो भीषणश्च, अपरम् इहाद्रौ अनुवनं वने वने चमरीचयः स्फुरति चमरीयूथं परिभ्रमति। न केवलं चमरीचयः स्फुरति, कनकरत्नभुवां सुवर्णभूमीनां मरीचयः किरणाः स्फुरन्ति विद्योतन्ते। द्रुतविलम्बितं छन्दः ॥ ६० ॥

इहेति ॥ इहाद्रौ मुदितैरिच्छाविहारसन्तुष्टैः कलभैः करिपोतैः। 'कलभः करिशावकः' इत्यमरः। प्रतिदिशं दिशि दिशि। यथार्थेऽव्ययीभावः। 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तोऽच्प्रत्ययः। कलश्चासौ भैरवश्च कलभैरवो मधुरभीषणः। विशेषणयोरपि कुपाणिखञ्जवदेकैकोपसर्जनत्वविवक्षया विशेषणसमासः। रवो बृंहणध्वनिर्मुहुः क्रियते। अनुवनं वने वने चमरीचयः चमरीमृगसङ्घः स्फुरति। किञ्च कनकरत्नानां या भुवस्तासां मरीचयः किरणाश्च स्फुरन्ति। समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारे यमकस्याभ्युच्चयः ॥ ६० ॥

त्वक्साररन्ध्रपरिपूरणरक्त(१)गीतिरस्मिन्नसौ मृदितपक्ष्मलरल्लकाङ्गः ॥
कस्तूरिकामृगविमर्दसुगन्धिरेति रागीव शक्तिमधिकां विषयेषु वायुः ॥ ६१ ॥

त्वक्सारेति ॥ इह पर्वते विषयेषु प्रदेशविषयेषु असौ वायुः अधिकां सक्तिमेति नितरां सम्बन्धं प्राप्नोति। सदैव वातीत्यर्थः। कथंभूतो वायुः त्वक्साररन्ध्रपरिपूरणरक्तगीतिः त्वचि साराः त्वक्साराः कीचकवेणवः तेषां रन्ध्रं छिद्रं तस्य परिपूरणं व्याप्तिः तेन रक्ता मधुरा गीतिर्ध्वनिर्यस्य सः, तथा मृदितपक्ष्मलरल्लकाङ्गः मृदितानि आमृष्टानि पक्ष्मलानि तनुलोमानि रल्लकानां मृगविशेषाणामङ्गानि शरीराणि येन सः, तथा कस्तूरिकामृगविमर्दसुगन्धिः कस्तूरिकायोनेर्मृगस्य विमर्देन परामर्शेन सुगन्धिः सुरभिः। क इव रागीव। यथा रागी कामुकः विषयेषु शब्दस्पर्शरूपरसगन्धलक्षणेषु सातिशयां सक्तिमेति, तथा वंशवादनात् मधुरगेयो भवति। अपरं मृगनाभिः सुगन्धिः स्यात्। अन्यन्मृदितमामृष्टं पक्ष्मलाया रल्लकाया रागवश्याया अङ्गं शरीरं येन। गन्धशब्दोऽत्र गुणवचनो न द्रव्याभिधायी इति इत्वं भवत्येव 'गन्धस्येदुत्पूतिसुसुरभिभ्य' इति ॥ ६१ ॥

त्वक्सारेति ॥ अस्मिन्नद्रौ त्वचि सारो येषां ते त्वक्सारा वंशाः। 'वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः' इत्यमरः। तेषां रन्ध्राणि तेषां परिपूरणेन ध्मापनेन लब्धा गीतिर्गानसुखं येन सः। मृदितानि संमृष्टानि पक्ष्मलानि लोमशानि रल्लकानां कम्बलमृगाणां कम्बलानां वा अङ्गानि शरीराणि येन सः। 'रल्लकः कम्बलमृगे कम्बले परिकीर्तितः' इति वैजयन्ती। एतेन स्पर्शसुखमुक्तम्। कस्तूरिकामृगाणां विमर्देन सङ्घर्षेण सुगन्धिः शोभनगन्धः। यद्यपि गन्धस्येत्वे तदेकान्तग्रहणं कर्तव्यमित्युक्तम्, तथापि निरङ्कुशाः कवय इत्यपर्यनुयोगः। असावेवंभूतो वायू रागीव कामीव विषयेषु प्रदेशेषु च। 'विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च' इति विश्वः। अधिकां सक्तिं व्यासक्तिमेति गच्छति ॥ ६१ ॥

प्रीत्यै यूनां व्यवहिततपनं(२) प्रौढध्वान्तं दिनमिह जलदाः ॥
दोषामन्यं विदधति सुरतक्रीडायासश्रमशमपटवः ॥ ६२ ॥

प्रीत्यै इति ॥ हे भगवन्! इह पर्वते जलदा मेघा दिनं दिवसं दोषामन्यं विदधति रात्रिमन्यं विदधति। कुर्वन्तीत्यर्थः। किमर्थं यूनां प्रीत्यै तरुणानां प्रमोदाय। यस्मात्ते हि रात्रौ रमन्ते। युवतयश्च युवानश्च युवानः 'पुमान् स्त्रिया' इति युवतिशब्दलोपः। कुतो दोषामन्यमित्याह-दिनं किंभूतं व्यवहिततपनमाच्छादितरविम्, अत एव कीदृशं प्रौढध्वान्तं बहुलान्धकारयुक्तम्, कीदृशा जलदाः सुरतक्रीडायासश्रमशमपटवः सुरते निधुवने या क्रीडा केलिः तत्र योऽसौ आयासः अङ्गमर्दस्तेन यः श्रमः खेदः तस्य शमः स्फेटनं

---

(१) लब्ध। (२) तपनाः।

तत्र पटवो दक्षाः । दोषा आत्मानं मन्यते दोषामन्यम्, आत्ममाने खश्च । भ्रमरविलम्बिता वृत्तम्(१) ॥ ६२ ॥

प्रीत्यै इति ॥ इहाद्रौ युवतयश्च युवानश्च तेषां यूनाम् । 'पुमान् स्त्रिया' इत्येकशेषः । प्रीत्यै व्यवहितनपनास्तिरोहितार्काः । अत एव सुरतान्येव क्रीडास्ताभिर्य आयासो व्यायामस्तेन यः श्रमः खेदः । 'श्रमः खेदोऽध्वरत्यादेः' इति लक्षणात् । तस्य शमे वारणे पटवः समर्था जलदाः प्रौढध्वान्तं मेघावरणाद्गाढान्धकारं दिनं दिवसं दोषा रात्रिमात्मानं मन्यत इति दोषामन्यं रात्रिमानिनं विदधति । मेघावरणमहिम्ना दिवसः स्वयमप्यात्मानं रात्रिं मन्यते, किमुतान्य इत्यर्थः । दोषेत्यव्ययं, तदुपपदान्मन्यतेर्धातोः 'आत्ममाने खश् च' इति खश् प्रत्ययः । इह यूनां दोषावद्दिवापि विस्रम्भं विहाराः सम्भवन्तीति भावः । भ्रमरविलसितं वृत्तम् । 'म्भौ न्लौ गः स्याद् भ्रमरविलसितम्' इति लक्षणात् ॥ ६२ ॥

**भग्नो निवासोऽयमिहास्य पुष्पैः सदा नतो येन विषाणि नागः ॥**
**तीव्राणि तेनोज्झति कोपितोऽसौ सदानतोयेन विषाणिनाऽगः ॥ ६३ ॥**

भग्न इति ॥ हे भगवन्! इह पर्वते असौ नागः कोपितः सन् तेन कारणेन तीव्राणि विषाणि दुःसहान् क्ष्वेडान् उज्झति उद्वमति, येन कारणेन अस्य नागस्य अयं निवासभूतोऽगः चन्दनतरुः विषाणिना गजेन भग्नः उन्मूलितः । कीदृशोऽगः पुष्पैः सदा नतः नम्रः, कीदृशेन विषाणिना सदानतोयेन सह दानतोयेन मदजलेन वर्तते यः तेन । मत्तेनेत्यर्थः । न गच्छतीत्यगः, गोप्राणिष्वन्यतरस्याम् । आख्यानकी ॥ ६३ ॥

भग्न इति ॥ इहाद्रावस्य नागस्य निवास आश्रयः सदा पुष्पैरानतो नम्रोऽयं, न गच्छतीत्यगो वृक्षः दानतोयैर्मदोदकैः सह वर्तते यस्तेन सदानतोयेन । मत्तेनेत्यर्थः । येन विषाणिना दन्तिना भग्नस्तेन विषाणिना कोपितः कोपं प्रापितोऽसौ नागः सर्पस्तीव्राणि विषाणि गरलान्युज्झति वमति । परप्रतीकाराक्षमस्य क्रोधः स्वाश्रयमेव व्याहन्तीति भावः ॥ ६३ ॥

**प्रालेयशीतमचलेश्वरमीश्वरोऽपि सान्द्रेभचर्मवसनावरणोऽधिशेते ॥**
**सर्वर्तुनिर्वृतिकरे निवसन्नुपैति न द्वन्द्वदुःखमिह किञ्चिदकिञ्चनोऽपि ॥६४॥**

प्रालेयेति ॥ हे भगवन्! इह नगे अकिञ्चनोऽपि दरिद्रोऽपि निवसन् सन् किञ्चिद् द्वन्द्वदुःखं शीतोष्णादिक्लेशं न उपैति न प्राप्नोति । यतः किंविधे सर्वर्तुनिर्वृतिकरे सर्वैः ऋतुभिः निर्वृतिं करोति, सदा सुखदायिनि । ननु हिमवानपि एवंविधः स्यान्नेत्याह—ईश्वरोऽपि महादेवोऽपि अचलेश्वरं हिमाचलमधिशेते अध्यास्ते । अपरं कथंभूतः ईश्वरः, सान्द्रेभचर्मवसनावरणः घनगजकृत्तिपरिधानयुक्तः, यतः कीदृशमचलेश्वरं प्रालेयशीतलं हिमेन शीतलम् । शीतलेन चावश्यं सार्द्रं वासः परिधीयते । हिमवान् सर्वर्तुनिर्वृतिकरः यत्र ईश्वरोपि चर्मप्रावरणः, हिमेन चाजस्रं शैत्यं, तेनास्य का तुला । यत्र निर्धनोऽपि न दुःखभाक्, ऋतुषट्कं च तिष्ठति । अचलेश्वरमिति, ईश्वर इति च साभिप्रायम् । अतोऽकिञ्चनत्वं चात्र देशान्तरवासे सति भूतपूर्वगत्या आद्यन्तरापेक्षया बोद्धव्यम् । तथात्र निर्धनः कश्चित् । यदि वा मुख्यतोऽत्र अकिञ्चनो निर्ममो मुनिर्विवक्षितः, पश्चात्तु दरिद्रः । यथा—'अकिञ्चनः सन् प्रभवः स सम्पदा'मिति ॥ ६४ ॥

प्रालेयेति ॥ ईश्वरः शिवोऽपि । किमुतान्य इति भावः । सान्द्रं यदिभचर्म तदेव वसनं तदेवावरणं छादनं यस्य सः तथा सन् । न त्वनावरणो नापि शिथिलावरण इति भावः । प्रलयादागतं प्रालेयं

(१) 'भ्रमरविलसित'मिति नाम्ना प्रसिद्धमिदं छन्दः ।

हिमम्। 'तत आगतः' इत्याणि 'केकयमित्त्रयुप्रलयानां यादेरियः' इति यशब्दस्येयादेशः । तेन शीतं शीतलमचलेश्वरं हिमवन्तमधिशेते । तस्मिन् शेत इत्यर्थः । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् । सर्वर्तुभिर्निर्वृतिकरे सदा सुखकर इहाद्रौ निवसन्, पुनर्नास्ति किञ्चनास्येत्यकिञ्चनो निःस्वोऽपि । उच्चावचेत्यादीनां मयूरव्यंसकादिषु निपातनात्तत्पुरुषः । किञ्चिदल्पमपि द्वन्द्वदुःखं शीतोष्णदुःखं नोपैति । नित्यं सन्निहितानामृतूनामन्योन्यदोषनिवारकत्वादिति भावः । 'द्वन्द्वं युग्महिमोष्णादि मिथुनं कलहो रहः' इति वैजयन्ती । अत्रोपमानाद्धिमाचलादुपमेयस्याधिक्यवर्णनाद्व्यतिरेकः ॥ ६४ ॥

**नवनगवनलेखाश्याममध्याभिराभिः स्फटिककटकभूमिर्नाटयत्येष शैलः ॥**
**अहिपरिकरभाजो भास्मनैरङ्गरागैरधिगतधवलिम्नः शूलपाणेरभिख्याम् ॥६६॥**

**नवेति ॥ हे भगवन् ! एष शैलोऽद्रिः अतिसितमणिनितम्बभूमिभिः शिवस्याऽभिख्यां नाटयति शोभामभिनयति । रुद्ररूपमनुकरोतीत्यर्थः । कीदृशीभिः भूमिः नवनगवनलेखाश्याममध्याभिः अभिनवतरुराजिभिर्नीलान्तराभिः, शूलिनः कीदृशस्य अहिपरिकरभाजः अहिर्वासुकिरेव परिकरः पर्यस्तिका तं भजते यः । भजो ण्विः । तथा भास्मनैः अङ्गरागैः भूतिकृतैः समालम्भनैः उद्धूलनैरधिगतधवलिम्नः प्राप्तशौक्ल्यस्य । वासुकिर्वृक्षखण्डस्योपमानं, स्फटिकभूमेर्भस्म, अङ्गरागः अद्रेरुपमानम् । भस्मन इमे विकारा भास्मनाः 'अनि'ति प्रकृतिभावः । धवलिम्न इति वर्णदृढादिभ्य इमनिच् । मालिनी वृत्तम् ॥ ६५ ॥**

नवेति ॥ एष शैलो रैवतको नवया नगवनलेखया तरुवनपङ्क्त्या श्यामो मध्यभागो यासां ताभिराभिः स्फटिकानां कटकभूमिस्तटप्रदेशैः करणैरहिरेव परिकरो गात्रिकाबन्धस्तं भजतीति तस्याऽहिपरिकरभाजः ।

'भवेत्परिकरो व्राते पर्यङ्कपरिवारयोः ।
प्रगाढे गात्रिकाबन्धे विवेकारम्भयोरपि' ॥

इति विश्वः । भजो ण्विः । भास्मनैर्भस्ममयैः । वैकारिकोऽण् प्रत्ययः । 'अनि'ति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न । अङ्गरागैरनुलेपनैरधिगतधवलिम्नः प्राप्तधावल्यस्य शूलं पाणौ यस्य तस्य शूलपाणेरीश्वरस्य । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः । अभिख्यां शोभाम् । 'अभिख्या नामशोभयोः' इत्यमरः । 'आतश्चोपसर्गे' इत्यङ्प्रत्ययः । नाटयत्यनुकरोति । निदर्शनालङ्कारः । मालिनी वृत्तमेतत् ॥६५॥

**दधद्भिरभितस्तटौ विकचवारिजाऽम्बु नदै-**
**र्विनोदितदिनक्लमाः कृतरुचश्च जाम्बूनदैः ॥**
**निषेव्य मधु माधवाः सरसमत्र कादम्बरं**
**हरन्ति रतये रहः प्रियतमाङ्ककादम्बरम् ॥ ६६ ॥**

**दधद्भिरिति ॥ अत्राद्रौ माधवा यादवा रह एकान्ते प्रियतमाङ्कात् कान्ताशरीरात् अम्बरं वस्त्रं हरन्ति आक्षिपन्ति । किमर्थं रतये रन्तुं, किं कृत्वा मधु मद्यं निषेव्य पीत्वा, कीदृशं मधु कादम्बरं कादम्बर्या सुरया सहितं कृतसन्निधानम् । 'शेष' इति लक्षणेनाऽण् । यद्वा कादम्बर्येव कादम्बरमिति येन, तेन सुरा कादम्बरीत्युच्यते । तेनैव मध्वपि कादम्बरम् । अत एव सरसं सुस्वादु । माधवाः कीदृशाः नदैः ह्रदैः नदीजलाश्रयैः विनोदितदिनक्लमाः विनोदितोऽपनीतो दिनक्लमो यैः ते । नदैः कीदृशैः अभितः पार्श्वद्वये तटौ दधद्भिः पुलिने बिभ्राणैः, कीदृशौ तटौ विकचवारिजाम्बु विकचवारिजं प्रफुल्लपद्ममम्बु जलं ययोस्तौ, तथा जाम्बूनदैः सुवर्णाभरणैः कृतरुचो विहितमण्डनाः । माधवाः स्नात्वाऽलङ्कृत्य भुक्त्वा च प्रेयसीभिः सहात्र रमन्ते इति वाक्यार्थः । पृथ्वी वृत्तम् ॥ ६६ ॥**

दधद्भिरिति ॥ अत्राद्रौ माधवस्य इमे माधवा यादवाः विकचानि वारिजानि येषु तान्यम्बूनि ययोस्तौ

विकचवारिजाम्बु अभित उभयतस्तटौ दधद्भिर्नदैरम्बुप्रवाहैः। प्राक्स्रोतसो नद्यः प्रत्यक्स्रोतसो नदाः, नर्मदां विने-त्याहुः। विनोदितो दिनक्लमो येषां ते। विहारापनीताह्निकसन्तापा इत्यर्थः। किञ्च जाम्बूनदस्य विकारैर्जाम्बूनदैः कनकभूषणैः कृतरुचो जनितशोभाः सन्तः रसवत्स्वादवत्। 'रसो गन्धरसे स्वादे' इति विश्वः। कादम्ब-इक्षुः। 'कादम्बः कलहंसेक्ष्वोः' इति विश्वः। कादम्बं राति रलयोरभेदाल्लाति प्रकृतित्वेनादत्त इति काद-म्बरमैक्षवम्। 'पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम्' इति स्मरणात्। आतोऽनुपसर्गे कः। मधु मद्यम्। एवं च मधुकादम्बरशब्दयोः सामान्यविशेषपरत्वादपौनरुक्त्यम्। निषेव्य पीत्वा। क्षत्रियाणां पैष्ट्या एव निषेधादिति भावः। रतये सुरतार्थं रहः प्रियतमानां प्रेयसीनामङ्कादङ्कादाहत्यादम्बरं वस्त्रं हरन्ति। यादवाश्चेह मधुपानरतोत्सवैर्विस्रब्धं विहरन्तीति भावः। पृथ्वी वृत्तम्। 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षणात्॥ ६६॥

**दर्पणनिर्मलासु पतिते घनतिमिरमुषि**
**ज्योतिषि रौप्यभित्तिषु पुरः प्रतिफलति मुहुः॥**
**व्रीडमसंमुखोऽपि रमणैरपहृतवसनाः**
**काञ्चनकन्दरासु तरुणीरिह नयति रविः॥ ६७॥**

**दर्पणेति॥ इहाद्रौ काञ्चनकन्दरासु सुवर्णदरीषु तरुणीः युवतीः सूर्यः पराङ्मुखोऽपि व्रीडं लज्जां नयति प्रापयति। यतो रमणैः प्रियैरपनीतवस्त्राः। यदि सूर्यः पश्चात् स्थित-स्तत्कथमव्रीडयदित्याह–आदर्शनिर्मलासु रजतभित्तिषु पुरोऽग्रे स्थितासु निबिडान्ध-कारनाशिनि ज्योतिषि सूर्यतेजसि पतिते प्रतिफलिते सति काञ्चनकन्दरासु मुहुः पुनःपुनः प्रतिबिम्बिते सति। व्रीडशब्द उभयलिङ्गः। वंशपत्रपतितं वृत्तम्॥ ६७॥**

दर्पणेति॥ इहाद्रौ रविर्दर्पणनिर्मलासु पुरः रौप्यभित्तिषु काञ्चनकन्दराग्रवर्तिरजतसानुषु पतिते संक्रान्ते घनं सान्द्रं यत्तिमिरं तन्मुष्णाति हरतीति तन्मुट्। क्विप्। तस्मिन् ज्योतिषि स्वतेजसि काञ्चनक-न्दरासु मुहुः प्रतिफलति संमूर्छति सति रमणैरपहृतवसनास्तरुणीरसंमुखोऽपि कन्दरानभिमुखोऽपि व्रीडं त्रपाम्। यद्यपि 'गुरोश्च हलः' इति स्त्रियामप्रत्ययः, अत एव 'मन्दाक्षं ह्रीस्त्रपा व्रीडा' इत्यमरः। तथापि तत्र स्त्रीत्वाविवक्षायां बाहुलकत्वान्नपुंसकत्वं च। अत एव 'अविधौ गुरोः स्त्रियां बहुलविवक्षा' इति वामनः। नयति प्रापयति। 'नीवह्योर्हरतेश्चैव' इति द्विकर्मकता। यस्मिन् सुवर्णकन्दरासु क्रीडार्थं प्रविष्टाः स्त्रियोऽन्ध-कार इति कृत्वा पुरुषैरपहृतवस्त्राः सत्यः पुरःस्थितरौप्यभित्तितेजसामन्तःप्रतिबिम्बवत्प्रकाशे सति सल-ज्जा इति भावः। अत्र काञ्चनकन्दराणामसंमुखाऽर्कज्योतिःप्रतिफलनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयो-क्तिः। वंशपत्रपतितं वृत्तम्। 'दिङ्मुनि वंशपत्रपतितं भरनभनलगैः' इति लक्षणात्॥ ६७॥

**अनुकृतशिखरौघश्रीभिरभ्यागतेऽसौ त्वयि सरभसमभ्युत्तिष्ठतीवाद्रिरुच्चैः॥**
**द्रुतमरुदुपनुन्नैरुन्नमद्भिः सहेलं हलधरपरिधानश्यामलैरम्बुवाहैः॥ ६८॥**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये रैवतकवर्णनं नाम चतुर्थः सर्गः॥ ४॥

**अनुकृतेति॥ असौ अद्रिः त्वयि अभ्यागते सति अभ्युत्तिष्ठतीव अभ्युत्थानं करोतीव। कथं सरभसं सौत्सुक्यं, कैः अम्बुवाहैः मेघैः, कीदृशैः बिडम्बितशृङ्गसमूहशोभैः, तथा उच्चैः उन्नतैः, तथा वेगवद्वायुप्रेरितैः, तथा, सहेलं सविलासमुन्नमद्भिः उच्छ्रितैः, तथा बलभद्रवस्त्रश्यामलैः शिखरसमैः मेघैस्तवागच्छतः पुरो यातीवेत्यर्थः। अन्योऽपि चिरेणा-गतस्य मित्रस्यावश्यमेव सरभसमभ्युत्तिष्ठति। अभ्युत्तिष्ठतीति 'उदोऽनूर्ध्वकर्मणि' इति वचनादात्मनेपदाभावः। श्यामलं कृष्णम्। उत्प्रेक्षालङ्कारः। मालिनी वृत्तम्॥ ६८॥**

**इति श्रीआनन्ददेवायनिवल्लभदेवविरचितायां शिशुपालवधटीकायां**
**सन्देहविषौषधिनाम्न्यां चतुर्थः सर्गः।**

अनुकृतेति । असावुच्चैरुन्नतोऽद्रिः रैवतकः त्वयि अभ्यागते सति अनुकृता शिखरौघाणां श्रीर्यैस्तैस्तथोक्तैः । शिखरौघभ्रमकारिभिरिति भावः । अत एवात्र श्रीरिव श्रीरिति निदर्शनया भ्रान्तिमदलङ्कारो व्यज्यते । द्रुतमरुता शीघ्रमारुतेनोपनुन्नैः प्रेरितैः, अत एव सहेलं सलीलमुन्नमद्भिरुत्पतद्भिः । धरतीति धरः पचाद्यच् । हलस्य धरो हलधरो बलभद्रः तस्य परिधानान्यम्बराणि तद्वच्छ्यामलैः श्यामैरम्बुवाहैर्निमित्तेन सरभसमभ्युत्तिष्ठतीव प्रत्युत्थानं करोतीवेति क्रियानिमित्ता क्रियास्वरूपोत्प्रेक्षा, विशिष्टमेघोन्नमनक्रियया प्रत्युत्थानक्रियोत्प्रेक्षणात् । सा चोक्तनिदर्शनानुप्राणितेति सङ्करः । शाब्दस्तु वृत्त्यनुप्रासः । मालिनी वृत्तम् ॥ ६८ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवधकाव्यव्याख्याने सर्वङ्कषाख्ये चतुर्थः सर्गः ॥ ४ ॥

---

## पञ्चमः सर्गः ।

**इत्थं गिरः प्रियतमा इव सोऽव्यलीकाः शुश्राव सूततनयस्य तदा व्यलीकाः ।**
**रन्तुं निरन्तरमियेष ततोऽवसाने तासां गिरौ च वनराजिपटं वसाने ॥ १ ॥**

**इत्थमिति ॥ स भगवान् इत्थमुक्तप्रकारेण सूततनयस्य दारुकस्य तदा गिरो वाचः शुश्राव अश्रौषीत् । कीदृशीर्गिरः अव्यलीकाः मनोरमाः, व्यलीकं हि मनसोऽप्रियं न व्यलीका अव्यलीकाः मनःप्रियाः, तथा व्यलीकाः विगतमलीकं यासां ताः सत्याः अमिथ्यारोपितार्थत्वात् । अतश्च आह्लादकत्वात् प्रियतमा इव प्रियतमातुल्याः । ता अपि मनःप्रियाः असत्यरहिताश्च । यद्वा विशिष्टमलीकं ललाटं यासां ताः व्यलीकाः । ह्रस्वस्य दीर्घता । यतश्चैवंविधा वाचः श्रुतवांस्ततो हेतोः तासां गिरामवसाने समाप्तौ तस्मिन् गिरौ रैवतके निरन्तरमतिशयेन रन्तुं क्रीडितुमियेष अभिललाष । गिरौ कीदृशे वनराजिपटं वसाने काननपङ्क्तिवस्त्रं परिदधाने । सर्वगुणयुक्ते ह्यवश्यमेव महात्मानो रज्यन्ते । वसन्ततिलका वृत्तम् ॥ १ ॥**

इत्थमिति ॥ स हरिरित्थमनेन प्रकारेण । 'इदमस्थमुः' इति थमुप्रत्ययः । अव्यलीका अप्रियरहिताः 'व्यलीकं त्वप्रियेऽनृते' इत्यमरः । प्रियतमाः प्रेयस्य इव स्थिताः, कान्तासंमिता इत्यर्थः । व्यलीका विगतानृताः सत्याः सूततनयस्य सारथिकुमारस्य दारुकस्य गिरस्तदा शुश्राव । ततः श्रवणानन्तरं तासां गिरामवसाने समाप्तौ निरन्तरं नीरन्ध्रं वनराजिरेव पटस्तं वसाने आच्छादयति । 'वस आच्छादने' इति धातोः कर्तरि लटः शानजादेशः । गिरौ रैवतकाद्रौ रन्तुं क्रीडितुमियेष । तत्र वसतिं कर्तुमिच्छति स्मेत्यर्थः । उपमायमकयोः संसृष्टिः । सर्गेऽस्मिन् वसन्ततिलका वृत्तम् । 'उक्ता वसन्ततिलका तभजा जगौ गः' इति ॥१॥

**तं स द्विपेन्द्रतुलिताऽतुलतुङ्गशृङ्गमभ्युल्लसत्कदलिकावनराजिरुच्चैः(१) ॥**
**विस्ताररुद्धवसुधोऽन्वचलं चचाल लक्ष्मीं दधत्प्रतिगिरेरलघुर्बलौघः ॥ २ ॥**

**तमिति ॥ स बलौघः सेनापूगः तमचलमनु रैवतकं प्रति चचाल प्रतस्थे । कीदृशः प्रतिगिरेः पर्वतान्तरस्य लक्ष्मीं शोभां दधत् उद्वहन् । द्वितीयगिरिरयमिति ज्ञायते । केचित्तु प्रतिपक्षभूतं गिरिं प्रतिगिरिमाहुः । विपक्षो ह्युपरि चलति । इदानीमुभयविशेषणद्वारेण द्वयोः सादृश्यमाह—कीदृशं तं द्विपेन्द्रैर्हस्तिश्रेष्ठैस्तुलितानि अनुकृतानि अतुलानि**

( १ ) राजिमुच्चैः ।

रम्याणि तुङ्गानि अनूनानि शृङ्गाणि शिखराणि यस्य तम् । श्रेष्ठार्थत्वादतुलशब्दस्य नाऽन्यार्थबाधा । बलौघः कीदृशः अभ्युल्लसन्त्यः स्फुरन्त्यः कदलिका ध्वजदण्डा एव वनराजयो वृक्षपङ्क्तयो यस्य । राजिमिति तु पाठे कर्मपक्षे अभ्युल्लसन्त्यः कदलिकातुल्या वनराजयो यस्येति विग्रहः, स्फुरद्ध्वजदण्डतुल्यवृक्षपङ्क्तिम् । तथा विस्तारेण रुद्धा व्याप्ता वसुधा येन सः, उच्चैः उन्नतः उन्नतं वा, अलघुर्विस्तीर्णः । गिरेस्तु विभक्तिविपरिणामेन विशेषणानि । गजानां शृङ्गाणि उपमानं, कदलिकानां वनराजयः, बलौघस्य गिरिः । अन्वचलमित्यनुशब्दः कर्मप्रवचनीयः, तद्योगेऽचलमिति द्वितीया । अन्यो विरुद्धो वा गिरिः प्रतिगिरिः, कुगतिप्रादयः । ओघशब्दः पृषोदरादिः ॥ २ ॥

तामिति ॥ कदल्य एव कदलिकाः वैजयन्त्यो रम्भातरवश्च । 'कदली वैजयन्त्यां च रम्भायां हरिणान्तरे' इति विश्वः । अभ्युल्लसन्त्यः कदल्यो वैजयन्त्यो वनराजय इव यस्य सः, अन्यत्र रम्भावनपङ्क्तयो यस्य तामिति योज्यम् । उच्चैरुन्नतः, विस्तारेण रुद्धवसुधो व्याप्तभूमिः । अत एव प्रतिगिरेर्लक्ष्मीं दधत् । स्वयमप्यन्यो गिरिरिव स्थित इत्यर्थः । अलघुर्महान्स बलौघः सेनासङ्घो द्विपेन्द्रैस्तुलितान्यतुलान्यप्रतिमानि 'द्विपेन्द्रव्यतिरिक्तप्रतिमारहितान्युत्तुङ्गशृङ्गाणि यस्य तं तथोक्तमचलं रैवतकमनु चचाल । तं प्रति ययावित्यर्थः । 'अनुर्लक्षणे' इति कर्मप्रवचनीयत्वात्तद्योगे द्वितीया । अत्र प्रतिगिरेः कस्याचिदप्रसिद्धत्वात् गिरिधर्मयोगी बलौघः प्रतिगिरेर्लक्ष्मीमिव लक्ष्मीं दधातीति निदर्शनामुखेन प्रतियोगित्वेनोत्प्रेक्ष्यते इत्युत्प्रेक्षेयं श्लेषानुप्राणितेति सङ्करः ॥ २ ॥

**भास्वत्करव्यतिकरोल्लसिताम्बरान्ताः सापत्रपा इव महाजनदर्शनेन ॥**
**संविव्युरम्बरविकासि चमूसमुत्थं पृथ्वीरजः करभकण्ठकडारमाशाः ॥३॥**

भास्वदिति ॥ पृथ्वीरजो भूरेणुम् आशा दिशः कर्त्र्यः संविव्युः परिदधुः । यतोऽम्बरविराजि वस्त्रशोभि, तथा चमूसमुत्थं सेनासमुच्छ्रितं, करभकण्ठकडारमुष्ट्रग्रीवापिङ्गलम् । किंभूता दिशः भास्वत्करव्यतिकरोल्लसिताम्बरान्ताः रविकिरणसंश्लेषेण उल्लसितो भास्वान् अम्बरान्तो नभःपर्यन्तो यासाम् । अतश्चोत्प्रेक्ष्यते–महाजनदर्शनेन सापत्रपा इव जनतावलोकनेन सलज्जाः सत्यः इव रजोऽम्बरं संविव्युः । यस्याः किल महिलाया भास्वता रत्नकटकविशेषेण सद्युतिना करेण हस्तेन सम्पर्कादुल्लसितः स्रस्तः प्रकाशो वा अम्बरान्त उत्तरीयप्रान्तो भवति, सा गुरुजनावलोकनात् सव्रीडा सती शरीरालोकननिवृत्तये वासो वस्ते । संविव्युः इति व्येञो लिट् 'न व्यो लिटी'त्याभावः असंयोगाल्लिट् कित्, यजादित्वात् 'सम्प्रसारणाच्चे'त्येकादेशे द्वित्वं, लिट्यभ्यासस्योभयेषाम् । केचित् 'संविव्ययुर्वसनचारुचमूसमुत्थ'मिति पठन्ति, तैः सम्प्रसारणाभावे युक्तिर्वक्तव्या । त्रिवर्ष उष्ट्रः करभः ॥३॥

भास्वदिति ॥ आशा दिशो भास्वत्करव्यतिरेकेण सूर्यांशुव्याप्त्या उल्लसिताम्बरान्ताः प्रकाशिताऽऽकाशदेशाः । अन्यत्र भास्वान्भास्वरोऽभिरूपः । 'भास्वान्भास्वरसूर्ययोः' इति विश्वः । तस्य हस्तस्य स्पर्शनेनोल्लसिताम्बरान्ताः स्रस्तवस्त्राञ्चलाः अत एव महाजनदर्शनेन सापत्रपा इव । 'लज्जा सापत्रपान्यतः' इत्यमरः । अम्बरविकासि व्योमव्यापि वासश्शोभि च । 'अम्बरं व्योमवाससोः' इति विश्वः । चमूषु समुत्थं, करभ उष्ट्रपोतः । 'उष्ट्रे क्रमेलकमयमहाङ्गाः करभः शिशुः' इत्यमरः । तस्य कण्ठ इव कडारं कपिशं 'कडारः कपिशः पिङ्गः' इत्यमरः । पृथ्वीरजः संविव्युः संवव्रुः । आच्छादयामासुरित्यर्थः । व्येञ् संवरणे । लिट्, कित्त्वात्सम्प्रसारणे द्विर्भावः । 'एरनेकाच–' इति यणादेशः । स्त्रियो वस्त्रापहारे लज्जया यत्किञ्चिदाच्छादयन्तीति भावः । अत्राचेतनास्वाशासु श्लिष्टविशेषणमहिम्ना स्त्रीप्रतीतौ तदभेदाध्यवसायेन संव्यानव्यवहारसमारोपात्समासोक्तिः । सा च सापत्रपत्वोत्प्रेक्षानुप्राणितेति सङ्करः ॥ ३ ॥

आवर्तिनः शुभफलप्रदशुक्तिमुक्ताः सम्पन्नदेवमणयो भृतरन्ध्रभागाः ॥
अश्वाः प्यधुर्वसुमतीमतिरोचमानास्तूर्णं पयोधय इवोर्मिभिरापतन्तः ॥४॥

**आवर्तिन इति** ॥ अश्वाः वाजिनः वसुमतीं वसुधां तूर्णं शीघ्रं प्यधुः आच्छादयामासुः । किंभूताः पयोधय इव जलनिधितुल्याः । इदानीं विशेषणद्वारेणोभयेषां सादृश्यमाह—अश्वास्तावत्कीदृशाः आवर्तिनः शुभलक्षणविशेषयुक्ताः, समुद्राश्च भ्राम्यज्जलावर्ताः जलभ्रमयुक्ताः । अश्वा अभिमतदायिभिः शुक्तिभिरुरस्यैः आवर्तविशेषैः लघुकर्णैर्वा सम्बद्धाः, उदधयोऽपि सितमुक्ताप्रदायिनीभिः शुक्तिभिः प्राणिभेदैर्युक्ताः । अश्वाः सम्पन्नदेवमणयः अखण्डखण्डावर्ताः, उदधयोऽपि सम्पन्ना देवानां मणयो येभ्यः इति सम्पन्नदेवमणयः । देवमणिः कौस्तुभ इत्यन्ये । अश्वा भृतरन्ध्रभागाः मांसलनिम्नप्रदेशाः, समुद्रा अपि जलपूरिताऽगाधप्रदेशाः । अश्वा अतिरोचमानाः शोभमानाः, समुद्रा अपि तथा । अश्वाः शीघ्रमूर्मिभिर्वृन्दैरागच्छन्तः, समुद्रा अपि ऊर्मिभिस्तरङ्गैरापतन्तः शीघ्रमेव पृथ्वीं पिदधति स्म । प्यधुरिति दधातेरपिपूर्वस्य लङ् ।

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥

इति अवर्णनाशः ॥ ४ ॥

**आवर्तिन इति** ॥ आवर्तिनो दशावर्तवन्तः । प्रशंसायामिनिः(१) । ते च—

'द्वावुरस्यौ शिरस्यौ द्वौ द्वौ रन्ध्रोपरन्ध्रयोः ।
एको भाले द्वपाने च दशावर्ता ध्रुवाः स्मृताः' ॥

इत्युक्ता दश ध्रुवाख्या विवक्षिताः । अन्येषामनन्तरमेव पृथगभिधानात् । अन्यत्र तु जलभ्रमवन्तः । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । रोमसंस्थाने तु तत्साम्याद्व्यपदेशः । तदुक्तम्—'आवर्तसाम्यादावर्तो रोमसंस्थानमाङ्गिनाम्' इति । शुभफलानि राज्यलाभादीनि प्रददतीति शुभफलप्रदाः । 'प्रे दा ज्ञः' इति कः । ताभिः शुक्तिभिः संस्थानैरावर्तविशेषैर्युक्ताः । तदुक्तम्-'वक्षःस्थाः शुक्तयस्तिस्र ऊर्ध्वरोमा जयावहाः' इति । अन्यत्र शुभफलानि मुक्ताफलानि तत्प्रदाः शुक्तयो मुक्तास्फोटास्ताभिर्युक्ताः । 'मुक्तास्फोटे हयावर्ते शुक्तिः शङ्खकपालयोः' इति यादवः । सम्पन्नाः समग्रा देवमणयो निगालावर्ताः कौस्तुभादिदिव्यमणयश्च येषां ते ।

'आवर्तो रोमजो देवमणिस्त्वेष निगालजः ।
निगालस्तु गलोद्देशे सकृत्-'

इति वैजयन्ती । भृताः पूर्णा रन्ध्रभागाः पार्श्वदेशाः निम्नप्रदेशाश्च येषां ते । अतिशयिता रोचमानाः कण्ठावर्ता येषां तेऽतिरोचमानाः । 'कण्ठजो रोचमानश्च स्वामिसौभाग्यवर्धनः' इति वैजयन्ती । अन्यत्र त्वत्यन्तं दीप्यमाना इत्यर्थः । ऊर्मिभिर्गतिविशेषैर्वीचिभिश्च पतन्त आधावन्तः ।

'पङ्क्तीकृतानामश्वानां नमनोन्नमनाकृतिः ।
अतिवेगसमायुक्ता गतिरूर्मिरुदाहृता' ॥

इति वैजयन्ती । ईदृशोऽश्वाः पयोधय इव तूर्णं वसुमतीं प्यधुश्छादयन्ति स्म । 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः । अपिपूर्वाद्दधातेर्लुङ् । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः । एकनालावलम्बिफलद्वयवदेकशब्देनार्थद्वयप्रतीतेरर्थश्लेषोऽयं प्रकृताप्रकृतगोचरः, उपमा त्वङ्गमिति सङ्करः ॥४॥

आरक्षमग्नमवमत्य सृणिं शिताग्रमेकः पलायत जवेन कृतार्तनादः ॥
अन्यः पुनर्मुहुरुदप्लवताऽस्तभारमन्योन्यतः पथि बताऽबिभितामिभोष्ट्रौ॥५॥

---

(१) 'भूमिनिन्दाप्रशंसासु' इत्याद्युक्तेः । 'प्रशंसायाम्-' इति णिनिरिति प्रायः सर्वमुद्रितपुस्तकस्थः पाठश्चिन्त्य एव ।

आरब्धेति ॥ बत इति विस्मये, इभोष्ट्रौ करिकरभौ पथि मार्गेऽन्योन्यतः अबिभितां परस्परतस्तत्रसतुः । जातिस्वभावो ह्येतयोः । तमेव त्रासमाह—एक इभो हस्ती जवेन वेगेन पलायत नष्टः । किं कृत्वा सृणिमङ्कुशमवमत्यावगणय्य, कथंभूतं सृणिमवमत्य आरक्षमग्नं कुम्भाधोभागत्रुडितम् । आरक्षः कुम्भयोरधः । अपरं कीदृशं शिताग्रं तीक्ष्णकोटिं, किंभूतो हस्ती कृतार्तनादः मुक्तदीनस्वरगर्जनः । अन्यः पुनः उष्ट्रः अस्तभारं यथा भवति त्यक्तभारं यथा स्यात् एवं मुहुर्वारंवारमुदप्लवत उल्ललितः उट्टिटीके । परापूर्वस्यायतेर्लङ् उपसर्गस्य लत्वं, पलायतेति । अबिभितामिति लङ्, ईतः स्थाने 'भियोऽन्यतरस्या'मिति इत्वम् ॥ ५ ॥

आरब्धेति ॥ पथि मार्गे इभोष्ट्रावन्योन्यतोऽन्योन्यस्मादबिभितां भीतवन्तौ । ञिभी भये । लङ्, 'भियोऽन्यतरस्याम्' इतीत्वम् । बतेत्यनयोरपि भीतिरिति खेदेऽतिविस्मये वा । 'खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत' इत्यमरः । तत्र लिङ्गमाह—एक इभ आरक्षः कुम्भयोरधःप्रदेशस्तत्र मग्नं प्रविष्टं शिताग्रं तीक्ष्णमुखं सृणिमङ्कुशम् । 'अङ्कुशोऽस्त्री सृणिर्द्वयोः' इत्यमरः । अवमत्यावधूय कृत आर्तनादो येन सः । अतिकरुणं क्रन्दन्नित्यर्थः । जवेन पलायत पलायितवान् । परापूर्वादयतेर्लङ् । 'उपसर्गस्यायतौ' इति रेफस्य लत्वम् । अन्यः पुनरुष्ट्रस्तु अस्तभारं निरस्तभारं यथा तथा मुहुरुदप्लवतोत्प्लवितवान् । 'प्लु गतौ' इति लङ् । स्वभावोक्तिः ॥ ५ ॥

**आयस्तमैक्षत जनश्चटुलाग्रपादं गच्छन्तमुच्छलित(१)चामरचारुमश्वम् ॥**
**नागं पुनर्मृदुसलीलनिमीलिताक्षं सर्वः प्रियः खलु भवत्यनुरूपचेष्टः ॥ ६ ॥**

आयस्तमिति ॥ जनो लोकः अश्वं तुरगं गच्छन्तमायस्तं चिरकालमैक्षत । कथंभूतमश्वं चटुलाग्रपादं चञ्चलाग्रपादं चञ्चलाग्रचरणं, चटुलौ चञ्चलौ अग्रपादौ पूर्वखुरौ यत्र तं तथा, अपरं कीदृशम् उच्छलितचामरचारुम् उच्छलितं चलाचलं यच्चामरं प्रकीर्णं पुच्छं वा तेन चारुः मनोहरः तम् । पुनः स एव लोकः नागं मृदुसलीलनिमीलिताक्षं गच्छन्तमैक्षत मृदु मन्थरं तथा सलीलं निमीलिते अक्षिणी येन यत्र वा । एवं गच्छन्तौ तौ लोके जनस्य मनोहरौ । ननु विपर्ययेण युक्तोऽयमर्थः । हि यस्मात्कारणात् सर्वः कोऽपि अनुरूपचेष्टः सन् आत्मोपचितव्यापारः सन् प्रियो भवति । अश्वस्य जवेन यातमुचितं, हस्तिनस्तु मन्थरम् । खलु हेतौ ॥ ६ ॥

आयस्तमिति ॥ जनश्चटुलाग्रपादं चञ्चलपूर्वचरणं यथा तथा गच्छन्तम् । शीघ्रं धावन्तमित्यर्थः । उच्चलितैरुल्लसितैश्चामरैश्चारुमश्वमायस्तं सयत्नमाहृतं यथा तथा । यसु प्रयत्ने, कर्तरि क्तः । क्रान्तं क्रियाविशेषणम् । ऐक्षत ईक्षितवान् । ईक्षतेर्लङ् । 'आडजादीनाम्' इत्याटि 'आटश्च' इति वृद्धिः । नागं पुनर्गजं तं सलीलं निमीलिते अक्षिणी यस्मिन्कर्मणि तत् । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' । मृदु मन्दं गच्छन्तमायस्तमैक्षत । कथं शीघ्रमन्दयोस्तुल्यदृष्टिरत आह—सर्वः प्राणी अनुरूपचेष्टः स्वजात्युचितव्यापारः सन् प्रीणातीति प्रियः प्रीतिकरो भवति खलु । 'इगुपधज्ञाप्री-'इति कर्तरि क्तः । अर्थान्तरन्यासः ॥

**त्रस्तः समस्तजनहासकरं (२)करेणोस्तावत्खरः प्रखरमुल्ललयाञ्चकार ॥**
**यावच्चलासनविलोलनितम्बबिम्बविस्रस्तवस्त्रमवरोधवधूः पपात ॥ ७ ॥**

त्रस्त इति ॥ जातिस्वभावात् खरो वेसरः करेणोर्गजात् त्रस्तः भीतः सन् तावत् प्रखरमतिशयेन उल्ललयाञ्चकार उदटीकत, यावदवरोधवधूरन्तःपुरचेटिकाः पपात । अव-

(१) ०मुच्चालित ।　　(२) हासकरः ।

रोधोऽन्तःपुरम् , अत्र तु तात्स्थ्यान्नायिका, तस्या वधूः परिचारिकाः । नायिकायां त्वनौचित्यं स्यात् । कथमुद्दिटीके सर्वलोकहासविधायि, कथं पपात चलमस्थिरं यदासनमवस्थानबन्धः पर्ययणं वा तेन विलोलमाकुलं यन्नितम्बबिम्बं पश्चात्कटीभागः ततो विस्रस्तं पतितमुत्तरीयं यत्र । अत एव जनहासजनकम् । चुलुम्पादिवदुल्ललिरपि धातुषु बोद्धव्यः। प्रयोगस्तु दृश्यते । यथा—

कैश्चित् स्मेरमुखैर्विवृत्य वदनं चान्यैर्हसद्भिस्तथा
निर्यद्बाष्पमथापरैः कृतमहाशब्दोरुहासं जनैः ।
दृष्ट्वालम्बिबृहत्कुचां पृथुकटिं पृष्ठ्यां(?)क्षियं तुन्दिला-
मुर्वीमुल्ललयाञ्चकार करभात् त्रस्तश्चिरण्टीश्वरः ॥

आसनमिति भावेऽधिकरणे वा ॥ ७ ॥

त्रस्त इति ॥ करेणोरिभ्याः 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वम् । त्रस्तो भीतः खरो गर्दभः समस्तजनस्य हासं करोतीति तत्करः सन् । 'कृञो हेतु-' इत्यादिना टप्रत्ययः। तावत्तवदाधि प्रखरं भृशमुल्ललयाञ्चकार उत्पपात । यावत् चलात्स्थानचलितादासनात्पल्ययनात् विलोलोऽपसृतस्तस्मान्नितम्बबिम्बाद्विस्रस्तं वस्त्रं यस्मिन्कर्मणि तद्यथा तथा अवरोधवधूः पपात । स्वभावोक्तिः ॥७॥

शैलोपशल्यनिपतद्रथनेमिधारानिष्पिष्टनिष्ठुरशिलातलचूर्णगर्भाः ॥
भूरेणवो नभसि बद्ध(१)पयोदचक्राश्चक्रीवदङ्गरुहधूम्ररुचो विसस्रुः ॥ ८ ॥

शैलेति ॥ भूरेणवः पृथ्वीपांसवो नभसि आकाशे विसस्रुः उत्पेतुः । कथंभूताः शैलोपशल्यनिपतद्रथनेमिधारानिष्पिष्टनिष्ठुरशिलातलचूर्णगर्भाः शैलोपशल्ये पर्वतसमीपे निपतन्त्यो या रथनेमिधाराः स्यन्दनप्रधिकोटयः ताभिर्निष्पिष्टं चूर्णीकृतं शिलातलचूर्णं गर्भे अन्तरे येषां ते, तथा चक्रीवदङ्गरुहधूम्ररुचः चक्रीवान् खरः तस्य अङ्गरुहाणि लोमानि तद्वत् धूम्ररुचो मलिनभासः, तथा पुनः कथंभूताः बद्धं रुद्धं पयोदचक्रं घनसमूहो यैस्ते तथा ॥ ८ ॥

शैलेति ॥ शैलस्य रैवतकाद्रेरुपशल्यं प्रान्तम् । यद्यपि 'ग्रामान्त उपशल्यं स्यात्' इत्यमरः । तथाप्युपचाराददोषः । तत्र निपततां धावतां रथानां नेमयश्चक्रान्ताः । 'चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान्' इत्यमरः । तासां धाराभिर्निष्पिष्टानां चूर्णितानां निष्ठुराशिलातलानां चूर्णो गर्भे येषां ते तथोक्ताः । नभसि नद्धानि पयोदचक्राणि पयोदाकारमण्डलानि यैस्ते चक्रवद्भ्रमणमस्यास्तीति चक्रीवान् गर्दभः । 'चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः' इत्यमरः। 'आसन्दीवदष्ठीवच्चक्रीवत्—' इत्यादिना साधुः । तस्याङ्गरुहाणि रोमाणि तद्वद् धूम्ररुचः कृष्णलोहितवर्णाः। 'धूम्रधूम्रलौ कृष्णलोहिते' इत्यमरः । भूरेणवो विसस्रुः प्रसृताः ॥ ८ ॥

उद्यत्कृशानुशकलेषु खुराभिघाताद्भूमीसमायतशिलाफलकाचितेषु ॥
पर्यन्तवर्त्मसु विचक्रमिरे महाश्वाः शैलस्य दर्दुरपुटानिव वादयन्तः ॥ ९ ॥

उद्यदिति ॥ महाश्वा जातिवाजिनः शैलस्य पर्यन्तवर्त्मसु निकटमार्गेषु विचक्रमिरे गतिविशेषं चक्रुः । अश्वानां गतिविशेषो विक्रमणम् । किंभूतेषु भूम्या समैः न निम्नैर्नाप्युन्नतैश्च आयतैर्दीर्घैः शिलाफलकैः दृषत्पट्टकैः आचितेषु व्याप्तेषु, अत एव कथंभूतेषु उद्यत्कृशानुशकलेषु निःसरद्वह्निस्फुलिङ्गेषु, कस्मात् खुराभिघातात् खुराणां पर्यायपातात् । यदा अश्वा विशिष्टया गत्या रम्यं यान्ति, उत्प्रेक्ष्यते-दर्दुरपुटान् वादयन्त इव । मुखावनद्धं वाद्यभाण्डं दर्दुरपुट उच्यते । दुडदुडी प्राकृतम् ॥ ९ ॥

(१) नद्ध ।

उच्चादिति ॥ खुराः शफानि । 'शफं क्लीबे खुरः पुमान्' इत्यमरः । तेषामभिघातादुद्यन्तः कृशानुशकलाः स्फुलिङ्गा येभ्यस्तेषु । टङ्कप्रायाः खुरा इति भावः । भूम्यां समानि समतलान्यायतानि च यानि शिलाः फलकानीव शिला फलकानि तैराचितेष्वास्तृतेषु शैलस्य पर्यन्तवर्त्मसु प्रान्तमार्गेषु महाश्वा दर्दुराणां वाद्यविशेषाणां पुटान्मुखानि वादयन्त इव विचक्रमिरे जग्मुः । पादन्यासैस्तादृशं शब्दमकुर्वन्नित्यर्थः । 'वेः पादविहरणे' इत्यात्मनेपदम् । 'दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः' इत्यमरः । उत्प्रेक्षालङ्कारः ॥९॥

**तेजोनिरोधसमताऽवहितेन यन्त्रा सम्यक्कशात्रयविचारविदा(१) नियुक्तः ॥**
**आरट्टजश्चटुलनिष्ठुरपातमुच्चैश्चित्रं चकार पदमर्धपुलालयेन(२) ॥ १० ॥**

तेज इति ॥ आरट्टदेशे जातः आरट्टजः सिन्धुदेशीयोऽश्वः चित्रं पदं चकार नानाविधं गतिविशेषं विदधे । आरट्टबाल्हीककाम्बोजादयो देशविशेषाः अश्वयोनयः । कीदृशः उच्चैरुन्नतकायः, अपरं कथंभूतः यन्त्रा अश्वारोहकेण नियुक्तः प्रेरितः, कथंभूतेन यन्त्रा तेजोनिरोधसमताऽवहितेन तेजोनिरोधो दर्पनिवारणं वेगोत्थापननिषेधः तेन या समता साम्यावस्था अश्वस्य मध्यगतिस्तत्र अवहितेन सावधानेन । धावन्तमश्वं वशीकर्तुं यो जानातीत्यर्थः । अपरं कथंभूतेन सम्यक्कशात्रयविचारविदा सम्यक् अविपरीतो यः कशात्रयविचारस्तं वेत्तीति वित् तेन । वडवालोकनस्खलनस्वपनोपवेशनहेषण-(३)विमनस्कतासु षट्सु ताडनस्थानेषु मध्यादेकत्र त्रिः कशया वरत्रया मुखपार्श्वपाश्चात्यभागेषु हननं कशात्रयं, त्रिवेलं वरत्राताडनम् । एके त्वाहुः निद्राविमनस्कतारोषाख्यास्तिस्रः कशावस्थाः । गच्छतोऽश्वस्य यदा निद्रा भवति तदा मुखे हन्यते, यदा वडवालोकनात् वैमनस्यं भवति तदा पार्श्वेताडनं, यदा रोषस्तदा पश्चादिति । एतदश्वस्य कशनत्रयम् । कीदृशं पदं चटुलनिष्ठुरपातं चटुलश्चञ्चलो निष्ठुरः कठिनश्च पातः पादन्यासो यत्र तत् । केन पदं चकार अर्धपुलालयेन, पुला गतिविशेषः तस्या अर्धम् अर्धपुला तस्याः आलयः स्थानम्, अथ वा तस्या लयो लीला तेन । एतत्सर्वमश्वलक्षणात्सुबोधं शालिहोत्रग्रन्थे प्रसिद्धम् ॥१०॥

तेज इति ॥ तेजो नाम दर्पापरनामा सत्त्वगुणविकारः प्रकाशकोऽन्तःसारविशेषः । यथाह भोजराजः—

'तेजो निसर्गजं सत्त्वं वाजिनां स्फुरणं रजः ।
क्रोधस्तम इति ज्ञेयास्त्रयोऽपि सहजा गुणाः' ॥

इति । तच्च द्विविधं सततोत्थितं भयोत्थितं चेति । यथाह स एव—

'धारासु योजितानां च निसर्गात्प्रेरणं विना ।
अविच्छिन्नमिवाभाति तत्तेजः सततोत्थितम् ॥
कशापादादिघातैर्यत्साध्वसात्स्फुरितं तु तत्' ॥

इति । अत्र तेजःशब्देन तत्कार्यं वेगो लक्ष्यते । तथा च तेजसि वेगे निरोधे तन्निवारणे समतायां वेगसाम्ये चावहितेन । वल्गाविभागकुशलेनेत्यर्थः । कशा ताडनी । 'अश्वादेस्ताडनी कशा' इत्यमरः । अत्र कशाः कशाघातास्तासां त्रयमुत्तममध्यमाधमेषु यथासंख्यं मृदुममनिष्ठुरसकृद् द्विस्त्रिरूपं त्रितयं तस्य विचारः । एतेषु निमित्तेष्वङ्गेष्वेवं ताड्य इति विमर्शः । तद्वता तज्ज्ञेन । यथाह भोजः—

'मृदुनैकेन घातेन दण्डकालेषु ताडयेत् ।
तीक्ष्णं मध्ये पुनर्द्वाभ्यां जघन्यं निष्ठुरैस्त्रिभिः ।
उपवेशेऽथ निद्रायां स्खलिते दुष्टचेष्टिते ।
वडवालोकनौत्सुक्ये बहुगर्वितहेषिते ॥

---

(१) ०वता । (२) ०यितेन । (३) स्खलन स्वप्न वसन सन हेसन विम०-इति आदर्शपुस्तके ।

सन्त्रासे च दुरुत्थाने विमार्गगमने भये ।
शिक्षात्यागस्य समये सञ्जाते चित्तविभ्रमे ॥
दण्डः प्रयोज्यो वाहानां कालेषु द्वादशस्वपि ।
ग्रीवायां भीतमाहन्यात् त्रस्तं चैव च वाजिनम् ॥
विभ्रान्तचित्तमधरे त्यक्तशिक्षं च ताडयेत् ।
प्रहेषितं स्कन्धबाह्वोर्वडवालोकिनं तथा ॥
उपवेशे च निद्रायां कटिदेशे च ताडयेत् ।
दुश्चेष्टितं मुखे हन्यादुन्मार्गप्रस्थितं तथा ॥
जघने स्खलितं हन्यात्रेत्रमार्गे दुरुत्थितम् ।
यः कुण्ठप्रकृतिर्वाजी तं सर्वत्रैव ताडयेत्' ॥

इति । एवंभूतेन यन्त्रा सादिना सम्यग्यथाशास्त्रं नियुक्त ईरितः उच्चैरुन्नतः, आरट्टोऽश्वयोनिदेशविशेषः । तज्जोऽश्व आरट्टजः । विशेषणमात्रप्रयोगे सागराम्बरादिवत्तावतैव विशेष्यप्रतीतेरित्याह **वामनः—**'विशेषणप्रयोगो विशेष्यप्रतिपत्ता'विति । चटुलश्चपलो निष्ठुरः परुषश्च पातः प्रक्षेपो यस्मिन्कर्मणि तद्यथा तथा अर्धपुलायितेन मण्डलगतिविशेषेण चित्रमद्भुतं पदं पदक्रमं चकार ।

'शताधर्धिक्रमादूनैर्मण्डलायितवल्गितैः ।
उन्मुखस्याश्वमुख्यस्य गतिरर्धपुलायितम्' ॥

इति लक्षणात् । पुला नाम प्लुतायनेकापरनामा हयानां गतिविशेषः । तदुक्तं **हयलीलावत्याम्—**

'प्लुतां प्लवङ्गितामाहुर्या धारा पुलनाभिधा ।
पुनरेनां रलोपान्तां पुलामित्याह देशिकः' ॥

तल्लक्षणं च तत्रैवोक्तम्—

'क्षिपति समविशेषानुत्क्षिपत्यग्रपादान्प्रसरति पुरतोऽश्वः साधु धारा पुलाख्या ।
विलसति समपादोत्क्षेपणाकुञ्चनानां करणमिह गतिज्ञाः प्राहुरन्ये पुलाख्याम्' ॥

इति । 'पार्ष्णिप्रधानं प्रविधाय रागाद्वल्गां श्लथीकृत्य वहेत्पुलाख्याम्' इत्यादि । पुलाख्यया अयनं गतिः पुलायितम् । अय गतौ, भावेक्तः । तच्छतार्धेत्याद्युक्तरीत्यानुष्ठितमर्धपुलायितमित्यलमतिविस्तरेण ॥

**नीहारजालमलिनः पुनरुक्तसान्द्राः कुर्वन्वधूजनविलोचनपक्ष्ममालाः ॥**
**क्षुण्णः क्षणं यदुबलैर्दिवमातितांसुः पांसुर्दिशां मुखमतुत्थयदुत्थितोऽद्रेः ॥ ११ ॥**

**नीहारेति ॥** नगादुत्थितो रेणुः क्षणं ककुभाम् आशानां मुखमतुत्थयत् आरञ्जयत् श्यामलीचकार । किंभूतः पांसुः नीहारजालवत् श्यामः धूमिकानिकुरम्बश्यामः, पुनः किंभूतः वनिताप्रान्तनयनपङ्क्तीः स्वभावात् अघना अपि पुनरुक्तसान्द्राः कुर्वन् अतिघना विदधत् । यतः किंविधः यदुबलैः यादवसैन्यैः क्षणं क्षणमात्रं क्षुण्णः पिष्टः, अत एव कीदृशः दिवमाकाशमातितांसुः आरुरुक्षुः । आतितांसुरिति तनोतेः सन् 'तनिपतिदरिद्रातिभ्यः' इतीड् विभाषितः, अज्झनगमां सनि 'तनोतेर्विभाषे'ति दीर्घः ॥ ११ ॥

**नीहारेति ॥** नीहारजालवत्तुहिनव्यूहवन्मलिनो वधूजनविलोचनानां पक्ष्ममालाः पुनरुक्तसान्द्रा द्विगुणसान्द्राः कुर्वन् । स्वभावतोऽपि सान्द्रत्वादिति भावः । मयूरव्यंसकादित्वाद्विस्पष्टपटुवत्समासः । क्षणं यदूनां बलैः सैन्यैः क्षुण्णोऽद्रेरुत्थितो दिवमाकाशमाततितुमवतानितुमिच्छुरातितांसुः । तनोतेः सन्नन्तादुप्रत्ययः । 'सनीवन्तर्ध—' इत्यत्र तनिपतिदरिद्राणामुपसंख्यानाद्वैकल्पिक इडभावः । 'तनोतेर्विभाषा' इति दीर्घः । पांसुर्दिशां मुखमतुत्थयदाच्छादयति स्म । 'तुत्थ आच्छादने' इति धातोश्चौरादिकाल्लङ् ॥ ११ ॥

**उच्छिद्य विद्विष इव प्रसभं मृगेन्द्रानिन्द्रानुजानुचरभूपतयोऽध्यवात्सुः ॥**
**वन्येभमस्तकनिखातनखाग्रमुक्तमुक्ताफलप्रकरभाञ्जि गुहागृहाणि ॥ १२ ॥**

उच्छिद्येति ॥ इन्द्रानुजाऽनुचरभूपतयः उपेन्द्रसेवकनृपाः प्रसभं बलात्कारेण मृगेन्द्रान् सिंहान् उच्छिद्य द्रावयित्वा गुहागृहाणि दरीमन्दिराणि अध्यवात्सुः अधितष्ठुः। कानिव विद्विष इव रिपूनिव। यथा कश्चित् पुरुषः प्रसभं बलात्कारेण विद्विषः शत्रून् उच्छिद्य गृहाणि अधिवसति। कथंभूतानि गुहागृहाणि वन्येभमस्तकनिखातनखाग्रमुक्तमुक्ताफल-प्रकरभाञ्जि वन्येभमस्तकेषु आरण्यकुञ्जरशिरस्सु निखातानि न्यस्तानि यानि नखाग्राणि सिंहकरजकोटयः तैर्मुक्तानि उत्सृष्टानि यानि मुक्ताफलानि मौक्तिकानि तेषां प्रकराः समूहाः तान् भजन्ति आश्रयन्ते इति तथा तानि। रिपुगृहाण्यपि समुक्ताफलानि भवन्ति। अध्यवात्सुरिति वसेरधिपूर्वस्य लुङ्। 'उपेन्द्र इन्द्रावरजः' इत्यमरः ॥ १२ ॥

उच्छिद्येति ॥ इन्द्रानुजस्योपेन्द्रस्य हरेरनुचरा अनुजीविनो भूपतयो मृगेन्द्रान्सिंहान् विद्विषः शत्रूनिव प्रसभं प्रसह्योच्छिद्य हत्वा वन्येभानां मस्तकेषु निखातैर्निक्षिप्तैर्नखाग्रैः सिंहनखमुखैर्मुक्तान् विकीर्णान मुक्ताफलप्रकरान्भजन्तीति तथोक्तानि। गुहा गृहाणीवेत्युपमितसमासः, विद्विष इवेति लिङ्गात्। अध्यवात्सुरध्युषितवन्तः। 'उपान्वध्याङ्वसः' इति कर्मत्वम्। वस निवासे, लुङि सिचि वृद्धिः। 'सः स्यार्धधातुके' इति तत्वम् ॥ १२ ॥

**बिभ्राणया बहलयावकपङ्कपिङ्गपिच्छावचूल(१)मनुमाधवधाम जग्मुः ॥**
**चञ्च्वग्रदष्टचटुलाहिपताकयाऽन्ये स्वावासभागमुरगाशनकेतुयष्ट्या ॥१३॥**

बिभ्राणयेति ॥ अन्ये राजनः अनुमाधवधाम माधवस्य धामसमीपे श्रीकृष्णावास-समीपे स्वावासभाग आत्मीयावासप्रदेशः तं जग्मुः बुबुधिरे। कया उरगाशनकेतुयष्ट्या उरगाशनो गरुडः स एव केतुः चिह्नं यस्य तस्य यष्टिर्दण्डः तया, किंभूतया केतुयष्ट्या चञ्च्वग्रदष्टचटुलाऽहिपताकया चञ्च्वग्रेण गरुडतुण्डप्रान्तेन दष्टः खण्डित अत एव चटुल-श्चञ्चलो योऽहिरुरगः स एव पताका वैजयन्ती यस्याः सा तया, तथा किं कुर्वाणया यष्ट्या बहलयावकपङ्कपिङ्गपिच्छावचूलं बिभ्राणया बहलो घनो योऽसौ यावकपङ्कः अलक्तकनिर्यासः तद्वत् पिङ्गं हरितं यत् पिच्छं गरुडबर्हं तदेव अवचूलं चामरं बिभ्राणया वहन्त्या। ध्वजे हि सलोहितं पिङ्गंचामरं क्रियते इत्याचारः। अनुमाधवधाम इति अनुर्यत्समीपे समासः॥१३

बिभ्राणयेति ॥ अन्ये भूपतयः, याव एव यावकोऽलक्तकः। 'राक्षा लाक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः' इत्यमरः। 'यावादिभ्यः कन्' इति स्वार्थे कन्। बहलेन यावकपङ्केन पिङ्गं पिङ्गलं पिच्छं बर्हमेव वा अवचूडमधोलम्बिकलापं बिभ्राणया। 'अस्योच्चूडावचूडाख्यावूर्ध्वाधोमुखचूडकौ' इति ध्वजाङ्गेषु हलायुधः। चञ्चुस्त्रोटिः। 'चञ्चुस्त्रोटिरुभे स्त्रियाम्' इत्यमरः। तस्या अग्रेण दष्टा चटुला चञ्चला अहिरेव पताका यस्यां तया, उरगाशनो गरुडस्तस्य केतुयष्टिः। तदधिष्ठितो ध्वजदण्ड इत्यर्थः। तया, अभिज्ञानेनेति भावः। अनुमाधवधाम हरिशिबिरमनु स्वावासभागं स्वनिवेशदेशं जग्मुः प्रापुः। दूरादेव गरुडध्वजेन माधवधाम ज्ञात्वा तत्संनिहितान्नियतदिक्कान्स्वावासान्निश्चित्य जग्मुरित्यर्थः ॥ १३ ॥

**छायामपास्य महतीमपि वर्तमानामागामिनीं जगृहिरे जनतास्तरूणाम् ॥**
**सर्वो हि नोपनत(२)मप्यपचीयमानं वर्धिष्णुमाश्रयमनागतमभ्युपैति ॥१४॥**

छायामिति ॥ जनानां समूहो जनता लोकसमूहः तरूणां वर्तमानां साम्प्रतिकीं छायामातपप्रत्यनीकामपास्य त्यक्त्वा आगामिनीमेष्यतीं छायां जगृहिरे सिषेविरे। कदाचित् सा ऊना भविष्यतीत्याशङ्क्याह—किंभूतां छायां महतीमपि विस्तीर्णामपि।

(१) ०वचूड'''जग्मुः। (२) नोपगत।

ननु सा यदि महती तत् कथमागामिनीं जगृहिरे, हि यस्मात् कारणात् सर्वः कश्चिज्जनः उपनतमपि प्राप्तमपि स्वाश्रयं स्वस्थानमपचीयमानं हीयमानं नोपैति न सेवते, परं वर्धिष्णुं वर्धमानमाश्रयमनागतमपि अप्राप्तमपि उपैति सेवते । अतश्च सम्प्रति च्छायामा तत्र क्षणेन क्षीयते, अन्यत्र तु वर्धिष्णुः सती क्षणेन(?) । आगमिष्यतीत्यागामिनी गमेरिति आङि णिनिः । जगृहिरे इति कर्तरि लकारः, स्वरितेत्त्वादात्मनेपदम् । वर्धिष्णुमिति 'अलङ्कृञा'दिना सूत्रेण इष्णुच् ॥ १४ ॥

छायामिति ॥ जनानां समूहा जनताः । ग्रामजबनन्धुसहायेभ्यस्तल् । तरूणां वर्तमानां विद्यमानां महतीमपि छायामपास्य त्यक्त्वा आगामिनीं छायां जगृहिरे । वर्धिष्णुत्वादिति भावः । न च प्राप्तत्यागो दोषाय, त्यागस्वीकारयोः क्षयवृद्धिप्रयुक्तत्वादिति भावः । सर्व इति । तथा हि—सर्वो जन उपगतं प्राप्तमप्यवचीयमानं क्षीयमाणम् , कर्मकर्तरि प्रयोगः, आश्रयं नोपैति न गृह्णाति, किन्त्वनागतमप्राप्तमपि वर्धिष्णुं वर्धनशीलमाश्रयमुपैति । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १४ ॥

**अग्रे गतेन वसतिं परिगृह्य रम्यामापात्यसैनिकनिराकरणाकुलेन ॥**
**यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरादुद्बाहुना जुहुविरे मुहुरात्मवर्ग्याः॥१५॥**

अग्रे इति ॥ केनचिदग्रे गतेन प्रथममागतेन सता पुरः प्राप्तेन आत्मवर्ग्याः स्वसहायाः दूरादेव मुहुर्वारंवारं जहुविरे आकारिताः । किंभूता वर्ग्याः अन्यतो यान्तः अन्यस्मिन् प्रदेशे गच्छन्तः, किं कृत्वा रम्यां वसतिं परिगृह्य मनोहरं स्थानमासाद्य, किंभूतेन तेन आपात्यसैनिकनिराकरणाकुलेन आपात्या आगन्तुकामा ये सैनिकाः सेनाचराः तेषां निराकरणम् 'अत्र मा आगच्छते'त्यादिनिषेधः तत्र आकुलो व्यग्रः तेन,कथं यथा भवति तथा आहूताः प्लुतकृतस्वरं यथा भवति तथा प्लुतेन वेगेन अतिदीर्घेण, वा कृतो विहितः स्वरः शब्दो यत्र यस्यां क्रियायाम्,तथा पुनः कथम् आशु शीघ्रेण पुनः किंभूतेन उद्बाहुना उर्ध्वभुजेन । तद्यथा—आगच्छ भो मल्लक! देवदत्त! मया मनोहरं स्थानं गृहीतमिति । आत्मवर्गे भवा आत्मवर्ग्याः, दिगादित्वाद् यत् । वसतिशब्दः औणादिकः । रमयति रम्या 'कृत्यल्युटो बहुलम्' इति कर्तर्येव यत् । जहुविरे इति ह्वेञः कर्मणि लिट्, 'लिटि धातोरनभ्यासस्ये'ति द्वित्वं, धातोर्यजादित्वात्सम्प्रसारणम् । 'वसती रात्रिवेश्मनोः', 'व्यग्रो व्यासक्त आकुलः' इत्यमरः ॥ १५ ॥

अग्र इति ॥ अग्रे गतेन पुरः प्रयातेन रम्यां वसतिं निवासम् । 'वहिवस्यर्तिभ्यश्च' इति वसेरौणादिकोऽतिप्रत्ययः । परिगृह्यापतन्तीत्यापात्याः स्वयमाक्रमितुमागच्छन्तः । 'भव्यगेय-' इत्यादिना कर्तरि ण्यदन्तो निपातः । तेषां सैनिकानां निराकरणे निरसने आकुलेन व्यग्रेण उद्बाहुनोद्यतहस्तेन । केनचिदिति शेषः । अन्यतो यान्तो गच्छन्त आत्मवर्ग्याः स्वयूथ्याः । प्लुतं त्रिमात्रिकं यथा तथा कृतः स्वरो नाद आह्वानं यस्मिन्कर्मणि तद्यथा तथा । 'दूराद्धूते च' इति दूरादाह्वाने प्लुतविधानादिति भावः । आशु दूरान्मुहुराजुहुविरे आहूताः । ह्वयतेराङ्पूर्वात्कर्मणि लिट् । 'अभ्यस्तस्य च' इति सम्प्रसारणे द्विर्वचनमुवङादेशश्च ॥ १५ ॥

**सिक्ता इवामृतजलेन (१)मुहुर्जनानां क्लान्तिच्छिदो वनवनस्पतयस्तदानीम् ॥**
**शाखावसक्तवसनाभरणाभिरामाः कल्पद्रुमैः सह विचित्रफलैर्विरेजुः॥१६॥**

सिक्ता इति ॥ तदानीं तस्मिन् काले वनवनस्पतयः वानेयवृक्षाः विरेजुः शुशुभिरे,

(१) रसेन ।

कैः सह कल्पद्रुमैः सह । सहशब्दोऽत्र इवार्थे । उत्प्रेक्ष्यते—कल्पद्रुमा इव । यथा कल्पद्रुमाः देवतरवो मन्दाराद्याः राजन्ते । किंभूतैः विचित्रफलैः विचित्राणि नानावर्णान्यभिरामत्वेनाश्चर्यकारीणि वा फलानि येषां ते तथा तैः नानाविधाभीष्टफलयुक्तैः, किंभूताः वनस्पतयः जनानां सेवमानानां लोकानां मुहुर्वारंवारं क्लान्तिच्छिदः अध्वखेदनिवर्तकाः, क्लान्तिं श्रान्तिं छिन्दन्तीति क्लान्तिच्छिदः। पुनः किंभूता वनस्पतयः, उत्प्रेक्ष्यते—अमृतजलेन सिक्ता इव अमृतं सुधा तदेव जलं तेन आप्लाविता इव । अमृतसिक्तं हि श्रमनाशकं भवति । पुनः किंभूता वनस्पतयः शाखावसक्तवसनाभरणाः शाखासु अवसक्तैः प्रकाण्डेषु अवलम्बितैः वसनाभरणैः वस्त्रालङ्करणैः अभिरामा मनोहराः । यदुसैन्यैर्वृक्षेषु वसनाभरणान्यवलम्बितान्यभूवन् । अत एव कल्पद्रुमा उपमानम् । यत् कल्पद्रुमा अपि अमृतसिक्ता भवन्ति तथा श्रमनिवर्तकाः वस्त्राभरणाद्यभिरामाः, तत एव वस्त्राभरणादीनामुत्पत्तेः । वनस्पतयोऽपि विचित्रफला भवन्ति । 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः' । 'फलं फले धने बीजे निष्पत्तौ भोगलाभयो'रिति विश्वः ॥ १६ ॥

सिक्ता इति ॥ अमृतरसेन सिक्ता इवेत्युत्प्रेक्षा । मुहुर्जनानां क्लान्तिच्छिदः श्रमहराः । कल्पद्रुमवदमृतसेकाभावादपि तद्वदाह्लादका इति भावः । शाखास्ववसक्तैर्लग्नैर्वसनैराभरणैश्चाभिरामाः । एकत्र सेनास्थापितैरन्यत्र स्वप्रसूतैरिति भावः । वनवनस्पतयो वनवृक्षा विचित्रफलैर्वस्त्राभरणाद्यनेकफलयुक्तैः कल्पद्रुमैः । तत्रत्यैरिति शेषः । सह तदानीं विरेजुः । तद्वद्विरेजुरित्यर्थः । सहेति सादृश्ये । 'सह साकल्यसादृश्ययौगपद्यसमृद्धिषु' इति विश्वः । तथा चोपमालङ्कारः ॥ १६ ॥

**यानाज्जनः परिजनैरवरोप्यमाणा (१) राज्ञीर्नरापनयनाकुलसौविदल्लाः ॥**
**स्रस्तावगुण्ठनपट(२)क्षणलक्ष्यमाणवक्त्रश्रियः सभयकौतुकमीक्षते स्म॥१७॥**

यानादिति ॥ जनः सामान्यलोकः राज्ञीः नृपदारान् सभयकौतुकं यथा भवति तथा ईक्षते स्म अवलोकयामास, सभयं सचकितं कौतुकं कुतूहलं च यथा स्यात्तथा । किंभूताः राज्ञीः परिजनैः कञ्चुकिभिः यानात् आश्वादिकात् वाहनात् अवरोप्यमाणाः अवतार्यमाणाः वसुन्धरां प्राप्यमाणाः, अपरं किंलक्षणा राज्ञीः नरापनयनाकुलसौविदल्लाः नराणां पुरुषलोकानामपनयने उत्सारणे आकुलाः व्यग्राः सौविदल्लाः अवरोधरक्षकाः स्थापत्या वा यासां तास्तथा ताः । अत एव सचकितमीक्षणम् । पुनः कथंभूताः राज्ञीः स्रस्तावगुण्ठनपटक्षणलक्ष्यमाणवक्त्रश्रियः स्रस्तः पतितः योऽसौ अवगुण्ठनपटः आच्छादनपटः उत्तरीयवस्त्रं तेन हेतुना क्षणं क्षणमात्रं लक्ष्यमाणा दृश्यमाना वक्त्रश्रीर्मुखकान्तिर्यासां तास्तथा ताः । अत एव सकौतुकमीक्षणम् । अवरोप्यमाणाः इति रुहः पोऽन्यतरस्याम् । राज्ञीरिति ऋन्नेभ्यो ङीप् । 'सर्वं स्याद्वाहनं युग्यं यानः पत्रं च धोरणम्', 'सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते', 'कौतुकं च कुतुकं च कुतूहलम्' सर्वत्राप्यमरः । 'अवगुण्ठनमाच्छाद'- इति वैजयन्ती ॥ १७ ॥

यानादिति ॥ परिजनैर्यानाद्वाहनादवतार्यमाणा अवरोप्यमाणाः । रुहेर्ण्यन्तात्कर्मणि लटः शानजादेशः । 'रुहः पोऽन्यतरस्याम्' इति पकारः । नराणामालोकिजनानामपनयनेऽपसारणे आकुलाः सौविदल्लाः कञ्चुकिनो यासां ताः । 'सौविदल्लाः कञ्चुकिनः' इत्यमरः । स्रस्ता अवरोपणसंक्षोभादपसृता अवगुण्ठनपटाः

(१) ०रवतार्यमाणा । (२) पटाः क्षण ।

नाङ्गीवक्राणि यासां ताः अत एव क्षणं लक्ष्यमाणा वक्त्रश्रियो यासां तास्तथोक्ता राज्ञीः । राजकी । 'पुंयोगादाख्यायाम्' इति ङीप् । जनः सभयकौतुकमीक्षते स्म । ताडनाद्भयं, कामात्कौतुकम् ॥ १७ ॥

**कण्ठावसक्तनु(१)बाहुलतास्तुरङ्गाद्राजावरोधनवधूरवतारयन्तः ॥**
**आलिङ्गनान्यधिकृताः स्फुटमापुरेव गण्डस्थलीः शुचितया न चुचुम्बुरासाम् १८**

**कण्ठेति** ॥ अधिकृताः कञ्चुकिनः स्फुटं प्रकटमालिङ्गनानि आश्लेषणानि आपुरेव लेभिरे एव, परमासां गण्डस्थलीः कपोलभित्तीः शुचितया प्रत्यक्षतया तासां पवित्रतया वा न चुचुम्बुः न चुम्बन्ति स्म न पपुः । किं कुर्वन्तः आपुः राजावरोधनवधूस्तुरङ्गादवतारयन्तः नृपतिशुद्धान्तनारीः अश्वाद् भूमिं प्रापयन्तः । आलिङ्गनप्राप्तौ कारणमाह—किंभूताः वधूः कण्ठावसक्ततनुबाहुलताः कण्ठे ग्रीवायामवसक्ताः संलग्नाः तनवः मृदवः सुकुमाराः बाहुलता भुजवल्ल्यो यासां तास्तथा ताः । राज्ञामवरोधनमन्तःपुरं तस्याः वध्वः ताः ॥ १८ ॥

कण्ठेति ॥ तुरङ्गाद्राजावरोधनवधूः राज्ञामवरोधवधूरवतारयन्तोऽवरोपयन्तोऽधिकृता अन्तःपुराधिकारिणः कण्ठेषु स्वकीयेष्ववसक्ता मृदवो बाहुलतास्तदीया येषां ते तथोक्ताः सन्तः स्फुटं व्यक्तमालिङ्गनान्यापुरेव । अन्यथा दुरवरोहत्वाद्याजाद्येति भावः । आसां वधूनां गण्डस्थलीः शुचितया स्वयं शुद्धवर्तित्वाद्गण्डनैर्मल्याच्च न चुचुम्बुः । यावत्कर्तव्यकारिणः शुद्धात्मानो नातिचरन्तीति भावः । अन्यत्र तु पापाचाराः पापालिङ्गानि प्रकाशयन्तीति भावः ॥ १८ ॥

**दृष्ट्वेव निर्जितकलापभरामधस्ताद्व्याकीर्णमाल्यकबरां कबरीं तरुण्याः ॥**
**प्रादुद्रुवत्सपदि चन्द्रकवान् द्रुमाग्रात्संघर्षिणा सह गुणाभ्यधिकैर्दुरासम् ॥१९**

**दृष्ट्वेवेति** ॥ चन्द्रकवान् मयूरः द्रुमाग्रात् वृक्षप्रान्तात् सपदि तत्क्षणादेव प्रादुद्रुवत् पलायाञ्चक्रे । उड्डीन इत्यर्थः । जनभयेनेति भावः । अत्र कविरुत्प्रेक्षते—अधस्तात्तरुतलच्छायायां तरुण्याः कामिन्यां कबरीं दृष्ट्वेव केशपाशमवलोक्येव । किंभूतां कबरीं व्याकीर्णमाल्यकबरां मालायां साधूनि माल्यानि व्याकीर्णानि विक्षिप्तानि च तानि माल्यानि च कुसुमानि च तैः कबरा कर्बुरा ताम्, अत एव किंभूतां कबरीं निर्जितकलापभरां निर्जितः तिरस्कृतः कलापभरो बर्हभारो यया सा तां परिभूतमयूरबर्हभाराम् । युक्तमेतत्—यदसौ तदवलोकने उड्डीनः ततो ज्ञायते सङ्घर्षिणा स्पर्धायुक्तेन गुणाभ्यधिकैः विशेषोत्कृष्टैः सह दुरासं दुःखेनास्यते तद् दुरासम् । दुःखेन स्थीयते इत्यर्थः। मयूरः स्पर्धायुक्तः, युवतिकबर्यो गुणाभ्यधिकाः । मालायां साधूनि माल्यानि 'तत्र साधु'रिति यत् । कबरामिति न ङीष्, केशपाशार्थत्वाभावात् । कबरीमित्यत्र तु तदर्थत्वाद्भवत्येव । प्रादुद्रुवदिति 'द्रु द्रु गता'वित्यस्य लुङ्, णिश्रिद्रुस्रुभ्यः कर्तरि चङ् । चन्द्रकं बर्हम् । 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च' । कबरी केशवेशः। 'चन्द्रकवान् मेचकी बर्ही'ति वैजयन्ती॥१९॥

दृष्ट्वेवेति ॥ अधस्तात्तरुतले निर्जितः कलापभारो यया ताम् । 'कलापो भूषणे बर्हे' इत्यमरः । व्याकीर्णेन विक्षिप्तेन माल्येन कबरां शाराम् । 'कबरः कर्बुरः शारः' इति हलायुधः । तरुण्याः कबरीं केशपाशम् । 'कबरी केशपाशोऽथ' इत्यमरः । 'जानपद–' इत्यादिना ङीष् । दृष्ट्वेवेत्युत्प्रेक्षा । सपदि चन्द्रका अस्य सन्तीति चन्द्रकवान्मयूरः द्रुमाग्रात्प्रादुद्रुवत्प्रद्रुतवान् । द्रु गतौ, लुङि 'णिश्रि–' इत्यादिना च्लेश्चङादेशः । 'अचि श्नुधातु–' इत्यादिना उवङादेशः । तथा हि सङ्घर्षिणा मत्सरिणा कर्त्रा गुणाभ्यधिकैर्गुणोत्कृष्टैः सह दुरासम् । आसितुमशक्यमित्यर्थः । आसेरकर्मकात् 'ईषद्दुःसु' इत्यादिना भावे खल्

(१) मृदु ।

प्रत्ययः; 'तयोरेव कृत्यक्तखलर्थाः' इति नियमात् । अत्र भयहेतुकस्य पलायनस्य कबरीदर्शनहेतुकत्व-मुत्प्रेक्ष्य तत्समर्थनासमर्थोऽयमर्थान्तरन्यासः कृत इत्यस्याऽनयाऽङ्गेन सङ्करः । न हि जितैर्जेतुरग्रे स्था-तुमुचितामिति भावः ॥ १९ ॥

**रोचिष्णुकाञ्चनचयांशुपिशङ्गिताशा वंशध्वजैर्जलदसंहतिमुल्लिखन्त्यः ॥**
**भूभर्तुरायतनिरन्तरसन्निविष्टाः पादा इवाभिबभुरावलयो रथानाम् ॥ २० ॥**

**रोचिष्णुकाञ्चनेति** ॥ रथानामावलयः स्यन्दनपङ्क्तयः अभिबभुः शुशुभिरे । किंभूताः आवलयः रोचिष्णुकाञ्चनचयांशुपिशङ्गिताशाः रोचिष्णुः शोभमानो यः काञ्चनचयः सुवर्णराशिः तस्यांशवः किरणाः तैः पिशङ्गिताः पिशङ्गीकृताः आशा दिशो याभिस्ताः । ज्वलत्सुवर्णराशिकिरणपिञ्जरीकृतदिक्काः । किं कुर्वत्यः जलदसंहतिमुल्लिखन्त्यः मेघसमूहं स्पृशन्त्यः, कैः वंशध्वजैः वंशेषु ये ध्वजाः चिह्नानि तैः, पुनः किंभूता रथावलयः आयत-निरन्तरसन्निविष्टाः आयतं दीर्घं निरन्तरं निर्विवरं सन्निविष्टाः स्थिताः । उत्प्रेक्ष्यन्ते— भूभर्तुः पर्वतस्य रैवतकस्य पादा इव प्रत्यन्तपर्वता इव । तेऽपि एवंविधाः । तेऽपि देदीप्य-मानकनकावदीपितदिशः वंशैरिव ध्वजैरम्बरलिहः आयता निरन्तराश्च । पिशङ्गं करोति पिशङ्गयति 'तत्करोति तदाचष्टे' इति णिच्, ततः कर्मणि निष्ठा ॥ २० ॥

रोचिष्णुकाञ्चनेति ॥ रोचिष्णवो रोचनशीलाः । 'अलंकृञ्' इत्यादिना इष्णुच्प्रत्ययः । तेषां काञ्चन-चयानां कनकचयानामंशुभिः पिशङ्गिताः पिशङ्गीकृता आशा याभिस्ताः वंशानां तत्तद्राजकुलानां ध्वजैः प्रतिनियतकुलानामङ्कुशादिचिह्नितकेतुभिः, अन्यत्र वंशा वेणवस्तैरेव ध्वजैर्जलदसंहतिं मेघसङ्घातमुल्लिख-न्त्यः आयतं दीर्घं निरन्तरं नीरन्ध्रं च सन्निविष्टाः संस्थिता रथानामावलयो भूभर्तुं रैवतकाद्रेः पादाः प्रत्य-न्तपर्वता इवाभिबभुः भान्ति स्म । आशापिशङ्गीकरणादिक्रियानिमित्ता जातिस्वरूपोत्प्रेक्षा ॥ २० ॥

**छायाविधायिभिरनुज्झितभूतिशोभैरुच्छ्रायिभिर्बहलपाटलधातुरागैः ॥**
**दूष्यैरिव क्षितिभृतां द्विरदैरुदारतारावलीविरचनैर्व्यरुचन्निवासाः ॥ २१ ॥**

**छायेति** ॥ क्षितिभृतां भूमिपालानां राज्ञां निवासस्थानानि व्यरुचन् शुशुभिरे । कैः द्विरदैः मातङ्गैः, किंभूतैः द्विरदैः छायाविधायिभिः, छायां शोभां विदधतीत्येवंशीलाः तैः शोभाकारिभिः ।

छाया कान्तौ प्रतिमायामर्कयोषित्यनातपे ।
उत्कोचे पालने पङ्क्तौ शोभायां च तमस्यपि ॥

अपरं किंलक्षणैर्गजैः अनुज्झितभूतिशोभैः न उज्झिता न त्यक्ता भूत्या भस्मना शोभा कान्तिर्यैस्ते तैः अत्यक्तभस्मकान्तिभिः खटिकामण्डनयुक्तैः, पुनः किंभूतैः उच्छ्रायो विद्यते येषां ते उच्छ्रायिणः तैः उच्चतरैः, पुनः किंभूतैः बहलपाटलधातुरागैः बहला अवि-रलाः पाटला ईषद्रक्ताः धातुरागाः सिन्दूरगैरिकादयो येषु ते तैः, पुनः किंभूतैः उदारतारा-वलीविरचनैः उत्तमनक्षत्रमालालङ्कारयुक्तैः, अतश्च दूष्यैरिव । पटमण्डपतुल्यैरित्यर्थः । तैरपि कथंभूतैः छायाविधायिभिः आतपाभावकरैः, पुनः किंभूतैः अनुज्झितभूतिशोभैः अत्यक्त-समृद्धिदीप्तिभिः, पुनः किंभूतैः उच्छ्रायिभिः विशालैः, पुनः किंभूतैः दूष्यैः बहलपाटल-धातुरागैः सान्द्रलाक्षादिरागयुक्तैः, पुनः किंभूतैः, उदारतारावलीविरचनैः । करिणां तारा-वलीव आभरणं, दूष्याणां तु मुक्तावली । पाटलधातवो गैरिकादयः । रज्यते अनेनेति रागः रञ्जनं वा रागः, घञि च भावकरणयोः । व्यरुचन्निति भूतसामान्यविवक्षायां लुङ्,

'शुद्भ्यो लुङि' इति परस्मैपदम् । 'भूतिर्भस्मनि सम्पदि' । उच्छ्रायो विशालता । 'श्वेतरक्तस्तु पाटलः', 'दूष्यास्तु पटमण्डपाः' सर्वत्राप्यमरः ॥ २१ ॥

छायेति ॥ क्षितिभृतां राज्ञां, निवसन्त्यत्रेति निवासाः निवासदेशाश्छायाविधायिभिः कान्तिकरैरनातपसम्पादकैश्च । 'छाया त्वनातपे कान्तौ' इति विश्वः । अनुज्झिता भूतीनां भस्मरचनानां सम्पदा च शोभा यस्तैः । 'भूतिर्भस्मनि सम्पदि' इत्यमरः । उच्छ्रायिभिरुन्नमद्भिर्बहलः सान्द्रः पाटल आरक्तो धातुरागो गैरिकादिरञ्जनं येषां तैः उदारा तारावलीनां शुद्धमुक्तावलीनां विरचना येषु तैः । मुक्तासारभूषितैरित्यर्थः । 'तारा मुक्तादिसंशुद्धौ तरले शुद्धमौक्तिके' इति विश्वः । दूष्यपक्षे तारावली रज्जुसन्ततीरिति केचित् । द्विरदैर्दूष्यैः पटमण्डपैरिव । 'दूष्यं वस्त्रे च तद्गृहे' इति विश्वः । व्यरुचन् रोचन्ते स्म । रुच दीप्तौ, 'द्युभ्यो लुङि' इति परस्मैपदे 'पुषादि—' इत्यादिना च्लेरङादेशः । अत्र द्विरदानां दूष्याणां च प्रकृतत्वान्नोपमा, नापि श्लेषभेदः । विशेष्यस्य विशेषणानां च केषाञ्चिदश्लिष्टत्वात् । तस्मात्केवलप्रकृतास्पदा तुल्ययोगितेयम् । इवशब्दस्तु सादृश्यमात्रानुवादक इति संक्षेपः ॥ २१ ॥

**उत्क्षिप्तकाण्डपटकाऽन्तरलीयमानमन्दानिलप्रशमितश्रमघर्मतोयैः ॥**
**दूर्वाप्रवाल(१)सहजास्तरणेषु भेजे निद्रासुखं वसनसद्मसु राजदारैः ॥२२॥**

उत्क्षिप्तेति ॥ राजदारैर्नृपतिपत्नीभिः वसनसद्मसु पटमण्डपेषु निद्रासुखं भेजे निद्रया जनितं सुखमसेव्यत । सुखं यथा भवति तथा निद्रा भेजे इति वा, निद्रासुखं शयनसुखं वा । 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपी'त्यमरः। किंभूतैः राजदारैः उत्क्षिप्तकाण्डपटकाऽन्तरलीयमानमन्दानिलप्रशमितश्रमघर्मतोयैः उत्क्षिप्तमुत्पाटितं यत् काण्डपटकं पटकुटीपर्यन्तः लोमाख्यः तस्य यत् अन्तरं विवरं तत्र लीयमानः प्रविशन् यः मन्दानिलः मृदुवायुः तेन प्रशमितं नाशितं श्रमघर्मतोयं खेदस्वेदवारि येषां ते तैः, किंभूतेषु सद्मसु दूर्वाप्रवालसहजास्तरणेषु दूर्वाप्रवाला एव गोलोमीप्रताना एव सहजानि स्वाभाविकानि आस्तरणानि प्रच्छादनानि येषु तानि तेषु शाद्वलाङ्कुरप्रासङ्गिकशय्येषु । लीयमानेति लीङः कर्तरि लकारः ॥ २२ ॥

उत्क्षिप्तेति ॥ उत्क्षिप्त उद्धृतो यः काण्डपट एव काण्डपटकः दूष्याधोलम्बिवायुमञ्चारार्थः पटः । 'अपटः काण्डपटी स्यात्' इति वैजयन्ती । तस्यान्तरेऽवकाशे लीयमानेन मन्दानिलेन प्रशमितं श्रमेणाध्वखेदेन यद्घर्मतोयं स्वेदाम्बु तद्येषां तैः राजदारैः राजावरोधैः, दूर्वाणां प्रतानः प्रचय एव सहजमकृत्रिममास्तरणं तल्पं येषु तेषु वसनसद्मसु पटमण्डपेषु निद्रासुखं भेजे ॥ २२ ॥

**प्रस्वेदवारिसविशेषविषक्तमङ्गे कूर्पासकं क्षतनखक्षतमुत्क्षिपन्ती ॥**
**आविर्भवद्घनपयोधरबाहुमूला शातोदरी युवदृशां क्षणमुत्सवोऽभूत् ॥२३॥**

प्रस्वेदेति ॥ काचित् शातोदरी कृशमध्या नायिका युवदृशां तरुणनेत्राणां क्षणं मुहूर्तमुत्सवोऽभूत् आह्लादना जाता । यूनां दृशः युवदृशः तासाम् । तां दृष्ट्वा तरुणनयनानि महानन्दं प्रापानीत्यर्थः । यतः किंभूता शातोदरी आविर्भवद्घनपयोधरबाहुमूला आविर्भवत् दृश्यमानं घनपयोधरं पीनस्तनं बाहुमूलं च यस्याः सा, किं कुर्वती शातोदरी कूर्पासकं कञ्चुकमुत्क्षिपन्ती उत्तारयन्ती सती, किमिति उत्क्षिपन्ती किंभूतं कूर्पासकम् अङ्गे शरीरे प्रस्वेदवारिसविशेषविषक्तं प्रस्वेदवारिणा घर्मोदकेन सविशेषमत्यर्थं विषक्तं लग्नं, पुनः किंभूतं कूर्पासकं क्षतनखक्षतं क्षतं विदारितं नखक्षतं नखव्रणं येन सः तम् । इयतः

(१) प्रतान ।

क्ते शातमिति रूपम् । शातं कृशमुदरं यस्याः सा लग्नावलग्ना । 'नासिकोदरौष्ठे'ति ङीष् ॥ २३ ॥

प्रस्वेदेति ॥ अङ्गे गात्रे प्रस्वेदवारिणा सविशेषं सातिशयं यथा तथा विषक्तमतिश्लिष्टं कूर्पासकं चोलकम् । कञ्चुकमित्यर्थः । 'चोलः कूर्पासकोऽस्त्रियाम्' इत्यमरः । क्षतानि पुनर्विदीर्णानि नखक्षतानि यस्मिन्कर्मणि तद्यथा तथा उत्क्षिपन्ती उन्मोचयन्ती, अत एवाविर्भवत्प्रकाशमानं घनपयोधरबाहुमूलं घनौ पयोधरौ बाहुमूले च यस्याः सा शातोदरी । 'नासिकोदर—' इत्यादिना ङीष् । युवदृशां क्षणमुत्सवोऽभूत् । एतेन यूनां त्वराचिन्तादिकरमिष्टवस्त्ववलोकननिमित्तं कालाक्षमत्वलक्षणमौत्सुक्यं व्यज्यते । नायिकाभिसारिणी प्रगल्भा वा ॥ २३ ॥

**यावत्स एव समयः सममेव तावदव्याकुलाः पटमयान्यभितो वितत्य ॥**
**पर्यापतत्क्रयिकलोकमगण्यपण्यपूर्णापणं (१)विपणिनो विपणिं विभेजुः २४**

यावदिति ॥ यावत् स एव समयः स्कन्धावारसन्निवेशकालः राजधान्याः स्वावासानां प्रस्तावो बभूव तावदेव विपणिनो'वणिजः सममेव तुल्यकालमेव विपणिं हट्टश्रेणिं वेगेन विभेजुः हट्टानि विभागेन चक्रुः पण्यविक्रयशालाः प्रसारयामासुः । किं कृत्वा अभितः पक्षद्वये पटमयानि हट्टानि विक्रयस्थानानि वितत्य विस्तार्य, किंभूतं विपणिम् अगण्यानि अगणनीयानि असंख्यानि यानि पण्यानि विक्रेयवस्तूनि तैः पूर्णानि भरितानि आपणानि हट्टानि यस्मिन् सः तं घनविक्रेयद्रव्यसम्भृतहट्टम् अपरिमितद्रव्यहट्टं, कथं यथा भवति तथा भेजुः पर्यापतत्क्रयिकलोकं यथा स्यात्तथा पर्यापतन्तो व्यञ्जनशालादिजिघृक्षया आगच्छन्तः क्रयिकलोका ग्राहका यत्र जनाः तत्तथा । यावत्तावच्छब्दौ निपातितौ । किंभूता वणिजः अव्याकुला अव्यग्राः । बहून् पटान् प्राचुर्येण प्रकृतानिति विग्रहं कृत्वा 'तत्प्रकृतवचने मयट्' 'समूहवच्च बहु'ष्विति चकारान्मयट् । स्वार्थिकाश्च प्रकृतितो लिङ्गान्यतिवर्तन्ते । एतच्च 'णचः स्त्रियामञ्' इति स्त्रीग्रहणेन ज्ञापितम्, इति नपुंसकत्वम् । क्रीणातीति क्रयिकः 'क्रिय इकन्' इति इकन् । पणितव्यं पण्यं विक्रेयम् । आपणायन्तेऽस्मिन्निति आपणो विक्रयस्थानम् , 'गोचरसञ्चरे'ति घः । विशेषेण पणन्ते व्यवहरन्तीति विपणिनो वणिग्जनाः । जिघृक्षतीति (?) चकारस्यानुक्तसमुच्चयार्थत्वात् विपणन्तेऽत्रेति विपणिः वणिक्पथः, इन् बाहुल्येन । विपणिशब्दमस्त्रियामपि स्मरन्ति ॥ २४ ॥

यावदिति ।। विपणो व्यवहारः स एषामस्तीति विपणिनो वणिजो यावत्स एव समयः सेनानिवेशलक्षण एव, तावत्क्षण एव समं युगपत् अव्याकुला अव्यग्राः सन्तः पटमयानि पटविकाराणि । पटमण्डपानित्यर्थः । अभितो वितत्य उभयतः श्रेण्या वितत्य विस्तार्य । क्रयेण जीवतीति क्रायिकः । 'वस्नक्रयविक्रयात्—' इति ठन् । पर्यापतन्परितो धावन् क्रायिकलोकः क्रेतृजनो यस्मिन्कर्मणि तत् अगण्यैरसंख्येयैः पण्यैः पण्यद्रव्यैः पूर्णा आपणाः पण्यप्रसारणस्थानानि यासु ता विपणीः पण्यवीथीः । 'आपणस्तु निषद्यायां विपणिः पण्यवीथिका' इत्यमरः । विभेजुः । असंकीर्णं निर्मिमुरित्यर्थः । स्वभावोक्त्यनुप्रासौ ॥ २४ ॥

**अल्पप्रयोजनकृतोरुतरप्रयासैरुद्गूर्णलोष्टलगुडैः परितोऽनुविद्धम् ॥**
**उद्यातमुद्द्रुतमनोकहजालमध्यादन्यः शशं गुणमनल्पमवन्नवाप ॥ २५ ॥**

अल्पेति ॥ अन्यः कश्चित्सैनिकः शशं मृगम् अवन् रक्षन् सन् अनल्पं गरिष्ठं गुणं धर्मं वा अवाप लेभे । किंभूतं शशम् द्रुतं भीतम् । भीतत्राणेनावश्यमेव महान् गुणो

---

( १ ) पूर्णापणा···विपणीर्विभेजुः ।

धर्मो भवतीति । भये कारणमाह—पुनः किंलक्षणं परितः समन्तात् सुभटैः अनुविद्धं परिवेष्टितं व्याप्तं, किंभूतैः सुभटैः उद्गूर्णलोष्टलगुडैः उद्गूर्णा उत्क्षिप्ता उन्नामिताः लोष्टाः लेष्टवः पाषाणा लगुडा दण्डा यैस्ते तैः, किंभूतं शशम् अनोकहजालमध्यात् वृक्षसमूहान्तरतः उद्यातं निःसृतम्, अपरं किंभूतैः सुभटैः अल्पप्रयोजनकृतोरुतरप्रयासैः अल्पप्रयोजनेन अल्पकार्येण शशवधमात्रेण निमित्तेन कृतो विहितः उरुतरः गरीयान् प्रयासः उद्यमो यैस्ते तैः । केचित् इति व्याचक्षते—कश्चित् शशम् अवन् मारयन् सन्, अवतेर्हिंसार्थत्वात्, अनल्पं गुणं चातुर्यमनिष्टपरिहारलक्षणं लेभे । कटकमध्ये हि शशको व्रजन् सर्वथा वध्य इति लोकाचारः । उद्गूर्ण इति 'गूरी उद्यमने' इत्यस्य रूपम् । 'लोष्टानि लेष्टवः पुंसि', 'अनोकहः कुटः सालः पलाशी दुद्रुमागमाः', 'जालं समूह आनायगवाक्षक्षारकेष्वपि' इत्यमरः । 'शशस्तु शशके मृगे' इति वैजयन्ती । अनोकहशब्दः पृषोदरादिः ॥२५॥

अल्पेति ॥ अल्पप्रयोजनेनाल्पफलेन निमित्तेन कृत उरुतरो भूयान्प्रयासो यैस्तैः । अल्पस्यैकस्य शशपिण्डस्य भूयसामकिञ्चित्करत्वादिति भावः । उद्गूर्णा उद्यताः लोष्टानि मृत्खण्डा लगुडाश्च दण्डकाष्ठानि यैस्तैः, पुंभिरिति शेषः । परितोऽनुविद्धमनुरुद्धम् । अनसः शकटस्याकं गतिं घ्नन्तीत्यनोकहा वृक्षास्तेषां जालमध्यादुद्यातमुत्थितम् । उत्पूर्वाद्यातेः कर्तरि क्तः । उद्द्रुतं पलायितं शशं मृगविशेषम् अन्यः परः अवन् हन्तॄन्निवार्य रक्षन्ननल्पं गुणं महान्तमुत्कर्षमवाप । दयालोरनामिषलोलुपस्य सुकीर्तिः सुलभेति भावः । अत्रार्थान्तरं चाहुः—अन्यो गुणं पाशमवन् प्रयुञ्जानः शशमवाप जग्राह । यो हन्ता तस्यैव मृग इति व्याधसमयादिति भावः ॥ २५ ॥

**त्रासाकुलः परिपतन्परितो निकेतान्पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि ॥**
**तस्थौ तथापि न मृगः क्वचिदङ्गनानामाकर्णपूर्णनयनेषुहतेक्षणश्रीः ॥२६॥**

त्रासेति ॥ मृगो हरिणः कैश्चिदपि धन्विभिर्धनुर्धरैः पुंभिः पुरुषैः न अन्वबन्धि न हन्तुं प्रारेभे, परं तथापि एवं सत्यपि क्वचिदपि न तस्थौ कुत्रापि धृतिं न बबन्ध । यतः किंभूतः मृगः अङ्गनाभिः स्त्रीभिः आकर्णपूर्णनयनेषुहतेक्षणश्रीः श्रवणपर्यन्तप्रसृतविलोचनशरैः परिभूतनयनलक्ष्मीक इत्युत्प्रेक्षा । कर्णयोः आ आकर्णं पूर्णे प्रसृते विशाले ये नयने ते एव इषवः बाणाः तैर्हता निरस्ता ईक्षणयोर्नेत्रयोः श्रीः शोभा यस्य सः तथा इत्युत्प्रेक्षा । एतदुक्तं भवति—यद्यपि धन्विभिरसौ नोन्नद्धः तथापि सारङ्गाक्षीभिर्नेत्रशरैर्हतनेत्ररामणीयकत्वात् पलायाञ्चक्रे । किंभूतो मृगः त्रासाकुलः भयविह्वलः, अत एव किंभूतो मृगः परितः सर्वासु दिक्षु निकेतान् आवासान् परिपतन् सञ्चरन् परिभ्रमन् । निकेतानित्यत्र परितःशब्दयोगे द्वितीया । धन्वन्शब्दश्चापपर्यायः, तदस्येति धन्वी इति रूपम् । अन्वबन्धीति कर्मणि लुङ् । आकर्णपूर्णनयनेति समासः । नयनान्येवेषवः शराः ॥ २६ ॥

त्रासेति ॥ त्रासाकुलो जनदर्शनाद्भयविह्वलोऽत एव निकेतान्निवेशान्परितः सर्वतः । 'अभितः परितः—' इत्यादिना द्वितीया । परिपतन्धावन्मृगो हरिणः कैश्चिदपि धन्विभिर्धनुष्मद्भिः । 'धन्वी धनुष्मान्धानुष्कः' इत्यमरः । व्रीह्यादित्वादिनिरिति स्वामी । पुंभिर्नान्वबन्धि नानुयातः । बध्नातेः कर्मणि लुङ् । तथाप्यङ्गनानामाकर्णपूर्णा विस्तीर्णा आकृष्टाश्च ये नयनान्येवेषवस्तैर्हता ईक्षणश्रीर्यस्य सः । अतः क्वचिदपि न तस्थौ किन्तु वीरविशिखपाताभावेऽप्यङ्गनापाङ्गविशिखपातात्पलायित एवेति भावः । अत्र जनालोकनोत्थभयहेतुकस्य मृगानवस्थानस्याङ्गनापाङ्गेषु हतिहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा । सा च व्यञ्जकाप्रयोगात्प्रतीयमाना हेतोश्च हतेक्षणश्रीरिति विशेषणगत्योक्तत्वात्काव्यलिङ्गमिति सङ्करः ॥ २६ ॥

**आस्तीर्णतल्परचितावसथः क्षणेन वेश्याजनः कृतनवप्रतिकर्मकाम्यः ॥**
**खिन्नानखिन्नमतिरापततो मनुष्यान्प्रत्यग्रहीच्चिरनिविष्ट इवोपचारैः ॥२७॥**

**आस्तीर्णेति** ॥ वेश्याजनः गणिकालोकः खिन्नान् श्रान्तान् आपततः आगच्छतः मनुष्यान् पुरुषान् सेनाचरान् उपचारैः अङ्गप्रक्षालनताम्बूलदानादिभिः आदरैः प्रत्यग्रहीत् आवर्जयामास प्रत्यैच्छत् । किंभूतो वेश्याजनः आस्तीर्णतल्परचितावसथः आस्तीर्णानि परिस्तीर्णानि तल्पानि शय्या येषु तानि आस्तीर्णतल्पानि शय्यायुक्तानि रचितानि निर्मितानि आवसथानि सद्मानि येन सः, किंभूतो वेश्याजनः कृतनवप्रतिकर्मकाम्यः कृतानि च तानि नवानि प्रतिकर्माणि अलङ्करणानि तैः काम्यो मनोहरः कृतनवप्रतिकर्मकाम्यः विहितनवीनाभरणमनोहरः, पुनः किंभूतो वेश्याजनः अखिन्नमतिः अश्रान्तमनस्कः साभिलाषः। कामित्वाद्देहः श्रान्तो न मतिरित्यर्थः । किंभूतान् मनुष्यान् खिन्नान् परिश्रान्तान् , अपरं किंलक्षणान् आपततः आपतन्ति आपतन्तः तान् आगच्छतः, किंभूतः वेश्याजनः, अतश्चोत्प्रेक्षते—चिरनिविष्टइव प्रथमतरं कृतावस्थान इव । यो हि तद्वासी तस्यैवैतच्चातुर्यं भवतीति लोके प्रसिद्धम् । वेशे कर्मणि पुरा भवा वेश्या, दिगादिभ्यो यत्, स चासौ जनश्च वेश्याजनः । प्रतिकर्म प्रसाधनम् उत्कर्षाधानम् । 'तल्पं शय्याऽट्टदारेषु', 'ओकश्चावसथं धिष्ण्यम्' इत्यमरः॥२७॥

**आस्तीर्णेति** ॥ क्षणेनास्तीर्णतल्पं वेश्यावृन्दः शय्याप्रधानत्वात्प्रागेव सज्जितशय्यं यथा तथा रचितावसथः कल्पितनिकेतः । 'स्थानावसथवास्तु च' इति कोषः । कृतेन नवप्रतिकर्मणा नूतनेन प्रसाधनेन काम्यः स्पृहणीयोऽखिन्नमतिरभ्रान्तचित्तः । अगणिताध्वखेद इत्यर्थः । वेश्याजनः खिन्नानध्वश्रान्तानापततआगच्छतो मनुष्यान्पुरुषान् चिरनिविष्ट इव तत्रैव नित्यवास्तव्य इवेत्युत्प्रेक्षा । उपचारैः शीताम्बुताम्बूलदानादिसत्कारैः प्रत्यग्रहीत् । वशीचकारेत्यर्थः ॥ २७ ॥

**सस्नुः पयः पपुरनेनिजुरम्बराणि जक्षुर्बिसं धृतविकासिबिसप्रसूनाः ॥**
**सैन्याः श्रियामनुपभोगनिरर्थकत्वदोषप्रवादममृजन्नगनिम्नगानाम् ॥२८॥**

**सस्नुरिति** ॥ सैन्याः सेनाचरा नगनिम्नगानां पर्वततरङ्गिणीनां याः श्रियो जलसम्पदस्तासाम् अनुपभोगनिरर्थकत्वदोषप्रवादममृजन् अक्षालयन् निरुपभोगः निष्प्रयोजनता स एव दोषः अपगुणस्तेन यः प्रवादः गर्हा तम् अमृजन् स्फेटयामासुः । आरण्या हि नद्यो न कस्मैचिदुपयुज्यन्ते इति तासां निरर्थकत्वं निरास्थन्नित्यर्थः । तथा हि दृष्टान्तस्तावत्—सैन्याः यतः सस्नुः उदमज्जन् स्नानं चक्रुः, अपरं सैन्याः पयः पपुः जलं पिबन्ति स्म, अपरम् अम्बराणि वासांसि अनेनिजुः अक्षालयन् , तथा बिसं जक्षुः मृणालम् आदुः । किंलक्षणाः सैन्याः धृतविकासिबिसप्रसूनाः करधृतप्रफुल्लपद्माः, धृतानि कलितानि विकासीनि प्रफुल्लानि बिसप्रसूनानि पद्मानि यैस्ते तथा । मृणालं बिसम् । 'बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च' । 'प्रवादो जनवादे स्यात्', 'स्रवन्ती निम्नगापगा' सर्वत्राप्यमरः । एवं च सर्वोपभोगयोगात् कथमेतासां निरर्थकत्वमिति । निम्नं गच्छन्ति निम्नगाः, अन्येभ्योपि दृश्यते डः । (१)अमृजन्निति लङ् , झोऽन्तः, मृजेरजादौ क्ङिति विभाषा वृद्धिः । अनेनिजुरिति लङ्, 'णिजां त्रयाणां गुणः श्लौ'

---

( १ ) लङ् शेतः मृजेरदादि संक्रमते । विभाषा मृगुणङश्लोक इति गुण सिचभ्यविदिभ्यहिवजभ्यः स्वादिभ्यश्चेति डेर्जस् ।—इति मूलपुस्तके ।

इति गुणः, 'सिजभ्यस्तविदिभ्यश्चे'ति झेर्जुस् । जक्षुरिति अदेर्लिट् 'लिट्यन्यतरस्या'मिति घसादेशः, 'गमहने'त्यकारलोपः ॥ २८ ॥

सस्नुरिति ॥ सेनायां समवेताः सैन्याः सैनिकजनाः । 'सेनायां च' इति ण्यप्रत्ययः । नगनिम्नगानां याः श्रियः समृद्धयस्तासामनुपभोग उपभोगाभावः । क्वचित्प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते, यथाऽदर्शनमश्रवणमनुच्चारणमनुपलब्धिरभाव इत्यादि । तेन यन्निरर्थकत्वं निष्फलत्वं तदेव दोषस्तेन यः प्रवादो निन्दा तममृजन्नमार्जन् । मृजू शुद्धौ, अदादित्वाल्लङि शपो लुक् । मृजेरजादौ क्ङिति विभाषा वृद्धिर्वक्तव्येति विकल्पाद् वृद्ध्यभावः । मार्जनप्रकारमाह—सस्नुः स्नानं चक्रुः । पयः पानीयं पपुः । ष्णा शौचे पा पाने, लिट् । अम्बराण्यनेनिजुरक्षालयन् । णिजिर् शौचे । जुहोत्यादित्वाल्लङि 'श्लौ' इति द्विर्भावः । 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशः । 'णिजां त्रयाणां गुणः श्लौ' इत्यभ्यासस्य गुणः । धृतानि विकासिबिसप्रसूनानि विकासितपुष्कराणि यैस्ते । 'बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च' इत्यमरः । बिसं मृणालं जक्षुर्भक्षयाञ्चक्रुः । घसेर्लिटि 'गमहन—' इत्यादिना उपधालोपे चर्त्वम् । 'शासिवसिघसीनां च' इति षत्वम् । स्नानाद्युपभोगेनोक्तनैरर्थ्यं निराचक्रुरित्यर्थः । अत्र दोषमार्जनस्य स्नानादिना कृतत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । स्नानादिक्रियासमुच्चयस्त्वङ्गमस्येति सङ्करः ॥ २८ ॥

**नाभी(१)ह्रदैः परिगृहीतरयाणि निम्नैः स्त्रीणां बृहज्जघनसेतुनिवारितानि ॥**
**जग्मुर्जलानि जलमड्डुकवाद्यवल्गुवल्गद्घनस्तनतटस्खलितानि मन्दम् ॥ २९ ॥**

नाभीह्रदैरिति ॥ स्नाने प्रवृत्ते सति जलानि पानीयानि मन्दं जग्मुः शनैर्गमनं चक्रुः । शनैर्वहने कारणमाह—किम्भूतानि स्त्रीणां नितम्बिनीनां नाभीह्रदैः नाभिकूपैः प्रतिगृहीतरयाणि प्रतिगृहीतः निवारितः रयो वेगो येषां तानि निषिद्धवेगानि बद्धप्रसराणि । नाभ्य एव ह्रदा नदाः तैः । अपरं किंभूतानि जलानि बृहज्जघनसेतुनिवारितानि बृहन्ति विशालानि यानि जघनानि कट्याः पुरोभागाः तान्येव सेतवः निबन्धनतटाः तैर्निवारितानि निषिद्धप्रसराणि विस्तीर्णश्रोणीतटैर्निवारितानि प्रतीपं नीतानि पश्चाद्वाहितानि, अपरं किंलक्षणानि जलानि जलमड्डुकवाद्यवल्गुवल्गद्घनस्तनतटस्खलितानि जलेषु पानीयेषु यत मड्डुकवाद्यं वादनविशेषः करास्फालनं तेन वल्गु मनोहरं यथा भवति तथा वल्गन्तो नृत्यन्तो ये घनाः पीवराः कुचाः स्तनाः तेषां तटाः सेतवः तेषु स्खलितानि प्रतिहतानि, किंलक्षणैर्नाभीह्रदैः निम्नैः गम्भीरैः । अतश्च कारणत्रयवशान्मन्दगमनम् ॥ २९ ॥

नाभीति ॥ स्त्रीणां निम्नैर्गम्भीरैर्नाभिभिरेव ह्रदैः परिगृहीतरयाणि प्रतिषिद्धवेगानि बृहद्भिर्जघनैरेव सेतुभिर्निवारितानि । प्रतिहतगतिकानीत्यर्थः । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः । जलमेव मड्डुकवाद्यं वाद्यविशेषः । जलमेकेन पाणिनोत्थापितमपरेण ताडितं मड्डुकवद् ध्वनतीति प्रसिद्धम् । तेन वल्गु सुन्दरं यथा तथा वल्गद्भिश्चलैर्घनैः स्तनतटैः स्खलितानि स्खलनं गतानि गमितानि वा जलानि पूर्वोक्तनगानिम्नगासलिलानि मन्दं जग्मुः । अत्र जलमन्दगमनस्य विशेषणगत्या रयप्रतिबन्धादिपदार्थहेतुकत्वात्काव्यलिङ्गम् ॥ २९ ॥

अथहस्तिवर्णनम्—

**आलोलपुष्करमुखोल्ललितै(२)रभीक्ष्णमुक्षाम्बभूवुरभितो वपुरम्बुवर्षैः ॥**
**खेदायतश्वसितवेगनिरस्तमुग्धमूर्धन्यरत्ननिकरैरिव हास्तिकानि ॥ ३० ॥**

आलोलेति ॥ हास्तिकानि हस्तिवृन्दानि अम्बुवर्षैस्तोयसेकैः वपुः शरीरमभीक्ष्णं वारंवारम् अभितः पक्षद्वयेन उक्षाम्बभूवुः सिषिचुः । किंभूतैः अम्बुवर्षैः आलोल-

(१) नाभि । (२) ०ल्लसितै० ।

पुष्करमुखोल्लसितैः आलोलं चञ्चलं यत् पुष्करं शुण्डादण्डः तस्य मुखं रन्ध्रं तस्मादुल्लसितानि निःसृतानि तैः निरस्तैः । अतश्चोत्प्रेक्ष्यते—किंलक्षणैः अम्बुवर्षैः खेदायतश्वसितवेगनिरस्तमुग्धमूर्धन्यरत्ननिकरैरिव खेदेन अध्वपीडया आयतं दीर्घं यत् श्वसितं फूत्कारः तस्य वेगेन जवेन निरस्ताः क्षिप्ताः मुग्धा मनोज्ञाः मूर्धन्याः मूर्ध्नि भवाः रत्नानां निकराः मुक्ताफलानां पूगाः तैरिव । 'शरीरावयवाच्चे'ति यत्, 'ये चाभावकर्मणो–'रिति प्रकृतिभावः । हस्तिनां समूहा हास्तिकानि अचित्तहस्तिधेनोष्ठक् । 'पुष्करं करिशुण्डाग्रे वाद्यभाण्डमुखे जले' इत्यमरः । 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इति हलायुधः ॥ ३० ॥

आलोलेति ॥ हास्तिनां समूहा हास्तिकानि । अचित्तहस्तिधेनोष्ठक् । आलोलानि यानि पुष्कराणि हस्ताग्राणि । 'पुष्करं करिहस्ताग्रे' इत्यमरः । तेषां मुखे रन्ध्रैरुल्लसितान्युत्क्षिप्तानि तैरम्बुवर्षैः खेदेनाध्वश्रमेणायतेन द्राघीयसा श्वसितस्योच्छ्वासमारुतस्य वेगेन निरस्ता बहिरुत्क्षिप्ता ये मुग्धाः सुन्दराः मूर्धन्या मूर्धनि भवाः । 'शरीरावयवाच्च' इति यत्प्रत्ययः । 'ये चाभावकर्मणोः' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपाभावः । रत्ननिकरा मुक्ताफलप्रकरास्तैरिवेत्युत्प्रेक्षा । वपुरभीक्ष्णमुक्षाम्बभूवुः सिषिचुः । उक्ष सेचने, 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्ययः ।

> 'गजेन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि ।
> मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि' ॥

इति गजानां मुक्ताकरत्वे प्रमाणम् ॥ ३० ॥

**ये पक्षिणः प्रथममम्बुनिधिं गतास्ते येऽपीन्द्रपाणितुलितायुधलूनपक्षाः ॥**
**ते जग्मुरद्रिपतयः सरसीर्विगाढुमाक्षिप्तकेतुकुथसैन्यगजच्छलेन ॥ ३१ ॥**

य इति ॥ इह पर्वता द्विविधाः, सपक्षा अपक्षाश्च । तत्र कविरूहते–ये पक्षिणः सपक्षा अद्रिपतयः मैनाकप्रभृतयः पर्वतेश्वराः ते प्रथममेव अम्बुनिधिं समुद्रं गताः प्रविष्टाः। इन्द्रभयादित्यर्थः । पुनः ये अद्रिपतयः इन्द्रपाणितुलितायुधलुनपक्षाः तेऽपि सरसीः महासरांसि जग्मुः गतवन्तः, किं कर्तुं विगाढुं ब्रुडितुम् । इन्द्रस्य पाणिः करस्तेन तुलितमास्फालितं धृतं यत् आयुधं प्रहरणं वज्रं तेन लूनाः छिन्नाः पक्षा अङ्गरुहाणि येषां ते शक्रकरास्फालितवज्रभिन्नाङ्गरुहाः। केन ययुरित्याह–आक्षिप्तकेतुकुथसैन्यगजच्छलेन केतवो ध्वजाश्च कुथाः प्रावरणानि च एषां समाहारः केतुकुथम् , आक्षिप्तं व्यपनीतं केतुकुथं येभ्यस्ते आक्षिप्तकेतुकुथाः ते च ते सैन्यगजाः सेनाकुञ्जराश्च तेषां छलं व्याजः तेन व्यपनीतध्वजकम्बलसेनाकुञ्जरछद्मना ब्रुडितुं सरसीस्तडागिका जग्मुरिवेत्युत्प्रेक्षा । महेभानामद्रय उपमानं, पक्षाणां ध्वजकुथा उपमानं, सरसीनां सागर उपमानम् । 'आयुधं तु प्रहरणं शस्त्रमस्त्रम्' । 'पक्षपार्श्वगरुत्साध्यसहायबलभित्तिषु' । 'अद्रयो द्रुमशैलार्काः' । महान्ति सरांसि सरस्यः ताः । 'कुथः स्यात् करिकम्बलः', 'छलम् , व्याजोऽपदेशो लक्ष्यं च' सर्वत्राप्यमरः ॥३१॥

य इति ॥ ये पक्षिणः पक्षवन्तः, इन्द्रेणाच्छिन्नपक्षा इत्यर्थः । संसर्गे इनिप्रत्ययः । तेऽद्रिपतयो मैनाकादयः प्रथममम्बुनिधिं गताः प्रविष्टाः । येऽपि, ये ये इत्यर्थः । इन्द्रस्य पाणिना तुलितेन प्रेरितेनायुधेन वज्रेण लूनपक्षाश्छिन्नगरुतस्तेऽद्रिपतय आक्षिप्ता अपनीताः केतवो ध्वजाः कुथाः पृष्ठास्तरणानि च येषाम् । 'प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः' इत्यमरः । तेषां सैन्यगजानां छलेन सरसीर्विगाढुं, विगाहितुम् । 'स्वरतिसूति—' इति विकल्पादिडागमः । जग्मुः । अत्र गजच्छलेनेति छलशब्देन गजत्वमपह्नुत्याद्रित्वारोपणाच्छलादिशब्दैरसत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः । तेन पक्षवतामद्रीणां सागरावगाहनदर्शनान्मत्सरात्स्वयमपि सलिलमवगाहमानाः साक्षाल्लूनपक्षाः पर्वता इवेत्युत्प्रेक्षा व्यज्यते ॥ ३१ ॥

**आत्मानमेव जलधेः प्रतिबिम्बिताङ्गमूर्मौ महत्यभिमुखापतितं निरीक्ष्य ॥**
**क्रोधादधावदपभीरतितूर्ण(१)मन्यनागाभियुक्त इव युक्तमहो ! महेभः ॥३२॥**

**आत्मानमिति** ॥ अहो ! इत्याश्चर्ये, कश्चिन्महेभः महागजः अपभीर्निर्भयः सन् क्रोधात् कोपात् आत्मानमेव अतितूर्णं शीघ्रमधावत् जिघांसया अभिजगाम । ननु आत्मानं कथं गत इत्याह–किंभूतमात्मानं जलधेस्तडागस्य महति बृहति ऊर्मौ कल्लोले प्रतिबिम्बिताङ्गं प्रतिरोपितशरीरं, प्रतिबिम्बितं प्रतिफलितमङ्गं देहो यस्य सः । किं कृत्वा अधावत् अतितूर्णं वेगेन अभिमुखापतितं संमुखमागच्छन्तं निरीक्ष्य विलोक्य । अभिमुखम् आपतितः अभिमुखापतितः तम् । अतश्चोत्प्रेक्ष्यते–अन्यनागाभियुक्त इव अन्यनागेन प्रतिगजेन अभियुक्तः आकारित इव अन्यनागशङ्कां धारयन्निव । युक्तं चैतत् उचितमिदं, यत्—स प्रतिनागशङ्कया अधावदिति । यतः किंलक्षणः अपभीः निर्भयः । शौर्यान्वित इत्यर्थः । यः किल सपत्नेन हस्तिना गज आहूतो भवति स कोपाद्वेगेन तं प्रति धावति । न चैष केनचिदभियुक्तोऽप्यन्यगजशङ्कया क्षुभितोऽत एव चित्रम् । युक्तं चैतत्, यतोऽयं महेभो मत्तद्विपः अभयः । शौर्यान्वित इत्यर्थः । 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' । 'अङ्गं प्रतीकोऽपघनः', 'सत्वरं चपलं तूर्णमविलम्बितमाशु च' । 'नागाविभसरीसृपौ' सर्वत्राप्यमरः ॥ ३२ ॥

आत्मानमिति ॥ महेभो जलधेर्जलाशयस्य महत्यूर्मौ प्रतिबिम्बितमङ्गं यस्य तमभिमुखापतितमभिमुखमागतमात्मानमेव । आत्मप्रतिबिम्बमेवेत्यर्थः । निरीक्ष्यान्यनागेन प्रतिगजेनाभियुक्तोऽभिद्रुत इवातितूर्णमपभीर्निर्भीकः सन् क्रोधादधावत् । अहो इति मौढ्येन विस्मयः । तच्च युक्तं महेभस्येति भावः । अभियुक्त इवेत्युत्प्रेक्षायाः प्रतिगजभ्रान्तिनिबन्धनत्वाद् भ्रान्तिमदुत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः ॥ ३२ ॥

**नादातुमन्यकरिमुक्तमदाम्बुतिक्तं धूताङ्कुशेन न विहातुमपीच्छताऽम्भः ॥**
**रुद्धे गजेन सरितः सरुषाऽवतारे रिक्तोदपात्रकरमास्त चिरं जनौघः॥३३॥**

**नादातुमिति** ॥ जनौघः जनसमूहः गजेन करिणा सरितो नद्याः अवतरणमार्गे निरुद्धे निषिद्धे सति चिरं चिरकालं यावत् रिक्तोदपात्रकरं यथा भवति तथा आस्त अतिष्ठत् । रिक्तानि शून्यानि जलरहितानि उदपात्राणि घटादीनि जलभाण्डानि येषु ते रिक्तोदपात्राः एवंभूताः करा पाणयो यत्र तथा भवत्येवम् । किंलक्षणेन गजेन सरुषा रुषा क्रोधेन सह वर्तमानः सरुट् तेन सकोपेन, अत एव अपरं किंभूतेन गजेन अम्भः पानीयमादातुं ग्रहीतुं न इच्छता, पुनः किंभूतेन विहातुं परित्यक्तुमपि न इच्छता न अभिलषमाणेन । किंभूतम् अम्भः अन्यकरिमुक्तमदाम्बुतिक्तम् अन्यकरिभिः अन्यगजैः मुक्तं त्यक्तं मदाम्बु दानोदकं तेन तिक्तं कटुकं वनगजस्रुतदानजलकटुकम् । मदगन्धयुक्तमित्यर्थः । अत एव पुनः किंलक्षणेन गजेन धूताङ्कुशेन, धूतोऽवगणितः अङ्कुशः सृणिर्येन सः तथा तेन अवमतसृणिना । यदाऽसौ द्विरदोलिप्सया तत्रैव स्थितः तदा तोयार्थं जनो भाण्डान्यादाय तद्गमनावसरं प्रत्यपालयत इति वाक्यार्थः । उदकस्य पात्रमुदपात्रम् । 'योग्यभाजनयोः पात्र'मित्यमरः ॥ ३३ ॥

नादातुमिति ॥ अन्यकरिणा प्रतिगजेन मुक्तेन मदाम्बुना तिक्तं सुरभि । 'कटुतिक्तकषायास्तु सौर-

(१) 'अभिहन्तु'मिति मुद्रितपुस्तकेषु सर्वत्र पाठो दृश्यते, किन्तु मल्लिनाथव्याख्यायामेतस्या ऽनुपलम्भात्कथमेष पाठः प्रचारमागत इति न विद्मः ।

न्येऽपि प्रकीर्तिताः' इति केशवः । अम्भ आदातुं ग्रहीतुं नेच्छता विहातुं त्यक्तुमपि नेच्छता अनिच्छता । क्रोधपिपासाभ्यामिति भावः । धूताङ्कुशेन सरुषा सक्रोधेन गजेन सरितोऽवतारे तीर्थे रुद्धे सति जनौघः रिक्तान्युदपात्राणि येषु ते करा यस्मिंस्तद्यथा तथा चिरमास्त अतिष्ठत् । आस उपवेशने, लङ् । 'एकहलादौ पूरयितव्येऽन्यतरस्याम्' इत्युदकशब्दस्योदादेशः ॥ ३३ ॥

**पन्थानमाशु विजहीहि पुरः स्तनौ ते पश्यन्प्रतिद्विरदकुम्भविशङ्किचेताः ॥**
**स्तम्बेरमः परिणिनंसुरसावुपैति षिड्गैरगद्यत ससम्भ्रममेवमेका(१) ॥३४॥**

**पन्थानमिति ॥** एका काचिज्जलहारिणी स्त्री ससम्भ्रमं सत्रासं यथा भवति तथा षिड्गैः एवमगद्यत तरुणैः अमुना प्रकारेण उक्ता गदिता । एवं किमित्याह, यत्— हे अम्बाले ! त्वम् आशु शीघ्रं मार्गं पन्थानं विजहीहि त्यज, पुरा पश्चात् असौ स्तम्बेरमः हस्ती ते तव स्तनौ पयोधरौ पश्यन् विलोकयन् परिणिनंसुः प्रहारं दातुकामः सन् उपैति आगमिष्यति । यावत्पुरानिपातयोर्लट् । परिणन्तुमिच्छुः परिणिनंसुः, णमेः सन् । किंभूतो द्विरदः प्रतिगजकुम्भस्थलवितर्किचित्तः, प्रतिद्विरदस्य कुम्भौ विशङ्कते तत् कुम्भविशङ्कि एवंभूतं चेतो यस्य सः । 'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः' । 'इभः स्तम्बेरमो हस्ती' । 'षिड्गस्तु तरुणे विटे', 'कुम्भौ तु पिण्डौ शिरसः' सर्वत्राप्यमरः । सम्भ्रमस्त्वरिते आदरे भये च ॥ ३४ ॥

**पन्थानमिति ॥** पन्थानमाशु विजहीहि । ओहाक् त्यागे । लोटि सेर्ह्यादेशः । 'आ च हौ' इति विकल्पादीकारादेशः । पुरोऽग्रे ते स्तनौ पश्यन्प्रतिद्विरदस्य कुम्भौ विशङ्कत इति तद्विशङ्कि चेतो यस्य सः कुम्भभ्रान्तिमानित्यर्थः । अत एव भ्रान्तिमदलङ्कारः । स्तम्बे तृणे रमत इति स्तम्बेरमः पश्री । 'इभः स्तम्बेरमः' इत्यमरः । 'स्तम्बकर्णयोरमिजपोः' इत्यच् प्रत्ययः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । परिणन्तुं तिर्यक्प्रहर्तुमिच्छुः परिणिनंसुः । नमेः सन्नन्तादुप्रत्ययः । 'एकाच उपदेशेऽनुदात्तात्' इतीट्प्रतिषेधः । असावुपैति । पुरेति पाठे पुरोपैतीत्यन्वयः । उपैष्यतीत्यर्थः । 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट् । षिड्गैर्विटैः । 'षिड्गः पल्लविको विटः' इति कोषः । काचिदेवमुक्तरीत्या ससम्भ्रमं ससत्वरमगद्यत गदिता ॥ ३४ ॥

**कीर्णं शनैरनुकपोलमनेकपानां हस्तैर्विगाढमदतापरुजः शमाय ॥**
**आकर्णमुल्लसितमम्बु विकासिकाशनीकाशमाप समतां सितचामरस्य ॥३५॥**

**कीर्णमिति ॥** अम्बु उदकं सितचामरस्य समतामाप धवलप्रकीर्णकस्य सादृश्यं लेभे । किंभूतम् अम्बु अनेकपानां गजानां हस्तैः शुण्डादण्डैः अनुकपोलं कपोलसमीपे शनैर्मन्दंमन्दं कीर्णं विक्षिप्तं, किमर्थं कीर्णं विगाढमदतापरुजः शमाय उल्बणदानोष्मपीडायाः निराकरणाय, विगाढोऽतिशयितो यो मदः दानं तेन यः तापः तप्तिः तेन रुक् व्यथा तस्याः । अत एव पुनः किंलक्षणमम्बु आकर्णमुल्लसितं कर्णान्तं यावदुत्पतितं, पुनः किंभूतमम्बु विकासिकाशनीकाशं विकासि विकसितं यत् काशं काशपुष्पं तेन तुल्यं नीकाशं प्रफुल्लकाशकुसुमनिभम् । 'मातङ्गोऽनेकपो द्विपः' । 'स्त्री रुग् रुजा चोपतापरोगव्याधिगदाऽऽमयाः' । 'काशः पोटगला कुथः' । 'निभसंकाशनीकाशप्रतीकाशोपमादयः' । 'चामरं तु प्रकीर्णकम्' सर्वत्राप्यमरः ॥ ३९ ॥

**कीर्णमिति ॥** अनेकपानां द्विपानां विगाढः प्ररूढो यो मदेन तापः स एव रुक् रोगस्तस्या रुजः शमाय शनैर्मन्दं हस्तैरनुकपोलं कपोलयोः कीर्णं क्षिप्तम् आकर्णं कर्णपर्यन्तम् । 'आङ्मर्यादाभिविध्योः' इत्य-

(१) ०मेव काचित ।

व्ययीभावः। उल्लासितमुत्पातितं विकासि यत्काश काशकुसुमं तेन सदृशं काशनीकाशम्। नित्यसमासत्वादस्वपदविग्रहः। अत एव—

'स्युरुत्तरपदे त्वमी।
निभसंकाशनीकाशप्रतीकाशोपमादयः' ॥

इत्यमरः। अम्बु पानीयं सितचामरस्य समतां सादृश्यमाप। 'तुल्यार्थैः-' इत्यादिना षष्ठी। उपमालङ्कारः ॥ ३५ ॥

**गण्डूषमुज्झितवता पयसः सरोषं नागेन लब्धपरवारणमारुतेन ॥**
**अम्भोधिरोधसि पृथुप्रतिमानभागरुद्धोरुदन्तमुसलप्रसरं निपेते ॥ ३६ ॥**

**गण्डूषमिति** ॥ केनचिन्नागेन गजेन अम्भोधिरोधसि तडागतटे निपेते निपतितं प्रहारो दत्तः। कथं यथा भवति सरोषं सक्रोधं यथा स्यात्तथा, यतः किंभूतेन लब्धपरवारणमारुतेन अनुभूतान्यगजगन्धेन, लब्धः प्राप्तः परवारणस्य अन्यगजस्य मारुतो गन्धवहो येन सः तथा तेन, अत एव पुनः किंभूतेन पयसः पानीयस्य गण्डूषमुज्झितवता मुखपूरणजलं त्यक्तवता, औज्झत् इति उज्झितवान् तेन। कथं निपेते पृथुप्रतिमानभागरुद्धोरुदन्तमुसलप्रसरं यथा भवत्येवं, पृथुः स्थूलो यः प्रतिमानभागः, दन्तयोरुभयोर्मध्यं प्रतिमानं प्रचक्षते, मध्यप्रदेशो लोहबन्धनस्थानं तेन रुद्धो निषिद्धः उरुणो महतो दन्तमुसलस्य विषाणस्तम्भस्य प्रसरः प्रवृत्तिर्यत्र क्रियायां तथा। 'अयोऽग्रं मुसलं वा ना', 'प्रसरस्तु विसर्पणम्' इत्यमरः ॥ ३६ ॥

**गण्डूषमिति** ॥ लब्धः परवारणस्य प्रतिगजस्य मारुतो मदगन्धवाहो येन तेन अत एव सरोषं यथा तथा पयसः पानीयस्य गण्डूषं मुखपूरणम्। मुखान्तर्गतं पय इत्यर्थः। 'गण्डूषो मुखपूरणः' इति हलायुधः। द्विलिङ्गत्वेऽपि पुंलिङ्गमेवाह **वामनो** 'लिङ्गाध्याहारा'दित्यत्र। उज्झितवता त्यक्तवता नागेन गजेन। 'मतङ्गजो गजो नागः' **इत्यमरः**। अम्भोधिरोधसि सागरतीरे। 'दन्तयोरुभयोर्मध्यं प्रतिमानमिति स्मृतम्'। पृथुना प्रतिमानभागेन रुद्धः प्रतिबद्धः उरू दन्तौ मुसलाविव तयोः प्रसरः प्रसारो यस्मिन्कर्मणि तत्। 'अयोऽग्रं मुसलोऽस्त्री स्यात्' **इत्यमरः**। निपेते निपतितम्। भावे लिट्। क्रोधवेगादलब्धरोधाः प्रहृत्य पारवश्यात्स्वयं चाधोमुखः पपातेत्यर्थः। क्रोधान्धाः किं न कुर्वन्तीति भावः ॥ ३६ ॥

**दानं ददत्यपि जडैः(१) सहसाधिरूढे को विद्यमानगतिरासितुमुत्सहेत ॥**
**यद्दन्तिनः कटकटाहतटान्मिमङ्क्षोर्मङ्क्षूदपाति परितः पटलैरलीनाम् ॥३७॥**

**दानमिति**। अहमेवं मन्ये यत् दानं ददत्यपि ददानेऽपि पुरुषे परं सहसा तत्क्षणमेव जडैर्दुर्जनैरधिरूढेऽधिश्रिते सति विद्यमानगतिः कः सोपायान्तरः पुमान् आसितुमुत्सहेत स्थातुं शक्नुयात। निश्चितमेव खलाक्रान्तत्वात् तं जहातीत्यर्थः। इत्यर्थे दृष्टान्तमाह—दन्तिनो गजस्य मिमङ्क्षोः मङ्क्तुमिच्छतः सतः कटहकटाहतटात् गण्डस्थलात् अलीनां भ्रमराणां पटलैः समूहैः परितः समन्तात् मङ्क्षु शीघ्रमेव उदपाति उड्डीनम्। यदि च एतन्न स्यात्तदा दन्ती सदा दानं ददात्येव, तत्किमितोऽन्यतो याति। यदा त्वेवं, तदाऽसौ जलावृतत्वात् करिणः स्वयं पक्षसाहाय्येन सन्निहितत्वात् उत्पतितः। विद्यमाना सती गतिः स्थानं शरणं यस्य सः विद्यमानगतिः। गण्डः कटः। मङ्क्तुमिच्छति मिमङ्क्षतीति मिमङ्क्षुः तस्य ॥ ३७ ॥

---

(१) जलैः।

**दानमिति** ।। दीयत इति दानं धनं मदश्च । 'दानं गजमदे त्यागे' इति **विश्वः** । तद्ददाति वितरत्यपि । दातर्यपीत्यर्थः । सहसा अकस्मात् । स्वरादित्वादव्ययत्वमिति **शाकटायनः** । जलैर्जडैर्नीरैश्च । 'जलं गोकलले नीरं ह्रीबेरे च जडेऽन्यवत्' इति **विश्वः** । अधिरूढे आक्रान्ते सति विद्यमानगतिः गत्यन्तरवान्समर्थश्च कः पुमानासितुं तत्र स्थातुमुत्सहेत । न कोऽपीत्यर्थः । 'शकधृष—' इत्यादिना तुमुन् । यस्मान्निममङ्क्ष्योर्मङ्क्तुमिच्छोः । मज्जेः सन्नन्तादुप्रत्ययः । दन्तिनः, कटो गण्डः स कटाहः खर्पर इव । 'कटाहः खर्परस्तुपः' इति **वैजयन्ती** । तस्य तटात्प्रदेशादलीनां पटलैः परितो मङ्क्षु द्राक् । 'द्राङ्मङ्क्षु सपदि द्रुतम्' इत्यमरः । उदपाति उत्पतितम् । भावे लुङ् । 'चिण् भावकर्मणोः' इति चिण् । चिणो लुक् । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३७ ॥

**अन्तर्जलौघमवगाढवतः कपोलौ हित्वा क्षणं विततपक्षतिरन्तरिक्षे(१) ॥**
**द्रव्याश्रयेष्वपि गुणेषु रराज नीलो वर्णः पृथग्गत इवाऽलिगणो गजस्य॥३८॥**

**अन्तरिति** ॥ अलिगणो रराज भ्रमरसमूहोऽद्युतत् । किं कृत्वा गजस्य कपोलौ हित्वा करिणः गण्डौ परित्यज्य, किंभूतस्य गजस्य अन्तर्जलौघं जलौघमध्येऽवगाढवतः ब्रुडितस्य । जलौघस्यान्तः अन्तर्जलौघम्, अवजगाहे इति अवगाढवान् तस्यावगाढवतः । किंभूतोऽलिगणः अन्तरिक्षे विततपक्षतिः आकाशे विस्तारितपक्षः, वितते पक्षती यस्य सः । 'स्त्री पक्षतिः पक्षमूलम्' इत्यमरः । अतश्चोत्प्रेक्षते-नीलो वर्णः पृथग्गत इव आकाशे स्थित इव । केषु सत्सु गुणेषु नीलपीतादिषु द्रव्याश्रयेष्वपि आधारविशेषाश्रयेष्वपि । वर्णा हि द्रव्याश्रयाः, ज्ञायते किल नीलो वर्णो निराधारः पृथक् स्थित इव । 'मौर्व्यां द्रव्याश्रये सत्त्वशौर्यसन्ध्यादिके गुणः' इत्यमरः ॥ ३८ ॥

**अन्तरिति** ॥ जलौघे अन्तरित्यन्तर्जलौघम् । विभक्त्यर्थेऽव्ययीभावः । अथवा जलौघं जलपूरमन्तरभ्यन्तरेऽवगाढवतः प्रविष्टवतः । गाहेर्निष्ठाक्तवतुप्रत्ययः । ढत्वष्टुत्वढलोपाः । गजस्य कपोलौ हित्वा क्षणमन्तरीक्षे उपर्याकाशे विततपक्षतिर्विस्तृतपक्षमूलः । आमूलाद्विततपक्ष इत्यर्थः । 'स्त्री पक्षतिः पक्षमूलम्' इत्यमरः । 'पक्षात्तिः' इति तिप्रत्ययः । आलिगणो भ्रमरसङ्घो गुणेषु रूपादिषु द्रव्यमाश्रयो येषां तेषु द्रव्याश्रयेष्वपि अयुतसिद्धत्वात् द्रव्यसमवेतत्वाच्च । द्रव्याधीनसत्ताकेषु सत्स्वपीत्यर्थः । पृथग्गतः जलमज्जनभयात्, स्वाश्रयपरिहारेण स्थितो नीलो वर्णो नीलरूपं गजस्य नीलिमेव रराज । 'गुणे शुक्लादयः पुंसि' इत्यमरः । अत्रालिगणे सादृश्याद्गजनीलत्वाश्रयादन्यत उपलब्धिनिर्वाहाय पृथक्स्थितिविशिष्टत्वमुत्प्रेक्ष्यते॥३८

**संसर्पिभिः पयसि गैरिकरेणुरागैरम्भोजगर्भरजसाऽङ्गनिषङ्गिणा च ॥**
**क्रीडोपभोगमनुभूय सरिन्महेभावन्योन्यवस्त्रपरिवर्तमिव व्यधत्ताम् ॥३९॥**

**संसर्पिभिरिति** ॥ सरिन्महेभौ नदीमहागजौ अन्योन्यवस्त्रपरिवर्तं व्यधत्तामिव परस्परवसनव्यावर्तनं चक्रतुरिव, अन्योन्यस्य वस्त्रयोः परिवर्तो विनिमयः तम् । कैः गैरिकरेणुरागैः, अपरं केन अम्भोजगर्भरजसा च । नदी स्त्री पुरुषो गजः संभोगे मज्जनक्रीडायां वस्त्रयोः परिवर्तनं गैरिकादिजले मिश्रीकृतः कमलरेणुर्गजस्य च न केवलम् (?) । गैरिकस्य गिरिजस्य रेणवः धूलयः तेषां रागाः रक्तत्वादयस्तैः, अम्भोजानां कमलानां गर्भे मध्ये यद्रजः परागः तेन । किंभूतैः गैरिकरेणुरागैः पयसि उदके संसर्पिभिः प्रसरद्भिः, किंलक्षणेन अम्भोजगर्भरजसा अङ्गविषङ्गिणा अङ्गे विषङ्गोऽस्यास्त्यङ्गविषङ्गि तेन शरीरलग्नेन । एतेन वस्त्रव्यत्ययः उक्तः। किं कृत्वा क्रीडोपभोगमनुभूय क्रीडैव खेलैव उपभोगः सुरतं तत्सेवित्वा । यथा कौचित् स्त्रीपुरुषौ सुरतक्रीडामनुभूय पश्चाद्भ्रमेन परस्परवसनपरिवर्तनं कुरुतः ॥३९॥

(१) ०रन्तरीक्षे ।

संसर्पिभिरिति ॥ सरिच्च महेभश्च सरिन्महेभौ पयसि संसर्पिभिः गजात्सरिज्जले विसृत्वरैः गैरिकरेणवो धातव एव रागास्तैः । करणे घञ् । अङ्गनिषङ्गिणा गजाङ्गसङ्गिना अम्भोजगर्भरजसा पद्मान्तःपरागेण च निमित्तेन क्रीडया लीलया उपभोगं संभोगमनुभूयान्योन्यं मिथो वस्त्रयोः परिवर्तं विनिमयं व्यधत्तामकुरुतामिव । दधातेर्लङि परस्मैपदे तसस्तामादेशः । अत्र सरिन्महेभयोः प्रतीयमाननायिकादेरभेदाध्यवसायेन वस्त्रविनिमयोत्प्रेक्षा ॥ ३९ ॥

**यां चन्द्रकैर्मदजलस्य महानदीनां नेत्रश्रियं विकसतो विदधुर्गजेन्द्राः ॥**
**तां प्रत्यवापुरविलम्बितमुत्तरन्तो धौताङ्गलग्ननवनीलपयोजपत्रैः ॥ ४० ॥**

यामिति ॥ गजेन्द्राः महेभाः मदजलस्य दानतोयस्य चन्द्रकैः चन्द्राकारैर्मण्डलैः कृत्वा महानदीनां प्रौढसरितां यां नेत्रश्रियं विलोचनलक्ष्मीं विदधुः चक्रिरे, तां नेत्रश्रियम् उत्तरन्तः तीर्त्वा गच्छन्तः सन्तः अविलम्बितं तत्क्षणमेव प्रत्यवापुः स्वयं पुनर्लेभिरे । नेत्रयोः श्रीः नेत्रश्रीस्ताम् । किंलक्षणस्य मदजलस्य विकसतः प्रसरणशीलस्य, कैः कृत्वा लेभिरे धौताङ्गलग्ननवनीलपयोजपत्रैः धौतं प्रक्षालितं यदङ्गं शरीरं तत्र लग्नानि संसृष्टानि नवानि नीलानि यानि पयोजपत्राणि कमलदलानि तैः आर्द्रीभवद्देहावसक्तनूतनाऽसितोत्पलपत्रैः । 'अविलम्बितमाशु च' ॥ ४० ॥

यामिति ॥ गजेन्द्राः विकसतः समन्तात्पयसि तैलबिन्दुवत्प्रसरतो मदजलस्य चन्द्रकैश्चन्द्राकारैर्मण्डलैर्महानदीनां यां नेत्रश्रियं विदधुः चक्रुस्तां नेत्रश्रियमुत्तरन्तो जलान्निर्गच्छन्तो धौतेषु क्षालितेष्वङ्गेषु लग्नैः सक्तैर्नवनीलपयोजपत्रैर्नवनीलोत्पलदलैरविलम्बितं क्षिप्रमेव प्रत्यवापुः प्रतिभेजिरे । अत्र गजानां नदीनां च समेनेत्रश्रीविनिमयोक्त्या समपरिवृत्तिरलङ्कारः ।

'समन्यूनाधिकानां च यदा विनिमयो भवेत् ।
साकं समाधिकन्यूनैः परिवृत्तिरसौ मता' ॥

इति लक्षणात् ॥ ४० ॥

**प्रत्यन्यदन्ति निशिताङ्कुशदूरभिन्ननिर्याणनिर्यदसृजं चलितं निषादी ॥**
**रोद्धुं महेभमपरिव्रढिमानमागादाक्रान्तितो न वशमेति महान्परस्य ॥४१॥**

प्रत्यन्यदन्तीति ॥ कश्चिन्निषादी हस्तिपकः महेभं महागजं रोद्धुं वशीकर्तुम् अपरिव्रढिमानमसमर्थत्वमागात् प्राप्तः । अशक्तो बभूवेत्यर्थः । किंभूतं महेभं प्रत्यन्यदन्ति चलितम् अन्यगजं प्रति यियासुम् । अन्यं दन्तिनं प्रति प्रत्यन्यदन्ति, अव्ययीभावः । कदाचित्ताडितः स्यादित्याह—पुनः किंभूतं महेभं निशिताङ्कुशदूरभिन्ननिर्याणनिर्यदसृजं निशितः तीक्ष्णः अङ्कुशः सृणिः तेन दूरमत्यर्थं भिन्नं विदारितं यन्निर्याणमपाङ्गप्रदेशस्तस्मान्निर्यत् निःसरत् असृक् रुधिरं यस्य सः तम् । तर्हि कथं न वशीकृत इत्याह—यतः कारणात् महान् उत्तमः आक्रान्तितः आक्रान्तेः आक्रमणात् बलात्कारेण परस्य अन्यस्य वशं न एति आयत्ततां न गच्छति ॥ ४१ ॥

प्रत्यन्यदन्तीति ॥ अन्यदन्तिनं प्रति प्रत्यन्यदन्ति । प्रतिगजाभिमुखमित्यर्थः । 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः । चलितं धावन्तमत एव निशितेनाङ्कुशेन दूरं गाढं यथा तथा भिन्नं यन्निर्याणमपाङ्गदेशः 'अपाङ्गदेशो निर्याणम्' इत्यमरः । तस्मान्निर्यत् निःसरदसृग् यस्य तं महेभं रोद्धुं प्रहीतुं निषादी यन्ता परिवृंहते प्रभवतीति परिवृढः प्रभुः । वृहतेर्वृंहेर्वा कर्तरि क्तप्रत्यये 'प्रभौ परिवृढः' इति नकारहकारयोर्लोपः निष्ठातकारस्य ढत्वं च निपात्यते । अन्यथा ढलोपस्य सर्वत्रासिद्धेरिष्ठन्नादिषु 'र ऋतो हलादेर्लघोः' इति रेफादेशो न स्यात् । तस्मादिमनिचि रेफादेशे परिव्रढिमा, ततो नञ्समासः । तमपरिव्रढिमानमसामर्थ्यमागात्

प्राप । 'इणो गा लुङि' इति गादेशः । तथा हि महाम्बलवान् आक्रान्तितो बलात्कारात्परस्य वशं नैति । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४१ ॥

**सेव्योऽपि सानुनयमाकलनाय यन्त्रा नीतेन वन्यकरिदानकृताधिवासः ॥**
**नाभाजि केवलमभाजि गजेन शाखी नान्यस्य गन्धमपि मानभृतः सहन्ते ४२ ॥**

**सेव्योऽपीति ॥** गजेन करिणा शाखी वृक्षो न अभाजि नाश्रितः, तर्हि किं—केवलम् अभाजि उन्मूलितः । ननु कदाचिदसौ शाखी असेव्यो भविष्यतीत्याह—यतः किंलक्षणः शाखी सेव्योऽपि आश्रयणीयोऽपि पुष्पफलच्छायादियुक्तोऽपि । ननु कदाचिदसौ नागो निषादिना तडितः स्यादित्याशङ्क्याह—किंभूतेन गजेन यन्त्रा आधोरणेन सानुनयं सप्रसादं 'पादमवधारये'त्यादिवाक्ययुक्तं भवत्येवमाकलनाय नीतेन बन्धनाय ढौकितेन । कथं तर्हि भग्नः शाखी वन्यकरिदानकृताधिवासः वने भवा वन्याः ते च ते करिणो गजाश्च तेषां दानं मदोदकं तेन कृतः अधिवासोऽधिवासनं यस्मिन् सः वानेयगजमदविहितभावनः । युक्तं चैतत्, यतः कारणात् मानभृतः साहङ्काराः अन्यस्य परस्य गन्धमपि न सहन्ते, किं पुनः स्वेच्छाविहारादिकम् । स च मदगन्धयुक्तः अत एव शाखी भग्नः । 'भज सेवाया'मित्यस्य च्लौ प्रथममभाजीति रूपम् । 'भञ्जो आमर्दने' इत्यस्यापरमभाजीति रूपम् । 'यन्ता हस्तिपके सूते' इत्यमरः ॥ ४२ ॥

**सेव्योऽपीति ॥** यन्त्रा निषादिना आकलनाय बन्धनाय सानुनयं ससान्त्वं नीतेन समीपं प्रापितेन गजेन वन्यगजदानैः कृतोऽधिवासो वासना यस्य सः । तद्गन्धीत्यर्थः । शाखी वृक्षः । व्रीह्यादित्वादिनिः । सेव्योऽपि सन्नाऽभाजि नाऽसेवि । भज सेवायाम्, कर्मणि लुङि चिणो लुग्वृद्धिश्च । किन्तु केवलमभाजि । अभञ्जीत्यर्थः । भञ्जो आमर्दने । 'भञ्जेश्च चिणि' इति विभाषा नलोपः । शेषं पूर्ववत् । तथा हि मानभृतोऽहङ्कारिणोऽन्यस्य गन्धमपि न सहन्ते । परं किमुतेति भावः । अतो वृक्षभञ्जनं गजस्य युक्तमेवेत्यर्थः । पूर्ववदलङ्कारः ॥ ४२ ॥

**अद्रीन्द्रकुञ्जचरकुञ्जरगण्डकाषसंक्रान्तदानपयसो वनपादपस्य ॥**
**सेनागजेन मथितस्य निजप्रसूनैर्मम्ले यथागतमगामि कुलैरलीनाम् ॥ ४३ ॥**

**अद्रीन्द्रेति ॥** वनपादपस्य काननवृक्षस्य निजप्रसूनैः स्वकुसुमैः मम्ले म्लानं शोषोऽभाजि । वनवृक्षस्य पुष्पाणि शुष्काणीत्यर्थः । अत एव अलीनां कुलैर्भ्रमराणां समूहैः यथागतमगामि । यत एव आगतं तत्रैव प्रतिगतमित्यर्थः । कथंभूतस्य वनपादपस्य सेनागजेन मथितस्य सैन्यकरिणा भग्नस्य, अपरं किंलक्षस्य सेवागजस्य अद्रीन्द्रकुञ्जचरकुञ्जरगण्डकाषसंक्रान्तदानपयसः अद्रीन्द्रकुञ्जचराः रैवतकाचलगहनवासिनो ये कुञ्जराः गजेन्द्राः तेषां योऽसौ गण्डकाषः कपोलकण्डूयनं तेन संक्रान्तं प्रविष्टं दानपयो मदाम्बु यस्य सः तस्य । वनकरिदानेन कृताधिवासत्वाद्भग्नस्येत्यर्थः । 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः ॥ ४३ ॥

**अद्रीन्द्रेति ॥** अद्रीन्द्रस्य रैवतकस्य कुञ्जेषु चरति यस्तस्य कुञ्जचरस्य कुञ्जरस्य गण्डकाषेण कपोलसङ्घर्षणेन संक्रान्तं दानपयो मदाम्बु यस्य तस्य, अत एव सेनागजेन मथितस्य भग्नस्य वनपादपस्य निजैरात्मीयैः प्रसूनैः पुष्पैः । 'निजमात्मीयनित्ययोः' इति वैजयन्ती । मम्ले म्लानम् । म्लायतेर्भावे लिट् । अलीनां कुलैस्तु यथागतमगामि गतम् । आगतक्रमेणैव गतं, न तु म्लानमित्यर्थः । आपद्यात्मीयानात्मीययोर्भेद इति भावः । गमेर्गत्यर्थस्याकर्मकत्वविवक्षणाद्भावे लुङ् । इभवनपादपादीनां विशेषणसाम्यादापन्नायौपम्यप्रतीतेः कथञ्चित्समासोक्तिरुन्नेया ॥ ४३ ॥

**नोच्चैर्यदा तरुतलेषु ममुस्तदानीमाधोरणैरभिहिताः पृथुमूलशाखाः ॥**
**बन्धाय चिच्छिदुरिभास्तरसात्मनैव नैवात्मनीनमथ वा क्रियते मदान्धैः ४४**

**नोच्चैरिति** ॥ इभा हस्तिनो यदा यस्मिन् काले तरुतलेषु वृक्षाधोभागेषु न ममुः न मान्ति स्म, तदानीं तस्मिन् काले पृथुमूलशाखाः महाबुध्नप्रकाण्डान् आत्मनैव स्वयमेव तरसा बलात्कारेण बन्धाय बन्धनहेतवे चिच्छिदुः छिन्दन्ति स्म अत्रोटयन् । पृथूनि महान्ति मूलानि शिफा यासां ताः पृथुमूलाः ताश्च ताः शाखाश्च । यतः कीदृशाः इभाः उच्चैः उन्नताः, अपरं किंलक्षणाः इभाः आधोरणैः हस्तिपकैः अभिहिता उक्ताः बन्धनाय प्रेरिताः । अथ वा नैतदाश्चर्यं, यतः कारणात् मदान्धैः मदपूरितनेत्रैः कैरपि आत्मनीनं स्वहितं नैव क्रियते न विधीयते । एतेन यदि मदेनान्धा न भवेयुः, तर्हि स्वबन्धनाय प्रयत्नं नैव कुर्युः इति भावः । आत्मने हितमात्मनीनम् । 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' । 'मूलं बुध्नोऽङ्घ्रिनामकः', 'मूलमाद्ये शिफाभयोः' इत्यमरः ॥ ४४ ॥

**नोच्चैरिति** ॥ इभा यदा उच्चैरुन्नतेषु तरुतलेषु न ममुर्नाऽवर्तन्त तदानीमाधोरणैर्नियन्तृभिराभिहिता- 'इमाश्छिन्ते'त्युपदिष्टाः पृथुमूलशाखाः बन्धाय स्वबन्धनायैव तरसा बलेनात्मना स्वयमेव चिच्छिदुः । न चैतद्युक्तमिति भावः । यद्वा मूढानां युक्तमेवेत्याह—अथ वेति । अथवा मदान्धैरात्मनीनमात्मने हितं न क्रियत एव । 'आत्मन्विश्वजनभोगोत्तरपदात्खः' इति खप्रत्ययः । 'आत्माध्वानौ खे' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न । पूर्ववदर्थान्तरन्यासः ॥ ४४ ॥

**उष्णोष्णशीकरसृजः प्रबलोष्मणोऽन्तरुत्फुल्लनीलनलिनोदरतुल्यभासः ॥**
**एकान् विशालशिरसो हरिचन्दनेषु नागान्बबन्धुरपरान्मनुजा निरासुः॥४५॥**

**उष्णोष्णेति** ॥ मनुजा मनुष्याः निषादिनः हरिचन्दनेषु वृक्षेषु एकान् द्विरदाख्यान् नागान् बबन्धुः बध्नन्ति स्म, अपरान् नागान् सर्पाख्यान् निरासुः विचिक्षिपुः । अहीन् अपास्य गजान् बबन्धुरित्यर्थः । किंभूतान् नागान् उष्णोष्णशीकरसृजः अतिशयेन उष्णाः उष्णोष्णाः ते च ते शीकराश्च तान् सृजन्ति मुञ्चन्ति ते प्रतप्तजलकणमुचः, उभयेषां विशेषणम् । अपरं किंभूतान् नागान् प्रबलोष्मणः प्रबलः सातिशयः उष्मा निःश्वासो येषां ते तान् अतिनिःश्वासयुक्तान्, क्व अन्तः मध्ये शरीराभ्यन्तरे । पुनः किंलक्षणान् नागान् उत्फुल्लनीलनलिनोदरतुल्यभासः उत्फुल्लं विकस्वरं च तत् नीलनलिनं नीलकमलं च तस्योदरं गर्भः तेन तुल्या सदृशी भा कान्तिर्येषां ते उत्फुल्लनीलनलिनोदरतुल्यभासः तान् विकस्वरनीलोत्पलगर्भसदृशकान्तीन् । उभयान् कृष्णानित्यर्थः । पुनः किंभूतान् विशालशिरसः गुरुतरमस्तकान् । येषामुद्घृष्यमाणानां कुङ्कुमवल्लौहित्यं जायते, ते हरिचन्दनाः । सर्वश्रेष्ठाः इत्यर्थः । 'नागौ द्विरदभोगिनौ' इत्यमरः ॥ ४५ ॥

**उष्णोष्णेति** ॥ मनुजा नरा उष्णोष्णा उष्णप्रकाराः । 'प्रकारे गुणवचनस्य' इति द्विर्वचनम् । कर्मधारयवद्भावात्सुपो लुक् । तान् शीकरान् सृजन्ति मुञ्चन्तीति तथोक्तान् । क्विप् । अन्तः प्रबलोष्मणः प्रवृद्धतापान् । उत्फुल्लं विकचम् । 'उत्फुल्लसंफुल्लयोरुपसंख्यानम्' इत्युपसर्गेऽपि फुल्लेर्निष्ठानत्वम् । तस्य नीलनलिनस्य नीलोत्पलस्योदरेण तुल्यभासः समानकान्तीन् । कृष्णवर्णानित्यर्थः । विशालशिरसो विपुलमस्तकानेकान्कांश्चिन्नागान्, गजानित्यर्थः । हरिचन्दनेषु चन्दनविशेषेषु । 'तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्' इत्यमरः । बबन्धुः । अपरान्नागान्, अहीनित्यर्थः । 'दुष्टाभ्राहिगजा नागाः' इत्युभयत्रापि वैजयन्ती । निरासुः निष्कासयामासुः । अस्यतेर्लिट् । अत्रोभयेषामपि नागानां प्रकृतत्वात्केवलप्रकृतश्लेषः ॥ ४५ ॥

**कण्डूयतः कटभुवं करिणो मदेन स्कन्धं सुगन्धिमनुलीनवता नगस्य ॥
स्थूलेन्द्रनीलशकलावलिकोमलेन कण्ठे गुणत्वमलिनां वलयेन भेजे ॥ ४६ ॥**

**कण्डूयत इति ॥** अलिनां वलयेन भृङ्गाणां समूहेन नगस्य पर्वतवृक्षस्य कण्ठे गुणत्वं भेजे ग्रीवालङ्करणत्वं प्राप्तम् । किंभूतेन भ्रमरवलयेन स्कन्धं प्रकाण्डम् अनुलीनवता आश्लिष्टेन । अनुलिल्ये इत्यनुलीनवान् तेन । किंलक्षणं स्कन्धं सुगन्धि परिमलयुक्तं, केन करिणो मदेन गजस्य दानेन, किं कुर्वतः गजस्य कटभुवं कण्डूयतः कपोलस्थलीं कण्डूयमानस्य कण्डूयामपनयतः, अपरं किंलक्षणेन अलिवलयेन स्थूलेन्द्रनीलशकलावलिकोमलेन स्थूलानि महान्ति यानि इन्द्रनीलशकलानि तेषामावलिः पङ्क्तिः तद्वत्कोमलं मनोहरं तेन महानीलमणिखण्डमालासदृशेन ॥ ४६ ॥

**कण्डूयत इति ॥** कटभुवं गण्डस्थलं कण्डूयतः कषतः । कण्ड्वादिभ्यो यक्, ततः शतृप्रत्ययः । कण्डूयतेर्सिद्धातुभकृतित्वादुभयपदित्वम् । करिणो मदेन सुगन्धि शोभनगन्धम् । गन्धस्येत्वे तदेकान्तग्रहणं नाद्रियन्ते कवयः । नगस्य वृक्षस्य स्कन्धं प्रकाण्डम् अनुलीनवता । तत्र संश्लिष्टेनेत्यर्थः । लीयतेर्'निष्ठे'ति क्तवतुप्रत्ययः । 'ल्वादिभ्यः' इति निष्ठानत्वम् । स्थूलानामिन्द्रनीलशकलानामावलिवत्कोमलेन मनोहरेणालिनां वलयेन कण्ठे गुणत्वं कण्ठवलयत्वम् । 'अमूर्धमस्तकात्स्वाङ्गादकामे' इत्यलुक् । भेजे प्राप्तम् । कर्मणि लिट् । अत्रालिवलये इन्द्रनीलमयकण्ठभूषणत्वारोपाद्रूपकालङ्कारः ॥ ४६ ॥

**निर्धूतवीतमपि चालक(१)मुल्ललन्तं यन्ता क्रमेण परिसान्त्वनतर्जनाभिः ॥
शिक्षावशेन शनकैर्वशमानिनाय शास्त्रं हि निश्चितधियां क्व न सिद्धिमेति ४७**

**निर्धूतेति ॥** यन्ता निषादी चालकं मत्तद्विपं शनकैर्मन्दंमन्दं वशमानिनाय आयत्तत्वमनैषीत् वशीचकार । कदाचित्सोऽङ्कुशात् भीतो भविष्यतीत्याह—किंलक्षणं चालकं निर्धूतवीतमपि अवगणितसृणिमपि, अत एव पुनः किंभूतं चालकम् उल्ललन्तमुल्लसन्तं स्वेच्छाचारिणं, काभिर्वशमानिनाय क्रमेण परिपाट्या परिसान्त्वनतर्जनाभिः परिसान्त्वनं सामवचनम् अपरं तर्जना भर्त्सनाश्च ताभिः । अवसरं बुद्ध्वा कदाचित्प्रीतयः क्रियन्ते कदाचिद्भीतयः, पुनश्च प्रीतिः भूयो भयमिति वाक्यार्थः । केन वशं नीतः शिक्षावशेन गजशास्त्राभ्यासेन । युक्तोऽयमर्थः, हि यस्यात् कारणात् निश्चितधियामसन्दिग्धबुद्धीनां प्राज्ञानां शास्त्रमभ्यासः क्व सिद्धिं न एति क्व सफलतां न याति । अपि तु सर्वत्रापि सफलं भवतीत्यर्थः । कम्पनशीलो हस्ती चालक उच्यते । चलतेः प्रयोगः बलतेः प्रयोगः । 'अङ्कुशं सृणिवीतयः(?)' । 'यन्ता हस्तिपके सूते' इत्यमरः ॥ ४७ ॥

**निर्धूतेति ॥** यन्ता निषादी निर्धूतं निरस्तं वीतं पादघाताङ्कुशवारणं यस्मिन्कर्मणि तद्यथा तथा उल्ललन्तमुत्प्लवमानमपि ।

पादकर्म यतं प्रोक्तं यतमङ्कुशवारणम् ।
उभयं वीतमाख्यातम्—'

इति **हलायुधः** । बालकं पञ्चवर्षगजम् । 'पञ्चवर्षो गजो बालः पोतस्तु दशवार्षिकः' इति **वैजयन्ती** । शिक्षावशेन स्वकीयेन गजशास्त्राभ्यासबलेन क्रमेण परिपाट्या परिसान्त्वनान्युपलालनानि तर्जना भर्त्सनाश्च ताभिः शनैरेव शनकैः । 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इति स्वार्थेऽकच्प्रत्ययः । शमं शान्तिमानिनाय । तथा हि—सुष्ठु निश्चितार्था धीरेषां तेषाम् , पुंसामित्यर्थः । शास्त्रं क्व सिद्धिं नैति । स्वभ्यस्तं

(१) बालक ।

शास्त्रं सर्वत्र फलतीत्यर्थः। 'विभक्तधना भ्रातरो विभक्ताः' इतिवत् विनिश्चितार्था धीर्निश्चितेत्युपचर्यते। अतएवात्र गम्यमानार्थत्वादुत्तरपदस्याप्रयोगलक्षणो लोप इत्याहुः ॥ ४७ ॥

**स्तम्भं महान्तमुचितं सहसा मुमोच दानं ददावतितरां सरसाग्रहस्तः ॥**
**बद्धापराणि परितो निगडान्यलावीत्स्वातन्त्र्यमुज्ज्वलमवाप करेणुराजः ॥४८॥**

**स्तम्भमिति** ॥ करेणुराजः गजाधिराजः उज्ज्वलं मनोज्ञं स्वातन्त्र्यमात्माधीनत्वं स्वच्छन्दचारित्वमवाप लेभे। राजापि किल स्वतन्त्रो भवति। तदेव स्वातन्त्र्यमाह तावत्–महान्तं स्तम्भं बृहन्तं दृषद्दारुजं स्थाणुं सहसा बलात्कारेण मुमोच बभञ्ज, किंलक्षणं स्तम्भम् उचितमात्मयोग्यम्। अपरम् अतितरामतिशयेन दानं ददौ मदं मुमोच, किंभूतः गजराजः सजलकराग्रः। अपरं परितः समन्तात् निगडानि पादबन्धनानि अलावीत् चिच्छेद, किंलक्षणानि निगडानि बद्धापराणि बद्धाः सिता अपराः पाश्चात्त्यपादभागा यैस्तानि। अपराशब्दः स्त्रीलिङ्गः। यो हि राजा उज्ज्वलं स्वातन्त्र्यं लभते विष्टपायत्तत्वं प्राप्नोति, स उचितं योग्यं महान्तं विशालं स्तम्भं गर्भं मुञ्चति त्यजति, सजलपाणिश्च सन् विप्रेभ्यो दानं वितरति, बद्धशत्रूणां बन्धनानि त्रोटयति। 'स्तम्भः स्थाणौ च गर्भे च'। 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः ॥ ४८ ॥

स्तम्भमिति ॥ करेणुश्चासौ राजा च करेणुराजो गजश्रेष्ठः। करेणूनां राजेति गजपतिः राजा च ध्वन्यते। उभयत्रापि 'राजाहः सखिभ्यः—' इति टच्। उज्ज्वलमुच्छृङ्खलं स्वातन्त्र्यं स्वेच्छाचारित्वमवाप। तदेवाह—उचितं चिरपरिचितं महान्तं स्तम्भमालानं जाड्यं च सहसा मुमोच। 'स्तम्भः स्थूणाजडत्वयोः' इति विश्वः। सरस आर्द्रोऽग्रहस्तः पुष्करं पाणिश्च यस्य स सन् दानं मदं, दीयत इति दानं धनं चातितरामतिमात्रम्। अव्ययादामुप्रत्ययः। ददौ। ववर्षेत्यर्थः। परितो बद्धापराणि बद्धपाश्चिमपादानि च। 'अपरः पश्चिमः पादः' इति गजप्रकरणे वैजयन्ती। निगडानि शृङ्खलानि। 'अथ शृङ्खले। अन्दुको निगडोऽस्त्रियाम्' इत्यमरः। अलावीत् लुनाति स्म। लूञ् छेदने, लुङ्। 'अस्तिसिचोऽपृक्ते' इतीट्। 'इट ईटि' इति सलोपः। अत्र करेणुराजपदसाधर्म्यध्वनिः। विशेष्यस्यापि श्लिष्टत्वान्न श्लेष इत्युक्तम् ॥ ४८ ॥

**जज्ञे जनैर्मुकुलिताक्षमनाददाने संरब्धहस्तिपकनिष्ठुरनोदनाभिः(१) ॥**
**गम्भीरवेदिनि पुरः कवलं करीन्द्रे मन्दोऽपि नाम न महानवगृह्य साध्यः ४९**

**जज्ञे इति** ॥ गम्भीरवेदिनि करीन्द्रे गजराजे पुरोऽग्रे कवलमन्नपिण्डमनाददाने अगृह्णति सति जनैर्लोकैरेवं जज्ञे इति ज्ञातम्, यत्—नामेति सत्ये, यो महान् पुरुषः स मन्दोऽपि मन्दशक्तिरपि अवगृह्य अवग्रहं कृत्वा बलात्कारेणाऽपि विरोधं विधाय न साध्यः न जय्यः। न वश्य इत्यर्थः। अथ च स करीन्द्रो मन्दः मन्दजातीयः। भद्रमन्दमृगा हि हस्तिजातयः। काभिः कवलमनाददाने सति संरब्धहस्तिपकनिष्ठुरनोदनाभिः संरब्धः क्रुद्धो यो हस्तिपकः निषादी तस्य निष्ठुरा अतिकठोरा या नोदनास्तर्जनाः ताभिः कुपितनिषादिकठोरतर्जनाभिः, कथं मुकुलिताक्षं निमीलितनेत्रं यथा स्यात्तथा निमीलिते अक्षिणी यत्र यस्यां क्रियायां तद्यथा भवति तथा। भद्रो मन्दो मृगश्चेति विज्ञेयास्त्रिविधा गजाः। गम्भीरवेदिलक्षणं तु—

स्वग्भेदाच्छोणितस्रावादामांसच्यवनादपि।
संज्ञां न लभते यस्तु प्रोक्तो गम्भीरवेद्यसौ ॥

(१) चोदनाभिः।

इति ॥ ४९ ॥

जज्ञ इति ॥ गम्भीरं मन्दं वेत्तीति गम्भीरवेदी ।

'त्वग्भेदाच्छोणितस्रावान्मांसस्य च्यवनादपि ।
आत्मानं यो न जानाति तस्य गम्भीरवेदिता' ॥

इति राजपुत्रीये ।

'चिरकालेन यो वेत्ति शिक्षां परिचितामपि ।
गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः' ॥

इति मृगचर्मीये । तस्मिन्गम्भीरवेदिनि करीन्द्रे संरब्धः कुपितः हस्तिनं पातीति हस्तिपः स एव हास्तिपको निषादी । 'आधोरणा हास्तिपका हस्त्यारोहा निषादिनः' इत्यमरः । तस्य निष्ठुराभिक्षोदनाभि-र्स्तर्जनाभिरपि मुकुलिताक्षं निमीलितनेत्रं यथा तथा पुरः कवलं ग्रासमनाददाने सति । मन्दो मूढोऽपि 'मूढाल्पाऽपटुनिर्भाग्या' इत्यमरः । गजभेदोऽपि । 'भद्रो मन्दो मृगश्चैव विज्ञेयास्त्रिविधा गजाः' इति । महान् बलाधिकोऽवगृह्य निगृह्य साध्यो न नाम न खल्विति जनैर्जज्ञे ज्ञातम् । जानातेः कर्मणि लिट् । मन्दो ऽपीत्यादिवाक्यार्थः कर्म ॥ ४९ ॥

**क्षिप्तं पुरो न जगृहे मुहुरिक्षुकाण्डं नापेक्षते स्म निकटोपगतां करेणुम् ॥**
**सस्मार वारणपतिः परिमीलिताक्षमिच्छाविहारवनवासमहोत्सवानाम् ॥५०॥**

क्षिप्तमिति ॥ कश्चिद्वारणपतिर्गजेन्द्रः परिमीलिताक्षं यथा भवति तथा इच्छाविहार-वनवासमहोत्सवानां सस्मार अस्मार्षीत । स्मृत्यर्थकर्मणि षष्ठी । इच्छाविहारः स्वेच्छा-क्रीडनं येषु ते इच्छाविहाराः ते च वनवासमहोत्सवास्तान् । काननविहारगतानुस्मरणशू-न्यहृदयत्वान्न किञ्चिदपि प्रकृष्टं कर्म अनुदध्यावित्यर्थः । वानेयानां हि गजानां राजगृहादपि वनमेव सुखकारि ।

महावृष्ट्यवधूतस्य मृगयूथस्य धावतः ।
पृष्ठतोऽनुगमिष्यामः कदा नस्तद्भविष्यतीति ॥

इति तावत् मुहुर्मुहुर्वारंवारं पुरोऽग्रे क्षिप्तं दत्तम् इक्षुकाण्डं न जगृहे न जघास । अपरं च निकटोपगतां समीपोपढौकितामपि करिणीं हस्तिनीं न अपेक्षते स्म न अभिललाष । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः ॥ ५० ॥

क्षिप्तमिति ॥ वारणपतिः करिवरो मुहुः पुरः क्षिप्तमग्रे न्यस्तमिक्षुकाण्डमिक्षुदण्डं न जगृहे न स्वी-चकार । निकटोपगतां समीपस्थां करेणुं करिणीं च नापेक्षते स्म नेच्छति स्म । 'लट् स्मे' इति भूतार्थे लट् । किन्तु परिमीलिताक्षं यथा तथेति स्मृत्यनुभवः । इच्छया विहारा येषु ते वनवासा एव महोत्सवा-स्तेषां सस्मार । तानेव चिन्तयामासेत्यर्थः । 'अधीगर्थदयेशां कर्मणि' इति शेषत्वाविवक्षायां षष्ठी । न स्वच्छन्दचारिणो निर्बन्धे भोगेषु मनः प्रवर्तत इति भावः । वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ५० ॥

**दुःखेन भोजयितुमाशयिता शशाक तुङ्गाग्रकायमनमन्तमनादरेण ॥**
**उत्क्षिप्तहस्ततलदत्तविधानपिण्डस्नेहस्रुतिस्नपितबाहुरिभाधिराजम् ॥ ५१ ॥**

दुःखेनेति ॥ आशयतीति आशयिता भोजयिता हस्तिभोजकः इभाधिराजं हस्ति-मल्लं दुखेन कृच्छ्रेण भोजयितुमाहारयितुम् आदयितुं शशाक समर्थ आसीत् । किंविध-मिभाधिराजं तुङ्ग उच्चः अग्रकायः पूर्वदेहो यस्य तम् उन्नतपूर्वदेहं, पुनः किंभूतमिभाधि-राजम् अनादरेण अनमन्तम् अवज्ञया अप्रह्वमनम्रम् । किंलक्षणो भोजयिता उत्क्षिप्तमूर्ध्वी-कृतं यत् हस्ततलं पाणितलं तत्र दत्तो निक्षिप्तः योऽसौ विधानपिण्डः भक्तगोलकः तस्य यः स्नेहो रसः तस्य या स्रुतिः स्रावः तया स्नपितः स्निग्धीकृतो बाहुर्भुजो यस्य सः तथा ५१

दुःखेनेति ॥ उक्षिप्ते उद्यते हस्ततले दत्तो निहितो यः विधानस्य गजग्रासस्य पिण्डः। 'विधानं हस्तिकवलः' इति वैजयन्ती। तस्य स्नेहस्रुत्या घृतादिनिःस्यन्दनेन स्नपितबाहुराप्लुतभुजः। स्नातेर्ण्यन्तात्कर्मणि क्तः। 'अर्तिह्री—' इत्यादिना पुगागमः मित्त्वाद्ध्रस्वः। आशयिता भोजयिता। अशेर्ण्यन्तात्तृच्। तुङ्गप्रकायं स्वभावत एवोन्नतोर्ध्वकायम् अनादरेणानमन्तं कवलग्रहणाय नातिमकुर्वाणमिभाधिराजम्। 'गतिबुद्धि—' इत्यादिना आणि कर्तुर्णौ कर्मत्वम्। दुःखेन कृच्छ्रेण भोजयितुं शशाक। स्वभावोन्नतानां तत्राप्यहङ्कारग्रस्तानां को नमयितेति भावः ॥ ५१ ॥

**शुक्लांशुकोपरचितानि निरन्तराभिर्वेश्मानि रश्मिविततानि नराधिपानाम् ॥**
**चन्द्राकृतीनि गजमण्डलिकाभिरुच्चैर्नीलाभ्रपङ्क्तिपरिवेषमवाधिजग्मुः ॥५२॥**

**शुक्लांशुकेति** ॥ नराधिपानां राज्ञां वेश्मानि गृहाणि गजमण्डलिकाभिः मातङ्गघटाभिः कृत्वा नीलाभ्रपङ्क्तिपरिवेषमधिजग्मुरिव सजलजलधरपङ्क्तिपारीयास(?)मिव प्रापुः, नीलानि श्यामानि च तानि अभ्राणि मेघाश्च तेषां पङ्क्तयः श्रेणयः ताभिः परिवेषः परिधिः तं प्रापुरिव। किंभूताभिर्गजमण्डलिकाभिः निरन्तराभिः निर्विवराभिः, किंभूतानि वेश्मानि शुक्लांशुकोपरचितानि शुक्लैः श्वेतैरंशुभिः वस्त्रैरुपरचितानि कृतानि। धवलपटमण्डपानित्यर्थः। पुनः किंलक्षणानि वेश्मानि चन्द्रस्येव आकृतिः आकारः तुल्यता येषां तानि। शशिबिम्बतुल्यानीत्यर्थः। पुनः किंभूतानि रश्मिभिः रज्जुभिः विततानि परिवेष्टितानि बद्धानि रज्जुबद्धानि। चन्द्रोऽपि शुक्लो भवति रश्मिभिर्मयूखैर्विततश्च। पटवेश्मनां चन्द्रउपमानं, करिणां मेघाः। अपरं किंलक्षणानि वेश्मानि उच्चैः उन्नतानि। घटाभिरुच्चैः उच्चाभिर्वा। 'किरणप्रग्रहौ रश्मी', 'परिवेषस्तु परिधिरुपसूर्यकमण्डले' इत्यमरः ॥५२॥

शुक्लांशुकेति ॥ शुक्लांशुकैः शुक्लपटैरुपरचितान्युपकल्पितानि, अन्यत्र तु अल्पा अंशवोऽशुकाः सूक्ष्मास्तेजोऽवयवाः। 'अल्पे' इत्यल्पार्थे कन्प्रत्ययः। शुक्लैस्तैरुपचितानि व्याप्तानि रश्मिभिः प्रग्रहैः किरणैश्च विततानि विस्तृतानि। 'किरणप्रग्रहौ रश्मी' इत्यमरः। चन्द्रस्येवाकृतिर्येषां तानि चन्द्राकृतीनि। चन्द्रमण्डलनिभानीत्यर्थः। नराधिपानां वेश्मानि दूष्याणि निरन्तराभिर्निरन्ध्राभिरुच्चैर्गजमण्डलिकाभिर्गजपरिधिभिः। स्वार्थे कप्रत्ययः। कापूर्वस्येकारः। नीलाभ्रपङ्क्तिभिः परिवेषं परिधिम्। परिवेष्टनामिति यावत्। 'परिवेषस्तु परिधिः' इत्यमरः। अधिजग्मुरिवेत्युत्प्रेक्षा ॥ ५२ ॥

अथाश्ववर्णनम्—

**गत्यूनमार्गगतयोऽपि गतोरुमार्गाः स्वैरं समाचकृषिरे भुवि वेल्लनाय ॥**
**दर्पोदयोल्लसितफेनजलानुसारसंलक्ष्यपल्ययनवर्ध्रपदास्तुरङ्गाः ॥ ५३ ॥**

**गत्यूनेति** ॥ तुरङ्गाः अश्वाः भुवि पृथिव्यां स्वैरं शनैःशनैर्यथा भवति तथा समाचकृषिरे समाकृष्टाः समानीताः, किमर्थं वेल्लनाय। वाहयित्वा अश्वाः परिवर्त्यन्ते इति स्थितिः। किंलक्षणाः अश्वाः दर्पोदयोल्लसितफेनजलानुसारसंलक्ष्यपल्ययनवर्ध्रपदाः दर्पस्य मदस्योदयेनन आविर्भावेन उल्लसितमुत्क्षिप्तं यत्फेनजलं प्रस्वेदवारि तस्याऽनुसारेणाऽनुसरणेन संलक्ष्यं दृश्यं पल्ययनवर्ध्रस्य पर्याणरश्मेः पदं स्थानं येषां ते। वाह्यमानानां तुरङ्गमानां हि सर्वाङ्गे फेनो भवति। पुनः किंलक्षणास्तुरङ्गाः गत्यूनमार्गगतयः गत्या गमनेन ऊना मन्दीकृता मार्गी हरिणसम्बन्धिनी गतिः पुला येषां ते तथा। तदीयां गतिं दृष्ट्वा मृगा अपि स्वल्पगतयो ज्ञायन्ते। एवंविधा अपि, गतोरुमार्गाः गतोऽतिवाहितः उरुर्दीर्घो मार्गः पन्था यैस्ते गतोरुमार्गाः। विरुद्धं चैतत्, येषां हि गतौ

मार्गी गतिः ऊना तेषां मृगसम्बन्धिनी गतिर्गमनं कथमुरुः स्यात् । अथ चेदुरुर्भवति तर्त्तर्हि कथमूनगतयः । अपिशब्दो विरोधार्थः । तथैव व्याख्यातम् ॥ ९३ ॥

गत्यूनेति ॥ गत्यूना विशिष्टगमनहीना मार्गगतयोऽध्वगमनानि येषां ते, तथापि गतोरुमार्गाः प्रस्थित-दूराध्वान इति विरोधः । अपिर्विरोधे । गत्यूना मार्गी मृगसंबन्धिनी गतिर्येषां त इति विरोधपरिहारः । अत-एव विरोधाभासोऽलङ्कारः । दर्पस्य तेजसोऽन्तःसारस्योदयेनौत्कट्येनोल्लसितस्योद्धतस्य फेनजलस्य फेनी-भूतोद्धतस्वेदोदकस्यानुसारेण प्रसारेण संलक्ष्याणि पल्ययनवर्ध्राणामासनबन्धचर्मवरत्राणां पदानि तन्नोदना-न्निम्नीभूतस्थलानि येषां ते तथोक्ताः । तुरङ्गा भुवि वेल्लनायाङ्गपरिवर्तनाय स्वैरं मन्दं समाचकृषिर समाकृष्टाः । अध्वश्रमापनोदनार्थमिति भावः । वर्धते दृढबन्धनाद्दीर्घीभवतीति वर्ध्रम् । 'वृधिवपिभ्यां रन्' इत्यौणादिके रन्प्रत्यये लघूपधगुणो रपरः । 'वर्ध्रं सपुवरत्रयोः' इति विश्वः । अमरस्तु 'नध्री वर्ध्री वरत्रा स्यात्' इत्याह । तदा 'ष्ट्रन्' इत्यौणादिके ष्ट्रन्प्रत्यये पूर्ववद् गुणो रपरः प्रत्ययतकारस्य 'झषस्तथोर्धोऽधः' इति धत्वे षित्त्वात्स्त्रीलिङ्गे ङीष् ॥ ५३ ॥

**आजिघ्रति प्रणतमूर्धनि बाह्लिजेऽश्वे तस्याङ्गसङ्गमसुखानुभवोत्सुकायाः ॥**
**नासाविरोकपवनोल्लसितं तनीयो रोमाञ्चतामिव जगाम रजः पृथिव्याः ५४**

आजिघ्रतीति ॥ रजो रेणुः पृथिव्या रोमाञ्चतामिव जगाम कण्टकत्वमिव लेभे । क्व सति बाह्लिजेऽश्वे बाह्लिदेशोद्भवे तुरगे आजिघ्रति सति आघ्रायमाणे सति, किंलक्षणं रजः नासाविरोकपवनोल्लसितं घ्राणविवरवायुसमुत्थं नासाया घोणायाः विरोको विवरं तस्य पवनो वातः तेन उल्लसितमुड्डीनम्, अत एव पुनः किंलक्षणं रजः तनीयः सूक्ष्मम् । किंलक्ष-णेऽश्वे प्रणतमूर्धनि अवनतमस्तके, प्रणतः नम्रः मूर्धा मस्तको यस्य सः तस्मिन् । किंभू-तायाः पृथिव्याः तस्याङ्गसङ्गमसुखानुभवोत्सुकायाः तस्याश्वस्य अङ्गसङ्गमः शरीरसम्पर्कः परिवर्तनाख्यः तेन यत् सुखं तस्य योऽनुभवः प्राप्तिः तत्र उत्सुका उत्कण्ठिता तस्याः । यस्याः किल नायिकाया निकटावनतो नायको भवति, सा तस्य सुखानुभवात्पुलकिताङ्गी भवति । 'मूर्धा ना मस्तकोऽस्त्रियाम्' । बाह्लिसिन्धुकाम्बोजा अश्वयोनयो देशाः ॥ ९४ ॥

आजिघ्रतीति ॥ बाह्लिरश्वयोनिर्देशविशेषः तज्जे बाह्लिजेऽश्वे । 'बाह्लिदिभ्ये' इति पाठे विशेष्याप्रयोगो गम्यमानत्वादित्युक्तम् । 'गर्गादिभ्यो यञ्' इति भवार्थे यञ्प्रत्ययः । तदन्तवि-धिस्तु मृग्यः । प्रणतमूर्धनि नवशिरसि कृतप्रणामे च आजिघ्रति गन्धं गृह्णति चुम्ब-ति च सति । स्वभावात्कामाच्चेति भावः । नासाविरोकं नासारन्ध्रं तस्य पवनो निश्वासस्तेनोल्लासितमुद्-धूतं तनीयस्तनुतरं रजस्तस्याश्वस्याङ्गसङ्गमेन वेल्लनप्रयुक्तेन यत्सुखं तस्यानुभवे उत्सुकाया उत्कण्ठितायाः पृथिव्या रोमाञ्चतां जगामेवेत्युत्प्रेक्षा । सा च भूतुरङ्गमयोः प्रतीयमानचेतननायकाद्यभेदाध्यवसायादित्य-वधेयम् । विरोचतेऽनेनेति विरोकम् । घञ्प्रत्ययः । 'चजोः कु घिण्यतोः' इति कुत्वम् । 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति नपुंसकत्वाविरोधः । अत एव 'छिद्रं निर्व्यथनं रोकम्' इत्यमरः । 'रोको रश्मौ बिले न पुम्' इति वैजयन्ती । 'रोको दीप्तौ बिले रोकम्' इति विश्वः । ये तु केनाप्यभिप्रायेण 'विरेकपवने'ति पठन्ति तेषां 'परोत्सर्गैकजीविना'मितिवदपानीयपवनप्रतीतेरश्लीलाख्यो दोषः । 'अश्लीलं तदमङ्गल्यजुगुप्साव्रीडधीकरम्' इति लक्षणात् ॥ ५४ ॥

**हेम्नः स्थलीषु परितः परिवृत्य वाजी धुन्वन् वपुः प्रवितताततकेशपङ्क्तिः ॥**
**ज्वालाकणारुणरुचा निकरेण रेणोः शेषेण तेजस इवोल्लसता रराज ॥ ५५ ॥**

हेम्न इति ॥ कश्चिद् वाजी अश्वः हेम्नः स्थलीषु सुवर्णस्य भूमिषु परितः समन्तात् परिवृत्य वेल्लनं कृत्वा वपुः धुन्वन् शरीरं कम्पयन् सन् रराज शुशुभे । केन कृत्वा रराज

रेणोः निकरेण कनकरजःपुञ्जेन, किंभूतेन रजोनिकरेण उल्लसता स्फुरता भ्रमता उड्डीयमानेन, पुनः किंभूतेन ज्वालाकणारुणरुचा ज्वालानामर्चिषां ये कणाः स्फुलिङ्गाः तद्वत् अरुणा रुक् कान्तिर्यस्य सः तेन, किंभूतो वाजी प्रविततायतकेशपङ्क्तिः प्रवितता आयता दीर्घा केशपङ्क्तिः केशमाला यस्य सः । वाजाः पक्षा विद्यन्ते येषां ते वाजिनः । पूर्वं हि तुरङ्गमाः पर्वता इव सपक्षा आसन् । अपरं किंलक्षणेन रेणोः निकरेण, उत्प्रेक्षते—तेजसः प्रभावस्य बलस्य शेषेणेव उर्वरितभागेनेव । स्वल्पमेव तेजो देहाद्बहिः स्थितमिवेत्यर्थः । स्थली अकृत्रिमा भूमिः । 'वाजिनोऽश्वेषु पक्षिणः', 'तेजः प्रभावे दीप्तौ च' सर्वत्राप्यमरः ॥५५॥

**हेम्न इति** ॥ हेम्नः स्थलीषु स्वर्णभूमिषु । 'जानपद–' इत्यादिना कृत्रिमार्थे ङीष्प्रत्ययः । परितः परिवृत्य परिवृत्तिं कृत्वा वपुर्धुन्वन् धूलिनिर्गमाय कम्पयन् अत एव प्रवितता विश्लिष्टा आयता च केशपङ्क्ती रोमसङ्घातो यस्य स वाजी ज्वालाकणाः स्फुलिङ्गास्तद्वदरुणरुचा रक्तवर्णेन रेणोर्निकरेणोल्लसता अत्युत्कटतया बहिरुद्गच्छता तेजसोऽन्तःसारस्य दर्पस्य शेषणातिरेकेणेव रराज । उत्प्रेक्षालङ्कारः ॥ ५५ ॥

**दन्तालिकाधरणनिश्चलपाणियुग्ममर्धोदितो हरिरिवोदयशैलमूर्ध्नः ॥**
**स्तोकेन नाक्रमत वल्लभपालमुच्चैः श्रीवृक्षकी पुरुषकोन्नमिताग्रकायः॥५६॥**

**दन्तालिकेति** ॥ श्रीवृक्ष आवर्तो यस्य सः श्रीवृक्षकी अश्वश्रेष्ठः वल्लभपालमश्ववारं स्तोकेन न आक्रमत स्तोकमात्रेण न लङ्घयामास । यतः किंभूतं वल्लभपालं दन्तालिकाधरणनिश्चलपाणियुग्मं दन्तालिका दशनरश्मिः मुखरज्जुः कविका तस्य धरणमवष्टम्भनं तेन निश्चलं स्थिरं पाणियुगलं करयुगलं यस्य सः तं, किंभूतः श्रीवृक्षकी उच्चैः उन्नतः, पुनः किंभूतोऽश्वः पुरुषकोन्नमिताग्रकायः पुरुषप्रमाणं पुरुषकम् , उन्नमितः ऊर्ध्वीकृतः अग्रकायः पूर्वदेहो येन सः । पुरुषप्रमाणोन्नत इत्यर्थः । अत एव स्तोकेन न आक्रमत । उत्प्रेक्षते—उदयशैलमूर्ध्नः उदयाचलमस्तकात् अर्धोदितोऽर्धप्रकटितो हरिरिव श्रीसूर्य इव । वल्लभपालस्य उदयशैलतट उपमानम् । दन्तालिका तु कविका । 'श्रीवृक्षकी स विज्ञेयः श्रीवृक्षो यस्य लाञ्छनम्' इत्यमरः । श्रीवृक्षाख्य आवर्तः ॥ ५६ ॥

**दन्तालिकेति** ॥ पुरुषकोऽश्वानां स्थानकभेदः । तदुक्तम्—

'पश्चिमेनाग्रपादेन भुवि स्थित्वाग्रपादयोः ।
ऊर्ध्वप्रेरणया स्थानमश्वानां पुरुषः स्मृतः' ॥

इति । पुरुष एव पुरुषकः तेन पुरुषकेण स्थानकेनोन्नमित ऊर्ध्वावस्थितोऽग्रकायः पूर्वकायो यस्य स तथोक्तः अत एवोदयशैलस्य मूर्ध्नो मस्तकादर्धमुदितोऽर्धोदितः हरिः सूर्य इव, स्थित इत्यर्थः । अर्धोदितविशेषणादुच्चैरुन्नतः श्रीवृक्ष एव श्रीवृक्षकः आवर्तविशेषस्तद्वानश्वः श्रीवृक्षकी ।

'वक्षोभवावर्तचतुष्टयं च कण्ठे भवेद्यस्य च रोचमानः ।
श्रीवृक्षकी नाम हयः स भर्तुः श्रीपुत्रपौत्रादिविवृद्धये स्यात्' ॥

इति लक्षणात् । 'श्रीवृक्षकी वक्षसि चेद्रोमावर्तो मुखेऽपि च' इति तु वैजयन्ती । दन्तालिका मुखरज्जुः । 'मुखरज्जुश्च दन्ताली राणिका रक्षणीति च' इति वैजयन्ती । तस्या धरणे ग्रहणे निश्चलं स्थिरं पाणियुग्मं यस्य तम् । पाणिभ्यां दृढं गृहीतोभयवल्गामित्यर्थः । वल्लभपालमुत्तमाश्वपालम् । 'वल्लभो दयितेऽध्यक्षे कुलीनेऽश्वेऽपि वल्लभः' इति विश्वः । स्तोकेन नाक्रमत । वल्गाग्रहणदार्ढ्यात्स्तोकेनाप्यभिभवितुं न शक्तोऽभूदित्यर्थः । इह 'श्रथयितुं क्षणमक्षमताङ्गना', 'न द्वन्द्वदुःखमिह किञ्चित्' इत्यादिवदप्यर्थस्य सामर्थ्यलभ्यत्वादपेरप्रयोगः । अन्यथा स्तोकेन नाक्रमत किन्तु भूय इति व्याख्याने निश्चलपाणियुग्मत्वादिविशेषणावगतवाह-

कौशल्यप्रकाशनतात्पर्यभङ्गप्रसङ्गात् । 'करणे च स्तोका'–इत्यादिना विकल्पात्तृतीया, 'अनुपसर्गे' इति विकल्पादात्मनेपदम् । उपमालङ्कारः ॥ ५६ ॥

**रेजे जनैः स्नपनसान्द्रतरार्द्रमूर्तिर्देवैरिवाऽनिमिषदृष्टिभिरीक्ष्यमाणः ॥**
**श्रीसन्निधानरमणीयतरोऽश्व उच्चैरुच्चैःश्रवा जलनिधेरिव जातमात्रः ॥५७॥**

**रेजे इति** ॥ अश्वस्तुरगः रेजे शुशुभे । किंभूतोऽश्वः स्नपनसान्द्रतरार्द्रमूर्तिः स्नपनेन अश्वपालकारितस्नानेन सान्द्रतरा निर्मला आर्द्रा क्लिन्ना मूर्तिर्देहो यस्य सः, पुनः किंभूतोऽश्वः श्रीसन्निधानरमणीयतरः श्रियः सन्निधानं संयोगः श्रीसन्निधानं शोभासंयोगः तेन रमणीयतरः विशेषमनोहरः, पुनः किंभूतः उच्चैः महाकायः, पुनः किंभूतः जनैर्लोकैः कौतुकादीक्ष्यमाणः विलोक्यमानः । किंलक्षणैर्जनैः अनिमिषदृष्टिभिः विस्मयात् निश्चलनयनैः जनैः कैरिव देवैरिव, अश्वः क इव उच्चैःश्रवा इव । यथा उच्चैःश्रवा वाजिराजः रेजे । किंलक्षणः जलधेः समुद्रात् जातमात्रः उत्पन्नमात्रः सन्, पुनः कथंभूतः अनिमिषदृष्टिभिः देवैरिन्द्रादिभिः ईक्ष्यमाणः दृश्यमानः, पुनः किंभूतः श्रीसन्निधानरमणीयतरः लक्ष्म्याः संयोगेन मनोज्ञः । तेन सह लक्ष्म्या उत्पन्नत्वादित्यर्थः ॥ ५७ ॥

**रेजे इति** ॥ स्नपनेनाभिषेचनेन सान्द्रतरार्द्रमूर्तिः अनिमिषदृष्टिभिर्विस्मयादनिमिषाक्षैर्जनैर्देवैरिव तादृग्भिरीक्ष्यमाणः श्रियः शोभायाः देव्याश्च सन्निधानेन रमणीयतरः । 'तत्र सन्निहिता लक्ष्मीः सन्ति यत्रोत्तमा हयाः' इत्यागमादिति भावः । उच्चैरुन्नतोऽश्वो जलनिधेः समुद्राज्जात एव जातमात्रः । सद्यो जात इत्यर्थः । अन्यथोक्तसाधर्म्यासम्भवादिति भावः । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । उच्चैरुन्नतं श्रवः कीर्तिरुन्नते श्रवसी कर्णौ वा यस्य सः उच्चैःश्रवाः शक्राश्व इव रेजे । उपमालङ्कारः ॥ ५७ ॥

**अश्रावि भूमिपतिभिः क्षणवीतनिद्रैरश्नन्पुरो हरितकं मुदमादधानः ॥**
**ग्रीवाग्रलोलकलकिङ्किणिकानिनादमिश्रं दधद्दशनबुर्बुर(१)शब्दमश्वः ॥५८॥**

**अश्रावीति** ॥ भूमिपतिभिः भूपालैः राजभिः अश्वस्तुरङ्गमः अश्रावि श्रुतः, किं कुर्वन् दशनबुर्बुरशब्दं दधत् धारयन् । अश्वकृतबुर्बुरशब्दश्रवणात् उपचारेण अश्वोऽश्रावि इत्युक्तम् । किंभूतं दशनबुर्बुरशब्दं ग्रीवाग्रलोलकलकिङ्किणिकानिनादमिश्रं ग्रीवाग्रे ग्रीवाग्रभागे लोलाश्चटुलाः कला मधुराश्च याः किङ्किणिकाः क्षुद्रघण्टाः तासां योऽसौ निनादः शब्दस्तेन मिश्रो युक्तस्तम्, अपरं किंलक्षणोऽश्वः पुरः अग्रे हरितकं तृणमश्नन् भक्षयन्, किं कुर्वाणोऽश्वः मुदमादधानः हर्षमुत्पादयन्, किंलक्षणैः भूमिपतिभिः क्षणलब्धनिद्रैः प्रथमं कृतनिद्रैः। हरितकस्य भुज्यमानस्य दन्तयोगात् यो बुर्बुर इति ध्वनिः स दशनबुर्बुरशब्दः कथ्यते ॥५८॥

**अश्रावीति** ॥ पुरोऽग्रे हारितकं हरिततृणमश्नन् अत एव ग्रीवाग्रे लोलाश्चलाः कला अव्यक्तमधुराः किङ्किणिकाः क्षुद्रघण्टिकास्तासां निनादेन मिश्रं दशनानां दन्तानां चर्चुरशब्दं चर्चुरध्वनिं दधत् अत एव मुदमादधान उत्पादयन्नश्वः । जातावेकवचनम् । क्षणेन वीतनिद्रैः । 'अल्पनिद्रोऽल्पभुग्वामी मितभाष्यनसूयकः' इति सौभाग्यलक्षणादिति भावः । भूमिपतिभिरश्रावि श्रुतः । अश्वस्य शब्दोऽश्रावीत्यर्थः । 'वीणाः श्रूयन्ते भेर्यः श्रूयन्ते' इत्यादिवच्छब्दधर्मः शब्दिषूपचर्यते । स्वभावोक्तिरलङ्कारः ॥ ५८ ॥

**उत्खाय दर्पचलितेन सहैव रज्ज्वा कीलं प्रयत्नपरमानवदुर्ग्रहेण ॥**
**आकुल्यकारि कटकस्तुरगेण तूर्णमश्वेति विद्रुतमनुद्रवताऽश्वमन्यम् ॥५९॥**

**उत्खायेति** ॥ केनचित् तुरगेणाश्वेन कटकः स्कन्धावारः आकुल्यकारि विह्वलीकृतः।

---

(१) चुर्चुर ।

किं कृत्वा रज्ज्वा सहैव रश्मिना सार्धं कीलं स्तम्भमुत्खाय उत्पाट्य, किंलक्षणेन अश्वेन दर्पचलितेन मदचलितेन, अत एव पुनः किंभूतेन तुरगेण प्रयत्नपरमानवदुर्ग्रहेण प्रयत्नपरैः सावधानैः मानवैरश्वपालैः दुर्ग्रहो ग्रहीतुमशक्यस्तेन, अपरं किंलक्षणेन तुरगेण अन्यमितरम् अश्वं तुरङ्गमम् इति कारणात् तूर्णं त्वरितं यथा भवति तथा अनुद्रवता पश्चाद्धावता । अनुद्रवतीति अनुद्रवन् तेन । इति किं यत्—इयमश्वा तुरगीति । किंलक्षणमश्वं विद्रुतं पलायितम् ॥ ५९ ॥

उत्खायेति ॥ दर्पाच्चलितेनोच्चालितेन अत एव रज्ज्वा पाशेन सह कीलं शङ्कुम् । 'शङ्कावपि द्वयोः कीलः' इत्यमरः । उत्खाय उत्पाट्य तूर्णं विद्रुतं धावन्तम् अन्यमश्वम् अश्वेत्यनुद्रवता वडवेति भ्रान्त्यानुधावता प्रयत्नपरैर्ग्रहीतुं प्रयतमानैरपि मानवैर्मनुष्यैर्दुर्ग्रहेण तुरङ्गेण कटकः शिबिरमाकुल्यकारि आकुलीकृतः । आकुलशब्दादभूततद्भावे च्विः 'अस्य च्वौ' इतीकारः । करोतेः कर्मणि लुङि चिणो लुक् ॥ ५९ ॥

**अव्याकुलं प्रकृतमुत्तरधेयकर्मधाराः प्रसाधयितुमव्यतिकीर्णरूपाः ॥**
**सिद्धं मुखे नवसु वीथिषु कश्चिदश्वं वल्गाविभागकुशलो गमयाम्बभूव ॥६०॥**

**अव्याकुलमिति** ॥ कश्चित् अश्ववारः अश्वं तुरङ्गमं गमयाम्बभूव अवाहयत् गतिमकारयत्, किंलक्षणमश्वम् व्याकुलं गतिचतुरम् । अथ वा अव्याकुलं निर्व्यग्रम्, अव्याकुलं निर्भयं यथा स्यात्तथेति वा गमयाम्बभूव । पुनः किंभूतमश्वं मुखे मुखकर्मणि सिद्धं निष्पन्नं चतुरम् । षट्सु दिक्षु यथा मुखं क्रियते तथा कर्तुं यो जानातीत्यर्थः । पुनः किंभूतमश्वम् उत्तरधेयकर्मधाराः प्रसाधयितुं प्रकृतं प्रस्तुतं योग्यम् । मुखे मुखकर्मणि सिद्धे सति निष्पन्ने सति उत्तरम् उत्तरकालं यावत् या धेयाः कर्तव्याः कर्मधाराः गतिविशेषाः ताः प्रसाधयितुं निष्पादयितुं योग्यम् । धौरितं वल्गितं प्लुतम् उत्तरितम् उत्तेजितं चेति कर्मधाराः । विक्रमवल्गितोत्कण्टजवोपजवाख्या इत्यन्ये । किंलक्षणा धाराः अव्यतिकीर्णं रूपं यासां ताः । यादृक् यस्या लक्षणं सा तस्यैव कृता न तु वैपरीत्येन । क्व गमयाम्बभूव नवसु वीथिषु नवसंख्येषु मार्गेषु । काकं मायूरम् अर्धमायूरं जवम् उपजवाख्यं चेति पञ्च सान्नाह्यवीथयः । नीचैर्गतं खरोष्ट्रं प्रमर्दं स्खलितं चेति चतस्र औपवाह्या वीथयः ॥ अन्ये त्वाहुः (१)काकं मायूरम् अर्धमायूरं चेति सान्नाह्यवीथिचतुष्टयं, वल्गितं नीचैर्गतं खरोष्ट्रं जवनं चेति औपवाह्यवीथिपञ्चकमिति । किंलक्षणोऽश्ववारः वल्गाविभागकुशलः वल्गा हस्तवर्ध्रा तस्या विभागो दिग्विशेषेण चालनं तत्र कुशलो दक्षः निपुणः प्रवीणः । कविकासञ्चारणे हृद्य इत्यर्थः । एतत्सर्वमश्वलक्षणात् अश्ववारेण सुज्ञानम् । शालिहोत्रग्रन्थात् वेद्यमेतत् ॥ ६० ॥

**अव्याकुलमिति** ॥ वल्गा मुखरज्जुः सा चोत्क्षिप्तादिभेदेन चतुर्दशविधा । तदुक्तं **हयलीलावत्याम्**—

'उत्क्षिप्ता शिथिला तथोत्तरवती मन्दा च वैहायसी विक्षिप्तैककरार्धकन्धरसमाकीर्णा विभक्ता तथा ।
अत्युत्क्षिप्ततलोद्धृते खलु तथा व्यागूढगोकर्णिके वाहानां कथिताश्चतुर्दशविधा वल्गाप्रभेदा अमी' ॥

इति । तल्लक्षणानि तु तत्रैव द्रष्टव्यानि । विस्तरभयान्न लिख्यन्ते । तस्या विभागो विविच्य प्रयोगः तत्र कुशलो वल्गाविभागकुशल इति । षड्विधप्रेरणाभिज्ञ इत्यर्थः । वल्गाग्रहणस्य रागाद्युपलक्षणत्वात् ।

---

( १ ) एतन्मते सान्नाह्यवीथिचतुष्टये औपवाह्यवीथिपञ्चके च एकैकं नाम नोपलभ्यते मूलपुस्तके ।

यथाह भोजः—

'वाहनं प्रतिवाहानां षड्विधं प्रेरणं विदुः ।
रागावल्गाकशापार्ष्णिप्रतोदरवभेदतः' ॥

इति । कश्चित् कश्चन वाहकः अव्याकुलमव्यग्रम् । अत्रस्तमिति यावत् । प्रकर्षेण कृतं प्रकृतम् । सज्जितमित्यर्थः । मुखे मुखकर्मणि सिद्धं सिद्धिमन्तमश्वं चतुष्काख्ये गतिविशेषे मुखे । संस्थानविशेषादिविशेषणविशिष्टमश्वमित्यर्थः । तदुक्तं रैवतोत्तरे—

सृक्काधरोष्ठासितफेनलवाभिरामफूत्कारवायुपदमुन्नतकन्धराग्रम् ।
नीत्वोपकुञ्चितमुखं नवलोहसाम्यमश्वं चतुष्कसमये मुखसिद्धमाहुः' ॥

उत्तरधेयकर्म युद्धाद्युत्तरकाले धेयं विधेयं प्रयोज्यं यत्कर्म क्रिया तद्रूपा इत्यर्थः । अव्यतिकीर्णरूपा असङ्कीर्णरूपा धारा गतिभेदाः ।

'अश्वानां तु गतिर्धारा विभिन्ना सा च पञ्चधा ।
आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम्' ॥

इति वैजयन्ती । 'गतयोऽमूः पञ्च धाराः' इत्यमरश्च । अश्वशास्त्रे तु संज्ञान्तरेणोक्ताः—

'गतिः पुला चतुष्का च तद्वन्मध्यजवा परा ।
पूर्णवेगा तथा चान्या पञ्च धाराः प्रकीर्तिताः ॥
एकैका त्रिविधा धारा हयशिक्षाविधौ मता ।
लघ्वी मध्या तथा दीर्घा ज्ञात्वैता योजयेत्क्रमात्' ॥

इति । तथा च पञ्चदश विभेदा भवन्ति ।'ताः पञ्च धाराः प्रसाधयितुं परिचेतुं नवसु वीथिषु सञ्चारस्थानेषु गमयाम्बभूव । वीथयो नवाश्वानां सर्वत्र धारादार्ढ्यार्थाः परिमिताः प्रचारदेशाः । ताश्च तिस्र इत्येके, नवेत्यन्ये । तत्रोत्तरपक्षमाश्रित्योक्तं कविना नवास्विति । यथाह भोजः—

'वीथ्यस्तिस्रोऽथ धाराणां लघ्वीमध्योत्तमाः क्रमात् ।
तासां स्याद्धनुषां मानमशीतिर्नवतिः शतम् ॥
लघ्वीमध्योत्तमानां तु वाजिनां वीथिकाः स्मृताः ।
नवानां कथिता वीथ्यो दुष्टानां क्रमणक्रमे ।
अन्येषामपि सर्वत्र गतिदार्ढ्यार्थमीरिताः ॥
समोन्नता सा विषमाम्बुकीर्णा शुद्धा नताग्रा तृणवीरुदाढ्या ।
स्थाणुप्रकोर्णोपलसंप्रकीर्णा पार्श्वोन्नताख्या नवधेति वीथ्यः ॥
सर्ववीथीषु यो वाजी दृढशिक्षासमन्वितः ।
तेन राजा रणे नित्यं मृगयायां मुदं व्रजेत्' ॥

इति । अन्ये तु उरसाल्यादयो गतिविशेषा वीथय इत्याहुः ।

'उरसाली वरश्वाली पृथुलो मध्यनामकः ।
आलीढः शोभनैरङ्गैः प्रत्यालीढस्तथापरः ।
उपधेनव उक्तं च पादचाली च सर्वगः ।
निर्दिष्टा वीथयस्त्वेताः—'

इति ॥ ६० ॥

**मुक्तास्तृणानि परितः कटकं चरन्तस्त्रुटयद्वितानतनिकाव्यतिषङ्गभाजः ॥**
**सस्रुः सरोषपरिचारकवार्यमाणा दामाञ्छन(१)स्खलितलोलपदं तुरङ्गाः ॥ ६१ ॥**

**मुक्ता इति** ॥ तुरङ्गाः अश्वाः सस्रुः अधावन् । किंभूताः अश्वाः कटकं परितः

---

( १ ) दामाञ्चल ।

स्कन्धावारसमीपे तृणानि चरन्तः खादन्तः भक्षयन्तः, पुनः किंभूताः अश्वाः मुक्ताः परित्यक्ताः । अनश्ववारा इत्यर्थः । पुनः किंभूता अश्वाः त्रुट्यद्वितानतनिकाव्यतिषङ्गभाजः त्रुट्यन्तः छिन्ना या वितानतनिकाः पटमण्डपरज्जवः तासां व्यतिषङ्गं सम्पर्कं भजन्त इति तथा भाजः । अपरं किंलक्षणाः अश्वाः सरोषपरिचारकवार्यमाणाः सरोषः सक्रोधो यः परिचारकः अश्वपालकः तेन वार्यमाणाः धार्यमाणाः । निषिध्यमाना इत्यर्थः । कथं सन्तः दामाञ्छनस्खलितलोलपदं यथा भवति तथा दामाञ्छनं पादबन्धनं तेन स्खलितानि प्रतिहतानि अत एव लोलानि चटुलानि पदानि अङ्घ्रयो यत्र यस्यां क्रियायां तद्यथा । 'यवसं तृणमर्जुनम्', 'स्कन्धावारश्च कटकः', 'अस्त्री वितानमुल्लोचः', 'तनिका दामरज्जवः', 'लोलश्चलसतृष्णयोः', 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' सर्वत्राप्यमरः ॥६१॥

मुक्ता इति ॥ मुक्ता विहारार्थमुत्सृष्टा अत एव कटकं शिबिरं परितः । 'अभितः परितः—' इत्यादिना द्वितीया । तृणानि चरन्तो भक्षयन्तः त्रुट्यन्तीषु छिन्नासु वितानतनिकासु पटमण्डपरज्जुषु व्यतिषङ्गं सङ्गं भजन्तीति तथोक्ताः । अत एव सरोषैः परिचारकैः किङ्करैर्वार्यमाणा अपसार्यमाणास्तुरङ्गा दामाञ्चलानि पादपाशाः । 'दामाञ्चलं पादपाशः' इति वैजयन्ती । दूष्यवरत्राबन्धनशङ्कव इति केचित् । तेषु स्खलितेन लोलानि पदानि यस्मिन्कर्मणि तद्यथा सस्तुरपसस्तु ॥ ६१ ॥

अथोक्षवर्णनम्—

उत्तीर्णभारलघुनाऽप्यलघूलपौघसौहित्यनिःसहतरेण तरोरधस्तात् ॥
रोमन्थमन्थरचलद्गुरुसास्नमासाञ्चक्रे निमीलदलसेक्षणमौक्षकेण ॥ ६२ ॥

उत्तीर्णेति ॥ उक्ष्णां समूहः औक्षकं तेन वृषभवृन्देन तरोः अधस्तात् वृक्षस्य तले आसाञ्चक्रे आसितं विश्रान्तम् । कथं यथा भवति तथा रोमन्थमन्थरचलद्गुरुसास्नं रोमन्थेन चर्वितचर्वणेन मन्थरमीषच्चलन्ती कम्पमाना गुर्वी महती सास्ना गलकम्बलः गलचर्म यत्र तत्, अपरं कथं यथा भवति तथा निमीलदलसेक्षणं निमीलन्ति पिहितानि अलसानि स्थिराणि ईक्षणानि विलोचनानि यत्र तत्, किंभूतेन औक्षकेण उत्तीर्णभारलघुनापि उत्तीर्णोऽपास्तो यो भारः गुरुत्वाधिकरणो लवणगुडादिभिः,'तेन लघुनापि पटुदेहेनापि । कथं तर्हि विश्रान्तमित्याशङ्क्याह—पुनः किंभूतेन वृन्देन अलघूलपौघसौहित्यनिःसहतरेण अलघुर्महान् यश्च उलपौघः तृणविशेषराशिः तेन यत् सौहित्यं तृप्तिः तेन निःसहतरेण अत्यलसेन कार्यं कर्तुमक्षमेण । 'उलपं बल्वजं स्मृतम्', 'सौहित्यं तर्पणं तृप्तिः', 'मन्दोऽलसो निःसहस्तु', 'रोमन्थश्चर्वणं पुनः', 'मन्दोऽलसो मन्थरश्च', 'सास्ना स्याद् गलकम्बलः' सर्वत्राप्यमरः॥६२॥

उत्तीर्णेति ॥ उत्तीर्णभारमवरोपितावपनम् अत एव लघुः तेन तथोक्तेन तथाप्यलघुना उलपानां बल्वजतृणानामोघेन यत्सौहित्यं पूर्तिः । 'पर्याप्तमुपसम्पन्नं पूर्तिः सौहित्यमुच्यते' इति हलायुधः । तेन निःसहतरेणात्यन्तमसहतरेण बाह्यभारावतारेऽप्यन्तरातिभोजनाद् गुरूभवतेत्यर्थः । सहेर्निःपूर्वात्पचाद्यजन्तात्तरप् प्रत्ययः । 'उलपा बल्वजाः प्रोक्ताः' इति विश्वः । औक्षकेण उक्ष्णां समूहेन । 'गोत्रोक्ष–' इत्यादिना वुञ् प्रत्ययः । तरोरधस्तात्तरुतले रोमन्थः पशूनां चर्वितचर्वणं तेन मन्थरं मन्दं चलन्त्यो गुर्व्यः सास्ना गलकम्बलानि यस्मिन्कर्मणि तद्यथा तथा । 'सास्ना तु गलकम्बलः' इत्यमरः । किञ्च निमीलन्ति सुखान्मुकुलीभवन्ति अलसानि चेक्षणानि यस्मिन्कर्मणि तद्यथा तथा आसाञ्चक्रे आसितम् । आस उपवेशने, भावे लिट् । 'दयायासश्च' इत्याम्प्रत्ययः । 'कृञ्चानुप्रयुज्यते लिटि' इति कृञोऽनुप्रयोगः । इतःप्रभृत्याचतुष्ट्यात्स्वभावोक्तिः ॥ ६२ ॥

**मृत्पिण्डशेखरितकोटिभिरर्धचन्द्रं शृङ्गैः शिखाग्रगतलक्ष्ममलं हसद्भिः ॥**
**उच्छृङ्गिताऽन्यवृषभाः सरितां नदन्तो रोधांसि धीरमुपचस्करिरे(१) महोक्षाः ६३**

**मृत्पिण्डेति** ॥ महोक्षा वरवृषभाः सरितां रोधांसि नदीनां तटानि धीरं निर्भयं यथा भवति तथा उपचस्करिरे आचख्नुः प्रोत्पयामासुः (?) । कैः शृङ्गैः विषाणैः, किंभूतैः शृङ्गैः मृत्पिण्डशेखरितकोटिभिः मृत्पिण्डेन मृत्स्नाकर्दमगोलकेन शेखरिता अलङ्कृताः कोटयोऽग्रभागा येषां तानि मृत्पिण्डशेखरितकोटीनि तैः । अत एव अपरं किंलक्षणैः शृङ्गैः अर्धचन्द्रं हसद्भिः शशिखण्डं विडम्बयद्भिः । चन्द्रस्यार्धम् अर्धचन्द्रस्तम्। अनुकार एवात्र हासः। किंभूतमर्धचन्द्रं शिखाग्रगतलक्ष्ममलं शिखाग्रगतं लेखान्तःस्थितं लक्ष्म चिन्हरूपं मलं मृगाख्यं यस्य सः तम् । शृङ्गाणामर्धचन्द्र उपमानं, कर्दमस्य मलमुपमानम् । किंलक्षणाः महोक्षाः उच्छृङ्गितान्यवृषभाः उच्छृङ्गिता उत्खातशृङ्गाः अन्यवृषभा इतरे उक्षाणो यैस्ते, पुनः किंभूता महोक्षाः नदन्तो गर्जन्तः ॥ ६३ ॥

**मृत्पिण्डेति** ॥ मृत्पिण्डैर्वप्रक्रीडालग्नैर्मृत्खण्डैः शेखरिताः सञ्जातशेखरा कोटयोऽग्राणि येषां तैरत एव शिखाग्रगतमुभयकोट्यन्तर्गतं लक्ष्मैव मलं यस्य स एवंभूतं श्वेतमर्धचन्द्रं हसद्भिरित्यतिशयोक्तिभेद इत्युक्तम् । अभूतोपमेति मतान्तरम् । शृङ्गैर्विषाणैरुच्छृङ्गाः उत्पतितशृङ्गाः कृता उच्छृङ्गिता अन्यवृषभाः प्रतिवृषभा यैस्ते अत एव धीरं गम्भीरं नदन्तो गर्जन्तः महान्त उक्षाणो महोक्षाः । 'अचतुर—' इत्यादिना निपातात्साधुः । सरितां रोधांसि अपचस्करिरे आलिलिखुः । हर्षादुरुजुरित्यर्थः । अवपूर्वात्किरतेः कर्तरि लिट् । 'किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम्' इत्यात्मनेपदम् । 'ऋच्छत्यृताम्' इति गुणः । 'अपाच्चतुष्पाच्छकुनिष्वालेखने' इति सुडागमः ॥ ६३ ॥

**मेदस्विनः सरभसोपगतानभीकान् भङ्क्त्वा पराननडुहो मुहुराहवेन ॥**
**ऊर्जस्वलेन सुरभीमनु(२) निःसपत्नं जग्मे जयोद्धुरविशालविषाणमुक्ष्णा ६४**

**मेदस्विन इति** ॥ केनचित् उक्ष्णा वृषभेण सुरभीमनु धेनुं प्रति जग्मे गतं यातं, किं कृत्वा परान् इतरान् अनडुहो बलीवर्दान् मुहुर्वारंवारमाहवेन युद्धेन भङ्क्त्वा निर्जित्य । ननु कदाचित् ते कृशा भवेयुर्नेत्याह—किंभूतान् अनडुहः मेदस्विनः पीवरान् । स्थूलस्कन्धानित्यर्थः । मेदो धातुविशेषः वृद्धं येषां ते तान् । पुनः, किंभूतेन उक्ष्णा ऊर्जो बलं विद्यते यस्य स ऊर्जस्वलः तेन तेजस्विना, किंलक्षणान् अनडुहः सरभसोपगतान् सरभसमौत्सुक्येन रणस्पर्धया उपगतान् युद्धाय प्राप्तान्, कथं यथा भवत्येवं जग्मे जयोद्धुरविशालविषाणं यथा भवति तथा जयेन सपत्नपरिभवेन उद्धुरे सगर्वे विशाले विस्तीर्णे प्रचण्डे विषाणे शृङ्गे यत्र तत्, पुनः कथं जग्मे निःसपत्नं यथा भवति एवं, निर्गताः सपत्नाः शत्रवो यत्र तत् गतशत्रु यथा भवत्येवम् । किंलक्षणान् अनडुहः अभीकान् निर्भयान् ॥ ६४ ॥

**मेदस्विन इति** ॥ ऊर्जो बलमस्यास्तीति तेन ऊर्जस्वलेन बलिना । 'ज्योत्स्नातमिस्रा—' इत्यादिना निपातः । उक्ष्णा वृषभेण मेदस्विनो मांसलान् । अस्मायामेधास्रजो विनिः । अत एव सरभसं सत्वरमुपगतान् अभिकामयन्त इत्यभीकान्कामुकान् । 'कम्रः कामयिताऽभीकः' इत्यमरः । 'अनुकाभिकाभीकः कमिता' इति निपातः । पराननडुहो बलीवर्दान्मुहुराहवेन युद्धेन भङ्क्त्वा निर्जित्य जयेनोद्धुरे निर्भरे । 'ऋक्पूर—' इत्यादिना समासान्तः । विशाले च विषाणे यस्मिन्कर्माणि तद्यथा तथा निःसपत्नमप्रातिपक्षं सुरभीरनु गवां पृष्ठतः । कर्मप्रवचनीययुक्ते द्वितीया । जग्मे गतम् । भावे लिट् ॥ ६४ ॥

---

(१) ०मपचस्किरिरे । (२) सुरभीरनु ।

अथोष्ट्रवर्णनम्—

**बिभ्राणमायतिमतीमवृथा शिरोधिं प्रत्यग्रतामतिरसामधिकं दधन्ति ॥**
**लोलौष्ठ(१)मौष्ट्रकमुदग्रमुखं तरूणामभ्रंलिहानि लिलिहे नवपल्लवानि ॥६५॥**

**बिभ्राणमिति ॥** औष्ट्रकमुष्ट्रसमूहः तरूणां वृक्षाणां नवपल्लवानि नूतनकिसलयानि लिलिहे आस्वादयामास। किंभूतानि नवपल्लवानि अधिकं सविशेषं यथा भवति तथा प्रत्यग्रतां दधन्ति नूतनत्वं वहमानानि, किंभूतां प्रत्यग्रताम् अधिको रसो यस्याः सा ताम् अभीष्टस्वादां, किंभूतानि पल्लवानि अभ्रंलिहानि व्योमस्पृशानि। उच्चानीत्यर्थः। ननु यदि तानि उच्चानि तत्कथं लिलिहे इत्याशङ्क्य हेतुगर्भं विशेषणमाह—यतः किंविधमौष्ट्रकं शिरोधिं ग्रीवां बिभ्राणं दधत्, किंभूतां ग्रीवाम् आयतिमतीं दीर्घतरां, पुनः किंभूतां शिरोधिम् अवृथा सार्थकां सप्रयोजनाम्, अपरं किंलक्षणमौष्ट्रकं लोलौष्ठं पल्लवजिघृक्षया चपलोष्ठं, पुनः किंभूतम् उदग्रमुखमूर्ध्ववदनम्। आयतिः उत्तरकाले दैर्घ्ये च। 'कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि'। 'प्रत्यग्रो नूतनो नवः', 'पल्लवोऽस्त्री किसलयम्' सर्वत्राप्यमरः॥ ६५॥

**बिभ्राणमिति ॥** आयतिमतीं दैर्घ्यवतीम्। न च वृथा दैर्घ्यमित्याह—अवृथेति। उच्चैस्तरपल्लवग्रहणात्सफलामित्यर्थः। शिरो धीयतेऽस्यामिति शिरोधिं ग्रीवाम्। 'शिरोधिः कन्धरेत्यपि' इत्यमरः। 'कर्मण्यधिकरणे च' इति किप्रत्ययः। बिभ्राणं दधानम्। उदग्रमुखं पल्लवग्रहणार्थमूर्ध्वीक्षिप्ततुण्डमौष्ट्रकमुष्ट्रसमूहः। 'गोत्रोक्ष-' इत्यादिना वुञ्। अधिकमतिशयितो रसः स्वादो यस्यां तामतिरसां प्रत्यग्रतामभिनवत्वं दधन्ति दधाति। 'वा नपुंसकस्य—' इति वैकल्पिको नुमागमः। अभ्रं लिहन्तीत्यभ्रंलिहान्युच्चतराणि। 'वहाभ्रे लिहः' इति खश्प्रत्ययः। 'अरुर्द्विषत्-' इत्यादिना मुमागमः। तरूणां नवपल्लवानि। 'पल्लवोऽस्त्री किसलयम्' इत्यमरः। लोलौष्ठं यथा तथा। 'ओत्वोष्ठयोः समासे वा' इति पररूपं वक्तव्यम्। लिलिहे आस्वादयामास। जघासेत्यर्थः॥ ६५॥

**सार्धं कथञ्चिदुचितैः पिचुमन्द(२)पत्रैरास्यान्तरालगतमाम्रदलं म्रदीयः ॥**
**दासेरकः सपदि संवलितं निषादैर्विप्रं पुरा पतगराडिव निर्जगार ॥ ६६ ॥**

**सार्धमिति ॥** दासेरकः उष्ट्रः आम्रदलं चूततरुपर्णं सपदि तत्क्षणादेव निर्जगार निर्जगाल उद्वमितवान्। किंलक्षणमाम्रदलं कथञ्चिद्दैववशात् आस्यान्तरालगतं कण्ठप्राप्तं, कैः सार्धं पिचुमन्दपत्रैः सार्धं निम्बपर्णैः समं, किंभूतैः पिचुमन्दपत्रैः उचितैः योग्यैः, अपरं किंभूतमाम्रपत्रं म्रदीयः अतिशयेन मृदु कोमलं, क इव कैः सार्धं निर्जगार पतगराडिव। यथा पतगराट् पक्षिराजो गरुडः विप्रं ब्राह्मणं निषादैः म्लेच्छैः सार्धं संवलितं मिश्रितं सन्तं निर्जगार, पुरेति पूर्वम्। पुरा किल बुभुक्षितेन सुपर्णेन भोजनं मे दिशेति पिता कश्यपो विज्ञप्तः। ततश्च पित्रा इदमभाणि, यत् त्वं जलराशिनिकटे निषादान् विप्रं विना भक्षय। यश्च गिलितः सन् तव कण्ठं दहति स विप्रो ज्ञेयः। ततस्तेन निषादान् भुञ्जानेन स कदाचिद्दैवयोगात् मुखविवरं दहन् विप्रो झटित्येवोज्झित इत्यागमः। 'निम्बो नियमनो नेता पिचुमन्दः सतिक्तकः'॥ ६६॥

**सार्धमिति ॥** उचितैरभ्यस्तैः। 'अभ्यस्तेऽप्युचितं न्याय्यम्' इति यादवः। पिचुमर्दपत्रैर्निम्बदलैः सार्धम्। 'पिचुमर्दश्च निम्बे' इत्यमरः। कथञ्चित्प्रमादादास्यान्तरालगतं मुखान्तर्गतं म्रदीयो मृदुतरमाम्रदलं

---

(१) लोलोष्ठ। (२) पिचुमर्द।

चूतपल्लवं दासेरक उष्ट्रः पुरा निषादैर्म्लेच्छैः संवलितं युक्तं विप्रं पतगराट् गरुत्मानिव निर्जगार उद्गीर्णवान्। पुरा किल कुतश्चित्कारणान्म्लेच्छभक्षणे तैः सहाऽन्तः प्रविश्य गलं दहन्तं विप्रं गरुड उज्जगारेति पौराणिकी कथात्रानुसन्धेया॥ ६६ ॥

**स्पष्टं बहिः स्थितवतेऽपि निवेदयन्तश्चेष्टाविशेषमनुजीविजनाय राज्ञाम् ॥**
**वैतालिकाः स्फुटपदप्रकटार्थमुच्चैर्भोगावलिं(१) कलगिरोऽवसरेषु पेठुः ६७**

**स्पष्टमिति ॥ वैतालिकाः मङ्गलपाठकाः मागधाख्याः अवसरेषु समयेषु राज्ञां भूपालानां भोगावलिं व्यवहारानुरूपं काव्यं गाथाप्रभृतिकं पेठुः उच्चारयामासुः अभिजगदुः, उच्चैः उच्चैःस्वरं यथा भवति तथा। पुनः कथं स्फुटपदप्रकटार्थं यथा भवति तथा स्फुटैरश्लिष्टैः पदैर्वर्णैः प्रकटः स्फुटः अर्थः अभिधेयं यत्र तत्। अत एव किंलक्षणाः वैतालिकाः बहिः स्थितवतेऽपि बाह्यस्थिताय अनुजीविजनाय सेवकलोकाय राज्ञां चेष्टाविशेषं मुखक्षालनदेवतास्मरणताम्बूलादानादिकं स्पष्टं निःसन्देहं निवेदयन्तः कथयन्तः, पुनः किंविधाः वैतालिकाः कला मधुरा गिरो वाचो येषां ते मधुरस्वराः। यत्र काले राज्ञो नानाविधाः क्रिया देवताराधनभोजनादिकाः कुर्वाणस्य तदनुरूपाः गाथादयः पठ्यन्ते सा भोगावली उच्यते। अतश्च वाक्यार्थमवगम्य निश्चितं मनुजेश्वर इदं कुरुत इति निःसन्देहमनुजीविनो जानन्ति। 'वैतालिका बोधकराश्चाक्रिका घाण्टिकार्थकाः' इत्यमरः ॥ ६७ ॥**

स्पष्टमिति ॥ बहिः स्थितवतेऽप्यनुजीविजनाय। राज्ञोऽवसरकाङ्क्षिण इति भावः। राज्ञां चेष्टाविशेषं तत्कालोचितचारित्रविशेषं स्पष्टं निवेदयन्तः। तद्व्यञ्जकप्रबन्धपाठैरिति भावः। कलगिरो मधुरवाचो वैतालिका मङ्गलपाठकाः अवसरेषु तद्वेलासु स्फुटैः प्रसिद्धैः पदैः प्रकटः प्रकाशोऽर्थोऽभिधेयं यस्मिन्कर्मणि तद्यथा तथा उच्चैर्भोगावलीः प्रबन्धान्पेठुः पठन्ति स्म। 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाभ्यासलोपौ।

**उन्नम्रताम्रपटमण्डपमण्डितं तदानीलनागकुलसङ्कुलमाबभासे ॥**
**सन्ध्यांशुभिन्नघनकर्बुरितान्तरिक्ष(२)लक्ष्मीविडम्बि शिबिरं शिवकीर्तनस्य ॥**

**उन्नम्रेति ॥ शिवं श्रेयस्करं कीर्तनं नामोच्चारणं यस्य सः तस्य शिवकीर्तनस्य श्रीकृष्णस्य तत्प्रसिद्धं शिबिरं वस्त्रगृहमाबभासे शुशुभे। किंभूतं शिबिरम् उन्नम्रताम्रपटमण्डपमण्डितम् उन्नम्राणि उत्तानानि ताम्राणि आरक्तानि यानि पटमण्डपानि वस्त्रवेश्मानि तैर्मण्डितं शोभितं, पुनः किंभूतं शिबिरम् आनीलनागकुलसङ्कुलम् आनीलैः समन्तात् कृष्णैः नागकुलैः करियूथैः सङ्कुलं व्याप्तम्। अत एव पुनः किंविधं शिबिरं सन्ध्यांशुभिन्नघनकर्बुरिताऽन्तरिक्षलक्ष्मीविडम्बि सन्ध्यायां येंऽशवो रश्मयः तैर्भिन्नाः छुरिता ये घना मेघाः तैः कर्बुरिता या अन्तरिक्षलक्ष्मीः आकाशशोभा तां विडम्बयति अनुकरोतीति तथोक्तम्। पटमण्डपानां सन्ध्यांशवो लौहित्यादुपमानं, गजानां च अभ्राणि, शिबिरस्य खमुपमानम्। 'ताम्रं शुल्बे तथा रक्ते', 'मण्डपोऽस्त्री जनाश्रयः', 'सङ्कुलं निचिते कीर्णे' इत्यमरः ॥ ६८ ॥**

**उन्नम्रेति** ॥ उन्नम्रैरुन्नतैस्ताम्रैर्धातुरक्तैः पटमण्डपैर्दूष्यैर्मण्डितम् आसमन्तान्नीलैर्नागकुलैर्गजसङ्घैः सङ्कुलम्। अत एव सन्ध्यांशुभिन्नैः सन्ध्यारागसम्भिन्नैर्घनैर्मेघैः कर्बुरितस्य चित्रीकृतस्यान्तरीक्षस्य लक्ष्मीं विडम्बयत्यनुकरोतीति तत्तथोक्तं शिवकीर्तनस्य मङ्गलकीर्तेः कृष्णस्य तच्छिबिरं कटकमाबभासे। मनोहरमभूदित्यर्थः। उपमालङ्कारः ॥ ६८ ॥

(१) भोगावलीः। (२) ०न्तरीक्ष।

**धरस्योद्धर्ताऽसि त्वमिति ननु सर्वत्र जगति**
**प्रतीतस्तत्किं मामतिभरमधः प्रापिपयिषुः ॥**
**उपालब्धेवोच्चैर्गिरिपतिरिति श्रीपतिमसौ**
**बलाक्रान्तः क्रीडद्द्विरदमथितोर्वीरुहरवैः ॥ ६९ ॥**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये पञ्चमः सर्गः ॥ ५ ॥

**धरस्येति** ॥ असौ गिरिपतिः रैवतकाचलः श्रीपतिं लक्ष्मीनाथं श्रीकृष्णमुच्चैः उन्नतस्वरं यथा भवत्येवम् इति अमुना प्रकारेण उपालब्धेव सप्रणयरोषमुक्तवानिव । उपालम्भनपूर्वकमुक्तवानिवेत्यर्थः । कैः कृत्वा क्रीडद्द्विरदमथितोर्वीरुहरवैः क्रीडन्तो रममाणा ये द्विरदाः हस्तिनस्तैर्मथिता भग्ना ये उर्वीरुहास्तरवः तेषां रवाः शब्दाः तैः । स्फोटनशब्दैरित्यर्थः । इतीति किं-नन्विति सम्बोधने, हे भगवन् ! त्वं सर्वत्र जगति त्रिभुवने इति प्रतीतोऽसि इति विख्यातो वर्तसे-'धरस्य पर्वतस्य गोवर्धनाख्यस्य त्वमुद्धर्ता परित्राता', तर्त्तर्हि माम् अधः किं प्रापिपयिषुरसि अधः पाताले किं प्रापयितुकामोऽसि । किंभूतं माम् अतिभरं महाभरयुक्तम्, किंभूतः गिरिपतिः बलाक्रान्तः सैन्यपीडितः ॥ ६९ ॥

इति शिशुपालवधे माघकाव्ये वल्लभविरचितायां सन्देहविषौषध्यां
सेनानिवेशो नाम पञ्चमः सर्गः ।

---

**धरस्येति** ॥ बलैः सैन्यैराक्रान्तो गिरिपती रैवतकः क्रीडद्भिर्विहरमाणैर्द्विरदैर्मथितानां भग्नानामुर्वीरुहाणां वृक्षाणां रवैः शब्दैर्निमित्तेन श्रीपतिं हरिम् । नन्वङ्ग ! त्वं धरस्य पर्वतस्योद्धर्ता उद्धारकोऽसीति सर्वत्र जगति प्रतीतः प्रसिद्धः । गोवर्धनोद्धारणादिति भावः । तर्त्तर्हि किं किमर्थमतिभरमतिभारवन्त मामधः प्रापिपयिषुः प्रापयितुमिच्छुरसि । प्रापयतेः सन्नन्तादुप्रत्ययः । इत्युच्चैरुपालब्धेव आक्रुक्षदिवेत्युत्प्रेक्षा । उपाङ्पूर्वाल्लभेर्लुङ्, 'एकाच उपदेशे—' इति नेट् । 'झषस्तथोर्धोऽधः' इति तकारस्य धकारः 'धि च' इति सिचः सकारलोपः । शिखरिणी वृत्तम् । 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति लक्षणात् ॥६९॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवधकाव्यव्याख्याने
सर्वङ्कषाख्ये पञ्चमः सर्गः ॥ ५ ॥

---

## षष्ठः सर्गः ।

**अथ रिरंसुममुं युगपद्गिरौ कृतयथास्वतरुप्रसवश्रिया ॥**
**ऋतुगणेन निषेवितुमादधे भुवि पदं विपदन्तकृतं सताम् ॥ १ ॥**

**अथेति** ॥ अथाऽनन्तरं गिरौ रैवतके भुवि पृथिव्याम् ऋतुगणेन वसन्तादिसमूहेन युगपत् समकालं पदमादधे स्थाने कृतम् । किं कर्तुम् अमुं श्रीकृष्णं निषेवितुमाराधयितुं, किंलक्षणममुं रिरंसुं, रन्तुमिच्छति रिरंसते रिरंसत इति रिरंसुः तं क्रीडितुकामं, किंलक्षणेन ऋतुगणेन कृतयथास्वतरुप्रसवश्रिया कृता निष्पादिता यथास्वं निजनिजपुष्पाणामनतिक्रमेण तरुप्रसवानां भूरुहपल्लवपुष्पाणां श्रीः समृद्धिर्येन सः कृतयथास्वतरुप्रसवश्रीस्तेन । यानि

यस्यात्मीयचिन्हानि तानि तानि तेनाविर्भावितानीत्यर्थः । अथ वा कया कृतयथास्व-तरुप्रसवश्रिया कृता याऽसौ स्वतरुप्रसवश्रीश्च तया आत्मीयवृक्षकुसुमशोभया, निषेवितुमिति योज्यम् । पुनः किंभूतममुं सतां पुण्यवतां विपदां कष्टानामन्तं क्षयं करोति विधत्ते इति विपदन्तकृत् तम् । जननमरणाद्यापदवसानकरमित्यर्थः।ऋतुगणेन भुवि पदमादधे इत्युक्तम्, ते च ऋतवो न प्रत्यक्षग्राह्याः, अपि तु कार्यानुमेया एव । तत्र यत् यस्य कार्यं तदाह । युगपद्युक्तं, न च तद्वर्णयितुं युगपच्छक्यम् । तत्तस्मात् क्रमेण तावत् प्रथमम् ऋतुराजस्य वसन्तस्य वर्णनमाह ।'सहैकदा च युगपत्', 'प्रसवं पुष्पफलयोः','पदं व्यवस्थितत्राणस्थान-लक्ष्माऽङ्घ्रिवस्तुषु' । 'विपत्यां विपदापदौ', 'अन्तोऽध्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके', 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' इति सर्वत्राऽप्यमरः ॥ १ ॥

अथ ऋतुवर्णनं प्रस्तौति—

अथेति ॥ अथ सेनानिवेशानन्तरं गिरौ रैवतके रिरंसुं रन्तुमिच्छुम् । रमः सन्नन्तादुप्रत्ययः । एतेन ऋतुवर्णनप्रवृत्तेः प्रभुचित्तवृत्तिज्ञानपूर्वकत्वमुक्तम् । सतां साधूनां विपदामन्तं करोतीति विपदन्तकृत्, क्विप्, तं विपदन्तकृतम् । सेव्यमिति भावः । अमुं हरिं निषेवितुं स्वतरून् स्वस्वनियतवृक्षाननतिक्रम्य यथास्वतरु । यथार्थेऽव्ययीभावः । यथास्वतरु स्थिता प्रसवश्रीः पुष्पफलसम्पत्तिः यथास्वतरुप्रसवश्रीः । 'प्रसवस्तु फले पुष्पे' इत्यमरः । शाकपार्थिवादिषु द्रष्टव्यः । सा कृता येन तेन कृतयथास्वतरुप्रसव-श्रिया । यथास्वतरुकृतप्रसवश्रियेत्यर्थः । ऋतुगणेन युगपद् भुवि पदमादधे आहितम् । युगपदृतुगणः प्रादु-रभूदित्यर्थः । नह्यवसरं सेवकाः क्षिपन्तीति भावः । अत्र सर्गे सर्वत्र यमकं शब्दालङ्कारः । तल्लक्षणं तूक्तं चतुर्थे । अर्थालङ्कारस्तु यथासम्भवमूह्यः । अस्मिन्सर्गे द्रुतविलम्बितं वृत्तम् । 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् ॥ १ ॥

**नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् ॥**
**मृदुलतान्तलताऽन्तमलोकयत्स सुरभिं सुरभिं सुमनोभरैः ॥ २ ॥**

नवपलाशेति ॥ स भगवान् पुरः प्रथममग्रे सुरभिं वसन्तमलोकयत् आलोकया-मास । किंभूतं वसन्तं सुरभिं सुगन्धिं, कैः कृत्वा सुमनोभरैः सुमनसां पुष्पाणां भराः अति-शयाः तैः कुसुमसमृद्धिभिः, पुनः किंभूतं सुरभिं नवपलाशपलाशवनं नवानि नूत-नानि पलाशानि पत्राणि येषु तानि नवपलाशानि नूतनपल्लवानि पलाशवनानि किंशुक-काननानि यस्मिन्नसौ तथातं, पुनः किंभूतं स्फुटपरागपरागतपङ्कजं स्फुटानि विकसितानि परागेण परागतानि मकरन्देन संयुक्तानि पङ्कजानि कमलानि यस्मिन् सः तम् । अथ वा स्फुटपरागाणि प्रकटरेणूनि परागतानि सुनिष्पन्नानि पङ्कजानि यस्मिन् सः तम् । अपरं किंभूतं सुरभिं मृदुलतान्तलताऽन्तं कोमलविस्तीर्णलताप्रान्तयुक्तं, मृदुलाः कोमलाः अत एव तान्ताः म्लानाः लतान्ता लताप्रान्ता यस्मिन् सः तम् । केचित् तान्तं विस्तीर्णं वदन्ति ॥

अथ लोकवेदयोः प्राथम्येन व्यवहाराद्वसन्तमादौ वर्णयति—

नवेति ॥ स हरिः पुरोऽग्रे प्रथमं वा नवपलाशानि नूतनपर्णानि पलाशवनानि किंशुककाननानि य-स्मिंस्तं नवपलाशपलाशवनम् । बहुव्रीहिपूर्वपदो बहुव्रीहिः । 'पलाशः किंशुके पत्रे पलाशम्' इति विश्वः । स्फुटानि विकचानि परागै रजोभिः परागतानि व्याप्तानि च पङ्कजानि यस्मिंस्तं स्फुटपरागपरागत-पङ्कजं, मृदुलाः कोमला अत एव तान्ताः आतपसमये किञ्चिन्म्लाना लतान्ताः पल्लवा य-स्मिंस्तं मृदुलतान्तलताऽन्तं सुमनोभरैः पुष्पसमृद्धिभिः सुरभिं सुगन्धिं सुरभिं वसन्तमलोकयदपश्यत् ।

'सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः
सुगन्धौ च मनोज्ञे च वाच्यवत्-'

इति विश्वः । इह प्रातिपादं प्रथमाक्षरद्वयात्परतोऽक्षरत्रयावृत्तिरूपयमकप्रक्रमाच्चतुर्थपादेऽपि तदेक यमकम् । एकस्मादप्यपरमिति सजातीयसंसृष्टिः ॥ २ ॥

**विलुलिताऽलकसंहतिरामृशन्मृगदृशां श्रमवारि ललाटजम् ॥**
**तनुतरङ्गततीः(१) सरसां दलत्कुवलयं वलयन्मरुदाववौ ॥ ३ ॥**

**विलुलितेति ॥** वसन्ते हि मलयमारुतो वाति, अतश्च मरुत् आववौ मलयानिल-उवाह । किंभूतो मरुत् विलुलितालकसंहतिः विलुलिता आलोडिता अलकसंहतिः ललाट-केशपङ्क्तिर्येन स, इति मार्दवोक्तिः । किं कुर्वन् मृगदृशां सारङ्गाक्षीणां ललाटजं ललाटो-त्थं श्रमवारि घर्माम्बु आमृशन् स्फेटयन्, एतेन शान्तत्वोक्तिः । पुनः किं कुर्वन् सरसां तडागानां तनुतरङ्गततीः सूक्ष्मकल्लोलमालाः वलयन् भ्रमयन्, कथं यथा भवति तथा वलयन् दलत्कुवलयं यथा भवति तथा दलन्ति विकस्वराणि कुवलयानि उत्पलानि यत्र तत, इति सुगन्धित्वोक्तिः । 'अलकाश्चूर्णकुन्तलाः', 'ललाटमलिकं गोधिः' ॥ ३ ॥

**बिलुलितेति ॥** विलुलितालकसंहतिर्विधुतचिकुरनिकरः सन्मृगदृशां ललाटजं श्रमवारि स्वेदमामृशन् परिमृजन् । मन्द इति भावः । सरसां तनुतरङ्गततिं, दलन्ति विकसन्ति कुवलयानि यस्मिन्कर्मणि तद्यथा तथा वलयंश्चालयन् । शीतल इति भावः । मरुद्वसन्तवायुराववौ आवाति स्म ॥ ३ ॥

**तुलयति स्म विलोचनतारकाः कुरबकस्तबकव्यतिषङ्गिणि ॥**
**गुणवदाश्रयलब्धगुणोदये मलिनिमाऽलिनि माधवयोषिताम् ॥ ४ ॥**

**तुलयति स्मेति ॥** अलिनि भ्रमरे मलिनिमा कृष्णता माधवयोषितां यादवनारी-णां विलोचनतारकाः नयनकनीनिकाः तुलयति स्म अनुचकार । किंलक्षणेऽलिनि कुरबक-स्तबकव्यतिषङ्गिणि कुरबकाः वृक्षविशेषास्तेषां स्तबकाः पुष्पगुच्छाः तत्र व्यतिषङ्गः सम्पर्कः संयोगो विद्यते यस्य सः तस्मिन्, अपरं किंभूतेऽलिनि गुणवदाश्रयलब्धगुणोदये गुणवांश्चासौ आश्रयश्च गुणवदाश्रयः तेन लब्धः गुणानां सितवर्णकुरबकसम्पर्केण प्राप्तः उदयो येन सः तस्मिन् । यद्वा गुणवदाश्रयेण सितवर्णकुरबकसम्पर्केण लब्धः प्राप्तः गुणस्य कार्ष्ण्यस्योदयः आधिक्यं येन सः तस्मिन् । सिते हि कृष्णं नितरां राजते, अत एव तारका अनुचकार । लोचनानां कुरबक उपमानं, तारकाणां भृङ्गाः । 'तारकाऽक्ष्णः कनी-निका', 'स्तबको गुच्छको गुच्छः' । अलिन्शब्द इन्नन्तः ॥ ४ ॥

**तुलयतीति ॥** कुरबकस्तबके व्यतिषङ्गिणि लग्ने अत एव गुणवतः शुक्लगुणस्य कुरबकस्तबकस्या-श्रयेणाश्रयणेन लब्धो गुणोदयो निजनीलिमगुणोत्कर्षो येन तस्मिन् । धवले नीलस्य स्फुरणादिति भावः । अलिनि भ्रमरे मलिनस्य भावो मलिनिमा कृष्णत्वं माधवयोषितां हरिवधूनां विलोचनानां तारकाः कनी-निकाः । 'तारकाक्ष्णः कनीनिका' इत्यमरः । तुलयति स्म समीचकार । तद्वद्बभावित्यर्थः । तुलाशब्दा-त्सदृशपर्यायात् 'तत्करोति—' इति ण्यन्तात् 'लट् स्मे' इति भूते लट् । उपमालङ्कारः ॥ ४ ॥

**स्फुटमिवोज्ज्वलकाञ्चनकान्तिभिर्युतमशोकमशोभत चम्पकैः ॥**
**विरहिणां हृदयस्य भिदाभृतः कपिशितं पिशितं मदनाग्निना ॥ ५ ॥**

**स्फुटमिवेति ॥** अशोकमशोकतरुकुसुमं स्फुटमत्यर्थमशोभत रराज । किंभूतमशोकं चम्पकैः चम्पकतरुपुष्पैः युतं सम्बद्धं, किंलक्षणैश्चम्पकैः उज्ज्वलकाञ्चनकान्तिभिः भास्वर-हाटकवत् पिङ्गैः, उज्ज्वलं दाहोत्तीर्णं यत्काञ्चनं तस्यैव कान्तिः शोभा यस्य तानि तैः,

---

(१) ततिं ।

पुनः किंभूतं चम्पकम्, उत्प्रेक्षते-विरहिणां वियोगिनां हृदयस्य पिशितमिव मांसमिव । किंभूतस्य हृदयस्य भिदां विदारणं बिभर्ति भिदाभृत् तस्य स्फुटितस्य, किंभूतं पिशितं मदनाग्निना कपिशितं कन्दर्पानलेन पिशङ्गीकृतम् । विरहिभिस्तावदवश्यमेव मर्तव्यम् । अतश्च लोका एवमाहुः—यच्चम्पकराशिः कामाग्निः, अशोकं च पिशितम् । इवशब्दोऽत्र भिन्नक्रमे ॥ ५ ॥

स्फुटमिति ॥ उज्ज्वलकाञ्चनकान्तिभिः शुद्धसुवर्णप्रभैश्चम्पकैर्युतम् । चम्पकसमूहमध्यगतमित्यर्थः । स्फुटं विकचमशोकपुष्पं, भिदा भेदः । षिद्भिदादिभ्योऽङ् । तां बिभर्ति यत्तस्य भिदाभृतो भिन्नस्य विरहिणां हृदयस्य हृदयपिण्डस्य सम्बन्धि मदनाग्निना कपिशितं कपिशीकृतं पिशितं मांसमिवाऽशोभतेत्युत्प्रेक्षा ॥५॥

**स्मरहुताशनमुर्मुरचूर्णतां दधुरिवाम्रवणस्य रजःकणाः ॥**
**निपतिताः परितः पथिकव्रजानुपरि ते परितेपुरतो भृशम् ॥ ६ ॥**

**स्मरहुताशनेति** ॥ आम्रवणस्य रजःकणाः सहकारकाननस्य परागव्रजाः पथिकव्रजान् पान्थसमूहान् उपरि परितः समन्तान्निपतिताः संलग्नाः सन्तः स्मरहुताशनमुर्मुरचूर्णतामिव दधुः कामाग्निचूर्णत्वमिव धारयामासुः । अतोऽस्मात्कारणात् पथिकव्रजान् पान्थसमूहान् भृशमत्यर्थं परितेपुः पीडयामासुः । यदा हि ते अग्निचूर्णत्वं न अबिभरुः, तत्कथं पान्थजनानां शिरस्सु पतिताः परितापं कुर्युः । तस्मात्तैः पतितैः ते सन्तप्ताः, तदा नूनं ते स्मराग्निमुर्मुरचूर्णतामिव दधुरिति वाक्यार्थः । यद्वा अतोऽस्मात्कारणात् ते पथिकव्रजाः भृशमत्यर्थं परितेपुः परितापं प्रापुरिति ॥ ६ ॥

स्महुताशनेति ॥ आम्रवणस्य चूतवनस्य । 'आम्रश्चूतो रसालोऽसौ' इत्यमरः । 'प्रनिरन्तःशर–इत्यादिना वननकारस्य णत्वम् । रजःकणाः परागचूर्णाः, स्मरहुताशनः कामाग्निः स एव मुर्मुरः तुषाग्निः । 'मुर्मुरस्तु तुषानल' इति वैजयन्ती । तस्य चूर्णतां दधुरि वेत्युत्प्रेक्षा । अतो मुर्मुरचूर्णत्वादेव परित उपरि निपतितास्ते रजः कणाः, पन्थानं गच्छन्तीति पाथिकाः । 'पथः कन्' इति कन्प्रत्ययः । तेषां व्रजान्भृशं परि तेपुः परितापयामासुः । अतो मुर्मुरचूर्णत्वोत्प्रेक्षणमिति भावः ॥ ६ ॥

**रतिपतिप्रहितेव कृतक्रुधः प्रियतमेषु वधूरनुनायिका ॥**
**बकुलपुष्परसाऽऽसवपेशलध्वनिरगान्निरगान्मधुपावलिः ॥ ७ ॥**

**रतिपतीति** ॥ मधुपावलिः भृङ्गमाला अगात् वृक्षान्निरगात् निःससार, किंभूता भृङ्गावलिः बकुलपुष्परसाऽऽसवपेशलध्वनिः बकुलस्य वृक्षविशेषस्य पुष्पाणि तेषां रसः बकुलपुष्परसः केसरतरुकुसुममकरन्दः स एव आसवः पानं तेन पेशलो मधुरः ध्वनिर्यस्याः सा । किमर्थं वृक्षान्निःसृतेत्याह—किंभूता भृङ्गावलिः प्रियतमेषु भर्तृषु विषये निमित्ते वा वधूः मानिनीः अनुनायिका अनुनेत्री पत्नीः प्रसादयितुं समर्था । अलिरुतं श्रुत्वा मनस्विन्यः प्रसीदन्ति । उत्प्रेक्ष्यते—रतिपतिप्रहितेव वधूरनुनेतुं रतिपतिना कन्दर्पेण प्रहिता प्रेरितेव विसर्जितेव । किंभूता वधूः कृतक्रुधः विहितकोपाः ॥ ७ ॥

रतिपतीति ॥ प्रियतमेषु विषये कृतक्रुधः कृतरुषः । 'प्रतिघा रुट्क्रुधौ स्त्रियाम्' इत्यमरः । वधूरनुनायिका कुपितस्त्रीरनुनेष्यन्ती । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति भविष्यदर्थे ण्वुल् प्रत्ययः । 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठीप्रतिषेधाद्वधूरिति द्वितीया । रतिपतिना कामेन प्रहिता प्रेषितेव । तद्ध्वनिश्रवणानन्तरमेव तासां कोपत्यागदर्शनादियमुत्प्रेक्षा । बकुलपुष्पाणां रसो मकरन्दः स एवासवस्तेन तत्पानेन पेशलध्वनिर्मधुरस्वरा मधुपावलिः कर्त्री न गच्छतीत्यगाद् वृक्षान्निरगान्निर्गता । 'इणो गा लुङि' इति गादेशः ॥ ७ ॥

प्रियसखीसदृशं प्रतिबोधिताः किमपि काम्यगिरा परपुष्टया ॥
प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयाऽदुरयाचितमङ्गनाः ॥ ८ ॥

**प्रियसखीति** ॥ अङ्गनाः कामिन्यः प्रियतमाय भर्त्रे अयाचितमपि अप्रार्थितमपि वपुः शरीरम् अदुः दत्तवत्यः । किंभूताः अङ्गनाः परपुष्टया कोकिलया किमपि अव्यक्ताक्षरं यथा भवति तथा प्रतिबोधिताः प्रेरिताः, कथं यथा भवति तथा प्रियसखीसदृशं यथा स्यात्तथा, प्रियसख्या सदृशमिति । किंभूतया परपुष्टया काम्यगिरा मधुरस्वरया, पुनः किंभूतया गुरुमत्सरच्छिदुरया प्रवृद्धमदरोषविनाशिन्या । आदौ हि प्रार्थिता अपि न उन्मुखाः, कोकिलानुवाशितेन रोषं जहुः । अतो ज्ञायते नूनमनया किमपि प्रतिबोधिताः, अन्यथा कुतोऽधुनैव नीरोषाः सम्पन्ना इत्यर्थः । प्रियसखीसदृशं प्रियसख्या तुल्यं यथा भवति एवम् । यथा काचिन्नायिका प्रियसख्या प्रतिबोधिता सती प्रियतमाय वपुर्ददाति ॥ ८ ॥

**प्रियसखीति** ॥ गुरोर्महतो मत्सरस्य द्वेषस्य छिदुरया छेत्र्या । विदिभिदिच्छिदेः कुरच् । काम्यगिरा मधुरवाचा परपुष्टया कोकिलया प्रियसख्या सदृशं यथा तथा किमपि परैर्दुर्बोधं रहस्यं हितं प्रतिबोधिता उपदिष्टा अङ्गनाः प्रियतमाय अयाचितमप्रार्थितमेव वपुर्निजाङ्गमदुरर्पयामासुः । ददातेर्लुङि 'गातिस्था-' इत्यादिना सिचो लुक् । कोकिलाकूजितश्रवणानन्तरमेवाङ्गार्पणादौत्सुक्यहेतुकार्यानन्तर्यायेन तथा किमपि बोधिता इत्युत्प्रेक्षा ॥ ८ ॥

मधुकरैरववाद(१)करैरिव स्मृतिभुवः पथिका हरिणा इव ॥
कलतया वचसः परिवादिनीस्वरजिता रजिता वशमाययुः ॥ ९ ॥

**मधुकरैरिति** ॥ पथिकाः पान्थाः स्मृतिभुवः कन्दर्पस्य वशमाययुः अधीनतां जग्मुः । स्मृतेः स्मरणात् भवतीति स्मृतिभूः तस्य । किंभूताः पथिकाः मधुकरैर्भृङ्गैः रजिता हतचेतसः कृताः । अलिगुञ्जारवं श्रुत्वा पथिकाः कामिनीः सस्मरुरित्यर्थः । कया रजिताः वचसः कलतया वाण्या मधुरतया, किंलक्षणया वचसः कलतया परिवादिनीस्वरजिता परिवादिन्याः वीणायाः स्वरं झङ्कारध्वनिं जयतीति जित् तया स्वरजिता, मधुकरः कैरिव अववादकरैः आज्ञाकारकैरिव, पथिकाः के इव हरिणा इव मृगा इव । यथा अववादकरैर्गायनैः रजिताः सन्तो हरिणाः व्याधस्य वशमायत्तत्वं यान्ति, कया हृताः वचसः कलतया गीतध्वनिना । 'अववादस्तु निन्दाऽऽज्ञे', 'विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी' इत्यमरः ॥ ९ ॥

**मधुकरैरिति** ॥ मधुकरैः कर्तृभिः, अपवादं मृगवञ्चनाय घण्टादिकूजितवाद्यं कुर्वन्तीत्यपवादकरा व्याधास्तैरिव पथिका हरिणा इव परिवादिनीस्वरजिता वीणाविशेषध्वनिजयिन्या । 'सप्तभिः परिवादिनी' इत्यमरः । जेः क्विपि तुक् । वचसो गीतस्य कलतया माधुर्येण करणेन रजिताः, आकृष्टाः सन्त इत्यर्थः । रञ्जेर्ण्यन्तात्कर्मणि क्तः । 'रञ्जेर्णौ मृगरमणे—' इति उपधानकारलोपः । इहोपमानमृगसादृश्यादौपचारिकं मृगत्वमुपमेयेषु पथिकेष्वस्तीत्यविरोधः । स्मृतिभुवः स्मरस्य मृगपातचिन्ताविषयत्वान्मृगग्रहणगर्तदेशस्य च वशमाययुः । यथा व्याधगानासक्त्या गर्ते मृगाः पतन्ति तद्वन्मधुकरहुङ्काराकृष्टाः पान्थाः स्मरपारवश्यं भेजुरित्यर्थः । अनेकैवेयमुपमा ॥ ९ ॥

समभिसृत्य रसादवलम्बितः प्रमदया कुसुमाऽवचिकीर्षया(२) ॥
अविनमन्न रराज वृथोच्चकैरनृतया नृतया वनपादपः ॥ १० ॥

(१) ०रपवाद । (२) ०चिचीषया ।

समभिसृत्येति ॥ कश्चित् वनपादपः काननतरुः अविनमन् सन् न रराज न शुशुभे । किंभूतः वनपादपः प्रमदया नायिकया रसात् रागात् समभिसृत्य समागत्य अवलम्बितः आश्रितः, परं न प्रणतः पुनर्वृक्षो न नम्रीभूतः । अत एव न शुशुभे । यतः कीदृशः वृथा उच्चकैः निरर्थकमुन्नतः । पुरुषस्य निरर्थकमुन्नतत्वमेतदेव, यद्रभसागतमानिनीप्रह्वत्वं प्राञ्जलत्वं नवत्वमकठोरत्वम् । कया अवलम्बितः कुसुमावचिकीषया पुष्पाणामवचेतुमिच्छया पुष्पत्रोटनेच्छया । किंभूतः वनपादपः अनृतया असत्यया नृतया पुरुषतया उपलक्षितः । असत्येन पौरुषेणोपलक्षित इत्यर्थः । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' । न ऋता अनृता तया । नुः भावः नृता तया नृतया पौरुषेण ॥ १० ॥

समभिसृत्येति ॥ प्रमदया कर्त्र्या कुसुमानामवचिचीषयाऽवचेतुमिच्छया । रिरंसयेति भावः । चिनोतेः सन्नन्तात् 'अप्रत्ययात्' इति स्त्रियामकारप्रत्ययः । 'विभाषा चेः' इति विकल्पात्कुत्वाभावः । रसाद्रागात्समभिसृत्य समागत्यावलम्बितो हस्तेन गृहीतस्तथाप्यविनमन् वशमगच्छन् अत एव वृथोच्चकैर्व्यर्थमुन्नतो वनपादपः । न तु नागारिक इति भावः । न ऋतेत्यनृता असत्या तया अनृतया नुर्भावो नृता तया नृतया पुंस्त्वेन रराज । 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः' इत्यमरः । यः कान्ताकरगृहीतोऽपि न द्रवति स नपुंसक एव । लौकिकस्तु पुंस्त्वव्यपदेशो मिथ्यैवेति भावः ॥ १० ॥

त्रिभिर्विशेषकम्—

इदमपास्य विरागि परागिणीरलिकदम्बकमम्बुरुहां ततीः ॥
स्तनभरेण जितस्तबकाऽऽनमन्नवलते! वलतेऽभिमुखं तव ॥ ११ ॥
सुरभिणि श्वसिते दधतस्तृषं नवसुधामधुरे च तवाऽधरे ॥
अलमलेरिव गन्धरसावमू मम न सौमनसौ मनसो मुदे ॥ १२ ॥
इति वदन्त(१)मनन्तरमङ्गना भुजयुगोन्नमनोच्चतरस्तनी ॥
प्रणयिनं रभसादुदरश्रियावलिभयाऽलिभयादभिषस्वजे(२) ॥ १३ ॥

इदमपास्येत्यादि ॥ इतीति ॥ काचिदङ्गना नायिका प्रणयिनं कान्तं रभसात् औत्सुक्येन अलिभयात् भृङ्गत्रासात् अभिषस्वजे आलिलिङ्ग । किंभूता अङ्गना भुजयुगोन्नमनोच्चतरस्तनी आलिङ्गनवशात् भुजयुगस्य बाहुयुग्मस्योन्नमनेन उच्चैः करणेन उच्चतरौ अत्युच्चौ अभ्युन्नतौ स्तनौ यस्याः सा, पुनः किंभूता उदरश्रिया मध्यलक्ष्म्या उपलक्षिता, किंभूतया उदरश्रिया अवलिभया वलिभिः वलित्रयेण त्रिवलीतरङ्गेण भाति शोभते इति वलिभा न वलिभा अवलिभा तया त्रिवलीरहितया, कथं यथा भवति आलिलिङ्ग अनन्तरं निर्विवरं गाढं यथा स्यात्तथा, किंभूतं प्रणयिनम् इति वदन्तमेवं ब्रुवाणम् । अलेर्भयमलिभयं तस्मात् । इदमिति ॥ इतीति किम्—हे स्तनभरेण जितस्तबकानमन्नवलते ! इदमलिकदम्बकं भ्रमरवृन्दं तवाभिमुखं संमुखं वलते धावते स्तनभरेण कुचाभोगेन जितास्तिरस्कृताः स्तबकैः कुसुमगुच्छैः आनमन्त्यो नम्राः नवाः सरसाः लता व्रतत्यो यया सा जितस्तबकानमन्नवलता तस्याः सम्बोधने हे नवलते !। स्तनयोः स्तबका उपमानम्, अङ्गनायास्तु लता । किं कृत्वा धावति अम्बुरुहां ततीः कमलानां राजीः अपास्य त्यक्त्वा, किंविधाः ततीः परागः पुष्परेणुर्विद्यते यासु ताः परागिण्यस्ताः पुष्परेणुयुक्ताः । ताः विहाय त्वन्मुखं प्रत्यागमने कारणमाह—किंभूतमलिकदम्बकं विरागोऽस्यास्तीति विरागि कमलवना-

---

(१) गदन्त० । (२) ०दिव सस्वजे ।

दुद्विग्नम् । 'परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि' । 'निकुरम्बं कदम्बकम्' इत्यमरः । सुरभिणीति ॥ पुनः हे स्तनभरेण जितस्तबकानमन्नवलते ! अमू एतौ सौमनसौ पौष्पौ गन्धरसौ रसमधुनी अलमतिशयेन मम मनसः चित्तस्य मुदे हर्षाय न भवतः । सुमनसां पुष्पाणामिमौ सौमनसौ ।

आपः सुमनसो वर्षा अप्सरःसिकताः समाः ।
एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रयम् ॥

किंलक्षणस्य मम तव श्वसिते मुखमारुते तृषं दधतः तृष्णां धारयतः, किंभूते श्वसिते सुरभिणि सुगन्धिनि । न केवलं श्वसिते, तव अधरे ओष्ठे च तृषं दधतः, किंभूते अधरे नव-सुधावत् मधुरस्तस्मिन् प्रत्यग्रामृतस्वादे। यः किल स्वादुतरे भोजने अभिलाषं धत्ते, न तस्य अमिष्टमशनं रोचते । कस्येव अलेरिव भ्रमरस्येव । यथा त्वत्संमुखमागच्छतो मधुपस्य तव श्वसिते सौगन्ध्ययुते मुखमारुते पल्लवभ्रान्त्या अधरे च तृषं दधतः सतः सौमनसौ गन्धरसौ चित्तस्य परितुष्ट्यै न भवतः । तव मुखमारुतेन पुष्पस्य गन्धो जितः, अधरेण च पुष्परस-आसवो जितः । 'शृङ्गारादौ रसे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । इति वदन्तं प्रियं काचिदङ्गना भ्रमरत्रासान्निर्विविरमालिलिङ्ग । विशेषकम् ॥ ११-१३ ॥

अथ कश्चित्स्वयङ्ग्रहाश्लेषसुखार्थं प्रियामलिपातेन भीषयंस्त्रिभिः कुलकेनाह—

इदमपास्येति ॥ स्तनभरेण साधनेन जिताभ्यां स्तबकाभ्यामानमन्ती नवलता यया सा तथोक्ता तस्याः सम्बुद्धिर्जितस्तबकानमन्नवलते! स्तबकानमन्नवलतोपमे ! इत्यर्थः । अत एवेदं विरागि विरक्तिमदलि-कदम्बकं परागिणीः परागवतीरिति विरक्तिहेतूक्तिः । अम्बुरुहां ततीरपास्य तवाऽभिमुखं वलते चलति । विशिष्टलताभ्रमादिति भाव. । तथा च भ्रान्तिमदलङ्कारो व्यज्यते ॥ ११ ॥

अथालेस्तदभिमुखागमने कारणमाह—

सुरभीति ॥ तव सुरभिणि श्वसिते निःश्वासमारुते नवसुधावन्मधुरे अधरे च तृषं तृष्णां दधतो दधानस्यालेर्भ्रमरस्य ममेवाऽमू उपलभ्यमानौ सुमनसां पुष्पाणां सम्बन्धिनौ सौमनसौ गन्धरसौ सौरभ-माधुर्ये मनसोऽन्तःकरणस्य मुदे नालं न पर्याप्तौ । अतस्त्वद्वदनरसगन्धलोभादागच्छतीत्यर्थः । 'नमः स्व-स्ति-' इत्यादिना चतुर्थी । अत्र कान्ताकर्तृकस्वयङ्ग्रहाश्लेषसुखार्थिनः प्रियस्य तद्द्वयहेतोरलेरेवागमनहेतु-त्वेनाऽत्र दृष्टान्तेन मुखसौरभरसलोभभरकुसुमवैराग्ययोर्वर्णयितुमौचित्याद् यमकानुसारेण विप्रकृष्टेनापि मम-शब्देनेवशब्दस्यान्वयः । 'वलतेऽभिमुखं तव, अलिभयादिव सस्वज' इत्युपक्रमोपसंहाराभ्यामलेः प्रकृतत्वेनोप-मेयत्वावगमात् । अन्यथा मध्ये तद्वैपरीत्ये तद्विरोधादित्यलमाहचलनाध्वमार्गणेन । अत्रोपमानुप्रासयमकानां तावद्विजातीयानां संसृष्टिः स्पष्टैव । तथा यमकानां त्रयाणां चतुर्थपादादावेकस्मादक्षरात्, द्वाभ्यां भिभ्यश्च परतोऽक्षरत्रयावृत्तिलक्षणानां स्थितत्वात्सजातीयसंसृष्टिश्चेष्टा ॥ १२ ॥

इतीति ॥ इतीत्थं गदन्तं प्रणयिनम् अनन्तरं भुजयुगस्योन्नमनेनोच्चतरावत्युन्नतौ स्तनौ यस्याः सा । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष् । वलिभया वलयो विद्यन्ते यस्यास्तया वलिमत्या । 'तु-न्दिवलिवटेर्भः' इति भप्रत्ययः । उदराश्रिया मध्यशोभया उपलक्षिता अङ्गना अलिभयादिव रभसात्सस्वजे आलिलिङ्ग । वस्तुतस्तु रागादेवेति भावः । 'ष्वञ्ज परिष्वङ्गे' इति धातोः कर्तरि लिट् । 'लज्जामन्मथ-मध्यस्था मध्येयं नायिका मता' इति ॥ १३ ॥

**वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया ॥**
**वलितया(१) विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया ॥ १४ ॥**

---

(१) चलितया ।

**वदनेति** ॥ अन्यया कयाचिदङ्गनया कलमेखलाकलकलः विदधे मधुररशनारणत्कारः कृतः, किंभूतया वलितया गच्छन्त्या व्रजन्त्या । वलने कारणमाह—अपरं किंभूतया तया वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया वदनसौरभलोभेन वक्त्रसौरभ्याभिलाषेण परिभ्रमन्तः समन्तात् चरन्तो ये भ्रमराः षट्पदाः तेभ्यो योऽसौ सम्भ्रमो भयं तेन सम्भृता पुष्टिं नीता शोभा रामणीयकं यया सा तया । अत एव पुनः किंभूतया अलकलोलदृशा अलकैः केशप्रान्तैः लोला लम्पटा दृक् नयनं यस्याः सा तया । 'सम्भ्रमस्त्वरिते आदरे भये चे'ति विश्वः ॥ १४ ॥

वदनेति ॥ वदनस्य सौरभे सौगन्ध्ये लोभेन परिभ्रमता भ्रमरेण हेतुना यः सम्भ्रमस्तेन सम्भृतशोभया सम्पादितश्रिया चलितया अलिसम्भ्रमात्प्रस्थितया अत एवालकैरलकपातैर्लोलदृशा चञ्चलाक्ष्या अन्यया स्त्र्यन्तरेण कलो मेखलायाः कलकलः कोलाहलो विदधे विहितः । अलिभयादपसरन्त्याः काञ्चीगुणध्वनिरजनीत्यर्थः । एतेन चकितत्वमुक्तम् । चकितं भयसम्भ्रमः । अनुप्रासयमकयोः सजातीयशब्दालङ्कारयोः संसृष्टिः स्पष्टैव तावत् । तथा यमकयोश्च द्वयोः सजातीययोः चतुर्थपादादावेकस्मादक्षराद् द्वाभ्यां च परतोऽक्षरत्रयावृत्तिलक्षणयोः स्थितत्वात्सजातीययोः संसृष्टिः ॥ १४ ॥

अजगणन्गणशः प्रियमग्रतः प्रणतमप्यभिमानितया न याः ॥
सति मधावभवन्मदनव्यथाविधुरिता धुरि ताः कुकुरस्त्रियः ॥ १५ ॥

**अजगणन्निति** ॥ ताः कुकुरस्त्रियः यादवनायिकाः मधौ वसन्ते सति मदनव्यथाविधुरिताः कामज्वरदुःखिताः सत्यः धुरि अग्रे अभवन् आसन्, केषां धुरि अर्थात् मदनव्यथाविधुरितानामेव । विरहदुःखपीडितानामग्रण्योऽभवन्नित्यर्थः । ताः काः याः कुकुरस्त्रियः अभिमानितया अहङ्कारित्वेन गणशः अनेकवारमग्रतः अग्रे प्रणतमपि प्रियं प्रह्वीभूतमपि कान्तं न अजगणन् न बहु मेनिरे । नाङ्गीचक्रिरे इत्यर्थः । ताः वसन्ते सति विरहपीडितानामग्रण्योऽभवन्निति भावः । अभिमानोऽहङ्कारोऽस्यास्तीति अभिमानी तस्य भावस्तत्ता तया(१) ॥ १५ ॥

अजगणन्निति ॥ याः कुकुरस्त्रियो यादवाङ्गनाः गणशो बहुशः । 'बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्' इति शस् प्रत्ययः । अग्रतः प्रणतमपि प्रियम् । जातावेकवचनम् । प्रियाणीत्यर्थः । अभिमानिनीनां भावोऽभिमानिता तया । त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः । नाऽजगणन्न गणयन्ति स्म । गणेश्चौरादिकाण्णौ चङि 'ई च गणः' इत्यभ्यासस्य पाक्षिक इत्वाभावः । ताः कुकुरस्त्रियो मधौ वसन्ते सति प्रवर्तमाने । 'मधुश्चैत्रे वसन्ते च' इति विश्वः । मदनव्यथाविधुरिता विह्वलिताः सत्यः धुरि अग्रेऽभवन् अवर्तन्त । स्वयमेव पुरः प्रवृत्ता इत्यर्थः ॥ १५ ॥

कुसुमकार्मुककार्मुकसंहितद्रुतशिलीमुखखण्डितविग्रहाः ॥
मरणमप्यपराः प्रतिपेदिरे किमु मुहुर्मुमुहुर्गतभर्तृकाः ॥ १६ ॥

**कुसुमेति** ॥ गतभर्तृकाः पान्थवनिताः मरणमपि प्रतिपेदिरे निधनमपि प्रापुः, अपराः अन्याः सभर्तृकाः मुहुर्वारंवारं मुमुहुः मोहं गताः, तत्र किं भणनीयम् । मरणे कारणमाह—किंभूताः गतभर्तृकाः कुसुमकार्मुककार्मुकसंहितद्रुतशिलीमुखखण्डितविग्रहाः कुसुमानि एव कार्मुकाणि धनूंषि यस्य सः कुसुमकार्मुकः तस्य कार्मुके धनुषि संहितायोजिताः सन्धिताः अत एव द्रुता मुक्ता ये शिलीमुखा बाणास्तैः खण्डिता विदारिता विग्रहा देहा यासां ताः । 'विग्रहः काययुद्धयोः', 'शिलीमुखौ बाणभृङ्गौ', 'मरणं निधनोऽस्त्रियाम्' ॥ १६ ॥

---

(१) 'अभिमानोऽहङ्कार आसामस्तीति अभिमानिन्यः तासां भवास्तत्ता तया' इति न्याय्यम् ।

कुसुमेति ॥ गतभर्तृकाः वियोगिन्यः । 'नद्यृतश्च' इति कप् । अपराः काश्चिदङ्गनाः कुसुमकार्मुकस्य कामस्य कार्मुके संहितैः द्रुतैर्जवनैः शिलीमुखैः शरैः खण्डितविग्रहाः पाटितशरीराः सत्यो मरणमपि प्रतिपेदिरे । मुहुः पुनःपुनः मुमुहुर्मुमूर्छुरिति किमु वक्तव्यमित्यर्थः ॥ १६ ॥

**रुरुदिषा वदनाम्बुरुहश्रियः सुतनु ! सत्यमलङ्करणाय ते ॥**
**तदपि सम्प्रति सन्निहिते मधावधिगमं धिगमङ्गलमश्रुणः ॥ १७ ॥**
**त्यजति कष्टमसावचिरादसून्विरहवेदनयेत्यघशङ्किभिः ॥**
**प्रियतया गदितास्त्वयि बान्धवैरवितथा वितथाः सखि ! मा गिरः ॥१८॥**
**न खलु दूरगतोऽप्यतिवर्तते महमसाविति बन्धुतयोदितैः ॥**
**प्रणयिनो निशमय्य वधूर्बहिः स्वरमृतैरमृतैरिव निर्ववौ ॥ १९ ॥**

**रुरुदिषेत्यादि ॥ इतीति ॥ काचिन्नायिका विरहिणी ऋतैः सत्यवचनैः निर्ववौ निर्वृतिं लेभे सुखं प्राप, कैरिव अमृतैरिव । अमृतेन हि महती निर्वृतिर्लभ्यते । अमृततुल्यैरित्यर्थः । किंभूतैः ऋतैः, इति अमुना प्रकारेण बन्धुतया सखीसमूहेन उदितैर्भाषितैः । तमेव प्रकारमाह—हे सुतनु ! कृशाङ्गि ! ते तव रुरुदिषा रोदितुमिच्छा सत्यं निश्चितं वदनाम्बुरुहश्रियः मुखकमललक्ष्म्याः अलङ्करणाय भूषणाय भवति, परं तदपि तथापि सम्प्रति इदानीं मधौ वसन्ते सन्निहिते निकटवर्तिनि सति अश्रुणः बाष्पस्य अधिगममाविर्भावं धिक् निन्द्यम्(?)। किंभूतमधिगमम् अमङ्गलमशुभम् । 'बाष्पं चैवास्रमश्रु' च । त्यजतीति ॥ अपरं हे सखि ! इति अमुना प्रकारेण गिरो वाचः अवितथाः सत्याः मा वितथाः मा कृथाः मा कार्षीः, किंभूता गिरः बान्धवैः स्वजनैः त्वयि विषये निमित्ते वा गदिताः प्रोक्ताः । इतीति किं—यत्, कष्टमिति खेदे, असौ बाला अचिरात् झटित्येव शीघ्रमेव विरहवेदनया वियोगव्यथया असून् प्राणान् त्यजति उज्झति । कया उक्ताः प्रियतया वाल्लभ्येन, किंभूतैः बान्धवैः अघशङ्किभिः अमङ्गलभीतैः । अनिष्टशङ्कीनि खलु बन्धुहृदयानि भवन्ति । इति गिरः सत्या मा कार्षीः । न खल्विति ॥ खलु यतः कारणात् असौ त्वद्दयिता हे सखि ! दूरगतोऽपि दवीयानपि महं वसन्तोत्सवं नातिवर्तते नैव उपेक्षते । अवश्यमेव वसन्तोत्सवं निश्चयेन आगमिष्यतीत्यर्थः । किं कृत्वा निर्वृतिं लेभे बहिर्बाह्ये प्रणयिनो वल्लभस्य स्वरं निशम्य आकर्ण्य । त्रिभिर्विशेषकम् ॥ १७–१९ ॥**

अथ कस्याश्चित्प्रोषितभर्तृकाया बन्धुजनसमाश्वासनं विशेषकेणाह—

**रुरुदिषेति** ॥ हे सुतनु ! शुभाङ्गि ! 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वत्वम् । दीर्घोत्तरपदो बहुव्रीहि अन्यथा गुणः स्यात् । रुरुदिषा रोदनेच्छा । अश्रुविमोचनमित्यर्थः । रुदः सन्नन्तादप्रत्यये टाप् । ते तव वदनाम्बुरुहश्रियोऽलङ्करणाय सत्यम् । 'रम्याणां विकृतिरपि श्रियं तनोति' इति न्यायादिति भावः । गम्यमानक्रियापेक्षत्वाच्चतुर्थी । तदपि तथापि सम्प्रति मधौ वसन्ते सन्निहिते सन्निहितोत्सवे सति अश्रुणोऽधिगमं प्राप्तिममङ्गलं धिक् । निन्दतीत्यर्थः । 'धिङ्निर्भर्त्सननिन्दयोः' **इत्यमरः** । 'धिगुपर्यादिषु त्रिषु' इति द्वितीया । अतो मा रुद इत्यर्थः ॥ १७ ॥

**त्यजतीति** ॥ प्रियतया इष्टतया अघशङ्किभिरनर्थोत्प्रेक्षिभिः । 'प्रेम पश्यति भयान्यपदेऽपि' इति भावः । बान्धवैस्त्वयि विषये गदिता उच्चारिताः कष्टं बत असौ बाला विरहवेदनया अचिरादसून्प्राणांस्त्यजति त्यक्ष्यति । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । इत्येवंविधा गिर उक्तीः हे सखि ! विगतं तथात्वं यासां ताः वितथा अनृताः । 'वितथं त्वनृतं वचः' **इत्यमरः** । बहुव्रीहौ विशेष्यलिङ्गता । ब्राह्मणादित्वात् ह्रस्वः । ततो नञ्समासः । अवितथाः सत्या मा वितथाः मा कृथाः । वृथाऽतिशोकेन मा मृथा इत्यर्थः ।

विपूर्वात्तनोतेर्लुङि थास् 'तनादिभ्यस्तथासोः' इति विभाषा सिचो लुक् । 'अनुदात्तोपदेश—' इत्यादिनाऽनुनासिकलोपः । 'न माङ्योगे' इत्यडागमप्रतिषेधः ॥ १८ ॥

**न खल्विति** ।। किञ्च असौ ते प्रणयी दूरगतो दूरस्थोऽपि महं वसन्तोत्सवम् । 'मह उद्धव उत्सवः' इत्य**मरः** । नातिवर्तते नातिक्रामति खलु इति बन्धुतया बन्धुसमूहेन । 'ग्रामजनबन्धुसहायेभ्यस्तल्' इति तल्प्रत्ययः । उदितैरुक्तैः । वदेः कर्मणि क्तः । ऋतैः सत्यवचनैः । 'सत्यं तथ्यमृतं सम्यक्' इत्यमरः । बहिः प्रणयिनस्तदैव दैवादागतस्य प्रियस्य स्वरं कण्ठगतं शब्दं निशमय्य श्रुत्वा । 'शमु अदर्शने' इति चौरादिकाल्ल्यप् मित्त्वात् ह्रस्वः, 'ल्यपि लघुपूर्वात्' इत्ययादेशः । वधूरमृतैः सुधाभिरिव निर्ववौ निर्ववार । वातेर्लिट् । 'निर्वाणं निर्वृतिः सुखम्' इति ॥ १९ ॥

**मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया ॥**
**मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥ २० ॥**

**मधुरयेति** ॥ मधुकराङ्गनया भ्रमर्या मुहुर्वारंवारम् उज्जगे उद्गीतम् । कथं यथा भवति तथा निभृतानि परिपुष्टानि अव्यक्तानि वा अक्षराणि वर्णा यत्र तत्, किंलक्षणया भ्रमर्या मधुरया मधुरस्वरया, पुनः किंभूतया भ्रमर्या मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया मधुना वसन्तेन बोधिता विकासं नीता याऽसौ माधवी अतिमुक्तलता तस्याः मधु मकरन्दः तस्य समृद्धिराधिक्यं तया समेधिता वर्धिता मेधा प्रज्ञा यस्याः सा तया, पुनः किंभूतया भ्रमर्या उन्मदमुन्मत्तं ध्वनिं शब्दं बिभर्ति भृत् तया । अलिनां रुतमाकर्ण्य कामिनो माद्यन्तीति । 'मधु मद्ये पुष्परसे क्षौद्रे च सुरभावपि' इति **विश्वः** । 'वासन्ती माधवी लता' **इत्यमरः** ॥ २० ॥

**मधुरयेति** ।। मधुरया मनोहरया, मधुना वसन्तेन बोधिताः विकासिताश्च ता माधव्यश्च । पुष्पधर्मैः पुष्पितासूपचर्यते । तासां माधवीनामातिमुक्तलतानाम् । 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता' **इत्यमरः** । मधुसमृद्ध्या मकरन्दसम्पदा समेधितमेधया संवर्धितप्रतिभया अत एवोन्मदयतीत्युन्मदो मदकरः । पचाद्यच् । तं ध्वनिं बिभर्तीत्युन्मदध्वनिभृत् तया मधुकराङ्गनया मुहुर्निभृताक्षरं लक्षणया स्थिरनादं यथा तथेत्यर्थः । अथवा सर्वः शब्दो वर्णात्मक एव व्यञ्जकविशेषाभावादस्फुट इति मतमाश्रित्योक्तं सर्वपथीनाः कवय इति । उज्जगे उच्चैर्गीतम् । गायतेरविवक्षितकर्मकाद्भावे लिट् । 'बन्धवैषम्यराहित्यं समता पदगुम्फने' इति लक्षणात्समताख्यो गुणः ॥ २० ॥

**अरुणिताखिलशैलवना मुहुर्विदधती पथिकान्परितापिनः ॥**
**विचकर्किंशुकसंहतिरुच्चकैरुदवहद्दवहव्यभुजः (१) श्रियम् ॥ २१ ॥**

**अरुणितेति** ॥ विकचकिंशुकसंहतिः विकसितपलाशपुष्पपङ्क्तिः दवहव्यभुजः दवाग्नेः श्रियं शोभामुदवहत् बभार । किंभूता संहतिः उच्चकैः उन्नता, पुनः किंलक्षणा संहतिः अरुणिताखिलशैलवना अरुणितानि आरक्तीकृतानि अखिलानि समग्राणि शैलवनानि यया सा आरक्तीकृताशेषगिरिकानना, किं कुर्वती मुहुर्वारंवारं पथिकान् पान्थान् परितापिनः खेदयुक्तान् विदधती । प्रफुल्लान् किंशुकान् दृष्ट्वा विरहिणः परितप्यन्ते इति भावः । 'दवदावौ वनारण्यवह्नी' **इत्यमरः** ॥ २१ ॥

**अरुणितेति** ॥ अरुणितान्यरुणीकृतान्यखिलानि शैलवनानि यया सा मुहुः पथिकानध्वगान् विरहिणश्च परितापिनः सन्तापवतो विदधती, उच्चैरेवोच्चकैरुन्नता । 'अव्ययसर्वनाम्नामकच्प्राक्टेः' इत्यकच् प्रत्ययः । विकचा विकसिता या किंशुकसंहतिः पलाशकुसुमराशिः सा दवहव्यवहश्रियं दवाग्निशोभामुदवहत् । निदर्शनालङ्कारः । इति वसन्तवर्णनम् ॥ २१ ॥

---

(१) हव्यवह ।

अथ ग्रीष्मवर्णनमाह—

**रवितुरङ्गतनूरुहतुल्यतां दधति यत्र शिरीषरजोरुचः ॥**
**उपययौ विदधन्नवमल्लिकाः शुचिरसौ चिरसौरभसम्पदः ॥ २२ ॥**

**रवितुरङ्गेति** ॥ असौ शुचिः ग्रीष्मः आषाढमासो वा उपययौ सम्प्राप्तः समागमत् । आविरभूदित्यर्थः । किं कुर्वन् नवमल्लिकाः नूतनजातीकुसुमानि विदधत् उत्पादयन्, किंभूता नवमल्लिकाः चिरं चिरकालं सौरभसम्पत् सुगन्धसमृद्धिर्यासां ताः ताः सौरभातिशययुक्ताः। कोऽसावित्याह—यत्र यस्मिन् आषाढे शुचौ शिरीषरजोरुचः शिरीषाख्यतरुपुष्परेणुभासः रवितुरङ्गतनूरुहतुल्यतां दधति श्रीसूर्याश्वरोमसाम्यं बिभ्रति । शिरीषपुष्पाणि यत्राऽतिनीलपीतवर्णानि भवन्तीत्यर्थः । 'तनूरुहं लोम रोम' ॥ २२ ॥

अथ ग्रीष्मवर्णनमारभते—

**रवितुरङ्गेति** ॥ यत्र शुचौ शिरीषरजसां रुचः कान्तयो रवितुरङ्गतनूरुहतुल्यतां सूर्याश्वरोमसावर्ण्यं दधति । हरिद्वर्णा भवन्तीत्यर्थः । असौ शुचिर्ग्रीष्मः ।

'शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोस्तथा ।
ग्रीष्मे हुतवहेऽपि स्यात्—'

इति **विश्वः** । नवमल्लिकाः । 'पुष्पे जातीप्रभृतयः स्वलिङ्गाः' इत्यमरः । 'पुष्पमूलेषु बहुलम्' इति बहुलग्रहणाल्लुप् । लुपि युक्तवद्व्यक्तिवचने भवतः। चिरं चिरावस्थायिनी सौरभसम्पद् यासां ताः । स्थिरगन्धा इत्यर्थः । विदधत्कुर्वन्नुपययौ प्राप्तः ॥ २२ ॥

**दलितकोमलपाटलकुड्मले निजवधूश्वसितानुविधायिनि ॥**
**मरुति वाति विलासिभिरुन्मदभ्रमदलौ मदलौल्यमुपाददे ॥ २३ ॥**

**दलितेति** ॥ मरुति वायौ वाति वहति सति विलासिभिः शृङ्गारिभिः पुरुषैः मदलौल्यमुपाददे कन्दर्पाकुलितत्वं गृहीतम् । लोकस्तदा ममादेत्यर्थः । किंभूते मरुति दलितकोमलपाटलकुड्मले विकासितपाटलकोमलकलिके, अपरं किंभूते मरुति निजवधूश्वसिताऽनुविधायिनि निजा विलासिन्यः आत्मीयवध्वः स्वयुवतयः तासां श्वसितं मुखोच्छ्वासः तत् अनुविदधाति अनुकरोतीति तस्मिन्, अत एव पुनः किंभूते मरुति उन्मदा मत्ताः भ्रमन्तः इतस्ततो गच्छन्तः अलयः भ्रमरा यस्मिन् सः तस्मिन् उन्मदभ्रमदलौ । 'कुड्मलो मुकुलोऽस्त्रिया'मित्यमरः ॥ २३ ॥

**दलितेति** ॥ पाटलाया अवयवाः पाटलाः । लुप्प्रकरणे 'पुष्पमूलेषु बहुलम्' इति बहुलग्रहणादलुप् । ते च ते कुड्मलाश्च दलिता विभिन्नाः कोमलाः पाटलकुड्मला येन तस्मिन् निजवधूनां श्वसितं निःश्वासमनुविधत्तेऽनुकरोतीति तथोक्ते, तादृशीत्यर्थः । उन्मदा भ्रमन्तश्चाऽलयो यस्मिंस्तस्मिन् उन्मदभ्रमदलौ मरुति ग्रीष्मानिले वाति वहति सति । वातेर्लटः शत्रादेशः । विलासिभिर्विलसनशीलैः कामिभिः । 'वौ कषलसकत्थस्रम्भः' इति घिनुण्प्रत्ययः । मदेन लौल्यं चापल्यमुपाददे । मत्तैर्जातमित्यर्थः ॥ २३ ॥

**निदधिरे दयितोरसि तत्क्षणस्नपनवारितुषारभृतः स्तनाः ॥**
**सरसचन्दनरेणुरनुक्षणं विचकरे च करेण वरोरुभिः ॥ २४ ॥**

**निदधिरे इति** ॥ वराः प्रधानाः अनवद्याः गौरपीवराः ऊरवो जघनानि यासां ताः वरोरवः ताभिः वरोरुभिः श्रेष्ठजघनाभिः स्त्रीभिः दयितोरसि कान्तवक्षसि स्तना निदधिरे कुचा न्यस्ताः । दाहशान्तये इति भावः । किंभूताः स्तनाः तत्क्षणस्नपनवारितुषारभृतः तत्क्षणमेव स्नपनमभिषेकः तेन यत् वारि जलं तेन तुषारभृतः शैत्यधारिणः । न केवलं

स्तना विदधिरे, च पुनः वरोरुभिः करेण हस्तेन कृत्वा अनुक्षणं वारंवारं सरसचन्दनरेणुः अभिनवमलयजपरागः विचकरे विकीर्णः विक्षिप्तः ॥ २४ ॥

निदधिरे इति ॥ वरोरुभिः स्त्रीभिः तत्क्षणस्नपनेन सद्यःसेकेन वारितुषारभृतः । जलशीकरधारिण इत्यर्थः । 'तुषारौ हिमशीकरौ' इति शाश्वतः । स्तना दयितोरसि निदधिरे निहिताः । तेषां सन्तापशान्तये स्नानार्द्राङ्गा एव आलिङ्गन्नित्यर्थः । किञ्च करेण पाणिना सरस आर्द्रश्चन्दनरेणुः घृष्टचन्दनपङ्कश्च अनुक्षणं विचकरे विकीर्णः । किरतेः कर्मणि लिट् । 'ऋच्छत्यृताम्' इति गुणः । करेणुकरोरुभिरिति पाठस्तु 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रसङ्गाद्धेयः । इति ग्रीष्मवर्णनम् ॥ २४ ॥

अथ वर्षावर्णनमाह—

स्फुरदधीरतडिन्नयना मुहुः प्रियमिवाऽगलितोरुपयोधरा ॥
जलधरावलिरप्रतिपालितस्वसमया समयाज्जगतीधरम् ॥ २५ ॥

स्फुरदधीरेति ॥ जलधरावलिः मेघमाला जगतीधरं समयात् रैवतकाचलमभिययौ। प्रावृट् प्रवृत्तेत्यर्थः । किंभूता जलधरावलिः मुहुर्वारंवारं स्फुरन्त्यः उल्लसन्त्यः अत एव अधीराश्चपलाश्च या तडितो विद्युतश्च ता एव नयनानि यस्याः सा, अथ वा स्फुरन्ति उल्लसन्ति शोभमानानि अधीराणि चपलानि तडित एव नयनानि चक्षूंषि यस्याः सा, पुनः किंभूता पङ्क्तिः अगलिता अभ्रष्टा उरवः महान्तः पयोधरा मेघा यस्याः सा, किंलक्षणा अप्रतिपालितस्वसमया अप्रतिपालितः नप्रतीक्षितः स्वसमयः निजकालः यया सा अप्रतीक्षितनिजकाला, कमिव प्रियमिव । यथा काचिन्नायिका वल्लभं प्राणेशमभिसरति । किंभूता नायिका स्फुरती अधीरे तडिदिव नयने यस्याः सा, पुनः किंभूता नायिका अगलितौ नपतितौ सुबद्धौ उरू पीवरौ पयोधरौ स्तनौ यस्याः सा । उन्नतकुचेत्यर्थः । पुनः किंभूता नायिका अप्रतिपालितस्वसमया अप्रतीक्षितनिजवारा । 'स्त्रीस्तनाब्दौ पयोधरौ', 'समयाः शपथाचारकालसिंद्धान्तसंविदः' इत्यमरः ॥ २५ ॥

अथ वर्षावतारमाह—

स्फुरदधीरेति ॥ स्फुरन्ती अधीरे चञ्चले तडितौ नयने इव तडिन्नयने यस्याः सा अगलिता अरिक्ता उरुपयोधरा मेघा यस्याम्, अन्यत्र ऊरू च पयोधरौ च ऊरुपयोधरम् । प्राण्यङ्गत्वाद् द्वन्द्वैकवद्भावः । न गलितं न पतितं यस्यां सा जलधरावलिर्मेघपङ्क्तिः । अत्र जलधरावलेः पयोधराणां चावयवावयविभावात् पृथङ्निर्देशः । अप्रतिपालितस्वसमया अनपेक्षितनिजवेला सती । एकत्र यौगपद्यादन्यत्राऽभिर्याच्चेति भावः । जगतीधरं रैवतकं भूधरं प्रियमिव समयात्समागच्छत् । यातेर्लङ् । पयोजगतीशब्दयोः पचाद्यजन्तेन धरशब्देन षष्ठीसमासः । अत्र विशेषणमहिम्ना जलधरावलौ नायिकात्वप्रतीतेः समासोक्तिः, सा तु प्रियमिवेत्युपमयाऽङ्गेन सङ्कीर्यते ॥ २५ ॥

गजकदम्बकमेचकमुच्चकैर्नभसि वीक्ष्य नवाम्बुदमम्बरे ॥
अभिससार न वल्लभमङ्गना न चकमे च कमेकरसं रहः ॥ २६ ॥

गजेति ॥ अङ्गना स्त्री कं वल्लभं न अभिययौ कं भर्तारं प्रति न ययौ, अपरं च पुनः रहः एकान्ते कं न चकमे कं न अभिललाष । अपि तु सर्वैव अङ्गना सर्वमेव प्रियतमं जगाम, अपरं सर्वमेव चकमे इत्यर्थः । किंभूतं वल्लभम् एक एव रसो भूषणलक्षणो यस्य सः तं शृङ्गारप्रधानं, किं कृत्वा वल्लभं प्रति ययौ नभसि श्रावणे मासि सति अम्बरे आकाशे नवाम्बुदं नूतनमेघपटलं वीक्ष्य विलोक्य । अम्बुदानां समूहः आम्बुदं

नवं च तत् आम्बुदं च नवाम्बुदम् । किंभूतम् आम्बुदं गजकदम्बकवत् द्विरदवृन्दवत् मेचकं कृष्णं, पुनः किंभूतं नवाम्बुदम् उच्चकैः उन्नतम् । चशब्दः क्रियान्तरसमुच्चयार्थः । 'निकुरम्बं कदम्बकम्', 'नभः खं श्रावणो नभाः,' 'अम्बरं व्योम्नि वाससि' सर्वत्राप्यमरः॥२६॥

गजेति ॥ नभसि श्रावणमासे । 'नभाः श्रावणिकश्च सः' इत्यमरः । अम्बरे व्योम्नि गजकदम्बकमिव मेचकं श्यामलम् । 'कालश्यामलमेचकाः' इत्यमरः । उच्चैरेवोच्चकैरुन्नतं नवाम्बुदं वीक्ष्य अङ्गना एक एकायनो रसो रागो यस्य तमेकरसम् । तिरस्कृतरसान्तरमित्यर्थः । कं वल्लभं प्रियं रह एकान्ते न चकमे न कामयते स्म, तथा नाभिससार च । सर्ववल्लभं सर्वापि तत्तदङ्गना चकमे अभिससार चेति । नवाम्बुदस्योद्दीपकत्वादतिशयोक्तिः । इह कामनापूर्वकत्वादभिसरणस्य तयोरर्थक्रमबलीयस्त्वन्यायेन यमकवशायातपाठक्रमबोधेन योजना न्याय्यैव ॥ २६ ॥

**अनुययौ विविधोपलकुण्डलद्युतिवितानकसंवलितांशुकम् ॥**
**धृतधनुर्वलयस्य पयोमुचः शबलिमा बलिमानमुषो वपुः ॥ २७ ॥**

अनुययाविति ॥ पयोमुचः मेघस्य शबलिमा श्यामत्वं श्यामिका बलिमानमुषः श्रीकृष्णस्य वपुः अनुययौ बलिदैत्यदर्पहरस्य हरेर्देहमनुचकार । बलेरसुरस्य मानं दर्पं मुष्णाति हरतीति बलिमानमुट् तस्य । किंभूतस्य पयोमुचः धृतधनुर्वलयस्य ऊढेन्द्रायुधस्य, किंभूतं हरेर्वपुः विविधोपलकुण्डलद्युतिवितानकसंवलितांशुकं विविधोपले नानामणियुक्ते ये कुण्डले कर्णभूषणे तयोर्द्युतिवितानकं दीप्तिपुञ्जः तेन संवलिते मिश्रिते अंशुके वाससी यस्य तत् तथा । मेघस्य कृष्णवपुरुपमानम् । शबलस्य भावः शबलिमा ॥ २७ ॥

अनुययाविति ॥ धृतधनुर्वलयस्य धृतेन्द्रचापमण्डलस्य पयोमुचो मेघस्य सम्बन्धी शबलस्य भावः शबलिमा विचित्रता । 'पृथ्वादिभ्य इमनिज्वा' । विविधा नानावर्णा उपला मणयो ययोस्तयोः कुण्डलयोर्द्युतिवितानकेन कान्तिपुञ्जेन संवलिता मिलिता अंशवो निजनीलभासो यस्य तत्तथोक्तम् । 'शेषाद्विभाषा' इति कप्रत्ययः । बलिमानमुषो बल्यसुराऽहङ्कारापहारकस्य हरेर्वपुरनुययावनुचकार । तद्वद्बभाविस्यर्थः । उपमालङ्कारः ॥ २७ ॥

**द्रुतसमीरचलैः क्षणलक्षितव्यवहिता विटपैरिव मञ्जरी ॥**
**नवतमालनिभस्य नभस्तरोरचिररोचिररोचत वारिदैः ॥ २८ ॥**

द्रुतेति ॥ नभस्तरोः आकाशवृक्षस्य अचिररोचिः विद्युत् अरोचत शुशुभे, किंभूतस्य नभस्तरोः नवतमालनिभस्य नूतनतमालवृक्षसदृशस्य, नवश्चासौ तमालश्च तेन तुल्यः निभः तस्य । 'निभसङ्काशनीकाशप्रतीकाशोपमादयः' इत्यमरः । किंभूता अचिररोचिः क्षणलक्षितव्यवहिता क्षणं क्षणमात्रं लक्षिता दृष्टा पश्चाद्व्यवहिता आच्छादिता अदृश्या च क्षणलक्षितव्यवहिता, कैः वारिदैः मेघैः, कैरिव विटपैरिव, अचिररोचिः केव मञ्जरीव। यथा तमालतरोः तमालवृक्षस्य विटपैः शाखाप्रतानैः क्षणलक्षितव्यवहिता मञ्जरी शोभते । किंभूतैः वारिदैः विटपैश्च द्रुतसमीरणेन शीघ्रपवनेन चलाश्चपलास्तैः । आकाशस्य तमालतरूपमानं, विद्युतो मञ्जरी ॥ २८ ॥

द्रुतेति ॥ द्रुतसमीरेण शीघ्रमारुतेन चलैर्वारिदैः क्षणं लक्षिता च व्यवहिता च सा क्षणलक्षितव्यवहिता । क्षणिकाविर्भावतिरोधानेत्यर्थः । स्नातानुलिप्तवत् । 'पूर्वकालैक-' इत्यादिना समासः । अचिरं रोचिर्यस्याः सा अचिररोचिर्विद्युत् द्रुतसमीरचलैर्विटपैः शाखाभिः क्षणलक्षितव्यवहिता नवतमालनिभस्य नवतमालेन सदृशस्य । तद्वन्नीलस्येत्यर्थः । नित्यसमासः । नभस्तरुरिव तस्य नभस्तरोर्मञ्जरी गुच्छ इवारोचत । उपमालङ्कारः । अत्र नभस्तरोर्नभःश्रेष्ठस्येति व्याख्याने तरुशब्दस्य व्याघ्रादिवच्छ्रेष्ठार्थगोचरत्वा-

तमालशब्देन विशेषवाचिना तत्त्नीलसामान्येन पौनरुक्त्यमिति (१)वल्लभः । तमालशब्दस्येन्द्रनीलवन्नैल्य-मात्रोपमानत्वात्तरुशब्दस्य स्वार्थवृत्तित्वेऽपि न पौनरुक्त्यमित्यन्ये ॥ २८ ॥

**पटलमम्बुमुचां पथिकाङ्गना सपदि जीवितसंशयमेष्यती ॥**
**सनयनाम्बुसखीजनसम्भ्रमाद्विधुरबन्धुरबन्धुरमैक्षत ॥ २९ ॥**

**पटलमिति ॥** काचित्पथिकाङ्गना पान्थवधूः अम्बुमुचां मेघानां पटलं वृन्दमैक्षत अद्राक्षीत् । कथं यथा भवति तथा अबन्धुरं दीनं यथा भवति तथा, सा किं कुर्वती सपदि मेघदर्शनादेव जीवितसंशयमेष्यती प्राणसन्देहं यास्यती सती, किंभूता पथिकाङ्गना विधुरा दुःखिता बन्धवः स्वजना यस्याः सा, कस्मात् सनयनाम्बुसखीजनसम्भ्रमात् साश्रुवयस्यालोकनत्रासात् । रुदन् सखीजनः यदा त्रस्यति तदा बान्धवा अपि दुःखिता इत्यर्थः ॥२९॥

**पटलमिति ॥** पथिकाङ्गना काचित्प्रोषितभर्तृका अत एव सपदि जीवितसंशयं मरणमेष्यती । निश्चितमरणेत्यर्थः । 'आच्छीनद्योर्नुम्—' इति विकल्पान्नुमभावः । अत एव सनयनाम्बोः सबाष्पस्य सखीजनस्य सम्भ्रमात्क्षोभाद्विधुरबन्धुः सम्भ्रमदर्शनाद्विह्वलबन्धुजना सती अम्बुमुचां पटलमबन्धुरमशोभनम् । सदैन्यरोषामिति यावत् । ऐक्षत । ईक्षतेर्लङ् 'आटश्च' इति वृद्धिः । विरहवेदनाऽक्षमाया नायिकाया मरणसाधनमेघपटलावेक्षणवर्णनायां तदुद्योगलक्षणा मरणावस्थोक्ता । सा हि द्विविधा तदुद्योगस्तद्योगश्चेत्याहुः ।

'दृङ्मनःसङ्गसङ्कल्पा जागरः कृशताऽरतिः ।
ह्रीत्यागोन्मादमूर्छाऽन्ता इत्यनङ्गदशा दश' ॥

इत्यवस्थासङ्ग्रहः ॥ २९ ॥

**प्रवसतः सुतरामुदकम्पयद्विदलकन्दलकम्पनलालितः ॥**
**नमयति स्म वनानि मनस्विनीजनमनोनमनो घनमारुतः ॥ ३० ॥**

**प्रवसत इति ॥** वनमारुतो मेघवायुः प्रवसतः प्रवासीभूतान् पुरुषान् सुतरामतिशयेन उदकम्पयत् विह्वलीचकार, तथा तेन प्रकारेण घनमारुतः वनानि काननानि नमयति स्म नम्रीचकार । किंभूतः घनमारुतः विदलकन्दलकम्पनलालितः विदलाः प्रफुल्ला ये कन्दला लताभेदाः तेषां कम्पनेन लालितः चापलेन कृताभ्यासः कृतश्रमः वल्लीनामान्दोलनेन श्रान्तः, एतेन सौरभ्यमुक्तम् । अत एव किंभूतो मेघवायुः मनस्विनीजनमनोनमनः मानिनीलोकमनोहारकः, मनस्विनीजनानां मानिनीलोकानां मनांसि चेतांसि नमयति वशीकरोति स तथा नमनः । कन्दलानिव पान्थान्नमयन् सन् वनानीव मनस्विनां मनांस्यनमयदिति वाक्यार्थः ॥ ३० ॥

**प्रवसत इति ॥** कन्दली भूकन्दली । 'द्रोणपर्णी स्निग्धकन्दा कन्दली भूमिकन्दली' इति शब्दार्णवः । तस्याः पुष्पाणि कन्दलानि । 'फले लुक्' इत्यणो लुक् । विदलानां विकचानां कन्दलानां कम्पनेनावधूननेन लालित उपस्कृतो मनस्विनीजनस्य मनसां नमनो नमयिता । मानिनीमानभञ्जन इत्यर्थः । कर्तरि ल्युट् । घनमारुतो मेघवायुः वनानि नमयति स्म । प्रवसतः प्रोषितान् सुतरामुदकम्पयदुद्वेजितवान् । मनस्विनीमानमर्दनस्य वननमनं प्रोषितकम्पनं वा कियदिति भावः ॥ ३० ॥

**जलदपङ्क्तिरनर्तयदुन्मदं कलविलापि कलापिकदम्बकम् ॥**
**कृतसमार्जनमर्दलमण्डलध्वनिजया निजया स्वनसम्पदा ॥ ३१ ॥**

**जलदपङ्क्तिरिति ॥** जलदपङ्क्तिर्मेघमाला कलापिकदम्बकं मयूरवृन्दमनर्तयत् नर्तया-

---

(१) अस्याक्षेपवचनस्य वल्लभव्याख्यानेऽनुपलम्भात् किन्तात्पर्यिकेयमुक्तिरिति न जानीमः । कदाचिन्मल्लिनाथोपलब्धे वल्लभव्याख्यापुस्तके तादृशं किमपि वाक्यमुपलब्धं स्यात् ।

मास । कया निजया स्वनसम्पदा आत्मीयया गर्जनसमृद्धया, किंभूतया स्वनसम्पदा कृतसमार्जनमर्दलमण्डलध्वनिजया कृतसमार्जनस्य दत्तभोजनपिण्डस्य मर्दलमण्डलस्य ध्वनिं शब्दं जयतीति सा ध्वनिजा (१)तया । अन्योऽपि मत्तो मर्दले वाद्यमाने सति अवश्यमेव नृत्यति । अथ वा कृतसमार्जनेत्यादि ध्वनिजयापर्यन्तं जलदपङ्क्तेर्विशेषणं प्रथमैकवचनान्तम् । किंभूतं कलापिकदम्बकं कलविलापि मधुरस्वरं, पुनः किंभूतम् उन्मत्तं मत्तम् । मत्तेन मर्दलध्वनिं श्रुत्वा नृत्यते इति । 'अन्नपिण्डे समार्जन'मिति वैजयन्ती ॥ ३१ ॥

जलदपङ्क्तिरिति ॥ निजया आत्मीयया स्वनसम्पदा कृतः समार्जनस्य मार्जनाख्यसंस्कारसहितस्य मर्दलमण्डलस्य ध्वनेर्जयो यया सा तथोक्ता । मार्जनं नाम मर्दलानां ध्वननार्थं भस्ममृदिताऽम्भःपुष्करलेपनम् । जलदपङ्क्तिरुन्मदमुत्कटमदं कलविलापि मधुरालापि कलापिकदम्बकं मयूरवृन्दमनर्तयत् ॥३१॥

**नवकदम्बरजोऽरुणिताम्बरैरधिपुरन्धि शिलीन्ध्रसुगन्धिभिः ॥**
**मनसि रागवतामनुरागिता नवनवा वनवायुभिरादधे ॥ ३२ ॥**

नवेति ॥ वनवायुभिः काननवातैः रागवतां कामिनां पुरुषाणां मनसि चेतसि नवनवा अपूर्वेव अनुरागिता स्नेहवत्त्वमादधे उत्पादिता । क कथं वा अधिपुरन्धि पुरन्ध्रीषु नायिकासु विषये, किंभूतैः वनवायुभिः शिलीन्ध्रसुगन्धिभिः वृक्षविशेषपरिमलाढ्यैः, शिलीन्ध्रैः सुगन्धयस्तैः, अपरं किंभूतैः वनवायुभिः नवकदम्बरजोऽरुणिताम्बरैः नूतनकदम्बपरागरक्तीकृतगगनैः, नवकदम्बानां नूतननीपकुसुमानां रजोभिः परागैः अरुणितं रक्तीकृतमम्बरमाकाशं यैस्ते तैः ॥ ३२ ॥

नवेति ॥ नवकदम्बरजोभिररुणितमरुणीकृतमम्बरमाकाशं यैस्तैः शिलीन्ध्राणां कन्दलीकुसुमानां यः सुगन्धः स एषामस्तीति शिलीन्ध्रसुगन्धिनस्तैः । गन्धस्येत्त्वे तदेकान्तग्रहणादित्प्रत्ययाश्रयणम् । 'कदल्यां च शिलीन्ध्रः स्यात्' इति शब्दार्णवे । वनवायुभिः पुरन्ध्रीषु स्त्रीषु विषये अधिपुरन्धि । विभक्त्यर्थेऽव्ययीभावः । रागवतां कामिनां मनसि नवनवा नवप्रकारा । 'प्रकारे गुणवचनस्य' इति द्विर्भावः । कर्मधारयवद्भावात्सुपो लुक् । अनुरागिता आदधे । अनुराग उत्पादित इत्यर्थः ॥ ३२ ॥

**शमिततापमपोढमहीरजः प्रथमबिन्दुभिरम्बुमुचोऽम्भसाम् ॥**
**प्रविरलैरचलाङ्गणमङ्गनाजनसुगं न सुगन्धि न चक्रिरे ॥ ३३ ॥**

शमिततापमिति ॥ अम्बुमुचो मेघा अचलाङ्गणं पर्वताजिरमङ्गनाजनसुगं प्रमदाजनसुगं प्रमदाजनसुगम्यं न चक्रिरे इति न, अपि तु चक्रिरे एव । कैः अम्भसां पानीयानां प्रथमबिन्दुभिः नूतनकणैः, किंभूतैः नातिसंमिलितैः, किंभूतम् अचलाङ्गणं शमिततापमपास्तधर्मं प्रवृत्तत्वात् बिन्दुभिरेव, पुनः किंभूतमचलाङ्गणम् अपोढं निराकृतं महीरजः भूमिधूलिर्यत्र तत्तथा निराकृतपृथ्वीधूलि, पुनः किंभूतमचलाङ्गणं सुगन्धि सुपरिमलम् । अत एव अङ्गनाजनसुगम् ॥ ३३ ॥

शमिततापमिति ॥ अम्बुमुचो मेघाः प्रविरलैरम्भसां प्रथमबिन्दुभिः शमिततापमपोढमहीरजो निरस्तधूलिकम् । न तु पङ्किलमिति भावः । सुगन्धि सन्तप्तसेकादुद्भूतसौरभम् । इह तदेकान्तत्वाद्गन्धस्येत्त्वम् । अचलाङ्गणं रैवतकाङ्गणम् । 'अङ्गणं चत्वराजिरे' इत्यमरः । अङ्गनाजनस्य सुखेन गच्छत्यस्मिन्निति सुगम् । सुखसञ्चारमित्यर्थः । 'सुदुरोरधिकरणे' इति गमेर्डप्रत्यये टिलोपः । न न चक्रिरे । चक्रिरे इत्यर्थः । द्वौ नञौ प्रकृतमर्थं गमयतः ॥ ३३ ॥

---

(१) अत्र 'अन्येष्वपि दृश्यते' इति सूत्रे अपिशब्देन धात्वन्तरस्यापि ग्रहणात् जिधातोर्डप्रत्यये डित्त्वाट्टिलोपे स्त्रीत्वविवक्षायां टापि च 'ध्वनिजा' इति रूपसिद्धिर्व्याख्यातुरभिमता स्यात् ।

**द्विरददन्तवलक्षमलक्ष्यत स्फुरितभृङ्गमृगच्छवि केतकम् ॥**
**घनघनौघविघट्टनया दिवः कृशशिखं शशिखण्डमिव च्युतम् ॥ ३४ ॥**

**द्विरदेति** ॥ केतकं केतकीकुसुममलक्ष्यत ददृशे । अर्थवशाल्लोकैरिति भावः । किंभूतं केतकं द्विरददन्तवलक्षं मतङ्गजदशनधवलं, पुनः किंभूतं केतकं कृशशिखं तनुप्रान्तं, पुनः किंभूतं केतकं स्फुरितभृङ्गमृगच्छवि स्फुरितभृङ्ग एव मृगच्छविर्यत्र तत् भ्रमद्भ्रमर एव हरिणकान्तिर्यत्र तत् । अतश्चोत्प्रेक्ष्यते—दिवः स्वर्गात् च्युतं पतितं शशिखण्डमिव चन्द्रशकलमिव । पतने कारणमाह—कया च्युतं घनघनौघविघट्टनया घना निबिडाश्च घनौघाः मेघसमूहाः तैर्विघट्टना आस्फालना तया संहताभ्रवलयसङ्घर्षणेन । कृशो हि जनवृन्दप्रेरणया अवश्यं पतति । केतकस्य शशिखण्डमुपमानं, भृङ्गस्य मृग उपमानम् । 'वलक्षो धवलोऽर्जुनः' इत्यमरः ॥ ३४ ॥

द्विरदेति ॥ द्विरददन्तवलक्षं गजदन्तधवलम् । 'वलक्षो धवलोऽर्जुनः' इत्यमरः । भृङ्गो मृग इव भृङ्गमृगः तस्य छविः सा स्फुरिता यस्मिंस्तत्तथोक्तं केतक्याः पुष्पं केतकम् । 'पुष्पमूलेषु बहुलम्' इत्यणो लुपि नादिवृद्धिः । 'लुक् तद्धितलुकि' इति ङीप्रत्ययस्यापि लुक् । घनघनौघविघट्टनया निबिडमेघसङ्घोपघातेन दिवोऽन्तरिक्षाच्च्युतं कृशशिखं सूक्ष्माग्रं शशिखण्डमिवालक्ष्यतेत्युत्प्रेक्षा ॥ ३४ ॥

**दलितमौक्तिकचूर्णविपाण्डवः स्फुटित(१)निर्झरशीकरचारवः ॥**
**कुटजपुष्पपरागकणाः स्फुटं विदधिरे दधिरेणुविडम्बनाम् ॥ ३५ ॥**

**दलितेति** ॥ कुटजपुष्पपरागकणाः कुटजस्य पुष्पाणि प्रसूनानि तेषां परागाः किञ्जल्काः तेषां कणाः लेशाः कुटजकुसुमकिञ्जल्कलेशाः दधिरेणुविडम्बनां दधिरे दधिकणानुकरणं चक्रुः दध्नः द्रप्सस्य रेणवः कणाः तेषां विडम्बना अनुकारः तां धारयामासुः । 'कुटजः कौटजः काहो वत्सको गिरिमल्लिका' इति निघण्टुः । 'परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि' इत्यपि । 'द्रप्सं दधि घनेतरत्', 'लवलेशकणाऽणवः' इत्यमरः । स्फुटं प्रकटं यथा भवति तथा, किंभूताः परागकणाः दलितमौक्तिकचूर्णविपाण्डवः दलितानि पिष्टानि च तानि मौक्तिकानि मुक्ताफलानि तेषां चूर्णं क्षोदः तद्वद्विपाण्डवः श्वेताः ते पिष्टमुक्ताफलक्षोदधवलाः, पुनः किंभूताः कणाः स्फुटितनिर्झरशीकरचारवः स्फुटिता विदीर्णाश्च ते निर्झरशीकराः प्रपातजलकणाश्च तद्वत् चारवः मनोहराः विदीर्णप्रपातजलकणरमणीयाः । 'चूर्णे क्षोदः समुत्पिञ्जपिञ्जलौ' 'हरिणः पाण्डुरः पाण्डुः', 'प्रवाहो निर्झरो झरः', 'शीकरोऽम्बुकणाः स्मृताः', 'चारु मनोज्ञं मञ्जु मञ्जुलं', 'प्रपातस्त्वतटः' सर्वत्राप्यमरः ॥ ३५ ॥

दलितेति ॥ दलितमौक्तिकानां निष्पिष्टमुक्ताफलानां चूर्ण इव विपाण्डवोऽतिशुभ्राः स्फुरिता ये निर्झराणां शीकराः कणास्त इव चारवः कुटजपुष्पपरागकणाः स्फुटं दधिरेणुविडम्बनां दधिचूर्णानुकारं विदधिरे चक्रिरे । तद्वद्बभुरित्यर्थः । पूर्वोपमानद्वयानुप्राणितेयमुपमेति सङ्करः ॥ ३५ ॥

**नवपयःकणकोमलमालतीकुसुमसन्ततिसन्ततसङ्गिभिः ॥**
**प्रचलितोडुनिभैः परिपाण्डिमा शुभरजोभरजोऽलिभिराददे ॥ ३६ ॥**

**नवेति** ॥ अलिभिः भ्रमरैः परिपाण्डिमा आददे गृहीतः सितत्वं धृतम् । परिपाण्डूनां भावः परिपाण्डिमा । परिपाण्डिमन्शब्दः पुंलिङ्गवाची । कृष्णानां हि सितिमा कुत आगतः इत्याह—किंभूतः परिपाण्डिमा शुभः शुक्लो योऽसौ रजोभरः रेणुनिकरः तस्माज्जातः शुक्लरेणुसमूहजन्मा, किंलक्षणैरलिभिः नवपयःकणकोमलमालतीकुसुमसन्ततिसन्ततसङ्गिभिः

(१) स्फुरित ।

नवाः प्रत्यग्रा ये पयःकणाः तोयबिन्दवः तद्वत् कोमला मृदुला या मालतीकुसुम-सन्ततिः जातीपुष्पसमूहः तत्र सन्ततं निरन्तरं सङ्गः परिचयः येषां ते तथा सङ्गिनस्तैः सङ्गिभिः, अत एव अपरं किंलक्षणैरलिभिः प्रचलितानि सञ्चरमाणानि यानि उडूनि नक्षत्राणि तैस्तुल्या निभास्तैः प्रचलन्नक्षत्रसदृशैः स्फुरत्तारकातुल्यैः । 'प्रत्यग्रो नूतनो नवः', 'पयः क्षीरं पयोऽम्बु च', 'लवलेशकणाऽणवः', 'कोमलं मृदुलं मृदु', 'मालती यूथिका जातिः', 'प्रसूनं कुसुमं सुमं', 'संहतिः सन्ततिः समे', 'ज्योतिस्तारा तथोडु च', 'पांसुर्ना न द्वयो रजः', 'षट्पदभ्रमराऽलयः' सर्वत्राप्यमरः ॥ ३६ ॥

नवेति ॥ नवपयःकणवन्नवोदकबिन्दुवत्कोमलानां मालतीकुसुमानां जातीपुष्पाणां सन्ततिषु सन्ततसङ्गिभिर्निरन्तरासक्तैः । 'सुमना मालती जातिः' इत्यमरः । अत एव प्रचलितोडुनिभैः । परागभूषणात् सञ्चरन्नक्षत्रकल्पैरिवेत्युत्प्रेक्षा । अलिभिः शुभ्राद्रजोभरात्परागपुञ्जाज्जातः शुभ्ररजोभरजः परिपाण्डिमा धवलिमा आददे स्वीकृतः ॥ ३६ ॥

**निजरजः पटवासमिवाऽकिरद्धृतपटोपमवारिमुचां दिशाम् ॥**
**प्रियवियुक्तवधूजनचेतसामनवनी नवनीपवनावलिः ॥ ३७ ॥**

निजेति ॥ नवनीपवनावलिः सरसनीपकुसुमकाननराजिः निजरजः अकिरत् स्वैरेणुं चिक्षेप । किंभूता नवनीपवनावलिः प्रियवियुक्तवधूजनचेतसाम् अनवनी कान्तविरहितप्रमदाजनमनसाम् अनवनी अपालनी अरक्षका अप्रीतिकारिणी, उद्वेगोत्पादकत्वात् । उत्प्रेक्षते—पटवासमिव अक्षिपत् पिष्टातमिव चिक्षेप । कासां दिशां ककुभां, किंभूतानां दिशां धृताः कलिताः पटोपमाः पटतुल्याः वारिमुचो मेघा याभिस्ताः तासाम् । यथा काचिन्नायिका सखीनां पटवासं क्षिपति । अवति प्रीणयति अवनी, ततो नञ्समासः । 'पिष्टातः पटवासकः', 'पांसुर्ना न द्वयो रजः', 'स्वके नित्ये निजं त्रिषु', 'नीपो धूलिकदम्बोऽन्यः सुवासा वृत्तपुष्पकः' इत्यमरः ॥ ३७ ॥

निजेति ॥ प्रियवियुक्तवधूजनचेतसाम् । कर्मणि षष्ठी । अनवनी अरक्षणी । किन्तु हन्त्रीत्यर्थः । अवतेः कर्तरि ल्युटि ङीप् । नवनीपवनावलिः नवकदम्बकाननपङ्क्तिः । धृताः पटोपमाः पटकल्पा वारिमुचो मेघा याभिस्ताः । मेघपटावृता इत्यर्थः । तासां दिशां निजरजः स्वपरागं पटवासं पिधानमिवेत्युत्प्रेक्षा । अकिरदक्षिपत् । सखीवदिति भावः ॥ ३७ ॥

**प्रणयकोपभृतोऽपि पराङ्मुखाः सपदि वारिधराऽऽरवभीरवः ॥**
**प्रणयिनः परिरब्धुमनन्तरं (१) ववलिरे वलिरेचितमध्यमाः ॥ ३८ ॥**

प्रणयेति ॥ वलिरेचितमध्यमाः स्त्रियः प्रणयिनो वल्लभान् परिरब्धुं ववलिरे आलिङ्गितुं वलिताः । वलिभिः रेचितमाश्लेषवशात् रहितं मध्यमुदरं यासां ताः । तथा किंलक्षणास्ताः स्त्रियः प्रणयकोपभृतोऽपि प्रणये प्रणयाय प्रीतये वा कोपस्तं बिभ्रतीति तथोक्ताः प्रीतिकलहं धारयन्त्योऽपि, पुनः किंभूताः पराङ्मुखा असंमुखाः, अप्रीतत्वात् । तर्हि कथं वलिता इत्याह—अपरं किंलक्षणाः सपदि वारिधरारवभीरवः सपदि तत्क्षणमेव वारिधरारवात् मेघगर्जितात् भीरवः त्रस्ताः, अनन्तरं वलिताः अनन्तरं दृढं यथा भवति तथा, परिरब्धुमिति वा वलिताः । प्रणयकोपशब्देन प्रीतिकलहः । 'अधीरे कातरत्रस्तभीरुभीरुकभीलुकाः', 'करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्' इत्यमरः ॥ ३८ ॥

---

( १ ) ०मथाङ्गना ।

प्रणयेति ॥ प्रणयकोपभृतः अत एव पराङ्मुखा विमुखा अपि । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विकल्पादाकारः । सपदि वारिधरारवेभ्यो गर्जितेभ्यो भीरवो भीताः । स्त्रिय इति शेषः । अथ अनन्तरं गर्जिताकर्णनानन्तरमेव प्रणयिनः प्रियान्परिरब्धुमालिङ्गितुं वलिरोचितान्यालिङ्गनार्थमङ्गप्रसारणात् त्रिवलिरिक्तीकृतानि मध्यमान्यवलग्नानि यासां ताः सत्यो ववलिरे प्रवृत्ताः । वलतेर्वकारादित्वात् 'न शसददवादिगुणानाम्' इत्येत्वाभ्यासलोपप्रतिषेधः ॥ १८ ॥

वर्षासु वातवशात् किसलयानि चलन्ति, अलयो गुञ्जन्ति इति स्वभावः । तत्र कविरूहते—

**विगतरागगुणोऽपि नरो न कश्चलति वाति पयोदनभस्वति ॥**
**अभिहितेऽलिभिरेवमिवोच्चकैरननृते ननृते नवपल्लवैः ॥ ३९ ॥**

**विगतेति** ॥ नवपल्लवैर्ननृते नूतनकिसलयैः नृत्तम् । उत्प्रेक्षते—अलिभिर्भ्रमरैरेवममुना प्रकारेण उच्चैः तारस्वरेण यथा स्यात्तथा अननृते सत्येऽभिहिते इव उक्ते इव । किमभिहितमित्याह—यत्, पयोदनभस्वति मेघमारुते वाति सति वहति सति कः विगतरागगुणोऽपि नरः परित्यक्तरागद्वेषोऽपि पुरुषः अत्र न चलति धैर्यान्न भ्रश्यति इति न । किन्तु मुनयोऽपि वर्षासु क्षुभ्यन्तीत्यर्थः । अतश्च यदा नीरागोऽपि चलति तदा सरागाणि रक्तानि कथं न चलन्तीति भावः । रागो व्यसने लौहित्ये । 'पल्लवोऽस्त्री किसलयम्' । न अनृतम् अननृतम् तस्मिन् । यदा नीरागा मुनयश्चलन्ति, तदा नवपल्लवैः चल्यते तत्र किं वक्तव्यमित्यर्थः ३९

**विगतेति** ॥ पयोदनभस्वति मेघमारुते वाति वहति सति । वातेर्लटः शत्रादेशः । विगतरागगुणो विरक्तोऽपि को नरो न चलति । सर्वोऽपि चलत्येवेत्यर्थः । एवमलिभिरुच्चकैरुच्चैस्तरामनृतमसत्यं न भवतीत्यनृतं तस्मिन्ननृते सत्यवचनेऽभिहिते सति नवपल्लवैर्ननृत इव नृत्यं कृतमिवेत्युत्प्रेक्षा । नृतेर्भावे लिट् ॥३९॥

**अरमयन्भवनादचिरद्युतेः किल भयादपयातुमनिच्छवः ॥**
**यदुनरेन्द्रगणं तरुणीगणास्तमथ मन्मथमन्मन(१)भाषिणः ॥ ४० ॥**

**अरमयन्निति** ॥ अथानन्तरं तरुणीगणाः युवतीसमूहाः यदुनरेन्द्रगणं यादवनृपतिवृन्दम् अरमयन् हृष्टं चक्रुः । किंभूतास्तरुणीगणाः अचिरद्युतेः भयात् विद्युत्त्रासात्, किलेत्यलीके, भवनात् गृहात् अपयातुमनिच्छवः नन्निर्गन्तुकामाः । तत्त्वतो हि शक्ता एवापि तान् वशीकर्तुं भयान्नाययुरित्यर्थः । अपरं किंलक्षणाः गणाः मन्मथमन्मनभाषिणः मन्मथेन कामेन मन्मनम् अव्यक्तं भाषन्ते इति तथा । मन्मनशब्दोऽत्र अव्यक्तमधुरवाचको देशीपदम् । 'भवनागारमन्दिरं', 'समवायश्च यो गणः' इत्यमरः ॥ ४० ॥

**अरमयन्निति** ॥ अचिरद्युतेर्विद्युतो भयात्किल भयादिव न तु तथा । किन्तु रागादेवेति भावः । किलेत्यलीके । भवनाद्रमणगृहादपयातुं निर्गन्तुमनिच्छवः । भयव्याजात्तत्रैव स्थिता इति भावः । 'विन्दुरिच्छुः' इत्युप्रत्ययान्तो निपातः । मन्मथेन मन्थरमलसं भाषन्त इति मन्मथमन्थरभाषिणः । कामवशा इत्यर्थः । तरुणीगणास्तं प्रकृतं, यदव एव नरेन्द्रास्तेषां गणमरमयन्रमयन्ति स्म । अत्र भयेन रागनिगूहनान्मीलनालङ्कारः । 'मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम्' इति लक्षणात् । सोऽप्यागन्तुकेन भयेन सहजरागतिरोधानादागन्तुकेन सहजतिरोधानरूपः । इतिवर्षावतारः ॥ ४० ॥

**ददतमन्तरिताऽहिमदीधितिं खगकुलाय कुलायनिलायिताम् ॥**
**जलदकालमबोधकृतं निशा(२)मपरथाऽऽप रथावयवायुधः ॥ ४१ ॥**

**ददतमिति** ॥ रथावयवायुधः चक्रपाणिः श्रीकृष्णः जलदकालमेव निशां रात्रिम् आप प्राप । कथम् अपरथा अन्येन प्रकारेण निशारूपेण साधर्म्ययोगाख्येन यथा भवति,

---

( १ ) मन्थर । ( २ ) दिशा० ।

किंलक्षणं जलदकालम् अन्तरिताऽहिमदीधितिमाच्छादितसूर्यम्, अन्तरितः अहिमदीधितिः उष्णरश्मिः यत्र सः तथा तम् । अत एवापरं किंभूतं जलदकालं खगकुलाय पक्षिपूगाय कुलायनिलायितां ददतं कुलायाय नीडार्थं निलायितां निवेशित्वं ददतम् । अत्र चातिवृष्टिः कारणम् । अपरं किंभूतं जलदकालम् अबोधकृतं भगवतः श्रीकृष्णस्य निद्राकारिणम्, अबोधं करोतीति अबोधकृत् तम् । भगवान् श्रीकृष्णः किल जलदकाले स्वपिति । जलदकाले निशा-अप्येवंविधा भवन्ति । रथस्यावयवश्चक्रं तदायुधं प्रहरणं यस्य सः । 'खगौ तु शरपक्षिणौ,' 'कुलं समूहे गोत्रे च', 'कुलायो नीडमस्त्रियाम्', 'निकाय्यनिलयालयाः' सर्वत्राप्यमरः॥४१॥

अथ शरद्वर्णनमारभते—

**ददतमिति** ॥ रथावयवायुधश्चक्रायुधो हरिरन्तरिताहिमदीधितिं तिरोहितोष्णांशुं तथा खगकुलाय पक्षिसङ्घाय, कुलायेषु नीडेषु निलीयन्त इति कुलायनिलायिनः । 'कुलायो नीडमस्त्रियाम्' **इत्यमरः** । तेषां भावस्तत्ता तां ददतं प्रयच्छन्तम् । पक्षिसञ्चारं प्रतिबध्नन्तमित्यर्थः । 'नाभ्यस्ताच्छतुः' इति नुम्-प्रतिषेधः । दिशामिति कर्मणि षष्ठी । अबोधकृतमबोधकारिणम् । मेघावरणेन प्राच्यादिविवेकं लुम्पन्त-मित्यर्थः । जलदकालं प्रावृट्कालमपरथा प्रकारान्तरेण आप प्राप । मेघोदयोपाधिना प्रावृड्व्यवहारभाजं तमेव कालं मेघात्ययोपाधिना शरत्संज्ञयोपलेभे इत्यर्थः । कालो हि एक एव सन्ननेकोपाधिसम्बन्धान्नाना-त्वेनोपचर्यत इति तद्विदः ॥ ४१ ॥

अथ शरद्वर्णनम्—

**स विकचोत्पलचक्षुषमैक्षत क्षितिभृतोऽङ्कगतां दयितामिव ॥**
**शरदमच्छगलद्वसनोपमाक्षमघनामघनाशनकीर्तनः ॥ ४२ ॥**

**स इति** ॥ अघनाशनं पापक्षयकरं कीर्तितं नाम यस्य सः अघनाशनकीर्तितो हरिः भगवान् शरदं शरदाख्यम् ऋतुमैक्षत ददर्श अदर्शत् । किंभूतां शरदं क्षितिभृतः रैवतकस्य अचलस्य अङ्कतां प्राप्तामुत्सङ्गतां गतां, पुनः किंभूतां शरदं विकचानि प्रफुल्लानि उत्पला-न्येव इन्दीवराण्येव चक्षूंपि नयनानि यस्याः सा ताम् उत्पलचक्षुषं प्रफुल्लोत्पलनेत्रां, पुनः किंभूतां शरदम् अच्छगलद्वसनोपमाक्षमघनाम् अच्छा निर्मला गलन्तो भ्रश्यन्तः अधःपतन्तः क्षरन्तो वा वसनोपमाक्षमा वस्त्रोपमानयोग्याः वसनसदृशा घना मेघा यस्याः सा तथा ताम्, अतश्च कामिव दयितामिव प्रियामिव प्रेयसीतुल्याम् । यथा कश्चिद्विलासी दयितां पश्यति । किंभूतां दयितां क्षितिभृतो राज्ञः अङ्कगतां, तथा प्रफुल्लकमलनेत्रां, तथा मस्तकाऽगलद्वसनां चेति पूर्ववद्विशेषणानि योज्यानि । 'प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकच-स्फुटाः' । 'गिरिभूपौ क्षितिभृतौ', 'उत्सङ्गचिन्हयोरङ्कः', 'क्षमं शक्तो हिते त्रिषु' सर्वत्रा-प्यमरः ॥ ४२ ॥

स इति ॥ अघानां नाशनं निवर्तनं कीर्तनं यस्य सोऽघनाशनकीर्तनः स हरिर्विकचमुत्पलमेव चक्षु-र्यस्यास्तामच्छं शुभ्रं गलत्स्रंसमानं यद्वसनं तस्योपमा सादृश्यं तस्याः क्षमा योग्या घना मेघा यस्यां सा ताम् । अत एव क्षितिभृतोऽङ्कगतामुत्सङ्गगतां दयितामिवेत्युत्प्रेक्षा । शरदमैक्षत ॥ ४२ ॥

**जगति नैशमशीतकरः करैर्वियति वारिदवृन्दमयं तमः ॥**
**जलजराजिषु नैद्रमदुद्रवन्न(१) महतामहताः क्वचनाऽरयः ॥ ४३ ॥**

**जगतीति** ॥ अशीतकरः उष्णकरः श्रीसूर्यः जगति पृथिव्यां विश्वस्मिन् वा करैः

---

( १ ) ०मदिद्रवन्न ।

रश्मिभिः कृत्वा नैशं तमः रात्रिभवमन्धकारम् अ दुद्रवत् स्फोटयामास अनीनशत , अपरं श्रीसूर्यः वियति आकाशे वारिदवृन्दमयं घनौघरूपं तिमिरम् अदुद्रवत् । तत्र हि घना नश्यन्तीत्यर्थः । अपरं जलजराशिषु कमलश्रेणिषु नैद्रं निद्राख्यं सङ्कोचलक्षणं तमः अदुद्रवत् । तत्र हि पद्मानां विकासाभावात् । यच्च रविणा सूर्येण सर्वत्र तमो नाशितं तत्कथं— यतः यस्मात्कारणात् महतामुन्नतानामरयः शत्रवः क्वचन क्वचिदपि नाऽहताः । अपि तु सर्वत्रैव हताः इत्यर्थः । महात्मभिर्हि सर्वत्र गताः शत्रवो हन्यन्ते । रवेरन्धकाराण्येव शत्रुतुल्यानि । 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः ॥ ४३ ॥

जगतीति ॥ अशीतकरं उष्णांशुः करैः स्वांशुभिर्जगति लोके निशायां भवं नैशम् । 'निशाप्रदोषाभ्यां च' इति विकल्पादण् प्रत्ययः । तमस्तिमिरमदिद्रवत् द्रावयति स्म । निरस्तवानित्यर्थः । द्रु गतौ । णौ चङि उपधाह्रस्वः, सन्वद्भावः । 'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा' इत्यभ्यासस्य विकल्पादित्वम् । वियत्याकाशे वारिदवृन्दमयं मेघसङ्घरूपम् । स्वार्थे मयट् । तमः अदिद्रवत् । जलजराजिषु निद्रामेव नैद्रं निमीलनं तदेव तमः अदिद्रवत् । तथा हि—महतां महात्मनाम् । अरयः क्व च क्व वा न नाऽहताः अहता न । किन्तु सर्वत्र हता भवन्तीत्यर्थः । द्वितीयानिषेधप्रापितस्य प्रकृतार्थस्य हननस्य तृतीयेन निषेधः, पुनः क्वेति क्वशब्दसामर्थ्यात्प्रकृतार्थपर्यवसानम् । वैधर्म्येण सामान्याद्विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥४३॥

समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम् ॥
शरदि हंसरवाः परुषीकृतस्वरमयूरमयू रमणीयताम् ॥ ४४ ॥

समय इति ॥ हंसरवाः सारसध्वनयः शरदि ऋतौ रमणीयतामयुः हृद्यत्वं प्रापुः परुषीकृतस्वरमयूरं यथा भवति तथा, अपरुषाः परुषाः कृताः परुषीकृताः तथा स्वरा येषां ते परुषीकृतस्वराः, कठोरत्वमरमणीयत्वं नीतरवाः मयूराः केकिनो यत्र तत । हंसरवान् श्रुत्वा शिखिनो रूक्षवाचो जायन्ते इति स्थितिः । किंभूता हंसरवाः, उत्प्रेक्षते—इति प्रणिगदन्त इव कथयन्त इव । इतीति किं—यत, शरीरिणां देहवतां स्थावरजङ्गमानां समयएव काल एव बलाबलं करोति स्वकाल एव मानापमानं करोति नान्यः । यत् हंसध्वनीन् श्रुत्वा मयूराः कठोरस्वरा जाता इति । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः ॥ ४४ ॥

समय इति ॥ समयः काल एव शरीरिणां बलाबलं बलाबले । 'विप्रतिषिद्धं चानधिकरणवाचि' इति विकल्पाद् द्वन्द्वैकवद्भावः । करोतीति प्रणिगदन्तः प्रतिपादयन्त इवेत्युत्प्रेक्षा । 'नेर्गदनदपत—' इत्यादिना णत्वम् । शरदि हंसरवाः परुषीकृतस्वरा निष्ठुरीकृतनादा मयूरा यस्मिन्कर्मणि तत्परुषीकृतस्वरमयूरं यथा तथा रमणीयतामयुः प्राप्ताः । यातेर्लङि 'लङः शाकटायनस्यैव' इति झेर्जुसादेशः, 'उस्यपदान्तात्' इति पररूपं, संहितायां ढ्रलोपे पूर्वस्य दीर्घोऽणः । शरत्प्रावृषोर्हंसमयूरकूजिते माधुर्यामाधुर्यविपर्ययदर्शनात्काल एव प्राणिनां बलाबलनिदानं व्यक्तमभूदित्यर्थः ॥ ४४ ॥

तनुरुहाणि पुरो विजितध्वनेर्धवलपक्षविहङ्गमकूजितैः ॥
जगलुरक्षमयेव शिखण्डिनः परिभवोऽरिभवो हि सुदुःसहः ॥ ४५ ॥

तनुरुहाणीति ॥ शिखण्डिनो मयूरस्य तनुरुहाणि लोमानि पिच्छानि जगलुर्गलितानि । उत्प्रेक्षते—अक्षमयेव क्रोधेनेव । अक्षमाया निमित्तमाह—किंभूतस्य शिखण्डिनः पुरोऽग्रे धवलपक्षविहङ्गमकूजितैः विजितध्वनेः धवलाः पक्षा येषां ते च ते विहङ्गमाः पक्षिणो हंसाश्च तेषां कूजितानि शब्दितानि तैः हंसशब्दितैः विजितः ध्वनिर्यस्य सः तथा तस्य, निर्जितस्य । हंसरवश्रवणे हि शरदि मयूराः केका न ह्रादयन्ति । ततो युक्तं स्यान्मयूर-

पक्षपतनम् । हि यस्मादरिभवो रिपुसमुत्थो यः परिभवः अपमानः, सः सुदुःसहः सुतरां सोढुं न शक्यते । ते च हंसैर्जितस्वराः । अन्योऽपि मानी सन् परिभवे सति अवश्यमक्षमया कोपात् शिरो मुण्डयति । 'तनूरुहं रोम लोम', 'पक्षो वाजस्तनूरुहं', 'ध्वनिध्वानरवस्वनाः', 'वलक्षो धवलोऽर्जुनः', 'पक्षः पार्श्वगरुत्साध्यसहायबलिभित्तिषु', 'बर्हिकेकिशिखण्डिनः' सर्वत्राप्यमरः ॥ ४५ ॥

**तनुरुहाणीति** ॥ पुरोऽग्रे धवलपक्षाविहङ्गमा हंसपक्षिणः । 'हंसास्तु श्वेतगरुतः' इत्यमरः । तेषां कूजितैर्विजितध्वनेः शिखण्डिनो मयूरस्य तनौ रुहाणि रूढानि तनुरुहाणि बर्हाणि । इगुपधलक्षणः कप्रत्ययः । अक्षमया हंसकूजितेर्ष्ययेव जगलुर्गलन्ति स्म । कालप्रयुक्तस्य बर्हगलनस्याऽक्षमाहेतुकत्वमुत्प्रेक्ष्यत इति गुणहेतूत्प्रेक्षा । युक्तं चैतदित्याह—अरिभवः परिभवः सुदुःसहोऽत्यसह्यो हि । पराजयदुःखितस्याङ्गसादो युज्यत इति भावः । कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः । स च अक्षमोत्प्रेक्षया सङ्कीर्यते ॥४५॥

अनुवनं वनराजिवधूमुखे बहलरागजपाऽधरचारुणि ॥
विकचबाणदलावलयोऽधिकं रुरुचिरे रुचिरेक्षणविभ्रमाः ॥ ४६ ॥

**अनुवनमिति** ॥ विकचबाणदलावलयः विकस्वरझिण्टीतरुकुसुमकिसलयराजयः अनुवनं वने वने अधिकं सातिशयं यथा भवति तथा रुरुचिरे अत्यर्थं शुशुभिरे । क्व बभुः वनराजिवधूमुखे वनराजिः काननरेखा सा एव वधूरङ्गना तस्या मुखे प्रारम्भे, किंलक्षणे वनराजिवधूमुखे बहलरागजपाऽधरचारुणि बहलरागा नितान्तलौहित्या या जपा कुसुमविशेषः सा एव अधरः ओष्ठः तेन चारु रम्यं तस्मिन् । किंलक्षणाः विकचबाणदलावलयः रुचिरेक्षणविभ्रमाः रुचिराणि मनोज्ञानि ईक्षणानि नयनानि तेषां विभ्रमः विलासो यासां ताः तथा । नेत्रतुल्या इत्यर्थः । अन्यापि या वधूः, तस्या जपालौहित्याधरोष्ठे मुखे विकचबाणदलावलितुल्यानि रुचिरेक्षणानि प्रियनिकटे नितरां राजन्ते । 'ओण्ड्रपुष्पं जपापुष्पं', 'दलं पर्णं छदः पुमान्' इत्यमरः ॥ ४६ ॥

**अनुवनमिति** ॥ अनुवनं प्रतिवनं बहलो रागो यस्याः सा चासौ जपा च । 'ओण्ड्रपुष्पं जपा' इत्यमरः । पुष्पेषु जातीप्रभृतित्वात्स्वलिङ्गता । सैवाधरस्तेन चारुणि रम्ये वनराजेरेव वधूस्तस्या मुखं प्राग्भागस्तदेव मुखं वक्त्रमिति श्लिष्टरूपकं तस्मिन्, रुचिराणामीक्षणानां विभ्रमः शोभा यासां ताः विकचबाणदलावलयो नीलझिण्टीपत्रपङ्क्तयः । 'बाणोऽस्त्री नीलझिण्ट्यां च' इति वैजयन्ती । अधिकं रुरुचिरे शुशुभिरे । उपमारूपकयोः सङ्करः ॥ ४६ ॥

कनकभङ्गपिशङ्गदलैर्दधे सरजसाऽरुणकेसरचारुभिः ॥
प्रियविमानितमानवतीरुषां निरसनैरसनैरवृथार्थता ॥ ४७ ॥

**कनकेति** ॥ असनैर्बीजकपुष्पैः अवृथार्थता दधे सफलत्वं धृतं, न वृथा निष्फलः अर्थः प्रयोजनं यस्य सः वृथार्थः तस्य भावो वृथार्थता । असनानि सर्वस्यैवोपभोगकारीण्यासन्नित्यर्थः । अथ च अवृथार्थता अन्वर्थता दधे । अस्यन्ति क्षिपन्ति मानिनीनां मानमिति असनाः तैः । 'वृथा निरर्थकाऽविध्यो'रित्यमरः । यतः कीदृशैः असनैः प्रियविमानितमानवतीरुषां निरसनैः भर्तृखण्डितमनस्विनीरोषाणां विध्वंसकैः नाशकैः क्षेप्तृभिः, प्रियैः भर्तृभिर्विमानिता अवगणिता या मानवत्यो मनस्विन्यः तासां रुषः क्रोधाः तासां विनाशकैः । यानि दृष्ट्वा मानिन्यः कामाकुलितत्वात् कोपं मुञ्चन्तीत्यर्थः । अपरं किंलक्षणैः असनैः कनकभङ्गपिशङ्गदलैः कनकस्य हिरण्यस्य भङ्गः छेदः तद्वत् पिशङ्गानि

पीतानि दलानि पर्णानि येषां तानि तैः काञ्चनच्छेदवत् पीतवर्णैः, अपरं किंलक्षणैः असनैः सरजसाऽरुणकेसरचारुभिः सह रजसा रेणुना वर्तन्ते तानि सरजसानि सधूलीनि अरुणानि आरक्तानि यानि केसराणि किञ्जल्काः तैः चारूणि रम्याणि तैः । 'दलं पर्णः छदः पुमान्', 'माञ्जिष्ठरागस्त्वरुणः', 'किञ्जल्कः केसरोऽस्त्रियाम्', 'बीजके क्षेपकेऽसनः' सर्वत्राप्यमरः ४७

कनकेति ॥ कनकभङ्गः स्वर्णखण्डा इव पिशङ्गानि दलानि येषां तैः, सह रजसा सरजसम् । 'अचतुर-' इत्यादिना साकल्यार्थेऽव्ययीभावे समासान्तो निपातः, बहुव्रीह्यर्थे तु लक्षणया । सरजस्का इत्यर्थः । अत एव 'न सरजसमित्यनव्ययीभावे' इति वामनः । अथवा महाकविप्रयोगप्राचुर्यदर्शनादव्ययीभावदर्शनं प्रायिकमिति पक्षाश्रयणाद् बहुव्रीह्यर्थोऽपि साधुरेव । तथा च सरजसं सरजसा वा ये अरुणकेसरास्तैश्चारुभिः तथा प्रियैर्विमानिता अवमानिता मानवत्यो मानिन्यस्तासां या रुषो रोषास्तासां निरसनैर्निरासकैः । अस्यतेः कर्तरि ल्युट् । असनैः प्रियकप्रसूनैः । 'सर्जकासनबन्धूकपुष्पप्रियकजीवकाः' इत्यमरः । अन्वर्थता माननिरासकत्वादस्यन्तीत्यसनानि इत्यन्वर्थनामकत्वं दधे दध्रे । दधातेः कर्मणि लिट् ॥ ४७ ॥

**मुखसरोजरुचं मदपाटलामनुचकार चकोरदृशां यतः ॥**
**धृतनवातपमुत्सुकतामतो न कमलं कमलम्भयदम्भसि ॥ ४८ ॥**

मुखसरोजेति ॥ अतः अस्मात् कारणात् अम्भसि पानीये कमलं पद्मं कं पुरुषमुत्सुकतां न अलम्भयत् उत्कण्ठितत्वं न प्रापयामास । अपि तु सर्वस्यैव महतीमुत्सुकतां चकारेत्यर्थः । तत् किं कारणम्, अतः कुतः, यतो यस्मात्कारणात्तत्कमलं चकोरदृशां कामिनीनां मुखसरोजरुचं वक्त्रकमललक्ष्मीमनुचकार व्यडम्बयत्, किंभूतां मुखसरोजरुचं मदेन क्षीबतया पाटलां लौहित्यवतीम् । तद्दर्शनेन सादृश्यात् प्रियावदनकमलस्मरणात् सर्वस्यैवोत्सुकतेति भावः । किंलक्षणं कमलं धृतो नवातपो बालातपो येन तत् तथा । नवातपस्य मद उपमानं, कमलस्य मुखमुपमानम् । 'श्वेतरक्तस्तु पाटलः', 'जीवञ्जीवश्चकोरकः', 'इष्टार्थोद्युक्त उत्सुकः', 'कमलं पद्मवारिणोः' सर्वत्राप्यमरः ॥ ४८ ॥

मुखसरोजेति ॥ धृतो नवातपो येन तद्धृतनवातपम् । बालातपताम्रमित्यर्थः । अम्भसि कमलम् । अम्भःस्थं कमलम् । अम्भोग्रहणं स्थलकमलनिवृत्त्यर्थम्, अम्लानताद्योतनार्थं वा । यतो मदपाटलां चकोरदृशां स्त्रीणां मुखसरोजरुचं मुखारविन्दशोभामनुचकार । 'अनुपराभ्यां कृञः' इति परस्मैपदनियमः । अतोऽनुकरणाद्धेतोः कं पुमांसमुत्सुकतां प्रेयसीमुखावलोकनकौतुकितां नालम्भयन्नागमयत् । सर्वं चालम्भयदेव । तत्स्मारकत्वादित्यर्थः । एतेनौत्सुक्यवस्तुना कार्येण कारणभूता कमलदर्शनोत्था मुखस्मृतिर्व्यज्यत इति वस्तुनाऽलङ्कारध्वनिः । एतेन स्त्रीमुखसादृश्यात्कमलं स्वाधाराम्भसि पुंस उत्सुकतामलम्भयदिति रङ्गराजव्याख्यानं 'काकस्य कार्ष्ण्याद्धवलः प्रासादः' इतिवदसङ्गतं मन्तव्यमिति । अलम्भयदिति लभेर्ण्यन्तालङ् 'लभेश्च' इति नुमागमः । लभेश्चात्र प्राप्त्युपसर्जनकगत्यर्थत्वात् 'गतिबुद्धि-' इत्यादिना अणि कर्तुः कर्मत्वे द्विकर्मकता । गत्युपसर्जनकप्राप्त्यर्थत्वे तु वैपरीत्यमित्युक्तं 'सितं सितिम्ना' इत्यत्र ॥ ४८ ॥

**विरत(१)सस्यजिघत्समघट्टयत्कलमगोपवधूर्न मृगव्रजम् ॥**
**श्रुततदीरितकोमलगीतकध्वनिमिषेऽनिमिषेक्षणमग्रतः ॥ ४९ ॥**

विरतेति ॥ कलमगोपवधूः कलमं शालिविशेषं गोपायति रक्षतीति कलमगोपी सा चासौ वधूश्च इषे आश्विने मासे मृगव्रजं हरिणयूथं न अघट्टयत् न अपासयत् न त्रासयामास । यतः किंलक्षणं मृगव्रजं विरतसस्यजिघत्सं विरता निवृत्ता सस्यस्य धान्यस्य जिघत्सा अत्तुमिच्छा यस्य सः तं निवृत्तधान्यबुभुक्षं, पुनः किंभूतं मृगव्रजं श्रुतः आक-

(१) विगत ।

र्णितः तदीरितः तया कलमगोपवध्वा ईरितः उच्चारितः कोमलोऽपरुषः गीतकध्वनिः गानशब्दो येन सः तथा तम्, अत एव किंभूतं मृगव्रजम् अनिमिषेक्षणम् अनिमिषे गीतश्रवणरागेण निश्चले ईक्षणे नयने यस्य सः तं, क्व अग्रतः अग्रे । इषग्रहणं कलमस्य पाकप्रतिपादनार्थम् । पाके विरतसस्यजिघत्सम् । 'शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी' । 'गोष्ठाऽध्वनिवहा व्रजाः', 'गीतं गानमुभे समे', 'स्यादाश्विन इषोऽप्याश्वयुजः' सर्वत्राप्यमरः ॥४९

विगतेति ॥ इषे आश्वयुजमासे । 'स्यादाश्विन इषोऽप्याश्वयुजः' इत्यमरः । कलमगोपी शालिगोप्त्री सा चासौ वधूश्च कलमगोपवधूः । 'स्त्रियाः पुंवत्-' इत्यादिना पुंवद्भावः । श्रुत आकर्णितस्तया वध्वा ईरितस्यालापितस्य कोमलगीतकस्य मधुरगानस्य ध्वनिर्येन तं श्रुततदीरितकोमलगीतकध्वनिम् अत एवाग्रतोऽग्रे न निमिषति विस्मयानन्दाभ्यामित्यनिमिषम् । इगुपधलक्षणः कप्रत्ययः । तदीक्षणं यस्य तमनिमिषेक्षणम् । घस्तुमत्तुं वेच्छा जिघत्सा । घसेरदादेशाद्वा सन्नन्तात् 'अप्रत्ययात्' इति स्त्रियामप्रत्ययः । विगता सस्यस्य जिघत्सा यस्य तं विगततस्यजिघत्सम् । उपसर्जनात् ह्रस्वः । मृगव्रजं नाघट्टयन्नाऽताडयत् । सिद्धे साधनाप्रयोगादिति भावः । अत्र दण्डसाध्ये मृगनिवारणे काकतालीयन्यायेन मुख्यार्थस्य गानस्य कारणत्वकथनात्समाधिरलङ्कारः । 'कारणान्तरयोगात्कार्यसुकरत्वं समाधि'रिति सूत्रात् ॥ ४९ ॥

कृतमदं निगदन्त इवाकुलीकृतजगत्त्रयमूर्जमतङ्गजम् ॥
ववुरयुक्छदगुच्छसुगन्धयः सततगास्ततगानगिरोऽलिभिः ॥ ५० ॥

कृतमदमिति ॥ सततं गच्छन्ति ते सततगाः वायवः ववुः वान्ति स्म । किंभूताः सततगाः अयुक्छदगुच्छसुगन्धयः अयुक्छदानां सप्तपर्णानां गुच्छैः पर्णैः पुष्पस्तबकैर्वा सुगन्धयः सुरभयः सप्तच्छदवृक्षपर्णकृताधिवासाः, पुनः किंभूताः सततगाः अलिभिर्भृङ्गैः ततगानगिरः तता विस्तृता गानगीः गेयध्वनिर्येषु ते ततगानगिरः, अपरं किंभूताः सततगाः, अतश्चोत्प्रेक्ष्यते—ऊर्जमतङ्गजं निगदन्त इव ऊर्जः कार्तिको मासः स एव मतङ्गजो हस्ती तं निगदन्तः, सूचयन्त इत्यर्थः । किंभूतमूर्जमतङ्गजं कृतमदं जनितचित्तविकारं मत्तम्, अत एवापरं किंलक्षणम् आकुलीकृतजगत्त्रयं विह्वलीकृतत्रिभुवनम्, अतिकामजनकत्वात् । अन्योऽपि यो मतङ्गजो हस्ती कृतमदो मत्तो भवति, अत एव स आकुलीकृतजनः स्यात् । तदा दुन्दुभिः पुरस्सरो वाद्यते—भोः ! पलायध्वम्, एष मतङ्गजो मत्तो जिघांसुरायातीति । तथा वायवोऽपि ऊर्जगजेन्द्रं निगदन्त इवेत्यर्थः । 'बाहुलोर्जौ कार्तिकिकः', 'स्तबको गुच्छको गुच्छः' इत्यमरः ॥ ५० ॥

कृतमदमिति ॥ अयुजो विषमाश्छदा येषां ते अयुक्छदाः सप्तपर्णास्तेषां गुच्छैः स्तबकैः सुगन्धयः शोभनगन्धाः । गजमदगन्धिन इति भावः । अलिभिर्भृङ्गैस्तता विस्तृता गानगिरो येषां ते । अलिभिर्गीयमाना इत्यर्थः । सततं गच्छन्तीति सततगाः सदागतयः । वायव इति यावत् । कृतमदं जनितमदम् अत एवाकुलीकृतजगत्त्रयम् । ऊर्जः कार्तिकः । 'बाहुलोर्जौ कार्तिकिकः' इत्यमरः । स एव मतङ्गज इति रूपकम् । तं निगदन्त इव अयमागच्छतीत्यावेदयन्त इव ववुर्वान्ति स्म । मत्तमातङ्गगमनेऽप्येवंविधवायुवहनसम्भवादियमुत्प्रेक्षा । रूपकं त्वङ्गमस्याः ॥ ५० ॥

विगतवारिधरावरणाः क्वचिद्ददृशुरुल्लसिताऽसिलताऽसिताः ॥
क्वचिदिवेन्द्रगजाजिनकञ्चुकाः शरदि नीरदिनीर्यदवो दिशः ॥ ५१ ॥

विगतेति ॥ यदवो यादवाः शरदि ऋतौ काले दिशः ककुभो ददृशुः पश्यन्ति स्म । किंलक्षणा दिशः क्वचित् कस्मिंश्चित्प्रदेशे विगतवारिधरावरणाः विगतं नष्टं वारिधरा

जलधरा एव आवरणमाच्छादनं यासां ताः निवृत्तमेघाच्छादनाः, पुनः किंभूता दिशः उल्लसिताऽसिलताऽसिताः उल्लसिता कोशात् आकृष्टा उत्तेजिता वा असिलता खड्गवल्ली तद्वत् असिताः कृष्णाः स्फुरत्खड्गयष्टिनीलाः, पुनः किंभूता दिशः क्वचित् कस्मिंश्चित्प्रदेशे नीरदिनीः नीरदाः मेघा विद्यन्ते यासु ता नीरदिन्यः ताः । शुक्लाभ्रयुक्ताइत्यर्थः । नीरदशब्देनात्र सिता मेघा बोद्धव्याः । पुनः किंभूता दिशः, अतश्चोत्प्रेक्ष्यते—इन्द्रगजाजिनकञ्चुका इव इन्द्रगज ऐरावणस्तस्याजिनं चर्म तदेव कञ्चुकमुत्तरीयं यासां ताः । श्वेतोत्तरीया इत्यर्थः । शरद्ग्रहणात् ऐरावताजिनेन साम्यं घटते । मेघानां कोशउपमानं, दिशां खड्गलताः । कोशः खड्गे प्रत्याकारः स्यात् तत आकृष्टं दिश उपमानम्(?) । 'अजिनं चर्म कृत्तिः स्त्री', 'कञ्चुको वारबाणोऽस्त्री' इत्यमरः ॥ ५१ ॥

विगतेति ॥ शरदि यदवो यादवाः । यदुशब्देन रघुशब्दवत्तदपत्ये लक्षणा । जनपदशब्दानामिव 'तद्राजस्य बहुषु–' इति लुक्सम्भवादिति । क्वचिद्विगतवारिधरावरणा निवृत्तमेघावरणाः अत एवोल्लसिता कोशादुद्धृता असिर्लतेवासिलता तद्वदसिताः श्यामा इत्युपमा । क्वचिन्नीरादिनीर्मेघवतीः । शुभ्राभ्रपटलच्छन्ना इत्यर्थः । अत एवेन्द्रगजाजिनमैरावतचर्म तदेव कञ्चुकः कूर्पासको यासां ता इव स्थिता इत्युत्प्रेक्षा । दिशो ददृशुः । उक्तालङ्कारयोः संसृष्टिः ॥ ५१ ॥

विलुलितामनिलैः शरदङ्गना नवसरोरुहकेसरसम्भवाम् ॥
विकरितुं परिहासविधित्सया हरिवधूरिव धूलिमुदक्षिपत् ॥ ५२ ॥

विलुलितामिति ॥ शरदङ्गना शरद्वनिता नवसरोरुहकेसरसम्भवां धूलिमुदक्षिपत् सरसकमलकिञ्जल्करजः चिक्षेप । नवानि प्रत्यग्राणि यानि सरोरुहाणि पद्मानि तेषां केसराः किञ्जल्कास्तेभ्यः सम्भव उत्पत्तिर्यस्याः सा ताम् , किंलक्षणां धूलिम् अनिलैर्विलुलितां वायुभिश्चालिताम् । किमर्थं धूलिरुत्क्षिप्ता, उत्प्रेक्षते—हरिवधूर्विकरितुमिव भगवदङ्गनाः छादितुमिव रजो विक्षिप्तम् । कया परिहासविधित्सया परिहासस्य विधातुमिच्छा तया नर्मवाञ्छया । वध्वो हि सखीभिः सहाऽवश्यमेव रमन्ते । 'किञ्जल्कः केसरोऽस्त्रियाम्', 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः'।इत्यमरः ॥ ५२ ॥

विलुलितामिति ॥ शरदेवाङ्गना इति रूपकम् । अनिलैर्विलुलितां विक्षोभितां नवसमरोरुहकेसरसम्भवां धूलिं परागं परिहासविधित्सया नर्मरीतिचिकीर्षया । दधातेः सन्नन्तात्स्त्रियामप्रत्यये टाप् । हरिवधूः विकरितुं विक्षेप्तुमिव। 'तुमुन् ण्वुलौ क्रियायां क्रियार्थायाम्' इति तुमुन् प्रत्ययः । उदक्षिपत्प्रेरितवती । रूपकोज्जीवितेयमुत्प्रेक्षा । किरतिरयं कीर्यमाणकर्मा, यथा—रजः किरति मारुतः । क्वचित्तत्कारकोद्देश्यकर्मा, यथाऽत्रवेति विवेकः ॥ ५२ ॥

हरितपत्रमयीव मरुद्गणैः स्रगवनद्धमनोरमपल्लवा ॥
मधुरिपोरभिताम्रमुखी मुदं दिवि तता वितताम शुकावलिः ॥ ५३ ॥

हरितेति ॥ शुकावलिः कीरमाला मधुरिपोः श्रीकृष्णस्य मुदं हर्षं वितताम विस्तारयामास । किंभूता शुकावलिः दिवि तता आकाशे विस्तृता, अपरं किंभूता अभिताम्राणि लोहितानि मुखानि वदनानि यस्याः सा लोहितचञ्चुः, पुनः किंभूता शुकावलिः हरितानि नीलानि यानि पत्राणि पक्षाः तानि प्रचुराणि यस्याः सा, किंभूता शुकावलिः, उत्प्रेक्ष्यते–मरुद्गणैः देवसमूहैः मधुरिपोः हर्षाय दिवि तता स्रगिव मालेव । किंलक्षणा स्रक् हरितपत्रमयी हरितपत्रकृता, पुनः किंभूता स्रक् अवनद्धमनोरमपल्लवा मनो रमयन्ति हर्षयन्ति ते

मनोरमाः अवनद्धाः रचिता मनोरमाः पल्लवाः किसलयानि यस्यां सा । 'पलाशो हरितो हरित्', 'माल्यं मालास्रजौ', 'पल्लवोऽस्त्री किसलयम्' इत्यमरः ॥ ५३ ॥

हरितेति ॥ अभितान्नमुखग्रहणमुखी । 'स्वाङ्गाच्चोपसर्जनात्-' इत्यादिना विकल्पान्ङीष् । शुकावलि-मरुद्गणैः सुमनोगणैर्दिवि तता हरिप्रियार्थमाकाशे वितता हरितानां हरिद्वर्णानां पत्राणां विकारो हारितपत्रमयी । 'टिड्ढाणञ्-' इत्यादिना ङीप् । तयाऽवनद्धा ग्रथिता मनोरमाः पल्लवा यस्यां सा स्रगिवेत्युत्प्रेक्षा । मधुरिपोः कृष्णस्य मुदं वितताना ॥ ५३ ॥

स्मितसरोरुहनेत्रसरोजलामतिसिताङ्गविहङ्गहसद्दिवम् ॥
अकलयन्मुदितामिव सर्वतः स शरदं शरदन्तुरदिङ्मुखाम् ॥ ५४ ॥

स्मितेति ॥ स भगवान् कृष्णः शरदं वनान्तम् ऋतुं सर्वतः सर्वत्रैव मुदितामिव अकलयत् हृष्टामिव मेने । सर्वत्रैव हासयोगात् इति भावः । तथा हि—किंभूतां शरदं स्मितसरोरुहनेत्रसरोजलां स्मितानि विकसितानि सरोरुहाणि पद्मान्येव नेत्राणि नयनानि येषु तानि स्मितसरोरुहनेत्राणि एवंविधानि सरोजलानि तडागपानीयानि यस्यां सा तां, पुनः किंभूताम् अतिसिताङ्गविहङ्गहसद्दिवम् अतिसिताङ्गाः अतिधवलदेहाः ये विहङ्गाः पक्षिणो हंसास्तैर्हसन्ती द्योतमाना द्यौरन्तरिक्षं यस्यां सा अतिसिताङ्गविहङ्गहसद्द्यौः तां, पुनः किंभूतां शरदं शरदन्तुरदिङ्मुखां शरैः काण्डतृणैः दन्तुराणि सहास्यानि दिङ्मुखानि यस्यां सा ताम् । अन्योऽपि यः किल मुदितः स एवंविधो भवति—स्मितसरोरुहनेत्रः, अपरं हास्यवशात् दर्शितदर्शनो भवति ॥ ५४ ॥

स्मितेति ॥ स हरिः स्मितानि विकसितानि सरोरुहाण्येव नेत्राणि येषु तानि सरोजलानि यस्यां तां तथोक्तामतिसिताङ्गा धवलपक्षा ये विहङ्गा हंसास्तैर्हसन्ती स्मयमानेव स्थिता द्यौर्यस्यां तां तथोक्तां शरैस्तृणविशेषैर्दन्तुराण्युन्नतदन्तानि । हासात्प्रकाशदशनानीति यावत् । 'दन्त उन्नत उरच्' इत्युरच्प्रत्ययो मत्वर्थीयः । तानि दिङ्मुखानि यस्यां तां शरदन्तुरदिङ्मुखां शरदं सर्वतो मुदितामिवाकलयत् । सर्वत्र नेत्रविकासादिलिङ्गैर्हृष्टामिवामन्यतेत्यर्थः । अत्र सरोजहंसशरेषु नेत्रहासदन्तत्वारोपणाद्रूपकालङ्कारः । तद्वशात्प्रतीयमानाङ्गनाभेदाध्यवसायाच्छरदि मुदितत्वोत्प्रेक्षेति सङ्करः । इति शरद्वर्णनम् ॥ ५४ ॥

अथ हेमन्तवर्णनम्—

गजपतिद्वयसीरपि हैमनस्तुहिनयन् सरितः पृषतां पतिः ॥
सलिलसन्ततिमध्वगयोषितामतनुताऽतनुतापकृतं दृशोः(१) ॥ ५५ ॥

गजपतीति ॥ हेमन्ते भवः हैमनः पृषतां पतिर्मारुतः अध्वगयोषितां पान्थस्त्रीणां दृशोर्नयनयोर्विषये सलिलसन्ततिमश्रुपद्धतिमतनुत विस्तारयामास । दुःखाद्वियोगिनीनां नयनोरश्रुजलमजनयत् । किंभूतां सलिलसन्ततिम् अतनुतापकृतं प्रभूतोष्णिमधारिणीम्, अतनुं महान्तं तापं करोति ताम् । तर्हि सर्वमेवोष्णं स्यादित्याशङ्क्याह—किं कुर्वन् पृषतां पतिः परितः सर्वत्र सरितः नदीः तुहिनयन् हिमरूपाः कुर्वन्, तुहिनयतीति तुहिनयन् शीतलयन् शीतलतां नयन् । किंलक्षणाः सरितः गजपतिद्वयसीरपि गजपतिपरिमाणा अपि गजेन्द्रपरिमाणा अपि । अतिगम्भीरा अपीत्यर्थः । परिमाणेऽर्थे द्वयसच्प्रत्ययः । हस्तिपरिमाणा अपि नद्यः शीतलत्वं नीताः, नाऽल्पतरं वारि । नेत्रवारि अशीतलं कृतमित्यर्थकथनम् ॥ ५५ ॥

---

(१) दृशाम् ।

अथ हेमन्तं वर्णयति—

**गजपतीति** ॥ गजपतिः प्रमाणमासां गजपतिद्वयस्यीर्महागजप्रमाणाः । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति प्रमाणार्थे द्वयसच् प्रत्ययः । 'टिड्ढाणञ्–' इत्यादिना ङीप् । ता अपि सरितस्तुहिनयन् हिमीकुर्वन् । 'तत्करोति–' इति ण्यन्ताल्लटः शत्रादेशः । हेमन्ते भवो हैमनः । 'सर्वत्राण्च तलोपश्च' इति हेमन्तशब्दाच्छैषिकोऽण् प्रत्ययः तकारलोपश्च । पृषतां बिन्दूनां पतिर्वायुः । 'पृषन्ति बिन्दुपृषताः' इत्यमरः । अध्वानं गच्छन्तीत्यध्वगाः पथिकाः । अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः । तयोषिता प्रोषितभर्तृकाणां दृशामतनुतापकृतं महासन्तापकारिणीं सलिलसन्ततिमतनुत । उष्णमश्रूत्पादयामासेत्यर्थः । हेमन्तमारुतो विरहिणीदुःसहोऽजनीति भावः ॥ ५५ ॥

**इदमयुक्तमहो ! महदेव यद्वरतनोः स्मरयत्यनिलोऽन्यदा ॥**
**स्मृतसयौवनसोष्मपयोधरान् सतुहिनस्तु हिनस्तु वियोगिनः॥ ५६ ॥**

**इदमयुक्तमिति** ॥ इह तावद्वायोरयं स्वभावः, यत्सर्वेस्मिन्नेव ऋतौ उत्कण्ठाजनकत्वम् । तच्चायं कविर्विचारयति–यत् अहो ! इत्याश्चर्ये सम्बोधने, इदम् एतत् महदेव अयुक्तम् महानेव अन्यायः, यत् अनिलो वायुः अन्यदा अन्यस्मिन् काले ग्रीष्मादौ वियोगिनो विरहिणः पुरुषान् वरतनोः स्मरयति प्रधानवनितां स्मरयति । स्मृत्यर्थे कर्मणि षष्ठी । यत् स्मरणं सति साहचर्ये स्यात् । किंभूतान् वियोगिनः स्मृतसयौवनसोष्मपयोधरान् स्मृता अनुध्याताः सयौवनाः तरुणाः सोष्माण उष्णाः पयोधराः स्तना यैस्ते तान् । विरहदुःखादुभयोरपि सन्तापो भवति, अत एव सोष्मग्रहणम् । उष्णस्य ग्रहणं शीतकाले युक्तम्, ग्रीष्मश्च उष्णः, तत्किमिति वायुः सोष्मस्तनाः कामिनीः प्रियवियुक्तान् स्मरयतीति । अतो महदेवाऽयुक्तमेतत् । तु पुनः सतुहिनः सहिमवायुः सोष्मस्तनप्रवासीभूतान् वरतनोः स्मरयति । तदा हिनस्तु मारयतु । शीते हिमे उष्णस्मरणं युक्तम् । अभीष्टस्मरणे यदा अप्राप्तिस्तदा मरणमेवेति भावः । 'स्त्रीस्तनाब्दौ पयोधरौ', 'तुषारस्तुहिनं हिमम्' ॥ ५६ ॥

सर्वदापि वियोगानामुद्दीपकवायोर्हेमन्ते वैशिष्ट्यमाचष्टे—

**इदमयुक्तमिति** ॥ अनिलो वायुरन्यदाऽन्यस्मिन्काले । ग्रीष्मादावित्यर्थः । 'सर्वैकान्य–' इत्यादिना दाप्रत्ययः । वियोगिनो वियुक्तान् । 'गतिबुद्धि–' इत्यादिना अणि कर्तुः कर्मत्वम् । वरतनोः, वरतनुमित्यर्थः । 'अधीगर्थ—' इत्यादिना कर्मणि शेषे षष्ठी । स्मरयतीति स्मरतेराध्याने मित्त्वात् ह्रस्वत्वम् । इदं स्मारकत्वमपि महदत्यन्तमयुक्तमेव । सहकारिविरहादिति भावः । अहो अत्यन्तात्किञ्चित्करत्वाद्विस्मयः । हेमन्ते तु हन्तृत्वमप्यस्य सम्भवतीत्याह —सतुहिनः तुहिनसहितस्तु सयौवना यौवनयुक्ताः अत एव सोष्माणो ये पयोधराः कुचास्ते स्मृता यैस्तान्स्मृतसयौवनसोष्मपयोधरान् वियोगिनो वियुक्तान् । 'तथायुक्तं चानीप्सितम्' इति कर्मत्वम् । हिनस्तु हन्तु । सम्भावनायां लोट् । हेमन्ते हि हिमसहकारात्कुचोष्मैकसाध्यदुःखोत्पादनसामर्थ्याद्वियोगिमारकत्वमपि सम्भाव्यते । ग्रीष्मादौ तु तादृक्सहकारिविरहात्स्मारकत्वमप्ययुक्तमित्यर्थः । अमारके मारकसम्बन्धोक्तेरतिशयोक्तिभेदः । इह सहजकविप्रौढोक्तिसिद्धयोरभेदाध्यवसाय इति रहस्यम् ॥ ५६ ॥

**प्रियतमेन यया सरुषा स्थितं न सह सा सहसा परिरभ्य तम् ॥**
**श्लथयितुं क्षणमक्षमताङ्गना न सहसा सहसा कृतवेपथुः ॥ ५७ ॥**

**प्रियतमेनेति** ॥ यया कामिन्या सरुषा सक्रोधया सत्या प्रियतमेन वल्लभेन सह सार्धं न स्थितं न आसितम्, सा अङ्गना मानिनी तं वल्लभं सहसा अशङ्कितमेव अगुणदोषविचारेणैव परिरभ्य आलिङ्ग्य तदनन्तरं श्लथयितुं मोक्तुं क्षणमपि अल्पकालमपि

न अक्षमत न समर्था बभूव । यतः किंभूताङ्गना सहसा मार्गशीर्षेण कृतवेपथुः जनित-कम्पा, कृतो वेपथुः कम्पो यस्याः सा, पुनः किंभूताङ्गना सहसा सह हसेन हास्येन वर्तते इति सहसा हास्ययुक्ता । रुषा कोपेन सह वर्तमाना सरुट् तया । 'मार्गशीर्षे सहा मार्ग-आग्रहायणिकश्च सः' । 'साकं सत्रा समं सह', 'अतर्किते तु सहसा','हासो हास्यं च' सर्वत्राप्यमरः ॥ ५७ ॥

प्रियतमेनेति ॥ अत्रापर्यायये न सह सा इति त्रेधा विभागः । अन्यत्र सहसेत्येकं पदम् । सरुषा सरोषया यया स्त्रिया कर्त्र्या प्रियतमेन सह न स्थितम् । नपुंसके भावे क्तः । सा अङ्गना स्त्री सहसा मार्ग-शीर्षमासेन । 'मार्गशीर्षे सहा मार्गः' इत्यमरः । कृतवेपथुर्जनितकम्पा सती । 'ट्वितोऽथुच्' इत्यथुच्प्र-त्ययः । तं पूर्वमवगणितमेव प्रियं हसेन सह वर्तत इति सहसा सहास्या सती । 'अथो हसः । हासो हास्यं च' इत्यमरः । 'स्वनहसोर्वा' इति विकल्पादप्प्रत्ययः । सहसा शीघ्रम् । स्वरादिपाठादव्ययत्वम् । परिरभ्याश्लिष्य क्षणम् । क्षणमपीत्यर्थः । अन्यथा वैरस्यात् । अत एव सामर्थ्यलभ्यार्थत्वादपेरप्रयोगः । श्लथयितुं नाक्ष-मत । शिथिलीकर्तुं नोत्सहते स्मेत्यर्थः । मानिनीमानभञ्जनक्षमोऽयं मास इति भावः । कलहान्तरितेयं नायिका । 'कोपात्कान्तं पराणुद्य पश्चात्तापसमन्विता' इति लक्षणात् ॥ ५७ ॥

भृशमदूयत चाऽधर(१)पल्लवक्षतिरनावरणा हिममारुतैः ॥
दशनरश्मिपटेन च सीत्कृतैर्निवसितेव सितेन सुनिर्ववौ ॥ ५८ ॥

भृशमिति ॥ कश्चिन्नायिकायाः सुतनोः सुकुमारगात्र्याः अधरपल्लवक्षतिः अधर-किसलयव्रणं हिममारुतैः तुषारवातैः भृशमदूयत अत्यर्थं दूयते स्म पीडिता । अधर एव ओष्ठ एव पल्लवः किसलयं तस्मिन् क्षतिः व्रणम् । किंभूता क्षतिः न विद्यते आवरणं संव्यानं यस्याः सा निराच्छादना । अनावरणं हि तुषारमारुतैः पीड्यते ताप्यते । अनन्तरं पीडावशात् च पुनः सा तन्वी कृशाङ्गी सीत्कृतैः निर्ववौ सीत्कारैर्निर्वृतिं भेजे । मुखमारुतैर्हि वेदना प्रायशस्तन्वी भवति । अपरं किंलक्षणा क्षतिः, उत्प्रेक्ष्यते—दशन-रश्मिपटेन दन्तकान्तिवस्त्रेण निवसितेव आच्छादितेव । दशनानां रश्मयः त एव पटो वस्त्रं तेन, किंलक्षणेन पटेन सितेन शुक्लेन । सीत्कारवशात् ये दशनरश्मयो दन्तकिरणास्त-एव पटस्तेन । यः किल निरावरणो हिममारुतैस्ताप्यते, स पटं प्रावृत्य निर्वृतो भवति । 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' । 'पल्लवोऽस्त्री किसलयं', 'क्षतिः प्रहारे हानौ च', 'रदना दशना दन्ता रदाः', 'किरणप्रग्रहौ रश्मी', 'निचोलः प्रच्छदपटः' सर्वत्राप्यमरः॥५८॥

भृशमिति ॥ अनावरणा आवरणरहिता या अधरपल्लवस्य क्षतिर्व्रणो हिममारुतैर्भृशमदूयताऽताप्यत । दूङो दैवादिकात्कर्तरि लङ् । सा क्षतिः । यत्तदोर्नित्यसम्बन्धात् । सीत्कृतैः सीत्कारैः कर्तृभिः सितेन शुभ्रेण दशनरश्मय एव पटस्तेन करणेन निवसितेवाच्छादितेवेत्युत्प्रेक्षा । वसेराच्छादनार्थात्कर्मणि क्तस्य इडागमः । सुनिर्ववौ सुष्ठु निर्ववार । शीतालुराच्छाद्यत इति भावः । हिमहताधरनिर्वाणस्य सीत्कारकारण-कस्य दशनरश्मिपटाच्छादने हेतुत्वोत्प्रेक्षणाद्रूपकोत्प्रेक्षयोः सङ्करः ॥ ५८ ॥

व्रणभृता सुतनोः कलसीत्कृतस्फुरितदन्तमरीचिमयं दधे ॥
स्फुटमिवावरणं हिममारुतैर्मृदुतया तुतयाऽधरलेखया ॥ ५९ ॥

व्रणभृतेति ॥ कस्याश्चित् सुतनोः नायिकायाः अधरलेखया ओष्ठपल्लवेन स्फुटं प्रकटं यथा भवति तथा आवरणमिव आच्छादनमिव दधे धृतम् । किंभूतया अधरलेखया हिम-

(१) याऽधर ।

मारुतैः शीतवायुभिः द्रुतया परितप्तया पीडितया, अपरं किंभूतया अधरलेखया व्रणं बिभर्तीति व्रणभृत् तया सव्रणया, कया केन हेतुना मृदुतया मृदोः कोमलस्य भावो मृदुता तया मार्दवेन । किंलक्षणमावरणं कलसीत्कृतस्फुरितदन्तमरीचिमयं कलसीत्कृतेन मधुराननिःश्वासेन स्फुरिता उल्लसिता ये दन्तमरीचयः दशनकिरणाः तन्मयं तत्स्वरूपम् । 'व्रणोऽस्त्रियामीर्ममरुः क्लीबे नाडी व्रणः पुमान्' इत्यमरः ॥ ५९ ॥

उक्तमेवार्थं भङ्ग्यन्तरेणाह—

व्रणभृतेति ॥ मृदुतया मार्दवेन हेतुना हिममारुतैर्द्रुतया पीडितया । 'दुदु उपताप' इति धातोः सैवादिकात्कर्मणि क्तः । व्रणभृता दन्तव्रणवत्या सुतनोः स्त्रिया अधरो लेखेव तया अधरलेखया कर्त्र्या सुतनोः कामिन्याः कलेन सीत्कृतेन हेतुना स्फुरिताः प्रकाशिता ये दन्तमरीचयस्तन्मयं तद्रूपं स्फुटमावरणमाच्छादनं दध इव धृतमिवेत्युत्प्रेक्षा । दधातेः कर्मणि लिट् ॥ ५९ ॥

**धृततुषारकणस्य नभस्वतस्तरुलताऽङ्गुलितर्जनविभ्रमाः ॥**
**पृथु निरन्तरमिष्टभुजान्तरं वनितयाऽनितया न विषेहिरे ॥ ६० ॥**

धृतेति ॥ कयाचित् वनितया कामिन्या नभस्वतः वायोः तरुलताऽङ्गुलितर्जनविभ्रमाः न विषेहिरे न सोढाः, तरुलता वृक्षशाखा एवाङ्गुलयः करशाखास्तासां ताभिर्वा यत्तर्जनं भर्त्सनं ते विभ्रमाः विलासाः, ते कयाचिन्न सेहिरे । तानालोक्य बहु मुमुहे इत्यर्थः । यतः किंभूतया वनितायाः पृथु निन्तरम् इष्टभुजान्तरम् अनितया अप्राप्तया । न इता अनिता तया । पृथु विशालं, निरन्तरं निर्विवरम्, इष्टभुजान्तरं भर्तृहृदयमध्यम् । इष्टस्य कान्तस्य भुजान्तरं भुजमध्यम् । वियोगित्वादित्यर्थः । किंभूतस्य नभस्वतः धृता ऊढाः तुषारस्य हिमस्य कणाः बिन्दवो येन सः तस्य धृतहिमबिन्दोः । वियोगिन्यो हि कामोद्दीपकैर्भावैरत्यर्थं विह्वला भवन्ति । 'तुषारस्तुहिनं हिमम्', 'लवलेशकणाऽणवः', 'नभस्वद्वातपवनपवमानप्रभञ्जनाः' । 'अङ्गुल्यः करशाखाः स्युः',

अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ।।

'वनिता जनिताऽत्यर्थानुरागायां च योषिति' सर्वत्राप्यमरः ॥ ६० ॥

धृतेति ॥ धृतास्तुषारकणास्तुहिनशीकरा येन तस्य नभस्वतः पवनस्य सम्बन्धिनः तरुलता एवाङ्गुलयस्ताभिस्तर्जनानि यानि तान्येव विभ्रमा विलासाः, पृथु विशालमिष्टस्य दयितस्य भुजान्तरं भुजमध्यं वक्षःस्थलं निरन्तरमनितया अप्राप्तया । गाढालिङ्गनमलभमानयेत्यर्थः । इणः कर्तरि क्तः । वनितया स्त्रिया न विषेहिरे न सोढाः । विरहिण्यस्तर्जिता इव नभस्वतो बिभ्यतीति भावः ॥ ६० ॥

**हिमऋतावपि ताः स्म भृशस्विदो युवतयः सुतरामुपकारिणि ॥**
**प्रकटयत्यनुरागमकृत्रिमं स्मरमयं रमयन्ति विलासिनः ॥ ६१ ॥**

हिमेति ॥ ताः प्रसिद्धाः युवतयः कामिन्यो विलासिनः शृङ्गारिणः पुरुषान् वल्लभान् रमयन्ति स्म अक्रीडयन् । किंभूता युवतयः हिमऋतावपि हेमन्तेऽपि भृशस्विदः अत्यर्थं घर्मवारियुक्ताः, भृशं स्विद्यन्ति ता भृशस्विदः । हिमऋतौ किं कुर्वति अकृत्रिमं सहजमनुरागं स्नेहं प्रकटयति प्रकाशमाने, किंभूतं स्नेहं स्मरमयं कन्दर्पोत्थं कामाधिकम्, काममयमित्यर्थः । अत एव पुनः किंलक्षणे हिमऋतौ सुतरामतिशयेन उपकारिणि उपकारयुक्ते । सत्कर्तरीत्यर्थः । प्रियसम्पर्कवशात् यदा तासां स्वेदो

जायते, तदा तासां यः अनुरागः कान्तं प्रति स्वाभाविकः, स प्रकटो भवति । अनुराग-लक्षणो हि स्वेदः, तस्मिंश्च सति प्रेयसां चित्तेषु ईदृशं भवति—नूनं वयमासां प्रियाः, कुतोऽन्यथाऽस्मत्सम्पर्केणासां प्रीतयः स्वेदश्च, इति सुतरामुपकारित्वम् । 'तरुणी युवतिः समे' । करणेन निर्वृत्तः कृत्रिमस्तम् ॥ ६१ ॥

हिमेति ॥ स्मरमयं स्मरादागतम् । स्मरप्रयुक्तमित्यर्थः । 'तत आगतः' इति मयट् । अकृत्रिममनुरागं सहजं प्रेम प्रकटयति प्रकटीकुर्वाणे । तत्कार्येण स्वेदेनेति भावः । अत एव सुतरामुपकारिणि पुंसां रिरंसा-जननात्तेभ्यः स्वानुरागप्रकाशनाच्चात्यन्तोपकर्तरीत्यर्थः । एवंभूते हिमऋतौ हेमन्तेऽपि । स्वेदसम्भावना-रहितकालेऽपीत्यर्थः । साहितः 'ऋत्यकः' इति प्रकृतिभावः । भृशं स्विद्यन्ति रागोष्मणा भृशस्विद इति सात्त्विकोक्तिः । क्विप् । हेमन्तोऽपि रागिणां स्वेदहेतुरेव । तद्धेतुरागहेतुत्वादिति भावः । तास्तथा धीरा युवतयो विलासिनः प्रियान् रमयन्ति स्म ! हेमन्तस्योद्दीपकत्वादिति । पीडाक्षमत्वात् दीर्घरात्रित्वाच्चोभयेच्छा-सदृशमरमन्तेत्यर्थः । इति हेमन्तवर्णनम् ॥ ६१ ॥

अथ शिशिरवर्णनम्—

कुसुमयन्फलिनीरलिनीरवैर्मदविकासिभिराहितहुङ्कृतिः ॥
उपवनं निरभर्त्सयत प्रियान् वियुवतीर्युवतीः शिशिरानिलः ॥ ६२ ॥

कुसुमयन्निति ॥ शिशिरानिलः उपवनं उद्याने वने वा युवतीः नायिकाः निरभर्त्सयत निर्भर्त्सयामास तुच्छीचकार । किंभूता युवतीः प्रियान् कान्तान् वियुवतीः वियुञ्जानाः भर्तृभ्यो वियोगं ददतीः, शिशिरानिलः किं कुर्वन् फलिनीः प्रियङ्गुलताः कुसुमयन् पुष्पयन् पुष्पयुक्ताः कुर्वन् । शिशिरानिले हि वहति सति ताः पुष्प्यन्तीति । कैरभर्त्सयत अलिनीरवैः भृङ्गीशब्दैः, किंभूतो वायुः अलिनीरवैः भृङ्गीरवैः आहितहुङ्कृतिः उत्पादितहुङ्कारशब्दः, किंभूतै रवैः मदविकासिभिः मदेन प्रसृतैः । 'प्रियङ्गुः फलिनी फली' इत्यमरः ॥ ६२ ॥

अथ शिशिरं वर्णयति—

कुसुमयन्निति ॥ उपवनम् । वन इत्यर्थः । विभक्त्यर्थेऽव्ययीभावः । 'तृतीयासप्तम्योर्बहुलम्' इति विकल्पादम्भावः । फलिनीः प्रियङ्गुलताः । 'प्रियङ्गुः फलिनी फली' इत्यमरः । कुसुमयन्कुसुमवतीः कुर्वन् । इत्युद्दीपनसामग्रीवर्णनम् । कुसुमयतेर्मत्वन्तप्रकृतिकात् 'तत्करोति-' इति ण्यन्ताल्लटः शत्रादेशः । णाविष्ठवद्भावे विन्मतोर्लुक् । मदविकासिभिर्मदेन विजृम्भमाणैरलिनीरवैः भृङ्गीहुङ्कारैराहितहुङ्कृतिः कृतहुङ्कारः । माधुर्याद्युद्दीपकत्वातिशयद्योतनार्थमलिनीति स्त्रीलिङ्गनिर्देशः । शिशिरानिलः प्रियान् वियुवतीः कोपाद्वियुञ्जानाः । यौतेः शतरि धातोरुवङादेशः 'उगितश्च' इति ङीप् । युवतीर्वधूः । 'यूनस्तिः' इति तिप्रत्ययः निरभर्त्सयताऽतर्जयत । तर्जिभर्त्स्योश्चौरादिकयोरनुदात्तेत्त्वादात्मनेपदम् । अत्र वायौ अचेतने चेतनधर्मो निर्भर्त्सनमुत्प्रेक्ष्यते । सा च अलिनीहुङ्कारझङ्कारोज्जीवितेति रूपकसङ्कीर्णा व्यञ्जकाप्रयोगाद्गम्या च ॥६२॥

शिशिरे हिमकरकरा अतितीक्ष्णा न भवन्तीति स्वभावः । तत्र कविरूहते—

उपचितेषु परेष्वसमर्थतां व्रजति कालवशाद्बलवानपि ॥
तपसि मन्दगभस्तिरभीषुमान्न हि महाहिमहानिकरोऽभवत् ॥ ६३ ॥

उपचितेष्विति ॥ अहमेवं मन्ये—यत् कालवशात् दैववशेन परेषु शत्रुषु उपचितेषु वृद्धिं गतेषु सत्सु बलवान् अतिबलिष्ठोऽपि पुरुषः असमर्थतां व्रजति समर्थो न भवति । एतदेव अर्थान्तरन्यासेन द्रढयति—हि युक्तोऽयमर्थः, हि यस्मात्कारणात् तपसि माघे मासि अभीषुमान् अंशुमाली श्रीसूर्यः महाहिमहानिकरो न अभवत् प्रवृद्धहिमनाशकारी

नाभूत्, महाहिमस्य प्रवृद्धतुषारस्य हानिं क्षयं करोति इति । किंलक्षणः अभीषुमान् मन्दगभस्तिः निष्प्रभकिरणः, यतः स्वयं कीदृशः सूर्यः हिमं तुषारं हन्तीति हिमहा शीतघ्नः । 'तपा माघे', 'गभस्तिघृणिरश्मयः', 'अभीषुः प्रग्रहे रश्मौ' सर्वत्रामरः ॥ ६३ ॥

उपचितेष्विति ॥ कालवशाद्बलवानपि परेषु शत्रुषूपचितेषु प्रवृद्धेषु सत्सु असमर्थता दौर्बल्यं व्रजति । हि यस्मात्तपसि माघमासे । 'तपा माघे' इत्यमरः । मन्दगभस्तिर्मृदुरश्मिरभीषुमानंशुमान् । 'अभीषुः प्रग्रहे रश्मौ' इत्यमरः । महत उपचितस्य हिमस्य हानिं नाशं करोतीति महाहिमहानिकरस्तद्धेतुर्नाभवत् । 'कृञो हेतु-' इत्यादिना हेत्वर्थे टप्रत्ययः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६३ ॥

**अभिषिषेणयिषुं भुवनानि यः स्मरमिवाख्यत रोध्र(१)रजश्चयः ॥**
**क्षुभितसैन्यपरागविपाण्डुरद्युतिरयं तिरयन्नुदभूद्दिशः ॥ ६४ ॥**

**अभिषिषेणयिषुमिति** ॥ अयं रोध्ररजश्चयः उदभूत् प्रकटीबभूव । रोध्रतरुकुसुमरेणूनां चयः रोध्ररजश्चयः । किं कुर्वन् दिशः तिरयन् ककुभः आच्छादयन्, किंभूतो रोध्ररजश्चयः क्षुभितसैन्यपरागविपाण्डुरद्युतिः क्षुभितं चलितं यत्सैन्यम् अनीकं तस्य परागा रेणवः तेषामिव पाण्डुरा श्वेता द्युतिः छविर्यस्य सः चलितसेनारेणुधवलच्छविः । अयं कः, यः रोध्ररजश्चयः रोध्रपुष्परेणुनिकरः, उत्प्रेक्षते—यः स्मरं कन्दर्पं भुवनानि त्रिविष्टपानि अभिषिषेणयितुं सेनया अभियातुकामम् आख्यत इव अकथयदिव । सेनया अभियातुमिच्छति अभिषिषेणयिषति, अभिषिषेणयिषतीति अभिषिषेणयिषुः तम् । कामोऽयं सन्नद्धो भुवनानि जेतुमागच्छतीति अकथयदिव । यः किलाऽभिषेणयति तस्याग्रतः सैन्यरजः प्रदृश्यते । 'तिरीटस्तिल्वको रोध्रः', 'पांसुर्ना न द्वयो रजः', 'समवायश्च यो गणः', 'परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि' । 'विशदश्वेतपाण्डुराः', 'दिशस्तु ककुभः काष्ठाः' सर्वत्राप्यमरः ॥ ६४ ॥

अभिषिषेणयिषुमिति ॥ क्षुभित उद्धतो यः सैन्यपरागः सेनारजः स इव विपाण्डुरद्युतिः शुभ्रवर्णो यो लोध्ररजश्चयः भुवनान्यभिषिषेणयिषुं सेनयाऽभियातुमिच्छन्तम् । 'यत्सेनयाभिगमनमरौ तदभिषेणनम्' इत्यमरः । 'सत्यापपाश-' इत्यादिना सेनाशब्दाण्णिचि सनि 'सनाशंसभिक्ष उः' इत्युप्रत्ययः । 'स्थादिष्वभ्यासेन-' इति धात्वभ्याससकारयोः षत्वम् । स्मरमाख्यतेवाख्यातवानित्युत्प्रेक्षा । चक्षिङः ख्याञ् 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः । अयं लोध्ररजश्चयो दिशस्तिरयन् तिरस्कुर्वन् । तिरःशब्दात् 'तत्करोति-' इति ण्यन्ताल्लटः शत्रादेशः । णाविष्ठवद्भावे टिलोपः । उदभूत् ॥ ६४ ॥

**शिशिरमासमपास्य गुणोऽस्य नः क इव शीतहरस्य कुचोष्मणः ॥**
**इति धियाऽस्तरुषः परिरेभिरे घनमतोनमतोऽनुमतान् प्रियाः ॥ ६५ ॥**

**शिशिरेति** ॥ प्रियाः कामिन्यः अनुमतान् वल्लभान् अतः कारणात् घनं गाढं यथा भवति तथा परिरेभिरे आशिश्लिषुः । अतः कुतः, यतः कारणात् इति धिया एवं बुद्ध्या अस्तरुषः त्यक्तकोपाः उज्झितमानाः । इतीति किम्—यत्, नोऽस्माकं शीतहरस्य हिमनाशकरस्य कुचोष्मणः स्तनोष्णत्वस्य शिशिरमासं माघमासमपास्य त्यक्त्वा क इव गुणः क इव लाभः, अपि तु न कोऽपि । किंलक्षणान् प्रियान् अनमतः अप्रह्वान् अनम्रान् । 'घनं निरन्तरं सान्द्रम्' इत्यमरः ॥ ६५ ॥

शिशिरेति ॥ शिशिरमासमपास्यापहाय शीतं हरतीति शीतहरस्य । 'हरतेरनुद्यमनेऽच्' इत्यच्प्रत्ययः ।

(१) लोध्र ।

नोऽस्माकमस्य कुचोष्मण: कुचोष्णत्वस्य क इव गुणः। किं फलं सम्पाद्यत इति शेषः। गम्यमानक्रियापेक्षया क्त्वानिर्देशः। इवशब्दो वाक्यालङ्कारे। इति प्रियाऽतोऽस्मिन् शिशिरमासे। सार्वविभक्तिकस्तासिः। प्रियाः कान्ता अस्तरुषो निरस्तरोषाः सत्यो नमतः प्रणतानुमतान् स्वप्रियान् घनं निबिडं परिरेभिरे आश्लिष्टवत्यः। इति प्रियेति सुखार्थस्य परिरम्भस्य कुचोष्मसाफल्यार्थत्वमुत्प्रेक्ष्यते, व्यञ्जकाप्रयोगाद्गम्यत्वं च ॥ ६५ ॥

भ्रमरस्य उभे भार्ये कुन्दलता लवङ्गलता च। इह शिशिरे ऋतौ ते उभे अपि कुसुमिते भवतः इति स्वभावः। तत्र कविरूहते—

**अधिलवङ्गममी रजसाधिकं मलिनिताः सुमनोदलतालिनः ॥**
**स्फुटमिति प्रसवेन पुरोऽहसत्सपदि कुन्दलता दलताऽलिनः ॥ ६६ ॥**

**अधिलवङ्गमिति ॥** कुन्दलता मुचुकुन्दवल्ली दलता विकसता प्रसवेन पुष्पेण स्फुटं प्रकटम् इति हेतोः अतः कारणात् पुरोऽग्रे अलिनः भ्रमरान् अहसदिव जहासेव। इतीति किम्—यत्, अमी अलयो भ्रमराः अधिलवङ्गं लवङ्गलतायां सुमनोदलतालिनः सन्तः कुसुमपत्रेषु उपविष्टाः सन्तः सपदि तत्कालं रजसा रेणुना अधिकं नितरां मलिनिताः मलिनत्वं नीताः कृष्णत्वं प्रापिताः। लवङ्गस्य अधि अधिलवङ्गम्। सुमनसां पुष्पाणां दलानि तेषु तालयन्ति तिष्ठन्तीति ते सुमनोदलतालिनः। पुष्पपत्रेषु कृतस्थितय इत्यर्थः। अन्योऽपि यः उज्ज्वलां प्रधाननारीमासेव्य पश्चात् हीनां मलिनां सेवते, स मलिनत्वं प्राप्नोति। तदा प्रधाननारी तमुपहसति—यत्त्वं रजसा मलिनीकृतः इति। 'लवङ्गं देवकुसुमं', 'रजो गुणे च स्त्रीपुष्पे', 'सुमनाः पण्डिते पुष्पे', 'प्रसवः पुष्पफलयोः', 'षट्पद-भ्रमराऽलिनः', 'तालः स्थितौ' सर्वत्राप्यमरः ॥ ६६ ॥

**अधिलवङ्गमिति ॥** लवङ्गेष्वधिलवङ्गम्। विभक्त्यर्थेऽव्ययीभावः। सुमनसां पुष्पाणां दलेषु तालयन्ति प्रतितिष्ठन्तीति सुमनोदलतालिनः। ताच्छील्ये आभीक्ष्ण्ये वा णिनिः। अमी अलिनो मधुपाः रजसा परागेणार्तवेन चाधिकं मलिना मलीमसा पापिनश्च कृता मलिनिता इति हेतोः पुरोऽग्रे सपदि कुन्दलता माध्यवल्ली। 'माध्यं कुन्दम्' इत्यमरः। दलता विकसता प्रसवेन निजकुसुमेनाऽहसज्जहासः। स्फुटमित्युत्प्रेक्षायाम्। रजस्वलां गन्तारं कामिनं सपत्न्यो हसन्तीति भावः। कुन्दकुसुमस्य धावल्याद्धासत्वेनोत्प्रेक्षा। इति शिशिरवर्णनम् ॥ ६६ ॥

अथ वज्जवारी(?)—

**अतिसुरभिरभाजि पुष्पश्रियामतनुतरतयेव सन्तानकः ॥**
**तरुणपरभृतः स्वनं रागिणामतनुत रतये वसन्तानकः ॥ ६७ ॥**

**अतिसुरभिरिति ॥** सन्तानकः सन्तानाख्यतरुः वृक्षनायकः कल्पतरुः पुष्पश्रिया कुसुमसमृद्ध्या अभाजि सेवितः। वसन्ते हि सोऽधिकं पुष्प्यतीति स्वभावः।

मन्दारपारिजातहरिचन्दनकल्पवृक्षसन्तानाः।
पञ्चैते सुरतरवः—'

इति हलायुधः। किंभूतः सन्तानकः अतिसुरभिः बहुतरपरिमलवान्, किंभूतया पुष्पश्रिया, उत्प्रेक्षते—मतनुतरतयेव मतमभीष्टं नुतमुत्कृष्टं रतं निधुवनं यस्याः सा तयेव। यथा मतनुतरतया नायिकया-सन्तानं करोतीति सन्तानकः पुत्रोत्पादकः अतिकामवानित्यर्थः—पुरुषः सेव्यते। सोऽपि अतिसुरभिः कृताङ्गभोगः। अपरं च तरुणपरभृतः मत्तकोकिलः परपुष्टयुवा स्वनं शब्दम् अतनुत विस्तारयामास। चुकूजेत्यर्थः। किमर्थं रागिणां

रतये कामिनां प्रीतये । किंभूतः तरुणपरभृतः वसन्ताऽऽनकः वसन्तस्य ऋतोः आनकः पटह इव, माधवमासपटहः । कोकिलानां ध्वनिं श्रुत्वा वसन्त आगत इति ज्ञायते इत्यर्थः । 'आनकः पटहोऽस्त्री स्यात्', 'वसन्तः सुरभिः स्मृतः' ॥ ६७ ॥

अथ यमकविशेषकौतुकितया कविः पुनर्द्वादशभिः ऋतून् वर्णयन्नादौ चतुर्भिर्वसन्तं वर्णयति—

अतिसुरभिरिति ॥ अतिसुरभिरत्यन्तसुगन्धिः सन्तानकः कल्पवृक्षः पुष्पश्रिया पुष्पसम्पदामतनुतरतया महत्तरत्वेन । अतनुशब्दात्तरबन्तात्तल्प्रत्ययः । अभाजीवाऽभञ्जीवेत्युत्प्रेक्षा । तथा नष्ट इत्यर्थः । 'भञ्जेश्च चिणि' इति विभाषा नलोप उपधावृद्धिः । चिणो लुक् । किञ्च वसन्तस्यानको वसन्तानकः । दुन्दुभिरिति रूपकम् । तरुणपरभृतस्तरुणकोकिलो रागिणां कामिनां रतये रागवर्धनाय स्वनमतनुत । मधुरं चुकूजेत्यर्थः । प्रभा वृत्तम् । 'स्वरशरविरतिर्ननौ रौ प्रभा' इति लक्षणात् ॥ ६७ ॥

**नोज्झितुं युवतिमाननिरासे दक्षमिष्टमधुवासरसाऽरम् ॥**
**चूतमालिरलिनामतिरागादक्षमिष्ट मधुवासरसारम् ॥ ६८ ॥**

नोज्झितुमिति ॥ अलिनाम् आलिः भ्रमराणां माला चूतं सहकारवृक्षमुज्झितुं न अक्षमिष्ट परित्यक्तुं न समर्थाऽभूत्, कस्मात् अतिरागात् प्रीत्याधिक्यात् अत्यासक्तिवशात् । सर्ववृक्षेभ्यो मधुपाश्चूते प्रीयन्ते । उक्तं च कुमारसम्भवे—'अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा' इति । किंभूतं चूतं युवतिमाननिरासे दक्षं दक्ष इव दक्षः तं, मानिनीमत्सरत्वाऽसने कामिनीरोषनिराकरणे चतुरं, पुनः किंभूतं चूतं मधुवासरेषु वसन्तदिवसेषु सारः उत्कृष्टस्तं, किंभूता अलिनाम् आलिः अरमत्यर्थम् इष्टमधुवासरसा इष्टोऽभीष्टो यो मधुर्मकरन्दस्तत्र वासरसोऽवस्थितिर्व्यसनं वा यस्याः सा, अत एव त्यक्तुं नाक्षमिष्ट । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' । 'दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च' ।'मधु मद्ये पुष्परसे क्षौद्रे ऽपि','श्रृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः'। 'आली सख्यावली अपि','षट्पदभ्रमराऽलिनः', 'क्लीबे दिवसवासरौ' सर्वत्राप्यमरः॥६८॥

नोज्झितुमिति ॥ अरमत्यन्तमिष्टेष्वीप्सितेषु मधुषु मकरन्देषु वासे वसतौ रसो रागो यस्याः सा इष्टमधुवासरसा । मधुपानप्रियेत्यर्थः । अत एवालिनामालिर्भृङ्गश्रेणिर्युवतिमाननिरासे दक्षं कुशलम् । उद्दीपकत्वादिति भावः । मधुवासरेषु वसन्तदिनेषु सारं श्रेष्ठं मधुवासरसारम् । तत्कालश्लाघ्यमित्यर्थः । चूतं सहकारमतिरागादतिलौल्यादुज्झितुं हातुं नाऽक्षमिष्ट नाऽसहिष्ट । क्षमेर्भौवादिकाल्लुङ् । स्वागता वृत्तम् । 'स्वागतेति रनभाद् गुरुयुग्मम्' इति लक्षणात् ॥ ६८ ॥

**जगद्वशीकर्तुमिमाः स्मरस्य प्रभावनीके तनवै जयन्तीः ॥**
**इत्यस्य तेने कदलीर्मधुश्रीः प्रभावनी केतनवैजयन्तीः ॥ ६९ ॥**

जगद्वशीकर्तुमिति ॥ मधुश्रीः वसन्तलक्ष्मीः इत्यतो हेतोः कदलीः तेने रम्भाः विस्तारयामास । अवर्धयतेत्यर्थः । इतीति किम्—यत्, अहं स्मरस्य अनीके कामस्य सैन्ये इमाः कदलीः केतनवैजयन्तीः तनवै चिह्नपताका विस्तारयाणि । केतनाय अभिज्ञानाय वैजयन्त्यः पताकाः । अन्यस्यापि राज्ञः सैन्ये केतनाय अभिज्ञानाय वैजयन्त्यः पताका भवन्ति । किंलक्षणे स्मरस्यानीके जगत् विश्वं वशीकर्तुमायत्तं विधातुं विभौ समर्थे । यः किल अन्यान् वशीकर्तुं शक्नोति तस्यावश्यं चिह्नपताका दीयन्ते । किंभूताः केतनवैजयन्तीः जयन्तीः जयनशीलाः शत्रुपराभवकारिणीः, किंभूता मधुश्रीः प्रभावयतीति प्रभावनी प्रभावदानसमर्था। 'प्रभुः परिवृढोऽधिपः', 'अनीकं बलं', 'केतनं ध्वजमस्त्रियाम्' ६९

जगद्वशीकर्तुमिति ॥ प्रभावयतीति प्रभावनी सम्पादयित्री । कर्तरि ल्युटि ङीप् । मधुश्रीः कर्त्री जगद्वशीकर्तुं प्रभौ समर्थे अस्य स्मरस्याऽनीके सैन्ये जयन्तीर्जित्वरैः केतनवैजयन्तीर्ध्वजपताकाः स्तनवै करवाणि । ततोतेः प्र.स-काले लोट् । टेरेत्वामित्येकारः, एत ऐ । 'आडुत्तमस्य पिच्च' इति आटि 'आटश्च' इति वृद्धिः । इति मनीषयेति शेषः, इमाः कदली रम्भातरूस्तेने वितस्तार । 'कदली वारणबुसा रम्भा मोचांशुमत्फला' इत्यमरः । कदलीषु कामवैजयन्तीत्वोत्प्रेक्षा । वृत्तमुपजातिः ॥ ६९ ॥

**स्मररागमयी वपुस्तमिस्रा परितस्तार रवेरसत्यवश्यम् ॥**
**प्रियमाप दिवापि कोकिले स्त्री परितस्ताररवे रसत्यवश्यम् ॥ ७० ॥**

**स्मररागमयीति ॥** अवश्यं निश्चितं स्मररागमयी तमिस्रा कामव्यसनरूपा रात्रिः रवेः श्रीसूर्यस्य वपुः शरीरं परितस्तार आच्छादयामास, किंभूता तमिस्रा असती अविद्यमाना । न हि स्मररागमयेन तमसा रवेर्वपुः कदाचिदपि आच्छाद्यते । तर्हि वपुः कथमाच्छादितं, यद्दिवापि दिवसेऽपि स्त्री अङ्गना प्रियं भर्तारमाप प्राप्तवती । कदाचित् प्रियो वश्यो भविष्यतीत्याशङ्क्याह—किंभूतं प्रियम् अवश्यमनायत्तम् । अयाचमानमित्यर्थः । क्व सति प्राप कोकिले परपुष्टे परितः समन्तात् रसति शब्दायमाने सति, किंभूते कोकिलेताररवे मधुरस्वरे उच्चस्वरे वा । यदि च तमिस्रा रवेः शरीरं न पिहितवती, तत्कथं दिवापि रजनीभ्रान्त्या तमसौ व्यभिचरेत् । तस्माद्वयमनुमिमीमहे—यन्नूनं स्मररागमयी तमिस्रा रवेः वपुः परितस्तार, कामतमिस्रया रविराच्छादितः । उक्तं च-'नैव पश्यति कामान्धो ह्यर्थी दोषं न पश्यति' इति । "समन्तस्तु परितः सर्वतो विश्वगित्यपि' । 'तारोऽत्युच्चैस्त्रयस्त्रिषु', 'ध्वनिध्वानरवस्वनाः' रसतीति 'रस शब्दे'ऽस्य शतरि रूपम् ॥ ७० ॥

स्मररागमयीति ॥ असती दुष्टा स्मरेण कामेन निमित्तेन यो रागो रमणेच्छा स एव तन्मयी तमिस्रा तमःस्तोमः ।

> 'तमिस्रा तिमिरे रोगे तामिस्रा तु तमस्तनौ ।
> कृष्णपक्षनिशायां च-'

इति विश्वः । रवेर्वपुर्मण्डलं परितस्तार आवव्रे । अह्नि रजनीधियं जनयामासेत्यर्थः । परिपूर्वात् स्तृणातेर्लिट् । अवश्यं, सत्यमित्यर्थः । कुतः—परितः समन्तात्ताररवे उच्चतरध्वनौ कोकिले रसति कूजति सति इत्युद्दीपकोक्तिः । स्त्री, स्त्रिय इत्यर्थः । जातावेकवचनम् । दिवेति सप्तम्यर्थेऽव्ययम । वशं गतो वश्यः 'वशं गतः' इति यत्प्रत्ययः । न वश्यस्तमवश्यम् । अवशं गतमपीत्यर्थः । प्रियमाप । स्वयमभिससारेत्यर्थः । यत् अवगणयन्तमपि प्रियं दिवापि मानमवगणय्य निषेधं चोल्लङ्घ्य समगच्छन्, तत्सत्यम् । रागतिमिरतिरोहितमानभानुमण्डला मानिन्य इति रूपकानुप्राणिता प्रियाभिक्रियानिमित्ता परिस्तरणक्रियास्वरूपोत्प्रेक्षा अवश्यमिति व्यञ्जकाप्रयोगाद्वाच्या । औपच्छन्दसिकं वृत्तम् । 'विषमे ससजा गुरू समे चेत् स्भरयाश्छन्दसिकं तदौपपूर्वम्' इति लक्षणात् ॥ ७० ॥

**वपुरम्बुविहारहिमं शुचिना रुचिरं कमनीयतरा गमिता ॥**
**रमणेन रमण्यचिरांशुलतारुचिरङ्कमनीयत रागमिता ॥ ७१ ॥**

**वपुरिति ॥** केनचित् रमणेन रमणी नायिका अङ्कमनीयत उत्सङ्गं प्रापिता । किंभूता रमणी कमनीयतरा अतिशयेन कमनीया मनोहरतरा, अपरं किंभूता रमणी शुचिना ग्रीष्मेण रुचिरं मनोहरं वपुः शरीरं गमिता प्रापिता, किंभूतं वपुः अम्बुनि जले विहारः क्रीडनं तेन हिमं शीतलं वारिविहरणशीतलम्, अपरं किंभूता रमणी न चिरमंशवः तेजांसि यस्याः सा अचिरांशुः सैव लता अचिरांशुलता तस्याः रुचिरिव रुचिर्यस्याः सा

विद्युल्लतासमकान्तिः, अपरं किंभूता रमणी रागम् इता अभिलाषं प्रीतिं वा प्राप्ता। अत एवाभिलाषणीयतरेत्यर्थः। 'रुचिरं चारु मनोज्ञं मञ्जु मञ्जुलम्', 'रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः', 'उत्सङ्गचिह्नयोरङ्कः'। इता 'इण् गता'वित्यस्य रूपम् ॥ ७१ ॥

अथैकेन ग्रीष्ममाह—

वपुरिति ॥ शुचिना ग्रीष्मेण प्रयोजककर्त्रा अम्बुविहारेण जलक्रीडया हिमं शीतलमत एव रुचिरमुज्ज्वलं वपुर्देहं गमिता प्रापिता। 'गतिबुद्धि-' इत्यादिना अणि कर्तुः कर्मत्वम्। 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इत्यभिहितत्वं च। अत एव कमनीयतरा रमणीयतरा, अचिरांशुर्लतेवाचिरांशुलता विद्युल्लता तस्या रुचिरिव रुचिर्यस्याः सा अचिरांशुलतारुचिः इत्युपमाद्वयम्। रागमनुरागमिता प्राप्ता। इणः कर्तरि क्तः। रमणी रमणेन प्रियेणाङ्कमुत्सङ्गमनीयत नीता। 'नीहृकृष्वहाम्' इति नयतेर्द्विकर्मकता। शेषं पूर्ववत्। तोटकं वृत्तम्। 'इह तोटकमम्बुधिसकारयुतम्' इति लक्षणात् ॥ ७१ ॥

अथ वर्षावर्णनम्—

**मुदमब्दभुवामपां मयूराः सहसाऽऽयन्त नदी पपाट लाभे ॥**
**अलिनाऽरमताऽलिनी शिलीन्ध्रे सह सायन्तनदीपपाटलाभे ॥ ७२ ॥**

**मुदमिति** ॥ मयूराः सर्पाशनाः अपां जलानां लाभे अधिगमे सति सहसा अकस्मात् अतर्कितमित्यर्थः, मुदम् आयन्त आनन्दं जग्मुः, किंभूतानामपाम् अब्दभुवां मेघसम्भवानाम्। अन्यत् नदी सरित् पपाट रयाद्वहत पूरमगात्। पपाटेति 'पट गता'वित्यस्य लिटि। अपरम् अलिनी भ्रमरी अलिना भ्रमरेण कान्तेन सह सार्धम् अरमत चिक्रीड, क्व शिलीन्ध्रे वृक्षजातौ अथ वा शिलीन्ध्राख्यकुसुमे। किंभूते शिलीन्ध्रे सायन्तनदीपपाटलाभे सायन्तनः सन्ध्याकालीनो यो दीपः प्रदीपस्तद्वत् तस्येव वा पाटला श्वेतरक्ता आभा कान्तिर्यस्य सः तस्मिन् सन्ध्याकालीनप्रदीपप्रभे ॥ ७२ ॥

अथ द्वाभ्यां वर्षर्तुं वर्णयति—

मुदमिति ॥ अब्दभुवां मेघप्रभवानामपां लाभे। मेघे वर्षति सतीत्यर्थः। सहसा मयूरा मुदमानन्दमायन्ताऽलभन्त। अय गतौ लङि 'आडजादीनाम्' इत्याडागमे वृद्धिः। नदी पपाट। नद्य प्रावहन्नित्यर्थः। अट पट गतौ, लिट्। जातावेकवचनम्। अलिना भृङ्गेण सह, सायन्तनः सायम्भवः। 'सायंचिरम्-' इत्यादिना ट्युप्रत्ययस्तुडागमश्च। स चासौ दीपश्च तद्वत्पाटलाभे पाटलप्रभे। इत्युपमालङ्कारः। तस्मिञ्छिलीन्ध्रे कन्दलीकुसुमे अलिन्यरमत। अत्र मयूरमोदप्राप्त्याद्यनेककर्तृकाक्रियायौगपद्याद्भिन्नाधिकरणाक्रियासमुच्चयरूपः समुच्चयाऽलङ्कारभेदः। 'गुणाक्रियायौगपद्यं समुच्चयः' इति सामान्यलक्षणम्। औपच्छन्दसिकं वृत्तम् ॥ ७२ ॥

**कुटजानि वीक्ष्य शिखिभिः शिखरीन्द्रं समयाऽवनौ घनमदभ्रमराणि ॥**
**गगनं च गीतनिनदस्य गिरोच्चैः समया वनौघनमदभ्रमराणि ॥ ७३ ॥**

**कुटजानीति** ॥ शिखिभिर्मयूरैः शिखरीन्द्रं समया पर्वतस्य रैवतकस्य समीपे अवनौ पृथिव्यां कुटजानि कुटजपुष्पाणि वीक्ष्य दृष्ट्वा अराणि रणितं केकायितम्। कया गिरा वाण्या, कथम् उच्चैस्तरं यथा भवति तथा, किंभूतया गिरा गीतनिनदस्य समया गीतस्य निनदस्तस्य समा तुल्या तया गेयध्वनेस्तुल्यया, अपरं किं कृत्वा अराणि गगनमाकाशं वीक्ष्य, किंलक्षणं गगनं वनौघनमदभ्रं वनौघेन उदकसमूहेन नमन्ति लम्बायमानानि अभ्राणि मेघा यस्मिंस्तथा, किंभूतानि कुटजानि घनमदभ्रमराणि घनः प्रचुरो मदो येषां ते घनमदाः तथाविधा भ्रमराः षट्पदा येषु तानि घनमदभ्रमराणि अतिमत्ताऽलिनि। 'समस्तुल्यः सदृक्षः सदृशः सदृक्', 'वने सलिलकानने', 'अभ्रं मेघो वारिवाहः', 'षट्पदभ्रमराऽलयः' सर्वत्राप्यमरः। अराणि इति 'रण शब्दे' इत्यस्य णिचि रूपम् ॥ ७३ ॥

कुटजानीति ॥ शिखरीन्द्रं समया रैवतकाद्रेः समीपे । 'अभितः परितःसमया–' इत्यादिना द्वितीया । अवनौ प्रदेशे घनमदा भ्रमरा येषु तानि घनमदभ्रमराणि कुटजानि कुटजकुसुमानि वनौघेन पयःपूरेण नमन्त्यभ्राणि मेघा यस्मिंस्तद्वनौघनमदभ्रम् । 'पयः कीलालममृतं जीवनं भुवनं वनम्' इत्यमरः । गगनं च वीक्ष्य शिखिभिर्मयूरैर्गीतनिनदस्य गानध्वनेः समया तुल्यया । 'तुल्यार्थैः–' इत्यादिना वैकल्पिकी षष्ठी । गिरा वाचा । केकयेत्यर्थः । उच्चैः अराणि रणितम् । रण शब्दे, भावे लुङ् चिणो लुक् । कुटजा वृत्तम् , 'सजसा भवेदिह सगौ कुटजाख्यम्' इति लक्षणात् ॥ ७३ ॥

**अभीष्टमासाद्य चिराय काले समुद्धृताशं कमनी चकाशे ॥**
**योषिन्मनोजन्मसुखोदयेषु समुद्धृताशङ्कमनीचकाशे ॥ ७४ ॥**

**अभीष्टमिति** ॥ अनीचकाशे न नीचाः महान्तः काशाः पोटगला यत्र सः अनीचकाशः तस्मिन् अनीचकाशे काले शरदृतौ काचित् योषित् अङ्गना चकाशे शुशुभे । किं कृत्वा चिराय चिरकालेन अभीष्टमासाद्य कान्तं प्राप्य, किंभूतं कान्तं समुद्धृताशङ्कं समुद्धृता उन्मूलिता आशङ्का वियोगभयं येन सः तम्, अपरम् किंलक्षणमभीष्टं मनोजन्मसुखोदयेषु धृताशं मनसः चिन्ताजन्म उत्पत्तिर्यस्य सः मनोजन्मा कन्दर्पः तेन कृतानि तत्सम्बन्धीनि वा सुखानि सुरतानन्दाः तेषामुदया उत्कर्षास्तेषु धृताशं कृताभिलाषम्, अत एव किंलक्षणा योषित् समुत् मुदा हर्षेण सह वर्तमाना सहर्षा, पुनः किंभूता योषित् कमनी मनोहरा, काम्यते अभिलष्यते सा कमनी सुर्वाङ्गसुन्दरी । यदाऽसौ उत्पन्नाभिलाषा तदोन्मूलितशङ्कमित्यर्थः । अनीचा वृद्धिमन्तः काशा यत्र, शरदीत्यर्थः । 'मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः', 'आशा तृष्णापि चायता' ॥ ७४ ॥

अथ त्रिभिः शरदं वर्णयति—

**अभीष्टमिति** ॥ कामयत इति कमनी कामयित्री । 'कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः' इत्यमरः । कमेः कर्तरि ल्युटि ङीप् । योषित् । जातावेकवचनम् । अनीचा उन्नताः काशा अश्ववाला यस्मिन्ननीचकाशे काले । शरदीत्यर्थः । मनोजन्मसुखोदयेषु कामसुखाविर्भावेषु धृता आशा अभिलाषो येन तमभीष्टं प्रियं चिराय चिरकालेन । 'चिराय चिररात्राय' इत्यमरः । सम्यगुद्धृता उत्सृष्टा आशङ्का सङ्कोचो यस्मिन्कर्मणि तत्समुद्धृताशङ्कं विस्रब्धं यथा तथा आसाद्य प्राप्य मुदा सह वर्तत इति समुत् सानन्दा सती चकाशे । विललासेत्यर्थः । अत्र समुत् चकाश इति योषितः प्रियप्रातिनिमित्तहर्षाख्यभावनिबन्धनात्प्रेयोऽलङ्कारः । रसभावतदाभासतत्प्रकाशसमानानां निबन्धे रसवत्प्रेयऊर्जस्वित्समाहितानीति लक्षणात् । वृत्तमुपजातिः ॥ ७४ ॥

**स्तनयोः समयेन याऽङ्गनानामभिनद्धारसमा न सा रसेन ॥**
**परिरम्भरुचिं ततिर्जलानामभिनद्धा रसमानसारसेन ॥ ७५ ॥**

**स्तनयोरिति** ॥ रसमाना कूजमाना सारसा लक्ष्मणा यत्र सः तथा तेन रसमानसारसेन समयेन शरदाख्येन अवसरेण अङ्गनानां स्त्रीणां स्तनयोः कुचयोः विषये या जलानां ततिः प्रस्वेदकणानां माला अभिनद्धा रचिता, सा जलानां ततिः रसेन रागेण परिरम्भरुचिमालिङ्गनाभिलाषं न अभिनत् न स्फेटयामास । तया प्रस्वेदजलतत्या आलिङ्गनेच्छा न निवर्तितेत्यर्थः । यतः किंभूता जलानां ततिः हारसमा हारतुल्या, हारेण मुक्तावल्या समा हारसमा । रसमानसारसेनेति शरदि सारसा रसन्तीति भावः । 'पुष्कराह्वस्तु सारसः', 'हारो मुक्तावली देवच्छन्दोऽसौ शतयष्टिका' सर्वत्राप्यमरः ॥ ७५ ॥

स्तनयोरिति ॥ रसमानाः कूजनशीलाः । 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति ताच्छील्ये चानश्

प्रत्ययः । रसतेः परस्मैपदित्वान्न शानच्प्रत्ययः । ते सारसाः पक्षिविशेषाः यस्मिंस्तेन रसमानसारसेन समयेन । शरत्कालेनेत्यर्थः । सारसानां तत्रैव सम्भवात् । 'सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः' इति यादवः । अङ्गनानां स्तनयोर्या जलानां ततिः शारदोष्मजन्मा स्वेदोदबिन्दुसन्दोहः अभितो नद्धाऽभिनद्धा । नह्यतेरभिपूर्वात्कर्मणि क्तः । 'नहो धः' इति धत्वम् । हारसमा मुक्ताहारतुल्या । कुचमण्डलमण्डनायमानेति भावः । सा जलानां तती रसेन रागेण हेतुना । बलीयसेति भावः । परिरम्भरुचिमालिङ्गनेच्छां नाभिनत् न बिभेद । शारदस्वेदस्याप्यलङ्कारतया उद्दीपकस्याऽजुगुप्सितत्वान्निःसपत्नशृङ्गारा विजयन्त इत्यर्थः । अत एव रसानिबन्धनाद्रसवदलङ्कारः । लक्षणमुक्तं पूर्वश्लोके । औपच्छन्दसिकं वृत्तम् ॥ ७५ ॥

**जातप्रीतिर्या मधुरेणाऽनुवनान्तं कामे कान्ते सारसिकाकाकुरुतेन ॥**
**तत्सम्पर्कं प्राप्य पुरा मोहनलीलां कामेकान्ते सा रसिका का कुरुते न ॥७६॥**

**जातप्रीतिरिति** ॥ सा का रसिका का सरागा स्त्री वर्तते, या स्त्री तत्सम्पर्कं प्राप्य शरत्सम्बन्धं लब्ध्वा कां मोहनलीलां सुरतविलासं न कुरुते न विधत्ते अपि तु सर्वां मोहनलीलां करोत्येव । क्व रहसि एकान्ते, किंलक्षणा रसिका अनुवनान्तमुपवने सारसिकाकाकुरुतेन कान्ते भर्तरि जातप्रीतिः उत्पन्नहर्षा, सारसिका लक्ष्मणा तस्याः काकुः मनोहरं यत् रुतं वाशितं तेन । किंभूतेन सारसिकाकाकुरुतेन मधुरेण मनोज्ञेन, किं कृत्वा पुरा अनन्तरं तत्सम्पर्कं सारसिकायाः हंस्याः संयोगं प्राप्य, किंभूते कान्ते कामे कामसदृशे । 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' । 'तिरश्चां वाशितं रुतम्' इत्यमरः ॥ ७६ ॥

**जातप्रीतिरिति** ॥ या स्त्री अनुवनान्तम् । विभक्त्यर्थेऽव्ययीभावः । मधुरेण श्राव्येण सारसिकाकाकुरुतेन सारस्य एव सारसिकाः सारसाङ्गनाः । कात्पूर्वस्येत्वम् । तासां काकुरुतेन विकृतशब्देन । 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यमरः । काकुश्च तद् रुतं च तेन । कामे कामकल्पे । 'सिंहो देवदत्त' इतिवद्गौणप्रयोगः । कान्ते प्रिये जातप्रीतिर्जातस्नेहाऽभूत्, रसिका रसवती । रागवतीत्यर्थः । 'अत इनिठनौ' इति ठन्प्रत्ययः । सा का स्त्री एकान्ते रहसि तस्य कान्तस्य सम्पर्कं प्राप्य पुरा पुरुषप्रेरणात्पूर्वमेव कां मोहनलीलां सुरतक्रीडां न कुरुते । सर्वापि स्त्री सर्वानपि सुरतविशेषान् कामतन्त्रप्रसिद्धान् विस्रब्धं चकारेत्यर्थः । नेन शृङ्गारस्य पराकाष्ठा प्रातेत्युक्तम् । मत्तमयूरं वृत्तम् ॥ ७६ ॥

**कान्ताजनेन रहसि प्रसभं गृहीतकेशे रते स्मरसहाऽऽसवतोषितेन ॥**
**प्रेम्णा मनःसु रजनीष्वपि हैमनीषु के शेरते स्म रसहासवतोषितेन ॥ ७७ ॥**

**कान्ताजनेनेति** ॥ रहसि एकान्ते एवंविधे संभोगे संयोगे हैमनीष्वपि हेमन्तभवास्वपि रजनीषु रात्रिषु के पुरुषाः शेरते स्म शिश्यिरे । अपि तु रसवशात् न केचिदपि सुषुपुरित्यर्थः । किंभूते रते कान्ताजनेन स्त्रीलोकेन प्रसभं हठात् गृहीतकेशे आकृष्टमूर्धजे, गृहीताः केशा यत्र तत् तथा तस्मिन् । किंलक्षणेन कान्ताजनेन स्मरसहासवतोषितेन स्मरसहः कामक्षमः नाऽतिमनाक् यः आसवः पानं तेन तोषितो हर्षितः तेन, अत एव गृहीतकेशत्वम् । अपरं किंलक्षणेन कान्ताजनेन प्रेम्णा स्नेहेन मनस्सु भर्तृचित्तेषु उषितेन स्थितेन, पुनः किंभूतेन कान्ताजनेन रसहासवता रसः शृङ्गारः हासः स्मितं च तौ विद्येते यस्य सः रसहासवान् तेन । 'कचः केशः शिरोरुहः', 'रतं निधुवनं रहः', 'कामः पञ्चशरः स्मरः', 'आसवोऽजगलः सीधुः', 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' । 'हासो हास्यं च' सर्वत्राप्यमरः ७७

अर्धेकेन हेमन्तमाह—

**कान्ताजनेनेति** ॥ सहत इति सहः । पचाद्यच् । स्मरस्य सहः । कामोद्दीपक इत्यर्थः । तेनाऽऽसवेन तोषितः तेन स्मरसहासवतोषितेन अत एव रसहासावस्य स्त इति रसहासवता रागहास्यवता अत एव प्रेम्णा

मन्मथासु पुंसां चित्तेषूषितेन वसता । वसतेः कर्तरि क्तः । 'वसतिक्षुधोरिट्' इतीडागमः, 'गतिबुद्धि-' इत्यादि-सूत्रे चकाराद्वर्तमानार्थता । कान्तेव जनस्तेन कान्ताजनेन । जातावेकवचनम् । प्रसभं रहसि बलाद् गृहीत-केशे आकृष्टशिरोरुहे रते सुरते, हेमन्ते भवा हैमन्त्यस्तासु हैमनीष्वपि । द्राघीयसीष्वपीति भावः । 'सर्वत्राण् च तलोपश्च' इति हेमन्तशब्दादण्प्रत्ययः तकारलोपश्च, 'टिड्ढाणञ्-' इत्यादिना ङीप् । रजनीषु के युवानः शेरते स्म स्वपन्ति स्म । न केऽपीत्यर्थः । 'लट् स्मे' इति भूते लट् । एतेनाऽतिभूमिं गतः शृङ्गार इति व्यज्यते । वसन्ततिलका वृत्तम् ॥ ७७ ॥

**गतवतामिव विस्मयमुच्चकैरसकलाऽमलपल्लवलीलया ॥**
**मधुकृतामसकृद्गिरमावली रसकलामलपल्लवलीलया ॥ ७८ ॥**

**गतवतामिति** ॥ मधुकृतामावली भ्रमराणां श्रेणिः असकृद्वारंवारम् उच्चकैस्तारं यथा भवति तथा गिरं वाचमलपत् वाणीमुच्चारयामास । किंभूतां वाचं रसेन रागेण कला मधुरा तां, किंभूता आवली लवलीलया लवली चन्दनलता तस्यां लयः स्थानं यस्याः । किंभूतानां मधुकृताम्, उत्प्रेक्षते—विस्मयं गतवतामिव आश्चर्यं प्राप्तानामिव । कया विस्मयं गताः असकलाऽमलपल्लवलीलया असकला असम्पूर्णा ईषज्जाता अमला निर्मला ये पल्लवाः पत्राणि तेषां या लीला शोभा तया विस्मितानामिव । अन्योऽपि यः किल कश्चित् विस्मयते सोऽसकृत् वारंवारं 'साधु साधु' इत्यादिवाक्यैः तमुत्साहयति । 'पल्लवोऽस्त्री किसलयं', 'हेला लीला बिब्बोकः', 'लवली चन्दनलता', 'लयः स्थाने च साम्ये च' । अलपदिति 'लप परिभाषणे'ऽस्य लङि ॥ ७८ ॥

अथैकेन शिशिरं वर्णयति—

गतवतामिति ॥ असकलाऽमलपल्लवलीलया असकला असमग्रविकासिनोऽमला निर्मलाश्च ये पल्लवास्तेषां लीला तया । नृत्यरूपयेत्यर्थः । विस्मयं गतवतामिव स्थितानामित्युत्प्रेक्षा । मधुकृतां मधुकराणां सम्बन्धिनी लवलीषु लताविशेषेषु लयो लयनं स्थितिर्यस्याः सा लवलीलया आवलिः पङ्क्तिः रसकला रसेन मध्वास्वादेन कलामव्यक्तमधुराम् । 'ध्वनौ तु मधुरास्फुटे । कलः' इत्यमरः । गिरं वाचमसकृदुच्चैरलपत् । मधुमदहेतुकस्य मधुकरालापस्य पल्लवलीलया जनितविस्मयहेतुकत्वमुत्प्रेक्ष्यत इति गुणहेतूत्प्रेक्षा । द्रुतविलम्बितं वृत्तम् ॥ ७८ ॥

**कुर्वन्तमित्यतिभरेण नगानवाचः पुष्पैर्विराममलिनां च न गानवाचः ॥**
**श्रीमान्समस्तमनुसानु गिराविहर्तुं बिभ्रत्यनोदि(१) स मयूरगिरा विहर्तुम् ७९**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये ऋतुवर्णनं नाम षष्ठः सर्गः ॥ ६ ॥

**कुर्वन्तमिति** ॥ स श्रीमान् लक्ष्मीवान् श्रीकृष्णः इहाऽस्मिन् रैवतकाचले विहर्तुं क्रीडितुं मयूरगिरा बर्हिवाचा अनोदि प्रेरितः । किंभूते गिरौ अनुसानु शिखरे शिखरे समस्तम् ऋतुं बिभ्रति ऋतुसमूहमुद्वहति, किंभूतम् ऋतुं पुष्पैः कुसुमैः अतिभरेण अतिशयभारेण नगान् वृक्षान् अवाचः नम्रान् कुर्वन्तं विदधतम्, अपरं किं कुर्वन्तम् अलीनां भ्रमराणां गानवाचः गीतवचनस्य विराममवसानं न कुर्वन्तं न कुर्वाणम् । इतिशब्दः समाप्तिवाचकः । मयूराः क्रीडाभिरत्र क्रीडन्तीत्यर्थः । 'स्यादवाङ्प्यधोमुखः', 'गीतं गानमुभे समे', 'भारती भाषा गीर्वाग् वाणी सरस्वती' ॥ ७९ ॥

इति श्रीवल्लभविरचितायां सन्देहविषौषध्यां महाटीकायां षड्ऋतुवर्णनं नाम षष्ठः सर्गः ॥

---

१ ) त्यचोदि ।

कुर्वन्तमिति ॥ इतीत्थं पुष्पैरेवातिभरेण महाभरेण तत्कृतेन वा गौरवेण नगान्वृक्षान् अवामन्तीत्यवाचो नमान्। अङ्घेरवपूर्वात् 'ऋत्विक्–' इत्यादिना क्विन्प्रत्ययः । कुर्वन्तमलिनो गानवाचो गीतध्वनेर्झङ्कारस्य च न विराममविराममसमाप्तिं कुर्वन्तं समस्तमृतुं सर्वानृतून् अनुसानु, सानुष्वित्यर्थः । विभक्त्यर्थेऽव्ययीभावः। बिभ्रति बिभ्राणे इह गिरौ रैवतकाद्रौ विहर्तुं क्रीडितुं श्रीमान्सहरिर्मयूरगिरा केकया अचोदि प्रेरितः । 'भगवन्निह विहर, ऋतुगणमनुगृहाणे'ति प्रार्थित इवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । वृत्तमुक्तम् ॥ ७९ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवधकाव्यव्याख्याने सर्वङ्कषाख्ये षष्ठः सर्गः ॥ ६ ॥

## सप्तमः सर्गः ।

अनुगिरमृतुभिर्वितायमानामथ स विलोकयितुं वनान्तलक्ष्मीम् ॥
निरगमदभिराद्धुमादृतानां भवति महत्सु न निष्फलः प्रयासः ॥ १ ॥

अनुगिरमिति ॥ अथ अनन्तरं स श्रीकृष्णः वनान्तलक्ष्मीं विलोकयितुं निरगमत् काननश्रियं द्रष्टुं निर्ययौ, किंभूतां वनान्तलक्ष्मीम् अनुगिरं रैवतकाचले शृङ्गे शृङ्गे ऋतुभिर्वसन्तादिभिर्वितायमानां विस्तार्यमाणाम् । युक्तोऽयमर्थः, यस्मात् कारणात् महत्सु गरीयस्सु पुरुषेषु विषये अभिराद्धुमाराधयितुम् आदृतानामाराधनतत्पराणां प्रयासः प्रयत्नः निष्फलो निरर्थकः न भवति । महात्मानोऽवश्यमेव भक्तितत्पराणां प्रयासं न निष्फलं कुर्वन्तीत्यर्थः ॥ १ ॥

इत्थमृतुगुणप्रादुर्भावमभिधाय तत्फलतया भगवतः सानुचरस्य वनविहारलीलावर्णनमारभते—

अनुगिरमिति ॥ अथर्तुप्रादुर्भावानन्तरं स हरिः गिरावित्यनुगिरम् । विभक्त्यर्थेऽव्ययीभावः । 'गिरेश्च सेनकस्य' इति समासान्तः । ऋतुभिर्वितायमानां वितन्यमानाम् । तनोतेः कर्मणि लटः शानजादेशः । 'तनोतेर्यकि' इति वैभाषिक आकारादेशः । वनान्तलक्ष्मीं विलोकयितुं निरगमन्निर्गतः । 'पुषादि–' इत्यादिना गमेर्लुङ च्लेरङादेशः । ऋतुगणभक्तिं स्वीकर्तुमिति भावः । तथा हि– अभिराद्धुमाराधयितुमादृतानामादरं कुर्वताम् । आस्थावतामित्यर्थः । कर्तरि क्तः । प्रयासः सेवायासो महत्सु विषये निष्फलो न भवति । न हि भक्तानुकम्पिनो महान्तस्तत्सेवां व्यर्थयन्तीति भावः । अतो हरेरप्यृतुगणानुग्रहणार्थे निर्गमो युक्त इति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतार्थसमर्थनादर्थान्तरन्यास इति सर्वस्वसूत्रम् । अत्र सर्गे पुष्पिताग्रा वृत्तम् । 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ १ ॥

दधति सुमनसो वनानि बह्वीर्युवतियुता यदवः प्रयातुमीषुः ॥
मनसिशयमहास्त्रमन्यथाऽमी न कुसुमपञ्चकमप्यलं विसोढुम् ॥ २ ॥

दधतीति ॥ यदवो यादवाः वनानि काननानि प्रयातुमीषुः गन्तुमभिलेषुः । किंभूता यदवः युवतियुताः वल्लभासहिताः, किंभूतानि वनानि बह्वीः घनतराः सुमनसः पुष्पाणि दधति धारयन्ति । अतिशयेन बह्व्यः ताः । सुमनस्शब्दः स्त्रीलिङ्गो बहुवचनान्तः । उक्तं च—

आपः सुमनसो वर्षा अप्सरःसिकताः समाः
एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रयम् ॥

इति । युक्तोऽयमर्थः, यतः कारणात् अन्यथा युवतीर्विना अमी यदवः कुसुमपञ्चकमपि विसोढुं नालं न समर्थाः । कामस्य किल पुष्परूपाः शोषनमोहनताडनोन्मादनोच्चाटनाख्याः पञ्च बाणाः सन्तीत्यर्थः । तेऽन्यथा युवतीर्विना बह्वीः सुमनसो धारयमाणानि वनानि गन्तुं कथमिच्छन्तीत्यर्थः । किंभूतं कुसुमपञ्चकं मनसिशयमहास्त्रं कामस्याऽमोघमायुधम् २

दधतीति ॥ यदवो यादवाः । व्याख्यातं चैतत् । बह्वीर्बह्वीः । बहुविधा इत्यर्थः । 'बह्वादिभ्यश्च' इति विकल्पादीकारः । सुमनसः पुष्पाणि । 'स्त्रियः सुमनसः पुष्पम्' इत्यमरः । दधाति दधान्ति । 'वा नपुंसकस्य' इति अभ्यस्तात्च्छतुर्वैकल्पिको नुम्प्रतिषेधः । वनानि युवतियुताः स्त्रीसमेता एव प्रयातुमीषुरिच्छान्ति स्म । अत्र हेतुमाह-अन्यथा युवतिजनाभावे अमी यदवो, मनसि शेते इति मनसिशयः कामः । 'अधिकरणे शेतेः' इत्यच्प्रत्ययः । 'हलदन्तात्सप्तम्याः संज्ञायाम्' इत्यलुक् । तस्य महास्त्रभूतं कुसुमपञ्चकमपि । पञ्चापि कुसुमानीत्यर्थः । पञ्चानां सङ्घः पञ्चकम् । संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इति कप्रत्ययः । विसोढुं नालं न शक्ताः । सकलसुमनसां सामर्थ्ये तत्रारविन्दादीनामेव पञ्चबाणबाणत्वस्य सम्भवप्रमाणासिद्धत्वादिति भावः । अतो युवतिभिः सह प्रयाणं युक्तमिति वाक्यार्थेन वाक्यार्थसमर्थनाद्वाक्यार्थसमर्थनरूपकाव्यलिङ्गमलङ्कारः ।

'अरविन्दमशोकं च चूतं च नवमल्लिका ।
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः' ॥ ॥ २ ॥

**अवसरमधिगम्य तं हरन्त्यो हृदयमयत्नकृतोज्ज्वलस्वरूपाः ॥**
**अवनिषु पदमङ्गनास्तदानीं न्यदधत विभ्रमसम्पदोऽङ्गनासु ॥ ३ ॥**

**अवसरमिति** ॥ तदानीं तस्मिन् काले अङ्गना युवतयः अवनिषु भूपृष्ठेषु पदं न्यदधत चरणं न्यस्तवत्यः, अपरं विभ्रमसम्पदः विलासलक्ष्म्यः अङ्गनासु कामिनीषु विषये पदं न्यदधत । विलासा युवतिदेहेषु अवतीर्णा इत्यर्थः । उभयोर्विशेषणसाम्यमाह—किं कुर्वत्यः अङ्गनाः विभ्रमसम्पदश्च तमवसरं दर्शनप्रस्तावमधिगम्य प्राप्य हृदयं कान्तचित्तं हरन्त्यः आकर्षन्त्यः । विभ्रमसम्पदोऽपि मनो हरन्त्यः । अपरं किंभूता अङ्गनाः अयत्नकृतोज्ज्वलस्वरूपाः अयत्नकृतं स्वभावसिद्धमुज्ज्वलं मनोहरं स्वरूपं शरीरं यासां ताः तथा स्वभावमनोहरवेशाः । विभ्रमसम्पदोऽपि स्वभावरम्यशरीराः ॥ ३ ॥

**अवसरमिति** ॥ तमवसरं सहाजिगमिषाकालमधिगम्य हृदयं हरन्त्यो हृदयङ्गमा भवन्त्यः । सर्वं हि प्रार्थ्यमानमेव प्रियं भवतीत्यर्थः । यत्नेन कृतं न भवतीत्ययत्नकृतं तथाप्युज्ज्वलं स्वरूपं यासां ताः । स्वभावसुन्दरमूर्तय इत्यर्थः । अङ्गनास्तदानीं तस्मिन्नवसरेऽवनिषु पदं न्यदधत निहितवत्यः । पादचारेणैव चेलुरित्यर्थः । दधातेर्लङि 'आत्मनेपदेष्वनतः' इति झस्य अदादेशः । अङ्गनासु विभ्रमसम्पदो विलाससम्पदः पदं न्यदधत । तदानीं विलासाः प्रवृत्ता इत्यर्थः । अत्राङ्गनानां विलाससम्पदां चोभयीनामपि प्रकृतानामेव हृदयहरणादिना वर्णनासाम्येनौपम्यस्य गम्यमानत्वात्केवलप्रकृतविषया तुल्ययोगिताऽलङ्कारः । वाच्यभेदेनाप्यङ्गनाविलाससम्पदामुत्तरोत्तरस्य पूर्वपूर्वविशेषकत्वावगमादेकावलीभेदो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ३ ॥

**नखरुचिरचितेन्द्रचापलेखं ललितगतेषु गतागतं दधाना ॥**
**मुखरितवलयं पृथौ नितम्बे भुजलतिका मुहुरस्खलत्तरुण्याः ॥ ४ ॥**

**नखेति** ॥ तरुण्याः कामिन्याः भुजलतिका बाहुवल्लरी मुहुर्वारंवारं नितम्बे कटिपश्चाद्भागे अस्खलत् चस्खाल स्खलिता । किंविधे नितम्बे पृथौ विस्तीर्णे, कथं मुखरितवलयं यथा भवति तथा मुखरितानि वाचालानि वलयानि कङ्कणानि यत्र यस्यां क्रियायां तथा, रणत्कङ्कणं यथा भवतीत्यर्थः । किंभूता भुजलतिका ललितगतेषु गतागतं दधाना विलासगमनेषु यातायातं बिभ्रती । ललितानि च तानि गतानि तेषु, गतं च आगतं च

गतागतम् । किंभूतं गतागतं नखरुचिरचितेन्द्रचापलेखं नखकान्तिभिः रचिता विहिता इन्द्रचापलेखा इन्द्रधनुःकान्तिः यत्र तत्, नखरुचिप्रसारात् उत्पन्नसुरचापम् । कटिपश्चाद्भागो नितम्बः ॥ ४ ॥

न्यदधत विभ्रमसम्पदोऽङ्गनास्वित्युक्तं, ता एव प्रपञ्चयति—

नखेति ॥ ललितगतेषु मन्दगमनेषु नखानां रुचिभिः प्रभाभीः रचिता इन्द्रचापलेखा यस्मिन्कर्मणि तद्यथा तथा गतागतं यातायाते । 'विप्रतिषिद्धं चानधिकरणवाचि' इति वैभाषिको द्वन्द्वैकवद्भावः । दधाना तरुण्याः भुजलतिका, मुखराः कृता इति मुखरिताः ध्वनिता वलया यस्मिन्कर्मणि तद्यथा तथा । 'कटको वलयोऽस्त्रियाम्' इत्यमरः । पृथौ नितम्बे मुहुरस्खलच्चस्खाल । अत्र नखरुचीत्यालम्बनगुण उक्तः । गतागतं दधाना अस्खलदिति तच्चेष्टा । मुखरितवलयमिति तदलङ्कृतिः । तटस्थास्तूक्ता वसन्तादयः । अन्यत्र विस्तारत इति चतुर्विधोऽप्युद्दीपनक्रम उक्तः । उक्तं च—

'आलम्बनगुणाश्चैव तच्चेष्टा तदलङ्कृतिः ।
तटस्थश्चेति विज्ञेयश्चतुष्कोद्दीपनक्रमः' ॥

इति । तत्रालम्बनं रसस्य समवायिकारणं नायिका नायकश्च । तद्गुणो रूपलावण्यादिः । तच्चेष्टा भावहावादिः । अन्यत्सुगमम् । एवमुत्तरत्रापि ॥ ४ ॥

**अतिशयपरिणाहवान् वितेने बहुतरमार्पित(१)रत्नकिङ्किणीकः ॥**
**अलघुनि जघनस्थलेऽपरस्या ध्वनिमधिकं कलमेखलाकलापः ॥ ५ ॥**

**अतिशयेति** ॥ अपरस्याः नायिकायाः जघनस्थले जघनं कट्याः पुरोभागः तदेव स्थलं भूमिस्तत्र वर्तमानः कलमेखलाकलापः मनोज्ञरशनागुणः अधिकं ध्वनिं वितेने विशेषं शब्दमकरोत् । किंभूते जघने अलघुनि प्रौढे, किंभूतः कलमेखलाकलापः अतिशयपरिणाहवान् अतिशयविशालतायुक्तः । 'परिणाहो विशालता' । पुनः किंभूतः मेखलाकलापः बहुतरमापितरत्नकिङ्किणीकः बहुतरा भूरयः मापिताः खचिता रत्नकिङ्किण्यः मणिक्षुद्रघण्टिका यत्र सः तथा घनतरप्रोतमणिसुवर्णक्षुद्रघण्टिकः । अत एवाधिकं ध्वनिं वितेने । सुवर्णघण्टिकाः रत्नसम्पर्कात् अधिकं रणन्तीत्यर्थः । 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च' इत्यमरः ।५।

**अतिशयेति** ॥ अतिशयेन परिणाहवान् । अतिविशाल इत्यर्थः । अन्यथा तज्जघनस्याऽपर्याप्तेरिति भावः । परिणाहो विशालता । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । बहुतरमार्पिता आहिता रत्नानां किङ्किण्यो यस्मिन्सः । 'नद्यतश्च' इति कप्प्रत्ययः । कलो मधुरारावी मेखलाकलापोऽपरस्याः स्त्रियः अलघुनि जघनस्थलेऽधिकं ध्वनिं वितेने । तदलङ्कृतिरियम् ॥ ५ ॥

**गुरुनिबिडनितम्बबिम्बभाराक्रमणनिपीडितमङ्गनागणस्य(२) ॥**
**चरणयुगमसुस्रुवत्पदेषु स्वरसमसक्तमलक्तकच्छलेन ॥ ६ ॥**

**गुरुनिबिडेति** ॥ अङ्गनागणस्य युवतिपूगस्य चरणयुगं पादयुग्मम् असक्तमनवरतं स्वरसमसुस्रुवत् स्वकीयं रसमुद्गिरयामास(?) । रक्तादि यद् विद्यते तन्मुमोचेत्यर्थः । केन अलक्तकच्छलेन लाक्षारसव्याजेन, केषु पदेषु चरणन्यासेषु, किंलक्षणं चरणयुगं गुरुनिबिडनितम्बबिम्बभाराक्रमणनिपीडितं गुरु च तत् निबिडं च तत् नितम्बबिम्बं च गुरुनिबिडनितम्बबिम्बं तस्य भारः तेन आक्रमणं आस्कन्दनं तेन निपीडितं, प्रौढनिर्भरनितम्बभराक्रमणेन निर्पीडितं रुधिरमसृजदित्यर्थः ॥ ६ ॥

**गुरुनिबिडेति** ॥ गुरु गुरुत्वगुणयुक्तं निबिडं दृढं च यन्नितम्बबिम्बं तदेव भारस्तस्याक्रमणेन

(१) ०मर्पित । (२) जनस्य ।

अधिष्ठानेन निपीडितं निष्पीडितमङ्गनाजनस्य चरणयुगं कर्तृ पदेषु पादन्यासस्थानेष्वलक्तकच्छलेन लाक्षारस-मिषेण स्वरसं स्वद्रवमेव । 'गुणे रागे द्रवे रसः' इत्यमरः । असक्तमविच्छिन्नं यथा तथा असुस्रुवत् स्रवति स्म । स्रवतेः क्षरणार्थाल्लुङि 'णिश्रि-' इत्यादिना चङि धातोरुवङादेशः । द्रवद्रव्यकर्तृक एवायमकर्मकः । अन्यकर्तृकत्वे तु सकर्मकः । अत्रालक्तकच्छलेनेत्यलक्तकापह्नवेन स्वरसत्वारोपाच्छलादिशब्दैरसत्यत्वप्रति-पादनरूपोऽपह्नवालङ्कारः ॥ ६ ॥

कुलकम्—

**तव सपदि समीपमानये तामहमिति तस्य मयाग्रतोऽभ्यधायि ॥**
**अतिरभसकृताऽलघुप्रतिज्ञामनृतगिरं गुणगौरि ! मा कृथा माम् ॥७॥**
**न च सुतनु ! न वेद्मि यन्महीयानसुनिरसस्तव निश्चयः परेण ॥**
**वितथयति न जातु मद्वचोऽसाविति च तथापि सखीषु मेऽभिमानः ॥ ८ ॥**
**सततमनभिभाषणं मया ते परिपणितं भवतीमनानयन्त्या ॥**
**त्वयि तदिति विरोधनिश्चितायां भवति भवत्वसुहृज्जनः सकामः ॥ ९ ॥**
**गतधृतिरवलम्बितुं बताऽसूननलमनालपनादहं भवत्याः ॥**
**प्रणयिनि यदि न प्रसादबुद्धिर्भव मम मानिनि ! जीविते दयालुः ॥१०॥**
**प्रियमिति वनिता नितान्तमागःस्मरणसरोषकषायिताायताक्षी ॥**
**चरणगतसखीवचोऽनुरोधात्किल कथमप्यनुकूलयाञ्चकार ॥ ११ ॥**

तवेत्यादि ॥ प्रियमिति ॥ वनिता नायिका प्रियं कान्तं कथमपि महता कष्टेन अनुकूलयाञ्चकार आवर्जयामास । कुतः-किलेति सत्ये, इति पूर्वोक्तप्रकारेण चरणगतसखी-वचोऽनुरोधात् पदयोः प्रणतसखीवचोऽनुरोधात् वाक्यदाक्षिण्यात् वाक्याग्रहात् । किंलक्षणा वनिता नितान्तमतिशयेन आगःस्मरणसरोषकषायितायताक्षी आगसः अपराधस्य स्मरणं चिन्तनं तेन सरोषे सक्रोधे कषायिते आरक्ते आयते विशाले अक्षिणी यस्याः सा अपराध-स्मरणसक्रोधाऽऽरक्तविशालनेत्रा । तवेति ॥ इतीति किं वाक्यदाक्षिण्यं—यत्, हे गुण-गौरि ! गुणाः सौन्दर्यसौमनस्यादयः गौरा उज्ज्वला यस्याः सा गुणगौरी तस्याः सम्बोधने हे उज्ज्वलगुणे सखि ! तस्य कान्तस्याग्रतः पुरः मया इत्यभ्यधायि इत्युक्तम् । इतीति किं—यत्, अहं तामस्मत्सखीं सपदि वेगेन तव समीपं भवतः सन्निधिमानये प्रापयामि । अतः कारणात् हे सखि ! त्वं मामनृतगिरं मा कृथाः, अनृता असत्या गीर्वाक् यस्याः सा ताम् असत्यवादिनीं मा कुरु । किंभूतां माम् अतिरभसकृताऽलघुप्रतिज्ञाम् अतिरभसेन अत्यौत्सुक्येन कृता विहिता अलघुर्महती प्रतिज्ञा सङ्गरो यया सा ताम् अत्यौत्सुक्याद् विहितगुरुनिश्चयाम् । 'रभसो वेगहर्षयोः', 'गौरोऽरुणे सिते पीते' इत्यमरः । न चेति ॥ इतीति किं वाक्यदाक्षिण्यं—यत्, हे सुतनु ! हे सर्वाङ्गसुन्दरि ! अहं तत् न वेद्मि इति न अपि तु वेद्मि जानाम्येव, यत् तव निश्चयः शुद्धाङ्गीकारः परेण अन्येन असुनिरसः, वर्तते इति शेषः । सुखेन निरसितुं निराकर्तुं शक्यः सुनिरसः न सुनिरसः असुनिरसः सुदुर्नि-वारः । किंलक्षणः निश्चयः महीयान् अतिशयेन महान् अतिगुरुतरः । च पुनः तथापि यद्येवं 'तथापि सखीसु वयस्यासु विषये मे मम इति अभिमानः इत्यहङ्कारः— यदसौ मत्सखीजनः जातु कदाचिदपि मद्वचः मम वचनं न वितथयति न अप्रमाणयति । मद्वाक्यं मन्यते एवेत्यर्थः । मम वचः मद्वचः । वितथां करोति वितथयति । सततमिति ॥

इतीति किं वाक्यदाक्षिण्यं—यत्, हे सुतनु ! मया सततमनवरतं ते तव अनभिभाषणमसम्भाषणमेव परिपणितमङ्गीकृतं निश्चितम् । किं कुर्वत्या भवतीम् अनानयन्त्या त्वामप्रापयन्त्या, अपरं त्वयि विरोधनिश्चितायां गृतीताऽनागमनिश्चितायां तत् अनभिभाषणं भवतु अस्तु, अपरम् असुहृज्जनः शत्रुवर्गः सकामः साभिलाषो भवति तद् भवतु सपत्नीजनः सम्पूर्णमनोरथो भवतु । यदा आवयोर्विरोधस्तदा शत्रुवर्गः सकाम इत्यर्थः । गतधृतिरिति ॥ इतीति किं वाक्यदाक्षिण्यं—यत्, हे सुतनु! बतेति खेदे, अहम् असून् प्राणान् अवलम्बितुं धारयितुं न अलं न समर्था, कस्मात् भवत्याः अनालपनात् तव असम्भाषणात्, किंलक्षणाऽहं गतधृतिः नष्टहर्षा । हे मानिनि ! यदि चेत् ते तव प्रणयिनि वल्लभविषये प्रसादबुद्धिर्नास्ति आवर्जनामतिर्न विद्यते, तदा मम जीविते दयालुर्भव मम प्राणेषु कृपावती सम्पद्यस्व । इति पूर्वोक्तसखीवाक्यदाक्षिण्यादिव प्रियमनुकूलयाञ्चकारेत्यर्थः ॥कुलकम्॥ ७-११॥

अथ कस्याश्चित्सख्याः कुपितनायिकानुनयवचनं पञ्चभिः कुलकेनाह—

तवेति ॥ मत्सखीं सपदि तव समीपमहमानये आनयिष्यामि । वर्तमानसामीप्ये वर्तमानप्रत्ययः । कर्तुरभिप्राये आत्मनेपदम् । इति मया तस्याग्रतोऽभ्यधाय्यभिहितम् । दधातेः कर्मणि लुङ् 'आतो युक् चिण्कृतोः' इति युगागमः । हे गुणगौरि ! गुणैः सौभाग्यदाक्षिण्यादिभिर्गौरि ! पार्वतीति रूपकम् । अतिरभसेन अतित्वरया कृता अलघुर्महती प्रतिज्ञा त्वदानयनार्था यया तां मामनृतगिरमसत्यवाचं मा कृथाः मा कार्षीः । मद्वचनं सर्वथा कर्तव्यमित्यर्थः । करोतेर्लुङि थास्, 'न माङ्योगे' इत्यडागमप्रतिषेधः ॥ ७ ॥

ननु मत्प्रतिज्ञापि तुल्याज्येति विप्रतिषेधमाशङ्क्याह—

न वेद्मीति ॥ हे सुतनु ! शुभाङ्गि ! दीर्घान्तोत्तरपदात्सम्बुद्धिः, अन्यथा गुणः स्यात् । अहं न वेद्मीति न । किन्तु वेद्म्येवेत्यर्थः । किं तद्वेत्सीत्यत आह—महीयान् महत्तरस्तव निश्चयः त्वदनेकये प्रतिज्ञा परेण जनान्तरेण सुनिरसः सुखमोच्यः । अस्यतेः खल्प्रत्ययः । स न भवतीत्यसुनिरस इति यत्तदित्यर्थलभ्यम् । उद्देश्येन विधेयाक्षेपाद्यच्छब्दस्योत्तरवाक्यस्थत्वाच्च न पूर्ववाक्ये तच्छब्दप्रयोग इति निबन्धः । तथापि विदितत्वेऽप्यसौ मत्सखी जातु कदाचिदपि मद्वचो न वितथयति नानृतीकरोतीति सखीषु मध्ये मेऽभिमानः । स्वप्रतिज्ञाभङ्गेऽपि मत्प्रतिज्ञामेव पालयसीत्यहङ्काराभिःशङ्कं प्रतिज्ञातमित्यर्थः ॥ ८ ॥

सततमिति ॥ भवतीं त्वामनानयन्त्या । आनायितुमशक्नुवत्या इत्यर्थः । मया सततं सदा ते तव । कर्मणि षष्ठी । अनभिभाषणमसम्भाषणं परिपणितम् । भवतीति 'भातेर्डवतुः' इत्यौणादिको डवतुप्रत्ययः । 'उगितश्च' इति ङीप् । तस्याः सम्बुद्धिर्हे भवति ! सुभगे ! त्वयि तदिति तदसम्भाषणमस्त्विति विरोधनिश्चितायां निश्चितविरोधायां सत्याम् । 'वाहिताग्न्यादिषु' इति विकल्पान्निष्ठायाः परनिपातः । असुहृज्जनो विपक्षवर्गः सकामः फलितमनोरथो भवतु भवेत् । प्राप्तकाले लोट् । अस्मद्विरोधकाङ्क्षिणामयमानन्दकालः प्राप्त इत्यर्थः ॥ ९ ॥

न केवलमावयोर्विरोधः प्राणहानिरपि मम स्यादित्याह—

गतधृतिरिति ॥ गतधृतिरधीराऽहं भवत्यास्तवाऽनालपनादसम्भाषणात् । आलपनं विहायेत्यर्थः । ल्यब्लोपे पञ्चमी । असून्प्राणानवलम्बितुं धारयितुमनलमशक्ता । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । बतेति खेदे । अत एव हे मानिनि ! प्रणयिनि प्रिये प्रसादबुद्धिरनुग्रहबुद्धिर्न यदि नास्ति चेत्तथापि मम जीविते दयालुर्भव । 'स्पृहिगृहि–' इत्यादिना आलुच्प्रत्ययः । स धूर्तोऽपि मत्प्राणत्राणार्थमनुग्राह्य इति भावः ॥१०॥

प्रियमिति ॥ इतीत्थं नितान्तमागसोऽन्यासङ्गापराधस्य स्मरणेन सरोषे अत एव कषाये लोहिते कृते कषायिते आयते चाक्षिणी यस्याः सा तथोक्ता । 'निर्यासे च कषायोऽथ सौरभे लोहितेऽन्यवत्' इति विश्वः । वनिता नायिका चरणगतायाः पूर्वोक्तवाक्यान्ते प्रणतायाः सख्या वचसोऽनुरोधादनुल्लङ्घनात्किल, किलेत्यपरमार्थे । वस्तुतस्त्वनुरागादेवेति भावः । प्रियं कथमपि कथञ्चिदनुकूलयाञ्चकाराऽभिमुखीचकार । अनुजग्राहेत्यर्थः । एषा खण्डिता नायिका । 'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति दशरूपकलक्ष-

णात् । अत एव कविना आगःस्मरणसरोषकषायिताक्षीत्युक्तम् । एषा च असम्भाषणचिन्ताखेदाश्रु-निःश्वासाद्यनुभाववती ॥ ११ ॥

अथ युग्मम्—

**द्रुतपदमिति मा वयस्य ! यासीर्ननु सुतनुं प्रति(१)पालयाऽनुयान्तीम् ॥**
**न हि न विदितखेदमेतदीयस्तनजघनोद्वहने तवापि चेतः ॥ १२ ॥**
**इति वदति सखीजनेऽनुरागाद्दयिततमामपरश्चिरं प्रतीक्ष्य ॥**
**तदनुगमवशादनायतानि न्यधित मिमान इवाऽवनिं पदानि ॥ १३ ॥**

**द्रुतमित्यादि ॥ इतीति ॥ अपरो विलासी पदानि न्यधित न्यस्तवान् । किं कृत्वा चिरं चिरकालं दयिततमां वल्लभां प्रतीक्ष्य प्रतिपालयित्वा(२), कस्मात् अनुरागात् स्नेहवशात्, क सति सखीजने वयस्यालोके इति गदति सति कथयति सति, किंलक्षणानि पदानि तदनुगमवशादनायतानि तस्या अनुगमवशात् पृष्ठानुगमनवशात् पृष्ठानुगमनभावादलसानि ह्रस्वानि । किंभूतो विलासी, उत्प्रेक्षते—अवनिं मिमान इव भूमिमनुमानयन्निव । एतेनातिमन्दगतिकथनम् । द्रुतेति ॥ इतीति किं वदति सति हे वयस्य ! हे मित्र ! त्वम् इति अमुना प्रकारेण द्रुतपदं त्वरितगमनं यथा स्यात्तथा मा यासीः मा गमः । ननु सम्बोधने, हे वयस्य ! त्वं सुतनुं प्रतिपालय वल्लभां प्रतीक्षस्व । किंभूतां सुतनुम् अनुयान्तीम्, अनुयातीत्यनुयान्तीं अनुगच्छन्तीं ताम् । हि यस्मात् कारणात् एतदीयस्तनजघनोद्वहने तवापि चेतः न विदितखेदमिति न, अपि तु विदितखेदं परिज्ञातखेदमेव । विपरीतसुरतादौ संभोगे वा भवतोऽपि चित्तं ज्ञातखेदमस्ति । भवानपि इति वेत्ति-यदसौ वल्लभा स्तनजघनभरेण गन्तुं न समर्था । सखीजने इति वदति सति अनायतानि पदानि न्यस्तवानिति भावः । स्तनौ च जघनं च स्तनजघनम्, एतस्या इदमेतदीयम्, एतदीयं च तत् स्तनजघनं च एतदीयस्तनजघनं तस्योद्वहनं नयनं तस्मिन् । विदितः खेदो येन तत् । युग्मम् ॥ १२-१३ ॥**

अथ काचित्सखी कञ्चिदग्रे शीघ्रगामिनं युग्मेनाह—

**द्रुतेति** ॥ हे वयस्य ! सखे ! इतीत्थं द्रुतपदं शीघ्रपदक्रमं यथा तथा मा यासीर्मा गमः । यातेर्लुङि 'न माङ्योगे' इत्यट्प्रतिषेधः । अनुयान्तीमनुगच्छन्तीं सुतनुं शुभाङ्गीं प्रियामनुपालय प्रतीक्षस्व । असावपि शीघ्रमायातु । तत्राह—न हीति । तव चेतोऽपि एतदीयस्तनजघनोद्वहने विदितखेदमनुभूतखेदं नेति न । किन्तु वेत्त्येवेत्यर्थः । अतः कथं शीघ्रमायास्यतीति भावः । 'सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति वामनः ॥ १२ ॥

**इतीति** ॥ सखीजने इति वदति सति अपरः कश्चिद्दयिततमामनुरागात्स्नेहाच्चिरं प्रतीक्ष्य तदनुगमवशात्तस्याः प्रियायाः कर्त्र्याः अनुगम. पश्चाद्गमनं तस्य वशादनुसारादवनिं मिमानो मानं कुर्वाण इवेत्युत्प्रेक्षा । माङो लटः कर्तरि शानजादेशः, 'श्लौ' इति द्विर्भावः । अनायतान्यनन्तरालानि पदानि न्यधित निहितवान् । धाञो लुङि तङ्, 'स्थाघ्वोरिच्च' इतीकारः । सिचः कित्वान्न गुणः । 'ह्रस्वादङ्गात्' इति सकारलोपः । एषा च नायिका स्वाधीनपतिका । 'स्वाधीनपतिका सा तु या न मुञ्चति वल्लभम्' इति लक्षणात् । हृष्टा चेयम् ॥ १३ ॥

**यदि मयि लघिमानमागतायां तव धृतिरस्ति गताऽस्मि सम्प्रतीयम् ॥**
**अनिभृतपदपातमापपात प्रियमिति कोपपदेन कापि सख्याः(३) ॥१४॥**

---

(१) परिपा० । मल्लिनाथव्याख्यायां 'परि'इत्यस्याऽनुपलब्धेः 'अनु'इत्यस्योपलब्धेश्च, वल्लभानुसारं 'प्रति' इति पाठस्य दर्शनाच्च कथं सर्वत्र मुद्रितपुस्तकेषु 'परिपालय' इति पाठः ? ।

(२) अत्र ल्यबभावश्चिन्त्यः । (३) सख्या ।

यदीति ॥ कापि अङ्गना प्रियं वल्लभम् आपपात ययौ । कथं यथा भवति तथा अनिभृतपदपातं यथा भवति न निभृतः न निश्चलः पदानां चरणानां पातः पतनं यत्र यस्यां क्रियायां तद्यथा भवति सत्वरचरणन्यासं यथा भवति, केन सख्याः इति कोपपदेन वयस्यायाः अमुना क्रोधव्याजेन । सखीं प्रति कोपवाक्यमुक्त्वेत्यर्थः । इतीति किं—हे सखि ! यदि चेत् मयि लघिमानमागतायां लघुत्वमगौरवं प्राप्तायां सत्यां तव धृतिरस्ति भवत्याः परितोषो भवति, तदा सम्प्रति इदानीमियमहं गन्तास्मि एषैवाहं गतैवाऽस्मि । इति कोपवशात् सशब्दपदन्यासं गता इत्यर्थः । लघोर्भावः लघिमा तम् । 'धृतिर्धारणधैर्ययोः' ॥१४॥

अथ काचित्पुरः प्रयातप्रियमेलनाय शीघ्रानुधावनं प्रार्थयमाना सखीमाह—

यदीति ॥ हे सखि ! मयि लघिमानमागतायां स्वयं गमनेन लाघवं प्राप्तायां तव धृतिरस्ति यदि सन्तोषो भवति चेत् । 'धृतिः सन्तोषधैर्ययोः' इत्यमरः । इयमेतदवस्थैव सम्प्रत्यस्मिन्क्षण एव गतास्मि । इति, वदन्तीति शेषः । इतिना गम्यमानार्थत्वादप्रयोगः, अन्यथा पौनरुक्त्यादित्यालङ्कारिकाः । सख्याः सह कोपपदेन कोपव्याजेन । वस्तुतस्तु रागादेवेति भावः । 'व्याजोऽपदेशो लक्ष्यं च', 'निमित्तं व्यञ्जनं पदम्' इति चामरः । काचिन्नायिका द्रुततराः शीघ्रतराः पदपाताः पादन्यासा यस्मिन्कर्मणि तद्यथा तथा प्रियं वल्लभमापपाताऽनुधावति स्म । एषा च स्वयं प्रवृत्ता स्वलाघवशङ्कितया पूर्वं निर्वासितप्रिया । अथेदानीं स्वयंप्रवृत्तेः पश्चात्तप्ता चेति गम्यते । अतः कलहान्तरिता । 'कोपात्कान्तं पराणुद्य पश्चात्तापसमन्विता' इति लक्षणात् ॥ १४ ॥

अविरलपुलकः सह व्रजन्त्याः प्रतिपदमेकतरः(१) स्तनस्तरुण्याः ॥
घटितविघटितः प्रियस्य वक्षस्तटभुवि कन्दुकविभ्रमं बभार ॥ १५ ॥

अविरलेति ॥ तरुण्याः युवतेः एकतरः स्तनः एककः कुचः प्रियस्य कान्तस्य वक्षस्तटभुवि हृदयतटप्रदेशे कन्दुकविभ्रमं बभार कन्दुकविलासं दधौ । किंलक्षणः स्तनः घटितविघटितः घटितश्चासौ विघटितः संलग्नविलग्नः श्लिष्टविश्लिष्टः, अपरं किंलक्षणः स्तनः अविरलपुलकः अविरलः सान्द्रः पुलको रोमाञ्चो यत्र सः प्रियतनुसम्पर्कात् प्रभूतरोमाञ्चः, किंभूताया युवतेः प्रतिपदं पदे पदे सह व्रजन्त्याः अर्थात् भर्त्रा सह गच्छन्त्याः ॥ १६ ॥

अविरलेति ॥ सह व्रजन्त्याः । पार्श्वमाश्लिष्य गच्छन्त्या इत्यर्थः । तरुण्याः सम्बन्धी अविरलपुलकः प्रियाङ्गसङ्गमात्सान्द्ररोमाञ्चः एकतरोऽन्यतरो द्वयोरन्यः । सन्निकृष्ट इति भावः । 'एकाच्च प्राचाम्' इति द्वयोरेकस्य निर्धारणे डतरच्प्रत्ययः । स्तनः प्रियस्य वक्षस्तटमिव तस्य भूः प्रदेशस्तस्यां वक्षस्तटभुवि प्रतिपदं घटितविघटितः संयुक्तवियुक्तः । पतितोत्पतितः सन्निति यावत् । विशेषणयोरपि मिथो गुणप्रधानभावविवक्षया 'विशेषणं विशेष्येण बहुलम्' इति समासः । कन्दुकविभ्रमं गेन्दुकशोभाम् । 'गेन्दुकः कन्दुकः' इत्यमरः । बभार । अन्यविभ्रमस्यान्यसम्बन्धायोगात्सादृश्याक्षेपे निदर्शना । एषा च प्रियपार्श्वगामिनी । इतः प्रभृति मदनरसेत्यतः प्राग्वक्ष्यमाणाः षण्नायिकाः स्वाधीनपतिका हृष्टाः प्रगल्भाश्चेत्यनुसन्धेयम् ॥१५॥

त्रिभिर्विशेषकम्—

अशिथिलमपराऽवसज्य कण्ठे दृढपरिरब्धबृहद्बहिःस्तनेन ॥
हृषिततनुरुहा (२) भुजेन भर्तुर्मृदुममृदु व्यतिबद्धमेकबाहुम् ॥ १६ ॥
मुहुरसुसममाघ्नती नितान्तं प्रणदितकाञ्चिनितम्बमण्डलेन ॥
विषमितपृथुहारयष्टितिर्यक्कुचमितरं तदुरःस्थले निपीड्य ॥ १७ ॥

---

(१) अनेकतरस्तन । (२) तनुरुहा…ममृदु व्यतिविद्ध ।

गुरुतरकलनूपुरानुनादं सललितनर्तितवामपादपद्मा ॥
इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम ॥ १८ ॥

अशिथिलमित्यादि ॥ गुरुतरेति ॥ अथ पूर्वोक्तं कृत्वा अपरा काचित् अङ्गना मन्मथमन्थरं मन्मथेन कामेन मन्थरं सविलासचेष्टितं यथा भवति तथा जगाम अगमत् । किं कुर्वाणा अङ्गना इतरत् पदं दक्षिणं चरणमादधाना आरोपयन्ती, किंलक्षणं पदम् अनतिलोलं नाति चटुलं, किंलक्षणा अङ्गना सललितनर्तितवामपादपद्मा सविभ्रमविक्षिप्ताऽदक्षिणचरणकमला, सललितं सविलासं नर्तितं विक्षिप्तं वामपाद एव अदक्षिणचरण एव पद्मं यया सा, कथं गुरुतरकलनूपुरानुनादं यथा स्यात्तथा गुरुतरः अतिमहान् कलो गम्भीरः नूपुरस्य मञ्जीरस्य अनुनादो ध्वनिर्यत्र यस्यां क्रियायां तद्यथा भवति अलघुमधुरमञ्जीरध्वनिपूर्वं यथा स्यात्तथा । पादनर्तनेन मञ्जीरघोषः सञ्जात इत्यर्थः । अशिथिलमिति॥ किं कृत्वा अपरा मन्मथमन्थरं ययौ, एकबाहुमेकं भुजं भर्तुः कान्तस्य भुजेन सह बाहुना समं कण्ठे अवसज्य गले आसञ्जयित्वा(?) । युवत्या पत्युः कण्ठे भुजो निहितः,पत्या च प्रियाकण्ठे भुजो निहितः इति भावः । कथम् अशिथिलं यथा स्यात्तथा, किंभूतेन भर्तुर्भुजेन दृढपरिरब्धबृहद्बहिःस्तनेन गाढालिङ्गितगुरुबाह्यपयोधरेण, किंभूतस्य पत्युः हृषितानि उल्लसितानि तनुरुंहि लोमानि यस्य सः हृषिततनुरुट् तस्य वल्लभातनुसंयोगादुल्लसितलोम्नः,किंलक्षणं बाहुं मृदुं कोमलम् , अपरं किंभूतं बाहुम् अमृदुव्यतिबद्धमालिङ्गने गाढसम्बद्धम् । मुहुरिति ॥ किं कुर्वती जगाम, असुसमं प्राणैस्तुल्यं प्राणेश्वरं कान्तं नितान्तमतिशयेन प्रणदितकाञ्चिनितम्बमण्डलेन आघ्नती प्रणदिता शब्दायमाना काञ्ची मेखला यस्मिन् तत् प्रणदितकाञ्चि एवंभूतं यन्नितम्बमण्डलं कटिपश्चाद्भागबिम्बं च तेन शब्दितमेखलाऽऽरोहप्रदेशेन आघ्नती ताडयन्ती, आहन्तीत्याघ्नती । किं कृत्वा इतरं कुचं तदुरःस्थले निपीड्य अपरं स्तनं कान्तवक्षसि संयोज्य, कथं यथा भवति विषमितपृथुहारयष्टितिर्यक् यथा भवति तथा कुटिलीकृतविशालमौक्तिककलापतिरश्चीनं यथा भवत्येवं विषमिता कुटिलीकृता पृथुर्महती या हारयष्टिर्मौक्तिकसरः तया तिर्यक् तिरश्चीनं यथा स्यात्तथा ॥ १६-१८ ॥

अथापरस्या अपरं गतिविशेषं विशेषकेणाह—

अशिथिलमिति ॥ अपरा स्त्री दृढं परिरब्धो गृहीतो बृहद्बहिःस्तनो येन तेन, हृषितान्युदञ्चितानि तनुरुंहि रोमाणि यस्य तेन । पुलकितेनेत्यर्थः । क्विबन्तोत्तरपदो बहुव्रीहिः । 'हृषेर्लोमसु' इतीडागमः । भुजेन भर्तुर्वामबाहुना अमृदु गाढं यथा तथा व्यतिविद्धं व्यतिषञ्जितं मृदुं कोमलमेकबाहुं निजदक्षिणबाहुं भर्तुः कण्ठेऽशिथिलं दृढमवसज्याऽऽसज्य जगामेति भाविना सम्बध्यते ॥ १६ ॥

मुहुरिति ॥ पुनः किं कृत्वा । नितम्बमण्डलेन करणेन नितान्तमतिशयेन प्रणदिता प्रकर्षेण नदन्ती काञ्ची यस्मिन्कर्मणि तद्यथा तथा । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । मुहुरसुसमं प्राणेशमाघ्नती ताडयन्ती । हन्तेराङ्पूर्वाल्लटः शत्रादेशे ङीप् । सकर्मकत्वान्न 'आङो यमहनः' इत्यात्मनेपदम् । विषमिता विषमीकृता पृथुहारयष्टिर्यस्मिन्कर्मणि तद्यथा तथा इतरं पूर्वश्लोकोक्तबहिःस्तनादन्यम् । दक्षिणमित्यर्थः । कुचं तस्य भर्तुरुरःस्थले तिर्यङ् निपीड्य । पूर्ववत्सम्बन्धः ॥ १७ ॥

गुरुतरेति ॥ पुनर्गुरुतरः सान्द्रतरः कलो मधुरश्च नूपुरस्यानुनादो ध्वनिर्यस्मिन्कर्मणि तद्यथा तथा सललितं सलीलं नर्तितं व्यापारितं वामं सव्यं पदपद्मं यया सा इतरद्दक्षिणं पादमनतिलोलं भर्तृचरणस्खलनादनतिचपलं यथा तथा आदधाना निक्षिपन्ती सती मन्मथेन मन्थरमलसं जगाम । एषा च पार्श्वगामिनी ॥१८॥

लघुललितपदं तदंसपीठद्वयनिहितोभयपाणिपल्लवाऽन्या ॥
सुकठिन(१)कुचचूचुकप्रणोदं प्रियमबला सविलासमन्वियाय ॥१९॥

**लघुललितेति** ॥ अन्या काचिदबला प्रियं वल्लभमन्वियाय अनुययौ । कथं सविलासं सविभ्रमं यथा भवत्येवं विलासेन सह वर्तमानम् , अत एव अपरं कथं यथा भवति तथा सुकठिनकुचचूचुकप्रणोदं यथा भवति तथा सुकठिनौ दृढौ पयोधरौ स्तनौ तयोः चूचुके अग्रे ताभ्यां प्रणोदः प्रेरणं यत्र तत्तथा सुदृढपयोधरमुखप्रेरितं यथा स्यात्तथा । 'चूचुकं तु कुचाग्रं स्या'दित्यमरः । यतः किंभूता अबला तदंसपीठद्वयनिहितोभयपाणिपल्लवा तस्य कान्तस्य अंसपीठद्वये स्कन्धासनयुगे निहितौ न्यस्तौ उभौ पाणिपल्लवौ यया सा तथा, पुनः कथं यथा भवति तथा लघुललितपदं मन्थरसविलासपदन्यासं यथा भवत्येवम् । पीठमासनम् ॥ १९ ॥

अथान्यासामप्येकैकेन गतिविशेषमाह—

**लघुललितेति** ॥ अन्या अबला स्त्री तस्य प्रियस्यांसौ पीठे इव तयोर्द्वये निहितावुभौ पाणिपल्लवौ यया सा सती । 'उभादुदात्तो नित्यम्' इति पृथक्सूत्रकरणादेव सिद्धे पुनर्नित्यग्रहसामर्थ्याद्वृत्तिविषये उभशब्दस्थानेऽप्युभयशब्दप्रयोगः । यथाह **कैयटः**–तत्र 'उभादुदात्तो नित्य'मिति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषये उभशब्दस्य प्रयोगो मा भूत् , उभयशब्दस्यैव यथा स्यादित्युभयत्रेत्यादि भवतीति । सलघुनी द्रुते ललिते च पदे यस्मिन्कर्मणि तद्यथा तथा कठिनाभ्यां कुचचूचुकाभ्यां स्तनाग्राभ्यां यः प्रणोदो निपीडनं तेन सह यथा तथा । 'चुचुकं तु कुचाग्रं स्यात्' **इत्यमरः** । 'तेन सह—' इत्यादिना समासे 'वोपसर्जनस्य' इति सहशब्दस्य सभावः । णोपदेशत्वात्प्रणोद इति णत्वम् । सविलासं च प्रियमन्वियायानुजगाम । एषा पृष्ठगामिनी ॥ १९ ॥

जघनमलस(२)पीवरोरु कृच्छ्रादुरुनिबिरीसनितम्बभारखेदि ॥
दयिततमशिरोधरावलम्बिस्वभुजलताविभवेन काचिदूहे ॥ २० ॥

**जघनमिति** ॥ काचिदङ्गना कृच्छ्राद् दुःखात् जघनमूहे जघनस्थलमुवाह दध्रे । कथं भवति अलसपीवरोरु यथा भवति तथा अलसौ मन्दौ पीवरौ मांसलौ अलघू ऊरू सक्थिनी यत्र वहने तत् । 'सक्थि क्लीबे पुमानूरुः' **इत्यमरः** । किंभूतं जघनम् उरुनिबिरीसनितम्बभारखेदि बृहन्नितम्बभारवहनेन श्रान्तं बृहन्निबिडायतकटीभरश्रान्तं, केन ऊहे दयिततमशिरोधराऽवलम्बिस्वभुजलताविभवेन प्राणेश्वरग्रीवासक्तनिजबाहुवल्लीसामर्थ्येन, दयिततमस्य शिरोधरायां ग्रीवायामवलम्बिन्यौ ये भुजलते निजबाहुवल्ल्यौ तयोर्विभवः सामर्थ्यं तेन । अन्योऽपि यः किञ्चिदुत्पाटयति स क्वापि समवलम्बते इति भावः ॥ २० ॥

**जघनमिति** ॥ काचित्स्त्री अलघू गुरू पीवरौ पीनौ चोरू यस्य तत् उरुर्महान् निबिरीसो निबिडः । 'निबिडं निबिरीसं च दृढं गाढं प्रचक्षते' इति **वैजयन्ती** । 'नेर्बिडज्बिरीसचौ' इति निशब्दाद्बिरीसच् प्रत्ययः । स च यो नितम्बः स्त्रीकटिपश्चाद्भागः । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' **इत्यमरः** । स एव भारस्तेन खिद्यत इति तथोक्तम् । आभीक्ष्ण्ये णिनिः । जघनं कटिपुरोभागं दयिततमस्य शिरोधरायां ग्रीवायामवलम्बिन्योर्लम्बमानयोः स्वभुजलतयोर्विभवेन सामर्थ्येन कृच्छ्रादूहे उवाह । वहेः स्वरितेत्त्वात्कर्त्रभिप्राय आत्मनेपदम् । इयं च पृष्ठगामिनी प्रियकण्ठावलम्बा ॥ २० ॥

---

( १ ) सकठिन । ( २ ) ०मलघु ।

**अनुवपुरपरेण बाहुमूलप्रहितभुजाऽऽकलितस्तनेन निन्ये ॥**
**निहितदशनवाससा कपोले विषमवितीर्णपदं बलादिवाऽन्या ॥२१॥**

**अनुवपुरिति** ॥ अपरेण तरुणेन अन्या काचिदङ्गना अनुवपुः वपुःपश्चान्निन्ये अनीयत । किंलक्षणेन यूना बाहुमूलप्रहितभुजाकलितस्तनेन बाहुमूलयोर्विषये प्रहितौ नियोजितौ यौ भुजौ करौ ताभ्यामाकलितौ गृहीतौ स्तनौ पयोधरौ येन सः तेन कक्षान्तरनिहितकरगृहीतकुचेन, अपरं किंभूतेन तरुणेन कपोले निहितदशनवाससा गल्ले कृतचुम्बनेन, निहितं न्यस्तं दशनवासः ओष्ठो येन सः निहितदशनवासास्तेन न्यस्तौष्ठेन, कथं यथा भवति विषमवितीर्णपदं विषमदत्तचरणन्यासं यथा भवति तथा । उत्प्रेक्षते—बलादिव निन्ये । यः किल बलात्केनचिदपि गृह्यते स एवं, य इत्थं नीयते ॥ २१ ॥

अनुवपुरिति ॥ अन्या स्त्री वपुषः पश्चादनुवपुः वपुः पृष्ठभागः । 'अव्ययं विभक्ति—' इत्यादिना पश्चादर्थेऽव्ययीभावः । बाहुमूलयोः स्त्रीकक्षयोः प्रहितावधःप्रसारितौ भुजौ ताभ्यामाकलितस्तनेन गृहीतस्तनेन कपोले निहितदशनवाससा न्यस्ताधरेण किञ्चिदावृत्तमुख्याः सत्याः कपोलं चुम्बतेत्यर्थः । अपरेण कामिना विषमं प्रियाऽङ्घ्रिसङ्घर्षाच्छिष्टं वितीर्णपदं न्यस्ताऽङ्घ्रि यथा तथा बलादिव निन्ये नीता । आरोप्य नीयमानेव गमयाञ्चक्र इत्यर्थः । एषा पुरोगामिनी ॥ २१ ॥

**अनुवनमसितभ्रुवः सखीभिः सह पदवीमपरः पुरोगतायाः ॥**
**उरसि सरसरागपादलेखा(१)प्रतिमतयाऽनुययावसंशयानः॥ २२ ॥**

**अनुवनमिति** ॥ अपरः कश्चिद्विलासी अनुवनं वने अनु लक्षीकृत्य असितभ्रुवः अङ्गनायाः पदवीं मार्गमनुययौ पृष्ठे जगाम । किंलक्षणः विलासी अशंसयानः निःसंशयः अत्रैव गतास्तीति निःसन्देहः, कया उरसि सरसरागपादलेखाप्रतिमतया वक्षसि आर्द्रालक्तकचरणलेखाप्रतिबिम्बितया, सरस आर्द्रो यो रागः अलक्तकस्तेन पादलेखा चरणरञ्जनविच्छित्तिः तस्याः प्रतिमा प्रतिबिम्बो यत्र सः सरसपादरागलेखाप्रतिमः तस्य भावस्तत्ता तया । असिते कृष्णे भ्रुवौ भ्रुकुट्यौ यस्याः सा असितभ्रूः तस्याः । कथंभूतायाः असितभ्रुवः सखीभिः सह वयस्याभिः सार्धं पुरोगतायाः अग्रे प्राप्तायाः । अङ्गनया प्रथममाकारितः असौ यदा नागच्छत्, तदा कोपवशादुरसि सालक्तकचरणलेखाप्रतिबिम्बेनाहत्य सखीभिः सह जगामेत्यर्थः ॥ २२ ॥

अनुवनमिति ॥ अपरः कामी अनुवनं वनं प्रति सखीभिः सह पुरोगतायाः असितभ्रुवः स्वकान्तायाः पदवीमुरसि वक्षसि सरस आर्द्रः रागो लाक्षारञ्जनं यस्य तस्य पादस्य या रेखा विन्यासः सा प्रतिमोपमानं यस्याः सा तत्प्रतिमा तस्य भावस्तत्ता तया । तत्सदृशतयेत्यर्थः । असंशयानोऽसन्दिहानः । शीङो लटः कर्तरि शानजादेशः । अनुययौ । अत्र पादरेखाप्रतिमतयेति सादृश्यवस्तुना सुरतकालीनं पादताडनं वस्तु सरागपदार्थमहिम्ना प्रतीयत इति पदगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुध्वनिः संलक्ष्यक्रमध्वनेर्भेदः ॥२२॥

**मदनरसमहौघपूर्णनाभीह्रदपरिवाहितरोमराजयस्ताः ॥**
**सरित इव सविभ्रमप्रयातप्रणदितहंसकभूषणा विरेजुः ॥ २३ ॥**

**मदनेति** ॥ ताः अङ्गनाः सरित इव नद्य इव विरेजुः शुशुभिरे । किंलक्षणाः मदनरसमहौघपूर्णनाभीह्रदपरिवाहितरोमराजयः मदनरसमहौघेन कामरागपूरेण यः पूर्णो नाभीह्रदः तेन परिवाहिताः प्लाविता रोमराजयो यासां तास्तथा । नद्योऽपि महौघप्लावितवृक्ष-

---

(१) रेखा ।

पङ्क्तयो भवन्ति । किंभूता अङ्गनाः सविभ्रमप्रयातप्रणदितहंसकभूषणाः सविभ्रमप्रयातेन सविलासगमनेन प्रणदितानि शब्दायमानानि हंसकभूषणानि नूपुरकङ्कणाऽलङ्काराः यासां तास्तथा, हंसकानि भूषणानि च हंसकभूषणानि शब्दायमानानि तानि यासां तास्तथा सविलासगमनरणिततुलाकोटिमण्डनाः । नद्योऽपि सविलासगमनेन सशब्दहंसजलभूषणाः स्युः । प्रणदितहंसाः कं पानीयं च भूषणं यासां ताः । सविभ्रमप्रयातेन प्रणदिता रणन्तो हंसा यत्र तत् कं पानीयं भूषणं यासां ताः इति वा । 'हंसकः पादकटकः' इत्यमरः ॥२३॥

मदनेति ॥ मदनस्य रसः शृङ्गारः, अन्यत्र रसो जलं तस्य महौघेन महापूरेण पूर्णा नाभ्य एव ह्रदास्तेषां परिवाहाः कृताः परिवाहिता जलोच्छ्वासीकृता रोमराजयो यासां ताः । 'जलोच्छ्वासाः परीवाहाः' इत्यमरः । सरिज्जलानि ह्रदानापूर्य परित उच्छ्वसन्तीति प्रसिद्धिः । सविभ्रमैः सविलासैः प्रयातैः प्रकृष्टगमनैः प्रणदिताः शिञ्जिता ये हंसकाः पादकटकाः । 'हंसकः पादकटक' इत्यमरः । अन्यत्र हंसा एव हंसकाः मरालास्त एव भूषणानि यासां ताः स्त्रियः सरित इव विरेजुः । मदनरसपूर्णेत्यनेन नाभीनां तदुद्बोधकत्वं व्यज्यते । परिवाहितरोमराजय इति रोमराजीनां परिवाहत्वानिरूपणान्नाभ्य एव ह्रदा इति रूपकाश्रयणम् । तः सरित एवेति श्लिष्टविशेषणेयमुपमा । श्लेष एवेत्यन्ये ॥ २३ ॥

श्रुतिपथमधुराणि सारसानामनुनदि शुश्रुविरे रुतानि ताभिः ॥
विदधति जनतामनःशरव्यव्यधपटुमन्मथचापनादशङ्काम् ॥ २४ ॥

श्रुतिपथेति ॥ ताभिर्युवतिभिः उपनदि नदीसमीपे सारसानां रुतानि व्याहृतानि शुश्रुविरे श्रुतानि । सारस्यश्च सारसाश्च सारसाः, स्त्रिया सहोक्तौ पुमान् शेषः । किंभूतानि रुतानि श्रुतिपथमधुराणि श्रुतिपथयोः कर्णयोः मधुराणि प्रियाणि, किं कुर्वन्ति रुतानि जनतामनःशरव्यव्यधपटुमन्मथचापनादशङ्कां विदधति जनतानां जनसमूहानां मनांसि चित्तान्येव शरव्याणि वेध्यानि तेषां व्यधः ताडनं तत्र पटु समर्थं यत् मन्मथचापं कामधनुः तस्य नादः टङ्कारः तस्य शङ्का वितर्कः तां कुर्वाणानि जनसमूहचित्तवेध्यहनने पटुतरकामधनुःशब्दवितर्कं कुर्वाणानि । 'सारसौ हंसलक्ष्मणौ', 'तिरश्चां वाशितं रुतम्', 'लक्ष्यं लक्षं शरव्यं च' सर्वत्राप्यमरः ॥ २४ ॥

श्रुतिपथेति ॥ अनुनदि नदीनां समीपे । समीपार्थेऽव्ययीभावः । 'अव्ययीभावश्च' इति नपुंसकत्वे ह्रस्वत्वम् । ताभिः स्त्रीभिर्जनानां समूहो जनता । 'ग्रामजन–'इत्यादिना सामूहिकस्तल्प्रत्ययः । तस्या मनांस्येव शरव्यं लक्ष्यम् । 'लक्ष्यं शरव्यं च' इत्यमरः । तस्य व्यधो वेधः । 'व्यधजपोरनुपसर्गे' इत्यप्प्रत्ययः । तत्र पटुः समर्थो यो मन्मथचापनादः स इति शङ्कां भ्रमं विदधति विदधानानि । 'वा नपुंसकस्य' इति वैकल्पिको नुम्प्रतिषेधः । श्रुतिपथमधुराणि । श्राव्याणीत्यर्थः । सारसानां रुतानि शुश्रुविरे श्रुतानि । सारसरुतश्रवणान्मन्मथोद्दीपनमासीदित्यर्थः । अत्र सारसरुते मन्मथचापनादभ्रमाद् भ्रान्तिमदलङ्कारः ।

'कविसंमतसादृश्याद्विषये पिहितात्मनि ।
आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः' ॥

इति लक्षणात् ॥ २४ ॥

मधुमथनवधूरिवाह्वयन्ति भ्रमरकुलानि जगुर्यदुत्सुकानि ॥
तदभिनयमिवाऽऽवलिर्वनानामतनुत नूतनपल्लवाङ्गुलीभिः ॥ २५ ॥

मधुमथनेति ॥ भ्रमरकुलानि मधुपवृन्दानि यत् उत्सुकानि सोत्कण्ठानि सन्ति जगुर्गायन्ति, तदुपमीयते—मधुमथनवधूः आह्वयन्तीव यादवाङ्गना आकारयन्तीव । न केवलं भ्रमरकुलानि जगुः, अपरं वनानामावलिः काननानां श्रेणिः तदभिनयमिव तदनुकार-

मिव अतनुत विस्तारयामास । आकारणमेव चकारेत्यर्थः । काभिः नूतनपल्लवाङ्गुलीभिः नूतनप्रवालकरशाखाभिः, कृष्णाङ्गना आह्वयन्तीव । 'अङ्गुल्यः करशाखाः स्यु'रित्यमरः २५

मधुमथनेति ॥ उत्सुकान्युन्मनांसि भ्रमरकुलानि मधुमथनस्य हरेर्वधूराह्वयन्त्याकारयन्ती वेत्युत्प्रेक्षा । 'हूतिराकारणाह्वानम्' इत्यमरः । 'शप्श्यनोर्नित्यम्' इति ह्वयतेः शतुर्नुमागमः । जगुरिति गायतेर्लिट् । वनानामावलिर्नूतनपल्लवा एवाङ्गुल्य इत्येकदेशविवर्तिसावयवरूपकम् । अस्यैव वनावली नर्तकीत्वरूपगमकत्वादिति । नाभिस्तदभिनयं व्यञ्जकचेष्टामतनुतेव । 'व्यञ्जकाभिनयौ समौ' इत्यमरः । 'अङ्गैरालम्बयेद्गीतं हस्तेनार्थं प्रदर्शयेत्' इति वचनात् । गीतार्थस्याह्वानस्य व्यञ्जनमङ्गुलिभिरकार्षीदिवेति क्रियास्वरूपोत्प्रेक्षा । पूर्वोक्तरूपकानुप्राणिना साऽऽह्वानोत्प्रेक्षासापेक्षेति सजातीयसङ्करोऽपीति ॥ २५ ॥

**असकलकलिकाऽऽकुलीकृताऽलिस्खलनविकीर्णविकासिकेसराणाम् ॥**
**मरुदवनिरुहां रजो वधूभ्यः समुपहरन् विचकार कोरकाणि ॥ २६ ॥**

**असकलेति** ॥ मरुत् वायुः अवनिरुहां वृक्षाणां कोरकाणि कलिकाः विचकार कम्पयामास । किं कुर्वन् वधूभ्यः अङ्गनाभ्यः रजः समुपहरन् धूलिमुपायनं कुर्वन् यद्वा-ङ्गनाभ्यो रजः प्राभृतं कुर्वन्, किंभूतानामवनिरुहाम् असकलकलिकाऽऽकुलीकृताऽलिस्खलनविकीर्णविकासिकेसराणाम् असम्पूर्णकलिकाभिः आकुलीकृता येऽलयस्तेषां स्खलनेन विकीर्णानि विक्षिप्तानि अत एव विकासीनि विकस्वराणि केसराणि किञ्जल्का येषां ते तथा तेषाम् । 'कलिका कोरकोऽस्त्रियाम्', 'किञ्जल्कः केसरोऽस्त्रिया'मित्यमरः ॥२६॥

**असकलेति** ॥ मरुद्वनानिलः असकला असमग्राः । अर्धविकचा इत्यर्थः । ताभिः कलिकाभिः कोरकैराकुलीकृतानां संक्षोभितानामलीनां स्खलनेन विघट्टनेन विकीर्णा विक्षिप्ताः विकासिनः केसराः किञ्जल्का येषां तेषामवनिरुहाम् । क्विप् । रजः परागं वधूभ्यः समुपहरन्प्रयच्छन् । यथा कश्चित्कामीनि भावः । धनमर्जयन्वसतीतिवत्, 'लक्षणहेत्वोः क्रियायाः' इति हेत्वर्थे शतृप्रत्ययः । कोरकाणि कुड्मलानि 'कलिका कोरकः पुमान्' इत्यमरकोशे पुंस्त्वाभिधानं प्रायिकाभिप्रायम् । 'कोरकं कुड्मलेऽपि स्यात्कक्कोलकमृणालयोः' इति विश्वप्रकाशादौ नपुंसकत्वस्याभिधानात् । विचकार । विकासयामासेत्यर्थः । विपूर्वात्किरतेः करोतेर्वा लिट् । अत्र कोरकविकासकरणस्य समुपहरन्निति हेत्वर्थेन वधूसम्प्रदानकपरागोपहरणार्थत्वावगमात्फलोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ २६ ॥

**उपवनपवनानुपातदक्षैरलिभिरलाभि यदङ्गनाजनस्य(१) ॥**
**परिमलविषयस्तदुन्नतानामनुगमने खलु सम्पदोऽग्रतःस्थाः ॥ २७ ॥**

**उपवनेति** ॥ अलिभिर्भ्रमरैर्यत् अङ्गनाजनस्य युवतिपूगस्य परिमलविषयः अलाभि आमोदगुणः प्राप्तः । किंलक्षणैरलिभिः उपवनपवनानुपातदक्षैः उद्यानमारुताऽनुलगनप्रवीणैः, उपवनस्योद्यानस्य पवनः समीरणः तस्यानुपातोऽनुलगनं तत्र दक्षाः निपुणाः तैः । तत् युक्तमेव, खलु यस्मात्कारणात् उन्नतानां महतामनुगमने अनुसरणे सम्पदः लक्ष्म्यः अग्रतःस्थाः समीपस्थाः । उन्नतानामाश्रयणे श्रियः प्रत्यासन्ना इत्यर्थः ॥ २७ ॥

**उपवनेति** ॥ वने इत्युपवनम् । विभक्त्यर्थेऽव्ययीभावः । तत्र यः पवनस्तस्यानुपातेनानुसारेण दक्षैर्विचक्षणैरलिभिर्यद् यतः कारणादङ्गनाजनस्य सम्बन्धी परिमलो गन्धविशेषः । 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' इत्यमरः । स एव विषयो भोग्यार्थः । 'रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी' इति । अलाभि लब्धः । लभेः कर्मणि लुङ् 'विभाषा चिण्णमुलोः' इति विकल्पान्नुमभावः । 'अत उपधायाः' इति वृद्धिः । तस्मादुन्नतानां महतामनुगमने पश्चाद्धावने अनुवृत्तौ च सम्पदोऽग्रतःस्थाः पुरोवर्तिन्यः खलु । 'सुपि

---

( १ ) गणस्य ।

स्थः' इति कप्रत्ययः । अत्रानुगमनयोर्द्वयोरभेदाध्यवसायात् श्लेषोत्थापितातिशयोक्त्यनुप्राणितोऽयमर्थान्तर-न्यासः सामान्येन विशेषसमर्थनरूपः ॥ २७ ॥

**रथचरणधराङ्गनाकराब्जव्यतिकरसम्पदुपात्तसौमनस्याः ॥**
**जगति सुमनसस्तदादि नूनं दधति परिस्फुटमर्थतोऽभिधानम् ॥२८॥**

**रथेति ॥** नूनं निश्चितं तदादि तद्दिनादारभ्य सुमनसः पुष्पाणि जगति विश्वस्मिन् परिस्फुटमर्थतः सार्थकमभिधानं नाम दधति । किंभूताः सुमनसः रथचरणधराऽङ्गना-कराब्जव्यतिकरसम्पदुपात्तसौमनस्याः रथचरणधरस्य चक्रधरस्य अङ्गनाः स्त्रियः तासां काराब्जानि करकमलानि तेषां व्यतिकरः सम्पर्कः तस्य सम्पत् शोभा तस्या वशेन उपात्तं गृहीतं सौमनस्यं सुमनस्कता विकासो याभिस्ताः । सुमनसो भावः सौमन-स्यम् । 'सुमनाः पण्डिते पुष्पे' इति वैजयन्ती । अत एव सुमनस इति सार्थकं नाम बभूवेत्यर्थः ॥ २८ ॥

**रथेति** ॥ सुमनसः पुष्पाणि रथचरणं चक्रं तस्य धरो धारयिता हरिः । पचाद्यच् । तस्याङ्गनास्तासां कराब्जैर्व्यतिकरः सम्पर्कः स एव सम्पत् तयोपात्तं लब्धं सौमनस्यं सुमनस्कत्वं सन्तुष्टचित्तत्वं याभिस्ताः सत्यः अत एव सौमनस्यलाभ आदिर्यस्मिन्कर्मणि तत्तदादि । ततः प्रभृतीत्यर्थः । अर्थतः पूर्वोक्तावयवार्था-परिस्फुटं प्रसिद्धावयवार्थमभिधानं सुमनस इति नामधेयं दधति । पूर्वं त्वश्वकर्णादिवद्रूढमिति भावः । 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः । स्त्रियः पुष्पाण्यवचेतुं प्रवृत्ता इति फलितोऽर्थः । नूनमित्युत्प्रेक्षायाम् । अत्रोपात्तसौमनस्या इति सौमनस्यापादानस्य पदार्थस्य विशेषणगत्या सुमनःपदा-ऽन्वर्थताहेतुकत्वोक्त्या काव्यलिङ्गम् । तदुत्थापिता चेयं तदादित्वोत्प्रेक्षेति सङ्करः । तेन चाऽङ्गनाकराणामति-शयत्वं व्यज्यते ॥ २८ ॥

**अभिमुखपतितैर्गुणप्रकर्षादवजितमुद्धतिमुज्ज्वलां दधानैः ॥**
**तरुकिसलयजालमग्रहस्तैः प्रसभमनीयत भङ्गमङ्गनानाम् ॥ २९ ॥**

**अभिमुखेति ॥** अङ्गनानां कामिनीनामग्रहस्तैः हस्ताग्रैः तरुकिसलयजालं वृक्षपल्लव-पटलं प्रसभं बलात्कारेण भङ्गमनीयत त्रोटनं प्रापितम् । त्रोटितमित्यर्थः । अथ वा भङ्गमनीयत हीनतां प्रापितम् । अधःकृतमित्यर्थः । तरूणां किसलयानि तेषां जालम् । किंलक्षणं तरुकिसलयजालं गुणप्रकर्षादवजितं गुणाधिक्यान्निर्जितम् । हस्तानामग्राणि अग्रहस्ताः तैः । किंलक्षणैरग्रहस्तैः अभिमुखपतितैः संमुखमागतैः, यतः पुनः किंभूतैः अग्र-हस्तैः उज्ज्वलामतिदीप्तामतिशयवतीम् उद्धतिमुद्धततां दधानैः निर्मलमौन्नत्यं बिभ्राणैः । किसलयादपि निर्मलं गुणं धारयद्भिरित्यर्थः । अन्योऽपि यो येन गुणप्रकर्षादवजितो भवति, स निःशङ्कं तदभिमुखं याति । अथ च अभिमुखपतितैः त्रोटनाय गतैरित्यर्थः ॥ २९ ॥

**अभिमुखेति** ॥ अभिमुखपतितैर्भञ्जनार्थमभिमुखमागतैः उज्ज्वलामुत्कृष्टामुद्धतिमुपरिप्रसारमौद्धत्यं च दधानैरङ्गनानामग्राणि च ते हस्ताश्चेति समानाधिकरणसमासः । अत एव 'हस्ताग्राग्रहस्तयोर्गुणगुणिनो-रभेदात्' इति वामनः । तैरग्रहस्तैः कर्तृभिः गुणप्रकर्षाद्धेतोरवजितमवधीरितं तरुकिसलयजालं प्रसभं बलाद्भङ्गं छेदं पराजयं चानीयत नीतम् । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति । किसलयजालस्य प्राधान्यादभिधानम् । अत्राग्रहस्तेषु विशेषणमहिम्ना जिगीषुत्वस्य किसलयजाले जेतव्यत्वस्य च प्रतीतेः समासोक्तिरलङ्कारः ॥ २९ ॥

**मुदितमधुभुजो भुजेन शाखाश्चलितविशृङ्खलशङ्खकं धुवत्याः ॥**
**तरुरतिशयिताऽपराङ्गनायाः शिरसि मुदेव मुमोच पुष्पवर्षम् ॥३०॥**

मुदितेति ॥ अतिशयितापराङ्गनायाः निर्जितपरस्त्रियो नायिकायाः शिरसि मूर्ध्नि तरुर्वृक्षः पुष्पवर्षं मुमोच कुसुमवृष्टिममुचत् । उत्प्रेक्षते-मुदेव हर्षेणेव । यदसौ विजयवती, अत एव पुष्पवर्षं मुमोचेत्यर्थः । अतिशयिताः रूपेणातिक्रान्ताः अपराः अन्याः अङ्गनाः कामिन्यो यया सा तस्याः । अङ्गनायाः किं कुर्वत्याः भुजेन पाणिना शाखा धुवत्याः शिफाः कम्पयन्त्याः, कथं चलितविशृङ्खलशङ्खकं चलितानि प्रचलितानि विशृङ्खलानि विसंष्ठुलीभूतानि शङ्खकानि वलयानि यत्र यस्यां क्रियायां तद्यथा प्रचलितविसंष्ठुलीभूतवलयं यथा स्यात्, कथंभूताः शाखाः मुदिता मधुभुजो भ्रमरा यासु ताः प्रहृष्टचञ्चरीकाः, एतेन सुमनसां समृद्धिकथनम् ॥ ३० ॥

मुदितेति ॥ मुदिता हृष्टा मधुभुजो मधुपा यासु ताः शाखा भुजेन हस्तेन चलितानि विशृङ्खलानि अप्रतिहतरवाणि शङ्खकानि वलयानि यस्मिन्कर्मणि तद्यथा तथा धुवत्याः कम्पयन्त्याः । 'धू विधूनने' इति धातोस्तौदादिकाच्छतरि ङीप् । 'विङति च' इति गुणवृद्धिप्रतिषेधादुवङादेशः । अतिशयिता सौन्दर्येणातिक्रान्ता अपराङ्गना यया सा तस्याः शिरसि तरुर्मुदेव तदभिसरणसन्तोषेणेवेति गुणहेतूत्प्रेक्षा । पुष्पवर्षं पुष्पवृष्टिं मुमोच ॥ ३० ॥

अनवरतरसेन रागभाजा करजपरिक्षतिलब्धसंस्तवेन ॥
सपदि तरुणपल्लवेन वध्वा विगतदयं खलु खण्डितेन मम्ले ॥ ३१ ॥

अनवरतेति ॥ तरुणपल्लवेन नूतनप्रवालेन सपदि वेगेन मम्ले परिम्लानम् । किंभूतेन तरुणपल्लवेन खलु यस्मात् कारणात् वध्वा अङ्गनया विगतदयं निर्दयं यथा भवत्येवं खण्डितेन त्रोटितेन, अपरं किंभूतेन तरुणपल्लवेन अनवरतरसेन नितान्तस्निग्धेन, अनवरतं सदा रसो द्रवो यस्य सः तेन, अपरं किंभूतेन रागं लौहित्यं भजते इति रागभाक् तेन, पुनः किंभूतेन पल्लवेन करजपरिक्षतिलब्धसंस्तवेन नखव्रणप्राप्तपरिचयेन प्राप्तनखव्रणसंयोगेन, करजानां नखानां परिक्षतिः प्रहरणं तेन लब्धः प्राप्तः संस्तवः परिचयो येन सः । 'संस्तवः स्यात्परिचयः' इत्यमरः । अथ च तरुणपल्लवेन पल्लवप्रायतरुणेन कामिना यथा म्लायते । कीदृशेन, खलु इति उत्प्रेक्षायाम्—वध्वा अङ्गनया विगतदयं निर्दयं खण्डितेन विरहितेन, तेनापि अनवरतरसेन नितान्तस्नेहपरेण । तथा सोऽपि आसक्तिभाग्वर्तते, नखव्रणप्राप्तपरिचयश्च विद्यते इत्यर्थः ॥ ३१ ॥

अनवरतेति ॥ अनवरतरसेनाऽनवच्छिन्नद्रवेण, अन्यत्रानुबद्धशृङ्गारेण रागभाजा रक्तेन प्रीतिभाजा च करजपरिक्षतिषु नखक्षतेषु लब्धसंस्तवेन प्राप्तपरिचयेन । 'संस्तवः स्यात्परिचयः' इत्यमरः । वध्वा विगतदयं निर्दयं यथा तथा खण्डितेन छिन्नेन निराकृतेन च तरुणपल्लवेन नवकिसलयेन युवविटेन च । 'पल्लवः किसलये विटे' इति विश्वः । सपदि मम्ले म्लानम् । खलु प्रसिद्धौ । म्लायतेर्भावे लिट् । अत्राभिधायाः प्रकृतार्थे नियन्त्रितत्वादप्रकृतार्थप्रतीतेः शब्दशक्तिमूलो ध्वनिः, न श्लेषः । तेन चोभयोः पल्लवयोरौपम्यं गम्यते ॥ ३१ ॥

प्रियमभि कुसुमोद्यतस्य बाहोर्नवनखमण्डनचारु मूलमन्या ॥
मुहुरितरकराहितेन पीनस्तनतटरोधि तिरोदधेऽंशुकेन ॥ ३२ ॥

प्रियमिति ॥ अन्या काचिदङ्गना बाहोर्मूलं कक्षान्तरप्रदेशं मुहुर्वारंवारमंशुकेन वस्त्रेण तिरोदधे आच्छादयामास । किंभूतस्य बाहोः प्रियं कान्तमभि लक्ष्यीकृत्य कुसुमोद्यतस्य पुष्पार्थं प्रहितस्य, किंलक्षणं बाहोर्मूलं नवनखमण्डनचारु नूतननखव्रणरम्यं, नवानि

प्रत्यग्राणि यानि नखमण्डनानि नखक्षतानि तैः चारु मनोज्ञं, किंलक्षणेन अंशुकेन इतरकरा-हितेन द्वितीयकरन्यस्तेन अन्यपाणिना आरोपितेन, अपरं किंभूतं बाहोर्मूलं पीनस्तनयो-रलघुकुचयोः तटं पार्श्वं रुणद्धि आवृणोतीत्येवंशीलं तत् पीनस्तनतटरोधि । मांसल-त्वात् कक्षास्तनयोरन्तरं नास्तीत्यर्थः ॥ ३२ ॥

अथासां पुष्पावचये शृङ्गारचेष्टाः वर्णयन् कस्याश्चिच्चेष्टाविशेषमेकेनाह—

**प्रियमिति** ॥ अन्या स्त्री प्रियमभि । प्रियस्याग्रत इत्यर्थः । 'अभिरभागे' इत्यभेर्लक्षणार्थे कर्मप्रवच-नीयत्वात्तद्योगे द्वितीया । कुसुमेषूद्यतः कुसुमोद्यतः । कुसुमग्रहणार्थमुच्छ्रित इत्यर्थः । प्रकृतिविकारभावा-ऽभावान्न तादर्थ्ये चतुर्थीसमासः । तस्य बाहोर्नवं यन्नखं नखक्षतं तदेव मण्डनं तेन चारु सुन्दरं, मूलम् । कक्षभागमित्यर्थः । मुहुरितरकरेण सव्यपाणिना आहितेन निहितेनांशुकेनोत्तरीयेण पीनं स्तनतटं रुणद्धीति पीनस्तनतटरोधि तदावरणं यथा तथा तिरोदधे तिरश्चकार । अयं चापलाख्यः सञ्चारिभावः । 'आत्मप्रका-शिनी चेष्टा रागाद्यश्चापल मतम्' इति लक्षणात् । प्रौढा चेयम् ॥ ३२ ॥

षड्भिः कुलकम्—

विततवलिविभाव्यपाण्डुलेखाकृतपरभागविनील(१) रोमराजिः ॥
कृशमपि कृशतां पुनर्नयन्ती विपुलतरोन्मुखलोचनाऽवलग्नम् ॥ ३३ ॥
प्रसकलकुचबन्धुरोद्धुरोरःप्रसभविभिन्नतनूत्तरीयबन्धा ॥
अवनमदुदरोच्छ्वसद्दुकूलस्फुटतरलक्ष्यगभीरनाभिमूला ॥ ३४ ॥
व्यवहितमविजानती किलाऽन्तर्वणभुवि वल्लभमाभिमुख्यभाजम् ॥
अधिविटपि सलीलमग्रपुष्पग्रहणपदेन चिरं विलम्ब्य काचित् ॥३५॥
अथ किल कथिते सखीभिरत्र क्षणमपरेव ससम्भ्रमा भवन्ती ॥
शिथिलितकुसुमाकुलाग्रपाणि(२)प्रतिपदसंयमितांशुकावृताङ्गी ॥३६॥
कृतभयपरितोषसन्निपातं सचकितसस्मितवक्त्रवारिजश्रीः ॥
मनसिजगुरुतत्क्षणोपदिष्टं किमपि रसेन रसान्तरं भजन्ती ॥ ३७ ॥
अवनतवदनेन्दुरिच्छतीव व्यवधिमधीरतया यदस्थिताऽस्मै ॥
अहरत सुतरामतोऽस्य चेतः स्फुटमभिभूषयति स्त्रियस्त्रपैव ॥ ३८ ॥

**विततेत्यादि ॥ अवनतेति ॥** काचिदङ्गना अतः कारणात् अस्य कान्तस्य चेतः चित्तमहरत सुतरामतिशयेन मनो वशीचकार । अतः कुतः, यतः कारणात् अस्मै कान्ताय अस्थित स्थित्या प्रकाशयामास स्थानेन कथयामास । किमकथयत्—भोः कान्त ! अहमत्र वृक्षे स्थितास्मि एतद्दर्शयति । पुनः किंभूता अवनतवदनेन्दुः नतमुखचन्द्रा, किं कुर्वतीव अधीरतया लज्जाकुलतया व्यवधिमन्तर्धानमिच्छतीव । युक्तोऽयमर्थः, स्फुटं निश्चितं त्रपैव लज्जैव स्त्रियः अङ्गना अभिभूषयति अलङ्करोति । त्रपैव स्त्रीणां मण्डनमित्यर्थः । **वितततेति ॥** किं कुर्वती अवलग्नं मध्यमुदरं पुनर्भूयोऽपि कृशमपि तन्वपि कृशतां तनुतां नयन्ती कृशत्वं प्रापयन्ती । किंभूता अङ्गना विपुलतरोन्मुखलोचना विपुलतरे अतिविपुले विशाले उन्मुखे ऊर्ध्वे लोचने नयने यस्याः सा तथा, अपरं किंलक्षणा सा विततवलि-विभाव्यपाण्डुरेखाकृतपरभागविनीलरोमराजिः वितता विस्तीर्णाः या वलयः वलित्रयं

(१) विलीन । (२) पाणिः प्रति० ।

तत्र परिभाव्या दृश्या याः पाण्डुलेखा गौरलेखाः ताभिः कृतपरभागा विहितगुणोत्कर्षा गुणाधिक्यं नीता विनीला कृष्णा रोमराजिः तनूरुहपङ्क्तिर्यस्याः सा । कृष्णं हि गौरे नितरां राजते इत्यर्थः । 'मध्यमं चाऽवलग्नं चे'त्यमरः । **प्रसकलेति** ॥ अपरं किंभूता सा प्रसकलकुचबन्धुरोद्धुरोरःप्रसभविभिन्नतनूत्तरीयबन्धा प्रसकलौ च तौ कुचौ च प्रसकलकुचौ प्रसकलकुचाभ्यां परिपूर्णस्तनाभ्यां बन्धुरं मनोज्ञं यद् उद्धुरोरः कठिनवक्षः तेन भिन्नो विदारितः तनुनः सूक्ष्मस्य उत्तरीयस्य उत्तरासङ्गवस्त्रस्य बन्धो नीवी यस्याः सा, अपरं किंलक्षणा सा अवनमदुदरोच्छ्वसद्दुकूलस्फुटतरलक्ष्यगभीरनाभिमूला अवनमत् उच्चैः करणादूर्ध्वीभवत् यदुदरं मध्यस्तस्मादुच्छ्वसत् विरलीभवत् यद्दुकूलं परिधानवस्त्रं तेन स्फुटतरलक्ष्यं प्रकटतरदृश्यं गभीरं निम्नं नाभिमूलं नाभिरन्ध्रप्रदेशो यस्याः सा तथोक्ता । **व्यवहितमिति**॥ किं कृत्वा नम्रमुखचन्द्रा अधिविटपि वृक्षे सलीलं सविलासं विलम्ब्य विलग्य, कथं चिरं चिरकालम् । ननु वृक्षे विलम्बे किं कारणम्, अत आह—केन अग्रपुष्पग्रहणपदेन अग्रपुष्पाणामुपरिजकुसुमानां ग्रहणमादानं तस्य पदं व्याजस्तेन अग्रपुष्पादानव्याजेन । उत्प्रेक्षते—अन्तर्वणभुवि वनमध्यपृथिव्यां वल्लभं कान्तं व्यवहितं संवृतमभिवेष्टितमविजानतीव अजानतीव, किंभूतं कान्तम् आभिमुख्यं सांमुख्यं भजते इति आभिमुख्यभाक् तं संमुखावस्थितम् । अपरमुत्प्रेक्षते—वल्लभमभिमुखस्थं न जानतीव । अर्थाद् वृक्षान्तरे वेत्तीत्यर्थः । **अथेति** ॥ किं कुर्वती क्षणं क्षणमात्रमपरेव भवन्ती अन्येव अन्यादृशेव भवन्ती । किंलक्षणा सा ससम्भ्रमा सादरा । सावधानेत्यर्थः । सविलासा वा । किलेत्युत्प्रेक्षायाम् । अथ वा सखीभिरालिभिः अत्र अस्मिन् कथिते इव उक्ते इव अपरेव जाता सविशेषं व्यग्रा जाता । अथ सखीकथनादनन्तरम् इत्येवमथशब्दः सम्बन्धनीयः । सखीभिः कान्ते कथिते च अन्येव भवन्तीत्यर्थः । अपरं किंलक्षणा शिथिलितकुसुमाकुलाग्रपाणिप्रतिपदसंयमितांशुकावृताङ्गी शिथिलतानि कुसुमानि यस्मात् इति शिथिलितकुसुमः पुष्पावचयान्निवृत्तः आकुलो व्यग्रः वस्त्रादपरः योऽसौ अग्रपाणिः हस्ताग्रं तेन प्रतिपदं वारंवारं संयमितं बद्धं यत् अंशुकं दुकूलं तेन आवृतमाच्छादितमङ्गं शरीरं ययाऽसौ तथोक्ता । **कृतभयेति** ॥ अपरं किं कुर्वती रसेन लज्जाभवश्रृङ्गारेण किमपि अव्यक्तं वर्णयितुमशक्यं रसान्तरं भजन्ती श्रृङ्गारविशेषं प्राप्नुवती । किंभूतं रसान्तरं मनसिजगुरुतत्क्षणोपदिष्टं मनसिजः कामः स एव गुरुः अध्यापकः तेन तत्क्षणं तत्कालमुपदिष्टं शिक्षितम् । कामेनैव तथातथा रसविशेषमाश्रयन्तीत्यर्थः । अपरं किंभूता सा सचकितसस्मितवक्त्रवारिजश्रीः सभयसहास्यमुखकमललक्ष्मीः । पूर्वोक्तकृतनिःशङ्कपदार्थलज्जावशात् सचकिता सभया, दृष्टविलासपतिदर्शनात् सपरितोषा । सचकितं सभयं सस्मितं सहासं च यत् वक्त्रवारिजं मुखकमलं तत्र श्रीः शोभा यस्याः सा । यतः किंभूतं रसान्तरं कृतभयपरितोषसन्निपातं कृतो विहितः भयपरितोषयोः साध्वससन्तोषयोः सन्निपातः समूहो येन तत् । इत्युक्तप्रकारेण प्रथममात्मानं पत्ये प्रकाशितवती, तद्दर्शनान्नम्रमुखी कान्तस्य मनो जहारेत्यर्थः । षड्भिः कुलकम् ॥ ३३–३८ ॥

अथापरस्याश्चेष्टाविशेषं षड्भिः कुलकेनाह—

वितततेति ॥ काचिद्विततताभिर्गात्रोन्नमनाद्विश्लिष्टाभिर्वलिभिस्त्रिवलिभिर्विभाव्याः संलक्ष्याः पाण्डुरेखाः

रेखाकारा वलित्रयान्तरालभागास्ताभिः कृतपरिभागा जनितवर्णोत्कर्षाः अत एव विशेषेण लीना विलीना रोमराजिर्यस्याः सा तथोक्ता । कृशमपि, स्वभावत एवेति भावः । अवलग्नं मध्यम् । 'मध्यमं चाऽवलग्नं च मध्योऽस्त्री' इत्यमरः । पुनः कृशतां नयन्ती । अग्रपुष्पग्रहणाय गात्रविजृम्भणादिति भावः । तथा विपुलतरे उन्मुखे ऊर्ध्वमुखे च लोचने यस्याः सा । अग्रपुष्पग्रहणार्थमिति भावः ॥ ३३ ॥

**प्रसकलेति** ॥ प्रसकलाभ्यामतिसमग्राभ्यां कुचाभ्यां बन्धुरमुन्नतानतम् । 'बन्धुरं तून्नतानतम्' इत्यमरः । उद्धुरं निर्भरम् । दृढमिति यावत् । 'ऋक्पूर-' इत्यादिना समासान्तः । तस्मादुरसः प्रसभाद्बलात्काराद्विभिन्नो विश्लिष्टस्तनूत्तरीयबन्धो यस्याः सा । गात्रविजृम्भणाद्विस्रस्तकुचावरणेत्यर्थः । किञ्च अवनमतोऽन्तर्लीयमानादुदरादुच्छ्वसाद्विश्लिष्यद् दुकूलं यस्य तत् अत एव स्फुटतरं यथा तथा लक्ष्यं गभीरमगाधं नाभेर्मूलमन्तरालं यस्याः सा ॥ ३४ ॥

**व्यवहितामिति** ॥ काचित्पूर्वोक्तविशेषणविशिष्टाङ्गना अन्तर्वणभुवि वनाभ्यन्तरप्रदेशे । 'प्रनिरन्तः-' इत्यादिना वननकारस्य णत्वम् । व्यवहितं तिरोहितमाभिमुख्यभाजम् । अभिमुखावस्थितमित्यर्थः । तं वल्लभं प्रियमविजानती किल जानानाऽप्यजानानेव अधिविटपि विटपिनि वृक्षे । विभक्त्यर्थेऽव्ययीभावः । सलीलं यथा तथाऽग्रे वृक्षाग्रे यानि पुष्पाणि तेषां ग्रहणस्य पदेन मिषेण चिरं विलम्ब्य । प्रियाय स्वाङ्गप्रकाशनार्थमिति भावः ॥ ३५ ॥

**अथेति** ॥ अथ विलम्बानन्तरमत्रास्मिन्प्रिये सखीभिः कथिते सति 'किलायमत्रैवास्ते' इति निवेदिते सति क्षणं ससम्भ्रमा अपरेव पूर्वविपरीतव्यापारकरणादन्येव भवन्ती । बुद्धिपूर्वकारित्वमज्ञाननाटनेन वञ्चयन्तीत्यर्थः । शिथिलितः पुष्पग्रहणान्निवर्तितः कुसुमाकुलः कुसुमव्यापृतोऽग्रपाणिर्यया सा तथोक्ता प्रतिपदं प्रतिस्थानं संयमितेन नियमितेनांशुकेन । 'अंशुकं सूक्ष्मवस्त्रे स्यात्' इति विश्वः । वस्त्रेणावृतमङ्गं यस्याः सा तथोक्ता सती ॥ ३६ ॥

**कृतभयेति** ॥ किञ्च कृतः भयपरितोषयोर्भर्तृदर्शनोत्थसाध्वसहर्षयोः सन्निपातः सङ्करो येन तत्, मनसि जातो मनसिजः स्मरः । सप्तम्यां जनेर्डः । 'हलदन्तात्सप्तम्याः संज्ञायाम्' इत्यलुक् । स एव गुरुराचार्यस्तेन तत्क्षण उपदिष्टम् । तदेकहेतुकमित्यर्थः । किमप्यनिर्वाच्यं रसान्तरं लक्षणया भावान्तरं तच्चेह किलकिञ्चिताख्यं विवक्षितम्, कृतभयेत्यादिविशेषणेन । 'क्रोधाश्रुहर्षभीत्यादेः सङ्करः किलकिञ्चित'मिति लक्षणार्थस्य प्रतीतेः । रसेन रागेण हेतुना भजन्ती अत एव सचकिता सभयसम्भ्रमा । 'चकितं भयसम्भ्रमः' इत्यमरः । सस्मिता हर्षात्समन्दहासा वक्त्रवारिजश्रीर्यस्याः सा सती । अत्र चकितस्मितयोः पूर्वोक्तभयहर्षानुभावत्वेनोक्तिः ॥ ३७ ॥

**अवनतेति** ॥ अवनतवदनेन्दुः लज्जया नम्रमुखीत्यर्थः । अधीरतया अधृष्टतया व्यवधिं किञ्चिद्व्यवधानम् । 'उपसर्गे घोः किः' इति किप्रत्ययः । इच्छतीव वाञ्छन्तीव । तथा व्याकुला सतीत्यर्थः । 'आच्छीनद्योर्नुम्' इति विकल्पान्नुमभावः । अस्मै प्रियाय अस्थित । आत्मानं प्रकाशयन्ती स्थितेत्यर्थः । तिष्ठतेः कर्तरि लुङ् । 'प्रकाशनस्थेयाख्ययोश्च' इत्यात्मनेपदं, 'स्थाघ्वोरिच्च' इति सिचः कित्त्वमिकारश्च धातोरन्तादेशः । कित्त्वान्न गुणः । इति यत् अतो हेतोरस्य प्रियस्य चेतः सुतरामहरत । तथा हि त्रपैव स्त्रियोऽभिभूषयति स्फुटम् । प्रसिद्धमित्यर्थः । अतोऽस्या अपि त्रपाभूषितत्वादतिमनोहरत्वं युक्तमिति भावः । कुलकार्थान्तरन्यासौ । मध्या चेयं नायिका । 'लज्जामन्मथमध्यस्था मध्यमोदितयौवना' इति लक्षणात् ॥ ३८ ॥

**किसलयशकलेष्ववाचनीयाः पुलकिनि केवलमङ्गके निधेयाः ॥**
**नखपदलिपयोऽपि दापितार्थाः(१) प्रणिदधिरे दयितैरनङ्गलेखाः ॥३९॥**

**किसलयेति** ॥ दयितैर्वल्लभैः अनङ्गलेखाः कामलेखाः । कन्दर्पस्य लिखितशासनपत्राणीत्यर्थः । प्रणिदधिरे प्रहिताः । किंभूता अनङ्गलेखाः किसलयशकलेषु पल्लवखण्डेषु अवाचनीयाः वाचयितुमशक्याः, पुनः किंलक्षणाः केवलमेकम् अङ्के शरीरे निधेयाः न्य-

(१) दीपितार्थाः ।

स्तव्याः । अङ्कमेवाङ्कं तस्मिन् । किंलक्षणे अङ्के पुलकिनि रोमाञ्चयुक्ते, अपरं किंलक्षणाः अनङ्गलेखाः नखपदलिपयोऽपि दापितार्थाः नखव्रणाक्षरा अपि दत्तनिर्णयाः । कथितकार्या- इत्यर्थः । नखपदानि नखक्षतान्येव लिपयो वर्णा येषु ते तथोक्ताः । दापितः ज्ञापितः अर्थोऽभिधेयं यैस्ते तथोक्ताः । यथा इमे पल्लवा नखपदलिपिभिर्जर्जराः, तथा वयमपि कामबाणैर्जर्जराः इति निर्णयः कथितः ॥ ३९ ॥

किसलयेति ॥ किसलयशकलेषु, वर्तमाना इति शेषः । अवाचनीयाः प्रसिद्धलिपिवैलक्षण्याद्वाच- यितुमनर्हाः, किन्तु केवलं पुलकिनि दयितस्पृष्टत्वात्तत्स्पर्शादेव रोमाञ्चवत्यङ्के वपुषि निधेया विरहताप- शान्त्यर्थमर्पणीयाः । कुतः—नखपदानि नखाङ्का एव लिपयोऽक्षराणि येषु ते, न तु प्रसिद्धाक्षराः । अतो- ऽवाचनीया इत्यर्थः । नैतावताऽनुतापकारित्वं चेत्याह—तथापि दीपितार्थाः सङ्केतितसन्निवेशवशादेव योनि- ताभिधेयाः, लिख्यन्त इति लेखाः । कर्मणि घञ्प्रत्ययः । अनङ्गस्य लेखाः । तत्प्रयुक्ता इत्यर्थः । दायितैः दयिताभिः दयितैश्च । 'पुमान्स्त्रिया' इत्येकशेषः । प्रणिदधिरे प्रणिहिताः । लिखिता इत्यर्थः । दधातेः कर्मणि लिट् । 'नेर्गदनद—' इत्यादिना नकारस्य णत्वम् । लोकप्रसिद्धलेख्यवैलक्षण्याद्व्यतिरेकालङ्कारः ॥ ३९ ॥

कृतकृतकरुषा सखीमपास्य त्वमकुशलेति कयाचिदात्मनैव ॥
अभिमतमभि साभिलाषमाविष्कृतभुजमूलमबन्धि मूर्ध्नि माला ॥४०॥

कृतेति ॥ कयाचिदङ्गनया आत्मनैव स्वयमेव मूर्ध्नि निजशिरसि माला स्रक् अबन्धि बद्धा । कथम् अभिमतमभि लक्षीकृत्य कान्तमालोक्य आविष्कृतभुजमूलं यथा भवति प्रक- टितकक्षाप्रदेशं यथा भवति तथा, आविष्कृते प्रकटीकृते भुजमूले बाहुमूले कक्षे यत्र क्रिया- याम् । किंलक्षणमभिमतं साभिलाषं ससम्भोगमनोरथं, किं कृत्वा माला अबन्धि इति उक्तवाक्येन सखीं वयस्यामपास्य निराकृत्य, इतीति किम्--यत्, हे सखि ! त्वम् अकुशला मालाबन्धने अप्रवीणा, किंलक्षणया कया कृतकृतकरुषा विहितकृत्रिमकोपया, कृता विहिता कृतका कृत्रिमा रुट् कोपो यया सा तया ॥ ४० ॥

कृतेति ॥ कृतकृतकरुषा कृतकृत्रिमरोषया कयाचिन्नायिकया त्वमकुशला माल्यग्रथने कुशला नाऽसी- ति सखीमपास्य निरस्यात्मना स्वयमेवाभिमतमभिप्रायाभिमुखं साभिलाषमाविष्कृतभुजमूलं प्रकाशितकक्ष- प्रदेशं यथा तथा मूर्ध्नि माला अबन्धि बद्धा । अयं च स्वाभिप्रायव्यञ्जकचेष्टारूपश्चापलाख्यः सञ्चारि- विशेषः । नायिका प्रौढैव । 'स्मरमन्दीकृतव्रीडा प्रौढा सम्पूर्णयौवना' इति लक्षणात् ॥ ४० ॥

त्रिभिर्विशेषकम्—

अभिमुखमुपयाति मा स्म किञ्चित्त्वमभिदधाः पटले मधुव्रतानाम् ॥
मधुसुरभिमुखाब्जगन्धलुब्धे(१)रधिकमधित्वदनेन मा निपाति ॥४१॥
सरजसमकरन्दनिर्भरासु प्रसवविभूतिषु वीरुधां(२) विरक्तः ॥
ध्रुवममृतपनामवाञ्छयाऽसावधरममुं मधुपस्तवाऽऽजिहीते ॥ ४२ ॥
इति वदति सखीजने निमीलद्द्विगुणितसान्द्रतराक्षिपक्ष्मलेखा(३) ॥
अपतदलिभयेन भर्तुरङ्कं भवति हि विक्लवता गुणोऽङ्गनानाम् ॥ ४३ ॥

अभिमुखमित्यादि ॥ इतीति ॥ काचिदङ्गना भर्तुः कान्तस्य उत्सङ्गमङ्कम् अपतत् पपात । केन अलिभयेन भृङ्गत्रासेन, क सति पपात सखीजने आलिवर्गे इति पूर्वोक्तप्रकारेण वदति जल्पति सति, किंभूता अङ्गना निमीलद्द्विगुणितसान्द्रतराक्षिपक्ष्मलेखा निमीलनवशात्

---

(१) लब्धे० । (२) भूरुहां । (३) माला ।

अतिबहुतरचक्षुःपुटरोमपङ्क्तिः, निमीलन्त्यौ सङ्कुचन्त्यौ द्विगुणिते द्विर्भावं प्राप्ते सान्द्रतरे निबिडतमे अक्ष्णोर्नयनयोः पक्ष्मलेखे तनुरोममाले यस्याः सा । युक्तोऽयमर्थः, हि यस्मात् कारणात् अङ्गनासु स्त्रीषु विक्लवता मुग्धत्वं गुणो भवति उपकाराय स्यात् । **अभिमुख-मिति** ॥ इतीति किं-हे सखि ! त्वं किञ्चित् किमपि मा स्म अभिदधाः मा वोचः, क्व सति मधुव्रतानां पटले भ्रमराणां समूहे अभिमुखमुपयाति सति संमुखमागच्छति सति । मधु मकरन्दं व्रतयन्ति भक्षयन्ति ते मधुव्रताः इति साभिप्रायं नाम । उपयातीति उपयात् तस्मिन् । यतः कारणात् अनेन मधुव्रतपटलेन अधित्वत् त्वय्यधिकृत्य मा निपाति मा निपत्यतां मा भ्रश्यताम् । कुतः पत्यते इति चेत्तत्राह-कस्याः हेतोः मधुसुरभिमुखाब्जगन्धलुब्धेः सुरासवसुगन्धिमुखकमलसौरभ्यलोभात्, मधुना मद्येन सुगन्धि सुरभि यत् मुखाब्जं वदन-कमलं तस्य गन्धः सौरभ्यं तस्य लुब्धिर्लोभनं तस्याः । कथं यथा भवति तथा अधिकं साभिलाषं यथा स्यात्तथा । एवं मुखाब्जगन्धलोभादित्यर्थः । **सरजसेति** ॥ इतीति किं—यत्, हे सखि ! असौ मधुपः भ्रमरः अमुम् एनं तवाऽधरमाजिहीते भवत्या ओष्ठं प्रत्यागच्छति । कया ध्रुवमुत्प्रेक्षायाम्, अमृतपनामवाञ्छयेव अमृतं सुधां पिबति धयति यः सोऽमृतपः तस्य नामाऽभिधानं तस्य वाञ्छा अभिलाषः तयेव । अग्रे मधुप इति नामास्ति, अधुना अस्या अधरामृतं पीत्वा नाम्ना अमृतपो भवेयमितीच्छयेव । किंभूतः मधुपः वीरुधां वल्लीनां प्रसवविभूतिषु विरक्तः वृक्षलतानां पुष्पश्रीषु विरागं प्राप्तः, किंभूतासु प्रसवविभू-तिषु सरजसमकरन्दनिर्भरासु सपुष्पपरागमधुव्याप्तासु । मकरन्दबहुलासु इत्यर्थः । सरजसाः सधूलयश्च ते मकरन्दाः पुष्परसाश्च तैर्निर्भरासु व्याप्तासु । सखीजने इति वदति सति भर्तु-रङ्कमपतदिति भावः । त्रिभिर्विशेषकम् ॥ ४१-४३ ॥

अथ काञ्चिन्नायिकां प्रति सखीवचनं विशेषकेणाह—

**अभिमुखमिति** ॥ मधु मकरन्दं व्रतयन्ति भुञ्जत इति मधुव्रता मधुपाः । कर्मण्यण्प्रत्ययः । तेषां पटले अभिमुखमुपयाति आगते सति त्वं किञ्चिन्मास्माऽभिदधाः । न किञ्चिदालप । मौनं भजेत्यर्थः । स्मो-त्तरे लङ्, 'न माङ्योगे' इत्यट्प्रतिषेधः । मौनस्य मधुकरबाधानिवृत्तिरेव फलमित्याह—माधिवेति । मधुना मद्येन सुरभेर्मुखाब्जस्य यो गन्धस्तस्य लब्धेर्लोभात् । स्त्रियां क्तिन् । अनेन मधुव्रतपटलेन अधित्वत् त्वयि । विभक्त्यर्थेऽव्ययीभावः । 'त्वमावेकवचने' इत्यत्रैकवचन इत्यर्थनिर्देशादिह विभक्त्यभावेऽप्येकार्थ-वृत्तेर्युष्मदो मपर्यन्तस्य त्वादेशः । अत एव विभक्त्यभावाच्च त्वादेशोऽत्र चिन्त्य इति वल्लभवचनं चिन्त्यम्(१)। अधिकमत्यन्तं सर्वत्रेत्यर्थः। मा निपाति मा निपत्यताम्। भावे लुङि चिण्वद्वृद्धिः। अत्र निपाता-ऽसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥ ४१ ॥

**सरजसेति** ॥ किञ्च । मधु पिबतीति मधुपो मधुलिट् मद्यपश्च । आतोऽनुपसर्गे कः । भुवि रोहन्ति जायन्ते इति भूरुहां भूरुहाणां भौमानां च देहिनां सम्बन्धिनीषु, सह रजसा सरजसम् । 'अचतुर-' इत्या-दिना साकल्यार्थेऽव्ययीभावसमासान्तनिपातः । तेन सरजस्क इति बहुव्रीह्यर्थो लक्ष्यः । मुख्यो वा महाकवि-

---

(१) 'अर्थनिर्देशस्य अतित्वानित्यायर्थमङ्गीकारेऽपि 'प्रत्ययोत्तरपदयोश्च' इत्यत्रोत्तरपदग्रहणसामर्थ्या-द्विभक्तिपरकत्वस्यापि निमित्तत्वेनात्राव्ययीभावत्वेनाव्ययत्वाद्विभक्तेर्लुका लुप्तत्वेन 'न लुमता-'इत्यनेन प्रत्यय-लक्षणप्रतिषेधाद्विभक्तिपरत्वाभावेनादेशश्चिन्त्य एवातो वल्लभोक्ती रम्यैव । कविना तु विभक्तिप्रतिरूपक-त्वच्छब्देन युष्मत्समानार्थकेन समासोऽङ्गीकृत इति प्रतिभाति' । इयं टिप्पणी 'निर्णयसागर'यन्त्रालयमुद्रिते पुस्तके विलोक्यते । परमस्मदुपलब्धवल्लभव्याख्यापुस्तके तु 'अधित्वत्' इति प्रयोगविषये किमपि तथा-विधमाक्षेपादिकं नोपलभ्यत इति शङ्कासमाधानमिदं किंमूलकमिति न प्रतीमः ।

प्रयोगबाहुल्यात् । अव्ययीभावदर्शनं तु प्रायिकमित्युक्तं प्राक् । तथा च सरजसं सरजसो वा यो मकरन्दरसेन निर्भरासु पूर्णासु । न तु त्वदधरामृतेन नाप्यरजस्केनेति भावः । अन्यत्र रजः स्त्रीपुष्पम् । 'स्याद्रजः पुष्पमार्तवम्' इत्यमरः । तत्साहचर्यान्मकरन्दशब्देन शुक्रप्रतीतिः । तेन शुक्रशोणितसन्निपातप्रायास्वित्यर्थः । प्रसवविभूतिषु पुष्पसमृद्धिषु जन्मपरम्परासु च विरक्तः निस्पृहः सन् अमृतं पिबतीति अमृतप इति नाम्नो वाञ्छयाऽसावमुं तवाधरमोष्ठं प्रति आजिहीते आगच्छति ध्रुवं सत्यमित्युत्प्रेक्षायाम् । अन्यत्र तु अमृतपो देव इति नामवाञ्छया । देवभूयापेक्षयेत्यर्थः । अथ वा निःश्रेयसप्राप्तीच्छयेत्यर्थः । 'श्रेयो निःश्रेयसामृतम्' इत्यमरः । ध्रुवं शाश्वतमधरं धरासम्बन्धरहितममुं परलोकपथम् । 'शुभमिह चामुत्र चान्वेती'त्यादौ लोके वेदे चेदमदसोर्लोकद्वये रूढिप्रदर्शनात् । आजिहीते । अन्विष्यतीत्यर्थः । 'ओहाङ् गतौ' इति धातोर्लटि 'श्लौ' इति द्विर्भावः । 'ई हल्यघोः' इतीकारः । इह नायिकावदनसौरभहेतुकस्य मधुपानामागमनस्याऽमृतपनामवाञ्छाहेतुकत्वोत्प्रेक्षणाद् गुणहेतूत्प्रेक्षा । सा च ध्रुवमिति व्यञ्जकाप्रयोगाद्वाच्या सती मधुपस्याधरोष्ठस्यासम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्त्युत्थापितेति सङ्करः । पूर्वोक्ताऽप्रकृतार्थप्रतीतिस्तु मधुपादिशब्दानामभिधया प्रकृतार्थनियन्त्रितत्वाच्छब्दशक्तिमूलो ध्वनिरेव, न श्लेष इत्यलं विस्तरेणेति ॥ ४२ ॥

इतीति ॥ इतीत्थं सख्येव जनस्तस्मिन्सखीजने वदति सति निमीलन्त्यौ भयान्मुकुलीभवन्त्यौ अत एव द्वे आवृत्ती ययोस्ते द्विगुणे द्विरावृत्ते । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती । कृते द्विगुणिते अत एव सान्द्रतरे अक्षिपक्ष्ममाले नेत्रलोमपङ्क्ती यस्याः सा । काचिदिति शेषः । अक्षिग्रहणस्य पक्ष्मद्वयद्वैगुण्यलक्ष्मीरक्ष्णोरेवेति द्योतनार्थत्वान्न पौनरुक्त्यम् । अतिभयेन भर्तुरङ्कमुत्सङ्गमपतत् प्राप्तवती । अहो ! महत्कष्टं, यत्कीटकादपि भयमित्याशङ्क्याह—अङ्गनानाम् , न तु पुंसामिति भावः । विक्लवता भीरुता गुणो भवति हि । न तु दोष इति भावः । अत एव जनसमक्षं भर्तुरङ्कारोहणमपि न दोषः । पार्श्वस्थालम्बनादीनां भयानुभावत्वात् । कुलकेऽलङ्कारोऽयमर्थान्तरन्यासः ॥ ४३ ॥

**मुखकमलकमुन्नमय्य यूना यदभिनवोढवधूर्बलादचुम्बि ॥**
**तदपि न किल बालपल्लवाग्रग्रहपरया विविदे विदग्धसख्या ॥ ४४ ॥**

**मुखेति ॥ यूना तरुणेन यत् अभिनवोढवधूः नवपरिणीताऽङ्गना मुखकमलमुन्नमय्य वदनपङ्कजमुन्नाम्य अचुम्बि हठात्कारेण चुम्बिता । तच्चुम्बनं किलेत्यलीके, विदग्धसख्या न विविदे प्रवीणवयस्यया किल तदपि न ज्ञातमिव, किंभूतया सख्या बालपल्लवाग्रग्रहपरया नवप्रवालग्रहणतत्परया । उत्प्रेक्षते—अन्यचित्तयेव न ज्ञातम् । बाला नूतनाश्च ते पल्लवाश्च किसलयानि च तेषामग्राणि उपरिभागाः तेषां ग्रहो ग्रहणं तत्र परा सक्ता तया ॥ ४४ ॥**

मुखेति ॥ यूना अभिनवोढवधूर्नवोढाऽङ्गनापि बलाद्बलात्कारात् । मुखं कमलमिवेत्युपमितसमासः । तदल्पं मुखकमलकम् । अल्पार्थे कन्प्रत्ययः । उन्नमय्योद्यम्य । 'ल्यपि लघुपूर्वात्' इत्ययादेशः । अचुम्बि चुम्बितेति यत्, तच्चुम्बनं विदग्धसख्या चतुरसख्या बालपल्लवाग्राणां ग्रहो ग्रहणम् । 'ग्रहवृदृनिश्चिगमश्च' इत्यप्प्रत्ययः । तत्परया तदासक्तया सत्या । कश्चिद्व्यासङ्गं कल्पयन्त्येत्यर्थः । न विविदे अपि किल न प्रकाशितमिति किमुत वक्तव्यमित्यपिशब्दार्थः । किलेत्यलीके । वस्तुतो विदित्वाऽप्यविदितेव स्थितं वैदग्ध्यात् । अन्यथा तयोर्विस्रम्भविहारविघातादिति भावः । मुग्धेयं नायिका । 'उदययौवना मुग्धा लज्जापिहितमन्मथा' इति लक्षणात् ॥ ४४ ॥

**व्रततिविततिभिस्तिरोहितायां प्रतियुवतौ वदनं प्रियः प्रियायाः ॥**
**यदधय(१)दधराऽवलोपनृत्यत्करवलयस्वनितेन तद्विवव्रे ॥ ४५ ॥**

**व्रततीति ॥ प्रियो वल्लभायाः वदनमधयत् वक्त्रं पपौ आस्वादयत् । कस्यां सत्यां प्रतियुवतौ सपत्न्यां व्रततिविततिभिः लतापङ्क्तिभिः तिरोहितायामाच्छादितायां सत्याम् । तत् वदनपानम् अधरावलोपनृत्यत्करवलयस्वनितेन विवव्रे प्रकटितम् । अधरस्य**

---

( १ ) यदधय० ।

ओष्ठस्य अवलोपः खण्डनं तेन नृत्यन्तौ चलन्तौ परिभ्रमन्तौ यौ करौ तयोर्वलयानि कङ्कणानि तेषां स्वनितं ध्वनितं तेन विवृतम्, ओष्ठखण्डनचलद्भुजकङ्कणध्वनितेन प्रकाशितम् । उक्तं च—'सन्दष्टेऽधरपल्लवे सचकितं हस्ताग्रमाधुन्वती'त्यादि ॥ ४९ ॥

व्रततीति ॥ प्रतिकूला युवतिः प्रतियुवतिः सपत्नी तस्यां व्रततिविततयो लताजालानि । 'वल्ली तु व्रततिर्लता' इत्यमरः । ताभिस्तिरोहितायां सत्यां प्रियः प्रियाया वदनमधयदपिबदिति यत् । धेटो गौवादिकाल्लङ् । तद्वदनपानमधरावलोपेनाधरखण्डनेन । तज्जनितव्यथयेत्यर्थः । नृत्यतोश्चलतोः करयोर्वलयानां कङ्कणानां स्वनितेन ध्वनिना विवव्रे विवृतम् । तदेव तस्यास्तदनुमापकमभूदित्यर्थः । अत्रैका दृष्टा, अपरा त्वीर्ष्यानिवेदवतीत्यनुसन्धेयम् ॥ ४५ ॥

विलसितमनुकुर्वती पुरस्ताद्धरणिरुहाधिरुहो वधूर्लतायाः ॥
रमणमृजुतया पुरः सखीनामकलितचापलदोषमालिलिङ्ग ॥ ४६ ॥

विलसितमिति ॥ वधूः अङ्गना सखीनां पुरः वयस्यानां प्रत्यक्षमेव रमणमालिलिङ्ग वल्लभं परिष्वजति स्म । कथं यथा भवति अकलितचापलदोषं यथा भवत्येवम् अकलितः न ज्ञातः चापलदोषः चपलत्वमेव दोषो गुणाभावो यत्र क्रियायां तद्यथा भवत्येवम् अज्ञातचपलत्वदोषं यथा स्यात्तथा, कया ऋजुतया प्राञ्जलत्वेन, किं कुर्वती वधूः पुरस्तात् अग्रे वर्तमानाया लताया वल्ल्याः विलसितं विलासमनुकुर्वतीव । वल्ल्याः सादृश्यं भजन्तीत्यर्थः। किंभूतायाः लतायाः धरणिरुहाधिरुहः धरणिरुहं भूरुहमधिरोहति तिष्ठतीति धरणिरुहाधिरुट् तस्याः वृक्षाधिरूढायाः । यथा वल्लीकया तरुरालिङ्गितः तथा स्वकान्त इत्यर्थः ॥ ४६ ॥

विलसितमिति ॥ वधूः काचित्स्त्री पुरस्तादग्रे धरणिरुहमधिरोहतीति धरणिरुहाधिरुट् वृक्षाधिरूढा । रुहेः क्विप् । तस्या लताया विलसितं चेष्टितम् । भावे क्तः । अनुकुर्वती एवमित्याश्लेषप्रकारमभिनयन्ती ऋजुतया अकुटिलबुद्धितया सखीनां पुरोऽग्रे अकलितोऽविचारितश्चापलमनुचितकरणमेव दोषो यस्मिन्कर्मणि तद्यथा तथा रमणं प्रियमालिलिङ्ग । एषा हर्षौत्सुक्यवती प्रौढा च ॥ ४६ ॥

सललितमवलम्ब्य पाणिनांसे सहचरमुच्छ्रितगुच्छवाञ्छयाऽन्या ॥
सकलकलभकुम्भविभ्रमाभ्यामुरसि रसादवतस्तरे स्तनाभ्याम् ॥४७॥

सललितमिति ॥ अन्या काचिन्नायिका सहचरं कान्तं स्तनाभ्यां कुचाभ्याम् अवतस्तरे आच्छादयामास । क उरसि वक्षःस्थले, कस्मात् रसात् आसक्तिवशात्, किंभूताभ्यां स्तनाभ्यां सकलकलभकुम्भविभ्रमाभ्यां सम्पूर्णगजशावककुम्भस्थलविशालाभ्यां, किं कृत्वा सललितं सविलासं यथा भवत्येवं पाणिना निजहस्तेन अंसे पतिस्कन्धे अवलम्ब्य विलग्य, कया उच्छ्रितगुच्छवाञ्छया उन्नतपुष्पगुलुच्छग्रहणाभिलाषेण । 'स्कन्धो भुजशिरोंऽसोऽस्त्री', 'स्तबको गुच्छको गुच्छः' इत्यमरः ॥ ४७ ॥

सललितमिति ॥ अन्या स्त्री उच्छ्रितगुच्छवाञ्छया उन्नतस्तम्बकजिघृक्षया सललितं सविलासं यथा तथा सहचरं प्रियं पाणिना, औचित्याद्वामेनेति शेषः । अंसेऽवलम्ब्यावष्टभ्य सकलयोः समग्रयोः कलभकुम्भयोः करिकुम्भयोर्विभ्रम इव विभ्रमः सौन्दर्यं ययोस्ताभ्यां स्तनाभ्यां रसाद्रागादुरस्यवतस्तरे आच्छादयामास । सहचरमित्यनुषङ्गः । अभिमुखावस्थानादिति भावः । स्तृणातेः कर्तरि लिट् । ऋतश्च संयोगादेर्गुणः, 'शर्पूर्वाः खयः' इत्यभ्याससकारलोपश्च । इयं च प्रौढैव ॥ ४७ ॥

मृदुचरणतलाग्रदुःस्थितत्वादसहतरा कुचकुम्भयोर्भरस्य ॥
उपरि निरवलम्बनं प्रियस्य न्यपतदथोच्चतरूच्चिकीषया(१)ऽन्या ॥ ४८ ॥

---

(१) ०तरोच्चिचीषया ।

**मृदुचरणेति** ॥ अन्या काचिदङ्गना प्रियस्य कान्तस्योपरि निरवलम्बनं निराधारं यथा भवत्येवं न्यपतत् निपपात । कया उच्चतरूच्चिकीषया उन्नतवृक्षावचेतुमिच्छया, उच्च उन्नतो यः तरुर्वृक्षस्तस्य उच्चिकीषा उच्चेतुमिच्छा तया । पतने किं कारणं, किंभूता सा कुचकुम्भयोर्भरस्य असहतरा स्तनकलशयोर्भारस्य वहनाय असमर्था, कस्मात् मृदुचरणतलाग्रदुःस्थितत्वात् कोमलपादतलाग्रेण स्थातुमशक्यत्वात्, मृदुनी कोमले च ते चरणतले पादतले च तयोरग्रे पुरोभागौ ताभ्यां दुःस्थितत्वं स्थातुमशक्यत्वं तस्मात् । उन्नतपुष्पावचयं कुर्वती स्तनभारेण निराधारं प्रियस्योपरि पपातेत्यर्थः ॥ ४८ ॥

मृदुचरणेति ॥ अन्या स्त्री उच्चतराणामत्युन्नतकुसुमानामुच्चेतुमवचेतुमिच्छया उच्चतरोच्चिचीषया । चिनोतेः सन्नन्तात् स्त्रियामप्रत्यये टाप् । 'विभाषा चेः' इति कुत्वाविकल्पः । मृदुचरणतलाग्रेण दुःस्थितत्वात् दुःखेन स्थितत्वात्कुचकुम्भयोर्भरस्य । 'पुंसि संज्ञायां घः प्रायेण' इति घप्रत्ययः । न सहतेऽत्यन्तमित्यसहतरा । सहेः पचाद्यजन्तान्नञ्समासात्तरप्प्रत्ययः । भरमसहमानेत्यर्थः । कृद्योगात्कर्मणि षष्ठी । अथास्मिन्नवसरे निरवलम्बनं यथा तथा प्रियस्योपरि न्यपतत् । निरवलम्बनत्वान्निपपातेत्यर्थः । एषा च प्रौढा । स्वभावोक्तिरलङ्कारः ॥४८॥

उपरिजतरुजानि याचमानां कुशलतया परिरम्भलोलुपोऽन्यः ॥
प्रथितपृथुपयोधरं(१) गृहाण स्वयमिति मुग्धवधूमुदास दोर्भ्याम् ॥४९॥

**उपरिजेति** ॥ अन्यः कश्चिद्विलासी मुग्धवधूमप्रगल्भाङ्गनाम् इति हेतोर्दोर्भ्याम् उदास बाहुभ्यामुच्चिक्षेप ऊर्ध्वां चकार । कथं प्रथितपृथुपयोधरं यथा भवति प्रथितौ विस्तारितौ पृथू स्थूलौ पयोधरौ स्तनौ यस्यां क्रियायां तत् विस्तारितगुरुस्तनं यथा भवति, किंभूतां मुग्धवधूम् उपरिजतरुजानि याचमानाम् उपरि अग्रे जातानि उपरिजानि एवंभूतानि यानि तरुजानि पल्लवपुष्पाणि उपरिजतरुजानि प्रार्थयन्तीम् । इतीति किम् उदास-यत्, स्वयं गृहाण आत्मनैव आदेहि इति । यतः किंलक्षणोऽन्यः कुशलतया प्रावीण्येन परिलम्भलोलुपः आलिङ्गनोत्सुकः ॥ ४९ ॥

उपरिजेति ॥ उपरिजान्युपरि जातानि तरोर्जातानि तरुजानि कुसुमानि तानि याचमानां अपचित्य देहीति प्रार्थयमानां प्रथितपृथुपयोधरां प्रशस्तपीवरकुचां मुग्धवधूमकुटिलधियं स्त्रियं परिरम्भलोलुप आश्लेषलालसोऽन्यः कुशलतया वञ्चनापटुतया स्वयं गृहाण । त्वमेवापचिनुष्वेत्यर्थः । इति गम्यमानार्थत्वात् उक्त्वेति न प्रयुक्तं पौनरुक्त्यात् । दोर्भ्यामुदासोच्चच्छाति स्म । अयं चैकायत्तत्वादनुकूलयनायकः । नायिका तु स्वाधीनपतिका प्रौढा च ॥ ४९ ॥

इदमिदमिति भूरुहां प्रसूनैर्मुहुरभि(२)लोभयता पुरःपुरोऽन्या ॥
अनुरहसमनायि नायकेन त्वरयति रन्तुमहो ! जनं मनोभूः ॥ ५० ॥

**इदमिदमिति** ॥ नायकेन भर्त्रा अन्या काचिदङ्गना अनुरहसमनायि अत्यन्तं रहो निन्ये अत्येकान्तं प्रापिता । किं कुर्वता नायकेन मुहुर्वारंवारं भूरुहां वृक्षाणां प्रसूनैः पुष्पैः इति अमुना प्रकारेण अभिलोभयता विप्रतारयता । इतीति किं—पुरःपुरः अग्रे अग्रे इदं रम्यमिदं रम्यतरं ग्रहीतव्यमिति । अत्रार्थान्तरन्यासः—अहो इत्याश्चर्ये, यत् मनोभूः कन्दर्पः जनं लोकं रन्तुं त्वरयति क्रीडितुमुत्सुकयति, तत् युक्तमेव ॥ ५० ॥

इदमिदमिति ॥ अन्या स्त्री इदमिदमिति, इदं ग्राह्यमिदं ग्राह्यमित्युक्त्वेत्यर्थः । भूरुहां वृक्षाणां प्रसूनैः पुष्पैः पुरःपुरो मुहुरतिलोभयता प्रलोभयता नायकेन रहोऽनु अनुरहसमेकान्तम् । 'अन्ववतप्तात्–' इत्यव्ययी-

(१) पयोधरां । (२) ०राति० ।

भावसमासान्तः । अनायि नीता । तथा हि—मनोभूः कामो जनं रन्तुं त्वरयति । देशकालाऽनपेक्षयेति भावः । अत एवाश्चर्यमहो इति । पूर्ववन्नायिकानायकविवेकः । अर्थान्तरन्यासः ॥ ५० ॥

**विजनमिति बलादमुं गृहीत्वा क्षणमथ वीक्ष्य विपक्षमन्तिकेऽन्या ॥**
**अति(१)पतितुमना लघुत्वभीतेरभवदमुञ्चति वल्लभेऽतिगुर्वी ॥ ५१ ॥**

विजनमिति ॥ काचिन्नायिका वल्लभे कान्ते अमुञ्चति सति परिगृह्य रक्षति सति अतिगुर्वी अभवत् बहुमानपात्रं जाता । किंभूता अन्या अतिपतितुं ततो यातुं मनो मानसं यस्याः सा गन्तुमिच्छन्ती, कुतः लघुत्वभीतेः अपमानभयात् ,किं कृत्वा अमुं कान्तम् इति कारणाद्बलादौत्सुक्येन गृहीत्वा परिगृह्य, इतीति किं—यत् , विजनमेतत् एकान्तमिदम् , अपरं किं कृत्वा अथाऽनन्तरम् अन्तिके समीपे क्षणं मुहूर्तं विपक्षं जनं वीक्ष्य सपत्नीजनमालोक्य, अत एव गन्तुमनाः । यदा चासौ वल्लभेन मुक्ता तदा बहुमानपात्रं जातेत्यर्थः ॥ ५१ ॥

विजनमिति ॥ अन्या स्त्री विजनमेकान्तमिति हेतोरमुं वल्लभं क्षणं बलाद् गृहीत्वा आकृष्य अथान्तिके विपक्षं सपत्नीजनं वीक्ष्य लघुत्वभीतेस्तुच्छत्वभयादभिपतितुं मनो यस्याः सा अभिपतितुमनाः । 'तुं काममनसोरपि' इति मकारलोपः । अपसर्तुकामेत्यर्थः । वल्लभे अमुञ्चति अत्यजति सति । तस्य विपक्षाऽनवेक्षणादिति भावः । अतिगुर्वी अतिगौरववत्यभवत् । स्वयङ्ग्रहलाघवतिरोधानाद्भर्तृवल्लभत्वप्रकाशनाच्चेति भावः । भाग्यवतां सर्वं श्रेयसे भवतीति रहस्यम् । एषा त्वतिप्रगल्भैव ॥ ५१ ॥

**अधिरजनि जगाम धाम तस्याः प्रियतमयेति रुषा स्रजाऽवनद्धः ॥**
**पदमपि चलितुं युवा न सेहे किमिव न शक्तिहरं ससाध्वसानाम् ॥५२॥**

अधिरजनीति ॥ युवा तरुणः पदमपि चलितुं न सेहे क्रममात्रमपि गन्तुं न समर्थो बभूव । किंलक्षणो युवा प्रियतमया कान्तया रुषा कोपेन इति हेतुना स्रजा अवनद्धः मालया बद्धः, इतीति किं—यतः कारणात् सः अधिरजनि रजन्यां तस्याः सपत्न्याः धाम जगाम आस्पदं गतवान् । युक्तोऽयमर्थः, यतः कारणात् ससाध्वसानां सभयानां किमिव किं न शक्तिहरम् । अत एव सभयानां सर्वमेव शक्तिहरमित्यर्थः ॥ ५२ ॥

अधिरजनीति ॥ अधिरजनि रजन्याम् । विभक्त्यर्थेऽव्ययीभावः । तस्याः, सपत्न्या इत्यर्थः । बुद्धिस्थत्वान्नामग्रहणासहत्वाच्च तच्छब्देन निर्देशः । धाम गृहं जगामेति रुषा हेतुना प्रियतमया कर्त्र्या स्रजा करणेन अवनद्धो युवा पदमपि । अत्यन्तसंयोगे द्वितीया । चलितुं न सेहे न शशाक । तथा हि—ससाध्वसानां भयग्रस्तानां किमिव किं वा । इवशब्दो वाक्यालङ्कारे । इवेति ईषदर्थोपमोत्प्रेक्षावाक्यालङ्कारेष्विति गणव्याख्याने । शक्तिं हरतीति शक्तिहरम् । 'हरतेरनुद्यमनेऽच्' इत्यच्प्रत्ययः । न भवतीति शेषः । अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीति वचनात् । भवन्तीति लटः पूर्वाचार्याणां संज्ञा । सर्वस्यापि भीरूणां शक्तिहरत्वादबलाकृतः स्रग्बन्धोऽपि यूनः शक्तिहर इति युक्तमिति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । खण्डितेयं नायिका । 'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति लक्षणात् । नायकस्तु दक्षिणः । 'भयसम्बन्धसहनादिभिस्तुल्यो नैकत्र दक्षिण' इति लक्षणार्थप्रतीतेरिति ॥ ५२ ॥

चतुर्भिः कलापकम्—

**न खलु वयममुष्य दानयोग्याः पिबति च पाति च याऽसकौ रहस्त्वाम् ॥**
**व्रज विटपममुं ददस्व तस्यै भवतु यतः सदृशोश्चिराय योगः ॥ ५३ ॥**
**तव कितव ! किमाहितैर्वृथा नः क्षितिरुहपल्लवपुष्पकर्णपूरैः ॥**
**ननु जनविदितैर्भवद्व्यलीकैश्चिरपरिपूरितमेव कर्णयुग्मम् ॥ ५४ ॥**

---

(१) अभि० ।

**मुहुरुपहसितामिवालिनादैर्वितरसि नः कलिकां किमर्थमेनाम् ॥**
**वसतिमुपगतेन धाम्नि तस्याः शठ ! कलिरेव(१) महांस्त्वयाऽद्य दत्तः ॥५५॥**
**इति गदितवती रुषा जघान स्फुरितमनोरमपक्ष्मकेसरेण ॥**
**श्रवणनियमितेन कान्तमन्या सममसिताम्बुरुहेण चक्षुषा च ॥ ५६ ॥**

**न खल्वित्यादि ॥ इतीति ॥** अन्या काचिन्नायिका तं वल्लभम् असिताम्बुरुहेण कृष्णकमलेन च अपरं चक्षुषा नेत्रेण च समं युगपदेव जघान ताडयामास। कमलेन जघान चक्षुषा वक्रेण तं व्यलोकयदित्यर्थः। किंभूतेन असिताम्बुरुहेण श्रवणनियमितेन कर्णारोपितेन, किंभूतेन चक्षुषा श्रवणनियमितेन कर्णान्तं प्रापितेन, अपरं किंभूतेन असिताम्बुरुहेण स्फुरितमनोरमपक्ष्मकेसरेण विकसितमनोज्ञपत्रमकरन्दयुतेन स्फुरिता विकसिता मनोरमा मनोज्ञाः पक्ष्मसु पत्रेषु केसरा मकरन्दा यस्य तत् तेन, चक्षुःपक्षे स्फुरिताः प्रस्पन्दमाना मनोरमा अतिसुन्दराः पक्ष्माण्येव तनुलोमान्येव केसराः किञ्जल्का यस्य तत्तेन, किंलक्षणा सा रुषा कोपेन इति गदितवती जल्पितवती। **न खल्विति ॥** इति किं जल्पितवती—यत्, हे कितव ! हे शठ ! त्वं व्रज गच्छ, अमुं विटपं पल्लवं तस्यै ददस्व देहि। विटैः पीयते इति विटपः तम्। तस्यै कस्यै या असकौ कुत्सिता रण्डा रहः एकान्ते तं पिबति, अपरं त्वां पाति अस्मत्संयोगात् रक्षति। असकौ कुत्सिता, खलु निश्चितम्। वयम् अमुष्य विटपस्य दानयोग्याः न दानाय योग्याः न विश्राणनाय अधिकारिणो न भवेम। यतः कारणात् सदृशोस्तुल्ययोः चिराय चिरकालं योगः संयोगो भवतु अस्तु। विटैः भृङ्गैः पीयते इति विटपः शाखाविशेषः। विटं षिड्गं त्वां पाति रक्षति विटपा सा। विटपविटपयोः संयोगो भवत्येव। **तव कितवेति ॥** इतीति किं गदितवती ! हे कितव ! क्षितिरुहपल्लवपुष्पकर्णपूरैः वृक्षप्रवालकुसुमयोरवतंसैः नोऽस्माकं वृथा आहितैः निष्फलमारोपितैः किं प्रयोजनं क उपयोगः। क्षितिरुहाणां वृक्षाणां पल्लवपुष्पाणि तैः कर्णपूराः कर्णाभरणानि तैः। 'उत्तंसश्चाऽवतंसश्च कर्णपूरे च तावुभौ' इत्यमरः। ननु अहो शठ ! (२) भवद्व्यलीकानि तैः, किंलक्षणैर्भवद्व्यलीकैः जनविदितैः जनैर्लोकैः विदितातिनि ज्ञातानि तैः लोकप्रसिद्धैः, कर्णयुग्मं चिरपरिपूरितमेव। **मुहुरिति ॥** इतीति किं गदितवती-यत्, हे शठ ! त्वं नोऽस्मभ्यम् एनां कलिकां किमर्थं वितरसि ददासि। किंभूतां कलिकां मुहुर्वारंवारम् अलिनादैः भृङ्गध्वनिभिः उपहसितामिव, विकसितामिवेत्यर्थः। यतः कारणात् हे शठ ! हे धूर्त कान्त ! त्वया नोऽस्मभ्यं महान् अतिशयवान् कलिरेव कलह एव प्रदत्तः अदायि। यतः स्वल्पा कलिः कलिकोच्यते। तदा महाकलिदाने कलिकादानं वृथेत्यर्थः। यतः किंलक्षणेन त्वया प्रसभं हठात् तस्या मम सपत्न्या धाम स्थानमुपगतेन प्राप्तेन। इति जल्पित्वा सक्रोधं दृष्ट्या कमलेन ताडित इत्यर्थः। चतुर्भिः कलापकम् ॥५३-५६॥

अथ काचित्खण्डिता निजकान्तमागस्कारिणं पल्लवदानेन प्रसादयन्तं चतुर्भिर्भर्त्सयितुमारभते—

**न खल्विति ॥** वयममुष्य दानयोग्या न भवामः खलु, किन्तु या असावेवाऽसकौ त्वत्प्रिया। 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इत्यकच्। रहो रहसि। 'रहश्चोपांशु चालिङ्गे' इत्यमरः। त्वां पिबति पानं करोति। पा पाने भौवादिकात्कर्तरि लट्। 'पाघ्रा-'इत्यादिना पिबादेशः। पाति रक्षति च। अन्यतो वारयति

(१) कलिरेष। (२) अत्र ग्रन्थांशस्त्रुटित इति प्रतीयते।

चेत्यर्थः । पा रक्षणे, अदादित्वाच्छपो लुक् । तस्यै अमुं विटान्पातीति विटपं पल्लवम् । 'विटपः पल्लवे षिङ्गे' इति विश्वः । ददस्व प्रयच्छ । 'दद दाने' इति भौवादिकाल्लोट् । व्रज गच्छ । यतो दानाच्चिराय चिरकालात् । चिरार्थेऽव्ययम् । सदृशोरनुरूपयोर्योगो भवतु । उभयोरपि विटपत्वादिति भावः । समालङ्कारोऽयम् । 'सा समालङ्कृतिर्योगो वस्तुनोरनुरूपयोः' इति लक्षणात् ॥ ५३ ॥

तवेति ॥ हे कितव ! धूर्त ! वृथा व्यर्थमेवाऽऽहितैः । तत्कार्यस्यान्यथासिद्धत्वादिति भावः । तव सम्बन्धिभिः क्षितिरुहाणां पल्लवाः पुष्पाणि च तान्येव कर्णं पूरयन्तीति कर्णपूराः कर्णावतंसाः । कर्मण्यण् । तैर्नोऽस्माकं किं तत्साध्यम् । न किञ्चिदस्तीत्यर्थः । गम्यमानसाधनक्रियापेक्षया कर्णपूराणां करणत्वात्तृतीया । उक्तं च न्यासोद्द्योते—'न केवलं श्रूयमाणैव क्रिया निमित्तं कारकभावस्य, अपि तु गम्यमानाऽपि' इति । किन्तु नन्वङ्ग ! जनविदितैर्जनेष्वतिप्रसिद्धैः । जनेषु विदितैरिति सप्तमीसमासः । 'क्तस्य च वर्तमाने' इति कृयोगे षष्ठीप्रतिप्रसवत्वेऽपि 'क्तेन च पूजायाम्' इति षष्ठीसमासनिषेधाज्जनानामाधारत्वविवक्षायां तदप्राप्तेः । भवद्व्यलीकैस्तवाऽप्रियवचनैः कर्णयुग्मं चिरपरिपूरितं नित्यं पूर्णमेव । अतः परिपूरितस्य पूरणायोगादलमेभिरित्यर्थः । अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुत्वेनोपनिबन्धाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥५४॥

मुहुरिति ॥ अलिनादैर्मुहुरुपहसितां प्रतारणार्थेति प्रहस्यमानामिव स्थितामेनां कलिकां कोरकम् अल्पं कालिं कलहं च । 'कलहे च युगे कलिः' इति वैजयन्ती । स्त्रीप्रत्ययस्त्वविवक्षितः श्लेषे । नाऽस्माकं किमर्थं वितरसि । हे शठ ! गूढविप्रियकारिन् ! तस्यास्त्वत्प्रियाया धाम्नि भवने वसतिं स्थितिमुपगतेन त्वयाऽद्यैव वर्तमानो महान्कलिः कलहो दत्तः । स्वदत्त एव महति कलौ स्थिते किं कल्यन्तरेणेत्यर्थः । अत्रापि पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गं कलिकामिति श्लेषोत्थापितया कोरककलहयोर्भेदे अभेदरूपातिशयोक्त्याऽनुप्राणितमिति सङ्करः ॥ ५५ ॥

इतीति ॥ इतीत्थं गदितवत्युक्तवती अन्या स्त्री रुषा कान्तं, स्फुरितान्युज्ज्वलानि मनोरमाणि च पक्ष्माणीव केसराणि, अन्यत्र केसराणीव पक्ष्माणि यस्य तेन श्रवणनियमितेन श्रोत्रे धृतेन निरुद्धेन च आसिताम्बुरुहेण नीलोत्पलेन चक्षुषा च समं युगपज्जघान ताडयामास । एषा खण्डिता । नायकस्तु धृष्टः । 'व्यक्ताङ्गो निर्भयो धृष्टः' इति लक्षणात् । अत्र स्फुरितेत्यादितुल्यधर्मगम्योपमानयोरासिताम्बुरुहचक्षुषोरुभयोरपि ताडनसाधनतयोपात्तत्वेन प्रकृतत्वात्केवलप्रकृतास्पदा तुल्ययोगिता । लक्षणं तूक्तम् ॥ ५६ ॥

**विनयति सुदृशो दृशः परागं प्रणयिनि कौसुममाननाऽनिलेन ॥**
**तदहितयुवतेरभीक्ष्णमक्ष्णोर्द्वयमपि रोषरजोभिरापुपूरे ॥ ५७ ॥**

**विनयतीति ॥ तत् तस्मात् कारणात् अहितयुवतेः अहिता द्वेषिणी चासौ युवतिश्च तस्याः सपत्न्याः अक्ष्णोर्द्वयमपि नयनयोर्युगलमपि अभीक्ष्णम् अतिशयेन रजोभिः कोपरेणुभिः आपुपूरे आपूरितम् । क्व सति प्रणयिनि भर्तरि कौसुमं परागं कुसमसम्बन्धिनं रेणुं सुदृशोऽङ्गनायाः दृशः लोचनात् विनयति सति स्फेटयति सति, केन आननाऽनिलेन मुखमारुतेन । रोषवशात् सपत्नीं प्रति कान्तं द्रष्टुं न शशाकेत्यर्थः ॥ ५७ ॥**

विनयतीति ॥ प्रणयिनि प्रिये सुदृशः प्रियायाः दृशो लोचनात् । एकस्मादेवेति भावः । कुसुमेषु भवं कौसुमं परागं रजःकणम् । तच्चैकमेवेति भावः । आननाऽनिलेन निजमुखफूत्कारेण विनयत्यपनयति सति, तदहितयुवतेः तत्सपत्न्याः अक्ष्णोर्द्वयमपि । न त्वेकमेवेति भावः । रोषा एव रजांसि तैरभीक्ष्णमापुपूरे । नैकेन रजःकणेन किञ्चित्स्पृष्टमात्रमिति भावः । पूरयतेः कर्मणि लिट् । पूर्णमित्यर्थः । अत्र रजोविनयस्याऽन्यत्र रजःपूरणकारणत्वायोगादकारणत्वमेव पूरणमिति विभावनालङ्कारो रूपकानुप्राणित इति सङ्करः॥५७॥

**स्फुटमिदमभिचारमन्त्र एष(१) प्रतियुवतेरभिधानमङ्गनानाम् ॥**
**परतनुरमुनोपहूय पत्या मृदुकुसुमेन यदाहताऽप्यमूर्छत् ॥ ५८ ॥**

---

(१) एव ।

**स्फुटमिति** ॥ स्फुटमिति उत्प्रेक्षायाम्, स्फुटमङ्गनानां स्त्रीणाम् एष अभिचारमन्त्रः एष उच्चाटनमन्त्र एव, अभिचाराय हिंसायै मन्त्रः अभिचारमन्त्रः हिंसामन्त्र एव । एष कः प्रतियुवतेः सपत्न्याः इदमभिधानं नाम । सपत्नीनां नाम स्त्रीणामुच्चाटनतुल्यमित्यर्थः। यत् वरतनुः शोभनगात्री अङ्गना पत्या वल्लभेन अमुना सपत्नीनाम्ना उपहूय आकार्य मृदुकुसुमेनापि कोमलपुष्पेणापि आहता ताडिता सती अमूर्च्छत् मूर्च्छां प्रापत् । अनेन दृष्टान्तेन सपत्नीनामुच्चाटनमन्त्र इति भावः ॥ ५८ ॥

स्फुटमिति ॥ इदं प्रतियुवतेः सपत्न्या अभिधानं नामधेयम् । अङ्गनानामभिचारः परमारणकर्म । यथा—'श्येनेनाऽभिचरन्यजेते'ति । तस्य मन्त्रोऽभिचारमन्त्रः स एव स्फुटमित्युत्प्रेक्षा । यद् यस्माद्वरतनुः स्त्री पत्या भर्त्रा अमुना सपत्नीनामधेयेनोपहूय मृदुकुसुमेन । मृदुग्रहणमचिरावचितत्वं द्योतयत् देवताभिचारमन्त्राणामनादिसंस्कारभावं द्योतयति । तेनाऽभ्याहता अमूर्छत् । यदुच्चारणपूर्वकं कुसुमताडनमपि मारकं, सोऽभिचारमन्त्र एव सत्यम् । अन्यथा केवलकुसुमेऽपि तत्प्रसङ्गादित्यर्थः ॥ ५८ ॥

**समदनमवतंसितेऽधिकर्णं प्रणयवता कुसुमे सुमध्यमायाः ॥**
**व्रजदपि लघुतां बभूव भारः सपदि हिरण्मयमण्डनं सपत्न्याः ॥५९॥**

**समदनमिति** ॥ सपत्न्याः प्रतियुवतेः हिरण्मयमण्डनं सौवर्णाभरणं सपदि वेगेन भारो बभूव उद्वेगात् वोढुमशक्यं जातम् । तर्हि गुरुतरं भविष्यतीत्याशङ्क्याह—किं कुर्वत् हिरण्मयमण्डनं लघुतां व्रजदपि लघुत्वं प्राप्तवदपि । तदा उद्वेगे किं कारणं, क्व सति प्रणयवता स्नेहवता वल्लभेन सुमध्यमायाः कृशोदर्याः अधिकर्णं कर्णे कुसुमे अवतंसिते सति पुष्पे ऽवतंसीकृते सति, कथं समदनं सह मदनेन वर्तते इति समदनं सकामं साभिलाषं यथा भवत्येवम् । सुवर्णाभरणैरपि किं प्रयोजनं, कान्तन्यस्तं कुसुममपि प्रधानमित्यर्थः । 'उत्तंसश्चाऽवतंसश्च कर्णपूरे च तावुभौ' इत्यमरः॥ ५९ ॥

समदनमिति ॥ प्रणयवता प्रियेण सुमध्यमायाः प्रियाया अधिकर्णं कर्णे । विभक्त्यर्थेऽव्ययीभावः । कुसुमे समदनं यथा तथा अवतंसितेऽवतंसीकृते सति सपदि लघुतां हीनतामगुरुत्वं च व्रजदपि समान एकः पतिर्यस्यास्तस्याः सपत्न्याः । 'नित्यं सपत्न्यादिषु' इति ङीप् नकारश्च । तस्मादेव निर्देशात्समानशब्दस्य सभावनिपातः । हिरण्यस्य विकारो हिरण्मयम् । 'दाण्डिनायन—' इत्यादिना निपातः । तन्मण्डनं भारो बभूव । यत्किञ्चिदपि प्रेम्णा कान्तेन स्वहस्तदत्तं श्लाघ्यं मण्डनं भवति । अन्यन्महार्घमपि हीनं भारश्च न तु मण्डनमित्यर्थः । लघुगुरुत्वगुणविरोधस्य हीनार्थत्वेन परिहाराद्विरोधाभासभेदः ॥ ५९ ॥

**अवजितममुना(१) तवाऽहमक्ष्णा रुचिरतयेत्यवनम्य लज्जयेव ॥**
**श्रवणकुवलयं विलासवत्या भ्रमररुतैरुपकर्णमाचचक्षे ॥ ६० ॥**

**अवजितमिति** ॥ विलासवत्याः विलासिन्याः अङ्गनायाः श्रवणकुवलयं कर्णेन्दीवरम् उपकर्णं कर्णे लगित्वा इति आचचक्षे इव इत्युवाचेव । इतीति किं—यत, हे विलासवति ! अहं तव अमुना अक्ष्णा नेत्रेण अवजितं पराभूतं निर्जितम् अधःकृतं, कया रुचिरतया रम्यत्वेन, किं कृत्वा आचचक्षे अवनम्य नम्रीभूय । उत्प्रेक्षते--लज्जयेव व्रीडयेव विनम्रमुखं, कैरुवाच भ्रमररुतैः भृङ्गस्वनैः । अन्योऽपि यः किल केनाप्यवजीयते स व्रीडया अवनतवदनो भवतीत्युक्तिः ॥ ६० ॥

अवजितमिति ॥ विलासवत्याः स्त्रियः श्रवणकुवलयं श्रवणोत्पलं कर्तृ अहमधुना तवाक्ष्णो रुचिरतया ।

(१) ०मधुना तवाहमक्ष्णो० ।

रुचिरस्य भावो रुचिरता । भावे तल् । तया सौन्दर्येणावजितमिति वक्ष्यमाणानुवादः । अत एव लज्जयाऽवनम्य भ्रमररुतैः । तन्मिषेणेत्यर्थः । उपकर्णं कर्णे । विभक्त्यर्थेऽव्ययीभावः । आचचक्ष इवेत्युत्प्रेक्षा ॥ ६० ॥

**अवचितकुसुमा विहाय वल्लीर्युवतिषु कोमलमाल्यमालिनीषु ॥**
**पदमुपदधिरे कुलान्यलीनां न परिचयो मलिनात्मनां प्रधानम् ॥६१॥**

**अवचितेति ॥** अलीनां कुलानि भ्रमराणां वृन्दानि युवतिषु विषये पदम् उपदधिरे स्थानं चक्रिरे । तासु अङ्गनासु उपविष्टानीत्यर्थः । किं कृत्वा वल्लीर्विहाय लताः परित्यज्य, किंभूता लताः अवचितकुसुमाः चुण्टितप्रसूनाः, अवचितानि गृहीतानि कुसुमानि पुष्पाणि याभ्यस्ताः, किंलक्षणासु युवतिषु कोमलानि मृदुलानि च तानि माल्यानि पुष्पाणि च कोमलमाल्यानि तानि मलन्ते धारयन्तीत्येवंशीलाः कोमलमाल्यमालिन्यः तासु मालिनीषु । अत्र मल मल्ल धारणे, णिनू प्रत्ययः । अत्रार्थान्तरं न्यसति—यतः कारणात् मलिनात्मनां मलीमसानां परिचयः संस्तवः न प्रधानं न मुख्यः । मलिनाः स्नेहेन न गृह्यन्ते इत्यर्थः । किल भ्रमरा मलिनतनवः कृष्णशरीराः सन्तीत्यर्थः । यतो मलिनात्मनां मलिनचित्तानां कृतघ्नानां संस्तवः प्रधानं न भवति । यत्रैव हि तेषां स्वार्थसिद्धिः तत्रैव तेषां रतिरित्यर्थः । 'संस्तवः स्यात्परिचयः' ॥ ६१ ॥

**अवचितेति ॥** अलीनां कुलानि अवचितानि युवतिभिरुपात्तानि कुसुमानि यासां ताः । रिक्ता इत्यर्थः । वल्लीः पुष्पलता विहाय कोमलानि माल्यानि मलन्ते धारयन्तीति तासु कोमलमाल्यमालिनीषु । 'मल मल्ल धारणे' इति धातोर्णिनिः, ऋन्नेभ्यो ङीप् । युवतिषु पदमुपदधिरे निदधुः । तथा हि—मलिनात्मनां कृष्णदेहानां दुष्टचित्तानां च परिचयश्चिरकालसाहचर्यं न प्रधानं न प्रयोजकं, किन्तु भुक्तिरेवेति भावः । अतः परिचितलतात्यागो नाश्चर्यमित्यर्थः । अत्र मलिनात्मनामिति कृष्णाङ्गत्वस्य दुष्टचित्तत्वेन सहाभेदाध्यवसायेनार्थान्तरन्यासस्योत्थापनात् श्लेषप्रतिभोत्थापिताऽतिशयोक्त्यनुप्राणितोऽयमिति सङ्करः ॥ ६१ ॥

इतः सप्तभिः कुलकम्—

**श्लथशिरसिजपाशपातभारादिव नितरां नतिमद्भिरंसभागैः ॥**
**मुकुलितनयनैर्मुखारविन्दैर्घनमहतामिव पक्ष्मणां भरेण ॥ ६२ ॥**
**अधिकमरुणिमानमुद्वहद्भिर्विलस(१)दशीतमरीचिरश्मिजालैः ॥**
**परिचितपरिचुम्बनाऽभियोगादपगतकुङ्कुमरेणुभिः कपोलैः ॥ ६३ ॥**
**अवसितललितक्रियेण बाह्वोर्ललिततरेण तनीयसा युगेन ॥**
**सरसकिसलयाऽनुरञ्जितैर्वा करकमलैः पुनरुक्तरक्तभाभिः ॥ ६४ ॥**
**स्मरसरसमुरःस्थलेन पत्युर्विनिमयसंक्रमिताङ्गरागरागैः ॥**
**भृशमतिशयखेदसम्पदेव स्तनयुगलैरितरेतरं निषण्णैः ॥ ६५ ॥**
**अतनुकुचभरानतेन भूयः क्लम(२)जनिताऽऽनतिना शरीरकेण ॥**
**अनुचितगतिसादनिःसहत्वं कलभकरोरुभिरूरुभिर्दधानैः ॥ ६६ ॥**
**अपगतनवयावकैश्चिराय क्षितिगमनेन पुनर्वितीर्णरागैः ॥**
**कथमपि चरणोत्पलैश्चलद्भिर्भृशविनिवेशवशात्परस्परस्य ॥ ६७ ॥**
**मुहुरिति वनविभ्रमाऽभिषङ्गादतमि तदा नितरां नितम्बिनीभिः ॥**
**मृदुतरतनवोऽलसाः प्रकृत्या चिरमपि ताः किमुत प्रयासभाजः ॥६८॥**

---

( १ ) विकस० । ( २ ) भ्रम ।

**श्लथेत्यादि ॥ मुहुरिति ॥** तदा तस्मिन् काले पुष्पावचयक्रीडावसरे नितम्बनीभि-रङ्गनाभिः नितरामतिशयेन अतमि तान्तं श्रान्तम् । कस्मात् मुहुर्वारंवारम् इतीति पूर्वोक्तप्रकारेण वनविभ्रमाऽभिषङ्गात् काननविलासखेदात्, वनेषु विभ्रमाः विलासाः तैर्यः अभिषङ्गः खेदः तस्मात् । अर्थान्तरन्यासः—युक्तोयमर्थः, यस्मात्कारणात् ताः अङ्गनाः प्रकृत्या स्वभावेन मृदुतरतनवः कोमलतरशरीराः, अपरं किंभूताः ताः अलसा मन्थराश्च । अपीति विस्मये । अपरं किंभूताः ताः स्त्रियः चिरं चिरकालं प्रयासभाजः आयासयुक्ताः । तदा किमुत किं भणनीयम् । आयासेन परिश्रान्ता इत्यर्थः । **श्लथेति ॥** किंभूताभिः नितम्बनीभिः अंसभागैः स्कन्धप्रदेशैः उपलक्षिताभिः, किंभूतैः अंसभागैः नितरामतिशयेन नतिमद्भिः नम्रतायुक्तैः । कस्मान्नतिमद्भिः, उत्प्रेक्षते—श्लथशिरसिजपाशपातभारात् इव शिथिलकेशपाशपाताक्रमणादिव, श्लथः विसंष्ठुलो यः शिरसिजपाशः केशबन्धः तस्य पातः पतनं तेन भार आक्रमणं तस्मादिव । अपरं किंलक्षणाभिः नितम्बिनीभिः मुखारविन्दैर्वदन-कमलैरुपलक्षिताभिः, किंभूतैः मुखारविन्दैः मुकुलितनयनैः निमीलितलोचनैः। केन, उत्प्रेक्षते—पक्ष्मणां भरेणेव नयनोपरिलोम्नां भारेणेव, किंलक्षणानां पक्ष्मणां घनानि च तानि महान्ति च घनमहान्ति तेषां सान्द्रगुरूणाम् । **अधिकमिति ॥** अपरं किंभूताभिः नितम्बिनीभिः कपोलैर्गण्डस्थलैरुपलक्षिताभिः । किंभूतैः कपोलैः अपगतकुङ्कुमरेणुभिः घृष्टघुसृणपरागैः, कस्मात् परिचितपरिचुम्बनाऽभियोगात् स्वभ्यस्तछष्ठुचुम्बनसम्पर्कात, परिचितं सदभ्य-स्तं यच्चुम्बनं तस्य अभियोगः सम्पर्कः तस्मात्, किं कुर्वद्भिः कपोलैः अधिकं सातिशय-मरुणिमानमुद्वहद्भिः अत्यारक्तत्वं बिभ्राणैः । अरुणस्य भावः अरुणिमा तम् अरुणिमा-नम् । कैः विलसन्तो दीप्यमाना ये अशीतमरीचिरश्मयः श्रीसूर्यकिरणाः तेषां जालानि पटलानि तैः देदीप्यमानरविद्युतिपटलैः । कपोलस्याऽत्यारक्तत्वात् कुङ्कुमं नष्टमित्यर्थः । **अवसितेति ॥** अपरं किंलक्षणाभिः नितम्बिनीभिः बाह्वोर्युगेन भुजयोर्युगेन उपलक्षिता-भिः । किंभूतेन युगेन अवसितललितक्रियेण अवसिता नष्टा ललितक्रिया विलासव्यापारो यस्य तत् अवसितललितक्रियं तेन अवसितविलासचेष्टितेन अवसितगतागतेन, अपरं किंभूतेन बाह्वोर्युगेन अतिशयेन तनु तनीयः तेन तनीयसा सुकुमारेण, अपरं किंभूताभिः नितम्बिनीभिः करकमलैः पाणिपद्मैः उपलक्षिताभिः, किंभूतैः करकमलैः वाशब्द इवार्थे, सरसकिसलयाऽनुरञ्जितैरिव नवप्रवालरसेनाऽनुरञ्जितैरिव, सरसानि नूतनानि यानि किसल-यानि तैः अनुरञ्जितानि आरक्तीकृतानि तैरिव, अपरं किंभूतैः करकमलैः पुनरुक्तरक्त-भाभिः पुनरुक्ता द्विगुणिता रक्ता अरुणा भाः कान्तिर्येषां तानि पुनरुक्तरक्त-भांसि तैः विशेषारक्तकान्तिभिः, अत एव अनु पश्चात् रञ्जितैरिवेत्युक्तम्। प्रवालावचयात् विशेषितरङ्गैरिवेत्यर्थः । **स्मरेति ॥** अपरं किंभूताभिः नितम्बिनीभिः स्तनयुगलैः कुच-युगैरुपलक्षिताभिः, किंलक्षणैः स्तनयुगैः भृशमतीव इतरेतरं निषण्णैः परस्परं निविष्टैः । उत्प्रेक्षते—अतिशयखेदसम्पदा इव अतिश्रमविभ्रमेणेव । अन्येऽपि ये श्रान्ताः सञ्चरन्ति ते परस्परं निरन्तरमुपविशन्ति । अपरं किंलक्षणैः स्तनयुगैः पत्युः कान्तस्य उरःस्थलेन वक्षःस्थलेन विनिमयसंक्रमिताङ्गरागरागैः भर्तुर्वक्षःस्थलेन सह कृतपरावर्तविलेपनन्यासेन आरक्तैः, कथं यथा भवति स्मरसरसं यथा भवति कामरससंयुक्तं यथा भवति । एवं पति-

वक्षसा सह विनिमयः न कलहभावादित्यर्थः । **अतनुकुचेति** ॥ अपरं किंभूताभिः नितम्बिनीभिः शरीरकेण देहेन उपलक्षिताभिः । किंभूतेन शरीरेण अतनुकुचभरानतेन विशालस्तनभारनमितेन, अपरं किंभूतेन शरीरेण भूयः पुनरपि क्लमजनिताऽऽनतिना क्लमेन श्रमेण जनिता उत्पादिता आनतिर्नम्रता यस्य तत्तेन खेदेनोत्पादितनम्रतेन । अग्रेऽपि कुचभरेण नमितं, पुनरपि खेदेन विशेषादवनमितम् । अपरं किंलक्षणाभिः स्त्रीभिः ऊरुभिः जङ्घाभिः उपलक्षिताभिः, किंभूतैः ऊरुभिः अनुचितगतिसादनिःसहत्वं दधानैः अनुचितगमनखेदादलसत्वं बिभ्राणैः मन्थरत्वं दधद्भिः, अपरं किंलक्षणैः ऊरुभिः कलभस्य बालगजस्य करः शुण्डादण्डः तद्वद् विशालैः पृथुभिर्दीर्घैश्च । **अपगतेति** ॥ किंलक्षणाभिः स्त्रीभिः चरणोत्पलैः पादपद्मैरुपलक्षिताभिः । किंभूतैः पादपद्मैः कथमपि महता कष्टेन चलद्भिः गच्छद्भिः, अपरं किंभूतैः चरणोत्पलैः अपगतनवयावकैः अपगतो नष्टो नवः सरसः यावकः अलक्तको येभ्यस्तानि तैः नष्टालक्तकैः, अपरं किंभूतैः चरणोत्पलैः चिराय चिरकालं यावत् क्षितिगमनेन पृथिवीचरणेन पुनः भूयोऽपि वितीर्णरागैः दत्तलौहित्यैः, कस्मात् परस्परस्याऽन्योन्यस्य भृशविनिवेशवशात् सम्पर्कवशात् अतिसङ्घट्टनात् । परस्परस्य संयोगवशात् लौहित्यं जातमित्यर्थः । 'यावोऽलक्तो द्रुमामयः । सप्तभिः कुलकम् ॥ ६२-६८ ॥

अथोत्तरसर्गे जलक्रीडावर्णनाय तदुपोद्घातत्वेनासां वनविहारोद्भवं श्रमातिरेकं सप्तभिः कुलकेन दर्शयति—

**श्लथेति** ॥ शिरसि जाताः शिरोरुहाः । सप्तम्यां जनेर्डः । 'हलदन्तात्—' इत्यादिना सप्तम्या अलुक् । तेषां पाशः कलापः श्लथस्य तस्य यः पातस्तस्य भारादिवेति हेतूत्प्रेक्षा । 'न पादादौ खल्वादयः' इति वामनीयनिषेधेऽपि इवशब्दस्य पादादौ प्रयोगः कवेरौद्दण्ड्यात् । नितरामतिशयेन । अव्ययादामुप्रत्ययः । नतिमद्भिरंसभागैरुपलक्षिताभिर्नितम्बिनीभिरिति भाविना सम्बन्धः । एवमुत्तरत्रापि योज्यम् । नतांसत्वमुत्तमस्त्रीलक्षणम् । पुनर्घनमहतां सान्द्रदीर्घाणां पक्ष्मणां भरेणेवेति पूर्ववद्धेतूत्प्रेक्षा । मुकुलितनयनैर्मुखारविन्दैः । अत्रोत्प्रेक्षयोः संसृष्टिः ॥ ६२ ॥

**अधिकमिति** ॥ पुनः परिचितानां प्रणयिनां परिचुम्बनैरभियोगान्मर्दनादपगतकुङ्कुमरेणुभिः अत एव विकसन्ति वैमल्यात्प्रतिफलन्ति अशीतमरीचेरुष्णांशो रश्मिजालानि येषु तैः । असम्बन्धे सम्बन्धोक्त्याऽतिशयोक्तिः । अत एवाधिकमरुणिमानमुद्वहद्भिः । कुङ्कुमाऽपायेऽप्यातपलङ्घनादतिलोहितैरित्यर्थः । कपोलैर्गण्डस्थलैः ॥ ६३ ॥

**अवसितेति** ॥ पुनरवसिताः श्रमेण परिसमाप्ता ललिताः क्रियाः सुकुमारचेष्टा अपि यस्य तेन ललिततरेण मृदुतरेण तनीयसा तनुतरेण बाहुयुगेन पुनः सरसैरार्द्रैः किसलयैरनुरञ्जितैर्वा अनुरञ्जनं प्रापितैरिव पुनरुक्ता द्विगुणाः रक्ता भासो येषां तैः पुनरुक्तरक्तभाभिः । 'हलि सर्वेषाम्' इति यकारलोपः । करकमलैः पाणिपङ्कजैः । अत्रेतरजनकरापेक्षया पुनरुक्तरक्तत्वं स्वाभाविकमेव । तत्र किसलयरञ्जनहेतुकत्वमुत्प्रेक्ष्यते । इवार्थे वाशब्दस्तदुत्प्रेक्षायां प्रयुक्तः ॥ ६४ ॥

**स्मरेति** ॥ पुनः स्मरेण सानुरागं यथा तथा पत्युरुरःस्थलेन कर्त्रा विनिमयेन व्यतिहारेण संक्रामितोऽङ्गरागोऽनुलेपनं तेन रागो रञ्जनं येषु तैः, अतिशयोऽतिशयितो यः खेदस्तस्य सम्पदा महिम्नेवेत्युत्प्रेक्षा । भृशमितरेतरं निषण्णैः परस्परं संश्रितैः स्तनयुगलैः ॥ ६५ ॥

**अतनुकुचेति** ॥ पुनः अतनुना महता कुचभरेणानतेन नम्रेण । प्रागेवेति भावः । भूयः पुनश्च श्रमजनिता आनतिर्यस्य तेन शरीरकेण सुकुमारशरीरेण । किञ्च अनुचिताऽनभ्यस्ता । 'अभ्यस्तेऽप्युचितं न्याय्यम्' इति यादवः । तया गत्या पादचारेण यः सादः कार्श्यं तेन यन्निःसहत्वमक्षमत्वं तद्दधानैः । गन्तुमक्षमैरित्यर्थः । न सहन्त इति निःसहाः । पचाद्यजन्तेनोपसर्गस्य समासे त्वप्रत्ययः । कलभकराः करिहस्ता इवोरवो महान्तस्तैरूरुभिः सक्थिभिः । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः ॥ ६६ ॥

अपगतेति ॥ पुनश्चिराय चिरं क्षितिगमनेनापगतो नवयावको नवलाक्षारागो येषां तैः पुनस्तेनैव वितीर्णरागैः सौकुमार्यादुत्पादितरागैः परस्परस्य भृशविनिवेशवशात् स्थिरन्यासबलात् एकं स्थिरं निवेश्य तदवष्टम्भेन इतरचालनक्रमेणेत्यर्थः । कथमपि महता प्रयत्नेन । 'कथमादि तथाप्यन्तं यत्नगौरवभेदयोः' इत्युत्पलः । चलद्भिश्चरणोत्पलैः ॥ ६७ ॥

मुहुरिति ॥ नितम्बिनीभिरुरुधर्मोपलक्षिताभिः स्त्रीभिर्मुहुरित्येवं वनाविभ्रमाऽभिषङ्गाद्वनभ्रमणासङ्गात्तदा नितराम् अतामि तान्तम् । तमेर्ण्यन्ताद्भावे लुङ्, 'नोदात्तोपदेशस्य मान्तस्याऽनाचमेः' इति वृद्धिप्रतिषेधः। युक्तं चैतदित्याह—मृदुतरतनवोऽतिकोमलाङ्ग्यस्ताः स्त्रियः प्रकृत्या अलसा जडाः, अथ चिरमपि प्रयासभाजश्चेत् किमुत । सुतरामलसाः स्युरित्यर्थः । अत्राऽप्रकृतनैसर्गिकाऽऽलस्यस्य कथनेनागन्तुकस्य कैमुत्यन्यायतः सिद्धत्ववर्णनादर्थापत्तिरलङ्कारः ।

> 'एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यदापतेत् ।
> कैमुत्यन्यायतः सा स्यादर्थापत्तिरलङ्क्रिया' ॥

इति लक्षणात् । श्रमश्चात्र सञ्चारी वाच्यः । 'श्रमः खेदोऽध्वरत्यादेः स्वेदोऽस्मिन्मर्दनादयः' इति लक्षणात् ॥ ६८ ॥

**प्रथममलघुमौक्तिकाभमासीच्छ्रमजलमुज्ज्वलगण्डमण्डलेषु ॥**
**कठिनकुचतटाग्रपाति पश्चादथ शातकर्करतां (१)जगाम तासाम् ॥ ६९ ॥**

**प्रथममिति ॥ अथाऽनन्तरं तासामङ्गनानां श्रमजलं प्रस्वेदवारि प्रथमं पूर्वम् उज्ज्वलगण्डमण्डलेषु विमलगण्डस्थलेषु वर्तमानम् अलघुमौक्तिकाभमासीत् स्थूलमुक्ताफलतुल्यं बभूव, पश्चादनन्तरं शतकर्करतां जगाम अनेकखण्डतां गतम् । शतमनेकानि कर्कराणि शकलानि यस्य सः तस्य भावस्तत्ता ताम् । किंभूतं श्रमजलं कठिनं कठोरं यत्कुचतटं तस्याग्रमुपरिभागः तत्र पततीत्येवंशीलं कठोरस्तनमुखोपरि पतितम् । अन्यदपि स्थूलं वस्तु कठिनोपरिपातवशात् शतखण्डत्वं गच्छतीत्यर्थः ॥ ६९ ॥**

अथ श्रमानुभावं स्वेदं वर्णयति—

प्रथममिति ॥ अथ तासां स्त्रीणां श्रमजलं प्रथममुज्ज्वलगण्डमण्डलेषूज्ज्वलगण्डस्थलेषु अलघुमौक्तिकाभं स्थूलमुक्ताफलसदृशमासीत् । पश्चात्कठिनतरकुचाग्रपाति सत् अथ पतनानन्तरं, शतं शर्कराः शतशर्करम् । 'समाहारे द्विगुरेकवचनं वा टाबन्ते' इति नपुंसकत्वम् । तस्य भावस्तत्ता तां शतशर्करतां शतशकलत्वं जगाम । अत्रैकस्य श्रमजलस्य क्रमेणाऽनेकाश्रयसम्बन्धनिबन्धनात्पर्यायालङ्कारभेदः ।

> 'क्रमेणैकमनेकस्मिन्नाधारे वर्तते यदि ।
> एकस्मिन्नथ वाऽनेकं पर्यायाऽलङ्कृतिर्मता' ॥

इति लक्षणात् ॥ ६९ ॥

**विपुलकमपि यौवनोद्धतानां घनपुलकोदयकोमलं चकाशे ॥**
**परिमलितमपि प्रियैः प्रकामं कुचयुगमुज्ज्वलमेव कामिनीनाम् ॥७०॥**

**विपुलकमिति ॥ कामिनीनां सुन्दरीणां कुचयुगं स्तनयुगलं चकाशे । किंलक्षणं स्तनयुगं विपुलकमपि घनपुलकोदयकोमलम् । ननु विगतं पुलकं यत्र तत् विपुलकं, तत् घनपुलकोदयकोमलं कथं भवति नेत्याह—विपुलकं विपुलमेव विस्तीर्णमेव विपुलकं घनपुलकोदयं प्रसृतरोमाञ्चाविर्भावं कोमलं मनोज्ञं सुकुमारं, घनो निबिडश्चासौ पुलको रोमाञ्चश्च तस्योदय-आविर्भावः तेन कोमलं रुचिरम्, अपरं किंभूतं कुचयुगं प्रियैः कान्तैः प्रकाममतिशयेन**

---

( १ ) शर्करतां ।

परिमलितमपि उज्ज्वलमेव । ननु यत् परिमलितं परितः समन्तात् मलिनीकृतं भवति, तत् कथमुज्ज्वलं स्यात् । नैतत् व्याख्येयं, परिमलितमपि विमर्दोत्थगन्धेन सुगन्धीकृतमपि उज्ज्वलमेव मनोहरमेव । सम्मर्दनवशात् रोमाञ्चितमित्यर्थः । किंभूतानामङ्गनानां यौवनोद्धतानां तारुण्योद्भटानाम् ॥ ७० ॥

श्रमेऽपि कुचमण्डलमविकृतशोभामित्याह—

विपुलकमिति ॥ यौवनोद्धतानां कामिनीनां कुचयुगं विपुलकं पुलकरहितमपि घनपुलकोदयेन सान्द्ररोमोद्गमेन कोमलं सदिति विरोधः । विपुलं विस्तृतं तदेव विपुलकममित्यविरोधः । प्रियैः प्रकामं, परितो मलमस्येति परिमलं तत्कृतं परिमलितं मलिनीकृतं तथाप्युज्ज्वलं विमलमेव चकाश इति विरोधः । परिमलवत्कृतं परिमलितमित्यविरोधः । मत्वन्तात् 'तत्करोति—'इति णिचि कर्मणि क्तः । णाविष्ठवद्भावे विन्मतोर्लुक् । अपिर्विरोधे । विरोधाभासालङ्कारयोः संसृष्टिः ॥ ७० ॥

अविरतकुसुमावचायखेदान्निहितभुजालतयैकयोपकण्ठम् ॥
विपुलतरनिरन्तराऽवलग्नस्तनपिहितप्रियवक्षसा ललम्बे ॥ ७१ ॥

अविरतेति ॥ एकया कयाचित् अङ्गनया ललम्बे लम्बितम्, कया उपकण्ठे पतिकण्ठे निहितभुजालतया आरोपितभुजवल्ल्या, निहिते आरोपिते भुजे एव बाहू एव लते व्रतत्यौ यया सा तया, कस्मात् अविरतकुसुमावचायखेदात् अविरतं निरन्तरं कुसुमावचायः पुष्पावचयनं तेन यः खेदः परिश्रमः तस्मात् निरन्तरपुष्पावचयपरिश्रमात्, अपरं किंलक्षणया तया विपुलतरनिरन्तराऽवलग्नस्तनपिहितप्रियवक्षसा विपुलतरौ विस्तीर्णौ निरन्तरावलग्नौ अतिसम्मिलितौ यौ स्तनौ ताभ्यां पिहितमाच्छादितं प्रियवक्षो भर्तृहृदयं यया सा स्तनपिहितप्रियवक्षाः तया ॥ ७१ ॥

अथैकस्याः प्रियकण्ठावलम्बने श्रमानुभावमेकेनाह—

अविरतेति ॥ अविरतो यः कुसुमानामवचायो हस्तेन लवनम् । 'हस्तादाने चेरस्तेये' इति घञ् । तेन यः खेदस्तस्माद्भर्तुरुपकण्ठं कण्ठे । विभक्त्यर्थेऽव्ययीभावः । निहिते भुजालते यया तया । 'दोः प्रकोष्ठो भुजो बाहुर्भुजा च स्मर्यते बुधैः' इति वैजयन्ती । विपुलतरौ निरन्तरमवलग्नौ संश्लिष्टौ च यौ स्तनौ ताभ्यां पिहितं छादितं प्रियस्य वक्षो यया तयैकया स्त्रिया ललम्बे लम्बितम् । भावे लिट् ॥ ७१ ॥

अभिमतमभितः कृताङ्गभङ्गा कुचयुगमुन्नतिवित्तमुन्नमय्य ॥
तनुरभिलषितं क्लमच्छलेन व्यवृणुत वेल्लितबाहुवल्लरीका ॥ ७२ ॥

अभिमतमिति ॥ तनुरङ्गना अभिलषितं वाञ्छितं व्यवृणुत प्रकटयामास । केन क्लमच्छलेन खेदव्याजेन, किंलक्षणा अङ्गना वेल्लितबाहुवल्लरीका प्रसारितबाहुलतिका, वेल्लिते प्रसारिते बाहुवल्लर्यौ भुजवल्ल्यौ यया सा, किंभूता तनुः कृताङ्गभङ्गा विहिततनुभङ्गा, कथम् अभिमतमभितः कान्तमभि लक्ष्यीकृत्य, किं कृत्वा कुचयुगमुन्नमय्य स्तनयुगलमूर्ध्वीकृत्य किंलक्षणं कुचयुगम् उन्नतिवित्तम् उन्नत्या वित्तमौन्नत्यप्रसिद्धम् । श्रममिषेण अङ्गभङ्गं विधाय वल्लभमभिलक्ष्य प्रसारितभुजवल्लरीकया कयाचिदङ्गनया आलिङ्गनाभिलाष इव प्रकटित इत्यर्थः ॥ ७२ ॥

अथापरस्या अङ्गभङ्गाख्यमपरमनुभावमाह—

अभिमतमिति ॥ तनुः काचित्तन्वी । 'वोतो गुणवचनात्' इति विकल्पादनीकारः । अभिमतमभितः । प्रियमभीत्यर्थः । उन्नतिवित्तम् औन्नत्येन प्रतीतम् । विदेर्भावार्थात् 'वित्तो भोगप्रत्यययोः' इति प्रत्यार्थे निष्ठान्तत्वाभावनिपातः । कुचयुगमुन्नमय्योत्तुङ्गीकृत्य कृतोऽङ्गभङ्गो गात्रविजृम्भणं यया सा, तथा

वेल्लिते मिथो वेष्टिते बाहुवल्लयौ भुजलते यया सा । 'नद्यृतश्च' इति कप् । छद्मच्छलेन । श्रमापनोदक-चेष्टाव्याजेनेत्यर्थः । अभिलषितमालिङ्गनाद्यभिलषितं व्यवृणुत प्रकटितवती । वृणोतेर्लङ् । प्रौढेयमुत्सुका च ॥

**हिमलवसदृशः श्रमोदबिन्दूनपनयता किल नूतनोढवध्वाः ॥**
**कुचकलशकिशोरकौ कथञ्चित्तरलतया तरुणेन पस्पृशाते ॥७३॥**

**हिमलवसदृश इति ॥ तरुणेन विलासिना नूतनोढवध्वाः नवपरिणीताङ्गनायाः कुचकलशकिशोरकौ कुचकुम्भबालाश्वौ कथञ्चित् महता कष्टेन पस्पृशाते स्पृष्टौ । कथा तरलतया चापल्येन । चपलत्वात्किशोरकग्रहणम् । किशोरकोऽपि चपलतया कष्टेन स्पृश्यते इत्यर्थः । किं कुर्वता किलेत्यलीके, छद्मनि श्रमोदबिन्दून् स्वेदजलकणान् अपनयता स्फेट-यता, किंभूतान् श्रमोदबिन्दून् हिमलवसदृशः नीहारजलकणतुल्यान् ॥ ७३ ॥**

अथ कस्याश्चिन्मुग्धायाः प्रियचापलोक्तिद्वारा स्वेदोद्गमं प्रकटयति—

हिमेति ॥ हिमलवसदृशो हिमकणनिभान् श्रमोदबिन्दून् । स्वेदबिन्दूनित्यर्थः । 'मन्थौदन—' इत्यादिना उदकस्योदादेशः । अपनयता किल प्रमार्जतेव, न तु तत्र तात्पर्यमिति भावः । तरुणेन यूना नूतनोढवध्वाः कुचौ कलशाविव तौ च किशोरकाविव उल्लसनसाम्यादश्वशावाविव । 'अश्वशावः किशोरकः' इत्यमरः । तौ कुचकलशकिशोरकौ । उभयत्राप्युपमितसमासः । कथञ्चित्क्लेशेन । सप्रतिषेधमेवेत्यर्थः । तरलतया चपलतया, उत्सुकतयेत्यर्थः । पस्पृशाते स्पृष्टौ । स्पृशेः कर्मणि लिट् । मुग्धेयम् ॥ ७३ ॥

**गत्वोद्रेकं जघनपुलिने रुद्धमध्यप्रदेशः**
**क्रामन्नूरुद्रुमभुजलताः पूर्णनाभीह्रदान्तः ॥**
**उल्लङ्घ्योच्चैः कुचतटभुवं प्लावयन् रोमकूपान्**
**स्वेदापूरो युवतिसरितां व्याप गण्डस्थलानि ॥ ७४ ॥**

**गत्वेति ॥ युवतिसरितामङ्गनानदीनां स्वेदापूरः प्रस्वेदजलपूरः गण्डस्थलानि व्याप कपोलस्थलानि व्याप्नोति स्म । किं कृत्वा जघनपुलिने उद्रेकं गत्वा आधिक्यं प्राप्य किंभूतः स्वेदापूरः रुद्धमध्यप्रदेशः आवृतोदरप्रदेशः, किं कुर्वन् ऊरुद्रुमभुजलताः क्रामन् ऊरवः जघनान्येव द्रुमा वृक्षा भुजा बाहव एव लता वल्लयः ऊरुद्रुमाश्च भुजलताश्च ताः क्रामन् उल्लङ्घयन् विक्षिपन्, अपरं किंलक्षणः स्वेदापूरः पूर्णनाभीह्रदान्तः पूर्णः भरितः नाभी-ह्रदानां नाभीकुहराणाम् अन्तो मध्यप्रदेशो येन सः, किं कृत्वा उच्चैः उन्नतां कुच-तटभुवं स्तनतटभुवमुल्लङ्घ्य अतिक्रम्य, अपरं किं कुर्वन् रोमकूपान् प्लावयन् रोम-रन्ध्राणि परिवाहयन् । नदीनामपि जलपूर एवंविधो भवति तावत्–प्रथमं पुलिने आधि-क्यं प्राप्नोति, अपरं मध्यप्रदेशं रुणद्धि, द्रुमलताः क्रामति विक्षेपयति, अपरं ह्रदान् परि-पूरयति अतिजलसम्भृतान् करोति, तथा तटभुवमुल्लङ्घयति, तथा कूपानाप्लावयति जला-वृतान् करोति । इत्येवं कृत्वा स्थलानि व्याप्नोति । अत एव युवतयः सरित्तुल्याः । उभयोः साम्यम् । मन्दाक्रान्ता छन्दः ॥ ७४ ॥**

अथ सर्वासामेव स्वेदोद्रेकं वर्णयति—

गत्वेति ॥ युवतय एव सरितस्तासां स्वेद एवाऽऽपूरः प्रवाहः जघनमेव पुलिनं तत्रोद्रेकं गत्वा रुद्ध आवृतो मध्यप्रदेशोऽवलग्नभागः, प्रवाहदेशश्च येन सः पूर्णनाभीह्रदान्तः । रेफान्तमकारान्तं वा । पूर्णेति पूरे-र्ण्यन्तात्कर्मणि क्तः, 'वा दान्त —' इत्यादिना णिलुगिट्प्रतिषेधनिपातः । उच्चैरुन्नतौ कुचावेव तटौ तयोर्भुवं प्रदेशमुल्लङ्घ्य रोमकूपान् रोमाणि रोमरन्ध्राणि तान्येव कूपान् प्लावयन् पूरयन् गण्डस्थलानि कपोलभागान्

उन्नतभूभागांश्च प्राप । अत्र युवतिषु सरित्त्वस्य तदवयवेष्ववयवानां च निरूपणात्समस्तवस्तुविषयसावयवरूपकं श्लेषानुप्राणितम् । मन्दाक्रान्ता वृत्तम् । 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत्' इति लक्षणात् ॥

**प्रियकरपरिमार्गादङ्गनानां यदाऽभूत्पुनरधिकतरैव स्वेदतोयोदयश्रीः ॥**
**अथ वपुरभिषेक्तुं तास्तदाऽम्भोभिरीषुर्वनविहरणखेदम्लानमम्लानशोभाः ७९-**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये वनविहारो नाम सप्तमः सर्गः ॥ ७ ॥

**प्रियेति** ॥ अथाऽनन्तरं ताः स्त्रियः तदा तस्मिन् काले वपुः शरीरमभिषेक्तुम् ईषुः प्रक्षालयितुमभिलेषुः । किंलक्षणं वपुः वनविहरणखेदम्लानं काननक्रीडाश्रमेण दीनं, किंभूतास्ताः अम्लानशोभाः दीप्यमानकान्तयः । वपुरेव म्लानम् । तदा कदा यदा यस्मिन् काले अङ्गनानां स्वेदतोयोदयश्रीः प्रस्वेदजलाविर्भावलक्ष्मीः पुनर्भूयोऽपि अधिकतरैव अभूत् बहुतरैव सञ्जाता, कस्मात् प्रियकरपरिमार्गात् वल्लभपाणिपरिमार्जनात् । सात्त्विकभावादित्यर्थः । वल्लभकरस्पृष्टानामङ्गनानां यदा पुनरधिकः स्वेदो बभूव, तदाऽङ्गना वपुःप्रक्षालनमीषुरिति भावः । मालिनी छन्दः ॥ ७९ ॥

इति श्री माघकाव्ये बृहद्वल्लभायां पुष्पावचयो नाम सप्तमः सर्गः ।



एवमध्वश्रमानुभावं स्वेदोद्रेकं वर्णयित्वा तत्फलभूतां जलविहारेच्छामासां दर्शयति--

**प्रियेति** ॥ यदा अङ्गनानां प्रियकरपरिमार्गात् प्रियकरस्पर्शात् । मृजेर्घञ् प्रत्ययः । स्वेदतोयोदयश्रीः स्वेदोद्गमसम्पत् पुनर्भूयोऽप्यधिकतरैवाऽभूत्तदा अम्लानशोभा अक्षीणकान्तयः, वपुषि म्लानेऽपीति भावः, ता अङ्गना वनविहरणखेदेन म्लानम् । म्लायतेः कर्तरि क्तः, 'संयोगादेरातो धातोर्यण्वतः' इति निष्ठानत्वम् । वपुरङ्गम् अथ कार्त्स्न्येन । 'मङ्गलाऽनन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । अम्भोभिरभिषेक्तुमीषुरिच्छन्ति स्म । इषेर्लिट् । अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थसमर्थनहेतुकत्वेनोपनिबन्धाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । मालिनी वृत्तम् ॥ ७९ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवधकाव्यव्याख्याने
सर्वङ्कषाख्ये सप्तमः सर्गः ॥ ७ ॥



# अष्टमः सर्गः ।

**आयासादलघुतरस्तनैः स्तनद्भिः (१)श्रान्तानामविकचलोचनारविन्दैः ॥**
**अभ्यम्भः कथमपि योषितां समूहैस्तैरुर्वीनिमित(२)चलत्पदं प्रचेले ॥ १ ॥**

**आयासादिति** ॥ तैः योषितां समूहैः अङ्गनानां गणैः अभ्यम्भः उदकाभिमुखं कथमपि महता कष्टेन प्रचेले सञ्चलितं प्रचलितम् । कथं यथा भवति उर्वीनिमितचलत्पदं यथा भवति उर्व्यां पृथिव्यां निमितं मन्दं चलत् पदं चरणं यथा भवति । निमितं मन्दम् । खेदवशात मन्थरं गतमिति भावः । किं कुर्वद्भिर्योषितां समूहैः आयासात् खेदसन्तापात् स्तनद्भिः शब्दायमानैः सीत्कारशब्दं कुर्वाणैः, किंलक्षणानां योषिताम् अलघुतरस्तनैः

(१) स्वनद्भिः । (२) ०निमित० ।

श्रान्तानाम् अतिप्रौढकुचैः खिन्नानाम्, अपरं किंलक्षणैः समूहैः अविकचलोचनारविन्दैः अविकस्वरनयनकमलैः। खेदेन निमीलितैरिति भावः। प्रहर्षिणी छन्दः॥ १॥

'अथ वपुरभिषेक्तुं तास्तदाम्भोभिरीषु'रित्युक्तं, तदेव वर्णयितुमारभते—

आयासादिति॥ अलघुतरस्तनैः पृथुतरकुचैरिति मान्द्यहेतूक्तिः। स्वनद्भिः भूषाभिः श्रमश्वासैर्वा शब्दायमानैः। 'स्वन शब्दे' इति धातोर्लटः शत्रादेशः। अविकचलोचनारविन्दैः श्रमनिमीलिताक्षिपद्मैरायासाद्वनविहारखेदाच्छ्रान्तानां क्लान्तानां योषितां तैः समूहैः कर्तृभिः उर्व्यां निहितानि निक्षिप्तानि। 'डुधाञ् धारणे' इति धातोः कर्मणि क्तः। तथैव चलन्ति पदानि यस्मिन्कर्मणि तद्यथा तथा। उत्क्षेपणाऽशक्त्या भुवि बलादाकृष्यमाणचरणामित्यर्थः। अभ्यम्भोऽम्भःप्रति कथमपि प्रचेले प्रचलितम्। भावे लिट्। स्वभावोक्तिरलङ्कारः। 'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' इति लक्षणात्। अस्मिन्सर्गे प्रहर्षिणी वृत्तम्। 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति लक्षणात्॥ १॥

**यान्तीनां सममसितभ्रुवां नतत्वादंसानां महति नितान्तमन्तरेऽपि॥**
**संसक्तैर्विपुलतया मिथो नितम्बैः सम्बाधं बृहदपि तद्बभूव वर्त्म॥ २॥**

**यान्तीनामिति**॥ असितभ्रुवां श्यामकटाक्षाणामङ्गनानां तद्वर्त्म मार्गः सम्बाधं बभूव सङ्कटमभवत्। किंलक्षणं वर्त्म बृहदपि विशालमपि, किंभूतानां नारीणां समं युगपदेव यान्तीनां तुल्यकालं गच्छन्तीनां, यान्तीति यान्त्यः तासाम्। क सति अंसानां स्कन्धानामन्तरेऽवकाशे नितान्तमतिशयेन महत्यपि सति विशालेऽपि सति, कथं तद्वर्त्म सङ्कटमासीत् अपरं कस्मादंसानामन्तरं बभूव नतत्वात् कुचभारानमितत्वात्, तर्हि कैः सम्बाधं बभूव नितम्बैः कटिप्रदेशैः, किंभूतैः नितम्बैः मिथः परस्परं संयुक्तैः संमिलितैः, कया विपुलतया विशालत्वेन॥ २॥

यान्तीनामिति॥ समं पङ्क्तिशो यान्तीनाम्। 'आच्छीनद्योर्नुम्' इति वैकल्पिको नुमागमः। असितभ्रुवां स्त्रीणामंसानां नतत्वाद्धेतोर्नितान्तं महत्यन्तरे अवकाशे सत्यपि विपुलतया हेतुना मिथः संसक्तैरन्योन्यश्लिष्टैर्नितम्बैर्बृहद्विस्तृतमपि तद्वर्त्म, सम्बाध्यत इति सम्बाधः सङ्कटम्। 'सङ्कटं ना तु सम्बाधः' इत्यमरः। घञन्तस्यापि विशेष्यलिङ्गत्वं 'सम्बाधमनुवर्तते' इति भाष्यकारादिप्रयोगादिष्यते। बभूव। नतांसत्वनितम्बवैपुल्योक्त्या सौन्दर्यातिशय उक्तः। असम्बाधेऽपि सम्बाधाभिधानादतिशयोक्तिः॥ २॥

**नीरन्ध्रद्रुमशिशिरां भुवं व्रजन्तीः साशङ्कं मुहुरिव कौतुकात्करैस्ताः॥**
**पस्पर्श क्षणमनिलाकुलीकृतानां शाखानामतुहिनरश्मिरन्तरालैः॥ ३॥**

**नीरन्ध्रेति**॥ अतुहिनरश्मिः श्रीसूर्यः ताः अङ्गनाः करैः पस्पर्श किरणैरस्प्राक्षीत्। कस्मात्कौतुकात् विनोदात्, कैः पस्पर्श शाखानामन्तरालैः विटपानां विवरैः, किंभूतानां शाखानां क्षणं क्षणमात्रमनिलाकुलीकृतानां वातकम्पितानाम्, अनिलेन आकुलीकृतास्तासाम्। ताः किं कुर्वतीः नीरन्ध्रद्रुमशिशिरां सान्द्रवृक्षशीतलां भुवं भजन्तीः पृथिवीं सेवमानाः वृक्षच्छायासूपविष्टाः। सूर्येण ताः स्पृष्टा इत्यर्थः। उत्प्रेक्षते-साशङ्कं सभयं मुहुरिव पुनःपुनः। रविः पस्पर्श सभय इव। अन्योऽपि यः किल पराङ्गनाः करैः स्पृशति, स गवाक्षजालैः सभयः सन् वारंवारं स्पर्शं करोति इत्युक्तिः॥ ३॥

नीरन्ध्रेति॥ नीरन्ध्रैः सान्द्रैर्द्रुमैः शिशिरां भुवं व्रजन्तीर्गच्छन्तीस्ताः स्त्रीः अतुहिनरश्मिरुष्णांशुः क्षणमनिलेनाऽऽकुलीकृतानां चालितानां शाखानामन्तरालैर्नीरन्ध्रत्वेऽपि मुहुरनिलचालनजनितैरवकाशैर्मुहुः कौतुकादौत्सुक्यादिव साशङ्कम्। परदारस्पर्शात्सभयमित्यर्थः। करैः पस्पर्श स्पृष्टवान्। अत्र चलच्छाखाहेतुकस्य तपनकरस्पर्शस्यौत्सुक्यहेतुकत्वोत्प्रेक्षणाद् गुणहेतूत्प्रेक्षा॥ ३॥

**एकस्यास्तपनकरैः करालितायाः बिभ्राणः सपदि सितोष्णवारणत्वम् ॥**
**सेवायै वदनसरोजनिर्जितश्रीरागत्य प्रियमिव चन्द्रमाश्चकार ॥ ४ ॥**

**एकस्या इति ॥** चन्द्रमाः रजनिकरः एकस्याः अङ्गनायाः प्रियमिव चकार मनोवल्लभमिव चक्रे । किं कृत्वा आगत्य समीपं प्राप्य, किंभूतायाः अङ्गनायाः तपनकरैः करालितायाः रविकिरणैः परितप्तायाः खेदं प्रापितायाः, किं कुर्वाणश्चन्द्रमाः सपदि वेगेन सितोष्णवारणत्वं बिभ्राणः श्वेतच्छत्रत्वं धारयन्, सितं च तदुष्णवारणं च सितोष्णवारणं तस्य भावः तत्त्वम् । किमर्थं सेवायै सेवार्थम् । सेवायां किं कारणं, तदाह—किंभूतः चन्द्रः वदनसरोजनिर्जितश्रीः अङ्गनाया मुखकमलेन पराभूतकान्तिः तिरस्कृततेजाः । अन्योऽपि यः किल येन पराजितो भवति, सोऽवश्यमेव तस्य सेवां करोतीति भावः ॥ ४ ॥

अथ कस्याश्चित् वृत्तं श्वेतातपत्रं चन्द्रत्वेनोत्प्रेक्षते—

**एकस्या इति ॥** वदनसरोजेन श्रीमुखपङ्कजेन निर्जितश्रीश्चन्द्रमाः । एतेन वदनसरोजस्य चन्द्रविजयान्सरोजान्तरवैलक्षण्यं चन्द्रस्य निकृष्टत्वं चोक्तम् । अत एव सेवायै तत्सेवनार्थमागत्य तपनकरैः करालितायाः भीषितायाः, पीडिताया इत्यर्थः । 'करालो भीषणेऽन्यवत्' इति विश्वः । एतेन सेवाऽवकाशो दर्शितः । एकस्याः कस्याश्चिदङ्गनायाः, सपदि आतपक्षण एव सितोष्णवारणत्वं स्वयमेव श्वेतातपत्रत्वं बिभ्राणः सन् प्रियं चकारेव । इति क्रियास्वरूपोत्प्रेक्षा । पराजितः कयाचित्सेवनया जेतुश्चित्तसन्तोषमुपार्जयतीति भावः ॥ ४ ॥

**स्वं रागादुपरि वितन्वतोत्तरीयं कान्तेन प्रतिपथ(१)वारिताऽऽतपायाः ॥**
**सच्छत्रादपरविलासिनीसमूहाच्छायाऽऽसीदधिकतरा तदाऽपरस्याः ॥ ५ ॥**

**स्वमिति ॥** तदा तस्मिन् काले अपरस्याः अङ्गनायाः अपरविलासिनीसमूहात् अन्याङ्गनावृन्दात् अधिकतरा छाया आसीत्, अधिकतमा कान्तिर्बभूवेत्यर्थः । 'छाया कान्तौ प्रतिमायामर्कयोषित्यनातपे' इत्यमरः । किंभूतात् नारीसमूहात् सच्छत्रात् छत्रयुक्तादपि, किंभूतायाः अपरस्याः कान्तेन वल्लभेन प्रतिपथवारितातपायाः प्रतिपथं मार्गे वारितो निषिद्धः आतपो घर्मो यस्याः सा तस्याः मार्गे निवारितघर्मायाः, किं कुर्वता कान्तेन रागात् आसक्तिवशात् स्वं निजमुत्तरीयं सितमुत्तरासङ्गम् उपरि तदुपरि वितन्वता विस्तारयता । तदुपरि वल्लभविस्तारितोत्तरीयकृतातपत्रेण सच्छत्राऽपरयुवतिसमूहस्यातपत्रशोभा निर्जितेत्यर्थः । 'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथे'त्यमरः ॥ ५ ॥

**स्वमिति ॥** रागाद्धेतोरुपरि प्रियाया मूर्धनि स्वं स्वकीयमुत्तरीयं वितन्वता विस्तारयता कान्तेन प्रियेण प्रतिपदं पदे पदे वारित आतपो यस्याः तस्या अपरस्याः कस्याश्चिदङ्गनायाः सच्छत्रात् छत्रयुक्तादपरविलासिनीसमूहात्सकाशात् । 'पञ्चमी विभक्ते' इति पञ्चमी । अधिकतरा छाया अनातपः कान्तिश्च तदा आसीत् । छत्रच्छायातोऽपि कान्तस्वहस्तधुतोत्तरीयच्छायैवाऽनन्यसाधारणी ज्यायसी । मुखकान्तिरपि तस्या एव भूयसीति भावः । 'छाया त्वनातपे कान्तौ' इत्यमरः । एतेन सच्छत्रादच्छत्रस्याधिकच्छायेति विरोधोऽपि निरस्त इति विरोधाभासोऽलङ्कारः ॥ ५ ॥

**संस्पर्शप्रभवसुखोपचीयमाने सर्वाङ्गे करतललग्नवल्लभायाः ॥**
**कौशेयं व्रजदपि गाढतामजस्रं सस्रंसे विगलितनीवि नीरजाक्ष्याः ॥ ६ ॥**

**संस्पर्शेति ॥** नीरजाक्ष्याः कमललोचनायाः अङ्गनायाः सर्वाङ्गे सकलगात्रे वर्तमाने

(१) प्रतिपद ।

कौशेयं परिधानदुकूलं सस्रंसे स्रस्तम् । 'कौशेयं कृमिकोशोत्थ'मित्यमरः । किंभूतं कौशेयम् अजस्रं निरन्तरं गाढतां व्रजदपि अग्रे दृढत्वं प्राप्नुवदपि । सुदृढमपीत्यर्थः । तर्हि कथं पपातेत्याशङ्क्याह—पुनः किंभूतं कौशेयं विगलितनीवि पतितमेखलागुणं, किंलक्षणायाः करतललग्नवल्लभायाः हस्तावलग्नप्रियायाः, करतले पाणौ लग्नः अवलग्नो वल्लभो भर्ता यस्याः सा तस्याः, किंलक्षणे सर्वाङ्गे संस्पर्शप्रभवसुखोपचीयमाने संस्पर्शात् प्रियगात्रसंयोगात् प्रभवो जन्म यस्य तत् संस्पर्शप्रभवम्, एवंभूतं यत् सुखं शर्म तेन उपचीयते वृद्धिं नीयते तत् संस्पर्शप्रभवसुखोपचीयमानं तस्मिन् प्रियगात्रसंयोगादुत्पन्नसुखेन वृद्धिं नीयमाने इत्यर्थः । अत एव मेखला त्रुटिता, पश्चात्स्रस्तमित्यर्थः ॥ ६ ॥

संस्पर्शेति ॥ करतले लग्नो वल्लभो यस्यास्तस्याः । स्वहस्तेन तद्धस्तं गृहीत्वा गच्छन्त्या इत्यर्थः । अत एव नीरजाक्ष्याः सर्वाङ्गे संस्पर्शप्रभवेन प्रियाङ्गसङ्गप्रभवेन सुखेनोपचीयमाने पोषं गमिते सति अत एव गाढतां दृढत्वं व्रजदपि विगलितनीवि सुखपारवश्याद्विश्लिष्टग्रन्थि कौशेयं दुकूलमजस्रं सस्रंसे स्रस्तम् । एषा हृष्टा हर्षितरोमा च ॥ ६ ॥

**गच्छन्तीरलसमवेक्ष्य विस्मयिन्यस्तास्तन्वीर्न विदधिरे गतानि हंस्यः ॥**
**बुद्ध्वा वा जितमपरेण काममाविष्कुर्वीत स्वगुणमपत्रपः क एव ॥ ७ ॥**

गच्छन्तीरिति ॥ हंस्यः हंसाङ्गनाः गतानि न विदधिरे गमनानि न चक्रुः । किं कृत्वा ताः तन्वीः कृशाङ्गीः अङ्गनाः अवेक्ष्य अवलोक्य, किंभूताः तन्वीः अलसं मन्थरं यथा भवति तथा गच्छन्तीः यान्तीः, किंलक्षणा हंस्यः विस्मयिन्यः आश्चर्ययुक्ताः । चित्रायमाणास्तस्थुरिति भावः । वा युक्तमेतत्, यतः कारणात् क एव अपत्रपः निर्लज्जः स्वगुणमाविष्कुर्वीत निजगुणं प्रकटीकुर्यात् । किं कृत्वा काममत्यर्थम् अपरेण जितं बुद्ध्वा अन्येन निर्जितं परिज्ञाय । अतो न गतानि चक्रिरे । स्वगतिगुणो न प्रकटित इत्यर्थः । यतो निर्जितविलासगमना इति भावः ॥ ७ ॥

गच्छन्तीरिति ॥ हंस्यो हंसाङ्गना अलसं मन्दं गच्छन्तीस्तास्तन्वीः स्त्रीरवेक्ष्य विस्मयिन्यो गतिसौष्ठवाद्विस्मयवत्यः सत्यो गतानि स्वयं लीलागमनानि न विदधिरे न चक्रुः । लज्जयेति भावः । तथा हि—परेण जितं स्वगुणं बुद्ध्वा वा, बुद्ध्वापीत्यर्थः । क एव को वा अपत्रपः सन् काममाविष्कुर्वीत प्रकाशयेत् । न कश्चिदपीत्यर्थः । 'इदुदुपधस्य चाऽप्रत्ययस्य' इति विसर्जनीयस्य षत्वम् । अत्र तिरश्चामपि वैकित्वातिशयोक्त्या गतिकरणनिषेधसमर्थनार्थोऽयमर्थान्तरन्यासः ॥ ७ ॥

**श्रीमद्भिर्जितपुलिनानि माधवीनामारोहैर्निबिडबृहन्नितम्बबिम्बैः ॥**
**पाषाणस्खलित(१)विलोलमाशु नूनं वैलक्ष्यादयु(२)रवरोधनानि सिन्धोः॥८॥**

श्रीमद्भिरिति ॥ सिन्धोः समुद्रस्य अवरोधनानि कलत्राणि नद्यः आशु शीघ्रम् अयुः ईयुः । जवेन नद्यो जग्मुरित्यर्थः । कथं यथा भवति पाषाणस्खलितविलोलं यथा भवति पाषाणेषु प्रस्तरेषु स्खलितं स्खलनं तेन विलोलं चपलं यथा स्यात्तथा । नूनमुत्प्रेक्षायाम्, उत्प्रेक्षते-वैलक्ष्यादिव खेदादिव । गतमिति भावः । खेदे किं कारणमित्याशङ्क्याह—यतः किंभूतानि सिन्धोः अवरोधनानि माधवीनाम् आरोहैः यादवस्त्रीणां जघनैः जितानि निर्जितानि पुलिनानि तोयोत्थिततटानि येषां तानि, यतः किंलक्षणैः आरोहैः श्रीमद्भिः शोभायुक्तैः, अपरं किंभूतैः आरोहैः निबिडबृहन्नितम्बबिम्बैः निबिडानि दृढानि

(१) स्खलन । (२) ०यधु० ।

बृहन्ति विशालानि नितम्बबिम्बानि कटिप्रदेशा येषु ते तैः दृढविशालश्रोणीप्रदेशैः । अन्योऽपि यः किल परपराभूतगुणो भवति, स स्खलितगतं यथा भवति तथा वैलक्ष्यात् वेगेन गच्छतीत्यर्थः । आरोहः अग्रभागः, पश्चाद्भागो नितम्बः । 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्', 'शुद्धान्तश्चाऽवरोधश्चे'त्यमरः ॥ ८ ॥

श्रीमद्भिरिति ॥ श्रीमद्भिः शोभावद्भिः निबिडाः बृहन्तश्च नितम्बबिम्बाः कटिपश्चाद्भागा येषां तैः, माधवस्येमा माधव्यस्तासां हरिवधूनाम् । आरुह्यन्त इत्यारोहैः कटिपुरोभागैर्जघनैः जितपुलिनानि सिन्धोरवरोधनानि समुद्रमहिष्यः, नद्य इत्यर्थः । वैलक्ष्यात्पराजयकृतमनःसङ्कोचाद्धेतोः पाषाणेषु स्खलनेनाभिघातेन विलोलं यथा तथा आशु ययुः अगुः नूनम् । नदीनां स्वाभाविकयाः पाषाणस्खलिताशुगते वैलक्ष्यहेतुकत्वोत्प्रेक्षाणाद् गुणहेतूत्प्रेक्षा ॥ ८ ॥

**मुक्ताभिः सलिलरयाऽस्तशुक्तिपेशीमुक्ताभिः कृतरुचि सैकतं नदीनाम् ॥**
**स्त्रीलोकः परिकलयाञ्चकार तुल्यं पल्यङ्कैर्विगलितहारचारुभिः स्वैः ॥ ९ ॥**

मुक्ताभिरिति ॥ स्त्रीलोकः युवतिवर्गः नदीनां सैकतं सरितां पुलिनं स्वैः पल्यङ्कैः तुल्यं निजपर्यङ्कैः सदृशं परिकलयाञ्चकार मेने । किंलक्षणैः पल्यङ्कैः विगलितहारचारुभिः गलन्मुक्ताकलापरम्यैः, किंभूतं सैकतं मुक्ताभिः कृतरुचि मौक्तिकैर्विहितद्युति, किंभूताभिर्मुक्ताभिः सलिलरयाऽस्तशुक्तिपेशीमुक्ताभिः सलिलरयेण उदकवेगेन अस्ताः क्षिप्ताः याः शुक्तयः शिप्राः तासां पेश्यः कोशाः ताभ्यो मुक्ताः परित्यक्ताः ताभिः । पेशी कोशः शिप्रामध्यभागो यः, तस्मान्मुक्ताभिः पतिताभिरित्यर्थः । 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः ॥ ९ ॥

मुक्ताभिरिति ॥ स्त्रीलोकः स्त्रीजनः कर्ता सलिलरयेणाऽस्ता नुन्नाः शुक्तयो मुक्तास्फोटास्त एव पेश्यः कोशाः, पुटा इति यावत् । 'मुक्तास्फोटः स्त्रियां शुक्तिः' इति, 'पेशी कोशो द्विहीने' इति चामरः । ताभिर्मुक्ताभिर्विमुक्ताभिः मुक्ताभिर्मौक्तिकैः । 'अथ मौक्तिकम् । मुक्ता' इत्यमरः । कृतरुचि कृतशोभं नदीनां सिकतामयं सैकतं पुलिनम् । 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः । 'सिकताशर्कराभ्यां च' इत्यण् प्रत्ययः । विगलितैर्विशीर्णैर्हारैश्चारुभिः स्वैः पल्यङ्कैः शयनैः । 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः । तुल्यं सदृशं परिकलयाञ्चकार मेने । पूर्णोपमेयम् ॥ ९ ॥

**आघ्राय श्रमजमनिन्द्यगन्धबन्धुं निःश्वासश्वसनमसङ्ग(१)मङ्गनानाम् ॥**
**आरण्याः सुमनस ईषिरे न भृङ्गैरौचित्यं गणयति को विशेषकामः ॥ १० ॥**

आघ्रायेति ॥ भृङ्गैः भ्रमरैः आरण्याः सुमनसः वनोद्भवानि कुसुमानि न ईषिरे न ववाञ्छिरे । अरण्ये वने भवाः आरण्याः । किं कृत्वा अङ्गनानां कामिनीनां निःश्वासश्वसनं मुखमारुतमाघ्राय शिङ्घित्वा, किंभूतं निःश्वासश्वसनं श्रमजं खेदसम्भवम्, अपरं किंभूतं श्वसनम् अनिन्द्यगन्धबन्धुं प्रशस्याऽऽमोदबान्धवम्, अनिन्द्यश्चासौ गन्धश्च तस्य बन्धुः बान्धवसदृशस्तं, पुनः किंभूतम् असङ्गमस्खलितम् । युक्तोऽयमर्थः, यतः कारणात् विशेषकामः विशेषाभिलाषुकः कः पुमान् औचित्यं गणयति योग्यत्वं विचारयति, अपि तु न कोऽपि ॥ १० ॥

आघ्रायेति ॥ भृङ्गैः कर्तृभिः श्रमजमध्वश्रमोत्थम् । अनिन्द्यगन्धस्य श्लाघ्यगन्धस्य बन्धुं सहचरम् । सदृशमित्यर्थः । अङ्गनानां निश्वासश्वसनं निश्वासमारुतम् असक्तमप्रतिषिद्धमाघ्राय, अरण्ये भवा-

---

(१) ०मसक्त ।

आरण्याः सुमनसः पुष्पाणि नेषिरे नेष्टाः । इषु इच्छायाम्, कर्मणि लिट् । अनुचितोऽयमकाण्डे परिचित-परित्याग इत्याह—विशेषं कामयते इति विशेषकामः । 'शीलिकामिभिक्षाचरिभ्यो णः' इति णप्रत्ययः । क औचित्यं गणयति । न कोऽपीत्यर्थः । अर्थान्तरन्यासः ॥ १० ॥

**आयान्त्यां निजयुवतौ वनात्सशङ्कं बर्हाणामपरशिखण्डिनीं भरेण ॥**
**आलोक्य व्यवदधतं मयूरमारात् (१) कामिन्यः श्रद्दधुरनार्जवं नरेषु ॥ ११ ॥**

**आयान्त्यामिति** ॥ कामिन्यः अङ्गनाः नरेषु पुरुषेषु अनार्जवं श्रद्दधुः कौटिल्यं मेनिरे । ऋजोर्भावः आर्जवं न आर्जवमनार्जवम् । यत्, अवश्यं पुरुषाः कुटिला एव भवन्तीति मेनिरे । किं कृत्वा आरात् समीपे वर्तमानं मयूरं शिखण्डिनं बर्हाणां भरेण पिच्छानां समूहेन अपरशिखण्डिनीमन्यतरां मयूरीं व्यवदधतमाच्छादयन्तमालोक्य दृष्ट्वा, कथं यथा भवति साशङ्कं सभयं यथा भवति, आशङ्कया सह वर्तमानं साशङ्कम् । भये किं कारणं कस्यां सत्यां निजयुवतौ स्वकान्तायां वनात वनमध्यात् आयान्त्यां सत्याम्, आगच्छन्त्यामित्यर्थः ॥ ११ ॥

**आयान्त्यामिति** ॥ निजयुवतौ वनादायान्त्यामागच्छन्त्यां सत्यां सशङ्कं सभयमपराशिखण्डिनीं जारिणीं बर्हाणा भरेण व्यवदधतं छादयन्तं मयूरं पुर आलोक्य कामिन्यः प्रियेष्वनार्जवं कौटिल्यं श्रद्दधुर्विश्वस्तवत्यः । कुटिलाः पुरुषा इति निश्चिक्युरित्यर्थः । दधातेर्लुङि 'गातिस्था–' इत्यादिना सिचो लुक् । 'आतः' इति झेर्जुसादेशः । 'श्रदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्या' इति श्रच्छब्दस्य धातोः प्राक् प्रयोगः ॥ ११ ॥

**आलापैस्तुलितरवाणि वाणिनीनां(२) माधुर्यादमलपतत्रिणां कुलानि ॥**
**अन्तर्धामुपययुरुत्पलावलीषु प्रादुःष्यात्क इव जितः पुरः परेण ॥ १२ ॥**

**आलापैरिति** ॥ अमलपतत्रिणां कुलानि राजहंसानां वृन्दानि उत्पलावलीषु कमलश्रेणिषु अन्तर्धामुपययुः अदृश्यत्वं जग्मुः । अमलानि उज्ज्वलानि पतत्राणि तनूरुहाणि येषां ते तेषाम् । किंलक्षणानि कुलानि वाणिनीनां विदग्धस्त्रीणामालापैर्वाग्भिः तुलितरवाणि जितशब्दानि, कस्मात् माधुर्यात् मधुरत्वात् । युक्तोऽयमर्थः, यतः कारणात् परेणाऽन्येन जितः पुमान् क इव पुनः प्रादुःष्यात् क इव अग्रे प्रकटो भवति, अपि तु न कोऽपि। प्रादुःष्यात् इति 'अस भुवि' प्रआङ्दुरपूर्वः, पुरः प्रसमीयात् ॥ १२ ॥

**आलापैरिति** ॥ माधवीनां हरिवधूनामालापैः कर्तृभिः माधुर्याद्धेतोस्तुलितरवाणि निरस्कृतरुतानि अमलपतत्रिणां हंसानां कुलानि उत्पलावलीष्वन्तर्धानम् । 'अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्' इति अन्तः शब्दस्योपसर्गत्वात् 'आतश्चोपसर्गे' इत्यङ् प्रत्ययः । उपययुः । युक्तं चैतदित्याह, तथा हि—परेण जितः कः । इवशब्दो वाक्यालङ्कारे । पुरो जेतुरग्रे प्रादुःष्यात्प्रादुर्भवेत् । 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वम् । अर्थान्तरन्यासः ॥ १२ ॥

**मुग्धायाः स्मरललितेषु चक्रवाक्या निःशङ्कं दयिततमेन चुम्बितायाः ॥**
**प्राणेशानभि विदधुर्विधूतहस्ताः सीत्कारं समुचितमुत्तरं तरुण्यः ॥ १३ ॥**

**मुग्धाया इति** ॥ तरुण्यो युवतयः प्राणेशान् अभि वल्लभान् अभि लक्ष्यीकृत्य चक्रवाक्याः चक्रवाकदयितायाः समुचितं योग्यं सीत्कारं सीदितिशब्दम् उत्तरं विदधुः सीत्कारमेव प्रत्युत्तरं चक्रुः । किंलक्षणास्तरुण्यः विधूतहस्ताः प्रकम्पितकराः, किंलक्षणायाः चक्रवाक्याः दयिततमेन अतिप्रियेण चक्रवाकेन निःशङ्कं निर्दयं यथा भवति तथा चुम्बि-

(१) पुरो मयूरं । (२) माधवीनां ।

तायाः पीताधरायाः, अपरं किंभूतायाः चक्रवाक्याः स्मरललितेषु मुग्धायाः कन्दर्पविलासेषु अबोधायाः अचतुरायाः । किल भर्तृचुम्बिताङ्गना हस्ताग्रं कम्पयन्ती सीत्कारं करोति। तदा चक्रवाकी स्मरललितेषु मुग्धा, अतस्तरुण्यो भर्तारमनुलक्ष्यीकृत्य तस्याः प्रत्युत्तरं चक्रुः सीत्कारकरणादिति भावः । 'सुन्दराऽबोधयोर्मुग्धः' इति विश्वः ॥ १३ ॥

मुग्धाया इति ॥ दयिततमेन निःशङ्कं निर्विचारं चुम्बितायाः दष्टायाः स्मरललितेषु चुम्बनाद्यनन्तरकृत्येषु सीत्कारादिकामचेष्टितेषु मुग्धाया मूढायाश्चक्रवाक्याः समुचितं योग्यं सीत्कारं सीत्काररूपमुत्तरं कृत्यं तरुण्यः स्वयं प्राणेशानाभि विधूतहस्ताः सत्यो विदधुः । तादात्म्यभावनया स्वयं दष्टा इव सीत्चक्रुरिति सीत्कारासम्बन्धे तत्सम्बन्धातिशयोक्त्या तन्नामामुद्दीपकमासीदित्युक्तम् ॥ १३ ॥

**उत्क्षिप्तस्फुरित(१)सरोरुहार्घमुच्चैः सस्नेहं विहगरवैरिवाऽऽलपन्ती ॥**
**नारीणामथ सरसी सफेनहासा प्रीत्येव व्यतनुत पाद्यमूर्मिहस्तैः ॥१४॥**

**उत्क्षिप्तेति** ॥ अथानन्तरं सरसी तडागिका महत्सरो वा नारीणां यादवस्त्रीणां पाद्यं पादप्रक्षालनजलं व्यतनुत विस्तारयामास । अभीष्टागमने हि अर्घ्यपाद्यविष्टरादिकं गौरवमुचितम् । किंलक्षणा सरसी सफेनहासा फेनोऽब्धिकफः स एव हासो हास्यं तेन सह वर्तमाना । 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः । कया व्यतनुत, उत्प्रेक्षते—प्रीत्येव हर्षेणेव । अन्योऽपि अभीष्टागमने हर्षात् सहासो भवति । किंलक्षणं पाद्यम् उत्क्षिप्तस्फुरितसरोरुहार्घं निःक्षिप्तमनोहरपद्मार्घयुक्तम्,उत्क्षिप्तः निक्षिप्तः स्फुरितसरोरुहाण्येव रम्यकमलान्येव अर्घः पूजाविधिः यत्र तत्तथा । 'मूल्ये पूजाविधावर्घः' इत्यमरः । अपरं किंभूता सरसी, उत्प्रेक्षते—विहगरवैः पक्षिकूजितैः उच्चैर्गाढस्वरं यथा भवति तथा आलपन्तीव कुशलप्रश्नं कुर्वतीव, अपरं कथं यथा भवति सस्नेहं सप्रीति यथा भवति तथा । प्रीतिवशादित्यर्थः । 'अलापो भाषणं मिथः' इत्यमरः । अन्योऽपि प्रियागमने स्नेहात् गाढमालापं करोति । इति प्राञ्जलत्वोक्तिः । कैः पाद्यं व्यतनुत ऊर्मिहस्तैः कल्लोलकरैः । 'पाद्यं पादाय वारिणी'त्यमरः ॥ १४ ॥

उत्क्षिप्तेति ॥ अथानन्तरमुत्क्षिप्तं स्फुटितसरोरुहं विकचारविन्दमेवार्घ्यमर्घद्रव्यं यस्मिंस्तत्तथा सस्नेहं विहगरुतैरालपन्ती स्वागतादिवचनं व्याहरन्तीव स्थिता इत्युत्प्रेक्षा । फेन इव हासस्तेन सहिता सफेनहासा । स्मितपूर्वाभिभाषिणीत्यर्थः । सरसी पुष्करिणी नारीणामूर्मिभिरेव हस्तैः पाद्यं पादोदकम् । 'पादार्घाभ्यां च' इति यत्प्रत्ययः । प्रीत्येवेत्युत्प्रेक्षा । व्यतनुत । रूपकानुप्राणितोत्प्रेक्षाद्वयस्य सापेक्षत्वात्संसृष्टिः ॥१४॥

**नित्याया निजवसतेर्निरासिरे यद्रागेण श्रियमरविन्दतः कराग्रैः ॥**
**व्यक्तत्वं नियतमनेन निन्युरस्याः सापत्न्यं क्षितिसुतविद्विषो महिष्यः ॥१५॥**

**नित्याया इति** ॥ क्षितिसुतविद्विषः श्रीकृष्णस्य महिष्यः पत्न्यः यत् यतः कारणात् अरविन्दतः कमलात् श्रियं लक्ष्मीं निरासिरे दूरे चक्रुः निचिक्षिपुः । केन रागेण लौहित्येन अथ च द्वेषेण कोपेन वा, कैः निरासुः कराग्रैः हस्तप्रान्तैः,किंभूतात् अरविन्दतः निजवसतेः स्वनिवासात् । अर्थात् श्रिय एव निवासभूतादित्यर्थः । किंलक्षणायाः निजवसतेः नित्यायाः अविनश्वरायाः । अनेन हेतुना एतावता नियतं निश्चितमस्याः श्रियः व्यक्तत्वं स्फुटं स्पष्टम् एताः स्त्रियः सापत्न्यं सपत्नीभावं निन्युः । तन्महिष्यः

(१) स्फुटित······र्घ्य···········रुतै० ।

तस्यावासात् तां निराचक्रुः । अन्यापि स्त्री सपत्नीं कोपेन तद्‌गृहाद् हस्ताग्रेण धृत्वा निःसारयति । अथ च श्रीकृष्णराज्ञ्यः रागेण लौहित्येन वा अरविन्दतः कमलात् श्रियं शोभां चिक्षिपुरित्यर्थः । कराग्रैरारक्तत्वातिशयेन कमलानां रागश्रीरधःकृता । 'शोभासम्पद्रमासु श्रीः' इति विश्वः । क्षितिः पृथ्वी तस्याः सुतो नरकासुरः तस्य विद्विट् शत्रुः श्रीकृष्णस्तस्य । 'कृतभिषेका महिषी'त्यमरः ॥ १५ ॥

**नित्याया इति** ॥ क्षितिसुतविद्विषो नरकाद्विषो हरेर्माहिष्यः कराग्रैः पाणिपल्लवैः करणै रागेण रक्तवर्णेन इच्छया च श्रियं शोभां रमां च नित्यायाः सदातन्याः निजवसतेः स्ववासादरविन्दतोऽरविन्दान्निरासिरे निष्कासयाञ्चक्रुः । निश्चक्रुश्चेति यावत् । 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इति विकल्पादात्मनेपदम् । अनेन निरासेनास्याः श्रियः सापत्न्यं सपत्नीत्वम् । ब्राह्मणादित्वात् ष्यञ् प्रत्ययः । व्यक्तत्वं निन्युः । व्यक्तीचक्रुरित्यर्थः । अत्र श्रीशब्देन रमाशोभयोरभेदाध्यवसायेन श्रीनिवासस्य सापत्न्यव्यक्तीकरणार्थत्वोत्प्रेक्षणात् श्लेषप्रतिमोत्थापितातिशयोक्त्यनुप्राणितेयं फलोत्प्रेक्षेति सङ्करः ॥ १५ ॥

**आस्कन्दन् कथमपि योषितो न यावद्भीमत्यः प्रियकरधार्यमाणहस्ताः ॥**
**औत्सुक्यत्वरित(१)ममूस्तदम्बु तावत्संक्रान्तप्रतिमतया दधाविवाऽन्तः ॥१६॥**

**आस्कन्दन्निति** ॥ तावत्प्रथमं तदम्बु तज्जलम् अमूः एताः अङ्गनाः अन्तर्मध्ये दधाविव धारयामासेव । कया संक्रान्तप्रतिमतया न्यस्तप्रतिबिम्बत्वेन, किंभूतमम्बु औत्सुक्यत्वरितं सम्मिलनोत्कण्ठितम् । तावदिति किं, यावत् ताः योषितः स्त्रियः कथमपि केनापि प्रकारेण न आस्कन्दन् न व्याप्नुवन् । न प्रवेशं चक्रुरित्यर्थः । किंभूता योषितः भीमत्यः सभयाः, अत एवाऽपरं किंलक्षणाः प्रियकरधार्यमाणहस्ताः वल्लभकरैर्धृतहस्ताः । प्रतिबिम्बच्छलेन अम्बु त्वरितेन ताः तावन्मिलितमिति भावः(?) ॥ १६ ॥

**आस्कन्दन्निति** ॥ भीमत्यः प्रवेशभीरवो योषितः प्रियकरैर्धार्यमाणहस्ताः प्रियकरावलम्बाः सत्यः यावत्कथमपि नास्कन्दन्न प्राविशन्, तावत्संक्रान्तप्रतिमतया संक्रान्तप्रतिबिम्बतया तदम्बु कर्तृ औत्सुक्यादुत्कण्ठतया त्वरितममूरन्तर्दधाविव । अन्तः प्रावेशयदिवेत्यर्थः । प्रतिबिम्बसंक्रमणादन्तर्धानोत्प्रेक्षणात् क्रियानिमित्ता क्रियास्वरूपोत्प्रेक्षा ॥ १६ ॥

**ताः पूर्वं सचकितमागमय्य गाधं कृत्वाऽथो मृदुपदमन्तराविशन्त्यः ॥**
**कामिन्यो मन इव कामिनां(२) सरागैरङ्गैस्तज्जलमनुरञ्जयाम्बभूवुः ॥१७॥**

**ताः पूर्वमिति** ॥ ताः कामिन्योऽङ्गनाः तज्जलमुदकम् अङ्गैस्तनुभिः कृत्वा अनुरञ्जयाम्बभूवुः रक्तमकार्षुः । किंभूतैः अङ्गैः सरागैः सकुङ्कुमलौहित्यैः, किमिव कामिनां मन इव । यथा ताः कामिनां मनः मानसमनुरञ्जयन्ति । कैः अङ्गैः सरागैः सविलेपनैः शरीरैः, आसक्तिवशात कान्तस्य मनो रञ्जयन्ति स्मेत्यर्थः । किं कुर्वत्यः पूर्वं प्रथमं सचकितं सभयं यथा भवत्येवमागमय्य आगत्य उत्तारं कृत्वा अथ पश्चात् गाधं विधाय प्रतिष्ठां कृत्वा सुस्थानं गृहीत्वा मृदुपदं कोमलपदं मन्दमन्दम् अन्तर्मध्ये आविशन्त्यः प्रविशन्त्यः ॥ १७ ॥

**ताः पूर्वमिति** ॥ ताः कामिन्यः कामिनः कामुकस्य मन इव तज्जलं पूर्वं प्रथमं सचकितं सभयं यथा तथा गाधमुत्तानमागमय्य गमनेन ज्ञात्वा । पुरःप्रविष्टपुरुषमुखेन गाधं तदिति परामृश्येत्यर्थः । अन्यत्र दूतमुखेन ज्ञात्वेत्यर्थः । अथो अनन्तरं मृदु मन्दं पदं कृत्वा पदं न्यस्य । अन्यत्र तु स्वयं सम्भाषणादिकं

---

( १ ) औत्सुक्यात्त्वरित । ( २ ) कामिनः ।

कृत्वेत्यर्थः । अन्तरमभ्यन्तरमाविशन्त्यः प्रविष्टाः सत्यः । अन्यत्र रहस्यकर्मणि प्रवृत्ता इत्यर्थः । सरागैः साङ्गरागैः सानुरागैश्चाङ्गैर्गात्रैस्तुरङ्गयाम्बभूवुस्तद्वर्णाक्रान्तं चक्रुः । अन्यत्र त्वनुरक्तं चक्रुरित्यर्थः । श्लेष-सङ्कीर्णेयमुपमा ॥ १७ ॥

**सङ्क्षोभं पयसि मुहुर्महेभकुम्भश्रीभाजा कुचयुगलेन नीयमाने ॥**
**विश्लेषं युगमगमद्रथाङ्गनाम्नोरुद्वृत्तः क इव सुखावहः परेषाम् ॥१८॥**

सङ्क्षोभमिति ॥ रथाङ्गनाम्नोः चक्रवाकयोः युगं युगलं विश्लेषं वियोगमगमत् प्राप । क सति पयसि उदके कुचयुगलेन अङ्गनास्तनयुग्मेन मुहुर्वारंवारं सङ्क्षोभं नीयमाने सति कम्पं प्राप्यमाणे सति, किंभूतेन कुचयुगलेन महेभकुम्भश्रीभाजा महेभस्य कुम्भयोः शिरःपिण्डयोः श्रियं शोभां भजते आश्रयतीति तेन गजकुम्भवत् स्थूलेन । युक्तमिदं, यतः कारणात् उद्वृत्तः चलितवृत्तः चलिताचारपुरुषः परेषामन्येषां क इव सुखावहः क इव सुखप्रदः, अपि तु न क इव सुखावहो भवति । अथ च उद्वृत्तं स्तनयुगलं वर्तुलाकार-मस्ति, तच्चक्रवाकयोर्वियोगान्न सुखावहं स्तनयुगलं, यत उद्वृत्तमिति भावः । 'कुम्भौ तु पिण्डौ शिरसः' इत्यमरः ॥ १८ ॥

सङ्क्षोभमिति ॥ महेभकुम्भश्रीभाजा । तत्सदृशश्रीभाजेत्यर्थः । अत एवाऽसम्भवद्वस्तुसम्बन्धो निदर्शना-लङ्कारः । कुचयुगलेन । उल्लसितेनेति भावः । पयसि मुहुः सङ्क्षोभं नीयमाने प्राप्यमाणे सति रथाङ्गनाम्नो-र्युगं चक्रवाकयुगलं विश्लेषं वियोगमगमत् । वियोगासहमपीति भावः । तथा हि—उद्वृत्त उन्नतो वृत्तश्च, उद्वर्तनं यस्येति वा उद्वृत्तः । अन्यत्रोद्धतः, उन्मार्गवर्तीति यावत् । सः क इव को वा परेषां स्वेतरेषां सुखावहः सुखकरः । न कोऽपीत्यर्थः । अयं च श्लेषमूलातिशयोक्तिजीवितोऽर्थान्तरन्यासः ॥ १८ ॥

**आसीना तटभुवि सस्मितेन भर्त्रा रम्भोरूरवतरितुं सरस्यनिच्छुः ॥**
**धुन्वाना करयुगमीक्षितुं विलासाञ्शीतालुः सलिलगतेन सिच्यते स्म ॥१९॥**

आसीनेति ॥ भर्त्रा वल्लभेन रम्भोरूः कदलीसुकुमारोरूः सिच्यते स्म सिक्ता । किंभू-तेन भर्त्रा सस्मितेन ईषद्धासयुक्तेन, अपरं किंभूतेन भर्त्रा सलिलगतेन वारिमध्यस्थितेन, किं-लक्षणा सा सरसि तडागे अवतरितुमनिच्छुः प्रवेष्टुमनिच्छन्ती, अपरं किंलक्षणा सा शीतालुः शीतयुक्ता । शीतार्तेत्यर्थः । शीतं विद्यते यस्याः सा शीतालुः । पुनः किंलक्षणा सा तट-भुवि आसीना तीरे उपविष्टा, किं कर्तुं भर्त्रा सिच्यते स्म विलासान् ईक्षितुं तत्कृतविभ्र-मान् विलोकयितुं, किं कुर्वाणा करयुगं धुन्वाना हस्तद्वयं धूनयन्ती ॥ १९ ॥

आसीनेति ॥ शीतं न सहत इति शीतालुः शीतभीरुः । शीतोष्णाभ्यां तदसहने आलुज्वक्तव्यः । अत एव सरसि अवतरितुं प्रवेष्टुमनिच्छुरनभिलाषुका अत एव तटभुवि आसीना उपविष्टा । आसेः कर्त-रि शानच् । 'ईदासः' इतीकारः । रम्भे कदलीस्तम्भाविवोरू यस्याः सा रम्भोरूः स्त्री । 'ऊरूत्तरपदा-दौपम्ये' इत्यूङ्प्रत्ययः । सलिलगतेन स्वयं सलिलं प्रविष्टेन सस्मितेन भर्त्रा विलासानीक्षितुं करयुगं धुन्वा-ना कम्पयन्ती । धुनोतेः कर्तरि शानच् प्रत्ययः । सिच्यते स्म सिक्ता ॥ १९ ॥

**नेच्छन्ती सममनुना सरोऽवगाढुं रोधस्तः प्रतिजलमीरिता सखीभिः ॥**
**आश्लिक्षद्भयचकितेक्षणं नवोढा वोढारं विपदि न दूषिताऽतिभूमिः ॥२०॥**

नेच्छन्तीति ॥ नवोढा नवपरिणीताऽङ्गना वोढारं कान्तमाश्लिक्षत आलिलिङ्ग, कथं यथा भवति भयचकितेक्षणं भयेन चकिते चपले ईक्षणे नयने यथा भवति तथा । यतः किंभूता सा रोधस्तः तटात् सखीभिः वयस्याभिः प्रतिजलं जलं प्रति ईरिता क्षिप्ता, किं कुर्वती सा अमुना कान्तेन सह सरः अवगाढुं तडागं विलोडितुं न

इच्छन्ती न अभिलषमाणा, अत एव सखीभिस्तटात्प्रेरिता । एतत् युक्तं, यतः कारणात् विपदि आपदि सत्याम् अतिभूमिः न दूषिता न निषिद्धा भवति मर्यादोल्लङ्घनं न दूषितं, न दोषायेत्यर्थः । कष्टप्राप्तौ मर्यादाऽतिक्रमणं नो दुष्यति । तदा युक्तमयुक्तं सर्वमपि क्रियते । ततोऽनया सखीसमक्षं भयेन वल्लभालिङ्गनमकारीति भावः । आश्लिक्षत इति श्लिष आलिङ्गने दिवादेः 'श्लिष' इति लुङि क्सादेशे रूपम्(१) ॥ २० ॥

नेच्छन्तीति ॥ अमुना सममनेन भर्त्रा सह सरोऽवगाढुमवगाहितुम् । 'स्वरतिसूतिसूयतिधूञूदितो वा' इति विकल्पान्नेडागमः । नेच्छन्ती लज्जयाऽनिच्छन्ती । नञर्थस्य नशब्दस्य 'सुप्सुपे'ति समासः । अनञ्समासो वा । अथ सखीभिः प्रतिजलं जलं प्रति रोधस्तो रोधसः । पञ्चम्यास्तसिल् । ईरिता नुन्ना नवोढा नववधूः भयेन चाकितेक्षणं सम्भ्रान्तदृष्टि यथा तथा वोढारं भर्तारमाश्लिक्षदालिङ्गितवती । 'श्लिष आलिङ्गने' इति धातोर्लुङि च्लेः क्सादेशः । न च धाष्टर्यदोषापत्तिरित्याह—विपदि विपत्तौ अतिक्रान्ता भूमिरतिभूमिरमर्यादा न दूषिता । 'आपत्काले नास्ति मर्यादा' इति न्यायादिति भावः ।अर्थान्तरन्यासालङ्कारः ॥

**तिष्ठन्तं पयसि पुमांसमंसमात्रे तद्घ्नं तदवयती किलात्मनोऽपि ॥**
**अभ्येतुं सुतनुरभीरियेष मौग्ध्यादाश्लेषि द्रुतममुना निमज्जतीति ॥२१॥**

तिष्ठन्तमिति ॥ सुतनुः वराङ्गी अङ्गना पुमांसमभ्येतुमियेष वल्लभं प्राप्तुं ववाञ्छ । कस्मात् मुग्धस्य भावो मौग्ध्यं तस्मात् अज्ञानात्, किंलक्षणा सुतनुः अभीः भयरहिता, किंभूतं पुमांसम् अंसमात्रे पयसि तिष्ठन्तं स्कन्धपरिमाणे उदके वर्तमानं, किं कुर्वती सुतनुः किलेत्यलीके, अज्ञानेन तत्पयः आत्मनोऽपि स्वस्यापि तद्घ्नं तत्परिमाणमंसपरिमाणम् अवयती । कथमेवं प्रतीयते, यत् अमुना कान्तेन इति कारणात् द्रुतं झटित्येव आश्लेषि आलिङ्गिता । इतीति किं—यत् एषा निमज्जति ब्रुडतीति ॥ २१ ॥

तिष्ठन्तमिति ॥ सुतनुः शुभाङ्गी स्त्री अंसः प्रमाणमस्येति अंसमात्रे अंसप्रमाणे । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति मात्रच्प्रत्ययः । पयसि जले तिष्ठन्तं पुमांसम् । वीक्ष्येति शेषः । आत्मनोऽपि तत्पयः तद्घ्नं तावन्मात्रमसमात्रम् अवयती जानती किल । तथा सम्भावयन्तीत्यर्थः । 'वार्तासम्भाव्ययोः किल' इत्यमरः । अवपूर्वादिणः शतरि 'इणो यण्' यति यणादेशः, 'उगितश्च' इति ङीप् । किलशब्दस्यालीकार्थत्वे मौग्ध्यविरोधः । अत एव मौग्ध्यादविवेकादभीर्निर्भीका सती अभ्येतुं पुमांसमभिगन्तुमियेष इच्छति स्म । अमुना पुंसा निमज्जतीति द्रुतमाश्लेषि आश्लिष्टा ॥ २१ ॥

**आनाभेः सरसि नतभ्रुवाऽवगाढे चापल्यादथ पयसस्तरङ्गहस्तैः ॥**
**उच्छ्रायि स्तनयुगमध्यरोहि लब्धस्पर्शानां भवति कुतोऽथ वा व्यवस्था॥२२॥**

आनाभेरिति ॥ अथ पश्चात् पयसः पानीयस्य तरङ्गहस्तैः कल्लोलकरैः स्तनयुगम् अध्यरोहि स्तनयुगलमवलम्बितम् । किंभूतं कुचयुगम् उच्छ्रायि उन्नतं, कुतः अध्यरोहि चापल्यात् चपलत्वात्, क सति नतभ्रुवा अङ्गनया सरसि तडागे आनाभेः नाभिं यावत् अवगाढे सति विलोडिते सति । अथ वा युक्तमेव, यतः कारणात् लब्धस्पर्शानां प्राप्तसङ्गानां कुतः व्यवस्था भवति कथं धैर्यं स्यात्, अपि तु न कुत एव । यैर्हि अङ्गनास्पर्शो लब्धः, तेषां धैर्यं नास्त्येव । अत एव पयसस्तरङ्गैस्तत्संयोगे सति स्तनयुगमवलम्बितमिति भावः ॥ २२ ॥

आनाभेरिति ॥ नतभ्रुवा स्त्रिया सरसि आनाभेर्नाभिपर्यन्तम् । 'आङ् मर्यादाऽभिविध्योः' इति विकल्पा-

( १ ) 'दिवादेर्य इति ल''''रूपम्' इति मूलपुस्तके।

दसमासः । अवगाढे प्रविष्टे सति । गाहेः कर्मणि क्तः । अथ पयसश्चापल्याल्लौल्यात् । ब्राह्मणादिषु पाठात् ष्यञ्प्रत्ययः । तरङ्गैरेव हस्तैस्तरङ्गहस्तैः, उच्छ्रायोऽस्यास्तीत्युच्छ्रायि उन्नतिमत् स्तनयुगमध्यरोहि अधिरूढम्। भिक्षुकपादप्रसारणन्यायादिति भावः । रोहतेः कर्मणि लुङ् । अथ वा, तथा हीत्यर्थः । लब्धस्पर्शानाम् । लब्धप्रवेशानामित्यर्थः । कुतः कुत्र वा । सार्वविभक्तिकस्तसिल् । व्यवस्था मर्यादा भवति । न कुत्रापीति भावः । प्रायेण सर्वेऽप्यसम्भवब्रह्मचारिण एवेति भावः । अत्र चापल्यादिति द्वयोरपि लौल्ययोरभेदाध्यवसायमूलातिशयोक्त्या तरङ्गहस्तैरिति रूपकेण च पयसि कामित्वप्रतीतेः समासोक्तिः, तदुपजीवी चार्थान्तरन्यास इति सङ्करः ॥ २२ ॥

**कान्तानां कुवलयमप्यपास्तमक्ष्णोः शोभाभिर्न मुखरुचाऽहमेकमेव ॥**
**सङ्घर्षा(१)दलिविरुतैरितीव गायल्लोलोर्मौ पयसि महोत्पलं ननर्त ॥ २३ ॥**

**कान्तानामिति ॥** महोत्पलं कमलं पयसि पानीये ननर्त नृत्यमकार्षीत्, कस्मात् सङ्घर्षात् स्पर्धावशात् । महोत्पलं किं कुर्वत् नृत्यति स्म, उत्प्रेक्षते—अलिविरुतैः भ्रमरगुञ्जितरवैः इति गायत् इदं शब्दायमानमिव, किंलक्षणे पयसि लोलोर्मौ चञ्चलकल्लोले । इतीति किं गायत् जल्पत् वर्तते—यत्, कान्तानां सुन्दरीणामक्ष्णोः शोभाभिः नेत्रयोः श्रीभिः कुवलयमपि इन्दीवरमपि अपास्तं निर्जितमधःकृतम् । न केवलं मुखरुचा वदनशोभया अहमेव अपास्तं तिरस्कृतं, नेत्रयोः शोभाभिः इन्दीवरमपि निरस्तमिति गायत सत् स्पर्धावशात् ननर्तेवेति भावः । अन्योऽपि परपराभूतः सन् प्रतियोगिनमपि पराभूतं (दृष्ट्वा) स्पर्धया नृत्यत्येव । 'स्यादुत्पलं कुवलयं', 'अरविन्दं महोत्पल'मित्यमरः॥२३॥

**कान्तानामिति ॥** लोलोर्मौ चपलोर्मिणि । 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति विकल्पात्पुंवद्भावः । पयसि महोत्पलमरविन्दं कर्तृ । 'अरविन्दं महोत्पलम्' इत्यमरः । कान्तानां मुखरुचाहऽमेकमेव नाऽपास्तं, किन्तु तासामक्ष्णोः शोभाभिः कुवलयमप्यपास्तमिति संहर्षात्सन्तोषाद्धेतोरलिविरुतैर्गायत् अलिरुतरूपं गानं कुर्वदिति रूपकम् । 'इत्थम्भूतलक्षणे' इति तृतीया । ननर्तेव । 'न दुःखं पञ्चभिः सह' इति न्यायान्नृत्यति स्म । अत्रोर्मिचलनहेतुके महोत्पलचलने अलिनादसंहर्षहेतुकसमाननृत्यत्वोत्प्रेक्षणात् क्रियानिमित्तक्रियास्वरूपोत्प्रेक्षा वाच्या ॥ २३ ॥

**त्रस्यन्ती चलशफरीविघट्टितोरूर्वामोरूरतिशयमाप विभ्रमस्य ॥**
**क्षुभ्यन्ति प्रसभमहो! विनापि हेतोर्लीलाभिः किमु सति कारणे तरुण्यः(२) २४**

**त्रस्यन्तीति ॥** वामोरूः प्रशस्तोरूरङ्गना विभ्रमस्य अतिशयमाप विलासस्याधिक्यं प्रापत्, किं कुर्वती सा त्रस्यन्ती बिभ्यती । भये कारणमाह—अपरं किंभूता सा चलशफरीविघट्टितोरूः चञ्चलमत्स्यीसङ्घर्षितजघना, चलाः चटुलाः शफर्यः प्रोष्ठ्यः ताभिः विघट्टितौ सङ्घर्षितौ ऊरू सक्थिनी यस्याः सा । अहो इति आश्चर्यं, तरुण्योऽङ्गनाः प्रसभमौत्सुक्यात् हेतोर्विनाऽपि कारणमृतेऽपि क्षुभ्यन्ति बिभ्यति, काभिः हेलाभिः लीलाभिः । किं पुनः कारणे सति भयकारणे सति । कारणेन विनापि ताः स्त्रियः बिभ्यति, तर्हि कारणे सति किं भणनीयमिति भावः ॥ २४ ॥

**त्रस्यन्तीति ॥** चलाः शफर्यः यातुकामा मत्स्यः । 'प्रोष्ठी तु शफरी द्वयोः' इत्यमरः । ताभिर्विघट्टितौ विद्धावुरू यस्याः सा अत एव त्रस्यन्ती बिभ्यती । 'वा भ्राश—' इत्यादिना विकल्पात् श्यनि शतरि ङीप् । वामौ सुन्दरावुरू यस्याः सा वामोरूः स्त्री । 'संहितशफलक्षणवामादेश्च' इत्यूङ् प्रत्ययः । विभ्रमस्य विलासस्याऽतिशयमाप । तथा हि—रमण्यो हेतोर्विनापि कारणं विनापि । 'पृथग्विना—' इत्यादिना विकल्पात्

---

(१) संहर्षा० । (२) रमण्यः ।

पञ्चमी। लीलाभिर्विलासैः प्रसभं प्रकामं क्षुभ्यन्ति अहो ! निष्कारणक्षोभादाश्चर्यमित्यर्थः। कारणे सति किमु वक्तव्यम्। अत्राप्रकृतनिष्कारणक्षोभकथनात्सकारणक्षोभस्य कैमुत्यन्यायलभ्यत्ववर्णनादर्थापत्तिरलङ्कारः। 'दण्डापूपिकयाऽर्थान्तरस्यापतनमर्थापत्तिः' इति सूत्रम्॥ २४॥

**आकृष्टप्रतनुवपुर्लतैस्तरद्भिस्तस्याऽम्भस्तदथ सरोमहार्णवस्य॥**
**अक्षोभि प्रसृतविलोलबाहुपक्षैर्योषाणामुरुभिरुरोजगण्डशैलैः॥ २५॥**

**आकृष्टेति॥** अथानन्तरं योषाणां स्त्रीणामुरोजगण्डशैलैः वक्षोजस्थूलपाषाणैः तस्य सरोमहार्णवस्य तडागमहासागरस्य तत् अम्भः पानीयमक्षोभि क्षोभितं चालितम्। किंभूतैः उरोजगण्डशैलैः उरुभिः स्थूलैः, अपरं किंभूतैः स्तनशैलैः प्रसृतविलोलबाहुपक्षैः प्रसृताः प्रसारिता विलोलाः चपला बाहवो भुजा एव पक्षा गरुतो येषां ते तैः। किल शैलेषु पक्षा भवन्ति। पुनः किंभूतैः स्तनशैलैः आकृष्टप्रतनुवपुर्लतैः वपुरेव लता वपुर्लता आकृष्टा-आकर्षिताः प्रतनवः सूक्ष्मा वपुर्लताः शरीरवल्लयो यैस्ते तैः। किल गिरयोऽपि धृतवल्लयो भवन्ति। यतः किं कुर्वद्भिः स्तनशैलैः तरद्भिः प्लवमानैः। किल अन्येऽपि सपक्षा गण्डशैलास्तरन्ति, तरन्तो लताः आकर्षयन्ति, तथाऽम्भश्चालयन्ति। 'गलिताः स्थूलपाषाणा गण्डशैला इति स्मृताः'। स्तनानां गण्डशैला उपमानं, बाहूनां पक्षाः, वपुषां लताश्चोपमानम्॥ २५॥

आकृष्टेति॥ अथानन्तरमाकृष्टाः प्रतनवो वपूंष्येव लता यैस्तैस्तरद्भिः प्लवमानैः प्रसृता आयता विलोलाश्चला बाहव एव पक्षा गरुन्ति(१)येषां तैः। गिरिधर्मस्य पक्षवत्त्वस्य तदवयवेषूपचारः। उरुभिर्महद्भिर्योषाणां स्त्रीणामुरोजैरेव गण्डशैलैर्गिरिच्युतैः स्थूलोपलैस्तस्य सर एव महार्णवस्तस्य तदम्भः अक्षोभि क्षुभ्यतेर्ण्यन्तादण्यन्ताद्वा कर्मणि लुङ्। समस्तवस्तुविषयकं सावयवं रूपकम्॥ २५॥

**गाम्भीर्यं दधदपि रन्तुमङ्गनाभिः सङ्क्षोभं जघनविघट्टनेन नीतः॥**
**अम्भोधिर्विकसितवारिजाननोऽसौ मर्यादां सपदि विलङ्घयाम्बभूव॥२६॥**

**गाम्भीर्यमिति॥** असौ अम्भोधिः सरोमहार्णवः सपदि वेगेन मर्यादां विलङ्घयाम्बभूव सीमां तत्याज। किंभूतः अम्भोधिः विकसितवारिजाननः विकसितानि प्रोत्फुल्लानि वारिजानि पद्मान्येव आननं मुखमस्य सः तथा प्रफुल्लपद्मवदनः, किं कुर्वन् गाम्भीर्यं दधदपि गम्भीरतां धारयन्नपि, अपरं किंभूतः अम्भोधिः अङ्गनाभिः स्त्रीभिः रन्तुं क्रीडितुं जघनविघट्टनेन नितम्बघर्षणेन सङ्क्षोभं नीतः प्रचलत्वं प्रापितः। अन्योऽपि गाम्भीर्यं धीरत्वं दधदपि पुमान् अङ्गनया क्रीडितुं जघनेनाहतः सपदि मर्यादां धैर्यं त्यजति, अपरं विकसितमुखकमलश्च भवतीत्युक्तिः॥ २६॥

**गाम्भीर्यमिति॥** गाम्भीर्यमगाधत्वमविकारिचित्तत्वं च दधदपि गम्भीरः सन्नपि रन्तुं विहर्तुं सङ्गन्तुं चाऽङ्गनाभिर्जघनस्य विघट्टनेन सङ्घर्षेण सङ्क्षोभं चलनं चित्तविकारं च नीतः अत एव विकसितं वारिजमाननमिव वारिजमिव चाननं यस्य सः, अम्भांसि धीयन्तेऽस्मिन्निति अम्भोधिर्जलाशयः। कश्चित् पुमांश्च तत्तुल्यो गम्यते। 'कर्मण्यधिकरणे च' इति किप्रत्ययः। सपदि मर्यादां सीमानामौचितीं च विलङ्घयाम्बभूव लङ्घितवान्। धीरोऽपि स्त्रीसन्निकर्षाद्विक्रियत इति भावः। अत्र गाम्भीर्यादिप्रकृताम्भोधिविशेषणसाम्यादप्रकृतविशेष्यपुरुषप्रतीतेः समासोक्तिरलङ्कारः। सा च प्रतीयमानाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितेति सङ्करः॥ २६॥

**अन्वेष्टुं(२) दयितमिवाऽवगाढमाराद्दूर्मीणां ततिभिरभिप्रसार्यमाणः॥**
**कस्याश्चिद्वितत चलच्छिखाङ्गुलीको लक्ष्मीवान् सरसि रराज केशहस्तः॥२७॥**

---

(१) क्लीबत्वमत्र चिन्त्यम्। (२) आदातुं।

**अन्वेष्टुमिति** ॥ कस्याश्चित् अङ्गनायाः केशहस्तः हस्तप्रायः केशपाशः सरसि तडागे रराज शुशुभे । किंभूतः केशहस्तः लक्ष्मीवान् सश्रीकः, पुनः किंभूतः केशहस्तः विततचलच्छिखाऽङ्गुलीकः वितताः विस्तीर्णाः चलन्त्यः कम्पमानाः शिखाः पर्यन्ता यासाम् एवमङ्गुल्यः करशाखा यस्य सः । हस्ते किल अङ्गुल्यो भवन्ति अत एव साङ्गुलीकः । अपरं किंभूतः केशहस्तः ऊर्मीणां ततिभिः कल्लोलानां समूहैः अभिप्रसार्यमाणः विस्तार्यमाणः । उत्प्रेक्षते–दयितं वल्लभमन्वेष्टुमिव विलोकयितुमिव प्रसारितः, किंभूतं दयितम् आरात् अवगाढं समीपे ब्रुडितम् । हि किल हस्तेन विलोक्यते, अस्मात् केशहस्त इत्युक्तम् ॥ २७॥

**आदातुमिति** ॥ सरसि वितताः प्रसारिताश्चलन्त्यश्च शिखा अग्राण्येवाऽङ्गुल्यो यस्य सः । 'नद्यृतश्च' इति कप् । लक्ष्मीवान् शोभावान् । 'मादुपधायाश्च मतोर्वोऽयवादिभ्य' इति मतुपो मकारस्य वत्वम् । कस्याश्चित्केशहस्तः केशपाशः । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । हस्त इति करश्च ध्वन्यते । आरात्समीपे । 'आराद् दूरसमीपयोः' इत्यमरः । अवगाढमन्तर्मग्नं दयितमादातुं ग्रहीतुमिव ऊर्मीणां ततिभिः समूहैरभिप्रसार्यमाणोऽभितो व्यापार्यमाणः सन् रराज । अत्रादातुमिव प्रसार्यमाण इति प्रसारणस्यादानार्थत्वोत्प्रेक्षणादियं क्रियानिमित्ता क्रियाफलोत्प्रेक्षा । सा च चलच्छिखाऽङ्गुलीक इति रूपकानुप्राणितया हस्त इति श्लेषमूलया वाच्यस्य केशकलापस्य प्रतीयमानात्कराद्भेदे अभेदरूपातिशयोक्त्या निर्व्यूढेति सङ्करः ॥ २७ ॥

**उन्निद्रप्रियकमनोरमं रमण्याः संरेजे सरसि वपुः प्रकाशमेव ॥**
**युक्तानां विमलतया तिरस्क्रियायै नाक्रामन्नपि हि भवत्यलं जलौघः ॥२८॥**

**उन्निद्रेति** ॥ रमण्याः नायिकायाः वपुः शरीरं सरसि तडागे संरेजे संरराज । किंभूतं वपुः प्रकाशमेव प्रकटमेव, पुनः किंभूतं वपुः उन्निद्रप्रियकमनोरमं विकस्वरबीजककुसुमरमणीयम् । युक्तोऽयमर्थः, हि यस्मात् कारणात् जलौघः जलसमूहः विमलतया युक्तानां निर्मलतया सहितानां तिरस्क्रियायै न अलं भवति अन्तर्धानार्थं न समर्थो भवति । विमलं हि जलेन नाच्छाद्यते । किं कुर्वन्नपि जलौघः आक्रामन्नपि आच्छादयन्नपि । अथ च डलयोरैक्याज्जडौघः दुर्जनवर्गः विमलतया युक्तानां निष्कलङ्कानां तिरस्क्रियायै परिभवाय न भवति । जडौघः किं कुर्वन् आक्रामन्नपि आस्कन्दन्नपि । न हि दुर्जनेन निष्कलङ्कः पराभूयते इति भावः ॥ २८ ॥

**उन्निद्रेति** ॥ उन्निद्रं यत्प्रियकमसनकुसुमम् । 'सर्जकाऽसनबन्धूकपुष्पप्रियकजीवकाः' इत्यमरः । तदिव मनोरमम् । कनकगौरमित्यर्थः । रमण्या वपुः सरसि प्रकाशमेव जलमग्नमपि वैमल्याल्लक्ष्यमेव संरेजे । तथा हि—जलौघो जलपूरो, जडौघो मूर्खजनौघश्च डलयोरभेदात्, आक्रामन्नावृण्वन्नपि अन्यत्र अधिक्षिपन्नपि विमलतया वैमल्येन युक्तानां शुद्धानां तिरस्क्रियायै तिरोधानाय परिभवाय च अलं समर्थो न भवति हि । श्लेषमूलया भेदेऽभेदरूपातिशयोक्त्याऽनुप्राणितोऽयमर्थान्तरन्यासः ॥ २८ ॥

**किं तावत्सरसि सरोजमेतदारादाहोस्विन्मुखमवभासते युवत्याः ॥**
**संशय्य क्षणमिति निश्चिकाय कश्चिद्बिब्बोकैर्बकसहवासिनां परोक्षैः ॥२९॥**

**किं तावदिति** ॥ कश्चिद् विलासी निश्चिकाय निश्चयं लेभे, किं कृत्वा क्षणं क्षणमात्रम् इति अमुना प्रकारेण संशय्य सन्देहं कृत्वा । इतीति किं—यत, तावदित्युपक्रमे, आहोस्वित् इति वितर्के, सरसि तडागे आरात् समीपे एतत् किं सरोजम् इदं किं कमलम्, आहोस्वित् युवत्याः नायिकायाः मुखं वदनमवभासते शोभते इति सन्देहः प्राक् बभूवेत्यर्थः । पश्चान्निश्चयं लेभे, कैः बिब्बोकैः विलासैः ललितविभ्रमैः। लीलाभिरित्यर्थः । 'हेला

ल्लीला च बिब्बोक' इत्यमरः। किंलक्षणैः बिब्बोकैः बकसहवासिनां परोक्षैः बकैः बकोटैः सह वसन्तीति बकसहवासीनि तेषां कमलानामगोचरैः । बकसहवासिनामिति साभिप्रायं, न हि कमलेषु विलासाः कटाक्षनिरीक्षणादिका भवन्तीति परिज्ञाया-ऽङ्गनामुखमिदं न कमलमिति निश्चयं प्रापदिति भावः । बकसहवासिषु विलासाः परोक्षा-अवर्तमाना इति भावः ।। २९ ।।

किं तावदिति॥ सरसि आराद् दूरादेतत्पुरोवर्ति तावत्सरोजं किम्, आहोस्वित् उत युवत्या मुखमवभासत इति क्षणं संशय्य सन्दिह्य । शीङः क्त्वो ल्यप् 'अयङ् यि क्ङिति' इत्ययङादेशः । कश्चिद्विलासी बकसहवासिनां बकसहचारिणाम् । पद्मानामित्यर्थः। विलासशून्यताद्योतनार्थमित्थं निर्देशः । परोक्षैरप्रत्यक्षैरननुभूतचरैः। अविद्यमानैरिति यावत् । बिब्बोकैः । विलासैरित्यर्थः । यद्यपि 'बिब्बोकोऽनादरक्रिया' इत्युक्तम्, तथापि विशेषवाचिनां सामान्ये लक्षणेत्यदोषः । निश्चिकाय । विशेषदर्शनान्मुखमेवेति निश्चितवानित्यर्थः । सन्देहाऽलङ्कारोऽयम् ।

'विषयो विषयी यत्र सादृश्यात्कविसंमतात्!
सन्देहगोचरौ स्यातां सन्देहाऽलङ्कृतिश्च सा' ॥

इति लक्षणात् । सोऽप्यन्ते निश्चयोक्तेर्निश्चयान्तः ॥ २९ ॥

**शृङ्गाणि द्रुतकनकोज्ज्वलानि गन्धाः कौसुम्भं पृथुकुचकुम्भसङ्गि वासः ॥**
**माध्वीकं(१) प्रियतमसन्निधानमासन्नारीणामिति जलकेलिसाधनानि ॥३०॥**

शृङ्गाणीति ॥ नारीणामङ्गनानाम् इति इमानि जलकेलिसाधनानि उदकक्रीडोपकरणानि आसन् बभूवुः । तावत् कानि शृङ्गाणि विषाणानि, किंभूतानि शृङ्गाणि द्रुतकनकोज्ज्वलानि विलीनसुवर्णसमप्रभाणि, पुनः कानि गन्धाः अङ्गरागाश्च, अपरं किं कौसुम्भं वासः कुसुम्भेन रक्तं कौसुम्भं वस्त्रं च, किंभूतं कौसुम्भं पृथुकुचकुम्भसङ्गि पृथुकुचकुम्भयोः सङ्गोऽस्यास्तीति । विशालस्तनकलशोपरि स्थितमित्यर्थः। अपरं किं माध्वीकं षाण्मासिकी मदिरा च, अपरं किं प्रियतमसन्निधानं भर्तृसामीप्यं च । एतानि सर्वाणि जलकेलिसाधनानि बभूवुरित्यर्थः । 'विलीने विद्रुतद्रुता'वित्यमरः ॥ ३० ॥

अथ जलक्रीडासम्भारानाह—

शृङ्गाणीति ॥ द्रुतेन तप्तनिषिक्तेन कनकेनोज्ज्वलानि । लिप्तानीत्यर्थः । शृङ्गाणि क्रीडाम्बुयन्त्राणि । 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके' इति विश्वः । गन्धाश्चन्दनकुङ्कुमादिगन्धद्रव्याणि । अत एव पुंसि बहुत्वं च ।

'गन्धस्तु सौरभे योगे गन्धके गर्वलेशयोः ।
स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः' ॥

इत्यभिधानात् । पृथु विशालं कुचकुम्भसङ्गि कुचावरणं कुसुम्भेन रक्तं कौसुम्भम् । 'तेन रक्तं रागात्' इत्यण् प्रत्ययः । वासो वस्त्रं मृद्वीकाया विकारो मार्द्वीकं द्राक्षामयम् । 'मृद्वीका गोस्तनी द्राक्षा' इत्यमरः । किञ्च प्रियतमसन्निधानम् । सर्वसाफल्यकारणमिति भावः । इत्येतानि नारीणां जलकेलिसाधनानि जलक्रीडोपाया आसन् । उद्दीपकसम्पत्तिरुक्ता । अत्र शृङ्गादीनां केलिसाधनत्वस्वरूपतुल्यधर्मयोगात् । प्रकृतत्वाच्च केवलप्रकृतगोचरा तुल्ययोगिता ॥ ३० ॥

**उत्तुङ्गादनिलचलांशुकास्तटान्ताच्चेतोभिः सह भयदर्शिनां प्रियाणाम् ॥**
**श्रोणीभिर्गुरुभिरतूर्णमुत्पतन्त्यस्तोयेषु द्रुततरमङ्गना निपेतुः ॥ ३१ ॥**

उत्तुङ्गादिति ॥ अङ्गना युवतयः द्रुततरं वेगवत्तरं यथा भवति तथा तटान्तात्

(१) मार्द्वीकं ।

गेभ्यस्तः तोयेषु उदकेषु निपेतुः पतिताः । किंभूतात् तटान्तात् उत्तुङ्गात् उच्चैस्तरात् , किंभूताः अङ्गनाः अनिलचलांशुकाः उन्नततटात्पतनोद्भूतवातचञ्चलवसनाः, कथं निपेतुः प्रियाणां वल्लभानां चेतोभिः सह मानसैः सार्धम् । कान्तैस्तत्र चित्तं न्यस्तमिति भावः । अत एव चित्तैः समं पतिताः । किंभूतानां प्रियाणां भयदर्शिनां भयशङ्किनां दुष्प्रमादभीतानाम् , अङ्गनाः किं कुर्वत्यः अतूर्णं मन्दमुत्पतन्त्यः, किंभूताः अङ्गनाः श्रोणीभिः कटीभिरुपलक्षिताः, किंभूताभिः श्रोणीभिः गुरुभिर्विशालाभिः । अत एव मन्दमुल्ललन्त्य इति भावः । 'कटिः श्रोणिः ककुद्मती' इत्यमरः ॥ ३१ ॥

उत्तुङ्गादिति ॥ अनिलेन वेगानिलेन चलांशुकाश्चलद्वसना अङ्गनाः उत्तुङ्गात्तटान्ताद्भयदर्शिनां भयोत्प्रेक्षिणाम् । अनर्थाशङ्किनामित्यर्थः । प्रियाणां चेतोभिः सह । तेषां तत्रैवावधानादिति भावः । गुरुभिर्गुर्वीभिः । 'वोतो गुणवचनात्' इति विकल्पादनीकारः । श्रोणीभिर्हेतुना अतूर्णं मन्दमुत्पतन्त्यस्तोयेषु द्रुततरं निपेतुः । गुरुत्वस्य पतनहेतुत्वादुत्पतनविरोधित्वाच्च शीघ्रपातो मन्दोत्पतनं चेति भावः । अत्र प्रियचेतःपाताऽङ्गनापातयोः कार्यकारणयोरसहभाविनोः सहभावोक्तेः कार्यकारणयोः पौर्वापर्यविध्वंसनरूपातिशयोक्त्युपजीविता सहोक्तिरलङ्कारः ।

'सहार्थेनाऽन्वयो यत्र भवेदतिशयोक्तितः ।
कल्पितौपम्यपर्यन्ता सा सहोक्तिरिहेष्यते' ॥

इति लक्षणात् । चेतोवत् पेतुरित्यौपम्यकल्पनया कार्यगताऽऽशुभावप्रतीतेश्चमत्कार इति रहस्यम् । तात्कालिकांशुकचलनादिसूक्ष्मस्वभावविशेषप्रकाशनात्स्वभावोक्तिश्चेति सङ्करः ॥ ३१ ॥

**मुग्धत्वादविदितकैतवप्रयोगा गच्छन्त्यः सपदि पराजयं तरुण्यः ॥**
**ताः कान्तैः सह करपुष्करेरिताम्बुव्यात्युक्षीमभिसरणग्लहामदीव्यन् ॥३२॥**

मुग्धत्वादिति ॥ ताः तरुण्यः कान्तैः सह दयितैः सार्धं करपुष्करेरिताम्बुव्यात्युक्षीं कराग्रप्रेरितपरस्परोदकसेचनामदीव्यन् । जलक्रीडाभिररमन्तेत्यर्थः । करपुष्करैः पाण्यग्रैः ईरितं उल्लालितं यत् अम्बु जलं तेन व्यात्युक्षी परस्परसेचना ताम् अक्रीडन्त । किंलक्षणां व्यात्युक्षीमभिसरणग्लहाम् अभिसरणं सुरतमेव ग्लहः पणो यस्यां सा तथा ताम् । सुरतक्रीडापणामित्यर्थः । यो यः जलक्रीडया हारयति स सुरतं पणं ददाति, पणं मूल्यं सुरतलक्षणं ददाति । किंलक्षणास्तरुण्यः अविदितकैतवप्रयोगाः न विदितः ज्ञातः कैतवप्रयोगः कापट्यविधानं याभिस्तास्तथा अज्ञातभर्तृकृतवञ्चनाः, कस्मात् मुग्धत्वात् अप्रवीणत्वात्, सरलत्वादित्यर्थः । अत एवाऽपरं किंलक्षणास्तरुण्यः सपदि वेगेन पराजयं गच्छन्त्यः परिश्रान्तत्वात् सुकुमारत्वात् पराभवं प्राप्नुवत्यः । न खलु स्त्रीभिः पुरुषा जीयन्ते इत्यतो हेतोः मुग्धाः । 'कुसृतिर्निकृतिः शाठ्यं कैतवं च समं स्मृतम्' इति वैजयन्ती । 'पुष्करं करिशुण्डाग्रे वाद्यभाण्डमुखे जले' इत्यमरः । 'व्यात्युक्षीमिति तां ब्रूयुर्यदन्योन्येन सेचनम्' इति निघण्टुः ॥ ३२ ॥

मुग्धत्वादिति ॥ मुग्धत्वान्मूढत्वादविदिताः कैतवप्रयोगा मुखसेचनादिकपटाचरणानि याभिस्ताः, अत एव सपदि पराजयं गच्छन्त्यस्तास्तरुण्यः कान्तैः सहाभिसरणं स्वयमभिगमनं ग्लहो द्यूतं पणो यस्यास्ताम् । 'पणोऽक्षेषु ग्लहः' इत्यमरः । 'अक्षेषु ग्लहः' इति ग्रहेरेवाऽक्षपणे लत्वनिपातः । अप्प्रत्ययस्तु 'ग्रहवृदृनिश्चिगमश्च' इत्येव सिद्ध इति केचित् । अन्ये तु ग्लहिं प्रकृत्यन्तरमङ्गीकृत्याऽप्प्रत्ययस्यैव निपातो घञपवादीत्याहुः । करपुष्करैः करकमलैरीरितैरम्बुभिर्या व्यात्युक्षी व्यतिहारेणोक्षणम् । परस्पराऽभ्युक्षणमित्यर्थः ।

'कर्मव्यतिहारे णच् स्त्रियाम्' इति णच्प्रत्ययः। 'णचः स्त्रियामञ्' इति स्वार्थिकोऽञ्प्रत्ययः। 'टिड्ढाणञ्—' इत्यादिना ङीप्। तां व्यात्युक्षीमदीव्यन्। तथा अक्रीडन्नित्यर्थः। 'दिवः कर्म च' इति विकल्पाकर्मत्वम्। अत्राविदितकैतवप्रयोगस्य विशेषणगत्या पराजयहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥३२॥

**योग्यस्य त्रिनयनलोचनाऽनलार्चिर्निर्दग्धस्मरपृतनाधिराज्यलक्ष्म्याः ॥**
**कान्तायाः करकलशोद्यतैः पयोभिर्वक्त्रेन्दोरकृत महाभिषेकमेकः ॥ ३३ ॥**

**योग्यस्येति ॥** एकः कश्चिद्विलासी कान्तायाः तरुण्या वल्लभायाः वक्त्रेन्दोर्वदनचन्द्रस्य पयोभिरुदकैः कृत्वा महाभिषेकमकृत पट्टाभिषेकं चकार। किंभूतैः पयोभिः करकलशोद्यतैः कराः पाणयः एव कलशाः कुम्भाः तैः उद्यतानि उद्धृतानि तैः कुम्भप्रायहस्तमुक्तैः, किंभूतस्य वक्त्रेन्दोः त्रिनयनलोचनाऽनलार्चिर्निर्दग्धस्मरपृतनाधिराज्यलक्ष्म्याः योग्यस्य रुद्रेक्षणवह्निज्वालाभस्मीकृतकन्दर्पस्य सेनाधिराज्यश्रिय उचितस्य, त्रिनयनस्य श्रीमहादेवस्य ईक्षणं नयनं तस्य अनलो वह्निः तस्य अर्चिर्ज्वाला तया निर्दग्धो भस्मीकृतो यः स्मरः अनङ्गः तस्य पृतना सेना तस्या आधिराज्यं स्वामित्वं तस्य लक्ष्मीः श्रीः तस्याः उचितस्य हि अभिषेकः क्रियते। कन्दर्पानन्तरं ततोऽन्यः स मुखचन्द्र एव राज्याऽधिश्रियो योग्यः, अत एव पट्टाभिषेकः कृत इति भावः ॥ ३३ ॥

**योग्यस्येति ॥** त्रिनयनस्त्र्यम्बकः। 'क्षुभ्नादिषु च' इति निषेधात् 'पूर्वपदात्संज्ञायाम्' इति णत्वाभावः। तस्य लोचनाऽनलार्चिषा निर्दग्धस्य स्मरस्य याः पृतनास्तासामाधिराज्यमाधिपत्यं तदेव लक्ष्मीस्तस्याः योग्यस्यार्हस्य। त्रैलोक्यविजयिनः स्थाने तादृशस्यैव स्थाप्यत्वादिति भावः। कान्ताया वक्त्रेन्दोः। स्मरसखत्वादस्येति भावः। करावञ्जलिरेव कलशस्तेनोद्यतैरुत्क्षिप्तैः पयोभिर्महाभिषेकमेकः कश्चित्कामी अकृत कृतवान्। करोतेर्लुङि तङ्, 'तनादिभ्यस्तथासोः' इति सिचो लुक्। अत्र जलक्रीडासेके महाभिषेकत्वोत्प्रेक्षा प्रतीयमानकरकलशेतिरूपकानुप्राणितेति सङ्करः ॥ ३३ ॥

**सिञ्चन्त्याः कथमपि बाहुमुन्नमय्य प्रेयांसं मनसिजदुःखदुर्बलायाः ॥**
**सौवर्णं वलयमवागलत्कराग्राल्लावण्यश्रिय इव शेषमङ्गनायाः ॥ ३४ ॥**

**सिञ्चन्त्या इति ॥** अङ्गनायाः कामिन्याः कराग्रात् हस्ताग्रतः सौवर्णं वलयम् अवागलत् सुवर्णमयं कङ्कणं पपात। किं कुर्वत्याः अङ्गनायाः प्रेयांसं वल्लभं सिञ्चन्त्याः, किं कृत्वा कथमपि महता कष्टेन बाहुमुन्नमय्य निजभुजमुत्थाप्य, किंलक्षणायाः अङ्गनायाः मनसिजदुःखदुर्बलायाः कन्दर्पव्यथाकृशायाः, मनसिजेन कामेन हेतुना यत् दुःखं कष्टं तेन दुर्बला कृशा तस्याः। किंलक्षणं वलयम्, उत्प्रेक्षते–लावण्यश्रियः सौन्दर्यलक्ष्म्याः शेषमिव अवागलत्। हेमवलयच्छलेन वपुषि अमात्सौन्दर्यस्य शेषमुर्वरितभागः पपातेत्यर्थः ॥ ३४ ॥

**सिञ्चन्त्या इति ॥** मनसिजदुःखेन स्मरपीडया दुर्बलाया अत एव कथमपि बाहुमुन्नमय्योद्यम्य प्रेयांसं प्रियतमम्। 'प्रियस्थिर—' इत्यादिना प्रादेशः। सिञ्चन्त्याः स्नपयन्त्या अङ्गनायाः कराग्रात्सौवर्णं हिरण्मयं वलयं कङ्कणम्। 'कङ्कणं वलयोऽस्त्रियाम्' इत्यमरः। लवणैव लावण्यं कान्तिविशेषः। चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः। 'लवणो रसरक्षोऽब्धिभेदेषु लवणा त्विषि' इति विश्वः। यद्वा—

'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते' ॥

तस्य श्रीः सम्पत् तस्याः शेषमतिरिक्तम्। शरीरसम्पदवशिष्टमिति यावत्। 'शेषः सङ्कर्षणेऽनन्ते उपयुक्तेतरेऽन्यवत्' इति विश्वः। तदिव अवागलदपतत्। शेषमिति गुणनिमित्तजातिस्वरूपोत्प्रेक्षा ॥ ३४ ॥

**स्निह्यन्तीं (१) दृशमपरा निधाय पूर्णं मूर्तेन प्रणयरसेन वारिणेव ॥**
**कन्दर्पप्रवणमनाः सखीसिसिक्षाव्याजेन(२) प्रतियुवमञ्जलिं चकार ॥३५॥**

**स्निह्यन्तीमिति ॥** अपरा काचिदङ्गना प्रतियुवं युवानं प्रति अञ्जलिं चकार करसम्पुटं चक्रे । केन सखीसिसिक्षाव्याजेन वयस्यासेचनेच्छाच्छलेन, सेक्तुमिच्छा सिसिक्षा सख्याः सिसिक्षा सेक्तुमिच्छा तस्याः व्याजः तेन, किंलक्षणा अपरा कन्दर्पप्रवणमनाः कन्दर्पस्य कन्दर्पेण वा प्रवणं निम्नमधीनं वा मनो यस्याः सा तथा कामाधीनचित्ता, किं कृत्वा स्निह्यन्तीं स्नेहार्द्रां दृशं दृष्टिं निधाय आरोप्य, किंलक्षणमञ्जलिं वारिणा जलेन पूर्णं भृतं, किंलक्षणेन वारिणा मूर्तेन मूर्तिमता प्रणयरसेनेव स्नेहरसेनेव । 'पाणिभ्यां सम्पुटोऽञ्जलि'रिति वैजयन्ती ॥ ३५ ॥

स्निह्यन्तीति ॥ कन्दर्पप्रवणमनाः स्मरपरवशचित्ता अत एव दृशं निधाय पुंस्येव दृष्टिं कृत्वा स्निह्यन्ती । दृष्टिविशेषेण स्नेहं प्रकाशयन्तीत्यर्थः । अपरा स्त्री सख्याः सिसिक्षा सेक्तुमिच्छा तस्या लक्ष्येण व्याजेन बद्धाञ्जलिरेव तिष्ठन्ती न तु सिञ्चन्तीति द्योतनाय सिसिक्षेतीच्छायां सनः प्रयोगः । प्रतियुवं युवानं प्रति । 'अनश्च' इत्यव्ययीभावे समासान्तः । मूर्तेन मूर्तिमता प्रणयरसेनेत्युत्प्रेक्षा । पाठादर्थस्य बलीयस्त्वादिवशब्दस्य व्यवहितेनाऽन्वयः । वारिणा पूर्णमञ्जलिं चकार । प्रार्थयामासेत्यर्थः ॥ ३५ ॥

**आनन्दं दधति मुखे करोदकेन श्यामाया दयिततमेन सिच्यमाने ॥**
**ईर्ष्यन्त्या वदनमसिक्तमप्यनल्पस्वेदाम्भः(३) स्नपितमजायतेतरस्याः ॥३६॥**

**आनन्दमिति ॥** इतरस्याः अङ्गनायाः वदनं मुखमसिक्तमपि जलसेचनं विनापि अनल्पस्वेदाम्भःस्नपितमजायत बहुप्रस्वेदजलप्रक्षालितं बभूव, किंलक्षणायाः इतरस्याः ईर्ष्यन्त्याः क्रुध्यन्त्याः । रोषवशान्मुखं प्रस्विन्नमिति भावः । क सति दयिततमेन अतिप्रियेण भर्त्रा श्यामायाः प्रतियुवतेः मुखवदने सिच्यमाने सति, केन करोदकेन हस्तजलेन, किंभूते मुखे आनन्दं दधति प्रहर्षं बिभ्राणे ॥ ३६ ॥

आनन्दमिति ॥ आनन्दं दधति प्रियसम्भावनया हर्षं दधाने श्यामाया मध्यमयौवनायाः स्त्रियः । 'श्यामा यौवनमध्यस्था' इत्युत्पलः । मुखे वदने दयिततमेन अतिशयेन दयितः प्रियः । अतिशये तमप् प्रत्ययः । तेन कर्त्रा करोदकेनाऽञ्जलिजलेन सिच्यमाने सति ईर्ष्यन्त्या असहमानायाः । 'परोत्कर्षाऽक्षमेर्ष्या स्यात्' इति लक्षणात् । इतरस्याः सपत्न्या वदनमसिक्तमपि । प्रियेणेति शेषः । अनल्पेन स्वेदाम्बुना स्नापितं सिक्तमजायताऽभवत् । ईर्ष्याकृतकोपकार्यत्वात्स्वेदादीनामिति भावः । असिक्तमपि सिक्तमिति विरोधः । तस्य स्वेदाख्यकारणोक्त्याभासत्वम् ॥ ३६ ॥

**उद्वीक्ष्य प्रियकरकुड्मलाऽपविद्धैर्वक्षोजद्वयमभिषिक्तमन्यनार्याः ॥**
**अम्भोभिर्मुहुरसिचद्वधूरमर्षादात्मीयं पृथुतरनेत्रयुग्ममुक्तैः ॥ ३७ ॥**

**उद्वीक्ष्येति ॥** वधूर्वराङ्गना आत्मीयं वक्षोजद्वयं स्वकीयं स्तनयुगं मुहुर्वारंवारमम्भोभिर्जलैरसिञ्चत् सिञ्चयामास(?) । किंभूतैरम्भोभिः पृथुतरनेत्रयुग्ममुक्तैः विशालनयनयुग्मान्मुक्तैः पतितैः, कस्मात् अमर्षात् कोपातिशयात्, किं कृत्वा अन्यनार्याः प्रतियुवतेः वक्षोजद्वयं स्तनयुग्ममभिषिक्तं स्नपितमुद्वीक्ष्य दृष्ट्वा, कैः अम्भोभिर्जलैः, किंलक्षणैरम्भोभिः प्रियकरकुड्मलापविद्धैः पतिकरकमलप्रयुक्तैः, प्रियस्य कान्तस्य करकुड्मलाभ्यां पाणिमुकुलाभ्यामपविद्धानि त्यक्तानि तैः । अत एवाऽमर्षात् रुदितेति भावः ॥ ३७ ॥

---

(१) स्निह्यन्ती। (२) लक्ष्येण। (३) स्वेदाम्बु।

उद्वीक्ष्येति ॥ प्रियस्य करकुड्मलाभ्यां पाणिपुटाभ्यामपविद्धैः सिक्तैरम्भोभिरभिषिक्तम् अन्यनार्याः सपत्न्या वक्षोजद्वयमुद्वीक्ष्य वधूर्नायिका अमर्षादीर्ष्याकृतकोपादात्मीयं वक्षोजद्वयं पृथुतरेण नेत्रयुग्मेन मुक्तैरम्भोभिर्बाष्पैर्मुहुरासिचदभिषिक्तवती । तन्मत्सरादिवेति भावः । अतो वस्तुनाऽलङ्कारध्वनिः । 'लिपिसिचिह्वश्च' इति सिञ्चतेर्लुङि च्लेरङादेशः ॥ ३७ ॥

**कुर्वद्भिर्मुखरुचिमुज्ज्वलामजस्रं यैस्तोयैरसिचत वल्लभां विलासी ॥**
**तैरेव प्रतियुवतेरकारि दूरात्कालुष्यं शशधरदीधितिच्छटाऽच्छैः ॥ ३८ ॥**

**कुर्वद्भिरिति ॥ विलासी तरुणः यैः तोयैः वल्लभां कान्ताम् असिचत सिञ्चति स्म, तैरेव तोयैः उदकैः प्रतियुवतेः सपत्न्याः दूरात् दूरेण पतितैरपि कालुष्यमकारि कलुषत्वं चक्रे । तर्हि तोयानि कलुषाणि भविष्यन्ति इत्याशङ्क्याह—किंलक्षणैस्तोयैः शशधरदीधितिच्छटाऽच्छैः चन्द्रद्युतिश्रेणिनिर्मलैः, शशधरस्य चन्द्रमसः दीधितयः किरणाः तासां छटाः श्रेणयः ता इव अच्छानि निर्मलानि तैः । अत एव किं कुर्वद्भिः तोयैः अजस्रमनवरतम् उज्ज्वलां मुखरुचं निर्मलां वक्त्रकान्तिं कुर्वद्भिः विदधानैः । अर्थात् पत्या असिक्ता सपत्नी कृष्णमुखी बभूवेत्यर्थः ॥ ३८ ॥**

कुर्वद्भिरिति ॥ मुखरुचिं मुखकान्तिमुज्ज्वलां कुर्वद्भिर्यैस्तोयैर्विलासी विलसनशीलः कामी । 'वौ कषलस—' इत्यादिना घिनुण् प्रत्ययः । वल्लभामजस्रमसिचत सिक्तवान् । स्वरितेत्त्वादात्मनेपदम् । 'आत्मनेपदेष्वन्यतरस्याम्' इति सिञ्चतेर्लुङि च्लेरङादेशः । शशधरदीधितिच्छटाऽच्छैः शशिकरनिकरस्वच्छैस्तैरेव तोयैर्दूरात्प्रतियुवतेः सपत्न्याः कालुष्यमाविलत्वं वैवर्ण्यं चाकारि । स्वच्छतोयैः कालुष्यं कृतमिति विरुद्धकार्योत्पत्तिरूपो विषमभेदः । तच्चान्यथेत्यसङ्गतिः, वैवर्ण्यकालुष्ययोरभेदाध्यवसायादातिशयोक्तिरनुत्थापितेति सङ्करः ॥ ३८ ॥

**रागाऽन्धीकृतनयनेन नामधेयव्यत्यासादभिमुखमीरितः प्रियेण ॥**
**मानिन्या वपुषि पतन्निसर्गमन्दे(१) भिन्दानो हृदयमसाहि नोदवज्रः ॥३९॥**

**रागान्धीकृतेति ॥ मानिन्या मानवत्या उदवज्रः न असाहि उदकमेव वज्रः उदवज्रः वारिदम्भोलिः नाऽसह्यत । किं कुर्वन् उदवज्रः वपुषि शरीरे पतन् भ्रश्यन्, किंलक्षणे वपुषि निसर्गमन्दे स्वभावाऽलसे, किं कुर्वाणः हृदयं भिन्दानः चित्तं विदारयन्, किंभूतः उदवज्रः प्रियेण भर्त्रा नामधेयव्यत्यासात् नामधेयस्य अभिधानस्य व्यत्यासो विनिमयः तस्मात् अभिमुखमीरितः प्रेरितः कान्तेन सपत्न्या नामोच्चार्य संमुखं विमुक्तः । अत एव वज्रतुल्य इत्यर्थः । किंभूतेन भर्त्रा रागान्धीकृतनयनेन विषयान्धीकृतचक्षुषा, रागेण विषयातिशयेन अन्धीकृते अन्धीभूते नयने चक्षुषी यस्य सः तेन । 'विपर्ययस्तु व्यत्यासः' इत्यमरः ॥ ३९ ॥**

रागान्धीकृतेति ॥ रागेण विपक्षानुरागेणाऽन्धीकृतनयने प्रियेण नामधेयव्यत्यासाद्विपक्षनामपूर्वकमभिमुखमीरितः क्षिप्तो वपुषि पतन्निसर्गमन्दः स्वभावजडः तथापि हृदयं भिन्दानो विदारयन्नुदकमेव वज्रोऽशनिरुदवज्रः । 'मन्थौदन—' इत्यादिना विकल्पादुदादेशः । मानिन्या विपक्षनामग्रहणजनितकोपवत्या नायिकया नाऽसाहि न सोढः । तीक्ष्णयोगादतीक्ष्णमपि तीक्ष्णं भवतीति भावः । उदवज्र इति केवलनिरवयवरूपकम् ॥ ३९ ॥

**प्रेम्णोरः प्रणयिनि सिञ्चति प्रियायास्तत्तापं(२) नवजलविप्रुषो गृहीत्वा ॥**
**उद्धूताः कठिनकुचस्थलाभिघातादासन्नां भृशमपराङ्गनामधाक्षुः ॥ ४० ॥**

---

(१) मन्दो । (२) प्रियायाः सन्तापं ।

प्रेम्णोर इति ॥ नवजलविप्रुषः नूतनजलकणाः अपराङ्गनां भृशमतिशयम् अधाक्षुः अन्यस्त्रियमत्यर्थं दहन्ति स्म सपत्नीं देहुः । किंभूतामपराङ्गनाम् आसन्नां निकटवर्तिनीं, किंभूता विप्रुषः कठिनकुचस्थलाभिघातात् कठोरस्तनतटाभिघातात् उद्‍धूताः कठोरस्तन-सम्पर्कात् उड्डीनाः, क्व सति प्रणयिनि कान्ते प्रियायाः उरः सिञ्चति सति वक्षः स्नपयति सति, केन प्रेम्णा स्नेहेन, किं कृत्वा अदहन् तत्तापं गृहीत्वा तस्याः सपत्न्याः तापं तत्तापं गृहीत्वा आदाय अपराङ्गनामदहन्निति भावः ॥ ४० ॥

प्रेम्णोर इति ॥ प्रणयिनि प्रेम्णा प्रियाया उरः सिञ्चति सति कठिनकुचस्थलाभिघातादुद्धूता उत्पतिता नवजलस्य विप्रुषो बिन्दवः । 'पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम्' इत्यमरः । तस्याः सिक्तायाः सन्तापं गृहीत्वा आदाय आसन्नां समीपस्थामपराङ्गनां सपत्नीं भृशमधाक्षुः सन्तापयन्ति स्म । दहेर्लुङि 'वदव्रज—'इत्यादिना सिचि वृद्धिः घत्वादिकार्यम् । तत्सेकादेवाऽपरस्यास्तापोदयात्तत्तापस्यैवात्रादानमुत्प्रेक्ष्यते । सा च व्यञ्जकाप्रयोगाद्गम्या ॥ ४० ॥

संक्रान्तं प्रियतमवक्षसोऽङ्गरागं साध्वस्याः सरसि हरिष्यतेऽधुनाम्भः ॥
तुष्टैवं सपदि हृतेऽपि तत्र तेपे कस्याश्चित्स्फुटनखलक्ष्मणः सपत्न्या ॥४१॥

संक्रान्तमिति ॥ कस्याश्चिदङ्गनायाः सपत्न्या प्रतियुवत्या तेपे सन्तापोऽभाजि । किं कृत्वा एवम् अमुना प्रकारेण तुष्ट्वा सन्तोषं प्राप्य । प्रथमं सन्तोषं प्राप्ता पश्चाद् भूयोऽपि सन्तप्ता । एवं किं—यत्, अधुना साम्प्रतं सरसि तडागे अम्भः पानीयं साधु सम्यक् यथा भवति तथा अस्याः मत्सपत्न्याः अङ्गरागं चन्दनकस्तूरीकेसरादि सपदि वेगेन तत्कालमेव हरिष्यते तदनुलेपनं ग्रहीष्यति । किंभूतमङ्गरागं प्रियतमवक्षसः संक्रान्तं भर्तृवक्षःस्थलात् संलग्नं, क्व सति तत्र तस्मिन्नङ्गरागे हृतेऽपि स्फेटितेऽपि सति । तर्हि कथं तेपे किंलक्षणायाः कस्याश्चित् स्फुटनखलक्ष्मणः प्रकटनखव्रणायाः । अङ्गरागे प्रक्षालिते प्रकटितनखपदैर्दृष्टैरतीव सन्तप्ता प्रथमं सा सपत्नी द्वितीयायाः सपत्न्याः अङ्गे प्रसक्तमङ्गरागं जलेन प्रक्षालितं भणित्वा हृष्टचित्ता जाता । पुनः तस्याः शरीरे प्रियतमनखव्रणान् दृष्ट्वा सन्तप्तेत्यर्थः ॥ ४१ ॥

संक्रान्तमिति ॥ प्रियतमवक्षसः सकाशात्संक्रान्तं गाढालिङ्गनात्कुचतटलग्नमस्याः सिक्ताया अङ्ग-रागमधुनैव सरसि अम्भः कर्तृ साधु निःशेषं हरिष्यते प्रमार्क्ष्यति एवं तुष्टा इति बुद्ध्वा सपदि तत्र तस्मि-न्नङ्गरागे हृतेऽपि स्फुटनखलक्ष्मणो व्यक्तनखचिह्नायाः कस्याश्चिन्नायिकायाः सम्बन्धिनि सपत्न्या तेपे तप्तम् । भावे लिट् । तदिदमातपार्तस्य छायामन्विष्यतो दारुणदवदहनवेष्टनं यदङ्गरागमेव द्रष्टुमक्षमाया नखक्षतसाक्षात्कार इति । अत्र सन्तापशान्त्यर्थेन विपक्षाङ्गनाऽङ्गरागक्षालनेन तद्विरुद्धसन्तापोत्पादनाद्विरुद्ध-कार्योत्पत्तिरूपो विषमालङ्कारः ॥ ४१ ॥

हूतायाः प्रतिसखि कामिनाऽन्यनाम्ना ह्रीमत्याः सरसि गलन्मुखेन्दुकान्तेः॥
अन्तर्धिं द्रुतमिव कर्तुमश्रुवर्षैर्भूमानं गमयितुमीषिरे पयांसि ॥ ४२ ॥

हूताया इति ॥ अङ्गनायाः अश्रुवर्षैः बाष्पपातैः अश्रुसेकैः पयांसि उदकानि भूमानं बाहुल्यं गमयितुम् ईषिरे ववाञ्छुः । उत्प्रेक्षते—द्रुतं शीघ्रमन्तर्धिं कर्तुमिव अन्त-र्धानं विधातुमिव, पयांसि बाहुल्यं प्रपितानीत्यर्थः । किंभूतायाः ह्रीमत्याः सलज्जायाः । लज्जायां किं कारणं तद्विशेषणद्वारेणाह—अपरं किंभूतायाः प्रतिसखि सखीसमीपे कामिना वल्लभेन अन्यनाम्ना सपत्न्यभिधानेन हूतायाः आकारितायाः । यतः प्रतियुवत्यभिधानेना-

ऽऽहूता अत एव लज्जां बभारेत्यर्थः । पुनः किंभूतायाः सरसि तडागे गलन्मुखेन्दुकान्तेः पतद्वदनचन्द्रद्युतेः । श्यामवक्त्रच्छवेरित्यर्थः। अश्रुभिरहं जलं घनं विधाय लज्जया आत्मानमधो निमज्जयिष्यामि, यथा मम मरणं भवतीति भावः । अतः सरसि पानीयं वर्धमानं ववाञ्छेत्यर्थः।'अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम्'इत्यमरः। बहोर्भावः भूमा तम् ॥

हूताया इति ॥ प्रतिसखि सख्याः समीपे । सखीसमक्षमित्यर्थः । समीपार्थेऽव्ययीभावे नपुंसकत्वह्रस्वत्वे । कामिना प्रियेणाऽन्यस्याः सपत्न्याः नाम्ना अन्यनाम्ना। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। हूतायाः अत-एव गलन्मुखेन्दुकान्तेः ह्रीमत्या लज्जितायाश्च । कस्याश्चिदिति शेषः । सरसि द्रुतं शीघ्रमन्तार्धिमन्तर्धानम् । अदन्तरोरुपसर्गवद्वृत्तिवचनात् 'उपसर्गे घोः किः' इति किप्रत्ययः । कर्तुमश्रुवर्षैः कर्तृभिः पयांसि सरोजलानि भूमानं गमयितुं वृद्धिं प्रापयितुम् । 'गतिबुद्धि—' इत्यादिना अणि कर्तुः कर्मत्वं प्राधान्यादभिधानं च । ईषिरे इव इष्टानि किमु, इत्युत्प्रेक्षेयमश्रुपातनिमित्ता । तथा मरणदुःखादपि दुःसहं सपत्न्या दुःखमिति वस्तुध्वनिः ॥ ४२ ॥

**सिक्तायाः क्षणमवसिच्य(१) पूर्वमन्यामन्यस्याः प्रणयवता बताऽबलायाः॥**
**कालिम्ना समधित मन्युरेव वक्त्रं प्रापाऽक्ष्णोर्गलदपशब्दमञ्जनाम्भः ॥४३॥**

**सिक्ताया इति** ॥ बतेति खेदे, अन्यस्याः अपरस्याः अबलायाः मन्युरेव कोप-एव वक्त्रं मुखं कालिम्ना समधित कृष्णत्वेन संयोजयामास । वदनं श्यामं चकारेत्यर्थः । पुनः अक्ष्णोर्नेत्रयोः गलत् भ्रश्यत् अञ्जनाम्भः कज्जलवारि अपशब्दं वचनीयतां प्राप इति प्रवादं लेभे—यत्, कज्जलवारिणा मुखं कृष्णमकारीति। परं तन्मुखमस्याः कोपेनैव कृष्णतां प्रापितमित्यर्थः । ननु कोपः कस्माज्जात इत्याशङ्क्य हेतुगर्भं विशेषणमाह—किंभूतायाः अन्यस्याः प्रणयवता स्नेहिना वल्लभेन पूर्वं प्रथममन्यां सपत्नीं क्षणं मुहूर्तमवसिच्य स्नपयित्वा पश्चात् सिक्तायाः स्नपितायाः । अत एव कोपात् कृष्णमुखी बभूवेत्यर्थः । 'मन्युर्दैन्ये क्रतौ क्रुधि', 'अवर्णाक्षेपनिर्वादपारीवादाऽपवादवत्' इत्यमरः ॥४३॥

**सिक्ताया इति** ॥ प्रणयवता प्रियेण क्षणं पूर्वमन्यां सपत्नीमभिषिच्य पश्चात्सिक्ताया अन्यस्या अबलायाः स्त्रिया वक्त्रं कर्म मन्युः कोप एव कर्ता कालिम्ना कार्ष्ण्येन । वैवर्ण्येन सहेति यावत् । समधित सन्दधे । बतेति खेदे । संपूर्वाद्दधातेः कर्तरि लुङि तङ्, 'स्थाघ्वोरिच्च' इतीकारः । सिचः कित्त्वान्न गुणः 'ह्रस्वादङ्गात्' इति सकारलोपः। गलत्स्रवत् अक्ष्णोः सम्बन्धि अञ्जनाम्भः कज्जलोदकमपशब्दं वर्णस्यापवादं प्राप । कोपकालिमतिरोधानेन स्वकालिम्न एव प्रकाशनादिति भावः । पूर्वेण वाक्यार्थेनोत्तरवाक्यार्थसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ४३ ॥

**उद्वोढुं कनकविभूषणान्यशक्तः सध्रीचा वलायतपद्मनालसूत्रः ॥**
**आरूढप्रतिवनिताकटाक्षभारः साधीयो गुरुरभवद्भुजस्तरुण्याः ॥ ४४ ॥**

**उद्वोढुमिति** ॥ तरुण्याः अङ्गनायाः भुजो बाहुः साधीयोऽतिशयेन गुरुरभवत् गुरुतरः सञ्जातः । किंभूतो भुजः कनकविभूषणानि उद्वोढुमशक्तः सुवर्णाभरणानि धारयितुमसमर्थः अतिकोमलत्वात्,पुनः किंभूतो भुजः अत एव सध्रीचा सहचरेण वलयितपद्मनालसूत्रः कङ्कणीकृतपद्मनालतन्तुः, पुनः किंभूतो भुजः आरूढप्रतिवनिताकटाक्षभारः आरूढः आश्रितो यः प्रतिवनितायाः सपत्न्याः कटाक्षः वक्रविलोकनं दृष्टिविक्षेपस्तेन भारः दुर्वहता यत्र सः तथा । अत एव सपत्न्या विलोकितः सन् गुरुर्बहुमानोऽभवदित्यर्थः ।'अन्तिकबाढयोर्नेदसाधौ' इति बाढस्थाने साधः । साधीयोऽयंशब्दोऽतिशयवाचकः । सह अञ्चति

( १ ) ०मभिषिच्य ।

गच्छतीति सध्र्यङ् तेन सध्रीचा । 'अञ्चु गतिपूजनयो'रिति धातुः सहपूर्वः, क्विप् । 'सहस्य सध्रिः' इति सहस्थाने सध्रिः, अञ्चेरलोपः पूर्वस्य च दीर्घः सध्रीचेति ॥ ४४ ॥

उद्वोढुमिति ॥ कनकविभूषणान्युद्वोढुमशक्तः । सौकुमार्यादिति भावः । अत एव सहाऽञ्चतीति सध्र्यङ् तेन सहचरेण कर्त्रा । 'ऋत्विगा'दिना क्विन्प्रत्ययः । 'सहस्य सध्रिः' इति सहशब्दस्य सध्र्यादेशः, 'अनिदिताम्–' इति नकारलोपः, 'अचः' इत्यकारलोपे 'चौ' इति दीर्घः । वलयितानि वलयीकृतानि पद्मनालसूत्राणि मृणालतन्तवो यस्य सः । मृणालकृतकङ्कण इत्यर्थः । तथापि आरूढः आरूढवान् प्रतिवनितायाः सपत्न्याः कटाक्ष एव भारो यस्य सः । तया सासूयं दृष्ट इत्यर्थः । अत एव तरुण्या भुजो बाहुः साधीयो बाढतरमिति क्रियाविशेषणम् । 'अन्तिकबाढयोर्नेदसाधौ' इति बाढशब्दस्य साधादेशः । गुरुर्भारवान् श्लाघ्यश्चाऽभवत् । अत्र कनकभूषणाभावेऽपि तत्कार्यगुरुत्ववर्णनाद्विभावना, सा च गुरुरिति श्लेषप्रतिभोत्थापिताऽतिशयोक्त्यनुप्राणितेति सङ्करः ॥ ४४ ॥

**आबद्धप्रचुरपरार्ध्यकिङ्किणीको रामाणामनवरतोदगाहभाजाम् ॥**
**नाऽऽरावं व्यतनुत मेखलाकलापः कस्मिन् वा सजलगुणे गिरां पटुत्वम् ॥४५॥**

आबद्धेति ॥ रामाणां स्त्रीणां मेखलाकलापः रशनागुणः आरावं न व्यतनुत शब्दं न विस्तारयामास । किंभूतो मेखलाकलापः आबद्धप्रचुरपरार्ध्यकिङ्किणीकः आबद्धाः प्रोताः प्रचुराः बह्वयः परार्ध्या महर्घाः किङ्किण्यः क्षुद्रघण्टिका यस्मिन् सः प्रोतघनतरमहामूल्यक्षुद्रघण्टिकः, किंभूतानां रामाणाम् अनवरतोदगाहभाजाम् अनवरतं निरन्तरं यथा भवत्येवमुदगाहं जलावगाहनं भजन्ते इति तथा भाजः तासां जलक्रीडावसक्तानाम् । वा अथ वा युक्तमेतत्, यतः कारणात् सजलगुणे कस्मिन् गिरां पटुत्वं भवति, डलयोरैक्यात् कस्मिन् सजडगुणे जाड्यगुणसहिते गिरां पटुत्वं वाणीनां पाटवं स्यात् वाचालता भवेत् । अपि तु न स्यादिति भावः । मेखलाकलापो हि जलपूरितः, तत्कथं ध्वनिं करोतीत्यर्थः । 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च' । 'परार्ध्याऽग्रप्राग्रहरप्राग्र्याऽग्र्याऽग्रीयमग्रियम्' इत्यमरः । 'वाक्पटुर्वावदूकः स्यात्' इति वैजयन्ती ॥ ४५ ॥

आबद्धेति ॥ उदकस्य गाहोऽवगाहनमुदगाहः । 'मन्थौदन–' इत्यादिना उदादेशः तमनवरतं भजन्ति यास्तासामनवरतोदगाहभाजां रामाणां स्त्रीणां सम्बन्धी, आबद्धाः प्रोताः प्रचुरा भूयिष्ठाः परार्ध्याः श्रेष्ठाश्च किङ्किण्यो यस्मिन्स तथोक्तः । 'नद्यृतश्च' इति कप् । मेखलाकलाप आरावं ध्वनिं न व्यतनुत । तथा हि—जलेन सह सजलो जलार्द्रो गुणः सूत्रं यस्य सः, तथा डलयोरभेदाज्जडगुणो जडधर्मो जाड्यं तेन सहेति सजडगुणो जडश्च तस्मिन् कस्मिन् वा मेखलाकलापे पुंसि वा गिरां वाचां ध्वनीनां च पटुत्वं सामर्थ्यम् । न कुत्रापीत्यर्थः । श्लेषमूलाभेदातिशयोक्त्यनुप्राणितोऽयमर्थान्तरन्यासः ॥ ४५ ॥

**पर्यच्छे सरसि हृतेंऽशुके पयोभिर्लोलाक्षे सुरतगुरावपत्रपिष्णोः ॥**
**सुश्रोण्या दलवसनेन वीचिहस्तन्यस्तेन द्रुतमकृताऽब्जिनी सखीत्वम् ॥४६॥**

पर्यच्छे इति ॥ अब्जिनी नलिनी द्रुतं शीघ्रं सुश्रोण्याः अङ्गनायाः सखीत्वमकृत सखीभावं चक्रे । केन दलवसनेन दलं पर्णमेव वसनं तेन निजपत्रवस्त्रेण, किंभूतेन दलवसनेन वीचिहस्तन्यस्तेन हस्तप्रायकल्लोलनिहितेन, क सति पयोभिरुदकैः अंशुके हृते सति परिधानवस्त्रे नीते सति, क पर्यच्छे सरसि निर्मले तडागे जलमध्यभागे सरसि । अत्र जलस्य निर्मलत्वं सहचरत्वात् तडागे उपचर्यते । किंभूतायाः अङ्गनायाः अपत्रपिष्णोः सलज्जायाः, अपत्रपते अपत्रपिष्णुः तस्याः, क सति सुरतगुरौ सम्भोगाचार्ये कान्ते लोलाक्षे चपलनेत्रे सति । अतिविलोकयति सतीत्यर्थः । अत एव सखीभावान्नलिन्या निजदलेन वसनदानं कृतमित्यर्थः ॥४६॥

पर्यच्छे इति ॥ परि परितोऽच्छं स्वच्छम् । अन्तर्गतवस्त्वातिरोधायकमित्यर्थः । तस्मिन्सरसि पयोभिरंशुके स्रीपरिधाने हृते स्थानादपसारिते सति सुरतगुरौ रमणे च लोलाक्षे । श्रोण्यामक्तदृष्टौ सतीत्यर्थः । 'लोलश्चलसतृष्णयोः' इत्यमरः । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् । अपत्रपिष्णोरपत्रपमाणायाः । 'लज्जा सापत्रपाऽन्यतः' इत्यमरः । 'अलंकृञ्-' इत्यादिना इष्णुच् प्रत्ययः। सुश्रोण्याः प्रियायाः । प्रस्तुतोचितनिर्देशोऽयम् । अब्जिनी नलिनी द्रुतं वीचिरेव हस्तः तेन न्यस्तेन दलं पर्णमेव वसनं तेन। तद्दानेनेत्यर्थः। सखीत्वमकृत । सखीकृत्यं चकारेत्यर्थः। अत्राऽब्जिन्यादिषु सखीत्वाद्यारोपात्समस्तवस्तुवृत्ति सावयवरूपकम् ॥४६॥

**नारीभिर्गुरुजघनस्थलाहतानामास्यश्रीविजितविकासिवारिजानाम् ॥**
**लोलत्वादपहरतां तदङ्गरागं सञ्जज्ञे स कलुष आशयो जलानाम् ॥ ४७ ॥**

**नारीभिरिति** ॥ सः जलानामाशयः पानीयानामाधारः तडागः कलुषः सञ्जज्ञे कोपान्धो बभूव । क्रीडावशादाविलो जात इत्यर्थः । किंभूतानां जलानां नारीभिः अङ्गनाभिः गुरुजघनस्थलाहतानां गुरुभिर्जघनस्थलैः आहतानि ताडितानि तेषां विशालकटिप्रदेशघट्टितानां, पुनः किंभूतानां जलानाम् आस्यश्रीविजितविकासिवारिजानाम् आस्यश्रिया मुखशोभया विजितानि निर्जितानि विकासीनि विकस्वराणि वारिजानि पद्मानि येषां तानि तेषाम् । अत एव कलुषत्वं, यतोऽस्य जलाधारस्य पद्मानि निर्जितानि इति । किं कुर्वतां जलानां तदङ्गरागमपहरतां तासां स्त्रीणामङ्गरागं विलेपनादिकमाददतां, कस्माल्लोलत्वात् चपलत्वात् । अथ च कलुषोऽयमाविलोऽभूत् । यतो गुरुजघनैराहतानाम्, अपरं लोलत्वाच्चञ्चलप्रवाहत्वादङ्गरागं हरतामिति भावः । अत्रोक्तिः—यो हि नारीभिर्गुरुजघनस्थलैराहन्यते, लोलत्वात्सम्भोगे सतृष्णत्वात्तदङ्गरागमपहरति, जडश्चाविवेकी कामाकुलितो भवति, तस्याशयः अन्तःकरणं कलुषं भवति कामेनाविलं भवतीति । 'कलुषोऽनच्छआविलः', लोलश्चलसतृष्णयोः' सर्वत्राप्यमरः ॥ ४७ ॥

नारीभिरिति ॥ नारीभिः कर्त्रीभिः गुरुजघनस्थलैराहतानाम् आस्यश्रीभिर्मुखशोभाभिर्विजितानि विकासीनि वारिजानि पद्मानि येषां तेषां लोलत्वाच्चलत्वात्सतृष्णत्वाच्च । 'लोलश्चलसतृष्णयोः' इत्यमरः । तासामङ्गरागमपहरतां क्षालयतां च जलानां तोयानां जडानां च स आशयो ह्रदो हृदयं च कलुषोऽप्रसन्नः क्षुभितश्च सञ्जज्ञे सञ्जातः । अपहर्तुस्ताडनस्वहरणादिभिराशयः कलुषो भवतीति ध्वनिः । अभिधायाः प्रकृतार्थे नियन्त्रणान्न श्लेषः ॥ ४७ ॥

**सौगन्ध्यं दधदपि काममङ्गनानां दूरत्वाद्गतमहमाननोपमानम् ॥**
**नेदीयो जितमिति लज्जयेव तासामालोले पयसि महोत्पलं ममज्ज ॥ ४८ ॥**

**सौगन्ध्यमिति** ॥ पयसि पानीये महोत्पलं महत् कमलं ममज्ज मग्नम् । किंभूते पयसि आलोले अतिचञ्चले, किंभूतं कमलं काममतिशयेन सौगन्ध्यं दधदपि सुगन्धतां बिभ्राणमपि । उत्प्रेक्षते—इति लज्जया इव इति व्रीडया इव मग्नम् । इतीति किं, का लज्जा–यदहं तासामङ्गनानां दूरत्वाद्विप्रकृष्टत्वादाननोपमानं गतं मुखोपमानं प्राप्तं नेदीयो निकटं सत् जितं पराभूतमिति लज्जयेति भावः । 'अन्तिकबाढयोर्नेदसाधौ' इति अन्तिकस्य नेद आदेशः ॥ ४८ ॥

सौगन्ध्यमिति ॥ कामं पर्याप्तं सौगन्ध्यं सुरभिगन्धित्वं सम्बन्धित्वं च । 'गन्धो गन्धक आमोदे लेशे सम्बन्धिगर्वयोः' इति विश्वः । दधदपि अहं दूरत्वात्पूर्वं दूरस्थत्वादङ्गनानामाननोपमानं मुखसादृश्यं गतम् । 'दूरस्थाः पर्वता रम्याः' इतिवदिति भावः । सम्प्रति पुनस्तासां नेदीयो नेदिष्ठमन्तिकतमं सत् । 'अन्तिकबाढयोर्नेदसाधौ' इत्यन्तिकशब्दस्य नेदादेशः । जितं परिभूतमभूवमिति लज्जयेव महोत्पलमरविन्दमालोले

चले पयसि ममज्ज । यथा दूरे साम्येन दृश्यमानः सम्बन्धी सन्निधाववमानितः क्वचिल्लज्जया निलीयते तद्वदिति । अत्र पयश्चलनकृतेऽब्जमज्जने लज्जाहेतुकत्वमुत्प्रेक्ष्यत इति श्लेषमूलातिशयोक्तिहेतूत्प्रेक्षयोः संसृष्टिः ॥

**प्रभ्रष्टैः सरभसमम्भसोऽवगाहक्रीडाभिर्विदलितयूथिकापिशङ्गैः ॥**
**आबन्ध्यैः(१) सरसि हिरण्मयैर्वधूनामौर्वाग्निद्युतिशकलैरिव व्यराजि ॥४९॥**

**प्रभ्रष्टैरिति ॥ वधूनामङ्गनानां हिरण्मयैराबन्ध्यैः सौवर्णैराभरणैः सरसि तडागे व्यराजि विशेषेण राजितम् । किंभूतैः सरभसं सवेगं सहर्षं वा यथा भवति तथा अम्भसः अवगाहक्रीडाभिः जलस्य विलोडनकेलिभिः प्रभ्रष्टैः पतितैः, अपरं किंलक्षणैराबन्ध्यैः विदलितयूथिकापिशङ्गैः विकसितयूथिकाकुसुमवत् पिशङ्गैः पीतवर्णैः । पुनः किंलक्षणैः, उत्प्रेक्षते—और्वाग्निद्युतिशकलैरिव वडवाग्निकान्तिखण्डैरिव ।'रभसो वेगहर्षयो'रिति विश्वः ॥४९**

प्रभ्रष्टैरिति ॥ सरभसं सत्वरम् अम्भसोऽवगाहा एव क्रीडास्ताभिः प्रभ्रष्टैर्जलावगाहक्षोभादम्भासि च्युतैर्विदलिता विकसिता यूथिकाः पीतयूथिकाः । हेमपुष्पिकाऽपरपर्याया विवक्षिताः, अन्यथा पिशङ्गत्वाऽयोगात् । 'गणिका यूथिकाऽम्बष्ठा सा पीता हेमपुष्पिका' इत्यमरः। तद्वत्पिशङ्गैर्हिरण्मयैः सौवर्णैः ।'दाण्डिनायन–'इत्यादिना निपातः। वधूनामाकल्पैर्भूषणैः सरसि और्वाग्निद्युतिशकलैर्जलाशयत्वादत्रापि सन्निहितैर्वडवानलज्वालाखण्डैरिवेत्युत्प्रेक्षा । व्यराजि विराजितम् । भावे लुङ् ॥ ४९ ॥

**आस्माकी युवतिदृशामसौ तनोति च्छायैव श्रियमनपायिनीं किमेभिः ॥**
**मत्वैवं स्वगुणपिधानसाऽभ्यसूयैः पानीयैरिति विदधाविरेऽञ्जनानि ॥५०॥**

**आस्माकीति ॥ पानीयैरुदकैः अञ्जनानि कज्जलानि इति कारणात् विदधाविरे प्रक्षालितानि । इति किं कारणं—यत्, असौ आस्माकी छाया एव अस्मदीया कान्तिरेव युवतिदृशामङ्गनानेत्राणां श्रियं शोभां तनोति विस्तारयति, किंलक्षणां श्रियम् अनपायिनीमविनश्वराम् । तत् एभिः कज्जलैः किं प्रयोजनम् । किं कृत्वा एवं पूर्वोक्तं मत्वा, किंलक्षणैः पानीयैः स्वगुणपिधानसाऽभ्यसूयैः स्वगुणस्य पिधानेन आच्छादनेन साऽभ्यसूयानि सेर्ष्याणि तैः निजगुणच्छादनसेर्ष्यैः ॥ ५० ॥**

आस्माकीति ॥ अस्माकमियमास्माकी अस्मदीया । अस्मत्कारितेत्यर्थः । 'युष्मदस्मदोरन्यतरस्यां खञ्च' इति चकारादण्प्रत्ययः । 'तस्मिन्नणि च युष्माकास्माकौ' इति प्रकृतेरस्माकादेशः 'टिड्ढाणञ्–' इत्यादिना ङीप् । असौ छाया कान्तिः । विमलेति यावत् । सैव युवतिदृशामनपायिनीं स्थायिनीं श्रियं तनोति एभिरञ्जनैः किमेतत्साध्यम् । न किञ्चिदस्तीत्यर्थः । गम्यमानसाधनापेक्षया करणत्वात्तृतीयेत्युक्तं प्राक् । एवं मत्वा । उक्तप्रकारेणाञ्जनवैफल्यं निश्चित्येत्यर्थः । अत एव गम्योत्प्रेक्षेयम् । स्वगुणस्य स्वाविष्कृतदृङ्नैर्मल्यगुणस्य पिधानम् । 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः । तेन साभ्यसूयैः सेर्ष्यैः पातुमर्हैः पानीयैः । 'अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्' इत्यमरः । 'तव्यत्तव्यानीयरः' इति पिबतेरनीयर् प्रत्ययः । अञ्जनानि कज्जलानि इति अनेन स्वगुणप्रकाशनयोग्यतया विवक्षितेन प्रकारेण । निःशेषत्वरूपेणेत्यर्थः। विदधाविरे विधौतानि। क्षालितानीत्यर्थः । 'धावु गतिशुद्ध्योः' इति धातोः कर्मणि लिट् ॥ ५० ॥

**निर्धौते सति हरिचन्दने जलौघैरापाण्डोर्गतपरभागयाऽङ्गनायाः ॥**
**अह्नाय स्तनकलशद्वयादुपेये विच्छेदः सहृदययेव हारयष्ट्या ॥ ५१ ॥**

**निर्धौते इति ॥ हारयष्ट्या मुक्ताकलापेन अङ्गनायाः युवतेः स्तनकलशद्वयात् कुचकुम्भयुगलात् अह्नाय वेगेन विच्छेदः उपेये वियोगः प्राप्तः । किंभूतया हारयष्ट्या,**

---

( १ ) आकल्पैः

उत्प्रेक्षते—सहृदययेव सचेतनयेव, हृदयेन ज्ञानेन सह वर्तमाना सहृदया तया। क सति जलौघैः वारिप्रवाहैः हरिचन्दने मलयजे निर्धौते सति हृते सति, किंलक्षणाया अङ्गनायाः आपाण्डोः गौरच्छवेः, किंलक्षणया हारयष्ट्या गतपरभागया गतः परभागो गुणोत्कर्षो यस्याः सा तथा तया। अप्राप्तगुणोत्कर्षयेत्यर्थः। हारयष्ट्या हरिचन्दनात् गुणोत्कर्षः प्राप्तोऽभूत्, ततः प्रक्षालिते श्रीखण्डे किल हारयष्ट्या तद्वियोगात् स्तनयुग्मं त्यक्तमिति भावः। यतो जडौघैर्हरिचन्दनं हृतमित्यर्थः॥ ९१॥

निर्धौते इति॥ हरिचन्दने रक्तचन्दने जलौघैर्निर्धौते क्षालिते सति। धावेः कर्मणि क्तः। 'च्छ्वोः शूडनुनासिके च' इति वकारस्योठादेशः। 'एत्येधत्यूठ्सु' इति वृद्धिरौकारः। आपाण्डोः पाण्डुवर्णादङ्गनायाः स्तनकलशद्वयात् गतपरभागया सावर्ण्याद्विगतवर्णोत्कर्षया। अत एव सामान्यालङ्कारः। 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात्। हारयष्ट्या कर्त्र्या सहृदयया सचित्तयेवेत्युत्प्रेक्षा। निजपरभागहानिपरिज्ञानवत्येवेत्यर्थः। अह्नाय सपदि। 'स्राक् झटित्यञ्जसाऽह्नाय द्राङ् मङ्क्षु सपदि द्रुते' इत्यमरः। विच्छेदस्त्रुटनमुपेये प्राप्तः। हीनजीवनादजीवनमेव वरमिति भावः। उपपूर्वादिणः कर्मणि लिट्। विक्षोभहेतुकस्य हारविच्छेदस्य सहृदयहेतुकत्वोत्प्रेक्षा, सा चोक्तसामान्योत्थापितेति सङ्करः॥ ५१॥

**अन्यूनं गुणममृतस्य धारयन्ती संफुल्लस्फुरितसरोरुहावतंसा॥**
**प्रेयोभिः सह सरसी निषेव्यमाणा रक्तत्वं व्यधित वधूदृशां सुरेव(१)॥५२॥**

अन्यूनमिति॥ सरसी तडागिका वधूदृशामङ्गनानेत्राणां रक्तत्वं लौहित्यं चक्रे। केव सुरेव, यथा सुरा मदिरा वधूदृशां रक्तत्वं विधत्ते। किंलक्षणा सरसी प्रेयोभिः सह कान्तैः सार्धं निषेव्यमाणा सेव्यमाना। सुराऽपि भर्तृभिः सह निषेव्यते। किं कुर्वती सरसी अमृतस्य पानीयस्य अन्यूनं गुणं सम्पूर्णं गुणं धारयन्ती। सुराऽप्येवंविधा भवति—अमृतस्य पीयूषस्य अन्यूनं सम्पूर्णं गुणं बिभर्ति, मधुरत्वान्मादकत्वाच्च। अपरं किंलक्षणा सरसी संफुल्लस्फुरितसरोरुहावतंसा विकसितमनोरमकमलवेष्टिता। सुराया मध्येऽपि प्रफुल्लपद्मानि क्षिप्यन्ते। इति द्वयोः साम्यमुक्तम्। संफुल्लानि स्फुरितानि शोभमानानि सरोरुहाण्येव अवतंसोऽवचूलो यस्याः सा तथा॥ ५२॥

अन्यूनमिति॥ अन्यूनं समग्रममृतस्य पीयूषस्य गुणं माधुर्यादिकं धारयन्ती।

'अगन्धमव्यक्तरसं शीतलं च तृषापहम्।
अच्छं लघु च पथ्यं च तोयं गुणवदुच्यते'॥

इति। उक्तोदकगुणं च धारयन्ती सरसी। पक्षे 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले धुवम्' इति विश्वः। संफुल्लानि विकचानि। उत्फुल्लसंफुल्लयोरुपसंख्यानान्निष्ठातस्य लत्वम्। स्फुरितान्युज्ज्वलानि च यानि सरोरुहाण्येकत्र सहजानि, अन्यत्र संस्कारार्थं क्षिप्तानि तान्यवतंसो भूषणं यस्याः सा तथोक्ता। प्रेयोभिः सह निषेव्यमाणा। स्नानपानाभ्यामिति भावः। सरसी पुष्करिणी वधूदृशां रक्तत्वमारुण्यं व्यधित विधत्ते स्म। तथा सुरा च। व्यधितेति धाञः कर्तरि लुङ् तङ्। इहोत्साहवर्धनाय मुहुः सेव्यत्वाच्छृङ्गाणीति श्लोके सलिलक्रीडासम्भारेषु मार्द्वीकमिति परिगणनाच्च सरसीवत्सुराया अपि प्रकृतत्वविवक्षायां तुल्ययोगिता, तदविवक्षायां तु दीपकम्। सुरेवेति पाठे त्वप्रकृतविवक्षैव कार्या। अन्यथा उपमाऽनुपमा स्यात्। न च तुल्ययोगितावकाशः। इवशब्देन गम्यौपम्यलक्षणभङ्गादिति॥ ५२॥

**स्नान्तीनां बृहदमलोदबिन्दुचित्रौ रेजाते रुचिरदृशामुरोजकुम्भौ॥**
**हाराणां मणिभिरुपाश्रितौ समन्तादुत्सूत्रैर्गुणवदुपघ्नकाम्ययेव॥ ५३॥**

(१) सुरा च।

**स्नान्तीनामिति ॥** रुचिरदृशां मृगनयनानां युवतीनामुरोजकुम्भौ रेजाते स्तनकलशौ शुशुभाते । किं कुर्वतीनां रुचिरदृशां स्नान्तीनां, स्नान्ति ताः स्नान्त्यः तासां स्नान्तीनां जलकेलिं कुर्वतीनाम् । किंलक्षणौ उरोजकुम्भौ बृहदमलोदबिन्दुचित्रौ विशालस्वच्छोदकबिन्दुरमणीयौ, बृहन्तश्च ते अमलाश्च ते उदबिन्दवः वारिकणाश्च तैः चित्रौ मनोहरौ । अन्यौ कुम्भावपि अमलोदबिन्दुचित्रौ भवतः । अपरं किंलक्षणौ उरोजकुम्भौ, उत्प्रेक्षते—हाराणां मणिभिः उपाश्रिताविव हारमौक्तिकैर्वेष्टिताविव, कथं समन्तात् समन्ततोभावेन, किंलक्षणैर्मणिभिः उत्सूत्रैः सूत्रमुत्क्रान्ताः उत्सूत्राः तैः सूत्ररहितैः । पुनरुत्प्रेक्षते—कया गुणवदुपघ्नकाम्ययेव गुणवदाश्रयकाङ्क्षयेव । यतः कारणात् तत् स्थानं सर्वदा गुणवद्भिराश्रीयते, ततो गुणवत्समाश्रयणतत्परैरिव । गुणः सूत्रं विद्यते यस्मिन् स गुणवान्, हार इत्यर्थः । गुणवांश्चासौ उपघ्नः आश्रयः, तस्य काम्या वाञ्छा तयेव ॥ ५३ ॥

स्नान्तीनामिति ॥ स्नान्तीनां जलमवगाहमानानां रुचिरदृशां सुदृशां सम्बन्धिनौ बृहद्भिरमलैश्चोदबिन्दुभिश्चित्रौ । 'मन्थोदन-' इत्यादिनोदकशब्दस्योदादेशः । उरोजकुम्भौ उत्सूत्रैर्हाराणां मुक्ताहाराणां मणिभिर्गुटिकाभिरुपहन्यते उपगम्यते, पीड्यते वा । 'उपघ्न आश्रये' इति हन्तेरप्प्रत्ययान्त उपधालोपीति निपातः । गुणवत औदार्यादिगुणवतः सूत्रवतश्च उपघ्नस्य काम्या आत्मन इच्छा गुणवदुपघ्नकाम्या तया गुणवदुपघ्नकाम्यया । आत्मनो गुणवदाश्रयाकाङ्क्षयेत्यर्थः । 'काम्यच्च' इति काम्यच्प्रत्यये प्रत्ययान्तधातुत्वात् 'अ प्रत्ययात्' इति स्त्रियामप्रत्यये टाप् । समन्तादुपाश्रितौ संश्रिताविव रेजाते राजेते स्म । 'फणां च सप्तानाम्' इति विकल्पादेकाराभ्यासलोपौ । गुणवच्छब्देन सूत्रशब्देन च सूत्रभेदे सूत्रान्तरमाशिश्रियदिति प्रतीतेः श्लेषानुप्राणितयाऽतिशयोक्त्याऽनुप्राणितेयमुत्प्रेक्षा ॥ ५३ ॥

**आरूढः पतित इति स्वसम्भवोऽपि स्वच्छानां परिहरणीयतामुपैति ॥**
**कर्णेभ्यश्च्युतमसितोत्पलं वधूनां वीचीभिस्तटमनु यन्निरासुरापः ॥ ५४ ॥**

**आरूढ इति ॥** स्वच्छानां निर्मलात्मनाम् इति कारणात् स्वसम्भवोऽपि आत्मसम्भवोऽपि परिहरणीयतामुपैति त्याज्यतां प्राप्नोति । स्वच्छानां पुत्रोऽपि परिहर्तव्य इति भावः । इति कस्मात्, यतः कारणात् आरूढः पतित इति महत्पदं प्राप्य औन्नत्यमवाप्य भ्रष्ट इति । तत् पतितेन किममुना प्रयोजनमिति गणनादित्यर्थः । अत्रार्थे दृष्टान्तमाह—यत्, आपो जलानि कर्त्र्यः वधूनामङ्गनानां कर्णेभ्यः च्युतं श्रवणेभ्यो भ्रष्टमसितोत्पलं नीलोत्पलं तटमनु तीरमनु लक्ष्यीकृत्य वीचिभिः कल्लोलैः निरासुः प्रेरयामासुः । यतः कारणात् तदपि प्रथममारूढं पश्चात् पतितम्, अतः ता आपः तत्पद्मं मध्ये स्थातुं न ददुः । अन्योऽपि पूर्वमारूढः महत्पदं राज्याधिकारलक्षणं सदाचारत्वादिलक्षणं वा प्राप्य पश्चात् पतितो मालिन्यमुपगतो भवति । अतः स्वसम्भवोऽपि त्याज्य इति भावः । मध्येगृहं स्थातुं, न दीयते इत्यर्थः ॥ ५४ ॥

आरूढ इति ॥ स्वसम्भवोऽप्यात्मसम्भवोऽपि आरूढ उच्चस्थानगत उत्तमाश्रमश्च पतितस्तथा भ्रष्ट इति हेतोः । आरूढपतितत्वादित्यर्थः । स्वच्छानां निर्मलानां परिहरणीयतां त्याज्यत्वमुपैति । 'प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकः' इति स्मरणादिति भावः । वीचीभिस्तटमनु तटं प्रति निरासुश्चिक्षिपुः । कुतः—यस्मादापः वधूनां कर्णेभ्यश्च्युतमसितोत्पलम् । स्वसम्भवमपीति भावः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः समर्थनवाक्यगतश्लेषमूलाऽतिशयोक्त्या सङ्कीर्णः ॥ ५४ ॥

**दन्तानामधरमयावकं पदानि प्रत्यग्रास्तनुमविलेपनां नखाङ्काः ॥**
**आनिन्युः श्रियमधितोयमङ्गनानां शोभायै विपदि सदाश्रिता भवन्ति ॥ ५५ ॥**

दन्तानामिति ॥ अङ्गनायाः स्त्रियः अधितोयं तोये एते पदार्थाः श्रियमानिन्युः शोभां प्रापयामासुः। तावत् किं शोभां प्रापितमित्याह—दन्तानां पदानि दशनानां व्रणानि अधरमोष्ठं श्रियमानिन्युः। ओष्ठः कस्मात् अश्रीकः सञ्जात इत्याह—किंलक्षणमधरम् अयावकं अलक्तकरहितम्। अपरं प्रत्यग्राः नूतनाः नखाङ्काः नखपदानि तनुं शरीरं श्रियमानिन्युः, यतः किंलक्षणां तनुम् अविलेपनां विलेपनरहितां धौताङ्गरागाम्। युक्तोऽयमर्थः, यतः कारणात् सदाश्रिताः नित्यसेवकाः विपदि सत्यां व्यसने सति शोभायै श्रियै भवन्ति। आपद्यपि ते शोभां कुर्वन्तीत्यर्थः ॥ ५५ ॥

दन्तानामिति ॥ तोयेष्वधि आधितोयम्। विभक्त्यर्थेऽव्ययीभावः। अङ्गनानामयावकं प्रक्षालितलाक्षारागमधरं दन्तानां पदानि दन्तक्षतानि तथा अविलेपनां धौताङ्गरागां तनुं शरीरं प्रत्यग्रा नवा नखाङ्काश्च श्रियमानिन्युः प्रापयामासुः। 'नीवह्योर्हरतेश्चैव' इति वचनाद् द्विकर्मकत्वम्। तथा हि–सतः सज्जनान्, सुन्दरांश्च आश्रिताः सदाश्रिताः ये केचिदिति शेषः। विपदि विभवाऽभावकालेऽपि शोभायै वैभवाय भवन्ति। 'क्लृपेः सम्पद्यमाने चतुर्थी वक्तव्या' इति क्लृपेरर्थनिर्देशाच्चतुर्थी। अर्थान्तरन्यासः ॥ ५५ ॥

**कस्याश्चिन्मुखमनु धौतपत्रलेखं व्यातेने सलिलभराऽवलम्बिनीभिः ॥**
**किञ्जल्कव्यतिकरपिञ्जरान्तराभिश्चित्रश्रीरलमलकाग्रवल्लरीभिः ॥ ५६ ॥**

कस्याश्चिदिति॥ कस्याश्चिदङ्गनायाः मुखमनु वक्त्रमनु लक्षीकृत्य अलकाग्रवल्लरीभिः केशप्रान्तलताभिः चित्रश्रीः विशेषकशोभा अलं व्यातेने विस्तारिताऽभवत्। अलकाग्राणि केशप्रान्ता एव वल्लर्यो वल्ल्यः ताभिः। चित्रस्य श्रीः चित्रश्रीः। किंलक्षणं मुखं धौतपत्रलेखं प्रक्षालितपत्रलतं, किंलक्षणाभिः अलकाग्रवल्लरीभिः सलिलभरावलम्बिनीभिः उदकभरेण लम्बमानाभिः, सलिलभरेण अवलम्बन्ते ताः सलिलभरावलम्बिन्यः ताभिः, अपरं किंलक्षणाभिः केशप्रान्तलताभिः किञ्जल्कव्यतिकरपिञ्जरान्तराभिः किञ्जल्कानां केसराणां व्यतिकरेण सम्पर्केण पिञ्जरं पिङ्गटमन्तरं मध्यं यासां तास्तथा ताभिः मकरन्दसमूहपीतमध्याभिः। एवंविधकेशलताभिः विपत्रवल्लीकं वदनमनुलक्षीकृत्य विशेषकशोभा व्यतन्यतेत्यर्थः। 'चित्रकं तु विशेषकं', 'किञ्जल्कः केसरोऽस्त्रियाम्' इत्यमरः ॥ ५६ ॥

कस्याश्चिदिति ॥ धौतपत्रलेखं क्षालितपत्रावलीकं कस्याश्चिन्मुखमनु मुखेन सम्बद्धं यथा तथा। मुखे इति यावत्। 'तृतीयार्थे–' इत्यनोः कर्मप्रवचनीयत्वाद् द्वितीया। सलिलभरेणाऽवलम्बिनीभिर्लम्बमानाभिः। आर्जवं गताभिरित्यर्थः। किञ्जल्कव्यतिकरेण केसरामिश्रणेन पिञ्जराण्यन्तराणि मध्यभागा यासां ताभिः। अलकाग्राणि वल्लर्यो मञ्जर्य इवेत्युपमितसमासः। 'वल्लरी मञ्जरी स्त्रियाम्' इत्यमरः। ताभिरलकाग्रवल्लरीभिश्चित्रश्रीर्मकरिकापत्रशोभा अलं व्यातेने सम्पादिता। तनोतेः कर्मणि लिट्। अत्र चित्रस्य श्रीरिव श्रीरिति निदर्शनाभेदः ॥ ५६ ॥

**वक्षोभ्यो घनमनुलेपनं यदूनामुत्तंसानहरत वारि मूर्धजेभ्यः ॥**
**नेत्राणां मदरुचिरक्षतैव तस्थौ चक्षुष्यः खलु महतां परैरलङ्घ्यः ॥ ५७ ॥**

वक्षोभ्य इति॥ वारि उदकं यदूनां वक्षोभ्यः उरःस्थलेभ्यः घनं सान्द्रमनुलेपनमहरत अङ्गरागं जहार जग्राह। अपरं मूर्धजेभ्यः केशेभ्यः उत्तंसान् मुकुटान् अहरत। अपरं नेत्राणां नयनानां मदरुचिः विभ्रमशोभा रक्तता अक्षतैव तस्थौ अभग्नैवाऽतिष्ठत्। स्वरूपेणाऽवतिष्ठते स्मेत्यर्थः। युक्तोऽयमर्थः, खलु यस्मात् कारणात् महतामुत्तमानां चक्षुष्यः वल्लभः परैरन्यैः अलङ्घ्यः अगम्यः। उत्तमानां वल्लभः परैः शत्रुभिरनाक्रमणीयः। चक्षुषे

तिष्ठतीति चक्षुष्यः । मदरुचेः चक्षुषि स्थितत्वात् अनाक्रमणीयत्वमित्यर्थः । 'चक्षुष्यः सुभगो ज्ञेयो वल्लभो दयितः प्रियः' इति वैजयन्ती ॥ ५७ ॥

अथ श्लोकद्वयेन पुंसामप्यवस्थाभेदं वर्णयति—

वक्षोऽम्भ इति ॥ वारि सरउदकं कर्तृ यदूनां यादवानां घनं सान्द्रमनुलेपनमङ्गरागमहरत । त्रित्वात्तङ् । अत्र वधूनामिति क्वाचित्कः पाठो वक्षोजानुपेक्ष्य वक्षोमात्रनिर्देशादुत्तरश्लोके तेषामिति पुंलिङ्गपरामर्शाच्च न ग्राह्यः । मूर्धजेभ्यः शिरोरुहेभ्य उत्तंसान् शेखरानहरत । नेत्राणां मदरुचिर्मदरागोऽक्षतैव तथैव तस्थौ । वारिविहारस्यापि रागजनकत्वादिति भावः । अत एव रागद्वयस्याऽप्यभेदाध्यवसायेन तदवस्थानिर्देशादतिशयोक्तिः । तथा हि—महतां चक्षुषि भवश्चक्षुष्यः प्रियोऽक्षिजश्च । 'प्रियेऽक्षिजे च चक्षुष्यः' इति विश्वः । 'शरीरावयवाच्च' इति यत् । परैरलङ्घ्यो दुर्धर्षः खलु । चक्षुष्य इति श्लेषमूलातिशयोक्तिः । तया पूर्वोक्तया च सङ्कीर्णोऽयमर्थान्तरन्यासः ॥ ५७ ॥

**यो बाह्यः स खलु जलैर्निरासि रागो यश्चित्ते स तु तदवस्थ एव तेषाम् ॥**
**धीराणां व्रजति हि सर्व एव नाऽन्तःपातित्वादभिभवनीयतां परस्य ॥५८॥**

**यो बाह्य इति॥** तेषां यादवानां यो बाह्यो बहिर्भवः रागो विलेपनलक्षणः अङ्गरागः, स खलु निश्चितं जलैर्वारिभिः निरासि निरस्तः प्रक्षालितः स्फेटितः । तु पुनः यो रागः चित्ते मनसि, स तदवस्थ एव तथास्वरूप एव । सा अवस्था यस्य स तदवस्थः । विषयाख्यो रागस्तैर्जलैर्न स्फेटित इति । हि युक्तोऽयमर्थः, हि यस्मात् कारणात् सर्व एव पदार्थः धीराणां महतामन्तःपातित्वात् परस्य शत्रोः अभिभवनीयतामाक्रमणीयतां न व्रजति न प्राप्नोति । धीरासक्तः सर्वोऽपि अन्येषामलङ्घनीय इति भावः । यो महतां चित्ते वसति, स केनापि न परिभूयते इत्यर्थः । विषयाख्यरागस्य अन्तःपातित्वान्मनसोऽपि अभ्यन्तरत्वात् परैरनाक्रमणीयत्वमिति भावः ॥ ५८ ॥

**यो बाह्य इति ॥** तेषां यदूनां बहिर्भवो बाह्यः । 'बहिषष्टिलोपो यञ्च' इति वचनात् यञ् प्रत्ययः यो रागोऽङ्गरागः स रागो जलैस्तोयैः जडैश्च निरासि निरस्तः खलु । अस्यतेः कर्मणि लुङ् । चित्ते यो रागः स तु सैवावस्था यस्य स तदवस्थ एव । न निरस्त इत्यर्थः । अत्र रागयोरभेदाध्यवसायादतिशयोक्तिः । तथा हि—सर्वोऽपि धीराणां महतामन्तःपातित्वात् । अन्तर्गतत्वादेवेति यावत् । परस्याऽभिभवनीयतां न व्रजति । अन्यथा व्रजत्येवेत्यर्थः । पूर्ववदलङ्कारः ॥ ५८ ॥

**फेनानामुरसिरुहेषु हारलीला चेलश्रीर्जघनतटेषु(१) शैवलानाम् ॥**
**गण्डेषु स्फुटरचनाऽब्जपत्रवल्ली पर्याप्तं पयसि विभूषणं वधूनाम् ॥ ५९ ॥**

**फेनानामिति ॥** वधूनामङ्गनानां विभूषणमाभरणं पयसि उदके पर्याप्तं सम्पूर्णं बभूव । तावत् उरसिरुहेषु कुचेषु फेनानां डिण्डीराणां हारलीला मुक्ताकलापशोभा बभूव, फेनः स्तनयोर्मुक्ताकलापः सञ्जातः । अपरं जघनतटेषु कटिप्रदेशेषु शैवलानां जलनीलीनां चेलश्रीः वसनशोभा बभूव, शैवलमयी वस्त्रशोभा सञ्जाता । अन्यत् गण्डेषु कपोलेषु स्फुटरचनाऽब्जपत्रवल्ली बभूव प्रकटरचनाऽम्भोजपत्रलता सञ्जाता । इत्याभरणं बभूवेत्यर्थः । 'डिण्डीरोऽब्धिकफः फेनः', 'चेलं वसनमंशुकं', 'जलनीली तु शैवालं शैवलः' सर्वत्राप्यमरः ॥ ५९ ॥

**फेनानामिति ॥** वधूनाम् । भ्रष्टभूषणानामपीति भावः । पयसि विभूषणं पर्याप्तम् । समग्रमासीदित्यर्थः । कुतः—फेनानां डिण्डीराणामुरसि रुहन्तीत्युरसिरुहाः स्तनाः । 'सुपि' इति योगविभागात्कप्रत्ययः 'हलदन्तात्' इत्यलुक् । तेषु हारलीला मुक्तावलिश्रीः । जातेति शेषः । शैवलानां जघनतलेषु चेलश्रीर्वसनशोभा जाता । गण्डेषु

---

(१) तलेषु ।

कपोलेषु शैवला इति विभक्तिविपरिणामादनुषङ्गः। स्फुटरचना व्यक्तविन्यासा अब्जपत्रवल्ली पद्मपत्रलता जातेति शेषः। अत्र फेनानां हारलीलेव लीला शैवलानां चेलश्रीरिव श्रीरिति निदर्शनाभ्यां शैवलाः पत्रवल्लीति रूपकेण च वाक्यार्थैश्चतुर्थवाक्यार्थसमर्थनात् तै रेवाङ्गाङ्गिभावेन सङ्कीर्णं वाक्यार्थ हेतुकं काव्यलिङ्गम् ॥५९॥

**भ्रश्यद्भिर्जलमभि हेमभि(१)र्वधूनामङ्गेभ्यो गुरुभिरमज्जि लज्जयेव ॥**
**निर्माल्यैरथ ननृतेऽवधीरितानामप्युच्चैर्भवति लघीयसां हि धार्ष्ट्यम् ॥६०॥**

**भ्रश्यद्भिरिति॥** हेमभिः सुवर्णाभरणै जलमभि उदकमभि लक्षीकृत्य अमज्जि मग्नम्, किंक्षणैः हेमभिः वधूनामङ्गेभ्यः शरीरावयवेभ्यः भ्रश्यद्भिः पतद्भिः। उत्प्रेक्षते—लज्जयेव व्रीडयेव, यतः अपरं किंलक्षणैः हेमभिः गुरुभिः अलघुतरैः। अन्योऽपि यो गुरुरवज्ञातः स्यात्, स लज्जावशाज्जले मज्जनं कुरुते। अथानन्तरं निर्माल्यैः कुसुममालादिभिः ननृते नृत्तम्। हि युक्तोऽयमर्थः, हि यस्मात्कारणात् लघीयसां लघुतराणामवधीरितानामपि अवगणितानामपि, उच्चैरतिशये, धार्ष्ट्यं धृष्टत्वं निलर्ज्जत्वं भवति ॥ ६० ॥

**भ्रश्यद्भिरिति ॥** वधूनामङ्गेभ्यो भ्रश्यद्भिः पतद्भिर्गुरुभिः सौवर्ण्याद् गुरुत्वयुक्तैर्भूषणैर्लज्जया भ्रंशप्रयुक्तया ह्रियेवेत्युत्प्रेक्षा। जलमभि अमज्जि जले मग्नम्। भावे लुङ्। अथानन्तरमेव, न तु विलम्बेनेति भावः। निर्माल्यैर्भुक्तोज्झितमाल्यैर्ननृते जलेऽनर्ति। भ्रंशेऽपि निर्लज्जैरिति भावः। तथा हि—अवधीरितानां तिरस्कृतानामपि लघीयसां तुच्छानामुच्चैर्धाष्ट्र्यं निर्लज्जत्वमेवाधिकं भवतीत्यर्थान्तरन्यासः। महान्तः पदभ्रंशे लज्जिताः क्वचिन्निलीयन्ते, तुच्छास्तु निर्लज्जा विजृम्भन्त इति भावः। अप्सु गुरूणि मज्जन्ति लघूनि प्लवन्त इति परमार्थः ॥ ६० ॥

**आमृष्टास्तिलकरुचः स्रजोऽद्भिरस्ता(२) नीरक्तं वसनमपाकृतोऽङ्गरागः ॥**
**कामः स्त्रीरनुशयवानिव स्वपक्षव्याघातादिति सुतरां चकार चारूः ॥६१॥**

**आमृष्टा इति ॥** कामः कन्दर्पः इति हेतोः स्त्रीः अङ्गनाः सुतरामतिशयेन चारूः चकार मनोहराः चक्रे। उत्प्रेक्ष्यते—किंलक्षणः कामः अनुशयवानिव सक्रोध इव, कस्मात् स्वपक्षव्याघातात् निजपरिवारविनाशात्। कामस्य पक्षविनाशमाह—तावत् अद्भिः पानीयैः तिलकरुचः आमृष्टाः पत्रलता भग्नाः, अपरम् अद्भिः स्रजः माला अस्ताः क्षिप्ताः, तथा अद्भिः वसनं वस्त्रं वासः नीरक्तं विरङ्गीकृतम्, अपरम् अङ्गरागो निराकृतः चन्दनकेसरादिविलेपनं स्फेटितम्। इत्यादिस्वपक्षव्याघातात् सक्रोध इव कामः स्त्रीः विशेषेण मनोज्ञाः चकारेत्यर्थः॥ ६१ ॥

**आमृष्टा इति ॥** तिलकरुचः पत्रशोभा आमृष्टाः। स्रजो माला निरस्ताः। वसनं कौसुम्भं वासो नीरक्तमरक्तम्। निरस्तरागमित्यर्थः। कृतमिति शेषः। अङ्गरागोऽपाकृतः। सर्वत्र जलैरित्यर्थः। इतीत्थं स्वपक्षव्याघातात् स्ववर्गक्षयादनुशयवाननुतापवानिवेत्युत्प्रेक्षा। कामः स्त्रीः स्त्रियः। 'वाऽमूशसोः' इतीयङादेशविकल्पात्पक्षे पूर्वसवर्णदीर्घः। सुतरां चारूः पूर्वतोऽपि रमणीयाश्चकार। स्त्रीणां काम एव भूषणमभ्यर्हरूप्यमेवेति भावः ॥ ६१ ॥

**शीतार्तिं बलवदुपेयुषेव नीरैरासेकाच्छिशिरसमीरकम्पितेन ॥**
**रामाणामभिनवयौवनोष्मभाजोराश्लेषि स्तनतटयोर्नवांशुकेन ॥ ६२ ॥**

**शीतार्तिमिति ॥** नवांशुकेन नूतनवस्त्रेण रामाणामङ्गनानां स्तनतटयोः आश्लेषि कुचकुम्भयोरालिङ्गितम्। किंलक्षणयोः स्तनतटयोः अभिनवयौवनोष्मभाजोः नवयौवनोत्थ-

---

(१) भूषणै०। (२) स्रजो निरस्ताः।

बाष्पधारिणोः, किंलक्षणेन नवांशुकेन बलवत् गाढं यथा भवति तथा शीतार्तिं शीत-व्यथामुपेयुषेव प्रासवतेव, कस्मात् नीरैः आसेकात् उदकैः स्नपनात्, अपरं किंलक्षणेन नवांशुकेन शिशिरसमीरकम्पितेन शीतलवाताऽऽन्दोलितेन । अन्योऽपि शीतार्तः शिशिर-समीरणेन कम्पितः सन् गाढोष्मयुक्तं स्थानमाश्रयतीत्युक्तिः ॥ ६२ ॥

शीतार्तिमिति ॥ नीरैस्तोयैरासेकादासेचनाच्छीतार्तिं शीतव्यथां बलवत्सुष्ठु उपयुषेव प्रासवतेवेत्युत्प्रेक्षा । अत एव शिशिरसमीरकम्पितेन शीतवातवेपितेन नवांशुकेन कर्त्रा अभिनवो यो यौवनोष्मा उष्णत्वं तद्भाजोः रामाणां स्तनतटयोराधारयोराश्लेषि आश्लिष्टं संसक्तम् । भावे लुङ् । सेकहेतुकस्यांशुकश्लेषस्य शीतार्ति-हेतुकत्वमुत्प्रेक्ष्यत इति गुणहेतूत्प्रेक्षा ॥ ६२ ॥

**श्च्योतद्भिः समधिकमात्तमङ्गसङ्गाल्लावण्यं तनुमदिवाऽम्बु वाससोऽन्तैः॥**
**उत्तेरे तरलतरङ्गरङ्गलीलानिष्णातैरथ सरसः प्रियासमूहैः ॥ ६३ ॥**

**श्च्योतद्भिरिति** ॥ अथानन्तरं प्रियासमूहैः अङ्गनावृन्दैः सरसः तडागात् उत्तेरे उत्तीर्णम् । किंलक्षणैः प्रियासमूहैः तरलतरङ्गरङ्गलीलानिष्णातैः चञ्चलकल्लोलरतिषु लीला-प्रवीणैः, तरलाश्चञ्चलाः ये तरङ्गाः कल्लोलाः तत्र यो रङ्गो रतिः तत्र लीला विलासः तत्र निष्णातास्तैः । जलकेलिकुशलैरित्यर्थः । अपरं किंलक्षणैः वाससोऽन्तैः उपलक्षितैः वस्त्र-स्यान्तैः प्रान्तैर्वाससोऽन्तैः, किं कुर्वद्भिः अम्बु पानीयं श्च्योतद्भिः मुञ्चद्भिः, किंलक्षणमम्बु अङ्गसङ्गात्समधिकम् आत्तं शरीरसम्पर्कात् वस्त्रैः प्रचुरं गृहीतम् । उत्प्रेक्षते—तनुमत् मूर्तिमत् लावण्यं सौन्दर्यमिव जलं गलद्भिः ॥ ६३ ॥

इत्थमासां जलक्रीडामुक्त्वा जलादुत्तरणं वर्णयति—

**श्च्योतद्भिरिति** ॥ अथ जलक्रीडानन्तरमङ्गसङ्गाद्गात्रसम्पर्कादात्तमुपात्तम् । संसक्तमिति यावत् । समधिकमतिरिक्तं तनुमन्मूर्तिमत् लावण्यमिव । कान्तिसारमिवेत्युत्प्रेक्षा । अम्बु श्च्योतद्भिः क्षरद्भिः । भौवादिकत्वाल्लघूपधगुणः । तरलाश्चपलास्तरङ्गा एव रङ्गा नृत्यस्थानानि तेषु लीलाः नर्तितानि तासु निष्णातैः कुशलैः । 'निनदीभ्यां स्नातेः कौशले' इति षत्वम् । वाससोऽन्तैर्वस्त्राञ्चलैरुपलक्षितैः प्रियासमूहैः स्त्रीसङ्घैः सरसो ह्रदादुत्तेरे उत्तीर्णम् । निर्गतमित्यर्थः । तरतेर्भावे लिट् ॥ ६३ ॥

**दिव्यानामपि कृतविस्मयां पुरस्तादम्भस्तः स्फुरदरविन्दचारुहस्ताम् ॥**
**उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्तीमस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥ ६४ ॥**

**दिव्यानामपीति** ॥ शौरिः श्रीकृष्णः जलनिधिमन्थनस्य अस्मार्षीत् समुद्रमथनं सस्मार । किं कृत्वा पुरस्तात् अग्रे अम्भस्तः उदकात् काञ्चिदङ्गनामुत्तरन्तीमुद्वीक्ष्य जला-न्निर्गच्छन्तीं दृष्ट्वा, किंलक्षणां स्त्रियं स्फुरदरविन्दचारुहस्ताम् उल्लसत्कमलरम्यहस्ताम् । करेण कमलं धूनयन्तीमित्यर्थः । स्फुरदरविन्दाभ्यां चारू हस्तौ यस्याः सा तथा ताम् । अपरं किंलक्षणां स्त्रियम्, उत्प्रेक्ष्यते—श्रियमिव लक्ष्मीमिव । पुरा श्रीरपि पद्महस्ता सती समुद्रोदकादवतीर्णाऽभूत् । अत एव जलनिधिमन्थनस्य सस्मार । किंलक्षणां श्रियं दिव्या-नामपि देवानामपि कृतविस्मयामुत्पादितमहाश्चर्याम् । स्त्री चाऽप्येवंभूता । स्मृत्यर्थात् कर्मणि षष्ठी ॥ ६४ ॥

**दिव्यानामपीति** ॥ दिवि भवा दिव्यास्तेषामपि कृतविस्मयां सौन्दर्यातिरेकेण जनिताद्भुतरसां स्फुर-दरविन्दाभ्यां चारू हस्तौ यस्यास्ताम् । पद्महस्तामित्यर्थः । पुरस्तादग्रतः अम्भस्तो जलात् । पञ्चम्या-स्तसिल् । उत्तरन्तीं निष्क्रामन्तीं काञ्चित्स्त्रियं मथ्यमानात्समुद्रात्सद्यः प्रादुर्भवन्तीं श्रियमिव लक्ष्मीमिवोद्वीक्ष्य

जलनिधिमन्थनस्य। समुद्रमन्थनमित्यर्थः। मन्थेर्भावादिकस्येदित्त्वान्नुमागमः। 'अधीगर्थ-'इत्यादिना कर्मणि षष्ठी। अस्मार्षीत् स्मृतवान्। अत्र समुद्रमन्थनस्मारिकया श्रियामिवेत्युपमया सादृश्याच्छ्रीः स्मृतेति स्मरणालङ्कारप्रतीतेरलङ्कारध्वनिः॥ ६४॥

**श्लक्ष्णं यत्परिहितमेतयोः किलाऽन्तर्धानार्थं तदुदकसेकसक्तमूरू(१)॥**
**नारीणां विमलतरौ समुल्लसन्त्या भासाऽन्तर्दधतुरुरू दुकूलमेव॥ ६५॥**

श्लक्ष्णमिति॥ नारीणामङ्गनानामूरू जघने, किलेत्यलीके, तद् दुकूलमेव पट्टदुकूलमेव अन्तर्दधतुः आच्छादयामासतुः। किंलक्षणौ ऊरू उरू विशालौ विस्तीर्णौ, अपरं किंलक्षणौ ऊरू विमलतरौ अतिनिर्मलतरौ, कया अन्तर्दधतुः समुल्लसन्त्या देदीप्यमानया भासा कान्त्या, तत् किं यद् दुकूलमेतयोरूर्वोः अन्तर्धानार्थं परिहितं प्रावृतं, किंलक्षणं दुकूलं श्लक्ष्णं सूक्ष्मतन्तु, अपरं किंलक्षणं दुकूलम् उदकसेकसक्तं जलसेचनाल्लग्नमूरुभ्यां सह लग्नम्। अत एव ऊरुभासा दुकूलावयव आच्छादितः। केवलमूरुकान्तिरेव दृष्टा न तु दुकूलं, तत् ज्ञायते-ऊरुभ्यां संवृत्तं स्वच्छत्वादिति भावः॥ ६५॥

श्लक्ष्णमिति॥ एतयोरूर्वोरन्तर्धानार्थं किल छादनार्थं श्लक्ष्णं स्निग्धं यद् दुकूलं परिहितमाच्छादितमुदकसेकेन संसक्तं संसृष्टं, तत दुकूलं कर्म विमलतरौ नारीणामुरू पीवरावूरू एव कर्तारौ समुल्लसन्त्या भासा स्फुरन्त्या निजकान्त्याऽन्तर्दधतुश्छादितवन्तौ। तदेतद् भूषणमिति भावः। अत्र दुकूलस्योरुच्छादकत्वेऽपि तदभावोक्तेरसम्बन्धेऽपि सम्बन्धरूपातिशयोक्तिः। तदपेक्षया चोर्वोर्दुकूलाऽनाच्छादकयोराच्छादकत्वोक्ते रसम्बन्धे सम्बन्धरूपातिशयोक्त्यनुप्राणितेति सजातीयसङ्करः। तदनुप्राणितश्च विषमालङ्कार इति विजातीयसङ्करः। तेन चोर्वोर्लोकोत्तरं लावण्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः॥ ६५॥

**वासांसि न्यवसत यानि योषितस्ताः शुभ्राऽभ्रद्युतिभिरहासि तैर्मुदेव॥**
**अत्याक्षुः प्लवन(२)गलज्जलानि यानि स्थूलाऽश्रुस्रुतिभिररोदि तैः शुचेव॥६६॥**

वासांसीति॥ ताः योषितः अङ्गना यानि वासांसि वस्त्राणि न्यवसत परिदधुः तैर्वासोभिः अहासि हसितम्। किंलक्षणैर्वासोभिः शुभ्राऽभ्रद्युतिभिः धवलमेघप्रभैः, शुभ्राऽभ्राणां श्वेतजलदानां द्युतिरिव द्युतिर्येषां तानि तैः। हास्यमपि उज्ज्वलं भवति। कया अहासि उत्प्रेक्षते—मुदेव हर्षेणेव। यतो नारीभिरङ्गीकृतानि, अतो धन्यमात्मानं मत्वा हसितमिति भावः। अपरं ता एवाङ्गना यानि वासांसि अत्याक्षुः परितत्यजुः, तैर्वासोभिः अरोदि रुदितम्। काभिः स्थूलाऽश्रुस्रुतिभिः बृहदश्रुपातैः, स्थूलानामश्रूणां बाष्पाणां स्रुतयः प्रवाहास्तैः। कया अरोदि, उत्प्रेक्ष्यते—शुचेव शोकेनेव। यतः परित्यक्तानि, अत एव सशोकानीत्यर्थः। नन्वचेतनेषु वस्त्रेषु कथमश्रुपातो घटते, यतः किंलक्षणानि वासांसि प्लवनगलज्जलानि प्लवनेन स्नानेन गलज्जलं येभ्यस्तानि। स्नानवशात् जलमोक्षं कुर्वद्भिरित्यर्थः॥ ६६॥

वासांसीति॥ ताः योषितो यानि वासांसि न्यवसत निवसितवत्यः। 'वस आच्छादने' इति धातोः कर्तरि लङ्। शुभ्राऽभ्राणां द्युतिरिव द्युतिर्येषां तैर्वासोभिर्मुदा नारीनिवसनाऽऽनन्देन अहासीव हसितमिव। भावे लुङ्। स्नपनेन गलज्जलानि स्रवत्तोयानि यानि वासांसि अत्याक्षुस्त्यक्तवत्यः, तैः शुचा स्थूला अश्रुस्रुतिर्येषां तैः अरोदीव रोदनं कृतमिव। भावे लुङ्। अत्र धावल्यगुणजलगलनक्रियानिमित्तयोर्हासरोदनाक्रिययोः सजातीयोत्प्रेक्षयोः सङ्करः॥ ६६॥

**आर्द्रत्वादतिशयिनीमुपेयिवद्भिः संसक्तिं भृशमपि भूरिशोऽवधूतैः॥**
**अङ्गेभ्यः कथमपि वामलोचनानां विश्लेषो बत! नवरक्तकैः प्रपेदे॥ ६७॥**

---

(१) ०मूर्वोः। (२) स्नपन।

**आर्द्रत्वादिति** ॥ नवरक्तकैः नूतनरञ्जितैः वस्त्रैः खलु निश्चितं वामलोचनानां मनोहरनयनानां स्त्रीणामङ्गेभ्यस्तनुभ्यः कथमपि महता कष्टेन विश्लेषः प्रपेदे वियोगः प्राप्तः । किं कुर्वद्भिः नवरक्तकैः अतिशयिनीं साऽतिशयां संसक्तिमुपेयिवद्भिः प्राप्तवद्भिः, कस्मात् आर्द्रत्वात् सजलत्वात, अपरं किंलक्षणैः वस्त्रैः भूरिशः अनेकवेलं भृशमत्यर्थमवधूतैरपि त्यक्तैरपि, परं न विश्लेषः प्राप्तः । अन्योऽपि यः किल आर्द्रो भवति स च भृशमवधूतोऽपि अधिकामासक्तिमुपेत्य वियोगं न प्राप्नोति ॥ ६७ ॥

**आर्द्रत्वादिति** ॥ आर्द्रत्वाज्जलेन प्रेम्णा च सरसत्वादतिशयिनीमतिशयवर्तीं संसक्तिं संश्लेषं परिचयं चोपेयिवद्भिः प्राप्तवद्भिः अत एव भृशं भूरिशो बहुशोऽवधूतैर्निरस्तैरपि, अन्यत्र निष्कासितैरपि नवरक्तैरेव नवरक्तकैः नूतनरक्तवस्त्रैः नवानुरागिभिश्च वामलोचनानां सुदृशामङ्गेभ्यो विश्लेषः बत खेदे कथमपि प्रपेदे प्राप्तः । एकत्राऽतिश्लेषादन्यत्राऽतिपरिचयाच्चेति भावः । अत्यासक्ताः कामिनो धनपरायणाभिर्वेश्याभिरवधूताः कथञ्चिन्मुञ्चन्तीत्यर्थान्तरप्रतीतिः । इह विशेष्यस्यापि श्लिष्टत्वाच्छब्दशक्तिमूलो ध्वनिरेव ॥ ६७ ॥

**प्रत्यंसं विलुलितमूर्धजा चिराय स्नानार्द्रं वपुरुदवापयत् किलैका ॥**
**नाऽजानादभिमतमन्तिकेऽभिवीक्ष्य स्वेदाम्बुद्रवमभवत्तरां पुनस्तत् ॥६८॥**

**प्रत्यंसमिति** ॥ एका काचिदङ्गना चिराय चिरकालं यावत् स्नानार्द्रं स्नपनक्लिन्नं वपुः शरीरम् उदवापयत् उद्वापयति स्म । किंलक्षणा सा प्रत्यंसं विलुलितमूर्धजा अंसौ प्रति प्रत्यंसं विलुलिता विक्षिप्ता मूर्धजाः केशा यया सा स्कन्धयोरुपरि विकीर्णकेशा, अपरं तद्वपुः पुनर्भूयोऽपि स्वेदाऽम्बुद्रवमभवत्तरां प्रस्वेदजलव्याप्तमतिशयेन अभवत् । अभवत्तराम् अतिशयेन बभूव । इति न अजानात् न अज्ञासीत्, स्वेदक्लिन्नं न विवेद, किं कृत्वा अन्तिके समीपे अभिमतं कान्तमभिवीक्ष्य दृष्ट्वा । सात्त्विकभावात 'स्तम्भः स्वेदोऽथ रोमाञ्च' इत्यादिना चित्तस्य तद्गतत्वं कथितम् ॥ ६८ ॥

**प्रत्यंसमिति** ॥ एका स्त्री प्रत्यंसमंसयोः । विभक्त्यर्थेऽव्ययीभावः । विलुलितमूर्धजा विकीर्णकेशा सती स्नानार्द्रं वपुः चिराय चिरमुदवापयन्निरवापयत् । अशोषयदिति यावत् । वयतेर्ण्यन्ताल्लङ् । 'अर्तिह्री–' इत्यादिना पुगागमः । किल खलु, पुनस्तद्वपुरभिमतं प्रियमन्तिकेऽभिवीक्ष्य स्वेदाम्बुनो द्रवम् । द्रवशब्दः शुक्लादिवद् गुणे पुंसि, गुणिनि मेयालिङ्गः । 'आपो द्रवाः सर्वाणि द्रवाणि तूदङ्मुखेन जुहोति' इत्यादिप्रयोगात् । अभवत्तराम् । अतिशयेनाऽभवदित्यर्थः । 'तिङश्च' इति तरप् 'किमेत्तिङ–' इत्यादिना तिङन्तादामुप्रत्ययः । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वम् । नाऽजानात् । वाक्यार्थः कर्म । तद् द्रवभवनं नाऽज्ञासीदित्यर्थः। अविरतस्नेहार्द्रतामजानती स्नानार्द्रमेवेति मन्यमाना पुनःपुनर्वपुरुद्वापन्त्येवाऽऽस्तेति तात्पर्यार्थः । अत्र वपुष्मत्कर्तृकस्य वीक्षणस्य वपुष्युपचारात् द्रवणक्रियायाः समानकर्तृकत्वात्पूर्वकालतानिर्वाहः । एषा च गर्वौत्सुक्यादिसञ्चारिसङ्कीर्णस्वेदरोमाञ्चादिसात्त्विकसम्पन्ना स्मितायनुभाववती चेत्यनुसन्धेयम् । अत्रोद्वापनरूपकारणे सति द्रवत्वनिवृत्तिरूपकार्योऽनुत्पत्तेस्तद्विरुद्धद्रवत्वमुखेनाऽभिधानाद्विशेषोक्तिरलङ्कारः । 'तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते' इति लक्षणात् ॥ ६८ ॥

**सीमन्तं निजमनुबध्नती कराभ्यामालक्ष्यस्तनतटबाहुमूलभागा ॥**
**भर्त्राऽन्यार्ं मुहुरभिलष्यता निदध्ये नैवाऽहो ! विरमति कौतुकं प्रियेभ्यः॥६९**

**सीमन्तमिति** ॥ भर्त्रा वल्लभेन काचिदङ्गना मुहुर्वारंवारं निदध्ये विलोकिता । किं कुर्वता भर्त्रा अभिलष्यता साभिलाषेण, अभिलष्यतीति अभिलष्यन् तेन, अङ्गना किं कुर्वती कराभ्यां पाणिभ्यां निजमात्मीयं सीमन्तं केशपाशमनुबध्नती परिवेष्टयन्ती । 'सीमन्तः कथ्यते स्त्रीणां केशमध्ये तु पद्धति'रिति हलायुधः । किंलक्षणा अङ्गना

आलक्ष्यस्तनतटबाहुमूलभागा दृश्यमानकुचस्थलकक्षान्तप्रदेशा, अत एव निरीक्षिता । अहो इत्याश्चर्यं, प्रियेभ्यः कान्तेभ्यः सकाशात् कौतुकं न विरमति कौतूहलं विश्रान्तिं नैव भजते । नवां नवां प्रीतिं करोतीत्यर्थः ॥ ६९ ॥

सीमन्तमिति ॥ निजमात्मीयं सीमन्तं मूर्धजमध्यपद्धतिम् । 'सीमन्तमास्त्रियां स्त्रीणां केशमध्ये तु पद्धतिः' इति वैजयन्ती । कराभ्यामनुबध्नती गृह्णन्ती । विभजन्तीत्यर्थः । अत एव आ समन्तात् लक्ष्या विभाव्याः स्तनतटे बाहुमूले च तेषां भागाः प्रदेशा यस्याः सा अन्या स्त्री अभिलष्यताऽभिलषता । 'वा भ्राश-' इत्यादिना वैकल्पिकः श्यन्प्रत्ययः । भर्त्रा मुहुर्निदध्ये ध्याता । तां निरीक्ष्येत्यर्थः । 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः । अहो आश्चर्यं, कौतुकमभिलाषः प्रीणन्तीति प्रियाः विषयाः । 'इगुपधज्ञाप्रीकिरः कः' इति कः । तेभ्यो न विरमति, उपभोगेऽपि न निवर्तत इत्याश्चर्यम् । 'न जातु कामः कामानामुपभोगेन शाम्यति' इति भावः । 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानाम्' इति पञ्चमी । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । अर्थान्तरन्यासः ॥ ६९ ॥

**स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठस्ताम्बूलद्युतिविशदो विलासिनीनाम् ॥**
**वासश्च प्रतनु विविक्तमस्त्वितीयानाकल्पो यदि कुसुमेषुणा न शून्यः॥७०॥**

स्वच्छाम्भः इति ॥ विलासिनीनामङ्गनानाम् इति इयान् आकल्पः अस्तु एतावान् ईदृशो वक्ष्यमाणो वेषो भवतु, पुनः यदि चेत् कुसुमेषुणा कामेन न शून्यः कामयुक्तः । तदा वेषो भवत्वित्यर्थः । तावत् किं किं—स्वच्छाम्भःस्नपनविधौतम् अङ्गमस्तु निर्मलपयःस्नानक्षालितं शरीरं भवतु । अपरम् ओष्ठः ताम्बूलद्युतिविशदः अस्तु अधरश्च नागवल्लीदलप्रभारम्यो भवतु । अपरं च वासो वस्त्रं प्रतनु सूक्ष्ममस्तु । अन्यत् विविक्तं विजनमेकान्तमस्तु । इत्यादिवेषो यदि कामयुक्तस्तदा सार्थक इत्यर्थः ॥ ७० ॥

स्वच्छाम्भः इति ॥ स्वच्छेन अम्भसा स्नपनेनाऽभिषेकेण विधौतं विगलितमङ्गं वपुः । ताम्बूलद्युत्या ताम्बूलरागेण विशदः उज्ज्वल ओष्ठोऽधरः । प्रतनु सूक्ष्मं विविक्तं विमलं वासश्च, अथ वा विविक्तमेकान्तस्थानं च । 'विविक्तौ पूतविजनौ' इत्यमरः । इत्येवंरूप इयानेतावानेव विलासिनीनामाकल्पो नेपथ्यमस्तु । किमन्यैरित्यर्थः । कुसुमेषुणा कामेन शून्यो यदि न स्यात् । अन्यथा उद्भिजितानामिव कनकभूषणमपि भारायत एवेति भावः । एतेन विच्छित्त्याख्य आलम्बनचेष्टारूप उद्दीपनविभाव उक्तः । 'स्तोकभूषणयोगेऽपि विच्छित्तिरिति गद्यते' इति लक्षणात् । अत्र स्नानताम्बूलादिपदार्थान्वितविशेषणगत्या अङ्गोष्ठादीनामाकल्पत्वप्रतिपादनार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ७० ॥

**इति धौतपुरन्ध्रिमत्सरान् सरसि मज्जनेन**
**श्रियमाप्तवतोऽतिशायिनीमविरलाऽङ्गभासः ॥**
**अवलोक्य तदेव (१) यादवानपरवारिराशेः**
**शिशिरेतररोचिषाऽप्यपां ततिषु मङ्क्तुमीषे ॥ ७१ ॥**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये जलविहारवर्णनं नामाऽष्टमः सर्गः ॥ ८ ॥

इतीति ॥ शिशिरेतररोचिषाऽपि उष्णकिरणेन श्रीसूर्येणापि अपरवारिराशेः पश्चिमसागरस्य अपां ततिषु जलानां श्रेणिषु मङ्क्तुमीषे मज्जनं कर्तुमभिलेषे । किं कृत्वा, उत्प्रेक्षते—तदा तस्मिन् समये यादवान् वृष्णीन् अवलोक्येव दृष्ट्वेव, किंभूतान् यादवान् इति पूर्वोक्तप्रकारेण धूतपुरन्ध्रिमत्सरान् धूतः निराकृतः पुरन्ध्रीणामङ्गनानां मत्सरः

(१) तदैव ।

अभिमानो यैस्ते तथा तान्, अपरं किंलक्षणान् यादवान् सरसि मज्जनेन तडागे स्नपनेन अतिशायिनीं श्रियमतिशयवतीं शोभाम् अवाप्तवतः प्राप्तान् । अतीव सश्रीकानित्यर्थः । अपरं किंलक्षणान् यादवान् अविरलाङ्गभासः बहलशरीरद्युतीन् ॥ ७१ ॥

इति श्रीमाघकाव्ये बृहद्वल्लभायां टीकायामष्टमः सर्गः सम्पूर्णः ।



अथोत्तरसर्गे सूर्यास्तमयादिवर्णनं प्रस्तौति—

इतीति ॥ इतीत्थं सरसि मज्जनेन स्नानेन धौतपुरन्ध्रिमत्सरान् क्षालितमानिनीमानान् अभीक्ष्णमतिशेतेऽतिशायिनीम् । अभीक्ष्ण्ये णिनिः । श्रियमाप्तवतः अपमलाङ्गभासो विमलाङ्गकान्तीन् यादवानवलोक्य तदैव शिशिरेतररोचिषा उष्णांशुनाऽप्यपरवारिराशेः पश्चिमाब्धेरपां ततिषु पूरेषु मङ्क्तुं प्रवेष्टुमीषे इष्टम् । भावे लिट् । परचेष्टासाक्षात्कारो विषयिणां तादृग्विषयाभिलाषमन्तराधत्त इति भावः । अत्र भानोः कालप्राप्तमज्जनस्य यादवमज्जनावलोकनहेतुकत्वमुत्प्रेक्ष्यते । अतिशायिनी वृत्तम् । 'ससजा भजतोऽतिशायिनी भवति गौ दिगश्वैः' इति छन्दोलक्षणात् ॥ ७१ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवध-
काव्यव्याख्याने सर्वङ्कषाख्येऽष्टमः सर्गः ॥ ८ ॥



## नवमः सर्गः ।

अभितापसम्पदमथोष्णरुचिर्निजतेजसामसहमान इव ॥
पयसि प्रपित्सुरपराम्बुनिधेरधिरोढुमस्तगिरिमभ्यपतत् ॥ १ ॥

अभितापेति ॥ अथानन्तरम् उष्णरुचिः श्रीसूर्यः अस्तगिरिमभ्यपतत् अस्ताचलं ययौ । किं कर्तुम् अधिरोढुमधिरोहणाय, किंविधः अपराम्बुनिधेः पश्चिमसमुद्रस्य पयसि जले प्रपित्सुः प्रपतितुकामः प्रवेशं कर्तुमिच्छन् । पुनः किंविधः उष्णरुचिः, उत्प्रेक्ष्यते— निजतेजसामात्मद्युतीनाम् अभितापसम्पदं प्रतापाधिक्यमसहमान इव सोढुमसमर्थ इव । तापस्फेटनार्थं समुद्रे मज्जनं कर्तुकाम इवेत्यर्थः । प्रमिताक्षरा छन्दः ॥ १ ॥

अथ सूर्यास्तमयं वर्णयति—

अभितापेति ॥ अथ मिमङ्क्षानन्तरमुष्णरुचिः सूर्यो निजतेजसामभितापसम्पदं सन्तापाऽतिरेकमसहमान इवाऽपराम्बुनिधेः पश्चिमाब्धेः पयसि प्रपित्सुः पतितुमिच्छुः । पततेः सन्नन्तादुप्रत्ययः । 'सनि मीमा—' इत्यादिना इसादेशः, 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । अस्तगिरिमस्ताद्रिम् । 'अस्तस्तु चरमक्ष्माभृत्' इत्यमरः । अधिरोढुमभ्यपतदभ्यधावत् । अत्राऽसहमान इवेति कालप्राप्तस्य पयसि प्रपातस्य निजतेजोऽसहनहेतुकत्वमुत्प्रेक्ष्यते । अस्मिन्सर्गे प्रमिताक्षरा वृत्तम् । 'प्रमिताक्षरा सजससैरुदिता' इति लक्षणात् ॥ १ ॥

गतया पुरः प्रति गवाक्षमुखं दधती रतेषु(१) भृशमुत्सुकताम् ॥
मुहुरन्तरालभुवमस्तगिरेः सवितुश्च योषिदमिमीत दृशा ॥ २ ॥

गतयेति ॥ योषिदङ्गना अस्तगिरेः अस्ताचलस्य अपरं च पुनः सवितुः सूर्यस्याऽन्तरालभुवं मध्यप्रदेशं मुहुर्वारंवारम् अमिमीत माति स्म । परिमाणं व्यलोकयदिति भावः।

(१) रतेन ।

कया दृशा दृष्ट्या, किंविधया दृशा पुरोऽग्रे गवाक्षमुखं प्रति गतया वातायनद्वारेषु प्रविष्टया, किंविधा योषित् रतेषु सम्भोगरसेषु भृशमतिशयेन उत्सुकतां दधती औत्सुक्यं बिभ्रती ॥ २ ॥

गतयेति ॥ रतेन रत्यर्थे । 'प्रसितोत्सुकाभ्यां तृतीया च' इति सप्तम्यर्थे तृतीया । भृशमुत्सुकतां कालाऽक्षमत्वलक्षणमौत्सुक्यं दधती योषित् पुरोऽग्रे गवाक्षमुखं गवाक्षद्वारं प्रति गतयाऽपसृतया दृशा अस्तगिरेः सवितुश्चाऽन्तरालभुवं मध्याकाशदेशं मुहुरमिमीत माति स्म । हस्तमात्रमवशिष्टमराळिमात्रमवशिष्टमित्यादिमानकरणेनाऽस्तमयं प्रतीक्षितवतीत्यर्थः । मांङो लङि 'श्नौ' इति द्विर्भावः 'भृञामित्' इत्यभ्यासस्येत्वम् । एतच्च अस्तमयप्रतीक्षणभ्रमादौत्सुक्यानुभवान्तरोपलक्षणम् । अत्रौत्सुक्यभाववचनात्प्रेयोऽलङ्कारः ॥ २ ॥

**विरलातपच्छविरनूष्म(१)वपुः परितो विपाण्डु दधदभ्रशिरः ॥**
**अभवद्गतः परिणतिं शिथिलः परिमन्दसूर्यनयनो दिवसः ॥ ३ ॥**

विरलातपेति ॥ दिवसः एवंविधोऽभवत् । किंलक्षणः दिवसः परणतिं गतः परिपाकं प्राप्तः । अन्तायोन्मुख इति यावत् । अपरं किंविधः शिथिलः विशरितुकामः, अपरं किंभूतः परिमन्दसूर्यनयनः निष्प्रभीभूतरविनेत्रः । रविरेव दिवसस्य नेत्रतुल्यः । अपरं किंभूतः विरला अनिरन्तरा आतपस्य छविर्यत्र सः, अत एव अनूष्मवपुः ऊष्मरहितस्वरूपः, किं कुर्वन् अभ्रशिरः दधत् अभ्राण्येव मेघा एव शिरो मस्तकं तद्वहन्, किंभूतमभ्रशिरः परितो विपाण्डु समन्ताद्धवलम् । अन्योऽपि यः परिणतिं गतः वृद्धावस्थां प्राप्तः, सोऽप्येवंविधो भवति । किंभूतः शिथिलः श्लथगात्रः, पुनः किंभूतः परिमन्दे स्वल्पतेजसी सूर्यतुल्ये नयने चक्षुषी यस्य सः, अपरं किंभूतः विरला स्वल्पीभूता आतपच्छविः शौर्यवृत्ति पौरुषं यस्य सः, अपरं किंभूतः अनूष्म ऊष्मरहितं निरुद्यमं वपुः शरीरं यस्य सः, किं कुर्वन् अभ्रवत् शिरः दधत्, किंभूतं शिरः समन्ताद्विपाण्डु । पलितवदित्यर्थः ॥ ३ ॥

विरलातपेति ॥ परिणतिं परिवृत्तिम्, अन्यत्र जरावस्थां च गतः अत एव विरला अल्पा आतपस्य छविर्यस्य सः, अन्यत्र क्षीणप्रभः । अनुष्णवपुः, अन्यत्र श्लेष्मोदयादीषदुष्णदेहः । अलवणा यवागूरितिवदल्पार्थे नञ्प्रयोगः । परितो विपाण्डु एकत्र शुभ्राऽभ्रपटलच्छन्नत्वादपरत्र पलितैश्च पाण्डुरमभ्रमाकाशमेव शिरो दधदुद्वहन् परिमन्दं प्रशान्तम् अर्थग्रहणासमर्थं च सूर्य एव नयनं यस्य स दिवसः शिथिलः शिथिलवृत्तिः, शिथिलाङ्गश्चाभवत् । अत्राऽभ्रशिर इत्याद्यवयवरूपणाद्दिवस एव स्थविर इत्यवयविरूपकसिद्धेस्तदरूपणादेकदेशवृत्तिरूपकं श्लेषानुप्राणितम् ॥ ३ ॥

**अपराह्णशीतलतरेण शनैरनिलेन लोलितलताऽङ्गुलये ॥**
**निलयाय शाखिन इवाऽऽह्वयते ददुराकुलाः खगकुलानि गिरः ॥ ४ ॥**

अपराह्णेति ॥ खगकुलानि पक्षिवृन्दानि शाखिने वृक्षाय आकुला अस्पष्टा गिरो ददुः वाणीर्ददति स्म । किंभूताय शाखिने, उत्प्रेक्ष्यते—निलयायाऽऽह्वयते इव आवासाय आह्वानं कुर्वते इव । किंभूताय शाखिने शनैर्मन्दंमन्दम् अनिलेन लोलिताः चालिता लता वलय एव अङ्गुलयः करशाखा यस्य तस्मै, किंभूतेनाऽनिलेन अपराह्णशीतलतरेण सन्ध्यासमयशिशिरेण । अन्योऽपि यः कमपि आकारयति सोऽपि लोलिताङ्गुलिर्भवति । सन्ध्यासमये हि पक्षिणः स्वभावेन आकुलगिरो भवन्ति । तदुपमीयते-निलयाय आकारयते वृक्षाय प्रतिस्वरं वदन्ति स्मेत्यर्थः । आगच्छत भोः खगाः ! द्रुतमितिवृत्तमिह(?) इति वदन्तीति भावः ॥ ४ ॥

---

(१) ०रनुष्ण

अपराह्णेति ॥ अपरोऽपरभागोऽह्नोऽपराह्णो दिनान्तः । 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' इत्येकदेशिसमासः । 'राजाऽहःसखिभ्यष्टच्' । 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः, 'अह्नोऽदन्तात्' इति णत्वम् । तस्मिन्नपराह्णे शीतलतरेणानिलेन शनैर्लोलिताश्चालिता लता एवाऽङ्गुलयो यस्य तस्मै, अत एव निलयाय निवासायाऽऽह्वयते अङ्गुलिसंज्ञया आह्वानं कुर्वाणायेव स्थितायेत्युत्प्रेक्षा । शाखिने वृक्षाय खगकुलानि पक्षिसङ्घा आकुलास्तुमुला गिरः 'इदमागम्यत' इति प्रत्युत्तराणि ददुरिवेत्यनुषङ्गादुत्प्रेक्षा ॥ ४ ॥

**उपसन्ध्यमास्त तनु सानुमतः शिखरेषु तत्क्षणमशीतरुचः ॥**
**करजालमस्तसमयेऽपि सतामुचितं खलूच्चतरमेव पदम् ॥ ५ ॥**

उपसन्ध्यमिति ॥ तत्क्षणां तत्रावसरे अशीतरुचः सूर्यस्य करजालं किरणपटलं सानुमतः अस्ताचलस्य शिखरेषु शृङ्गेषु आस्त तस्थौ । करसहस्रं तत्र स्थितमिति भावः । क उपसन्ध्यं सन्ध्यासमये, किंभूतं करजालं तनु कृशम् । ननु यदि कृशं, तदा किमिति अस्ताचलस्य शृङ्गेषु स्थितम् । युक्तोऽयमर्थः, खलु यस्मात्कारणात् सतामुत्तमानामस्तसमयेऽपि अन्तसमयेऽपि उच्चतरं पदमुचितं योग्यम् । उन्नतमेव पदं स्थानं सन्तः प्राप्नुवन्तीत्यर्थः ॥ ५ ॥

उपसन्ध्यमिति ॥ उपसन्ध्यं सन्ध्यायाः समीपे । समीपार्थेऽव्ययीभावे नपुंसकत्वात् ह्रस्वत्वम् । अशीतरुचः उष्णांशोस्तनु करजालं तत्क्षणं तस्मिन्क्षणे । तत्कालेऽपीत्यर्थः । अत्यन्तसंयोगे द्वितीया । सानुमतोऽद्रेः शिखरेष्वास्ताऽतिष्ठत् । आसेः कर्तरि लङ् । सतामस्तसमये नाशसमयेऽप्युच्चतरमेव पदमुन्नतस्थानमेवोचितं खलु । अर्थान्तरन्यासः ॥ ५ ॥

**प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ॥**
**अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ ६ ॥**

प्रतिकूलतामिति ॥ विधौ दैवे प्रतिकूलतामुपगते सति वक्रीभूततां प्राप्ते सति बहुसाधनता बहूपकरणत्वं विफलत्वमेति नैष्फल्यं प्राप्नोति । यतः दिनभर्तुः सूर्यस्य पतिष्यतः अस्तं यास्यतः सतः करसहस्रमपि अवलम्बनाय नाऽभूत् । धारणार्थं न बभूव ॥ ६ ॥

प्रतिकूलतामिति ॥ विधौ दैवे प्रतिकूलतामुपगते सति बहुसाधनता अनेकसाधनवत्ता विफलत्वमेति । महत्यपि साधनसम्पत्तिर्निष्फलैवेत्यर्थः । तथा हि-पतिष्यत आसन्नपातस्य दिनभर्तुः करा अंशवो हस्ताश्च । 'बलिहस्तांशवः कराः' इत्यमरः । तेषां सहस्रमपि अवलम्बनायाऽवष्टम्भनाय नाऽभूत् । अतो दैवमेव प्रबलमिति भावः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६ ॥

**नवकुङ्कुमाऽरुणपयोधरया स्वकराऽवसक्तरुचिराम्बरया ॥**
**अतिसक्तिमेत्य वरुणस्य दिशा भृशमन्वरज्यदतुषारकरः ॥ ७ ॥**

नवकुङ्कुमेति ॥ अतुषारकरः उष्णरश्मिः भृशमतिशयेन अन्वरज्यत् अनुरक्तो बभूव । आरक्तोऽभूदित्यर्थः । किं कृत्वा वरुणस्य दिशा पश्चिमया आशया सह अतिसक्तिमेत्य सामीप्यातिशयं प्राप्य, किंभूतया दिशा नवकुङ्कुमवत् नूतनघुसृणवत् अरुणा आरक्ताः पयोधरा मेघाः यस्याः सा, पुनः किंभूतया स्वकराऽवसक्तं निजकरसंलग्नं रुचिरं मनोज्ञमम्बरमाकाशं यस्याः सा तया । अथोक्तिलेशः—अतुषारकरः अशीतलपाणिः स्मरतापोष्मकरः वारुण्या शिशिरगात्र्या सह यथाऽनुरज्यति अनुरक्तो भवति । किं कृत्वा अतिसक्तिमत्यनुरागं प्राप्य, किंभूतया स्त्रिया नवौ अभिनवौ कुङ्कुमाऽरुणौ घुसृणलिप्तौ पयोधरौ स्तनौ यस्याः सा तया, पुनः किंभूतया स्वकराऽवसक्तं निजहस्ताकृष्टं रुचिरं मनोज्ञमम्बरं वस्त्रं यस्यास्तया । 'स्त्रीस्तनाऽब्दौ पयोधरौ', 'अम्बरं व्योम्नि वाससि' उभयत्राप्यमरः ॥ ७ ॥

नवकुङ्कुमेति ॥ अतुषारकर उष्णांशुः नवकुङ्कुमवदरुणपयोधरया नवसन्ध्यारुणमेघया अन्यत्र नवकुङ्कुमारुणकुचया स्वकरावसक्तरुचिराम्बरया स्वकिरणाक्रान्तरुचिराकाशया, अन्यत्र स्वहस्तलग्नचारुवसनया वरुणस्य दिशा । पश्चिमदिशा सहेत्यर्थः । वरुणसम्बन्धात्पराङ्गनात्वं च गम्यते । 'वृद्धो यूना—' इति सूत्रादौ सहार्थाऽप्रयोगात्सहार्थानामप्रयोगेऽपि 'सहयुक्तेऽप्रधाने' इति सहार्थे तृतीया । अतिसाक्तिमातिसान्निकर्षमत्यासक्तिं च एत्य प्राप्य भृशमन्वरज्यत् लोहितो रक्तवांश्चाऽभवत् । रञ्जेर्दैवादिकात्कर्तरि लङ् । 'कुषिरञ्जोः प्राचां श्यन् परस्मैपदं च' इति कर्मकर्तरि वा । अत्र वारुणीदिनकरादिविशेषणमहिम्नैव तयोर्जारभावप्रतीतेः समासोक्तिरलङ्कारः ॥ ७ ॥

**गतवत्यराजत जपाकुसुमस्तबकद्युतौ दिनकरेऽवनतिम् ॥**
**बहलाऽनुरागकुरुविन्ददलप्रतिबद्धमध्यमिव दिग्वलयम् ॥ ८ ॥**

**गतवतीति ॥** दिग्वलयं दिक्चक्रवालमराजत शुशुभे । क्व सति दिनकरे रवौ अवनतिं गतवति सति नम्रीभूतत्वं प्राप्तवति सति, किंभूते दिनकरे जपाकुसुमस्तबकद्युतौ जपापुष्पगुच्छसमकान्तौ । रक्तवर्णे इति भावः । किंभूतं दिग्वलयम्, उत्प्रेक्ष्यते—बहलाऽनुरागकुरुविन्ददलप्रतिबद्धमध्यमिव सान्द्रारक्तपद्मरागमणिखण्डखचितमध्यप्रदेशमिव, बहलो घनतरः अनुरागः रक्तता येषां तानि एवंविधानि च तानि कुरविन्ददलानि पद्मरागमणिखण्डानि च तैः प्रतिबद्धं खचितं मध्यमन्तःप्रदेशो यस्य तत् ॥ ८ ॥

गतवतीति ॥ जपाकुसुमस्तबकद्युतौ लोहितवर्णे दिनकरेऽवनतिमस्तं गतवति सति । लम्बमाने सतीत्यर्थः । दिग्वलयं दिङ्मण्डलं कङ्कणं च ध्वन्यते । बहलानुरागैः सान्द्ररागैः कुरुविन्ददलैः पद्मरागशकलैः प्रतिबद्धः प्रत्युप्तो मध्यो यस्य तदिवाऽराजतेत्युत्प्रेक्षा ।

'कुरुविन्दस्तु मुस्तायां कुल्माषव्रीहिभेदयोः ।
इङ्गुदे पद्मरागे च मुकुलेऽपि समीरितः' ॥

इति विश्वः ॥ ८ ॥

**द्रुतशातकुम्भनिभमंशुमतो वपुरर्धमग्नवपुषः पयसि ॥**
**रुरुचे विरिञ्चिनखभिन्नबृहज्जगदण्डकैकतरखण्डमिव ॥ ९ ॥**

**द्रुतशातकुम्भेति ॥** अंशुमतः सूर्यस्य वपुर्बिम्बं रुरुचे अराजत । किंभूतं वपुः द्रुतशातकुम्भनिभं विलीनसुवर्णप्रभं, किंभूतस्य अंशुमतः पयसि उदके अर्धमग्नवपुषः अर्धब्रुडितशरीरस्य । किंभूतं रवे वपुः, उत्प्रेक्षते—विरिञ्चिनखभिन्नबृहज्जगदण्डकैकतरखण्डमिव ब्रह्मनखविदारितविशालब्रह्माण्डैकखण्डमिव । तदुक्तम्—

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्माद‍ण्डाच्च तज्जातं जगत् स्थावरजङ्गमम् ॥ ॥ ९ ॥

द्रुतशातकुम्भेति ॥ द्रुतं तप्तं यच्छातकुम्भं तपनीयम् । 'तपनीयं शातकुम्भम्' इति सुवर्णपर्यायेष्वमरः । तेन सदृशं तन्निभमिति नित्यसमासः । पयसि समुद्रोदके अर्धं यथा तथा मग्नं वपुर्यस्य तस्यांशुमतोऽर्कस्य मण्डलं विरिञ्चेर्ब्रह्मणो नखेन विभिन्नस्य द्वेधाविदारितस्य बृहतो महतो जगदण्डकस्य जगदाश्रयकोशस्य ब्रह्माण्डकस्यैकतरखण्डमन्यतरदलमिव रुरुचे रराज । अत्रोपमानस्य पुराणप्रसिद्धत्वादुपमालङ्कारः॥

**अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ॥**
**निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥ १० ॥**

**अनुरागवन्तमिति ॥** अपरदिग्गणिका पश्चिमदिग्वेश्या वियदालयात् आकाशमन्दिरात् रविं सूर्यं निरकासयत् निष्कासयामास । अपरदिगेव गणिका अपरदिग्गणिका ।

वियदेव आकाशमेवाऽऽलयो गृहं तस्मात् । किंभूतं रविम् अपेतवसुं नष्टकिरणम्, अपरं किंभूतम् अनुरागवन्तमपि आरक्तमपि, पुनः किंभूतं वपुर्धारयन्तं, किंभूतं वपुः लोचनयोः सुखं नयनयोः सुखकारि, अल्पतेजस्त्वात् । पुनः किंभूतं वपुः अतापकरं शीतकिरणम् । अथोक्तिलेशः-यथा गणिका वेश्या अपेतवसुं निर्धनपुरुषमनुरागवन्तमपि स्नेहवन्तमपि मन्दिरान्निष्कासयति । किंभूतं पुरुषं लोचनयोः सुखं सुन्दरत्वादानन्दकरं वपुः शरीरं दधतं, किंभूतं वपुः असन्तापकरमनुद्वेगजनकम् ॥ १० ॥

**अनुरागवन्तमिति** ॥ अपरादिक् पश्चिमा सैव गणिका वेश्या अनुरागो लौहित्यमभिलाषश्च तद्वन्तमपि लोचनयोः सुखयतीति सुखं सुखकरं शान्तत्वादाभिरूप्याच्च दर्शनीयं वपुर्दधतमपि इति अतापकरमनौष्ण्या-दशठत्वाच्च असन्तापकारिणं सुखस्पर्शं वा तथाऽप्यपेतवसुं नीरश्मिं निर्धनं च । 'देवभेदे नले रश्मौ वसू रत्ने धने वसु' इत्यमरः । रविः सूर्यो विटश्च गम्यते। तम्, वियदाकाशमेवालयो गृहं तस्मान्निरकासयन्निष्कासित-वती । धनपरा हि वेश्याः निर्गुणमपि धनिकमासर्वस्वहरणादत्यनुरक्तवदनुवर्तन्ते, गुणवन्तमपि हृतसर्वस्वं निर्वासयन्ति सद्य एवेति भावः । अस्तं गतोऽर्क इति श्लोकार्थः । अत्र वियदालयादपरादिग्गणिकेत्येकदेशरूपणा-द्रवेर्विटत्वरूपणावगमादेकदेशवर्ति रूपकम् । श्लेषोऽपि तदुत्थापितत्वादनुराग एवानुरागो वसव एव च वसूनीति रूपकपर्यवसित एवेत्यक्तम् ॥ १० ॥

**अभितिग्मरश्मि चिरमाविषया(१)दवधानखिन्नमनिमेषतया ॥**
**विगलन्मधुव्रतकुलाऽश्रुजलं न्यमिमीलदब्जनयनं नलिनी ॥ ११ ॥**

**अभितिग्मरश्मीति** ॥ नलिनी अब्जिनी अब्जनयनं न्यमिमीलत् सरोजनेत्रं निमीलयामास । किंभूतमब्जनयनं विगलत् निःसरत् मधुव्रतकुलमेव भ्रमरकदम्बकमेव अश्रुजलं बाष्पोदकं यस्मात्तत् निस्सरद्द्विरेफावलिबाष्पोदकं, पुनः किंभूतमब्जनयनम् अभितिग्मरश्मि श्रीसूर्यमभि लक्षीकृत्य दृष्ट्वा चिरं दीर्घकालमवधानखिन्नं निरन्तरावलो-कनश्रान्तं, कया आविषयात् लोचनगोचरं यावत् अनिमेषतया निश्चलतया । अब्जनयनेन यावत् श्रीसूर्योऽस्तं प्राप्तस्तावत्पद्मिन्याऽवलोकितः । पश्चात् पद्मनेत्रं सङ्कोच्य मूर्छिता ॥ ११ ॥

**अभितिग्मरश्मीति** ॥ नलिनी अभितिग्मरश्मि सूर्याभिमुखं चिरमाविरमादस्तमयादनिमेषतया अपक्ष्म-पाततया । दलसङ्कोच एवात्र निमेषः । अवधानेनाऽभिमुखावस्थाननिर्बन्धेन खिन्नमलसम्, अत एव विगल-न्निःसरन्मधुव्रतकुलमेवाऽश्रुजलं यस्य तदब्जमेव नयनं न्यमिमीलत् मीलयति स्म । 'भ्राजभास-' इत्यादिना विकल्पादुपधाह्रस्वः । अत एव नाऽभ्यासदीर्घः । अनुरक्ता हि कान्ता कान्तमनिमेषं पश्यन्ती तदपाये सति निमीलिताक्षी स्यादिति भावः । अत्राऽप्यब्जनयनमित्यावयवरूपणादवयविनोर्नलिनीतिग्मरश्म्योर्नायकत्व-रूपकसिद्धेरेकदेशविवर्ति रूपकम् ॥ ११ ॥

**अविभाव्यतारकमदृष्टहिमद्युतिबिम्बमस्तमितभानु नभः ॥**
**विरतोरु(२)तापमतमिस्रमभादपदोषतैव विगुणस्य गुणः ॥ १२ ॥**

**अविभाव्येति** ॥ नभः आकाशम् अभात् विरेजे । किंभूतं नभः अविभाव्यतारक-मदृश्यनक्षत्रं, पुनः किंभूतं नभः अदृष्टहिमद्युतिबिम्बमनुदितचन्द्रमण्डलं, पुनः किंभूतम् अस्तमितभानु अस्तङ्गतदिनकरं, पुनः किंभूतं विरतोरुतापं विश्रान्तगुरुनिदाघं, पुनः किं-भूतम् अतमिस्रमन्धकाररहितम् । युक्तोऽयमर्थः, यस्मात्कारणात् विगुणस्य निर्गुणस्य शून्याकारस्य नभसः अपदोषतैव गुणः, अपगता दोषा रात्रिर्यस्मात् सः अपदोषः तस्य

(१) ०माविरभा० । (२) ०वसन्न ।

भावोऽपदोषता गतरात्रिता एव गुणः शोभा । सन्ध्यासमय एव शोभा भवति । अत-एव चकासे । अथ चोक्तिः—यथा अन्यस्यापि विगुणस्य गुणहीनस्य पुंसः अपदोषतैव निर्दोषत्वमेव गुणः । यथा निर्गुणो नरः सकलङ्को न शोभते, तथा विगतगुणं खमपि तमसाऽऽवृतं न भातीत्यर्थः ॥ १२ ॥

अविभाव्येति ॥ अविभाव्यतारकमलक्ष्यनक्षत्रम् अदृष्टं हिमद्युतेरिन्दोर्बिम्बं यस्मिंस्तत् । अथाप्यनुदितचन्द्रतारकमित्यर्थः । अस्तमित्यदर्शनेऽव्ययम् । अस्तमितोऽस्तं गतो भानुर्यस्मिंस्तत् । एतावता निर्गुणत्वमुक्तम् । अथ निर्दोषत्वमाह—अवसन्नतापमर्कास्तमयात्प्रशान्तसन्तापम् अतमिस्रमनुदितान्धकारं नभोऽन्तरिक्षमभाद्भाति स्म । भातेर्लङ् । ननु विगुणस्य का शोभेति न वाच्यं, निर्दोषताया अपि गुणत्वादित्यर्थान्तरन्यासेनाह—विगुणस्य गुणहीनस्याऽपदोषता निर्दोषत्वमेव गुणः । अतो गुणवत्त्वाच्छोभा युक्तेति कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १२ ॥

रुचिधाम्नि भर्तरि भृशं विमलाः परलोकमभ्युपगते विविशुः ॥
ज्वलनं त्विषः कथमिवेतरथा सुलभोऽन्यजन्मनि स एव पतिः ॥ १३ ॥

रुचिधाम्नीति ॥ त्विषः कान्तयः ज्वलनं विविशुः वैश्वानरं प्रविष्टाः । क्व सति रुचिधाम्नि श्रीसूर्ये भर्तरि धर्तरि परलोकमभ्युपगते सति अस्तमिते सति, किंभूताः त्विषः भृशं विमलाः अत्यर्थमुज्ज्वलाः । युक्तमेवैतत्, यतः कारणात् इतरथा अग्निप्रवेशं विना अन्यजन्मनि भवान्तरे स एव पतिः असौ एव कान्तः कथमिव सुलभः स एव कथं लभ्यते । यथा भृशं विमलाः स्वच्छमनसः स्त्रियः भर्तरि कान्ते परलोकमभ्युपगते सति ज्वलनं वह्निं विशन्ति । किंभूते भर्तरि रुचिधाम्नि स्नेहावासे । शेषं प्रागिव व्याख्येम् । रविरस्तसमये निजाः त्विषो वह्नौ निधायाऽस्तं यातीत्यागमः । यथा—दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥ १३ ॥

रुचिधाम्नीति ॥ रुचिधाम्नि तेजोनिधौ सूर्ये भर्तरि पत्यौ परलोकं देशान्तरमभ्युपगते मृते च सति विमलाः शुद्धास्त्विषो ज्वलनं विविशुः । 'अग्निं वावादित्यः सायं प्रविशति' इति श्रुतेरिति भावः । अन्यत्र 'मृते या म्रियते पत्यौ सा स्त्री ज्ञेया पतिव्रता' इति स्मरणादिति भावः । अग्निप्रवेशफलमाह—इतरथा ज्वलनाप्रवेशे अन्यजन्मनि जन्मान्तरे स एव स सूर्य एव पतिः, अन्यत्र तु योऽस्मिञ्जन्मनि पतिः स एव कथं सुलभः । न कथञ्चिदित्यर्थः । 'उद्यन्तं वावादित्यमग्निरनुसमारोहति' इति श्रुतेः । तेनैव सह मोदत इति स्मरणादिति भावः । अतोऽग्निप्रवेशो युक्त इति समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १३ ॥

विहिताञ्जलिर्जनतया दधती विकसत्कुसुम्भकुसुमाऽरुणताम् ॥
चिरमुज्झिताऽपि तनुरौज्झदसौ न पितृप्रसूः प्रकृतिमात्मभुवः ॥ १४ ॥

विहिताञ्जलिरिति ॥ आत्मभुवो ब्रह्मणः असौः तनुः एषा मूर्तिः प्रकृतिं न औज्झत् स्वभावं न तत्याज, असौ का तनुः या पितृप्रसूः सन्ध्यालक्षणा । 'सायंसन्ध्या पितृप्रसूः' इत्यमरः । पितॄन् प्रसूते सा पितृप्रसूः । किंभूता तनुः चिरमुज्झितापि चिरात् प्रभृति त्यक्तापि, परं तादृश्येवेत्यर्थः । किं कुर्वती तनुः विकसत्कुसुम्भकुसुमारुणतां दधती प्रफुल्लकुसुम्भपुष्पारक्तत्वं धारयन्ती । ननु सन्ध्या प्रथममेव लौहित्यं दधाति, ततो या हि चिरमुज्झिता तत्कथमारक्तेत्याह—अपरं किंलक्षणा जनतया जनसमूहेन विहिताञ्जलिः कृताञ्जलिः । रक्तपुष्पाऽर्घ्यप्रदानेन समन्तादारक्तेति भावः ॥ १४ ॥

अथ सन्ध्याप्रादुर्भावमाह—

विहिताञ्जलिरिति ॥ जनतया जनसमूहेन । 'ग्रामजन-' इत्यादिना समूहार्थे तल्प्रत्ययः । विहिता-

ञ्जलिः । कृतप्रणामेत्यर्थः । विकसत्कुसुम्भकुसुमवदरुणतां दधती राजसत्वादिति भावः । तदुक्तं 'सर्गाय रक्तं रजसोपबृंहितम्' इति । प्रसूत इति प्रसूर्माता'–'जनयित्री प्रसूर्माता' इत्यमरः । पितॄणां प्रसूः पितृप्रसूः असावियं सन्ध्यारूपिणी आत्मभुवो ब्रह्मणस्तनुर्मूर्तिश्चिरमुज्झिता त्यक्ताऽपि प्रकृतिं स्वभावम् । जगद्वन्द्यत्वादि-निजधर्मामित्यर्थः । नौज्झत् न विससर्ज । उज्झ विसर्गे, लङ् । 'आडजादीनाम्' इत्याडागमः 'आटश्च' इति वृद्धिः । भूतपूर्वोऽपि महाजनपरिग्रहः फलतीति भावः ।

पितामहः पितॄन् सृष्ट्वा मूर्तिं तामुत्ससर्ज ह ।
सा प्रातः सायमागत्य सन्ध्यारूपेण पूज्यते' ॥

इत्यादि भविष्यपुराणमत्र प्रमाणम् । अत्र तनुत्यागरूपकारणसद्भावेऽपि प्रकृतित्यागरूपकार्यानुदया-द्विशेषोक्तिरलङ्कारः । 'तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते' इति लक्षणात् ॥ १९ ॥

**अथ सान्द्रसान्ध्यकिरणाऽरुणितं हरिहेतिहूति मिथुनं पततोः ॥**
**पृथगुत्पपात विरहार्तिदलद्धृदयस्रुताऽसृगनुलिप्तमिव ॥ १९ ॥**

**अथेति ॥ अथानन्तरं पततोर्मिथुनं पक्षिणोर्युगलं पृथगुत्पपात भिन्नमुड्डीनम् । वियोगं प्राप्तमित्यर्थः । किंभूतं मिथुनं हरिहेतिहूति हरेः कृष्णस्य हेतिरायुधं चक्रं तस्य हूतिर्नाम यस्य तत् । चक्रवाकसंज्ञकमित्यर्थः । किंभूतं मिथुनं सान्द्रसान्ध्यकिरणाऽरुणितं बहलसन्ध्या-कालीनमयूखारक्तीकृतम् । पुनः किंभूतं मिथुनम्, उत्प्रेक्ष्यते–विरहार्तिदलद्धृदयस्रुताऽसृग-नुलिप्तमिव वियोगव्यथास्फुटन्मानसनिःसृतरक्तविलेपितमिव, विरहार्त्या वियोगव्यथया दलत् द्विधाभवत् यत् हृदयं मानसं तस्मात् स्रुतं निःसृतं यदसृक् रुधिरं तेनाऽनुलिप्तमिव ॥१९॥**

अथेति ॥ अथ सन्ध्योदयानन्तरं सान्द्रा ये सन्ध्यायां भवाः । 'सान्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इत्यण् प्रत्ययः । तैः किरणैररुणितमरुणीकृतमत एव विरहार्त्या विरहवेदनया दलतो दीर्यमाणात् हृदयात् स्रुतेन क्षरितेनाऽसृजा रुधिरेणानुलिप्तमिव स्थितमित्युत्प्रेक्षा । हरेर्विष्णोर्हेतिरायुधम् । चक्रमित्यर्थः । 'हेतिः शस्त्रे तु नृस्त्रियोः' इति केशवः । हरिहेतेर्हूतिरिव हूतिराह्वा यस्य तत् हरिहेतिहूति । चक्राह्वमित्यर्थः । पततोः पक्षिणोः । 'पतत्रिपत्रिपतगपतत्पत्ररथाऽण्डजाः' इत्यमरः । मिथुनम् । चक्रवाकद्वन्द्वमित्यर्थः । पृथक् भेदे-नोत्पपात उदडीयत ॥ १९ ॥

**निलयः श्रियः सततमेतदिति प्रथितं यदेव जलजन्म तया ॥**
**दिवसात्ययात्तदपि(१) मुक्तमहो ! चपला जनं प्रति न चोद्यमदः ॥१६॥**

**निलय इति ॥ यदेव जलजन्म कमलम् इति प्रथितमित्यमुना प्रकारेण विख्या-तम् । इतीति किं—यत्, एतत् जलजन्म सततं श्रियः निलयः सदैव लक्ष्म्या निवासः । अहो इति आश्चर्ये, तया लक्ष्म्या तदपि मुक्तं कमलमपि त्यक्तं, कस्मात् दिवसात्ययात् दिनाभावात् । एतेन श्रीः चपला एव, अद एतत् जनं प्रति च न उद्यं न वाच्यम् । अहो इत्याश्चर्ये । जलजमपि त्यक्तं दिनाभावात् , श्रीः चपला नैव भवति ॥ १६ ॥**

निलय इति ॥ यदेव जले जन्म यस्य तज्जलजन्म जलजमेतदेव सततं श्रियो निलय आलय इति प्रथितं प्रसिद्धम् । 'निकाय्यनिलयालयाः' इत्यमरः । तदपि । नित्यवासभूतमपीत्यर्थः । तया श्रिया दिव-साऽत्यये सायंकाले मुक्तम् । अहो ! देवानामपि कृतघ्नत्वं, यदापदि महोपकारिणस्त्याग इत्याश्चर्यम् । अथ वा चपला चापलवती स्त्री, कमला च । 'चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च' इति विश्वः । सैव जन-श्चपलाजनः । 'जातेश्च' इति 'संज्ञापूरण्योश्च' इति चोभयत्रापि पुंवद्भावप्रतिषेधः । तं प्रति । तस्मिन्नित्यर्थः ।

(१) ०त्यये तदपि । मल्लिनाथीयव्याख्यापुस्तकेषु प्रचलितो 'दिवसात्यया'दिति पञ्चम्यन्तः पाठो-ऽर्थानुसन्धानेन प्रकृतार्थप्रतिकूलः प्रतिभाति ।

अद इदं कृतघ्नत्वं चोद्यं चोदनीयं कथमित्याक्षेप्यं न । चपलत्वाश्चर्यमेतदिति भावः । श्लेषमूलातिशयो-क्त्यनुप्राणितोऽयमर्थान्तरन्यासः ॥ १६ ॥

**दिवसोऽनुमित्रमगमद्विलयं किमिवा(१)ऽऽस्यते बत ! मयाऽबलया ॥**
**रुचिभर्तुरस्य विरहाधिगमादिति सन्ध्ययाऽपि सपदि न्यशमि(२) ॥१७॥**

**दिवस इति ॥ सन्ध्ययाऽपि सपदि शीघ्रम् इति हेतोः न्यशमि शान्तम् । इतीति कस्मात्–अस्य रुचिभर्तुः श्रीसूर्यस्य विरहाधिगमात् वियोगलाभात् दिवसः वासरः अनुमित्रं मित्रं श्रीसूर्यमनु पश्चात् विलयं नाशमगमत् । दिवसः सूर्येण सह क्षयमगच्छत् । बत इति खेदे, मया अबलया स्त्रिया किमिव आस्यते कथमिव स्थीयते । 'मित्र आदित्य उच्यते' । दिवसे मित्रमनुगते यद्यहं तिष्ठामि तदिदमनुचितमेवेति विचार्य सन्ध्ययापि क्षीणमिति भावः॥**

**दिवस इति** ॥ दिवसो वासरः । पुमानिति भावः । मित्रं सूर्यं, सुहृदं चाऽनु । मित्रेण सहेत्यर्थः । 'तृतीयार्थे' इत्यनोः कर्मप्रवचनीयत्वाद् द्वितीया । 'मित्रं सुहृदि मित्रोऽर्के' इति विश्वः । विलयं नाशमगमद्गतः । गमेर्लुङि 'पुषादि–' इति च्लेरङादेशः । अबलया स्त्रिया मया रुचिभर्तुस्तेजोनिधेः प्रेमास्पदपतेश्चाऽस्य सूर्यस्य विरहाधिगमात् । ल्यब्लोपे पञ्चमी, विरहज्ञानं प्राप्येत्यर्थः । इहाऽस्मिन्लोके किमास्यते किमर्थं स्थीयते । आसेर्भावे लिट् । बतेति खेदे । इतीत्थमालोच्येवेत्यर्थः । अत एव उत्प्रेक्षा । सन्ध्ययाऽपि सपदि न्यगामि, न्यपागामीत्यर्थः । गमेः स्वार्थण्यन्ताद्भावे लुङ् मित्त्वात् ह्रस्वः ।

'अण्यन्तादुपधावृद्धिर्नाऽयं स्याद्धेतुमण्णिचि ।
तस्मात्स्वार्थे णिजुत्पाद्यो मितां ह्रस्वो यतो भवेत्' ॥

विगमशब्दात् 'तत्करोति–' इति ण्यन्ताल्लुङिति केचित् ॥ १७ ॥

**पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाऽम्बुनिधिम्(३) ॥**
**अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे ॥ १८ ॥**

**पतिते इति ॥ अथानन्तरं तमांसि अन्धकाराणि जगद् विश्वं परितः सर्वासु दिक्षु परितस्तरिरे आच्छादयामासुः । किंलक्षणानि तमांसि नागयूथमलिनानि गजवृन्दमलीमसानि, क्व सति पतङ्गः श्रीरविरेव मृगराट् सिंहः तस्मिन् पतङ्गमृगराजि (४) । किंभूते सूर्यसिंहे, उत्प्रेक्ष्यते—निजप्रतिबिम्बरोषिते इव निजप्रतिबिम्बाय रोषितः तस्मिन् स्वकीयप्रतिबिम्बकुपिते इव । यथा सिंहे स्वप्रतिबिम्बकुपिते क्वापि जलाधारे पतिते सति मलिनानि कृष्णानि नागयूथानि जगत्समन्तादाच्छादयन्तीत्युक्तिलेशः ॥ १८ ॥**

अथाऽन्धकारं वर्णयति—

**पतिते इति** ॥ पतङ्गोऽर्क एव मृगराट् सिंह इति रूपकसमासः । तस्मिन्निजेन प्रतिबिम्बेन रोषिते कोपित इवेत्युत्प्रेक्षा । स्वप्रतिबिम्बे प्रतिसिंहभ्रमादिति भावः । अत एवाम्बुनिधौ पतिते सति । तज्जिघांसयेति भावः । भावलक्षणसप्तमी । अथाऽस्मु पतनाऽनन्तरं नागयूथानि करिकुलानीव मलिनानि श्यामानि । 'उपमानानि सामान्यवचनैः' इति समासः । तमांसि जगल्लोकं परितः परितस्तरिरे आच्छादयामासुः । स्तृणातेः कर्तरि लिट् । ऋतश्च संयोगादेर्गुणः । अत्र यद्यपि नागयूथमलिनानीत्युक्त्याऽनुशासनासिद्धोपमाऽनुसारात्पतङ्गमृगराजीत्यत्राप्युपमितसमासाश्रयणेनोपमैवोचिता, तथापि तदुत्प्रेक्षायाः पतङ्गेऽसम्भवात् सिंहे सम्भवाच्च रूपकमेव युक्तम् । तथा च रूपकानुप्राणितोत्प्रेक्षेयमुपमेति च सङ्करः । तयोत्प्रेक्षया भ्रान्तिमदुपमया रूपकं च व्यजत इत्यलङ्कारेणालङ्कारध्वनिरिति सङ्क्षेपः ॥ १८ ॥

---

(१) किमिहा० । (२) न्यगामि । (३) ०म्बुनिधौ । (४) अत्र स्वल्पोऽशस्त्रुटित इति प्रतीयते ।

युग्मम्—

व्यसरन्नु भूधरगुहान्तरतः पटलं बहिर्बहलपङ्करुचि ॥
दिवसावसानपटुनस्तमसो बहिरेत्य वाऽधिक(१)मभक्त गुहाः ॥१९॥
किमलम्बताऽम्बरविलग्नमधः किमवर्धतोर्ध्वमवनीतलतः ॥
प्रससार(२) तिर्यगथ दिग्भ्य इति प्रचुरीभवन्न निरधारि तमः ॥ २० ॥

व्यसरदित्यादि ॥ किमलम्बतेति ॥ अथानन्तरं तमः अन्धकारम् इति पूर्वोक्तप्रकारेण प्रचुरीभवत् सत् बहुलीभवत् सत् न निरधारि न निर्धारितं न निर्णीतम्, अर्थाज्जनेन । इतीति किम्—इदं तमः अन्धकारं किम् अम्बरविलग्नं सत् नभःश्रितं सत् अधः पृथिव्यामलम्बत स्रस्तं, किम् अवनीतलतः महीतलादूर्ध्वमवर्धत वृद्धिं प्राप, अथ किं दिग्भ्यः सर्वाभ्यः आशाभ्यः तिर्यक् वक्रं प्रससार प्रसृतम् । व्यसरदिति ॥ नु इति वितर्के, इदं तमसः पटलमन्धकारनिकुरम्बं भूधरगुहान्तरतः पर्वतदरीमध्यात् बहिर्बाह्ये व्यसरत विससार । वा अथ वा बहिरेत्य बाह्यप्रदेशादागत्य अधिकं यथा भवति तथा गुहाः अभक्त बिलानि सिषेवे गुहान्तः प्रविष्टम् । किंभूतस्य तमसः दिवसावसानपटुनः दिनाभावसमर्थस्य ॥ १९-२० ॥

व्यसरदिति ॥ बहलपङ्करुचि सान्द्रकर्दमच्छवि दिवसावसाने दिनान्ते पटुनः समर्थस्य तमसः पटलं भूधरगुहानामन्तरतोऽभ्यन्तरादेत्यागत्य बहिर्गवाक्षप्रदेशे व्यसरन्नु विस्तृतं वा । बहिर्बाह्यदेशादेत्य गुहा अधिकं भृशमभक्त च भजते स्म । किं प्रविष्टं वेत्यर्थः । भजतेर्लुङि तङ् 'झलो झलि' इति सकारलोपः । अत्र व्यापकत्वसादृश्यात्तमसोऽन्तर्बहिरपादानकत्वसन्देहात्सन्देहालङ्कारः ॥ १९ ॥

किमलम्बतेति ॥ प्रचुरीभवद्बहुलीभवत्तमः कर्तृ, किमम्बरविलग्नमाकाशस्थं सत् अधो भूतलं प्रति अलम्बताऽस्रंसत किमिव, अवनीतलतो भूतलादूर्ध्वमुपरिष्टादवर्धत किम् । अथ दिग्भ्यस्तिर्यग् विससार विस्तृतमिति न निरधारि । अधोलम्बनादीनामन्यतमं नावधारितमित्यर्थः । धारयतेः कर्मणि लुङ् । अत्रापि पूर्ववत्सन्देहालङ्कारः ॥ २० ॥

स्थगिताम्बरक्षितितले परितस्तिमिरे जनस्य दृशमन्धयति ॥
दधिरे रसाञ्जनमपूर्वमतः प्रियवेश्मवर्त्म सुदृशो ददृशुः ॥ २१ ॥

स्थगिताम्बरेति ॥ सुदृशो नायिकाः अतः कारणात् अपूर्वं रसाञ्जनं प्रेमाञ्जनं दधिरे, यतः कारणात् प्रियवेश्मवर्त्म भर्तृवसतिमार्गं ददृशुः । क्व सति तिमिरेऽन्धकारे जनस्य लोकस्य दृशं दृष्टिमन्धयति सति अन्धीकुर्वति सति, कथं परितः समन्तात्, किंभूते तिमिरे स्थगिताम्बरक्षितितले आच्छादिताकाशमहीतले । यदि नार्यो निखिलेऽपि लोके अन्धकारेण संवृते सति भर्तृमन्दिरस्य पन्थानं पश्यन्ति स्म । अत एव नव्यमपूर्वं किमपि रसाञ्जनं दधिरे इति भावः । अन्यस्यापि अञ्जनविशेषं रसाञ्जनं बिभ्रतो दृशः पटुतरा भवन्तीत्यर्थः । स्त्रीपक्षे रसाञ्जनं प्रेमाञ्जनम् । 'कर्परीदार्विकाक्काथोद्भवं तुत्थं रसाञ्जन'मित्यमरः ॥ २१ ॥

स्थगिताम्बरेति ॥ स्थगिते तिरोहिते अम्बरक्षितितले येन तस्मिंस्तिमिरे परितो जनस्य दृशमन्धयति अन्धां कुर्वति सति सुदृशः स्त्रियोऽपूर्वं नूतनं रसाञ्जनं रसं रागमेवाञ्जनं सिद्धाञ्जनं च दधिरे दधुः, अतो हेतोः प्रियवेश्मवर्त्म ददृशुः । अत्र रसाञ्जनवाक्यार्थेन प्रियवेश्मदर्शनसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । तेन रसः सिद्धाञ्जनमिवेत्युपमाध्वननादलङ्कारेणाऽलङ्कारध्वनिः ॥ २१ ॥

---

(१) वाऽधिक । (२) विससार ।

**अवधार्य कार्यगुरुतामभवन्न भयाय सान्द्रतमसन्तमसम् ॥**
**सुतनाः स्तनौ च दयितोपगमे तनुरोमराजिपथवेपथवे ॥ २२ ॥**

**अवधार्येति ॥** सान्द्रतमसन्तमसं घनतमतमःपटलं सुतनोर्नार्याः भयाय साध्वसाय नाभवत् ना बभूव । किं कृत्वा कार्यगुरुतामवधार्य प्रयोजनमहत्त्वं निश्चित्य, अपरं स्तनौ सुतनोर्नायिकायाः दयितोपगमे प्रियप्राप्तौ तनुरोमराजिपथवेपथवे तनुः सूक्ष्मा या रोमराजिः तनूरुहपङ्क्तिः तस्याः पन्थाः तनुरोमराजिपथः मध्यप्रदेशः तस्य वेपथुः कम्पः तस्मै न अभूताम्। कुचौ मध्यदेशभङ्गाय न जातावित्यर्थः। तनुपदार्थस्योपरि भारवत्त्वेन शीघ्रगमनवेगेन भङ्गसम्भवादिति भावः । 'विष्वक् तमः सन्तमसम्' इत्यमरः ॥ २२ ॥

**अवधार्येति ॥** सान्द्रतमं यत्सन्तमसं व्यापकं तमः । 'विष्वक्सन्तमसम्-' इत्यमरः । 'अवसमन्धेभ्यस्तमसः' इति समासान्तोऽच् प्रत्ययः । तत्कर्तृ सुतनोः शुभाङ्ग्या दयितोपगमे प्रियाभिसरणे कार्यगुरुतां सम्भोगकार्यस्यावश्यकत्वमवधार्य निश्चित्य भयाय नाभवत् । स्तनौ कुचौ च तनुः कृशो यो रोमराजेः पन्थाः रोमराजिपथो मध्यभागस्तस्य वेपथवे कम्पाय । 'ट्वितोऽथुच्' इत्यथुच् प्रत्ययः । नाऽभवतामिति विपरिणामेनाऽनुषङ्गः । कार्यासक्तस्य तत्रापि कामुकस्य कुतो भयं क्लेशगणना चेति भावः । अत्र सन्तमसकुचयोः कामनिमित्ते भयकम्पाऽनुदये कार्यगौरवावधारणहेतुकत्वोत्प्रेक्षेयमनेन व्यज्यते ॥ २२ ॥

**ददृशेऽथ(१) भास्कररुचाऽह्नि न यः स तमीं तमोभिरभिगम्य तताम् ॥**
**द्युतिमग्रहीद्ग्रहगणो लघवः प्रकटीभवन्ति मलिनाश्रयतः ॥ २३ ॥**

**ददृशे इति ॥** अथानन्तरं यो ग्रहगणः भौमादिग्रहचक्रम् अह्नि दिवसे भास्कररुचा सूर्यकान्त्या न ददृशे न दृष्टः, स ग्रहगणः ततां तमीं शर्वरीमधिगम्य प्राप्य तमोभिरन्धकारैर्द्युतिमग्रहीत् कान्तिं जग्राह । युक्तं चैतत्, लघवः सूक्ष्माः श्लेषे तुच्छाश्च मलिनाश्रयतः प्रकटीभवन्ति मलिनानामाश्रयेण प्रत्यक्षा जायन्ते । अन्येऽपि लघवः तुच्छाः मलिनानां पापिनामाश्रयतः प्रकटीभवन्ति ॥ २३ ॥

**ददृशे इति ॥** यो ग्रहगणोऽहनि सवितुस्त्विषा न ददृशे नेक्षितः स ग्रहगणस्तमोभिस्ततां व्यानाताम्यन्त्यस्यामिति तमीं रात्रिम् । 'रजनी यामिनी तमी' इत्यमरः । अधिगम्य प्राप्य द्युतिमग्रहीत् । ग्रहेर्लुङि 'ग्रहोऽलिटि' इति इटो दीर्घत्वेऽपि स्थानिवत्त्वेन इट्त्वात्सिचो लोपे सवर्णदीर्घः । तथा हि—लघवोऽल्पाः । 'त्रिष्विष्टेऽल्पे लघुः' इत्यमरः । मलिनाश्रयतो निकृष्टाश्रयणात्प्रकटीभवन्ति । अर्थान्तरन्यासः ॥ २३ ॥

**अनुलेपनानि कुसुमान्यबलाः कृतमन्यवः पतिषु दीपदशाः(२) ॥**
**समयेन तेन सुचिरं शयितप्रतिबोधितस्मर(३)मबोधिषत ॥ २४ ॥**

**अनुलेपनानीति ॥** तेन समयेन तस्मिन्नवसरे अबलाः अङ्गनाः एतान् पदार्थान् अबोधिषत प्रकटीचक्रुः । तावत् एतान् कान् कान्–अनुलेपनानि चन्दनानि, अबोधिषतेति सर्वत्र युज्यते । अपरं कुसुमानि सुगन्धपुष्पाणि, अपरं पथिषु पदवीषु दीपदशाः प्रदीपशिखाः । किंभूता अबलाः कृतमन्यवः विहितकोपाः, कथं यथा भवति सुचिरं शयितप्रतिबोधितस्मरं यथा भवति सुचिरं शयितः सन् प्रतिबोधितः जागरितः स्मरः कामो यत्र यस्यां क्रियायां तथा, चिरकालसुप्ताऽनुप्रतिबुद्धकन्दर्पं यथा भवतीति । यद्वा तेन समयेन रात्रिलक्षणेन कर्त्रा एते अनुलेपनादयः पदार्थाः अबोधिषत बोधिता इति ॥ २४ ॥

---

( १ ) ददृशेऽपि । ( २ ) दीपशिखाः । ( ३ ) चिरसुप्तमनोभवबोधनं क्रम० ।

अनुलेपनानीति ॥ तेन समयेन प्रदोषकालेन कर्त्रा अनुलेपनानि कुङ्कुमचन्दनादीनि कुसुमानि माल्यादीनि तथा पतिषु कृतमन्यवः कृतकोपा अबलाः स्त्रियः तथा दीपशिखाः दीपज्वालाश्चेत्येतानि सर्वाणि चिरं सुप्तस्य पूर्वं स्तब्धस्य मनोभवस्य कामस्य बोधनमुद्दीपनं यस्मिन्कर्मणि तद्यथा तथा । तत्पूर्वकामित्यर्थः। इतरथा अनुलेपनादिबोधकस्य वैफल्यासम्भवाच्चेति भावः । समं सहैवाऽबोधिषत बोधितानि । बुध्यते-र्ण्यन्तात्कर्मणि लुङ् । अत्र गन्धमाल्यसम्पादनस्त्रीमनःप्रसाददीपशिखोत्पादनानामबोधिषतेत्येकेन श्लिष्ट-शब्देनाभिधानात् श्लेषमूलाभेदाध्यवसायरूपातिशयोक्तिरेका । तथा सुप्तमनोभवबोधनमिति क्रियाविशेषण-सामर्थ्यात्सममिति यौगपद्याभिधानाच्च मनोभवबोधनया कार्यकारणभूतयोस्तद्विपर्ययरूपाऽपरा । तदुभयापेक्षया गन्धमाल्यादीनां प्रस्तुतानामवबोधनरूपैकधर्मसम्बन्धात्तुल्ययोगिताभेदश्चेति सङ्करः ॥ २४ ॥

**वसुधाऽन्तनिःसृतमिवाहिपतेः पटलं फणामणिसहस्ररुचाम् ॥**

**स्फुरदंशुजालमथ शीतरुचः ककुभं समस्कुरुत माघवतीम्(१) ॥ २५ ॥**

**वसुधान्तेति ॥ अथानन्तरं शीतरुचः चन्द्रमसः अंशुजालं किरणपटलं माघवतीं ककुभमैन्द्रीं दिशं प्राचीमाशां समस्कुरुत अलञ्चकार । मघवतः इयं माघवती ताम् । किंभूत-मंशुजालं स्फुरत् उल्लसत् देदीप्यमानम् । पुनः किंभूतम्, उत्प्रेक्ष्यते—अहिपतेः शेषनाग-स्य फणामणिसहस्ररुचां दर्वीरत्नसहस्रदीप्तीनां पटलमिव निकर इव । किंभूतं फणामणिसहस्र-रुचां पटलं वसुधान्तनिःसृतं पृथिवीतलप्रसृतम् ॥ २५ ॥**

अथ चन्द्रोदयवर्णनं प्रारभते—

वसुधान्तेति ॥ अथ मनःप्रसादानन्तरं वसुधान्तेन भूप्रान्तेन निःसृतं बहिर्निर्गतमहिपतेः शेषस्य फणा-मणिसहस्राणां रुचां भासां पटलं स्तोम इवेत्युत्प्रेक्षा । शीतरुचश्चन्द्रस्य सम्बन्धि स्फुरदुल्लसदंशुजालं मघोन इमां माघवतीं माहेन्द्रीम् । 'मघवा बहुलम्' इति विकल्पात्त्र आदेशः । ककुभं दिशं समस्कुरुताऽभूष-यत् । प्राच्यां दिशि चन्द्रकिरणजालमलक्ष्यतेत्यर्थः । 'सम्पर्युपेभ्यः करोतौ भूषणे' इति सम्पूर्वस्य सुडागमः, 'अड्भ्यासव्यवायेऽपि' इति नियमात् ॥ २५ ॥

**विशदप्रभापरिगतं विबभावुदयाचलव्यवहितेन्दुवपुः ॥**

**मुखमप्रकाशदशनं शनकैः सविलासहासमिव शक्रदिशः ॥ २६ ॥**

**विशदप्रभेति ॥ उदयाचलव्यवहितेन्दुवपुः उदयगिरिस्थगितेन्दुशरीरं विबभौ शुशुभे । किंभूतं वपुः विशदप्रभापरिगतं निर्मलरुचिव्याप्तम् । अपरं किंलक्षणमिन्दुवपुः, उत्प्रेक्ष्यते— शक्रदिशः इन्द्रकाष्ठायाः पूर्वस्याः मुखमिव वदनमिव । किंभूतं मुखं सविलासहासं लीला-हास्यसंयुक्तं सलीलस्मेरं, कथं शनकैर्मन्दंमन्दम्, अपरं किंभूतम् अप्रकाशदशनमप्रकटित-दन्तम् । इन्दुवपुषो मुखमुपमानं, द्युतीनां दन्ता उपमानम् ॥ २६ ॥**

विशदप्रभेति ॥ विशदप्रभापरिगतं शुभ्रकान्तिव्याप्तम् । उदय इति अचलः । 'उदयः पूर्वपर्वतः' इत्यमरः । तेन व्यवहितमिन्दुवपुरिन्दुमण्डलं यस्मिन् शक्रदिशः प्राच्या मुखमग्रभागः वक्त्रं च प्रतीयते तदभेदेनोत्प्रेक्ष्यते । अप्रकाशदशनमलक्ष्यदन्तं सविलासहासं सविलासस्मितमिव शनकैर्मन्दं विबभौ ॥ २६ ॥

**कलया तुषारकिरणस्य पुरः परिमन्दभिन्नतिमिरौघजटम् ॥**

**क्षणमभ्यपद्यत जनैर्न मृषा गगनं गणाधिपतिमूर्तिरिति ॥ २७ ॥**

**कलयेति ॥ क्षणं क्षणमात्रं जनैर्लोकैः इति न मृषा इति सत्यमभ्यपद्यत एतत्सत्यं मेने । इतीति किं—यत्, गगनमाकाशं गणाधिपतिमूर्तिः महादेवमूर्तिः । किंभूतं गगनं तुषारकिरणस्य शीतमयूखस्य चन्द्रस्य कलया प्रभया पुरोऽग्रे परिमन्दभिन्नतिमिरौघजटं**

---

( १ ) माघवनीम् ।

शनैर्विदीर्णं ध्वान्तवृन्दमेव जटा केसरो यस्य तत् । तमसो जटासादृश्याद् रुद्ररूपमित्यर्थः । 'कला तु षोडशो भागः', 'कला छवौ षोडशांशे' ॥ २७ ॥

कलयेति ॥ पुरः प्राच्यामग्रभागे च तुषारकिरणस्येन्दोः कलया किरणेन अन्यत्रोपलाक्षितं परिमन्दमल्पं भिन्ना विदलितास्तिमिरौघा एव जटा यस्य तत् गगनं न मृषा सत्यम् । गणाधिपतेः प्रमथपतेरीश्वरस्य । 'गणाः प्रथमसंख्यौघाः' इति वैजयन्ती । मूर्तिरिति जनैः क्षणमभ्यपद्यत । गगनमष्टानां शिवमूर्तीनामन्यतममिति यत्तत्सत्यमाभिपन्नामित्यर्थः । कलामात्रोदितश्चन्द्र इति फलितोऽर्थः । रूपकालङ्कारः॥२७॥

**नवचन्द्रिकाकुसुमकीर्णतमःकबरीभृतो मलयजार्द्रमिव ॥**

**ददृशे ललाटतटहारि हरेर्हरितो मुखस्य हिम(१)रश्मिदलम् ॥ २८ ॥**

**नवचन्द्रिकेति ॥ हिमरश्मिदलं ददृशे चन्द्रार्धबिम्बं दृष्टम् । किंभूतं हरेरिन्द्रस्य हरितो दिशो मुखस्य ललाटतटहारि ललाटपट्टशोभि, किंभूतस्य मुखस्य नवचन्द्रिकाकुसुमकीर्णतमःकबरीभृतः नूतनताराव्याप्तान्धकारवेणीं धारयतः । किंभूतं हिमरश्मिदलम्, उत्प्रेक्ष्यते—मलयजार्द्रमिव चन्दनाऽऽलिप्तमिव। अन्यस्या नार्या मुखस्य वेणीदण्डस्य पुष्पव्याप्तस्य ललाटतटशोभिचन्दनावलिप्तं चन्द्रार्धाकारं तिलकं शोभते इत्यर्थः। 'चन्द्रिका कौमुदी ज्योत्स्ना' ॥ २८॥**

नवचान्द्रिकेति ।। नवचान्द्रिकाभिरेव कुसुमैः कीर्णं तम एव कबरी केशपाशः । 'जानपद–' इत्यादिना ङीप् । तां बिभर्तीति तद्भृतः हरेः शक्रस्य हरितो दिशो मुखेऽग्रभाग एव मुखं वक्त्रमिति श्लिष्टरूपकम् । तस्यैव ललाटतटवद्धारि मनोहरं हिमरश्मिदलमिन्दुखण्डं मलयजेन चन्दनेनाऽऽर्द्रमिव ददृशे। धावल्यादिति भावः । अत्र नवचान्द्रिकाकुसुमेत्याद्येकदेशाविवर्तिरूपकमहिम्ना हरिवधूत्वप्रतीतौ तत्सहकृतश्लेषाऽवगतवक्त्राभेदाध्यवासितमुखसम्बन्धप्रसादासादितललाटतटोपमोज्जीवनेनेन्दुदलस्याऽनुपात्तनिजधावल्यगुणनिमित्तमलयजार्द्रत्वगुणस्वरूपोत्प्रेक्षेति मल्लिनाथः ॥ २८ ॥

**प्रथमं कलाऽभवदथाऽर्धमथो हिमदीधितिर्महदभूदुदितः ॥**

**दधति ध्रुवं क्रमत(२) एव न तु प्रथितौजसोऽपि सहसोपचयम् ॥ २९ ॥**

**प्रथममिति ॥ हिमदीधितिश्चन्द्रः प्रथमं पूर्वं कलाऽभवत् कलामात्रो बभूव, अथ पश्चात् अर्धं खण्डमभूत्, पुनरथो पश्चादुदितः सन्नुदयं प्राप्तः सन् महदभूत् सम्पूर्णबिम्बं बभूव। ध्रुवं निश्चितं, तु पुनः, प्रथितौजसोऽपि विख्याततेजसोऽपि उत्तमा अपि सहसा उपचयं न दधति सहसा वृद्धिं न यान्ति, तु पुनः क्रमत एवाऽनुक्रमादेव ॥ २९ ॥**

प्रथममिति ॥ हिमदीधितिश्चन्द्रः प्रथमं कला कलामात्रमभवत् । 'कला तु षोडशो भागः' इत्यमरः । अथार्धमात्रमभवत् । अथो अनन्तरम् 'अथो अथ' इत्यमरः। उदितः साकल्यादुत्थितः सन् अमहान् महान् सम्पद्यमानोऽभून्महदभूत् । अभूततद्भावे च्विः । हलन्तत्वान्न कार्यान्तरप्राप्तिः । तथा हि—द्युतिशालिनः तेजिष्ठा अपि क्रमशः क्रमेणैवोपचयं वृद्धिं दधाति, सहसा झटिति तु न दधाति ध्रुवम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २९ ॥

**उदमज्जि कैटभजितः शयनादपनिद्रपाण्डुरसरोजरुचा ॥**

**प्रथमप्रबुद्धनदराजसुतावदनेन्दुनेव तुहिनद्युतिना ॥ ३० ॥**

**उदमज्जीति ॥ अपनिद्रपाण्डुरसरोजरुचा विकस्वरश्वेतकमलभासा तुहिनद्युतिना चन्द्रेण कैटभजितः हरेः शयनात् शयनीयात् समुद्रादुदमज्जि उन्मग्नम् । किंभूतेन चन्द्रेण उत्प्रेक्ष्यते—प्रथमप्रबुद्धनदराजसुतावदनेन्दुनेव पूर्वविनिद्रोदधितनयामुखचन्द्रेणेव लक्ष्मीमुखचन्द्रेणेव । तावद्भार्या भर्तुः पूर्वं प्रबोद्धव्यं, भर्तुः पश्चात्स्वपितव्यमिति स्थितिः ॥ ३० ॥**

---

( १ ) मुखं तुहिन । ( २ ) क्रमश······द्युतिशालिनो० ।

उदमज्जीति ।। अपनिद्रपाण्डुरसरोजरुचा विकसितसितपुण्डरीकाश्रिया तुहिनद्युतिना चन्द्रेण प्रथमं हरेः पूर्वमेव प्रबुद्धायाः । अन्यथा तन्मुखं न दृश्येतेति भावः । नदराजसुतायाः सिन्धुकन्यायाः श्रियो वदनेन्दुनेवेत्युत्प्रेक्षा । कैटभजितो हरेः शयनात् । समुद्रादित्यर्थः । उक्तोत्प्रेक्षासम्भावनार्थमित्थं निर्देशः । उदमज्जि उन्मग्नम् । उत्थितमित्यर्थः ॥ ३० ॥

**अथ लक्ष्मणाऽनुगतकान्तवपुर्जलधिं व्यतीत्य(१) शशिदाशरथिः ॥**
**परिवारितः परित ऋक्षगणैस्तिमिरौघराक्षसबलं(२) बिभिदे ॥ ३१ ॥**

**अथेति ॥ अथानन्तरं शशिदाशरथिः शशी एव दाशरथिः रामः चन्द्ररामः तिमिरौघराक्षसबलमन्धकारसमूहराक्षससैन्यं बिभिदे विदीर्णवान् । किं कृत्वा जलधिं व्यतीत्य समुद्रमतिक्रम्य, किंभूतः शशिरामः लक्ष्मणाऽनुगतकान्तवपुः लाञ्छनेन अभिगतरम्यबिम्बः, पुनः किंभूतः शशिरामः परित सर्वासु दिक्षु ऋष्यगणैः नक्षत्रवृन्दैः परिवारितः वेष्टितः । श्रीरामोऽप्येवंविधः—नीरनिधिमवतीर्य निखिलराक्षसकुलं बिभिदे । लक्ष्मणेन भ्रात्रा अनुप्राप्तरम्यशरीरः, ऋष्यगणैर्भल्लूकसमूहैः सुग्रीवादिभिर्वानरैः परिवारितश्च । 'चिह्नं लक्ष्म च लक्षणम्', 'ऋक्षाऽच्छभल्लभल्लूकाः' ॥ ३१ ॥**

अथेति ॥ अथोदयानन्तरं लक्ष्मणा लक्ष्मणेन सौमित्रिणा चाऽनुगतमनुसृतं कान्तं वपुर्यस्य सः । लक्ष्मणानुगतकान्तवपुरिति शब्दश्लेषः, वस्तुतः शब्दभेदेनार्थद्वयाभावेऽपि जतुकाष्ठवदेकशब्दप्रतीतेः । परितः समन्तात् ऋक्षगणैर्नक्षत्रगणैः जाम्बवदादिभल्लूकसमूहैश्चेत्यर्थश्लेषः, एकनालावलम्बिफलद्वयवदखण्डैकशब्दादर्थद्वयप्रतीतेः । 'नक्षत्रमृक्षं भं तारा' इति, 'ऋक्षाऽच्छभल्लभल्लूका' इति चामरः । परिवारितः शश्येव दाशरथिर्दशरथपुत्रो रामः । अत इञ् । जलधिं विलङ्घ्य तिमिरौघ एव राक्षसकुलं तत् बिभिदे विभेदयामास । भिदेः कर्तरि लिट् । श्लेषसङ्कीर्णसमस्तवस्तुवर्तिसावयवरूपकालङ्कारः ॥ ३१ ॥

**उपजीवति स्म सततं दधतः परिमुग्धतां वणिगिवोडुपतेः ॥**
**घनवीथिवीथिमवतीर्णवतो निधिरम्भसामुपचयाय कलाः ॥ ३२ ॥**

**उपजीवति स्मेति ॥ अम्भसां निधिः समुद्रः उडुपतेः चन्द्रस्य कला ज्योत्स्नाः उपजीवति स्म पिबति स्म । कस्मै उपचयाय वृद्धिप्राप्तये, किंभूतस्योडुपतेः घनवीथिवीथिमवतीर्णवतः घनवीथी मेघमार्गः आकाशः सा एव वीथिः मार्गस्तं मेघमालामार्गं प्राप्तवतः । अवततारेति अवतीर्णवान् तस्य । अपरं किंभूतस्योडुपतेः सततमनारतं परिमुग्धतां दधतः मनोज्ञत्वं धारयतः, क इव वणिगिव । यथा वणिग् नैगमः वीथिं हट्टमार्गमवतीर्णस्य कस्यचिन्मुग्धस्याऽज्ञानस्य वृद्धये कला द्रव्याणि उपजीवति गृह्णाति ॥ ३२ ॥**

उपजीवति स्मेति ।। अम्भसां निधिः समुद्रो वणिगिव सततं परिमुग्धतां सौन्दर्यम् , अन्यत्र मौढ्यम् । व्यवहाराऽनभिज्ञतामिति यावत् । 'मुग्धः सुन्दरमूढयोः' इति विश्वः। दधतो दधानस्य घनानां वीथिर्घनवीथिचिरन्तारिक्षं सा वीथिः पण्यवीथिरिवेत्युपमितसमासः । तामवतीर्णवतः प्रविष्टवतः उडुपतेर्नक्षत्रनाथस्य कस्यचिद्वानिकवणिजश्च कलाः षोडशांशान् मूलधनवृद्धीश्च ।

'कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके ।
षोडशांशेऽपि चन्द्रस्य-'

इति विश्वः । उपचयाय स्वाऽम्बुवृद्धये समृद्धये चोपजीवति स्म सेवते स्म, अन्यत्र लभते स्मेत्यर्थः । यथा क्रियादिकुशलो ह्यकुशलान्महान्तं लाभमाप्नोति तद्वदिति भावः । श्लेषसङ्कीर्णेयमुपमा । उपमासङ्कीर्णः श्लेष इत्यन्ये ॥ ३२ ॥

---

( १ ) विलङ्घ्य । ( २ ) कुलं ।

**रजनीमवाप्य रुचमाप शशी सपदि व्यभूषयदसावपि ताम् ॥**
**अविलम्बितक्रममहो ! महतामितरेतरोपकृतिमच्चरितम् ॥ ३३ ॥**

**रजनीमिति ॥** शशी चन्द्रः रजनीमवाप्य प्राप्य रुचमाप कान्तिं प्राप, असावपि चन्द्रोऽपि तां रात्रिं सपदि व्यभूषयत् अलञ्चक्रे । अहो इत्याश्चर्ये, महतामुत्तमानां चरितं चरित्रम् अविलम्बितक्रमं तत्क्षणम् इतरेतरोपकृतिमद्भवति परस्परोपकारकरणयुक्तं स्यात् । सद्य एव फलति, न तु बिलम्बेन ॥ ३३ ॥

**रजनीमिति ॥** शशी रजनीमवाप्य रुचिं शोभामाप । असौ शश्यपि तां रजनीं सपदि व्यभूषयत् । महतां सतां चरितमवलम्बितक्रमं यथा तथा इतरेतरोपकृतिमत् अन्योन्योपकारवत् अहो ! इत्याविलम्बादाश्चर्यम् । अत्र रजनीशशिनोर्मिथःशोभाकरत्वादन्योन्यालङ्कारः । 'तदन्योन्यं मिथो यत्रोत्पाद्योत्पादकता भवेत्' इति लक्षणात् । तत्समर्थकश्चाऽयमर्थान्तरन्यास इत्यङ्गाङ्गिभावेन सङ्करः ॥ ३३ ॥

**दिवसं भृशोष्णरुचिपादहतां रुदतीमिवाऽनवरताऽलिरुतैः ॥**
**मुहुरामृशन् मृगधरोऽग्रकरैरुदशिश्वसत्कुमुदिनीवनिताम् ॥ ३४ ॥**

**दिवसमिति ॥** मृगधरश्चन्द्रः कुमुदिनीवनितां कैरविणीभार्याम् उदशिश्वसत् आश्वासयामास । किं कुर्वन् मुहुर्वारंवारमग्रकरैः किरणप्रान्तैरामृशन् स्पृशन्, किंभूतां कुमुदिनीवनितां दिवसं भृशोष्णरुचिपादहतां समग्रं दिनं भृशमत्यर्थम् उष्णरुचेः सूर्यस्य पादैः किरणैः आहता उपद्रुता ताम् । अपरं किंभूताम्, उत्प्रेक्ष्यते—अनवरताऽलिरुतैः निरन्तरभ्रमरशब्दैः रुदतीमिव रोदमानामिव(?) । अन्योऽपि पुमान् केनचित्पादाहतां रुदतीं नारीं कराग्रैरामृशन् आश्वासयति ॥ ३४ ॥

**दिवसमिति ॥** मृगधरश्चन्द्रो दिवसं, दिवसे इत्यर्थः । कालाध्वनोरत्यन्तसंयोगे द्वितीया । भृशमुष्णरुचेरुष्णांशोः पादेन करेण अङ्घ्रिणा च । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । हतां ताडिताम् । अत एव अनवरतैरविच्छिन्नैरलिरुतैः रुदतीं क्रन्दन्तीमिव स्थितां कुमुदिन्येव वनिता ताम् । अग्राणि च ते कराश्च इत्यभेदेन समास इति वामनः । तैरग्रकरैरग्रांशुभिरग्रहस्तैर्मुहुरामृशन् स्पृशन् उदशिश्वसदुच्छ्वासयति स्म । पराऽवमृष्टानां पतिभिराश्वासनीयत्वादिति भावः । श्वसधातोः णौ चङ्युपधाया ह्रस्वः । अत्र पाद एव पादस्तेन हतामिति हननसाधितश्लिष्टरूपकोन्थापितेयमलिरुतैरिति व्यधिकरणपरिणामगर्भा रोदनोत्प्रेक्षेति विजातीयसङ्करः । तथा करैरेव करैः कुमुदिनीवनितेति श्लिष्टाऽश्लिष्टरूपणान्मृगधरे वल्लभत्वप्रतीतेरेकदेशवर्ति रूपकं, तत्सापेक्षेयमुदशिश्वसदिति गम्योत्प्रेक्षेत्यपरो विजातीयसङ्करः । रोदनोत्प्रेक्षासापेक्षयमुच्छ्वासनोत्प्रेक्षेति सजातीसङ्करोऽपि ॥ ३४ ॥

**प्रतिकामिनीति ददृशुश्चकिताः स्मरजन्मघर्मपयसेव चिताम्(१) ॥**
**सुदृशोऽभिभर्तृ शशिरश्मिगलज्जलबिन्दुमिन्दुमणिदारुवधूम् ॥ ३५ ॥**

**प्रतिकामिनीति ॥** सुदृशो नायिकाः अभिभर्तृ कान्तसमीपे इन्दुमणिदारुवधूं चन्द्रकान्तकाष्ठस्त्रियं प्रतिकामिनीति ददृशुः सपत्नीत्यद्राक्षुः, किंलक्षणामिन्दुमणिदारुवधूं शशिरश्मिगलज्जलबिन्दुं चन्द्रकिरणस्रवज्जललवाम् । अपरं किंभूताम्, उत्प्रेक्ष्यते—स्मरजन्मघर्मपयसा चितामिव कामतापसलिललवेन व्याप्तामिव । किंभूताः सुदृशः अत एव चकिताः सभयाः, यदेषा सपत्नी कामतापजनितप्रस्वेदबिन्दुं स्रवन्ती दृश्यत इति भावः ॥ ३६ ॥

**प्रतिकामिनीति ॥** सुदृशोऽङ्गनाः अभिभर्तृ भर्तारमभि । 'लक्षणेनाऽभिप्रती आभिमुख्ये' इत्यव्ययी-

---

( १ ) पयसोपाचिताम् ।

भावः । शशिरश्मिभिर्गलन्तः स्रवन्तो जलबिन्दवो यस्यास्ताम् इन्दुमणिश्चन्द्रकान्तशिला सैव दारु तस्य वधूस्तन्मयी वधूः स्त्रीप्रतिमा तां स्मराज्जन्म यस्य तेन स्मरजन्मना घर्मपयसा स्वेदाम्बुनोपचितां व्याप्ताम्। स्विन्नगात्रामित्यर्थः । प्रतिकूला कामिनी प्रतिकामिनी सपत्नीति, भ्रान्त्येति शेषः । चकिता भीता ददृशुः। अत्र चन्द्रशिलापुत्रिकायां सादृश्यनिबन्धनया प्रतिकामिनीभ्रान्त्या भ्रान्तिमदलङ्कारः ॥ ३५ ॥

**अमृतद्रवैर्विदधदब्जदृशामपमार्गमोषधिपतिः स्म करैः ॥**
**परितो विसर्पि परितापि भृशं वपुषोऽवतारयति मानविषम् ॥ ३६ ॥**

**अमृतद्रवैरिति ॥** ओषधिपतिश्चन्द्रः अब्जदृशां कमललोचनानां वपुषोऽङ्गात् मानविषमवतारयति स्म अभिमानकालकूटं निराचकार । किं कुर्वन् अमृतद्रवैः जलस्राविभिः शीतलैः करैः किरणैः अपमार्गम् अञ्जनविधिं विदधत् कुर्वन्, किंभूतं मानविषं परितः समन्तात् विसर्पि प्रसरणशीलम्, अपरं किंभूतं परितापि सन्तापकारि । अन्योऽपि ओषधिपतिः मान्त्रिकः कराग्रैः परिमार्जयन् अङ्गाद्विषमुत्तारयतीति ॥ ३६ ॥

अमृतद्रवैरिति ॥ ओषधिपतिश्चन्द्र एवौषधिपति र्वैद्य इति श्लिष्टरूपकम्। अमृतमेवाऽमृतमौषधविशेषः तेन द्रवैरार्द्रैः करैः किरणैरेव करैर्हस्तैरब्जदृशामपमार्गमङ्गपरिमार्जनं विदधत् कुर्वन् परितो विसर्पि सर्वव्यापि भृशं परितापि सन्तापकारि मानः कोप एव विषं तत् वपुषः शरीरादवतारयति स्म अपारोपितवान् । अत्र सावयवरूपकेणौषधलिप्तजाङ्गुलिकहस्तसंस्पर्शाद्विषमिव निशाकरकरस्पर्शादेवाङ्गनानां वपुषि रोषो न स्पृष्ट इत्युपमा व्यज्यते ॥ ३६ ॥

**अमलात्मसु प्रतिफलन्नभितस्तरुणीकपोलफलकेषु मुहुः ॥**
**विससार सान्द्रतरमिन्दुरुचामधिकाऽवभासितदिशां निकरः ॥ ३७ ॥**

**अमलात्मस्विति ॥** इन्दुरुचां चन्द्रद्युतीनां निकरः समूहः सान्द्रतरं बहुलं यथा स्यात्तथा विससार प्रससार । किंभूतानामिन्दुरुचाम् अधिकाऽवभासितदृशामत्यर्थदीपितककुभां, किं कुर्वन् निकरः अभितः समन्तात् तरुणीकपोलफलकेषु कामिनीगण्डभित्तिषु मुहुर्वारंवारं प्रतिफलन् प्रतिबिम्बतां प्राप्नुवन्, किंभूतेषु कपोलफलकेषु अमलात्मसु निर्मलस्वरूपेषु ॥ ३७ ॥

अमलात्मस्विति ॥ आधिकमवभासिताः प्रकाशिता दिशो याभिस्तासामिन्दुरुचां निकरोऽमलात्मसु निर्मलमूर्तिषु तरुणीनां ये कपोलाः फलकानीव तेष्वभितो मुहुः प्रतिफलन् संक्रामन् सान्द्रतरं प्रचुरतरं विससार । दर्पणसंक्रमणादिवेति भावः । अत्रेन्दुरुचां कपोलाऽसंक्रमेऽपि संक्रमोक्तेरसम्बन्धे सम्बन्धोक्तिरूपाऽतिशयोक्तिः ॥ ३७ ॥

**उपगूढवेलमलघूर्मिभुजैः सरितामचुक्षुभदधीशमपि ॥**
**रजनीकरः किमिव चित्रमहो ! यदि(१) रागिणां गणमनङ्गलघुम् ॥३८॥**

**उपगूढेति ॥** अहो इत्याश्चर्ये, इदं किमिव चित्रं किमाश्चर्यं यदि रजनीकरश्चन्द्रः रागिणां गणं कामिनां वृन्दमचुक्षुभत् क्षोभयामास । किंभूतं रागिणां गणम् अनङ्गलघुं कन्दर्पाऽधीरचित्तम् । यत्–सरितामधीशमपि तरङ्गिणीनां पतिं समुद्रमपि अचुक्षुभत् क्षोभमनयत्, किंभूतं समुद्रम् अलघूर्मिभुजैः कल्लोलबाहुभिः उपगूढवेलमाश्लिष्टमर्यादम् । ‘अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि’ ॥ ३८ ॥

उपगूढेति ॥ रजनीकरश्चन्द्रः अलघुभिरूर्मिभिरेव भुजैरुपगूढा वेला येन तम् । सावष्टम्भमिति भावः । सरितामधीशं समुद्रमपि । स्वभावादक्षोभ्यमपीति भावः । अचुक्षुभत्क्षोभयति स्म । क्षुभ्यतेर्ण्यन्ता-

(१) यदु ।

ल्लुङ्, णौ चङ्युपधाया ह्रस्वः । अनङ्गेन लघुं गतसारं यदव एव रागिणस्तेषां गणमचुक्षुभदित्यद-
।कीमिव चित्रम् । न किञ्चिदित्यर्थः । अत्राऽक्षोभ्यमब्धिं क्षोभयतश्चन्द्रस्य दण्डापूपिकन्यायादन्यक्षोभकत्वोक्ते-
रर्थापत्तिरलङ्कारः ॥ १८ ॥

**भवनोदरेषु परिमन्दतया शयितो लसत्स्फटिक(१)यष्टिरुचः ॥**
**अवलम्ब्य जालकमुखोपगतानुदतिष्ठदिन्दुकिरणान्मदनः ॥ ३९ ॥**

**भवनोदरेष्विति ॥** मदनः कन्दर्पः इन्दुकिरणानवलम्ब्य विलग्य उदतिष्ठत् उत्त-
स्थौ । किंभूतानिन्दुकिरणान् जालकमुखोपगतान् जालकानां मुखेभ्य उपगतानागतान्
गवाक्षविवरनिःसृतान्, अपरं किंभूतान् लसत्स्फटिकयष्टिरुचः देदीप्यमानस्फटिकमणियष्टि-
कान्तीन्, किंलक्षणो मदनः परिमन्दतया परिक्षीणत्वेन भवनोदरेषु शरीराभ्यन्तरेषु
शयितः सुप्तः । अन्योऽपि यः परिमन्दतया अपटुदेहतया भवनोदरेषु गृहमध्येषु शयितो
भवति, स यष्टिमवलम्ब्योत्तिष्ठतीत्युक्तिलेशः । 'जालं समूह आनायगवाक्षक्षारकेष्वपि' ॥ ३९ ॥

भवनोदरेष्विति ॥ परिमन्दतया एकाकित्वादसमर्थतया भवनोदरेषु गृहाभ्यन्तरेषु शयितः सुप्तोऽत
एवालसो मदनो जालकमुखोपगतान् गवाक्षविवरप्रविष्टान् अत एव स्फटिकयष्टीनां रुगिव रुक् शोभा येषां तान्
स्फटिकदण्डसन्निभानिन्दुकिरणानवलम्ब्याऽवष्टभ्योदतिष्ठदुत्थितः । अत्रोद्बोधोत्थानयोरभेदाविवक्षया 'उदो-
ऽनूर्ध्वकर्मणि' इति परस्मैपदसिद्धिः । एतत्पदे च अभेदाध्यवसायमूलातिशयोक्त्या स्फटिकयष्टिरुच इत्युपमया
च अवलम्ब्येत्यत्राऽवलम्ब्येवेत्युत्थानस्यावलम्बनहेतुकत्वोत्प्रेक्षा प्रत्याय्यत इत्येतासां सङ्करः ॥ ३९ ॥

**अविभावितेषुविषयः प्रथमं मदनोऽपि नूनमभवत्तमसा ॥**
**उदिते दिशः प्रकटयत्यमुना यदघर्मधाम्नि धनुराचकृषे ॥ ४० ॥**

**अविभावितेष्विति ॥** नूनं निश्चितं मदनः कन्दर्पः प्रथमं पूर्वं तमसा अन्धकारेण
अविभावितेषुविषयः अभवत् अदृष्टबाणगोचरो बभूव, यत्–अमुना मदनेन अघर्मधाम्नि
शीतकिरणे चन्द्रे उदिते उदयं प्राप्ते सति धनुराचकृषे चापमाकृष्टं, किंभूते हिमधाम्नि
दिशः प्रकटयति आशाः निर्मलीकुर्वति ॥ ४० ॥

अविभावितेष्विति ॥ मदनोऽपि प्रथमं चन्द्रोदयात्प्राक् तमसा अविभावितोऽलक्षितः इषुविषयो
बाणलक्ष्यं येन सोऽभवत् । नूनमित्युत्प्रेक्षा । यत् यस्मादघर्मधाम्नि शीतकरे उदिते दिशः प्रकटयति सति
अमुना मदनेन धनुराचकृषे आकृष्टम् । चन्द्र एव महानुद्दीपको मदनस्याऽभूदिति भावः ॥ ४० ॥

**अवकाशमाशु हृदये सुदृशां गमिते विकासमुदयाच्छशिनः ॥**
**कुमुदे च पुष्पधनुषो धनुषश्च्युतः शिलीमुखगणोऽलभत(२) ॥**

**अवकाशमिति ॥** शिलीमुखगणः बाणसमूहः पुष्पधनुषो मदनस्य धनुषः चापात्
कुसुमाच्चलितः सन् सुदृशां मृगनयनानां नारीणां हृदये मनसि आशु शीघ्रम् अवकाशमवसर-
मलभत प्राप, अपरं शिलीमुखगणो भ्रमरसमूहः कुमुदे पद्मेऽवकाशमलभत । किंभूते
हृदये कुमुदे च शशिनश्चन्द्रस्य उदयाद्विकासं गमिते निर्मलत्वं प्राप्ते उन्निद्रतां प्राप्ते च ।
उभयोर्विशेषणम् । शिलीमुखौ बाणभ्रमरौ ॥

**युगपद्विकासमुदयाद्गमिते शशिनः शिलीमुखगणोऽलभत ॥**
**द्रुतमेत्य पुष्पधनुषो धनुषः कुमुदेऽङ्गनामनसि चाऽवसरम् ॥ ४१ ॥**

**युगपदिति ॥** शिलीमुखगणः बाणपूगः अपरं शिलीमुखगणः अलिगणः अङ्गना-

(१) ऽलसः स्फटिक । (२) मल्लिनाथव्याख्यायां श्लोकोऽयं नोपलभ्यते ।

मनसि स्त्रीचित्ते कुमुदे कैरवे च अवसरमलभत । किं कृत्वा द्रुतं शीघ्रं पुष्पधनुषः कामस्य धनुषः चापात् एत्य विच्छिद्य, किंविधे मनसि कुमुदे च शशिनः चन्द्रस्य उदयात् युगपत् समकालमेव विकासं गमिते नैर्मल्यं विकासित्वं च प्राप्ते ॥ ४१ ॥

युगपदिति ॥ पुष्पधनुः पुष्पधन्वा। 'वा संज्ञायाम्' इति विकल्पादन्तादेशः । तस्य धनुः पुष्पचापं पुष्पान्तरं च तस्माच्चलितो निःसृतः शिली शल्यं मुखं येषां ते शिलीमुखाः बाणाः अलयश्च। 'अलिबाणौ शिलीमुखौ' इत्यमरः। तेषां गणः शशिन उदयाद्विकासम् औत्सुक्यमुन्मीलनं च युगपदेकदा गमिते प्रापिते अङ्गनानां मनसि हृदये कुमुदे चाऽवसरमवकाशमाश्वासमलभत । उभयत्र प्रवेशं लब्धवानित्यर्थः । अत्र चन्द्रोदये कुमुदकामिनीहृदययोर्द्वयोरपि प्रकृतयोः शिलीमुखप्रवेशलक्षणैकधर्मयोगादौपम्यात्तुल्ययोगिता । एकधर्मत्वं चात्र शिलीमुखेति श्लिष्टपदोपात्तयोरलिबाणयोरेकत्वाध्यवसायमूलातिशयोक्तिप्रसादादिति सङ्करः ॥

ककुभां मुखानि सहसोज्ज्वलयन् दद(१)दाकुलत्वमधिकं रतये ॥
अदिदीपदिन्दुरपरो दहनः कुसुमेषुमत्रिनयनप्रभवः ॥ ४२ ॥

ककुभामिति ॥ अत्रिनयनप्रभवः अत्रिमुनिविलोचनोत्पन्नः इन्दुः चन्द्रः कुसुमेषुं पुष्पधन्वानमदिदीपत् दीपयामास । चन्द्रः किं कुर्वन् सहसा शीघ्रं ककुभां दिशां मुखानि उज्ज्वलयन् निर्मलीकुर्वन्, अपरं किं कुर्वन् रतये सम्भोगाय अधिकमत्यर्थमाकुलत्वमौत्सुक्यं ददत् उत्पादयन्, किंभूतः चन्द्रः अपरो दहनः द्वितीयो वह्निः अत्रिनयनप्रभवो वह्निः कुसुमेषुं काममदिदीपत् भस्मीचकार । असौ अत्रिनयनसमुत्थः, अपरं रतये कामभार्यायै आकुलत्वं ददत् दिशो निर्मलयंश्च ॥ ४२ ॥

ककुभामिति । ककुभां दिशां मुखानि सहसा झटित्युज्ज्वलयन्नुद्भासयन् रतये सुरताय अधिकमाकुलत्वमौत्सुक्यं दधत् । यूनामिति शेषः । अन्यत्र रतये कामदेव्यै आकुलत्वं भयविह्वलत्वं दधत्, अत्रेरत्रिमुनेर्नयनप्रभवः । 'अत्रिनेत्रसमुद्भवः' इति पुराणात् । त्रिनयनप्रभवो न भवतीत्यत्रिनयनप्रभवः । अपरस्त्रिनयनप्रभवादन्यो दहनोऽग्निरिन्दुः कुसुमेषुं काममदिदीपद्दीपयाति स्म । दीप्यतेर्णौ चाङि 'भ्राज—' इत्यादिना विकल्पादुपधाह्रस्वः । अत्र प्रकृते कुसुमेषोर्दीपनं नाम प्रवर्धनं तस्य तत्र प्रतीयमानेन प्रज्वलनेनाभेदाध्यवसायात्तन्निमित्तामिन्दोर्दिङ्मुखोद्भासनादिधर्मसम्बन्धादपरोऽयं दहन इत्यपरशब्दप्रयोगसामर्थ्यात् दहनत्वोत्प्रेक्षा न रूपकमिति रहस्यम् । चन्द्रोदयात्कामो ववृधे इति तात्पर्यम् ॥ ४२ ॥

इति निश्चितप्रियतमाऽऽगतयः सितदीधितावुदितवत्यबलाः(२) ॥
प्रतिकर्म कर्तुमुपचक्रमिरे समये हि सर्वमुपकारि कृतम् ॥ ४३ ॥

इतीति ॥ अबलाः नायिकाः प्रतिकर्म कर्तुं प्रसाधनं विधातुमुपचक्रमिरे प्रारेभिरे । क्व सति सितदीधितौ चन्द्रे उदितवति उदयं कुर्वति सति, किंभूता अबलाः इति पूर्वोक्तप्रकारेण निश्चितप्रियतमाऽऽगतयः निश्चयीकृतवल्लभागमनाः । हि युक्तं चैतत्, हि यस्मात् कारणात् समये कृतं सर्वमुपकारि भवति प्रस्तावे विहितं सर्वमुपकाराय भवति ॥ ४३ ॥

एवं चन्द्रोदयाख्यमुद्दीपनविभावनमुक्त्वा तत्फलमाह—

इतीति ॥ इत्येवं सितदीधितावुदयवति अबलाः स्त्रियो निश्चिता प्रियतमानामागतिरागमनं याभिस्ताः सत्यः प्रतिकर्म प्रसाधनं कर्तुमुपचक्रमिरे । 'प्रतिकर्म प्रसाधनम्' इत्यमरः । चन्द्रोदयात् प्रियागमनं निश्चित्य अलङ्कर्तुं प्रक्रान्ता इत्यर्थः । तथा हि—समये कार्यकाले कृतमनुष्ठितं सर्वं कर्म उपकार्युपकारकं भवति । अन्यथा विफलमेवेति भावः । अतो निश्चित्य प्रवृत्तिरासां युक्तेत्यर्थान्तरन्यासः ॥ ४३ ॥

---

(१) दध० । (२) ०वुदयवत्यबलाः ।

**सममेकमेव दधतुः सुतनोर्गुरु(१) हारभूषणमुरोजतटौ ॥**
**घटते हि संहततया जनितामिदमेव निर्विवरतां दधतोः ॥ ४४ ॥**

**सममेकमेवेति** ॥ सुदृशो नायिकायाः उरोजतटौ कुचतटौ समं युगपदेव एकमेव तुल्यतया धरणेन एकतममेव गुरुहारभूषणं दधतुः विशालहारालङ्करणं बभ्रतुः । हि यस्मात् कारणात् निर्विवरतां निरन्तरतां बिभ्रतोः बिभ्राणयोः इदमेव एकालङ्करणमेव घटते । ऐक्यं दधानयोः पृथगलङ्करणं वस्तु न युज्यते इत्यर्थः । किंभूतां निर्विवरतां संहततया सम्मिलितत्वेन जनितामुत्पादिताम् ॥ ४४ ॥

अथ प्रसाधनमेव प्रपञ्चयति—

सममेकमेवेति ॥ सुतनोः स्त्रिया उरोजतटौ उरु श्लाघ्यमेकमेव भूषणं समम् अवैषम्येण दधतुः । संहततया संश्लिष्टतया ऐकमत्येन च जनितां निर्विवरतां निरन्तरालतां नीरन्ध्रत्वं च दधतोरिदं समभागित्वमेव घटते । अन्तर्भेदाऽन्तराया हि विषयिणां विषयोपभोगाः, कुचयोस्तदभावात्समशोभार्थं हारधारणं युक्तमिति भावः ॥ ४४ ॥

**कदलीप्रकाण्डरुचिरोरुतरौ जघनस्थलीपरिसरे महति ॥**
**रशनाकलापकगुणेन वधूर्मकरध्वजद्विरदमाकलयत् ॥ ४५ ॥**

**कदलीप्रकाण्डेति** ॥ वधूर्युवतिः महति जघनस्थलीपरिसरे विशाले श्रोणीस्थलप्रदेशे रशनाकलापगुणेन मेखलागुणरज्ज्वा मकरध्वजद्विरदं काममतङ्गजम् आकलयत् बबन्ध । किंभूते जघनस्थलीपरिसरे कदलीप्रकाण्डरुचिरोरुतरौ रम्भास्तम्भमनोहरजङ्घापादपे । अन्योऽपि मत्तो गजः क्वापि उद्यानप्रदेशे कदलीकाननरम्यप्रदेशे रज्ज्वा शृङ्खलेन बध्यते इत्युक्तिलेशः ।। ४५ ।।

कदलीप्रकाण्डेति ॥ वधूः कदलीप्रकाण्डरुचिरो रम्भास्तम्भसुन्दर ऊरुरेव तरुर्बन्धनवृक्षो यस्मिन् । अत्र कदलीप्रकाण्डस्य सौन्दर्यमात्रोपमानत्वान्न बन्धनयोग्यवृक्षवाचिना तरुशब्देन पुनरुक्तिः । महति जघनस्थल्येव परिसरः प्रदेशस्तस्मिन् रशनाकलापक एव गुणस्तेन मकरध्वजो मदनः स एव द्विरदस्तमाकलयत् अबध्नात् । रशनाबन्धेन जघनमतीव मदनोद्दीपकमासीदित्यर्थः । समस्तवस्तुवर्ति सावयवरूपकम् ॥ ४५ ॥

**अधरेष्वलक्तकरसः सुदृशां विशदं कपोलभुवि रोध्र(२)रजः ॥**
**नवमञ्जनं नयनपङ्कजयोर्विभिदे न शङ्खनिहितात्पयसः ॥ ४६ ॥**

**अधरेष्विति** ॥ सुदृशां मृगलोचनानां नायिकानाम् एतद्वस्तु शङ्खनिहितात्पयसः न बिभिदे शङ्खारोपितदुग्धतुल्यं जातं, न तु भिन्नम्। तावत् किं किं कुतो न भिन्नमित्याह— अधरेषु अलक्तकरसः ओष्ठेषु लाक्षारसः भिन्नो नाभूत् । अपरं कपोलभुवि गण्डस्थले विशदं निर्मलं रोध्ररजः रोध्रचूर्णं न बिभिदे । नयनपङ्कजयोः लोचनेन्दीवरयोः नवमञ्जनं नूतनं कज्जलं शङ्खनिहितात्पयसः न बिभेदे । सादृश्यगुणयोगात्सदृशमेव जातं, न तु भिन्नमित्यर्थः ॥४६॥

अधरेष्विति ॥ सुदृशामधरेष्वोष्ठेषु अलक्तकरसो लाक्षाद्रवः, तथा कपोलभुवि गण्डस्थले विशदं शुभ्रं लोध्ररजः, तथा नयनपङ्कजयोर्नवमञ्जनं च शङ्खनिहितात्पयसः क्षीरान्न बिभिदे भिन्नं नाऽभूत् । कर्मकर्तरि लिट् । अधरादिनिहितं लाक्षारागादिकं शङ्खनिहितक्षीरवत्सावर्ण्यादाश्रयतोऽभेदेन दुर्ग्रहमभूदित्यर्थः । अत्र यदधरालक्तकरसादिकं तच्छङ्खनिहितं क्षीरमित्येकवाक्यतया वाक्यार्थे वाक्यार्थसमारोपादसम्भवद्वस्तुसम्बन्धो वाक्यार्थनिष्ठो निदर्शनालङ्कारः । तेनाऽधरालक्तकादीनां गुणत एकत्वरूपः सामान्यालङ्कारो गम्यते । 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् ॥ ४६ ॥

---

(१) ०रुरु । (२) लोध्र ।

**स्फुरदुज्ज्वलाधरदलैर्विलसद्दशनांशुकेसरभरैः परितः ॥**
**धृतमुग्धगण्डफलकैर्विबभुर्विकसद्भिरास्यकमलैः प्रमदाः ॥ ४७ ॥**

स्फुरदिति ॥ प्रमदा अङ्गनाः विकसद्भिः हसद्भिः आस्यकमलैर्मुखपद्मैः विबभुः । किंभूतैर्मुखकमलैः स्फुरदुज्ज्वलाधरदलैः उल्लसन्निर्मलरदनच्छदपत्रैः, अपरं किंभूतैः विलसद्दशनांशुकेसरभरैः देदीप्यमानदशनकिरणकिञ्जल्कभरैः, विलसन्तः दशनांशवः दन्तकिरणा एव केसरभरा येषु तानि तथा तैः, अपरं किंभूतैः धृतमुग्धगण्डफलकैः धृतानि मुग्धानि गण्डा एव फलानि यैस्तानि तथा तैः कलितमनोहरगल्लफलैः । तावत् कमलेषु हि पत्रकिञ्जल्कबीजफलानि भवन्ति । मुखकमलान्यपि एवंविधानि दृश्यन्ते इत्यर्थः ॥ ४७ ॥

स्फुरदिति ॥ प्रमदाः स्त्रियः स्फुरन्तश्चलन्तः उज्ज्वलाश्चाऽमला अधरा ओष्ठा एव दलानि पत्राणि येषां तैः परितो विलसन्तो दशनांशवो दन्तकान्तय एव केसरभराः किञ्जल्कपुञ्जा येषां तैः धृतानि मुग्धानि गण्डा एव फलकानि कर्णिका येषां तैर्विकसद्भिरास्यकमलैर्विबभुः । अत्रास्यकमलैरिति रूपणात् प्रमदा एव सरस्य इति सिद्धेरेकदेशविवर्ति सावयवरूपकम् । 'आस्यकुमुदैः' इति पाठे कुमुदस्य मुखोपमानकत्वं कविसमयविरुद्धं ज्ञेयम् ॥ ४७ ॥

**भजते विदेशमधिकेन जितस्तदनुप्रवेशमथ वा कुशलः ॥**
**मुखमिन्दुरुज्ज्वलकपोलमतः प्रतिमाच्छलेन सुतनोरविशत्(१) ॥ ४८ ॥**

भजते इति ॥ इन्दुः अतः कारणात् सुतनोर्नायिकायाः मुखं वदनं प्रतिमाच्छलेन प्रतिबिम्बव्याजेनाऽविशत् प्राविक्षत् प्रविष्टः, किंभूतं मुखम् उज्ज्वलकपोलं निर्मलगण्डप्रदेशम् । अतः कुतः, यतः कारणात् अधिकेन अतिशयितगुणवता जितः पराभूतः विदेशं भजते देशान्तरं याति । अथ वा कुशलो दक्षः तदनुप्रवेशं भजते तदाश्रयो भवति । मुखकान्त्या चन्द्रो जित इति भावः ॥ ४८ ॥

भजते इति ॥ अधिकेन प्रबलेन जितो विदेशं देशान्तरं भजते, अथ वा कुशलः कार्यचतुरः तदनुप्रवेशं भजते, तमेव शरणतया प्रविश्य जीवतीत्यर्थः । अतो हेतोरिन्दुः उज्ज्वलौ कपोलौ यस्य तदिति मुखस्य बिम्बग्रहणयोग्यतोक्तेः पदार्थहेतुकं काव्यलिङ्गम् । सुदृशां मुखं प्रतिमाच्छलेन प्रतिबिम्बव्याजेनाऽविशत् प्रविष्टः । साक्षाच्चन्द्र एवायं न प्रतिमाचन्द्र इति छलशब्दात्प्रतीतेः छलशब्देनासत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः पूर्वोक्तकाव्यलिङ्गसापेक्ष इति सङ्करः । तेन कपोलयोर्लोकोत्तरं लावण्यं दर्पणौपम्यं च व्यज्यत इत्यलङ्कारध्वनिः ॥ ४८ ॥

**ध्रुवमागताः प्रतिहतिं कठिने मदनेषवः कुचतटे महति ॥**
**इतराऽङ्गवन्न यदिदं गरिमग्लपितावलग्नमगमत्तनुताम् ॥ ४९ ॥**

ध्रुवमागता इति ॥ ध्रुवं निश्चितं मदनेषवः कामबाणाः अङ्गनानां महति पीवरे कुचतटे स्तनयुग्मे प्रतिहतिं प्रतिस्खलनामागताः प्राप्ताः, किंभूते कुचतटे कठिने कठोरे । कथमेवं प्रतीयते इत्याह—यदिदं कुचयुग्ममितराङ्गवत् हस्तचरणादिवत् तनुतां कृशत्वं न अगमत् न जगाम । किंभूतं कुचयुग्मं गरिमग्लपिताऽवलग्नं गुरुत्वेन कृशीकृतमध्यप्रदेशं, गरिम्णा ग्लपितं तनूकृतमवलग्नं मध्यं येन तत्तथा ॥ ४९ ॥

ध्रुवमागता इति ॥ मदनेषवः कामशराः महति कठिने कुचतटे प्रतिहतिं प्रतिघातमागताः प्राप्ता ध्रुवम् । यत् यस्माद्गरिम्णा निजभारेण ग्लपितं कार्शितमवलग्नं मध्यं येन तदिदं कुचतटमितराङ्गेन तुल्यमितरा-

---

(१) सुदृशामविशत् ।

ऽङ्गवत् । 'तेन तुल्यम्-' इति वतिप्रत्ययः । तनुतां कार्श्यं नाऽगमन्नाऽभजत् । पुषादिसूत्रेण च्लेरङादेशः । तदा मदनेषुपातात्कुचातिरिक्तमङ्गनानामङ्गं कृशमासीदित्यर्थः ॥ ४९ ॥

**न मनोरमास्वपि विशेषविदां निरचेष्ट योग्यमिदमेतदिति ॥**
**गृहमेष्यति प्रियतमे सुदृशां वसनाङ्गरागसुमनःसु मनः ॥ ५० ॥**

**न मनोरमास्विति ॥** सुदृशां नायिकानां मनः अन्तःकरणं प्रियतमे कान्ते गृहं मन्दिरमेष्यति आगमिष्यति सति वसनाङ्गरागसुमनस्सु वसनचन्दनकुसुमेषु इति न निरचेष्ट न निश्चिकाय । तर्हि एतानि मनःप्रियाणि न भविष्यन्तीत्याह—किंभूतासु वसनाङ्गरागसुमनस्सु मनोरमास्वपि मनोज्ञास्वपि, किंभूतानां सुदृशां विशेषमुत्तरोत्तरं भेदं विदन्ति जानन्तीति विशेषविदः तासाम् । इति कथं न निश्चिकाय, यत्-इदं योगयमेतत् योग्यतमम् ॥

न मनोरमास्विति ॥ प्रियतमे गृहमेष्यति आगमिष्यति सति विशेषविदामपि सुदृशां सम्यग्दर्शनीयानां स्त्रीणां मनः कर्तृ मनोरमास्वपि वसनाङ्गरागसुमनःसु वस्त्रगन्धमाल्येषु इदमेतदिति इदं पुरोवर्ति वस्त्वेतदिति वसनमिति, अनुलेपनमिति, सुमनस इति, विशेषाकारेण तथा योग्यमस्माकं धारणार्हमिति च न निरचेष्ट न निरधारयत् । प्रियागमनहर्षातिरेकादितिकर्तव्यतामूढमभूदित्यर्थः । चिनोतेर्लुङि तङि च्लेः सिच्, 'सार्वधातुकार्धधातुकयोः' इति गुणः । हर्षोऽत्र सञ्चारिभावः । निश्चयसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः, सुमनःसुमन इति यमकविशेषश्चेति संसृष्टिः ॥ ५० ॥

**वपुरन्वलिप्त परिरम्भसुखव्यवधानभीलुकतया(१) न वधूः ॥**
**क्षममस्य बाढमिदमेव हि यत्प्रियसङ्गमेष्वनवलेपमदः ॥ ५१ ॥**

**वपुरिति ॥** वधूः नायिका वपुः शरीरं न अन्वलिप्त विलेपनयुक्तं न चकार । कया परिरम्भसुखव्यवधानभीलुकतया परिरम्भेन यत्सुखं तस्य व्यवधानमाच्छादनं तस्माद् भीलुकता भीरुता तया आलिङ्गनसौख्याच्छादनभीरुतया, यदस्माकमालिङ्गनसुखमाच्छाद्यताम्—इति हेतोः यत् बाढं निश्चितम्, अस्य वपुषः इदमेव युक्तम् । इति किम्—अदः एतद्वपुः प्रियसङ्गमेषु कान्तसंयोगेषु अनवलेपमवलेपरहितम् । अथ च अनवलेपं निर्गर्वम्, अहङ्काररहितमित्यर्थः ॥ ५१ ॥

वपुरिति ॥ वधूः स्त्री परिरम्भसुखव्यवधानभीरुकतया आलिङ्गनसुखविच्छेदभीरुत्वेन । 'क्रुकन्नपि वक्तव्यः' इति क्रुकन् प्रत्ययः । वपुर्नाऽन्वलिप्त नानुलिप्तवती । अङ्गरागमात्रव्यवधानमपि न सहत इत्यर्थः । लिम्पतेः कर्तरि लुङि तङ् । तथा हि-अदो वपुः प्रियसङ्गमेषु अनवलेपमचन्दनमगर्वं चेति यत् । 'अवलेपस्तु गर्वे स्याल्लेपने भूषणेऽपि च' इति विश्वः । इदमनवलेपनत्वमेवास्य वपुषो बाढं भृशं क्षमं युक्तम् । श्लेषानुप्राणितोऽयमर्थान्तरन्यासः ॥ ५१ ॥

**निजपाणिपल्लवतट(२)स्खलनादभिनासिकाविवरमुत्पतितैः ॥**
**अपरा परीक्ष्य शनकैर्मुमुदे मुखवासमास्यकमलश्वसनैः ॥ ५२ ॥**

**निजेति ॥** अपरा काचिदङ्गना आस्यकमलश्वसनैः मुखपद्ममारुतैः मुखवासं वदनसौगन्ध्यं शनकैः मन्दंमन्दं परीक्ष्य प्रमाणं विलोक्य मुमुदे हृष्टा जाता । किंभूतैरास्यकमलश्वसनैः अभिनासिकाविवरं घ्राणच्छिद्रमभि लक्षीकृत्य उत्पतितैः उल्ललितैः, कस्मात् निजपाणिपल्लवतटस्खलनात् स्वहस्तपल्लवतटनिवर्तनात् ॥ ५२ ॥

निजेति ॥ अपरा स्त्री निजपाणिपल्लवतलस्य स्खलनादभिघातादभिनासिकाविवरं नासारन्ध्रं प्रति उत्पतितैरास्यकमलस्य श्वसनैर्मुखमारुतैर्मुखवासं मुखवासनां शनकैः परीक्ष्य मुमुदे । इयं वासकसज्जिका नायिका

(१) भीरुकतया । (२) तल ।

**विधृते दिवा सवयसा च पुरः परिपूर्णमण्डलविकासभृति ॥**
**हिमधाम्नि दर्पणतले च मुहुः स्वमुखश्रियं मृगदृशो ददृशुः ॥ ५३ ॥**

**विधृते इति** ॥ मृगदृशः सारङ्गाक्ष्योऽङ्गनाः हिमधाम्नि चन्द्रमसि अपरं दर्पणतले च मुहुर्वारंवारं स्वमुखश्रियं निजमुखकान्तिं ददृशुः पश्यन्ति स्म । किंभूते हिमधाम्नि दिवा आकाशेन विधृते प्रगृहीते, किंभूते दर्पणतले पुरोऽग्रे सवयसा कान्तेन विधृते, किंभूते चन्द्रे मुकुरे च परिपूर्णमण्डलविकासभृति सम्पूर्णमण्डलविस्तारयुते । उभयोः साम्यम् ॥ ५३ ॥

विधृत इति ॥ दिवा आकाशेन सवयसा वयस्यया च पुरोऽग्रे विधृते विधारिते परिपूर्णमण्डलविकासं बिम्बशोभां बिभर्तीति तद्भृत् तस्मिन् हिमधाम्नि चन्द्रे दर्पणतले च मृगदृशः स्त्रियः स्वमुखश्रियम् । पूर्वत्रोपमानभूतामुत्तरत्रोपमेयभूतां चेत्यर्थः । मुहुर्ददृशुः । औपम्यपरीक्षार्थमिति भावः । अत्राऽन्यश्रियोऽन्यत्राऽसम्भवाच्चन्द्रे तत्सदृशीमिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शना । तथा चन्द्रदर्पणयोर्द्युसवयसोश्च यथासङ्ख्यमन्वयाद्यथासङ्ख्यालङ्कारश्च । तदुभयापेक्षया चन्द्रदर्शनयोर्मुखश्रीदर्शनस्थानत्वेन प्रस्तुतयोरौपम्यस्य गम्यत्वात्तुल्ययोगितेति सङ्करः ॥ ५३ ॥

**अधिजानु बाहुमुपधाय नमत्करपल्लवाऽर्पितकपोलतलम् ॥**
**उदकण्ठि कण्ठपरिवर्तिकलस्वरशून्यगानपरयाऽपरया ॥ ५४ ॥**

**अधिजान्विति** ॥ अपरया कयाचिन्नायिकया उदकण्ठि उत्कण्ठितमुद्गीतम् । किंभूतयाऽपरया कण्ठे परिवर्तत इत्यसौ कण्ठपरीवर्ती स चासौ कलस्वरश्च तेन शून्यं रहितं यद् गानं गेयं तत्र परा तन्निष्ठा तया गलभ्रमत्स्वनशून्यगेयनिष्ठया, किं कृत्वा अधिजानु जानु अधि लक्ष्यीकृत्य बाहुं भुजमुपधाय आरोप्य, किंभूतं बाहुं नमति करपल्लवे पाणिकिसलये अर्पितं निहितं कपोलतलं गण्डभागो यत्र स तथा तं प्रह्वीभूतहस्तपल्लवन्यस्तगल्लतलम् ॥ ५४ ॥

अधिजान्विति ॥ नमति कपोलार्पणाय प्रह्वीभवति करपल्लवे अर्पितं निहितं कपोलतलं गण्डस्थलं यस्य तं बाहुमधिजानु जानुनि । विभक्त्यर्थेऽव्ययीभावः । उपधाय निधाय । कूर्परेण जानुमवष्टभ्येत्यर्थः । कण्ठे परिवर्तत इति कण्ठपरिवर्ति न तु मुखोच्चारितमित्यर्थः, कलमव्यक्तमधुरं स्वरशून्यं तारध्वनिहीनं षड्जादिस्वराभिव्यक्तिहीनं वा यद्गानं तत्परया तदासक्तया । मन्दकण्ठेनैव गायन्त्येत्यर्थः । कालक्षेपार्थमिति भावः । अयं चोत्कण्ठानुभावः । अपरया स्त्रिया उदकण्ठि उत्काण्ठितम् । प्रियसङ्गमायोत्सुकया स्थितमित्यर्थः । भावे लुङि चिणो लुक् । अत्र कालक्षेपाऽसहिष्णुत्वलक्षणमौत्सुक्यं सञ्चारि, तन्निबन्धनात्प्रेयोऽलङ्कारः । परयापरयेति यमकविशेषसंसृष्टिः । नायिका विरहोत्कण्ठिता । 'चिरं पत्युरनालोके विरहोत्कण्ठितोन्मनाः' इति लक्षणत् ॥ ५४ ॥

**प्रणयप्रकाशनविदो मधुराः सुतरामभीष्टजनचित्तगृहः(१) ॥**
**प्रजिघाय कान्तमनु मुग्धतरा(२)स्तरुणीजनो दृश इवाऽथ सखीः ॥ ५५ ॥**

**प्रणयेति** ॥ अथानन्तरं तरुणीजनः युवतिवर्गः कान्तमनु भर्तारमनु लक्ष्यीकृत्य सखीः प्रजिघाय वयस्याः प्रहिणोति स्म । किंभूताः सखीः प्रणयप्रकाशनविदः प्रणयस्य प्रेम्णः प्रकाशनं प्रकटनं विदन्ति तास्तथा स्नेहविस्तारज्ञाः, पुनः किंभूताः सखीः मधुराः मधुरभाषिणीः, पुनः किंभूताः सुतरामतिशयेन अभीष्टजनचित्तगृहः वल्लभजनमनोहारिणीः, पुनः किंभूताः मुग्धतराः अतिसुन्दरीः । अपरं किंभूताः, उत्प्रेक्षते—दृश इव लोचनानीव । यथा काश्चिन्नायिकाः कान्तमनु दृशः प्रहिण्वन्ति, किंभूता दृशः प्रीत्यवलोकनचतुराः ।

---

(४) हृतः । (५) मुग्धतर० ।

उभयोः साम्यं व्याख्येयम् । दृशोऽपि प्रणयं प्रकाशयन्ति, मधुरा दर्शनीयाश्च, कान्तचित्तं च गृह्णन्ति, अतिरम्याश्च भवन्तीति साम्यमुक्तम् ॥ ५५ ॥

प्रणयेति ॥ अथ प्रसाधनानन्तरं मुग्धनरोऽत्यन्तकाममोहितस्तरुणीजनः प्रणयप्रकाशनविदः । अनुरागव्यञ्जनचतुरा इत्यर्थः । मधुरा मधुरभाषिणीः, अन्यत्र रम्याकृतीः सुतरामभीष्टजनस्य चित्तहृतो मनोहारिणीः सखीर्दृश इव कान्तमनु प्रियजनं प्रति प्रजिघाय प्रेषितवान् । हिनोतेर्लिट् । इवेन सह समासवचनाद् दृश इवेत्युपमासमासः । तया सखीनामासन्नान्तरङ्गत्वकार्यदर्शित्वादिव्यञ्जनादलङ्कारेण वस्तुध्वनिः॥

**न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि ॥**
**निपुणं तथैनमुपगम्य वदेरभिदूति काचिदिति सन्दिदिशे ॥ ५६ ॥**

न चेति ॥ काचिदङ्गना अभिदूति दूतीमभि लक्ष्यीकृत्य इति वक्ष्यमाणं सन्दिदिशे सन्दिशितवती । इति किं—हे सखि ! त्वम् एनं कान्तमुपगम्य प्राप्य तथा निपुणं वदेः प्रावीण्यं ब्रूयाः । तथा कथं यथा येन प्रकारेण स कान्तः मे मम लघुतां न चाऽवगच्छति लघुत्वं न वेत्ति, अपरं च सः यथा मयि विषये करुणां दयां कुरुते विदधाति तथा कार्यम्॥५६

तथा काचिन्नायिका दूतीं वाचिकमनुशास्ति—

न चेति ॥ स मे दयितो यथा मयि करुणां कुरुते यथा लघुतामल्पतां च नावगच्छति न मन्यते, एनं दयितमुपगम्य प्राप्य तथा तेन प्रकारेण निपुणं वदेः । विध्यर्थे प्रार्थने वा लिङ् । इतीत्थं काचित् नायिका अभिदूति दूतीमभि । 'लक्षणेनाऽभिप्रती-' इत्यव्ययीभावे नपुंसकह्रस्वत्वम् । सन्दिदिशे सन्दिष्टवती । कर्तरि लिट्, स्वरितेत्त्वादात्मनेपदम् । नायिका तु कलहान्तरिता । 'कोपात्कान्तं पराणुद्य पश्चात्तापसमन्विता' इति लक्षणात् ॥ ५६ ॥

**दयिताय मानपरयाऽपरया त्वरितं ययावगदितापि सखी ॥**
**किमु नोदिताः(१) प्रियहितार्थकृतः कृतिनो भवन्ति सुहृदः सुकृताम्(२) ॥५७॥**

दयितायेति ॥ काचित् सखी दयिताय कान्ताय त्वरितं ययौ शीघ्रतरमगमत् । किंभूता सखी अपरया कयाचिन्नायिकया अगदितापि अप्रहितापि, किंभूतयाऽपरया मानपरयाऽहङ्कारतत्परया । यतः कारणात् सुकृतां पुण्यवतां कृतिनः कुशलाः सुहृदो मित्राणि किमु नोदिताः प्रेरिताः सन्तः हितार्थकृतो भवन्ति । किन्तु स्वाभीष्टकार्यमनुक्तमपि सफलत्वं नयन्तीत्यर्थः ॥ ५७ ॥

दयितायेति ॥ मानपरया अभिमानवत्या अत एवाऽपरया नायिकया अगदिता दयितमानयेत्यनुक्ता सखी दयिताय दयितमानेतुम् । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । त्वरितं शीघ्रं ययौ । अन्यथा मरणशङ्केति भावः । तथा हि—सुष्ठु शोभनं हृदयं येषां ते सुहृदो मित्राणि । 'सुहृद्दुर्हृदौ मित्राऽमित्रयोः' इति निपातः । चोदिताः प्रेरिताः सन्तः सुहृदां प्रियो हृद्यः हितः श्रेयस्करश्च योऽर्थस्तं कुर्वन्तीति प्रियहितार्थकृतः, कृतमेषामस्तीति कृतिनः कृतकृत्या भवन्ति किमु, किन्तु चोदनां विनैवेति भावः । अर्थान्तरन्यासः । नायिका च पूर्ववत् ॥ ५७ ॥

त्रिभिर्विशेषकम्—

**प्रतिभिद्य कान्तमपराधकृतं यदि तावदस्य पुनरेव मया ॥**
**क्रियतेऽनुवृत्तिरुचितैष(३) ततः कलयेदमानमनसं सखि ! माम् ॥५८॥**
**अवधीर्य धैर्यकलिता दयितं विदधे विरोधमथ तेन सह ॥**
**तव गोप्यते किमिव कर्तुमिदं न सहाऽस्मि साहसमसाहसिकी ॥ ५९ ॥**

---

(१) चोदिताः । (२) सुहृदाम् । (३) ०रुचितैव ।

**तदुपेत्य मा स्म तमुपालभथाः किल दोषमस्य न हि विद्म वयम् ॥**
**इति सम्प्रधार्य रमणाय वधूर्विहितागसेऽपि विससर्ज सखीम् ॥ ६० ॥**

**प्रतिभिद्येत्यादि ॥ तदुपेत्येति ॥** वधूर्नायिका विहितागसेऽपि कृतापराधायाऽपि रमणाय कान्ताय सखीं विससर्ज वयस्यां प्राहिणोत्, किं कृत्वा इति पूर्वोक्तप्रकारेण सम्प्रधार्य विचार्य । इति किं—हे सखि ! तं कान्तमुपेत्य तत्तस्मात्कारणात् मा स्म उपालभथाः उपालम्भनवचो मा वोचः । किलेत्यलीके, वयमस्य कान्तस्य दोषं न विद्म अपकारं न जानीमः । **प्रतिभिद्येति ॥** हे सखि ! तावद्यदि मया पुनरेव अस्य कान्तस्य उचिता योग्या अनुवृत्तिः क्रियते चित्ताराधनं विधीयते, तत एष भर्ता माम् अमानमनसमहङ्कारविवर्जितचित्तां कलयेत् विचारयेत् । किं कृत्वा अपराधकृतं सापराधं कान्तं प्रतिपद्य आवर्ज्य । **अवधीर्येति ॥** हे सखि ! अहं दयितं कान्तमवधीर्य अवगणय्य धैर्यकलिता सती धीरत्वेन रक्षिता सती तेन कान्तेन सह विरोधं विदधे कलहं कृतवती । अथ वा हे सखि ! तव किमिव गोप्यते कथमिव अपलप्यते, इदं साहसं कर्तुं विधातुं न सहाऽस्मि न सोढाऽस्मि । अनुचिते कर्मणि प्रवृत्तिः साहसं चापलं च । किंलक्षणा अहम् । असाहसिकी असमर्था । त्रिभिर्विशेषकम् ॥ ५८–६० ॥

अथ काचित्कलहान्तरिता कान्तं प्रति त्रिभिर्दूतीं सन्दिशति—

**प्रतिभिद्येति ॥** अपराधकृतमागस्कारिणं कान्तं प्रतिभिद्य निराकृत्य पुनर्मयैवाऽस्यानुवृत्तिरनुसरणं क्रियते यदि तावदुचितैव, पतिव्रतानां प्राणेश्वरचित्तानुवृत्तेर्धर्मत्वादिति भावः । किन्तु हे सखि ! ततोऽनुवृत्तेर्मामानमनसमभिमानहीनचित्तां कलयेन्मन्येत ॥ ५८ ॥

तर्ह्यलाघवाय विगृह्यैव स्थीयतां तत्राह—

**अवधीर्येति ॥** धैर्यकलिता कलितधैर्या सती । 'वाऽऽहिताग्न्यादिषु' इति निष्ठायाः परनिपातः । दयितमवधीर्य तिरस्कृत्य तेन सह विरोधं विदधे करोमीति चेत् । दधातेः कर्तरि लट् । हे सखि ! तव किमिव गोप्यते निगूह्यते । न किञ्चिदित्यर्थः । किन्तु कथ्यत एवेति कथयति । सहसा बलेन वर्तत इति साहसिकी । 'ओजःसहोऽम्भसा वर्तते' इति ठक् । सा न भवतीत्यसाहसिकी । अहमिति शेषः । इदं साहसं विरोधं विरोधाचरणरूपं साहसकृत्यं कर्तुम् । 'शकधृष—' इत्यादिना तुमुन् । सहत इति सहा समर्था । पचाद्यच् । नास्मि । अत्राऽसाहसिकत्वस्य विशेषणगत्या साहसाऽसहनहेतुत्वोक्तेः पदार्थहेतुकं काव्यलिङ्गमलङ्कारः॥

तर्हि किमत्र कार्यमत आह—

**तदिति ॥** तत्तस्मात् तं वल्लभमुपेत्य मा स्मोपालभथाः नोपालभस्व । तद्दोषं न गणयेरित्यर्थः । 'स्मोत्तरे लङ् च' इत्युपाङ्पूर्वाल्लभेर्लङ्, 'न माङ्योगे' इत्यट्प्रतिषेधः । ननु सापराधः कथं नोपालभ्यस्तत्राह—वयमस्य दोषमपराधं न विद्म किल । अजानाना इव तिष्ठाम इत्यर्थः । कार्यार्थिनः कुतो गर्व इति भावः । 'विदो लटो वा' इति णलाद्यादेशः । इति सम्प्रधार्य निश्चित्य वधूर्नायिका विहितागसे कृतापराधायाऽपि रमणाय प्रेयसे । क्रियाग्रहणाच्चतुर्थी । सखीं विससर्ज प्राजिघाय । विरहाऽसहिष्णुतयेति भावः । एषा कलहान्तरिता प्रौढा च ॥ ६० ॥

**ननु सन्दिशेति सुदृशोदितया त्रपया न किञ्चन किलाऽभिदधे ॥**
**निजमैक्षि मन्दमनिशं निशितैः कृशितं शरीरमशरीरशरैः ॥ ६१ ॥**

**ननु सन्दिशेति ॥** कयाचित् सुदृशा नायिकया त्रपया लज्जया किलेत्यभिप्राये, किञ्चन न अभिदधे किमपि न जगदे, किंभूतया सुदृशा सख्या वयस्यया इति वक्ष्यमाणमुदितया गदितया । इति किं—नन्विति सम्बोधने, हे सखि ! त्वं सन्दिश आदेशं देहि

कान्ताय गमनादेशं कथय। गच्छाम्यहमित्यर्थः। इत्युक्तया केवलमिदं निजमात्मीयं शरीरमैक्षि आलोकितम्। किंभूतं शरीरम् अशरीरशरैः कन्दर्पबाणैः क्रशितं कृशत्वं प्रापितं, किंभूतैः शरैः निशितैस्तीक्ष्णैः, चित्तभेदनादित्यर्थः॥ ६१ ॥

ननु सन्दिशेति॥ ननु सन्दिश सन्देशं ब्रूहीत्युदितया दूत्या कथितया सुदृशया नायिकया कर्ण्या त्रपया हेतुना किञ्चन नाऽभिदधे किल नाऽभिहितं खलु। किन्तु निशितैरशरीरशरैरनङ्गबाणैरनिशं क्राशितं कृशीकृतम्। कृशशब्दात् 'तत्करोति' इति ण्यन्तात्कर्मणि क्तः। णाविष्ठवद्भावे 'र ऋतो हलादेर्लघोः' इति ऋकारस्य रेफादेशः। निजं शरीरं मन्दमैक्षि ईक्षितम्। एषापि कलहान्तारिता मध्यमा च। त्रपया निजहृदयाऽनभिधानान्निजशरीरनिरीक्षणेन स्वावस्थानिवेदनाच्च तुल्यलज्जास्मरत्वावगमादिति। इयं च पञ्चमी कार्श्याख्या कामावस्था।

दृङ्मनःसङ्गसङ्कल्पाज्जागरः कृशताऽरतिः।
ह्रीत्यागोन्मादमूर्छान्ता इत्यनङ्गदशा दश' ॥

इति॥ ६१ ॥

**ब्रुवते स्म दूत्य उपसृत्य नरान्नरवत्प्रगल्भमतिवल्गु(१)गिरः॥**
**सुहृदर्थमीहितमजिह्मधियां प्रकृतेर्विराजति विरुद्धमपि॥ ६२ ॥**

ब्रुवते स्मेति॥ दूत्यः सञ्चारिकाः नरान् उपसृत्य वल्लभान् प्राप्य ब्रुवते स्म बभाषिरे, किंभूताः दूत्यः नरवत्प्रगल्भमतिवल्गुगिरः पुंवदुदारबुद्धियुक्तवाचः। ननु स्त्रीणामौदार्यं दूष्यं नेत्याह—यतः कारणात् अजिह्मधियामकुटिलबुद्धीनां सुहृदर्थमीहितं मित्रार्थं चेष्टितं प्रकृतेः स्वभावस्य विरुद्धमपि अयोग्यमपि विराजति शोभते। आत्मनोऽयोग्यमपि मित्रार्थं कुर्वन् सर्वोऽपि न दूष्य इति भावः॥ ६२ ॥

इत्थं नायिकाभिरुपदिष्टा दूत्यः किमकुर्वन्नित्यत आह—

ब्रुवते स्मेति॥ प्रगल्भा धृष्टाः मतिगर्भाः प्रतिभासाराश्च गिरो यासां ता दूत्यो नरान् पुरुषानुपसृत्य नरवत् नरैः पुंभिस्तुल्यम्। 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः। ब्रुवते स्म। न चैतावता वैजात्यं दूषणमित्यर्थान्तरन्यासेनाह—सुहृदर्थमिति। तथा हि—अजिह्मधियामकुटिलबुद्धीनां सम्बन्धि सुहृदे सुहृदर्थम्। अर्थेन सह नित्यसमासः सर्वलिङ्गता चेति वक्तव्यम्। ईहितं चेष्टितं प्रकृतेर्विरुद्धमपि स्वभावविपरीतमपि विराजति शोभते। तस्मान्न धार्ष्ट्ये दोष इत्यर्थः॥ ६२ ॥

सप्तभिः कुलकम्—

**मम रूपकीर्तिमहरद्भुवि यस्तमनु(२)प्रसक्तहृदयेयमिति॥**
**त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु तां मदनः॥ ६३ ॥**
**तव सा कथासु परिघट्टयति श्रवणं यदङ्गुलिमुखेन मुहुः॥**
**घनतां ध्रुवं नयति तेन भवद्गुणपूगपूरितमतृप्ततया॥ ६४ ॥**
**उपताप्यमानमलघूष्णिमभिः श्वसितैः सितेतरसरोजदृशः॥**
**द्रवतां न नेतुमधरं क्षमते नवनागवल्लिदलपूग(३)रसः॥ ६५ ॥**
**दधति स्फुटं रतिपतेरिषवः शिततां यदुत्पलपलाशदृशः॥**
**हृदयं निरन्तरबृहत्कठिनस्तनमण्डलावरणमप्यभिदन्॥ ६६ ॥**
**कुसुमादपि स्मितदृशः सुतरां सुकुमारमङ्गमिति नाऽपरथा॥**
**अनिशं निजैरकरुणः करणं(४) कुसुमेषुरुत्तपति यद्विशिखैः॥ ६७ ॥**

(१) गर्भ। (२) ०स्तदनुप्रविष्ट। (३) राग। (४) करुणं।

विषतां निषेवितमपक्रियया समुपैति सर्वमिति सत्यमदः ॥
अमृतस्रुतोऽपि विरहाद्भवतो यदमूं दहन्ति हिमरश्मिरुचः ॥ ६८ ॥
उदितं प्रियां प्रति सहार्दमिति श्रदधीयत प्रियतमेन वचः ॥
विदितेङ्गिते हि पुर एव जने सपदीरिताः खलु लगन्ति गिरः ॥ ६९ ॥

ममेत्यादि ॥ उदितमिति ॥ प्रियतमेन कान्तेन वचः वचनं श्रदधीयत मेने । किंभूतं वचः प्रियां वल्लभां प्रति इति वक्ष्यमाणप्रकारेणोदितं सख्या प्रोक्तं, पुनः किंभूतं वचः सहार्दं दीनम् । युक्तोऽयमर्थः, खलु यस्मात्कारणात् अथ वा खलु निश्चितं, जने विषये गिरो लगन्ति वाचः सिद्धिं प्राप्नुवन्ति । किंभूते जने विदितेङ्गिते परिज्ञातचेष्टिते, किंभूताः गिरः सपदि वेगेन पुर एव उदीरिताः पुरस्ताज्ज्ञापिताः । काले प्रोक्तं वचनं लगत्येवेति भावः । ममेति ॥ ननु सख्या किं प्रोक्तमित्याह—यत्, हे कान्त ! खलु निश्चितं, मदनः कामः तां सखीं सुतरामतिशयेन क्षिणोति पीडयति, किंभूतो मदनः निरस्तदयः दयारहितः । कस्मात् उत्प्रेक्ष्यते—त्वयि विषये इति मत्सरादिव इति खेदादिव पीडयति । इति कः खेदः यत्, इयमङ्गना तं पुरुषमनु लक्ष्यीकृत्य प्रसक्तहृदया आसक्तचित्ता वर्तते । तं कं यः पुमान् भुवि पृथिव्यां मम रूपकीर्तिमहरत् मदीयं सौन्दर्ययशो निराचकार । इति खेदादिव निर्दयः सन् तां कामः क्षिणोतीत्यर्थः । तव सेति ॥ हे कान्त ! सा अङ्गना यत् तव कथासु वार्तासु सतीषु अङ्गुलिमुखेन अङ्गुल्यग्रेण मुहुर्वारंवारं श्रवणं परिघट्टयति कर्णं कण्डूयते, तेन हेतुनाऽनुमीयते-यद्, ध्रुवमुत्प्रेक्षायां, घनतां नयतीव परिपूर्णतां प्रापयतीव । किंभूतं श्रवणं भवद्गुणपूगपूरितं त्वद्गुणसमूहसम्पूर्णम् । ननु यदि परिपूर्णं तर्हि कथं घनतां नयति, कया अतृप्ततया असन्तोषित्वेन । अङ्गना हि प्रियसङ्कथायां हर्षवशात् कर्णं परिघट्टयतीत्येतत्प्रेमलक्षणम् । उपताप्यमानमिति ॥ हे कान्त ! नवनागवल्लिदलपूगरसः नूतनताम्बूलीपत्रक्रमुकरसः सितेतरसरोजदृशः नीलोत्पललोचनायाः अङ्गनायाः अधरोष्ठं द्रवतां नेतुमार्द्रतां प्रापयितुं न क्षमते न समर्थो भवति । हे कान्त ! ताम्बूलीदलरसः तस्याः मत्सख्याः ओष्ठमार्द्रं न करोतीत्यर्थः। किंभूतमधरं श्वसितैर्निःश्वासैः उपताप्यमानं प्रताप्यमानं, किंभूतैः श्वसितैः अलघुर्गरीयान् उष्णिमा उष्णत्वं येषु तानि अलघूष्माणि तैः प्रभूतोष्मसक्तैः। उष्णत्वस्थाने आर्द्रत्वं न भवतीत्यर्थः। दधतीति॥ हे कान्त ! स्फुटं निश्चितं रतिपतेः कामस्य इषवो बाणाः तीक्ष्णत्वं दधति धारयन्ति । कथमेवं प्रतीयते-यत् उत्पलपलाशदृशः इन्दीवरपत्रनयनायाः अङ्गनायाः हृदयमभिदन् चित्तं विदारयामासुः । किंभूतं हृदयं निरन्तरबृहत्कठिनस्तनमण्डलावरणमपि अतिस्थूलकठिनकुचबिम्बावरणयुक्तमपि । कुसुमादपीति ॥ हे वल्लभ ! इति न अपरथा एतत् नालीकम् । इति किं—यत्, स्मितदृशः विकसितनेत्रायाः अङ्गं वपुः कुसुमादपि पुष्पादपि सुतरामतिशयेन सुकुमारं कोमलम् । कथमेवं प्रतीयते इत्याह—यत् कुसुमेषुः पुष्पबाणोऽपि करणं शरीरं निजैः विशिखैः स्वैरिषुभिः कृत्वा अनिशं नित्यमपि उत्तपति पीडयति। किंभूतः कामः अकरुणः निर्दयः, यत् पुष्पमया अपि बाणाः तस्या अङ्गं पीडयन्ति । तदेतावता कुसुमादपि सुकुमारमिति सत्यमेवेत्यर्थः । विषतामिति ॥ हे कान्त ! अदः एतत् इति हेतोः सत्यम् इति निदर्शनात्तथ्यमिदम् ।

अदः किं—यत् अपक्रियया वैपरीत्येन निषेवितं सेवितं सर्वं विषतामुपेति विषतुल्यतां प्राप्नोति, यत् हिमरश्मिरुचः चन्द्रकिरणाः अमूमङ्गनां दहन्ति उपतापयन्ति । किंभूता हिमरश्मिरुचः अमृतस्रुतोऽपि पीयूषमुचोऽपि, कस्माद्दहन्ति भवतो विरहात् तव वियोगात् । चन्द्रद्युतयोऽपि भवद्विरहात् तां दहन्तीति भावः । सप्तभिः कुलकम् ॥ ६३–६९ ॥

अथ काचिद् दूती कञ्चित्प्रियं प्रति सप्तभिः प्रार्थयते—

**ममेति** ॥ यो भुवि मम रूपकीर्तिं सौन्दर्यं प्रथममहरत् इयं त्वत्प्रिया तदनुप्रविष्टहृदया तस्मिन्नासक्तचित्तेति अतो हेतोस्त्वयि मत्सरादिव मदनो निरस्तदयो निष्कृपः सन् तां त्वत्प्रियां सुतरां क्षिणोति क्षपयति खलु । एतेन कार्श्यावस्थोक्ता । अत्र साक्षात्प्रतिपक्षभूतनायकपीडासमर्थस्य मदनस्य तदीयनायिकापीडनोक्त्या प्रत्यनीकालङ्कारः । स च त्वयि मत्सरादिवेति हेतूत्प्रेक्षोत्थापित इति सङ्करः ।

'बलिनः प्रतिपक्षस्य प्रतीकारे सुदुष्करे ।
यस्तदीयतिरस्कारः प्रत्यनीकं तदुच्यते' ॥

इति लक्षणात् ॥ ६३ ॥

**तव सेति** ॥ सा त्वत्प्रिया तव कथासु गुणकीर्तनेषु मुहुरङ्गुलिमुखेनाङ्गुल्यग्रेण श्रवणं श्रोत्रविवरं परिघट्टयति स्फालयतीति यत् । यदृच्छयेति शेषः । तेन परिघट्टनेन भवद्गुणपूगपूरितं श्रवणम् अतृप्ततया तावद् गुणग्रहेणनाऽसन्तुष्टतया घनतां नयति । बहुतण्डुलमानार्थं प्रस्थादिवद् भूयो गुणप्रवेशाय श्लेषयतीत्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् । अत्र कण्डूविनोदनार्थं श्रोत्रघट्टने घनतानयनमुत्प्रेक्ष्यते ॥ ६४ ॥

**उपताप्यमानमिति** ॥ अलघुरन्तःसन्तापोपाधिक उष्णमा उष्णित्वं येषां तैः श्वसितैर्निःश्वसैरुपताप्यमानं सितेतरसरोजदृशो नीलोत्पलाक्ष्या अधरं नवनागवल्लिदलानां ताम्बूलदलानां रागरसो रञ्जनद्रवो द्रवतामार्द्रतां नेतुं न क्षमते न शक्नोति । एतेन ज्वरावस्थोक्ता । अत्र द्रवत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ६५ ॥

**दधतीति** ॥ रतिपतेरिषवः शिततां नैशित्यं दधाति । स्फुटमित्युत्प्रेक्षायाम् । यत् यस्मान्निरन्तरं नीरन्ध्रं बृहत्कठिनं च यत्स्तनमण्डलं तदेवावरणं वर्म यस्य तत्तदपि उत्पलपलाशदृश उत्पलदलाक्ष्याः हृदयमाभिदन् भिन्दन्ति स्म । भिदेर्लुङि 'इरितो वा' इति च्लेरङादेशः । सावरणमपि भिन्नमिति विरोधोत्थापितेयं स्मरशरनैशित्योत्प्रेक्षा । तया च रन्ध्रान्वेषिणा कामेन निपीड्यमानायास्तस्यास्त्वद्विरहो जीवितसंशयमापादयतीति वस्तु द्योत्यते ॥ ६६ ॥

**कुसुमादिति** ॥ स्मितदृशः स्मेराक्ष्या अङ्गं कुसुमादपि सुतरां सुकुमारं कोमलमितीदमपरथा अन्यथा न । किन्तु सत्यमेवेत्यर्थः । यत् यस्मात्कुसुमेषुरकरुणो निष्कृपः सन् निजैर्विशिखैर्बाणैः । 'पृषत्कबाणविशिखाः' इत्यमरः । कुसुमैरेवेत्यर्थः । करुणं दीनं यथा तथा अनिशं नित्यमुत्तपति । तापयतीत्यर्थः । तपतिरयं भौवादिकः सकर्मकः । कुसुमाधिकसौकुमार्याभावे कुसुमैः पीड्यत इति कुसुमाधिकसौकुमार्यगुणोत्प्रेक्षा नाऽपरथेति व्यञ्जकप्रयोगाद्वाच्या ॥ ६७ ॥

**विषतामिति** ॥ अपक्रियया विपरीतप्रयोगेण निषेवितमुपयुक्तं सर्वम् । अमृतमपीति भावः । विषतां विषवदहितत्वं समुपैति इत्यद इदं विषत्वं सत्यं ध्रुवम् । यत् यस्मादमृतस्रुतोऽपि । स्रवतेः क्विपि तुक् । हिमरश्मिरुचश्चन्द्रपादाः भवतो विरहाद्धेतोः, त्वया विना सेवनादित्यर्थः । अमूं त्वत्प्रियां दहन्ति । याः पूर्वं त्वया सह सेवनादाह्लादयन्निति भावः । एतेन विषयद्वेषरूपा अरत्यवस्थोक्ता । अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६८ ॥

**उदितमिति** ॥ प्रियां प्रति प्रियामुद्दिश्य हृदयस्येदं हार्दं प्रेम । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इत्यमरः । 'तस्येदम्' इत्यण्प्रत्ययः । 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदयस्य हृदादेशः । सहार्दं सस्नेहमित्युदितम् । वदेः कर्मणि क्तः, 'वचिस्वपि—' इत्यादिना सम्प्रसारणम् । वचो दूतीवाक्यं प्रियतमेन श्रद्धीयत विश्वसितम् । दधातेः कर्मणि लङ् । श्रदन्तरोरुपसर्गवद्वचनात् श्रच्छब्दस्य प्राक्प्रयोगः । हि यस्मात्

पुरः पूर्वमेव विदितेङ्गिते विदितपराऽभिप्राये जने । इङ्गितं हृद्गतो भावः । सज्जने समुदीरिता गिरः सपदि लगन्ति सज्जन्ति खलु । स्वयं प्रियाहृदयवेदित्वात् । स्वबुद्धेः संवादेन दूतीकथितं प्रियाविरहदुःखं विश्वासेत्यर्थः । अर्थान्तरन्यासः । एषा कलहान्तरिता । अत एव मानाख्यो विप्रलम्भः शृङ्गारः ।

'पूर्वानुरागमानाख्यप्रवासकरुणात्मना ।
विप्रलम्भाभिधानोऽयं शृङ्गारः स्याच्चतुर्विधः' ॥

इति चतुर्थोऽयमुक्तः ॥ ६९ ॥

**दयिताहृतस्य युवभिर्मनसः परिमूढतामिव गतैः प्रथमम् ॥**
**उदिते ततः सपदि लब्धपदैः क्षणदाकरेऽनुपदिभिः प्रययेः ॥ ७० ॥**

**दयिताहृतस्येति ॥** युवभिः पुरुषैः प्रयये गतं, किंभूतैः युवभिः मनसः चित्तस्य अनुपदिभिः अनुयायिभिः । प्रथमं मनोभिर्गतं पश्चान्मनसां पृष्ठतो युवभिर्गतमित्यर्थः । किंभूतस्य मनसः दयिताहृतस्य वल्लभाचोरितस्य, अपरं किंभूतैर्युवभिः प्रथमं पूर्वं परिमूढतामिव गतैः अज्ञानत्वं प्राप्तैरिव अन्धकारवशादित्यर्थः, अथ पश्चात् सपदि वेगेन लब्धपदैः प्राप्तगमनैः, क्व सति क्षणदाकरे चन्द्रे उदिते सति । लब्धगतिचित्तमार्गैरित्यर्थः ॥

दयिताहृतस्येति ॥ प्रथमं चन्द्रोदयात्प्राक् परिमूढतां निजमनोऽपहर्तृमार्गाऽनभिज्ञतां गतैः ततः पश्चात् क्षणदाकरे चन्द्रे उदिते सति सपदि लब्धपदैर्दृष्टचोरपदचिह्नैः दयिताभिर्हृतस्याकृष्टस्यापहृतस्य च मनसोऽनुपदिभिरन्वेष्टृभिः । अन्विष्याद्भिरिवेत्यर्थः । अत एव गम्योत्प्रेक्षा प्रागवलम्बितधैर्यत्यागनिमित्ता 'अनुपद्यन्वेष्टा' इति निपातः । 'अन्वेष्टाऽनुपदी प्रोक्ता' इति वैजयन्ती । युवभिः प्रयये प्रयातम् । यातेर्भावे लिट् । अत्रोक्तपदान्वेषणोत्प्रेक्षया यूनां चोरग्राहिरूपकं गम्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ७० ॥

**निपपात सम्भ्रमभृतः श्रवणादसितभ्रुवः प्रणदिताऽलिकुलम् ॥**
**दयितावलोकविकसन्नयनप्रसरप्रणुन्नमिव वारिरुहम् ॥ ७१ ॥**

**निपपातेति ॥** असितभ्रुवोऽङ्गनायाः श्रवणात् कर्णात् वारिरुहं निपपात कमलं पतितम् । किंभूतायाः अङ्गनायाः सम्भ्रमभृतः संवेगधारिण्याः, किंभूतं वारिरुहं प्रणदिताऽलिकुलं शब्दितभ्रमरगणम् । पुनः किंभूतम्, उत्प्रेक्ष्यते—दयितावलोकविकसन्नयनप्रसरप्रणुन्नमिव वल्लभदर्शनविकस्वरविलोचनविस्तारप्रेरितमिव ॥ ७१ ॥

अथ यूनां गृहप्राप्त्यनन्तरं वृत्तान्तं वर्णयति—

निपपातेति ॥ सम्भ्रमभृतः प्रत्युत्थानसम्भ्रमिण्याः असितभ्रुवोऽङ्गनायाः प्रणादिताऽलिकुलं गुञ्जदलिपुञ्जम् । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । वारिरुहं श्रवणोत्पलं दयितावलोकेन विकसतो विस्तारं गच्छतो नयनस्य प्रसरेण प्रसारेण प्रणुन्नमिव । पूर्ववण्णत्वम् । निपपात । तथा सम्भ्रान्तमित्यर्थः । अत्र सम्भ्रमहेतुकस्य कर्णोत्पलपातस्य नयनप्रसारहेतुकत्वमुत्प्रेक्ष्यते । एषा च हृष्टा ॥ ७१ ॥

**उपनेतुमुन्नतिमतेव दिवं कुचयोर्युगेन तरसाऽऽकलिताम् ॥**
**रभसोत्थितामुपगतः सहसा परिरभ्य कश्चन वधूमरुधत् ॥ ७२ ॥**

**उपनेतुमिति ॥** कश्चित्तरुणः वधूमङ्गनामरुधत् रुरोध । किं कृत्वा सहसा वेगेन परिरभ्य आलिङ्ग्य, किंभूतो वल्लभः उपगतः गृहागतः, किंभूतां वधूं रभसेन वेगेनोत्थितां, पुनः किंभूतां वधूं कुचयोर्युगेन तरसा आकलितां स्तनयोर्युग्मेन बलात्कारेण सम्बद्धां, किंभूतेन कुचयोर्युगेन उन्नतिमता ऊर्ध्वमुखेन । किं कर्तुमुन्नतिमता, उत्प्रेक्षते—दिवं स्वर्गमुपनेतुमिव ग्रहीतुमिव । ऊर्ध्वमुखेन हि स्वर्गं किल स्तनौ वधूं करिष्यतः(?) ॥ ७२ ॥

उपेमतुमिति ॥ सहसोपगतो हठादागतः कश्चन युवा अत एव रभसेनोत्थितामत एवोन्नतिमता कुचयोर्युगेन करणेन दिवमाकाशमुपनेतुमिवोर्ध्वमुत्क्षेप्तुमिवेति फलोत्प्रेक्षा उत्थाननिमित्तेत्यगुणनिमित्ता। तरसा बलेनाऽऽकलितां व्याक्षिप्तां वधूं प्रियां परिरम्भ्याश्लिष्याऽरुधत् रुद्धवानुपवेशितवान्। ऊर्ध्वोत्क्षेपान्निवारितवानिति चार्थः। रुधेर्लुङि 'इरितो वा' इति विकल्पात् च्लेरङादेशः। एषा हृष्टा रोमाञ्चितायनुभाववती च॥७२॥

**अनुदेहमागतवतः प्रतिमां परिणायकस्य गुरुमुद्वहता ॥**

**मुकुरेण वेपथुमता(१)ऽतिभरात्कथमप्यपाति न वधूकरतः ॥ ७३ ॥**

**अनुदेहमिति** ॥ मुकुरेण दर्पणेन वधूकरतः अङ्गनाहस्ततः कथमपि महता कष्टेनापि न अपाति न पतितम्। किंभूतेन मुकुरेण वेपथुमता सकम्पेन, कस्मादतिभरात् भाराक्रान्तत्वात। ननु भारः कथं बभूवेत्याह—किं कुर्वता मुकुरेण परिणायकस्य प्रतिमामुद्वहता वल्लभस्य प्रतिबिम्बं धारयता, किंभूतां प्रतिमां गुरुं महतीं, किंभूतस्य परिणायकस्य अनुदेहमागतवतः देहस्य पश्चात्प्राप्तवतः। आजगामेति आगतवान् तस्य। एतेन भर्तृदर्शनात् सकम्पोऽपि दर्पणो हस्तान्न मुक्त इति भावः॥ ७३ ॥

अनुदेहमिति ॥ अनुदेहं देहस्य पश्चात्। 'अव्ययं विभक्ति—' इत्यादिना पश्चादर्थेऽव्ययीभावः। आगतवतः परिणायकस्य परिणेतुः। वोढुरित्यर्थः। नयतेर्ण्वुल् प्रत्ययः। 'उपसर्गादसमासेऽपि—' इति णत्वम्। गुरुं पूज्यां भारवतीं च प्रतिमां प्रतिबिम्बमुद्वहता पश्चात्स्थितस्यापि तदाभिमुख्यादिति भावः। मुकुरेण दर्पणेन कर्त्रा। 'दर्पणे मुकुरादर्शौ' इत्यमरः। वेपथुभृतो नवोढतया भयशृङ्गाराभ्यां कम्पमानात् अति अतिमात्रो भरो यस्य तस्मादतिभरात्। प्रतिबिम्बगुरुमुकुरधारणादिति भावः। वध्वा नवोढायाः करतः पाणितलात्। पञ्चम्यास्तसिल्। कथमपति नाऽपाति न पतितम्। महता प्रयत्नेन धारित इत्यर्थः। भावे लुङ्। एषा च मुग्धा। अत्र वधूकरस्य भाराऽसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः। गुरुमिति श्लेषेस्थापितेति सङ्करः॥ ७३ ॥

**अवनम्य वक्षसि निमग्नकुचद्वितयेन गाढमुपगूढवता ॥**

**दयितेन तत्क्षणगल(२)द्रशनाकलकिङ्किणीरवमुदासि वधूः ॥ ७४ ॥**

**अवनम्येति** ॥ दयितेन कान्तेन वधूः अङ्गना उदासि उत्पातिता। कथं यथा भवति तत्क्षणगलद्रशनाकलकिङ्किणीरवं यथा भवति तथा तत्कालं गलन्त्याः पतन्त्याः रशनायाः मेखलायाः कलो मधुरः किङ्किणीरवः क्षुद्रघण्टिकाध्वनिर्यत्र क्रियायां तथा भवत्येवं, रुशब्दमेखलं यथा भवतीत्यर्थः। किं कुर्वता दयितेन गाढमुपगूढवता भृशमालिङ्गितवता, किं कृत्वा वक्षसि उरसि विषये अवनम्य नम्रीभूय, पुनः किंभूतेन दयितेन निमग्नकुचद्वितयेन ब्रुडितस्तनमण्डलेन॥ ७४ ॥

अवनम्येति ॥ अवनम्य गाढमुपगूढवता आश्लिष्टवता, अत एव वक्षसि निमग्नकुचद्वितयेन दयितेन तत्क्षणे चलन्नुद्गच्छन् रशनायाः कलकिङ्किणीरवो यस्मिन्कर्मणि तद्यथा तथा वधूरङ्गना उदासि उत्क्षिप्ता। अस्यतेः कर्मणि लुङ्। एषा च हृष्टा रोमाञ्चाद्यनुभाववती च। स्वभावालङ्कारः॥ ७४ ॥

**कररुद्धनीवि दयितोपगतौ हसितं(३) त्वराविरहितासनया ॥**

**क्षणदृष्टहाटकशिलासदृशस्फुरदूरुभित्ति वसनं ववसे ॥ ७५ ॥**

**कररुद्धनीवीति** ॥ कयाचिदङ्गनया वसनं ववसे वस्त्रं परिहितम्। कथं यथा भवति क्षणं मुहूर्तं दृष्टा विलोकिता हाटकशिलासदृशी सुवर्णस्तम्भसमा स्फुरन्ती देदीप्यमाना ऊरुभित्तिः जङ्घाप्रदेशो यत्र वसने, किंभूतं वसनं हसितं स्रस्तं, पुनः किंभूतं वसनं

(१) वेपथुभृतो०। (२) चल०। (३) गलितं।

करुद्धनीवि हस्तावष्टब्धमेखलं, यतः किंभूतया त्वरया वेगेन विरहितमासनं पीठं यया सा तया वेगत्यक्तासनया, क्व दयितोपगतौ कान्तप्राप्तौ सत्याम् ॥ ७५ ॥

करुद्धनीवीति ॥ दयितोपगतौ प्रियागमने सति अत एव त्वरया विरहितं त्यक्तमासनं यया तया । उत्थितयेत्यर्थः । कयाचिदिति शेषः । अत एव गलितं स्रस्तमत एव करुद्धनीवि करगृहीतबन्धं वसनं क्षणं दृष्टा हाटकशिलासदृशी हेमशिलाप्रतिमा स्फुरन्ती ऊरुभित्तिरूरुदेशो यस्मिन्कर्मणि तद्यथा तथा । 'हिरण्यं हेम हाटकम्' इत्यमरः । ववसे आच्छादितम् । वस्तेराच्छादनार्थात्कर्मणि लिट् । ऊरुभित्तिरि वे-त्युपमितसमासः । अत्रोपमयोः संसृष्टिः ॥ ७५ ॥

पिदधानमन्वगुपगम्य दृशौ ब्रुवते जनाय वद कोऽयमिति ॥
अभिधातुमध्यवससौ न गिरा पुलकैः प्रियं नववधूर्न्यगदत् ॥ ७६ ॥

पिदधानमिति ॥ नववधूर्नवपरिणीताङ्गना जनाय सखीलोकाय प्रियं कान्तं गिरा वाण्या अभिधातुं वक्तुं न अध्यवससौ नोपक्रमं चक्रे वाण्या कथनाय समर्था न बभूव, पुनः पुलकैः रोमाञ्चैः कृत्वा न्यगदत् कथयामास । किंभूतं प्रियम् अन्वक् उपगम्य पश्चा-दागत्य दृशौ पिदधानं चक्षुषी आच्छादयन्तं, किंभूताय जनाय इति ब्रुवते इति भाषमा-णाय। इति किं-यत् , हे वधुः ! वद कथय कोऽयम् असौ कः । इत्युक्ते लज्जावशात् प्रियो गिरा न कथितः, किन्तु रोमाञ्चैः कृत्वा कथित इति भावः ॥ ७६ ॥

पिदधानमिति ॥ नववधूर्नवोढा अन्वक् पश्चादुपगम्य दृशौ पिदधानं छादयन्तं प्रियं 'दृष्टिच्छादकः कः वद' इति ब्रुवते पृच्छते जनाय गिरा वाचा अभिधातुं नाध्यवससौ नोत्सेहे, लज्जयेति भावः । अध्यवपूर्वात् स्यतेः कर्तरि लिट् । किन्तु पुलकैर्न्यगदत् । अत्र प्रियज्ञानस्यार्थस्य लज्जया असंलक्षितस्य पुलकैः प्रका-शनात्सूक्ष्मालङ्कारः । 'असंलक्षितसूक्ष्मार्थप्रकाशः सूक्ष्म उच्यते' इति लक्षणात् ॥ ७६ ॥

उदितोरुसादमतिवेपथुमत् सुदृशोऽभिभर्तृ विधुरं त्रपया ॥
वपुरादरातिशयशंसि पुरः(१) प्रतिपत्तिमूढमपि बाढमभूत् ॥ ७७ ॥

उदितोरुसादमिति ॥ सुदृशोऽङ्गनायाः वपुः शरीरम् अभिभर्तृ भर्तुः समीपे बाढ-मतिशयेन आदरातिशयशंसि अभूत् गौरवाधिक्यशंसकं बभूव । किंभूतं वपुः प्रतिपत्ति-मूढमपि प्रतिपत्तिः उपचारः सत्कारः तत्र मूढमपि । मूढशब्दोऽत्र अज्ञाने वर्तते । पुनः किंभूतं वपुः पुरोऽग्रे लज्जया विधुरं विह्वलम् । तर्हि कथमादरमकथयदित्याह—पुनः किं-भूतम् उदितोरुसादमुत्पन्नगुरुस्नेहं(?), पुनः किंभूतम् अतिवेपथुमत् अतिकम्पयुक्तम् । एतेन सात्त्विकगुणोदयादादरातिशयः कथित इत्यर्थः ॥ ७७ ॥

उदितोरुसादमिति ॥ अभिभर्तृ भर्तृसमक्षम् । 'लक्षणेनाऽभिप्रती आभिमुख्ये' इत्यव्ययीभावः । उदित-उत्पन्न ऊरुसादः ऊर्वोर्निश्चेष्टता यस्य तत् अति वेपथुमदतिकम्पवत् । एतेन विशेषणद्वयेन प्रत्युत्थानालिङ्गन-विरोधेन स्तम्भवेपथू सात्त्विकावुक्तौ । त्रपया विधुरं विलक्षम् । एतेन लज्जासञ्चारिणा प्रियवाक्कुण्ठत्व-मुक्तम् । एवं प्रतिपत्तिमूढमपि इतिकर्तव्यतामूढमपि सुदृशो वपुर्बाढं भृशमादरातिशयशंसि मुखरागादि-लिङ्गैरादरविशेषव्यञ्जकमभूत् । सत्यादरे किमुपचारैरिति भावः ॥ ७७ ॥

परिमन्थराभिरलघूरुभरादधिवेश्म पत्युरुपचारविधौ ॥
स्खलिताभिरप्यनुपदं प्रमदाः प्रणयाऽतिभूमिमगमन् गतिभिः ॥ ७८ ॥

परिमन्थराभिरिति ॥ प्रमदाः गतिभिर्गमनैः कृत्वा प्रणयाऽतिभूमिमगमन् स्नेहा-

---

(१) पुनः ।

ऽतिशयं जग्मुः स्नेहस्य पारं गताः, किंभूताभिर्गतिभिः अनुपदं पदे पदे स्खलिताभिरपि सञ्जातस्खलनाभिरपि। ननु गतयः किंनिमित्तं बभूवुः-पत्युः कान्तस्योपचारविधौ सत्कारविधिनिमित्तं, क्व अधिवेश्म आवासे, अपरं किंभूताभिर्गतिभिः परिमन्थराभिः अलसाभिः, कस्माद्धेतोः अलघूरुभरात् प्रौढजङ्घाभरवशात्। अथ चोक्तिः—अन्योऽपि यः किल पदे सञ्जातस्खलनो भवति, अतिभूमिं स न गच्छति। प्रमदया तु पदे पदे स्खलितगमनैरपि प्रणयातिभूमिः प्राप्तेत्यर्थः। स्नेहस्य पारं गता इति भावः॥ ७८॥

परिमन्थराभिरिति॥ प्रमदा अधिवेश्म निजवेश्मनि पत्युरुपचारविधौ प्रत्युत्थानादिकर्मणि अलघोर्महत उरुभरात्परिमन्थराभिरलसाभिः अनुपदं पदे पदे स्खलिताभिरपि गतिभिः प्रणयाऽतिभूमिं प्रेमप्रकर्षमगमन्। परप्रेमास्पदीभूता इत्यर्थः। प्रत्युत्थानादपि स्खलितगमनमेव पत्युः प्रीतिकरमभूदिति भावः। स्त्रीणां स्खलनं पत्युः प्रीतिकरमिति विरोधाभासोऽलङ्कारः॥ ७८॥

मधुरोन्नतभ्रु ललितं च दृशोः स्वकर(१)प्रयोगचतुरं च वचः॥
प्रकृतिस्थमेव निपुणाऽऽगमितस्फुटनाट्य(२)लीलमभवत्सुतनोः॥७९॥

मधुरोन्नतेति॥ सुतनोर्नायिकायाः वचः वचनं निपुणागमितस्फुटनाट्यलीलमभवत्, निपुणम् आगमिता स्वभ्यस्ता स्फुटा प्रकटा नाट्यलीला नृत्यविलासो यत्र वचसि तत्। किंभूतं वचः प्रकृतिस्थमेव स्वाभाविकमेव, यतः किंभूतं वचः मधुरोन्नतभ्रु उन्नतरम्यभ्रूलतं, पुनः किंभूतं वचः दृशोर्विषये ललितं मनोज्ञं, पुनः किंभूतं स्वकरप्रयोगचतुरं निजकरसञ्चारणदक्षम्। नृत्यमप्येवंविधं भवति—उन्नतभ्रूलतं दृशोर्ललितं करप्रयोगचतुरम्॥ ७९॥

मधुरोन्नतेति॥ मधुरं मनोहरं यथा तथोन्नते उच्चलिते भ्रुवौ यस्मिंस्तन्मधुरोन्नतभ्रु। 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम्। दृशोर्ललितं नयनचेष्टा च सकरप्रयोगं हस्ताभिनयसहितं तच्चतुरं च तद्वचश्च सुतनोः स्त्रियाः प्रकृतिस्थमेव स्वभावसिद्धमेव सदपि निपुणेन निपुणाचार्येणाऽऽगमितमभ्यासितम्। अत एव स्फुटं प्रथितं यन्नृत्यं तस्य लीलेव लीला यस्य तत्तथोक्तमभवदिति निदर्शनालङ्कारः। तया नर्तक्युपमा गम्यते॥ ७९॥

त्रिभिर्विशेषकम्—

तदयुक्तमङ्ग! तव विश्वसृजा न कृतं यदीक्षणसहस्रतयम्॥
प्रकटीकृता जगति येन खलु स्फुटमिन्द्रताऽद्य मयि गोत्रभिदा॥ ८०॥
न विभावयत्यनिशमक्षिगतामपि मां भवानतिसमीपतया॥
हृदयस्थितामपि पुनः परितः कथमीक्षते बहिरभीष्टतमाम्॥ ८१॥
इति गन्तुमिच्छुमभिधाय पुरः क्षणदृष्टिपातविहस(३)द्वदनाम्॥
स्वकरावलम्बनममुक्त(४)गलत्कलकाञ्चि काञ्चिदरुणत्तरुणः॥ ८२॥

तदयुक्तमित्यादि॥ इति गन्तुमिति॥ तरुणो युवा काञ्चिदङ्गनामरुणत् रुरोध। कथं यथा भवति स्वकरावलम्बनं यथा भवत्येवम् अमुक्ता गलन्ती पतन्ती कला काञ्ची कलमेखला यत्र रोधे। सात्त्विकगुणारोधभावात् पतन्ती मेखला न मुक्तेत्यर्थः। भर्त्रा स्वहस्तेन अवलम्बितेति भावः। किंभूतामङ्गनां पुरोऽग्रे इति वक्ष्यमाणमभिधाय उक्त्वा गन्तुमिच्छुं यातुकामाम्, अपरं किंभूतां क्षणदृष्टिपातविहसद्वदनां क्षणमात्रभर्तृनयनपातहसदाननाम्। तदयुक्तमिति॥ इति किमभिधायेत्याह—अङ्गेत्यामन्त्रणे, हे कान्त!

(१) सकर। (२) ०गामितं स्फुटनृत्य। (३) विकस०। (४) विमुक्त।

विश्वसृजा ब्रह्मणा यत् तव भवतः ईक्षणसहस्रतयं नयनसहस्रं न कृतं न सृष्टं, तत् अयुक्तम् अघटमानम् । खलु यस्मात् कारणात् येन त्वया स्फुटं निश्चितमद्य जगति विश्वस्मिन् इन्द्रता प्रकटीकृता देवेन्द्रत्वमाविष्कृतं, किंभूतेन त्वया मयि गोत्रभिदा गोत्रं नाम भिनत्तीति तथा तेन । 'नाम गोत्रं कुलं गोत्रं गोत्राश्च धरणीधराः' । इन्द्रोऽपि गोत्रभृत् पर्वतभेदी । त्वं मयि सपत्नीनाम ददासीत्यर्थः । **न विभावयतीति** ॥ हे कान्त ! भवान् त्वं माम् अक्षिगतामपि चक्षुर्दृष्टामपि न विभावयति न पश्यति, कया अनिशं सदैवाऽतिसमीपतया अतिसामीप्येन । पुनः बहिर्बाह्ये अभीष्टतमामतिवल्लभां कान्तां परितः समन्तात् कथमीक्षते किमु पश्यति, किंभूताममीष्टतमां हृदयस्थितामपि मनसि गतामपि । अथ च भवेदक्षिगतो द्वेष्यः । भवान्मां द्वेष्यभावान्न पश्यतीत्यर्थः । त्रिभिर्विशेषकम् ॥८०-८२॥

अथ कस्याश्चित्सपत्नीनामग्रहणाहूतायाः कान्तोपालम्भं विशेषकेणाह—

**तदयुक्तमिति** ॥ अङ्गेत्यामन्त्रणे, विश्वसृजा विधात्रा तव ईक्षणसहस्रतयं नेत्रसहस्रसमूहः संख्याया अवयवे तयप् । न कृत न मृष्टमिति यत्, तदयुक्तम् । कुतः-येन कारणेन मयि विषये स्फुटं प्रत्यक्षमेव गोत्रभिदा नामभेदिनाऽद्रिभेदिना च । 'गोत्रं नाम्नि कुलेऽप्यद्रौ' इति **यादवः** । त्वयेति शेषः । अद्य इन्द्रता जगति प्रकटीकृता खलु । अत्र गोत्रभिदिति श्लेषानुप्राणितं सहस्राक्षत्वमुत्प्रेक्ष्यते ॥ ८० ॥

**न विभावयतीति** ॥ अनिशमाक्षिगतां चक्षुःसन्निकृष्टामपि द्वेष्यामिति च गम्यते । 'द्वेष्ये त्वक्षिगतः' **इत्यमरः** । मामतिसमीपतया भवान्न विभावयति । 'शेषे प्रथमः' इति प्रथमपुरुषः । इन्द्रियसन्निकृष्टमपि न लक्ष्यत इति विरोधाभासनार्थोऽपिशब्दः । परमार्थस्तु द्वेष्यत्वादतिसामीप्याच्चाऽविभावनं न चित्रमिति भावः । अभीष्टतमां पुनर्हृदयस्थितां हृदयादनपेताम्, अन्तर्हितामिति च गम्यते । अत एव विरोधाभासकोऽपिशब्दः । बहिः पुरतः कथं भवानीक्षते इदं तु चित्रम् । अतिसामीप्यव्यवधानस्यापि दर्शनप्रतिबन्धकत्वादिति भावः । प्रेमास्पदं वस्तु परोक्षमप्यपरोक्षमीक्षते, इतरदपरोक्षमपि परोक्षमेवेति तात्पर्यार्थः । विरोधाभासयोः सङ्करः ॥८१

**इति गन्तुमिति** ॥ इत्यभिधाय पुरो गन्तुमिच्छुं क्षणं दृष्ट्योः पातेन विकसद्वदनां । परस्परदृष्टिपातमात्रगतकोपामित्यर्थः । काञ्चिन्नायिकां तरुणो युवा स्वकरावलम्बनं प्रियकरेण ग्रहणं तेन विमुक्ता मुक्तबन्धना अत एव गलन्ती भ्रंशमाना कला मधुरा काञ्ची यस्मिन्कर्मणि तद्यथा तथा अरुणत् रुद्धवान् । रुधेर्लङि रुधादिभ्यः श्नम् । एषा च कलहान्तरिता ॥ ८२ ॥

**अपयाति सरोषया निरस्ते कृतकं कामिनि चुक्षुवे मृगाक्ष्या ॥**
**कलयन्नपि सव्यथोऽवतस्थेऽशकुनेन स्खलितः किलेतरोऽपि ॥ ८३ ॥**

**अपयातीति** ॥ मृगाक्ष्या नायिकया चुक्षुवे क्षुतम् । कथं यथा भवति तथा कृतकं कृत्रिमं यथा भवति तथा, क्व सति कामिनि वल्लभे अपयाति सति अपगच्छति सति, किंभूते कान्ते सरोषया सकोपया सत्या निरस्ते निराकृते । किलेति सत्ये, इतरोऽपि कान्तोऽपि सव्यथः सन् सखेदः सन् अवतस्थे स्थितः । किं कुर्वन् कलयन्नपि अनया कृत्रिमं क्षूयते इति जानन्नपि, अत एव किंभूतः इतरः, किलेत्युत्प्रेक्षायाम्, अशकुनेन विरुद्धफलदर्शकशकुनेन स्खलितः प्रतिहत इव । यथा कश्चिदपशकुनेन स्खलितः सन् तिष्ठति॥

**अपयातीति** ॥ सरोषया मृगाक्ष्या निरस्ते कामिनि भर्तर्यपयाति निर्याते सति कृतकं कृत्रिमं यथा तथा चुक्षुवे । तन्निर्गमनप्रतिबन्धार्थं क्षुतं कृतमित्यर्थः । क्षु शब्दे, भावे लिट् । इतरोऽपि नायकोऽपि कलयन्नपि कृतकोऽयमिति जानन्नपि अशकुनेन स्खलितः किल निरुद्ध इव सव्यथः सनिर्वेद इवाऽवतस्थे स्थितः । न गत इत्यर्थः । उभावपि समानाऽनुरागाविति भावः । एषा च कलहान्तरिता ॥ ८३ ॥

**आलोक्य प्रियतममंशुके विनीवौ यत्तस्थे नमितमुखेन्दु मानवत्या ॥**
**तन्नूनं पदमवलोकयाम्बभूवे मानस्य द्रुतमपयातु(१)मास्थितस्य ॥८४॥**

**आलोक्येति** ॥ मानवत्या मानिन्या यत् नमितमुखेन्दु तस्थे नम्रवक्त्रचन्द्रं स्थीयते स्म, किं कृत्वा विनीवौ अंशुके श्लथेंऽशुके प्रियतमं कान्तमवलोक्य दृष्ट्वा । नूनं निश्चितं तत् मानस्याऽहङ्कारस्य पदमवलोकयाम्बभूवे। किंभूतस्य मानस्य द्रुतं शीघ्रमपयातुमास्थितस्य त्वरितं गन्तुमिच्छतः ॥ ८४ ॥

आलोक्येति ॥ मानवत्या कोपवत्या स्त्रिया । 'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासाङ्गिनि प्रिये' । प्रियतममालोक्य । स्थित्या समानकर्तृकत्वात् क्त्वानिर्देशः। अंशुके विनीवौ प्रियावलोकनाद्विगलितबन्धे सति । भाषितपुंस्कत्वात्पुंवद्भावः । 'स्त्रीकटीवस्त्रबन्धेऽपि नीविः परिपणेऽपि च' इत्यमरः । नमितमुखेन्दु यथा तथा तस्थे स्थितमिति यत्, तत्तस्मान्नम्रमुखावस्थानाद् द्रुतं शीघ्रम्, प्रियावलोकनक्षण एवेत्यर्थः। अपयानमास्थितस्य प्रयाणं गतस्य मानस्य कोपस्य पदं पदचिह्नमवलोकयाम्बभूवे । अन्वेषितमित्यर्थः । लज्जानिमित्ताया मुखनतेः अन्वेषणार्थत्वमुत्प्रेक्ष्यते नूनमिति । मानगन्धोऽप्यस्तामित इति भावः ॥ ८४ ॥

**सुदृशः सरसव्यलीकतप्तस्तरसाऽऽश्लिष्टवतः सयौवनोष्मा ॥**
**कथमप्यभवत्स्मराऽनलोष्णः कुच(२)भारो न नखम्पचः प्रियस्य ॥८५॥**

**सुदृश इति** ॥ सुदृशो नायिकायाः कुचभारः प्रियस्य कान्तस्य कथमपि केनापि प्रकारेण नखम्पचः नाऽभवत् नखान् पचतीति नखम्पचः नखरन्धको न बभूव । किंभूतस्य प्रियस्य तरसा बलात्कारेण आश्लिष्टवतः आलिङ्गनं कुर्वतः, किंभूतः कुचभारः सरसव्यलीकतप्तः तत्क्षणापराधसन्तप्तः, अपरं किंभूतः सयौवनोष्मा सयौवनबाष्पः, पुनः किंभूतः स्मराऽनलोष्णः कामाग्निज्वरतप्तः ॥ ८५ ॥

सुदृश इति ॥ सरसमार्द्रम् । नूतनमिति यावत् । तेन व्यलीकेन प्रियकृतेनाऽपराधेन तप्तः तथा यौवनोष्मणा सह वर्तत इति सयौवनोष्मा, किञ्च स्मराऽनलोष्णः कामाग्निसन्तप्तः एवं त्रिविधाग्नितप्तोऽपि सुदृशः स्तनभारस्तरसा वेगेन अतिदाहदशायामेवेत्यर्थः, आश्लिष्टवत आलिङ्गितवतः प्रियस्य कथमपि कथं वा ।कुतो हेतोरित्यर्थः । नखं पचति क्राथयतीति नखम्पचः। पचिरत्र तापवाची । 'मितनखे च' इति खश्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । नाऽभवत् । तथोष्ण ईषदुष्णोऽपि नाऽभूदित्यर्थः । प्रियासङ्गप्रतीकाराः खलु कामिनां सन्तापा इति भावः । तादृगौष्ण्यसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ८५ ॥

**दधत्युरोजद्वयमुर्वशीतलं भुवो गतेव स्वयमुर्वशी तलम् ॥**
**बभौ मुखेनाऽप्रतिमेन काचन श्रियाऽधिका तां प्रति मेनका च न ॥८६॥**

**दधतीति** ॥ काचिन्नायिका वदनेन बभौ मुखेन शुशुभे । किंभूतेन मुखेन अप्रतिमेन निरुपमेन, किं कुर्वती नायिका उरु विशालं वक्षोजद्वयं स्तनयुगलं दधती धारयन्ती, किंभूतं स्तनद्वयम् अशीतलमुष्णम् । किंभूता नायिका, उत्प्रेक्ष्यते—भुवः तलं गता महीतलं प्राप्ता स्वयमात्मना उर्वशीव श्रीनारायणोरूत्पन्ना श्रेष्ठदेवाङ्गनेव । अपरं तां नायिकां प्रति श्रिया शोभया कृत्वा मेनका च न अधिका अप्सरःश्रेष्ठा मेनकाऽपि न उत्कर्षवती ॥८६॥

दधतीति ॥ उरु महदशीतलं स्मरयौवनोष्मभ्यामुष्णमुरोजद्वयं कुचद्वयं दधती भुवस्तलं गता स्वयं साक्षादुर्वशीव स्थितेत्युत्प्रेक्षा । काचन स्त्री अप्रतिमेन मुखेन बभौ । तां प्रति मेनका मेनकाख्याऽप्सराश्च श्रिया सौन्दर्येणाऽधिका नेत्यतिशयोक्तिः । तयोर्यमकेन संसृष्टिः । वंशस्थं वृत्तम् ॥८६॥

---

(१) ०मपयान । (२) स्तन ।

इत्थं नारीर्घटयितुमलं कामिभिः काममासन्
प्रालेयांशोः सपदि रुचयः शान्तमानाऽन्तरायाः॥
आचार्यत्वं रतिषु विलसन्मन्मथश्रीविलासा
ह्रीप्रत्यूहप्रशमकुशलाः शीधवश्चक्रुरासाम्॥ ८७॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये प्रदोषवर्णनं नाम नवमः सर्गः॥ ९॥

**इत्थमिति॥** प्रालेयांशोः शीतकिरणस्य चन्द्रस्य रुचयः किरणाः सपदि तत्कालम् इत्थममुना प्रकारेण नारीः कामिनीः कामं निश्चितम् अलमतिशयेन कामिभिः कान्तैः सह घटयितुं संयोजयितुम् अलं समर्थाः आसन् बभूवुः, किंभूताः रुचयः शान्तमानाऽन्तरायाः क्षीणाहङ्कारविघ्नाः। अपरं शीधवः मदिराः आसां कामिनीनां रतिषु सम्भोगेषु आचार्यत्वं चक्रुः उपदेष्टृत्वं विदधुः। किंभूताः शीधवः विलसन्मन्मथश्रीविलासाः विलसन् विकसन् शोभमानो वा मन्मथश्रियः कामसमृद्धेः विलासो विभ्रमो याभिस्ताः प्रसृतकन्दर्पशोभाविभ्रमाः, अपरं किंभूताः शीधवः ह्रीप्रत्यूहप्रशमकुशलाः ह्रीर्लज्जा एव प्रत्यूहः सम्भोगे विघ्नः तस्य प्रशमः तत्र कुशलाः, लज्जाविघ्ननिरसनप्रवीणाः॥ ८७॥

इति श्रीशिशुपालवधे काव्ये वल्लभविरचितायां सन्देहविषौषध्यां सारटीकायां सन्ध्यासमयवर्णनं नाम नवमः सर्गः।



इत्थमिति॥ इत्थमनेन प्रकारेण। 'इदमस्थमुः' इति थमुप्रत्ययः। सपदि शान्तः शमितो मानः कोप एवाऽन्तरायो याभिस्ताः। 'वा दान्त-' इत्यादिना शमेर्ण्यन्ताच्छान्तेति निपातः। प्रालेयांशोश्चन्द्रस्य रुचयो नारीः कामिभिर्घटयितुम्। मितां ह्रस्वः। 'पर्याप्तिवचनेष्वलमर्थेषु' इति तुमुन्प्रत्ययः। कामं प्रकामं समर्था आसन्। दूत्य इवेति भावः। विलसन्तो मन्मथश्रीविलासा भणितसीत्कारादिमदनातिरेकविकारा याभिस्ताः, ह्रीरेव प्रत्यूहो विघ्नस्तस्य प्रशमे निवारणे कुशलाः शेरते आभिरिति शीधवो मदिराः। 'शीङो धुक्' इत्यौणादिको धुक्प्रत्ययः। आसां रतिषु आचार्यत्वमुपदेशं चक्रुः। नर्मसख्य इवेति भावः। अत्र प्रथमार्धे प्रस्तुतचन्द्रभासां मानशमनकामिघटनपाटवविशेषणसाम्यादप्रस्तुतदूतीत्वप्रतीतेः समासोक्तिः। द्वितीयार्धे तु शीधुष्वारोपितस्याचार्यत्वस्य प्रकृतोपयोगात्परिणामः। तयोः सापेक्षत्वात्सङ्करः। तेन च दूतीनर्मसख्युपमाध्वनिः। उत्तरसर्गे मधुपानरतोत्सववर्णनायाश्चायमेव प्रस्तावः। मन्दाक्रान्ता वृत्तम्। 'मन्दाक्रान्ता जलधिषडगम्भौं नतौ तौ गुरू चेत्' इति लक्षणात्॥ ८७॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवधकाव्यव्याख्याने सर्वङ्कषाख्ये नवमः सर्गः॥ ९॥



## दशमः सर्गः।

सज्जितानि सुरभीण्यथ यूनामुल्लसन्नयनवारिरुहाणि॥
आययुः सुघटितानि सुरायाः पात्रतां प्रियतमावदनानि॥ १॥

**सज्जितानीति॥** अथानन्तरं प्रियतमावदनानि प्रेयसीमुखानि यूनां कामिनां सुरायाः पात्रतामाययुः मदिरायाः चषकत्वमवापुः। युवानः कान्तामुखैः सुरां पपुरित्यर्थः।

किंभूतानि प्रियतमावदनानि सज्जितानि सज्जीकृतानि । सुवर्णरत्नादिभिरलङ्कृतानीत्यर्थः। पुनः किंभूतानि सुरभीणि सुपरिमलानि, पुनः किंभूतानि उल्लसन्नयनवारिरुहाणि विकस्वरनेत्रकमलानि, पुनः किंभूतानि सुघटितानि धात्रा सुनिर्मितानि । सुरायाः पात्राण्यपि एवंविधानि भवन्ति–सज्जितानि उत्तेजितानि सुगन्धिमन्ति विकस्वराम्बुरुहयुक्तानि । सुरामध्ये हि कमलानि निक्षिप्यन्ते। अपरं सुघटितानि वर्तुलाकाराणि। सुरापात्रमुखयोः साम्यमुक्तम् ॥

आचार्यत्वं रतिषु शीधवश्चक्रुरित्युक्तं, तत्प्रपञ्चनायाऽस्मिन्सर्गे मधुपानं तावद्वर्णयति—

सज्जितानीति ॥ अथ पानगोष्ठीप्रस्तावानन्तरं सज्जितानि यावकक्षालनादिना संस्कृतानि सुरभीणि यथायोगं स्वभावसंस्काराभ्यां सुगन्धीनि नयनानि वारिरुहाणीव, अन्यत्र नयनानीव वारिरुहाणि वासनार्थं क्षिप्तानि तान्युल्लसन्ति येषु तानि तथोक्तानि सुघटितानि सुष्ठु सुखैर्योजितानि शोभनसंस्थानवत्तया निर्मितानि वा प्रियतमावदनानि यूनां कामिनां सुरायाः पात्रतां पानभाजनतां ययुः । प्रियामुखसम्पर्कजनितरसास्वादलोभात्तासां मुखसुरामेव पपुरिति भावः । अत्र वदनेष्वारोप्यमाणायाः पात्रतायास्तादात्म्येन तेषां पानसाधनताऽऽपादनेन कृतवदनोपयोगात्परिणामाऽलङ्कारः। 'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति लक्षणात् । तेन श्लेषसङ्कीर्णेनोपमा व्यज्यते । अस्मिन्सर्गे स्वागता वृत्तम् । 'स्वागतेति रनभा गुरुयुग्मम्' ॥

**सोपचारमुपशान्तविचारं सानुतर्षमनुतर्षपदेन ॥**
**ते मुहूर्तमथ मूर्तमपीप्यन् प्रेम मानमवधूय वधूस्ताः(१) ॥ २ ॥**

सोपचारमिति ॥ ते कामिनः ताः वधूः अङ्गनाः मानमवधूय अहङ्कारं त्यक्त्वा मुहूर्तं क्षणमात्रं मूर्तं प्रेम अपीप्यन्, अपीति निश्चये, मूर्तं प्रेमरसं पाययामासुः । केन अनुतर्षपदेन मद्यव्याजेन, किंभूतं सानुतर्षं साभिलाषम् , अपरं किंभूतं सोपचारमुपचारसहितम्, अपरं किंभूतं उपशान्तविचारम् उपशान्तः विचारः विवेको यत्र सः तम् ॥२॥

सोपचारमिति ॥ अथ पात्रीकरणानन्तरं ते युवानः सोपचारं सप्रार्थनमुपशान्तविचारं निवृत्तशङ्कम् । 'विवादम्' इति पाठे मानमवधूयेति पुनरुक्तिः । चारं चारमित्यनुप्रासक्रमभङ्गश्च स्यात्। सानुतर्षं सतृष्णं च यथा तथा अनुतर्षत्यनेनेत्यनुतर्षो मद्यम् । 'मद्येऽनुतर्ष तत्पाने पात्रे तृष्णाभिलाषयोः' इत्युभयत्रापि विश्वः। तस्य पदेन छलेन मूर्तं मूर्तिमत् स्वाः स्वीया वधूर्मुहूर्तं क्षणं मानं कोपमवधूयाऽपीप्यन पाययन्ति स्म । पिबतेर्णौ चाङि 'लोपः पिबतेरीच्चाभ्यासस्य' इति धात्वाकारलोपः ईकारोऽभ्यासस्य । 'न पादमि–' इत्यादिना निगरणार्थत्वात्परस्मैपदनिषेधेऽपि 'णिचश्च' इत्यात्मनेपदविकल्पात्पाक्षिकं परस्मैपदम् । 'गतिबुद्धि–' इत्यादिना वधूरित्याणिकर्तुः कर्मत्वम्। अनुतर्षवदनेत्यनुतर्षापह्नवेन मूर्तप्रेमत्वोत्प्रेक्षणात व्यञ्जकाप्रयोगाच्च प्रतीयमाना सापह्नवोत्प्रेक्षा ॥ २ ॥

**क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ ॥**
**स्वादुनि प्रणदिताऽलिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥ ३ ॥**

क्रान्तेति ॥ इन्द्रियवर्गः नेत्रादिकरणसमूहः मधुनि आसवे निर्ववार निर्वृतिं लेभे । किंलक्षणे मधुनि क्रान्तकान्तवदनप्रतिबिम्बे न्यस्तप्रियमुखप्रतिनिधौ, पुनः किंभूते मधुनि भग्नबालसहकारसुगन्धौ मृदितसुकुमाररसालपुष्पपरिमले, पुनः किंभूते मधुनि स्वादुनि स्वादिष्ठे, अपरं किंभूते मधुनि प्रणदिताऽलिनि शब्दितभ्रमरे पुनः किंभूते शीते शीतगुणयुक्ते। क्रान्तकान्तेत्यादिभिः पञ्चभिः विशेषणैः चक्षुर्घ्राणरसनश्रोत्रत्वगिन्द्रियाणां निर्वृतिकथनम् ॥

क्रान्तेति ।। क्रान्तं संक्रान्तं कान्तवदनप्रतिबिम्बं यस्मिंस्तस्मिन् । नेत्रनिर्वृत्तिकर इत्यर्थः । भग्नाः क्षिप्ताः बालसहकाराश्चूतविशेषपल्लवाः । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः। तैः

(१) वधूः स्वाः ।

सुगन्धौ सुरभिणि । घ्राणतर्पण इत्यर्थः । 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति पुंवद्भावः । स्वादुनि मधुरे, रसनाकर्षिणीत्यर्थः । प्रणादितालिनि गुञ्जन्मधुकरे, श्रुतिसुख इत्यर्थः । शीते, स्पर्शसुखे इत्यर्थः । एवं पञ्चविषयसमष्टौ मधुनि मद्ये इन्द्रियवर्गश्चतुरादिपञ्चकम् निर्ववार निर्वृतमभूत् । अत्र रूपरसादिपदार्थानां मधुविशेषणभावेन निर्वृतिहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ ३ ॥

**कापिशायनसुगन्धि विघूर्णन्नुन्मदोऽधिशयितुं समशेत ॥**

**फुल्लदृष्टि वदनं वनिताना(१)मब्जचारु चषकं च षडङ्घ्रिः ॥ ४ ॥**

**कापिशायनेति ॥** षडङ्घ्रिः भ्रमरः वनितानां वदनं मुखं च पुनः चषकं पानपात्रम् अधिशयितुमाश्रयितुं समशेत संशयं चक्रे । किंभूतं वदनं कापिशायनसुगन्धि सुरापरिमलवत्, पुनः किंभूतं वदनं फुल्लदृष्टि स्मितनयनं, पुनः किंभूतम् अब्जचारु कमलवद्रम्यं, षडङ्घ्रिः किं कुर्वन् विघूर्णन् परिभ्रमन्, पुनः किंभूतः उन्मदः मत्तः । चषकमप्येवंविधं भवति, किंभूतं चषकं मद्यगन्धि प्रफुल्लकमलं च । उभयोः साम्यम् ॥ ४ ॥

कापिशायनेति ॥ उन्मद उद्रिक्तमदः अत एव विघूर्णन्भ्रमन् षडङ्घ्रिः षट्पदः कापिशायनेन सुगन्धि सुरभि । 'कशं कल्यं तथा मद्यं भैरेयं कापिशायनम्' इति वैजयन्ती । फुल्लदृष्टि विकसितनेत्रं प्रमादानां वनितानां वदनमधिवासनार्थेनाब्जेन चारु चषकं पानपात्रं च । 'चषकोऽस्त्री पानपात्रम्' इत्यमरः । अधिशयितुमधिष्ठातु समशेत । इदं भजामीदं भजामि वेत्युभयलोभार्थं दोलायमानमानस आसीदित्यर्थः । अत्र प्रकृतयोरेव वदनचषकयोः षट्पदाभिलाषास्पदत्वरूपैकधर्मयोगादौपम्यस्य गम्यतायां तुल्ययोगिताभेदः ॥४॥

**बिम्बितं भृतपरिस्रुति जानन् भाजने जलजमित्यबलायाः ॥**

**घ्रातुमक्षि पतति भ्रमरः स्म भ्रान्तिभाजि भवति क्व विवेकः ॥ ५ ॥**

**बिम्बितमिति ॥** भ्रमरोऽलिः अबलायाः नायिकायाः अक्षि घ्रातुं नयनं शिङ्घितुं पतति स्म पपात, किं कुर्वन् इति जानन् इति विचारयन् । इति किम्—यत्, एतज्जलजं कमलमिति । किंभूतमक्षि भाजने बिम्बितं पानपात्रे प्रतिफलितं, किंभूते भाजने भृतपरिस्रुति पूर्णमदिरे । यतः कारणात् भ्रान्तिभाजि भ्रमणशीले क्व विवेकः क्व विचारो भवेत्, अपि तु न ॥ ५ ॥

बिम्बितमिति ॥ भृता परिस्रुद्वारुणी यस्मिंस्तस्मिन् । 'परिस्रुद्वरुणात्मजा' इत्यमरः । भाजने पानपात्रे बिम्बितं प्रतिबिम्बितमबलाया अक्षि जलजमिति जानन् । सादृश्यात्तथा भ्राम्यन्नित्यर्थः । भ्रमरः घ्रातुं पतति स्म । तथा हि—भ्रान्तिर्भ्रमणं विपरीतज्ञानं च तद्भाजि विवेको विचारः क्व भवति । न क्वापीत्यर्थः । अत्र भ्रमरस्याऽक्षिजलजभ्रान्तेर्भ्रान्तिमदलङ्कारः । तत्समर्थकत्वात् श्लेषमूलातिशयोक्त्युत्थापितोऽर्थान्तरन्यासः, तेन सहाऽङ्गाङ्गिभावेन सङ्करः ॥ ५ ॥

**दत्तमिष्टतमया मधु पत्युर्बाढमाप पिबतो रसवत्ताम् ॥**

**यत्सुवर्णमुकुटांशुभिरासीच्चेतनाविरहितैरपि पीतम् ॥ ६ ॥**

**दत्तमिति ॥** मधु मद्यं पत्युः कान्तस्य पिबतः धयतः सतः बाढमत्यर्थं रसवत्तामाप स्वाददं बभूव । किंभूतं मधु इष्टतमया दत्तम् अतिवल्लभया कान्तया दत्तमर्पितम् । कथमेवं प्रतीयते—यन्मधु सुवर्णमुकुटांशुभिः हेमवतंसतेजोभिः पीतमासीत् । हरिद्राभं बभूवेत्यर्थः । किंभुतैः सुवर्णमुकुटांशुभिः चेतनाविरहितैरपि अचेतनैरपि ॥ ६ ॥

दत्तमिति ॥ इष्टतमया दत्तं मधु मद्यं कर्तृ पिबतः पत्युः रसवत्तां प्रेयसीकरस्पर्शादतिस्वादुतामाप ।

---

( १ ) प्रमदाना० ।

अतिशायने मतुप्। बाढं ध्रुवमित्युत्प्रेक्षा। कुतः-यत् यस्माच्चेतनाविरहितैरचेतनैः सुवर्णमुकुटांशुभिरपि। मधुनि प्रसृतैरिति भावः। पीतं पीतवर्णं पीतं चासीत्। अत्र पीतामिति श्लेषमूलातिशयोक्त्या पीतिम्नः क्रियाभेदाध्यवसायेनाऽचेतनांशुकर्तृकपानक्रियानिमित्ता प्रेयसीस्वहस्तदानाहितरसवत्तोत्प्रेक्षा। तथा च यदचेतनानामपि पेयं तच्चेतनानां किं वक्तव्यमित्यर्थापत्तिध्वननादलङ्कारेणाऽलङ्कारध्वनिः ॥ ६ ॥

**स्वादनेन सुतनोरविचारादोष्ठतः समचरिष्ट रसोऽत्र ॥**
**अन्यमन्यदिव यन्मधु यूनः स्वादमिष्टमतनिष्ट तदेव ॥ ७ ॥**

**स्वादनेनेति** ॥ अत्र अस्मिन् मधुनि सुतनोर्नायिकायाः स्वादनेन पानेन ओष्ठतः अधरतः रसः समचरिष्ट माधुर्यं सञ्चरितं, कस्मादविचारात् स्वभावात। यन्मधु मद्यं यूनः कान्तस्य अन्यं स्वादम् इष्टमभिमतं स्वादमतनिष्ट अतनोत्। किंभूतं मधु, उत्प्रेक्ष्यते—तत् अन्यदिव इतरदिव ॥ ७ ॥

स्वादनेनेति ॥ सुतनोः कन्यायाः स्वादनेनास्वादनेन ओष्ठतः ओष्ठाद्रसः स्वादोऽत्र मधुनि अविचारादसंशयात्समचारिष्ट संक्रान्तः। संपूर्वाच्चरतेर्लुङ्। 'समस्तृतीयायुक्तात्' इत्यात्मनेपदम्। कुतः-यत् यस्मात्तदेव पूर्वभुक्तमेव मधु अन्यादिवाऽपूर्वामिव अन्यमपूर्वमिष्टं प्रियं स्वादं रसं यूनोऽतनिष्ट। तनोतेर्लुङि तङ्। ओष्ठस्पर्शानन्तरमेव रसान्तरप्रादुर्भावादनन्तरन्यायात्तद्रससंक्रमणोत्प्रेक्षा। सा चाऽविचारादिति व्यञ्जकाप्रयोगाद्वाच्या ॥

**पीतवत्यभिमते मधुतुल्यस्वादमोष्ठरुचकं विदद‍ङ्क्षौ ॥**
**लभ्यते स्म पारतिक्ततया(१)ऽऽत्मा यावकेन वियताऽपि युवत्याः ॥८॥**

**पीतवतीति** ॥ युवत्याः नायिकायाः यावकेनालक्तकेन वियता गच्छतापि सता आत्मा लभ्यते स्म स्वस्वरूपं लब्धम्। कया परितिक्ततया तीक्ष्णतया, क्व सति अभिमते वल्लभे मधु मद्यं पीतवति सति धयति सति पानं कुर्वति सति, प्रिये किं कर्तुमिच्छौ ओष्ठरुचकं विवदङ्क्षौ ओष्ठ एव रुचकमार्द्रकं दष्टुमिच्छौ कांक्षमाणे(?), किंभूतमोष्ठरुचकं तुल्यस्वादम् ॥ ८ ॥

**पीतवतीति** ॥ विददङ्क्षौ विदष्टुमिच्छौ। उपदंशेच्छावतीत्यर्थः। दंशेः सन्नन्तादुप्रत्ययः। अभिमते वल्लभे मधुना तुल्यस्वादं तुल्यरसम्। तुल्यत्वं च हृद्यतामात्रेण नान्यथा, विलक्षणरसस्य अनुपदंशत्वात्। ओष्ठो रुचकमाभरणमिवेत्युपमितसमासः। 'रोचनायां तु रुचकमश्वाभरणमाल्ययोः' इति विश्वः। तमोष्ठरुचकमोष्ठश्रेष्ठं पीतवति सति वियता अपगच्छताऽपि। इणो लटः शत्रादेशे 'इणो यण्' इति यणादेशः। युवत्याः युवतेः। 'ङिति ह्रस्वश्च' इति वा नदीत्वादाडागमः। यावकेनालक्तकेन परिरक्ततया दन्तनिष्पीडनकृतेन रागेण हेतुना आत्मा स्वरूपं लभ्यते स्म लब्धः। पुनरुद्भूतमित्यर्थः। अत्राधरपानादपगतस्यापि यावकस्य रागप्रादुर्भावनिमित्ता विरोधगर्भा पुनरुद्भवोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या च ॥ ८ ॥

**कस्यचित्समदनं मदनीयप्रेयसीवदनपानपरस्य ॥**
**स्वादितः सकृदिवाऽऽसव एव प्रत्युत क्षणविदंशपदेऽभूत् ॥ ९ ॥**

**कस्यचिदिति** ॥ कस्यचित् कामिनः आसव एव मद्यमेव प्रत्युत वैपरीत्येन क्षणविदंशपदे अभूत् आसव एव रुचकस्थाने आसीत्। आर्द्रकादि फलभक्षणस्थाने रुचकमित्यभिधीयते। किंभूतस्य कामिनः समदनं सकामं यथा भवति तथा मदनीयप्रेयसीवदनपानपरस्य अतिवल्लभावक्त्रदर्शनतत्परस्य, मदनीया सकामा या प्रेयसी प्रिया तस्याः वदनपाने आस्यधयने तत्परस्य। उत्प्रेक्ष्यते—सकृत् एकवेलं स्वादित एव। एतेन मुखपानं बहु, आसवमेकवेलं पपावित्यर्थः। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' ॥ ९ ॥

---

(१) रक्ततया।

कस्यचिदिति ॥ समदनं यथा तथा मदयतीति मदनीयं मदकारि। 'कृत्यल्युटो बहुलम्' इति कर्तर्यनीयर्प्रत्ययः। तस्य प्रेयसीवदनस्य पानं परं प्रधानं यस्य तस्य कामुकत्वात्प्रियामुखपानासक्तस्य कस्यचित्कामिनः सकृदिव स्वादितोऽबाहुल्येन पीतः। इवशब्दो वाक्यालङ्कारे। आसव एव। प्रत्युत वैपरीत्ये इति गणव्याख्याने। क्षणं विदंशपदे उपदंशस्थानेऽभूत्। अन्येषां मधुपानलोलुपानामधरास्वाद उपदंशः। अस्य त्वधरपानैकपरस्य मध्वेवोपदंश इत्यर्थः। अधरपानस्योपदंशत्वसम्बन्धेऽप्यसम्बन्धः, आसवस्य तदसम्बन्धेऽपि सम्बन्ध इत्यतिशयोक्त्योरसापेक्षत्वात्संसृष्टिः ॥ ९ ॥

**बिभ्रतौ मधुरतामधिपात्रं(१) रागिभिर्युगपदेव पपाते ॥**
**आननैर्मधुरसो विकसद्भिर्नासिकाभिरसितोत्पलगन्धः(२) ॥ १० ॥**

**बिभ्रताविति ॥ रागिभिः कामिभिः अधिपात्रं पानपात्रे युगपदेव एककालमेव द्वौ पदार्थौ पपाते पीतौ, किंभूतौ द्वौ मधुरतां बिभ्रतौ माधुर्यं धारयन्तौ। कः केन पीत इत्याह– विकसद्भिः सहास्यैः आननैर्वदनैः मधुरसः मद्यरसः पपे पीतः। नासिकाभिः नासाभिः असितोत्पलगन्धः इन्दीवरपरिमलः पीतः गृहीतः ॥ १० ॥**

बिभ्रताविति ॥ रागिभिः कामिभिरतिमात्रं मधुरतां स्वादुतां प्रियत्वं वा बिभ्रतौ। 'मधुरं रसवत्स्वादु प्रियेषु मधुरोऽन्यवत्' इति विश्वः। तस्य भावस्ताम्। विकसद्भिर्विकसन्तीभिश्च विकसद्भिः तृष्णया विजृम्भमाणैः। 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति नपुंसकैकशेषः। आननैः मधुरसो मद्यरसः नासिकाभिर्घ्राणैरसितोत्पलगन्धश्च युगपदेव पपाते पीतौ। भिन्नेन्द्रियग्राह्यावपि गन्धरसौ युगपत्स्वेन्द्रियसम्बन्धात् युगपद् गृहीतावित्यर्थः। अत्र मनस आशु सञ्चाराद्यौगपद्याभिमानः। शतपत्रशरव्यतिभेदवदित्यणुपरिमाणवादिनः। वास्तवमेव यौगपद्यमिति मध्यमपरिमाणवादिनः। सार्वपथीनास्तु कवय इत्यलमतिपल्लवितेन। अत्र रसगन्धयोः प्रकृतयोरेकपानक्रियासम्बन्धात्तुल्ययोगिताभेदः ॥ १० ॥

**पीतशीधुमदिरैः(३) मिथुनानामाननैः परिहृतं चषकान्तः ॥**
**व्रीडया रुददिवाऽलिविरावैर्नीलनीरजमगच्छदधस्तात् ॥ ११ ॥**

**पीतेति ॥ नीलनीरजमिन्दीवरं चषकान्तः मदिरापात्रमध्ये अधस्तात् अगच्छत् अधोगतं, कया व्रीडया। किंलक्षणं नीलनीरजम्, उत्प्रेक्ष्यते—अलिविरावैः भ्रमररुतैः रुदद्विव रोदनं कुर्वदिव। रोदने कारणमाह—यतः किंभूतं नीलनीरजं मिथुनानां स्त्रीपुंसयोर्द्वन्द्वानाम् आननैर्मुखैः परिहृतं जितं त्यक्तं वा, किंभूतैराननैः पीतशीधुमदिरैः आस्वादितभूरि(?)मदिरैः ॥ ११ ॥**

पीतेति ॥ पीतशीधूनि पीतमद्यानि अत एव मधुराणि मनोज्ञानि तैर्मिथुनानां स्त्रीपुंसानामाननैः चषकान्तः पानपात्राभ्यन्तरे। 'चषकोऽस्त्री पानपात्रम्' इत्यमरः। परिहृतं त्यक्तं नीलनीरजं वासनार्थं निक्षिप्तं नीलोत्पलं व्रीडया परिहारलज्जया अलिविरावैः रुददिवाऽधस्तादगच्छत्। अत्र मद्यापगमनिमित्तस्य नीलनीरजाऽधोगमनस्य रोदनविशिष्टलज्जाहेतुकत्वोत्प्रेक्षा। सा च आलिविरावैरिति व्यधिकरणकारिपरिणामोज्जीवितेति सङ्करः ॥ ११ ॥

**प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः ॥**
**गूढसूचितरहस्यसहास्यः(४) सुभ्रुवां प्रववृते परिहासः ॥ १२ ॥**

**प्रातिभमिति ॥ सुभ्रुवां नायिकानां परिहासः प्रववृते नर्म प्रवृत्तम्। किंभूतानां सुभ्रुवां त्रिसरकेण त्रिःपानेन प्रातिभं गतानां निर्लज्जत्वं प्राप्तानां, किंभूतः परिहासः वक्रवाक्यरचनारमणीयः वक्रोक्तियुक्त्या शोभमानः, अपरं किंभूतः परिहासः गूढसूचित-**

---

(१) ०मधिपात्रं। (२) श्लोकोऽयं सर्वङ्कषायां 'पीतवत्यभिमत' इत्यतः प्राक् समुपलभ्यते।
(३) मधुरैः। (४) सहासः।

रहस्यसहास्यः गूढं सूचितं रहस्यं यस्मिन् गूढसूचितरहस्यः अत एव सहास्यः सविनोदः गुप्तोक्तैकान्तसहास्यः ॥ १२ ॥

अथ मदानुभावान् वर्णयति—

प्रातिभमिति ॥ त्रयाणां सरकाणां समाहारस्त्रिसरकं त्रिवारमधुपानम् । 'सरकं शीधुपात्रे स्याच्छीधुपाने च शीधुनि' इति विश्वः । 'तद्धितार्थ–' इत्यादिना समाहारे द्विगुः, पात्रादित्वान्नपुंसकत्वम् । तेन त्रिसरकेण त्रिपानं मदातिऽभूमिरिति पानप्रसिद्धिः । प्रतिभैव प्रातिभं प्रतिभाविशेषः । प्रज्ञादित्वात्स्वार्थेऽण्प्रत्ययः । यद्वा 'ज्ञानबीजभूतः संस्कारविशेषः प्रतिभा' इति काव्यप्रकाशकारः । तत्र भवं प्रातिभं ज्ञानप्रभावविशेष-एव । भवार्थेऽण्प्रत्ययः । तत्प्रातिभं गतानाम् । त्रिवारमधुपानोत्कटमदोद्बुद्धसंस्कारप्रभावितप्रगल्भ-मतीनामित्यर्थः । सुभ्रुवां स्त्रीणां वक्रवाक्यरचनारमणीयः प्रतिकूलवाक्यप्रयोगरम्यः । गूढानि पूर्वं लज्जया संवृतानि सूचितानि सम्प्रति मदेन प्रकाशितानि रहस्यानि ग्राम्यावयवचेष्टाप्रलापितानि यस्मिन्स गूढसूचित-रहस्यः स चासौ सहासश्चेति विशेषणसमासः, वैवाक्षिकविशेषणविशेष्यभावात् । 'हासो हास्यम्' इत्यमरः । परिहासो नर्मकेलिरूपहासक्रीडेति यावत् । 'द्रवकेलिपरीहासाः' इत्यमरः । प्रववृते प्रवृत्तः । इतः परं मदः सञ्चारी ॥ १२ ॥

**हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः ॥**
**चक्रिरे भृशमृजोरपि वध्वाः कामिनेव तरुणेन मदेन ॥ १३ ॥**

हावहारीति ॥ मदेन क्षीबतया वध्वा नायिकाया एते पदार्थाः चक्रिरे विदधिरे, किम्भूतायाः वध्वाः भृशमत्यर्थम् ऋजोरपि मुग्धाया अपि । तावत् किं किं चक्रे—हसितं हास्यं चक्रे, किंभूतं हास्यं हावहारि विलासशोभि । अपरं मदेन वध्वाः वचनानां वाक्यानां कौशल्यं प्रावीण्यं चक्रे । अपरं दृशि नेत्रे विकारविशेषाः कटाक्षनिरीक्षणादयः चक्रिरे । केनेव तरुणेन यूना कामिनेव नायकेनेव । यथा तरुणेन कामिना वध्वा एतानि वस्तूनि क्रियन्ते । लीलाशोभि हास्यम्, अपरं वाक्यचातुर्यं, कटाक्षादयश्च एतानि विधीयन्ते ॥ १३ ॥

हावहारीति ॥ तरुणेनोत्कटेन यूना च मदेन कामिनेव ऋजोर्मुग्धाया अपि वध्वाः । किमुत प्रौढाना-मिति भावः । हावहारि विलासमनोहरं हसितं हासः वचनानां कौशलं प्रागल्भ्यं दृशि विकारविशेषाः विलासविशेषाश्चक्रिरे कृतानि । पुंसेव मौग्ध्यं त्याजयित्वा प्रौढत्वं नीतेत्यर्थः । अत्र हसितकौशलविकाराणां यौगपद्योक्त्या समुच्चयः । 'गुणक्रियायौगपद्यं समुच्चयः' इति लक्षणम् । तस्यौपम्ययोगेन सङ्करः । तेन ऋजोरपीत्यत्र किमुत प्रौढानामित्यर्थापत्तिर्व्यज्यते ॥ १३ ॥

**अप्रसन्नमपराद्धरि पत्यौ कोपदीप्तमुररीकृतधैर्यम् ॥**
**क्षालितं नु शमितं नु वधूनां द्रावितं नु हृदयं मधुवारैः ॥ १४ ॥**

अप्रसन्नमिति ॥ नु इति वितर्के, मधुवारैः मधुपानैः वधूनां नारीणां मनः अप-राद्धरि पत्यौ साभिलाषे भर्तरि अप्रसन्नं कलुषं सत् क्षालितं नु । अपरं न्विति वितर्के, कोपदीप्तं क्रोधाग्निज्वलितं सत् हृदयं शमितमुपशमितं नु । नु इति वितर्के, उररीकृतधैर्य-मङ्गीकृतधीरत्वं सत् हृदयं द्रावितं नु ॥ १४ ॥

अप्रसन्नमिति ॥ अपराद्धरि आगस्कारिणि । राधेस्तृच्प्रत्ययः । पत्यौ विषये अप्रसन्नं कलुषम् । क्षुभितमित्यर्थः । कोपदीप्तं कोपेन ज्वलितमुररीकृतधैर्यमङ्गीकृतकाठिन्यम् । 'ऊरीकृतमुररीकृतम्' इत्यमरः । 'ऊर्यादिच्विडाचश्च' इति गतित्वात् 'कुगतिप्रादयः' इति समासः । वधूनां हृदयं मधुवारैर्मद्यपर्यायैः । 'मधुवारा मधुक्रमाः' इत्यमरः । क्षालितं धौतं नु, शमितं निर्वापितं नु, द्रावितं द्रवीकृतं नु । अन्यथा कथं तादृगप्रसन्नतादीप्तताकठिनतानां हठान्निवृत्तिरिति भावः । अत्र क्षालितत्वादीना-मेकत्राऽविरोधात्सादृश्याच्च न संशयालङ्कारः । सति सादृश्ये विरुद्धाऽनेककोटिगोचरत्वात्तस्य, किन्तु

अप्रसन्नत्वादिनिरासनिमित्तकक्षालितत्वायुत्प्रेक्षात्रये तुशब्दानुवृत्तेः । तच्चाऽप्रसन्नत्वाद्युद्देशिनां क्षालितत्वाद्यनुद्देशिभिर्यथासंख्येनान्वयमपेक्षत इति यथासंख्यालङ्कारेण सङ्कीर्यते ॥ १४ ॥

**सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतदङ्गे ॥**
**विभ्रमं मधुमदः प्रमदानां धातुलीनमुपसर्ग इवार्थम् ॥ १५ ॥**

**सन्तमेवेति ॥** मधुना कृतो मदः मधुमदः क्षीबता प्रमदानां स्त्रीणामङ्गे शरीरे सन्तं वर्तमानं विभ्रमं विलासम् अदिद्युतत् द्योतयामास, किंभूतं विभ्रमं चिरं चिरकालमेवाऽप्रकृतत्वात् अप्रयुक्तत्वात् अप्रकाशितं अप्रकटितम् । कः कमिव उपसर्गः धातुलीनमर्थमिव। यथोपसर्गः धातुलीनं धातुसंस्थमर्थं प्रकाशयति, किंभूतमर्थं चिरं सन्तमेव अप्रयुक्तत्वात् प्रकटितम् । 'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते' इत्यर्थः ॥ १५ ॥

सन्तमेवेति ॥ मधुमदः प्रमदानामङ्गे वपुषि, अन्यत्र 'यस्मात्प्रत्ययविधिः—' इत्युक्तलक्षणे प्रकृत्याख्ये शब्दरूपे । चिरं सर्वदा सन्तमेव । एकत्र स्वभावात् , अन्यत्र त्वनेकार्थत्वाद्धातूनामिति भावः । किञ्च अप्रकृतत्वादप्रस्तुतत्वात् , अप्रसक्तत्वादिति भावः । अप्रकाशितमव्याञ्जितं विभ्रमं विलासं धातौ भूवादिके लीनं गूढमर्थमभिधेयमुपसर्गः प्रादिरिव अदिद्युतत् द्योतयति स्म । द्युतेः णौ चङ्युपधाया ह्रस्वः । 'द्युतिस्वाप्योः सम्प्रसारणम्' इत्यभ्यासस्य सम्प्रसारणमिकारः । उपसर्गस्य धातुलीनार्थद्योतकत्वमादानसन्दानादावनुसन्धेयम् । उपमालङ्कारः ॥ १५ ॥

**सावशेषपदमुक्तमुपेक्षा स्रस्तमाल्यवसनाभरणेषु ॥**
**गन्तुमुत्थितमकारणतः स्म द्योतयन्ति मदविभ्रममासाम् ॥ १६ ॥**

**सावशेषपदमिति ॥** एते पदार्थाः आसां कामिनीनां मदविभ्रमं द्योतयन्ति स्म मदलीलां प्रकाशयन्ति स्म । एते के–सावशेषपदम् अर्धोक्तं वाक्यम् , अपरं स्रस्तमाल्यवसनाभरणेषु भ्रष्टकुसुमवस्त्रालङ्करणेषु उपेक्षा अनादरः, अपरम् अकारणतः कारणं विना गन्तुमुत्थितं गमनाय चलितम्, एते द्योतयन्ति स्म ॥ १६ ॥

सावशेषपदमिति ॥ सावशेषाण्यर्धोक्तानि पदानि यस्मिंस्तदुक्तमुक्तिर्वाक्यं स्रस्तेषु माल्यवसनाभरणेषूपेक्षाऽनादरः अकारणतोऽकस्मादेव गन्तुमुत्थितमुत्थानं च आसां स्त्रीणां मदविभ्रमं मदविकारं द्योतयन्ति स्म । एतैरनुभावैरासां मदसञ्चारो ज्ञात इत्यर्थः । अत्रार्धोक्तादीनां खलेकपोतिकया मदद्योतने प्रवृत्तत्वात्कारणाख्यो द्वितीयसमुच्चयः ।

'खलेकपोतन्यायेन बहूनां कार्यसाधने ।
कारणानां समुद्योगः स द्वितीयः समुच्चयः' ॥

इति लक्षणात् ॥ १६ ॥

**मद्यमन्दविगलत्त्रपमीषच्चक्षुरुच्छ्वसित(१)पक्ष्म दधत्या ॥**
**वीक्ष्यते स्म शनकैर्नववध्वा कामिनो मुखमधोमुखयैव ॥ १७ ॥**

**मद्यमन्देति ॥** नववध्वा नवोढया शनकैर्मन्दंमन्दं कामिनो मुखं वीक्ष्यते स्म दृश्यते स्म । किं कुर्वत्या चक्षुर्नेत्रं दधत्या धारयन्त्या, किंभूतं चक्षुः उच्छ्वसितपक्ष्म, अपरं किंभूतं चक्षुः ईषत् किञ्चित् मद्यमन्दविगलत्त्रपं मद्यपानेन शनैः स्रस्तलज्जम् ॥ १७ ॥

मद्यमन्देति ॥ मद्येन मद्यपानेन मन्दमल्पं विगलन्ती त्रपा यस्य तत् । अत एवेषदुन्मिषितानि पक्ष्माणि लोमानि यस्य तच्चक्षुर्दधत्या नववध्वा नवोढया कामिनः प्रियस्य मुखमधोमुखयैव नमितवदनयैव ।

( १ ) ०दुन्मिषित ।

'स्वाङ्गाच्चोपसर्जनात्—' इति विकल्पादनीकारः । शनैरसम्भ्रमेण वीक्ष्यते स्म । तिर्यगीक्षितमित्यर्थः । अत्रापि मदमानाभ्यां त्रपैव बलीयसीति मौग्ध्यातिशयोक्तिः । समुद्यद्यौवना मुग्धा लज्जापिहितमन्मथा ॥१७॥

**या कथञ्चन सखीवचनेन प्रागभि प्रियतमं प्रजगल्भे ॥**

**व्रीडजाड्यमभजन्मधुपा सा स्वां मदात्प्रकृतिमेति हि सर्वः ॥ १८ ॥**

**येति ॥ या अङ्गना प्राक् पूर्वं सखीवचनेन वयस्यावाक्येन प्रियतममभि कान्तमभि लक्षीकृत्य कथञ्चन महता कष्टेन प्रजगल्भे प्रगल्भा जाता निर्व्रीडा जाता, सा स्त्री मधुपा सती मधुपानपरा सती व्रीडजाड्यमभजत् लज्जाजाड्यमाशिश्राय । हि यस्मात्कारणात् सर्वः कोऽपि लोकः मदात् मदं प्राप्य स्वां प्रकृतिं स्वस्वभावं प्राप्नोति ॥ १८ ॥**

येति ॥ या स्त्री कथञ्चन कृच्छ्रेण सखीवचनेन सखीप्रेरणया प्राङ्मदात्पूर्वमभिप्रियतमं प्रियतमसमक्षम् । आभिमुख्येऽव्ययीभावः । प्रजगल्भे प्रगल्भते स्म । सा स्त्री मधु पिबतीति मधुपा । आतोऽनुपसर्गे कः । व्रीडं जाड्यं मौग्ध्यमभजत् । विहायागन्तुकं धर्मं स्वभावमभजन्मदादित्यर्थः । तथा हि—सर्वो जनो मदाद्धेतोः स्वां स्वकीयां प्रकृतिमेति स्वभावं गच्छति । स्वाभाविकधर्मप्रकाशनं मदधर्मः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १८ ॥

**छादितः कथमपि त्रपयाऽन्तर्यः प्रियं प्रति चिराय रमण्याः ॥**

**वारुणीमदविशङ्कमथाऽऽविश्चक्षुषोऽभवदसाविव रागः ॥ १९ ॥**

**छादित इति ॥ रमण्याः प्रियं कान्तं प्रति चिराय चिरकालाय त्रपया लज्जया अन्तर्मध्ये कथमपि महता कष्टेन छादितः यो रागः भर्तारं प्रति संवृतः, अथ पश्चात् असावपि रागः चक्षुषो नेत्रादाविरभवत् प्रकटीबभूव । कथं यथा भवति वारुणीमदविशङ्क यथा भवति सुराक्षीबतानिर्भयं यथा भवति ॥ १९ ॥**

छादित इति ॥ रमण्याः यः प्रियं प्रति रागो विषयाभिलाषः चिराय त्रपया व्रीडयाऽन्तश्छादितः संवृतोऽसावयमेव रागोऽथास्मिन्नवसरे वारुणीमदविशङ्कं मद्यमदेन निःशङ्कं चक्षुषो नेत्रादाविरभवदिव आविर्भूतः किम् । अत्र रतिरागमदरागयोरभिलाषपाटलिमरूपयोः श्लेषप्रतिभोत्थापिताऽभेदाध्यवसायमूलातिशयोक्तिमहिम्ना योऽन्तर्गतो रागः स एव चिरनिरुद्धः सम्प्रति मदोद्घाटितत्रपाकपाटया चक्षुर्द्वारा बहिरुद्भिन्न इत्युत्प्रेक्ष्यते । आविर्भुवोर्व्यवधानं कविस्वातन्त्र्यात् ॥ १९ ॥

**आगतानगणितप्रतियातान् वल्लभानभिसिसारयिषूणाम् ॥**

**प्रापि चेतसि सविप्रतिसारे सुभ्रुवामवसरः सरकेण ॥ २० ॥**

**आगतानिति ॥ सरकेण सुभ्रुवां नायिकानां चेतसि मनसि सविप्रतिसारे सति सपश्चात्तापे सति अवसरः प्रापि प्रस्तावो लब्धः । कथं वल्लभान् अभि कान्तानभि लक्षीकृत्य, किंलक्षणान् वल्लभान् आगतान् गृहागतान्, अपरं किंभूतान् अगणितप्रतियातान् न गणितं प्रतियातं येस्ते तान्, किंलक्षणानां सुभ्रुवां वल्लभानभिसिसारयिषूणाम् अभिसरणं कर्तुमिच्छतीनाम्, अभिसर्तुमिच्छन्ति अभिसिसारयिषन्ति, अभिसिसारयिषन्ति ताः अभिसिसारयिषवः तासाम् ॥ २० ॥**

आगतानिति ॥ आगतान् स्वयं प्राप्तान् तथाप्यगणिताश्च ते प्रतियाताश्चेति । स्नातानुलिप्त इतिवत् पूर्वकाले समासः । तान् वल्लभानभिसिसारयिषूणां सम्प्रति चन्द्रोदये स्वयमेवाभिसारयितुमभिसर्तुमिच्छूनाम् । अभिसारयतेः स्वार्थण्यन्तात्सन्नन्तादुप्रत्ययः । सुभ्रुवां स्त्रीणां चेतसि सविप्रतिसारे कष्टमस्माभिरकार्यं कृतमिति पश्चात्तापयुक्ते सति 'पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि' इत्यमरः । सरकेण मधुना मधुपानेन वा । 'सरकं शीधुपात्रे स्याच्छीधुपाने च शीधुनि' इति विश्वः । अवसरः प्रापि प्राप्तः । स्वयङ्गमनसौकर्याय

मधुपानं चक्रुरित्यर्थः। अत्राभिसारणस्य पश्चात्तापकरणस्य मदयोगात्सौकर्योक्तेः समाध्यलङ्कारः। 'समाधिः सुकरं कार्यं कारणान्तरयोगतः' इति काव्यप्रकाशे॥ २०॥

**मा पुनस्तमभिसीसरमागस्कारिणं मदविमोहितचेताः(१)॥**
**योषिदित्यभिललाष न हालां दुस्त्यजः खलु सुखादपि मानः॥ २१॥**

**मा पुनरिति॥ योषित् कापि नायिका इति कारणात् हालां मदिरां न अभिललाष न आचकाङ्क्ष। न पपावित्यर्थः। इतीति किं—यत्, अहं मदविमोहितचेताः सती मद्यपानेन विमूढमानसा सती तमागस्कारिणम् अपराधकर्तारं पुनर्भूयोऽपि मा अभिसीसरम् अभिसरणं मा कार्षम्। मा गममित्यर्थः। युक्तं चैतत्, खलु यस्मात्कारणात् मानः अभिमानः सुखादपि दुस्त्यजः। वरं सुखं त्यज्यते, न तु मानः॥ २१॥**

मा पुनरिति॥ मदेन विमोहिताचित्ता भ्रमिताचित्ता सती। अहमिति शेषः। आगस्कारिणमपराधकृतम्। 'अतः कृकमि-'इत्यादिना विसर्जनीयस्य सत्वम्। तं पुनर्भूयो माऽभिसीसरं नाभिसारयाणि। सरतेः स्वार्थे णौ चङ्युपधाया ह्रस्वः, 'दीर्घो लघोः' इत्यभ्यासस्य दीर्घः। इति, इत्यालोच्येत्यर्थः। गम्यमानार्थत्वादप्रयोगः, अन्यथा पौनरुक्त्यमित्यालङ्कारिकाः। योषित्काचित्स्त्री हालां सुराम्। 'सुरा हलिप्रिया हाला' इत्यमरः। नाभिललाष। तथा हि-सुखादपि मानो दुस्त्यजः खलु। अतोऽल्पकारणादधिकार्थहानिरिति नाशङ्कनीयामित्यर्थान्तरन्यासः॥ २१॥

**ह्रीविमोहमहरद्दयितानामन्तिकं रतिसुखाय निनाय॥**
**सप्रसादमिति (२) सेवितमासीत्सद्य एव फलदं मधु तासाम्॥ २२॥**

**ह्रीविमोहमिति॥ तासामङ्गनानां मधु मद्यम् इति अमुना प्रकारेण सेवितं सत् जुष्टं सत् सप्रसादं यथा भवति तथा सद्य एव फलदमासीत् तत्क्षणं फलदायि बभूव। तत्कथमित्यपेक्षायामित्यत आह—यतः ह्रीविमोहमहरत् लज्जाजाड्यं निरास, अपरं रतिसुखाय सम्भोगसौख्याय दयितानां भर्तॄणामन्तिकं निनाय कान्तसामीप्यं प्रापयामास। इति फलं ददावित्यर्थः॥ २२॥**

ह्रीविमोहमिति॥ सप्रसादं मनः प्रसादपूर्वकम्। ममेदं श्रेयस्करमिति भावनापूर्वकमित्यर्थः। अन्यथा फलोदय एव न स्यात्। 'दैवज्ञे भेषजे गुरौ' इति वचनादिति भावः। सेवितमुपभुक्तमिति हेतोर्मधु तासां सद्य एव फलदमासीत्। कुतः-ह्रीविमोहं व्रीडाजाड्यमहरत्, रतिसुखाय सुरतसुखाय दयितानामन्तिकं निनाय। अत्र ह्रीहरणान्तिकनयनवाक्याभ्यां फलदानवाक्यार्थसमर्थनादनेकवाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः॥ २२॥

**दत्तमात्तमदनं दयितेन व्याप्तमातिशयिकेन रसेन॥**
**सस्वदे मुखसुरं प्रमदानां(३) नाम रूढमपि च व्युदपादि॥ २३॥**

**दत्तमिति॥ प्रमदानामङ्गनानां मुखसुरं वदनमद्यं सस्वदे स्वादितं बभूव, अपि च अनन्तरं तासां प्रमदानां रूढं प्रसिद्धं नाम व्युदपादि अभिधानं व्युत्पादितम्। प्रमदा इति स्त्रीणां नाम मदपानाद्बभूवेत्यर्थः। रूढं नाम निष्पादयामास। मुखेन उच्छिष्टा सुरा मुखसुरम्। किंभूतं मुखसुरम् आत्तमदनं गृहीतकन्दर्पं यथा भवति तथा दयितेन कान्तेन दत्तम् अर्पितम्। अपरं किंभूतं मुखसुरम् आतिशयिकेन अतिशयवता रसेन स्नेहेन व्याप्तं भरितम्। अतिशयस्नेहयुक्तमित्यर्थः॥ २३॥**

दत्तमिति॥ आत्तमदनमाहितमदनं यथा तथा दयितेन दत्तम्। अत एवाऽऽतिशयिकेनाऽतिशयप्रचुरेण

(१) चित्ता। (२) ०मिव। (३) प्रमदाभ्यो।

विनयादिभ्यष्ठक्। रसेन स्वादेन व्यापम् । स्वादुतरमित्यर्थः । मुखस्य सुरा मुखसुरं गण्डूषमद्यम् । 'विभाषा सेनासुराच्छायाशालानिशानाम्' इति नपुंसकत्वम् । प्रकृष्टो मदो यासां ताभ्यः प्रमदाभ्यः स्त्रीभ्यः । 'रुच्यर्थानां प्रीयमाणः' इति सम्प्रदानसंज्ञा । सस्वदे रुरुचे । प्रीतिकरमभूदित्यर्थः । कर्तरि लिट् । अत एव तदेव तासां मदकरं चासीदित्याह—नामेति । रूढं प्रागश्वकर्णादिवदव्युत्पन्नं नामापि प्रमदेति नामधेयं च व्युदपादि व्युत्पन्नं जातम् । यथा प्रकृष्टमदयोगात्प्रमदेत्यन्वर्थनामत्वं भवेत्तथा तास्तेनाऽभायान्नित्यर्थः । पद्यतेरण्यन्तात्कर्तरि लुङ्, 'चिण् ते पदः' इति चिण्प्रत्यये चिणो लुक् । 'प्रमदाभिः' इति पाठे सस्वदे स्वदयाञ्चक्रे इत्यर्थः । 'स्वादनमशनं भक्षणमाहारो भोजनं स्वदनम्' इति हलायुधे । स्वादिस्वाद्योरेकार्थत्वाऽभिधानात्कर्मणि लिट् । अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुत्वात्काव्यलिङ्गम् ॥ २३ ॥

**लब्धसौरभगुणो मदिराणामङ्गनास्यकमलस्य(१) च गन्धः ॥**
**मोदिताऽलिरितरेतरयोगादन्यतामभजताऽतिशयं नु ॥ २४ ॥**

**लब्धेति ॥ अङ्गनास्यकमलस्य च गन्धः अङ्गनावदनपद्मस्याऽऽमोदः, नु इति वितर्के, अन्यतामन्योन्यतामभजत् परस्परत्वमाश्रितः, अथ चाऽतिशयमाधिक्यं प्राप । तदेव परस्परत्वमाह—किंभूतः आमोदः मदिराणां लब्धसौरभगुणः मद्यानां प्राप्तसौरभ्यविशेषः, अपरं किंभूतः आमोदः इतरेतरयोगात् मोदिताऽलिः परस्परसंयोगात्सन्तोषितभृङ्गः । एनेन गन्धातिशयत्वयुक्तं कामिनीमुखमासीदिति भावः ॥ २४ ॥**

**लब्धेति ॥** लब्धसौरभगुणो मेलनात्प्राप्तसौरभोत्कर्षः अतएव मोदिताऽलिरानन्दितभृङ्गः मदिराणां मद्यानामङ्गनास्यमेव चषकं तस्य च गन्धो गन्धगुणः इतरेतरस्य योगान्मिश्रणादन्यतामपूर्वतामातिशयं नु तत्रैवोत्कर्षं वाऽभजत् । यक्षकर्दमादौ घृताऽक्तकुङ्कुमादौ चोभयथा दर्शनादयं संशय इति भावः । अत एव संशयालङ्कारः ॥ २४ ॥

**मानभङ्गपटुना सुरतेच्छां तन्वता प्रथयता दृशि रागम् ॥**
**लेभिरे सपदि भावयताऽन्तर्योषितः प्रणयिनेव मदेन ॥ २५ ॥**

**मानेति ॥ मदेन मद्येन योषितोऽङ्गनाः लेभिरे प्राप्ताः । किंभूतेन मदेन मानभङ्गपटुना अभिमानविनाशनदक्षेण, किं कुर्वता मदेन सुरतेच्छां तन्वता सम्भोगस्पृहां विस्तारयता, अपरं किं कुर्वता दृशि नेत्रे रागमासक्तिम् अथ च लौहित्यं प्रथयता, अपरं किं कुर्वता सपदि वेगेन अन्तर्मध्ये भावयता चित्ताभिप्रायं रतिलक्षणं कुर्वता, केनेव प्रणयिनेव कान्तेनेव । यथा प्रणयिना वल्लभेन योषितो लभ्यन्ते । किंभूतेन प्रणयिना, सर्वाण्येव विशेषणानि योज्यानि । दृशि नेत्रे रागं विषयासक्तिमेव प्रथयतेति योज्यम् ॥ २५ ॥**

**मानेति ॥** मानभङ्गपटुना कोपशमनसमर्थेन सुरतेच्छां तन्वता मदनोद्दीपकेन दृशि रागमारुण्यं प्रीतिं च प्रथयता प्रकाशयता अन्तरन्तःकरणं भावयता रञ्जयता मदेन प्रणयिनेव योषितः स्त्रियो लेभिरे प्राप्ताः । रागमिति श्लेषमूलातिशयोक्तिसङ्कीर्णेयमुपमा ॥ २५ ॥

**पानधौतनवयावकपिङ्ग(२) कामिनी निभृतचुम्बनदक्षा ॥**
**भर्तुरोष्ठदल(३)रागरसेन स्वं किलाऽधरमुपाऽऽलि ररञ्ज ॥ २६ ॥**

**पानेति ॥ कामिनी अङ्गना उपाऽऽलि सखीसमीपे स्वमधरं निजमोष्ठं, किलेति व्याजे, ररञ्ज रञ्जयामास, केन भर्तुर्वल्लभस्य ओष्ठदलरागरसेन अधरपत्रलौहित्येन । रागो हि पत्रसम्भव इति भावः । यतः किंभूता कामिनी निभृतचुम्बनदक्षा निःशब्दचुम्बनरता ।**

---

(१) चषकस्य । (२) रागं सुभ्रुवो……दक्षाः । (३) प्रेयसामधर……ररञ्जुः ।

ननु निभृतचुम्बनं विधाय वल्लभाधरपत्ररसेन कामिन्या मिजौष्ठरञ्जने किं कारणमत आह—यतः किंलक्षणं स्वमधरं पानधौतनवयावकपिङ्गं पानेन प्रक्षालितनव्याऽलक्तकरागम् । ररञ्जेत्यत्र स्नेहलक्षणम् । अनुरञ्जयाञ्चकारेत्यर्थः ॥ २६ ॥

पानेति ॥ उपालि आल्याः समीपे । समीपार्थेऽव्ययीभावः । 'आलिः सखी वयस्या च' इत्यमरः । अत एव निभृतचुम्बनदक्षाः गूढचुम्बनचतुराः सुभ्रुवः पानधौतनवयावकरागं मधुपानक्षालितलाक्षारागं स्वमधरं प्रेयसामधरेषु यो रागरसस्ताम्बूलरागद्रवस्तेन ररञ्जुः किल । अन्यगुणस्यान्यत्राधानमिह रञ्जेरर्थः । किलेत्यपरमार्थे । तेन पानधौतरागेषु स्वाधरेषु प्रेयोऽधररागसंक्रमणनाटितकेन सखीसमक्षमेव प्रियांश्चुम्बनं कारयामासुरित्यर्थः । अत्रागन्तुना रञ्जनेन सहजचुम्बननिगूहनान्मीलनालङ्कारभेदः । 'मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम्' इति लक्षणात् ॥ २६ ॥

अर्पितं रसितवत्यपि नामग्राहमन्ययुवतेर्दयितेन ॥
उज्झति स्म मदमप्यपिबन्ती वीक्ष्य मद्यमितरा ऽथ(१) ममाद ॥ २७ ॥

अर्पितमिति ॥ काचिन्नायिका मद्यं रसितवत्यपि पिबन्त्यपि मदमुज्झति स्म मत्ततां त्यजति स्म । न ममादेत्यर्थः । किंभूतं मद्यं दयितेन अर्पितं दत्तं, किं कृत्वा अन्ययुवतेर्नामग्राहं नाम गृहीत्वा इति नामग्राहम् । सपत्न्या नाम गृहीत्वेत्यर्थः । अत एव न ममादेत्यर्थः । अथानन्तरम् इतरा सपत्नी मद्यं वीक्ष्य मदिरामवलोक्य ममाद । मत्ता बभूवेत्यर्थः । किंभूता इतरा अपिबन्त्यपि सुरापानमकुर्वत्यपि । परं हर्षवशात् मत्तेत्यर्थः॥२७

अर्पितमिति ॥ दयितेनाऽन्ययुवतेः सपत्न्या नामग्राहं नाम गृहीत्वा । 'नाम्न्यादिशिग्रहोः' इति णमुल् प्रत्ययः । अर्पितं दत्तं मद्यं रसितवत्यास्वादितवत्यपि । रसतेरास्वादनार्थात् क्तवतौ 'उगितश्च' इति ङीप् । काचिदिति शेषः । मदमुज्झति स्म, न ममादेत्यर्थः । इतरा तु सपत्नी तु मद्यमपिबन्त्यपि वीक्ष्य दृष्ट्वैव ममाद मत्ता । मनोनिर्वृतिरेव मदहेतुरिति भावः । अत्र पूर्वार्धे रसितवत्यपि न ममादेति विशेषोक्तिः । उत्तरार्धे त्वपिबन्त्यपि ममादेति विभावना ।

'कारणेन विना कार्यस्योत्पत्तिः स्याद्विभावना ।
तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते' ॥

तयोः सङ्करः ॥ २७ ॥

अन्यया ऽन्यवनितागतचित्तं चित्तनाथमभिशङ्कितवत्या ॥
पीतभूरिसुरयाऽपि न मेदे निर्वृतिर्हि मनसो मदहेतुः ॥ २८ ॥

अन्ययेति ॥ अन्यया कयाचिद्वनितया न मेदे न मद्यते स्म । किंभूतया पीतभूरिसुरयाऽपि आस्वादितप्रभूतमद्ययापि, किं कुर्वत्या चित्तनाथं कान्तम् अभिशङ्कितवत्या अभिशङ्कयन्त्या । भीतवत्येत्यर्थः । किंभूतं चित्तनाथम् अन्यवनितागतचित्तं सपत्न्यां गतमनस्कम् । युक्तोऽयमर्थः, हि यस्मात् कारणात् निर्वृतिः सन्तोष एव मनसः चित्तस्य मदहेतुः मदकारणम् । नाऽतुष्टचित्ते मदाविर्भावः स्यादिति भावः ॥ २८ ॥

अन्ययेति ॥ चित्तनाथं भर्तारमन्यवनितागतचित्तं सपत्नीसंक्रान्तचेतसमभिशङ्कितवत्या तस्मिन्नविश्वसत्या अन्यया कयाचित् स्त्रिया पीतभूरिसुरयाऽपि न मेदे न मत्तम् । माद्यतेर्भावे लिट् । तथा हि—मनसो निर्वृतिर्मदहेतुर्हि । सामान्येन विशेषसमर्थनादर्थान्तरन्यासः । एषा नवोढा भीरुश्च, अन्यथा साशङ्कायाः पानाऽघटनादिति ॥ २८ ॥

---

(१) ०मितरा तु ।

कोपवत्यनुनयानगृहीत्वा प्रागथो मधुमदाऽऽहितमोहा ॥
कोपिनं विरहखेदितचेताः(१) कान्तमेव कलयन्त्यनुनिन्ये ॥ २९ ॥

कोपवतीति ॥ काचिदङ्गना कान्तमेव प्रियमेव अनुनिन्ये प्रसादयामास । किं कुर्वती अङ्गना कोपिनं कलयन्ती कोपाविष्टं जानती, यतः कीदृशी विरहखेदितचेताः वियोगपीडितमानसा, किं कृत्वा प्राक् पूर्वम् अनुनयान् प्रसादान् अगृहीत्वा न आदाय, यतः किंभूता कोपवती कोपयुक्ता । अत एव प्राक् विरहोऽभवत् तेन पीडिता । पुनः कीदृशी अथ पश्चात् मधुमदाऽऽहितमोहा मधुक्षीबतोत्पादितवैक्लव्या । अत एव कान्तं प्रसादयामास ॥ २९ ॥

कोपवतीति ॥ प्राक् प्रथमं कोपवती सरोषा अत एवाऽनुनयान् प्रियप्रार्थनान्यगृहीत्वा अनादृत्य, अथो सम्प्रति विरहखेदितचित्ता पश्चात्तापतप्ता काचिन्मधुमदेनाऽऽहितमोहा कृतचित्तविभ्रमा सती कान्तमेव कोपितमात्मना रोषितं कलयन्ती जानती अनुनिन्ये । सापराधाऽहं क्षमस्वेति प्रार्थितवती । मत्तेषु किं न सम्भावितमिति भावः । एषा कलहान्तरिता ॥ २९ ॥

कुर्वता मुकुलिताक्षियुगानामङ्गसादमवसादितवाचाम् ॥
ईर्ष्ययेव हरता ह्रियमासां तद्गुणः स्वयमकारि मदेन ॥ ३० ॥

कुर्वतेति ॥ मदेन मद्येन आसां कामिनीनां तद्गुणः तस्या लज्जाया गुणः तद्गुणः स्वयमकारि आत्मना क्रियते स्म । यत् लज्जया भवति, तन्मदेन कृतमित्यर्थः । किं कुर्वता मदेन ह्रियं हरता लज्जामपनयता । लज्जा एव मत्ततागुणस्य विघ्नः । न हि तस्मिन् विघ्ने चित्तविकारः स्यात् । अतश्चोत्प्रेक्ष्यते—ईर्ष्ययेव कोपेनेव लज्जाभङ्गः कृतः । अत एवाऽपरं किं कुर्वता मदेन अङ्गसादं शरीरखेदं कुर्वता विदधता, किंभूतानाम् आसां मुकुलिताक्षियुगानां निमीलितनयनयुग्मानाम्, अपरं किंभूतानाम् अवसादितवाचामवसानं नीतगिराम् । असौ मत्ततागुणस्य जातिरित्यर्थः ॥ ३० ॥

कुर्वतेति ॥ मुकुलिताक्षियुगानामवसादितवाचां कुण्ठितगिरामासां स्त्रीणामङ्गसादमङ्गसादरूपशरीरनिश्चेष्टतां कुर्वता ह्रियं हरता मदेन ईर्ष्ययेवेत्युत्प्रेक्षा । तस्या ह्रियो गुणस्तद्गुणः अक्षिनिमीलनवाक्सादाऽङ्गसादरूपः स्वयमकारि कृतः । ह्रीमदयोस्तुल्यानुभाविकत्वादिति भावः ॥ ३० ॥

गण्डभित्तिषु पुरा सदृशीषु व्याञ्जि नाञ्चितदृशां प्रतिमेन्दुः ॥
पानपाटलितकान्तिषु पश्चाद्रोध्र(२)चूर्णतिलकाकृतिरासीत् ॥ ३१ ॥

गण्डभित्तिष्विति ॥ प्रतिमेन्दुः प्रतिबिम्बचन्द्रः पुरा पूर्वम् अञ्चितदृशाम् अतिसौन्दर्येण अञ्चिताः पूजिता वर्णिताः दृशो नयनानि यासां तास्तथा तासां रम्यलोचनानामङ्गनानां गण्डभित्तिषु कपोलस्थलीषु न व्याञ्जि न व्यक्तो ददृशे । किंभूतासु गण्डभित्तिषु सदृशीषु चन्द्रतुल्यासु, पश्चादनन्तरं पानपाटलितकान्तिषु मदिरास्वादनिष्पन्नरक्तच्छविषु गण्डभित्तिषु स एव प्रतिमेन्दुः रोध्रचूर्णतिलकाकृतिरासीत् रोध्रमयपत्रलतातुल्यो बभूव । एतेन मद्यपानादीषदारक्तत्वकथनमित्यर्थः । 'श्वेतरक्तस्तु पाटलः' ॥ ३१ ॥

गण्डभित्तिष्विति ॥ प्रतिमेन्दुः प्रतिबिम्बचन्द्रः सदृशीषु स्वसमानवर्णास्वञ्चितदृशां सुदृशां गण्डभित्तिषु पुरा सुरापानात्पूर्वं न व्याञ्जि नाऽभेदि । तदेकतापत्त्या तद्विविक्ततया न गृहीत इत्यर्थः । अत एव सामान्यालङ्कारः । 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् । विपूर्वादञ्जेः कर्मणि लुङ्,

(१) कोपितं ··· चित्ता । (२) ०ल्लोध्र ।

'आङजादीनाम्' इत्याडागमः । पश्चात्पानानन्तरं पानेन पानमदेन पाटलिता पाटलीकृता कान्तिर्यासां तासु गण्डभित्तिषु लोध्रचूर्णस्य लोध्रपरागस्य तिलकश्चित्रकम् ।

'तमालपत्रतिलकाचित्रकाणि विशेषकम् ।
द्वितीयं च तुरीयं च न स्त्रियाम्–' ॥

इत्यमरः । तस्याकृतिरिवाकृतिर्यस्य स आसीत् । वैवर्ण्याद्विविक्त एवासीदित्यर्थः । तिलकाकृतिरिति निदर्शना पूर्वोक्तसामान्यसंसृष्टा ॥ ३१ ॥

**उद्धतैरिव परस्परसङ्गादीरितान्युभयतः कुचकुम्भैः ॥**
**योषितामतिमदेन जुघूर्णुर्विभ्रमातिशयपुंषि वपूंषि ॥ ३२ ॥**

**उद्धतैरिवेति ॥ योषितां नायिकानां वपूंषि शरीराणि अतिमदेनाऽतिक्षीबतया जुघूर्णुः घूर्णन्ति स्म । किंभूतानि वपूंषि विभ्रमातिशयपुंषि विभ्रमातिशयं पुष्णन्ति दधति तानि विभ्रमातिशयपुंषि विलासातिशययुक्तानि, अपरं किंभूतानि, उत्प्रेक्ष्यन्ते—उभयतः पक्षद्वयं कुचकुम्भैः स्तनकलशैः ईरितानीव प्रेरितानीव । किंभूतैः कुचकुम्भैः परस्परसङ्गात् अन्योन्यावष्टम्भात् उद्धतैः औन्नत्ययुक्तैः । अन्येऽपि स्थूलाः परस्परयोगात् उद्धताः सन्तः सर्वं प्रेरयन्तीत्यर्थः ॥ ३२ ॥**

उद्धतैरिवेति ॥ उद्धतैर्दृप्तैरिव कुचकुम्भैः परस्परसङ्गादन्योन्यसङ्घर्षादुभयत ईरितान्याकृष्टानि तथा विभ्रमातिशयं विलासविशेषं पुष्णन्ति तानि । 'नपुंसकस्य झलचः' इति नुमागमः । योषितां वपूंषि । पूर्ववन्नुमागमः । 'सान्तमहतः संयोगस्य' इति दीर्घ इति विशेषः । अतिमदेन जुघूर्णुः भ्रेमुः । दृप्तसङ्घर्षस्तटस्थपीडाकरः । यथा वृषभकलहाद्वत्सपादभङ्ग इति भावः ॥ ३२ ॥

**चारुता वपुरभूषयदासां तामनूननवयौवनयोगः ॥**
**तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसङ्गमभूषः ॥ ३३ ॥**

**चारुतेति ॥ चारुता मनोज्ञता आसां वधूनां वपुः शरीरमभूषयत् अलञ्चकार, अपरम् अनूननवयौवनयोगः सम्पूर्णतारुण्यसंयोगः तां चारुतामभूषयत्, अपरं मकरकेतनलक्ष्मीः कन्दर्पश्रीः तम् अनूननवयौवनयोगमभूषयत् , अपरं मदः चित्तविकारः तां मकरकेतनलक्ष्मीमभूषयत् । किंभूतो मदः दयितसङ्गमभूषः दयितसङ्गमः भूषा यस्य स तथा । मदो वल्लभयोगेन भूषित इत्यर्थः ॥ ३३ ॥**

चारुतेति ॥ आसां योषितां वपुश्चारुता सौन्दर्यमभूषयत् । तां चारुतामनूननवयौवनयोगः सम्पूर्णयौवनसम्पत्तिरभूषयत् । तं पुनर्नवयौवनयोगं तु मकरकेतनलक्ष्मीर्मदनसम्पत्तिरभूषयत् । तां मकरकेतनलक्ष्मीं दयितसङ्गम एव भूषा यस्य स मदोऽभूषयत् । तां मदः तं च दयितसङ्गम इत्यर्थः । प्रक्रमानुसारात् तां मदस्तमपि वल्लभसङ्ग इति प्रयोक्तव्ये विशेषणत्वेन प्रयोगो महाकवीनामनुद्वेगात् । यथा भारवेः प्रयोगः–'शुचि भूषयती'त्यादौ श्लोके 'स नयाङ्कः स च सिद्धिभूषणः' इति वक्तव्ये 'स नयापादितसिद्धिभूषणः' इति । अत्रोत्तरोत्तरस्य पूर्वपूर्वविशेषणत्वादेकावली ।

'यत्रोत्तरोत्तरेषां स्यात्पूर्वपूर्वं प्रति क्रमात् ।
विशेषणत्वकथनमसावेकावली मता' ॥

इति लक्षणात् ॥ ३३ ॥

**क्षीबतामुपगतास्वनुवेलं तासु रोषपरितोषवतीषु ॥**
**अग्रहीत्सशरं धनुरुज्झामास नूज्झितनिषङ्गमनङ्गः ॥ ३४ ॥**

**क्षीबतामिति ॥ अनङ्गः कन्दर्पः तासु अङ्गनासु रोषपरितोषवतीषु सतीषु क्रोध-**

सन्तोषयुक्तासु सतीषु, नु इति वितर्के, सशरं ससायकं धनुः अग्रहीत् कार्मुकं जग्राह । अथ पक्षान्तरे, नु इति वितर्के, उज्झितनिषङ्गं परित्यक्तभल्लकं धनुः उज्झामास तत्याज । एतेन यदा कामः सशरं धनुर्गृह्णाति तदा ताः स्त्रियः तोषं कुर्वते, यदा च चापं त्यजति तदा रोषं कुर्वन्तीत्यर्थः ॥ ३४ ॥

क्षीबतामिति ॥ क्षीबतां मत्तताम् । 'मत्ते शौण्डोत्कटक्षीबाः' इत्यमरः । 'क्षीबृ मदे' इत्यस्माद्धातोः 'अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः' इति निष्ठान्तो निपातितः । उपगतासु प्राप्तासु अत एवाऽनुवेलं प्रतिक्षणं रोषपरितोषवतीषु तासु स्त्रीषु विषये अनङ्गः सशरं धनुरग्रहीन्नु उज्झितनिषङ्गं त्यक्ततूणीरं यथा तथा उज्झामास नु तत्याज किम् । उज्झतेर्लिट् 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्ययः । रुष्टासु धनुर्ग्रहणं परितुष्टासु त्यागश्च रोषपरितोषाभ्यामुत्प्रेक्ष्यते । अन्यथा रोषानन्तरं परितोषः परितोषानन्तरं रोषश्च न स्यादिति भावः । रोषपरितोषयोर्धनुर्ग्रहणाभ्यां यथासंख्येनान्वयाद्यथासंख्यालङ्कारभेदः । तेनोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः ॥

**शङ्कयाऽन्ययुवतौ वनिताभिः प्रत्यभेदि दयितः स्फुटमेव ॥**
**न क्षमं भवति तत्त्वविचारे मत्सरेण हतसंवृति चेतः ॥ ३५ ॥**

शङ्कयेति ॥ वनिताभिः दयिताभिः दयितः कान्तः स्फुटमेव प्रत्यक्षमेव प्रत्यभेदि व्यक्तं प्रकटमेवोपालब्धः, कया अन्ययुवतौ सपत्न्यां निमित्तभूतायां शङ्कया भयेन । अपराङ्गनायां समीपस्थायामेव कोपेन अङ्गनया कान्तः स्फुटमेवोपालब्ध इति भावः । युक्तोऽयमर्थः, यतः कारणात् मत्सरेण ईर्ष्यया हतसंवृति विनाशितमन्त्रगुप्ति सत् चेतः मनः तत्त्वविचारे योगायोगस्मरणे न क्षमं भवति समर्थं न स्यात् । कोपेन चित्तमुचितानुचितं न विचारयति इत्यर्थः ॥ ३९ ॥

शङ्कयेति ॥ वनिताभिरन्ययुवतौ सपत्न्यां शङ्कया तत्सङ्गशङ्कामात्रेण दयितः स्फुटमेव निश्चितवदेव प्रत्यभेदि । सिद्धवत्कृत्वोद्घाटित इत्यर्थः । अनुचितोऽयमविमृष्य मिथ्याऽभियोग इति शङ्कां परिहरति—नेति । मत्सरेण वैरेण हता संवृतिर्गोप्यगोपनं यस्य तच्चेतः तत्त्वविचारे भूतार्थचिन्तायां क्षमं सहिष्णु न भवति । मत्सरग्रस्तचेतसामेष स्वभाव इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३५ ॥

**आननैर्विचकसे हृषिताभिर्वल्लभानभि तनूभिरभावि ॥**
**आर्द्रतां हृदयमाप च रोषो लोलति स्म वचनेषु वधूनाम् ॥ ३६ ॥**

आननैरिति ॥ वधूनाम् आननैर्वदनैः विचकसे विकसितम् । अपरं तनूभिः शरीरैः वल्लभान् कान्तान् अभि लक्षीकृत्य हृषिताभिः अभावि रोमाञ्चयुक्ताभिर्जातम् । अपरं वधूनां हृदयं चेतः आर्द्रतां प्राप स्नेहयुक्तं बभूव । अपरं रोषः क्रोधः वचनेषु वाक्येषु लोलति स्म लोडितः । वचनानि रोषयुक्तानि बभूवुः, चित्तं पुनरार्द्रमेव । स्नेहकलहात् रोषः वचनेषु लोडित इत्यर्थः ॥ ३६ ॥

आननैरिति ॥ वल्लभानभि । वल्लभसमक्षमित्यर्थः । 'अभिरभागे' इति लक्षणार्थकर्मप्रवचनीयत्वाद् द्वितीया । वधूनामाननैर्विचकसे विकसितम् । भावे लिट् । तनूभिरङ्गैर्हृषिताभिः पुलकिताभिः, 'हृषेर्लोमसु' इतीडागमः । अभावि भूतम् । भावे लुङ् । हृदयं चार्द्रतामाप । काठिन्यं जहावित्यर्थः । वचनेषु रोषो लोलति चलति स्म । वचनगतो रोषो वक्रताऽपि निवृत्तेत्यर्थः । अत्र वधूष्वाननविकासाद्यनेकक्रियायौगपद्यात् समुच्चयालङ्कारः । 'गुणक्रियायौगपद्यं समुच्चयः' इति लक्षणात् ॥ ३६ ॥

**रूपमप्रतिविधानमनोज्ञं प्रेम कार्यमनपेक्ष्य विकासि ॥**
**चाटु चाऽकृतकसम्भ्रममासां कार्मणत्वमगमद्रमणेषु(१) ॥ ३७ ॥**

---

( १ ) ०मगमन् रमणेषु ।

**रूपमिति** ॥ आसामङ्गनानाम् एतद् वक्ष्यमाणं रमणेषु भर्तृषु विषये कार्मणत्वमगमत् वशीकरणत्वं ययौ । तावत् किं-रूपं शरीरावयवः कार्मणत्वमगमत्, किंभूतं रूपम् अप्रतिविधानमनोज्ञं स्वभावरम्यम् । अपरं प्रेम स्नेहः कार्मणत्वमाययौ, किंभूतं प्रेम कार्यमनपेक्ष्य विकासि कार्यं विनापि सस्नेहं प्रसरणशीलं पुष्टम् । अपरं चाटु प्रियं वाक्यं कार्मणत्वमाययौ, किंभूतं चाटु अकृतकसम्भ्रमम् अकृत्रिमादरयुक्तम् । इत्येवं वशीकरणत्वं जगामेत्यर्थः । 'वशक्रिया संवननं मूलकर्म तु कार्मणम्' ॥ ३७ ॥

**रूपमिति** ॥ अप्रतिविधानमप्रतियत्नमेव मनोज्ञम् । स्वभावसुन्दरमित्यर्थः । रूपमाकृतिः कार्यं प्रयोजनमनपेक्ष्य विकासि वर्धमानम् । अनौपाधिकामित्यर्थः । प्रेम अकृतकसम्भ्रममकृत्रिमसंरम्भं चाटु प्रियवचनं चाऽऽसां स्त्रीणां रमणेषु विषये कार्मणत्वं वशीकरणकर्मत्वम् ।'वशक्रिया संवननं मूलकर्म तु कार्मणम्' इत्यमरः । तद्युक्तात्कर्मणोऽण् । अगमन् प्रापानि । गमेर्लुङ् च्लेरङादेशः । अत्र रूपादिष्वारोप्यमाणस्य कार्मणस्य प्रकृतोपयोगात्परिणामालङ्कारः ॥ ३७ ॥

**लीलयैव सुतनोस्तुलयित्वा गौरवाढ्यमपि लावणिकेन ॥**
**मानवञ्चनविदा वचनेन क्रीतमेव हृदयं दयितेन**(१) **॥ ३८ ॥**

**लीलयैवेति** ॥ दयितेन सुतनोर्नायिकाया हृदयं मनः वचनेन वाक्येन क्रीतमेव गृहीतमेव । किंभूतेन दयितेन मानवञ्चनविदा मानस्य वञ्चनं निरसनं वेत्तीति तथा तेन दर्पविनाशदक्षेण, किंभूतेन वचनेन लावणिकेन लावण्यगुणयुक्तेन, किं कृत्वा जगृहे गौरवाढ्यमपि गुरुत्वप्राचुर्यमपि लीलयैव हेलामात्रेणैव तुलयित्वा परिमाण्य । यथा लावणिकेन लवणं विक्रेतुकामेन वणिजा कस्यचित्पुंसः गौरवाढ्यमपि बहुमूल्यमपि वस्तु लीलया हेलया तुलयित्वा मानवञ्चनविदा सता क्रीयते इत्युक्तिलेशः ॥ ३८ ॥

**लीलयेति** ॥ लावण्यं कान्तिविशेषोऽस्यास्तीति लावणिकं लावण्यवत् । 'अत इनिठनौ' इति ठन्प्रत्यये ठस्येकः,'यस्येति च' इत्यल्लोपे 'हलस्तद्धितस्य' इति यकारलोपः।अन्यत्र तु लवणं पण्यमस्यास्तीति लावणिको-लवणव्यवहारी। लवणाट्ठञ् प्रत्ययः।लावणिकेन मानवञ्चनविदाऽहङ्कारहरणदक्षेण, अन्यत्र परिमाणप्रतारणपटुना सुतनोः स्त्रियाः वदनेन कर्त्रा गौरवाढ्यं गाम्भीर्यसम्पन्नमपि, अन्यत्र गुरुत्वयुक्तमपि दयितस्य हृदयं लीलया विलासेनैव तुलयित्वा, अन्यत्राऽनायासेनैवोन्माय । गुर्वपि लघुतया मीत्वेत्यर्थः । क्रीतं वशीकृतमेव अन्यत्र दानेन स्वीकृतमेव। अत्र विशेषणमाहम्नैव वदने लावणिकत्वस्य हृदये पण्यत्वस्य च प्रतीतेः समासोक्तिरलङ्कारः । हृदयस्य प्रतीयमानपण्याऽभेदेन क्रीतत्वोक्तेरलौकिकहृदयावर्जने लौकिकक्रयव्यवहारसमारोप.

**स्पर्शभाजि विशदच्छविचारौ कल्पिते मृगदृशां सुरताय ॥**
**सन्नतिं दधति पेतुरजस्रं दृष्टयः प्रियतमे शयने च ॥ ३९ ॥**

**स्पर्शभाजीति** ॥ मृगदृशां मृगलोचनानां दृष्टयः लोचनानि अजस्रं निरन्तरं प्रियतमे भर्तरि अपरं शयने शय्यायां च निपेतुः निपतिताः । किंभूते प्रियतमे शयने च स्पर्शभाजि सौकुमार्याश्रिते, अपरं किंभूते विशदच्छविचारौ निर्मलवपुःकान्तिमनोहरे, अपरं किंभूते प्रियतमे सुरताय सम्भोगाय कल्पिते वाञ्छिते शयने च रचिते, अपरं किंभूते सन्नतिं दधति विनियोक्तिं दधाने । शयनमप्येवंविधं भवति । किंविधे शयने सुकोमलतूलिकोच्छीर्षकादिभाजि, अपरं विशदच्छविचारौ निर्मलवर्णकान्तिमनोज्ञे, सन्नतिं दधति मध्ये नम्रतां बिभ्रति । उभयोः साम्यमुक्तम् ॥ ३९ ॥

---

(१) दयितस्य ।

एवं मदानुभावं वर्णयित्वा सम्प्रति सुरतकेलिवर्णनं प्रस्तौति । तत्र सुरतं द्विविधं बाह्यमाभ्यन्तरं चेति । बाह्यं च प्रेक्षणभाषणाऽऽश्लेषणचुम्बनाद्यनेकभेदाभिन्नम् । तत्र दृष्टिविशेषं तावदाह —

स्पर्शेति ।। स्पर्शभाजि सुखस्पर्शे विशदा विमला शुभ्रा च या छविः कान्तिस्तया चारौ रम्ये सुरताय कल्पिते रतिसुखदानाय सृष्टे विहारयोग्यतया सज्जीकृते च सन्नतिमानुकूल्यं सर्वतः साम्यं च दधाति दधाने प्रियतमे शयने च मृगदृशां दृष्टयोऽजस्रमविच्छिन्नं पेतुः पतिताः । युगपदुभयावलोकनादभिलाषं व्यञ्जयामासुरित्यर्थः । अत्र प्रियतमशयनयोः प्रकृतयोरेव धर्मसाम्यादौपम्यप्रतीतेः केवलप्रकृतगोचरा तुल्ययोगिता ।।

**यूनि रागतरलैरपि तिर्यक्पातिभिः श्रुतिगुणेन युतस्य ॥**
**दीर्घदर्शिभिरकारि वधूनां लङ्घना(१) न नयनैः श्रवणस्य ॥ ४० ॥**

**यूनीति** ॥ वधूनां नायिकानां नयनैः विलोचनैः श्रवणस्य कर्णस्य लङ्घना न अकारि अतिक्रान्तिर्न क्रियते स्म । किंभूतैर्नयनैः यूनि तरुणे तिर्यक् पातिभिः वक्रं पतद्भिः । कटाक्षवीक्षणैरित्यर्थः । अपरं किंभूतैः रागतरलैरपि रागेण प्रीत्या तरलानि चपलानि तैः आरक्तैरपि, अपरं किंभूतैः दीर्घदर्शिभिः दूरमतिविप्रकृष्टमतिशयेन वा पश्यन्ति तानि दूरदर्शीनि तैः दूरार्थदृष्टिभिः, किंभूतस्य श्रवणस्य श्रुतिगुणेन युतस्य, श्रुतिः श्रवणं सैव गुणो धर्मस्तेन सहितस्य आकर्णनगुणयुक्तस्य । अनेन वधूभिः कटाक्षैर्निरन्तरमीक्ष्यते स्मेति भावः । अन्यैरपि दीर्घदर्शिभिः अर्थसन्दर्शिभिर्विद्वद्भिः श्रुतिगुणेन युतस्य वेदगुणयुक्तस्य वेदज्ञस्य लङ्घना तिरस्क्रिया नैव क्रियते ॥ ४० ॥

यूनीति ।। रागेण तरलैश्चपलैरपि । दर्शनोत्सुकैरपीत्यर्थः । यूनि प्रिये तिर्यक्पातिभिस्त्रपया साचि विप्रसारिभिः दीर्घदर्शिभिरायतान्तैः। आलोकनव्यापारपरैरित्यर्थः । अन्यत्र रागद्वेषचपलैः अत एव तिर्यक्पातिभिः कुटिलवृत्तिभिरपि दीर्घदर्शिभिः । आगामिकार्यज्ञैरित्यर्थः । वधूनां नयनैः श्रुतिगुणेन शब्दग्रहणपाटवेन युतस्य श्रूयतेऽनेनेति श्रवणं श्रोत्रं तस्य लङ्घनमतिक्रमो नाऽकारि न चक्रे । कर्णान्ते विश्रान्तमित्यर्थः । अन्यत्र तु श्रुतिः श्रवणम् । अभ्यास इति यावत् । सैव गुणस्तेन युतस्य श्रूयत इति श्रवणं शास्त्रं तस्य लङ्घनं नाऽकारि। रागद्वेषग्रस्तोऽपि शास्त्रज्ञः कदाचिच्छास्त्रातिक्रमाद्बिभेतीति भावः। अयं च व्यवहारो नयनेषु रागतरलैरित्यादिश्लिष्टविशेषणमहिम्ना गम्यत इति समासोक्तिभेदः । इयं च रागदृष्टिरौत्सुक्यानुभावः ॥४०॥

**सक्थ्येच्छुरभिधातुमनीशा संमुखी न च बभूव दिदृक्षुः ॥**
**स्पर्शनेन दयितस्य नतभ्रूरङ्गसङ्गचपलाऽपि चकम्पे ॥ ४१ ॥**

**सक्थ्येच्छुरिति** ॥ नतभ्रूर्नायिका दयितस्य कान्तस्य स्पर्शनेन परिमर्शेन चकम्पे सकम्पा बभूव । किंभूता नतभ्रूः अङ्गसङ्गचपलापि कान्तालिङ्गनचटुलापि, अपरं किंभूता सक्थ्येच्छुः, परं अभिधातुमनीशा, आलापमिच्छन्ती वक्तुमसमर्था, अपरं किंभूता दिदृक्षुः कान्तं द्रष्टुमिच्छती सम्मुखी न बभूव पराङ्मुखी भवति स्म ॥ ४१ ॥

सक्थ्येच्छुरिति ॥ नतभ्रूः स्त्री सक्थ्यायां सम्भाषणे इच्छुरिच्छावत्यपि ।'बिन्दुरिच्छुः' इत्युप्रत्ययान्तो निपातः। अभिधातुं सम्भाषयितुमनीशा अक्षमा बभूव । अप्यर्थश्चशब्दः । दिदृक्षुर्द्रष्टुमिच्छुरपि । दृशेः सन्नन्तात् उप्रत्ययः । संमुखी अभिमुखी न बभूव । अङ्गसङ्गचपला गात्रस्पर्शचपलापि दयितस्य स्पर्शनेन चकम्पे कम्पितवती । एते कम्पादयो लज्जासाध्वसानुभावाः । लज्जाविजितमन्मथेयं मुग्धा ॥ ४१ ॥

**उत्तरीयविनयात्त्रपमाणा रुन्धती किल तदीक्षणमार्गम् ॥**
**आवरिष्ट विकटेन विवोढुर्वक्षसैव कुचमण्डलमन्या ॥ ४२ ॥**

**उत्तरीयेति** ॥ अन्या काचिन्नायिका विवोढुः कान्तस्य वक्षसैव उरसैव कुचमण्डलम्

(१) लङ्घनम् ।

आवरिष्ट स्तनमण्डलमाच्छादयामास । किंभूतेन वक्षसा विकटेन विशालेन, किं कुर्वती अन्या, किलेत्यलीके, तदीक्षणमार्गं तस्य कान्तस्य ईक्षणमार्गं दृष्टिपथं रुन्धती आवृण्वती, अपरं किंभूता नायिका उत्तरीयविनयात् त्रपमाणा उत्तरीयवसनापनयनात् त्रपमाणा लज्जमाना ४२

अथालिङ्गनं वर्णयति—

उत्तरीयेति ॥ अन्या स्त्री उत्तरीयविनयात्कुचांशुकाकर्षणात् त्रपमाणा तदीक्षणमार्गं तस्य वोढुर्दृष्टिपथं रुन्धती किल आवृण्वतीव, न तु वस्तुत इति किलार्थः । विकटेन विशालेन । 'विशङ्कटं विशालं स्यात् करालं विकटं तथा' इति वैजयन्ती । सम्प्रोदश्च कटच्' इति चकारादेः कटच् प्रत्ययः । विवोढुः परिणेतुः वक्षसैव कुचमण्डलम् आवरिष्ट आवृतवती कुचावरणव्याजेनालिङ्गितवती । वृञो लुङि तङ् इडागमः । अत्र कुचावरणेनालिङ्गनेच्छानिगूहनान्मीलनभेदः । एषा लज्जामन्मथमध्यस्था मध्यमा ॥ ४२ ॥

अंशुकं हृतवता तनुबाहुस्वस्तिकापिहितमुग्धकुचाग्रा ॥
भिन्नशङ्खवलयं परिणेत्रा पर्यरम्भि रभसादचिरोढा ॥ ४३ ॥

अंशुकमिति ॥ परिणेत्रा नायकेन अचिरोढा नूतनोढा रभसात् औत्सुक्येन पर्यरम्भि परिरब्धा आलिङ्गिता । कथं यथा भवति भिन्नशङ्खवलयं यथा भवति भिन्नानि भग्नानि शङ्खवलयानि कम्बुवलयानि यत्र क्रियायां तद्यथा भवति, किं कुर्वता परिणेत्रा अंशुकं हृतवता वस्त्रमाक्षिपता, किंभूता नवोढा तनुबाहुस्वस्तिकापिहितमुग्धकुचाग्रा सूक्ष्मभुजस्वस्तिकाच्छादितमनोहरस्तनमुखा, तन्वोः बाह्वोः या स्वस्तिका 'बाकरी' इति प्राकृतं तया पिहिते मुग्धे कुचाग्रे यस्याः सा ॥ ४३ ॥

अंशुकमिति ॥ अंशुकमुत्तरीयं हृतवता परिणेत्रा भर्त्रा तन्वोः कृशयोः बाह्वोः स्वस्तिको बन्धविशेषस्तेनाऽऽपिहिते आच्छादिते मुग्धे सुन्दरे कुचाग्रे यस्याः सा तथोक्ता । अचिरोढा नवोढा, भिन्नानि शङ्खस्य वलयानि यस्मिन्कर्मणि तद्यथा तथा रभसाद्वेगात्पर्यरम्भि, गाढमाश्लिष्टेत्यर्थः । रभेर्ण्यन्तात्कर्मणि लुङ् । 'रभेरशब्लिटोः' इति नुमागमः । एषा तिरोहितमुग्धता ॥ ४३ ॥

सञ्जहार सहसा परिरब्धप्रेयसीषु विरहय्य विरोधम् ॥
संहितं रतिपतिः स्मितभिन्नक्रोधमाशु तरुणीषु(१) महेषुम् ॥ ४४ ॥

सञ्जहारेति ॥ रतिपतिः कामः तरुणीषु कामिनीषु निमित्तेषु संहितं सन्धितं महेषुं महाशरं सञ्जहार संहृतवान् । किंभूतं महेषुं स्मितभिन्नक्रोधं हास्यगतकोपं, किंभूतासु तरुणीषु विरोधं विरहय्य कलहं परित्यज्य सहसा परिरब्धप्रेयसीषु सहसा शीघ्रं परिरब्धा आलिङ्गिता प्रेयांसो याभिस्ताः तासु तत्क्षणालिङ्गितभर्तृषु, कथं यथा भवति स्मितभिन्नक्रोधं यथा भवति तत् क्रियाविशेषणम् । अथ वा शरविशेषणं च ॥ ४४ ॥

सञ्जहारेति ॥ तरुणेषु युवसु विरोधं प्रणयकलहं विरहय्य विहाय ? रहयतेः स्वार्थण्यन्तात् क्त्वा तस्य ल्यप्, 'ल्यपि लघुपूर्वात्' इत्ययादेशः । सहसा परिरब्धाः प्रेयस्यो यैस्तेषु परिरब्धप्रेयसीषु आश्लिष्टवधूकेषु सत्सु । 'ईयसश्च' इति कपोऽभावः । 'ईयसो बहुव्रीहौ प्रतिषेधो वक्तव्यः' इत्युपसर्जनस्य ह्रस्वनिषेधः । रतिपतिः कामः संहितं प्रागारोपितं महेषुं महान्तं शरं स्मितभिन्नक्रोधं स्वयत्नसाफल्यात् स्मितेनोज्झितपूर्वरोषं च यथा तथा आशु सञ्जहार । सिद्धेऽर्थे साधनाऽनवकाशादित्यर्थः । परिरम्भाऽन्तो यूनां विरह इति भावः ४४

स्रंसमानमुपयन्तरि वध्वाः श्लिष्टवत्युपसपत्नि रसेन ॥
आत्मनैव रुरुधे कृतिनेव स्वेदसङ्गि वसनं जघनेन ॥ ४५ ॥

स्रंसमानमिति ॥ जघनेन स्त्रीकट्याः अग्रभागेन वध्वाः नायिकायाः वसनं वस्त्र-

---

( १ ) तरुणेषु ।

नात्मनैव स्वयमेव रुरुधे रुद्धम् । किंभूतं वसनं स्वेदसङ्गि प्रस्वेदविलग्नं, क सति उपयन्तरि भर्तरि उपसपत्नि सपत्न्याः समीपे रसेन रागेण श्लिष्टवति सति आलिङ्गनं कुर्वति, श्लिष्टवान् इति श्लिष्टवान् तत्र श्लिष्टवति, अपरं किंभूतं वसनं स्रंसमानम् अधःपतमानम् । किंभूतेन जघनेन, उत्प्रेक्ष्यते—कृतिनेव कुशलेनेव । यथा सपत्नीदर्शनाल्लज्जा न जायते इति दक्षत्वम् । यथा अन्येन केनचित् कुशलेन कस्यचित् स्रंसमानं सभायां पतमानं वस्त्रं लज्जानिरासाय आत्मनैव रुध्यते इत्युक्तिलेशः ॥ ४९ ॥

स्रंसमानमिति ॥ उपयन्तरि भर्तरि रसेन, रागान्धतयेत्यर्थः । उपसपत्नि सपत्नीसमीपे । समीपार्थेऽव्ययीभावे नपुंसकह्रस्वत्वम् । श्लिष्टवति आश्लिष्टवति सति स्रंसमानं स्पर्शसुखपारवश्याद्भ्रश्यमानं तथाऽपि स्वेदसङ्गि स्वेदेन सात्त्विकेन सक्तं बध्वा वसनं कृतिना कुशलेन । स्वस्येदं लाघवमिति जानतेवेत्यर्थः । जघनेन कर्त्रा आत्मनैव स्वयमेव रुरुधे रुद्धम् । सा तु न वेत्तीति भावः । स्वेदहेतुकस्य वसनरोधस्य स्वलाघवज्ञानहेतुकत्वमुत्प्रेक्ष्यते ॥ ४५ ॥

**पीडिते पुनरुरः(१)प्रतिपेषं भर्तरि स्तनयुगेन युवत्याः ॥**
**स्पष्टमेव दलतः प्रतिनार्यास्तन्मयत्वमभवद्धृदयस्य ॥ ४६ ॥**

**पीडिते इति ॥** प्रतिनार्याः सपत्न्याः हृदयस्य मनसः तन्मयत्वमभवत् तस्याः सपत्न्याः हृदयरूपत्वं जातम् । किंभूतस्य हृदयस्य स्पष्टमेव दलतः प्रकटमेव भिन्दतः(२) क सति पुनः वारंवारं, पुर इति वा पाठः । पुरोऽग्रे प्रेयसि भर्तरि युवत्याः स्तनयुगेन तरुण्याः कुचद्वयेन उरःप्रतिपेषम् उरः प्रतिपिष्ट्वा (?) पीडिते सति । सपत्न्याः कान्तगाढालिङ्गनं दृष्ट्वा निजहृदयं विदीर्णमेव मेने ॥ ४६ ॥

**पीडिते इति ॥** युवत्या युवतेः स्तनयुगेन भर्तरि प्रतिनार्याः पुरोऽग्रे समक्षमेव उरः प्रतिपिष्य उरःप्रतिपेषम् । 'परिक्लिश्यमाने च' इति णमुल्, 'कृन्मेजन्तः' इत्यव्ययसंज्ञा । वक्षः प्रतिपीड्येत्यर्थः । पीडिते सति दलतः ईर्ष्यया दीर्यमाणस्य प्रतिनार्याः सपत्न्या हृदयस्य तन्मयत्वं भर्तृतादात्म्यं स्पष्टमभवदेव । अन्यथा कथमन्यपीडनादन्यदलनमिति भावः । अत एवेयमसङ्गत्यलङ्कारोपजीविनी तन्मयत्वोत्प्रेक्षेति सङ्करः । 'कार्यकारणयोर्भिन्नदेशत्वे स्यादसङ्गतिः' ॥ ४६ ॥

**दीपितस्मरमुरस्युपपीडं वल्लभे घनमपि स्वजमाने(३) ॥**
**वक्रतां न ययतुः कुचकुम्भौ सुभ्रुवः कठिनताऽतिशयेन ॥ ४७ ॥**

**दीपितेति ॥** सुभ्रुवो नायिकायाः कुचकुम्भौ स्तनकलशौ कठिनताऽतिशयेन अतिशयकाठिन्येन वक्रतां न ययतुः कुटिलतां न जग्मतुः । क सति दीपितस्मरं प्रवृद्धकन्दर्पं यथा भवति तथा वल्लभे कान्ते घनमपि गाढमपि उरसि उपपीडम् उरो निपीड्य स्वजमाने सति आलिङ्गति सति ॥ ४७ ॥

**दीपितेति ॥** वल्लभे दीपितस्मरमुद्दीपितकामं यथा तथा उरस्युपपीडमुरस्युपपीड्य । 'सप्तम्यां चोपपीडरुधकर्षः—' इति णमुल् । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । घनं गाढमभिष्वजमाने परिरम्भमाणे सति । 'परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम्' इत्यमरः । सुभ्रुवः कुचकुम्भौ कठिनताऽशयेन वक्रतां परिमण्डलतां न ययतुर्न प्रापतुः । अत्र गाढालिङ्गनात्कुचकुम्भयोर्वक्रत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥

(१) पुर उरः ।

(२) अर्थानुसन्धानेनाऽत्र कर्तरि 'भिन्दत' इति सकर्मकप्रयोगस्याऽनुपपन्नतया 'भिद्यते काष्ठ'मितिवत् कर्मणि 'भिद्यमानस्ये'त्यकर्मकप्रयोग उचितः । (३) ०मभिष्वजमाने ।

**सम्प्रवेष्टुमिव योषित ईषुः श्लिष्यतां हृदयमिष्टतमानाम् ॥**
**आत्मनः सततमेव तदन्तर्वर्तिनो न खलु नूनमजानन् ॥ ४८ ॥**

**सम्प्रवेष्टुमिवेति ॥** योषितो नार्यः प्रियतमानां वल्लभानां श्लिष्यतां सतामालिङ्गतां सतां हृदयं सम्प्रवेष्टुमिव ईषुः । कान्तहृदये प्रवेशं कर्तुमिच्छन्ति स्मेवेत्यर्थः । खलु यस्मात्कारणात् नूनं निश्चितं सततमेव निरन्तरमेव आत्मनः स्वान् तदन्तर्वर्तिनः न अजानन् । तेषामन्तर्हृदये वर्तन्ते तदन्तर्वर्तिनस्तान् । वयमग्रेऽपि कान्तचेतसि निरन्तरमेव वर्तमानाः स्म इति न अज्ञासिषुरित्यर्थः ॥ ४८ ॥

सम्प्रवेष्टुमिवेति ॥ योषितः श्लिष्यतामालिङ्गतामिष्टतमानां हृदयं सम्प्रवेष्टुमीषुरिच्छन्ति स्मेव इति गाढालिङ्गनानिमित्ता क्रियास्वरूपोत्प्रेक्षा, गुणस्वरूपोत्प्रेक्षा वा विवक्षाभेदात् । अत एवात्मनः स्वान् सततमेव तदन्तर्वर्तिनस्तेषामिष्टतमानामन्तर्हृदयेऽवेव स्थितान् नाऽजानन्नूनम् । अन्यथा कथं पुनः प्रवेशेच्छेति भावः । इयमज्ञानोत्प्रेक्षा पूर्वोत्प्रेक्षासापेक्षेति सजातीयसङ्करः ॥ ४८ ॥

**स्नेहनिर्भरमधत्त वधूनामार्द्रतां वपुरसंशयमन्तः ॥**
**यूनि गाढपरिरम्भिणि वस्त्रक्नोपमम्बु ववृषे यदनेन ॥ ४९ ॥**

**स्नेहनिर्भरमिति ॥** असंशयं निश्चितं वधूनामङ्गनानां वपुः शरीरम् आर्द्रतामधत्त आर्द्रभावं बभार, किंभूतं वपुः स्नेहनिर्भरं स्नेहपूर्णम् । यत् किल स्नेहेन तैलादिना पूर्णं भवति तदन्तः आर्द्रतां धत्ते, किमाश्चर्यम् । यद् यस्मात्कारणात् अनेन वपुषा वस्त्रक्नोपं वस्त्रं क्नोप्य (१) इति वस्त्रक्नोपम् अम्बु पानीयं ववृषे वृष्टं, क्व सति यूनि तरुणे कान्ते गाढपरिरम्भिणि सति दृढमालिङ्गति सति ॥ ४९ ॥

स्नेहनिर्भरमिति ॥ स्नेहनिर्भरं प्रेमरसपूर्णं तैलादिकद्रव्यपूर्णं च । 'स्नेहोऽस्त्री द्रवहार्दयोः' इति वैजयन्ती । अत एव वधूनां वपुरन्तरार्द्रतां द्रवत्वमधत्त । स्नेहद्रव्यसम्पूर्णमन्तरार्द्रं भवतीति भावः । असंशयं संशयस्याभावः । अर्थाभावेऽव्ययीभावः । कुतोः—यत् यस्मात् यूनि पुंसि गाढं परिरम्भत इति परिरम्भिणि गाढाश्लेषिणि सति अनेन वपुषा कर्त्रा, वस्त्रं क्नोपयित्वा पारिषिच्य वस्त्रक्नोपम् । क्नूयीधातोर्ण्यन्तात् 'अर्तिह्री-' इत्यादिना पुगागमे 'चेले क्नोपेः' इति णमुल् । अम्बु ववृषे । वृषेः कर्मणि लिट् । अन्तरार्द्रस्य निष्पीडनाद्बहिरम्बुस्रावसम्भवात्तन्निमित्तेयमन्तरार्द्रत्वोत्प्रेक्षा । प्रियाङ्गसङ्गात् ताः स्विन्ना इति सात्त्विकोदयोक्तिः॥४९॥

**न स्म माति वपुषः प्रमदानामन्तरिष्टतमसङ्गमजन्मा ॥**
**यद्बहुर्बहिरवाप्य विकासं व्यानशे तनुरुहाण्यपि हर्षः ॥ ५० ॥**

**न स्मेति ॥** प्रमदानामङ्गनानां वपुषि शरीरे अन्तर्मध्ये हर्षः प्रमोदः न माति स्म न ममौ, किंभूतो हर्षः इष्टतमसङ्गमजन्मा दयितसङ्गमोत्पन्नः । यद् यस्मात्कारणात् हर्षः बहिर्बाह्ये विकासमवाप्य विस्तारं प्राप्य तनुरुहाण्यपि व्यानशे लोमान्यपि व्याप्नोति स्म ॥५०॥

न स्मेति ॥ प्रमदानामिष्टतमसङ्गमेन जन्म यस्य सः । जन्माद्युत्तरपदत्वाद्व्यधिकरणबहुव्रीहिरिति वामनः । बहुर्विपुलः । 'विपुलाऽनेकयोर्बहुः' इति वैजयन्ती । हर्षो वपुषोऽन्तर्न माति स्म । अत्युद्रेकात्माऽन्तः संमित इत्युत्प्रेक्षा । कुतः—यत् यस्माद्बहिर्वपुषो बहिः विकासं वृद्धिमवाप्य तनुरुहाणि रोमाण्यपि व्यानशे व्याप । कर्तरि लिट् । 'अश्नोतेश्च' इति नुडागमः । अत्र बहिर्विकासननिमित्तकाऽन्तरमानोत्प्रेक्षा आनन्दरोमाञ्चयोः श्लेषमूलाऽभेदाध्यवसायातिशयोक्त्यनुप्राणितेति सङ्करः ॥ ५० ॥

**यत् प्रियव्यतिकराद्वनितानामङ्गजेन पुलकेन बभूवे ॥**
**प्रापि तेन भृशमुच्छ्वसिताभिर्नीविभिः सपदि बन्धनमोक्षः ॥ ५१ ॥**

---

( १ ) उपसर्गाभावादत्र ल्यबभावाश्चिन्त्यः ।

**यदिति ॥** वनितानामङ्गनानाम् अङ्गजेन देहजेन पुलकेन रोमाञ्चेन यत् बभूवे भूतम्, कस्मात् प्रियव्यतिकरात् कान्तसंयोगात्। तेन कारणेन नीविभिः वसनग्रन्थिभिः सपदि तत्क्षणं बन्धनमोक्षः प्रापि बन्धविच्छुटनं प्राप्तम्। किंभूताभिर्नीविभिः भृशमुच्छ्वसिताभिः उच्छ्वासं प्राप्ताभिः । अन्यस्यापि राज्ञो देहजेन तनयेन भूयते उत्पद्यते, तदा बन्दिभिः सपदि उच्छ्वासं प्राप्तैः सद्भिः बन्धनमोक्षः प्राप्यते इति भावः ॥ ९१ ॥

यदिति ॥ वनितानां स्त्रीणां प्रियस्य भर्तुर्व्यतिकरात्सम्पर्कात्सङ्गमाच्च अङ्गजेनाऽङ्गव्यापिना पुत्रेण च पुलकेन बभूवे भूतमिति यत्। भावे लिट्। तेन पुलकोदयेन पुत्रोदयेन च भृशमुच्छ्वसिताभिरुच्छ्वसिताभि- र्मोक्षाशया आश्वसिताभिश्च नीविभिः लक्षणया कटिवस्त्रैः, अन्यथा बन्धनशब्देन पौनरुक्त्यात्। सपदि बन्धनमोक्षो ग्रन्थिभेदो निगडमोचनं च प्रापि प्राप्तः। कर्मणि लुङ्। अभ्युदयेषु राजानो बद्धान्मोचयन्तीति भावः। अत्र प्रकृतपुलकनीविगताऽङ्गजत्वोच्छ्वसितत्वादिविशेषणसाम्याद्बन्धनमोक्षसम्बन्धाच्च अप्रकृतपुत्र- कारागतिप्रतीतेः समासोक्तिरलङ्कारः ॥ ५१ ॥

**ह्रीभरादवनतं परिरम्भे रागवानवटुजेष्ववकृष्य ॥**
**अर्पितोष्ठदलमाननपद्मं योषितो मुकुलिताऽक्षमधासीत् ॥ ५२ ॥**

**ह्रीभरादिति ॥** रागवान् कामी योषितः नायिकायाः आननपद्मं मुखकमलं मुकुलिताक्षं निमीलिताक्षं यथा भवति तथा अधासीत् पपौ। किंभूतमाननपद्मम् अर्पितोष्ठदलं दत्ताधरपल्लवं, किं कृत्वा अधासीत् अवटुजेषु अवकृष्य केशेषु आकृष्य । अवटौ जाता अवटुजास्तेषु । 'अवटुस्तु कृकाटिके'त्यमरः । किंभूतमाननपद्मं ह्रीभरादवनतं लज्जावशान्नम्रं, क सति परिरम्भे सति अर्थान्नायकस्यालिङ्गने सति ॥ ९२ ॥

अथ चुम्बनक्रीडां वर्णयति—

ह्रीभरादिति ॥ परिरम्भे आलिङ्गने ह्रीरेव भरस्तस्मादवनतम्। भाराक्रान्तं नमतीति भावः। अर्पितं स्वमुखे निहितमोष्ठ एव दलं पत्रं यस्य तद्योषित आननमेव पद्मं रागवान् रागी अवटुजेषु चरमशिरोरुहेषु। 'अवटुर्घाटा कृकाटिका' इत्यमरः। अवकृष्य। अवटुजाकर्षणेनोन्नमय्येत्यर्थः । मुकुलिताक्षं निमीलितनेत्रं यथा तथा। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच् प्रत्ययः। अधासीत् पपौ। धेटो लुङ् 'आदेचः–' इत्यात्त्वम्। 'विभाषा घ्राधेट्–' इति सिचो वैकल्पिके लुगभावे 'अस्तिसिचोऽपृक्ते' इतीडागमः। अत्राननो- ष्ठस्य पद्मदलत्वरूपणात्तत्रानुरागिणो मधुपत्वं च गम्यत इत्येकदेशविवर्ति रूपकम् ॥ ५२ ॥

**पल्लवोऽयमिति(१)साम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे ॥**
**पर्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण ॥ ५३ ॥**

**पल्लवोऽयमिति ॥** तरुण्याः नायिकायाः करेण भुजेन पर्यकूजि परिकूजितं बुम्बारवो विहितः। किंभूतेन करेण तारलोलवलयेन उच्चैःस्वरचपलकङ्कणेन, अपरं किंभूतेन करेण उत्प्रेक्ष्यते—सरुजेव सबाधेनेव, क सति अभीष्टे कान्ते अधरबिम्बमोष्ठबिम्बं दष्टवति दश- माने(?) सति, किंभूतमधरबिम्बम् इति साम्यसपक्षं समानत्वस्य वर्ग्यम्। इतीति किम्— अयं पल्लवः ओष्ठपल्लवः, अहमपि करपल्लवः। सर्वः कोऽपि निजे वर्गे दूयमाने सति उच्चै- स्तरं बुम्बारवं विदधाति ।। ९३ ।।

पल्लवोपमितीति ॥ पल्लवेनोपमित्या सादृश्येन यत्साम्यं तेन सपक्षम्। उभयोरपि पल्लवैको- पमानत्वसाधर्म्यात्सुहृद्भूतमधरो बिम्बमिव तदधरबिम्बमभीष्टे प्रियतमे दष्टवति सति। सह रुजा सरुक्। 'तेन सह–' इति बहुव्रीहिः। सहस्य सः। तेन सरुजेव सव्यथेनेव। 'स्त्री रुग्रुजा चोपताप' इत्यमरः।

(१) पल्लवोपमिति।

नाराण्युच्चैः क्रोशन्ति। कुतः—लोलानि चलानि वलयानि कङ्कणानि यस्य तेन तरुण्याः करेण पर्यकूजि परिकूजितम् । भावे लुङ् । सुहृद् दुःखात् दुःखायन्ते सुहृद इति भावः । अत्र कङ्कणद्वारकस्य करकूजनस्य विधूननहेतुकस्य सरुजेवेति रुग्हेतुकत्वमुत्प्रेक्ष्यते ॥ ५३ ॥

**केनचिन्मधुरमुल्बणरागं बाष्पतप्तमधिकं विरहेषु ॥**
**ओष्ठपल्लवमपास्य मुहूर्तं सुभ्रुवः सरसमक्षि चुचुम्बे ॥ ५४ ॥**

**केनचिदिति** ॥ केनचित् कामिना मुहूर्तं क्षणमात्रम् ओष्ठपल्लवमपास्य सरसं साऽभिलाषं यथा भवति अक्षि लोचनं चुचुम्बे । किंभूतमोष्ठपल्लवं मधुरं मधुरास्वादं, पुनः किंभूतम् उल्बणरागमुत्कृष्टरागं, पुनः किंभूतमोष्ठपल्लवं विरहेषु वियोगेषु सत्सु अधिकं बाष्पतप्तं सातिशयमूष्मसन्तप्तम् ।। ५४ ।।

केनचिदिति ॥ केनचिद्रागिणा मधुरं रसवन्तमुल्बणरागमतिरक्तं तथापि विरहेऽधिकं बाष्पेण विरहोष्मणा तप्तं सुभ्रुव ओष्ठपल्लवमपास्य सरसं सान्द्रशीतमक्षि चुचुम्बे चुम्बितम् । अत्र तप्तत्वरसवत्त्वयोर्विशेषणगत्याऽधरत्यागाऽक्षिचुम्बनहेतुकं काव्यलिङ्गद्वयं सापेक्षत्वात्सङ्कीर्यते ॥ ५४ ॥

**रेचितं परिजनेन महीयः केवलाऽभिरतदम्पति धाम ॥**
**साम्यमाप कमलासखविष्वक्सेनसेवितयुगान्तपयोधेः ॥ ५५ ॥**

**रेचितमिति** ॥ धाम धवलगृहं कमलासखविष्वक्सेनसेवितयुगान्तपयोधेः साम्यं सादृश्यमाप प्राप, कमलायाः सखा इति कमलासखः सहकमलो विष्वक्सेनः श्रीकृष्णः तेन सेवितः आश्रितश्चाऽसौ युगान्तपयोधिः कल्पान्तसमुद्रस्तस्य लक्ष्मीयुक्तश्रीकृष्णाश्रितकल्पान्तसमुद्रस्य सादृश्यं प्राप । किंभूतं धाम परिजनेन रेचितं परिवर्गेण सेवकलोकेन वर्जितम्, अपरं किंभूतं धाम केवलाऽभिरतदम्पति केवलं रतासक्तजायापति, केवलमभिरतौ रताय तत्परौ दम्पती यत्र तत् । कल्पान्ते हि समुद्रो जनवर्जितो भवेत्, केवलं लक्ष्मी विष्णुदम्पतीसेवितो भवति । शून्याकारत्वात् कल्पान्तसागर उपमानम् । अपरं किंभूतं धाम महीयः अतिविशालम् ॥ ५५ ॥

एवं बाह्यसुरतमुक्त्वाऽभ्यन्तरसुरतवर्णनं प्रस्तौति—

रेचितमिति ॥ परिजनेन रेचितं रिक्तीकृतम् । अत एव केवलावेकाकिनावभिरतौ दम्पती जायापती यस्मिंस्तत् । 'दम्पती जम्पती जायापती भार्यापती च तौ' इत्यमरः । राजदन्तादिषु जायाशब्दस्य जम्भावो दम्भावश्च विकल्पान्निपातितः। महीयो महत्तरं धाम केलिगृहं कमलासखेन लक्ष्मीभर्त्रा विष्वक्सेनेन जनार्दनेन विष्णुना सेवितस्याधिष्ठितस्य युगान्तपयोधेः साम्यमापेत्युपमालङ्कारः। युगान्तविशेषणं विविक्तताद्योतनार्थम् । एते नेच्छाविहारतोक्ता ॥ ५५ ॥

**आवृतान्यपि निरन्तरमुच्चैर्योषितामुरसिजद्वितयेन ॥**
**रागिणामिव इतो विमृशद्भिः पाणिभिर्जगृहिरे हृदयानि ॥ ५६ ॥**

**आवृतान्यपीति** ॥ रागिणां कामिनां पाणिभिः करैः इतस्ततो विमृशद्भिः सद्भिः योषितां कामिनीनां हृदयानि जगृहिरे स्वान्तानि गृहीतानि । किंभूतानि हृदयानि उरसिजद्वितयेन स्तनयुगलेन निरन्तरं निर्विविरमुच्चैरतिशयेनाऽऽवृतान्यपि आच्छादितान्यपि । एतेन कामिनां कोमलैः करपल्लवैः कृत्वा योषितां मनांसि वशीकृतानीत्यर्थः ।। ५६ ।।

अथ विस्रम्भविहरणान्येवाह—

आवृतान्यपीति ॥ उच्चैरुन्नतेनोरसिजद्वितयेन निरन्तरं नीरन्ध्रमावृतानि संवृतान्यपि योषितां

हृदयानि वक्षांसि चेतांसि च इत इतो विमृशद्भिरितस्ततः परामृशद्भिः रागिणा पाणिभिर्जगृहिरे गृहीतानि। निगूढं वस्तु हस्तपरामर्शाल्लभ्यत इति एकत्र भावः, अन्यत्र कृच्छ्रलब्धः प्रियकरस्पर्शस्तासां हृदयग्राह्यो ऽभूदिति भावः। नैरन्तर्येण प्रतिबध्नतोरपि कुचयोः कथञ्चिदन्तरं सम्पाद्य हृदयानि स्पृष्टान्येवेति वाक्यार्थः। अत्र द्वितयानामपि हृदयानां प्रकृतत्वात्केवलप्रकृतश्लेषः ॥ ५६ ॥

**कामिनामसकलानि विभुग्नैः स्वेदवारिमृदुभिः करजाऽग्रैः ॥**
**अक्रियन्त कठिनेषु कथञ्चित्कामिनीकुचतटेषु पदानि ॥ ५७ ॥**

**कामिनामिति ॥ कामिनां विलासिनां करजाग्रैः नखप्रान्तैः कथञ्चिन्महता कष्टेन कठिनेषु कठोरेषु कामिनीकुचतटेषु विलासिनीस्तनभरेषु पदानि व्रणानि अक्रियन्त क्रियन्ते स्म। किंभूतानि पदानि असकलानि ईषल्लग्नानि, किंभूतैः करजाग्रैः विभुग्नैः वक्रैः, अपरं किंभूतैः करजाग्रैः स्वेदवारिमृदुभिः प्रस्वेदजलकोमलैः ॥ ५७ ॥**

कामिनामिति ॥ स्वेदवारिणा सात्त्विकेनाऽङ्गुलीस्वेदेन मृदुभिः कोमलतां गतैरत एव विभुग्नैर्विनम्रैः कामिनां करजाग्रैर्नखाग्रैः कठिनेषु कामिनीकुचतटेषु असकलान्यसमग्राणि पदानि क्षतानि कथञ्चिदक्रियन्त कृतानि। कठिनेषु मृदूनां पदलाभो दुःसम्पाद्य इति भावः। नखक्रिया प्रवृत्तेत्यर्थः। अत्र कुचानामीदृक्काठिन्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ५७ ॥

**सोष्मणः स्तनशिलाशिखराग्रादात्तघर्मसलिलैस्तरुणानाम् ॥**
**उच्छ्वसत्कमलचारुषु हस्तैर्निम्ननाभिसरसीषु निपेते ॥ ५८ ॥**

**सोष्मण इति ॥ तरुणानां कामिनां हस्तैः करैः निम्ननाभिसरसीषु निपेते गम्भीरनाभिरूपमहासरस्सु निपतितम्। महान्ति सरांसि सरस्य उच्यन्ते। किंभूतासु सरसीषु उच्छ्वसत्कमलचारुषु विकस्वराऽब्जमनोहरासु, किंभूतैः करैः सोष्मणः सबाष्पात् स्तनशिलाशिखराग्रात् स्तनपाषाणतटाग्रात् आत्तघर्मसलिलैः गृहीतस्वेदवारिभिः। अन्येऽपि पर्वतशिखराग्रात प्रस्विन्नाः सन्तो विकसितकमलासु सरसीषु निपतन्ति ॥ ५८ ॥**

सोष्मण इति ॥ सोष्मणो यौवनोष्मयुक्तात् स्तनावेव शिलाशिखरे तयोरग्रादुपरिभागादात्तघर्मसलिलैरुष्णदेशाविहारात्प्राप्तस्वेदैस्तरुणानां हस्तैरुच्छ्वसत्कमलवद्विकचकमलैश्च चारुषु निम्ननाभिष्वेव सरसीषु निपेते निपातितम्। ऊष्मास्विन्नानां कुतश्चिदुन्नतात्पयासि पातो युक्त इति भावः। प्रथमं कुचौ स्पृष्ट्वा ततो नाभिदेशमस्पृशन्नित्यर्थः। अत्र कुचयोः शिलाशिखरत्वेन नाभीनां सरसीत्वेन च रूपणात् हस्तानामापातिपुरुषत्वरूपणं गम्यत इत्येकदेशविवर्ति रूपकम् ॥ ५८ ॥

**आमृशद्भिरभितो वलिवीचीर्लोलमानविततऽङ्गुलिहस्तैः ॥**
**सुभ्रुवामनुभवात्प्रतिपेदे मुष्टिमेयमिति मध्यमभीष्टैः ॥ ५९ ॥**

**आमृशद्भिरिति ॥ अभीष्टैर्वल्लभैः सुभ्रुवां कामिनीनां मध्यमुदरं मुष्टिमेयमिति प्रपेदे मुष्टिना मेयं मुष्टिमेयं मुष्टिग्राह्यमिति मेने। कस्मात् अनुभवात् परिचयात्, किंभूतैः अभीष्टैः अभितः पक्षद्वये वलिवीचीः आमृशद्भिः त्रिवलीतरङ्गान् स्पृशद्भिः, अपरं किंभूतैः लोलाः चपलाः मानाय मापनाय वितताः विस्तारिताः अङ्गुलय एव करशाखा एव हस्ताः कराः येषां ते तथा तैः चञ्चलविस्तृताऽङ्गुलिकरैः ॥ ५९ ॥**

आमृशद्भिरिति ॥ वलयो वीचय इव वलिवीचीरभित आमृशद्भिः लोलमानाश्चलनशीलाः। 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति चानश्प्रत्ययः। न तु शानच्, लोलतेः परस्मैपदित्वात्। अत एव 'लोलमानादयश्चानशि' इति वामनः। लोलमाना विततः प्रसारिताश्चाऽङ्गुलयो येषां ते तथाविधा हस्ता येषां तैरभीष्टैः प्रियतमैः सुभ्रुवां मध्यं मुष्टिमेयमिति मुष्ट्या मातुं शक्यमित्यनुभवात प्रत्यक्षेण मुष्ट्या मानं

कृत्वैव प्रतिपेदे प्रतिबुद्धं, न तु प्रसिद्धिमात्रादिति भावः । अमुष्टिमेयस्य मुष्टिमेयत्वोक्तेरतिशयोक्तिभेदोऽलङ्कारः ॥ ५९ ॥

**प्राप्तनाभि(१)न्दमज्जनमाशु प्रस्थितं निवसनग्रहणाय ॥**
**औपनीविकमरुद्ध(२) किल स्त्री वल्लभस्य करमात्मकराभ्याम् ॥ ६० ॥**

**प्राप्तेति** ॥ किलेत्यलीके स्त्री वनिता आत्मकराभ्यां निजहस्ताभ्यां वल्लभस्य करं प्रियहस्तमरुद्ध रुणद्धि स्म । किंभूतं करम् औपनीविकं नीवीसमीपे चलितमौपनीविकम्, अपरं किंभूतं करम् आशु शीघ्रं निवसनग्रहणाय वस्त्राक्षेपणाय प्रस्थितं प्रहितम्, अपरं किंभूतं करं प्राप्तनाभिनदमज्जनमधिगतनाभिह्रदप्लवनम् । अन्योऽपि यः प्राप्ततीर्थमज्जनो भवति, स यदा कस्यचिन्निवसनग्रहणाय प्रतिष्ठते, तं तदाऽन्यः कश्चिद्रुणद्धि इत्युक्तिलेशः॥ ६०॥

प्राप्येति ॥ नाभिरेव नदो ह्रद इति रूपकम् । तत्र मज्जनं प्राप्याशु निवसनग्रहणाय । वस्त्राकर्षणायेत्यर्थः । स्नातस्य वस्त्रग्रहणं युक्तमिति भावः । प्रस्थितं प्रवृत्तम् । उपनीवि नीविसमीपे प्रायेण तत्र भवमौपनीविकम् । तत्र व्यापृतमित्यर्थः । उपजानूपकर्णोपनीवेष्ठक् । वल्लभस्य करं स्त्री आत्मकराभ्यामरुन्ध किल । रोधं नाटितवतीत्यर्थः ॥ ६० ॥

**कामिनः कृतरतोत्सवकालक्षेपमाकुलवधूकरसङ्गि ॥**
**मेखलागुणविलग्नमसूयां दीर्घसूत्रमकरोत्परिधानम् ॥ ६१ ॥**

**कामिन इति** ॥ परिधानमङ्गनावस्त्रं कामिनः तरुणस्य असूयामकरोत् ईर्ष्यां चकार । किंभूतं परिधानं दीर्घसूत्रं प्रलम्बदशम्, अपरं किंभूतं कृतरतोत्सवकालक्षेपं विहितसुरतोत्सवसमयविलम्बं, पुनः किंभूतम् आकुलवधूकरसङ्गि व्यग्रवनिताहस्तस्खलितम्, अपरं किंभूतं मेखलागुणविलग्नं रशनारज्जुविपक्तम् ॥ ६१ ॥

कामिन इति ॥ आकुले प्रियकरनिवारणव्यग्रे वधूकरे सङ्गि सक्तं मेखलैव गुणस्तत्र विलग्नं दीर्घसूत्रम् आततन्तुकम् । अत्यायतत्वाद्बहुधा वेष्टितमित्यर्थः । चिरक्रियं च । 'दीर्घसूत्रश्चिरक्रियः' इत्यमरः । एवं कृतो रतस्यैवोत्सवस्य कालक्षेपः कालविलम्बो येन तत्परिधानमधोंऽशुकं कामिनोऽसूयामकरोत् । इच्छाविघातादीर्ष्यां जनयामासेत्यर्थः । अत्र करसङ्गादिपदार्थानां विशेषणगत्याऽसूयाहेतुत्वादनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥६१॥

**अम्बरं विनयतः प्रियपाणेर्योषितश्च करयोः कलहस्य ॥**
**वारणामिव विधातुमभीक्ष्णं कक्षया(३) च वलयैश्च शिशिञ्जे ॥ ६२ ॥**

**अम्बरमिति** ॥ कक्षया रशनया अपरं वलयैः कङ्कणैश्च अभीक्ष्णमतिशयेन शिशिञ्जे शिञ्जितं शब्दितम् । उत्प्रेक्ष्यते—प्रियहस्तस्य अपरं योषितो नायिकायाः करयोः कलहस्य विरोधस्य वारणां विधातुमिव निषेधं कर्तुमिव । प्रियपाणेः किं कुर्वतः अम्बरं विनयतः वस्त्रं छोटयतः ॥ ६२ ॥

अम्बरमिति ॥ अम्बरं विनयतोऽपसारयतः प्रियपाणेर्योषितः करयोश्च, तस्मिन् रोधकयोरिति भावः । कलहस्य वारणां विधातुं निवारणं कर्तुमिवेति फलोत्प्रेक्षा । कक्ष्यया काञ्च्या । 'कक्ष्या कक्षे वरत्रायां काञ्च्यां गेहप्रकोष्ठयोः' इति वैजयन्ती । 'कक्षया' इति क्षान्तपाठे तु 'कक्षा प्रहाणिकाकाञ्चीप्रकोष्ठगजरज्जुषु' इति क्षान्तेषु विश्वः । वलयैः कङ्कणैश्चाऽभीक्ष्णं शिशिञ्जे चुक्रुशे । भावे लिट् । 'भूषणानां तु शिञ्जितम्' इत्यमरः । द्वयोः कलहायमानयोः पार्श्वस्थाः साक्रोशं निवारयन्तीति भावः । शिञ्जतिरयं तालव्यादिर्न दन्त्यादिः । 'योषेव शिङ्क्ते' इति श्रुतेः ॥ ६२ ॥

---

(१) प्राप्य नाभि । (२) अरुन्ध । (३) कक्ष्यया ।

ग्रन्थिमुद्ग्रथयितुं हृदयेशे वाससः स्पृशति मानधनायाः ॥
भ्रुयुगेन सपदि प्रतिपेदे रोमभिश्च सममेव विभेदः ॥ ६३ ॥

ग्रन्थिमिति ॥ मानधनायाः मानवत्याः भ्रूयुगेन भ्रुकुटीयुग्मेन अपरं रोमभिश्च तनूरुहैः सममेव तुल्यकालमेव विभेदः प्रतिपेदे प्रतिपन्नः । क्व सति हृदयेशे प्राणनाथे वाससः परिधानवस्त्रस्य ग्रन्थिं गुण्ठिम् उद्ग्रथयितुं छोटयितुं स्पृशति सति आमृशति सति । कान्ते वस्त्रनीवीमाक्षिपति सतीत्यर्थः ॥ ६३ ॥

ग्रन्थिमिति ॥ हृदयेशे प्रिये वाससो ग्रन्थिमुद्ग्रथयितुं विस्रंसयितुम् । ग्रथयतेश्चौरादिकात्तुमुन् । स्पृशति सति मानधनाया मानवत्याः, कामिन्या इति शेषः । भ्रुयुगेन रोमभिश्च । 'कर्तरि तृतीया' इति तृतीया । सपदि समं युगपदेव विभेदो भङ्गो हर्षश्च प्रतिपेदे प्राप्तः । अत्र मानवत्त्वात्कामिनीत्वाच्च नीविस्पर्शे युगपदमर्षहर्षयोरुदयात्तदनुभावयोरपि युगपदाविर्भाव इति भावः । अत्र भ्रूभङ्गरोमाञ्चक्रिययोः समुच्चयात् समुच्चयभेदः, स च विभेद इति श्लेषप्रतिभोत्थापिताऽभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति सङ्करः ॥६३॥

आशु लङ्घितवतीष्टकराग्रे नीविमर्धमुकुलीकृतदृष्ट्या ॥
रक्तवैणिकहताऽधरतन्त्रीमण्डलक्वणितचारु चुकूजे ॥ ६४ ॥

आश्विति ॥ कयाचिन्नायिकया चुकूजे कूजितं गीतम् । कथं यथा भवति रक्तवैणिकहताऽधरतन्त्रीमण्डलक्वणितचारु यथा भवति रक्तो रागवान् अनुरक्तो मधुरो वा यो वैणिको वीणावादकः तेन हता वादिता या अधरतन्त्री वीणा तस्याः मण्डलं तस्य क्वणितं रणितं तद्वच्चारु मनोज्ञं यथा भवति तथा । वीणाध्वनिरम्यं यथा भवतीत्यर्थः । किंभूतया कया अर्धमुकुलीकृतदृष्ट्या अर्धमीलितनेत्रया, क्व सति चुकूजे इष्टकराग्रे भर्तृकरप्रान्ते आशु शीघ्रं नीवीं परिधानवस्त्रग्रन्थिं लङ्घितवति छोटयति सति ॥ ६४ ॥

आश्विति ॥ इष्टस्य प्रियस्य कराग्रे नीविं वस्त्रग्रन्थिमाशु हठाल्लङ्घितवत्यातिक्रान्तवति । ऊरुमूलं गते सतीत्यर्थः । अर्धमुकुलीकृतदृष्ट्या सुखपारवश्यादर्धनिमीलिताक्ष्या स्त्रिया रक्तो रक्तकण्ठः स्वयं गानकुशलः, वीणाशिल्पमस्य वैणिको वीणावाद्यनिपुणः । 'शिल्प'मिति ठक् । रक्तेन वैणिकेन यन्त्रगानकुशलेन हतं वादितं यदधरं तन्त्रीणां मण्डलं समूहः बहुतन्त्रीकस्वरमण्डलादि भेदस्तस्य क्वणितमिव चारु यथा तथा चुकूजे कूजितम् । भावे लिट् । अधरग्रहणं तन्त्रीमाधुर्यातिशयात् स्पर्शसुखातिरेकार्थम् । तन्त्रीकण्ठस्वरव्यतिकरमनोहरः कोऽपि रससर्वस्वभूतः कण्ठकूजितविशेषः कृत इत्यर्थः । अत एव रक्तवैणिकहतेति विशेषणम् । क्वणितचार्वित्युपमालङ्कारः ॥ ६४ ॥

आयताङ्गुलिरभूदतिरिक्तः सुभ्रुवां कृशिमशालिनि मध्ये ॥
श्रोणिषु प्रियकरः पृथुलासु स्पर्शमाप सकलेन तलेन ॥ ६५ ॥

आयताङ्गुलिरिति ॥ प्रियकरः कान्तपाणिः सुभ्रुवां कामिनीनां मध्ये उदरे आयताऽङ्गुलिः सन् विस्तृताङ्गुलिः सन् अतिरिक्तः अभूत् महान् बभूव । किंभूते मध्ये कृशिमशालिनि कृशत्वेन शोभमाने । अङ्गुली विस्तृता, मध्यं कृशमित्यर्थः । अपरं स एव प्रियकरः पृथुलासु विशालासु श्रोणिषु कटिषु सकलेन तलेन पूर्णेन हस्ततलेन स्पर्शमाप स्पर्शनं प्राप । तत्र विशाला कटी, हस्तः सूक्ष्मो जात इत्यर्थः ॥ ६५ ॥

आयताङ्गुलिरिति ॥ आयता अङ्गुलयो यस्य स प्रियकरः, कृशस्य भावः कृशिमा कार्श्यम् । पृथ्वादिभ्य इमनिच् । 'र ऋतो हलादेर्लघोः' इति रेफादेशः । तेन शालते शोभते तस्मिन् सुभ्रुवां मध्येऽतिरिक्तोऽधिकोऽभूत । मध्यस्याऽतिकार्श्यादस्पृष्टैकदेशोऽभूदित्यर्थः । पृथुलासु श्रोणिषु कटिषु । 'वहिश्रिश्रुयुद्रुग्ला-' इति

सूत्रेण श्रुधातोर्निप्रत्ययः । सकलेन कृत्स्नेन तलेन स्पर्शमाप । अन्तर्भागेन क्रमेण श्रोणिमस्पृशदित्यर्थः । अत एव मध्यातिरेकोक्तेरातिशयोक्तिः ॥ ६५ ॥

**चक्रुरेव ललनोरुषु राजीः स्पर्शलोभवशलोलकराणाम् ॥**
**कामिनामनिहितान्यपि(१) रम्भास्तम्भकोमलतरेषु नखानि ॥ ६६ ॥**

चक्रुरेवेति ॥ कामिनां नखानि विलासिनां नखराणि अनिहितान्यपि अन्यस्तान्यपि ललनोरुषु कामिनीसक्थिषु राजीः चक्रुः लेखाः चक्रिरे एव । किंभूतेषु ललनोरुषु रम्भास्तम्भकोमलतरेषु कदलीप्रकाण्डाऽतिशयसुकुमारेषु, किंभूतानां कामिनां स्पर्शलोभवशलोलकराणां स्पर्शलोभवशेन लोलाः चपलाः करा हस्ताः येषां तेषाम् ॥ ६६ ॥

चक्रुरेवेति ॥ स्पर्शलोभवशेनोरुस्पर्शतृष्णापारतन्त्र्येण लोलकराणां चपलपाणिनां कामिनामानिभृतान्यनर्पितान्यपि नखानि कररुहाः । 'पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः । रम्भास्तम्भकोमलतलेषु कदलीप्रकाण्डपेलवस्वरूपेषु ललनानामूरुषु राजीः रेखाश्चक्रुरेव । ऊरुपरामर्शनाऽन्तरीयनखस्पर्शमात्रादेव रेखा जाता इत्यर्थः । अत्र कोमलतायाः विशेषणगत्या राजीकरणहेतुत्वात् । काव्यलिङ्गभेदः ॥६६॥

**ऊरुमूलचपलेक्षणमघ्नन् यैर्वतंसकुसुमैः प्रियमेताः ॥**
**चक्रिरे सपदि तानि यथार्थं मन्मथस्य कुसुमायुधनाम ॥ ६७ ॥**

ऊरूमूलेति ॥ एता नार्यः यैर्वतंसकुसुमैः कर्णाभरणपुष्पैः प्रियं कान्तम् अघ्नन् घ्नन्ति स्म, किंभूतं प्रियम् ऊरूमूलचपलेक्षणं जघनमूलचञ्चलनयनम् । सपदि तत्क्षणं तानि वतंसकुसुमानि मन्मथस्य कन्दर्पस्य कुसुमायुधनाम कुसुमायुध इति नाम यथार्थं सत्यार्थं चक्रिरे विदधिरे । कुसुमायुधः पुष्पप्रहरणः । कामः कुसुमैः कृत्वा जगज्जयतीत्यर्थः ॥६७॥

ऊरुमूलेति ॥ एताः स्त्रिय ऊरुमूले चपलेक्षणं लोलचक्षुषं प्रियं यैर्वतंसकुसुमैः कर्णावतंसपुष्पैः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः । अघ्नन्नताडयन् । हन्तेर्लङ् । 'गमहन-' इत्यादिना उपधालोपः । 'हो हन्तेः-' इति कुत्वम् । तानि वतंसकुसुमानि, मनो मथ्नातीति मन्मथः । पृषोदरादित्वात् साधुः । तस्य मन्मथस्य कुसुममायुधं यस्येति कुसुमायुध इति यन्नाम तद्यथार्थं चक्रिरे चक्रुः । तदा तेषां तत्कार्यकारित्वादिति भावः । अत्र वतंसेष्वारोप्यमाणस्य मन्मथायुधत्वस्य प्रकृतोपयोगात् परिणामालङ्कारः ॥

**धैर्यमुल्बणमनोभवभावा वामतां च वपुरर्पितवत्यः ॥**
**व्रीडितं ललितसौरतधार्ष्ट्यास्तेनिरेऽभिरुचितेषु तरुण्यः ॥ ६८ ॥**

धैर्यमिति ॥ तरुण्यो युवतयः अभिरुचितेषु प्रियतमेषु इदमिदं तेनिरे चक्रुः, किंभूताः तरुण्यः उल्बणमनोभवभावाः उत्कटकन्दर्पाभिप्रायाः । अपरं तरुण्यः वामतां वैपरीत्यं चक्रुः, किं कुर्वत्यः वपुः शरीरमर्पितवत्यः दत्तवत्यः । अपरं तरुण्यः व्रीडितं सलज्जत्वं चक्रुः, किंभूतास्तरुण्यः ललितसौरतधार्ष्ट्याः मनोरमसम्भोगधृष्टत्वाः ॥ ६८ ॥

धैर्यमिति ॥ तरुण्यो रमण्यः उल्बणः उद्रिक्तो मनोभवभावो रतिरागो यासां ता अपि अभिरुचितेषु प्रियेषु धैर्यमौदासीन्यं तेनिरे । वपुः स्वाङ्गमर्पितवत्यो यथेष्टकरणाय दत्तवत्योऽपि वामतां च तेनिरे । ललितं मनोहरं सौरतं सुरतसम्बन्धि धार्ष्ट्यं प्रागल्भ्यं यासां तास्तथापि व्रीडितं व्रीडां तेनिरे । इह स्त्रीणां रहसि रागाऽङ्गार्पणधार्ष्ट्यादिगुणा अप्यागन्तुकतया सहजधैर्यवक्रताव्रीडितैः पुनःपुनः प्रतिबध्यन्त एवेति भावः । अत्र रागादीनां धैर्यादिभिः सह समावेशविरोधस्य सहजाऽऽगन्तुकाभ्यामाभासीकरणाद्विरोधाभासोऽलङ्कारः, धैर्यादिगुणसमुच्चयात्समुच्चयालङ्कारश्चेति सङ्करः ॥ ६८ ॥

**पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः ॥**
**कामिनः स्म कुरुते करभोरूर्हारि शुष्करुदितं च सुखेऽपि ॥ ६९ ॥**

---

( १ ) ०मनिभृतान्यपि ""कोमलतलेषु ।

पाणिरोधमिति ॥ करभोरुः कदलीप्रकाण्डसक्थिः विलासिनी, अथ वा करभस्तु कराद्बहिः, करभवत् आनुपूर्व्येण वृत्तावूरू यस्याः सा करभोरूः कामिनः कान्तस्य एतद्वक्ष्यमाणं कुरुते स्म चकार । एतत किं-पाणिरोधं कामिनः हस्तरोधं चकार, किंभूतं पाणिरोधम् अविरोधितवाञ्छमनिषिद्धेच्छम् । अपरं कामिनः भर्त्सनाः भर्त्सनानि चकार, किंभूता भर्त्सनाः मधुरस्मितगर्भा मनोज्ञहास्यमध्याः । च अपरं सुखेऽपि सुरतसौख्येऽपि सति शुष्करुदितं चक्रे, किंभूतं शुष्करुदितं हारि मनोहरम् । मिथ्यारुदितं शुष्करुदितमुच्यते॥ ६९॥

पाणिरोधमिति ॥ 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः । करभ इव ऊरुर्यस्याः सा करभोरूः स्त्री । 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्ययः । अविरोधितवाञ्छमनिवारितप्रियमनोरथं यथा तथा कामिनः पाणिरोधं नीवीमोक्षणे व्यापृतस्य प्रियपाणेर्निवारणं कुरुते स्म । तथा मधुरं मनोहरं स्मितं गर्भेऽन्तर्वर्ति यासु ता मन्दहासमिश्राः भर्त्सनास्तर्जनाश्च कुरुते स्म । तथा सुखेऽपि अधरपीडनादौ सुखाऽतिरेके सत्यपि हारि मनोहारि शुष्करुदितमनश्रुत्वादनार्द्रं कृत्रिमरोदनं च कुरुते स्म । स्त्रीणामेष स्वभावो यदिष्टमप्यनिष्टतया निवारयन्त्य एव सुरतसुखमुपभुञ्जत इत्यर्थः । अत्र सुखेऽपि दुःखवदुपचारात्कुट्टमिताख्योऽनुभावो द्रष्टव्यः ।

'केशाधरादिग्रहणे मोदमानेऽपि मानसे ।
दुःखितेव बहिः कुप्येद्यत्र कुट्टमितं हि तत्' ॥

इति लक्षणात् ॥ ६९ ॥

वारणार्थपदगद्गदवाचामीर्ष्यया मुहुरपत्रपया च ॥
कुर्वते स्म सुदृशामनुकूलं प्रातिकूलिकतयैव युवानः ॥ ७० ॥

वारणार्थेति ॥ युवानस्तरुणाः सुदृशां सुन्दरीणां प्रातिकूलिकतयैव अनुकूलं कुर्वते स्म असह्यतयैव सौम्यं चक्रुः । कया ईर्ष्यया क्रोधेन, अपरं कया अपत्रपया च निर्लज्जतया च, किंभूतानां सुदृशां मुहुर्वारंवारं वारणार्थपदगद्गद्वाचां वारणं निषेधः अर्थः प्रयोजनं येषु तानि वारणार्थानि 'अलं मां मुञ्चे'त्यादीनि पदानि वाक्यानि यासु ताः गद्गदाः स्खलन्त्यः वाचो गिरो यासां तास्तथा तासां निषेधार्थपदबाष्पगिराम् ॥ ७० ॥

वारणार्थेति ॥ ईर्ष्यया अतिपीडनाऽसहिष्णुतया अपत्रपया च रहस्यप्रकाशनवैलक्ष्येण च मुहुर्वारणार्थपदेषु मा मेत्यादिनिषेधवाचकशब्दप्रयोगेषु गद्गदवाचां स्खलद्गिरां सुदृशां प्रतिकूलं वर्तन्त इति प्रातिकूलिकाः प्रतिकूलचारिणः । 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' इति ठक् । तत्तया प्रातिकूलिकतयैव प्रतिकूलाचरणेनैव युवानोऽनुकूलमिष्टं कुर्वते स्म । कृत्रिमनिवारणात् यत्प्रातिकूलमिवाचरितमधरपीडनादिकं तत्तासामिष्टत्वादनुकूलमेवेति । प्रतिकूलाचरणमेवाऽनुकूलं भवतीत्यर्थः । अत एव प्रतिकूलमप्यनुकूलमिति विरोधाभासोऽलङ्कारः ॥ ७० ॥

अन्यकालपरिहार्यमजस्रं तद् द्वयेन विदधे द्वयमेव ॥
धृष्टता रहसि भर्तृषु ताभिर्निर्दयत्वमितरैरबलासु ॥ ७१ ॥

अन्यकालेति ॥ अजस्रं निरन्तरं द्वयेन पदार्थद्वयेन स्त्रीपुंसोर्युगलेन तद् द्वयमेव विदधे तद् द्वयं चक्रे । किंभूतं द्वयम् अन्यकालपरिहार्यं सम्भोगावसरं विना परिहर्तव्यम्, अन्यकाले सम्भोगव्यतिरिक्ते काले परिहार्यं परिहरणीयम् , नाश्रयणीयमित्यर्थः । कथं द्वयं विदधे इत्याह—रहसि एकान्ते ताभिरङ्गनभिः भर्तृषु कान्तेषु विषयेषु धृष्टता निर्लज्जता विदधे । इतरैः कान्तैः अबलासु कामिनीषु विषयेषु निर्दयत्वं विगतकृपत्वं विदधे । चुम्बनकुचमर्दननखक्षतदशनादिषु सुकठोरं प्रवर्त्यते स्मेत्यर्थः ॥ ७१ ॥

अन्यकालेति ॥ अजस्रं नित्यमन्यकालपरिहार्यं सुरतेतरकाले तु त्याज्यं तद् द्वयं कर्म द्वयेन कर्त्रा विदधे विहितमेव । धाञः कर्मणि लिट् । एतदेव व्यनक्ति—रहसि ताभिरबलाभिर्भर्तृषु विषये धृष्टता विदधे। इतरैर्भर्तृभिरबलासु स्त्रीषु निर्दयत्वं च विदधे । अन्यदा यथा पुंसां स्त्रीषु दया तासां तेष्वप्रागल्भ्यमलङ्कारस्तद्वत्सुरतेषु तद्विरुद्धमेवालङ्कार इति भावः । अत्र स्त्रीपुंसधाष्ट्र्यनिर्दयत्वयोः प्रकृतयोर्विधानाक्रियायौगपद्यं गम्यत इति तुल्ययोगिताभेदः ॥ ७१ ॥

**बाहुपीडनकचग्रहणाभ्यामाहतेन नखदन्तनिपातैः ॥**
**बोधितस्तनुशयस्तरुणीनामुन्मिमील विशिखं (१) विषमेषुः ॥ ७२ ॥**

**बाहुपीडनेति ।। विषमेषुः पञ्चबाणः कामः विशिखम् उन्मिमील बाणमस्पृशत् । किंभूतो विषमेषुः तरुणीनामङ्गनानां तनुशयः तनौ शरीरे शेते इति तनुशयः । तासां देहेषु सदा वर्तमानः इत्यर्थः। अपरं किंभूतोऽनङ्गः बाहुपीडनकचग्रहणाभ्याम् अपरम् आहतेन नखदन्तनिपातैः बोधितः बाह्वालिङ्गनकेशकर्षणाभ्यां प्रहारेण नखदन्तव्रणैर्जागरितः ॥ ७२ ॥**

बाहुपीडनेति ॥ तरुणीनां तनौ शेते इति तनुशयस्तनुषु सुतः । 'अधिकरणे शेतेः' इत्यच् प्रत्ययः । विषमेषुः कामः बाहुपीडनं निर्दयाश्लेषः कचग्रहणं केशाकर्षणं ताभ्याम् आहतेन मुष्टिघातेन । नपुंसके भावे क्तः । नखानां दन्तानां च निपातैःक्षतैश्च बोधितः सन् विशदं निर्जाड्यं यथा तथा उन्मिमील उद्बुद्धः । सर्वमेतत्कामस्योद्दीपकमासीदित्यर्थः । अत्र प्रकृतविषमेषुविशेषणसामर्थ्यादप्रस्तुतसुप्तप्रबुद्धपुरुषप्रतीतेः समासोक्तिरलङ्कारः । एवमेव प्रबोध्यते खलु निद्रालुरित्यलौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपः ॥ ७२ ॥

**कान्तया सपदि कोऽप्युपगूढः प्रौढपाणिरपनेतुमियेष ॥**
**संहतस्तनतिरस्कृतदृष्टिर्भ्रष्टमेव न दुकूलमपश्यत् ॥ ७३ ॥**

**कान्तयेति ।। कोऽपि युवा कश्चित्तरुणः दुकूलं भ्रष्टमेव न अपश्यत् स्रस्तमेव क्षौमं न ददर्श । किंभूतः सः संहतस्तनतिरस्कृतदृष्टिः संहताभ्यां परस्परमिलिताभ्यां स्तनाभ्यां तिरस्कृता दृष्टिः दृक् यस्य सः मिलितस्तनाच्छादितचक्षुः । तर्हि किं चकार—प्रौढपाणिः सन् प्रसारितकरः सन् अपनेतुमपहर्तुमियेष वस्त्रमाक्षेप्तुमाचकाङ्क्ष, किंभूतो युवा कान्तया सपदि उपगूढः तत्क्षणमाश्लिष्टः ।। ७३ ।।**

कान्तयेति ॥ कान्तया सपदि वस्त्राकर्षणक्षण एवोपगूढ आश्लिष्टः कोऽपि युवा कामी प्रौढपाणिर्व्यग्रहस्तः सन अपनेतुं दुकूलमाक्रष्टुमियेष । संहताभ्यां निरन्तराश्लिष्टाभ्यां स्तनाभ्यां तिरस्कृतदृष्टिस्तिरोहिताऽक्षः सन् भ्रष्टमेव प्रागेव स्रस्तं दुकूलं नाऽपश्यत् । अत्र दृष्टितिरस्कारस्य विशेषणगत्य अदर्शनहेतुकत्वात् पदार्थहेतुकं काव्यलिङ्गम् । तच्च दृष्टेः स्तनतिरस्कारासम्बन्धेऽपि सम्बन्धरूपातिशयोक्त्युत्थापितमिति सङ्करः । तेन च कुचयोर्लोकोत्तरसौन्दर्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ७३ ॥

**आहतं कुचतटेन तरुण्याः साधु सोढममुनेति पपात ॥**
**त्रुट्यतः प्रियतमोरसि हारात्पुष्पवृष्टिरिव मौक्तिकवृष्टिः ॥ ७४ ॥**

**आहतमिति ॥ प्रियतमोरसि कान्तवक्षसि त्रुट्यतः खण्डीभवतः हारात् एकावल्यादेः सकाशात् मौक्तिकवृष्टिः पपात मुक्ताफलकान्तिरपतत्। किंभूता मौक्तिकवृष्टिः,उत्प्रेक्ष्यते—इति कारणात् पुष्पवृष्टिरिव कुसुमश्रेणिरिव। इतीति किं—यत् , अमुना वक्षसा तरुण्याः कामिन्याः कुचतटेन स्तनपरिसरेण आहतमभिहननं साधु सम्यक् प्रकारेण सोढं क्षान्तम् । अहो ! एतत्कान्तवक्षः तरुण्याः कुचतटस्य प्रहारक्षमं सञ्जातम् , अतो धन्यमिदमिति भावः । अन्योऽपि यदा कस्यचित् प्रहारक्षमो भवति, तदा तस्योपरि पुष्पवृष्टिः पततीत्युक्तिलेशः । ७४**

(१) विशदं ।

आहतामिति ॥ तरुण्याः सम्बन्धिना कुचतटेनाऽऽहतमाहतिरमुनोरसा साधु सोढमिति हेतोस्त्रुट्यतः शीर्यमाणात् हारान्मौक्तिकवृष्टिः पुष्पवृष्टिरिव प्रियतमोरसि पपातेत्युत्प्रेक्षा। विक्रान्तः पूज्यते पुष्पवृष्ट्येति प्रसिद्धिः॥

**सीत्कृतानि मणितं करुणोक्तिः स्निग्धमुक्तमलमर्थवचांसि ॥**
**हारभूषणरवाश्च रमण्याः कामसूत्रपदतामुपजग्मुः ॥ ७५ ॥**

**सीत्कृतानीति ॥** रमण्याः कामिन्याः एते पदार्थाः कामसूत्रपदतामुपजग्मुः कामः संभोगः स एव सूत्रं वर्णसमुदायः तस्य पदानि विभक्त्यन्तच्छेदाः तेषां भावः कामसूत्रपदता तां प्रापुः। सूत्रे किल पदानि भवन्ति । तावत्किं किं—सीत्कृतानि सीत्कारविशेषाः, अपरं किं मणितं रतिकूजितं, अन्यत् किं करुणोक्तिः दयावद्वचनं 'मृताऽस्मी'त्यादि, अपरं किं स्निग्धमुक्तं प्रियं वाक्यम्, अपरं किम् अलमर्थवचांसि 'मा मा पूर्यता'मित्यादिवारणार्थक्यानि, अपरं किं हारभूषणरवाश्च हारालङ्करणशब्दाश्च, एते सर्वे अनङ्गसूत्रपदानि समजायन्त ।। ७५ ॥

सीत्कृतानीति ॥ तरुण्याः सीत्कृतानि सीत्काराः । दन्तनिष्पीडनायां सीदिति शब्दप्रयोगः । मणितं रतिकाले स्त्रीणां कण्ठकूजितविशेषः। 'मणितं रतिकूजितम्' इत्यभिधानात् । करुणोक्तिस्त्रायस्वेत्यादिदीनोक्तिः, स्निग्धं स्नेहार्द्रमुक्तमुक्तिः । त्वं मे प्राणा इति प्रियवाद इत्यर्थः । अलमर्थानि निषेधार्थानि वचांसि मा मेत्यादिनिवारणवचनानि, हाराणां भूषणानां च रवाः स्वनाश्च कामसूत्रस्य वात्स्यायनादिकामतन्त्रप्रतिपादकशास्त्रस्य पदतां, पद्यत इति पदमर्थः, प्रमेयलक्षणमिति यावत् । तत्तामुपजग्मुरिति गम्योत्प्रेक्षा । यद्वा कामेनैव कृतं सूत्रं तस्य पदानि सुप्तिङन्तशब्दरूपाणि तस्य शास्त्रस्यैतान्येव पदानि तत्तामुपजग्मुरित्युत्प्रेक्षैव ॥ ७५ ॥

**उद्धतैर्निभृतमेकमनेकैश्छेदवन्मृगदृशामविरामैः ॥**
**श्रूयते स्म मणितं कलकाञ्चीनूपुरध्वनिभिरक्षतमेव ॥ ७६ ॥**

**उद्धतैरिति ।।** मृगदृशां कामिनीनां मणितं रतिकूजितं कलकाञ्चीनूपुरध्वनिभिः अक्षतमेव श्रूयते स्म मधुरमेखलामञ्जीरशब्दैः अखण्डितमेव शुश्रुवे । किंभूतैः ध्वनिभिः अविरामैः अविश्रान्तैः, पुनः किंभूतैः अनेकैः, पुनः किंभूतैः उद्धतैः उत्कटैः, किंभूतं मणितं छेदवत् त्रुट्यमानं, पुनः किंभूतम् एकमद्वितीयं, पुनः किंभूतं निभृतं निश्चलम् ।।७६।।

उद्धतैरिति ॥ निभृतमनुद्धतम् । सूक्ष्ममित्यर्थः । एकमेकाकि छेदवद्विच्छेदयुक्तं मृगदृशां मणितं रतिकूजितम् उद्धतैः स्थूलैरनेकैर्बहुभिरविरामैरविच्छेदैः कलैरव्यक्तमधुरैः काञ्चीनां नूपुराणां च ध्वनिभिरक्षतमतिरस्कृतमेव श्रूयते स्म श्रुतम्। मणितस्य तिरोधायकशब्दान्तरसद्भावेऽपि तद्रूप्याऽनापत्तेरतद्गुणाऽलङ्कारः। 'सति हेतावतद्रूपस्वीकारः स्यादतद्गुणः' इति लक्षणात् ॥ ७६ ॥

**ईदृशस्य भवतः कथमेतल्लाघवं मुहुरतीव रतेषु ॥**
**क्षिप्तमायतमदर्शयदुर्व्यां काञ्चिदाम जघनस्य महत्त्वम् ॥ ७७ ॥**

**ईदृशस्येति ।।** काञ्चिदाम मेखलाकलापः जघनस्य नार्याः कटिप्रदेशस्य महत्त्वं विशालत्वमदर्शयत् दर्शयामास । किंभूतं काञ्चिदाम आयतं विशालं, पुनः किंभूतम् उर्व्यां पृथिव्यां क्षिप्तं पतितम् । उत्प्रेक्ष्यते—इतीव इति कारणादेव । इतीति किं—यत्, हे जघन ! भवतः तव ईदृशस्य विशालस्य महतः रतेषु सम्भोगेषु मुहुर्वारंवारं कथमेतत् लाघवं किमेतत् कुट्टनरूपं लघुत्वं स्यात् ॥ ७७ ॥

ईदृशस्येति ॥ रतेषु उर्व्यां क्षिप्तं रतिसम्भ्रमात्पतितम् आयतं दीर्घभूतं काञ्चिदाम रशनागुणः कर्तृ ईदृशस्य इति काञ्चिदाम्नः स्वाऽऽयामदृष्टान्तेन जघनपरिमाणप्रदेशेनेत्थं महत्तरस्यातिमहतस्तव जघनस्य रतेषु उपरिसुरतेषु मुहुः कथमेतल्लाघवं मुहुरुत्पतनपाटवं यस्येत्थमायतमहमपि ऐकवष्टनैपर्याप्तमिति भावः ।

इति जघनस्य महत्त्वदर्शनादिव । इत्थं विस्मितस्येति शेषः । गम्यमानार्थत्वादप्रयोगः । अत्रोन्यामायतत्व-निमित्तकाञ्चीदामकर्तृकं विस्मयपूर्वकजघनमहत्त्वदर्शनमुत्प्रेक्ष्यते ॥ ७७ ॥

**प्राप्यते स्म गतचित्रकचित्रैश्चित्रमार्द्रनखलक्ष्म कपोलैः ॥**

**दध्रिरे च (१)रभसच्युतपुष्पाः स्वेदबिन्दुकुसुमान्यलकाऽन्ताः ॥ ७८ ॥**

प्राप्यते स्मेति ॥ कस्याचिन्नायिकायाः कपोलैः गण्डप्रदेशैः चित्रमालेख्यं प्राप्यते स्म प्राप्तम् । किंभूतं चित्रम् आर्द्रनखलक्ष्म तत्क्षणनखव्रणचिन्हं, किंलक्षणैः कपोलैः गतचित्रकचित्रैः अनीतालेख्यपत्रलतैः । च अपरं अलकाऽन्ताः केशप्रान्ताः स्वेदबिन्दुकुसुमानि दध्रिरे प्रस्वेदजलकणान् दधुः, किंभूताः अलकाऽन्ताः रभसच्युतपुष्पाः सुरतौत्सुक्यात् पतितप्रसूनाः ।। ७८ ॥

प्राप्यते स्मेति ॥ गतानि विमर्दात्प्रमृष्टानि चित्रकचित्राणि तमालपत्ररचनानि येषां तैः कपोलैरार्द्रं नखलक्ष्म तदेव चित्रमिति रूपकम् । प्राप्यते स्म प्राप्तम् । किञ्च रभसेन रतिसम्भ्रमेण च्युतपुष्पा अलकाऽन्ताश्चूर्णकुन्तलाग्राणि स्वेदबिन्दूनेव कुसुमानीति रूपकम् । दध्रिरे दधुः । धरतेर्भौवादिकाल्लिटि ञित्त्वादात्मनेपदम् । स्वेदोऽत्र श्रमाऽनुभावः । श्रमः खेदोऽध्वरत्यादेः श्वासस्वेदाऽतिभूमिकृत ॥ ७८ ॥

**यद्यदेव रुरुचे रुचितेभ्यः (२) सुभ्रुवो रहसि तत्तदकुर्वन् ॥**

**आनुकूलिकतया हि नराणामाक्षिपन्ति हृदयानि तरुण्यः ॥ ७९ ॥**

यद्यदेवेति ।। सुभ्रुवो मृगलोचनाः रहसि एकान्ते रुचितेभ्यः प्रियेभ्यः यत् यदेव रुरुचे रुचितमभिमतं, तत् तदेव अकुर्वन् कुर्वन्ति स्म। यतः कारणात् तरुण्यो रमण्यः आनुकूलिकतया अनुकूलचारित्वेन नराणां कान्तानां हृदयानि आक्षिपन्ति मनांसि अपहरन्ति ७९

यद्यदेवेति ॥ रुचिरेभ्यो रमणेभ्यो यद्यदेव चेष्टितं रुरुचे रोचते स्म । प्रियमभूदित्यर्थः । 'रुच दीप्तावभिप्रीतौ च' इति धातोर्लिट् । 'रुच्यर्थानां प्रीयमाणः' इति सम्प्रदानत्वम् । सुभ्रुवो रहसि तत्तदकुर्वन् । तथा हि—तरुण्यः अनुकूलं वर्तन्त इत्यानुकूलिकाः । 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' इति ठक् । तासां भावस्तत्ता तया आनुकूलिकतया । अनुकूलवर्तितयैव नराणां पुंसां हृदयान्याक्षिपन्त्यावर्जयन्तीत्यर्थान्तरन्यासः ॥ ७९ ॥

**प्राप्य मन्मथमदा(३)दतिभूमिं दुर्वहस्तनभराः सुरतस्य ॥**

**शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः ॥ ८० ॥**

प्राप्येति ॥ असितायतकेश्यः श्यामविशालाऽलका अङ्गनाः शश्रमुः श्रमं प्राप्ताः । किं कृत्वा मन्मथमदात्कामविलासात् सुरतस्य संभोगस्य अतिभूमिं प्राप्य पारं गत्वा, किंभूताः नार्यः दुर्वहस्तनभराः वोढुमशक्यकुचभाराः, कथं शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशं यथा भवति तथा स्वेदसलिलक्लिन्नललाटविलग्नाऽलकं यथा भवत्येवं, स्वेदसलिलेन आर्द्रे क्लिन्ने ललाटे श्लिष्टा विलग्नाः केशा यत्र क्रियायाम् ।। ८० ।।

प्राप्येति ॥ दुर्वहः स्तनभरो यासां ता एतेनोपरि सुरतं व्यज्यते । अन्यथा विशेषणवैयर्थ्यात् । असिता आयताश्च केशा यासां ता असितायतकेश्यः स्त्रियः । 'स्वाङ्गाच्च—' इत्यादिना ङीष् । मन्मथरसात् स्मररागात्सुरतस्यातिभूमिं परां काष्ठां प्राप्य । महान्तं सुरतं प्राप्येत्यर्थः । श्रमजलेन स्वेदाम्बुना आर्द्रे ललाटे श्लिष्टाः केशा यस्मिन्कर्मणि तद्यथा तथा शश्रमुरिति सानुभावस्य श्रमभावोक्तिः । भावनिबन्धनात्प्रेयोऽलङ्कारः ॥ ८० ॥

---

(१) दध्रिरेऽथ । (२) रुचिरेभ्यः । (३) रसा० ।

**सङ्गताभिरुचितैश्चलिताऽपि प्रागमुच्यत चिरेण सखीव ॥**
**भूय एव समगंस्त रताऽन्ते ह्रीर्वधूभिरसहा विरहस्य ॥ ८१ ॥**

**सङ्गताभिरिति ॥** वधूभिर्नायिकाभिः ह्रीर्लज्जा चिरेण चिरकालेन प्राक् पूर्वम् अमुच्यत अत्यज्यत । किंभूताभिर्वधूभिः उचितैः योग्यैः कान्तैः सह सङ्गताभिः संमिलिताभिः । सा ह्रीर्लज्जा रतान्ते चलिताऽपि संभोगान्ते चलिताऽपि सती भूय एव पुनरेव समगस्त संमिलिता । केव सखीव । वधूभिः भर्तृसन्निधौ प्राक् मुच्यते, रतान्ते भूय एव सा सखी गताऽपि सङ्गच्छत इत्यर्थः । किंभूता ह्रीः सखीव विरहस्याऽसहा वियोगस्य असमर्था, वियोगं न सहते इत्यर्थः ।। ८१ ।।

अथ सुरतावसानं वर्णयति—

**सङ्गताभिरिति** ॥ उचितैः परिचितैः प्रियतमैः सह सङ्गताभिर्वधूभिः प्राक् सुरतादौ चलिता गन्तुं प्रचलितापि ह्रीः सखीव चिरेणाऽमुच्यत मुक्ता । न सहत इत्यसहा । पचाद्यजन्ते नञ्समासः । विरहस्याऽसहा सतीत्यर्थः । 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । रतान्ते भूय एव वधूभिः समगंस्त सङ्गता सखीवेत्येव । सम्पूर्वाद्गमेर्लुङ् 'समो गम्यृच्छिभ्याम्—' इत्यात्मनेपदम् । वा 'गमः' इति सिचः पक्षे किच्वाभावात् 'अनुदात्तोपदेश–'इत्यादिनाऽनुनासिकलोपो न। सुरतेतरकाले स्त्रीणां लज्जैव भूषणमिति भावः। उपमालङ्कारः

**प्रेक्षणीयकमिव क्षणमासन् ह्रीतभङ्गुर(१)विलोचनपाताः ॥**
**सम्भ्रमद्रुतगृहीतदुकूलच्छाद्यमानवपुषः सुरताऽन्ताः ॥ ८२ ॥**

**प्रेक्षणीयकमिति ॥** सुरताऽन्ताः सम्भोगप्रान्ताः क्षणं क्षणमात्रं प्रेक्षणीयकमिवाऽऽसन् नाटकमिव बभूवुः । किंभूताः सुरताऽन्ताः ह्रीतभङ्गुरविलोचनपाताः ह्रीता लज्जिता भङ्गुराः वक्राः विलोचनपाताः नेत्रनिरीक्षणानि येषु ते लज्जाकुटिलनेत्रप्रसराः, पुनः किंभूताः सम्भ्रमद्रुतगृहीतदुकूलच्छाद्यमानवपुषः सम्भ्रमेण व्याकुलतया द्रुतं शीघ्रं गृहीतं यद् दुकूलं क्षौमं तेन छाद्यमानानि आव्रियमाणानि वपूंषि शरीराणि येषु ते तथा, व्याकुलत्ववेगनीतपट्टकूलसंवृतशरीराः ॥ ८२ ॥

**प्रेक्षणीयकमिति** ॥ ह्रिया विभङ्गुराः स्खलिता विलोचनपाता दृष्टिपाता येषु ते सम्भ्रमेण द्रुतं गृहीतेन दुकूलेन छाद्यमानानि वपूंषि अन्तरङ्गाणि येषु ते सुरतान्ताः सुरतावसानानि क्षणं प्रेक्षणीयकं दृश्यमिवाऽऽसन्नित्युपमा । नाटकादिरूपकेष्वाहार्यकं वस्तु तद् दृश्यं प्रेक्षणीयकमिति चोच्यते । इहाविर्भावतिरोधानादिना तत्तुल्यत्वम् ॥ ८२ ॥

**अप्रभूतमतनीयसि तन्वी काञ्चिधाम्नि पिहितैकतरोरूः(२) ।**
**क्षौममाकुलकरा विचकर्ष क्रान्तपल्लवमभीष्टतमेन ॥ ८३ ॥**

**अप्रभूतमिति ॥** काचित्तन्वी सुकुमाराङ्गी क्षौमं पट्टकूलं विचकर्ष आचकर्ष । किंभूतं क्षौमम् अभीष्टतमेन कान्तेन क्रान्तपल्लवं गृहीताऽञ्चलं, किंभूता तन्वी आकुलकरा व्यग्रहस्ता, किंभूतं क्षौमं काञ्चिधाम्नि मेखलास्थाने श्रोणीप्रदेशे अप्रभूतमपर्याप्तं, किंभूते काञ्चिधाम्नि अतनीयसि विशाले, पुनः किंभूता तन्वी पिहितैकतरोरूः पिहितः एकतरः ऊरुर्यस्याः सा आच्छादितैकतमजघनप्रदेशा ॥ ८३ ॥

**अप्रभूतमिति** ॥ तन्वी कृशाङ्गी अभीष्टतमेन प्रेयसा क्रान्तपल्लवं गृहीताऽञ्चलम् अत एवाऽतनीयसि महीयसि काञ्चिधाम्नि जघने अप्रभूतं छादयितुमपर्याप्तम् । अत एव पिहितश्छादित एकतर एवोरुर्येन तत्

(१) ह्रीविभङ्गुरः । (२) ०तरोरु ।

क्षौमं दुकूलमाकुलकरा व्यग्रपाणिः सती विचकर्ष कृत्स्नाऽपिधानार्थमाचकर्ष । लज्जाऽनुभावोऽयम् । अत्र क्षौमविशेषाणामाकर्षणहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ८३ ॥

**मृष्टचन्दनविशेषकभक्तिर्भ्रष्टभूषणकदर्थितमाल्यः ॥**
**साऽपराध इव मण्डनमासीदात्मनैव सुदृशामुपभोगः ॥ ८४ ॥**

**मृष्टेति ॥** सुदृशामङ्गनानामुपभोगः परिभोगः आत्मनैव मण्डनमासीत् स्वयमेव मण्डनमलङ्करणं बभूव । किंभूतः उपभोगः, उत्प्रेक्ष्यते—साऽपराध इव अपराधयुक्त इव । यतः किंभूतः उपभोगः मृष्टचन्दनविशेषकभक्तिः आमृष्टाऽवलेपपत्रलतारचनः, अपरं किंभूतः उपभोगः भ्रष्टभूषणकदर्थितमाल्यः पतिताऽलङ्करणम्लानकुसुमः, भ्रष्टानि पतितानि भूषणानि यस्य सः भ्रष्टभूषणः, कदर्थितानि क्लिष्टानि माल्यानि कुसुमानि यत्र सः तथा, भ्रष्टभूषणश्चासौ कदर्थितमाल्यश्च भ्रष्टभूषणकदर्थितमाल्यः ॥ ८४ ॥

मृष्टेति ॥ मृष्टा प्रमृष्टा चन्दनानां विशेषकाणां तमालपत्राणां च भक्ती रचना येन सः । 'तमालपत्र-तिलकचित्रकाणि विशेषकम्' इत्यमरः । भ्रष्टानि भूषणानि यस्मिन्स भ्रष्टभूषणः कुत्सितोऽर्थः कदर्थः । लोकतो विशेष्यलिङ्गत्वम् । 'कोः कत्तत्पुरुषेऽचि' इति कुशब्दस्य कदादेशः । कदर्थानि कृतानि कदर्थितानि दूषितानि माल्यानि येन सः । ततस्तयोर्वैवक्षिकविशेष्यविशेषणभावाद्विशेषणसमासः । एवंभूत उपभोगः साऽपराध इव पूर्वमण्डनापहारात्कृतापराध इव सुदृशामात्मनैव स्वयमेव । प्रकृत्यादित्वात्तृतीया । मण्डनमासीत् । प्रतिनिधिकरणेन स्वापराधनिरासार्थमिवेत्युत्प्रेक्षा । स्त्रीणां सम्भोग एव मण्डनं तदभावे मण्डनान्तरस्याऽप्यमण्डनत्वादिति भावः ॥ ८४ ॥

**योषितः पतितकाञ्चनकाञ्चौ मोहनाऽतिरभसेन नितम्बे ॥**
**मेखलेव परितः स्म विचित्रा राजते नवनखक्षतलक्ष्मीः ॥ ८५ ॥**

**योषित इति ॥** योषितो नायिकायाः नितम्बे कट्याः पश्चाद्भागे परितः समन्तान्नवनखक्षतलक्ष्मीः राजते स्म नूतननखव्रणशोभा रराज । किंभूता नखक्षतलक्ष्मीः, उत्प्रेक्ष्यते—विचित्रा नानावर्णा मेखलेव रशनेव । मेखलाऽपि नितम्बे राजते । किंभूते नितम्बे मोहनाऽतिरसेन सुरताऽतिशयवेगेन पतितकाञ्चनकाञ्चौ भ्रष्टहेममेखले ॥ ८५ ॥

योषित इति ॥ मोहनाऽतिरभसेन सुरतसम्भ्रमेण पतिता काञ्चनी काञ्चनस्य विकारः काञ्चिर्यस्मात् तस्मिन्निर्मेखले योषितो नितम्बे परितः सर्वतो विचित्रा विविधरचना नवनखक्षतलक्ष्मीर्मेखलेव राजते स्म । उत्प्रेक्षालङ्कारः ॥ ॥ ८५ ॥

**भातु नाम सुदृशां दशनाऽङ्कः पाटलो धवलगण्डतलेषु ॥**
**दन्तवाससि समानगुणश्रीः संमुखोऽपि परभागमवाप ॥ ८६ ॥**

**भातु नामेति ॥** सुदृशां कामिनीनां धवलगण्डतलेषु गौरकपोलस्थलीषु, नामेति सम्भावनायां, पाटलः ईषद्रक्तः दशनाऽङ्कः दन्तव्रणः भातु शोभां प्राप्नोतु । अपरं स एव दशनाऽङ्कः दन्तवाससि अधरोष्ठे संमुखोऽपि सन् परभागमवाप गुणोत्कर्षं लेभे । किंभूतः दशनाऽङ्कः समानगुणश्रीः सदृशगुणकान्तिः ॥ ८६ ॥

भातु नामेति ॥ सुदृशां सम्बन्धी पाटलोऽरुणो दशनाङ्को दन्तक्षतं धवलगण्डतलेषु कपोलेषु भातु नाम वैवर्ण्याद्भेदेन प्रकाशताम् । नामेत्यङ्गीकारे । दन्तवाससि अधरे तु समानगुणश्रीस्तुल्यवर्णोऽपि तथा संमुखोऽपि सन् परभागं गुणोत्कर्षं तथा पश्चाद्भागं चाऽवाप इति सावर्ण्यवैवर्ण्ययोः संमुखपराङ्मुखत्वयोश्च विरोधः । उपरिभागमवापेत्युभयत्र परिहाराद्विरोधाभासद्वयसंसृष्टिः । तत्राद्यः श्लेषभित्तिकाभेदाध्यवसायमूलस्तद्गुणोत्थापित इति सङ्करः ॥ ८६ ॥

**सुभ्रुवामधिपयोधरपीठं पीडनैस्त्रुटितवत्यपि पत्युः ॥**
**मुक्तमौक्तिकलघुर्गुणशेषा हारयष्टिरभवद्गुरुरेव ॥ ८७ ॥**

**सुभ्रुवामिति** ॥ सुभ्रुवां नायिकानां हारयष्टिः एकावल्यादिहारलता गुर्व्येवाऽभवत्, गुर्व्येव बभूव । किंभूता हारयष्टिः मुक्तमौक्तिकलघुः पतितमुक्ताफलशून्या, किंभूता हारयष्टिः गुणशेषा सूत्रावशिष्टा, पुनः किंभूता पत्युः कान्तस्य अधिपयोधरपीठं स्तनतटमधिकृत्य पीडनैः गाढालिङ्गनैः त्रुटिवत्यपि छेदं प्राप्तवत्यपि । तथापि गुरुतरा एवाऽभूदित्यर्थः ८७

सुभ्रुवामिति ॥ सुभ्रुवां पयोधरपीठ कुचतटे अधिपयोधरपीठम् । विभक्त्यर्थेऽव्ययीभावः । पत्युः पीडनैः परिरम्भादिविमर्दैस्त्रुटितवती छेदं गतापि । अत एव मुक्तमौक्तिका सा च सा लघुश्च अत एव गुणशेषा सूत्रमात्रशेषाऽपि हारयष्टिर्गुरुः श्लाघ्यैवाभवत् । लघुरपि गुरुरिति विरोधाभासोऽलङ्कारः ॥ ८७ ॥

**विश्रमार्थमुपगूढमजस्रं यत् प्रियैः प्रथमरत्यवसाने ॥**
**योषितामुदितमन्मथमादौ तद् द्वितीयसुरतस्य बभूव ॥ ८८ ॥**

**विश्रमार्थमिति** ॥ प्रियैः कान्तैः प्रथमरत्यवसाने पूर्वसुरताऽन्ते अजस्रं निरन्तरं विश्रमार्थं विश्रामाय योषितां नायिकानां यत् उपगूढमालिङ्गितं, तत् उपगूढं द्वितीयसुरतस्य अपरसम्भोगस्य आदौ बभूव पूर्वमभूत् । किंभूतमुपगूढम् उदितमन्मथम् उदितः उत्पन्नः मन्मथः कामो यत्र तत्, क्रियाविशेषणं वा ॥ ८८ ॥

विश्रमार्थमिति ।। योषितां प्रथमरत्यवसाने विश्रमार्थं श्रमापनोदार्थम् । श्राम्यतेर्घञ्प्रत्ययः । 'नोदात्तोपदेशस्य मान्तस्याऽनाचमेः' इति वृद्ध्यभावः । अजस्रं प्रियैरुपगूढमुपगूहनम् । नपुंसके भावे क्तः । 'न लोका—' इत्यादिना षष्ठीप्रतिषेधः । उदितमन्मथमुत्पादितकामम् । अत एव तदुपगूहनं द्वितीयसुरतस्यादौ बभूव । श्रमापनोदमन्मथोद्बोधाभ्यामुभयोपयोगादुभयार्थमभूत् । संयोगपृथक्त्वन्यायादित्यर्थः । अत्र मध्यवर्तिन उपगूढस्यैकस्य पूर्वोत्तरसुरतशेषत्वेन विशेषणगत्या विश्रमार्थोदितमन्मथपदार्थयोर्हेतुत्वात् काव्यलिङ्गद्वयं तदङ्गाङ्गिभावेन सङ्कीर्यते ॥ ८८ ॥

**आस्तृतेऽभिनवपल्लवपुष्पैरप्यनारतरताऽभिरताभ्यः ॥**
**दीयते स्म शयितुं शयनीये न क्षणः क्षणदयाऽपि वधूभ्यः ॥ ८९ ॥**

**आस्तृते इति** ॥ क्षणदयाऽपि निशयाऽपि वधूभ्यः अङ्गनाभ्यः शयनीये शय्यायां शयितुं शयनाय क्षणो न दीयते स्म अवसरो न दत्तः । किंभूते शयनीये अभिनवपल्लवपुष्पैः आस्तृते नूतनाऽङ्कुरप्रसवैः आच्छादिते, किंभूताभ्यो वधूभ्यः अनारतरताऽभिरताभ्यः निरन्तरसुरततत्पराभ्यः । अतो नानासुरततत्परत्वेन ताः न सुषुपुरित्यर्थः ॥ ८९ ॥

आस्तृते इति ॥ अनारतमश्रान्तं रते सुरते अभिरताभ्य आसक्ताभ्यो वधूभ्यः क्षणमुत्सवसुखं ददातीति क्षणदा रात्रिस्तयाऽप्यभिनवैः पल्लवैः पुष्पैश्चास्तृते आच्छादितेऽपि । सुखशयनार्हेऽपीत्यर्थः । शेतेऽस्मिन्निति शयनीये तल्पे । 'कृत्यल्युटो बहुलम्' इत्यधिकरणेऽनीयर् । शयितुं शयनं कर्तुं क्षणोऽल्पकालोऽपि न दीयते स्म न दत्तः, किन्तु आप्रभातमरमयत् । क्षणदात्वादेवेति भावः । क्षणदयाऽपि क्षणो न दत्त इति विरोधस्योत्सवार्थत्वेन परिहाराद्विरोधाभासोऽलङ्कारः । 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः ॥ ८९ ॥

**योषितामतितरां नखलूनं गात्रमुज्ज्वलतया न खलूनम् ॥**
**क्षोभमाशु हृदयं नयदूनां रागवृद्धिमकरोन्न यदूनाम् ॥ ९० ॥**

**योषितामिति** ॥ खलु निश्चयेन योषितामङ्गनानां गात्रं शरीरं यदूनां यादवानां रागवृद्धिं प्रेमप्रसरम् ऊनां हीनां न अकरोत् न चकार, अपि तु सम्पूर्णां रागवृद्धि-

मकरोत् । किंभूतं गात्रम् उज्ज्वलतया निर्मलतया न ऊनं न हीनम् , अपरं किंभूतं गात्रम् अतितरामतिशयेन नखलूनं करजच्छिन्नं, किं कुर्वत् गात्रम् आशु शीघ्रं हृदयं मनः क्षोभं नयत् चञ्चलत्वं प्रापयत् ॥ ९० ॥

**योषितामिति** ॥ नखलूनं न खलु ऊनम् , नयत् ऊनां न यदूनां इति पदच्छेदः । अतितरामिति- म त्रम् । अव्ययादामुप्रत्ययः । नखैर्लूनं क्षतं नखलूनम् । 'ल्वादिभ्यश्च' इति निष्ठानत्वम् । तथाऽप्युज्ज्वलतया औज्ज्वल्येन न ऊनं न न्यूनम् । किन्तु समग्रमेवेत्यर्थः । नखक्षतानां कामिनीगात्रमण्डनत्वादिति भावः । अत एवाशु हृदयं प्रियाचित्तं क्षोभं विकारं नयत्प्रापयत् । नयतेर्लटः शत्रादेशः । योषितां गात्रं यदूनां यादवानां रागवृद्धिमूनां न्यूनां नाऽकरोत्खलु । किन्तु भूयोऽपि समग्रमेवाकरोदित्यर्थः । अत्र यमकं शब्दा- लङ्कारः । औज्ज्वल्यस्य विशेषणगत्या रागवृद्धिहेतुत्वात्काव्यलिङ्गमर्थालङ्कारः ॥ ९० ॥

**इति मदमदनाभ्यां रागिणः स्पष्टरागाननवरतरतश्रीसङ्गिनस्तानवेक्ष्य ॥**
**अभजत परिवृत्तिं साऽथ पर्यस्तहस्ता रजनिरवनतेन्दुर्लज्जयाऽधोमुखीव ९१ ॥**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये प्रदोषवर्णनं नाम दशमः सर्गः ॥ १० ॥

**इतीति** ॥ अथानन्तरं सा रजनिः सा रात्रिः परिवृत्तिमभजत परिवृत्तिं शिश्राय । विभातेत्यर्थः । किंभूता रजनिः पर्यस्तहस्ता लम्बितहस्तनक्षत्रा, पुनः किंभूता अवनतेन्दुः नम्रीभूतचन्द्रा । पुनः किंभूता, उत्प्रेक्ष्यते—लज्जयाऽधोमुखीव व्रीडयाऽवाङ्मुखीव । लज्जायां किं कारणं—किं कृत्वा तान् रागिणः विलासिनः अनवरतरतश्रीसङ्गिनः अवेक्ष्य निरन्तरं सम्भोगलक्ष्मीप्रसक्तान् दृष्ट्वा, किंभूतान् तान् इति पूर्वोक्तप्रकारेण मदमदनाभ्यां स्पष्टरागान् मदो मत्तता मदनः कामस्ताभ्यां स्पष्टः प्रकटो रागः आसक्तिः येषां ते तथा तान् । अन्याऽपि नारी सुरतसङ्गिनं पुरुषं वीक्ष्य पतितकरा तथा व्रीडयाऽधोमुखी गच्छतीत्यर्थः ॥ ९१ ॥

**इति श्रीशिशुपालवधस्य महाकाव्यस्य श्रीवल्लभदेवविरचितायां सन्देहविषौषध्यां सारटीकायां मद्यपानसुरतक्रीडावर्णनं नाम दशमः सर्गः ।**



**इतीति**॥इतीत्थं मदमदनाभ्यां स्पष्टरागान् , सर्वदा रागित्वेऽपि तदा ताभ्यामपि व्यञ्जितरागानित्यर्थः । अनवरतरतश्रीसङ्गिनः अविच्छिन्नसुरतसम्पल्लम्पटांस्तान् रागिणो रागिण्यश्च रागिणश्च तान् रागिणः । 'पुमान्स्त्रिया' इत्येकशेषः । अवेक्ष्य । अथाऽवेक्षणानन्तरं पर्यस्तः परिवृत्तो हस्तो नक्षत्रविशेषः करश्च यस्याः सा । 'हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि' इत्युभयत्रापि विश्वः । अवनतेन्दुः स्रस्तचन्द्रा अत एव सा रजनिर्लज्जया, ग्राम्यचेष्टादर्शनजनितयेति भावः । अधोमुखी नम्रमुखीवेत्युत्प्रेक्षा । परिवृत्तिं निवृत्त्युन्मुखता- मभजत । प्रभातप्रायाऽभूदित्यर्थः । स्त्रियो हि परकीयग्राम्यचेष्टादर्शने त्रपावनतमुख्यो हस्तेन दृष्टिमन्त- र्धाय द्रागपसरन्तीति भावः । अत एवाऽनन्तरसर्गे प्रभातवर्णनाय प्रस्तावः । मालिनी वृत्तमेतत् । लक्षणं तूक्तं, वक्ष्यते चोत्तरसर्गादौ ॥ ९१ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवध- काव्यव्याख्याने सर्वङ्कषाख्ये दशमः सर्गः ॥ १० ॥

# एकादशः सर्गः ।

**श्रुतिसमधिकमुच्चैः पञ्चमं पीडयन्तः सततमृषभहीनं भिन्नकीकृत्य षड्जम् ॥**
**प्रणिजगदुरकाकि(१)श्रावकस्निग्धकण्ठाः परिणतिमिति रात्रेर्मागधा माधवाय ॥**

**श्रुतिसमधिकमिति ॥ अथाऽनन्तरं मागधाः प्रबोधकराः इति वक्ष्यमाणप्रकारेण माधवाय श्रीपतये कृष्णाय रात्रेः परिणतिं निशायाः विपर्ययं, प्रभातमित्यर्थः, प्रणिजगदुः उच्चैस्तरं पेठुः । किं कृत्वा षड्जं भिन्नकीकृत्य षड्जग्रामं भिन्नरूपतां प्रापय्य, भिन्नषड्जं कृत्वेत्यर्थः । किंभूताः मागधाः इति भिन्नषड्जस्य स्वरूपमाह—पञ्चमं स्वरं पीडयन्तः वर्जयन्तः, किंभूतं स्वरं श्रुतिसमधिकं श्रुत्या ध्वनिविशेषेण समधिकं बहुलम् चतुःश्रुतिकमित्यर्थः । आधिक्यमत्र मध्यमग्रामापेक्षया । तत्रत्या श्रौति श्रुतिः, षड्जे तु चतुःश्रुतिकः(?) । एतच्च पूर्वमेव दर्शितम् । किंभूतं षड्जं सततं सदैव ऋषभहीनम् । ऋषभस्वरवर्जितम् । सततग्रहणेन लक्षणानुरोधात् कदाचित्पञ्चमस्वरस्य सद्भावः सूच्यते । सततमृषभेन हीनं, पञ्चमस्तु कदाचिदेवेत्यर्थः । यदा चैवं, तदा पञ्चमं पीडयन्तो मन्दमुच्चारयन्त इत्यर्थः । किंभूतास्ते मागधाः अकाकिश्रावकस्निग्धकण्ठाः अकाकी काकस्वरगेयदोषवर्जितः श्रावकः संवाही विपुलबलः स्निग्धो रूढः कण्ठो गलो येषां ते तथा । मागधविशेषणान्वत्वकाकीत्यस्तविशेषणः(?) समासः ॥ १ ॥**

अथ प्रस्तुतं प्रभातवर्णनं प्रारभते—

**श्रुतिसमधिकमिति** ॥ नास्ति काकुर्यस्येत्यकाकुरविकृतध्वनिः । 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' **इत्यमरः** । श्रावयतीति श्रावको दूरध्वनिः । स्निग्धो मधुरः कण्ठः स्वरो येषां ते अकाकुश्रावकस्निग्धकण्ठाः । रक्तकण्ठा इत्यर्थः । मागधा वैतालिकाः । श्रुतयो नाम षड्जादिस्वरारम्भकावयवाः शब्दाविशेषाः । तदुक्तम्—

> 'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रिकः ।
> सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा' ॥

इति । ताभिः श्रुतिभिः समधिकं बहुलं षड्जविशेषणं पञ्चमविशेषणं वा, उभयोरपि तथात्वात् । तदुक्तम्—

> 'चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः ।
> द्वे द्वे निषादगान्धारौ त्रींस्त्रीनृषभधैवतौ' ॥

इति । षड्जो मयूरस्य कूजितानुकारी स्वरविशेषः । 'षड्जं मयूरो वदति' इति लक्षणात् । तं षड्जं भिन्न एव भिन्नकस्तं कृत्वा भिन्नकीकृत्य । तत्कालनिषिद्धस्वराऽसंकीर्णं कृत्वेत्यर्थः । पञ्चमो नाम कोकिलकूजिताऽनुकारी स्वरविशेषः । 'पिकः कूजति पञ्चमम्' इति लक्षणात् । तं पञ्चमं पीडयन्तः । तत्कालनिषेधात्परित्यजन्त इत्यर्थः । सततं वीणादिवाद्ययुक्तम् । 'ततं वीणादिकं वाद्यम्' **इत्यमरः** । ऋषभोऽपि वृषभनर्दितानुकारी स्वरभेद एव । 'गावस्त्वृषभभाषिणः' इति लक्षणात् । तेन हीनम् । तस्यापि तत्कालनिषिद्धत्वादित्यर्थः । सततम् ऋषभहीनं च यथा तथा रात्रेः परिणतिम्, परिवृत्तिमित्यर्थः । इति वक्ष्यमाणप्रकारेणोच्चैर्यथा तथा माधवाय कृष्णाय । क्रियाग्रहणात्सम्प्रदानत्वम् । प्रणिजगदुः । गानेनाचख्युरित्यर्थः । 'नेर्गदनद-' इत्यादिना णत्वम् । पञ्चमादिनिषेधे भरतः—

> 'प्रभाते सुतरां निन्द्य ऋषभः पञ्चमोऽपि च ।
> जनयेत्प्रधनं हृद्युक्षा पञ्चत्वं पञ्चमोऽपि च ॥

---

(१) ०रकाकु ।

पञ्चमस्य विशेषोऽयं कथितः पूर्वसूरिभिः ।
प्रगे प्रगीतो जनयेद्दशनस्य विपर्ययम्' ॥

इति । वृत्त्यनुप्रासोऽलङ्कारः । अस्मिन्सर्गे मालिनी वृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ १ ॥

अभिजगदुरित्युक्तं, तदेवाह—

**रत(१)रभसविलासाऽभ्यासतान्तं न यावन्नयनयुगममीलत्तावदेवाऽऽहतोऽसौ ॥**
**रजनिविरतिशंसी कामिनीनां भविष्यद्विरहविहितनिद्राभङ्गमुच्चैर्मृदङ्गः ॥ २ ॥**

**रतरभसेति** ॥ यावन्नयनयुगं न अमीलत् नेत्रयुग्मं न निमिषितं, तावदेवाऽसौ मृदङ्गः पटहः आहतः ताडितो वादितः । किंभूतं नेत्रयुग्ममिति निमीलने कारणमाह—रतरभसविलासाऽभ्यासतान्तं रते निधुवने रभसेन औत्सुक्येन ये विलासाः विभ्रमाः तेषां योऽभ्यासो भूयोभूयः करणं तेन तान्तं खिन्नं, किंभूतो मृदङ्गः रजनिविरतिशंसी निशाऽवसानसूचकः । विभाते हि तूर्यं वाद्यते । कथमाहतः कामिनीनां भविष्यद्विरहविहितनिद्राभङ्गं यथा भवति कामिनीनां भविष्यता भाविना विरहेण विहितः कृतः निद्राभङ्गः स्वापनाशो यत्र यस्यां क्रियायाम् । न हि चिन्तया निद्रा आयाति । रतमासेव्य श्रान्ताः कामिनो यावदक्षि स्थगयन्ति, तावदेवाऽऽलोकीभूतमिति वाक्यार्थः । उच्चैर्वेगेन मृदङ्ग-आहतः इति योज्यम् ॥ २ ॥

अथ पूर्वश्लोके इतिशब्दपरामृष्टानपररात्रप्रभृत्युत्तरोत्तरक्रमभाविनः प्रभातवृत्तान्तानासर्गसमाप्ति वर्णयन्नाह—

**रतिरभसेति** ॥ रतिरभसविलासानां सुरतसम्भ्रमलीलानामभ्यासेनाऽऽवर्तनेन तान्तं क्लान्तं नयनयुगं कर्तृ, कामिनामिति शेषः । यावन्नाऽमीलन्न मुकुलीभवति तावदेवासौ रजनिविरतिशंसी निशावसानसूचक उच्चैर्मृदङ्गः कामिनीनां भविष्यता उत्तरक्षणभाविना विरहेण विहितः कृतो निद्राभङ्गो यस्मिन्कर्मणि तद्यथा तथा आहतस्ताडितः । अत्र विरहशब्देन सामर्थ्यात्तच्चिन्ता लक्ष्यते । अन्यथा असतः साम्प्रतिकनिद्राभङ्गहेतुत्वाऽयोगादिति । अत्र रतितान्तत्वरजनिविरतिशंसनयोर्विशेषणगत्या नेत्रनिमीलननिद्राभङ्गहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गं ॥ २ ॥

**स्फुटतरमुपरिष्टादल्पमूर्तेर्ध्रुवस्य स्फुरति सुरमुनीनां मण्डलं व्यस्तमेतत् ॥**
**शकटमिव महीयः शैशवे शार्ङ्गपाणेश्चपलचरणकाऽब्जप्रेरणोत्तुङ्गिताग्रम् ॥३॥**

**स्फुटतरमिति** ॥ एतत् दृश्यमानं सुरमुनीनां मण्डलं सप्तर्षीणां वलयः ध्रुवस्य उपरिष्टात् औत्तानपादेरुपरि स्फुटतरमतिप्रकटं यथा भवति तथा स्फुरति द्योतते । ध्रुवो हि सर्वं ताराचक्रं वहते । किंभूतस्य ध्रुवस्य अल्पमूर्तेः सूक्ष्मतनोर्दुर्लक्ष्यस्य, किंभूतं मण्डलं व्यस्तं विस्तृतम् । अत एव व्यासो विस्तारः स्फुटतरस्फुरणम् । केचित्तु व्यस्तं पश्चिमाऽऽशालम्बमानमाहुः । कस्योपरि को यथा स्फुरति इत्याह—किमिव शकटमिव अन इव । यथा महीयोऽतिबृहत् शकटं शैशवे बालत्वे अल्पमूर्तेः शार्ङ्गपाणेः श्रीकृष्णस्योपरिष्टात् उपरि पुस्फोर । किंभूतं शकटं व्यस्तं परिवृत्तं, पुनः किंभूतं चपलचरणकाऽब्जप्रेरणोत्तुङ्गिताग्रं चपलेन कम्प्रेण चरणकाऽब्जेन पादपद्मेन यत्प्रेरणं क्षेपः तेन उत्तुङ्गितमूर्ध्वीकृतमग्रं पूर्वभागो यस्य तत्तथोक्तम् । देवर्षिमण्डलस्य शकटमुपमानं, ध्रुवस्य हरिः । चरतीति चरणः ल्युट्, अल्पश्चरणः चरणकः ॥ ३ ॥

---

(१) रति ।

स्फुटतरामिति ॥ अल्पमूर्तेर्दूरत्वात्सूक्ष्मबिम्बस्य ध्रुवस्यौत्तानपादेः । 'ध्रुव औत्तानपादिः स्यात्' इत्यमरः । उपरिष्टात् फुटतरमुज्ज्वलतरं व्यस्तं पर्यस्तमेतत्सुरमुनीनां सप्तर्षीणां मण्डलं शार्ङ्गपाणेः केशवस्य । कृष्णस्य तवेत्यर्थः । शैशवे प्रचालितस्य चपलस्य चरणकाऽब्जस्य अल्पचणारविन्दस्य । 'अल्पे' इत्यल्पार्थे कप्रत्ययः । प्रेरणया नोदनेनोत्तुङ्गितमुत्तुङ्गीकृतमग्रं यस्य तत् । विपर्यासितामित्यर्थः । महीयो महत्तरं शकटमिव शकटाकारं शकटासुरशरीरमिव स्फुरति दीप्यते । उपमालङ्कारः । पुरा किल बाल्ये कृष्णः शकटरूपधारिणं शकटासुरं पादघातेन पातयामासेति पौराणिकी कथाऽत्राऽनुसन्धेया ॥ ३ ॥

**प्रहरकमपनीय स्वं निदिद्रासतोच्चैः प्रतिपदमुपहूतः केनचिज्जागृहीति ॥**
**मुहुरविशदवर्णां निद्रया शून्यशून्यां ददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥४॥**

**प्रहरकमिति ॥** कश्चिन्मनुष्यः स्थानवारकः पुरुषः मुहुर्वारंवारम् अन्तर्मध्ये गिरं ददपि वाचं ददपि नो बुध्यते निद्राति । किंभूतो मनुष्यः केनचिदन्येन जागरकेण स्वं प्रहरकम् अपनीय निजं यामं जागरित्वा निदिद्रासता सुषुप्सुना सता प्रतिपदं वारंवारं नामग्राहं नाम गृहीत्वा उच्चैरतिशब्दमुपहूतः आकारितः—'अहो माल्यक ! त्वं जागृहीति, मया आत्मीयः प्रहरकोऽतिवाहितः, स्वं प्रहरं साम्प्रतं त्वमात्मीययामं जागृही'ति । किंभूतां वाचं निद्रया शून्यशून्यां स्वापेन अव्यक्ताक्षराम् । अलक्षितामित्यर्थः । अपरं किंभूतां वाचम् अविशदवर्णामस्पष्टाक्षराम् ॥ ४ ॥

प्रहरकामिति ॥ स्वं स्वकीयम् । स्वपाल्यमित्यर्थः । प्रहर एव प्रहरको यामः । 'द्वौ यामप्रहरौ समौ' इत्यमरः । तमपनीय नीत्वा निदिद्रासता निद्रातुमिच्छता । निद्रातेः सन्नन्ताल्लटः शत्रादेशः । केनचिदतीतप्रहरपालेनेत्यर्थः । जागृहि प्रबुध्यस्वेति प्रतिपदं पदेपदे उच्चैरुपहूतो मनुष्योऽनन्तरयामिको मुहुर्निद्रया अविशदवर्णामस्पष्टाक्षरामत एव शून्यशून्यां शून्यप्रकाराम् । अनर्थप्रायामित्यर्थः । 'प्रकारे गुणवचनस्य' इति द्विर्भावः, 'कर्मधारयवदुत्तरेषु' इति कर्मधारयवद्भावादवयवसुपो लुक् । गिरम् अयमहं जागर्मीति प्रतिवाचं ददपि प्रयच्छन्नपि । 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः । अन्तरन्तःकरणे नो बुध्यते न जागर्ति । बुध्यतेर्दैवादिकात्कर्तरि लट् । अत्राऽप्रबोधप्रतिवचनदानयोर्विरोधे अपिशब्दः । निद्राऽऽह्वानाभ्यां तत्समाधानाद्विरोधाभासोऽलङ्कारः ॥ ४ ॥

**विपुलतरनितम्बाभोगरुद्धे रमण्याः शयितुमनधिगच्छञ्जीवितेशोऽवकाशम् ॥**
**रतिपरिचयनश्यन्नैद्रतन्द्रः कथञ्चिद्गमयति शयनीये शर्वरीं किं करोतु ॥५॥**

**विपुलतरेति ॥** कश्चिज्जीवितेशः प्रियतमः शयनीये शय्यायां कथञ्चिन्महता कष्टेन शर्वरीं निशां गमयति अतिवाहयति । नैव शेते इत्यर्थः । किं कुर्वन् शयनीये शयितुं निद्रातुम् अवकाशमवसरमनधिगच्छन् स्थानमप्राप्नुवन्, किंभूते शयनीये रमण्याः नितम्बिन्याः विपुलतरनितम्बाभोगरुद्धे ऊरुतरकटीतटविस्तारेण रुद्धे, किंभूतो जीवितेशः रतिपरिचयनश्यन्नैद्रतन्द्रः रतिपरिचयेन मैथुनाभ्यासेन नश्यन्ती अवसीदमाना(?) नैद्री निद्रासम्बन्धिनी तन्द्रा आलस्यं यस्य सः तथा मैथुनाभ्यासेन नष्टस्वापाऽऽलस्यः । अतश्चैवमापतितेऽसौ वराकः किं करोतु । जागर्यात्, नान्यदुपायान्तरमस्तीति ॥ ५ ॥

विपुलतरेति ॥ रमण्या विपुलतरस्य नितम्बस्याऽऽभोगेन विस्तारेण रुद्धे आक्रान्ते शयनीये शयितुमवकाशमनधिगच्छन्नलभमानो जीवितेशः प्रेयान् रतिपरिचयेन पुनःपुनः सुरतावृत्त्या नश्यन्ती निवर्तमाना निद्राया इयं नैद्री निद्राप्रयुक्ता तन्द्रा आलस्यं यस्य स तथाभूतः सन् शर्वरीं कथञ्चिद्गमयति कृच्छ्रेण नयति । किं करोतु किमन्यत्कुर्यात् । शयनाऽनवकाशे सुरतमेव कालयापनोपाय इति तत्रैव प्रवृत्त इति भावः । अत्र शयनीयस्य ईदृग्रोधासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः । तादृग्रोधस्य विशेषणगत्या शयनावकाशाऽनधिगमहेतुत्वात्काव्यलिङ्गभेद इति सङ्करः ॥ ५ ॥

**क्षणशयितविबुद्धाः कल्पयन्तः प्रयोगानुदधिमहति राज्ये काव्यवद् दुर्विगाहे॥
गहनमपररात्रप्राप्तबुद्धिप्रसादाः कवय इव महीपाश्चिन्तयन्त्यर्थजातम् ॥ ६ ॥**

क्षणशयितेति ॥ हे कृष्ण ! महीपाः राजानः अर्थजातं कार्यधनं चिन्तयन्ति आलोचयन्ति । किंभूताः महीपाः क्षणशयितविबुद्धाः मनाक् सुप्ताः पूर्वं तत उत्थिताः, क्षणं शयिताः सुप्ताः सन्तः विबुद्धाः जागरिताः, अपरं किंभूताः राज्ये राष्ट्रे प्रयोगान् सामादीनुपायान् कल्पयन्तः विमृशन्तः, किंभूते राज्ये उदधिमहति समुद्रवद्विपुले, पुनः किंभूते अत एव दुर्विगाहे दुष्प्रवेशे, पुनः किंभूताः महीपाः अपररात्रप्राप्तबुद्धिप्रसादाः अपररात्रेण क्षपान्तेन प्राप्तो लब्धो बुद्धिप्रसादो मतिनैर्मल्यं यैस्ते तथा, किंभूतमर्थजातं गहनं दुर्विज्ञानं, के इव कवय इव, राज्ये कस्मिन्निव काव्यवत् काव्ये इव । यथा कवयः काव्ये अर्थजातं शब्दार्थं चिन्तयन्ति । किंभूते काव्ये उदधिमहति दुर्विगाहे ज्ञातुमशक्ये, किंभूताः कवयः प्रयोगान् कल्पयन्तः छन्दोऽलङ्कारादीन् विमृशन्तः, रचयन्त इत्यर्थः । कवयश्च अपररात्रप्राप्तबुद्धिप्रसादाः क्षपान्तलब्धमतिनैर्मल्याः, किंभूतमर्थजातं गहनं दुर्विज्ञेयम् । याममात्रं शयित्वा विप्रबुद्धाः प्राप्तप्रज्ञाः पश्चाद्रात्रे नृपाः कवयश्च प्रयोगान् विशेषलक्षणान् शब्दान् कल्पयन्ति ॥ ६ ॥

क्षणशयितेति ॥ क्षणं शयिताः सुरतश्रमापनोदाय विसुप्ता विबुद्धास्तदैव प्रबुद्धाः । यथाकालं प्रबुद्धत्वादिति भावः । क्षणशयितविबुद्धाः, स्नातानुलिप्तवत् 'पूर्वकाल-' इति समासः । महीपाः कवय इव अपररात्रे । रात्रेः पश्चिमयाम इत्यर्थः । 'पूर्वापर-' इत्यादिना एकदेशिसमासे समासान्तोऽच् । 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम् । तत्र प्राप्तबुद्धिप्रसादाः लब्धबुद्धिप्रकाशाः सन्तः उदधिमहति समुद्रगम्भीरे । एकत्र तुरगादिभिरपरत्र रसभावादिभिश्चेति भावः । अत एव दुर्विगाहे दुष्प्रवेशे राज्ये काव्ये इव काव्यवत् । 'तत्र तस्येव' इति वतिप्रत्ययः । प्रयोगान् सामाद्युपायानुष्ठानानि, अन्यत्रार्थगुणसाधुशब्दगुम्फान् कल्पयन्तस्तर्कयन्तः । 'ब्राह्मे मुहूर्त उत्थाय चिन्तयेदात्मनो हितम्' इति स्मरणादिति भावः । गहनं दुष्प्रापमन्यत्र दुर्दर्शमर्थजातं पुरुषार्थजातम् । त्रिवर्गमित्यर्थः । अन्यत्र वाच्यलक्ष्यव्यङ्ग्यरूपमभिधेयजातं चिन्तयन्ति विचारयन्ति । इवशब्दस्योपलक्षणत्वात् काव्यवदिति वतिप्रत्ययेऽप्यनेकशब्दार्थगता श्रौती पूर्णा वाक्यार्थोपमा काव्यवदिति तद्धितगता, कवय इति समासगता चेति सङ्कीर्णा ॥ ६ ॥

**क्षितितटशयनाऽन्तादुत्थितं दानपङ्कप्लुतबहल(१)शरीरं शाययत्येष भूयः ॥
मृदुचलदपरान्तोदीरिताऽन्दूनिनादं गजपतिमधिरोहः पक्षकव्यत्ययेन ॥ ७ ॥**

क्षितितटेति ॥ हे कृष्ण ! एषः अधिरोहः निषादी गजपतिं महेभं पक्षकव्यत्ययेन पार्श्वपरिवर्तनेन भूयः पुनरपि शाययति स्वापयति । किंभूतं महेभं क्षितितटशयनान्तादुत्थितं भूमिस्थलशय्यैकदेशाद्विबुद्धं, पुनः किंभूतं दानपङ्कप्लुतबहलशरीरं मदकर्दमव्याप्तसमग्रदेहं, पुनः किंभूतं मृदुचलदपरान्तोदीरिताऽन्दूनिनादं मृदु शनैश्चलन्तौ यौ अपरौ पश्चात् खुरगुल्फौ तयोर्योऽन्तो भागः तेनोदीरितः उत्थापितः अन्दूनां शृङ्खलानां निनादो ध्वनिर्येन सः तम् ॥ ७ ॥

क्षितितटेति ॥ क्षितितटं भूतलमेव शयनाऽन्तः तस्मादुत्थितम् । सुप्तोत्थितमित्यर्थः । अत एव दानपङ्कप्लुतबहुलशरीरं मदकर्दमोक्षितमहाकायं गजपतिम् एषोऽधिरोहतीत्यधिरोह आरोहणः पचाद्यच् । मृदु मन्दं चलता अपरान्तेन पश्चिमपादेनोदीरित उत्पादितोऽन्दूनिनादः शृङ्खलारवो यस्मिन्कर्मणि तद्यथा तथा पक्ष एव पक्षकः पार्श्वः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती । तस्य व्यत्ययेन ।

(१) बहुल ।

पार्श्वान्तरेणेत्यर्थः। भूयः शाययति शयनं कारयति । 'गतिबुद्धि-' इत्यादिना अणि कर्तुः कर्मत्वम् । स्वभावोक्तिरलङ्कारः ॥ ७ ॥

**द्रुततरकरदक्षा(१)ऽऽक्षिप्तवैशाखशैले दधति दधनि धीरानारवान् वारिणीव ॥**
**शशिनमिव सुरौघाः सारमुद्धर्तुमेते कलशिमुदधिगुर्वीं बल्लवा लोडयन्ति ॥ ८ ॥**

द्रुततरेति ॥ हे कृष्ण ! एते बल्लवाः गोपाः कलशिं कुम्भीं लोडयन्ति मथ्नन्ति । किमर्थं दधनि सारं नवनीतमुद्धर्तुमादातुं, किंभूताम् उदधिगुर्वीं समुद्रमहतीं, दधनि किं कुर्वति आरवान् शब्दान् विदधति बिभ्रति, किंभूते दधनि द्रुततरकरदक्षाऽऽक्षिप्तवैशाख-शैले द्रुततरकराभ्यामतिशीघ्रपाणिभ्यां दक्षं चतुरं यथा भवति आक्षिप्तः आकृष्टो वैशाख-शैलो मन्थाद्रिर्यत्र तत्तथा तस्मिन् अतिशीघ्रपाणिचतुराकृष्टमन्थाद्रौ, के इव सुरौघा इव देवसङ्घा इव, सारं कमिव शशिनमिव । यथा सुरौघाः वारिणि उदके गम्भीरान् आर-वान् दधति शशिनं चन्द्रमुद्धर्तुमब्धिं ममन्थुः । किंभूते वारिणि द्रुततरकरदक्षाऽऽक्षिप्त-वैशाखशैले द्रुततरकरैर्दक्षैः आक्षिप्त आकृष्टः वैशाखतुल्यः शैलो मन्दराचलो यत्र तस्मिन् ॥ ८ ॥

द्रुततरेति ॥ द्रुततरकरा अतिलघुहस्तास्ते च ते दक्षाश्च बल्लवा गोपालाः । 'आभीरः स्यान्महाशूद्रो गोपालो बल्लवस्तथा' इति वैजयन्ती । विशाखा प्रयोजनमस्येति वैशाखो मन्थनदण्डः । वैशाखमन्थमन्थान-मन्थानो मन्थदण्डके' इत्यमरः । 'विशाखाषाढादण् मन्थदण्डयोः' इत्यण्प्रत्ययः । वैशाखः शैल इवेत्युप-मितसमासः । साहचर्यात्क्षिप्तो वैशाखशैलो यस्मिन् । धीरान् गम्भीरानारवान् दधति दधानि दध्नि । 'विभाषा ङिश्योः' इति विकल्पादल्लोपाभावः । वारिणीव सुरौघाः शशिनमिव सारं नवनीतमुद्धर्तुमुत्क्रष्टुमुदधिरिव गुर्वीम् । 'उपमानानि सामान्यवचनैः' इति समासः । तां कलशिं कुम्भीमेते लोडयन्ति मथ्नन्ति । एषाऽपि पूर्वतरवत्पूर्णा वाक्यार्थोपमा वाक्यसमाससङ्कीर्णा च ॥ ८ ॥

**अनुनयमगृहीत्वा व्याजसुप्ता पराची**
**रुतमथ कृकवाकोस्तारमाकर्ण्य काले(२) ॥**
**कथमपि परिवृत्ता निद्रयाऽन्धा किल स्त्री**
**मुकुलितनयनैव (३) श्लिष्यति प्राणनाथम् ॥ ९ ॥**

अनुनयमिति ॥ नायिका काचित्स्त्री मुकुलितनयनैव निमीलितलोचनैव प्राणनाथं श्लिष्यति कान्तमालिङ्गति । किंभूता स्त्री पूर्वं प्रथमम् अनुनयं प्रार्थनामगृहीत्वा तिरस्कृत्य पराची पराङ्मुखी सती व्याजसुप्ता अलीकशयिता, इत्यवमानित्वकारणम् । अथ अनन्तरं काले प्रभातसमये कृकवाकोः कुक्कुटस्य तारमत्युच्चं रुतं वाशितमाकर्ण्य श्रुत्वा कथमपि मानित्वात् परिवृत्ता संमुखी जाता, किलेति सत्ये, निद्रया अन्धा निद्रामोहव्याजेन स्थगिताक्ष्येव प्रियं पर्यष्वजत । यदि ह्यसौ व्याजं न कुर्यात्, तदा लाघवं प्राप्नुयात् । यदि नाश्लिष्यति, तदा सुरताद्वञ्चिता स्यात् इति भावः ॥ ९ ॥

अनुनयमिति ॥ अनुनयं प्रियप्रार्थनामगृहीत्वा नाङ्गीकृत्य पराची पराङ्मुखी व्याजेन कपटेन सुप्ता स्त्री अथ कल्ये प्रभाते । 'प्रत्यूषोऽहर्मुखं कल्यम्' इत्यमरः । कृकवाकोः कुक्कुटस्य । 'कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः' इत्यमरः । 'कृके वचः कुक् च' इत्युण्प्रत्ययः । तारमुच्चै रुतं कूजितमाकर्ण्य कथमपि गात्रजृम्भणादिव्याजेन परिवृत्ता संमुखीभूता निद्रयाऽन्धा किल अजानतीव मुकुलितनयनैव मीलिताक्षी सत्येव प्राणनाथमाश्लिष्यति । एषा कलहान्तरिता ॥ ९ ॥

---

(१) दक्षाः क्षिप्त । (२) कल्ये । (३) नयनैवाऽऽश्लिष्यति ।

**गतमनुगतवीणैरेकतां वेणुनादैः कलमविकलतालं गायकैर्बोधहेतोः ॥**
**असकृदनवगीतं गीतमाकर्णयन्तः सुखमुकुलितनेत्रा यान्ति निद्रां नरेन्द्राः १०**

**गतमिति** ॥ हे कृष्ण ! नरेन्द्राः नृपाः निद्रां यान्ति स्वापं भजन्ते । किंभूता नरेन्द्राः गीतं गेयमाकर्णयन्तः शृण्वन्तः, अत एव पुनः किंभूताः सुखमुकुलितनेत्राः सुखेन अक्लेशेन मुकुलितनेत्राः निर्मीलितनयनाः, निद्राव्याप्ता इत्यर्थः । किंभूतं गेयं वेणुनादैः वंशध्वनिभिः एकतां गतमभेदं प्राप्तं, किंभूतैर्वेणुनादैः अनुगतवीणैः अनुयातातन्त्रीवाद्यैः । एतेन त्रयाणामपि साम्यं प्रतिपाद्यते । अत एव पुनः किंभूतं गीतं कलं मधुरं, पुनः किंभूतम् अविकलतालं सम्पूर्णतालम्, तालेनाऽभ्रष्टमित्यर्थः । पुनः किंभूतम् अनवगीतम् अश्रुतपूर्वमनिन्द्यं वा, पुनः किंभूतं गायकैर्गायनैः बोधहेतोः ज्ञानार्थं निद्रामोक्षार्थमसकृत भूयोभूयो गीतमुच्चरितम् । गायकैर्यद् गीतं, तदाकर्णयन्त इत्यर्थः ॥ १० ॥

गतमिति ॥ अनुगतवीणैरनुसृतवीणैर्वीणासंवादिभिर्वेणुनादैर्वंशस्वरैः एकतामेकरूपतां गतं कलमव्यक्तमधुरम् अविकलोऽविसंवादी तालः कास्यादितालो यस्य तत्, बोध एव हेतुस्तस्य बोधहेतोः बोधकारणेन । बोधनार्थमित्यर्थः । फलस्यापि कारणत्वमिच्छाद्वारा स्वर्गादिवत् । फलरागस्य तत्साधनप्रवृत्तिहेतुत्वात् षष्ठी । गायकैर्वैतालिकैरनवगीतमगर्हितम् । 'अवगीतं तु निर्वादे मुहुर्दुष्टेऽपि गर्हिते' इति विश्वः । गीतं गीयमानं वस्तु आवृत्तिर्वा गीतशब्दस्य; गीतं गानं समाकर्णयन्तो नरेन्द्राः सुखेन गानसुखेन मुकुलितनेत्रा निमीलिताक्षाः सन्तो निद्रां यान्ति भजन्ति । वृत्त्यनुप्रासोऽलङ्कारः ॥ १० ॥

**परिशिथिलितकर्णग्रीवमामीलिताक्षः क्षणमयमनुभूय स्वप्नमूर्ध्वज्ञुरेव ॥**
**रिरसयिषति भूयः शष्पमग्रे विकीर्णं पटुतरचपलौष्ठं (१)प्रस्फुरत्प्रोथमश्वः ११**

**परिशिथिलितेति** ॥ हे भगवन् ! अयमश्वः पुरः अग्रे विकीर्णं निक्षिप्तं शष्पं घासं पुनः रिरसयिषति जिघत्सति । किं कृत्वा ऊर्ध्वज्ञुः ऊर्ध्वजानुः उपविष्ट एव किञ्चित्स्वप्नमनुभूय निद्रां सेवित्वा, कथंभूतः परिशिथिलितकर्णग्रीवं यथा भवति तथा आमीलिताक्षः लम्बायमानश्रवणगलं यथा भवत्येवं निमीलितनयनः । कथं रिरसयिषतीत्याह—पटुतरचपलौष्ठं यथा भवत्येवं पटुतरं चतुरं चपलौ कम्पाविष्टौ ओष्ठौ दशनच्छदौ यत्र तत्तथा, अपरं कथं यथा भवति प्रस्फुरत्प्रोथं यथा भवत्येवं प्रस्फुरत् स्फुरमाणं प्रोथं घोणारन्ध्रं यत्र क्रियायाम् । ऊर्ध्वे जानुनी यस्य स ऊर्ध्वज्ञुः जानुशब्दस्य ज्ञुरादेशः । 'ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्', 'घोणा तु प्रोथमस्त्रियाम्' ॥ ११ ॥

परिशिथिलितेति ॥ अयमश्वः परिशिथिलितं स्रस्तमुक्तं कर्णग्रीवं कर्णौ च ग्रीवा च यस्मिन्कर्मणि तद्यथा तथा आमीलिताक्षः ऊर्ध्वे जानुनी यस्य स ऊर्ध्वज्ञुः । ऊर्ध्वजानुस्तिष्ठन्नित्यर्थः । 'ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्' इत्यमरः । 'ऊर्ध्वाद्विभाषा' इति जानुशब्दस्य ज्ञुरादेशः । क्षणं स्वप्नं निद्रामनुभूय । उत्तमाश्वलक्षणमेतत् । भूयः पुनरपि पटुतरौ ग्रासग्रहणसमर्थौ चपलौ चञ्चलौ चोष्ठौ यस्य सः सन् प्रस्फुरत्प्रोथं प्रस्फुरमाणघोणं यथा तथा । 'घोणा तु प्रोथमस्त्रियाम्' इत्यमरः । अग्रे विकीर्णं क्षिप्तं शष्पं घासम् । 'शष्पं बालतृणं घासः' इत्यमरः । रिरसयिषति रसयितुमास्वादयितुमिच्छति । रसयतेः सन्नन्ताल्लट् । स्वभावोक्तिरलङ्कारः । 'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' ॥ ११ ॥

**उदयमुदितदीप्तिर्याति यः सङ्गतौ मे**
**पतति नवरमिन्दुः सोऽपरामेष गत्वा ॥**

---

(१) चपलौष्ठः ।

**स्मितरुचिरिव सद्यः साभ्यसूयं प्रभेति**
**स्फुरति विशदमेशा पूर्वकाष्ठाऽङ्गनायाः ॥ १२ ॥**

**उदयमिति** ॥ हे कृष्ण ! एषा पूर्वकाष्ठाङ्गनायाः पूर्वदिङ्नार्याः प्रभा कान्तिः विशदं प्रकटं यथा भवति तथा स्फुरति प्रसरति। किंभूता प्रभा उत्प्रेक्ष्यते—इति अतो हेतोः साभ्यसूयं सेर्ष्यं स्मितरुचिरिव हास्यच्छविरिव। तमेव हेतुमाह—योऽयं शशी मे मम सङ्गतौ सत्याम् अस्मत्सम्पर्के सति उदितदीप्तिः जातकान्तिः सन् उदयं याति उद्गमं प्राप्नोति, स एव एष चन्द्रोऽधुना पश्चिमामाशां प्राप्य नवरं केवलं पतति भ्रश्यति इति। यदा किल नायकोऽपरां नारीं प्राप्य भ्रंशमाप्नोति, तदा प्रधाननारी ईर्ष्यया हसति ॥१२॥

उदयमिति ॥ य इन्दुः मे मम सङ्गतावुदितदीप्तिः प्रवृद्धद्युतिः सन उदयमुदयाद्रिम् अभ्युदयं च याति, स इन्दुरेषोऽपरां पश्चिमाशां पराङ्गनां च गत्वा पतत्यस्तमेति पातित्यं च गच्छति। न वरमनर्हमित्यर्थः। इति सद्यः साभ्यसूयं यथा तथा पूर्वकाष्ठा प्राची सैवाङ्गना पूर्वनायिका च गम्यते। तस्याः स्मितरुचिर्मन्दहासकान्तिरिवैषा प्रभा विशदं निर्मलं स्फुरति प्रकाशते। प्राच्यामीषद्विशदा प्रभा प्रादुरभूदित्यर्थः। अत्र प्राचीगतप्राभातिकप्रभायामिन्दोः पराङ्गनासङ्गपातित्यनिमित्ता चेतनधर्मस्मितरुचित्वोत्प्रेक्षा पूर्वकाष्ठाङ्गनाया इति रूढिव्यूढेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ १२ ॥

**चिरतररतखेद(१)प्राप्तनिद्रासुखानां चरममपि शयित्वा पूर्वमेव प्रबुद्धाः ॥**
**अपरिचलितगात्राः कुर्वते न प्रियाणामशिथिलभुजचक्राश्लेषभेदं तरुण्यः १३**

**चिरतरेति** ॥ तरुण्यो युवतयः प्रियाणां कान्तानामशिथिलभुजचक्राश्लेषभेदं न कुर्वते गाढबाहुलतया आलिङ्गनत्यागं नैव विदधति। अशिथिलो यो भुजचक्रेण बाहुमण्डलेन आश्लेषः आलिङ्गनं तस्य भेदः त्यागः तम्। किंभूतानां प्रियाणां चिरतररतखेदप्राप्तनिद्रासुखानां अनवरतसुरतपरिश्रमलब्धस्वापशर्मणां, किंभूतास्तरुण्यः चरममपि शयित्वा पश्चादपि सुप्त्वा पूर्वमेव प्रबुद्धाः आदावेव जागरिताः, इति सन्महिलाचारकथनम्। पुनः किंभूताः अपरिचलितगात्रा अकम्पितदेहाः, प्रियतमसुखनिद्राभङ्गभयादिति भावः॥ १३ ॥

**चिरेति** ॥ चरममपि शयित्वा पश्चात् सुप्त्वाऽपि पूर्वमेव प्रबुद्धाः।

'सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते।
नान्यं कामयते चित्ते सा स्त्री ज्ञेया पतिव्रता' ॥

इति स्मरणादिति भावः। तथापि तरुण्योऽपरिचलितगात्रा अस्पन्दवपुष्काः सत्यः चिररतिपरिखेदेन प्राप्तनिद्रासुखानां प्रियाणामशिथिलो गाढो यो भुजचक्रेण परस्परभुजवलयेनाश्लेषस्तस्य भेदं विश्लेषं विस्रंसनं न कुर्वते, किन्त्वाश्लिष्यैव स्थिताः, अन्यथा तन्निद्राभङ्गः स्यात्। 'शयानं न प्रबोधयेत्' इति निषेधास्कन्दनभयादिति भावः। रतिश्रमोऽत्र सञ्चारी तदनुभावो निद्रा ॥ १३ ॥

**कृतधवलिमभेदैः कुङ्कुमेनेव किञ्चिन्मलयरुहरजोभिर्भूषयन् पश्चिमाशाम् ॥**
**हिमरुचिररुणिम्ना राजते रज्यमानैर्जरठकमलकन्दच्छेदगौरैर्मयूखैः ॥ १४ ॥**

**कृतेति** ॥ हे कृष्ण ! एष हिमरुचिश्चन्द्रः पश्चिमाशां वारुणीं दिशं मयूखैरंशुभिर्भूषयन् शोभयन् सन् स्वयं राजते शोभते। किंभूतैर्मयूखैः जरठकमलकन्दच्छेदगौरैः जरठं कठोरं पक्वं यत्कमलं पद्मं तस्य कन्दः मृणालं तस्य छेदो भङ्गः तद्वद्गौराः सितास्तैः। स्फटिकविशदशुभ्रैरित्यर्थः। तथा किञ्चित् अरुणिम्ना लौहित्येन रज्यमानैः रक्तीक्रिय-

---

( १ ) चिररतिपरिखेद।

माणैः । चन्द्रस्योदयास्तसमयेऽपि किरणानां रक्तता जायते । किंभूतैः मयूखैः, उत्प्रेक्ष्यते—मलयरुहरजोभिरिव चन्दनरेणुतुल्यैः। किंभूतैः रजोभिः कुङ्कुमेन काश्मीरजेन किञ्चित्कृतधवलिमभेदैः किञ्चित्कृतो धवलिम्नः सितत्वस्य भेदः अन्यथात्वं येषां ते तैः । अयमर्थः—यथा कश्चिद्विलासी कुङ्कुमच्छुरितचन्दनरजोभिः नायिकामलङ्कुर्वाणो राजते, तथा सितरक्तैः किरणैः पश्चिमाशां भूषयन् इन्दुरित्यर्थः । मयूखानां मलयजमुपानं, रक्तानां काश्मीरजम् ॥ १४ ॥

कृतेति ॥ हिमरुचिश्चन्द्रः अरुणिम्नाऽस्तमयरागेण हेतुना रज्यमानैर्लोहितायमानैः । रञ्जेर्दैवादिकात् कर्तरि शानच् । 'अनिदिताम्—' इति नलोपः ।'त्रीणि रज्यति राजति लोहितायति चात्मन' इति भट्टमल्लः । जरठस्य परिणतस्य कमलकन्दस्य छेदा इव गौराः शुभ्राः । छेदग्रहणं धावल्यार्थम् । 'गौरः पीत सिते ऽरुणः' इति विश्वः । तैर्मयूखैः कुङ्कुमेन किञ्चित्कृता धवलिमभेदो धावल्यभङ्गो येषां तैरीषद्भग्नधावल्यैः मलयरुहरजोभिश्चन्दनरेणुभिरिव पश्चिमाशां प्रेयसीमिवेति भावः । भूषयन् राजते । उपमालङ्कारः ॥ १४ ॥

**दधदसकलमेकं खण्डितामानमद्भिः श्रियमपरमपूर्णामुच्छ्वसद्भिः पलाशैः ॥**
**कलरवमुपगीते षट्पदौघेन धत्तः कुमुदकमलखण्डे तुल्यरूपामवस्थाम् ॥१५॥**

दधदिति ॥ कुमुदकमलखण्डे कैरवपद्मौघौ अधुना तुल्यरूपां सदृशात्मिकामवस्थां धत्तः दशां बिभृतः । किंभूते खण्डे इति साम्यमाह—एकं कुमुदखण्डम् आनमद्भिः सङ्कुचद्भिः पलाशैः पत्रैः असकलमीषत् खण्डितां श्रियं दधत् उद्वहत्, अपरं तु पद्मम् उल्लसद्भिः पलाशैः विकसद्भिः पत्रैः अपूर्णामसमग्रां श्रियं शोभां दधत् । तथा द्वे अपि षट्पदौघेन भृङ्गसार्थेन कलरवमुपगीते गातुमारब्धे । अतश्च तुल्यावस्थात्वम् ॥ १५ ॥

दधादिति ॥ एकं कुमुदखण्डमानमद्भिर्मुकुलीभवद्भिः पलाशैर्दलैरसकलमर्धं खण्डिताम् । क्षीयमाणामित्यर्थः । श्रियं दधत् । अपरं कमलखण्डमुच्छ्वसद्भिर्विकसद्भिः पलाशैरपूर्णां वर्धमानां श्रियं दधत् । षट्पदौघेन कलरवं यथा तथा उपगीते । उभे अपीत्यर्थः। कुमुदकमलखण्डे कुमुदानां कमलानां च खण्डे कदम्बे । 'कदम्बे खण्डमस्त्रियाम्' इत्यमरः । तुल्यरूपामवस्थां धत्तः दधाते । अत्र क्षयवृद्ध्योरर्थप्रवृत्तेरैकरूप्ये कस्य क्षयः कस्य वा वृद्धिरिति दुर्ग्रहमिति भावः । अत्रोभयविशेषणानां तुल्यावस्थाधारणहेतुकत्वात्काव्यलिङ्गम् । तेन द्वयोः क्रमेणोपमानोपमेयभावरूपोपमेयोपमा व्यज्यते ॥ १५ ॥

**मदरुचिमरुणेनोद्गच्छता लम्भितस्य**
**त्यजत इव चिराऽवस्थायिनी(१)माशु लज्जाम् ॥**
**वसनमिव मुखस्य स्रंसते सम्प्रतीदं**
**सितकरकरजालं वासवाशायुवत्याः ॥ १६ ॥**

मदरुचिमिति ॥ वासवाशायुवत्याः पूर्वदिगङ्गनायाः मुखस्य सम्प्रत्यधुना एतत् सितकरकरजालं चन्द्रकिरणपटलं स्रंसते भ्रश्यते । तदा पश्चिमदिग्वलम्बितं भवति । किंभूतस्य मुखस्य उद्गच्छता उदयता अरुणेन सूरसूतेन मदरुचिं लम्भितस्य लोहिताख्यां कान्तिं प्रापितस्य, अत एव तमोनाशात् ईषत्प्रकाशेन चिराऽवस्थायिनीं चिरकालस्थायिनीं लज्जां व्रीडामाशु शीघ्रं त्यजत इव जहत इव, किमिव वसनमिव । यथा कस्याश्चित् कामिन्या मत्तायाः कान्तेन मदरुचिलम्भितात् मुखात् व्रीडानाशे सति वासः पपति, तथा ऐन्द्र्याः शशिकरनिकर इत्युपमा।करजालस्य वसनमुपमानं, लज्जायास्तु तमः प्राभातिकम् १६

(१) चिराय स्थायिनी० ।

मदरुचिमिति ॥ सम्प्रति सितकरस्येन्दोरिदं करजालं कर्तृ उद्गच्छता उद्यता अरुणेनाऽनूरुणा मदरुचिं तत्तुल्यां रुचिम्, अरुणिमानमित्यर्थः । अत एव निदर्शनालङ्कारः । लम्भितस्य प्रापितस्य । लभेर्ण्यन्तात्कर्मणि क्तः । 'लभेरशब्लिटोः' इति नुमागमः । अत एव चिराय स्थायिनीं लज्जामाशु त्यजत इव। मुखप्रकाशना-दियमुत्प्रेक्षा। वासवाशा प्राची तस्या एव युवत्या मुखस्य प्राग्भागस्याऽऽननस्य च वसनामिवाऽवगुण्ठनपट-इव स्रंसते गलति । रक्ताः स्त्रियः पाटलमुखा निर्लज्जाः स्रस्तवसनाश्च भवन्तीति भावः । अत्र मुखस्येति प्राग्भागवदनयोरभेदाध्यवसायात् श्लेषमूलाऽतिशयोक्तिः, तया पूर्वोक्तनिदर्शनोत्प्रेक्षाभ्यां चानुगृहीता वसन-मिवेत्युत्प्रेक्षेति सङ्करः ॥ १६ ॥

**अविरतरतलीलाऽऽयासजातश्रमाणामुपशममुपयान्तं निःसहेऽङ्गेऽङ्गनानाम्॥**
**पुनरुषसि विविक्तैर्मातरिश्वाऽवचूर्ण्य ज्वलयति मदनाग्निं मालतीनां रजोभिः१७**

**अविरतेति॥मातरिश्वा वायुः उषसि प्रभाते मालतीनां रजोभिः जातीनां रेणुभिः कृत्वा वनितानां वपुषि अङ्गनानां देहे पुनरपि मदनाग्निं स्मरानलं ज्वलयति उद्दीपयति । किंभूतं मदनाग्निम् उपशममुपयान्तं नाशमायान्तं, किंभूतानामङ्गनानाम् अविरतरतलीलायासजात-श्रमाणाम् अविरतमनवरतं या रतलीला निधुवनव्यापारः तया यः आयासः खेदः तेन जात-श्रमाणां श्रान्तानां, क्व उपशममुपयान्तं निःसहेऽङ्गे स्वकार्याऽक्षमे शरीरे । अतो वायु-र्मालतीनां रजांस्यवचूर्ण्य तैः कामाग्निं ज्वलयति । कथमन्यथा कुसुमरेणुवासितसमीरण-व्यतिकरात् ताः सकामा इति भावः ।किंभूतैः रजोभिः विविक्तैः अनुपहतैः । अन्योऽप्यग्निं शाम्यन्तं गोमयादिभिरवचूर्ण्य ज्वलयति ॥ १७ ॥**

अविरतेति ॥ अविरतरतलीलायासेनाऽविच्छिन्नसुरतक्रीडाप्रयासेन जातश्रमाणामङ्गनानां सम्बन्धिनि निःसहत इति निःसहेऽक्षमे । पचाद्यच् । अङ्गे उपशममुपयान्तं शाम्यन्तं मदन एवाग्निस्तं पुनरुषसि मातर्यन्तरिक्षे श्वयति वर्धत इति मातरिश्वा । 'श्वन्नुक्षन्—' इत्यादिना औणादिको निपातः । विविक्तैरमलैरनार्द्रैश्च मालतीनां जातीकुसुमानाम् । 'सुमना मालती जातिः' इत्यमरः । रजोभिः परागैः । करीषैरिवेति भावः । अवचूर्ण्याऽवधूलय । संयुज्येति भावः । ज्वलयत्युद्दीपयति । प्राभातिकमालतीवात-स्पर्शात्पुनरुद्बुद्धो मदन इत्यर्थः ॥ १७ ॥

**अनिमिषमविरामा रागिणां सर्वरात्रं**
**नवनिधुवनलीलाः कौतुकेनाऽभिवीक्ष्य(१) ॥**
**इदमुदवसितानामस्फुटालोकसम्प-**
**न्नयनमिव सनिद्रं घूर्णते दैपमर्चिः ॥ १८ ॥**

**अनिमिषमिति॥हे कृष्ण ! इदम् एतत् दैपं दीपस्येदं दीपसम्बन्धि अर्चिः शिखा घूर्णते कम्पते । क्षपाक्षये हि तैलक्षयाद्वातवशाच्च प्रशाम्यन्तो दीपाः कम्पन्ते इति स्वभावः । किंभूतमर्चिः अस्फुटालोकसम्पत् अप्रकटिततेजःपुञ्जप्रसरम् । अपरं किंभूतमर्चिः, उत्प्रे-क्ष्यते—उदवसितानां वेश्मनां सनिद्रमुज्जागरवन्नयनमिव नेत्रमिव । सनिद्रत्वात् घूर्णते। कथं सनिद्रमिति कारणमाह—किं कृत्वा रागिणां दम्पतीनां सर्वरात्रं समग्रामेव निशां कौतुकेन कौतूहलेन अविरामा नवनिधुवनलीलाः अभिवीक्ष्य अविच्छिन्ना अभिनवसुरतक्रिया आलोक्य । उत्प्रेक्ष्यते—अनिमिषमिव अनिमिषतीत्यनिमिषमनिमीलम् । यः किल कौतुकाद्रात्रौ अनिमिषः किञ्चिद् गोष्ठ्यादिकं वीक्षते, सोऽवश्यमेव प्रत्यूषे निद्रया उपद्रुतो नयने घूर्णयते १८**

अनिमिषमिति ॥ इदं पुरोवर्ति अस्फुटा सूर्यतेजोऽभिभवान्मन्दायमाना आलोकसम्पत्प्रकाशसम्पत्ति-

---

(१) ०ऽतिवीक्ष्य ।

र्यस्य तत्, अन्यत्र निद्राऽभिभवादनुद्बुद्धविषयावधानशक्तिकं दीपस्येदं दैपमार्चिर्ज्वाला 'ज्वालाभासोर्न पुंस्यार्चिः' इत्यमरः । सर्वस्यां रात्राविति सर्वरात्रम्, 'पूर्वकाल-' इत्यादिना समासः। 'अहःसर्व-' इत्यादिना समासान्तः, 'रात्राऽह्नाहाः पुंसि' इति पुंलिङ्गता । अत्यन्तसंयोगे द्वितीया । अविरामा अविच्छिन्ना रागिणां कामिनां कामिनीनां च । 'पुमान् स्त्रिया' इत्येकशेषः । नवा निधुवनलीलाः सुरतविलासान् । 'व्यवायो ग्राम्यधर्मश्च रतं निधुवनं च सः' इत्यमरः । कौतुकेन न निमिषतीत्यनिमिषं यथा तथा । पचाद्यच् कुटादित्वान्न गुणः । अतिवीक्ष्य अत एव सनिद्रमुदवसितानां गृहाणां सम्बन्धि । 'गृहं गेहोदवसितं वेश्म सद्म निकेतनम्' इत्यमरः । नयनमिवेत्युत्प्रेक्षा । घूर्णते भ्रमति ॥ १८ ॥

**विकचकमलगन्धैरन्धयन् भृङ्गमालाः सुरभितमकरन्दं मन्दमावाति वायुः(१)**
**समद(२)मदनमाद्यद्यौवनोद्दामरामारमणरभसखेदस्वेदविच्छेददक्षः ॥ १९ ॥**

**विकचेति** ॥ हे कृष्ण ! एष वायुः पवनः मन्दम् आवाति शनैर्वहति । किं कुर्वन् विकचकमलगन्धैः प्रफुल्लपद्मामोदैः भृङ्गमालाः भ्रमरपङ्क्तीः अन्धयन् आकुलीकुर्वन्, कथं वाति सुरभितमकरन्दं यथा भवति सुरभितः सुगन्धीकृतः मकरन्दः मधु यत्र क्रियायां तथा मृदुवातवहनविकासवशाद्धि कुसुमरसः सुगन्धिर्भवतीति । किंभूतो वातः समदमदनाः प्रमदकामाः माद्यन्तो हृष्यन्तो यौवनोद्दामाः तारुण्योत्कटाः या रामाः कामिन्यस्तासां यत् रमणं स्वकेलिः तत्र यो रभसो विचारनिवृत्तिः तेन यः खेदः श्रमः ततो यः स्वेदः तस्य यो विच्छेदः विनाशः तत्र दक्षश्चतुरः । निधुवनश्रमघर्मितकामिनीसेवानिपुण इत्यर्थः । एतेन सुरभिः शीतो मन्दश्च ॥ १९ ॥

विकचेति ॥ प्रमदमदनाभ्यां हर्षमन्मथाभ्यां माद्यन्तीनां यौवनेनोद्दामानां च रामाणां स्त्रीणां रमणरभसखेदेन सुरतसंरम्भश्रमेण यः स्वेदस्तस्य छेदे हरणे दक्षो वातः प्रभातमारुतः विकचकमलगन्धैर्भृङ्गमाला अन्धयन्नन्धाः कुर्वन्मोहयन् । अन्धयतेः 'तत्करोति—' इति ण्यन्ताल्लटः शत्रादेशः । सुरभितः सुरभीकृतो मकरन्दो यस्मिन्कर्मणि तद्यथा मन्दमावाति प्रचलति । अत्र वृत्त्यनुप्रासोऽलङ्कारः ।

'श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः' ॥

इति आचार्योक्ता दश गुणाः प्रायेणात्र सम्भवन्तीति निपुणैरुन्नेयाः ॥ १९ ॥

**लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा रजनय इव निद्राक्लान्तनीलोत्पलाक्ष्यः ॥**
**तिमिरमिव दधानाः स्रंसिनः केशपाशानवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः ॥**

**लुलितेति** ॥ अमूः एता वारवध्वः वारविलासिन्यः अवनिपतिगृहेभ्यो राजवेश्मभ्यो यान्ति निःसरन्ति, का इव रजनय इव रात्रय इव । तदा रात्रयोऽपि निर्गच्छन्तीत्यर्थः । किंभूता वारवध्वः लुलितनयनताराः लुलितानि लोडितानि कम्प्राणि वा नयनान्येव तारा यासाम् अथ नयनताराः कनीनिका यासां ताः, पुनः किंभूताः क्षामवक्त्रेन्दुबिम्बाः क्षामं जागरणवशात् कृशं वक्त्रेन्दुबिम्बं वदनचन्द्रबिम्बं यासां तास्तथा, पुनः किंभूताः निद्राक्लान्तनीलोत्पलाक्ष्यः निद्रया स्वापेन क्लान्तानि श्रान्तानि नीलोत्पलानीव इन्दीवराणीव अक्षीणि लोचनानि यासां तास्तथा, पुनः किंभूताः वारवध्वः कार्ष्ण्यात् तिमिरमिव तमस्तुल्यान् स्रंसिनः लम्बमानान् केशपाशान् कबरीः दधानाः बिभ्राणाः । तथा रजनयोऽपि लुलितनयनताराः क्षामवक्त्रचन्द्रबिम्बाः सङ्कोचक्लान्तनीलोत्पलाक्ष्यः तथा क्षीयमाणतिमिरधारिण्यः॥

( १ ) वातः । ( २ ) प्रमद ।

लुलितेति ॥ लुलितनयनताराः निद्राकलुषिताऽक्षिकनीनिकाः अन्यत्राऽप्रसन्ननक्षत्राः । 'ऋक्षाऽक्षिमध्ययोस्तारा' इति विश्वः । वक्त्राणीन्दुबिम्बानीवेत्युपमितसमासः, तिमिरमिवेत्यादिलिङ्गात् । अन्यत्र वक्त्राणीवेन्दुबिम्बानि तानि क्षामाणि सुरतप्रभाताभ्यां म्लानानि यासां ताः निद्रया स्वप्नेन मुकुलीभावेन क्लान्तानि नीलोत्पलानि अक्षीणीव नीलोत्पलानीवाऽक्षीणि यासां ताः स्रंसिनः केशपाशास्तिमिरमिवाऽन्यत्र तु तानिव तिमिरं दधानाः अत एव रजनय इव स्थिताः अमूर्वारवध्वो वेश्याः । 'वारस्त्री गणिका वेश्या' इत्यमरः । अवनिपतिगृहेभ्यो यान्ति निर्यान्ति । श्लिष्टविशेषणयमुपमेत्येके । श्लेष एवाऽयमुभयविषयः । उपमा तु प्रतिभामात्रसारेत्यन्ये ॥ २० ॥

**शिशिरकिरणकान्तं वासरान्तेऽभिसार्य श्वसनसुरभिगन्धिः साम्प्रतं सत्वरेव।**
**व्रजति रजनिरेषा तन्मयूखाङ्गरागैः परिमलितमनिन्द्यैरम्बराऽन्तं वहन्ती २१॥**

शिशिरेति ॥ हे कृष्ण ! एषा रजनिः क्षपा साम्प्रतमिदानीं सत्वरेव व्रजति शीघ्रमिव प्रयाति । त्वरायां कारणमाह—किं कृत्वा शिशिरकिरणकान्तं हिमकर एव कान्तो वल्लभः तं वासरान्ते दिनक्षयेऽभिसार्य अभिसृत्य, किंभूता रजनिः श्वसनसुरभिगन्धिः श्वसनेन वायुना सुरभिः रम्यः गन्धः परिमलो यस्याः सा । यदा हि वायुर्वहति तदा कुसुमप्रपातात् रात्रिः सुरभिर्भवति । पुनः किंभूता रजनिः, उत्प्रेक्ष्यते–अनिन्द्यैः श्लाघ्यैः तन्मयूखाङ्गरागैः तस्य चन्द्रमसः मयूखाः किरणाः एव अङ्गरागा विलेपनानि तैः अम्बरान्तं नभोऽन्तं परिमलितमिव वहन्ती, अत एव सत्वरेव । या किल अभिसारिका प्रदोषागमे कान्तमभिसरति, साऽभिसार्याऽङ्गरागेण परिमलितं सुरभीकृतमम्बराऽन्तं वहन्ती वस्त्रपल्लवं वहन्ती सत्वरा प्रातर्गृहं याति । श्वसनेन सुरभिर्गन्धो यस्याः सा तथा ॥ २१ ॥

शिशिरेति ॥ एषा रजनिर्वासरान्ते रात्रौ शिशिरकिरणश्चन्द्रस्तमेव कान्तमभिसार्याऽभिसृत्य । स्वार्थे णिच् । साम्प्रतं श्वसनैस्तत्कालवातैर्निश्वासैश्च सुरभिगन्धिः सुगन्धिः अनिन्द्यैर्मनोहरैर्मयूखैरेवाङ्गरागैः परिमलितं व्याप्तं वासितं चाऽम्बरान्तं नभःप्रान्तं वस्त्रान्तं च वहन्ती भजन्ती सत्वरेव व्रजति । अत्रेन्दुतन्मयूखादीनां कान्तत्वाङ्गरागत्वादिरूपणावगमादेकदेशविवर्ति रूपकम् ॥ २१ ॥

**नवकुमुदवनश्रीहासकेलिप्रसङ्गादधिकरुचिरशेषामप्युषां जागरित्वा ॥**
**अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः शिशयिषुरिव पाण्डुं म्लानमात्मानमिन्दुः॥**

नवेति ॥ हे कृष्ण ! अयमिन्दुः चन्द्रः अपरदिशोऽङ्के पश्चिमदिगुत्सङ्गे आत्मानं स्वस्वरूपं मुञ्चति क्षिपति । किंभूत इन्दुः स्रस्तहस्तः लम्बमानकिरणः, किंभूतमात्मानं पाण्डुं पाण्डुतरं, पुनःकिंभूतं म्लानं विच्छायं, किं कृत्वा मुञ्चति नवकुमुदवनश्रीहासकेलिप्रसङ्गात् अधिकरुचिः सन् अशेषामपि उषां जागरित्वा नवा सरसा याऽसौ कुमुदवनश्रीः कैरवखण्डसम्पत् तस्याः यो हासः विकासः स एव केलिः क्रीडा तस्याः प्रसङ्गोऽवसरः तस्मात् अधिकदीप्तिः सन् अशेषामपि समग्रामपि उषां रात्रिं जागरित्वा प्रबुध्य । किंभूतः इन्दुः, उत्प्रेक्ष्यते—शिशयिषुरिव सुषुप्सुरिव । यः किल नवया कामिन्या सह सस्मितकेलिप्रसङ्गात् वृद्धाभिलाषो निशां जागरयति, स प्रभाते नायकाऽङ्के करौ प्रसार्य पाण्डुं म्लानमात्मानं निदिद्रासुर्मुञ्चति । रुचिरभिलाषो दीप्तिश्च ॥ २२ ॥

नवेति ॥ अधिकरुचिरयमिन्दुर्नवकुमुदवनश्रियो विकासः परिहासश्च स एव केलिस्तस्यां प्रसङ्गादासङ्गादशेषामप्युषां सकलामपि रात्रिम् । 'विभावरी नक्तमुषा शर्वरी' इति विश्वः । अत्यन्तसंयोगे द्वितीया । जागरित्वा 'जागरणं कृत्वा शिशयिषुः शयितुमिच्छुरिव । शेतेः सन्नन्तादुप्रत्ययः। स्रस्तौ हस्तौ नक्षत्रविशेषः करश्च यस्य स सन् अपरदिशः पश्चिमदिशोऽङ्के समीपे उत्सङ्गे च पाण्डुं पाण्डुवर्णं म्लानं क्लान्तमात्मानं स्वशरीरं

मुञ्चति। दाक्षिणनायकः कयाचित्सह विहृत्य श्रान्तः कस्याश्चिदङ्के शेते तद्वदिति भावः । अत्र प्रहासकेलयङ्कुरस्त्रंसनादिव्यवहारादिन्दुकुमुदवनश्रीपश्चिमानां नायकत्वप्रतीतेः समासोक्तिरलङ्कारः । विशेषणसाम्यं तूपलक्षणमित्यलङ्कारसर्वस्वकारः। सा चोत्प्रेक्षासङ्कीर्णा ॥ २२ ॥

**सरभसपरिरम्भारम्भसंरम्भभाजो (१)यदधिनिशमपास्तं वल्लभेनाऽङ्गनायाः॥**
**वसनमपि निशान्ते नेष्यते तत्प्रदातुं रथचरणविशालश्रोणिलोलेक्षणेन ॥२३॥**

**सरभसेति** ॥ हे भगवन् ! वल्लभेन कान्तेन अङ्गनायाः कामिन्याः अधिनिशं निशायां यद्वसनं दुकूलम् अपास्तमपहृतं, तदपि निशान्तेऽपि क्षपाक्षयेऽपि प्रदातुं न इष्यते अर्पयितुं नाऽभिलष्यते । किंभूतेन वल्लभेन रथचरणविशालश्रोणिलोलेक्षणेन रथचक्रविपुलकटितटलम्पटनयनेन, किंभूतायाः अङ्गनायाः सरभसपरिरम्भारम्भसंरम्भभाजः सरभसं सहर्षं सवेगं वा यः परिरम्भः उपगूहनं तस्यारम्भः उपक्रमः तत्र संरम्भम् आग्रहमाकुलत्वं वा भजते आश्रयतीति भाक् तस्याः । आलिङ्गनपूर्वमुत्थीयते ॥ २३ ॥

सरभसेति ॥ अधिनिशं निशायाम् । विभक्त्यर्थेऽव्ययीभावः । सरभसः सत्वरः परिरम्भ एवारम्भो व्यापारस्तत्र संरम्भस्तद्भाजा वल्लभेनाऽङ्गनायाः सम्बन्धि यद्वसनमपास्तं तद्वसनं निशान्ते प्रभातेऽपि रथचरणं चक्रं तद्वद्विशालायां श्रोणौ लोलं सतृष्णमीक्षणं यस्य तेन वल्लभेन प्रदातुं नेष्यते । अत्र वसनाऽप्रतिदानस्य श्रोणीक्षणलौल्यहेतुकत्वात्काव्यलिङ्गम् ॥ २३ ॥

**सपदि कुमुदिनीभिर्मीलितं हा !क्षपाऽपि क्षयमगमदपेतास्तारकास्ताः समस्ताः॥**
**इति दयितकलत्रश्चिन्तयन्नङ्गमिन्दुर्वहति कृशमशेषं भ्रष्टशोभं शुचेव ॥ २४ ॥**

**सपदीति** ॥ हे कृष्ण ! साम्प्रतमिन्दुश्चन्द्रः अङ्गं शरीरम् अशेषं समग्रं भ्रष्टशोभं वहति गतकान्ति बिभर्ति । कया, उत्प्रेक्ष्यते—इति शुचेव इति शोकेनेव । किंभूतः इन्दुः दयितकलत्रः प्रियभार्यः, किं कुर्वन् इति चिन्तयन् प्रियभार्यत्वादित्थं चिन्तयन् । तामेव चिन्तामाह–कष्टमिदानीमेव कुमुदिनीभिः कैरविणीभिः मीलितं सङ्कुचितं विच्छायीभूतं, हा इति खेदे, क्षपाऽपि रात्रिरपि क्षयमगमत् नाशं प्राप । ताः समस्तास्तारकाः समग्रास्ताराः अपेता भ्रष्टाः । तस्य ह्येता नायिकाः, यदुच्यन्ते–कुमुदिनीप्रियो निशानाथः तारापतिश्च । यस्यापि गृहिण्यो नश्यन्ति सोऽवश्यमेव शोकेन कृशो विच्छायश्च भवति॥२४॥

सपदीति ॥ सपदि सद्यः कुमुदिनीभिर्मीलितम्। भावे क्तः । हा हन्त ! क्षपा रात्रिरपि क्षयमगमत् । ताः समस्तास्तारका अपेता इति शुचा शोकेन चिन्तयन् दयितकलत्रः प्रियभार्य इन्दुः कृशमशेषं निःशेषं यथा तथा भ्रष्टशोभं नष्टप्रभमङ्गं वहति । कलत्रप्रियस्य युगपत्सकलकलत्रनाशे महान् शोको भवतीति भावः । अत्रेन्दोः प्रभातप्रयुक्ताऽङ्गकार्श्यशोभाभ्रंशयोर्युगपत्कुमुदिन्यादिसकलकलत्रनाशनिमित्तहेतुकत्वमुत्प्रेक्ष्यते ॥ २४ ॥

**व्रजति विषयमक्ष्णामंशुमाली न यावत् तिमिरमखिलमस्तं तावदेवाऽरुणेन ॥**
**परपरिभवि तेजस्तन्वतामाशु कर्तुं प्रभवति हि विपक्षोच्छेदमग्रेसरोऽपि २५**

**व्रजति** ॥ यावत् अंशुमाली सूर्यः अक्ष्णां विषयं न व्रजति नेत्राणां गोचरं न याति, तावदेव अरुणेन अनूरुणा सारथिना अखिलं समग्रं तिमिरम् अस्तम् अन्धकारं क्षिप्तम् । युक्तं चैतत्, तेजस्तन्वतां तेजस्विनामग्रेसरोऽपि पुरोगोऽपि विपक्षोच्छेदं कर्तुं शत्रून्मूलनं विधातुं प्रभवति समर्थो भवति । किंभूतं तेजः परपरिभवि परान् अन्यान् परिभवति जयति तथा परच्छेदकरम् । भगवान् तिमिररिपूच्छित्तये तेजस्तनोति, अरुणोऽपि पुरस्सरश्च २५॥

---

(१) भाजा ।

व्रजतीति ॥ अंशुमाली सूर्यः । व्रीह्यादित्वादिनिप्रत्ययः । यावदक्ष्णां विषयं भूमिं न व्रजति । दृश्यत इत्यर्थः। तावदेवाऽरुणेनानूरुणाऽखिलं तिमिरमस्तमपास्तं परेषां परिभवि तिरस्कारकम्। 'जिघृक्षि' इत्यादिनाः इनिप्रत्ययः। तेजः प्रतापं तन्वता प्रथयतामग्रे सरतीत्यग्रेसरः पुरःसरोऽपि। 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टप्रत्ययः। विपक्षस्य शत्रोरुच्छेदं कर्तुमाशु प्रभवति शक्नोति हि। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥

**विगततिमिरपङ्कं पश्यति व्योम यावद्धुवति विरहखिन्नः पक्षती यावदेव ॥**
**रथचरणसमाह्वस्तावदौत्सुक्यनुन्ना सरिदपरतटान्तादागता चक्रवाकी २६**

विगतेति ॥ हे कृष्ण ! रथचरणसमाह्वः चक्रसमनामा चक्रवाकः यावत् व्योम आकाशं विगततिमिरपङ्कं पश्यति नष्टध्वान्तकर्दमं वीक्षते, यावदेव विरहखिन्नः वियोगविह्वलः सन् पक्षती धुवति वियोगोद्वेगात् पक्षमूले धूनयति, तावदेव सरिदपरतटान्तात् अपरस्मैकतान्तात् औत्सुक्यनुन्ना उत्कण्ठाप्रेरिता चक्रवाकी चक्रवाकदयिता आगता प्राप्ता तेन सह सङ्गता वा। दिने हि तयोः समागमः। 'स्त्री पक्षतिः पक्षमूले' इत्यमरः ॥ २६ ॥

विगतेति ॥ विरहेण खिन्नः रथचरणेन चक्रेण समाह्वस्तुल्याख्यः तस्यैव समाह्वा समाख्या यस्येति वा रथचरणसमाह्वः। चक्रवाक इत्यर्थः। 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' इत्यमरः। तिमिरं पङ्कमिवेत्युपमितसमासः। तद्विगतं यस्मात्तद्व्योम यावत्पश्यति, यावदेव पक्षती पक्षमूले। 'स्त्री पक्षतिः पक्षमूलम्' इत्यमरः। 'पक्षात्तिः' इति तिप्रत्ययः। धुवति उत्पातितुं धुनोति। 'धू विधूनने' इति धातोस्तौदादिकत्वादुवङादेशः। तावदेवोत्पतनात्प्रागेव चक्रवाकी चक्रवाकस्य स्त्री। 'जातेरस्त्रीविषयादयोपधात्' इति ङीप्। औत्सुक्येनोत्कण्ठया नुन्ना प्रेरिता सती सरितोऽपरतटान्तात्परभूमेः सकाशादागता। एतेनाऽनयोरुन्मनस्कता समश्चाऽनुराग इत्युक्तम्। अत्र रागौत्सुक्ययो रसभावयोस्तिर्यग्गतत्वेनाभासयोर्निबन्धनादूर्जस्वी नामाऽलङ्कारः। 'रसभावतदाभासप्रशमानां निबन्धने रसवत्प्रेयऊर्जस्विसमाहितानि' इति लक्षणात् ॥ २६ ॥

**मुदितयुवमनस्कास्तुल्यमेव प्रदोषे रुचमदधुरुभय्यः कल्पिता भूषिताश्च ॥**
**परिमलरुचिराभिर्न्यक्कृतास्तु प्रभाते युवतिभिरुपभोगान्नीरुचः पुष्पमालाः ॥**

मुदितेति ॥ हे कृष्ण ! प्रदोषे रात्रिमुखे उभय्यः पुष्पमालाः स्त्रियश्च स्रजो नार्यश्च सममेव तुल्यमेव रुचम् अदधुः कान्तिं बभ्रुः। उभय्योऽपि मुदितयुवमनस्काः प्रीणिततरुणचित्ताः, अपरं कल्पिता भूषिताश्च सुरताय चिन्तिताः उत्तम्भिता भूषिताः चन्दनादिनाऽलङ्कृताः। अतः प्रदोषे साम्यमभूत्। तु पुनः प्रभाते प्रत्यूषे युवतिभिः तरुणीभिः पुष्पमालाः कुसुमस्रजः न्यक्कृता धिक्कृताः त्यक्ताश्च। किंभूताभिर्युवतिभिः परिमलरुचिराभिः परिमलेन सुरतसंमर्देन रुचिरा मनोहराः ताभिः। उपभुक्ता हि नारी रम्यतरा भवति, पुष्पमालाः पुनःपुनरुपसंमर्दान्नीरुचो म्लानाः। उभावयवौ यासां ताः उभय्यः ॥ २७ ॥

मुदितेति ॥ प्रदोषे रात्रौ मुदितानि यूनां मनांसि याभिस्ताः मुदितयुवमनस्काः। उरःप्रभृतिभ्यः कप्। कल्पिता उपभोगाय सम्पादिताः भूषिता वलयवसनादिभिरुपस्कृताश्च उभय्यः उभयविधा युवतयः पुष्पमालाश्च। 'उभादुदात्तो नित्यम्' इति उभस्याऽयजादेशः, 'टिड्ढाऽणञ्–' इत्यादिना ङीप्। तुल्यमेवाऽवशेषं यथा तथा रुचं शोभामदधुर्धृतवत्यः। धात्रो लिट्। प्रभाते तूपभोगान्नीरुचो निष्प्रभाः पुष्पमालाः परिमलेन विमर्दगन्धेन रुचिराभिरुपभोगादधिसुराभिर्युवतिभिर्न्यक्कृतास्त्यक्ता अवधीरिताश्च। अत्र पुष्पमालाभ्यो युवतीनां साम्योक्तिपूर्वकविमर्दसहत्वेनाऽऽधिक्योक्तेर्व्यतिरेकः ॥ २७ ॥

**विलुलितकमलौघः कीर्णवल्लीवितानः प्रतिदिश(१)मवधूताशेषशाखिप्रसूनः ॥**
**क्वचिदयमनवस्थः स्थास्नुतामेति वायुर्मधु(२)कुसुमविमर्दोद्गन्धिवेश्मान्तरेषु॥**

(१) प्रतिवन। (२) ०र्वधु।

विलुलितेति ॥ हे भगवन् ! अयं वायुः पवनः क्वचिदनवस्थः क्वचिदवस्थायां सर्वत्रैवाऽस्थिरोऽपि मधुसुरभिविमर्दोद्गन्धिवेश्मान्तरेषु मधुकुसुमानां पानपुष्पाणां यो विमर्दः उपभोगः तेन उद्गन्ध उत्कटगन्धो विद्यते येषु तानि मधुकुसुमविमर्दोद्गन्धीनि एवंभूतानि च तानि वेश्मान्तराणि तेषु निशान्ताभ्यन्तरेषु स्थास्नुतामेति स्थिरत्वं भजति सर्वतो निवृत्य तत्रैव भ्रमति । किंभूतो वायुः विलुलितकमलौघः उपमृदितसरसिजखण्डः, पुनः किंभूतः कीर्णवल्लीवितानः विक्षिप्तलताजालकः, पुनः किंभूतः प्रतिदिशमवधूताशेषशाखिप्रसूनः प्रतिदिशं सर्वासु दिक्षु कम्पितनिखिलपादपपुष्पः । अतश्च सर्वकुसुमैः सुरभिर्भूत्वा परिमलसुरभिषु वासवेश्मसु सुचिरं कामिनां चाटुकारोऽभवदिति वाक्यार्थः ॥ २८ ॥

विलुलितेति ॥ वनेवने प्रतिवनम् । याथार्थ्येऽव्ययीभावः । विलुलिता व्यालोलिताः कमलौघा येन सः कीर्णा विक्षिप्ता वल्लीनां मालत्यादीनां वितानाः विस्ताराः येन सः अवधूतान्यशेषशाखिनां बकुलचम्पकादीनां प्रसूनानि येन सः तथापि क्वचित्पूर्वोक्तकमलवनादौ कुत्रापि नास्त्यवस्था स्थितिरस्येत्यनवस्थः स्थितिमप्राप्तोऽयं वायुर्वधूनां कुसुमानां च विमर्देन सङ्घर्षेणोद्गन्धिषूद्गतगन्धेषु । गन्धस्येत्वम् । वेश्मान्तरेषु गृहान्तरेषु स्थास्नुतां स्थायित्वमेति । पूर्वोक्तसर्वोत्कृष्टसौरभलोभादिति भावः । 'ग्लाजिस्थश्च—' इति ग्स्नुप्रत्ययः । वधुशब्दो ह्रस्वोकारान्तोऽप्यस्ति । यद्वा 'मधुकुसुम' इति पाठः । मधुयुक्तानि कुसुमानि तेषां विमर्देनेत्यर्थः । अत्र वायोरस्थायित्वेऽपि स्थायित्वसम्बन्धोक्तेरतिशयोक्तिः । तथा विमर्दगन्धस्य कमलादिगन्धादाधिक्यरूपव्यतिरेकप्रतीतेरलङ्कारेणाऽलङ्कारध्वनिः ॥ २८ ॥

**नखपदवलिनाभीसन्धिभागेषु लक्ष्यः क्षतिषु च दशनानामङ्गनायाः सशेषः ॥**
**अपि रहसि कृतानां वाग्विहीनोऽपि जातः सुरतविलसितानां वर्णको वर्णकोऽसौ ॥**

नखपदेति ॥ हे भगवन् ! असौ वर्णकः एष चन्दनादिक्षोदः सुरतविलसितानां निधुवनलीलानां वर्णको जातः कथकः सम्पन्नः । कदाचिदसौ सजिह्वो भविष्यति नेत्याह—किंभूतो वर्णकः वाग्विहीनोऽपि वाचा रहितोऽपि, पुनः किंभूतो नखपदवलिनाभीसन्धिभागेषु लक्ष्यः नखपदेषु नखक्षतेषु वलीषु त्रिवलौ च नाभौ च सन्धिभागेषु च लक्ष्यः दृश्यः तत्र न नष्टः, पुनः किंभूतः दशनानां क्षतिषु दन्तानां प्रहारेषु सशेषः दन्तव्रणेषु किञ्चिद्विद्यमानः अन्यत्र स्तनादौ उषित एव । अतश्च तेषु प्रदेशेषु स क्षितं दृष्ट्वा बुध्यते । महानत्र सुरतव्यापारोऽभूत्, यत् किल एकान्ते क्रियते तत्र कथं वक्ता भवेत् । तत्रापि वाग्विकलो वर्णकः, सन्धिभागाः पर्वस्थानानि ॥ २९ ॥

नखपदेति ।। नखपदेषु नखक्षतेषु वलिषु त्रिवलिषु नाभ्यां सन्धिभागेषु कूर्परादिदेहसन्धिस्थानेषु तथा दशनानां क्षतिषु दन्तव्रणेषु च सशेषः सावशेषः किञ्चिद्विद्यमानः अत एव लक्ष्यो दृश्योऽङ्गनायाः सम्बन्धी असौ वर्णयति वर्णं करोति रञ्जयतीति वर्णकोऽङ्गरागो वाग्विहीनो वागिन्द्रियरहितोऽपि सन् रहसि कृतानामपि सुरतविलसितानां सुरतचेष्टितानां वर्णयति वक्तीति वर्णको वक्ता । व्यञ्जक इत्यर्थः । वर्णयतेर्ण्वुल् प्रत्ययः । 'वर्णक्रियायां विस्तारे गुणोक्तौ वर्णनेऽप्यदः' इति भट्टमल्लः । जातः । नखक्षतादिष्वेव लक्ष्यमाणोऽङ्गरागोऽन्यत्र स्वाविलोपाच्चेष्टाविशेषाऽनुमापको जात इत्यर्थः । अत्र वाग्विहीनोऽपि रहस्यकृतानामपि वर्णको वक्तेति विरोधस्य व्यञ्जकत्वलक्षणया परिहाराद्विरोधाभासोऽलङ्कारः ॥ २९ ॥

**प्रकटमलिनलक्ष्मा भ्रष्टपत्राङ्गुलीकै(१)-**
**रधिगतरतशोभैः प्रत्युषः प्रोषितश्रीः ॥**

(१) मृष्टपत्रावलीकै…रतिशोभैः ।

उपहसित इवाऽसौ चन्द्रमाः कामिनीनां
परिणतशरकाण्डाऽऽपाण्डुभिर्गण्डभागैः ॥ ३० ॥

प्रकटेति ॥ हे भगवन् ! असौ चन्द्रमाः कामिनीनां गण्डभागैः तरुणीनां कपोलैः उपहसित इव विडम्बित इव । किंभूतश्चन्द्रः प्रकटमलिनलक्ष्मा निस्तेजस्त्वात् लक्ष्यमृगाङ्कः, किंभूतैः कपोलैः भ्रष्टपत्राङ्गुलीकैः उत्पुंसितपत्रलतैः, किंभूतश्चन्द्रमाः प्रत्युषः प्रत्यूषे प्रोषितश्रीः विनिवृत्तलक्ष्मीकः, पुनः किंभूतैः कपोलैः अधिगतरतशोभैः प्राप्तोपभोगकान्तिभिः, उपहासयुक्तः कथं जायते—पुनः किंभूतैः परिणतशरकाण्डापाण्डुभिः परिणता जरठा ये शरकाण्डाः शराः ते इव आपाण्डवः गौराः तैः । पाण्डुत्वमुपहासरूपम् ॥ ३० ॥

प्रकटेति ॥ उषसि प्रत्युषः । विभक्त्यर्थेऽव्ययीभावः । यद्वा प्रत्युषः प्रभातम् । 'उषःप्रत्युषसी अपि' इत्यमरः । तत्र प्रोषितश्रीर्भ्रष्टशोभः अत एव प्रकटमलिनलक्ष्मा स्पष्टदृष्टकलङ्कोऽसौ चन्द्रमाः मृष्टाः प्रमृष्टाः पत्रावल्यः पत्रभङ्गा येषां तैः । 'नद्यृतश्च' इति कप् । तथाप्यधिगता रतिशोभा सम्भोगश्रीर्येषां तैः परिणताः परिपक्काः शरकाण्डा बाणाख्यतृणकाण्डिकाः। 'शरो बाणे बालतृणे' इति शब्दार्णवे । तद्वदापाण्डुभिः कामिनीनां गण्डभागैर्गण्डस्थलैरुपहसित इवेत्युत्प्रेक्षा पाण्डिमगुणनिमित्ता । निष्कलङ्काः सकलङ्कं समानमानिनमुपहसन्तीति भावः ॥ ३० ॥

पञ्चभिः कुलकम्—

सकलमपि निकामं कामलोलाऽन्यनारीरत(१)रभसविमर्दे भिन्नवत्यङ्गरागम् ॥
इदमिति(२) महदेवाश्चर्यमाश्चर्यधाम्नस्तव खलु मुखरागो यन्न भेदं प्रयातः ॥३१॥
प्रकटतरमिमं मा द्राक्षुरन्या रमण्यः स्फुटमिति सविशङ्कं कान्तया तुल्यवर्णः॥
चरणतलसरोजाक्रान्तिसंक्रान्तयाऽसौ वपुषि नखविलेखो लाक्षया रञ्जितस्ते(३)॥
तदवितथमवादीर्यन्मम त्वं प्रियेति प्रियजनपरिभुक्तं यद्दुकूलं दधानः ॥
मदधिवसतिमागाः कामिनां मण्डनश्रीर्व्रजति हि सफलत्वं वल्लभालोकनेन ॥
नवनखपदमङ्गं गोपयस्यंशुकेन स्थगयसि मुहु(४)रोष्ठं पाणिना दन्तदष्टम् ॥
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्नवपरिमलगन्धः केन शक्यो वरीतुम् ३४
इति कृतवचनायाः कश्चिदभ्येत्य बिभ्यद्गलितनयनवारिर्याति पादाऽवनामम् ॥
करुणमपि समर्थं मानिनां मानभेदे रुदितमुदितमस्त्रं योषितां विग्रहेषु ॥३५॥

सकलमपीत्यादि ॥ इतीति ॥ हे कृष्ण ! कश्चित्कामी कस्याश्चित्कामिन्याः पादाऽवनामं याति चरणावनतिं प्राप्नोति । पादयोः पततीत्यर्थः । यतः किंभूतः बिभ्यत् सन् । भये कारणमाह—किंभूतायाः इतीत्थं विहितवचनायाः इति कृतवाच्यतायाः । इति कथमित्याह—सकलमिति ॥ क्व सति निकाममत्यर्थं कामलोलाऽन्यनारीरतरभसविमर्दे कामलोला सुरतचपला या अन्यनारी प्रतियुवतिः तस्याः रतरभसः औत्सुक्यं तेन यो विमर्दः सङ्क्षेपः तस्मिन् सकलमपि अशेषमपि अङ्गरागं चन्दनादि भिन्नवति उत्पुंसति सति । यत् तव आश्चर्यधाम्नः अद्भुतनिधानस्य मुखरागो वदनप्रसादः भेदं न प्रयातः विनाशं न प्रयातः, इति इदमेतत् महदाश्चर्यमत्यद्भुतम् । यदा हि सुरतसंमर्देन सर्व एव सुरतरागो नाश्यते तदा हि मुखरागस्यापि नाशो न्याय्यः, मुखस्याप्यङ्गत्वात् । यन्न नष्टः, तदाश्चर्यम् । अत एव

(१) रति⋯विमर्दैर्भिन्न⋯रागे । (२) इदमाति । (३) रञ्जितस्ते । (४) पुन० ।

त्वमाश्चर्यधामा । तत् सपत्नीभिः सह निशि रमित्वा(?) प्रातः मत्सकाशं हृष्ट आगतोऽत एवं-विधस्त्वम् । अथ वा भिन्नवत्यस्मीति भिन्नवती विमर्दकरी । केचित्तु—अन्यनारी अङ्गरागं भिन्नवतीत्याचक्षते । अङ्गं रज्यतेऽनेनेति अङ्गरागः कुङ्कुमादिः । **प्रकटतरमिति** ॥ हे कान्त ! तव वपुषि शरीरे असौ नखविलेखः करजक्षतं कान्तया सपत्न्या स्फुटं निश्चितम्, इति अतो हेतोः लाक्षया रञ्जितः जतुपा रक्तीकृतः । कुत इत्यत आह—यत्, इमं नखव्रणं प्रकटतरं स्फुटतममन्या रमण्यः इतरा अङ्गना मा द्राक्षुः मा पश्यन्तु । कथं सविशङ्कम् । सा ह्येवमाशङ्कते—यत्, एनं न पिदधे, तद् व्यसनिनीं मां सपत्न्यः सम्भावयन्ति । किंभूतो नखविलेखः तुल्यवर्णः समानकान्तिः, किंभूतया लाक्षया चरणतलसरोजाक्रान्तिसंक्रान्तया पादतलपद्मताडनालग्नया । सा हि रतिकलहे कुपिता सुरतविशेषकरणात् सालक्तकेन पादेन त्वाम् आहतवती । **तदिति** ॥ हे कान्त ! तत् त्वम् अवितथं सत्यम् इति अवादीः अभिहितवान् । इति किं—यत्, त्वं मम प्रिया ममेष्टेति । यत्त्वं प्रियजनपरिभुक्तं दुकूलं दधानः सन् यत् रमणीजननिवसितं पट्टकूलं वसानः सन् मदधिवसतिम् आगाः अस्मद्गृहं सम्प्राप्तः । अथ यदि प्रियावसितं दुकूलं प्रावृत्य त्वत्समीपमहमागतः, तत्किमित्येतावता त्वं मे प्रियेत्याह—यस्मात् कारणात् कामिनां विलासिनां मण्डनश्रीः सुवेषता शोभा वल्लभालोकनेन प्रियजनदर्शनेन सफलत्वं व्रजति साफल्यं प्राप्नोति । एतदेव आकल्पस्य साफल्यं, यत् प्रियो जनः पश्यतीति । यदि वा अहं ते रुचिता न स्याम्, तत किमिति नवं वासः आच्छाद्य त्वं मत्सन्निधिमागतोऽसि । तस्मान्निश्चितं तवाहं प्रियेति उल्लुण्ठनाः आगाः । **नवनखेति** ॥ नवनखपदमङ्गं सरसकरजक्षतं वपुः अंशुकेन वाससा गोपयसि, अपरं पाणिना करेण मुहुः पुनः दन्तदष्टमोष्ठं दशनखण्डितमधरं स्थगयसि आच्छादयसि । एतत्पुनः स्थगितं, नवपरिमलगन्धः सरसपरिमलसौगन्ध्यं केन वरीतुं गोपयितुं शक्यः । किंभूतः नवपरिमलगन्धः प्रतिदिशं सर्वस्यां दिशि विसर्पन् प्रसारी, पुनः किंभूतो गन्धः अपरस्त्रीसङ्गशंसी सपत्नीसङ्गसूचकः । पुष्पाद्युपभोगेन गन्धः परिमलः । वरीतुमिति प्रतिभिद्य(?) सा रुरोद । अत एव स बिभ्यत् सन् पादयोः पपात । ननु यदि सन्धित्सुः, तत्प्रकटमेव कथं न प्रार्थयसे, किं रोदनेनेत्याह—करुणमपीति । विग्रहेषु कलहेषु सत्सु योषितामङ्गनानां रुदितं रोदनम् अस्त्रं वशीकरणमुदितमुक्तम् । इत्यतोऽरुदत् । किंभूतं रुदितं करुणमपि दीनमपि मानिनां रुषितानां मानभेदे अभिमानवैरनिरासे समर्थं शक्तम् । पञ्चभिः कुलकम् ॥ ३१–३५ ॥

अथ काचित्खण्डिता नायिका सागसं प्रेयांसं प्रातरागतं पञ्चभिरुपालभते—

**सकलमपीति** ॥ कामेन लोलाया अन्यनार्याः सपत्न्या रतिरभसेषु सुरतसम्भ्रमेषु विमर्दैः पीडनैः । रज्यतेऽनेनेति रागः अङ्गस्य रागोऽङ्गरागः विलेपनम् अङ्गविकासश्च तस्मिन्नङ्गरागे सकलमपि निःशेषं यथा तथा निकामं भिन्नवति विश्लिष्टवति सति आश्चर्यधाम्नः सर्वाऽद्भुतनिधानस्य तव मुखरागो मुखविकासो भेदं विश्लेषं न प्रयात इति यत्, इदमेवाऽतिमहदाश्चर्यं खलु । मुखस्याऽप्यङ्गत्वेन तद्रागस्याऽप्यङ्गरागत्वादिति भावः । अत्र विलेपनविकासाख्ययोरङ्गरागयोरेकत्वाध्यवसायेन विरोधः, भेदाऽननुसन्धानत्वेनाऽविरोध इति श्लेषमूलातिशयोक्त्युत्थापितो विरोधाभासोऽलङ्कारः ॥ ३१ ॥

**प्रकटेति** ॥ किञ्च प्रकटतरमतिस्फुटम् इममेनं नखविलेखनम् अन्या रमण्यो निजसपत्न्यः स्फुटं मा द्राक्षुः न पश्यन्तु । दृशेर्लुङ् 'न दृशः' इति क्साऽभावपक्षे सिचि वृद्धिः । इति मुग्ध्या कान्तया सविशङ्कं

यथा तथा तुल्यवर्णो लाक्षासमानवर्णः। विवर्णस्य दुरपह्नवत्वादिति भावः। असौ ते तव वपुषि नखविलेखो नखव्रणश्चरणतलं सरोजमिवेत्युपमितसमासः। आक्रान्तिलिङ्गात्तस्य आक्रान्त्या आघातेन संक्रान्तया लाक्षया रक्षितो गुप्तः। आच्छादित इत्यर्थः। हन्त ! सा तु पापीयसी लाक्षा स्वयमेव सर्वदुर्वृत्तपिशुनेति भावः। अत्र नखविलेखस्य लाक्षासावर्ण्यात्तदेकतापत्तेः सामान्यालङ्कारः। 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् ॥ ३२ ॥

**तादीति** ॥ किञ्च मम त्वमेव प्रियेति यदवादीरवोचः। वदेर्लुङि 'वदव्रज-' इत्यादिना वृद्धिः। तदवितथं सत्यम्। कुतः-यद् यस्मात् प्रियजनेन परिभुक्तं दुकूलम्। तदीयमित्यर्थः। दधानः धारयन्नित्यर्थः। दधान-इत्यत्र 'वसान' इति पाठे वसान आच्छादयन्। वस आच्छादनार्थाल्लटः शानजादेशः। स त्वं मदधिवसतिं मम निवासमागाः प्राप्तः। इणो गा लुङि। युक्तं चैतदित्याह—कामिनां मण्डनश्रीर्वल्लभानां प्रेयसीनामालोकनेन सफलत्वं व्रजति हि। अप्रिया चेत्कथमीदृशी मे सम्भावनेति भावः। अर्थान्तरन्यासः ॥ ३३ ॥

**नवेति** ॥ किञ्च नवानि नखपदानि यस्मिंस्तदङ्गं वपुरंशुकेन गोपयसि छादयसि। गुपेश्चौरादिकात्स्वार्थे णिच्। दन्तेन दष्टमोष्ठं पुनरोष्ठं तु पाणिना स्थगयसि छादयसि। स्थगिरपि चौरादिकः। दिशिदिशि प्रतिदिशम्। विभक्त्यर्थेऽव्ययीभावः। 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तष्टच्प्रत्ययः। विसर्पन् प्रसर्पन् अपरस्त्रीसङ्गशंसी स्त्र्यन्तरसङ्गसूचकः। अन्यप्रभवत्वात्तस्येति भावः। नवः परिमलाख्यो गन्धः परिमलगन्धः। 'विमर्देऽर्थे परिमलः' इत्यमरः। केन केनोपायेन वरीतुमाच्छादयितुम्। 'वृतो वा' इतीटो दीर्घः। शक्यः। न केनापि शक्य इत्यर्थः। अत्र नखदन्तक्षतयोरङ्गौष्ठाच्छादने विसर्पणस्य गन्धाऽनाच्छाद्यत्वे च विशेषणगत्या हेतुत्वात्काव्यलिङ्गद्वये सजातीयसङ्करः ॥ ३४ ॥

**इतीति** ॥ इति पूर्वोक्तश्लोकचतुष्टयरीत्या कृतवचनायाः कृतोपालम्भायाः गलितनयनवारिः धैर्यान्मुक्ताऽश्रोः, प्रेयस्या इति शेषः। कश्चिन्नायको बिभ्यत् त्रस्यन्। 'नाभ्यस्ताच्छतुः' इति नुमभावः। अभ्येत्यागत्य पादयोरवनाममवनतिं याति। प्रणामेन प्रसादयतीत्यर्थः। ननु कथमीदृङ्मार्दवं तथाऽहङ्कारिणस्तस्य रोदनमात्रेण, तत्राह—करुणमिति। तथा हि—विग्रहेषु प्रणयकलहेषु योषितां करुणं दीनमपि रुदितमश्रुमोचनं मानिनामहङ्कारिणां पुंसां मानभेदेऽहङ्कारनिरासे समर्थं शक्तमस्त्रं साधनमुदितमुक्तम्। वदेः कर्मणि क्तः, 'वाचिस्वपि-' इत्यादिना सम्प्रसारणम्। दीने प्रणयिजने पुंसां कोऽहङ्कार इति भावः। अर्थान्तरन्यासः। एषा च खण्डिता नायिका।

> 'नीत्वाऽन्यत्र निशां प्रातरागते प्राणवल्लभे।
> अन्यासंभोगचिह्नैस्तु खण्डितेर्ष्याकषायिता' ॥

इति लक्षणात्। नायकस्तु धृष्टः। 'व्यक्ताङ्गो निर्भयो धृष्टः' इति लक्षणात्। न चेह बिभ्यद्विशेषणविरोधः, आगमनकालेऽनिर्भीकताया एव लक्षणोपयोगात्। अन्यथा वैरं स्यादिति भावः। अयं च सहृदयः। अन्यथा रसाभास इत्याहुः ॥ ३५ ॥

**मदमदनविकासस्पष्टधाष्ट्योदयानां रतिकलहविकीर्णैर्भूषणैरर्चितेषु ॥**
**विदधति न गृहेषूत्फुल्लपुष्पोपहारं विफलविनययत्नाः कामिनीनां वयस्याः ॥**

**मदेति** ॥ हे भगवन् कृष्ण ! वयस्याः सख्यः गृहेषु मन्दिरेषु उत्फुल्लपुष्पोपहारं विकचकुसुमप्रकरं न विदधति न कुर्वन्ति। किंभूतेषु गृहेषु यतः कामिनीनां विलासिनीनां भूषणैरलङ्करणैरर्चितेषु पूजितेषु, किंलक्षणैः भूषणैः रतिकलहविकीर्णैः सुरतसमरविक्षिप्तैः, किंलक्षणानां कामिनीनां मदमदनविकासस्पष्टधाष्ट्योदयानां मदमदनयोः दर्पकन्दर्पयोः विकासः प्रसरः उल्बणः तेन स्पष्टः प्रकटो धाष्ट्योदयो वैयात्याविर्भावो यासां ताः तासाम्, अत एव भूषणच्छेदः। किंलक्षणा वयस्याः विफलविनययत्नाः विफलो निरर्थको विनये आधारे विचये वा पुष्पावचये वा यत्नः उद्यमो यासां ताः। प्रभाते हि पुष्पप्रकरो विधीयते॥

**मदेति** ॥ मदमदनयोर्विकासेन विजृम्भणेन स्पष्टो धाष्ट्यस्योदय आविर्भावो यासां तासां कामिनीनां

रतिरेव कलहस्तास्मिन्विकीर्णैरितस्ततो विक्षिप्तैर्भूषणैरर्चितेषु गृहेषु वयस्याः स्निग्धपरिचारिकाः विनीयन्ते-ऽस्मिन्निति विनयोऽधिकारः तत्र यत्नो विफलो यासां ता विफलविनययत्नाः निष्फलस्वाधिकारोद्योगाः सत्यः उत्फुल्लैः पुष्पैरुपहारं पूजां न विदधाति न कुर्वन्ति। अत्र समृद्धवस्तुवर्णनादुदात्तालङ्कारः। 'तदुदात्तं भवेद्यत्र समृद्धं वस्तु वर्ण्यते' इति लक्षणात्। तेन तासां तेष्वाभरणेषु भुक्तवस्त्रमाल्यादिवान्निर्माल्यबुद्धिर्ध्वन्यते ॥३६॥

**करजदशनचिह्नं नैशमङ्केऽन्यनारीजनितमिति सरोषामीर्ष्यया शङ्कमानाम् ॥**
**स्मरसि न खलु दत्तं मत्तयैतत्त्वयैव स्त्रियमनुनयतीत्थं व्रीडमानां विलासी ॥**

करजेति ॥ हे भगवन्! कृष्ण! कश्चिद्विलासी कामी इत्थमनेन प्रकारेण स्त्रियं वल्लभाम् अनुनयति प्रत्याययति। किंलक्षणां स्त्रियं सरोषां कुपिताम्, अपरं किंलक्षणां स्त्रियं यतः ईर्ष्यया मत्सरेण इत्येवं शङ्कमानां सम्भावयन्तीम्। इति किं-कान्तस्य देहे अङ्के एतत् करजदशनचिह्नं नखरदन्तक्षतम् अन्यनारीजनितं सपत्नीकृतमिति। कादाचित्कमेतत्स्या-दित्याह, किंलक्षणं करजदशनचिह्नं नैशम् एतस्यामेव निशायां भवं नैशम्। कथमनुनयती-त्याह—हे प्रिये! एतन्न स्मरसि नेदं सम्भावयसि—यत्, मत्तया क्षीबया एतत् त्वयैव कृतं भवत्यैव विहितमिति। अत एव अपरं किंलक्षणां तां व्रीडमानां विलज्जमानाम्। खलु इति विस्मये ॥ ३७ ॥

करजेति ॥ विलसनशीलो विलासी। 'वौ कषलस-' इत्यादिना घिनुण्प्रत्ययः। अङ्के निजाङ्के निशायां भवं नैशम्। 'निशाप्रदोषाभ्यां च' इत्यण्प्रत्ययः। करजदशनचिह्नं नखदन्तक्षतमन्यनारीजनितं सपत्नीकृत-मिति शङ्कमानां विश्वसतीमत एवेर्ष्यया अक्षमया सरोषां स्त्रियं निजवधूं मत्तया मदमूढया त्वयैवैतद्दत्तमेवं कृतं खलु न स्मरसि नाभिजानासि किमिति काकुः। इत्थमनेन प्रकारेण व्रीडमानां स्वकृतत्वप्रत्यभिज्ञाना-ल्लज्जितां सतीमनुनयति अङ्गीकारयति। स्वमौग्ध्यव्याघातो निर्वेदश्च लज्जया व्यज्यते ॥ ३७ ॥

**कृतगुरुतरहारच्छेदमालिङ्ग्य पत्यौ परिशिथिलितगात्रे गन्तुमापृच्छमाने ॥**
**विगलितनवमुक्तास्थूलबाष्पाम्बुबिन्दु स्तनयुगमबलायास्तत्क्षणं रोदितीव ॥३८॥**

कृतेति ॥ हे भगवन्! कृष्ण! तत्क्षणं तस्मिन् प्रस्तावे अबलायाः कामिन्याः स्तनयुगं कुचयुग्मं रोदितीव रोदनं करोतीव। क्व सति प्रिये कान्ते आलिङ्ग्य आश्लिष्य गन्तुं प्रस्थातुम् आपृच्छमाने सति अनुज्ञां याचमाने सति, किंलक्षणं स्तनयुगं कृतगुरुतर-हारच्छेदं कृतो विहितः गुरुतरस्य अतिमहतः हारस्यैकावल्यादेः छेदः खण्डनं यत्र तत्, किं-लक्षणे पत्यौ आलिङ्ग्य परिशिथिलितगात्रे मुक्तवपुषि, अपरं किंलक्षणं स्तनयुगं विगलित-नवमुक्तास्थूलबाष्पाम्बुबिन्दु विगलिता भ्रष्टा नवाः प्रत्यग्राः मुक्ताः मौक्तिकानि ता एव स्थूला महान्तः बाष्पाम्बुबिन्दवोऽश्रुजलकणा यत्र तत्। आश्लेषपूर्वमामन्त्रणम् ॥ ३८ ॥

कृतेति ॥ कृतो गुरुतरस्य हारस्य छेदो यस्मिंस्तत्तथा आलिङ्ग्य परिशिथिलितगात्रे शिथिलीकृताङ्गे पत्यौ भर्तरि गन्तुमापृच्छमाने आमन्त्रयमाणे सति। आङि नुप्रच्छ्योरुपसंख्यानादात्मनेपदम्। कर्तरि लटः शानजादेशः। तत्क्षणं तस्मिन्क्षणे। अत्यन्तसंयोगे द्वितीया। अबलायाः स्तनयुगं कर्तृ, विगलिता निःसृता नवमुक्ता नूतनमौक्तिकान्येव स्थूलबाष्पाम्बुबिन्दवो यस्मिन्कर्मणि तत्तथा रोदितीव विरहा-ऽसहिष्णुतया रोदनं करोतीवेत्युत्प्रेक्षा रूपकसङ्कीर्णा। 'रुदादिभ्यः सार्वधातुके' इतीडागमः ॥ ३८ ॥

**बहु जगद पुरस्तात्तस्य मत्ता किलाऽहं**
**चकर च किल चाटु प्रौढयोषिद्वदस्य ॥**
**विदितमिति सखीभ्यो रात्रिवृत्तं विचिन्त्य**
**व्यपगतमदयाऽह्नि व्रीडितं मुग्धवध्वा ॥ ३९ ॥**

बहु जगदेति ॥ हे भगवन् ! कृष्ण ! कयाचित् मुग्धवध्वा नवोढया व्यपगतमदया गतमत्ततया सत्या रात्रिवृत्तं विचिन्त्य निशाचरितं विचार्य अह्नि दिवसे व्रीडितं ह्रीतम् । यदसौ क्षीबाऽभूत्, तत्कथं सस्मारेत्याह—किंलक्षणं रात्रिवृत्तम् इति पूर्वोक्तं सखीभ्यो वयस्याभ्यः सकाशाद्विदितं ज्ञातम् । तामेव चिन्तामाह—यतोऽहं तस्य कान्तस्य पुरस्तादग्रे मत्ता सती क्षीबा सती बहु जगद प्रभूतमवोचम्, अपरं किलेति श्रूयते, प्रौढयोषिद्वत् प्रगल्भवनितेव अस्य वल्लभस्य चाटु प्रियं चकर कृतवती । सखीभ्यः किं विदितं— हे सखि ! त्वयाऽद्य निशि मत्तया सत्या वल्लभे बहु रचितमिति ॥ ३९ ॥

बहु जगदेति ॥ अह्नि दिवसे व्यपगतमदया मुग्धवध्वा सखीभ्यो विदितम् । रात्रौ त्वयेत्थं कृतमिति सखीभिराख्यातमित्यर्थः । रात्रिवृत्तम् । रात्रौ कृतं स्वचेष्टितमित्यर्थः । मत्ता मदमूढा अहं तस्य प्रियस्य पुरस्तादग्रे बहु अनेकं जगद किल गदानि स्म । किलेति ऐतिह्ये । अत एव 'परोक्षे लिट्' 'णलुत्तमो वा' इति पक्षे णित्त्वाभावाद्वृद्ध्यभावः । च पुनः प्रौढयोषिता तुल्यं प्रौढयोषिद्वदित्युपमा । 'तेन तुल्यम्–' इति वतिप्रत्ययः । अस्य प्रियस्य चाटु प्रियवचनं चकर किल अकार्षं किल । लिडादि पूर्ववद्, गुणो विशेषः । इति विचिन्त्य विमृश्य व्रीडितं लज्जितम् । भावे क्तः । निजकार्यप्रकाशेन लज्जाऽत्र सञ्चारी भावः । भावनिबन्धनात्प्रेयोऽलङ्कारः ॥ ३९ ॥

**अरुणजलजराजीमुग्धहस्ताग्रपादा बहल(१)मधुपमालाकज्जलेन्दीवराक्षी ॥**
**अनुपतति विरावैः पत्रिणां व्याहरन्ती रजनिमचिरजाता पूर्वसन्ध्या सुतेव ॥**

अरुणेति ॥ हे कृष्ण ! एषा पूर्वसन्ध्या प्रातःसन्ध्या रजनिम् अनुपतति रात्रिमनुयाति अपयाति । रात्र्या सह क्षीयते स्म इत्यर्थः । किंभूता पूर्वसन्ध्या अरुणजलजराजीमुग्धहस्ताग्रपादा अरुणा लोहिता या जलजराज्यः पद्मावलयः ता एव मुग्धौ मनोज्ञौ हस्ताग्रे पादौ च कराग्रे चरणौ च यस्याः सा, अपरं किंभूता पूर्वसन्ध्या बहलमधुपमालाकज्जलेन्दीवराक्षी बहला दीर्घा या मधुपमाला भ्रमरपङ्क्तिः सैव कज्जलमञ्जनं येषु तानि बहलमधुपमालाकज्जलानि एवंभूतानि इन्दीवराण्येव कृष्णकमलान्येव अक्षिणी नयने यस्याः सा, अपरं किंभूता पूर्वसन्ध्या पत्रिणां विरावैः पक्षिणां शब्दैः व्याहरन्ती आभाषमाणा, अपरं किंभूता पूर्वसन्ध्या अचिरजाता तदैव उदिता, केव अचिरजाता सुतेव । यथा अचिरजाता बाला सुता दुहिता किल रक्तकरचरणा अञ्जनरञ्जितनेत्रा च 'मातः ! क्व यासि, मां गृहाणे'त्यादि व्याहरन्ती जननीमनुयाति ॥ ४० ॥

अरुणेति ॥ अरुणजलजराज्येव रक्तकमलश्रेण्येव मुग्धं सुन्दरं हस्ताग्रपादं हस्तौ च अग्रपादौ च यस्याः सा बहुलं मधुपमालाकज्जलं कज्जलमिव मधुपमाला ययोस्ते अक्षिणी इन्दीवरे इव यस्याः सा बहुलमधुपमालाकज्जलेन्दीवराक्षी पत्रिणां पक्षिणां विरावैर्व्याहरन्ती आलपन्ती । 'व्याहार उक्तिर्लपितम्' इत्यमरः । अचिरजाता सद्योभवा बाला च पूर्वसन्ध्या प्रातःसन्ध्या सुतेव पुत्रीव रजनिमनुपतत्यनुधावति । जननीमिवेत्यर्थः । इह विरावैर्व्याहरन्तीति व्यधिकरणपरिणामः, तत्सङ्कीर्णेयमुपमा ॥ ४० ॥

**प्रतिशरणमशीर्णज्योतिरग्न्याहितानां**
**विधिविहितविरिब्धैः सामिधेनीरधीत्य ॥**
**कृतगुरुदुरितौघध्वंसमध्वर्युवर्यै-**
**र्हुतमयमुपलीढे साधु सान्नाय्यमग्निः ॥ ४१ ॥**

---

(१) बहुल ।

**प्रतिशरणमिति** ॥ हे भगवन् ! कृष्ण ! अयमग्निर्हुताशनः सान्नाय्यं हविः उपलीढे आस्वादयति । किंभूतोऽग्निः अशीर्णज्योतिः समिद्धार्चिः, किंलक्षणं सान्नाय्यम् अग्न्याहितानामाहिताग्नीनां प्रतिशरणं शरणं प्रति शरणं प्रति होमशालायां होमशालायाम् अध्वर्युवर्यैः अध्वर्युषु वर्याः श्रेष्ठाः तैः वेदरवश्रुतैः(?) साधु विधिवत् हुतं दत्तं, किं कृत्वा सामिधेनीरधीत्य समिदाधानमन्त्रान् पठित्वा, किंलक्षणैरध्वर्युवर्यैः विधिविहितविरिब्धैः विधिना वेदोक्तप्रकारेण विहित उच्चारितो विरिब्ध उदात्तादिस्वरो यैस्ते तैः, किंभूतं हविः कृतगुरुदुरितौघध्वंसं विहितसञ्चितपापपूरक्षयम् । आहितः उत्पादितोऽग्निर्यैस्तेऽग्न्याहिताः । समिदाधानमन्त्रः सामिधेनी । 'शरणं गृहरक्षित्रोः', 'सान्नाय्यं हवि'रित्यमरः ॥ ४१ ॥

**प्रतिशरणमिति** ॥ अग्निराहितो यैस्तेषामग्न्याहितानाम् । 'वाऽऽहिताग्न्यादिषु' इति निष्ठायाः परनिपातः । प्रतिशरणं प्रतिगृहम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । अशीर्णज्योतिरक्षतार्चिरयमग्निराहवनीयः विधिना 'यज्ञकर्मण्यजपन्यूङ्खसामसु' इत्यादिशास्त्रोक्तरीत्या विहिता यथायोगमुच्चरिता विरिब्धाः स्वराः एकश्रुत्यादयश्चत्वारो यैस्तैः । 'क्षुब्धस्वान्त–' इत्यादिना 'रेभृ शब्दे' इति धातोः स्वरे विरिब्धशब्दो निष्ठान्तोऽनिट्त्वेन निपातितः । अध्वर्युवर्यैः ऋत्विक्श्रेष्ठैः । ऋत्विग्विशेषवाचिनाऽध्वर्युशब्देन ऋत्विङ्मात्रलक्षणात् । यद्वा अध्वर्युर्वर्यो मुख्यो येषां तैरध्वर्युप्रमुखैः चतुर्भिः ऋत्विग्भिरित्यर्थः । तस्माद्दर्शपौर्णमासयोर्यज्ञक्रत्वोश्चत्वार ऋत्विज इति श्रवणात् । दर्शश्चाऽयं सर्वत्रैव सान्नाय्यविधानादिति । सामिधेनीः 'प्रवोवाजा'-इत्यादिका अग्निसमिन्धनीः ऋचाऽधीत्य पठित्वा ।'ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने' इत्यमरः । सामिधेनीग्रहणं याज्यापुरोऽनुवाक्यादिमन्त्रान्तराणामप्युपलक्षणम् । कृतो गुरुतरदुरितानामोघस्य ध्वंसो यस्मिन्कर्मणि तद्यथा तथा साधु सम्यग् हुतं देवतोद्देशेन त्यक्तं, सन्नीयत इति सान्नाय्यं हविर्विशेषम् । 'ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्याया'मिति विहिते दधिपयसी इत्यर्थः । 'पाय्यसान्नाय्यनिकाय्य–' इत्यादिना हविर्विशेषे संपूर्वान्नयतेर्ण्यन्तादायादेशोपसर्गदीर्घनिपातः । उपलीढे आस्वादयति । 'लिह आस्वादने' इति धातोः स्वरितेत्त्वाल्लटि ताङि टेरेत्वे ढत्वधत्वष्टुत्वढलोपदीर्घाः । अत्राग्नेः सान्नाय्योपलेहनस्योत्तरकालभावित्वेऽपि तदुपलक्षितस्य कर्मणः 'उदिते आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमति प्रागुदयादमावास्याया' इति शास्त्रात् तत्कालप्रक्रान्तस्य वर्तमानत्वात्तस्यापि वर्तमानताव्यपदेशः । एतच्चाहिताग्नित्वमात्रेण कालविशेषाऽनादरेणोक्तमिति पूर्वोक्तचन्द्रोदयाद्यविरोधः । अथ वा उदिते जुहोत्यनुदिते जुहोति प्रातर्जुहोत्यग्निहोत्रम् । तत्कालत्वात्सामिधेनीसान्नाय्यशब्दयोर्मन्त्रहविर्मात्रपरत्वमाश्रित्याग्निहोत्रपरत्वेन व्याख्येयम् । तस्मादग्निहोत्रस्य यज्ञक्रत्वोः एकऋत्विगित्येकाध्वर्युकत्वेऽध्वर्युवर्यैरिति बहुवचनं यजमानबहुत्वादुपपद्यत इत्याहुः । इत्यलं छान्दसगोष्ठीव्यसनेन । वृत्त्यनुप्रासोऽलङ्कारः स्पष्ट एव ॥ ४१ ॥

**प्रकृतजपविधीनामास्यमुद्रश्मिदन्तं मुहुरुपहित(१)मोष्ठ्यैरक्षरैर्लक्ष्यमन्यैः ॥**
**अनुकृतिमनुवेलं घट्टितोद्घट्टितस्य व्रजति नियमभाजां मुग्धमुक्तापुटस्य ४२**

**प्रकृतेति** ॥ हे कृष्ण! नियमभाजां संयमिनां मुनीनाम् आस्यं वदनं मुग्धमुक्तापुटस्य नवमौक्तिकशिप्रापुटस्य अनुकृतिं सादृश्यं व्रजति प्राप्नोति । किंभूतस्य मुग्धमुक्तापुटस्य अनुवेलं वेलायां वेलायां घट्टितोद्घट्टितस्य सङ्कुचितविकसितस्य, किंभूतानां मुनीनां प्रकृतजपविधीनां प्रारब्धजपविधानानां, किंलक्षणमास्यम् । उद्रश्मिदन्तमुत्कृष्टद्युतिदशनम्, अपरं किंलक्षणमास्यम् ओष्ठ्यैरक्षरैः उवर्गपवर्गादिभिर्वर्णैः उपहितम्, अन्यैरक्षरैः लृवर्णतवर्गादिभिः दन्त्यैरक्षरैः लक्ष्यं दृश्यम् । दन्तानां मुक्ता उपमानम्, अध्ययनवशात् सङ्कुचितविकसितौष्ठपुटस्य शिप्रा उपमानम् ॥ ४२ ॥

---

(१) ०रपिहित ।

**प्रकृतेति** ।। प्रकृतजपविधीनां प्रक्रान्तजपकर्मणां नियमभाजां तपस्विनां सम्बन्धे ओष्ठे भवैरोष्ठ्यैः । 'शरीरावयवाच्च' इति यत्प्रत्ययः। अक्षरैर्वर्णैः । उपूपध्मानी यैरित्यर्थः । 'उपूपध्मानीयानामोष्ठौ' इत्यनुशासनात् । मुहुरापिहितमावृतमन्यैरनोष्ठ्यैरक्षरैर्लक्ष्यं दर्शनीयम् अत एवोद्रश्मय उद्गतांशवो दन्ता यस्य तदास्यं मुखमनुवेलं प्रतिक्षणं घट्टितोद्घाट्टितस्य प्राणित्वान्मुहुर्घटितविघाटितस्य । विशेषणसमासः । मुग्धं सुन्दरं यन्मुक्तानां मुक्ताफलानां पुटं कोटिः । शुक्तिरिति यावत् । तस्याऽनुकृतिं साम्यं व्रजति । उपमालङ्कारः । एतेन श्लोकद्वयेन बहवः कर्मनिष्ठास्तपोनिष्ठाश्च ब्राह्मणा भगवन्तमनुयान्तीति कथितम् ॥ ४२ ॥

**नवकनकपिशङ्गं वासराणां विधातुः**
**ककुभि कुलिशपाणेर्भाति भासां वितानम् ॥**
**जनितभुवनदाहारम्भमम्भांसि दग्ध्वा**
**ज्वलितमिव महाब्धेरूर्ध्वमौर्वाऽनलार्चिः ॥ ४३ ॥**

**तवेति** ॥ हे भगवन् ! कृष्ण ! कुलिशपाणेर्वज्रधरस्य देवेन्द्रस्य ककुभि पूर्वस्यां दिशि वासराणां दिवसानां विधातुः कर्तुः श्रीसूर्यस्य भासां वितानं दीप्तीनां पटलं भाति शोभते । किंभूतं दीप्तिपटलं नवकनकपिशङ्गं दाहोत्तीर्णसुवर्णपिञ्जरम् । अपरं किंभूतं वितानम्, उत्प्रेक्ष्यते—महाब्धेः समुद्रस्य अम्भांसि दग्ध्वा जलानि भस्मीकृत्य ऊर्ध्वं चलितमूर्ध्वं प्रसृतम् औौर्वानलार्चिरिव वडवाऽनलज्वालेव । किंलक्षणमौर्वानलार्चिः जनितभुवनदाहाऽऽरम्भं भुवनदहनाय कृताऽऽरम्भम् ॥ ४३ ॥

**नवेति** ॥ कुलिशं पाणौ यस्य सः कुलिशपाणिरिन्द्रः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति पाणेः परनिपातः । एतदेवात्र व्यधिकरणबहुव्रीहेश्च ज्ञापकम् । तस्य ककुभि प्राच्यां दिशि नवकनकवत्पिशङ्गं वासराणां विधातुर्दिनकरस्य भासां वितानं करजालं महाऽब्धेरम्भांसि दग्ध्वा जनितभुवनदाहारम्भं कृतजगद्दाहोद्योगं सत् ऊर्ध्वमब्धेरुपरि ज्वलितमौर्वाऽनलार्चिर्वडवाऽनलज्योतिरिव भातीत्युत्प्रेक्षा ॥ ४३ ॥

**विततपृथुवरत्रातुल्यरूपैर्मयूखैः कलश इव गरीयान् दिग्भिराकृष्यमाणः ॥**
**कृतचटुल(१)विहङ्गालापकोलाहलाभिर्जलनिधिजलमध्यादेष उत्तार्यतेऽर्कः॥४४**

**विततेति** ॥ हे भगवन् ! एषः अर्कः श्रीसूर्यः दिग्भिराशाभिः जलनिधिजलमध्यात् अम्भोनिधिपानीयाऽऽन्तरालात् उत्तार्यते बाह्यं नीयते । किंलक्षणाभिर्दिग्भिः कृतचटुलविहङ्गाऽऽलापकोलाहलाभिः कृता निष्पादिताः चटुलविहङ्गालापा एव चपलविहङ्गमभाषणान्येव कोलाहलः कलकलशब्दो याभिस्ताः तथा ताभिः, किंभूतः अर्कः मयूखैः किरणैः आकृष्यमाण उर्ध्वं नीयमानः, किंभूतैः मयूखैः विततपृथुवरत्रातुल्यरूपैः विस्तृतविशालरज्जुसदृशरूपैः, क इव गरीयान् कलश इव गुरुतरो घट इव । यथा स्त्रीभिः पृथुरज्जुभिः कृत्वा कोलाहलं शब्दमानाभिः जलमध्यात् कूपादिमध्यादुत्तार्यते ॥ ४४ ॥

**विततेति** ॥ विततामिः प्रसारिताभिः पृथुवरत्राभिर्महारज्जुभिस्तुल्यरूपैस्तुल्याकारैर्मयूखैः किरणैर्गरीयान् कलश इवाकृष्यमाणः सन्नेषोऽर्कः कृतश्चपलः सत्वरो विहङ्गालाप एव कोलाहलः कलकलो याभिस्ताभिः दिग्भिर्जलनिधेः जलमध्यादुत्तार्यते उद्ध्रियते । तरतेर्ण्यन्तात्कर्मणि लट् । यथा कुतश्चित्कूपात्कुम्भः पाशैराकृष्य सकलकलं बहुभिः स्त्रीभिरुद्ध्रियते तद्वदिति भावः । अत्र वरत्रातुल्यरूपैः कलश इवेति चोपमाभ्यां विहङ्गालापकोलाहलेति रूपकेण चोज्जीविताऽर्कस्य दिक्कर्तृकोत्तारणोत्प्रेक्षा व्यञ्जकाप्रयोगात्प्रतीयमानेति सङ्करः

**पयसि सलिलराशेर्नक्तमन्तानमग्नः स्फुटमनिशमतापि ज्वालया वाडवाग्नेः॥**
**यदयमिदमिदानीमङ्गमुद्यन् दधाति ज्वलितखदिरकाष्ठाऽङ्गारगौरं विवस्वान्॥**

---

(१) चपल ।

**पयसीति** ॥ हे भगवन्! कृष्ण! अयं विवस्वान् श्रीसूर्यः यत् इदानीमधुना उद्यन् उदयं प्राप्नुवन् सन् इदमङ्गं ज्वलितखदिरकाष्ठाङ्गारगौरं दधाति दीप्तखदिराङ्गारवत् गौरं रक्तं वपुर्बिभर्ति। स्फुटमुत्प्रेक्षायां, नक्तं रात्रौ सलिलराशेः समुद्रस्य पयसि उदके अन्तर्निमग्नः सन् मध्ये ब्रुडितः सन् अनिशं निरन्तरमेव वाडवाग्नेः और्वानलस्य ज्वालया अतापि इव कीलया सन्तापित इव। अत एव लोहितमङ्गं दधातीत्यर्थः ॥ ४५ ॥

**पयसीति** ॥ अयं च विवस्वान् नक्तं सलिलराशेः पयसि निमग्नोऽन्तर्वाडवाग्नेर्ज्वालयाऽनिशमतापि ततः स्फुटमित्युत्प्रेक्षा। कुतः—यदिदानीमुद्यन् इदं ज्वलितः प्रज्वलन् यः खादिरकाष्ठस्याऽङ्गारस्तद्वद्गौरमरुणमङ्गं दधाति। 'गौरोऽरुणे सिते पीते' इति विश्वः ॥ ४५ ॥

**अतुहिनरुचिनाऽसौ केवलं नोदयाद्रिः क्षणमुपरिगतेन क्ष्माभृतः सर्व एव ॥**
**नवकरनिकरेण स्पष्टबन्धूकसूनस्तबकरचितमेते शेखरं बिभ्रतीव ॥ ४६ ॥**

**अतुहिनेति** ॥ हे भगवन्! कृष्ण! अतुहिनरुचिना श्रीसूर्येण क्षणं मुहूर्तमुपरिगतेन उपरि वर्तमानेन सता न केवलम् असौ उदयाद्रिः उदयाचलः, एते सर्वे क्ष्माभृतः पर्वताः शेखरं बिभ्रतीव मुकुटं धारयन्तीव। किंभूतेन अतुहिनरुचिना नवकरनिकरेण नूतनद्युतिपुञ्जेन, किंभूतं शेखरं स्पष्टबन्धूकसूनस्तबकरचितं विकसितबन्धुजीवकुसुमगुच्छैर्निष्पादितम्। लौहित्यात् शेखरतुल्येनेत्यर्थः ॥ ४६ ॥

**अतुहिनेति** ॥ क्षणमुपरिगतेन स्थितेनाऽतुहिनरुचिनाऽर्केण केवलमसावुदयाद्रिः पूर्वाद्रिर्न। 'उदयः पूर्वपर्वतः' इत्यमरः। किन्त्वेते सर्व एव क्ष्माभृतः सर्वेऽपि शैलाः क्षणमुपरिगतेनाऽवस्थितेन नवकरनिकरेण स्पष्टैर्विकसितैर्बन्धूकसूनस्तबकैर्बन्धुजीवककुसुमगुच्छैर्विरचितम्। 'बन्धूको बन्धुजीवकः' इत्यमरः। शेखरं शिखामाल्यम्। 'शिखास्वापीडशेखरौ' इत्यमरः। बिभ्रतीवेत्युत्प्रेक्षा। न केवलमर्केणोदयाद्रिरेव बन्धूकशेखरं बिभर्ति, किन्तु तत्करजालेन सर्वेऽपि पर्वतास्तथेत्यर्थः ॥ ४६ ॥

**उदयशिखरिशृङ्गप्राङ्गणेष्वेष रिङ्खन्(१)सकमलमुखहासं वीक्षितः पद्मिनीभिः**
**विततमृदुकराग्रः शब्दयन्त्या वयोभिः परिपतति दिवोऽङ्के हेलया बालसूर्यः॥**

**उदयेति** ॥ हे कृष्ण! एष बालसूर्यः तरुणादित्यः हेलया लीलया दिवोऽङ्के परिपतति द्यौरेव माता तस्या उत्सङ्गे परिपतति। किंलक्षणाया दिवः वयोभिः शब्दयन्त्याः पक्षिभिरारवं कुर्वत्याः, किंभूतः बालसूर्यः प्रसृतमृदुकराग्रः प्रसारितकोमलकराग्रः, किं कुर्वन् उदयशिखरिशृङ्गप्राङ्गणेषु रिङ्खन् उदयाचलशिखराऽजिरेषु प्रचलन्, अपरं किंभूतो बालसूर्यः पद्मिनीभिः कमलिनीभिः सकमलमुखहासं यथा भवति तथा वीक्षितः कमलरूपमुखानां हासेन विकासेन सह यथा भवति तथा। यथा कश्चिद्बालः अर्भकः प्राङ्गणेषु रिङ्खन् पद्मिनीभिः स्त्रीभिः सहासमुखं वीक्षितः सन् मातुरङ्के परिपतति ॥ ४७ ॥

**उदयेति** ॥ एष बाल उदितमात्रः बालश्चासौ सूर्यश्च बालसूर्यः उदयशिखरिशृङ्गस्योदयाद्रिशिखरस्य प्राङ्गणेषु रिङ्खन् सञ्चरन् पद्मिनीभिर्नलिनीभिः स्त्रीविशेषैश्च। 'पद्मिनी स्त्रीविशेषेऽपि' इति विश्वः। कमलान्येव मुखानि तेषां हासेन विकासेन हास्येन च सह यस्मिन्कर्मणि तद्यथा तथा वीक्षितः सन्। वयोभिः पक्षिभिः 'वयः पक्षिणि बाल्यादौ' इति विश्वः। शब्दयन्त्याः शब्दं कुर्वत्याः, आगच्छागच्छ वत्सेति व्याहरन्त्या इत्यर्थः। शब्दशब्दात् 'तत्करोति—' इति ण्यन्ताल्लटः शतरि ङीप्। दिवोऽन्तरिक्षस्य मातुश्चाऽङ्के समीपे उत्सङ्गे च विततानि प्रसृतानि मृदूनि कराऽग्राणि किरणाऽग्राणि हस्ताग्रे च यस्य स सन् हेलया लीलया परिपतति। श्लेषमूलातिशयोक्त्यनुगृहीतरूपकम् ॥ ४७ ॥

---

(१) रिङ्गन्।

**क्षणमयमुपविष्टः क्ष्मातलन्यस्तपादः प्रणतिपरमवेक्ष्य प्रीतमह्नाय लोकम् ॥**
**भुवनतलमशेषं प्रत्यवेक्षिष्यमाणः क्षितिधरतटपीठादुत्थितः सप्तसप्तिः ॥४८॥**

क्षणमिति ॥ हे कृष्ण ! अयं सप्तसप्तिः श्रीसूर्यः क्षितिधरतटपीठात् उदयाचलतटासनात् उत्थितः उत्तस्थौ । किंभूतः सप्तसप्तिः क्षणं क्षणमात्रमुपविष्टः स्थितः, अपरं किंभूतः सप्तसप्तिः क्ष्मातलन्यस्तपादः पृथ्वीतलनिहितचरणः, किं करिष्यमाणः सप्तसप्तिः अशेषं समग्रं भुवनतलं विष्टपतलं प्रत्यवेक्षिष्यमाणः विलोकयिष्यन्, किं कृत्वा उत्तस्थौ लोकं प्रणतिपरमवेक्ष्य जनं नमस्कारतत्परमालोक्य, किंलक्षणं लोकम् अह्नाय शीघ्रमेव प्रीतं मुदितम् । यथा कश्चित् सार्वभौमो राजा प्रणतिपरं लोकं दृष्ट्वा अखिलं भुवनतलं विलोकयिष्यन् पीठादुत्तिष्ठति । सोऽपि भूतलाऽऽरोपितचरणः ॥ ४८ ॥

क्षणमिति ॥ अयं सप्तसप्तिरर्कः क्षणमुपविष्टः क्षितिधरपीठमध्यासीनः क्ष्मातलन्यस्तपादः । प्रणामस्वीकाराय भूतलप्रसारिताऽङ्घ्रिरित्यर्थः । प्रणतिपरं नमस्कारं कुर्वाणं प्रीतं प्रणामस्वीकारात्सन्तुष्टं लोकं जनमह्नाय झटित्यवेक्ष्य । 'झटित्यञ्जसाऽह्नाय' इत्यमरः । रूपावलोकेन सम्भाव्याऽशेषं भुवनतलं लोकस्वरूपं प्रत्यवेक्षिष्यमाणोऽनुसन्धास्यमानः क्षितिधरस्य तटं पीठमिव सिंहासनमिव अन्यत्र तटमिव पीठं तस्मादुत्थितः । उदयाद्रिमतिक्रान्त इत्यर्थः । यथा कश्चिन्महाराजः सिंहासनोपविष्टः क्षणं प्रणतजनमादृत्य अथ सकलस्वराष्ट्रप्रत्यवेक्षणाय सहसोत्थाय गच्छति तद्वदित्यर्थः । अत्र प्रकृताऽर्कविशेषणवैभवादप्रकृतमहाराजप्रतीतेः समासोक्तिः ॥ ४८ ॥

**परिणतमदिराभं भास्करेणांशुबाणैस्तिमिरकरिघटायाः सर्वदिक्षु क्षतायाः ॥**
**रुधिरमिव वहन्त्यो भान्ति बालातपेन च्छुरितमुभयरोधोवारितं वारि नद्यः ॥**

परिणतेति ॥ हे कृष्ण ! नद्यः सरितः भान्ति शोभन्ते । किं कुर्वत्यः वारि जलं वहन्त्यः धारयन्त्यः, किंभूतं वारि बालातपेन छुरितं तरुणार्कतेजसा भिन्नम्, अपरं किंभूतं वारि उभयरोधोवारितं तटद्वयस्खलितम्, अपरं किंभूतं वारि परिणतमदिराभं षाण्मासिकमद्यतुल्यम् । अपरं किंभूतं वारि, उत्प्रेक्ष्यते—तिमिरकरिघटायाः रुधिरमिव अन्धकारगजघटायाः असृगिव । किंभूतायाः तिमिरघटायाः सर्वदिक्षु समन्तात् भास्करेण सूर्येण अंशुबाणैः किरणमार्गणैः क्षतायाः ताडितायाः ॥ ४९ ॥

परिणतेति ॥ नद्यः बालातपेन छुरितं रूषितम् अत एव परिणतमदिराभं सुपक्वसुरासंनिभमुभाभ्यां रोधोभ्यां वारितमवरुद्धमुभयरोधोवारितम् । 'उभादुदात्तो नित्यम्' इत्यत्र नित्यग्रहणसामर्थ्याद्वृत्तिविषये उभशब्दस्थाने उभयशब्दप्रयोग इत्युक्तं प्राक् । वारि जलं भास्करेण । कस्कादित्वात्सत्वम् । अंशुभिरेव बाणैः सर्वदिक्षु क्षतायाः प्रहृतायास्तिमिरमेव करिघटा गजसङ्घस्तस्या रुधिरमिवेत्युत्प्रेक्षा । वहन्त्यो भान्ति ॥४९॥

**दधति परिपतन्त्यो जालवातायनेभ्यस्तरुणतपनभासो मन्दिराभ्यन्तरेषु ॥**
**प्रणयिषु वनितानां प्रातरिच्छत्सु गन्तुं कुपितमदनमुक्तोत्तप्तनाराचलीलाम् ॥**

दधतीति ॥ हे कृष्ण! तरुणतपनभासः बालसूर्यद्युतयः वनितानां स्त्रीणां प्रणयिषु भर्तृषु कुपितमदनमुक्तोत्तप्तनाराचलीलां दधति सक्रोधकन्दर्पप्रेरितोत्तप्तलोहबाणशोभां धारयन्ति । किंलक्षणेषु प्रणयिषु प्रातः प्रभाते गन्तुमिच्छत्सु वाञ्छमानेषु(?), किंभूताः तरुणतपनभासः जालवातायनेभ्यः गवाक्षमार्गेभ्यः मन्दिराभ्यन्तरेषु गृहमध्येषु परिपतन्त्यः । एतावता ताभिः सह वियोगभावात् बालतपनकिरणास्तेषां सन्तप्तनाराचवत् पीडां कुर्वन्तीत्यर्थः ५०

दधतीति ॥ जालवातायनेभ्यो गवाक्षविवरेभ्यः मन्दिराणामभ्यन्तरेषु परिपतन्त्यस्तरुणतपनभासो

बालार्ककिरणा वनितानां प्रणयिषु प्रातर्गन्तुमिच्छत्सु कुपितेन मदनेन मुक्तानामुत्तप्तानामग्निज्वलिततेजसां नाराचानां बाणविशेषाणां लीलां शोभां दधाति । अत्र लीलेव लीलेति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धान्निदर्शना ॥

**अधिरजनि वधूभिः पीतमैरेयरिक्तं कनकचषकमेतद्रोचनालोहितेन ॥**
**उदयदहिमरोचिर्ज्योतिषाक्रान्तमन्तर्मधुन इव तथैवापूर्णमद्यापि भाति ॥५१॥**

**अधिरजनीति** ॥ हे भगवन् ! एतत् मधुनः मद्यस्य कनकचषकं स्वर्णमयं पानपात्रम् अद्यापि तथैव आपूर्णमिव भाति भृतमिव शोभते । किंभूतं चषकम् अधिरजनि रजन्यां वधूभिः स्त्रीभिः पीतमैरेयरिक्तं निपीतमद्यशून्यं, तर्हि कथं पूर्णमिव भाति, अपरं किंभूतं चषकम् अन्तर्मध्ये उदयदहिमरोचिर्ज्योतिषाऽऽक्रान्तम् उदयंश्चाऽसौ अहिमरोचिः श्रीसूर्यः तस्य ज्योतिस्तेजः तेन श्रितम् उद्यन्मणितेजसाऽऽश्रितं, किलेति ज्ञायते । रक्तत्वादद्यापि मद्यभृतमिव भातीत्यर्थः । किंभूतेन रोचिषा रोचनालोहितेन गोरोचनावत् आरक्तेन॥५१॥

**अधिरजनीति** ॥ अधिरजनि रजन्याम् । विभक्त्यर्थेऽव्ययीभावः । वधूभिः पीतं मैरेयं मद्यं यस्य तत् अत एव रिक्तं पीतमैरेयरिक्तं एतत्कनकचषकं स्वर्णस्य पानपात्रम् । अवयवषष्ठ्या विकारार्थता । 'चषकोऽस्त्री पानपात्रम्' इत्यमरः । रोचनालोहितेन गोरोचनारुणेनोदयत उदीयमानस्याऽहिमरोचिषोऽर्कस्य ज्योतिषा तेजसा अन्तरभ्यन्तरे आक्रान्तं व्याप्तं सत् अद्यापीदानीमपि तथैव पूर्ववदेव मधुन आपूर्णमिव । सामान्यषष्ठ्या योग्यविशेषपर्यवसाननियमात् 'षष्ठी शेषे' इति सम्बन्धसामान्ये षष्ठी, करणस्यापि कारणत्वादिति । भाति शोभते । अत्राऽऽतपाक्रान्ते मधुपूर्णत्वोत्प्रेक्षया आतपे मधुभ्रमाद् भ्रान्तिमान व्यज्यते ॥५१॥

**सितरुचि शयनीये नक्तमेकान्तमुक्तं दिनकरकरसङ्गाव्यङ्ग(१)कौसुम्भकान्ति॥**
**निजमिति रतिबन्धोर्जानतीमुत्तरीयं परिहसति सखी स्त्रीमाददानां दिनादौ॥**

**सितरुचीति** ॥ हे कृष्ण ! काचित् सखी प्रत्यूषे दिनादौ स्त्रीम् अङ्गनां नायिकां परिहसति क्ष्वेलीं करोति । किंभूतां स्त्रीं रतबन्धोः सुरतमित्रस्य कान्तस्य उत्तरीयं वस्त्रम् आददानां प्रगृह्णतीम्, अपरं किंभूतां स्त्रीम् इति जानतीमिति विचारयन्तीम्, इतीति किंयत्, एतत् उत्तरीयं निजमिति मदीयमिति । अपरं किंलक्षणमुत्तरीयं सितरुचि श्वेतवर्णम् । ननु यदि श्वेतं तर्हि कथं नोपलक्ष्यते—अपरं किंभूतमुत्तरीयं दिनकरकरसङ्गाऽव्यङ्गकौसुम्भकान्ति दिनकरकरसङ्गेन श्रीसूर्यकिरणसंयोगेन अव्यङ्गा परिपूर्णा कौसुम्भस्य कुसुम्भरक्तवस्त्रस्य कान्तिः छविर्यस्य तत्, अपरं किंभूतमुत्तरीयं शयनीये शय्यायां नक्तं रात्रौ एकान्तमुक्तम् एकस्थाने न्यस्तम् । 'संव्यानमुत्तरीयं स्या'दित्यमरः ॥ ५२ ॥

**सितरुचीति** ॥ नक्तं रात्रौ शयनीये तल्पे एकान्तमुक्तमत्यन्तत्यक्तं सितरुचि शुभ्रवर्णम् । किन्तु दिनादौ प्रभाते दिनकरकरसङ्गेनाऽर्कांशुव्यतिकरेण व्यक्ता कौसुम्भी कुसुम्भस्य रागद्रव्यस्य सम्बन्धिनी कान्तिर्यस्य तत्तथा भासमानं रतिबन्धोः प्रियस्योत्तरीयं निजमात्मीयमिति जानतीम् । अत एवाऽऽददानां स्त्रीं नायिकाम् । 'वाऽमृशसोः' इतीयङ्भावपक्षे 'अमि पूर्वः' इति पूर्वरूपम् । सखी परिहसति । अत्राऽकौसुम्भे कौसुम्भभ्रमात्सादृश्यनिबन्धनाद् भ्रान्तिमदलङ्कारः ॥ ५२ ॥

**प्लुतमिव शिशिरांशोरंशुभिर्यन्निशासु स्फटिकमयमराजद्राजताद्रिस्थलाभम् ॥**
**अरुणितमकठोरैर्वेश्म काश्मीरजाऽम्भःस्नपितमिव तदेतद्भानुभिर्भाति भानोः॥**

**प्लुतमिवेति** ॥ हे कृष्ण ! इदं गृहं एतद् वेश्म काश्मीरजाऽम्भःस्नपितमिव भाति कुङ्कुमोदकप्रक्षालितमिव शोभते । किंलक्षणं वेश्म भानोः श्रीसूर्यस्य भानुभिः किरणैः

---

(१) सङ्गव्यक्त ।

अरुणितं रक्तीकृतं, किंलक्षणैर्भानुभिः अकठोरैः सुकुमारैः, अपरं किंलक्षणं वेश्म स्फटिकमयं स्फटिकाऽश्मनिर्मितम्, अत एव नवकिरणैः रक्तीकृतम्। तत् किं—यत्, वेश्म निशासु रात्रिषु राजताद्रिस्थलाभम् अराजत् रूप्यपर्वतसदृशं भाति स्म। उत्प्रेक्ष्यते—शिशिरांशोश्चन्द्रमसः अंशुभिः किरणैः प्लुतमिव उत्तेजितमिव स्नपितमिव ॥ ५३ ॥

प्लुतमिवेति ॥ राजताद्रिस्थलाभं सुधाधवलितत्वात्कैलासतटसंनिभं यद्वेश्म निशासु शिशिरांशोरिन्दो-रंशुभिश्चान्द्रिकाभिः प्लुतं धौतं सत् स्फाटिकमयं स्फाटिकाविकार इवाऽराजद्रजे । तदेतद्वेश्म भानोः सूर्यस्या-ऽकठोरैः कोमलैर्भानुभिररुणितमरुणीकृतं सत् काश्मीरदेशे जातं कश्मीरजं कुङ्कुमं तस्याऽम्भसा स्नापितं सिक्तमिव भाति । उत्प्रेक्षयोः संसृष्टिः ॥ ५३ ॥

**सरसनखपदान्तःश्लिष्ट(१)केशप्रमोकं प्रणयिनि विदधाने योषितामुल्लसन्त्याः॥**
**विदधति दशनानां सीत्कृताविष्कृतानामभिनवरविभासः पद्मरागानुकारम् ॥**

सरसेति ॥ हे भगवन्! कृष्ण! अभिनवरविभासः बालसूर्यद्युतयः दशनानां दन्तानां पद्मरागाऽनुकारं विदधति पद्मरागमणिसादृश्यं कुर्वन्ति । किंलक्षणानां दशनानां सीत्कृताविष्कृतानां सीत्कारप्रकटितानां, सीत्कारे किं कारणं क सति प्रणयिनि कान्ते योषितामङ्गनानां सरसनखपदाऽन्तःश्लिष्टकेशप्रमोकं विदधाने सति सान्द्रनखव्रणमध्ये संलग्नकच-मोक्षं कुर्वति सति, किंलक्षणा रविभासः उल्लसन्त्यः देदीप्यमानाः ॥ ५४ ॥

सरसेति ॥ प्रणयिनि योषितां सरसनखपदानामार्द्रनखक्षतानामन्तर्मध्ये दष्टानां लग्नानां केशानां शिरो-रुहाणां प्रमोकं प्रमोचनं विदधाने सति सीत्कृतैर्यथाविर्भूतसीत्कारैराविष्कृतानां दशनानामुल्लसन्त्यो वैमल्याद्दन्तेषु प्रतिफलन्त्यः अभिनवरविभासः पद्मरागाणामनुकारमनुकरणं विदधति । उपमालङ्कारो रविभासामारुण्यप्रतिपादकाऽभिनवविशेषणप्रसादलब्ध इति काव्यलिङ्गेन सङ्करः ॥ ५४ ॥

**अविरतदयिताङ्गासङ्गसंचारितेन छुरितमभिनवासृक्कान्तिना कुङ्कुमेन ॥**
**कनकनिकषलेखा(२)कोमलं कामिनीनां भवति वपुरवाप्तच्छायमेवातपेऽपि ॥**

अविरतेति ॥ हे भगवन्! श्रीकृष्ण! कामिनीनामङ्गनानां वपुः शरीरमातपेऽपि घर्मेऽपि अवाप्तच्छायमेव भवति प्राप्तद्युत्येव अस्ति। छायाशब्दः कान्तिवाचकोऽतः स्त्रीणा-मङ्गं घर्मेऽपि मनोज्ञकान्ति भवतीत्यर्थः। किंलक्षणं वपुः कनकनिकषलेखाकोमलं स्वर्णोपल-पदसदृशम्, अपरं किंलक्षणं वपुः कुङ्कुमेन छुरितं घुसृणेनाऽवलिप्तं, किंलक्षणेन कुङ्कुमेन अविर-तदयिताङ्गाऽऽसङ्गसञ्चारितेन निरन्तरकान्तशरीरसम्पर्कविस्तारितेन, अपरं किंलक्षणेन कुङ्कुमेन अभिनवाऽसृक्कान्तिना नूतनरुधिररुचिना। अत एव शरीरं सदैव कान्तिमद्भवतीत्यर्थः॥ ५५

अविरतेति ॥ अविरतेनाविच्छिन्नेन दयितानां प्रेयसामङ्गस्यासङ्गेन शरीरसम्पर्केण सञ्चारितेन संक्रा-मितेनाऽभिनवस्याऽसृजो रक्तस्येव कान्तिर्यस्य तेन कुङ्कुमेन छुरितं कनकस्ययां निकषे निकषोपले रेखा राजिस्तद्वत्कोमलं मनोहरमित्युपमा। कामिनीनां वपुरातपेऽप्यवाप्तच्छायं लब्धवर्णोत्कर्षमेव भवति। स्वतः सुवर्णवर्णस्य ततः कुङ्कुमाङ्कितस्य कामिनीगात्रस्य पुनर्बालातपव्याप्तिरिति महती वर्णोत्कर्षसामग्रीति भावः। आतपे छायानातप इति विरोधाभासेऽपिशब्दः। 'छाया त्वनातपे कान्तौ' इत्यमरः। अत्र संक्रान्तकुङ्कुम-च्छुरितत्वकनकनिकषरेखाकोमलत्वयोरुपमापेक्षया छायाऽवाप्तिहेतुत्वादुपमासङ्कीर्णं काव्यलिङ्गं तदातपेऽप्य-वाप्तच्छायमित्यत्र विरोधेनैकवाचकानुप्रवेशेन सङ्कीर्यते ॥ ५५ ॥

**सरसिजवनकान्तं बिभ्रदभ्रान्तवृत्तिः करनयनसहस्रं हेतुमालोकशक्तेः ॥**
**अखिलमतिमहिम्ना लोकमाक्रान्तवन्तं हरिरिव हरिदश्वः ध्वान्तवृत्रं(३) हिनस्ति**

(१) ०न्तर्भ्रष्ट। (२) रेखा। (३) साधु वृत्रं।

सरसिजेति ॥ हे भगवन् ! श्रीकृष्ण ! हरिदश्वः श्रीसूर्यः ध्वान्तवृत्रं हिनस्ति अन्धकाररूपिणं वृत्रासुरं नाशयति, क इव हरिरिव इन्द्र इव । यथा हरिर्देवराजः वृत्रं दानवं हिनस्ति स्म । किंलक्षणं वृत्रान्धकारं दैत्यं च अतिमहिम्ना अतिमहत्त्वेन अखिलं विश्वं समग्रं लोकमाक्रान्तवन्तम् आक्रम्य स्थितवन्तम् । दैत्योऽपि एवंविधः । किंलक्षणो रविरिन्द्रश्च करनयनसहस्रं बिभ्रत् एको रविः करसहस्रं बिभ्रत् अपर इन्द्रः नयनसहस्रं बिभ्रत्, किंलक्षणं करनयनसहस्रम् आलोकशक्तेः हेतुं कारणम् । एकस्य रवेः करसहस्रमालोकशक्तेः उद्द्योतस्य हेतुम् । इन्द्रस्य नयनसहस्रं दुष्टदैत्यानां निग्रहणसमर्थम् । अपरं किंलक्षणं करनयनसहस्रं सरसिजवनकान्तं करसहस्रं सरसिजवनेषु कमलकाननेषु कान्तं रुच्यं विकासकारित्वात्, अपरं नयनसहस्रं सरसिजवनवत् पद्मखण्डवत् कान्तं मनोज्ञम् । किंलक्षणो रविरिन्द्रश्च अभ्रान्तवृत्तिः एकस्य रवेः अभ्राऽन्ते नभःप्रान्ते वृत्तिर्वर्तनं यस्य सः तथा, अपरस्येन्द्रस्य अभ्रान्ता अपरिभ्रष्टा धर्मवती वृत्तिराचारो यस्य सः तथा ॥ ५६ ॥

सरसिजेति ॥ सरसि जातानि सरसिजानि । 'सप्तम्यां जनेर्डः', 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । तद्वनस्य कान्तं प्रियम् अन्यत्र तद्वत्कान्तं रम्यम आलोकशक्तेर्लोकलोचनानां विषयग्रहणशक्तेर्हेतुम् आलोकान्तरसहकृतानामेव तेषां तत्सामर्थ्यात् । अन्यत्र आलोकशक्तेर्दर्शनव्यापारस्य हेतुम् । दर्शनसाधनमित्यर्थः । करा नयनानीव अन्यत्र करा इव नयनानि तेषां सहस्रं करनयनसहस्रं बिभ्रत् । अभ्रान्ते नभोमध्ये वृत्तिर्यस्य सोऽभ्रान्तवृत्तिः । अन्यत्राऽभ्रान्ते मेघे वृत्तिर्यस्य सः । मेघवाहन इत्यर्थः । 'अभ्रं नभः स्वर्गबलाहकेषु' इति विश्वः । हरितोऽश्वा यस्य स हरिदश्वोऽर्कः हरिरिन्द्र इवाऽतिमहिम्नाऽतिमहत्तया । स्ववृद्ध्येत्यर्थः । लोकमाक्रान्तवन्तं व्याप्तवन्तम् एकत्र प्रत्यक्षादन्यत्र 'स इषुमात्रमिषुमात्रं विष्वग्वर्धत स इमाँल्लोकानावृणोत्' इत्यागमादिति भावः । वृत्रं ध्वान्तं दानवं च त्वाष्ट्रं साधु हिनस्ति हन्ति । 'ध्वान्ताऽरिदानवा वृत्राः' इत्यमरः । उपमा श्लेषो वा मतभेदात् ॥ ५६ ॥

**अवतमसभिदाय भास्वताऽभ्युद्गतेन प्रसभमुडुगणोऽसौ दर्शनीयोऽप्यपास्तः ॥**
**निरसितुमरिमिच्छोर्ये तदीयाश्रयेण श्रियमधिगतवन्तस्तेऽपि हन्तव्यपक्षे ॥५७॥**

अवतमसेति ॥ हे भगवन् ! कृष्ण ! भास्वता सूर्येण असौ उडुगणः अयं नक्षत्रसमूहः प्रसभं हठात् बलात्कारेण अपास्तः निराकृतः । किंलक्षणः उडुगणः दर्शनीयोऽपि रमणीयोऽपि, किमर्थं तेन नभस्वता नक्षत्रगणोऽपास्तः अवतमसभिदायै तमोविनाशाय अभ्युद्गतेन उदितेन । युक्तोऽयमर्थः, अरिं शत्रुं निरसितुमिच्छोः विनाशयितुकामस्य पुरुषस्य तेऽपि हन्तव्यपक्षे नाशनीयपक्षे भवन्ति । ते के ये तदीयाश्रयेण तत्संसर्गेण श्रियमधिगतवन्तः शोभां प्राप्नुवन्तः स्म । ये शत्रुसंयोगेन वृद्धिं गताः, तेऽपि तेजस्विनो हन्तव्या भवन्तीत्यर्थः ५७

अवतमसेति ॥ अवतमसं तिमिरम् । 'अवसमन्धेभ्यस्तमसः' इति समासान्तः । यद्यपि 'क्षीणेऽवतमसं तमः' इत्युक्तं, तथापीह विरोधाद्विशेषानादरेण सामान्यमेव ग्राह्यम् । तस्य भिदायै भेदाय । षिद्भिदादिभ्योऽङ् । अभ्युद्गतेनाभ्युदितेनोद्यतेन च भास्वता सूर्येण दर्शनीयोऽप्युडुगणोऽसौ प्रसभं बलादपास्तः । तथा हि अरिं निरसितुमिच्छोर्ये तदीयेनाश्रयेणाश्रयणेन श्रियं सम्पदं शोभां च । 'शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरपि गद्यते' इति विश्वः । अधिगतवन्तः प्राप्तवन्तस्तेऽपि हन्तव्यपक्षे वध्यकोटावेव । अरिवदरिपक्षा अपि वध्या एवेत्यर्थः । उडुगणोऽपि तमसि शोभते, अतस्तत्पक्ष इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५७ ॥

प्रतिफलति करौघे संमुखावस्थितायां रजतकटकभित्तौ सान्द्रचन्द्रांशुगौर्याम् ॥
बहिरभिहतमद्रेः संहतं कन्दराऽन्तर्गतमपि तिमिरौघं घर्मभानुर्भिनत्ति ॥५८॥

प्रतिफलतीति ॥ हे भगवन् ! कृष्ण ! घर्मभानुः श्रीसूर्यः अद्रेः पर्वतस्य कन्दराऽन्तर्गतमपि गुहामध्यस्थमपि तिमिरौघमन्धकारसमूहं भिनत्ति विदारयति। किंलक्षणं तिमिरौघं संहतं बहुलम्, अपरं किंलक्षणं तिमिरौघं बहिरभिहतं बाह्ये अभिहतं निराकृतं, क्व सति रजतकटकभित्तौ रूप्यमयशिखरकुड्ये करौघे किरणसमूहे प्रतिफलति प्रतिबिम्बतां गच्छति सति, किंभूतायां रजतकटकभित्तौ संमुखाऽवस्थितायां समीपवर्तिन्याम्, अपरं किंलक्षणायां रजतकटकभित्तौ सान्द्रचन्द्रांशुगौर्यां निबिडरजनीकरकिरणवत् गौर्यां श्वेतायाम् ॥५८॥

प्रतिफलतीति ॥ घर्मभानुरुष्णांशुः संमुखावस्थितायां सान्द्रचन्द्रांशुवद्गौर्याम् धवलायामित्युपमा । 'षिद्गौरादिभ्यश्च' इति ङीप् । रजतकटकमेव भित्तिस्तस्यां करौघे स्वकिरणजाले प्रतिफलति सति अद्रेर्बहिरभिहतं कन्दराणां दरीणामन्तर्गतं संहतं तिमिरौघमपि भिनत्ति । पुरोगतरजतभित्तिप्रतिहतस्य निजतेजसः कन्दराऽन्तःप्रवेशादिति भावः । अत्र करौघस्यान्तःसम्बन्धाभावेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ५८ ॥

बहिरपि विलसन्त्यः काममानिन्यिरे यद्दिवसकररुचोऽन्तं ध्वान्तमन्तर्गृहेभ्यः(१)
नियतविषयवृत्तेरप्यनल्पप्रतापक्षतसकलविपक्षस्तेजसः स स्वभावः ॥५९॥

बहिरपीति ॥ हे भगवन् ! कृष्ण ! दिवसकररुचः श्रीसूर्यद्युतयः अन्तर्मध्ये वर्तमानं ध्वान्तमन्धकारम् अन्तमानिन्यिरे क्षयं निन्युः । किंलक्षणा दिवसकररुचः गृहेभ्यो मन्दिरेभ्यः काममतिशयेन बहिरपि विलसन्त्यः बाह्येऽपि उल्लसन्त्यः । युक्तोऽयमर्थः, यतः कारणात् नियतविषयवृत्तेरपि एकदेशाश्रितस्यापि तेजसः स स्वभावः एतत्सहजमेव तेजस्विन एष स्वभावः । किंलक्षणः स्वभावः अनल्पप्रतापक्षतसकलविपक्षः प्रभूतप्रतापविनाशितसमस्तशात्रवः । एकप्रदेशस्थितोऽपि तेजस्वी सर्वगतान् रिपून् हिनस्तीत्यर्थः ॥५९॥

बहिरपीति ॥ बहिर्विलसन्त्योऽपि दिवसकररुचोऽर्कभासः अन्तर्गृहेषु गर्भागारेषु कामं यथेष्टं ध्वान्तमन्तं नाशमानिन्यिरे प्रापयामासुरिति यत् । नयतेर्द्विकर्मकात्कर्तरि लिट् । सोऽन्तर्गृहध्वान्तनिरासो नियतविषये नियतस्थाने वृत्तिर्यस्य तस्य । नियतदेशवर्तिनोऽपीत्यर्थः । 'तृतीयादिषु' इति पुंवद्भावः । तेजसोऽनल्पेन प्रतापेन स्वप्रकाशेन । स्वप्रभावेणेत्यर्थः । 'प्रतापौ पौरुषातपौ' इति वैजयन्ती । क्षतसकलविपक्षो निरस्तसमस्तप्रतिपक्षः स्वभावः । तेजस्विनामेष स्वभावो यत्प्रतापेनैव परोच्छेदनमतो युक्तमर्कभासामप्यन्तर्ध्वान्तहरणमित्यर्थः । अत्र समर्थ्यसमर्थकयोः सामान्यविशेषाभावादर्थान्तरन्यासः ॥ ५९ ॥

चिरमतिरसलौल्याद्बन्धनं लम्भितानां पुनरयमुदयाय प्राप्य धाम स्वमेव ॥
दलितदलकपाटः षट्पदानां सरोजे सरभस इव गुप्तिस्फोटमर्कः करोति ॥

चिरमिति ॥ हे भगवन् ! श्रीकृष्ण ! अयमर्कः श्रीसूर्यः सरोजे कमले षट्पदानां भ्रमराणां गुप्तिस्फोटं करोति बन्धनच्छेदं विदधाति । किंलक्षणोऽर्कः, उत्प्रेक्षते—सरभस इव सौत्सुक्य इव, अपरं किंलक्षणोऽर्कः दलितदलकपाटः उद्घाटितपत्रकपाटः, किं कृत्वा स्वमेव धाम आत्मीयमेव स्थानं प्राप्य, किमर्थं पुनर्भूयोऽपि उदयाय उदयनिमित्तं, किंलक्षणानां षट्पदानाम् अतिरसलौल्यात् अतिशयमकरन्दपानलाम्पट्यात् चिरं चिरकालं यावत् बन्धनं लम्भितानां निगडैर्गृहीतानां, प्रतिभेदं गुप्तिमोक्षं करोति ॥ ६० ॥

चिरमिति ॥ अयमर्कः पुनर्भूयोऽभ्युदयाय स्ववृद्धये स्वं स्वकीयमेव धाम स्थानं तेजो वा प्राप्य

(१) ०र्गृहेषु ।

अतिरसलौल्यादतिमात्राद्रसेषु मकरन्देषु विषयेषु च लौल्यादासक्तेः सरोजे चिरं बन्धनं लम्भितानां प्रापितानां षट्पदानां सरभसः सत्वरो दलितं विघाट्टितं दलमेव कपाटं येन स सन् गुप्तिस्फोटं बन्धनमोक्षं करोतीवेत्युत्प्रेक्षा । यथा कश्चित्पदभ्रष्टः पुनर्लब्धपदः पूर्ववदात्मबन्धूनागत्य स्वयमेव काराकपाटमुद्घाट्य मोचयति तद्वदिति भावः ॥ ६० ॥

**युगपदयुगसप्तिस्तुल्यसंख्यैर्मयूखैर्दशशतदलभेदं कौतुकेनाऽऽशु कृत्वा ॥**
**श्रियमलिकुलगीतैर्लालितां पङ्कजान्तर्भवनमधिशयानामादरात्पश्यतीव ॥६१॥**

**युगपदिति** ॥ हे भगवन् ! श्रीकृष्ण ! अयुगसप्तिः सप्ताऽश्वः श्रीसूर्यः श्रियं लक्ष्मीम् आदरात् विशेषात् पश्यतीव विलोकयतीव । किंलक्षणां श्रियं पङ्कजान्तर्भवनं कमलमध्यगृहम् अधिशयानामाश्रितवतीम्, अपरं किंलक्षणां श्रियम् अलिकुलगीतैर्लालितां भ्रमरगुञ्जारवैर्विनोदितां, किं कृत्वा कौतुकेन कुतूहलेन आशु शीघ्रम् मयूखैः किरणैः युगपत् एककालं दशशतदलभेदं कृत्वा सहस्रपत्रभिदां विधाय कमलविकासं कृत्वा, किंलक्षणैर्मयूखैः तुल्यसंख्यैः तुल्या समा संख्या येषां ते तथा तैः । सहस्रसंख्यैरित्यर्थः । 'सहस्रपत्रं कमल'मित्यमरः ॥ ६१ ॥

**युगपदिति** ॥ अयुगा विषमाः सप्तयोऽश्वा यस्य सोऽयुगसप्तिः सप्ताश्वोऽर्कः । युगशब्दस्य युग्मशब्दस्य च विशेष्यलिङ्गताऽवगन्तव्या। युगपदेकदैव तुल्यसंख्यैः। सहस्रसंख्यैरित्यर्थः। मयूखैः करैः दश शतानि येषां तानि दशशतानि । सहस्रमित्यर्थः । तेषां दलानां भेदं विघटनं कौतुकेनाऽऽशु कृत्वा अलिकुलस्य गीतैर्लालितां सत्कृतां पङ्कजमेवान्तर्भवनं गर्भगृहमधिशयानाम् । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् । श्रियमादरात्पश्यतीवेत्युत्प्रेक्षा । कश्चित्कान्तः कान्तामेकान्तगतामिति भावः ॥ ६१ ॥

**अदयमिव कराग्रैरेष निष्पीड्य सद्यः शशधरमहरादौ रागवानुष्णरश्मिः ॥**
**अवकिरति नितान्तं कान्तिनिर्यासमब्दस्रुतनवजलपाण्डुं पुण्डरीकोदरेषु ॥**

**अदयमिति** ॥ हे भगवन् ! श्रीकृष्ण ! एष उष्णरश्मिः उष्णतेजाः श्रीसूर्यः पुण्डरीकोदरेषु कमलमध्येषु कान्तिनिर्यासं द्युतिरसविशेषं नितान्तमतिशयेन अवकिरति निक्षिपति, किंलक्षणं कान्तिनिर्यासम् अब्दस्रुतनवजलपाण्डुं मेघक्षरितनूतनोदकवत् धवलम् । किं कृत्वा अवकिरति, उत्प्रेक्ष्यते—अहरादौ दिवसारम्भे शशधरं चन्द्रमसं सद्यस्तत्कालं कराग्रैः किरणप्रान्तैः अदयमिव निष्पीड्य निर्दयमिव निश्चोत्य, किंलक्षणः उष्णरश्मिः रागवान् लौहित्ययुक्तः । यथा अन्योऽपि रागवान् सक्रोधः परं निर्दयमिव निष्पीडयति ॥ ६२ ॥

**अदयमिति** ॥ अहरादौ प्रभाते रागवानुदयरागवान् पुण्डरीकस्नेहवांश्चैष उष्णरश्मिरर्कः शशधरं चन्द्रं कराग्रैः रश्म्यग्रैः हस्ताग्रैश्चाऽदयं निर्दयं सद्यो निष्पीड्य अब्दान्मेघात्स्रुतं स्रस्तं नवजलमिव पाण्डुं शुभ्रं कान्तिनिर्यासं लावण्यसारं पुण्डरीकाणां सिताब्जानामुदरेष्वभ्यन्तरेषु नितान्तमवकिरतीव विक्षिपतीव । अत्र सूर्योदये चन्द्रस्य कान्तिक्षयात्पुण्डरीकाणां तत्प्रादुर्भावाच्च सूर्यश्चान्द्रमेव कान्तिं पुण्डरीकस्नेहात्परेषु सिञ्चतीत्युत्प्रेक्षा । यथा द्विषन्तं प्रपीड्य तदीयं वसुसारं सुहृदे प्रयच्छतीति तद्वदिति भावः ॥ ६२ ॥

**प्रविकसति चिराय द्योतिताशेषलोके दशशतकरमूर्तावक्षिणीव द्वितीये ॥**
**सितरुचि(१)वपुषाऽसौ लक्ष्यते सम्प्रति द्यौर्विगलितकिरणेन व्यङ्गितैकेक्षणेव ॥**

**प्रविकसतीति** ॥ हे भगवन् ! हे श्रीकृष्ण ! असौ द्यौः आकाशं सम्प्रति साम्प्रतं सितरुचिवपुषा चन्द्रमसा लक्ष्यते दृश्यते । सिताः श्वेता रुचयः कान्तयो यस्मिन्

---

(१) कर ।

तत् सितरुचि एवंभूतं वपुः शरीरं यस्य सः सितरुचिवपुः तेन । किंलक्षणेन सितरुचि-वपुषा विगलितकिरणेन विनिर्गतमयूखेन, क्व सति दशशतकरमूर्तौ श्रीसूर्ये चिराय चिर-कालं यावत प्रविकसति सति उदयति सति । दशशतानि सहस्रं कराः किरणाः यस्याः सा दशशतकरा एवंभूता मूर्तिः शरीरं यस्य सः दशशतकरमूर्तिः तस्मिन् श्रीसूर्ये । किंलक्षणे रवौ, द्योतिताऽशेषलोके भासितसकलत्रैलोक्ये, अपरं किंलक्षणे रवौ, उत्प्रेक्ष्यते—द्वितीये अक्षिणीव अपरस्मिन् नेत्रे इव । एकं नेत्रं चन्द्रः, अपरं श्रीसूर्यः । उपमीयते-किंलक्षणा द्यौः व्यङ्गितैकेक्षणेव विनष्टैकनयनेव । चन्द्रस्य निष्प्रभत्वादित्यर्थः ॥ ६३ ॥

प्रविकसतीति ॥ द्योतितः प्रकाशितोऽशेषलोको येन तस्मिन्, दश शतानि येषां ते दशशतास्ते करा यस्याः सा दशशतकरा सहस्रकरा मूर्तिर्यस्य तस्मिन् दशशतकरमूर्तौ सूर्ये द्वितीयेऽक्षिणि चक्षुषीव चिराय प्रविकसति सति सम्प्रत्यसौ द्यौराकाशं भ्रां च गम्यते, विगलितकिरणेन निष्प्रकाशेन सितकरं शुभ्रकिरणं वपुर्यस्य तेन सितकरवपुषा चन्द्रेण व्यङ्गितं विकलीकृतमेकेक्षणमेकनेत्रं यस्याः सा व्यङ्गितैके-क्षणा काणेव लक्ष्यते । अत्र दिवः काणत्वमुत्प्रेक्ष्यते । तच्च काणत्वमच्छित्वेनाऽध्यवसितेन निष्काशितेन चन्द्रेणेति । तत्र 'येनाङ्गविकारः' इति तृतीया ॥ ६३ ॥

**कुमुदवनमपश्रि श्रीमदम्भोजखण्डं त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ॥**
**उदयमहिमरश्मिर्याति शीतांशुरस्तं हतविधिललितानां(१) ही! विचित्रो विपाकः**

कुमुदवनमिति ॥ हे भगवन्! श्रीकृष्ण! कुमुदवनं कैरवकाननम् अपश्रि निःश्रीकं वर्तते, अपरम् अम्भोजखण्डं कमलवनं श्रीमत् सश्रीकं वर्तते, अपरम् उलूकः कौशिकः मुदं त्यजति हर्षं जहाति अन्धत्वभयात्, अपरं चक्रवाकः कोकः प्रीतिमान् भवति सहर्षो जा-यते, अपरम् अहिमरश्मिः उदयं याति श्रीसूर्यः तेजस्वी भवति, अपरं शीतांशुश्चन्द्रः अस्तं याति अस्तमयते । हत इति खेदे, विधिललितानां दैवचेष्टितानां, ही कष्टे, विचित्रो विपाकः दुर्लक्ष्यः विधिललितानां विपाको विचित्रः । दैवकार्याणां परिणामो युक्तं न विचारयति, यद्भाव्यते तत्करोति ॥ ६४ ॥

कुमुदवनमिति ॥ कुमुदवनम् अपगता श्रीर्यस्य तदपश्रि विगतशोभम् । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम् । अम्भोजखण्डं श्रीमच्छोभायुक्तम् । उलूकः पेचको मुदं त्यजति । तस्य दिवाभीतत्वादिति भावः । चक्रवाकः प्रीतिमान् । रजनीविरहाभावत्वात्तस्येति भावः । अहिमरश्मिरुष्णांशुरुदयं याति । हिमांशुरिन्दु-रस्तमदर्शनं याति । अस्तमित्यव्ययम् । कथमेतद्वैषम्यं तत्राह—हतेति । हतविधिलसितानां दुष्टदैवचेष्टि-तानां विपाकः परिपाकः । तत्तत्प्राणिकर्मानुरूपफलदानप्रकार इति यावत् । विचित्रो विविधः । न त्वेक-विध इत्यर्थः । हीति विस्मये । 'अहो ही च विस्मये' इत्यमरः । विधिविपाकवैचित्र्याज्जगद्वैचित्र्यं युज्यत इति कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६४ ॥

**क्षणमतुहिनधाम्नि प्रोष्य भूयः पुरस्तादुपगतवति पाणिग्राहवद्दिग्वधूनाम् ॥**
**द्रुततरमपयाति(२) स्रंसमानांशुकोऽसावुपपतिरिव नीचैः पश्चिमाऽन्तेन चन्द्रः**

क्षणमिति ॥ हे भगवन्! श्रीकृष्ण! असौ चन्द्रः इन्दुः पश्चिमाऽन्तेन वारुणीदिक्-प्रान्तेन द्रुततरं शीघ्रमपयाति निःसरति । किंलक्षणश्चन्द्रः नीचैर्नम्रः अस्ताभिमुखः, अत-एव अपरं किंलक्षणः स्रंसमानांशुकः स्रंसमानाः पतमानाः अंशवः किरणा यस्य सः तथा ध्वस्तकिरणः, क्व सति अपयाति अतुहिनधाम्नि उष्णकिरणे श्रीसूर्ये क्षणं क्षणमात्रं प्रोष्य

(१) लसितानां । (२) ०मुपयाति ।

प्रवासं गत्वा भूयः पुनरपि पुरस्तात् पूर्वस्यां दिशि उपगतवति सति आगते सति, किं-लक्षणे श्रीसूर्ये दिग्वधूनां काष्ठाङ्गनानां पाणिग्राहवत् परिणीतकान्ते इव वल्लभे इव, चन्द्रः क इव अपयाति उपपतिरिव जार इव। यथा वध्वा अङ्गनायाः पाणिग्राहे वल्लभे पुरस्तादग्रे पूर्वद्वारे उपगतवति प्राप्ते सति जारो नीचैः सन् स्रंसमानांशुको याति पश्चिमद्वारेण। स्रंस-मानांशुको लम्बमानवस्त्रः ॥ ६५ ॥

क्षणमिति ॥ अतुहिनधाम्न्युष्णांशौ दिशो वध्व इवेत्युपमितसमासः। तासां दिग्वधूनां पाणिं गृह्णा-तीति पाणिग्राहो निजभर्ता तस्मिन्निव पाणिग्राहवत्। 'तत्र तस्येव' इति तत्रार्थे वतिः। क्षणं प्रोष्य प्रवासं कृत्वा। प्रपूर्वाद्वसधातोः क्त्वा, तस्य 'समासेऽनञ्पूर्वे क्त्वो ल्यप्', 'वचिस्वपि—' इत्यादिना सम्प्रसार-णम्। भूयः पुनरपि पुरस्तात्पूर्वस्यां दिशि मार्गे चोपगतवत्यागतवति सति असौ चन्द्र उपपतिर्जार-इव। 'जारस्तूपपतिः समौ' इत्यमरः। स्रंसमानांशुको गलद्रश्मिकः। शैषिकः कप्प्रत्ययः। स्रस्तवस्त्रश्च नीचैर्नम्रः सन् पश्चिमान्तेन पश्चिमदिक्कोणेन द्रुततरमपयात्यपसरति। तथा पूर्वद्वारेण निजपतावागते पश्चा-न्मार्गेणोपपतिरपसरति तद्वदित्यर्थः। उपमालङ्कारः ॥ ६५ ॥

**प्रलयमखिलतारालोकमह्नाय नीत्वा श्रियमनतिशयश्रीः सानुरागां दधानः ॥**
**गगनसलिलराशिं रात्रिकल्पावसाने मधुरिपुरिव भास्वानेष एकोऽधिशेते ६६**

प्रलयमिति ॥ हे भगवन्! कृष्ण! एष भास्वान् श्रीसूर्यः गगनसलिलराशिम् एक एव अधिशेते आकाशसमुद्रमेकोऽधिवसति। क्व रात्रिकल्पावसाने रात्रिरेव कल्पः तस्याऽवसाने अन्ते, क इव मधुरिपुरिव। यथा मधुरिपुः श्रीकृष्णः कल्पावसाने युगान्ते एक एव समुद्रमधिवसति। किं कृत्वा अह्नाय शीघ्रमेव अखिलं तारालोकं समस्तमपि नक्षत्रलोकं प्रलयं नीत्वा अदर्शनं प्रापय्य, श्रीकृष्णपक्षे समस्तं लोकं त्रैलोक्यं क्षयं नीत्वा, किं कुर्वाणः सानुरागां श्रियं शोभां दधानः बिभ्राणः, अपरं किंलक्षणः भास्वान् अनतिशय-श्रीः अविनष्टशोभः, श्रीकृष्णः सानुरागां सस्नेहां श्रियं लक्ष्मीं दधानः, किंभूतः हरिः अनति-शयश्रीः अविनश्वरप्रभुत्वः, न अतिशयवती श्रीः यस्य सः ॥ ६६ ॥

प्रलयमिति ॥ अखिलस्तारालोको लोक इव तारा नक्षत्रं तमखिलं तारालोकमह्नाय द्राक् प्रलयं क्षयं नीत्वा अत एव यतो नास्त्यतिशयं साऽनतिशया सर्वातिशायिनी श्रीर्महिमा यस्य सोऽनतिशयश्रीः सानुरागा-मुदयरागवतीं श्रियं शोभामन्यत्र सानुरागामनुरागवतीं श्रियं रमां च दधान एव भास्वानेको मधुरिपुर्विष्णु-रिव रात्रिः कल्पावसानं कल्पान्त इव तस्मिन् रात्रिकल्पावसाने गगनं सलिलराशिरिव तं गगनसलिल-राशिमधिशेतेऽधितिष्ठति। अत्र मधुरिपुरिवेति वाक्यगतोपमैव समासगतोपमानां प्रसाधिकेति सर्वत्रोपमित-समासाश्रयणमेवोचितम् ॥ ६६ ॥

**कृतसकलजगद्विबोधो विधूता(१)ऽन्धकारादयः**
**क्षपितकुमुदतारकश्रीर्वियोगं नयन् कामिनः।**
**गुरु(२)तरगुणदर्शनादभ्युपेताऽल्पदोषः कृती**
**तव वरद! करोतु सुप्रातमह्नामयं नायकः ॥ ६७ ॥**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये प्रत्यूषवर्णनं नाम एकादशः सर्गः ॥ ११ ॥

कृतेति ॥ हे वरद! मनोरथपूरक! श्रीकृष्ण! अयम् अन्हां दिवसानां नायकः प्रभुः श्रीसूर्यः तव सुप्रातं करोतु सुदिवसं विदधातु। किंलक्षणः अह्नां नायकः कृती धन्यः,

---

(१) ऽवधूता०···क्षयित। (२) बहु।

किं कुर्वन् कामिनः विलासिनः पुरुषान् वियोगं नयन् विरहं प्रापयन्, यतः किंलक्षणः गुरुतर-गुणदर्शनात् तमश्छेदादिव बहुतरगुणभावात् अभ्युपेताऽल्पदोषः अङ्गीकृतस्वल्पदोषः। अल्प-दोषमङ्गीकृत्य बहुगुणसाधनमदूष्यम्। कामिनां वियोगकरणमल्पदोषः, तमश्छेदादिर्गुरुतरो गुणः। अपरं किंलक्षणः अह्नां नायकः क्षपितकुमुदतारकश्रीः विनाशितकैरवतारक-शोभः। कुमुदवनानि नक्षत्राणि च निष्प्रभीचकारेत्यर्थः। असावपि अल्पदोषः। गुरुतर-गुणदर्शनमाह—अपरं किंलक्षणः अह्नां नायकः कृतसकलजगद्विबोधः विहिताखिलभुवना-ऽऽलोकः, अपरं किंलक्षणः अह्नां नायकः विधूताऽन्धकारोदयः निर्जिततमःप्रकाशः। एते गुरु-तरगुणाः, कुमुदतारकश्रीविनाशः कामिनां वियोगजननं चाऽल्पदोषः। अल्पदोषानङ्गी-कृत्य गुरुतरगुणसाधको भगवान् श्रीसूर्यः तव सुप्रभातं करोतु। अथ नायकः सेनानीः कार्तिकेयः तव सुप्रभातं विदधातु। किंलक्षणः कार्तिकेयः क्षपिततारकश्रीः निर्जिततारक-प्रभावः। तारकदैत्योऽपि स्कन्देन हतः। सोऽपि कामिनां वियोगजनकः। यतः—कुमारो ब्रह्मचारी—इत्यादि विशेषणानि योजनीयानि ॥ ६७ ॥

इति श्री आनन्ददेवायनिवल्लभदेवविरचितायां सन्देहविषौषध्यां शिशुपालवध-सारटीकायां प्रभातवर्णनं नामैकादशः सर्गः सम्पूर्णः।



कृतेति ॥ कृतसकलजगद्विबोधः कृताऽखिलजगत्प्रबोधः अवधूतो विक्षिप्तोऽन्धकारस्योदय उज्जृम्भणं येन सोऽवधूतान्धकारोदय इति महागुणोक्तिः। दोषमाह—क्षयिता नाशिता कुमुदानां तारकाणां च श्रीर्येन सः कामिनः स्त्रीपुंसान् वियोगं नयन् प्रापयंस्तथापि बहुतरगुणस्य पूर्वोक्तमहागुणस्य दर्शनादभ्युपेतो लोकै-रङ्गीकृतोऽल्पदोषः पूर्वोक्त एव यस्य सः। 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति न्यायादिति भावः। अत एव कृती कृतार्थोऽयमह्नां नायकः प्रभुः सूर्यः हे वरद! कामद! तव सुप्रातं सुप्रभातं करोतु। 'आशिषि लिङ्लोटौ' इत्याशीरर्थे लोट्। शोभनं प्रातर्यस्येति सुप्रातः शोभनप्रात-वानुच्यते, 'सुप्रातसुश्व–' इत्यादिना बहुव्रीहावच्प्रत्ययान्तो निपातितः। अत्र भावप्रधानो निर्देशः। तव सुप्रातं सुप्रभातत्वं करोत्वित्यर्थः। महामालिनीवृत्तमेतत्। 'यदिह नयुगलं ततो वेदरेफैर्महामालिनी' इति लक्षणात् ॥ ६७ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवध-काव्यव्याख्याने सर्वङ्कषाख्ये एकादशः सर्गः ॥ ११ ॥

## द्वादशः सर्गः।

**इत्थं रथाश्वेभनिषादिनां प्रगे गणो नृपाणामथ तोरणाद्बहिः ॥**
**प्रस्थानकालक्षमवेषकल्पनाकृतक्षणक्षेपमुदैक्षताऽच्युतम् ॥ १ ॥**

**इत्थमिति** ॥ अथाऽनन्तरं नृपाणां गणः राज्ञां समूहः प्रगे प्रभाते अच्युतं श्रीवासु-देवम् उदैक्षत प्रतीक्षामास। किंलक्षणमच्युतं प्रस्थानकालक्षमवेषकल्पनाकृतक्षणक्षेपं प्रयाण-समययोग्यवेषरचनया विहितमुहूर्तविलम्बं, क्व उदैक्षत तोरणाद् बहिः तोरणात् वन्दनमाला-याः बाह्ये, किंलक्षणानां नृपाणाम् इत्थममुना प्रकारेण रथाश्वेभनिषादिनां रथतुरगगजारूढा-नाम्। अद्य रैवतकात् भगवतः प्रयाणं भविष्यतीति भावेनेत्यर्थः। अस्मिन् सर्गे वंशस्थं वृत्तम्॥

एवं प्रभातं वर्णयित्वा भगवतः प्राभातिकप्रस्थानवर्णनाय प्रक्रमते—

**इत्थमिति** ॥ इत्थंभूते । पूर्वसर्गोक्तविध इत्यर्थः । प्रगे प्रातःकाले । 'सायं साये प्रगे प्रातः' इत्यव्ययेष्वमरः । अथ सूर्योदयानन्तरं रथाश्वेभे निषीदन्तीति रथाश्वेभनिषादिना । रथेषु अश्वेषु इभेषु च स्थितानामित्यर्थः । नृपाणां गणः तोरणाद्भगवतो बाह्यद्वाराद्बहिः । 'अपपरिबहिरञ्चवः पञ्चम्या' इति पञ्चमीसमासविधानाज्ज्ञापकात्पञ्चमी । 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः । प्रस्थानकाले प्रयाणकाले क्षम उचितो वेष आकल्पः । 'आकल्पवेषौ नेपथ्यम्' इत्यमरः । तस्य कल्पनया सम्पादनेन कृतः क्षणक्षेपः क्षणविलम्बो येन तमच्युतं हरिमुदैक्षत । प्रतीक्षितवानित्यर्थः । अत्राऽच्युतविलम्बस्य विशेषणगत्या प्रतीक्षणहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । अस्मिन्सर्गे विषमपादयोर्जागतमिन्द्रवंशा वृत्तम् । 'स्यादिन्द्रवंशा ततजैरसंयुतैः' इति लक्षणात् । समपादयोस्तु जागतमेव वंशस्थं वृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् । तदेवमुभयमेलनादुपजातिभेदोऽयम् । अत एव त्रिष्टुबिन्द्रवज्रोपेन्द्रवज्रालक्षणाऽनन्तरम् 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इत्युक्त्वोक्तम्—'इत्थं किलाऽन्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम' इति ॥ १ ॥

**स्वक्षं सुपत्रं कनकोज्ज्वलद्युतिं जवेन नागान् जितवन्तमुच्चकैः ।**
**आरुह्य तार्क्ष्यं नभसीव भूतले ययावनुद्घातसुखेन सोऽध्वना ॥ २ ॥**

**स्वक्षमिति** ॥ स भगवान् अच्युतः सुपत्रं शोभनपत्रं वाहनं रथमारुह्य अधिरुह्य भूतलेऽवनिपृष्ठे अध्वना मार्गेण ययौ जगाम । भूतलग्रहणमौपम्यार्थम्, अध्वनेति ग्रहणं विशेषणार्थम् । किंलक्षणेनाऽध्वना अनुद्घातसुखेन अविद्यमानः उद्घातः स्खलनं यत्र सोऽनुद्घातः अत एव सुखयतीति सुखः, ततो विशेषणसमासः । किंलक्षणं सुपत्रं रथं स्वक्षं सु शोभना अक्षा अवयवविशेषा यस्य सः तथा तम्, अपरं किंलक्षणं कनकोज्ज्वलद्युतिं कनकेन सुवर्णेन उज्ज्वला देदीप्यमाना मनोज्ञा द्युतिर्दीप्तिर्यस्य सः तथा तम्, अपरं किंलक्षणं जवेन वेगेन नागान् गजान् जितवन्तं तिरस्कुर्वन्तम्, अपरं किंलक्षणं यतः उच्चकैः उन्नतम् । एवंभूतं रथमारुह्य भूतले ययौ । कमिव तार्क्ष्यमिव गरुडमिव, भूतले कस्मिन्निव नभसीव आकाशे इव । यथा असौ भगवान् श्रीकृष्णः तार्क्ष्यमारुह्य नभसि याति, इति रथस्य लाघवोक्तिः । अत्रापि विशेषणानि तुल्यानि । किंलक्षणं तार्क्ष्यं स्वक्षं सु शोभने अक्षिणी नेत्रे यस्य सः तथा तम् । गरुडस्येवाऽक्षिबलमन्यस्य नास्तीति पुराणेषु प्रसिद्धम् । अपरं किंलक्षणं तार्क्ष्यं सुपत्रं शोभनानि पत्राणि पक्षाः यस्य सः तथा तं रम्याऽङ्गरुहम्, अपरं किंलक्षणं तार्क्ष्यं कनकोज्ज्वलद्युतिं सौवर्णत्वात्पक्षाणाम्, अपरं किंलक्षणं तार्क्ष्यं जवेन वेगेन नागान् सर्पान् जितवन्तम्, अपरं किंलक्षणं तार्क्ष्यम् उच्चकैः प्रांशुम् । 'पत्रं वाहनपक्षयोः', 'नागौ सर्पमतङ्गजौ' ॥ २ ॥

**स्वक्षमिति** ॥ स हरिः शोभनोऽक्षश्चक्रधारणदारुभेदो यस्य तं स्वक्षम् । 'स्यादक्षश्चक्रधारणः' इति **वैजयन्ती** । अन्यत्र शोभनेन्द्रियम् । 'अथाक्षमिन्द्रियम्' **इत्यमरः** । सुपत्रं शोभनं पत्रं वाहनं यस्य तम् । स्वश्वमित्यर्थः । अन्यत्र सुपक्षम् । 'पत्रं वाहनपक्षयोः' **इत्यमरः** । कनकोज्ज्वलद्युतिं कनकरचनावन्तम् । अन्यत्र कनकवदुज्ज्वलद्युतिं कनकवर्णम् । जवेन नागान् गजांस्तुरगांश्च जितवन्तम् । ततोऽधिकवेगामित्यर्थः । अन्यत्र नागाऽन्तकमित्यर्थः । उच्चकैरुन्नतं तार्क्ष्यं रथं गरुडं च ।

'तार्क्ष्यः स्यादश्वकर्णाख्यवृक्षे रथतुरङ्गयोः ।
तार्क्ष्यं रसाञ्जने तार्क्ष्यो गरुडे गरुडाग्रजे' ॥

**इति विश्वः** । आरुह्य नभसीव भूतलेऽनुद्घातेनाऽप्रतिघातेन सुखः सुगमस्तेनाऽध्वना ययौ गरुडमारुह्य

नभसीव रथमारुह्य भूतलेऽप्यप्रतिहतं ययौ । गरुडवदेव तद्रथस्यापि सर्वत्राऽप्रतिहतगतित्वादित्यर्थः । नात्र श्लेषः, प्रकृताप्रकृतवादेऽपि तादर्थ्यमिति विशेष्यश्लेषायोगादन्यत्रापमङ्गाच्च । श्लेषसङ्कीर्णेयमुपमा ॥ २ ॥

**हस्तस्थिताऽखण्डितचक्रशालिनं द्विजेन्द्रकान्तं श्रितवक्षसं श्रिया ॥**
**सत्यानुरक्तं नरकस्य जिष्णवो गुणैर्नृपाः शार्ङ्गिणमन्वयासिषुः ॥ ३ ॥**

**हस्तस्थितेति** ॥ नृपा राजानः शार्ङ्गिणं श्रीकृष्णम् अन्वयासिषुः अनुजग्मुः । किं भयेन नेत्याह—कैः गुणैः विनयशौर्यादिभिः । यतस्ते भगवद्गुणाऽऽवर्जिता इत्यर्थः । अथ गुणैः साधारणधर्मैः तमन्वयासिषुः अनुचक्रुः । अर्थान्तरप्रतीतिः। एवञ्चाऽनुकारो भवति-यदि विभागोक्तविशेषणानामुभयथाऽपि योगो भवति, यदि विभक्तिरचनाविपरिणामो भवति । तत्र किंलक्षणं शार्ङ्गिणं हस्तस्थिताऽखण्डितचक्रशालिनं हस्तस्थितेन करे वर्तमानेन अखण्डितेन परिभूतेन चक्रेण सुदर्शनेन शालते शोभते इत्येवंशीलः हस्तस्थिताऽखण्डितचक्रशाली तम्, अपरं किंलक्षणं शार्ङ्गिणं द्विजेन्द्रकान्तं द्विजेन्द्रो गरुडः तस्य कान्तः प्रियः तम्, अथ वा द्विजेन्द्रो वा कान्तो यस्य सः तथा तम्, अपरं किंलक्षणं शार्ङ्गिणं श्रिया लक्ष्म्या श्रितवक्षसमधिष्ठितोरस्कम्, अपरं किंलक्षणं शार्ङ्गिणं सत्याऽनुरक्तं सत्या सत्यभामा तस्यामनुरक्तः रागी तम्, अपरं किंलक्षणं शार्ङ्गिणं नरकस्य भौमासुरस्य जिष्णुं परिभाविनम् । अर्थवशाद्विभक्तिविपरिणामः एकपक्षे । द्वितीयपक्षे—राजानः किंलक्षणाः हस्तस्थितेन आयत्तेन अखण्डितेन चक्रेण राष्ट्रेण शालन्ते ते तथा, अथ यदि हस्तस्थितेन अनूनचक्रेण रेखादिचिह्नेन शालिनः, अपरं किंलक्षणाः राजानः द्विजेन्द्रकान्ताः ब्राह्मणप्रियाः सम्यक् प्रजापालनात्, अपरं किंलक्षणा राजानः श्रिया राजलक्ष्म्या श्रितवक्षसः सम्बद्धाः, अपरं किंलक्षणाः राजानः सत्याऽनुरक्ताः सत्ये परमार्थे अनुरक्ताः, अपरं किंलक्षणा राजानः अत एव नरकस्य महारौरवावीच्यादेः जिष्णवः जयनशीलाः परमेण धर्माचरणेन ॥ ३ ॥

हस्तस्थितेति ॥ अत्र नृपविशेषणानि शार्ङ्गिण्यपि विभक्तिविपरिणामेन योज्यानि । हस्तस्थितैरखण्डितैश्चक्रैश्चक्ररेखाभिः शालन्त इति तथोक्ताः। अन्यत्र चक्रं सुदर्शनं तच्छालिनम् । द्विजेन्द्रकान्ता ब्राह्मणोत्तमप्रियाः । अन्यत्र द्विजेन्द्रश्चन्द्रः 'तस्मात्सोमराजानो ब्राह्मणाः' इति श्रुतेः । अत एव 'द्विजराजः शशधरः' इत्यमरः । तद्वत्कान्तं सुन्दरं श्रिया शोभया श्रितवक्षसो व्याप्तोरस्काः अन्यत्र रमयाऽधिष्ठितोरस्कम् । सत्ये सत्यवचनेऽनुरक्ताः, अन्यत्र सत्यायां सत्यभामायामनुरक्तम् । नरकस्य जिष्णवः, अन्यत्र नरकासुरस्य जेतारम् । 'ग्लाजिस्थश्च' इति ग्स्नुः । 'नरको निरये दैत्ये' इति विश्वः । एवंभूता नृपा एवंभूतं शार्ङ्गिणं गुणैर्विनयादिभिर्हेतुना अन्वयासिषुरनुजग्मुः । गुणैः पूर्वोक्तैरन्वकोर्षुश्च । यातेर्लुङि च्लेः सिच् । 'यमरम-' इति सगागमः सिच इडागमश्च । 'सिजभ्यस्त-' इति झेर्जुस् । अत्र शार्ङ्गिणो नृपाणां च प्रकृतत्वाच्छब्दमात्रसाधर्म्याच्च केवलः प्रकृतविषयः शब्दश्लेषः ॥ ३ ॥

**शुक्लैः सतारैर्मुकुलीकृतैस्थुलैः(१) कुमुद्वतीनां कुमुदाकरैरिव ॥**
**व्युष्टं प्रयाणं च वियोगवेदनाविदूननारीकमभूत्समं तदा ॥ ४ ॥**

**शुक्लैरिति** ॥ तदा तस्मिन् प्रयाणसमये व्युष्टं प्रभातं प्रयाणं च गमनं च सममभूत् युगपत् बभूव । यदैवाऽऽलोकीभूतं तदैव सेना चचालेत्यर्थः । अथ च समं सदृशं बभूव । इदानीं विशेषणमुखेन साम्यमाह-किंलक्षणं प्रयाणं कुमुद्वतीनां चामराऽऽतपत्रादिचिह्नयुक्तानां सेनानां थुलैः पटमण्डपैः उपलक्षितं, कैरिव कुमुदाकरैरिव कैरवखण्डैरिव । यथा कुमुदिनीनां

---

( १ ) कृतैः स्थुलैः।

कुमुदाकरैः अरविन्दैः व्युष्टमुपलक्षितम्, एवं प्रयाणं थुलैर्ज्ञातमित्यर्थः । किंलक्षणैः थुलैः शुक्लैर्धवलैः, अपरं किंलक्षणैः सतारैः सचन्द्रकैः, अपरं किंलक्षणैः मुकुलीकृतैः संवेष्टितैः, कुमुदाकरैरपि शुक्लैः तथा मुकुलीकृतैः सङ्कुचितैः, किं केवलैर्नेत्याह—सतारैः तारकाभिः सह मुकुलितैः । एवं साम्यम् । अपरं किंलक्षणं व्युष्टं प्रयाणं च वियोगवेदनाविदूननारीकं वियोगवेदनया विरहव्यथया विदूनाः सन्तप्ता नार्यः कामिन्यो यस्मिंस्तत्तथा, तत् कामिनीभ्यः कामिनां पृथक्त्वेन । थुल इति देशीयपदं दूष्यवाचकम्। देशीयेषु थुलशब्दं बाहुल्येन पठन्ति॥

शुक्लैरिति ॥ शुक्लैः शुभ्रैः सतारैः सरज्जुकैः सकर्णिकैश्च मुकुलीकृतैर्वहनसौकर्याय सङ्कोचितैः अन्यत्र रात्रिविकासित्वान्मुकुलतां नीतैः प्रौतैः स्थूलैर्दीर्घैः । पटमण्डपैरिति यावत् । कुमुदाकरैः कुमुदह्रदै- रिवोपलक्षितम् । अन्यत्र स्थूलैरिव कुमुदाकरैरुपलक्षितं वियोगवेदनया विरहव्यथया विदूनाः परितप्ताः । 'ल्वादिभ्यः' इति निष्ठानत्वम् । ता नार्यो यस्मिंस्तत्तथोक्तम् । द्वयोरपि वियोगकालत्वादिति भावः । 'नद्यृ- तश्च' इति कप् । कुमुदान्यासु सन्तीति कुमुद्वत्यः कुमुदप्राया भूमयः । 'कुमुद्वान्कुमुदप्राये' इत्यमरः । कैरविण्यो वा । 'कुमुद्वती कैरविण्याम्' इति विश्वः । 'कुमुदनडवेतसेभ्यो ड्मतुप्' इति ड्मतुप्प्रत्ययः। 'मादु- पधायाः–' इति मकारस्य वत्वम् । तासां कुमुद्वतीनां सम्बन्धे व्युष्टं प्रभातम् । 'व्युष्टं प्रभातं प्रत्यूषम्' इत्यभिधानचिन्तामणिः । तत्र किञ्चित्करत्वात्तत्सम्बन्धित्वं प्रयाणं च सेनानामिति शेषः । तदा तस्मिन् काले सममुक्तरीत्याऽन्योन्यसदृशमभूत् । व्युष्टप्रयाणयोर्द्वित्वेऽपि समुदायविवक्षायामभूदित्येकवचनम् । व्युष्टं प्रयाणं च द्वयमपि सममभूदित्यर्थः । अत्र वर्ण्यत्वेन प्रकृतस्य प्रयाणस्य प्रकृतव्युष्टसाम्योक्तेरुपमा श्लेषसङ्कीर्णा ॥ ४ ॥

उत्क्षिप्तगात्रः स्म विडम्बयन्नभः समुत्पतिष्यन्तमगेन्द्रमुच्चकैः ॥
आकुञ्चितप्रोहनिरूपितक्रमं करेणुरारोहयते निषादिनम् ॥ ५ ॥

उत्क्षिप्तेति ॥ करेणुर्गजः निषादिनं यन्तारम् आरोहयते स्म आरूरुहत् । निषादी आरोहति, तमारोहयत् हस्ती स्वयमेवेति । किंलक्षणः करेणुः उत्क्षिप्तगात्रः ऊर्ध्वीकृत- कायः, अपरं किंलक्षणः करेणुः उच्चकैरुन्नतः, अत एव किं कुर्वन् नभः समुत्पतिष्यन्तमाका- शमुत्पतितुकामम् अगेन्द्रं महागिरिं विडम्बयन् अनुकुर्वन्, कथं यथा भवति आरोहयते आकुञ्चितप्रोहनिरूपितक्रमं यथा भवति आकुञ्चितेन नम्रीकृतेन प्रोहेण पाश्चात्यजानुभागेन निरूपितः सूचितः क्रमः पादन्यासो यत्र क्रियायां तत्तथा । नम्रीकृतोच्चप्रोहमित्यर्थः । एषः मामारोहयति, यमारोढारं वक्तीवेत्यर्थः । यद्वा निषादिविशेषणमेतत् । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः ॥ ५ ॥

उत्क्षिप्तेति ॥ उत्क्षिप्तगात्र उन्नमितपूर्वकायः अत एव नभः खं प्रति समुत्पतिष्यन्तमुत्पतनोद्युक्तमगेन्द्रं महाद्रिं विडम्बयन्ननुकुर्वन्नित्युत्प्रेक्षा। अभूतोपमेति केचित् । उच्चकैरुन्नतः करेणुरिभः 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । आकुञ्चितो नमितः प्रोहो गजाऽङ्घ्रिः । 'गजाऽङ्घ्रिः प्रोहः' इति विश्वः । तत्र निरूपितक्रमं कृतपादन्यासं निषादिनं यन्तारमारोहयते स्म । स्वयमेव स्वात्मन्यारोपयतीत्यर्थः । रोहेर्गत्यर्थत्वात् 'गति- बुद्धि—' इत्यादिना अणि कर्तुर्निषादिनः कर्मत्वम् । अत्र कर्त्रभिप्राये 'णिचश्च' इत्यात्मनेपदे सिद्धेऽपि प्रयोगवैचित्र्यस्याऽप्यलङ्कारत्वादकर्त्रभिप्रायेऽपि 'णेरणौ यत्कर्म णौ चेत्स कर्ता नाध्याने' इत्यात्मनेपदं वदन्ति । अणि कर्मणः करेणोरेवाऽत्र ण्यन्ते कर्तृत्वात्तस्यैव चाऽर्थात्कर्मत्वादिति । ननु यत् 'स'ग्रहणमनन्य- कर्मार्थमित्युक्तं, तेन कर्ममात्रनिषेधात्कथं निषादिनि कर्मण्यात्मनेपदम् । सत्यम् , अन्येषां मतम् । भाष्य- कारस्य तु दर्शयते भृत्यान् राजेत्युदाहरणादणि कर्तृकर्मव्यतिरिक्तकर्मण एव निषेधो विवक्षित इति कैयटः । तदेतत्सम्यग्विवेचितमस्माभिः किरातार्जुनीयटीकायां घण्टापथे 'स सन्ततं दर्शयते गतस्मयः' इत्यत्र । स्वभावोक्तिः ॥ ५ ॥

**स्वैरं कृतास्फालनलालनान्(१) पुरः स्फुरत्तनून् दर्शितलाघवक्रियाः ॥**
**वङ्काऽवलग्नैकसवल्गपाणयस्तुरङ्गमानारुरुहुस्तुरङ्गिणः ॥ ६ ॥**

**स्वैरमिति** ॥ तुरङ्गिणोऽश्ववाराः तुरङ्गमान् वाजिनः आरुरुहुः अधितष्ठुः । किंलक्षणान् तुरङ्गमान् पुरः पूर्वं स्वैरं कृतास्फालनलालनान् स्वैरं शनैः कृता विहिता आस्फालनेन कराघातेन लालना परा प्रीतिर्येषां ते तथा तान्, अरं किंलक्षणान् तुरङ्गमान् अतएव स्फुरत्तनून् स्फुरन्त्यः चलन्त्यः तनवो देहा येषां ते तथा तान् कम्प्रदेहान्, किंलक्षणाः तुरङ्गिणः दर्शितलाघवक्रियाः दर्शिता लाघवक्रिया आरोहणादिना प्रावीण्यकर्म यैस्ते तथा, अपरं किंलक्षणाः तुरङ्गिणः वङ्काऽवलग्नैकसवल्गपाणयः वङ्के पर्याणपूर्वभागकाष्ठे अवलग्नः स्थितः एकः वामः सवल्गः हस्तवघ्रायुक्तः पाणिः करो येषां ते तथा । वल्गग्रहणपूर्वं हि काष्ठमवष्टभ्य अश्वारोहणं क्रियते इति स्वभावः ॥ ६ ॥

स्वैरमिति ॥ तुरङ्गिणोऽश्वारोहाः पुरः पूर्वं स्वैरं मन्दं कृतं यदास्फालनं पाणितलेनाऽङ्गसङ्घट्टनं तेन लालितानुपालितान् । त्याजितोद्वेगानित्यर्थः । अत एव स्फुरत्तनून् कम्पितदेहांस्तुरङ्गमानश्वान् दर्शितं लाघवं शैघ्र्यं यासु ताः क्रिया उत्पतनकर्माणि येषां ते. वङ्कः पल्याणकोटिः । 'वङ्कः पल्याणभागे स्यात्' इति विश्वः । तत्राऽवलग्नः सक्त एकैकः सवल्गो मुखरज्जुसहितः पाणिर्येषां ते तथोक्ताः सन्तः आरुरुहुरारूढाः । स्वभावोक्तिः ॥ ६ ॥

**अह्नाय यावन्न चकार भूयसे निषेदिवानासनबन्धमध्वने ॥**
**तीक्ष्णो(२)त्थितास्तावदसह्यरंहसो विशृङ्खलं शृङ्खलकाः प्रतस्थिरे ॥ ७ ॥**

**अह्नायेति** ॥ निषेदिवान् निषादी यावत् यत्कालपर्यन्तं भूयसे अध्वने दीर्घं मार्गं गन्तुम् अह्नाय क्षिप्रमासनबन्धमवस्थानस्थैर्यं न चकार न व्यधत्त, तावदेव शृङ्खलकाः करभाः विशृङ्खलं विषमशीघ्रं यथा भवति तथा प्रतस्थिरे अधावन्, किंलक्षणाः करभाः तीक्ष्णोत्थिताः वेगेनोत्थिताः । उष्ट्रा हि उपविष्टा आरुह्यन्ते । अपरं किंलक्षणाः उष्ट्राः असह्यरंहसः महावेगाः ॥ ७ ॥

अह्नायेति ॥ निषेदिवानुपर्युपविष्टः । निषादीति शेषः । 'भाषायां सदवसश्रुवः' इति क्वसुप्रत्ययः । भूयसे दवीयसे अध्वने । भूयांसमध्वानं गन्तुमित्यर्थः । 'क्रियार्थोपपदस्य-' इति चतुर्थी । अह्नाय झटिति । 'स्राक् झटित्यञ्जसाऽह्नाय' इत्यमरः । यावदासनबन्धं दूराध्वगमनौपयिकमासनविशेषं न चकार तावत्तीव्रं तीक्ष्णमुत्थिता असह्यरंहसो दुःसहवेगाः शृङ्खलकाः करभा उष्ट्रभेदाः । 'करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः' इत्यमरः । विशृङ्खलमनर्गलं प्रतस्थिरे प्रस्थिताः । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । एषाऽपि स्वभावोक्तिः ॥ ७ ॥

**गण्डोज्ज्वलामुज्ज्वलनाभिचक्रया विराजमानां नवयोदरश्रिया ॥**
**कश्चित्सुखं प्राप्तुमनाः सुसारथी रथीं युयोजाऽविधुरां वधूमिव ॥ ८ ॥**

**गण्डोज्ज्वलामिति** ॥ कश्चित् कोऽपि सुसारथिः सुप्रवीणसूतः रथीं गन्त्रीं युयोज व्यरचयत् । किंलक्षणः कश्चित् सुखं प्राप्तुमनाः अक्लेशं जिगमिषुः । पद्भ्यां हि दुःखेन गम्यते । किंलक्षणां रथीं गण्डोज्ज्वलां गण्डेन अक्षेण उज्ज्वला मनोज्ञा ताम्, अपरं किंलक्षणां रथीं नवया उदरश्रिया मध्यप्रदेशशोभया विराजमानां भासमानां, किंलक्षणया उदरश्रिया उज्ज्वलनाभिचक्रया उज्ज्वलं मनोज्ञं नाभिचक्रं पिण्डिकारन्ध्रं यस्याः सा तथा तया । 'पिण्डिका

(१) लालितान् । (२) तीव्रो० ।

नाभि'रित्यमरः । यद्वा नाभी च चक्रे च नाभिचक्रम्, उज्ज्वलं नाभिचक्रं यस्याः सा तथा तया रम्यपिण्डिकारथाङ्ग्या, अपरं किंलक्षणां रथीम् अविधुराम् अविनष्टा धूः अङ्ग-विशेषो यस्याः सा तथा तां, सधुरामित्यर्थः। कामिव युयोज वधूमिव । यथा कश्चित् सुखं प्राप्तुमनाः पुमान् वधूं नायिकां योजयति उद्वहति । किंलक्षणां वधूं गण्डोज्ज्वलां कपोलाभ्यां हृद्यां, तथा नवया तारुण्योपहितया उदरश्रिया मध्यप्रदेशलक्ष्म्या विराजन्तीं, किंलक्षणया उदरश्रिया उज्ज्वलनाभिचक्रया उज्ज्वलं मनोहारि नाभिचक्रं नाभिमण्डलं यस्याः सा तथा तया, अपरं किंलक्षणां वधूम् अविधुरामविक्लवां, चतुरामित्यर्थः ॥८॥

गण्डोज्ज्वलामिति ॥ सुखमक्लिष्टं यथा तथा प्राप्तुं गन्तुं मनो यस्य स प्राप्तुमनाः अन्यत्र सुखमानन्दं लब्धुकामः । 'तुं काममनसोरपि' इति मकारलोपः। शोभनः सारथिर्यस्य सः सुसारथिः अन्यत्र सुसहायवान् । कश्चित्कोऽपि रथी कामी च । गण्डैश्चिह्नैरुज्ज्वलाम् । 'गण्डः कपोले चिह्ने च' इति विश्वः। उज्ज्वलो नाभिर्बिलमध्यं ययोस्ते चक्रे रथाङ्गे यस्यास्तयोज्ज्वलनाभिचक्रया, अन्यत्रोज्ज्वलं नाभिचक्रं नाभिमण्डलं यस्यास्तया । 'नाभिः प्राण्यङ्गके क्षेत्रे चक्राङ्गचक्रवर्तिनोः' इति विश्वः । नवया प्रत्यग्रया उदुन्नता अराश्चक्रशलाकाः । 'अरः शीघ्रे च चक्राङ्गे' इति विश्वः । तेषां श्रिया अन्यत्र उदरस्य मध्यस्य श्रिया शोभया विराजमानां विगता धूरग्रं यस्याः सा विधुरा । 'धूः स्त्री क्लीबे यानमुखम्' इत्यमरः । 'ऋक्पू—' इत्यादिना समासान्तः । सा न भवतीत्यविधुरा ताम् । सधुरामित्यर्थः । अन्यत्राऽविधुरामविकलां रथीं शकटीम् । 'बह्वादिभ्यश्च' इति विकल्पेन ङीप् । वधूमिव युयोज योजयामास । अत्र शब्दमात्र-साधर्म्यात्सभङ्गाऽभङ्गपदमिश्रणादुभयगोचरत्वाच्च प्रकृताप्रकृतगोचराऽगोचरः शब्दार्थश्लेषः ॥ ८ ॥

उत्थातुमिच्छन् विधृतः पुरो बलान्निधीयमाने भरभाजि यन्त्रके ॥
अर्धोद्धृतो(१)द्गारविजर्जरस्वरः स्वनाम निन्ये रवणः स्फुटार्थताम् ॥९॥

उत्थातुमिति ॥ रवण उष्ट्रः स्वनाम आत्मीयं 'रवण' इत्यभिधानं स्फुटार्थताम् अभिधेयसद्भावेन व्यक्तत्वं निन्ये अलम्भयत् । किंलक्षणो रवणः भरभाजि गरीयसि यन्त्रके आतपनवस्तुनि निधीयमाने आरोप्यमाणे सति उत्थातुमिच्छन् उत्तिष्ठासुः, अपरं किंलक्षणो रवणः पुरोऽग्रे बलात् हठात् विधृतः अवष्टब्धः, अपरं किंलक्षणः अर्द्धोद्धृतोद्गारविजर्जर-स्वरः अर्द्धोद्धृतेन किञ्चिदुदीरितेन उद्गारेण चर्वितचर्वणेन विजर्जरः खण्डः स्वरो यस्य सः तथा । अतश्च रौतीति रवणः इति स्फुटार्थः ॥ ९ ॥

उत्थातुमिति ॥ रौतीति रवण उष्ट्रः । 'रु शब्दे' इति धातोः 'चलनशब्दार्थादकर्मकाद्युच्' इति युच्प्रत्ययः । भारारोपणाय यन्त्ररूपेण निर्मिते भरभाजि भारयुक्ते यन्त्रके गोण्यादौ निधीयमाने सति बलादुत्थातुमिच्छन्नुत्थाय गन्तुमिच्छन् अत एव पुरो मुखभागे विधृतो गृहीतः एवं स्वैराचारव्याघातत: अर्धोज्झितेनोद्गारेण स्वजग्धपिचुमर्दादिपत्त्ररसनेन विझर्झरो विषमः स्वरो यस्य सः रवण उष्ट्रः स्वनाम स्फुटार्थतां निन्ये । रौतीति रवण इति व्युत्पन्नं स्वनाम यथार्थमकरोदित्यर्थः ॥ ९ ॥

नस्यागृहीतोऽपि धुवन् विषाणयोर्युगं ससूत्कारविवर्तितत्रिकः ॥
गोणीं जनेन स्म निधातुमुद्यता(२)मनुक्षणं नोक्षतरः प्रतीच्छति ॥ १० ॥

नस्येति ॥ उक्षतरः तरुणवृषभः जनेन स्वामिलोकेन निधातुमुद्यतां क्षेप्तुमुद्धृतां गोणीं भाण्डक्षेपपात्रभूतशाणीम् अनुक्षणमसकृत् न प्रतीच्छति स्म नाङ्गीकरोति स्म । अङ्काय पुनःपुनश्चिक्षेपेत्यर्थः । किंलक्षणः उक्षतरः नस्यया नासारज्ज्वा गृहीतोऽपि अवष्टब्धोऽपि,

(१) ज्झितो०···झर्झर। (२) ०मुद्धृता० ।

किं कुर्वन् उक्षतरः विषाणयोर्युगं धुवन् शृङ्गयोर्युगलं कम्पयन्, अपरं किंलक्षणः ससूत्कारविवर्तितत्रिकः ससूत्कारं नादपूर्वं यथा भवत्येवं विवर्तितं चालितं त्रिकं पृष्ठकटीसन्धिर्येन सः तथा। नासिकायां भवा नस्या रज्जुः। 'नसी, नाथ' इति प्राकृतम्। 'पृष्ठवंशाऽधरे त्रिक'मित्यमरः ॥ १० ॥

नस्येति ॥ नस्या। नासिकाया नसादेशः। नासिकायां भवा नस्या। दिगादित्वाद्यत्। तस्यां नासिकाप्रोतरज्जौ गृहीतोऽपि विषाणयोर्युगं धुवन् विधुन्वन् शृङ्गद्वयं कम्पयन्। ससूत्कारेति। सूत्कार इति शब्दाऽनुकरणम्, अमर्षजः सशब्दनिश्वासो वा। ससूत्कारं यथा तथा विवर्तितं त्रिकं पृष्ठवंशाऽधरसन्धिर्येन। 'पृष्ठवंशाऽधरे त्रिकम्' इत्यमरः। उक्षतरो महोक्षः पृष्ठे निधातुं जनेनाऽनुक्षणमुद्धृतां गोणीं न प्रतीच्छति स्म न स्वीकृतवान्। निधातुमवसरं न दत्तवानित्यर्थः ॥ १० ॥

**नानाविधाऽऽविष्कृतसामजस्वरः सहस्रवर्त्मा चपलैर्दुरध्ययः ॥**
**गान्धर्वभूयिष्ठतया समानतां स सामवेदस्य दधौ बलोदधिः ॥ ११ ॥**

नानाविधेति ॥ स बलोदधिः माधवसैन्यसागरः सामवेदस्य समानतां दधौ साम्यमुवाह, कया गन्धर्वभूयिष्ठतया अश्वीयबहुलत्वेन। सामवेदोऽपि गान्धर्वेण गेयेन भूयिष्ठं गीयते। 'वाजिवाहाऽर्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः। गान्धर्वाः अश्वा भूयिष्ठा अतिबहवो यत्र स गान्धर्वभूयिष्ठः तस्य भावस्तथा तया। भूयोऽपि विशेषणद्वारेण साम्यमाह—किंलक्षणो बलोदधिः नानाविधाऽऽविष्कृतसामजस्वरः नानाविधा बहुप्रकाराः आविष्कृता प्रकटीकृताः सामजैर्मतङ्गजैः स्वरा नादा बृंहितानि यत्र सः तथा, अपरं किंलक्षणः बलोदधिः सहस्रवर्त्मा बहुमार्गः अतिविस्तृतत्वात्, अपरं किंलक्षणो बलोदधिः चपलैर्दुरध्ययः कातरैर्दुःखेन अधिगन्तुं यातुं शक्यते इति दुरध्ययः दुर्गमः। सामवेदोऽपि नानाविधा आविष्कृताः सामजाः सामसमुत्थाः षड्जादयः स्वरा यत्र सः तथा, चपलैर्मन्दमतिभिर्दुरध्ययः दुःखेन अध्येतुं शक्यः दुष्पठः, तथा सहस्रवर्त्मा सहस्रशाखः। सामजाः हस्तिनः। 'सामगानं कुर्वतो ब्रह्मणो हस्तात् हस्तिनो जाताः' इत्यागमः, इति कृत्वा। सामानि वाक्यविशेषस्था गीतयः ॥ ११ ॥

नानाविधेति ॥ सामजा गजाः। 'सामजो गजसामोत्थौ' इति शाश्वतः। नानाविधमाविष्कृताः सामजानां स्वरा ध्वनयो बृंहितानि यस्मिन् सः सहस्रवर्त्मा बहुभिर्मार्गैर्गच्छन्। गन्धर्वा एव गान्धर्वा अश्वाः। 'वाजिवाहाऽर्वगन्धर्व-' इत्यमरः। तैर्भूयिष्ठतया चपलैरस्थिरैः दुरध्ययो दुष्प्रापः। 'इण् गतौ' इत्यस्मात् कृच्छ्रार्थे खल्। ईदृशः स बलोदधिः सेनासमुद्रः सामवेदस्य समानतां दधौ। तत्समोऽभूदित्यर्थः। सामवेदोऽपि बहुधाविष्कृतबृहद्रथन्तरादिसामोत्थितस्वरः। सहस्रशाखत्वात्सहस्रवर्त्मा। गान्धर्वगानबहुत्वाच्चपलमतिभिरध्येतुमशक्य इत्यर्थः। 'इङ् अध्ययने' इत्यस्माद्धातोः खलि दुरध्यय इत्येवं रूपम् ॥

**प्रत्यन्यनागं चलितस्त्वरावता निरस्य कुण्ठं दधताऽन्यमङ्कुशम् ॥**
**मूर्धानमूर्ध्वायतदन्तमण्डलं धुवन्नरोधि द्विरदो निषादिना ॥ १२ ॥**

प्रत्यन्यनागमिति ॥ कश्चित् द्विरदः गजः निषादिना हस्तिपकेन अरोधि रुद्धः। वशीकृत इत्यर्थः। तमेव हेतुमाह—किंलक्षणो द्विरदः अन्यनागं प्रति इतरदन्तिसंमुखं चलितः धावितः, अत एव निषादिना किं कुर्वता कुण्ठं भग्नमङ्कुशं सृणिं निरस्य मुक्त्वा अन्यं तीक्ष्णमङ्कुशं दधता बिभ्रता, अपरं किंलक्षणेन निषादिना त्वरावता आकुलेन, अत एव किं कुर्वन् मूर्धानं धुवन् शिरः कम्पयन्, किंलक्षणं मूर्धानम् ऊर्ध्वायतदन्तमण्डलं ऊर्ध्व-

मुखमुखम् आयतं दीर्घं दन्तमण्डलं विषाणवलयं यस्य स तथा तम् । करमूर्ध्वीकृत्य रोषवशात् शिरः चालयन् अरोधीत्यर्थः ॥ १२ ॥

प्रत्यन्यनागामिति ॥ अन्यनागं प्रति चलित ऊर्ध्वायतदन्तमण्डलं मूर्धानं धुन्वन् कम्पयन् द्विरदः कुण्ठमतीक्ष्णमङ्कुशं निरस्याऽन्यमकुण्ठमङ्कुशं दधता त्वरावता निषादिना अरोधि रुद्धः ॥ १२ ॥

**संमूर्छदुच्छृङ्खलशङ्खनिःस्वनः स्वनः प्रयाते पटहस्य शार्ङ्गिणि ॥**
**सत्त्वानि निन्ये नितरां महान्त्यपि व्यथां द्वयेषामपि मेदिनीभृताम् ॥१३॥**

संमूर्छदिति ॥ शार्ङ्गिणि श्रीकृष्णे प्रयाते चलिते सति पटहस्य स्वनः दुन्दुभेः ध्वानः द्वयेषामपि उभयेषामपि मेदिनीभृतां मेदिनीं भुवं बिभ्रतीति ये तेषां नृपाऽद्रिनाम्नां सत्त्वानि धैर्यसिंहादीनि व्यथां निन्ये पीडां प्रापयामास । पीडयामासेत्यर्थः । राजानश्चाऽत्र विपक्षतो बोद्धव्याः । तेषां व्यथा आस्कन्दशङ्कया, सिंहादीनां तु जनोपद्रवात् । कदाचित् तानि अल्पानि स्युर्नेत्याह—किंलक्षणानि सत्त्वानि नितरामतिशयेन महान्त्यपि प्रबलान्यपि, किंलक्षणः स्वनः संमूर्छदुच्छृङ्खलशङ्खनिःस्वनः संमूर्छन् प्रसरन् उच्छृङ्खलः सर्वव्यापी शङ्खनिःस्वनः कम्बुध्वनिर्यत्र सः तथा ॥ १३ ॥

संमूर्छदिति ॥ 'मूर्छा मोहसमुच्छ्राययोः' इति धातुः । संमूर्छन्नुच्छ्रायं गच्छन् प्रचुरीभवन्नुच्छृङ्खलोऽनर्गलः सर्वव्यापी शङ्खस्य निःस्वनो यस्मिन् सः शार्ङ्गिणि प्रयाते यातुमुपक्रान्ते पटहस्य स्वनः द्वयेषामुभयेषामपि मेदिनीभृतां राज्ञां पर्वतानां च महान्त्यपि सत्त्वानि बलानि च नितरां व्यथां निन्ये । कृष्णस्य पटहश्रवणाद्राज्ञां बलान्यभिभवशङ्कया व्यथितान्यासन् । तथा गिरिस्थिताः सिंहादयो जन्तवश्च किमिदामिति ससाध्वसा आसन्नित्यर्थः ।

'व्यवसाये स्वभावे च पिशाचादौ गुणे बले ।
द्रव्याऽऽत्मभावयोश्चैवं सत्त्वं प्राणेषु जन्तुषु'॥

इति शाश्वतः ॥ १३ ॥

**कालीयकक्षोदविलेपनश्रियं दिशद्दिशामुल्लसदंशुमद्युति ॥**
**खातं खुरैर्मुद्गभुजां विपप्रथे गिरेरधः काञ्चनभूमिजं रजः ॥ १४ ॥**

कालीयकेति ॥ काञ्चनभूमिजं रजः सौवर्णाऽवनिजो रेणुः गिरेरधस्तात् रैवतकाद्रेरधोभागे विपप्रथे प्रससार । किंलक्षणं रजः मुद्गभुजामश्वानां खुरैः खातं शफैर्विदारितम् , अपरं किंलक्षणं रजः अंशुमद्द्युति रविपिशङ्गम् , अपरं किंलक्षणं रजः उल्लसत् प्रसरणशीलं, किं कुर्वत् दिशां कालीयकक्षोदविलेपनश्रियं दिशत् दिगङ्गनानां रक्तचन्दनचूर्णसमालम्भनशोभां कुर्वत् ॥

कालीयकेति ॥ कालीयं कुङ्कुमम् । 'काश्मीरजन्म घुसृणं कालीयं कुङ्कुमं विदुः' इति शाश्वतः । कालीयकक्षोदैः कुङ्कुमचूर्णैः कृताऽनुलेपनश्रियं दिशां दिशद्धत् । उल्लसदिति । उयदादित्यसमा द्युतिर्यस्य तत् मुद्गभुजामश्वानां खुरैः खातं विदारितं काञ्चनभूमिजं रजो गिरेरधो गुरुत्वाद्गिरेरधस्तादेव विपप्रथे विस्तीर्णमभवत् ॥ १४ ॥

**मन्द्रैर्गजानां रथमण्डलस्वनैर्निजुह्नुवे तादृशमेव बृंहितम् ॥**
**तारैर्बभूवे परभागलाभतः परिस्फुटैस्तेषु तुरङ्गहेषितैः ॥ १५ ॥**

मन्द्रैरिति ॥ मन्द्रैर्गम्भीरैः रथमण्डलस्वनैः स्यन्दनचक्रचीत्कारैः गजानां बृंहितं करिणां गर्जितं निजुह्नुवे अपलपितम् । यतस्तादृशं मन्द्रमेव, अतः सादृश्यादश्रवणम् । परं तुरङ्गहेषितैः वाजिहेषारवैः तेषु रथमण्डलस्वनेषु मध्ये परिस्फुटैर्बभूवे व्यक्तैर्जातं, कस्मात् परभागलाभतः गुणोत्कर्षप्राप्तेः अतिशयलाभात् । एतदपि कुतः, यतस्तारैः

उल्बणैः उदात्तैः । यः किल तारः स्वरस्तीक्ष्णः, स मण्डलेन समूहेन नाऽभिभूयते, सः अत्यन्तं तत्र परभागं लभते । 'परभागो गुणोत्कर्षः' इत्यमरः ॥ १५ ॥

मन्द्रैरिति ॥ मन्द्रैर्गम्भीरैः । 'मन्द्रस्तु गम्भीरे' इत्यमरः । रथमण्डलस्वनैः तादृशं तद्रूपमेव गजानां बृंहितं निजुह्नुवे तिरस्कृतम् । गजध्वनिरेकरूपत्वेन रथशब्दान्न पृथगश्रावीत्यर्थः । तारैरुच्चैस्तरैर्मन्द्रस्वरविलक्षणैस्तुरङ्गहेषितैः परभागलाभतस्तेषु तादृशध्वनिगुणभेदलाभात्तेषु गर्जादिस्वनेषु परिस्फुटैर्बभूवे । तुरङ्गहेषाः सुव्यक्ता एव शुश्रुविर इत्यर्थः । बृंहितं करिणां शब्दो हेषा ह्रेषा च वाजिनाम् । बभूवे इति भावे लिट् । निजुह्नुव इति कर्मणि लिट् ॥ १५ ॥

**अन्वेतुकामोऽवमताङ्कुशग्रहस्तिरोगतं साङ्कुशमुद्वहन् शिरः ॥**
**स्थूलोच्चयेनाऽगमदन्तिकागतां गजोऽग्रयाताग्रकरः करेणुकाम् ॥ १६ ॥**

**अन्वेतुकाम इति** ॥ कश्चित् गजः मतङ्गजः स्थूलोच्चयेन मध्यमगत्या अगमत् अयासीत् । किंलक्षणो गजः यतः अन्तिकागतां समीपस्थां करेणुकां हस्तिनीमन्वेतुकामः अनुजिगमिषुः, अत एव अपरं किंलक्षणो गजः अग्रयाताऽग्रकरः पुरःक्षिप्ताऽग्रहस्तः, करस्याऽग्रमग्रकरः अग्रयातः अग्रकरो यस्य सः तथा ॥ १६ ॥

अन्वेतुकाम इति ॥ अन्तिकागतां करेणुकां करिणीमन्वेतुकामोऽनुगन्तुकामः अङ्कुशं गृह्णातीत्यङ्कुशग्रहो निषादी सोऽवमतो येन सः निषादिना साऽङ्कुशं तिरोगतम् अङ्कुशाकर्षणेन तिर्यग्भूतं शिरो मस्तकमुद्वहन् गजः अग्रयाताऽग्रकरः करिणीग्रहणाय प्रसारितकराग्रो भूत्वा स्थूलोच्चयेन गतिविशेषेणाऽगमज्जगाम । 'गजमध्यगतौ स्थूलोच्चयः साकल्यपुञ्जयोः' इति रत्नप्रकाशः ॥ १६ ॥

**यान्तोऽस्पृशन्तश्चरणैरिवाऽवनिं जवात्प्रकीर्णैरभितः प्रकीर्णकैः ॥**
**अद्याऽपि सेनातुरगाः सविस्मयैरलूनपक्षा इव मेनिरे जनैः ॥ १७ ॥**

**यान्त इति** ॥ सेनातुरगाः चमूवाजिनः जनैर्लोकैः अद्यापि अधुनापि अलूनपक्षा इव मेनिरे अच्छिन्नाऽङ्गरुहा इव ज्ञाताः । अश्वाः पूर्वं हि सपक्षा आसन् । यत् एते छिन्नपक्षाः, तत्कथं सपक्षा बुद्धा इत्याह—किं कुर्वन्तोऽश्वाः यान्तो गच्छन्तः धावन्तः । उत्प्रेक्ष्यते—अवनिं भुवं चरणैः खुरैः अस्पृशन्त इव अस्पृशमाना(?) इव । ततो जवात् वेगेन अभितः पार्श्वद्वये प्रकीर्णैः विक्षिप्तैः प्रकीर्णकैश्चामरैरुपलक्षिताः । अतश्च पक्षनिभचामरसद्भावात् लाघवगमनाच्च सपक्षा एते इति बुबुधुः । अत एव जनैः किंलक्षणैः सविस्मयैः कौतुकिभिः ॥ १७ ॥

यान्त इति ॥ जवाद्वेगाच्चरणैरवनिमस्पृशन्त इव यान्तः सेनातुरगा अभितः प्रकीर्णैरुभयतः प्रसृतैः प्रकीर्णकैश्चामरैः । 'चामरं तु प्रकीर्णकम्' इत्यमरः । कण्ठभूषणचामरैर्हेतुभिरद्याऽप्यलूनपक्षा इवेति सविस्मयैर्जनैर्मेनिरे । पूर्वं तुरगाणामपि पक्षा आसन्, पश्चात्केनचित्कारणेन देवैः पक्षच्छेदः कारित इति प्रसिद्धिः॥

**ऋज्वीर्दधानैरवतत्य कन्धराश्चलाऽवचूलाकुल(१)घर्घराऽऽरवैः ॥**
**भूमिर्महत्यप्यविलम्बितक्रमं क्रमेलकैस्तत्क्षणमेव चिच्छिदे ॥ १८ ॥**

**ऋज्वीरिति** ॥ क्रमेलकैः उष्ट्रैः महत्यपि भूमिः दवीयानपि पन्थाः अविलम्बितक्रमं मङ्क्ष्वेव द्रुतपदं तत्क्षणमेव चिच्छिदे लङ्घिता । किंलक्षणैः क्रमेलकैः ऋज्वीः कन्धराः स्पष्टा ग्रीवाः दधानैः वहद्भिः, किं कृत्वा अवतत्य अवसार्य, अपरं किंलक्षणैः क्रमेलकैः चलाऽवचूलाकुलघर्घराऽऽरवैः चलैः चञ्चलैः अवचूलैश्चिह्नचामरैः आकुलः सत्वरः अन्तरेव

(१) चूडाः कल ।

अमन् घर्घराणां क्षुद्रघण्टिकानाम् आरवो ध्वनिर्येषां ते तथा तैः । केचित्त्वाहुः—चलावचूलै-राकुला व्याप्ता ये घर्घरा घण्टिकास्तासां रवैरुपलक्षिताः ॥ १८ ॥

ऋज्वीरिति ॥ ऋज्वीरवक्राश्चलाऽवचूडाश्चलितकण्ठभूषणाः । 'शिरःशिखाभूषणेषु चूडा' इति यादवः । चलितशिरस इति वा । कन्धराः शिरोधरा अवतत्य वितत्य दधानैः कलघर्घरारवैः । 'घर्घरा क्षुद्रघण्टी स्यात्' इति कोशः । अथ वा घर्घरारव इति शब्दाऽनुकरणम् । क्रमेलकैरुष्ट्रैरविलम्बितक्रमम् । क्रमः पदक्षेपः । द्रुतपादक्षेपं यथा तथा महत्यपि भूमिस्तत्क्षणमेव चिच्छिदेऽतिक्रान्ता । स्वभावोक्तिः ॥ १८ ॥

तूर्णं प्रणेत्रा कृतनादमुच्चकैः प्रणोदितं वेसरयुक्त(१)मध्वनि ॥
आत्मीयनेमिक्षतसान्द्रमेदिनीरजश्चयाऽऽक्रान्तिभयादिवाऽद्रवत् ॥ १९ ॥

तूर्णमिति ॥ वेसरयुक्तं खरशकटीनाम यानमुच्यते । वैसरैरश्वतरैर्युक्तम् इति कृत्वा तद्यानं तूर्णमद्रवत् पलायाञ्चक्रे । किंलक्षणं वेसरयुक्तं प्रणेत्रा सूतेन प्रणोदितं प्रेरितम् अत एव कृतनादं विहिताऽऽरावम् , अपरं किंलक्षणं वेसरयुक्तम् उच्चकैः उन्नतम् । वेसराः हि अत्युच्चा भवन्तीति प्रसिद्धम् । तूर्णगमने निमित्तान्तराऽऽरोपामुत्प्रेक्षामाह—कस्मात् अद्रवत् आत्मीयनेमिक्षतसान्द्रमेदिनीरजश्चयाऽऽक्रान्तिभयादिव आत्मीयनेमिभिः स्वचक्र-धाराभिः क्षतं खातं यत् सान्द्रं निबिडं मेदिनीरजः भूरेणुः तस्य चयो वृन्दं तेन या आक्रान्तिः अध्यासनं तस्याः यत् भयं साध्वसं तस्मादिव । एतेन पृष्ठानुगामी वायुरुक्तः ॥ १९ ॥

तूर्णमिति ॥ प्रणेत्रा सारथिना प्रणोदितं गमनाय प्रेरितम् । अत एव उच्चकैरुच्चैस्तरां कृतनादं यथा तथा वेसरयुग्यम् । सङ्करोऽश्वो वेसरः । वेसराभ्यां युग्यं शकटमात्मीयनेमिः स्वचक्रधारा तया क्षतस्य सान्द्रस्य मेदिनीरजसश्चयेन समूहेन यदाक्रमणं तद्भयादिव तूर्णमध्वन्यद्रवत् । आत्मीयनेमिसमुद्भूतधूलि-जालेनाऽस्पृष्टं सत् द्रुतमगमादित्यर्थः ॥ १९ ॥

व्यावृत्तवक्त्रैरखिलैश्चमूचरैर्व्रजद्भिरेव क्षणमीक्षिताननाः ॥
वल्गद्गरीयःकुच(२)कम्प्रकञ्चुकं ययुस्तुरङ्गाधिरुहोऽवरोधिकाः ॥२०॥

व्यावृत्तेति ॥ अवरोधिका निशान्तनार्यो ययुः गच्छन्ति स्म, किंलक्षणा अव-रोधिकाः तुरङ्गाऽधिरुहः तुरङ्गेषु अधिरोहन्तीति अश्वारूढाः। अश्वानारुह्य जग्मुरित्यर्थः। कथं यथा भवति ययुः वल्गद्गरीयःकुचकम्प्रकञ्चुकं यथा स्यात् वल्गन्तो नृत्यन्तो गरीयांसः पीवराः ये कुचाः स्तनाः तेषु कम्प्रं चञ्चलं कञ्चुकं(?) वारबाणं यत्र क्रियायां तत्तथा, अपरं किंलक्षणाः अवरोधिकाः व्रजद्भिरेव गच्छद्भिरेव अखिलैः समग्रैश्चमूचरैः सैनिकैः क्षणं क्षणमात्रमीक्षिताननाः दृष्टवक्त्रश्रियः, किंलक्षणैः सेनाचरैः व्यावृत्तवक्त्रैः व्यावृत्तं परि-वर्तितं वक्त्रं वदनं यैस्ते तथा तैः । मुखं व्यावृत्य कौतुकात् क्षणवीक्षितमुखशोभैः ॥२०॥

व्यावृत्तेति ॥ व्यावृत्तवक्त्रैर्विवृत्तमुखैर्व्रजद्भिरेवाऽखिलैश्चमूचरैः क्षणमीक्षिताननास्तुरङ्गाऽधिरुहः । तुरङ्गा-नधिरोहन्तीति क्विप् । तुरङ्गाधिरूढा अवरोधिका अवरोधस्त्रियो वल्गद्भिश्चलद्भिर्गरीयोभिर्गुरुतरैः स्तनैः कम्प्रः कम्पनशीलः कञ्चुकः कूर्पासो यस्मिन् कर्मणि तद्यथा तथा ययुः । 'नामिकम्पि—' इत्यादिना रः प्रत्ययः॥२०

पादैः पुरः कूबरिणां विदारिताः प्रकाममाक्रान्ततलास्ततो गजैः ॥
भग्नोन्नताऽनन्तरपूरिताऽऽनता बभुर्भुवः कृष्टमती(३)कृता इव ॥ २१ ॥

पादैरिति ॥ भुवो बभुः भूमयो विरेजुः । कीदृश्यः पुरः पूर्वं कूबरिणां रथानां पादैः चक्रैः प्रकाममत्यर्थं विदारिताः पाटिताः, किंलक्षणा भुवः ततः पश्चात् गजैः करिभिः

---

(१) युग्य । (२) स्तन । (३) पूरिताऽन्तरा···कृष्टसमी० ।

आक्रान्ततलाः अधिष्ठितपृष्ठाः, अपरं किंलक्षणा भुवः भग्नोन्नताऽनन्तरपूरितानताः भग्नोन्नताः क्षतोच्चभागाः अनन्तरं पश्चात् परिपूरिताऽऽनताः भरितरन्ध्रप्रदेशाः। गजाक्रान्तत्वात्साम्यमापादिताः। अपरं किंलक्षणा भुवः, उत्प्रेक्ष्यन्ते–कृष्टमतीकृता इव पूर्वं कृष्टा हलैर्विलिखिताः पश्चात् मतीकृताः समीकृताः। समा रदीधी(?) भूः प्राकृतम् ॥ २१ ॥

पादैरिति ॥ कूबरिणां रथानाम्। 'कूबरस्तु युगन्धरः' इत्यमरः। स एषामस्तीति ते रथास्तेषां पादैश्चक्रैः पुरः पूर्वं विदारिताः ततो गजैः प्रकाममाक्रान्ततलः भग्नैरुक्तप्रकारेण पूर्वं भग्नत्वादुन्नतैरनन्तरैरुभयभागैः पूरिताऽन्तराः समीकृतनिम्नप्रदेशाः। यद्वा पूर्वं रथचक्रविदारितत्वाद्भग्नोन्नता अनन्तरं गजपतिपरिक्रमणेन पूरिताऽऽनतप्रदेशाः भुवः कृष्टसमीकृताः पूर्वं हलैः कृष्टा अनन्तरं बीजवपनार्थम् समीकृता इव बभुः शुशुभिरे ॥ २१ ॥

**दुर्दान्तमुत्प्लुत्य (१) निरस्तसादिनं सहासहाकारमलोकयज्जनः ॥**
**पर्याणतस्त्रस्त(२)मुरोविलम्बिनस्तुरङ्गमं प्रद्रुतमेकया दिशा ॥ २२ ॥**

दुर्दान्तमिति ॥ जनो लोकः कश्चित्तुरङ्गमं घोटकम् अलोकयत् ऐक्षत। कथं यथा भवति सहासः सहास्यो हाकारः हाहाशब्दो यत्र क्रियायां तद्यथा भवति, किंलक्षणं तुरङ्गमं दुर्दान्तं दुर्दममशिक्षितम्, अपरं किंलक्षणं तुरङ्गमं पर्याणतः पल्ययनात् त्रस्तं भीतं, किंलक्षणात् पर्याणतः उरोविलम्बिनः वक्षसि लम्बमानात्, अत एव अपरं किंलक्षणं तुरङ्गमम् उत्प्लुत्य ऊर्ध्वीभूय निरस्तसादिनं पातिताऽश्ववारम्, अपरं किंलक्षणं तुरङ्गमम् एकया दिशा एकदिग्भागेन प्रद्रुतं पलायितम्। अतश्च जनः सहासहाकारमीक्षामास। आरोहक्षेपात् हासः, पीडितोरुपादपृष्ठात हाकारः ॥ २२ ॥

दुर्दान्तमिति ॥ उरोविलम्बिनः पर्याणतः पल्ययनतः स्रस्तमत एवोत्प्लुत्य निरस्तसादिनं स्वपृष्ठात् पातिताऽवरोहमेकया दिशा प्रद्रुतं पलायितं दुर्दान्तं दुर्विनीतं तुरङ्गमं हासकृतेन हाकारेण सह यथा तथा जनोऽवलोकयदवलोकितवान् ॥ २२ ॥

**भूभृद्भिरप्यस्खलिता (३) खलून्नतैरपह्नुवाना सरितः पृथूरपि ॥**
**अन्वर्थसंज्ञेव परं त्रिमार्गगा ययावसङ्ख्यैः पथिभिश्चमूरसौ ॥ २३ ॥**

भूभृद्भिरिति ॥ असौ चमूः श्रीकृष्णसेना असङ्ख्यैः पथिभिर्ययौ बहुलैर्मार्गैः जगामेति बाहुल्योक्तिः। किंलक्षणा चमूः उन्नतैस्तेजस्विभिः भूभृद्भिः राजभिः अस्खलिता अपरिभूता, अपरं किंलक्षणा सेना पृथूरपि बृहतीरपि सरितः आपगा अपह्नुवाना स्थगयन्ती, धूल्या जनभरात्तटलोठनेन कर्दमाभावाच्च। ननु त्रिपथगा गङ्गापि एवंविधा स्यात्, किंलक्षणा त्रिपथगा उच्चकैः उन्नतैरपि भूभृद्भिः पर्वतैः अस्खलिता अनिषिद्धप्रसरा, अपरं पृथूरपि सरितः महतीरपि नदीः अपह्नुवाना अपलपन्ती, तत्सन्निधौ सामान्येन अलक्षितत्वात्। तत्कोऽयमस्या विशेष इत्याह—त्रिमार्गगा गङ्गा परं केवलमन्वर्थसंज्ञैव अर्थाऽनुगतनामैव, त्रिभिः भागैः गच्छतीति कृत्वा। असौ सेना तु असङ्ख्यमार्गगेति ॥

भूभृद्भिरिति ॥ उन्नतैरपि भूभृद्भिः भूधरैर्भूपैः पश्चात् स्खलिता अप्रतिहताः पृथूर्महतीरपि सरितो यमुनाप्रभृतीर्नदीरपह्नुवाना स्वमहिम्नाऽऽच्छादयन्ती त्रिभिर्मार्गैर्गच्छतीति त्रिमार्गगा गङ्गा परमत्यन्तमन्वर्थाऽनुगतार्था संज्ञा त्रिमार्गगेति नामधेयं यस्याः सेव खलु। त्रिभिरेव मार्गैर्ययौ न चतुर्थेनेत्यर्थः। असौ चमूस्त्वसङ्ख्यैः पथिभिर्ययौ। अतो गङ्गाया अप्यधिका चमूरिति भावः। अत एव व्यतिरेकालङ्कारः।

(१) मुत्कृत्य। (२) ०तः स्रस्त। (३) ०स्खलिताः।

'भेदप्राधान्यसाधर्म्यमुपमानोपमेययोः ।
अधिकाऽल्पत्वकथनाद्व्यतिरेकः स उच्यते' ॥

इति लक्षणात् ॥ २३ ॥

**त्रस्तौ समासन्नकरेणुसूत्कृतान्नियन्तरि व्याकुलमुक्तरज्जुके ॥**
**क्षिप्तावरोधाऽङ्गनमुत्पथेन गां विलङ्घ्य लङ्घीं(१) करभौ बभञ्जतुः ॥२४॥**

**त्रस्ताविति** ॥ करभौ उष्ट्रौ उत्पथेन अमार्गेण विलङ्घ्य आक्रम्य लङ्घीं बभञ्जतुः गन्त्रीं भञ्जयामासतुः । उष्ट्रयुग्मयोजितं च काष्ठादिकं लङ्घी । केचित्तु पर्यासन्नकपर्याणरूपं लङ्घीत्याहुः। भङ्गस्य निमित्तमुत्पथगमनम् । तस्यापि कारणमाह—किंलक्षणौ करभौ समासन्नकरेणुसीत्कृतात् त्रस्तौ समीपस्थमतङ्गजबृंहिताद्भीतौ, कथं यथा भवति क्षिप्तावरोधाऽङ्गनं यथा भवति क्षिप्ता निरस्ता अवरोधाङ्गनाः निशान्तनार्यो यत्र क्रियायां तद्यथा भवत्येवं निरस्ताऽन्तःपुरनारीकं यथा स्यात्, क्व सति नियन्तरि सारथौ व्याकुलमुक्तरज्जुके सति व्याकुलं सत्वरम् यथा भवति तथा मुक्ता त्यक्ता रज्जुः दाम येन सः तथा तस्मिन् सत्वरशिथिलरज्जुके सति ॥ २४ ॥

**त्रस्ताविति** ॥ समासन्नस्य प्रत्यासन्नस्य करेणोरिभस्य सूत्कृतात्सूत्कारात् त्रस्तौ करभौ वेसरौ । 'करभो वेसरेऽप्युष्ट्रे' इति **सज्जनः** । नियन्तरि सारथौ व्याकुलं व्यग्रं यथा तथा मुक्तरज्जुके त्यक्तप्रग्रहे सति क्षिप्ताः पतिता अवरोधाङ्गना यस्मिन्कर्मणि तद्यथा तथा उत्पथेनाऽपथेन। 'ऋक्पूः—' इत्यादिना समासान्तः । गां भूमिं विलङ्घ्य दूरमतीत्य लघ्वीं रथविशेषम् । 'लघ्वी लाघवयुक्तायां प्रभेदे स्यन्दनस्य च' इति **हैमः** । बभञ्जतुर्भग्नवन्तौ । अत्र त्रासस्य विशेषणगत्या भञ्जनहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गं स्वभावोक्त्या सङ्कीर्यते ॥ २४ ॥

**स्रस्ताऽङ्गसन्धौ विगताऽक्षपाटवे रुजा निकामं विकलीकृते रथे ॥**
**आप्तेन तक्ष्णा भिषजेव तत्क्षणं प्रचक्रमे लङ्घनपूर्वकः क्रमः ॥ २५ ॥**

**स्रस्ताङ्गेति** ॥ रथे स्यन्दने रुजा भङ्गेन निकाममत्यर्थं विकलीकृते शिथिलत्वेन भारवाहनगमनाऽक्षमत्वमापादिते सति आप्तेन सयत्नेन तक्ष्णा सूत्रधारेण तत्क्षणं तस्मिन्नेवाऽवसरे क्रमः उपायः प्रचक्रमे प्रारेभे । किंलक्षणः क्रमः लङ्घनपूर्वकः लङ्घनम् अङ्गविशेषः तत् पूर्वं प्रथमं यत्राऽसौ । आदौ लङ्घनं युयोजेत्यर्थः । केचित्तु लङ्घनमाक्रमणमाहुः । किंलक्षणे रथे विगताऽक्षपाटवे विगतं नष्टम् अक्षस्याऽङ्गविशेषस्य पाटवं सामर्थ्यं यस्य सः तथा तस्मिन् नष्टाऽक्षसामर्थ्ये, यतः अपरम् किंलक्षणे रथे स्रस्ताङ्गसन्धौ स्रस्ताः शिथिलाः अङ्गानां कूबरादीनां सन्धयो बन्धनस्थानानि यस्य सः तस्मिन् । केनेव प्रचक्रमे इत्याह—भिषजेव चिकित्सकेनेव । यथा शरीरे रुजा रोगेण अत्यर्थं विकलीकृते सति अवसादं प्रापिते सति अत एव स्रस्ताऽङ्गसन्धौ निःसहकटिपृष्ठजङ्घादिमर्मणि तथा विगताऽक्षपाटवे प्रणष्टेन्द्रियसामर्थ्ये सति आप्तेन आयुर्वेदवित्त्वाच्चतुरेण भिषजा वैद्येन तत्क्षणं लङ्घनपूर्वकः उपवासपूर्वकः क्रमः उपायः चिकित्साद्युपायः प्रक्रम्यते प्रारभ्यते ॥ २५ ॥

**स्रस्ताङ्गेति** ॥ स्रस्ता विश्लिष्टा अङ्गयो रथाङ्गयोरङ्गानां करचरणादीनां च सन्धयः सन्धिभागा यस्य तस्मिन् विगतमक्षस्य चक्राधारकाष्ठस्याऽक्षाणामिन्द्रियाणां च पाटवं सामर्थ्यं यस्य तस्मिन् रथे स्यन्दने शरीरे च 'रथः स्यात्स्यन्दने काये' इति **विश्वः** । रुजा भङ्गेन रोगेण च निकामं विकलीकृते सति आप्तेन हितेन

---

(१) लघ्वीं ।

तक्ष्णा वर्धकिना आप्तेन भिषजा वैद्येनेव । 'तक्षा तु वर्धकिस्त्वष्टा' इत्यमरः । तत्क्षणं तस्मिन्नेव क्षणे । अत्यन्तसंयोगे द्वितीया । लङ्घनं पादेनाऽऽक्रमणम् उपवासश्च । 'लङ्घनं तूपवासे स्यात्क्रमने प्लवनेऽपि च' इति विश्वः । तत्पूर्वकः क्रमो विधिः प्रचक्रमे प्रक्रान्तः । प्रायेण ज्वरादिचिकित्साया लङ्घनपूर्वकत्वादिति भावः । श्लेषालङ्कारः ॥ २५ ॥

**धूर्भङ्गसंक्षोभविदारितोष्ट्रिकागलन्मधुप्लावितदूरवर्त्मनि ॥**
**स्थाणौ विषङ्गि(१)ण्यनसि क्षणं पुरः शुशोच लाभाय कृतक्रयो वणिक् ॥**

**धूर्भङ्गेति ॥ कश्चित् वणिक् वाणिजकः शुशोच दुःखायते स्म । कदा क सति पुरोऽग्रेवर्तिनि स्थाणौ अर्धछिन्नशुष्कवृक्षे करणभूते सति अनसि शकटे विषङ्गिणि सम्बद्धे सति । किमित्येतावता शुशोचेत्याह—किंलक्षणे अनसि धूर्भङ्गसंक्षोभविदारितोष्ट्रिकागलन्मधुप्लावितदूरवर्त्मनि धुरः शकटाङ्गस्य यो भङ्गः स्थाणुविघातात् स्फोटः तेन यः संक्षोभः स्थानाच्चलनं तेन विदारिताः चूर्णीकृताः या उष्ट्रिकाः मृन्मयानि मद्यभाण्डानि ताभ्यो गलत् च्यवत् यत् मधु मद्यं तेन प्लावितं पूरितं दूरमत्यर्थं वर्त्म मार्गो येन सः तथा तस्मिन्, किंलक्षणो वणिक् लाभाय वृद्धये कृतक्रयः विहितविक्रयः । तेन हि एतदर्थं मधु क्रीतं—यदैतत् विक्रीयते, तदा लाभो भविष्यति इत्येवमाशशंसे । परं मूलद्रव्यमेव नष्टमिति दुःखायते स्मेत्यर्थः ॥ २६ ॥**

धूर्भङ्गेति ॥ स्थाणौ कीले । 'स्थाणुः कीले स्थिरे हरे' इति विश्वः । निषङ्गिणि सक्ते अनसि शकटे । 'क्लीबेऽनः शकटोऽस्त्री स्यात्' इत्यमरः । धुरोऽक्षस्य भङ्गेन यः संक्षोभो विपर्यासस्तेन विदारिता भिन्ना या उष्ट्रिका मृन्मयं मद्यभाण्डम् । 'उष्ट्रिका मृत्तिकाभाण्डभेदे करभयोषिति' इति विश्वः । ततो गलता स्रवता मधुना मद्येन प्लावितं सिक्तं दूरवर्त्म दीर्घाऽध्वा येन तस्मिन् । तथा सति पुरः पूर्वं लाभाय कृतः क्रयः क्रयणं येन स यवणिक् चणं शुशोच । अत्र मधुस्रावधनव्ययोर्विशेषणगत्या शोकहेतुत्वात्काव्यलिङ्गभेदः २६

**भेरीभिराकृष्ट(२)गुहामुखो मुहुर्ध्वजांशुकैस्तर्जितकन्दलीवनः ॥**
**उत्तुङ्गमातङ्गजिताऽलघूलपो बलैः स पश्चात्क्रियते स्म भूधरः ॥ २७ ॥**

**भेरीभिरिति ॥ योऽसौ भूधरः पर्वतः रैवतकाचलः बलैः सैन्यैः पश्चात् क्रियते स्म अतिचक्रमे । उल्लङ्घित इत्यर्थः । अथ वा पश्चात्कृतः अभिभूतः इत्यर्थान्तरम् । किंलक्षणो भूधरः, अभिभवमाह—भेरीभिराकृष्टगुहामुखः दुन्दुभिध्वनिभिः आकृष्टानि व्याप्तानि विदारितानि गुहामुखानि दरीविवराणि यस्य सः तथा, अपरं किंलक्षणः भूधरः ध्वजांशुकैश्चिह्नपताकाभिः तर्जितकन्दलीवनः तर्जितानि अत्युच्चत्वाद्भर्त्सितानि कन्दलीवनानि कदलीकाननानि यत्र सः तथा,अपरं किंलक्षणो भूधरः उत्तुङ्गमातङ्गजिताऽलघूपलः उत्तुङ्गैः उच्चैः मातङ्गैर्गजैर्जितास्तिरस्कृता अलघूपला गण्डशैला यत्र सः तथा। 'भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । 'कदली कन्दली मोचा', 'गण्डशैला महोपलाः' इति वैजयन्ती ॥ २७ ॥**

**भेरीभिरिति** ॥ भेरीभिराकृष्टानि निन्दितानि महान्ति गुहामुखानि येन सः । भेरीझङ्कारभर्त्सितनितान्तवात्यामुखरमहागुहाद्वार इत्यर्थः । ध्वजांशुकैस्तर्जितानि भर्त्सितानि कन्दलीदलानि गुल्मपत्राणि येन सः । उत्तुङ्गैर्मातङ्गैर्जिता अलघूपलाः स्थूलपाषाणा येन स भूधरो रैवतकाद्रिर्बलैः सैन्यैः पश्चात्क्रियते स्म पश्चात्कृतः । स्वयं दूरगमनेन पृष्ठतः कृत इत्यर्थः । उक्तविशेषणमहिम्ना अधरीकृत इति च प्रतीयते । 'लट् स्म' इति भूतार्थे लट् । आकृष्टेति क्रोशतेः कर्मणि क्तः । व्रश्चादित्वात्षत्वे ष्टुत्वम् । अत्र पश्चात्करणस्याऽऽकृष्टादिपदार्थहेतुकत्वात्काव्यलिङ्गम् । तच्चोक्तप्रतीयमानाभेदाध्यवसायादिति श्लेषमूलातिशयोक्तिसङ्कीर्णम् ।'तेन बलानां भूधरौपम्यं गम्यते इत्यर्थालङ्कारध्वनिः ॥ २७ ॥

---

(१) निषङ्गि । (२) ०राक्रुष्टमहागुहामुखो ध्वजा० ।

**वन्येभदानाऽनिलगन्धदुर्धराः क्षणं तरुच्छेदनिवर्तित(१)क्रुधः ॥**
**व्यालद्विपा यन्तृभिरुन्मदिष्णवः कथञ्चिदारादपथेन निन्यिरे(२) ॥२८॥**

**वन्येभेति** ॥ यन्तृभिः हस्तिपकैः व्यालद्विपाः दुष्टगजाः कथञ्चित् महता कष्टेन आरात् समीपात् अपथेन अमार्गेण निन्यिरे नीयन्ते स्म । किंलक्षणाः व्यालद्विपाः उन्मदिष्णवः उन्मदितुं शीलं येषां ते उन्मदिष्णवः उन्मत्ताः, अपरं किंलक्षणाः व्यालद्विपाः वन्येभदानाऽनिलगन्धदुर्धराः वनभवगजमदपवनपरिमलदुर्धरणीयाः, अपरं किंलक्षणाः व्यालद्विपाः क्षणमात्रं तरुच्छेदनिवर्तितक्रुधः तरुच्छेदेन वृक्षाणां भञ्जनेन निवर्तिता विनोदिताः क्रुधः कोपा येषां ते तथा वृक्षभङ्गविनिवर्तितकोपाः ॥ २८ ॥

वन्येभेति ॥ वन्येभदानाऽनिलगन्धेन वनगजमदमारुतगन्धाघ्राणेन दुर्धराः क्रोधान्धा दुर्ग्रहाः अत एव क्षणं तरुच्छेदे विनोदितक्रुधः प्रतिगजाऽसान्निध्ये वृक्षाणां भङ्गेनापनीतक्रोधाः उन्मदिष्णवोऽत्यन्तमदशीलाः । 'अलंकृञ्–' इत्यादिना इष्णुच् । व्यालद्विपा दुष्टगजा यन्तृभिराधोरणैः कथञ्चिदाराद् दूरमपथेनाऽमार्गेण । 'पथो विभाषा' इति निषेधविकल्पात् 'ऋक्पूः–' इत्यादिना समासान्तः । 'अपथं नपुंसकम्' इति नपुंसकत्वम् । निन्यिरे नीताः । अत्रापि द्विपविशेषणानां तदुपमेयहेतुकत्वात्काव्यलिङ्गं सत्स्वभावोक्त्या सङ्कीर्यते ॥

**निम्नानि दुःखादवतीर्य सादिभिः सयत्नमाकृष्टकशाः शनैः शनैः ॥**
**उत्तेरुरुत्तालखुराऽऽरवं द्रुताः श्लथीकृतप्रग्रहमर्वतां व्रजाः ॥ २९ ॥**

**निम्नानीति** ॥ अर्वतां व्रजाः अश्वानां सङ्घाः उत्तेरुः उत्तीर्णाः, किंलक्षणा अर्वतां व्रजाः द्रुता वेगवन्तः । कथमुत्तेरुः इत्याह—श्लथीकृतप्रग्रहं श्लथीकृतः शिथिलतामापादितः प्रग्रहो रश्मिः यत्र क्रियायां तद्यथा भवति शिथिलितरश्मि, अपरं कथं यथा भवति उत्तालखुराऽऽरवं यथा भवति तथा उत्तालः उद्भटः खुराऽऽरवः पादध्वनिर्यत्र क्रियायां तद्यथा भवति, किं कृत्वा उत्तेरुः निम्नानि स्थानानि दुःखादवतीर्य कृच्छ्रादुल्लङ्घ्य, अपरं किंलक्षणाः अर्वतां सङ्घाः सादिभिरश्वारोहैः सयत्नं सावधानं यथा भवति तथा शनैःशनैः मन्दंमन्दम् आकृष्टकशा आकृष्टाः पश्चान्नीताः कशा आकर्षणरज्जवो येषां ते तथा पश्चान्नीताऽऽकर्षणरज्जवः ॥ २९ ॥

निम्नानीति ॥ अर्वतामश्वानाम् । 'वाजिवाहाऽर्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः । 'अर्वणस्त्रसावनञः' इति त्रादेशः । सादिभिरश्वारूढैः । सयत्नमाकृष्टकशा दृढगृहीतवल्गाः सन्तः । यद्यपि 'अश्वादेस्ताडनी कशा' इत्यमरः । तथाप्यत्र 'ताडनीवल्गयोः कशा' इति दर्शनादविरोधः । शनैःशनैर्दुःखात्कृच्छ्रान्निम्नानि निम्नभूप्रदेशानवतीर्य उत्तालखुराऽऽरवमुच्चतरशफशब्दं श्लथीकृतप्रग्रहं शिथिलितवल्गं च यथा तथा द्रुताः सत्वराः सन्त उत्तेरुरुत्पुप्लुविरे । निम्नेषु शनैरवतीर्य दीर्घं धावन्तीत्यश्वानां स्वभाव इति भावः । अत एव स्वभावोक्तिः ॥

**अध्यध्वमारूढवतैव केनचित्प्रतीक्षमाणेन जनं मुहुर्धृतः ॥**
**दाक्ष्यं हि सद्यः फलदं यदग्रतश्चखाद दासेरयुवा वनावलीः ॥ ३० ॥**

**अध्यध्वमिति** ॥ कश्चिद्दासेरयुवा तरुणोष्ट्रः अग्रतः पुरोवर्तमानाः वनावलीः चखाद काननश्रेणीर्जघास । किंलक्षणो दासेरयुवा केनचिदारूढवता आरोहेण अध्यध्वम् अध्वनि जनं सहायान् प्रतीक्षमाणेनैव सता मुहुर्धृतः रुद्धः । युक्तोऽयमर्थः, हि यस्मात्कारणात् यत् दाक्ष्यं दक्षत्वं चातुर्यं सद्य एव फलदं फलदायि अर्थप्रदं भवति । यदि हि दाक्ष्यं सद्यः फलदं न स्यात्तत्कथमुपर्यारोहे सत्यपि क्षणं रोधमात्रेणैव असौ तरुशाखा भक्षयेत ॥ ३० ॥

अध्यध्वमिति ॥ दक्षस्य भावो दाक्ष्यं कौशलं सद्यः फलदम् । कुतः–यद् यस्मादध्यध्वमध्वनि । विभ-

---

(१) विनोदित ।　　(२) इतः परं 'तं वैजयन्ती' 'तस्थे मुहूर्त'मिति श्लोकौ सर्वङ्कषायां स्तः ।

क्त्यर्थेऽव्ययीभावः, 'अनश्च' इति समासान्तोऽच्प्रत्ययः 'नस्तद्धिते' इति टिलोपः । आरूढवत्तैवारूढैव स्थितेन । 'निष्ठे'ति रुहेः क्तवतुप्रत्ययः । जनं शनैः पश्चादागच्छन्तं स्वजनं प्रतीक्षमाणेन । केनचित्पुंसेति शेषः । मुहुर्धृतः स्थापितोऽपि दासेरयुवा तरुणोष्ट्रः । विशेषणसमासः । अग्रतो वनावलीश्चखाद । पुरः पिचुमर्दादिकं भक्षयन्नास्त इत्यर्थः । न हि कुशलो वृथा कालं यापयतीति भावः । अत्र दाक्ष्यसाफल्यस्य सामान्यस्य तद्विशेषेण दासेरकौशलेन समर्थनाद्विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३० ॥

**तैर्वैजयन्तीवनराजिराजिभिर्गिरिप्रतिच्छन्दमहामतङ्गजैः ॥**
**बह्वयः प्रसर्पज्जनतानदीशतैर्भुवो बलैरन्तरयाम्बभूविरे ॥ ३१ ॥**

**तैरिति ॥ तैर्बलैः सैन्यैः बह्वयः भुवः अनेका भूमयः अन्तरयाम्बभूविरे अन्तरिताः । उल्लङ्घिता इत्यर्थः । अथ च अन्तरिता अदृश्यीकृताः इत्यर्थान्तरन्यासः । किंलक्षणैर्बलैः वैजयन्तीवनराजिराजिभिः पताकाकाननलेखाशोभिभिः, वैजयन्त्यः पताका एव वनराजयः काननपङ्क्तयः ताभिः राजन्ते तानि राजिराजीनि तैः, अपरं किंलक्षणैर्बलैः गिरिप्रतिच्छन्दमहामतङ्गजैः गिरिप्रतिच्छन्दा गिरितुल्या महामतङ्गजा महेभा येषु तानि तैः अद्रिनिभकरीन्द्रैः, अपरं किंलक्षणैः थलैः प्रसर्पज्जनतानदीशतैः प्रसर्पन्ति व्रजमानानि(?) जनताः जनसमूहा एव नदीशतानि सरित्सहस्राणि येषु तानि तैः व्रजज्जनसमूहसरिच्छतैः ॥ ३१ ॥**

तैरिति ॥ वैजयन्त्यः पताकास्ता वनराजय इव ताभी राजन्तीति तथोक्तैः गिरीणां प्रतिच्छन्दाः प्रतिनिधयः । तत्सदृशा इत्यर्थः । एतस्मादेव स्पष्टपमालिङ्गादन्यत्राप्युपमितसमासाश्रयणम् । ते महामतङ्गजा येषु तैः । जनताः जनसमूहास्ता नद्य इव तासां शतानि प्रसर्पन्ति प्रवहन्ति येषु तैर्बलैस्तथोक्तैः सैन्यैः, बह्वयो बहवः। 'बह्वादिभ्यश्च' इति विकल्पादीकारः । भुवो भूमयः अन्तरयाम्बभूविरेऽन्तरा दूराः कृता इति । अतिक्रान्ता इत्यर्थः । न केवलं रैवतकाद्रि रेवेति भावः । बलैर्वैपुल्यादाच्छिता इत्यर्थः । उक्तविशेषणावगतसादृश्यादगृहीतभेदाः कृता इति च गम्यते । एतेनाऽभेदाध्यवसायादेवास्याक्रमणरूपान्तरीकरणस्य बलविशेषणावगतसादृश्यस्य हेतुत्वात्तदङ्गभूतोपमासङ्कीर्णे पदार्थहेतुकं काव्यलिङ्गं श्लेषमूलाभेदातिशयोक्त्युत्थापितामिति सङ्करः । अन्तरशब्दात् 'तत्करोति-' इति ण्यन्तात्कर्मणि लिट् । आम्प्रत्यये भुवाऽनुप्रयोगः ॥३१॥

**तस्थे मुहूर्तं हरिणीविलोचनैः सदृंशि दृष्ट्वा नयनानि योषिताम् ॥**
**मत्वाऽथ सत्रासमनेकविभ्रमक्रियाविकाराणि मृगैः पलाय्यत ॥ ३२ ॥**

**तस्थे इति ॥ मृगैर्हरिणैः मुहूर्तं तस्थे क्षणमासितम् । किं कृत्वा योषितां नयनानि कामिनीनां विलोचनानि हरिणीविलोचनैः सदृंशि दृष्ट्वा मृगीनयनैस्तुल्यान्यवलोक्य, अथ पश्चात्तैर्मृगैः पलाय्यत पलायितं, कथं यथा भवति सत्रासं यथा भवति तथा, किं कृत्वा तानि नेत्राणि अनेकविभ्रमक्रियाविकाराणि मत्वा नानाविलासक्रियाविकृतानि ज्ञात्वा । न चैतद्वनेचराणां सम्भवतीति जातभयात् द्रुतम् ॥ ३२ ॥**

तस्थ इति ॥ हरिणीविलोचनैः सदृंशि सदृशानि । 'नपुंसकस्य झलचः' इति नुम् । योषितां नयनानि दृष्ट्वा मृगैः कृष्णसारैः कर्तृभिर्मुहूर्तमल्पकालम् । 'मुहूर्तमल्पकाले स्याद्घटिकाद्वितयेऽपि च' इति विश्वः । तस्थे स्थितम् । हरिणीविलोचनशङ्कयेति भावः । अथाऽनन्तरमनेका विभ्रमक्रिया विलासक्रिया एव विकारा येषां तानि मत्वा । सविलासानि ज्ञात्वेत्यर्थः । सत्रासं सभयं यथा तथा पलाय्यत पलायितम् । हरिणीदुर्लभैर्विलासैर्योषिन्निश्चयादिति भावः । अत एव निश्चयाऽन्तः संशयालङ्कारः । परापूर्वादयतेर्भावे लङ् । 'उपसर्गस्यायतौ' इति लत्वम् ॥ ३२ ॥

**शौरेः प्रतापोपनतैरितस्ततः समागतैः प्रश्रयनम्रमूर्तिभिः ॥**
**एकातपत्रा पृथिवीभृतां गणैरभूद्बहुच्छत्रतयाऽपि मेदिनी(१) ॥ ३३ ॥**

---

( १ ) तया पताकिनी ।

शौरेरिति ॥ शौरेः श्रीवासुदेवस्य प्रतापोपनतैः पौरुषवशीकृतैः पृथिवीभृतां गणैः राज्ञां समूहैः बहुच्छत्रतया भूर्यातपत्रत्वेन मेदिनी भूः एकातपत्रा अभूत्, एकानि केवलानि आतपत्राणि छत्राणि यस्यां सा तथा । छत्रवर्जं न किञ्चित्तस्यां दृश्यते इत्यर्थः । विरुद्धं चैतत्, यस्यां बहूनि छत्राणि सा कथमेकातपत्रेति । अपरं किंलक्षणैः पृथिवीभुजां गणैः इतस्ततः समागतैः यतः कुतः स्थानान्मिलितैः, अपरं किंलक्षणैः पृथिवीभृतां गणैः प्रश्रयनम्रमूर्तिभिः विनयनतदेहैः ॥ ३३ ॥

शौरेरिति ॥ शौरेः कृष्णस्य पताकिनी सेना । व्रीह्यादित्वादिनिः । प्रतापेन हरितेजसा उपनतैर्नम्रैः विधेयैरित्यर्थः । अत एवेतस्ततः समागतैः पार्श्वदेशादागतैः प्रश्रयनम्रमूर्तिभिर्हरिसन्निधौ विनयनम्रविग्रहैः पृथिवीभृतां राज्ञां गणैर्हेतुना बहुच्छत्रतया असङ्ख्यातपत्रवत्तया निमित्तेन एकानि केवलान्यातपत्राणि यस्याः सा एकातपत्रा केवलातपत्रमय्यभूत् । आतपत्रातिरिक्तं न किञ्चिदलक्ष्यतेत्यर्थः । 'एके मुख्याऽन्यकेवलाः' इत्यमरः । बहुच्छत्राऽप्येकच्छत्रेति विरोधभासनाद्विरोधाभासोऽलङ्कारः ॥ ३३ ॥

आगच्छतोऽनूचि गजस्य घण्टयोः स्वनं समाकर्ण्य समाकुलाङ्गनाः ॥
दूरादपावर्तितभारवाहणाः पथोऽपसस्रुस्त्वरितं चमूचराः ॥ ३४ ॥

आगच्छत इति ॥ चमूचराः सैनिकाः पथो मार्गात् त्वरितमपसस्रुः शीघ्रं पलायाञ्चक्रिरे । किं कृत्वा अनूचि पश्चात् आगच्छतः गजस्य आपततो मातङ्गस्य घण्टयोः स्वनं समाकर्ण्य घर्घरयोः शब्दं श्रुत्वा, अत एव किंलक्षणाः चमूचराः समाकुलाङ्गनाः समाकुलाः विह्वला अङ्गनाः कामिन्यो येषां ते तथा, अपरं किंलक्षणाः चमूचराः दूरादपावर्तितभारवाहणाः दूरादेव व्याघोटितद्रव्यभाराः ॥ ३४ ॥

आगच्छत इति ॥ अन्वञ्चतीत्यन्वक् तस्मिन्ननूचि पृष्ठदेशे । 'ऋत्विग्–' इत्यादिनाऽञ्चेः क्विन्प्रत्ययः । आगच्छतो गजस्य घण्टयोः स्वनं समाकर्ण्य समाकुलाङ्गनाः सम्भ्रान्तवधूकाश्चमूचराः दूरादेवाऽपावर्तिता अपसारिता भारस्याश्वादेर्वाहना भारवाहणा भारवाहिन उष्ट्रादयो यैस्ते तथा सन्तः । 'वाहनमाहितात्' इति णत्वम् । वहेर्ण्यन्तात्कर्तरि ल्युट् । त्वरितं शीघ्रं पथो मार्गादपसस्रुरपजग्मुः । स्वभावोक्तिः ॥ ३४ ॥

ओजस्विवर्णोज्ज्वलवृत्तशालिनः प्रसादिनोऽनुज्झितगोत्रसंविदः ॥
श्लोकानुपेन्द्रस्य पुरः स्म भूयसो गुणान् समुद्दिश्य पठन्ति बन्दिनः ॥३५॥

ओजस्वीति ॥ बन्दिनो मागधाः भूयसो गुणान् समुद्दिश्य बहून् गुणान् चरितानि समुद्दिश्य(?) उपेन्द्रस्य श्रीकृष्णस्य पुरोऽग्रे श्लोकान् चरितपद्यानि पठन्ति स्म पेठुः । निरन्तरं चरितानि देवमश्रावयन्नित्यर्थः । किंलक्षणान् श्लोकान् ओजस्विवर्णोज्ज्वलवृत्तशालिनः, बहुसमासवती वृत्तिः ओजः, ओजस्विभिः बहुलसमासवद्भिः वर्णैः अक्षरैः उज्ज्वलं चारु रूपं वृत्तं वसन्ततिलकादिकोपेन्द्रवजादिकं तेन शालन्ते शोभन्ते ये ते शालिनः तान्, अपरं किंलक्षणान् श्लोकान् प्रसादिनः प्रसादो विद्यते येषां ते तथा तान् असमासवृत्तिमतः प्रसन्नान्, अपरं किंलक्षणान् श्लोकान् अनुज्झितगोत्रसंविदः न उज्झिता न त्यक्ता गोत्रस्य नाम्नः संवित् सङ्केतो येषां ते तथा तान् अत्यक्तनामसङ्केतान् । मध्येमध्ये विष्णोर्नामाऽनुकीर्तनमित्यर्थः । अथ किंलक्षणान् गुणान् ओजस्वी सबलो वर्णो यः क्षत्रियाख्यः तस्य तेन वा उज्ज्वलं प्रसिद्धं वृत्तं शीलं शौर्यादिकं तेन शालिनः शोभमानान्, अपरं किंलक्षणान् गुणान् प्रसादिनः प्रसन्नतायुक्तान्, यान् श्रुत्वा सर्वे प्रसीदन्ति आल्हादकत्वात् । अपरं किंलक्षणान् गुणान् अनुज्झितगोत्रसंविदः अत्यक्तकुलाचारान् । 'ओजः प्रभावे दीप्तौ च

बले शुक्रे', 'वृत्तं पद्ये चरित्रे च', 'प्रसादस्तु प्रसन्नता', 'गिरौ नाम्नि कुले गोत्रं', 'स्त्री संवित् ज्ञानसंभाषाक्रियाऽकारादिनामसु' । 'पद्ये यशसि च श्लोकः' सर्वत्राप्यमरः ॥ ३९ ॥

ओजस्वीति ॥ बन्दिनः स्तुतिपाठकाः । 'बन्दिनः स्तुतिपाठकाः' इत्यमरः । ओजस्विवर्णस्य तेजस्विवर्णस्य क्षत्रजातेर्यदुज्ज्वलं वृत्तमुदग्रव्यापारः विजयाख्यं तेन शालत इति ओजस्विवर्णोज्ज्वलवृत्तशाली तस्य, अन्यत्र ओजस्विवर्णैः समासभूयिष्ठाक्षरैरुज्ज्वलास्ते च ते वृत्तशालिनः वसन्ततिलकादिच्छन्दोविशेषशालिनश्च । 'वृत्तं चरित्रच्छन्दसोरपि' इति विश्वः । तान्, प्रसादोऽस्यास्तीति प्रसादी तस्य प्रसादिनोऽनुग्रहशीलस्य, अन्यत्र प्रसादगुणयुक्तान् । 'प्रसिद्धार्थपदत्वं यत् स प्रसादो निगद्यते' इति । अनुज्झितौ गोत्रसंविदौ येन तस्य । यादववंशोत्पन्नस्येत्यर्थः । अन्यत्र कुलनामनी यैस्तान् । वंशनामाङ्कितानित्यर्थः । 'संविद्युद्धे कुलाचारौ प्रतिज्ञायां सङ्केताचारनामसु' इति वैजयन्ती । एवंभूतस्योपेन्द्रस्य हरेर्गुणान् समुद्दिश्याधिकृत्य भूयसो बहुलाञ्छ्लोकान् स्तुतिपद्यानि पुरोऽग्रे पठन्ति स्म । अत्रोपेन्द्रस्य तच्छ्लोकानां च वर्ण्यत्वेन प्रकृतानां श्लेषसाधर्म्यादौपम्यागम्यतायां श्लेषप्रतिभोत्थापिता केवलप्रकृतगोचरा तुल्ययोगिता । श्लेषश्च प्रकृतिषु, प्रत्ययेषु नेति ॥ ३९ ॥

**निःशेषमाक्रान्तमहीतलो जलैश्चलन् समुद्रोऽपि समुज्झति स्थितिम् ॥**
**ग्रामेषु सैन्यैरकरोदवारितैः किमव्यवस्थां चलितोऽपि केशवः ॥ ३६ ॥**

**निःशेषमिति ॥** केशवः श्रीवासुदेवः चलितोऽपि प्रस्थितोऽपि अवारितैः अनिषिद्धैः सैन्यैः मार्गेषु मार्गखेटकेषु किमव्यवस्थामकरोत् किमुपद्रवं चकार । नैवेत्यर्थः । समुद्रोऽपि उदधिरपि चलन् सन् स्थितिं मर्यादां समुज्झति उल्लङ्घयति । किंलक्षणः समुद्रः जलैरुदकैर्निःशेषमखिलम् आक्रान्तमहीतलः व्याप्ताऽखिलभूपृष्ठः, किंलक्षणो हरिः सैन्यैः निःशेषमाक्रान्तमहीतलः । यदि स चलितः गन्तुं प्रवृत्तः, तत् कथं व्यवस्थामवस्थितिम् अगमनं कुर्यात्, गमनाऽवस्थानयोर्युगपदनुष्ठातुमशक्यत्वात् । यो वा चलितः चलनान्निवृत्तः स कथं व्यवस्थाकारी स्यात् ॥ ३६ ॥

निःशेषमिति ॥ चलन् कल्पान्ते क्षुभितः समुद्रोऽपि जलैर्निःशेषमाक्रान्तमहीतलः सन् स्थितिं मर्यादां वेलालङ्घनलक्षणां समुज्झति त्यजति । केशवस्तु चलितोऽपि प्रस्थितोऽप्यवारितैरपरिमितैः सैन्यैर्निःशेषमाक्रान्तमहीतलः सन् ग्रामेषु अव्यवस्थाममर्यादां किमकरोत् । नाऽकरोदेवेत्यर्थः । अत्रोपमानात्समुद्रादुपमेयस्य केशवस्य मर्यादाऽनतिक्रमेणाऽऽधिक्यकथनाद्व्यतिरेकालङ्कारः । लक्षणं तूक्तम् ॥ ३६ ॥

**कोशातकीपुष्पगुलुच्छकान्तिभिर्मुखैर्विनिद्रोल्बणबाणचक्षुषः ॥**
**ग्रामीणवध्वस्तमलक्षिता जनैश्चिरं वृतीनामुपरि व्यलोकयन् ॥ ३७ ॥**

**कोशातकीति ॥** ग्रामीणवध्वः ग्राम्यनार्यः तं देवं श्रीकृष्णं वृतीनामुपरि वृतिकापृष्ठसंस्थाः सत्यः चिरं दीर्घकालं यावत् व्यलोकयन् नेत्रैः पपुः, किंलक्षणा ग्रामीणवध्वः जनैः सेनालोकैः अलक्षिताः अदृष्टाः । अपरं किंलक्षणाः ताः, अदर्शने कारणमाह—मुखैरुपलक्षिताः वदनैर्ज्ञाताः, किंलक्षणैर्मुखैः कोशातकीपुष्पगुलुच्छकान्तिभिः धातुकीलताकुसुमस्तबकसमानच्छविभिः, गौरत्वात् । धातुकी धाहरोडी प्राकृतम् । अपरं किंलक्षणा ग्रामीणवध्वः विनिद्रोल्बणबाणचक्षुषः प्रफुल्लोत्कटबाणप्रसूननयनाः । अतः सादृश्यात् अलक्षितत्वम्, आरामवृतीनामपि बाणकोशातकीयोगात् । ग्रामे भवा ग्रामीणाः ॥ ३७ ॥

कोशातकीति ॥ कोशातकीपुष्पगुलुच्छकान्तिभिः पटोलीप्रसूनगुच्छसच्छायैः । ईषत्पाण्डुरैरित्यर्थः । 'कोशातकी पटोली स्यात्' इति हलायुधः । मुखैरुपलक्षिताः विनिद्रं विकसितमत एवोल्बणं विपुलं बाणं नीलसैरेयपुष्पमिव चक्षुर्यासां ताः । 'नीली झिण्टी द्वयोर्बाणा' इत्यमरः । ग्रामेषु भवा ग्रामीणाः । 'ग्रामा-

-यखञौ' इति खञ्प्रत्ययः । ताश्च वध्वः प्रियस्तं कृष्णम् । ग्रामाऽन्तर्गामिनमिति भावः । जनैश्चमूचरैरलक्षिताः । वृतिभिस्तिरोहिता इत्यर्थः । चिरं वृतीनां कण्टकशाखाऽऽवरणानामुपर्युपरितनाऽवकाशे व्यलोकयन् । उपमास्वभावोक्त्योः सङ्करः ॥ ३७ ॥

**गोष्ठेषु गोष्ठीकृतमण्डलासनान् सनादमुत्थाय मुहुः स वल्गतः ॥**
**ग्राम्यानपश्यत् कपिशं पिपासतः स्वगोत्रसङ्कीर्तनभावितात्मनः ॥३८॥**

**गोष्ठेष्विति ॥ स भगवान् श्रीकृष्णः गोष्ठेषु गोस्थानकेषु व्रजेषु वा ग्राम्यान् ग्रामेयकान् मुहुर्वारंवारमपश्यत् अद्राक्षीत् । किंलक्षणान् ग्राम्यान् कपिशं मधु पिपासतः मद्यं पिबतः, अपरं किंलक्षणान् ग्राम्यान् गोष्ठीकृतमण्डलासनान् गोष्ठ्या केलिवशात् कृतं विहितं मण्डलासनं मण्डलिकारूपं वलयरूपं परिणाहि आसनमवस्थानं यैस्ते तथा तान्, अपरं किंलक्षणान् ग्राम्यान् सनादं सहनिनादं हुङ्कारपूर्वं मध्यात् उत्थाय वल्गतः उत्पतमानान्, अत एव अपरं किंलक्षणान् स्वगोत्रसङ्कीर्तनभावितात्मनः स्वस्य आत्मीयस्य गोत्रस्य नाम्नोऽन्वयस्य वा यत् सङ्कीर्तनमन्येन ग्रहणं तत्र भावितः दत्तः आत्मा अन्तःकरणं यैस्ते तथा तान् स्वगोत्रश्रवणे भावितात्मनो दत्तचित्तान् । क्षीबस्य हि यदा कश्चित् नाम कुलं वा कीर्तयति, तदा एष किं वक्ष्यतीति सावधानत्वं भवति इति । स्वयं वा गोत्रसङ्कीर्तनम् । अत्र क्षीबो हि निजकुलमहत्त्वं प्रायेण कथयति । गावस्तिष्ठन्त्यस्मिन्निति गोष्ठम् ॥ ३८ ॥**

गोष्ठेष्विति ॥ स कृष्णो गावस्तिष्ठन्त्येष्विति गोष्ठानि गोस्थानानि । 'गोष्ठं गोस्थानकम्' इत्यमरः । 'सुपि स्थः' इति कप्रत्ययः, 'अम्बाऽम्बगोभूमि—' इत्यादिना षत्वम् । गोष्ठीषु वार्तासु । 'गोष्ठी सभायामालापे' इति विश्वः । कृतानि मण्डलासनानि मण्डलाकारेणोपवेशनानि यैस्तान्मुहुः सनादं क्ष्वेलाऽट्टाट्टहासाद्यारावसहितं यथा तथोत्थाय वल्गत उत्प्लवमानान् कपिशं मद्यम् । 'कश्यं मद्यं च मैरेयं कपिशं कापिशायनम्' इति हलायुधः । पिपासतो मुहुर्मुहुः पातुमिच्छतः । पिबतेः सन्नन्ताल्लटः शतरि शप् । स्वगोत्रसङ्कीर्तने स्वनामसङ्कीर्तने भावितात्मनः प्रवर्तितचित्तान् । कृष्णनामानि गायत इत्यर्थः । ग्रामेषु भवान् ग्राम्यान् । घोषजनानित्यर्थः । 'ग्रामाद्यखञौ' इति यप्रत्ययः । अपश्यदालोकितवान् । स्वभावोक्तिः ॥ ३८ ॥

**पश्यन् कृतार्थैरपि बल्लवीजनो जनाधिनाथं न ययौ वितृष्णताम् ॥**
**एकान्तमौग्ध्याऽनवबुद्धविभ्रमप्रसिद्ध(१)विस्तारगुणैर्विलोचनैः ॥ ३९ ॥**

**पश्यन्निति ॥ बल्लवीजनः गोपाङ्गनाजनः तं जनाधिनाथं सर्वलोकेश्वरं श्रीकृष्णं विलोचनैर्नयनैः पश्यन् सन् विलोकयन् सन् वितृष्णतां न ययौ विगततृष्णत्वं न प्राप, तृप्तिं नाऽगादित्यर्थः । अतिप्रियत्वादिति भावः । किंलक्षणैः विलोचनैः कृतार्थैरपि सफलैरपि । एतदेव चक्षुषः फलं, यत्साक्षाद्भगवद्विलोकनम् । अपि विरोधे, कृतार्थस्य वितृष्णत्वं युक्तम् । अपरं किंलक्षणैर्विलोचनैः एकान्तमौग्ध्याऽनवबुद्धविभ्रमप्रसिद्धविस्तारगुणैः एकान्तेन सहजेन निश्चितेन मौग्ध्येन अवनबुद्धोऽज्ञातो विभ्रमो विलासो यैस्तानि एकान्तमौग्ध्याऽनवबुद्धविभ्रमाणि, अतः केवलं प्रसिद्धः प्रकाशो विस्तारो विशालत्वमेवं गुणो येषां तानि, ततो विशेषणसमासः । अक्षिणी प्रसार्य नविकारमेव प्रीतिस्निग्धं तास्तमैक्षन्तेत्यर्थः॥ ३९॥**

पश्यन्निति ॥ एकान्तमौग्ध्येनाऽत्यन्तमुग्धतया अनवबुद्धविभ्रमैरज्ञातविलासैः किन्तु प्रसिद्धो विस्तार एव गुणो येषां तैः । अतिविशालैरित्यर्थः । कृतार्थैरपि । सकृद्दर्शनाल्लब्धविस्तारफलैरित्यर्थः । विलोचनैर्जनाधिनाथं कृष्णं पश्यन् बल्लवीजनो गोपाङ्गनाजनः वितृष्णतां तृप्ततां न ययौ । भूयोभूयः पश्यन्नपि

(१) विभ्रमैः प्रसिद्ध ।

नाऽलम्बुद्धिमवापेत्यर्थः। तृप्तिकारणे दर्शने सत्यपि तृप्तिकार्याऽनुत्पत्तेर्विशेषोक्तिः। सा कृष्णस्य मदनकोटिलावण्यलक्ष्मीं व्यञ्जयति ॥ ३९ ॥

**प्रीत्या नियुक्ताँल्लिहतीः स्तनन्धयान्निगृह्य पारीमुभयेन जानुनोः ॥**
**वर्धिष्णुधाराध्वनि रोहिणीः पयश्चिरं निदध्यौ दुहतः स गोदुहः ॥४०॥**

**प्रीत्येति ॥ सः श्रीकृष्णः गोदुहः गोपालान् चिरं दीर्घकालं निदध्यौ अद्राक्षीत्। किं-कुर्वतः गोपालान् रोहिणीः गाः पयः दुग्धं दुहतः दोहमानान्(?), इति द्विकर्मको दुहिः। किंलक्षणा रोहिणीः नियुक्तान् मुक्तान् स्तनन्धयान् वत्सान् प्रीप्त्या स्नेहेन लिहन्तीः जिह्वया मार्जन्तीः, किं कृत्वा दुहतः जानुनोः उभयेन उरुपर्वणोः युगलेन पारीं निगृह्य गोदोहनीमवष्टभ्य, किंलक्षणं पयः वर्धिष्णुधाराध्वनि वर्धिष्णुः प्रतिक्षणं वर्धनशीलः महान् धाराध्वनिः धारापातशब्दो यत्र तत् इति बाहुल्योक्तिः ॥ ४० ॥**

**प्रीत्येति** ॥ नियुक्तान् वामपादे एव संयतान् स्तनं धयन्ति पिबन्तीति स्तनन्धयान्वत्सान्। 'नासिकास्तनयोर्ध्माधेटोः' इति धेटः खश्प्रत्ययः। प्रीत्या वत्साँल्लिहतीर्जिह्वया स्वादयन्तीः रोहिणीर्गाः। 'अर्जुन्यघ्न्या रोहिणी स्यात्' **इत्यमरः**। पयः क्षीरं जानुनोरुभयेन जानुद्वयेन पारीं दोहनपात्रीम्। 'पारी पात्रीपरागयोः' इति विश्वः। निगृह्य निरुध्य। वर्धिष्णुधाराध्वनि वर्धनशीलक्षीरधाराशब्दं यथा भवति तथा दुहतः प्रपूरयतः। दुहेर्लटः शतरि शप् 'दुह्याच्—' इति द्विकर्मकत्वम्। गां दुहन्तीति गोदुहो गोदोहकान्। 'सत्सूद्विष—' इत्यादिना क्विप्। स हरिश्चिरं निदध्याववलोकयति स्म। 'निध्यानमवलोकनम्' इति **वैजयन्ती**। स्वभावोक्तिः ॥ ४० ॥

**अभ्याजतोऽभ्यागततूर्णतर्णकान्निर्याणहस्तस्य पुरो दुधुक्षतः ॥**
**वर्गाद्गवां हुङ्कृतिचारु निर्यतीमरिर्मधोरैक्षत गोमतल्लिकाम् ॥ ४१ ॥**

**अभ्याजत इति ॥ मधोः अरिः कैटभरिपुः श्रीवासुदेवः गोमतल्लिकां साध्वीं गाम् ऐक्षत अपश्यत्। 'भद्रा गौर्गोमतल्लिका' इत्यमरः। किंलक्षणां गोमतल्लिकां गवां वर्गात् धेनूनां यूथान्निर्गतां पृथग्भवन्तीं, क्व दुधुक्षतः दोग्धुमिच्छतः गोदुहः पुरोऽग्रे, किंलक्षणस्य दुधुक्षतः अभ्याजतः अभ्याजयति इति आकारयतीति अभ्याजन् तस्य एहि एहि मातरित्याह्वयतः, किंलक्षणस्य दुधुक्षतः निर्याणहस्तस्य निर्याणं रज्जुर्हस्ते यस्य सः तथा तस्य रज्जुपाणेः, अपरं किंलक्षणां गोमतल्लिकाम् अभ्यागततूर्णतर्णकाम् अभ्यागतो निकटं प्राप्तः तूर्णमुड्डीयमानः तर्णको वत्सो यस्याः सा तथा तां, कथं निर्यतीं हुङ्कृतिचारु यथा स्यात् हुङ्कृत्या हुङ्कारेण चारु मनोज्ञं भवति यत्र क्रियायां तद्यथा। अभ्याजनमाकारणमन्त्रः ॥ ४१ ॥**

**अभ्याजत इति** ॥ अभ्याजतः दोग्धुमभिमुखमागच्छतः अजेर्लटः शत्रादेशः। निर्याणं पादबन्धनं दाम। 'निर्याणं दाम सन्दानं पशूनां पादबन्धने' इति **वैजयन्ती**। तत् हस्ते यस्य तस्य निर्याणहस्तस्य दुधुक्षतो दोग्धुमिच्छतः। दोग्धुरितिशेषः। दुहेः सन्नन्ताल्लटः शत्रादेशः घत्वधत्वे। पुरोऽग्रेऽभ्यागतोऽभिमुखमागतस्तूर्णस्तनपाने त्वरमाणस्तर्णकोऽतिबालो वत्सो यस्यास्ताम्। 'सद्यो जातस्तु तर्णकः' **इत्यमरः**। गवां वर्गाद्गोव्रजात् हुङ्कृतिचारु हुङ्कारमनोहरं यथा तथा निर्यतीं निर्गच्छन्तीम्। इणः शतरि ङीप्। इणो यणादेशः। प्रशस्तां गां गोमतल्लिकाम्। 'प्रशंसावचनैश्च' इति नित्यसमासः।

'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ।
प्रशस्तवाचकान्यमूनि-'

**इत्यमरः**। मधोररिर्मधुसूदन एक्षत ईक्षितवान्। ईक्षतेर्लङि 'आडजादीनाम्' इत्याट्। **'आटश्च' इति** वृद्धिः। **स्वभावोक्तिः** ॥ ४१ ॥

**स व्रीहिणां यावदपासितुं गताः शुकान् मृगैस्तावदुपद्रुतश्रियाम् ॥**
**कैदारिकाणामभितः समाकुलाः सहासमालोकयति स्म गोपिकाः ॥४२॥**

**स इति ॥** स हरिः कैदारिकाणां केदारसमूहानां क्षेत्रसमूहानां गोपिकाः गोप्त्रीः सहासं सस्मितं यथा भवत्येवं विलोकयामास आलोकयति स्म । किंलक्षणा गोपिकाः किंलक्षणानां कैदारिकाणाम्, इति विशेषणद्वयेन हासकारणमाह—यावत् शुकान् कीरान् अपासितुं वारयितुं गताः धाविताः तावत् मृगैरुपद्रुतश्रियां हरिणैरुपभुक्तसम्पदां, किंलक्षणानां कैदारिकाणां व्रीहिणां व्रीहयः कलमाद्या विद्यन्ते येषु तानि व्रीहिणि तेषां व्रीहिणां सञ्जात-सस्यानां, किंलक्षणा गोपिकाः अभितः पक्षद्वये समाकुलाः व्यग्राः, किङ्कर्तव्यतामूढाः इत्यर्थः । अतो भगवान् ताः सहासमैक्षत ॥ ४२ ॥

स इति ॥ यावच्छुकान् कीरानपासितुं गतास्तावन्मृगैरुपद्रुतश्रियामुपद्रुतसम्पदां व्रीहिणां व्रीहिमताम् । 'व्रीह्यादिभ्यश्च' इतीनिप्रत्ययः । कैदारिकाणां क्षेत्रसमूहानाम् ।

'पुंनपुंसकयोर्वप्रः केदारः क्षेत्रमस्य तु ।
कैदारकं स्यात्कैदार्यं क्षेत्रं कैदारिकं गणे' ॥

इत्यमरः । 'ठञ् कवचिनश्च' इति चकाराट्ठञ्प्रत्ययः । कृद्योगात्कर्मणि षष्ठी । गोपिकाः गोप्त्रीरभितः समाकुला व्यग्राः । उभयतः समाकृष्यमाणाः सतीरित्यर्थः । स हरिः सहासमालोकयति स्म । अत्र सहासाऽवलोकनस्य विशेषणगत्या समाकुलपदार्थहेतुकत्वात्काव्यलिङ्गभेदः ॥ ४२ ॥

**व्यासेद्धुमस्मानवधानतः पुरा चलत्यसावित्युपकर्णयन्नसौ ॥**
**गीतानि गोप्याः कलमं मृगव्रजो न नूनमत्तीति हरिर्व्यकल्पयत(१) ॥४३॥**

**व्यासेद्धुमिति ॥** असौ हरिः श्रीकृष्णः सस्यजिघत्सानिवृत्तं हरिणयूथं दृष्ट्वा इत्येवं व्यकल्पयत् विकल्पं चकार, यदि वा व्यतर्कयत् ऊहामास । किमित्याह—एष मृगव्रजः सारङ्गसार्थः गोप्याः सस्यरक्षिकायाः गीतानि गानानि उपकर्णयन् शृण्वन् सन् नूनं निश्चि-तम् इति अस्मात् कारणात् कलमं शालिं न अत्ति न भक्षयति । तमेव हेतुमाह—व्यासेद्धुमिति । ते हि एवं व्यचिन्तयन्—यदि वयं सस्यं भक्षयामः तर्हि अस्मान् व्यासेद्धुमपासितुम् उद्यता सती एषा गोपी अवधानतः ऐकाग्र्यात् पुरा चलति चलिष्यति अवधानतः निवर्तते । यावत्पुरानिपातयोर्लट् । न वयमद्मः, इतीव कलमं मृगव्रजाः न जक्षुरिति व्यकल्पयत ॥४३॥

व्यासेद्धुमिति ॥ गोप्याः शालिगोप्त्र्याः । गौरादित्वान्ङीष् । गीतान्युपकर्णयञ्शृण्वन् असौ मृगव्रजो नूनं निश्चितं कलमं नाऽत्ति न खादति इति । किं कलमभक्षणे गीतश्रवणविशेष इत्यत आह—असौ गोपी अस्मान्व्यासेद्धुं निवारयितुमवधानतो गीतैकाग्र्यात् पुरा चलति चलिष्यति । 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट् । इतीत्थं वितर्कयन्निति शेषः । हरिर्व्यलोकयत् । अत्र मृगाणां कलमखादननिवृत्तेर्गीता-ऽऽसक्तिनिमित्तायास्तदाकर्णनसुखभङ्गहेतुकत्वमुत्प्रेक्ष्यते ॥ ४३ ॥

**लीलाचल(२)स्त्रीचरणाऽरुणोत्पलस्खलत्तुलाकोटिनिनादकोमलः ॥**
**शौरेरुपाऽनूपमुपाच्छिन(३)न्मनः स्वनान्तरादुन्मदसारसाऽऽरवः ॥४४॥**

**लीलेति ॥** उपाऽनूपम् अनूपसमीपे जलप्रदेशे उन्मदसारसाऽऽरवः मत्तलक्ष्मणाविरावः सः शौरेः श्रीवासुदेवस्य मनः चित्तं कर्म स्वनान्तरात् उपाच्छिनत् रुतान्तरान्निवर्त्य आत्मै-कविषयं चक्रे । तमेव स आकर्णयदित्यर्थः । किंलक्षणः उन्मदसारसाऽऽरवः लीलाचलस्त्रीचरणा-

(१) व्यलोकयत् । (२) चलत् । (३) ०मुपाहर० ।

ऽरुणोत्पलस्खलत्तुलाकोटिनिनादकोमलः लीलया विलासेन चला गच्छन्ती या स्त्री नारी तस्या यौ चरणौ पादौ तावेव अरुणोत्पले रक्तकमले तत्र स्खलन्त्यो याः तुलाकोट्यः नूपुराणि मञ्जीराणि तेषां यो निनादः शिञ्जितं तद्वत् कोमलः, तत्सदृशो मृदुल इत्यर्थः। अतश्च नूपुररवात् तदेकाग्रत्वं चेतसो युक्तम्। अनुगता आपो यत्रेत्यनूपः, ऊदनोर्देशे। 'जलप्रायमनूपं स्यात्', 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः॥ ४४॥

लीलेति॥ अनुगता आपो येषु ते अनूपा जलप्रायदेशाः। 'जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः' इत्यमरः। 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपश्च' इति बहुव्रीहिः 'ऋक्पूः—' इत्यादिना समासान्तः 'ऊदनोर्देशे' इत्यूकारः। तेषां समीपे उपानूपम्। समीपार्थेऽव्ययीभावः। लीलया चलति चलनशीले स्त्रियाश्चरणे अरुणोत्पले इव तयोः स्खलन्त्यौ ये तुलाकोटी नूपुरौ। 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः। तयोर्निनाद इव कोमलो मधुर उन्मदासारसाऽऽरवः मत्तहंसकूजितम्। 'चक्राङ्गसारसौ हंसे' इति शब्दार्णवे। शौरेर्मनः स्वनान्तरादपाहरत्। अत्र मनोहरस्य लीलेत्यादिविशेषणार्थहेतुकत्वादुपमासङ्कीर्णं काव्यलिङ्गम्॥ ४४॥

**उच्चैर्गतामस्खलितां गरीयसीं तदाऽतिदूरादपि तस्य गच्छतः॥**
**एके ऽग्रहीषु(१)र्बलरेणुसंहतिं शिरोभिराज्ञामपरे महीभृतः॥ ४५॥**

उच्चैर्गतामिति॥ तस्य श्रीकृष्णस्य गच्छतः चलतः सतः एके महीभृतः पर्वताख्याः अतिदूरादेव अतिविप्रकृष्टादेव शिरोभिः शृङ्गैः कृत्वा बलरेणुसंहतिं सैन्यधूलिपटलमग्रहीषुः अगृह्णन्। धारयामासुरित्यर्थः। अपरे तु महीभृतः नृपाख्याः शिरोभिः मस्तकैः कृत्वा आज्ञां शासनमग्रहीषुः आददिरे। किंलक्षणां बलरेणुसंहतिम् उच्चैर्गतां नभोव्यापिनीम्, अपरं किंलक्षणां रेणुसंहतिम् अस्खलितां सर्वत्र अनिषिद्धप्रसरत्वात् अनिवारिताम्, अपरं किंलक्षणां गरीयसीं बहुलाम्। आज्ञामपि उच्चैर्गतामुन्नतां नाकलोकेऽपि प्रसृताम्। अपरं किंलक्षणामाज्ञाम् अस्खलितामप्रतिहतां सर्वैरप्यनुष्ठानात्, अपरं किंलक्षणामाज्ञां गरीयसीं महाप्रयोजनां सर्वार्थप्रदत्वात्॥ ४५॥

उच्चैर्गतामिति॥ तदा तस्मिन्समये अतिदूराद्गच्छतोऽपि तस्य हरेः सम्बन्धिनीमुच्चैर्गतामत्यूर्ध्वमुन्नताम्, अन्यत्रोर्ध्वलोकेष्वपि व्याप्तामस्खलितामभङ्गुरां सत्यां च गरीयसीमतिमहतीं पूज्यां च बलरेणुसंहतिं सेनारेणुसङ्घातमेके कतिपये महीभृतः पर्वता आज्ञां शासनम्, अपरे महीभृतो राजानश्च शिरोभिः शेखरैः शीर्षैश्च समूहुः संवहन्ति स्म। वहेर्लिटि झेरुसि 'वचिस्वपि—'इत्यादिना सम्प्रसारणम्। अत्र हरिमाहिमवर्णनायामुभयेषामपि महीभृतां प्रकृतत्वात्केवलप्रकृतास्पदा तुल्ययोगिता श्लेषप्रतिभोत्थापिता चेति सङ्करः॥ ४५॥

**प्रायेण नीचानपि मेदिनीभृतो जनः समेनैव पथाऽधिरोहति॥**
**सेना मुरारेः पथ एव सा पुनर्महामहीध्रान् परितोऽध्यरोहयत्॥ ४६॥**

प्रायेणेति॥ इह ईदृशी स्थितिः-जनो लोकः प्रायेण बाहुल्येन समेनैव पथा अविषमेणैव मार्गेण नीचानपि मेदिनीभृतः खर्वानपि पर्वतान् अधिरोहति आक्रामति। अधिरोहणे पथः करणत्वम्। सा पुनः मुरारेः श्रीकृष्णस्य सेनापताकिनी पथः मार्गानेव महामहीध्रान् महागिरीन् परितः समन्तात् अध्यरोहयत् अधिरोहयति स्मेति बाहुल्योक्तिः। पर्वताऽग्रं यावत् अपूर्वा बहुरथ्याश्चकारेत्यर्थः। अतश्च महान् विशेषः, यतोऽन्यत्र पथो जनोऽधिरोहयते, अत्र तु जनौघैस्ते मार्गमधिरोहिताः॥ ४६॥

(१) समूहु०।

प्रायेणेति ॥ प्रायेण प्राचुर्येण नीचान् कुब्जानपि मेदिनीभृतोऽद्रीन् जनो लोकः समेन सुगमेन पथा मार्गेणैवाधिरोहति । सा मुरारेः सेना पुनः पथो मार्गानिव महामहीध्रान्महाद्रीन् परितोऽध्यरोहयत् । लोके हि सति क्षुण्णेऽध्वनि तेन शैलारोहणसम्भवः । सेना सर्वपथातिरेकिण्यभूत् । पूर्वापराः सहस्रं पन्थानः स्वारोहणेन प्रवर्तिता इत्यर्थः । रोहतेर्गत्यर्थत्वात् 'गतिबुद्धि—' इत्यादिना पथामाणिकर्तृणां णौ कर्मत्वम् । महीं धरन्तीति महीध्राः । मूलविभुजादित्वात् कः । अत्र सेनायाः पथां शैलाधिरोहणेनोपमानाज्जनादाधिक्यकथनाद्व्यतिरेकः ॥ ४६ ॥

**दन्ताग्रनिर्भिन्नपयोदमुन्मुखाः शिलोच्चयानारुरुहुर्महीयसः ॥**
**तिर्यक्कटप्लाविमदाऽम्बुनिम्नगाविपूर्यमाणश्रवणोदरं द्विपाः ॥ ४७ ॥**

**दन्ताग्रेति ॥ द्विपा हस्तिनः महीयसः उन्नतान् शिलोच्चयान् पर्वतान् आरुरुहुः अध्यारोहन् । किंलक्षणाः द्विपाः उन्मुखाः ऊर्ध्वमुखाः, कथं यथा भवति दन्ताऽग्रनिर्भिन्नपयोदं यथा भवत्येवं विषाणकोटिविपाटितजलधरं यथा भवत्येवम्, आरोहणमन्यत्कथं यथा स्यात् तिर्यक्कटप्लाविमदाऽम्बुनिम्नगाविपूर्यमाणश्रवणोदरं यथा स्यात् तिर्यक् तिरश्चीना कटप्लाविनी गण्डस्थलव्यापिनी याऽसौ मदाम्बुनिम्नगा दानवारिनदी तया विपूर्यमाणं भ्रियमाणं श्रवणोदरं कर्णविवरं यत्र क्रियायां तद्यथा भवत्येवम् ॥ ४७ ॥**

दन्ताग्रेति ॥ द्वाभ्यां पिबन्तीति द्विपाः । 'सुपि' इति योगविभागात् कप्रत्ययः । उन्मुखा उन्नमितमुखाः सन्तः दन्ताग्रैर्निर्भिन्ना विदारिताः पयोदाः शृङ्गगता यस्मिन्कर्मणि तद्यथा तथा तिर्यगूर्ध्वमुखत्वात्तिरश्चीनं यथा तथा कटेभ्यः प्लवन्ते क्षरन्तीति कटप्लाविनीभिर्मदाऽम्बुनिम्नगाभिर्मदजलप्रवाहैर्विपूर्यमाणानि श्रवणोदराणि यस्मिन्कर्मणि तद्यथा तथा महीयसो महत्तराञ्छिलोच्चयानारुरुहुः । स्वभावोक्तिः ॥ ४७ ॥

**श्च्योतन्मदाऽम्भःकटकेन(१) केनचिज्जनस्य जीमूतकदम्बकद्युता ॥**
**नागेन नाऽगेन गरीयसोच्चकैररोधि पन्थाः पृथुदन्तशालिना ॥ ४८ ॥**

**श्च्योतन्मदेति ॥ सत्यपि साम्ये सैन्यस्य नागेन इभेन जनस्य पन्थाः सैन्यलोकस्य मार्गः अरोधि रुद्धः, न तु अगेन अद्रिणा । किंलक्षणेन नागेन श्च्योतन्मदाऽम्भःकटकेन श्च्योतत् पतत् मदाम्भः दानाम्बु याभ्यां तौ श्च्योतन्मदाऽम्भसौ गलन्मदाऽम्बू एवंभूतौ कटकौ गण्डौ यस्य सः तथा तेन, अपरं किंलक्षणेन गजेन जीमूतकदम्बकद्युता जलदवृन्दमलिम्लुचेन, जीमूतकदम्बकवत् मेघवृन्दवत् द्योतते शोभते इति जीमूतकदम्बकद्युत् तेन, अपरं किंलक्षणेन नागेन गरीयसा अतिमहता, अपरं किंलक्षणेन नागेन उच्चकैः उन्नतेन, अपरं किंलक्षणेन नागेन पृथुदन्तशालिना विशालविषाणगर्वितेन । अगेनाऽपि किंलक्षणेन स्रवन्मदजलसम्पृक्तसानुना मेघमेचकेन बृहता उच्चेन दीर्घदन्तशालिना पृथुगलितपाषाणशोभिना । दन्ता गलितपाषाणाः । अत्र दन्ताः कटकश्च(२) ॥ ४८ ॥**

श्च्योतन्मदेति ॥ श्च्योतन्तः क्षरन्तो मदाऽम्भःकणा यस्य तेन । शैषिकः कप्रत्ययः । जीमूतकदम्बकस्येव द्युत् द्युतिर्यस्य तेन । पृथुभ्यां दन्ताभ्यां शालत इति तच्छालिना गरीयसा गुरुतरेणोच्चकैरुन्नतेन केनचिन्नागेन गजेन जनस्य पन्था मार्गः यथाऽरोधि, अगेनाऽचलेन न तथाऽरोधि रुद्धः । मत्तमातङ्गस्य दुरासदत्वाच्छैलवदनतिक्रमणीयत्वादिति भावः । अत एवोपमानादगादुपमेयस्य नागस्याधिक्याद्व्यतिरेकः ॥ ४८ ॥

**भग्नद्रुमाश्चाङ्कुरितस्ततो दिशः समुल्लसत्केतनकाननाकुलाः ॥**
**पिष्टाऽद्रिपृष्ठास्तरसा च दन्तिनश्चलन्निजाङ्गाऽचलदुर्गमा भुवः ॥ ४९ ॥**

---

( १ ) कणकेन । ( २ ) अत्र किञ्चिदपेक्षितम् ।

**भग्नद्रुमा इति** ॥ दन्तिनो गजाः दिशः काष्ठाः च अपरं भुवः भूमीश्च एवंविधाश्चक्रुः व्यधुः । किंलक्षणाः दिशः इतस्ततः भग्नद्रुमाः उन्मूलितवृक्षाः, अपरं किंलक्षणाः समुल्लसत्केतनकाननाकुलाः स्फुरद्ध्वजवनव्याप्ताः, भुवः किंलक्षणाः तरसा कृच्छ्रेण पिष्टाऽद्रिपृष्ठाः चूर्णीकृतनगशिखराः, अपरं भुवः किंलक्षणाः चलन्निजाङ्गाऽचलदुर्गमाः चलद्भिर्गच्छद्भिर्निजाऽङ्गैरेव स्वशरीरै रेव अचलैः दुर्गमाः दुष्प्रवेशाः। अयमत्रार्थो विवक्षितः—यद्यपि गमनप्रत्यूहास्तत्र ते दिक्षु छन्नास्तथापि तत्स्थानीयैश्च गहनीकृताः। तथा यद्यपि नगपृष्ठं गहनीकृतं समीकृतं, तथापि स्वात्मभिरेव नगोपमैस्तथाऽऽकुलमेवेति । कृच्छ्रेणोपगम्यते इति दुर्गमाः ४९

भग्नद्रुमा इति ॥ दन्तिनो गजा इतस्ततो भग्नद्रुमाः स्वभग्नाऽखिलवृक्षाः दिशः समुल्लसद्भिः केतनैरेव काननैराकुलाः सङ्कीर्णाश्चक्रुः । तथा तरसा बलेन पिष्टानि चूर्णितान्यद्रिपृष्ठानि यासु ता भुवो भूमीः चलद्भिर्निजाङ्गैरेवाऽचलैर्दुर्गमा दुष्प्रापाश्चक्रुः । अत्र केतनेष्वङ्गेषु च काननाऽचलत्वरूपणाद्रूपकालङ्कारः । तेन गजानां पुरातनसृष्टिसंहारेण सृष्ट्यन्तरप्रवर्तनरूपं लोकोत्तरं सामर्थ्यं गम्यत इत्यलङ्कारेण वस्तुध्वनिः ॥४९॥

**आलोकयामास हरिर्महीधरानधिश्रयन्तीर्गजताः परःशताः ॥**
**उत्पातवातप्रतिकूलपातिनीरुपत्यकाभ्यो बृहतीः शिला इव ॥ ५० ॥**

**आलोकयामासेति** ॥ स हरिर्देवः गजताः करिसमूहान् आलोकयामास, अपश्यत् किंलक्षणाः गजताः परःशताः बहुसंख्याकाः ।'परःशतास्ते विज्ञेया येषां संख्या शतात्परा' । अपरं किंलक्षणाः गजताः उपत्यकाभ्यः अधोभागेभ्यः महीधरान् अधिश्रयन्तीः अद्रीन् आरोहन्तीः । अपरं किंलक्षणाः गजताः, उत्प्रेक्ष्यन्ते—बृहतीः शिला इव महतीः दृषद इव । कथमुपरि दृषदो भवन्तीत्याह—किंलक्षणाः शिलाः उत्पातवातप्रतिकूलपातिनीः उत्पातवातेन उन्मत्तवायुना प्रतिकूलं विपरीतं नीचात् उच्चैः पतन्तीत्येवंशीलाः विपर्ययगामिनीः। ऊर्ध्वं यान्तीरित्यर्थः । गजानां समूहो गजता । 'उपत्यकाऽद्रेरासन्ना भूमि'रित्यमरः ५०

आलोकयामासेति ॥ हरिर्महीधरानधिश्रयन्तीः परःशताः शतात्पराः । असङ्ख्याता इत्यर्थः । 'परःशताद्यास्ते येषां परा सङ्ख्या शताऽधिकात्' इत्यमरः । 'पञ्चमी' इति योगविभागात्समासः । राजदन्तादित्वादुपसर्जनस्यापि शतशब्दस्य परनिपातः । पारस्करादित्वात्सुडागमः । गजताः गजसमूहान् । 'गजाच्चेति वक्तव्यम्' इति सामूहिकस्तल्प्रत्ययः । उपत्यकाभ्य आसन्नभूमिभ्यः । 'उपत्यकाऽद्रेरासन्ना भूमिः' इत्यमरः । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्प्रत्ययः । उत्पातवातेन तत्प्रातिकूल्यं पतन्तीति तत्पातिनीः । ऊर्ध्वगामिनीरित्यर्थः । बृहतीः शिला इवेत्युत्प्रेक्षा । आलोकयामास ॥ ५० ॥

**शैलाधिरोहाभ्यसनाधिकोद्धुरैः पयोधरैरामलकीवनाश्रिताः ॥**
**तं पर्वतीयप्रमदाश्चचायिरे विकासविस्फारितविभ्रमेक्षणाः ॥ ५१ ॥**

**शैलेति** ॥ पार्वतीयप्रमदाः गैरेयनार्यः तं श्रीकृष्णं चचायिरे अद्राक्षुः । किंलक्षणाः पर्वतीयप्रमदाः आमलकीवनाश्रिताः धात्रीकाननाश्रिताः, आमलकीवनेषु तिष्ठन्त्य इत्यर्थः । अपरं किंलक्षणाः पर्वतीयप्रमदाः पयोधरैः स्तनैः उपलक्षिताः, किंलक्षणैः पयोधरैः शैलाधिरोहाभ्यसनाऽधिकोद्धुरैः शैलेषु पर्वतेषु अधिरोहणमभ्यसनं परिशीलनं तेन अधिकमुद्धुराः उन्नताः तैः पर्वताक्रमणाभ्यासनितान्तोन्नतिभिः । आरोहेण स्तना उन्मुखा भवन्ति । अपरं किंलक्षणा पर्वतीयप्रमदाः विकासविस्फारितविभ्रमेक्षणाः विकासेन अत्युन्मीलनेन विस्फारितविभ्रमाणि प्रवर्धितविलासानि ईक्षणानि नयनानि यासां तास्तथा। तदा हि भगवद्दर्शनगार्ध्येन विलोचने ताभिर्विकासिते, तदाऽपाङ्गे प्रेक्षितादीनि तासां चित्तेन पुस्फुरुः॥५१॥

शैलेति ॥ शैलाधिरोहाभ्यसनेन पर्वतारोहणाभ्यासेनाऽधिकोद्धुरैरत्युन्नतैः पयोधरैः स्तनैरुपलक्षिताः आमलकीवनाश्रिता धात्रीवनगताः, पर्वतो निवासो येषां ते पर्वतीयाः किरातादयः । 'पर्वताच्च' इति छप्रत्ययः । तेषां प्रमदाः । विकासेन विस्मयकृतविस्तारेण विस्फारिता विवर्तिता विभ्रमा विलासा येषां तानीक्षणानि यासां तास्तथा सत्यः तं हरिं चच्चायिरे ददृशुः । 'चायृ पूजानिशामनयोः' इति धातोः कर्तरि लिट् । निशामनं दर्शनम् । 'निरीक्षणनिशामने' इति दर्शनपर्यायेषु भट्टमल्लः । एतेन हरेरलौकोत्तरं लावण्यं व्यज्यते इति वस्तुना वस्तुध्वनिः । स्वभावोक्तिवृत्त्यनुप्रासयोः संसृष्टिः ॥ ५१ ॥

**सावज्ञमुन्मील्य विलोचने सकृत् क्षणं मृगेन्द्रेण सुषुप्सुना पुनः ॥**
**सैन्यान्न यातः समयाऽपि विव्यथे कथं सुराजम्भवमन्यथाऽथ वा ॥५२॥**

**सावज्ञमिति ॥ मृगेन्द्रेण सिंहेन सैन्यात् कटकात् न विव्यथे न भीतम् । कदाचित् दवीयो भवेत्तेत्याह—किंलक्षणात् सैन्यात् समया अन्तिके यातोऽपि व्रजतोऽपि, किंलक्षणेन मृगेन्द्रेण सकृत् एकवेलं सावज्ञं सावहेलं विलोचने नेत्रे उन्मील्य विकास्य पुनर्भूयोऽपि सुषुप्सुना शिशयिषुणा । अत्रैवाक्षेपपूर्वमर्थान्तरन्यासमाह—अथ वा युक्तमिदम्, अन्यथा धैर्यं विना कथं सुराजम्भवं यदि धैर्यं न भवेत् तत कथं सुराजम्भवं तर्हि कथं सुराज्ञा भूयते ॥५२॥**

सावज्ञमिति ॥ सावज्ञमनादरं यथा तथा विलोचने सकृदेकवारम् । 'एकस्य सकृत्' इति सकृदर्थे निपातः । क्षणमुन्मील्योन्मिष्य । पुनः सुषुप्सुना स्वप्तुमिच्छुना । स्वपेः सन्नन्तादुप्रत्ययः । 'रुदविद–' इत्यादिना सनः कित्त्वात् 'वचिस्वपि–' इत्यादिना सम्प्रसारणम् । मृगेन्द्रेण सिंहेन समया समीपे । 'समया-निकषाशब्दौ समीपे सम्प्रकीर्तितौ' इति सज्जनः । यातो गच्छतोऽपि । यातेर्लटः शत्रादेशः । सैन्यात् सेनातः । 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वम् । न विव्यथे न बिभ्ये । 'व्यथ भयसञ्चलनयोः' इति धातोर्भावे लिट् । अथवा । तथा हीत्यर्थः । अन्यथा भीतत्वे कथं सुराजम्भवं सुखेन राज्ञा भूयते । न कथमपीति भावः । राजा चाऽयं मृगाणामिति भावः । 'कर्तृकर्मणोश्च भूकृञोः' इति कर्तरीषदादौ चोपपदे भवतेः खल्-प्रत्यये नलोपमुमागमौ । अर्थान्तरन्यासः ॥ ५२ ॥

**उत्सेधनिर्धूतमहीरुहं (१) ध्वजैर्जनौघरुद्धोद्धतसिन्धुरंहसाम् ॥**
**नागैरधिक्षिप्तमहाशिलं मुहुर्बलं बभूवोपरि तन्महीभृताम् ॥ ५३ ॥**

**उत्सेधेति ॥ तद्बलं सैन्यं महीभृतामद्रीणाम् उपरि बभूव उपर्यभूत्, अथ च अधिकमभवत् । किंलक्षणं बलं ध्वजैः पताकाभिः उत्सेधनिर्धूतमहीरुहम् उत्सेधेन उच्छ्रायेण निर्धूता निराकृताः तिरस्कृताः महीरुहा वृक्षा येन तत्, किंलक्षणानां महीभृतां जनौघरुद्धोद्धतसिन्धुरंहसां जनौघेन जनसमूहेन रुद्धं निषिद्धम् उद्धतानां क्षुभितानां सिन्धूनां सरितां रंहो वेगो येषां ते तथा तेषाम्, अपरं किंलक्षणं बलं मुहुरत्यर्थं नागैर्गजैः अधःक्षिप्तमहाशिलम् अधःक्षिप्ता निरस्ताः तिरस्कृताः महाशिला महोपला येन तत्तथा ॥ ५३ ॥**

उत्सेधेति ॥ नागैर्गजैरधिक्षिप्तास्तिरस्कृता महाशिला येन तद्बलं सैन्यं ध्वजैरुत्सेधेनौन्नत्येन निर्धूता-अवगणिता महीरुहो येषु तेषाम् । 'उत्सेधश्चोच्छ्रयश्च सः' इत्यमरः । जनैरवरुद्धं प्रतिबद्धमुद्धतमुद्वेलं सिन्धुरंहो नदीवेगो येषां तेषां महीभृतां पर्वतानामुपरि मुहुर्बभूव । मार्गवशात् भूयसो भूधरान् मुहुरारुरोहेत्यर्थः । 'हयौघरुद्ध' इति पाठे हयौघेन घोटकसमूहेन रुद्धमित्यादि पूर्ववत् । अत्राऽवरोहणवदुत्कर्षश्चोपरिभावो विशेषणवैभवात्प्रतीयत इति तदभेदेनाऽपरिभावस्य बलभूधरविशेषणपदार्थहेतुकत्वात् श्लेषप्रतिभोत्थापितकाव्यलिङ्गविशेषः ॥ ५३ ॥

**श्मश्रूयमाणे मधुजालके तरोर्गजेन गण्डं कषता विधूनिते ॥**
**क्षुद्राभिरक्षुद्रतराभिराकुलं विदश्यमानेन जनेन दुद्रुवे ॥ ५४ ॥**

---

(१) महीरुहा ।

श्मश्रूयमाणे इति ॥ जनेन लोकेन आकुलं सभयं यथा स्यात्तथा दुद्रुवे पलायितम् । किंलक्षणेन जनेन अक्षुद्रतराभिः बृहतीभिः सान्द्राभिः क्षुद्राभिः मधुमक्षिकाभिः विदश्यमानेन पीड्यमानेन अद्यमानेन, क्व सति गजेन करिणा गण्डं कषता कपोलं घर्षमाणेन सता मधुजालके मधुमक्षिकापटले विधूनिते कम्पिते सति, किंलक्षणे मधुजालके तरोर्वृक्षस्य श्मश्रूयमाणे कार्ष्ण्यात् कूर्चकलापकतुल्ये । अतो गजकम्पितवृक्षाश्रितमधुमक्षिका जनान् जक्षुरित्यर्थः । श्मश्रु इवाचरति ॥ ९४ ॥

श्मश्रूयमाणे इति ॥ तरोर्वृक्षस्य श्मश्रूयमाणे श्मश्रुवदाचरति । तद्वदालम्बमान इत्यर्थः । उपमाऽलङ्कारः । श्मश्रुशब्दाचारे क्यङन्तात्लटः शानजादेशः 'अकृत्सार्वधातुकयोर्दीर्घः'। गण्डं कपोलं कषता तरुस्कन्धे कण्डूयमानेन गजेन मधुजालके क्षौद्रपटले विधूनिते कम्पिते सति । धूञो ण्यन्तात्कर्मणि क्तः 'धूञ्प्रीञोर्नुग्वक्तव्यः' इति नुगागमः । अक्षुद्रतराभिरतिस्थूलाभिः क्षुद्राभिः सरघाभिः । 'क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका' इत्यमरः । विदश्यमानेन चञ्चुभिर्भिद्यमानेन जनेन समाकुलं व्यग्रं यथा तथा दुद्रुवे पलायितम् । भावे लिट् । स्वभावोक्तिरुक्तोपमासंसृष्टा ॥ ९४ ॥

नीते पलाशिन्युचिते शरीरवद्गजान्तकेनाऽन्तमदान्तकर्मणा ॥
सञ्चेरुरात्मान इवाऽपरं क्षणात्क्षमारुहं देहमिव प्लवङ्गमाः ॥ ९५ ॥

नीते इति ॥ प्लवङ्गमाः वानराः अपरमन्यं क्षमारुहं वृक्षं क्षणादेव तत्कालं सञ्चेरुः संक्रान्ताः । क्व सति गजाऽन्तकेन मतङ्गजकालेन पलाशिनि वृक्षे अन्तं नीते सति नाशं प्रापिते सति, किंलक्षणे पलाशिनि उचिते वासयोग्ये, किंलक्षणेन गजाऽन्तकेन अदान्तकर्मणा क्रूरकर्मणा, किंवत् शरीरवत् देहे इव, के इव आत्मान इव । यथा आत्मानो जीवाः अपरं देहं सञ्चरति संक्रामन्ति । क्व सति अन्तकेन यमेन शरीरे वपुषि अन्तं नीते सति, किंलक्षणे शरीरे उचिते योग्ये । यथा अन्तकेन देहे अन्तं नीते सति देही देहान्तरं व्रजति, एवं हस्तिना वृक्षे उन्मीलिते सति वानरा अन्यं वृक्षम् आयन्निति । उक्तं च—

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥

वृक्षस्य देह उपमानं, गजस्य अन्तकः, वानराणामात्मानः ॥ ९५ ॥

नीते इति ॥ उचिते परिचिते पलाशिनि द्रुमे । 'पलाशी द्रुद्रुमाऽगमाः' इत्यमरः । शरीरवत्पूर्वशरीरवत् । 'तत्र तस्येव' इति वतिप्रत्ययः । अदान्तकर्मणा दुर्दान्तव्यापारेण, गजोऽन्तक इवेत्युपमितसमासः, साहचर्यात् । तेन गजान्तकेनाऽन्तं नाशं गमिते सति प्लवैर्गच्छन्तीति प्लवङ्गमाः कपयः । 'गमेश्च' इति खच्प्रत्यये मुमागमः । आत्मानो जीवा इवाऽपरं क्षमारुहं देहमिव क्षणात्सञ्चेरुः। सम्प्रविष्टा इत्यर्थः । अनेकेवशब्दवाक्यार्थोपमा । सा च शरीरवदिति तद्धितगता, अन्यत्र सयासगतेति सङ्करः ॥ ९५ ॥

प्रह्वानतीव क्वचिदुद्धतिश्रितः क्वचित्प्रकाशानथ गह्वरानपि ॥
साम्यादपेतानपि (१)वाहिनी हरेस्तदाऽतिचक्राम गिरीन्गुरूनपि ॥ ९६ ॥

प्रह्वानिति ॥ अथाऽनन्तरं हरेः श्रीकृष्णस्य वाहिनी सेना तदा तस्मिन् काले गुरूनपि गिरीन् महतोऽपि पर्वतान् अतिचक्राम अतिक्रान्तवती । किंलक्षणान् गिरीन् क्वचित् कस्मिंश्चित् प्रदेशे प्रह्वान् नीचान्, अपरं किंलक्षणान् गिरीन् क्वचिद् उद्धतिश्रितः औन्नत्ययुक्तान्, पुनः किंलक्षणान् क्वचित् प्रकाशान् प्रकटान् वृक्षलतादिवर्जितान्, अपरं

(१) ०निति ।

किंलक्षणान् गिरीन् गह्वरानपि गहनान् वृक्षलतादिसङ्कुलान्, अपरं किंलक्षणान् गिरीन् अत एव साम्यात् अपेतान् समभूमित्वरहितान् ॥ ५६ ॥

प्रह्वानिति ॥ क्वचिदतीव नितान्तं प्रह्वान् प्रवणान्, अन्यत्रानुकूलान् क्वचिदुद्धतिं श्रयन्तीत्युद्धतिश्रितः औन्नत्यभाजः औद्धत्यभाजश्च । श्रयतेः क्विप् तुक् । क्वचित्प्रकाशान् प्रकटाननवगूढवृत्तींश्च । क्वचिदतिगह्वरानपि । अपिश्चार्थे । अप्रवेशान्, अन्यत्र गूढांश्च । इतीत्थं साम्यादपेतान् विषमरूपान्विषमवृत्तांश्च । अत एव गुरून्महतोऽपि पूज्यानपि गिरींस्तदा हरेर्वाहिनी सेना अतिचक्रामाऽतीत्य गता उल्लङ्घिता च ।

'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते' ॥

इति स्मरणादिति भावः । गुरूणामप्यतिक्रम इति विरोधेऽपिशब्दः । स चोक्तवैषम्यदोषोद्घाटनेन परिहृत इति विरोधाभासः । स च गुरूनिति वाच्यप्रतीयमानयोरभेदाध्यवसायात् श्लेषमूलातिशयोक्त्युत्थापित इति सङ्करः ॥ ५६ ॥

**यावद्व्यगाहन्त न दन्तिनां घटास्तुरङ्गमैस्तावदुदीरितं खुरैः ॥**
**क्षिप्तं समीरैः सरितां पुरः पतज्जलान्यनैषीद्रज एव पङ्कताम्(१) ॥ ५७ ॥**

यावदिति ॥ यावद्दन्तिनां घटाः करिणां श्रेणयः सरितां जलानि न व्यगाहन्त नदीनां पानीयानि न विजगाहिरे, तावद्रज एव रेणुरेव जलानि पङ्कतां कर्दमरूपताम् अनैषीत् निनाय । किंलक्षणं रजः पुरोऽग्रे पतत् भ्रश्यत्, अपरं किंलक्षणं रजः तुरङ्गमैः उदीरितम् अश्वैः उत्क्षिप्तं, कैः उत्क्षिप्तं खुरैः शफैः, अपरं किंलक्षणं रजः समीरैर्वातैः क्षिप्तं प्रेरितम् । यदिमे व्यगाहिष्यन्त, तदा मदजलभएव (?) बहुलीकृतेन जलेन पङ्कतां रजोऽनयदिति भावः ५७

यावदिति ॥ दन्तिनां घटा गजव्रजा यावत्र व्यगाहन्त न व्यलोडयंस्तावत्तुरङ्गमैः कर्तृभिः खुरैः करणैरुदीरितमुत्थापितम् । अथ समीरैः मारुतैः क्षिप्तं विकीर्णम् अत एव पुरो गजप्रवेशात्प्रागेव पतद्रजो भूरेणुरेव सरितां जलानि पङ्कतामनैषीन्निनाय । नयतेर्द्विकर्मकत्वाल्लुङि वृद्धिः । अत्रापि सरितां पङ्कत्वाऽसम्बन्धेऽपि सम्बन्धोक्तेः पूर्ववदतिशयोक्तिः ॥ ५७ ॥

**स व्याप्तवत्या परितोऽपथान्यपि स्वसेनया सर्वपथीनया तया ॥**
**अम्भोभिरुल्लङ्घिततुङ्गरोधसः प्रतीपनाम्नीः कुरुते स्म निम्नगाः ॥५८॥**

स इति ॥ सः श्रीकृष्णः तया स्वसेनया निजपताकिन्या निम्नगाः तरङ्गिणीः प्रतीपनाम्नीः कुरुते स्म पश्चाद्गामिनीः चकार । किंलक्षणा निम्नगाः अम्भोभिरुदकैः उलङ्घिततुङ्गरोधसः अतिक्रान्तोच्चैस्तरतटाः । किंलक्षणया स्वसेनया परितः समन्तात् अपथानपि अमार्गानपि व्याप्तवत्या अश्नुवत्या, अपरं किंलक्षणया स्वसेनया सर्वपथीनया सर्वेषु समविषमोन्नतेषु पथिषु गच्छतीति सर्वपथीना तया सर्वमार्गगामिन्या, प्रतीपं प्रतिलोमं गच्छतीति नाम यासां ताः तथा ॥ ५८ ॥

स इति ॥ स हरिः परितः समन्तादपथान्यपमार्गानपि । 'पथो विभाषा' इति निषेधविकल्पात् 'ऋक्पूः–' इत्यादिना समासान्तः । 'अपथं नपुंसकम्' इति नपुंसकत्वम् । व्याप्तवत्याऽपि, सर्वान्पथो व्याप्नोतीति सर्वपथीना । 'तत्सर्वादेः–' इत्यादिना खप्रत्ययः । तया सर्वपथीनया तया स्वसेनया निमित्तेन अम्भोभिरुल्लङ्घितानि युगपदखिलसेनाप्रवेशेन प्रतीपगमनादुपर्याक्रान्तानि तुङ्गरोधांसि यासां ताः निम्नं गच्छन्तीति निम्नगा नद्यः प्रतीपनाम्नीः कुरुते स्म । प्रतिगता उत्तानगा आपो यासां ताः प्रतीपाः । 'ऋक्पूः–' इत्यादिना समासान्तः । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इतीकारः । अथवा प्रतीपं निम्नगानामविरुद्धं नाम उत्तानगा-

---

( १ ) सर्वङ्कषायाम् इत श्लोकात् प्राक् 'स व्याप्तवत्या' इति श्लोकः ।

इति नामधेयं यासां ताः प्रतीपनाम्न्यः। 'अन उपधालोपिनोऽन्यतरस्याम्' इति ङीप्। तास्तथा चक्रुरित्यर्थः। अत्र निम्नगानां प्रतीपनामाऽसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः॥ ५८॥

**रन्तुं क्षतोत्तुङ्गनितम्बभूमयो मुहुर्व्रजन्तः प्रमदं मदोद्धताः॥**
**पङ्कं कराऽपाकृतशैवलांशुकाः समुद्रगाणामुदपादयन्निभाः॥ ५९॥**

रन्तुमिति॥ इभाः करिणः समुद्रगाणां नदीनां पङ्कमुदपादयन् कर्दममुत्पादयामासुः। किंलक्षणाः इभाः रन्तुं क्षतोत्तुङ्गनितम्बभूमयः क्रीडितुं विदारितोन्नततटीप्रदेशाः, अपरं किंलक्षणाः इभाः अत एव मुहुर्वारंवारं प्रमदं हर्षं व्रजन्तः यान्तः, अपरं किंलक्षणाः मदोद्धताः मत्ताः, अपरं किंलक्षणाः इभाः कराऽपाकृतशैवलांशुकाः हस्ताऽपाकृतजलनीलीवसनाः। येऽपि मदोद्धताः मत्ताः, ते परस्त्रीणां रन्तुं नखैः पीवरां नितम्बस्थलीं विदारयन्तः, तथा अम्बरं चाऽपहरन्तः, अत एव मुहुः प्रमदं हर्षं प्राप्नुवन्तः सन्तः पङ्कं मालिन्यं शीलभङ्गरूपं पापमुत्पादयन्ति। 'जलनीली तु शैवालं शेवलः', पङ्कोऽस्त्री पापकर्दमा'विति विश्वः॥५९॥

रन्तुमिति॥ रन्तुं क्रीडितुं क्षता एकत्र विषाणैरन्यत्र नखैश्च विदालिता उत्तुङ्गा नितम्बभूमयो रोधोभागाः श्रोणिभागाश्च येस्ते। 'नितम्बो रोधसि स्कन्धे शिखरेऽपि कटीरके' इति विश्वः। मुहुः प्रमदं हर्षं व्रजन्तः। मदेन दानेन दर्पेण चोद्धताः। करैर्हस्तैरपाकृतानि शैवलानि अंशुकानीवांशुकानि येस्त इभाः समुद्रं गच्छन्तीति समुद्रगाणां समुद्रपत्नीनां नदीनाम्। 'एकाजुत्तरपदे णः' इति णत्वम्। पङ्कं कर्दमं कलुषं चोदपादयन्। 'पङ्कोऽस्त्री कर्दमैनसोः' इति विश्वः। यथा मदोद्धताः पराङ्गनानां दोषमुत्पादयन्ति तद्वदिति भावः। अत्र प्रस्तुतेभविशेषणादप्रस्तुतस्त्रीसङ्ग्रहणसाहसिकप्रतीतेः समासोक्तिः स्त्रीपङ्कयोरभेदाध्यवसायादिति श्लेषमूलातिशयोक्त्युत्थापितेति सङ्करः॥ ५९॥

**भग्नोरुरोधःपरिपूरिता(१)ऽम्भसः समस्थलीकृत्य पुरातनीर्नदीः॥**
**कूलङ्कषौघाः सरितस्तदा(२)ऽपराः प्रवर्तयामासुरिभा मदाम्बुभिः॥६०॥**

भग्नेति॥ इभाः गजाः पुरातनीः नदीः पूर्वभवाः तरङ्गिणीः समस्थलीकृत्य समरूपतां प्रापय्य तदा तत्रकाले अपराः सरितः अन्या नदीः प्रवर्तयामासुः चक्रिरे। असमस्थलाः समस्थलाः कृत्वा इति समस्थलीकृत्य। कैः प्रवर्तयामासुः मदाऽम्बुभिः दानोदकैः, किंलक्षणाः सरितः कूलङ्कषौघाः कूलङ्कषाः ओघाः प्रवाहाः यासां तास्तथा कूलमुद्रुजःपूराः, अपरं किंलक्षणाः सरितः भग्नोरुरोधःपरिपूरिताऽम्भसः भग्नविशालतटभरितपानीयाः, भग्नोरुरोधोभिः भ्रंशितविशालतटैः परिपूरितं भरितम् अम्भो यासां तास्तथा॥ ६०॥

रुग्णेति॥ इभा रुग्णैर्भग्नैरुरुभिर्महद्भी रोधोभिस्तटैः परिपूरिताम्भसः। मृत्क्षेपशोषिताम्भस इत्यर्थः। पुराभवाः पुरातनीः 'सायंचिरम्-' इत्यादिना ट्युप्रत्ययः तुडागमश्च। 'टिड्ढाणञ्-' इत्यादिना ङीप्। नदीः समस्थलीकृत्य स्थलसमाः कृत्वा। मदाम्बुभिः स्वमदोदकैः कूलं कषन्तीति कूलङ्कषाः ओघा यासां ताः उभयकूलप्रवाहिन्योऽपरा अन्याः सरितः प्रवर्तयामासुः। एतेन गजसम्पत्तिरुक्ता। अत्र नदीनां समस्थलत्वासम्बन्धे मदाम्बूनां च सरित्त्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरिति सजातीयसङ्करः॥ ६०॥

**पद्मैरनन्वीतवधूमुखद्युतो गता न हंसैः श्रियमातपत्रजाम्॥**
**दूरेऽभवन् भोजबलस्य गच्छतः शिलोपमा(३)ऽतीतगजस्य निम्नगाः॥६१॥**

पद्मैरिति॥ भोजबलस्य श्रीकृष्णसैन्यस्य गच्छतः चलतः सतः निम्नगाः नद्यः दूरेऽभवन्। नदीनां बलस्य च महदन्तरं बभूवेत्यर्थः। अथ च अनिकटे लज्जयाऽभूवन्, इति वक्रोक्तिः। ताः बलानि नाऽनुचक्रुरित्यर्थः। किंलक्षणाः निम्नगाः पद्मैः अनन्वीतवधूमुख-

(१) रुग्णोरु। (२) ०स्तथा। (३) शैलोपमा।

युतः अम्बुजैरननुकृतस्त्रीवक्त्रकान्तयः, अपरं किंलक्षणाः निम्नगाः हंसैः मरालैः कृत्वा आतपत्रजां श्रियं छत्रोत्थां शोभां न गताः न प्राप्ताः, किंलक्षणस्य भोजबलस्य शिलोपमाऽतीतगजस्य दृषदुपमानाऽतिक्रान्तमतङ्गजस्य । गण्डशैलेभ्योऽपि यत्र महान्तो गजाः इत्यर्थः ६१

पद्मैरिति ॥ पद्मैरनन्वीता अप्राप्ता वधूमुखस्य युत् श्रीर्याभिस्ताः । वधूमुखश्रीजितपद्मा इत्यर्थः । अन्वीतेति 'ईङ् गतौ' इति धातोः कर्मणि क्तः । हंसैरातपत्रजां छत्रजन्यां श्रियं न गता अगताः । आतपत्रजितहंसश्रीका इत्यर्थः । निम्नगा नद्यः शैलोपमामतीताः शिला(?)साम्यमतिक्रान्ता गजा यस्मिंस्तस्य गच्छतः भोजबलस्य यादवसैन्यस्य दूरेऽभवन । अतिव्यवहिता इत्यर्थः । अपकृष्टाश्चेति गम्यते । तदभेदाध्यवसायेनैव निम्नगानां दूरभवनस्य तद्विशेषणपदार्थहेतुकत्वात् श्लेषमूलातिशयोक्तिसमुत्थापितः काव्यलिङ्गभेदः ॥६१॥

**स्निग्धाञ्जनश्यामतनूभिरुन्नतैर्निरन्तराला करिणां कदम्बकैः ॥**
**सेना सुधाक्षालितसौधसम्पदां पुरां बहूनां परभागमाप सा ॥ ६२ ॥**

**स्निग्धाञ्जनेति** ॥ सा हरिसेना बहूनां पुरां भूयसीनां नगरीणां परभागम् आप दूरदेशं लेभे बह्वीः नगरीः अतिचक्रमे(?) । अथ च परभागं शोभाऽतिशयं लेभे इत्यर्थान्तरम् । किंलक्षणा सेना करिणां कदम्बकैः हस्तिनां वृन्दैः निरन्तराला सङ्कुला, किंलक्षणैः करिसमूहैः स्निग्धाञ्जनश्यामतनूभिः अरूक्षकज्जलकृष्णदेहैः, अपरं किंलक्षणैः करिकदम्बकैः उन्नतैः उच्चैः, किंलक्षणानां पुरां सुधाक्षालितसौधसम्पदां सुधया दग्धदृषच्चूर्णेन क्षालिता धौताः सौधसम्पदो हर्म्यश्रियो यासां तास्तथा सुधाधौतहर्म्यश्रियः अतो वर्णद्वययोगात् परभागप्राप्तेः ॥ ६२ ॥

स्निग्धाञ्जनेति ॥ स्निग्धाञ्जनमिव श्यामाभिस्तनूभिरुन्नतैः करिणां कदम्बकैर्निरन्तराला नीरन्ध्रा सा सेना सुधया लेपनविशेषेण क्षालिता धवलिताः सौधसम्पदो यासां तासाम् । 'लेपभेदेऽमृते सुधा' इति वैजयन्ती । बहूनां पुरां पुरीणां परभागं विप्रकृष्टदेशमाप । दूरमतीत्य गतेत्यर्थः । वर्णोत्कर्षश्च परभागः । तदभेदाध्यवसायेन परभागाप्तौ विशेषणगत्या श्यामकरिकदम्बकनैरन्तर्यस्य हेतुत्वात्पूर्ववत्काव्यलिङ्गभेदः ॥

**प्रासादशोभाऽतिशयालुभिः पथि प्रभोर्निवासाः पटवेश्मभिर्बभुः ॥**
**नूनं सहाऽनेन वियोगविक्लवा पुरः पुरश्रीरिव(१) निर्ययौ तदा ॥ ६३ ॥**

**प्रासादेति** ॥ प्रभोः श्रीकृष्णस्य निवासाः निवेशस्थानानि अध्वनि मार्गे पटवेश्मभिः बभुः दूष्यैः शोभन्ते स्म । किंलक्षणैः पटवेश्मभिः प्रासादशोभाऽतिशयालुभिः धवलगृहशोभाऽतिक्रान्तैः प्रासादशोभामतिशेरते अतिक्रामन्ति इत्येवंशीलानि प्रासादशोभाऽतिशयालूनि तैः । उत्प्रेक्ष्यते—तदा प्रायेण नूनं ध्रुवम् अनेन श्रीकृष्णेन सह वियोगविक्लवा विरहपीडिता सती पुरः अग्रे पुरश्रीः द्वारकालक्ष्मीर्निर्ययाविव निर्गतेव । अन्यथा अध्वनि निवासानामेतादृशं सश्रीकत्वं न स्यादित्यर्थः ॥ ६३ ॥

प्रासादेति ॥ पथि मार्गे प्रभोः कृष्णस्य निवासाः सेनानिवेशाः प्रासादशोभामतिशयालुभिरतिशायकैः । 'आलुचि शीङ्ग्रहणमपि कर्तव्य'मित्यालुच्प्रत्ययः । पटवेश्मभिः पटवेश्मैर्बभुः । तेनोत्प्रेक्ष्यते-तदा द्वारकानिर्याणकालेऽनेन कृष्णेन सह वियोगविक्लवा विरहभीरुः पुरश्रीर्द्वारकानगरलक्ष्मीरपि पुरोऽग्रे निर्ययौ निर्गता । नूनं द्वारकातो न भिद्यन्ते अस्य निवासाः शोभयाति भावः ॥ ६३ ॥

**वर्ष्म द्विपानां विरुवन्त उच्चकैर्वनेचरेभ्यश्चिरमाचचक्षिरे ॥**
**गण्डस्थलाघर्षगलन्मदोदकद्रवद्रुमस्कन्धनिलायिनोऽलिनः(२) ॥ ६४ ॥**

---

(१) श्रीरपि । (२) ०ऽलयः ।

वर्ष्मेति ॥ अलिनो भ्रमराः उच्चकैस्तारं विरुवन्तः गुञ्जन्तः सन्तः वनेचरेभ्यः पर्वतीयेभ्यो भिल्लेभ्यो द्विपानां गजानां वर्ष्म प्रमाणम् आचचक्षिरे उक्तवन्तः । किंलक्षणाः अलिनः गण्डस्थलाऽऽघर्षगलन्मदोदकद्रवद्रुमस्कन्धनिलायिनः कटतटाघर्षणस्रवद्दानजलार्द्र-वृक्षप्रकाण्डस्थायिनः, गण्डस्थलानाम् आघर्षः घर्षणं तेन स्रवत् क्षरत् यद्दानजलं तेन द्रवः आर्द्रता येषु ते गण्डस्थलाघर्षगलन्मदोदकद्रवाः, एवंभूताश्च ते द्रुमाः अनोकहाश्च तेषां स्कन्धेषु प्रकाण्डेषु निलायो निलय आश्रयो वा विद्यते येषां ते तथा । गजमदाऽऽर्द्रतरुस्कन्ध-निलीनाऽलिदर्शनात् गजप्रमाणं पर्वतीया अनुमीतवन्तः–एवंप्रमाणाः करिणः इति । कथमन्यथाऽत्र मदगतिरित्यर्थः ॥ ६४ ॥

वर्ष्मेति । गण्डस्थलानामाघर्षेण सङ्घर्षेण गलता स्रवता मदोदकेन द्रवेष्वार्द्रेषु द्रुमस्कन्धेषु निलीयन्त-इति निलायिनस्तन्निवासिन उच्चकैर्विरुवन्तो गुञ्जन्तोऽलयः द्विपानां सेनागजानां वर्ष्म प्रमाणम् । 'वर्ष्म देहप्रमाणयोः' इति विश्वः । वनेचरेभ्यः किरातेभ्यः चिरमाचचक्षिरे । इयन्तो गजा इत्याख्यातवन्त-इत्यर्थः । गजवर्ष्माऽनुमापकेष्वलिषु विरावयोगादाख्यानमुत्प्रेक्ष्यते । वाचकाऽप्रयोगाद्गम्योत्प्रेक्षा ॥ ६४ ॥

**आयामवद्भिः करिणां घटाशतैरधःकृताऽट्टालकपङ्क्तिरुच्चकैः ॥**
**दूष्यैर्जितोदग्रगृहाणि सा चमूरतीत्य भूयांसि पुराण्यवर्तत ॥ ६५ ॥**

आयामवद्भिरिति ॥ सा चमूः सा पताकिनी भूयांसि पुराणि अतीत्य अवर्तत वर्तते स्म बहूनि नगराण्युल्लङ्घ्याऽतिचक्राम । अथ च भूयांसि पुराणि अतीत्य अवर्तत अजयत् । किंलक्षणा सेना उच्चकैः उन्नतैः आयामवद्भिर्दीर्घैः करिणां दन्तिनां घटाशतैः श्रेणीसहस्रैः अधःकृताऽट्टालकपङ्क्तिः तिरस्कृताऽट्टालकमाला, अपरं किंलक्षणानि पुराणि दूष्यैः पटगृहैः जितोदग्रगृहाणि हसितोत्तमवेश्मानि ॥ ६५ ॥

आयामवद्भिरिति ॥ आयामो दैर्घ्यं सोऽस्ति येषां तद्वद्भिः । आयतैरित्यर्थः । करिणां सम्बन्धिभिर्घटा-शतैर्व्यूहशतैः । 'करिणां घटना घटा' इत्यमरः । अधःकृतास्तिरस्कृता अट्टालकपङ्क्तयोऽट्टश्रेण्यो यया सा । 'अट्टास्वट्टालकः स्मृतः' इति वैजयन्ती । सा चमूरुच्चकैरुन्नतैर्दूष्यैः पटमण्डपैः जितान्युदग्राणि गृहाणि येषां तानि भूयांसि पुराण्यतीत्याऽवर्तत । अतिक्रम्य गतेत्यर्थः । शोभया अतिशय्य स्थितेति च गम्यते । तदभेदाध्यवसायेन श्लेषमूलातिशयोक्त्युत्थापितं पूर्ववत्पदार्थहेतुकं काव्यलिङ्गम् ॥ ६५ ॥

**उद्धूतमुच्चैर्ध्वजिनीभिरंशुभिः प्रतप्तमभ्यर्णतया विवस्वतः ॥**
**आह्लादिकह्लारसमीरणाऽऽहते पुरः पपाताऽम्भसि यामुने रजः ॥ ६६ ॥**

उद्धूतमिति ॥ अथाऽनन्तरं यामुने अम्भसि पुरोवर्तिनि रजः पपात रेणुरपतत् । किंलक्षणं रजः ध्वजिनीभिः चमूभिः ऊर्ध्वम् उच्चैः उद्धूतमुत्क्षिप्तम्, अपरं किंलक्षणं रजः रवेः श्रीसूर्यस्य अभ्यर्णतया सामीप्येन अंशुभिः किरणैः प्रतप्तं सन्तप्तं, किंलक्षणे अम्भसि आह्लादिकह्लारसमीरणाऽऽहते आह्लादयतीति आह्लादी प्रमोदकारी योऽसौ कह्लार-समीरणः सौगन्धिकवायुः तेन आहते कम्पिते, अत एव रजः अम्भसि अपतत् । यः किलोर्ध्वं गिर्यादिकमारूढः, स रविकिरणसन्तप्तः अम्भसि निमज्जति । 'सौगन्धिकं तु कह्लारं हल्लकं रक्तसन्ध्यक'मित्यमरः ॥ ६६ ॥

अथ हरिसेनाः कालिन्दीं प्रत्यासेदुरित्याह—

उद्धूतमिति ॥ ध्वजिनीभिः सेनाभिरुच्चैरुद्धूतमूर्ध्वं क्षिप्तम् , अत एव अभ्यर्णतयाऽन्तिकतया । 'उप-कण्ठान्तिकाऽभ्यर्णा' इत्यमरः । विवस्वतोंऽशुभिः प्रततम् । प्रतप्तमिवेत्यर्थः । अत एव व्यञ्जकाऽप्रयोगा-

रम्योत्प्रेक्षा । आह्लादिन आह्लादका ये कह्लारसमीरणाः सौगन्धिकमारुताः । 'सौगन्धिकं तु कह्लारम्' इत्यमरः । तैराहते कम्पिते यामुने यमुनासम्बन्धिन्यम्भसि पुरोऽग्रे रजो धूलिः पपात । सन्तप्ता हि सन्तापमसहमानाः पुरो धावित्वा क्वचन शिशिरे पयसि पतन्तीति भावः ॥ ६६ ॥

अथ चतुर्भिः कलापकम्—

**या घर्मभास(१)स्तनयाऽपि शीतलैः स्वसा यमस्याऽपि जनस्य जीवनैः॥**
**कृष्णाऽपि शुद्धेरधिकं विधातृभिर्विहन्तुमंहांसि जलैः पटीयसी ॥६७॥**
**यस्या महानीलतटीरिव द्रुताः प्रयान्ति पीत्वा हिमपिण्डपाण्डवः(२) ॥**
**कालीरपस्ताभिरिवाऽनुरञ्जिताः क्षणेन भिन्नाऽञ्जनवर्णतां घनाः ॥ ६८ ॥**
**व्यक्तं बलीयान् यदि हेतुरागमादपूरयत् सा जलधिं न जाह्नवी ॥**
**गङ्गौघ(३)निर्भर्त्स्मितशम्भुकन्धरासवर्णमर्णः कथमन्यथाऽस्य तत् ॥६९॥**
**अभ्युद्यतस्याऽऽक्रमितुं(४) जवेन गां तमालनीला नितरां धृतायतिः ॥**
**सीमेव सा तस्य पुरः क्षणं बभौ बलाऽम्बुराशेर्महतो महापगा ॥ ७० ॥**

**या घर्मभास इत्यादि ॥ अभ्युद्यतस्येति ॥** सा महापगा महानदी यमुना तस्य बलाऽम्बुराशेः सैन्यसमुद्रस्य पुरोऽग्रे क्षणं क्षणमात्रं सीमेव मर्यादेव बभौ वेलातुल्या रेजे । कथमन्यथा क्रान्तेति भावः । किंलक्षणस्य बलोदधेः जवेन रंहसा गां भुवम् आक्रमितुमुल्लङ्घितुमुद्यतस्य प्रवृत्तस्य, किंलक्षणा महापगा तमालनीला तापिच्छतरुश्यामा, अपरं किंलक्षणा महापगा नितरामत्यर्थं धृतायतिः ऊढदैर्घ्या । महाब्धेरपि रयाद् भुवं लिलङ्घयिषतः सतः तमालनीला दीर्घदीर्घा वेला रोधिका भवति । **या घर्मभास इति ॥** अपरं किंलक्षणा महापगा या महानदी अंहांसि एनांसि पापानि विहन्तुं क्षपितुं पटीयसी कुशलतरा, कैः जलैः पानीयैः । किंलक्षणैर्जलैः सा वा किंलक्षणा इति विरोधमाह—घर्मकिरणस्य तनयाऽपि उष्णभासः सुताऽपि, जलैः किंलक्षणैः शीतलैः हिमैः, अपरं किंलक्षणा महापगा यमस्य स्वसाऽपि अन्तकस्य भगिन्यपि, जलैः किंलक्षणैः जनस्य जीवनैः लोकस्याऽऽश्वासकारिभिः, अपरं किंलक्षणा सा कृष्णाऽपि नीलाऽपि, किंलक्षणै जलैः शुद्धेः निर्मलतायाः अधिकं विधातृभिः मालिन्यनाशकैः पापक्षेप्तृभिः । अत्र विरोधः सुगमः । **यस्या इति ॥** किञ्च यस्याः यमुनाया नद्याः अपः पीत्वा उदकान्यापीय घनाः मेघाः क्षणेन तत्क्षणं भिन्नाञ्जनवर्णतां प्रयान्ति कृष्णकज्जलमलिनत्वं प्राप्नुवन्ति । किंलक्षणाः घनाः हिमपिण्डपाण्डवः तुषारसमूहधवला अपि, किंलक्षणा अपः कालीः कृष्णाः । अपरं किंलक्षणाः घनाः, अतश्चोत्प्रेक्ष्यन्ते—ताभिरद्भिः अनुरञ्जिता इव । यः किल रज्यते स वर्णान्तरमाप्नोति । अपरं किंलक्षणाः अपः अतएव द्रुताः महानीलतटीरिव गलितेन्द्रनीलस्थलसदृशीः । **व्यक्तमिति ॥** किञ्च व्यक्तं प्रकटं यदि चेत् आगमात् शास्त्रात् हेतुः अनुमानं बलीयान् अतिबलवान्, तर्हि सा यमुना जलधिं समुद्रम् अपूरयत् पूरयति स्म । जलनिर्भरं चकारेत्यर्थः । न तु जाह्नवी नो गङ्गा अपूरयत् । कस्मादित्याह—अन्यथा यमुनाजलपूरणं विना अस्य जलधेः अर्णः अम्भः पानीयं

---

(१) घर्मभानो० । (२) पाण्डुराः । (३) गाङ्गौघ । (४) ०द्य क्रमितुं ।

गङ्गौघनिर्भस्मितशम्भुकन्धरासवर्णं कथं स्यात्, अन्यथा चेत् असौ यमुनया न पूरितः तत्कथमस्याऽब्धेः अम्भः हरगलनीलम्। गङ्गया पूरणे हि कारणस्य सितत्वात्तेनापि सितेन भवितव्यम्। तत्तु न च धवलम् अपि तु नीलं, तस्मादनुमितमाह—सा यमुनैव अब्धिम् अपूरयत्। असितेन जलेन भाव्यं यदा आगमात् अनुमानं बलवत् पि तु नीलं त आगमस्य बलीयान् जाह्नव्येव(?)। अगस्त्यपीतो हि समुद्रो भागीरथ्या पूरितः इत्यागमः। गङ्गौघेन जाह्नवीप्रवाहेण निर्भस्मिता क्षालितभस्मा या शम्भुकन्धरा नीलकण्ठग्रीवा तया सवर्णं समानवर्णमेकवर्णं, नीलमित्यर्थः। गङ्गाधरस्य हि कण्ठः कालकूटधारणान्नील- इत्यागमः। कलापकम्॥ ६७–७०॥

अथ चतुर्भिर्यमुनां वर्णयति—

**या घर्मभानोरिति**॥ या यमुना घर्मभानोरुष्णांशोस्तनयाऽपि सती, शीतलैरपि। अपिर्विरोधे। स चोष्णजातायाः शैत्याऽनुपपत्तेरिति भावः। यमस्याऽन्तकस्य स्वसाऽपि जनस्य जीवनैरुज्जीवकैः। अत्रा-न्येकोदराणां भिन्नक्रियाऽनुपपत्तेर्विरोधः। 'कालिन्दी सूर्यतनया यमुना शमनस्वसा' इत्युभयत्राप्यमरः। किञ्च। कृष्णा कृष्णवर्णा मलिना च तथापि शुद्धैर्निर्मलैरत्यधिकं विधातृभिः सम्पादकैर्जलैरंहांसि पापानि विहन्तुं पटीयसी समर्थतरा। अत्र यमुनातज्जलगतत्वेन निर्दिष्टयोर्गुणक्रिययोर्विरोधेन त्रिषु विरोधेषु संसृष्टेषु तृतीयः कृष्णेति श्लेषप्रतिभोत्थापित इति सङ्क्षेपः॥ ६७॥

**यस्या इति**॥ हिमपिण्डपाण्डुरा हिमसङ्घशुभ्राः घना मेघाः द्रुता द्रवीकृता महानीलतटीरिन्द्रनील-स्थलानीव कालीः कृष्णवर्णाः। 'जानपद—' इत्यादिना ङीप्। यस्याः कालिन्द्या अपः पीत्वा ताभिः पीताभिरद्भिरनुरञ्जिता इव क्षणेन भिन्नाञ्जनवर्णतां स्नेहमृदितकज्जलवर्णतां प्रयान्ति। अत्र तटीरिवाऽनु-रञ्जिता इवेति चोत्प्रेक्षया सङ्कीर्णेयं घनानामञ्जनोपमेति सङ्ग्रहः॥ ६८॥

**व्यक्तमिति**॥ हेतुर्युक्तिः। अनुमानमिति यावत्। आगमात् 'गङ्गा सागरपूरिणी'त्यागमप्रमाणात्। बली-यान् यदि प्रबलश्चेत् सा यमुना जलाधिमपूरयत्। जह्नोरपत्यं स्त्री जाह्नवी नाऽपूरयत् व्यक्तं सत्यमित्युत्प्रेक्षा। कुतः—अन्यथा विपर्यये अस्य जलधेः तत्प्रसिद्धमर्णोऽम्भः। 'अम्भोऽर्णस्तोयपानीयम्' इत्यमरः। गाङ्गेन गङ्गासम्बन्धिना ओघेन प्रवाहेण निर्भस्मितताया निर्भस्मीकृतायाः शम्भुकन्धराया हरकण्ठस्य सवर्णं समान-वर्णम्। कृष्णवर्णमित्यर्थः। 'ज्योतिर्जनपद—' इत्यादिना समानस्य सभावः। अन्यथा गङ्गौघस्य धावल्या-द्धवलमेव स्यात्। तथा च ग्रावाप्लवनवाक्यवदागमोऽप्यन्यथा नेय इति कवेराशयः॥ ६९॥

**अभ्युद्यतस्येति**॥ तमालवन्नीला कृष्णा नितरां धृतायतिरत्यन्तं कृतदैर्घ्या सा महापगा महानदी यमुना। जवेन गां भुवं क्रमितुमाक्रमितुमभ्युद्यतस्योद्युक्तस्य तस्य महतो बलाऽम्बुराशेः सेनासमुद्रस्य पुरोऽग्रे क्षणं सीमेव वेलेव बभावित्युत्प्रेक्षा। क्षणमिति क्षणमात्रनिरोधिकाऽभवत्। अनन्तरमेव तरणादिति भावः॥७०॥

**लोलैररित्रैश्चरणैरिवाऽभितो जवाद् व्रजन्तीभिरसौ सरिज्जनैः॥**
**नौभिः प्रतेरेऽनुचित(१)प्लवोदितभ्रमीनिमीलल्ललनाऽवलम्बितैः॥७१॥**

**लोलैरिति**॥ जनैः सैनिकलोकैः असौ सरित् नदी यमुना प्रतेरे उत्तीर्णा। काभिः नौभिः तरीभिः, किंलक्षणाभिः नौभिः अभितः पार्श्वद्वये लोलैः चटुलैः अरित्रैः क्षेपणकाष्ठैः कृत्वा जवात् वेगात् व्रजन्तीभिः गच्छन्तीभिः। किंलक्षणैः अरित्रैः, उत्प्रेक्ष्यते—चरणैरिव नौका-पादतुल्यैः। चरणैः किल जवात् गम्यते। किंलक्षणैर्जनैः अनुचितप्लवोदितभ्रमीनिमी-लल्ललनाऽवलम्बितैः अनुचितेन अशीलितेन प्लवेन यानेन तरणेन वा उदिता या भ्रमी भ्रमः तया निमीलन्त्यः सङ्कुचिताक्ष्यो या ललना नार्यः ताभिः अवलम्बिता अवष्टब्धाः तैः ७१

(१) परितः।

लोलैरिति ॥ अभितः उभयतो लोलैश्चलद्भिरारित्रैः केनिपातकदण्डैः । 'क्षेपणी स्यादरित्रं केनिपातकः' इत्यमरः । चरणैः पादैरिवेत्युत्प्रेक्षा । जवाद् व्रजन्तीभिर्गच्छन्तीभिर्नौभिः साधनैरसौ सरिद् यमुना कर्म, प्रवेनोदिता नौवेगेनोत्पन्ना भ्रमी भ्रान्तिस्तस्या भयान्निमीलन्तीभिर्भयादक्षिनिमीलनं कुर्वतीभिर्ललनाभिरवलम्बिते जनैः कर्तृभिः परितः सर्वतः । सर्वोभयार्थे वर्तमानाभ्यां पर्यभिभ्यां तसिल्विधानात् । प्रतेरे प्रतीर्णा ॥७१॥

**तत्पूर्वमंसद्वयसं द्विपाधिपाः क्षणं सहेलाः परितो जगाहिरे ॥**
**सद्यस्ततस्तेरुरनारतस्रुतस्वदानवारिप्रचुरीकृतं पयः ॥ ७२ ॥**

तत्पूर्वमिति ॥ तत् यामुनं पयः उदकं कर्मभूतं द्विपाधिपाः गजपतयः कर्तारः पूर्वं प्रथमं सहेलाः सक्रीडाः सन्तः परितः समन्तात् क्षणं जगाहिरे व्यालोडयन्, किंलक्षणं पयः अंसद्वयसं स्कन्धप्रमाणम् । यतो ब्रुडनभयाऽभावात् पूर्वं क्रीडन्तो जग्मुः । ततोऽनन्तरं ते द्विपाधिपाः सद्यो मङ्क्ष्वेव तेरुः तरन्ति स्म । अत एव किंलक्षणं पयः अनारतस्रुतस्वदानवारिप्रचुरीकृतं यतोऽनारतस्रुतेन निरन्तरं स्रवता स्वदानवारिणा निजदानोदकेन प्रचुरीकृतं वृद्धिं नीतमित्यतिशयोक्तिः । अप्रचुरं प्रचुरं कृतमिति प्रचुरीकृतम् । अंसद्वयसमिति प्रमाणे द्वयसच् ॥ ७२ ॥

तत्पूर्वमिति ॥ द्विपाधिपा महागजाः । पूर्वं प्रथमम् असौ प्रमाणमस्यांऽसद्वयसमंसप्रमाणम् । तेषां तथोन्नतत्वादिति भावः । 'प्रमाणे द्वयसज्–' इति द्वयसच्प्रत्ययः। तत्तथा गम्भीरं पयो यमुनाजलं सहेलाः सावज्ञाः परितो जगाहिरे प्रविशन्ति स्म । ततः प्रवेशाऽनन्तरं सद्योऽविलम्बेन अनारतमविच्छिन्नं स्रुतेन स्रवता स्वदानवारिणा स्वमदोदकेन प्रचुरीकृतं बहुलीकृतं तत्पयस्तेरुः तरन्ति स्म । अत्राऽतिगम्भीरस्याऽप्यम्भसोऽसदघ्नत्वातिशयोक्त्या गजानामौन्नत्यं पुनस्तस्यैव तन्मदाऽम्बुसम्भेदतात्पर्योक्त्या तेषां मदाऽतिरेकश्च व्यज्यते ७२

**प्रोथैः स्फुरद्भिः स्फुटशब्दमुन्मुखैस्तुरङ्गमैरायतकीर्णवालधि ॥**
**उत्कर्णमुद्ग्राहितधीरकन्धरैरतीर्यताऽग्रे तटदत्तदृष्टिभिः ॥ ७३ ॥**

प्रोथैरिति ॥ तुरङ्गमैः अश्वैः अतीर्यत तीर्णम् । किंलक्षणैः तुरङ्गमैः उन्मुखैः ऊर्ध्ववदनैः, इति जातिवर्णनम् । अपरं किंलक्षणैस्तुरङ्गमैः उद्ग्राहितधीरकन्धरैः उद्ग्राहिता प्रसारिता धीरा निश्चला कन्धरा ग्रीवा यैस्ते तथा तैः, अपरं किंलक्षणैरश्वैः अग्रे तटदत्तदृष्टिभिः अग्रे पुरस्तात् यत् तटं तीरं तत्र दत्ता आरोपिता दृष्टिर्नेत्रं यैस्ते तथा तैः पुरस्तीरबद्धलक्ष्यैः, अपरं किंलक्षणैरश्वैः प्रोथैः नासाविरोकैः उपलक्षितैः, किंलक्षणैः प्रोथैः स्फुरद्भिः स्फुरमाणैः (?) । कथमतीर्यतेत्याह—स्फुटशब्दं यथा भवति प्रकटरावं यथा स्यात, अपरं कथं यथा स्यात् आयतकीर्णवालधि यथा भवत्येवम् आयतो दीर्घः कीर्णो विक्षिप्तः वालधिः पुच्छं यत्र क्रियायां तद्यथा स्यात् ॥ ७३ ॥

प्रोथैरिति ॥ स्फुटशब्दं स्पष्टध्वानं यथा तथा स्फुरद्भिश्चलद्भिः प्रोथैर्घोणाभिरुपलक्षितैः । 'घोणा तु प्रोथमस्त्रियाम्' इत्यमरः । उन्मुखैरूर्ध्वमुखैस्तथा उत्कर्णमुन्नमितकर्णं यथा तथा उद्ग्राहिता ऊर्ध्वं प्रसारिता धीरा निश्चलाः कन्धरा ग्रीवा येषां तैरग्रे पुरः तटे दत्तदृष्टिभिस्तुरङ्गमैरायताः प्रसारिताः कीर्णा विक्षिप्ता वालधयो यस्मिन्कर्मणि तद्यथा तथाऽतीर्यत अतारि, सरिदिति शेषः। कर्मणि लङि यक् । स्वभावोक्तिः ७३

**तीर्त्वा जवेनैव नितान्तदुस्तरां नदीं प्रतिज्ञामिव तां गरीयसीम् ॥**
**शृङ्गैरपस्कीर्णबृहत्तटी(१)भुवामशोभतोच्चैर्नदितं ककुद्मताम् ॥ ७४ ॥**

तीर्त्वेति ॥ ककुद्मतामुक्ष्णाम् उच्चैर्नदितमतिशयेन शब्दितम् अशोभत रेजे ।

---

( १ ) महत्तटी ।

किं कृत्वा नितान्तदुस्तरामतिदुःखोत्तारां नदीं यमुनाम् अतिमहता जवेन वेगेन तीर्त्वा उत्तीर्य, नदीं कामिव प्रतिज्ञामिव। यथा कस्यचिद्वीरस्य महतीं दुस्तरां दुखोत्तारां प्रतिज्ञामङ्गीकरणरूपां संविदमुत्तीर्य समाप्य उच्चैर्नर्दितं कत्थनं शोभते। किंलक्षणानां ककुद्मतां शृङ्गैः अपस्कीर्णबृहत्तटीभुवां शृङ्गैः शिरोनिर्गताऽस्थिभिः अपस्कीर्णा समुल्लिखिता बृहती महती तटी भूस्तीरप्रदेशो यैस्ते तथा तेषां, किंलक्षणां नदीं प्रतिज्ञां च गरीयसीं महाविशालां दुष्करां च ॥ ७४ ॥

तीर्त्वेति ॥ नितान्तदुस्तरामतिमहत्त्वयाऽत्यन्ताशक्यतरणां तां नदीं गरीयसीमतिदुस्तरां प्रतिज्ञामिव जवेन वेगेनैव तीर्त्वा शृङ्गैर्विषाणैरपस्कीर्णा आलेखिता महत्यस्तटीभुवस्तीरप्रदेशास्तेषाम् । 'अपाच्चतुष्पाच्छकुनिष्वालेखने' इति किरतेः कात्पूर्वतः सुडागमः। ककुद्मतामुच्चैस्तरं नर्दितं नादः अशोभत। उपमासङ्कीर्णा स्वभावोक्तिः ॥ ७४ ॥

**सीमन्त्यमाना यदुभूभृतां बलैर्बभौ तरद्भिर्गवलावलि(१)द्युतिः ॥**
**सिन्दूरिताऽनेकपकङ्कणाङ्किता तरङ्गिणी वेणिरिवायता भुवः ॥ ७५ ॥**

**सीमन्त्यमानेति** ॥ असौ तरङ्गिणी नदी यमुना बभौ शुशुभे। किंलक्षणा तरङ्गिणी, उत्प्रेक्ष्यते—भुवः पृथिव्याः वेणिरिव प्रवेणीव, अपरं किंलक्षणा तरङ्गिणी गवलाऽऽवलिद्युतिः गवलावलेः द्युतिरिव द्युतिर्यस्याः सा तथा महिषविषाणपटलकान्तिः, अपरं किंलक्षणा तरङ्गिणी यदुभूभृतां बलैः यादवभूपतीनां सैन्यैः तरद्भिः प्लवमानैः सद्भिः सीमन्त्यमाना द्विधा क्रियमाणा, अपरं किंलक्षणा नदी सिन्दूरिताऽनेकपकङ्कणाङ्किता सिन्दूरिताः सिन्दूरवन्तः कृता ये अनेकपा मतङ्गजाः त एव कङ्कणाः कचभूषणगुणाः ताभिरङ्किता चिह्निता। वेणिरपि सीमन्त्यमाना भवति गवलावलिद्युतिः कृष्णा च सिन्दूरितकङ्कणाङ्किता तरङ्गिणी आयता दीर्घा च भवति। 'गवलं माहिषं शृङ्ग'मित्यमरः ॥ ७५ ॥

सीमन्त्यमानेति ॥ तरद्भिर्यदुभूभृतां यादवभूपानां बलैः सैन्यैः सीमन्त्यमाना सीमन्तवती क्रियमाणा। सीमन्तवच्छब्दात् 'तत्करोति–' इति ण्यन्तात्कर्मणि लटः शानजादेशः, णाविष्ठवद्भावाद्विन्मतोर्लुक्। गवलाऽसितद्युतिः माहिषविषाणमेचकप्रभा। 'गवलं माहिषं शृङ्गम्' इत्यमरः। सिन्दूरिताः सिन्दूरवत्कृताः। सिन्दूरशब्दात् 'तत्करोति–' इति ण्यन्तात्कर्मणि क्तः। णाविष्ठवद्भावाद्विन्मतोर्लुक्। तैरनेकपैर्द्विपैः कङ्कणैः शेखरैरङ्किता चिह्निता। 'कङ्कणं शेखरे हस्तसूत्रमण्डनयोरपि' इति विश्वः। तरङ्गिणी यमुना नदी आयता दीर्घा भुवो वेणिरिव बभौ इत्युत्प्रेक्षा ॥ ७५ ॥

**अव्याहतक्षिप्रगतैः समुच्छ्रितानजुज्झितद्राघिमभिर्गरीयसः ॥**
**नाव्यं पयः केचिदतारिषुर्भुजैः क्षिपद्भिरूर्मीनपरैरिवोर्मिभिः ॥ ७६ ॥**

**अव्याहतेति** ॥ केचित् सैनिकाः नाव्यं नावा तार्यतया नाव्यं पयः नावा तरीतुं शक्यं जलं तद् भुजैः अतारिषुः बाहुभिरेव तेरुः। किंलक्षणैः भुजैः ऊर्मीन् कल्लोलान् क्षिपद्भिः अस्यद्भिः प्रेरयद्भिः, अपरं किंलक्षणैः भुजैः अव्याहतक्षिप्रगतैः अस्खलितसवेगगतिभिः, अलुप्तशीघ्रगमनैरित्यर्थः। अपरं किंलक्षणैर्भुजैः अनुज्झितद्राघिमभिः न उज्झितः द्राघिमा यैस्ते अनुज्झितद्राघिमानः तैः अपरित्यक्तदैर्घ्यैः, किंलक्षणान् ऊर्मीन् समुच्छ्रितान् समुन्नतान्, अपरं किंलक्षणान् ऊर्मीन् गरीयसः गुरुतरान्, स्थूलानित्यर्थः। अपरं किंलक्षणैः भुजैः, उत्प्रेक्ष्यन्ते—अपरैः ऊर्मिभिरिव तरङ्गाऽन्तरतुल्यैः। यथा जवना दीर्घाश्च ऊर्मयो

---

( १ ) ०ऽसित।

अन्यानूर्मीन् प्रेरयन्ति, एवं भुजा इत्यर्थः ॥ ७६ ॥

**अभ्याहतेति** ॥ अत्रोर्मीणां भुजानां विशेषणान्युभयाविपरिणामेन योज्यानि । केचिज्जनाः नावा तार्यं नाव्यम् । 'नाव्यं त्रिलिङ्गं नौतार्ये' इत्यमरः । 'नौवयोधर्म–' इत्यादिना यत्प्रत्ययः । पयो जलम् अभ्याहतक्षिप्रगतैरप्रतिहतशीघ्रगमनैरनुज्झितो द्राघिमा दैर्घ्यं यैस्तैः । अतिदीर्घैरित्यर्थः । समुच्छ्रितानुन्नतान् गरीयसो गुरुतरानूर्मीन् क्षिपद्भिरत एवाऽपरैरूर्मिभिरिव स्थितैरित्युत्प्रेक्षा । भुजैर्बाहुभिरतारिषुस्तरन्ति स्म । तरतेर्लुङि सिचि वृद्धिरिडागमः ॥ ७६ ॥

**विदलितमहाकूलामुक्ष्णां विषाणविघट्टनै-**
**रलघुचरणाकृष्टग्राहां विषाणिभिरुन्मदैः ॥**
**सदसि सरितं सा श्रीभर्तुर्बृहद्रथमण्डल(१)**
**स्खलितसलिलामुल्लङ्घ्यैनां जगाम वरूथिनी ॥ ७७ ॥**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये प्रयाणवर्णनं नाम द्वादशः सर्गः ॥ १० ॥

**विदलितेति** ॥ सा श्रीभर्तुर्लक्ष्मीपतेः वरूथिनी सेना एतां सरितं कालिन्दीं सपदि शीघ्रमुल्लङ्घ्य तीर्त्वा जगाम ययौ । अथ वोल्लङ्घ्य तिरस्कृत्य जित्वेति वक्रोक्तिः । तमेव जयं विशेषणमुखेनाह—किंलक्षणां सरितम् उक्ष्णां विषाणविघट्टनैः वृषभाणां शृङ्गाहतिभिः विदलितमहाकूलां शृङ्गाघातैर्विदारितमहापुलिनां, विदलितानि भग्नानि महाकूलानि महातटानि यस्याः सा तथा, अपरं किंलक्षणां सरितम् उन्मदैः उन्मत्तैः विषाणिभिः हस्तिभिः अलघुचरणाकृष्टग्राहाम् अलघुभिः पृथुभिः चरणैः पादैः आकृष्टा भुवं प्रापिता ग्राहाः जलचरा यस्यां सा तथा ताम्, अपरं किंलक्षणां सरितं बृहद्रथमण्डलस्खलितसलिलां बृहत्सु महत्सु रथमण्डलेषु रथकक्ष्यासु स्खलितं प्रतिहतं पानीयं यस्याः सा तथा ताम् । इति व्यतिरेकप्रायो(?)ऽलङ्कारः । हरिणी वृत्तम् ॥ ७७ ॥

इति श्रीशिशुपालवधे महाकाव्ये दत्तकसूनोर्माघस्य कृतौ वल्लभदेवविरचितायां सन्देहविषौषध्यां सारटीकायां मार्गे सैन्यप्रस्थानवर्णनं नाम द्वादशः सर्गः ।



**विदलितेति** ॥ सा प्रकृता श्रीभर्तुः कृष्णस्य वरूथिनी सेना उक्ष्णामनडुहां विषाणविघट्टनैः शृङ्गाघातैर्विदलितानि महाकूलानि यस्यास्ताम्, उन्मदैरुद्भूतमदैर्विषाणिभिरलघुभिर्गुरुभिश्चरणैः पादैराकृष्टा बहिर्नीता ग्राहा जलग्राहा यस्यास्तां बृहद्भी रथमण्डलै रथसमूहैः स्खलितानि व्याकुलीकृतानि सलिलानि यस्यास्तामेनां सरितं यमुनां सपदि उल्लङ्घ्य जित्वा । तीर्त्वेत्यर्थः । भुक्त्वेवेति गम्यते, विशेषणसामर्थ्यात् । जगाम । अत्र जयस्य विशेषणगत्या कूलदलनादिहेतुकत्वात्काव्यलिङ्गभेदः । हरिणी वृत्तम् । 'भवति हरिणी न्सौ म्रौ स्लौ गो रसाऽम्बुधिविष्टपैः' इति लक्षणात् ॥ ७७ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां शिशुपालवधकाव्यव्याख्यायां सर्वङ्कषाख्यायां द्वादशः सर्गः ॥ १२ ॥



---

( १ ) मण्डलैः ।

# त्रयोदशः सर्गः ।

**यमुनामतीतमथ शुश्रुवानमुं तपसस्तनूज इति नाधुनोच्यते ॥**
**स यदाऽऽचलन्निजपुरादहर्निशं नृपतेस्तदादि समचारि वार्तया ॥ १ ॥**

**यमुनामिति** ॥ अथाऽनन्तरं तपसस्तनूजो धर्मस्यात्मजो युधिष्ठिरः अमुं भगवन्तं श्रीकृष्णं यमुनामतीतं कालिन्दीमुत्तीर्णं शुश्रुवान् अश्रौषीत् । कालिन्दीमुत्तीर्णोऽद्य हरिरित्यर्थः । एतदेव नारदनिषेधार्थमाक्षिपन्नाह । अधुना यमुनामतीतमसौ शुश्रुवान् इति एतन्नोच्यते नो वाच्यं, कुत इत्याह—सः हरि यदैव यद्दिनादारभ्य निजपुरात् स्वनगरात् द्वारकायाः अचलत् निर्ययौ, तदादि तत एव आरभ्य अहर्निशं दिवारात्रं नृपतेः राज्ञो युधिष्ठिरस्य वार्तया प्रवृत्त्या समचारि सञ्चरितम् । यद्वा स एव हरिर्वार्तया समचारि सम्यक्चारित इति केचित् । अतश्च यदा प्रत्यहमसौ आगमवार्ता जानाति 'अथ द्वारवत्याश्चलितः अथ तामुत्तीर्णः अद्य ग्रामं प्राप्तः अद्य वनम् अद्य गिरिम् अद्य नदी'मित्यादिकां, तदा यमुनामतीतमेव अशृणोत् इति कथमुच्यतामित्यलङ्कारः । तपसस्तनूजोऽमुं हरिं यमुनामतीतं सन्तमधुनैव श्रुतवान् इति नोच्यते । कथमित्याह—स यदेत्यादि । अतश्च यदिदानीं प्रस्थानात्प्रभृति तदाद्यन्तं सर्वमेवाऽबोधि । तदा अधुना श्रुतवान् इति वचनस्य नाऽवसरः । तेन कथं नगरनिकटप्राप्तो हरिर्युधिष्ठिरेण ज्ञात इति न वर्णितं कविनेति न च उद्यत (?) इति भावः ॥ १ ॥

**यमुनामिति** ॥ अथ यमुनातरणानन्तरं तपसस्तनूजो धर्मनन्दनः अधुना यनुनामतीतममुं हरिं शुश्रुवान् । 'भाषायां सदवसश्रुवः' इति क्वसुप्रत्ययः । इति नोच्यते, किन्तु स हरिर्यदा निजपुरादचलत् , तच्चलनमादिर्यस्मिन्कर्मणि तत् तदादि तत्प्रभृति । अहश्च निशा चाऽहर्निशम् । समाहारे द्वन्द्वैकवद्भावे अत्यन्तसंयोगे द्वितीया । नृपतेर्धर्मराजस्य वार्तया इह निविष्ट इतो निर्गत इति वृत्तान्तेन समचारि सञ्चरितम् । आगतामिति यावत् । भावे लुङ् । सन्निहितयमुनातरणवृत्तान्तवद्व्यवहितसकलदैनन्दिनवृत्तान्तो निजनगरप्रस्थानात्प्रभृति प्रतिक्षणमागत एवेत्यर्थः । अस्मिन्सर्गे मञ्जुभाषिणी वृत्तम् । 'सजसा जगौ भवति मञ्जुभाषिणी' इति लक्षणात् ॥ १ ॥

**यदुभर्तुरागमनलब्धजन्मनः प्रमदादमानिव पुरे महीयसि ॥**
**सहसाधनः (१) स सहितोऽनुजन्मभिर्वसुधाधिपोऽभिमुखमस्य निर्ययौ ॥**

**यदुभर्तुरिति** ॥ ततोऽनन्तरं वसुधाधिपो भूपतिर्युधिष्ठिरः अस्य यदुभर्तुः श्रीकृष्णस्य अभिमुखमग्रतः निर्ययौ संमुखं जगाम । किंलक्षणो वसुधाधिपः अनुजन्मभिः सहितः लघुभिर्भ्रातृभिर्भीमादिभिः संयुक्तः, अपरं किंलक्षणः सह सार्धं साधनं सैन्यं यस्य सः तथा सेनया युक्तः । अपरं किंलक्षणः, उत्प्रेक्ष्यते—महीयसि अतिविस्तीर्णेऽपि स्वपुरे निजनगरे इन्द्रप्रस्थाख्ये अमान् इव अमान् अवर्तमान इव । मातुम् अलभमान-इवेत्यर्थः । विशालं चेत्पुरमस्ति, तत्कथं न ममावित्याह—कस्मात् प्रमदात् हर्षात् । किंलक्षणात् प्रमदात् यदुभर्तुः आगमनलब्धजन्मनः आगमनप्राप्तोत्पत्तेः । 'मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः' इत्यमरः ॥ २ ॥

यदुभर्तुरिति ॥ ततो हरेर्यमुनोत्तरणश्रवणानन्तरं स वसुधाधिपो धर्मराजः यदुभर्तुर्हरेरागमनेन लब्धजन्मनो लब्धोदयात् , जातादित्यर्थः । प्रमदाद्धर्षात् । 'प्रमदसंमदौ हर्षे' इत्यप्प्रत्ययान्तो निपातः ।

(१) सहसा ततः ।

महीयस्यतिविपुलेऽपि पुरे अमान् हर्षकृतशरीरवृद्धेरिवाऽपरिमितावकाशः सान्नित्युत्प्रेक्षा । सहसा अनुजन्मभिरनुजैः सहितोऽस्य हरेरभिमुखं निर्ययौ । नगरान्निर्गत इत्यर्थः ॥ २ ॥

**रभसप्रवृत्तगुरु(१)चक्रदुन्दुभिध्वनिभिर्जनस्य बधिरीकृतश्रुतेः ॥**
**समवादि वक्तृभिरभीष्टसङ्कथाप्रकृतार्थशेषमथ हस्तसंज्ञया ॥ ३ ॥**

**रभसेति** ॥ अथाऽनन्तरं वक्तृभिः जल्पकैः अभीष्टसङ्कथाप्रकृतार्थशेषम् इष्टवार्ताप्रस्तुतार्थभागः जनस्य लोकस्य हस्तसंज्ञया करसङ्केतेन समवादि सम्यगुक्तं, यदि वा संवादितम् । संवादितं वाचैव कथं नोक्तमित्याह—किंलक्षणस्य जनस्य बधिरीकृतश्रुतेः जडितकर्णस्य, कैः रभसप्रवृत्तगुरुचक्रदुन्दुभिध्वनिभिः रभसेनौत्सुक्येन प्रवृत्तं चलितं गुरु विस्तीर्णं यत् चक्रं पाण्डवबलं तस्य ये दुन्दुभयो भेर्यः तेषां ध्वनयः शब्दास्तैः औत्सुक्यप्रचलितविस्तीर्णपाण्डवसैन्यभेरीशब्दैः ॥ ३ ॥

रभसेति ॥ रभसो हर्षः । 'रभसो वेगहर्षयोः' इति विश्वः । तेन प्रवृत्तैः कुरुचक्रदुन्दुभिध्वनिभिः कौरवसेनातूर्यघोषैः बधिरीकृतश्रुतेर्विकलीकृतश्रोत्रेन्द्रियस्य श्रोतृजनस्य वक्तृभिः कथकैरभीष्टसङ्कथास्विष्टालापेषु प्रकृतस्य वक्तुं प्रक्रान्तस्याभिधेयस्य शेषं वक्तव्यावशिष्टम्, अथ बाधिर्याऽनन्तरं हस्तसंज्ञया हस्तसङ्कोचेन समवादि संवादितं । श्रीकृष्णस्यागमनसन्तोषात्तथा दुन्दुभीनाजघ्नुः, यथा कण्ठोक्तशेषं करसंज्ञया निष्पादित इत्यर्थः । अत्र बधिरीकरणस्य जनविशेषणद्वारा हस्तसंज्ञया वदनहेतुत्वात्काव्यलिङ्गभेदः ॥

**अपदान्तरं च परितः क्षितिक्षितामपतन् द्रुतभ्रमितहेमनेमयः ॥**
**जव(२)मारुताऽञ्चितपरस्परोपमक्षितिरेणुकेतुवसनाः पताकिनः ॥ ४ ॥**

**अपदान्तरं चेति** ॥ अपदान्तरम् अनन्तरं क्षितिक्षितां महीभृतां पताकिनो रथाः परितः समन्तात् अपतन् चेलुः । चशब्दः एककालसूचनार्थः । यदैव दुन्दुभयस्ताडिताः तदैव बलमचलदित्यर्थः । किंलक्षणाः पताकिनः जवमारुताऽञ्चितपरस्परोपमक्षितिरेणुकेतुवसनाः जवमारुतेन वेगवातेन अञ्चितानि प्रेरितानि परस्परोपमानि अनेकवर्णत्वादन्योन्यसदृशानि क्षितिरेणुकेतुवसनानि भूमिधूलिचिह्नांशुकानि येषां ते तथोक्ताः, क्षितिरेणवश्च केतुवसनानि च क्षितिरेणुकेतुवसनानि । अपदान्तरमित्यनन्तरार्थम् । केचित्तु अविद्यमानं पदानां चरणानामन्तरं रन्ध्रं यत्र तत् गमनमाहुः क्रियाविशेषणम् ॥ ४ ॥

अपदान्तरं चेति ॥ द्रुतं शीघ्रं भ्रमिताः परिवर्तिताः हेमनेमयः कनकचक्रान्ता येषां ते । 'चक्रधारा प्रधिर्नेमिः' इति हलायुधः । अत एव जविना वेगवता मारुतेनाऽञ्चितानि कम्पितानि परस्परमुपमान्तीति परस्परोपमान्यन्योन्यसदृशानि क्षितिरेणुकेतुवसनानि स्वोत्थापितभूरेणवः स्वारोपितध्वजपटाश्च येषां ते, क्षितिं क्षियन्तीशते इति क्षितिक्षितः क्षितीशाः । 'क्षि ऐश्वर्ये वासे' इति धातोस्तौदादिकात् क्विपि तुक् । क्षितिपतिष्ववासौ क्षितिक्षिदिति भट्टमल्लः । तेषां सम्बन्धिनः, पताकाः सन्तीति पताकिनो रथाः । व्रीह्यादित्वादिनिः । परितः सर्वतः, नास्ति पदस्यान्तरमवकाशो यस्मिन्कर्मणि तदपदान्तरं संसक्तं यथा तथा । 'संसक्ते त्वव्यवहितमपदान्तरमित्यपि' इत्यमरः । अपतन्नधावन् । अत्र राष्ट्रवर्णने रेणूनां केतूनां च प्रकृतत्वात्केवलप्रकृतास्पदा तुल्ययोगिता । तथा च परस्परोपमेति विशेषणाद्रेणुवत्केतवः, केतुवच्च रेणव इत्युपमेयोपमया के रेणवः के केतव इति संशयश्च व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ४ ॥

**द्रुतमध्वनन्नुपरिपाणिवृत्तयः पणवा इवाश्वचरणाहता (३)भुवः ॥**
**ननृतुश्च वारिधरधीरधोरण(४)ध्वनिधृष्टकूजितकलाः कलापिनः ॥ ५ ॥**

---

(१) कुरु । (२) जवि । (३) चरणक्षता । (४) वारण...हृष्ट ।

द्रुतमिति ॥ द्रुतं शीघ्रम् अश्वचरणाहताः लाघवेन तुरगखुरैस्ताडिता भुवः भूमयः अध्वनन् शब्दायन्ते स्म । किंलक्षणाः भुवः, उत्प्रेक्ष्यन्ते—पणवा इव मृदङ्गा इव । किंलक्षणाः पणवाः उपरिपाणिवृत्तयः उपरिपाणेस्तालविशेषस्य वृत्तिर्व्यापारो येषु ते तथा । यथा उपरिपाणिताडिताः पणवाः द्रुतं लयान्वितं ध्वनन्ति, तथा भुवो दध्वनुरित्यर्थः । द्रुतं लयविशेषः । उक्तं च—

समोपायचपूर्वस्तु प्राणिस्त्रिविध उच्यते ।
अत्र तालं च पाणिं च पाहुरेकां मनीषिणः ॥
समं चोपरितापस्य बद्ध्वा यः संस्थितं भवेत् ।
वाद्यपदानि वर्णो वा तदेवमभिधीयते(१) ॥

इति । ननृतुश्चेत्यादि । न केवलं भुवोऽध्वनन् अपरं कलापिनो मयूराश्च ननृतुः अनृत्यन् । किंलक्षणाः कलापिनः वारिधरधीरधोरणध्वनिधृष्टकूजितकलाः वारिधरस्येव धीरो घनाघनस्येव गम्भीरो यो धोरणानां वाहनानां रथगजतुरङ्गमाणां ध्वनिः शब्दः चीत्कारगलगर्जितहेषितादिः तेन धृष्टं मुखरं यत्कूजितं वाशितं तेन कलाः मधुराः । ते हि मेघगर्जितभ्रान्त्या मधुरं केकायमानाः प्रमदात् नृत्यन्ति । अन्योऽपि पणवेषु वादितेषु हृष्टः नृत्यति ॥ ५ ॥

द्रुतमिति ॥ अश्वचरणक्षतास्तुरगखुरघट्टिता भुव उपरि पृष्ठभागे पाणिवृत्तयः पाणिताडनानि येषां ते उपरिपाणिवृत्तयः पणवा वाद्यविशेषा इवेत्युपमा । द्रुतं द्रुततरमेवाऽध्वनन् ध्वनन्ति स्म । 'द्रुतं शीघ्रम्' इत्यमरः । वारिधरशब्देन तद्गर्जितं लक्ष्यते । तद्वद्धीरैर्गम्भीरैर्वारणध्वनिभिर्गजबृंहणैर्हृष्टा अत एव कूजितकलाः । कूजिता इत्यर्थः । ततो विशेषणसमासः । कलापा येषां सन्तीति कलापिनो बर्हिणश्च ननृतुर्नृत्यन्ति स्म । अत्रोपमयोः संसृष्टिः । वारिधरोपमया कलापिनां गजबृंहितेषु घनगर्जिताद्भ्रान्तिमन्तरेण नृत्यासम्भवाद्भ्रान्तिमदलङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ५ ॥

व्रजतोरपि प्रणयपूर्वमेकतां कुकुराऽधिनाथकुरुनाथसैन्ययोः ॥
रुरुषे विषाणिभिरनुक्षणं मिथो मदमूढबुद्धिषु विवेकिता कुतः ॥ ६ ॥

व्रजतोरपीति ॥ कुकुराधिनाथकुरुनाथसैन्ययोः कुकुराधिनाथः यादवपतिः श्रीकृष्णः कुरुनाथः कैरवपतिः युधिष्ठिरः तयोः सैन्ये बले तयोः प्रणयपूर्वमपि प्रीतिपूर्वमपि एकतां व्रजतोः सतोः अभेदं मिश्रीभावं गच्छतोः सतोः विषाणिभिः दन्तिभिः अनुक्षणमसकृत् मिथः अन्योन्यं रुरुषे रुषितं कुपितम् । अर्थान्तरन्यासः—मदमूढबुद्धिषु कुतो विवेकिता मदेन मूढा बुद्धिर्येषां तेषु कुतो विवेकिता युक्तायुक्तविचारः । मत्तानां विचारो न भवतीत्यर्थः । ते च समदाः । मदो दर्पो दानं च ॥ ६ ॥

व्रजतोरपीति ॥ तदा तस्मिन्समये कुकुराऽधिनाथकुरुनाथसैन्ययोः हरिपार्थसैन्ययोः प्रणयपूर्वं स्नेहपूर्वकमेकतामैक्यं व्रजतोर्गच्छतोः सतोरपि विषाणिभिरुभयसेनावर्तिभिः गजैरनुक्षणं प्रतिक्षणं मिथः परस्परं रुरुषे चुक्रुधे । भावे लिट् । तथा हि—मदेन मूढबुद्धिषु विपरीतप्रज्ञेषु विवेकिता कार्याकार्यविचारिता कुतः ? नास्त्येवेत्यर्थः । अथ तेषां स्वामिसौहार्देऽपि स्वयं विरोधिता न दोषायेति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६ ॥

अवलोक एव नृपतिः स्म दूरतो रभसाद्रथादवतरीतुमिच्छतः ॥
अवतीर्णवान् प्रथममात्मना हरे(२)र्विनयं विशेषयति सम्भ्रमेण सः ॥७॥

(१) श्लोकद्वयमस्पष्टम् । (२) हरिर्वि० ।

अवलोक इति ॥ स नृपतिरजातशत्रुः हरेर्विनयम् आचारं पेशलत्वं गौरवेण सम्भ्रमेण आदरतया विशेषयति स्म अतिशये । प्रथममवतारादधिकमपि असौ चकारेत्यर्थः । इति तद् द्वितयं तावदाह—दूरतः दूरादवलोके एव नृपतिदर्शनमात्रे सत्येव रभसादौत्सुक्येन रथादवतरीतुमिच्छतः स्यन्दनादवतितीर्षतः, नृपस्तु किंलक्षणः इति तत् द्वितीयातिशयमाह—प्रथमं पूर्वत एव आत्मना स्वयमेव अवतीर्णवान् अवतीर्णः । विशेषयति सम्बन्धः, अतश्च विनयेन विनयं जिगाय । केचित्तु नृपतिः स इति सौहार्देन स इति च पठन्ति । एवं च व्याचक्षते-स नृपतिः हरेः प्रथममेव अवतीर्णवान् इति । अर्थान्तरन्यासमाह—यः साधुः सः सौहृदेन सुहृद्भावेन विनयं प्रश्रयं विशेषयति । सौहार्दादेवाऽसौ प्रथममेवाऽवतरत् ॥७॥

अवलोक इति ॥ दूरतो दूरादवलोके हरेर्दर्शन एव रभसात् हर्षाद्रथादवतरीतुमवरोढुम् । 'वॄतो वा' इति विकल्पाद्दीर्घः । इच्छतो नृपतेर्धर्मराजात्प्रथमम् । तदवतरणात्पूर्वमेवेत्यर्थः । आत्मना स्वयमेव । प्रकृत्यादित्वात्तृतीया । अवतीर्णवान् रथादवरूढः सन् । 'निष्ठा' इति तरतेः क्तवतुप्रत्ययः, 'ऋत इद्धातोः' इतीत्वं 'र्वोरुपधाया दीर्घ-' इति दीर्घः 'रदाभ्याम्-' इति निष्ठानत्वं 'रषाभ्याम्-' इति णत्वम् । स हरिः सम्भ्रमेण त्वराविशेषेण विनयमनौद्धत्यं विशेषयति स्माऽतिशाययति स्म । एतेन हरेः पूज्यविषयो रत्याख्यो भावो ध्वन्यते ॥ ७ ॥

वपुषा पुराणपुरुषः पुरः क्षितौ परिपुञ्ज्यमानपृथुहारयष्टिना ॥
भुवनैर्नतोऽप्यरहिता(१)त्मगौरवः प्रणनाम नाम तनयं पितृष्वसुः ॥८॥

वपुषेति ॥ सः पुराणपुरुषः चिरन्तनमुनिः परमात्मा श्रीकृष्णः पितृष्वसुः तनयं पैतृष्वस्रीयं कौन्तेयं युधिष्ठिरं वपुषा शरीरेण पुरः पूर्वम् अग्रे वा प्रणनाम नमश्चकार, नामेति निश्चये प्रकाश्ये वा । सर्वप्रकटमेव शिरसा ननामेत्यर्थः । किंलक्षणः पुराणपुरुषः भुवनैः सकलजगद्भिर्नतोऽपि नतशरीरोऽपि । यद्यसौ सर्वज्येष्ठः जगत्पूज्यश्च, तत्किमादौ प्रणनामेत्याशङ्क्याह—अपरं किंलक्षणः सः अरहितात्मगौरवः अरहितं त्यक्तमात्मगौरवं स्वगुरुत्वं येन असौ अरहितात्मगौरवः । ज्येष्ठस्य हि राज्ञः प्रणामे बन्धुगौरवं तेन त्यक्तम् । यस्मात् किंलक्षणेन वपुषा क्षितौ पृथिव्यां परिपुञ्ज्यमानपृथुहारयष्टिना परिपुञ्ज्यमाना प्रणामवशात् पुञ्जीभवन्ती पृथ्वी अलघ्वी हारयष्टिर्मुक्तालता यत्र तत्तथा तेन ॥ ८ ॥

वपुषेति ॥ पुराणपुरुषो हरिः सर्वलोकज्येष्ठोऽपीति भावः । तथा भुवनैर्नतो नमस्कृतोऽपि विहितं सम्पादितमात्मनो गौरवमुत्कर्षो येन सः सन् । पूज्येषु नमस्याया औन्नत्यहेतुत्वादिति भावः । अत एवात्र विचित्रालङ्कारः । 'विचित्रं स्वविरुद्धस्य फलस्य स्यात्समुद्यमे' इति लक्षणात् । पुरः क्षितावग्रभूमौ परिपुञ्ज्यमाना परितः पुञ्जीक्रियमाणा पृथुः स्थूलो हारो मुक्तावलिर्यष्टिरिव यस्य तेन वपुषा शरीरेण । न तु अञ्जलिमात्रेण । तथाऽस्य पूज्यत्वादिति भावः । पूज्यत्वे हेतुमाह—पितृष्वसुस्तनयमिति पितृभगिनीपुत्रम् । धर्मराजमित्यर्थः । 'विभाषा स्वसृपत्योः' इत्यस्य वैकल्पिकत्वेन षष्ठ्या लुक्' 'मातृपितृभ्यां स्वसा' इति षत्वम् । नाम प्रकाशं प्रणनाम । प्रणामं कृतवानित्यर्थः । प्रपूर्वान्नमेर्लिट् । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । अत्रापि पूर्ववद्भावध्वनिः । भुवननतोऽपि हरिर्लोकयात्राऽनुवर्ती स्वयमेनं नतवानिति विरोधाभासोऽलङ्कारो विचित्रेणोक्तेन सङ्कीर्णः, नामनामेति वृत्त्यनुप्रासभेदश्च संसृष्ट इत्याहुह्यम् ॥ ८ ॥

मुकुटांशुरञ्जितपरागमग्रतः स न यावदाप शिरसा महीतलम् ॥
क्षितिपेन तावदनपेक्षितक्रमं भुजपञ्जरेण रभसादगृह्यत ॥ ९ ॥

मुकुटेति ॥ सः श्रीकृष्णः यावत् शिरसा मूर्ध्ना कृत्वा महीतलं भूतलम् अग्रतः

(१) ऽपि विहिता० ।

पुरोभागेन आप न प्राप, तावदेव क्षितिपेन राज्ञा युधिष्ठिरेण अनपेक्षितक्रमं न अपेक्षितः न स्मृतः क्रमः परिपाटी यत्र ग्राहे तद्यथा भवति(१)। किल कृतप्रणामः कनीयानालिङ्ग्यः। किंलक्षणं भूतलं मुकुटांशुरञ्जितपरागं मुकुटांशुभिः मौलिमणिमरीचिभिः रञ्जितपरागं छुरितरेणु९॥

मुकुटेति ॥ स हरिर्मुकुटांशुभी रञ्जितः स्ववर्णमापादितः परागो रेणुर्यस्य तदग्रतः पुरतो महीतलं शिरसा यावन्नाप। नास्पृशादित्यर्थः। तावत्क्षितिपेन धर्मराजेनानऽपेक्षितक्रमं अनपेक्षितः क्रमः परिपाटी यस्मिन्कर्मणि तत्तथा। भुजाभ्यामेव पञ्जरेणेति रूपकम्। रभसाद्वेगादगृह्यत गृहीतः। प्रणामक्रियासमाप्तेः प्रागेवोत्थाप्याऽऽश्लिक्षदित्यर्थः ॥ ९ ॥

न ममौ कपाटतटविस्तृतं तनोर्मुर(२)वैरिवक्ष उरसि क्षमाभुजः ॥
भुजयोस्तथापि युगलेन दीर्घयोर्विकटीकृतेन परितोऽभिषस्वजे ॥ १० ॥

नेति ॥ क्षमाभुजः क्षितिपस्य उरसि वक्षसि मुरवैरिवक्षः मुरवैरिणो मुरारेः श्रीकृष्णस्य वक्षस्तटं न ममौ न माति स्म। किंलक्षणं मुरवैरिवक्षः कपाटतटविस्तृतं कपाटतटवत् अररतटवत् विस्तृतं विशालं, किंलक्षणस्य क्षमाभुजः तनोः कृशस्य दीक्षाक्षामस्य। कथं तर्हि अश्लिषदित्याह—यद्यपि न माति स्म तथापि भुजयोर्युगलेन बाह्वोर्द्वयेन परितः अभिषष्वजे आलिङ्गितः। किंलक्षणेन भुजयोर्युगलेन विकटीकृतेन विशालीकृतेन प्रसारितेन, किंलक्षणयोर्भुजयोः दीर्घयोः जानुस्पृशोः इति राज्ञः आजानुबाहुत्वं हरेश्च पीनवक्षस्त्वमुक्तम्। 'कपाटमररं तुल्ये', 'विशालं विकटं मतम्'इत्यमरः ॥ १० ॥

नेति ॥ कपाटतटविस्तृतं मुरवैरिणो हरेर्वक्षः, तनावल्पे क्षमाभुजो धर्मराजस्योरसि न ममौ। न परिमितमित्यर्थः। तथापि विकटीकृतेन विपुलीकृतेन दीर्घयोर्भुजयोर्युगलेन परितः समन्तादभिषस्वजे आलिङ्गितम्। वक्षसा भुजाभ्यां च कथञ्चित्परिच्छिन्नमभून्न तु वक्षसैवेत्यर्थः। 'सदिस्वञ्जोः परस्य लिटि' इति धातुसकारस्य षत्वनिषेधात् स्थादित्वेऽप्यभ्यासस्यैव षत्वम्। अत्र हरिवक्षसो वैपुल्यादतिशयद्योतनाय नृपवक्षःसंमानेऽप्यसंमानोक्तेः सम्बन्धेऽसम्बन्धरूपाऽतिशयोक्तिश्च। अनयोश्च स्वतःसिद्धकविप्रौढोक्तिसिद्धयोरप्यतिशययोरभेदाध्यवसायादुत्थानमिति रहस्यम् ॥ १० ॥

गतया निरन्तरनिवासमध्युरः परिनाभि नूनमवमुच्य वारिजम् ॥
कुरुराजनिर्दयनिपीडनाभयान्मुखमध्यरोहि मुरविद्विषः श्रिया ॥ ११ ॥

गतयेति ॥ मुरविद्विषोः मुरारेः श्रीकृष्णस्य मुखं श्रिया लक्ष्म्या अध्यरोहि आरूढमधिश्रितम्। नृपाश्लेषयोगात् शोभायुक्तमभूदित्यर्थः। किंलक्षणया श्रिया परिनाभि नाभौ वारिजं कमलम् अवमुच्य हित्वा अध्युरः उरसि निरन्तरनिवासं स्थानं गतया प्राप्तया। वक्षःस्थलस्थितयेत्यर्थः। पूर्वजन्मनि हि भगवतो नाभौ पद्ममभूत्, युधिष्ठिरगाढाश्लेषरुजात्रासात् मुखमध्यरोहि। सा हि वक्षोऽवस्थित्या परिष्वङ्गसंमर्दमाशङ्कते। श्रीशब्दः शोभार्थः। यथार्थत्वात् मुखस्य च हृष्टत्वादूहः ॥ ११ ॥

गतयेति ॥ नाभ्यां परिनाभि। विभक्त्यर्थेऽव्ययीभावः। वारिजम्। नाभिकमलमित्यर्थः। अवमुच्य विहाय अध्युर उरसि। विभक्त्यर्थेऽव्ययीभावः। निरन्तरं सततं गतया प्राप्तया श्रिया शोभया रमया च नाभिसरोजत्यागेनाऽत्र निवासेन तस्मादपहृतमिति ध्वनितम्। कुरुराजस्य या निर्दयनिपीडना गाढाश्लेषरूपा ततो भयान्मुरवैरिणो मुरद्विषो मुखमध्यरोहि अधिरूढम्। भीता ह्युच्चमारोहन्तीति लोकवेदयोः प्रसिद्धमिति॥ भावः। नूनमित्युत्प्रेक्षा। अत्र वाच्यायाः सुहृदाश्लेषप्रभवायाः शोभायाः श्रियेति श्लेषमहिम्ना प्रतीयमानया रमया सहाऽभेदाध्यवसायात् क्रमेण नाभिमुखकमलाधारसम्बन्धाभिधानात् श्लेषमूलातिशयोक्त्युत्थापितः पर्यायभेदः

(१) अत्र किमपि स्खलितम्। (२) तनौ मुर।

'क्रमेणैकमनेकास्मिन्नाधारे वर्तते यदि ।
एकस्मिन्नथ वाऽनेकं पर्यायाऽलङ्कृतिर्मता ॥

इति लक्षणात् । तदुपजीविता श्रीमुखारोहणस्य भयहेतुकत्वकथनादुत्प्रेक्षेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥

**शिरसि स्म जिघ्रति सुरारिबन्धनच्छल(१)वामनं विनयवामनं तदा ॥**
**यशसेव वीर्यविजिताऽमरद्रुमप्रसवेन वासितशिरोरुहे नृपः ॥ १२ ॥**

**शिरसि स्मेति ॥** नृपो राजा युधिष्ठिरः तदा तस्मिन् आलिङ्गनसमये सुरारिबन्धनच्छलवामनं सुरारेः देवशत्रोः बलेः बन्धनच्छलेन यो वामनो या वामना मूर्तिः, वामनो ह्रस्वः स विष्णुरेवोच्यते, तं श्रीकृष्णं शिरसि जिघ्रति स्म मूर्धनि जघ्रौ अघ्रासीदित्याचारः । ननु यदि भगवान् बलिबन्धनच्छलेनैव वामनः तनुस्वभावतः तत्त्वार्थमुन्नतो भवन्नमतीत्याह— किंलक्षणं तं विनयवामनम् आचारप्रह्वं, किंलक्षणे शिरसि वीर्यविजिताऽमरद्रुमप्रसवेन वासितशिरोरुहे पराक्रमाऽपाहृतपारिजातपुष्पपूगेन वासिताः सुरभिताः शिरोरुहाः केशा यस्य तत् तस्मिन् । सुरभिः किल जेघ्रीयते । उत्प्रेक्ष्यते—यशसे वा सुरतरुहरणात् । यत् यशः कीर्तिः तेनैव वासितकेशे इत्यर्थः। सुरभि श्वेतं च यशः इति महाकविसमाचारः॥१२॥

शिरसि स्मेति ॥ नृपो धर्मराजः सुरारिबन्धने पुरा बलिबन्धने छलवामनं कपटवामनं, तदा पार्थोपपत्तिसमये तु विनयवामनम् । विनयनम्रमित्यर्थः। तं हरिमिति शेषः। वीर्यविजिताऽमरद्रुमप्रसवेन पारिजातहरणे शौर्यलब्धपारिजातकुसुमेन यशसेव पारिजातविजयप्रसूतयेव कीर्त्येत्युत्प्रेक्षा । वासितशिरोरुहे सुरभितकेशे शिरसि जिघ्रति स्म । 'प्रवासादेत्य मूर्धन्यवघ्राणम्' इति स्मरणात् । पुरा किल भगवान् सत्यभामाप्रीतये बलादिन्द्रलोकादपहृत्य पारिजातं निजगृहेष्वारोपितवानिति कथाऽत्रानुसन्धेया ॥ १२ ॥

**सुखवेदनाहृषितरोमकूपया शिथिलीकृतेऽपि वसुदेवजन्मनि ॥**
**कुरुभर्तुरङ्गलतया न तत्यजे विदल(२)त्कदम्बनिकुरम्बचारुता ॥ १३ ॥**

**सुखेति ॥** कुरुभर्तुः राज्ञः युधिष्ठिरस्य अङ्गलतया तनुलतया तन्वा विदलत्कदम्बनिकुरम्बचारुता न तत्यजे, विदलतो विकसतः कदम्बस्य कदम्बवृक्षकुसुमस्य निकुरम्बं समूहः तस्य चारुता मनोज्ञता शोभा न तत्यजे त्यक्ता । सा कण्टकिताऽभूदित्यर्थः । कदाचिद् भगवान् तेन श्लिष्टो भवेत् इत्याह—किंलक्षणया अङ्गलतया सुखवेदनाहृषितरोमकूपया सुखस्य उपजोषस्य वेदना अनुभवनं तेन हृषिताः विकारं नीताः रोमकूपाः लोमरन्ध्राणि यस्याः सा तथा तया ॥ १३ ॥

सुखेति ॥ वसुदेवाज्जन्म यस्य तस्मिन्वसुदेवजन्मनि वासुदेवे। जन्मोत्तरपदत्वाद्व्याधिकरणो बहुव्रीहिर्वामनवचनादित्युक्तं प्राक् । शिथिलीकृतेऽपि विश्लेषिते सत्यपि सुखवेदनया आलिङ्गनसुखानुभवेन हृषिताउद्गता रोमकूपा रोममूलानि यस्यां तया । 'हृषेर्लोमसु' इतीडागमः। कुरुभर्तुर्धर्मराजस्याऽङ्गलतया विकसतः कदम्बकनिकुरम्बस्य कदम्बकुसुमसमूहस्य चारुता कामनीयकं न तत्यजे न त्यक्ता । किन्तु स्वीकृतेत्यर्थः । आश्लेषाऽपगमेऽपि तज्जन्मसुखाऽनुवृत्त्या तत्कार्यस्य रोमहर्षस्याऽनुवृत्तिरिति तात्पर्यार्थः। अत एव शिथिलीकृते हृषितरोमकूपयेत्यकारणकार्यकथनाद्विभावना, तदपेक्षया चेयमुत्पन्ना कदम्बनिकुरम्बचारुतानिदर्शना तया सहाऽङ्गेन सङ्कीर्यते ॥ १३ ॥

**इतरानपि क्षितिभुजोऽनुजन्मनः प्रमनाः प्रमोदपरिफुल्लचक्षुषः ॥**
**स यथोचितं जनसभाजनोचितान् (३)प्रसभोद्धृताऽसुरसभोऽसभाजयत् ॥**

---

( १ ) बन्धने छल । ( २ ) विकस० । ( ३ ) ०चित: ।

**इतरानपीति** ॥ सः भगवान् श्रीकृष्णः इतरानपि अन्यानपि क्षितिभुजः क्षितिपालस्य युधिष्ठिरस्य अनुजन्मनः अनुजान् भीमसेनाऽर्जुननकुलसहदेवादीन् यथोचितं यथायोग्यम् असभाजयत् प्रीत्या अद्राक्षीत् । भीमसेनं पूर्वाभिवादेन, अर्जुनं हासपूर्वं, माद्रेयौ आश्लेषपुरस्सरमिति यथोचितमित्यर्थः । किंलक्षणान् अनुजन्मनः नृपसभाजनोचितान् नृपाणां सभाजने पूजायामुचिता योग्यास्तान् लोकपूज्यान्, किंलक्षणः स प्रमनाः प्रहृष्टः, अपरं किंलक्षणो हरिः प्रसभोद्धृताऽसुरसभः प्रसभं बलात् उद्धृतमुन्मूलितम् असुरसभं दैत्यकुलं येन सः । सभाज प्रीतिसेवनयोः ॥ १४ ॥

इतरानपीति ॥ जनसभाजनोचितः सर्वजनसम्भावनार्हः प्रसभेन बलादुद्धृता असुरसभाऽसुरसङ्घो येन सः प्रमनाः हृष्टचित्तः स हरिः प्रमोदपरिफुल्लचक्षुषो हर्षोत्फुल्लनेत्रानितरान् भीमादीन् क्षितिभुजो नृपस्याऽनु पश्चाज्जन्म येषांताननुजन्मनोऽनुजान् यथोचितं यथार्हमसभाजयत् सभाजयति स्म । आलिङ्गनादिभिरानन्दयामासेत्यर्थः । 'आनन्दनसभाजने' इत्यमरः । 'सभाज प्रीतिदर्शनयोः' इति धातोश्चौरादिकाल्लुङ् ॥ १४ ॥

**समुपेत्य तुल्यमहतः (१)शिलाघनान् घनपक्षदीर्घतरबाहुशालिनः ॥**
**परिशिश्लिषुः क्षितिपतीन् क्षितीश्वराः कुलिशात्परेण गिरयो गिरीनिव ॥**

**समुपेत्येति** ॥ अन्येऽपि क्षितीश्वराः राजानः समुपेत्य सङ्गत्य क्षितिपतीन् राज्ञः परिशिश्लिषुः अवागूहन् । किंलक्षणान् क्षितिपतीन् तुल्यमहतः तुल्याश्च ते महान्तश्च तुल्यमहान्तः तान् तुल्यमहतः । अनुरूपान् उन्नतांश्चेत्यर्थः । अपरं किंलक्षणान् क्षितिपतीन् शिलाघनान् अश्मविकटान्, अपरं किंलक्षणान् क्षितिपतीन्, घनपक्षदीर्घतरबाहुशालिनः घनाः गाढाः पक्षाः सहाया येषां ते घनपक्षाः, दीर्घतरैः अतिदीर्घैः बाहुभिर्भुजैः शालन्ते शोभन्ते दीर्घतरबाहुशालिनः, घनपक्षाश्च ते दीर्घतरबाहुशालिनश्च तान् आजानुभुजान् । क्षितीश्वराणामपि विभक्तिविपरिणामेन एतानि विशेषणानि योज्यानि । अन्यथा तुल्यत्वं न भवति । के कानिवाऽऽश्लिष्यन्नित्याह—कुलिशात् परेण वज्रात् पूर्वं गिरयः गिरीनिव अद्रयोऽद्रीनिव । कुलिशग्रहणं कार्यं पक्षच्छेदो लक्ष्यते । गिरीनपि तुल्यांश्च महतश्च, तथा शिलाभिः घनान् व्याप्तान्, तथा घनैः पक्षैः पतत्रैरेव बाहुभिः शालिनः शोभमानान् । परेणेति निपातः ॥ १५ ॥

समुपेत्येति ॥ तुल्यमहसः समतेजस्कान्, शिला इव शिलाभिश्च घनान् दृढान् घनैः पक्षैरिव दीर्घतरबाहुभिः बाहुभिरेव पक्षैश्च शालन्त इति तथोक्तानेवंभूतान् क्षितिपतीनेवंभूताः क्षितीश्वराः समं युगपदेत्याऽऽगत्य । आङ्पूर्वादिणः क्त्वो ल्यपि तुक् । कुलिशात्परेण परतः । कुलिशक्षतेः पूर्वमित्यर्थः । सम्प्रत्यसम्भवादिति भावः । परेणेति विभक्तिप्रतिरूपकमव्ययम् । गिरयो गिरीनिव परिशिश्लिषुरालिङ्गितवन्तः । उपमा ॥१५॥

**इभकुम्भतुङ्गघटितेतरेतरस्तनभारदूरविनिवारितोदराः ॥**
**प्रति(२)फुल्लगण्डफलकाः परस्परं परिरेभिरे कुकुरकौरवस्त्रियः ॥ १६ ॥**

**इभेति** ॥ कुकुरकौरवस्त्रियः परस्परमन्योन्यं परिरेभिरे आश्लिषन् । कुकुराः यादवाः कौरवा भारताश्च तेषां स्त्रियः कुकुरकौरवस्त्रियः, वृष्णिनार्यः सत्यभामाद्याः कौरवस्त्रियः पाण्डवनार्यः द्रौपद्याद्याः । किंलक्षणाः कुकुरकौरवस्त्रियः इभकुम्भतुङ्गघटितेतरेतरस्तनभारदूरविनिवारितोदराः इभकुम्भा इव गजशिरःपिण्डा इव तुङ्गा उन्नताः तथा इतरेतरं

(१) महसः । (२) परि० ।

घटिताः परस्परं सम्बद्धाः ये स्तनभाराः कुचभाराः तैर्दूरमत्यर्थं विनिवारितानि वियोजितानि उदराणि मध्यानि यासां ताः तथोक्ताः । पीनस्तन्यः कृशोदर्यश्चेत्यर्थः । अपरं किंलक्षणाः स्त्रियः प्रतिफुल्लगण्डफलकाः प्रतिफुल्लौ विकसितौ गण्डफलकौ कपोलफलकौ यासां तास्तथा, इति हर्षकथनम् ॥ १६ ॥

इभेति ॥ इभकुम्भा इव ये तुङ्गाः घटिताश्च इतरेतरासां स्तनभारास्तैर्दूरे विनिवारितान्यतिकाश्यर्याद्स्फुटतया स्थापितान्युदराणि यासां ताः । 'स्वाङ्गाच्च-'इति विकल्पादनीकारः । परिफुल्लगण्डफलकाः हर्षपुलकितगण्डस्थलाः कुकुरकौरवस्त्रियो यादवपाण्डवाङ्गनाः परस्परं परिरेभिरे आश्लिष्टवत्यः । 'परिरम्भः परिष्वङ्गः आश्लेष उपगूहनम्' इत्यमरः । परिफुल्लेति फुल्लतेः पचाद्यजन्तं, न तु फुल्लेति निष्ठान्तम् । अनुपसर्गादिति कथनविरोधात् ॥ १६ ॥

रथवाजिपत्तिकरिणीसमाकुलं तदनीकयोः समगत द्वयं मिथः ॥
दधिरे पृथक्करिण एव दूरतो महतां हि सर्वमथ वा जनाऽतिगम् ॥ १७ ॥

रथेति ॥ तत् अनीकयोर्द्वयं तत्सैन्ययोर्युग्मं मिथः अन्योन्यं समगत समगंस्त मिलितम्, किंलक्षणं द्वयं रथवाजिपत्तिकरिणीसमाकुलं स्यन्दनतुरङ्गमपदातिहस्तिनीव्याप्तम् । पुनः करिणो द्विपाः दूरत एव दूरादेव पृथक् दधिरे भिन्ना धृताः । युद्धभयादन्योन्यं न मिलिता इत्यर्थः। हि यतः कारणात् महतामुन्नतानां सर्वमेव किञ्चिद्वस्तु जनाऽतिगं लोकाऽतीतम्। ते च महान्तः महाप्रमाणत्वात्, अतो जनाऽतिगाः । जनमध्यं न निवेशिता इत्यर्थः १७

रथेति ॥ रथवाजिपत्तिकरिणीभिः समाकुलं सङ्कीर्णम् । करिणीग्रहणं पुंगजव्यावृत्त्यर्थम् । अतो युद्धाऽनर्हतया तासामसेनाङ्गत्वान्न द्वन्द्वैकवद्भावः । तदनीकयोः सैन्ययोः । 'वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्' इत्यमरः । द्वयं मिथश्चाऽन्योन्यं समगत सङ्गतम् । गमेर्लङि 'समो गम्यृच्छि-' इत्यादिनात्मनेपदं, 'वा गमः' इति सिचः कित्त्वात् 'अनुदात्तोपदेश-' इत्यादिनाऽनुनासिकलोपः 'ह्रस्वादङ्गात्' इति सकारलोपः । करिणः पुंगजाः दूरत एव पृथगसङ्गतं दधिरे धृताः । स्थापिता इत्यर्थः । अथ वा किमत्र चित्रमिति भावः । महतां महासत्त्वानां सम्बन्धि सर्वं चेष्टितमिति भावः, जनानतिगच्छतीति जनातिगमतिजनम् । सर्वलोकविलक्षणमिति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १७ ॥

अधिरुह्यतामिति महीभृतोदितः कपिकेतना(१)ऽर्पितकरो रथं हरिः ॥
अवलम्बितैलविलपाणिपल्लवः श्रयति स्म मेघमिव मेघवाहनः ॥ १८ ॥

अधिरुह्यतामिति ॥ अथाऽनन्तरं हरिः श्रीकृष्णः रथं श्रयति स्म स्यन्दनम् आरुरोह, किंलक्षणो हरिः महीभृता राज्ञा युधिष्ठिरेण इति उक्तः उदितः अनुज्ञातः । इतीति किम्—अधिरुह्यतामिति आरोहत्विति । किंलक्षणो हरिः कपिकेतनेन अर्जुनेन अर्पितः दत्तः करो हस्तो यस्य सः तथा । कः किं यथा श्रयतीत्याह—क इव मेघवाहन इव । यथा मेघवाहनो इन्द्रो वा रुद्रः मेघं श्रयति जलदमाश्रयति । किंलक्षणो रुद्रः अवलम्बितैलविलपाणिपल्लवः अवष्टब्धधनदकरकिसलयः । यस्य हि मेघो वाहनं, सोऽवश्यं तमेवाऽधिरोहति । इलविलायाः अपत्यम् ऐलविलः वैश्रवणः ॥ १८ ॥

अधिरुह्यतामिति ॥ हरिः, अधिरुह्यतां रथ आरुह्यतामित्येवं महीभृता धर्मराजेन उदित उक्तः सन् । वदेः कर्मणि क्तः 'वचिस्वपि'-इत्यादिना सम्प्रसारणम् । कपिकेतुनाऽर्जुनेनार्पितकरो दत्तहस्तः सन्, अवलम्बितोऽवष्टब्ध ऐलविलस्य कुबेरस्य पाणिपल्लवो हस्तो येन स मेघवाहन इन्द्रो मेघमिव रथं श्रयति स्म । आरूढवानित्यर्थः । उपमा ॥ १८ ॥

---

(१) केतुना०

**रथमास्थितस्य च पुराऽभिवर्तिनस्तिसृणां पुरामिव रिपोर्मुरद्विषः ॥**
**अथ धर्ममूर्तिरनुरागभावितः स्वयमादित प्रवयणं प्रजापतिः॥ १९ ॥**

**रथमिति ॥** मुरद्विषोः मुरारेः रथमास्थितस्य सतः स्यन्दनमाश्रितस्य सतः पुराऽभिवर्तिनः पुरीं यियासोः अथाऽनन्तरं स्वयमेव आत्मना प्रजापतिः राजा युधिष्ठिरः प्रवयणं प्रतोदम् आदित जग्राह, किंलक्षणो राजा अनुरागभावितः स्नेहव्याप्तः । कः प्रजापतिरित्याह—धर्ममूर्तिः, धर्मः मूर्तिः शरीरं यस्य सः तथा । कस्य च क इव प्रवयणं जग्राह—यथा तिसृणां पुरां रिपोः त्रिपुरारेः श्रीमहारुद्रस्य सर्वदेवमयं रथमास्थितस्य पुराऽभिवर्तिनः त्रिपुरं दिधक्षोः श्रीरुद्रस्य प्रजापतिर्ब्रह्मा स्वयं प्रवयणम् आदित, सोऽपि अनुरागभावितः । श्रीमहादेवस्य हि त्रिपुरवासिनो दैत्यान् जिघांसोः आत्मभूः सारथिरभूत् । उक्तं च—'ब्रह्माणं सारथिं कृत्वे'ति । सोऽपि पुण्यमूर्तिः धर्मदेहः अनुरागेण च लौहित्येन व्याप्तः १९

**रथमिति** ॥ किञ्चेति चार्थः । अथ रथारोहणानन्तरं रथमास्थितस्यारूढस्य पुराभिवर्तिन इन्द्रप्रस्थाभिवर्तिनः त्रिपुराभिवर्तिनश्च मुरद्विषो हरेस्तिसृणां पुरां रिपोस्त्रिपुरान्तकस्येव । 'न तिसृचतसृ' इति नामि दीर्घप्रतिषेधः । धर्ममूर्तिर्धर्मात्मा प्रजापतिर्जनेश्वरो धर्मराजो ब्रह्मा च अनुरागभावितः सन्, प्रवीयते प्रेर्यतेऽनेनेति प्रवयणं प्राजनम्, प्रतोद इति यावत् । अत एव 'प्रवयणो दण्डः प्राजनो दण्डः' इति काशिका । अजेः करणे ल्युट् । 'वा यौ' इति विकल्पादजेर्वीभावः 'पूर्वपदात्संज्ञायाम्-' इति णत्वम् । स्वयमादित गृहीतवान् । सारथ्यं कृतवानित्यर्थः । ददातेः कर्तरि लुङि तङ् 'स्थाघ्वोः–' इतीकारे सिचः कित्त्वे च 'ह्रस्वादङ्गात्' इति सलोपः । अत्र त्रिपुरहरणे ब्रह्मा हरस्येव हरेरयं सारथ्यं चकारेत्युपमा । तस्याः प्रजापतिरिति राजब्रह्मणोः श्लेषमूलाभेदाध्यवसायादतिशयोक्तिनिर्व्यूढेति ॥ १९ ॥

**शनकैश्च तस्य(१) तनुजालकाऽन्तरक्षरितक्षपाकरकरोत्कराकृति ॥**
**पृथुफेनकूटमिव निम्नगापतेर्मरुदस्य(२) सूनुरधुवत् प्रकीर्णकम् ॥ २० ॥**

**शनकैरिति ॥** इवशब्दो यथार्थे, यथा च निम्नगापतेः नदीनाथस्य पृथुफेनकूटं डिण्डीरराशिं मरुत् वायुः धुनोति कम्पयति, एवमस्य मरुतः सूनुः पुत्रो भीमः तस्य हरेः शनकैः प्रकीर्णं चामरम् अधुवत् अचालयत् । किंलक्षणं प्रकीर्णं तनुजालकाऽन्तरक्षरितक्षपाकरकरोत्कराकृति तनौ सूक्ष्मे जालकाऽन्तरे गवाक्षविवरे क्षरितः प्रविष्टो यः क्षपाकरकरोत्करः शशिकिरणनिकरः तस्येवाऽऽकृतिः संस्थानं यस्य तत्तथोक्तम् । तनुत्वं चाऽत्र जालविशेषणं, पृथुर्दीर्घमिति चामरविशेषणम् । फेनकूटमप्येवंविधं भवति ॥ २० ॥

**शनकैरिति** ॥ किञ्चेति चार्थः । अथाऽस्य हरेस्तनुषु सूक्ष्मेषु जालकान्तरेषु गवाक्षरन्ध्रेषु स्फुरितस्य प्रसृतस्य क्षपाकरोत्करस्य शशिकिरणपुञ्जस्याकृतेरिवाकृतिर्यस्य तत्प्रकीर्णकं चामरं निम्नगापतेः समुद्रस्य पृथु विपुलं फेनकूटं फेनपुञ्जमिव मरुतः सूनुर्भीमसेनः शनकैरधुवद् धुवति स्म । धुवतिरयं तौदादिक इत्युक्तम् । उपमयोः सङ्करः ॥ २० ॥

**विकसत्कलायकुसुमाऽसितद्युतेरलघूडुपाण्डु जगतामधीशितुः ॥**
**यमुनाह्रदोपरिगहंसमण्डलद्युतिजिष्णु जिष्णुरभृतोष्णवारणम् ॥ २१ ॥**

**विकसदिति ॥** जिष्णुः अर्जुनः जगतामधीशितुः विश्वेषां प्रभोः श्रीकृष्णस्य उष्णवारणम् आतपत्रम् अभृत दध्रे । किंलक्षणस्य जगतामधीशितुः विकसत्कलायकुसुमाऽसितद्युतेः विकसतः विकासमानस्य(?)कलायाख्यस्य वृक्षविशेषस्य यत् कुसुमं प्रसूनं तस्येव

(१) ०रथास्य…स्फुरित…कृतिः । (२) ०र्मरुतश्च ।

असिता अशुक्ला द्युतिः भा यस्य सः तथा तस्य, किंलक्षणमुष्णवारणम् अलघु महत्, अपरं किंलक्षणं छत्रम् उडुपाण्डु उडु तारा चन्द्राख्या तदिव पाण्डु धवलम्, अत एव अपरं किंलक्षणं छत्रं यमुनाह्रदोपरिगहंसमण्डलद्युतिजिष्णु यमुनाह्रदस्य कालिन्दीजलाशयस्य उपरि गच्छत् हंसमण्डलं मरालचक्रवालं तस्य द्युतिः शोभा तं जयतीत्येवंशीलं द्युतिजिष्णु यमुनोपरिगमरालशोभापरिभावि । श्रीकृष्णस्य काष्ण्र्यात् यमुनाह्रद उपमानम् ॥ २१ ॥

विकसदिति ॥ विकसत्कलायकुसुमं कालपुष्पम् । 'कलायः स्यात्काले' इति वैजयन्ती । तद्वदसितद्युतेर्नीलवर्णस्य जगतामधीशितुर्जगन्नाथस्य जिष्णुरर्जुनः अलघूडुपाण्डु स्थूलनक्षत्रधवलम् अत एव यमुनाह्रदस्योपरिगमुपरिगतम् । 'अन्यत्रापि दृश्यते' इति डप्रत्ययः । तस्य हंसमण्डलस्य द्युतिं शोभां जिष्णु जयनशीलम् । 'ग्लाजिस्थश्च–' इति ग्स्नुः । उष्णवारणमातपत्रमभृत भृतवान् । भृञः कर्तरि लुङ् 'स्वरितञितः' इत्यात्मनेपदम् 'उश्च' इति सिचः कित्त्वादगुणता 'ह्रस्वादङ्गात्' इति सकारलोपः । अत्राप्युपमासङ्करः २१

**पवनात्मजेन्द्रसुतमध्यवर्तिना नितरामरोचि रुचिरेण चक्रिणा ॥**
**दधतेव योगमुभयग्रहान्तरस्थितिकारितं दुरुधराख्यमिन्दुना ॥ २२ ॥**

पवनेति ॥ चक्रिणा चक्रधरेण श्रीकृष्णेन नितरामतिशयेन अरोचि शोभितम् । किंलक्षणेन चक्रिणा पवनात्मजेन्द्रसुतमध्यवर्तिना भीमार्जुनमध्यस्थेन, अपरं किंलक्षणेन चक्रिणा रुचिरेण भास्वता, केनेवाऽरोचि इन्दुनेव चन्द्रमसेव, किंलक्षणेन इन्दुना दुरुधराख्यं दुरुधरानामानं योगं सम्बन्धं दधता बिभ्रता । किंलक्षणं योगं, तत्स्वरूपमाह—उभयग्रहाऽन्तरस्थितिकारितम् उभयोः ग्रहयोः श्रीसूर्यविहीनयोः यत् अन्तरं मध्यं तत्र स्थितिरवस्थानं तया कारितः निष्पादितः तम् । द्वितीयद्वादशग्रहमध्यस्थस्येन्दोः दुरुधरायोगो भवति । अत्र संस्थानमात्रं दीप्तिमत्त्वं च विवक्षितम् ॥ २२ ॥

पवनेति ॥ पवनात्मजेन्द्रसुतमध्यवर्तिना भीमार्जुनमध्यगतेन रुचिरेण चक्रिणा हरिणा उभयोरर्कोऽन्यग्रहाणामन्यतमयोरन्तरे मध्ये स्थित्या वासेन कारितं सम्पादितम् । वृत्तिविषये उभशब्दस्य स्थानेऽप्युभयशब्दस्यैव प्रयोगो व्याख्यातः । दुरुधरेत्याख्या यस्य तद् दुरुधराख्यं योगं दधता । अर्कोऽन्यग्रहमध्यगतेनेत्यर्थः । इन्दुनेवेत्युपमा । नितरामतिशयेन । 'अव्ययादाम्वक्तव्यः–' इत्यामुप्रत्ययः । अरोचि अशोभि । रोचतेर्भावे लुङ् । स्वभावरमणीयस्याऽनुरूपान्तरसमायोगाच्छोभातिशयो जायते । रत्नकाञ्चनयोरिवेति भावः। अत्र भगवानाचार्यमिहिरः–'हित्वाऽर्कं सुनफाऽनफा दुरुधरा स्वान्त्योभयस्थैर्ग्रहैः, शीतांशोः' इति । एतदेव स्पष्टीकृतं कल्याणवर्मणा ।

> 'रविवर्जं द्वादशगैरनफा चन्द्राद् द्वितीयगैः सुनफा ।
> उभयस्थितैर्दुरुधरा केमद्रुमसंज्ञिकोऽतोऽन्यः ॥

इति ॥ २२ ॥

**वशिनं क्षितेरयनयाविवेश्वरं नियमो यमश्च नियतं यतिं यथा ॥**
**विजयश्रिया वृतमिवाऽर्कमारुतावनुसस्रतुस्तमथ दस्रयोः सुतौ ॥२३॥**

वशिनमिति ॥ अथाऽनन्तरं दस्रयोः सुतौ नासत्ययोरात्मजौ नकुलसहदेवौ तं श्रीकृष्णम् अनुसस्रतुः पश्चाज्जग्मतुः । कौ कमिवेत्याह—अयनयाविव । यथा वशिनं जितेन्द्रियं क्षितेः ईश्वरं राजानम् अयनयौ दैवनीती, अनुकूलं हि दैवम् अयः षाड्गुण्यं नयः, तौ अनुगच्छतः। अपरं कौ कमिव नियतं संयमिनं यतिं परिव्राजं नियमो यमश्च अनुसरतः । नियमोऽनुष्ठेयरूपः शौचादिः, यमो निषिद्धवर्जनमहिंसादिः । उक्तं च—'अहिंसासत्यास्तेयब्रह्मचर्याऽपरिग्रहा यमाः, शौचसन्तोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमाः' ।

तथा विजयश्रिया जयलक्ष्म्या वृतं सम्भक्तं नरम् अर्कमारुतौ रविसमीरणौ पृष्ठस्थौ अनुसरतः। यदा किल पराङ्मुखौ तौ भवतः, तदा लक्ष्म्या च साधारणसामर्थ्यादेव जयसद्भावः॥ २३॥

वशिनमिति ॥ अथ भीमार्जुनोपवेशनानन्तरं वशिनमिन्द्रियजयवन्तम् । अन्यसनिनामिति यावत् । क्षितीश्वरं भूपतिम् अयः शुभावहो विधिर्नीतिर्नयस्ताविव । दैवपुरुषकाराविवेत्यर्थः । नियतमाचारनिष्ठं यतिं जितेन्द्रियम् । 'यतिनो यतयश्च' इत्यमरः । नियमः शरीरातिरिक्तदेशकालादिसाधनापेक्षः सन्ध्योपासनजपादिः, यमः शरीरमात्रसाधनापेक्षोऽहिंसादिः ।

'शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः ।
नियमस्तु स यत्कर्म नित्यमागन्तुसाधनम्' ॥

स च यथा, यमनियमाविवेत्यर्थः । 'इववद्वायथाशब्दाः' इति दण्डिनाऽभिधानात् । विजयश्रिया युतं आसन्नविजयम् विजिगीषुं, रिपुमित्यर्थः । अर्कमारुताविव दस्रयोराश्विनोः सुतौ नकुलसहदेवौ । 'नासत्यावश्विनौ दस्रौ' इत्यमरः । तं हरिमनुसस्रतुरनुचेरतुः । पृष्ठोपसर्पणं चक्रतुरित्यर्थः । इह सर्वकर्तृमनोरथानुकूलव्यापारवत्त्वमनुसरणम् । इयं मालोपमा ॥ २३ ॥

**मुदितैस्तदाति दितिजन्मनां रिपावविनेय(१)सम्भ्रमविकासिभक्तिभिः ॥**
**उपसेदिवद्भिरुपदेष्टरीव तैर्ववृते विनीतमविनीतशासिभिः ॥ २४ ॥**

**मुदितैरिति ॥ तैः पाण्डवैः दितिजन्मनां दितिपुत्राणां रिपौ दैत्यारौ श्रीकृष्णे तदा इति उक्तेन प्रकारेण विनीतं ववृते सविनयम् आसितम् । किंलक्षणैस्तैः मुदितैः हृष्टैः, अपरं किंलक्षणैस्तैः अविनेयसम्भ्रमविकासिभक्तिभिः अविनेयः अकृत्रिमः सहजः सम्भ्रमः त्वरा आदरः तेन विकासिनी प्रसरन्ती भक्तिः भजनानन्दो येषां ते तथा तैः । सहजो हि आदरः भक्तिं प्रकाशयति, कृत्रिमस्तूपचारः । अपरं किंलक्षणैस्तैः अविनीतशासिभिः दुराचारहन्तृभिः । कैर्यथा कस्मिन् विनीतमास्यते, इत्याह—कस्मिन्निव उपदेष्टरि गुरौ उपसेदिवद्भिः अन्तेवासिभिरिव । तेऽपि सहजभक्तयोऽविनीतशासिनश्च । विकासिभक्तिभिरिति अविकासिनीवृत्तिपरया चोदनया स्त्रीत्वेन विना पूर्वपदार्थो विवक्षित इति ॥ २४ ॥**

मुदितैरिति ॥ तदा तस्मिन्समये इति मुदितैर्हृष्टैरविनीयोऽकल्कः । अकपट इति यावत् । यः सम्भ्रम-आदरस्तेन विकासिनी स्फुटीभवन्ती भक्तिर्येषां तैः । 'विपूयविनीयजित्या मुञ्जकल्कहलिषु' इति कल्कार्थे निपातः । नपुंसकपूर्वपदः स्त्रीलिङ्गपूर्वपदो वा बहुव्रीहिः । अविनीतं शासतीत्यविनीतशासिभिः दुष्टशिक्षकैः पाण्डवैः दितिजन्मनां रिपौ कृष्णविषये उप समीपे सीदन्ति स्मेत्युपसेदिवांसोऽन्तेवासिनः । 'भाषायां सदवसश्रुवः' इति सदेर्लिटः क्वसुरादेशः । तैरुपसेदिवद्भिरुपदेष्टरि गुराविवेत्युपमा । विनीतमनुद्धतं च ववृते वृत्तम् । भावे लिट् । ननु विकासिभक्तिरित्यत्र कथं पूर्वपदस्य पुंवद्भावः, भक्तिशब्दस्य प्रियादिपाठात् 'स्त्रियाः पुंवत्—' इति पुंवद्भावसूत्रेऽप्रियादिष्विति निषेधादिति । विकासिशब्दस्याविकासिनीवृत्तिमात्रपरतयाऽस्त्रीत्वस्य विवक्षितत्वान्नपुंसकपूर्वपदो बहुव्रीहिरिति केचित् । तदेतदभिप्रेत्योक्तं वृत्तिकारेण 'दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याऽविवक्षितत्वात्सिद्धिः' इति । एतदेव स्पष्टीकृतं न्यासव्याख्याने—'दृढं भक्तिर्यस्येति नपुंसकं पूर्वपदम् , धात्वर्थविशेषणमात्रपरे दृढशब्दे लिङ्गविशेषस्याऽनुपकारकत्वात्स्त्रीत्वमविवक्षितम्' इति । भोजराजस्तु 'भक्तौ कर्मसाधनायां'मित्यनेन सूत्रेण भज्यते सेव्यते इति कर्मार्थत्वेन दृढा भक्तिरित्यादि भवति । भावसाधनायां तु दृढभक्तिर्भवत्येव' इत्याह। तदेतत्सर्वमस्माभिः कालिदासत्रयसञ्जीविन्यां 'दृढभक्तिरिति ज्येष्ठ' इत्यादिषु विवेचितम् । तस्माद्विकासिभक्तिभिरित्यत्रापि मतभेदेन पूर्वपदस्य स्त्रीत्वे नपुंसकत्वे च रूपसिद्धिरस्तीति स्थितम् ॥ २४ ॥

---

(१) ०स्वविनीय ।

**गतयोरभेदमिति सैन्ययोस्तयोरथ भानुजह्नुतनयाऽम्भसोरिव ॥**
**प्रतिनादिताऽम्बर(१)विमानमानकैर्नितरां मुदा परमयेव दध्वने ॥ २५ ॥**

**गतयोरिति** ॥ तयोः सैन्ययोः बलयोः इत्थम् अनेन प्रकारेण अभेदमैक्यं गतयोः प्राप्तयोः सतोः अथ पश्चात् आनकैः पटहैः नितरामत्यर्थं दध्वने ध्वनितम् । तयोर्मिलितयोः भेर्यो वाद्यन्ते इत्यर्थः । कया, उत्प्रेक्ष्यते—परमया महत्या मुदेव तुष्ट्येव । सति हर्षे मुखरेण भूयते । कथं यथा भवति दध्वने प्रतिनादिताऽम्बरविमानं यथा भवति प्रतिनादितानि प्रतिध्वनिं प्रापितानि अम्बरमाकाशं विमानानि व्योमयानानि च यत्र क्रियायां तद्यथा भवति । किंलक्षणयोः सैन्ययोः, उत्प्रेक्ष्यते—भानुजह्नुतनयाऽम्भसोरिव यमुनागङ्गाजलतुल्ययोः, भानुजह्नवोः तनये पुत्र्यौ यमुना गङ्गा तयोःअम्भसी पानीये तयोरिव ॥ २५ ॥

गतयोरिति ॥ इति इत्थं गतयोः सैन्ययोः भानुजह्नुतनये यमुनाजाह्नव्यौ तयोरम्भसी प्रवाहौ तयोरिवाऽभेदमैक्यं गतयोः सतोः। 'यस्य च भावेन भावलक्षणम्'इति सप्तमी । एतेन सैन्ययोरवार्यत्वमुक्तम् । अथ सैन्यमेलनाऽनन्तरम् आनकैर्मङ्गलदुन्दुभिभिः परमया मुदेव हर्षेणेवेत्युत्प्रेक्षा । प्रतिनादितानि प्रतिध्वनितान्यमरविमानानि द्रष्टुमागत्याम्बरस्थितानि विमानानि देवयानानि यस्मिन् कर्मणि तद्यथा तथा नितरां दध्वने ध्वनितम् । भावे लिट् ॥ २५ ॥

**मखमीक्षितुं क्षितिपतेरुपेयुषां परितः प्रकल्पितनिकेतनं बहिः ॥**
**उपरुध्यमानमिव भूभृतां बलैः पुटभेदनं दनुसुताऽरिरैक्षत ॥ २६ ॥**

**मखमिति** ॥ ततः दनुसुतारिर्दानवशत्रुर्भगवान् श्रीकृष्णः क्षितिपतेः राज्ञो युधिष्ठिरस्य पुटभेदनं स्थानीयमिन्द्रप्रस्थाख्यं नगरम् ऐक्षत अदर्शत् । किंलक्षणं पुटभेदनं भूभृतां बलैः राज्ञां सैन्यैः बहिर्बाह्यप्रदेशे परितः समन्तात् प्रकल्पितनिकेतनं रचिताऽऽवसतिकं, किंलक्षणानां भूभृतां मखमीक्षितुं यज्ञं द्रष्टुमुपेयुषामागतानाम्, उपेयुस्ते उपेयिवांसः तेषामुपेयुषाम् । अपरं किंलक्षणं पुटभेदनम्, उत्प्रेक्ष्यते—उपरुध्यमानमिव । यस्य किल पुरस्य परैरवरोधः क्रियते, तद्बहिः प्रकल्पितनिकेतनं भवति । पुटभेदनं मूलनगरम् । 'पत्तनं पुटभेदनं, स्थानीयं निगमः' इत्यमरः ॥ २६ ॥

मखमिति ॥ क्षितिपतेर्धर्मराजस्य मखं क्रतुमीक्षितुमुपेयुषां ततस्तत आगतानां भूभृतां राज्ञां बलैः सैन्यैर्बहिः परितः प्रकल्पितानि निर्मितानि निकेतनानि निवासा यस्य तत् अत एवोपरुध्यमानं शत्रुसेनावेष्ट्यमानमिव स्थितमित्युत्प्रेक्षा । पुटभेदनं पत्तनं मयकृतामिन्द्रप्रस्थम् । 'पत्तनं पुटभेदनम्' इत्यमरः । दनुसुतारिर्दानवारिः पुरोऽग्रे ऐक्षताऽपश्यद ॥ २६ ॥

**प्रतिशब्द(२)पूरितदिगन्तरः पतन् पुरगोपुरं प्रति स सैन्यसागरः ॥**
**रुरुचे हिमाचलगुहामुखोन्मुखः पयसां प्रवाह इव सौरसैन्धवः ॥ २७ ॥**

**प्रतिशब्देति** ॥ सः सैन्यसागरः बलसमुद्रः रुरुचे शुशुभे । किं कुर्वन् पुरगोपुरं प्रति नगरद्वारसंमुखं पतन् प्रविशन्, अपरं किंलक्षणः सैन्यसागरः प्रतिशब्दपूरितदिगन्तरः प्रतिशब्देन प्रतिश्रुत्या पूरितानि भरितानि दिगन्तराणि आशाविवराणि येन सः तथा । क इव अभात् इत्याह—सौरसैन्धवः गाङ्गेयः पयसां प्रवाह इव तोयपूर इव, सुरसिन्धोः अमरापगायाः अयं सौरसैन्धवः । किंलक्षणः पयसां प्रवाहः हिमाचलगुहामुखोन्मुखः तुषाराऽद्रिदरीरन्ध्राभिमुखः, सोऽपि प्रतिशब्दपूरितदिगन्तरः ॥ २७ ॥

---

(१) ऽमर । (२) प्रतिनाद ।

प्रतिनादेति ॥ प्रतिनादैः प्रतिध्वानैः पूरितं व्याप्तं दिशामन्तरमन्तरालं येन सः पुरगोपुरं पुरद्वारं प्रति। 'गोपुरं तु पुरद्वारि द्वारमात्रे नपुंसकम्' इति विश्वः। एवं च न पुरशब्दस्य पौनरुक्त्यशङ्का। पतन् धावन् स सैन्यसागरः सेनासमुद्रः हिमाचलगुहामुखस्योन्मुखोऽभिमुखः सुरसिन्धोर्गङ्गाया अयं सौरसैन्धवः। 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः। पयसां प्रवाह इव रुरुचे रेजे। उपमालङ्कारः ॥ २७ ॥

**असकृद्गृहीतबहुदेहसम्भवस्तदसौ विभक्तनवगोपुरान्तरम् ॥**
**पुरुषः पुरं प्रविशति स्म पञ्चभिः सममिन्द्रियैरिव नरेन्द्रसूनुभिः ॥ २८ ॥**

**असकृदिति** ॥ असौ पुरुषो भगवान् तत्पुरमिन्द्रप्रस्थं प्रविशति स्म प्रविवेश। किंलक्षणः पुरुषः असकृद्गृहीतबहुदेहसम्भवः असकृत् भूयोभूयः गृहीत आश्रितः रामादिरूपेण बहूनां प्रभूतानां देहानां शरीराणां संभवो जन्म येन सः तथा, किंलक्षणं पुरं विभक्तनवगोपुरान्तरं विभक्तानि विभागे स्थितानि नवानां प्रत्यग्राणां गोपुराणां द्वाराणामन्तराणि मध्यानि यत्र तत्तथा। सुविभक्तकक्षाप्रदेशमित्यर्थः। कैः सह पुरं प्राविक्षदित्याह—पञ्चभिः नरेन्द्रसूनुभिः राजनन्दनैः पाण्डवैः सह। कैरिवेत्याह—इन्द्रियैरिव। यथा पुरुषः आत्मा चक्षुरादिभिः पञ्चभिरिन्द्रियैः सार्धं पुरं शरीरं प्रविशति। सोऽप्यात्मा असकृद्गृहीतबहुदेहसम्भवः। आत्मा हि देहाद् देहं सञ्चरन्नपि विभक्तनवद्वारं (पुरं प्रविशति।) विभक्तानि विभागेन स्वीकृतानि नवसङ्ख्यानि गोपुराणि द्वाराणि पायूपस्थाऽऽस्यश्रोत्राऽक्षिघ्राणाख्यानि यस्य तत्। गोपुरशब्देनाऽत्र द्वारमात्रं विवक्षितम् ॥ २८ ॥

**असकृदिति** ॥ असकृद्बहुशो गृहीतो लोकधारणाय स्वीकृतो बहुषु देहेषु मत्स्यकूर्मादिषु शरीरेषु सम्भवः प्रादुर्भावो येन सः, अन्यत्र स्वकर्मणा प्राक्तनयोनिसम्बन्धरूपसम्भव इत्यर्थः। पुरुषः पुराणपुरुषो हरिर्जीवश्च। विभक्तानि नवानि प्रत्यग्राणि गोपुरान्तराणि द्वारविशेषा यस्य तत्, अन्यत्र नवसङ्ख्याकानि गोपुरान्तराणीन्द्रियद्वारभेदा यस्मिंस्तत् पुरं पत्तनं शरीरं च। 'पुरं पुरि शरीरे च' इति विश्वः। पञ्चभिरिन्द्रियैः सममिव पञ्चभिर्नरेन्द्रसूनुभी राजपुत्रैः पाण्डवैः सहाऽसौ हरिस्तत् पुरं प्रविशति स्म। जीवो हि देहाद्देहान्तरं पूर्वेन्द्रियैः सह प्रविशति। लिङ्गशरीरस्याऽनपायादिति भावः। श्लेषसङ्कीर्णेयमुपमा ॥ २८ ॥

**तनुभिस्त्रिनेत्रनयनाऽनवेक्षितस्मरविग्रहद्युतिभिरद्युतन्नराः ॥**
**प्रमदाश्च यत्र खलु राजयक्ष्मणः परतो निशाकरमनोरमैर्मुखैः ॥ २९ ॥**

**तनुभिरिति** ॥ यत्र पुरे नराः पुरुषाः तनुभिः देहैः अद्युतन् शुशुभिरे, अपरं प्रमदाश्च नार्यः मुखैः अद्युतन् बभुः। किंलक्षणाभिस्तनुभिः त्रिनेत्रनयनाऽनवेक्षितस्मरविग्रहद्युतिभिः त्रिनेत्रस्य स्मरारेः नयनेन तृतीयचक्षुषा अनवेक्षितः अलक्ष्यीकृतो यः स्मरविग्रहः कामकायः तस्यैव द्युतिः कान्तिर्यासां तास्ताभिः। अदग्धकन्दर्परम्याभिरित्यर्थः। किंलक्षणैर्मुखैः राजयक्ष्मणः परतः निशाकरमनोरमैः यक्ष्मव्याधेः परतः पूर्वं यो निशाकरः चन्द्रः तद्वत् मनोरमाणि रम्याणि तैः। अखण्डमण्डलेन्दुनिभैरित्यर्थः। इति सर्वेषां सुरूपत्वमुक्तम्।

**तनुभिरिति** ॥ यत्र नराः पुरुषाः त्रिनेत्रस्त्र्यम्बकः। 'पूर्वपदात् संज्ञायामगः' इति णत्वं तु रघुनाथादिवण्णत्वरहितस्य संज्ञात्वे न प्रवर्तते। तस्य नयनेनाऽनवेक्षितस्य स्मरविग्रहस्य द्युतिरिव द्युतिर्यासां ताभिस्तनुभिः मूर्तिभिः। 'कायो मूर्तिस्तनुस्तनूः' इत्यमरः। अद्युतन् द्योतन्तेऽस्म। द्युत दीप्तौ, 'द्युद्भ्यो लुङि' इति विकल्पात्परस्मैपदं पुषादिसूत्रेण च्लेरङादेशः। प्रमदाः स्त्रियश्च राज्ञश्चन्द्रस्य यक्ष्मा राजयक्ष्मा क्षयरोगः। 'राजानं यक्ष्मा आरत्' इति श्रवणात्। 'राजयक्ष्मा क्षयः शोथः' इत्यमरः। तस्मात्परतः। पूर्वमित्यर्थः। निशाकरवन्मनोरमैः। अक्षीणेन्दुसुन्दरैरित्यर्थः। मुखैरद्युतन्। तत्पुरं प्रविष्ट इति पूर्वेणान्वयः। उपमयोः संसृष्टिः ॥ २९ ॥

अन्यच्च किंलक्षणं पुरमित्याह—

**अवलोकनाय सुरविद्विषां द्विषः पटहप्रणादविहितोपहूतयः ॥**
**अवधीरिताऽन्यकरणीयसत्वराः प्रतिरथ्यमीयुरथ पौरयोषितः ॥ ३० ॥**

**अवलोकनायेति** ॥ अथ पौरयोषितो नागरिकाः प्रतिरथ्यं प्रतिमार्गम् ईयुः आजिहन् आययुः, किमर्थं सुरविद्विषां देवशत्रूणामसुराणां द्विषः शत्रोः मुरारेः अवलोकनाय देवं द्रष्टुम् । कथं तास्तदागमनमजानन्नित्याह—किंलक्षणाः पौरयोषितः पटहप्रणादविहितोपहूतयः दुन्दुभिध्वनिभिः कृताह्वानाः, अत एव अपरं किंलक्षणाः अवधीरिताऽन्यकरणीयसत्वराः अवधीरितानि अवज्ञातानि अन्यकरणीयानि इतरकार्याणि याभिस्ताः अवधीरिताऽन्यकरणीयाः, अत एव एवंभूताश्च ताः सत्वराः वेगवत्यश्च तथा उत्सृष्टकार्यान्तराः सत्वराश्च ३० ॥

**अवलोकनायेति** ॥ अथ हरेः पुरःप्रवेशानन्तरं पटहप्रणादैर्दुन्दुभिध्वनिभिर्विहितोपहूतयः । कृताह्वाना इवेत्यर्थः । पुरे भवाः पौर्यस्ता योषितः पौरयोषितः । स्त्रियाः पुंवद्भावः । सुरद्विषामसुराणां द्विषो हरेरवलोकनाय दर्शनार्थमवधीरिताऽन्यकरणीयास्त्यक्ताऽन्यकार्याः ताश्च ताः सत्यः, रथ्यां प्रति प्रतिरथ्यम् । यथार्थेऽव्ययीभावः । ईयुः प्राप्ताः । एतेन स्त्रीणां हरिविलोकने कालाऽक्षमत्वलक्षणमौत्सुक्यमुक्तम् । अत्र पौराङ्गनाप्राप्तेः प्रवेशवाद्यश्रवणानन्तर्यात्तदुपाह्वानोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ ३० ॥

तमेव कार्यान्तरत्यागमाह—

**अभिवीक्ष्य सामिकृतमण्डना(१) यतीः कररुद्धनिर्लसदुरोंऽशुकाः स्त्रियः ॥**
**दधिरेऽधिभित्ति पटहप्रतिस्वनैः स्फुटमट्टहासमिव सौधपङ्क्तयः ॥ ३१ ॥**

**अभिवीक्ष्येति** ॥ अधिभित्ति भित्तौ पटहप्रतिस्वनैः आनकप्रतिध्वानैः सौधपङ्क्तयो हर्म्यावलयः स्फुटं प्रकटम् अट्टहासमिव दधिरे उच्चैर्हासमिव दधुः । अधिभित्तिषु ये पटहस्वनाः आनकप्रतिरवाः तैः करणैः सशब्दं जहसुरित्यर्थः । हास्यकारणमाह— किं कृत्वा स्त्रियः नारीरभिवीक्ष्य अवलोक्य, किंलक्षणाः स्त्रियः यतीः गच्छतीः, यन्ति ता यत्यः ताः यतीः, अपरं किंलक्षणाः स्त्रियः सामिकृतमण्डनाः सामि अर्धं कृतानि धृतानि मण्डलानि अलङ्करणानि याभिस्ताः तथा ताः । अर्धमेव प्रतिकर्म कृत्वा यतीः गच्छतीरित्यर्थः । अपरं किंलक्षणाः स्त्रियः कररुद्धनिर्लसदुरोंऽशुकाः त्वरावशात् करेणैव रुद्धमवष्टब्धं निर्लसत् भ्रश्यत् उरोंऽशुकं स्तनावरणं याभिस्ताः तथा ताः । अतश्चोत्प्रेक्ष्यते— सौधपङ्क्तयः अमूर्हसन्तीव । 'सामीत्यर्धे जुगुप्सने' ॥ ३१ ॥

अथाष्टादशभिः पौराङ्गनाशृङ्गारचेष्टां वर्णयति—

**अभिवीक्ष्येति** ॥ सामिकृतमण्डनमर्धविरचितप्रसाधनं यथा तथा यतीर्गच्छन्तीः । इणः शतरि ङीप् । कररुद्धनीवीनि करगृहीतग्रन्थीनि गलदंशुकानि स्रंसमानपरिधानानि यासां ताः । लसदिति पाठान्तरं, तदा लसदुल्लसदित्यर्थः । 'अंशुकं वस्त्रमात्रे स्यात्परिधानोत्तरीययोः' इति शब्दार्णवे । स्त्रियः स्त्रीरभिवीक्ष्य सौधपङ्क्तयः अधिभित्ति भित्तिषु । विभक्त्यर्थेऽव्ययीभावः । पटहप्रतिस्वनैस्तूर्यप्रतिध्वनिभिः स्फुटमुन्नतमट्टहासमुच्चैर्हसितमिव दधिरे । इवेत्युत्प्रेक्षा । विकृतिदर्शनाद्धासो भवतीति भावः । अत्र कुतूहलाख्या चेष्टोक्ता । 'कुतूहलं रम्यदृष्टौ चापल्यं परिकीर्तितम्' इति लक्षणात् ॥ ३१ ॥

**रभसेन हारपददत्तकाञ्चयः प्रतिमूर्धजं विहितकर्णपूरकाः ॥**
**परिवर्तिताऽम्बरयुगाः समापतन् वलयीकृतश्रवणकुण्डलाः (२) स्त्रियः ॥**

---

(१) मण्डनं···रुद्धनीविगलदंशुकाः । (२) पूरकाः ।

रभसेनेति ॥ स्त्रियो नार्यः समापतन् श्रीभगवद्दर्शनायाऽऽययुः। किंलक्षणाः स्त्रियः रभसेन हारपददत्तकाञ्चयः रभसतया गमनौत्सुक्येन हारपदे हारपीठे कण्ठे दत्ता कृता काञ्ची मेखला याभिस्तथा, अपरं किंलक्षणाः स्त्रियः रभसेन प्रतिमूर्धजं निहितकर्णपूरकाः प्रतिमूर्धजं केशेषु विहिता रचिताः कर्णपूरका याभिस्ताः तथा, अपरं किंलक्षणा नार्यः परिवर्तिताऽम्बरयुगाः परिवर्तितं विपरीततया धृतम् अम्बरयुगं वसनयुगलं याभिस्ताः तथा। अधोवास उपरि प्रावृतं, तत्रत्यं जघने निहितं याभिरित्यर्थः। अपरं किंलक्षणाः स्त्रियः वलयीकृतश्रवणकुण्डलाः अवलयं वलयं कृतमिति वलयीकृतं भुजे निहितं श्रवण-कुण्डलं कर्णाभरणं याभिस्तास्तथा। रभसेनेति प्रत्येकं सम्बध्यते ॥ ३२ ॥

रभसेनेति ॥ रभसेन त्वरया हारपदे मुक्तादामस्थाने वक्षसि दत्तकाञ्चयो न्यस्तरशनाः प्रतिमूर्धजं मूर्धजेषु केशेषु। विभक्त्यर्थेऽव्ययीभावः। विहिताः कर्णपूरकाः कर्णावतंसा याभिस्ताः। परिवर्तितं विपर्यासेन धृतमम्बरयुगं वाससी याभिस्ताः। परिधानीकृतमुत्तरीयं, कुचांशुकं च जघने दत्तमित्यर्थः। वलयीकृताः श्रवणपूरकाः कुण्डलानि याभिस्ताः स्त्रियः समापतन्नधावन्। एतेन विभ्रमाख्या चेष्टोक्ता। 'विभ्रमस्त्वरया काले भूषास्थानविपर्ययः' इति लक्षणात्। स च भ्रममूल इति भ्रान्तिमदलङ्कारो व्यज्यते ॥ ३२ ॥

**व्यतनोदपास्य चरणं प्रसाधिकाकरपल्लवाद्रसवशेन काचन ॥**
**द्रुतयावकैकपदचित्रिताऽवनिं पदवीं गतेव गिरिजा हरार्धताम् ॥ ३३ ॥**

व्यतनोदिति ॥ काचन काऽपि नारी पदवीं पद्धतिं द्रुतयावकैकपदचित्रिताऽवनिं व्यतनोत् चकार, द्रुतयावकं सरसाऽलक्तकं यत् एकपदम् एकक्रमः तेन चित्रिता चित्रवत् कृता अवनिर्भूमिर्यस्याः सा तथा तां, किं कृत्वा अतनोत् रसवशेन कौतुकवशात् प्रसाधिकाकरपल्लवात् चेटीपाणिदलात् चरणं पादम् अपास्य आक्षिप्य। अतश्चैकस्य पदस्य विचित्रत्वात् किंलक्षणा सा, उत्प्रेक्ष्यते—गिरिजा पार्वती हरार्धतां गतेव ईश्वरार्धतां प्राप्तेव। गौरीश्वरपदमध्ये ह्येकं पदं सालक्तकं भवति ॥ ३३ ॥

व्यतनोदिति ॥ काचन स्त्री रसवशेन हरिवीक्षणपारतन्त्र्येण। 'गुणे रागे द्रवे रसः' इत्यमरः। प्रसाधिकाया अलङ्कर्त्र्याः करपल्लवाच्चरणमपास्य असमाप्त एवाक्षिप्य। हरार्धतां हरस्यार्धाङ्गतां गता। अन्यथैकपादालक्तकासम्भवादिति भावः। गिरिजा गौरीव। यावकेनार्द्रालक्तकेन एकपदेन चित्रिता चित्रवर्णीकृता अवनिर्यस्यास्तां पदवीं व्यतनोदकरोत्। उपमालङ्कारः। एषा कुतूहलाख्या चेष्टा रसादिदृक्षाजनितचापलरूपत्वादिति ॥ ३३ ॥

**व्यलगन् (१)विशङ्कटकटीरकस्थलीशिखरस्खलन्मुखरमेखलाकुलाः ॥**
**भवनानि तुङ्गतपनीयसंक्रमक्रमणक्वणत्कनकनूपुराः स्त्रियः ॥ ३४ ॥**

व्यलगन्निति ॥ स्त्रियो नार्यः भवनानि प्रासादान् व्यलगन् आरुरुहुः। किंलक्षणाः स्त्रियः विशङ्कटकटीरकस्थलीशिखरस्खलन्मुखरमेखलाऽऽकुलाः विशङ्कटा विकटाः या कटीरकस्थल्यः जघनतट्यः तासां यत् शिखरं पीनो भागः तत्र स्खलन्त्यः श्लिष्यलन्त्योऽत एव मुखराः शिञ्जाना या मेखला रशनास्ताभिराकुलाः सायासा इव, अपरं किंलक्षणाः स्त्रियः तुङ्गतपनीयसंक्रमक्रमणत्क्वणत्कनकनूपुराः तुङ्गा उन्नता ये तपनीयसंक्रमाः कनकसोपनानि तत्र तैर्वा यत् क्रमणमारोहणं तेन क्वणन्ति झणझणायमानानि कनकनूपुराणि हेममञ्जीराणि यासां तास्तथा ॥ ३४ ॥

व्यचलन्निति ॥ विशङ्कटानां विशालानां कटीरकस्थलीनां कटिभागानां शिखरेष्वग्रेषु स्खलन्त्यो

---

(१) व्यचलन्।

लुठन्त्योऽत एव मुखराः शब्दायमानास्ताभिर्मेखलाभिराकुलाः, तुङ्गेषु तपनीयसंक्रमेषु कनकसोपानेषु क्रमणेन क्वणन्तः कनकनूपुरा यासां ताः स्त्रियः भवनानि हर्म्याणि व्यचलन्। तत्र गत्वारोहन्नित्यर्थः । चलेर्गत्यर्थाल्लङ्। एतदपि पूर्ववदतिकुतूहलमेव । वृत्त्यनुप्रासोऽलङ्कारः ॥ ३४ ॥

**अधिरुक्ममन्दिरगवाक्षमुल्लसत्सुदृशो रराज मुरजिद्दिदृक्षया ॥**
**वदनारविन्दमुदयाद्रिकन्दराविवरोदरस्थितमिवेन्दुमण्डलम् ॥ ३५ ॥**

**अधिरुक्मेति** ॥ कस्याश्चित् सुदृशः सुनेत्रायाः वदनारविन्दमाननकमलं रराज शुशुभे । किंलक्षणं वदनारविन्दं मुरजिद्दिदृक्षया भगवद्दर्शनेच्छया अधिरुक्ममन्दिरगवाक्षं सुवर्णभवनवातायने उल्लसत् शोभमानम् । किमिव रराजेत्याह—किंलक्षणं वदनारविन्दम्, उत्प्रेक्ष्यते—इन्दुमण्डलं शशिबिम्बमिव । किंलक्षणमिन्दुमण्डलम् उदयाद्रिकन्दराविवरोदरस्थितम् उदयपर्वतदरीरन्ध्रमध्योदितम् । रुक्ममन्दिरं सुवर्णगृहं तस्य गवाक्षः तस्मिन् अधिरुक्ममन्दिरगवाक्षं, सप्तम्यर्थेऽव्ययीभावः ॥ ३५ ॥

अधिरुक्मेति ॥ मुरजितो हरेर्दिदृक्षया द्रष्टुमिच्छया । दृशेः सन्नन्तात् 'अप्रत्ययात्' इति स्त्रियामप्रत्यये टाप् । रुक्ममन्दिरस्य कनकहर्म्यस्य गवाक्षेऽधिरुक्ममन्दिरगवाक्षम् । विभक्त्यर्थेऽव्ययीभावः । उल्लसत्प्रकाशमानं सुदृशः स्त्रिया वदनारविन्दमुदयाद्रेः कन्दराया गुहाया विवरस्योदरे मध्ये स्थितमिन्दुमण्डलमिव रराजेत्युपमा । अत्रापि सुदृशो गवाक्षाक्रमणस्य रम्यदर्शनार्थचापलरूपत्वात्कुतूहलं मुरजिद्दिदृक्षयेत्यादिना व्यक्तमेव ॥ ३५ ॥

**अधिरूढया निजनिकेतमुच्चकैः पवनावधूतवसनाऽन्तयैकया ॥**
**विहितोपशोभमुपयाति माधवे नगरं व्यराजत(१) पताकयेव तत् ॥ ३६ ॥**

**अधिरूढयेति** ॥ माधवे भगवति श्रीकृष्णे उपयाति निविशमाने सति तन्नगरं पुरम् इन्द्रप्रस्थं व्यराजत व्यरोचत। किंलक्षणं पुरम् । एकया अन्यया नार्या विहितोपशोभं जनितभूषं, सर्वापेक्षमन्यत्वम्, कयेव पताकयेव वैजयन्त्येव । भगवदागमनहर्षोद्धूतपताकया यथा तद्भूषितम्, एवं तथेत्यर्थः। इत्युपमा । यदि वा तस्या एव पताकाऽनुमाप्यते इत्युत्प्रेक्षा । किंलक्षणया नार्या इति पताकासाम्यमाह—उच्चकैः प्रांशु निजनिकेतं स्वमन्दिरम् अधिरूढया आरूढया आश्रितया, अपरं किंलक्षणया एकया पवनावधूतवसनाऽन्तया पवनेन वायुना अवधूतः आन्दोलितः वसनाऽन्तः वस्त्रपल्लवो यस्याः सा तथा तया । पताकाऽप्येवंविधा भवति ॥ ३६ ॥

अधिरूढयेति ॥ उच्चकैर्निजनिकेतं स्वसौधमधिरूढया आरूढवत्या पवनेनाऽवधूतः कम्पितो वसनान्तो वस्त्राञ्चलो यस्यास्तया एकया कदाचिदङ्गनया हेतुना तन्नगरमिन्द्रप्रस्थं माधवे उपयात्यागच्छति । यातेर्लटः शत्रादेशः। पताकया वैजयन्त्या विहितोपशोभं कृतशोभमिवाऽलङ्कृतमिवेत्युत्प्रेक्षा । व्यरोचत व्यराजत । कृत्स्नस्यापि नगरस्य स्वयं पताकेव बभावित्युत्प्रेक्षा । तस्याः सकलपौराङ्गनाऽतिशायि लावण्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः । अत्रापि प्रासादारोहणं पूर्ववत्कुतूहलमेव ॥ ३६ ॥

**करयुग्मपद्ममुकुलाऽपवर्जितैः प्रतिवेश्म लाजकुसुमैरवाकिरन् ॥**
**अवदीर्णशुक्तिपुटमुक्तमौक्तिकप्रकरैरिवाऽहिरिपुकेतु(२)मङ्गनाः ॥ ३७ ॥**

**करयुग्मेति** ॥ अङ्गनाः पुरनार्यः अहिरिपुकेतुं गरुडध्वजं श्रीकृष्णं प्रतिवेश्म गेहे गेहे लाजकुसुमैः लाजैः कुसुमैश्च अवाकिरन् निर्भरं चक्रुः । किंलक्षणैः लाजकुसुमैः करयुग्म-

(१) व्यरोचत। (२) ०खि पियरथाङ्ग।

पद्ममुकुलाऽपवर्जितैः करयुग्ममेव पाणिद्वन्द्वमेव पद्मं कमलं यस्य तत् मुकुलं कुड्मलं सम्पुटः तेन अपवर्जितानि मुक्तानि तैः । अपरं किंलक्षणैर्लाजकुसुमैः, अतश्चोत्प्रेक्ष्यते—अवदीर्ण-शुक्तिपुटमुक्तमौक्तिकप्रकरैरिव अवदीर्णो विकसितो यः शुक्तिपुटः मुक्ताकपाटः तेन मुक्तः क्षिप्तो योऽसौ मौक्तिकप्रकरः मुक्तावृन्दं तैरिव तत्तुल्यैः । सितत्वात् मुक्ताकुलक्षेपाजेति(?) भावः ३७

करयुग्मेति ॥ प्रतिवेश्म वेश्मनि । विभक्त्यर्थेऽव्ययीभावः । अङ्गनाः पुरन्ध्र्यः । करयुग्मान्यञ्जलयस्तानि पद्ममुकुलानीवेत्युपमितसमासः । तैरपवर्जितैरत एवाऽवदीर्णैर्विभिन्नैः शुक्तिपुटैः शुक्तिकोशैर्मुक्ता उत्सृष्टा ये मौक्तिकप्रकरा मुक्तानिकरास्तैरिव स्थितैरित्युत्प्रेक्षा । लाजाः कुसुमानीव तैर्लाजकुसुमैः । आचारलाजैरित्यर्थः । प्रियं रथाङ्गं चक्रं यस्य तं प्रियरथाङ्गं चाक्रिणम् । हरिमित्यर्थः । अवाकिरंश्छादयामासुः ॥३७॥

**हिममुक्तचन्द्ररुचिरः सपद्मको मदयन्द्विजान् जनितमीनकेतनः ॥**
**अभवत्प्रसादितसुरो महोत्सवः प्रमदाजनस्य स चिराय माधवः ॥३८॥**

हिममुक्तेति ॥ सः माधवः श्रीकृष्णः प्रमदाजनस्य नागरिकलोकस्त्रीवर्गस्य महोत्सव इव महोत्सवः अभवत् । सुखकारी बभूवेत्यर्थः । किंलक्षणो माधवः हिममुक्तचन्द्ररुचिरः हिमान्नीहारान्मुक्तो निःसृतो यः चन्द्रः शशी स इव रुचिरः कान्तिमान्, इति दीप्तिमात्रविवक्षया सादृश्यम् । अपरं किंलक्षणः हरिः सपद्मकः सह पद्मया श्रिया वर्तते इति सपद्मः सपद्म एव सपद्मकः लक्ष्मीवान्, अपरं किंलक्षणो हरिः द्विजान् मदयन् विप्रान् प्रत्यक्षदर्शनेन हर्षयन्, अपरं किंलक्षणो हरिः जनितमीनकेतनः जनितः उत्पादितः मीनकेतनः प्रद्युम्नो रौक्मिणेयो येन सः तथा, अपरं किंलक्षणो हरिः प्रसादितसुरः प्रसादिताः कण्टकोद्धारेन हर्षिताः सुरा देवा येन सः तथा । श्लेषेणाऽर्थान्तरप्रतीतिः—माधवो वसन्तः यथा प्रमदाजनस्य महोत्सवो भवति । किंलक्षणो वसन्तः हिममुक्तचन्द्ररुचिरः हिममुक्तेन चन्द्रेण रुचिरः मनोज्ञः, पुनः किंभूतो वसन्तः सपद्मकः सपद्मं सकमलं कम् उदकं यत्र सः तथा, पुनः किंभूतः द्विजान् पक्षिणः कोकिलादीन् मदयन् मत्तान् कुर्वन्, अपरं किंलक्षणो वसन्तः जनितमीनकेतनः वर्धितकामः, अपरं किंलक्षणो वसन्तः प्रसादितसुरः अच्छितहालः। वसन्ते हि सुरा निर्मला भवतीति। यद्वा स माधवः आसवविशेषः प्रमदाजनस्य जनितमीनकेतनः उल्बणीकृतमन्मथो भवति। तथा प्रसादितसुरः प्रकर्षेण सादिता नगौरवीकृता सुरा मदिरा येन सः तथा । न हि तत्सन्निधौ कश्चिद्वारुणीं पिबति तस्योत्कृष्टत्वात् । अयमर्थत्रयवाची ॥ ३८ ॥

हिममुक्तेति ॥ हिममुक्तः शिशिराऽपगमाद्धिमान्निर्मुक्तो यश्चन्द्रः स इव रुचिरः, अन्यत्र तेन रुचिरः, पद्मेन पद्मया च सह वर्तत इति सपद्मः स एव सपद्मकः पद्महस्तः, सश्रीकश्च । शैषिकः स्वार्थिको वा कप् प्रत्ययः । अन्यत्र सपङ्कजः । शैषिकः कप्प्रत्ययः । द्विजान् ब्राह्मणान् , अन्यत्र पक्षिगणान् कोकिलादीन् मदयन् हर्षयन् जनितमीनकेतनः प्रद्युम्नजनकः, अन्यत्र मदनोद्दीपकः । प्रसादिता अनुगृहीताः सुरा देवा येन, अन्यत्र प्रसादिता निर्मलीकृता सुरा मदिरा यस्मिन् स माधवो हरिर्वसन्तश्च । 'माधवस्तु वसन्ते स्याद्वैशाखे गरुडध्वजे' इति विश्वः । प्रमदैव जनस्तस्य प्रमदाजनस्य । जातावेकवचनम् । चिराय महोत्सवोऽभवत् । तद्वदानन्दकरोऽभूदित्यर्थः । इहानन्दकरत्वसाम्येन माधवे महोत्सवरूपणाद्रूपकसिद्धिः । श्लेषस्तु हरिवसन्तयोरिह नास्त्येव, प्रकृताप्रकृतश्लेषे विशेष्यश्लेषायोगात् । किन्तु शब्दशक्तिमूलो ध्वनिरेव॥३८

**धरणीधरेन्द्रदुहितुर्भयादसौ विषमेक्षणः स्फुटममूं न पश्यति ॥**
**मदनेन वीतभयमित्यधिष्ठिताः क्षणमीक्षते स्म स पुरोविलासिनीः ॥३९॥**

धरणीधरेन्द्रेति ॥ स भगवान् पुरः नगर्याः विलासिनीः वेश्याः क्षणं क्षणमात्रम् ईक्षते स्म अद्राक्षीत् । किंलक्षणा विलासिनीः मदनेन कामेन इति अतो हेतोः वीतभयं निःशङ्कम् अधिष्ठिताः आश्रिताः, इति कुत इत्याह—अमूः वेश्याः असौ विषमेक्षणः त्रिनयनः श्रीमहादेवः धरणीधरेन्द्रदुहितुः भयात् पर्वतेश्वरपुत्र्याः पार्वत्या भीतेः न ईक्षते न पश्यति । तस्य हि हराद् ? (गौर्याः) यं, स च तासां गौरीर्ष्याशङ्कया दर्शनमेव न ददाति इति निर्भयमेवाऽसौ तासु वसतीति तारुण्योक्तिः ॥ ३९ ॥

धरणीधरेन्द्रेति ॥ असौ स्वदाहको विषमेक्षणस्त्र्यक्षः धरणीधरेन्द्रदुहितुः पार्वत्याः, सपत्नीशङ्किन्या-इति भावः ।'भीत्रार्थानां भयहेतुः' इति पञ्चमी ।भयात् स्फुटम् अमूः पौरयोषितः न पश्यतीति हेतोः, इति विश्वासादित्यर्थः । अत एव गम्योत्प्रेक्षा । मदनेन वीतभयमधिष्ठिता आक्रान्ताः । अत्यारूढमदना इत्यर्थः । पुरोविलासिनीः स हरिः क्षणमीक्षते स्म । सविस्मयामिति भावः ॥ ३९ ॥

विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ॥
मदविभ्रमाऽसकलया पपे पुरः (१)स पुरस्त्रियैकतमयैकया दृशा ॥४०॥

विपुलेनेति॥ सः भगवान् श्रीकृष्णः एकतमया एकया कयाचित्पुरस्त्रिया एकयैव दृशा नयनेन पपे पीतः । अतिमात्रं दृष्ट इत्यर्थः । किंलक्षणया दृशा मदविभ्रमाऽसकलया मदविभ्रमेण रागविलसितेन असकला असमग्रा तया, दृशा एकयाऽपि न सर्वया, किंलक्षणः असौ यस्य विष्णोः सागरशयस्य समुद्रशायिनः सतः युगक्षये कल्पान्ते विपुलेन बृहता कुक्षिणा उदरेण भुवनानि सर्वाण्येव जगन्ति पपिरे पीतानि अन्तःकृतानि । असकलया अपाङ्गप्रेक्षणमात्रेणैव पीतः। यत्र गुर्वपि कार्यं हीनोऽपि कर्ता कुरुते इति । पुरोऽग्रे, सर्वेषा-मेव पश्यतामित्यर्थः ॥ ४० ॥

विपुलेनेति ॥ युगक्षये कल्पान्ते, सागरे शेते इति सागरशयस्य । 'अधिकरणे शेतेः' इत्यच्प्रत्ययः 'शयवासवासिष्वकालात्' इति विकल्पादलुगभावः । यस्य हरेर्विपुलेन कुक्षिणा भुवनानि पपिरे पीतानि । पिबतेः कर्मणि लिट् । स हरिरेकतमया पुरस्त्रिया पुनः कयाचित्पौराङ्गनया मदविभ्रमेण मदविकारेणा-ऽसकलया असमग्रया एकया दृशा पपे पीतः । सतृष्णं दृष्ट इत्यर्थः । कुक्षिकोणनिविष्टनिखिलविष्टपस्य हरेमर्हत आधेयस्याऽत्यल्पतरैककान्ताकटाक्षकोणाधारत्वोक्त्या चमत्कारादधिकाऽलङ्कारः । 'आधाराधेययो-रानुरूप्याभावोऽधिको मतः' इति लक्षणात् । अयं च तात्कालिकविकारात्मा विलासाख्यो भावो, यत् कटाक्षवीक्षणम् । 'तात्कालिकविकारः स्याद्विलासोऽङ्गक्रियादिषु' इति दशरूपकात् ॥ ४० ॥

अधिकोन्नमद्घनपयोधरं मुहुः प्रचलत्कलाचि(२)कलशङ्खकस्वना ॥
अभिकृष्णमङ्गुलिमुखेन काचन द्रुतमेककर्णविवरं व्यघट्टयत् ॥ ४१ ॥

अधिकेति ॥ काचिन्नायिका मुहुः पुनःपुनः अभिकृष्णं कृष्णाभिमुखम् अङ्गुलि-मुखेन अङ्गुल्यग्रेण द्रुतं त्वरितं यथा भवत्येवम् एककर्णविवरमेकश्रोत्रविरोकं व्यघट्टयत् अचालयत् अकण्डूयत्, इत्यनुरागभावस्याऽनुकथनम् । किंलक्षणा सा प्रचलत्कलाचिकल-शङ्खकस्वना प्रचलन्ती द्रुतविघट्टनवशात् सकम्पा याऽसौ कलाचिर्भुजा तस्याः कलो मधुरः शङ्खकस्वनो वलयरवो यस्याः सा तथा, कथं यथा भवति अघट्टयत् अधिकोन्नमद्घनपयो-धरं यथा भवत्येवम् अधिकमतिशयेन उन्नमन्तौ ऊर्ध्वीभवन्तौ घनौ पीवरौ पयोधरौ स्तनौ यत्र क्रियायां तद्यथा भवति । स्तनौ ममैष पश्यत्वित्येतदर्थं कर्णविवरमघट्टयदिति भावः ४१

(१) पुनः । (२) कलापि ।

. अधिकोति ॥ काचन कान्ता आभिकृष्णं कृष्णाभिमुखम् । आभिमुख्येऽव्ययीभावः । आधिकं भुजोन्नमनाद् दूरमुन्नमन् घनः कठिनः पयोधरः स्तनो यस्याः सा मुहुः प्रचलतो नृत्यतः कलापिनो बर्हिण इव कलो मधुरः शङ्कस्वनो वलयध्वनिर्यस्याः सा सती । 'शङ्कं वलये कम्बौ' इति विश्वः । अङ्गुलिमुखेनाऽङ्गुल्यग्रेणैकस्य कर्णस्य विवरं रन्ध्रं द्रुतं शीघ्रं व्यघट्टयत् । कण्डूविनोदार्थमिवाऽताडयत् । वस्तुतस्तु भावाऽऽविष्करणार्थमेवेति भावः । अयं च पूर्ववद्विलास एव । कलापिकलेत्युपमा ॥ ४१ ॥

परिपाटलोर्ध्वतल(१)चारुणाऽसकृच्चलिताङ्गुलीकिसलयेन पाणिना ॥
सशिरःप्रकम्पमपरा रिपुं मधोरनुदीर्णवर्णनिभृतार्थमाह्वयत् ॥ ४२ ॥

परिपाटलेति ॥ अपरा अन्या नायिका मधोः असुरस्य रिपुं मधुसूदनं श्रीकृष्णं पाणिना आह्वयत् करेण आहूतवती । एह्येहि मनोहर ! कृष्ण ! त्रायस्व अवजालनं दुःखादित्यवदत् इत्यर्थः । किंलक्षणेन करेण परिपाटलोर्ध्वतलचारुणा परिपाटलं सर्वरक्तमूर्ध्वमूर्ध्वीकृतं यत्तलं पृष्ठं तेन चारुः रम्यस्तेन, अपरं किंलक्षणेन पाणिना असकृच्चलिताऽङ्गुलीकिसलयेन असकृद्वारंवारं चलिताः प्रसृताः अङ्गुल्य एव करशाखा एव किसलयानि पल्लवा यस्य सः तथा तेन, कथं यथा भवति एवं सशिरःप्रकम्पं यथा भवति, सह शिरःप्रकम्पेन मूर्धचालनेन वर्तते यत्र क्रियायाम्, अपरं कथं यथा भवति अनुदीर्णवर्णनिभृतार्थं यथा भवत्येवम् अनुदीर्णैरनुच्चरितैः वर्णैरक्षरैः निभृतो गूढोर्थोऽभिधेयं यत्र क्रियायां तद्यथा भवत्येवम् । पाणिं शिरश्चालयन्ती मनसैव तमाजुहावेत्यर्थः ॥ ४२ ॥

परिपाटलेति ॥ अपरा स्त्री परिपाटलाऽब्जदलचारुणा रक्ताऽब्जपत्ररुचिरेण असकृन्मुहुश्चलिताऽङ्गुल्यः किसलयानीवाऽङ्गुलीकिसलयानि यस्य तेन पाणिना सशिरःप्रकम्पं शिरःकम्पयुक्तं यथा तथा मधो रिपुं हरिमनुदीर्णवर्णमनुच्चारिताऽक्षरम् अत एव निभृतार्थं परेषामविदितार्थं यत्तदनुदीर्णवर्णनिभृतार्थं यथा तथा आह्वयत् । परप्रकाशनभयादव्याहरन्ती चेष्टयैवाह्वानं कृतवतीत्यर्थः । अत्रापि पूर्ववद्विलासोपमे भावालङ्कारौ ॥ ४२ ॥

नलिनान्तिकोपहितपल्लवश्रिया व्यवधाय चारु मुखमेकपाणिना ॥
स्फुरदङ्गुली(२)विवरनिःसृतोल्लसद्दशनप्रभाङ्कुरमजृम्भताऽपरा ॥ ४३ ॥

नलिनेति ॥ अपरा अन्या नायिका अजृम्भत जजृम्भे । किं कृत्वा चारु रम्यं मुखं वदनम् एकपाणिना एककरेण व्यवधाय आच्छाद्य, किंलक्षणेन एकपाणिना नलिनाऽन्तिकोपहितपल्लवश्रिया नलिनान्तिके पद्मसविधे उपहितस्य न्यस्तस्य पल्लवस्य किसलयस्येव श्रीः शोभाः यस्य सः तथा तेन । मुखस्याब्जमुपमानं, करस्य पल्लवः । किंलक्षणं मुखं स्फुरदङ्गुलीविवरनिःसृतोल्लसद्दशनप्रभाऽङ्कुरं स्फुरन्तीनां चलन्तीनामङ्गुलीनां करशाखानां विवरैः छिद्रैः निःसृता निर्गता उल्लसन्ती द्योतमाना याऽसौ दशनप्रभा दन्तकान्तिः सैव अङ्कुरः यस्य यत्र वा, क्रियाविशेषणं चैतत् ॥ ४३ ॥

नलिनेति ॥ अपरा स्त्री नलिनान्तिके उपहितस्य पल्लवस्य श्रीरिव श्रीर्यस्य तेन, मुखसन्निधानादिति भावः । एकपाणिना चारु निसर्गसुन्दरं मुखं व्यवधाय तिरोधाय स्फुरदङ्गुलीविवरनिःसृता उज्ज्वलीऽङ्गुल्यन्तरालनिर्गता अत एवोल्लसन्त उत्सर्पन्तो दशनप्रभा एवाऽङ्कुरा यस्मिन्कर्मणि तद्यथा तथा अजृम्भत । जृम्भणमास्यविवरणं, तच्चेष्टवस्तुसाक्षात्कारकृतजाड्यानुभावः । अत्र नलिनपल्लवयोरसम्बन्धयोः सम्भावनया, सम्बन्धाभिधानादतिशयोक्तिः ॥ ४३ ॥

---

( १ ) पाटलाऽब्जदल । ( २ ) स्फुरिता० ।

**वलयार्पिताऽसितमहोपलप्रभाबहली(१)कृतप्रतनुरोमराजिना ॥**
**हरिवीक्षणाऽक्षणिकचक्षुषाऽन्यया करपल्लवेन गलदम्बरं दधे ॥ ४४ ॥**

वलयेति ॥ अन्यया कयाचिदङ्गनया गलत् भ्रश्यत् अम्बरं दुकूलं करपल्लवेन पाणिकिसलयेनैव दधे बभ्रे, न तु ग्रन्थ्या न तु नीव्या । किंलक्षणया अन्यया हरिवीक्षणाऽक्षणिकचित्तया हरिवीक्षणाय श्रीकृष्णदर्शनाय नक्षणिके नव्यापारान्तरगते चक्षुषी ईक्षणे यस्याः सा तथा तया । यावच्चलदृष्ट्या न विषयीकृतः, तावद् ग्रन्थिबन्धनं कथं युज्यते । जघनाम्बरपातो देहोच्छ्वासेन नीवीछुटनाद्बोद्धव्यः । उच्छ्वासस्य तु भगवद्दर्शनमेव हेतुः । किंलक्षणेन करपल्लवेन वलयार्पिताऽसितमहोपलप्रभाबहलीकृतप्रतनुरोमराजिना वलये अङ्गदे अर्पितः प्रोतो योऽसितमहोपलः इन्द्रनीलमणिः तस्य प्रभया दीप्त्या बहलीकृता घनत्वमापादिता प्रतनुः तन्वी रोमराजिः लोमपङ्क्तिर्येन सः तथा तेन ॥ ४४ ॥

वलयेति ॥ हरिवीक्षणेऽक्षणिकचक्षुषा स्थिरदृष्ट्या । विस्मयादराभ्यां स्तिमितनेत्रयेत्यर्थः । अन्यया स्त्रिया गलत् सुखपारवश्यात्स्रंसमानमम्बरं वलयेष्वर्पिताः खचिता ये असितमहोपला नीलमहामणयः । 'उपलौ मणिपाषाणौ' इति विश्वः । तेषां प्रभाभिर्बहुलीकृता सान्द्रीकृता प्रतनुः सूक्ष्मा रोमराजिर्यस्य तेन करपल्लवेन दधे धृतम् । अयं च तात्कालिकविहारलक्षणविलासः । अत्रेन्द्रनीलप्रभाणां रोमावलीबहुलीकरणोक्त्या प्रभास्वपि रोमराजित्वप्रतीतेर्भ्रान्तिमदलङ्कारो व्यज्यते इति वस्तुनाऽलङ्कारध्वनिः ॥ ४४ ॥

**निजसौरभभ्रमितभृङ्गपक्षतिव्यजनाऽनिलक्षपित(२)घर्मवारिणा ॥**
**अभिशौरि काचिदनिमेषदृष्टिना पुरदेवतेव वपुषा व्यभाव्यत ॥ ४५ ॥**

निजेति ॥ काचिन्नारी एवंविधेन वपुषा शरीरेण पुरदेवतेव पुराऽधिष्ठात्री देवता इव व्यभाव्यत अवाबुध्यत । किंलक्षणेन वपुषा निजसौरभभ्रमितभृङ्गपक्षतिव्यजनाऽनिलक्षपितघर्मवारिणा निजसौरभेण सहजसौगन्ध्येन भ्रमिताः चलिता भ्रमरा भृङ्गाः तेषां याः पक्षतयः पक्षमूलानि ता एव व्यजनम् अवक्षेपकः तस्य योऽनिलो वायुः तेन क्षपितमपासितं घर्मवारि भगवद्दर्शनोत्थं स्वेदवारि यस्य तत्तथा तेन, अपरं किंलक्षणेन वपुषा अभिशौरि शौरिं श्रीकृष्णम् अभि प्रति अनिमेषदृष्टिना अनिमेषा दर्शनोच्छेदभयात् अनिमीलन्ती दृष्टिर्दृक् यस्य तत्तथा तेन । देवता अपि सुरभिचन्दना निश्चलनयना अस्वेदाश्च भवन्ति॥४५॥

निजेति ॥ काचित्स्त्री निजेनात्मीयेन सौरभेण सौगन्ध्येन भ्रमितानां भ्रमणं कारितानां भृङ्गाणां पक्षतयः पक्षमूलानि । 'स्त्री पक्षतिः पक्षमूलम्' इत्यमरः । 'पक्षात्तिः' इति तिप्रत्ययः । ता एव व्यजनानि इति रूपकं, स्वेदहरणलिङ्गात् । तासामनिलेन क्षयितं नाशितं घर्मवारि स्वेदो यस्य तेन अभिशौरि शौरेरभिमुखम् । आभिमुख्येऽव्ययीभावः । अनिमेषा दृष्टिर्यस्य तेन वपुषा निमित्तेन पुरदेवतेव इन्द्रप्रस्थाऽधिदेवतेव व्यभाव्यत विभाविता । तर्कितेति यावत् । अनिमेषत्वं चेष्टदर्शनजन्यजाड्यसञ्चार्यनुभावः ।

> 'अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।
> अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र' ॥

इति लक्षणात् । इहाङ्गसौरभाऽनिमेषत्वाभ्यां पुराधिवासाच्च पुराधिदेवतात्वमुत्प्रेक्ष्यते, इत्युपात्तगुणनिमित्ता जातिस्वरूपोत्प्रेक्षा । तया चास्या जात्याः पद्मिनीत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः । निजसौरभेत्यनेन 'कमलमुकुलमृद्वी फुल्लराजीवगन्धिः सुरतपयसि यस्याः सौरभं दिव्यमङ्गे' इत्यादिपद्मिनीलक्षणादिति । विपुलेनेत्यादिश्लोकोक्ताः षडपि नायिकाः प्रौढाः साधारण्यश्च, तत्र बालासम्भवात् । अन्यथाऽऽसां कृतचेष्टावर्णनाऽनौचित्याच्चेत्यलमतिप्रपञ्चेन ॥ ४५ ॥

---

(१) बहुली० । (२) क्षयित ।

**अति(१)याति नः सतृष एष चक्षुषो हरिरित्यखिद्यत नितम्बिनीजनः ॥**
**न विवेद यः सततमेनमीक्षते न वितृष्णतां व्रजति खल्वसावपि ॥ ४६ ॥**

**अतियातीति ॥** नितम्बिनीजनः विलासिनीलोकः इति अतो हेतोः अखिद्यत खेदं ययौ । इति किम्—एष हरिः नोऽस्माकं चक्षुषोऽक्ष्णः सतृषः अनिवृत्तेक्षणलौल्यस्यैव सतः अतियाति अतिक्रामति । तृषा तृष्णया सह वर्तमानं सतृट् तस्य सतृषः । स मुग्धो नितम्बिनीजनः एवं न विवेद नाऽबुध्यत, यथा एनं श्रीकृष्णं सततं सदैव ईक्षते पश्यति । खलु निश्चयेन, सोऽपि वितृष्णतां न याति विगततृष्णत्वं न प्राप्नोति इति । ताभिश्च क्षणमसौ दृष्ट इति कुतो वैतृष्ण्यं स्यात् । य इत्यनेन द्वारवतीवास्तव्यजनो योगिजनो वा निर्दिश्यते । तस्यापि न तृप्तिरिति ॥ ४६ ॥

**अतियातीति ॥** असौ नितम्बिनीजनः स्त्रीजनो नोऽस्माकं चक्षुषः सतृषः सतृष्णस्यैव सतश्चक्षुषि सतृष्णे सत्येव, अनादृत्येत्यर्थः । 'षष्ठी चाऽनादरे' इति षष्ठी । एष हरिरभिगच्छतीत्यखिद्यत खेदं गतः । खिदेर्दैवादिकात्कर्तरि लुङ् । अत्रोत्प्रेक्ष्यते—नेति । यो जन एनं हरिं सततमीक्षते असावपि खलु वितृष्णतां न व्रजतीति न विवेद । नित्यदर्शनेऽप्यपूर्ववदेव भवतीति नाऽबुध्यतेत्यर्थः । वेद चेन्नाऽखिद्यतेति भावः । अत्र अखिद्यतेति स्त्रीणां प्रारब्धहरिवीक्षणसुखविच्छेदकृतविषादाख्यसञ्चारिभावनिबन्धनात्प्रेयोऽलङ्कारः । तदुत्थापिता चेयमुक्ताऽखेदनोत्प्रेक्षेति सङ्करः । 'प्रारब्धकार्याऽसिद्ध्यादेर्विषादः सत्त्वसंक्षयः' इति दशरूपके । सत्त्वसंक्षयश्चित्तभङ्गः ॥ ४६ ॥

**अकृतस्वसद्मगमनादरः क्षणं लिपिकर्मनिर्मित इव व्यतिष्ठत ॥**
**गतमच्युतेन सह शून्यतां गतः प्रतिपालयन् मन इवाङ्गनाजनः ॥ ४७ ॥**

**अकृतेति ॥** अङ्गनागणः युवतिसमूहः क्षणं व्यतिष्ठत क्षणमात्रमत्रैव अस्थात् । किंलक्षणोऽङ्गनागणः अकृतस्वसद्मगमनादरः न कृतः स्वसद्मगमने स्वगृहगमने आदरः अभिलाषो येन सः तथा, अपरं किंलक्षणः शून्यतां गतः हतहृदयत्वं प्राप्तः । अतश्चोत्प्रेक्ष्यते-किंलक्षणः प्रमदाजनः लिपिकर्मनिर्मित इव चित्रन्यस्त इव, लिपिकर्मणि लिपिव्यापारे निर्मितो रचितः लिपिकर्मनिर्मितः । एवंविधो ह्यविदग्धः प्रेमस्वभावः । तत्रैवाऽवस्थाने तर्कमाह—अपरं किंलक्षणः अङ्गनागणः, उत्प्रेक्ष्यते—अच्युतेन भगवता श्रीकृष्णेन साधं गतं यातं मनश्चित्तं प्रतिपालयन्निव प्रतीक्षमाण इव । एतन्मनः तावदागच्छतु ततः सहायाः स्याम इति । व्यतिष्ठतेति 'समवप्रोपविभ्यः स्थ' इत्यात्मनेपदम् । ननु कुलस्त्रीणामेतदनुचितं यत् परं प्रत्यनुरागः, तत्कथं कविना ऊहे । सत्यमेतत्, किन्त्वेवंविधोऽयं कथानायकधर्मो न चाऽलङ्कारविद्भिर्निषिद्धः । प्रधानभूतैरप्यनुष्ठितत्वात् । तद्यथा भगवतो व्यासस्य वचः—

तासां कौरवपत्नीनां प्रद्युम्नगतचेतसाम् ।
नवानामिव धेनूनां जघनानि प्रसुस्रुवुः ॥

इति सर्वमेवाऽनवद्यम् ॥ ४७ ॥

**अकृतेति ॥** अङ्गनाजनः अच्युतेन सह गतं मनः प्रतिपालयन्प्रतीक्षमाण इवेत्युत्प्रेक्षा । शून्यतां निरोजस्कतां गतः अकृतस्वसद्मगमनादरः निवृत्तनिजगृहप्राप्त्यपेक्षः सन् लिपिकर्मनिर्मितः चित्रलिखित इवेत्युत्प्रेक्षा । क्षणं व्यतिष्ठत विस्पन्दमास्तेत्यर्थः । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । अतः शून्यतानुभावाच्चिन्ताऽवगम्यते । 'ध्यानं चिन्ता हिताऽनाप्तेः शून्यताश्वासतापकृत्' इति दशरूपके । अत्रोत्प्रेक्षयोः सापेक्षत्वात्सङ्करः ॥ ४७ ॥

( १ ) आभियाति ।

**अलसैर्मदेन सुदृशः शरीरकैः स्वगृहान्प्रति प्रतिययुः शनैःशनैः ॥**
**अलघुप्रसारितविलोचनाञ्जलिद्रुतपीतमाधवरसौघनिर्भरैः ॥ ४८ ॥**

**अलसैरिति ॥** सुदृशोऽङ्गनाः स्वगृहान् प्रति निजभवनसंमुखं शनैःशनैः स्वैरंस्वैरं प्रतिययुः प्रतिजग्मुः। मन्दगमने कारणमाह–किंलक्षणाः सुदृशः शरीरकैर्देहैरुपलक्षिताः, किंलक्षणैः शरीरकैः मदेन चित्तविकारेण अलसैः मन्थरैः, अपरं किंलक्षणैः शरीरकैः अलघुप्रसारितविलोचनाञ्जलिद्रुतपीतमाधवरसौघनिर्भरैः अलघु दीर्घं प्रसारितैः विकासितैर्विलोचनैरेव अञ्जलिभिः करसम्पुटैः द्रुतं शीघ्रं पीतोऽतितूर्णं दृष्टो यो माधवः श्रीकृष्णः तत्र यो रसौघो रागपूरः तेन निर्भराणि सम्पूर्णानि तैः । हरिं प्रति सानुरागैरित्यर्थः । अत एव शरीराणां तनुत्वम् । योह्यञ्जलिना माधवरसौघं पिबति, सोऽवश्यमेव मदेन अलसं मन्दंमन्दं गृहान् प्रति याति । माधवः आसवोऽपि मदः क्षीबताऽपि । अल्पं शरीरं शरीरकम् ४८

अलसैरिति ॥ अलघु अधिकं प्रसारितैर्विलोचनैरेवाञ्जलिभिर्द्रुतं सत्वरम् । 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः । पीतो यो माधवो हरिरेव रसोऽमृतम् , अन्यत्र मधु मद्यं तत्सम्बन्धि रसो माधुर्यं माधवरसः ।

'रसो रागे विषे वीर्ये तिक्तादौ पारदे द्रवे।
रेतस्यास्वादने हेम्नि निर्यासेऽमृतशब्दयोः' ॥

इति वैजयन्ती। तस्यौघः समूहस्तेन निर्भरैर्दुर्भरैः । गुरुभिरिति यावत् । अत एव मदेनाऽलसैर्मन्थरैः, शरीरकाणि, अल्पशरीराणीत्यर्थः । 'अल्पे' इति पारिमाणे कन्प्रत्ययः । तैरुपलक्षिताः सुदृशः शनैःशनैः स्वगृहान्प्रति प्रतिययुः प्रतिनिर्गताः । स्वयं लघून्यपि द्रव्याणि रसद्रवभरणाद् गुरूभवन्तीति भावः । अत्र माधवरसौघनिर्भरत्वविशेषणगत्या शनैःशनैः प्रतियानहेतुत्वात्कार्यहेतुकं काव्यलिङ्गं, तच्च माधवरसेनेति श्लेषमूलाऽतिशयोक्त्युत्थापितमिति सङ्करः ॥ ४८ ॥

**नवगन्धवारिविरजीकृताः पुरो घनधूपधूमकृतरेणुविभ्रमाः ॥**
**प्रचुरोद्धतध्वजविलम्बिवाससः पुरवीथयोऽथ हरिणाऽतिपेतिरे ॥ ४९ ॥**

**नवेति ॥** अथाऽनन्तरं हरिणा भगवता श्रीकृष्णेन पुरवीथयः नगरमार्गा हट्टपथाः अतिपेतिरे अतिक्रान्ताः। किंलक्षणाः पुरवीथयः पुरा आदौ नवगन्धवारिविरजीकृताः नवेन प्रत्यग्रेण गन्धवारिणा सुगन्धोदकेन विरजीकृताः, अविरजसः विरजसः कृताः इति विरजीकृताः निर्धूलीकृताः, अपरं किंलक्षणाः पुरवीथयः घनधूपधूमकृतरेणुविभ्रमाः घनेन बहलेन धूपधूमेन अगरुधूमेन कृतः धृतः रेणुविभ्रमो धूलिभ्रान्तिर्यासु तास्तथा, अपरं किंलक्षणाः पुरवीथयः प्रचुरोद्धतध्वजविलम्बिवाससः प्रचुराणि बहूनि उद्धतानि उद्धृतानि ध्वजानि केतनानि तत्र विलम्बीनि विलम्बमानानि वासांसि चेलानि यासु ताः तथा, इति पुरोत्सवकथनम् ॥ ४९ ॥

नवेति ॥ अथ पुरप्रवेशानन्तरं हरिणा पुरः पूर्वं नवगन्धवारिभिर्गन्धवासितोदकैर्विरजीकृताअविरजसो विरजसः सम्पद्यमानाः कृताः । 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' इत्यभूततद्भावे च्विप्रत्यये सलोपः, 'अस्य च्वौ' इतीकारः । घनैः सान्द्रैर्धूपानामगुरुधूपानां धूमैः कृतो रेणुविभ्रमो याभिस्ताः प्रचुरं बहुलमुद्धतेषूच्छ्रितेषु ध्वजेषु ध्वजस्तम्भेषु विलम्बीनि वासांसि पताका यासु ताः पुरवीथयोऽतिपेतिरेऽतिपातिताः । अतिक्रान्ता इत्यर्थः। पतेः कर्मणि लिट् एत्वाभ्यासलोपौ । अत्र सादृश्याद् धूरेणुभ्रान्त्या भ्रान्तिमदलङ्कारः । रेणुविभ्रमशब्देन रजोविलासस्यापि प्रतीतेस्तस्य विरजीकरणेन विरोधाद्विरोधाभासश्चेत्यनयो रेकवाचकाऽनुप्रवेशलक्षणः सङ्करः ॥ ४९ ॥

**उपनीय बिन्दुसरसो मयेन या मणिदारु चारु किल वार्षपर्वणम् ॥**
**विदधेऽवधूतसुरसद्मसम्पदं समुपासदत् सपदि संसदं स ताम् ॥ ५० ॥**

उपनीयेति ॥ स हरिः तां संसदं सभां सपदि तत्क्षणं समुपासदत् प्राप । तां कां, या संसत् मयेन दानवेन विश्वकर्मणा बिन्दुसरसः सरोविशेषात् मणिदारु मणयः रत्नान्येव दारु काष्ठम् उपनीय आनीय किल विदधे निर्मिता, किलेत्यागमे । किंलक्षणं मणिदारु चारु मनोज्ञम् , अपरं किंलक्षणं मणिदारु वार्षपर्वणं दानवीयं, वृषपर्वणो दानवस्येदं वार्षपर्वणम् । पूर्वं हि बिन्दुसरसः समीपे वृषपर्वणो दानवेश्वरस्य रत्नमयी सभाऽभूत् । अथ सरति काले तामेवोत्पाद्य मयेन प्रत्युपकुर्वाणेन पाण्डवानां सभा अकारीत्यागमः । अत एव किंलक्षणां संसदम् अवधूतसुरसद्मसम्पदम् अवधूता तिरस्कृता अमरसद्मनः नाकस्य सम्पत् लक्ष्मीर्यया सा तथा तां तिरस्कृताऽमरावतीलक्ष्मीकाम् ॥ ५० ॥

उपनीयेति ॥ मयेनाऽसुरशिल्पिना, वृषपर्वा नाम कश्चिदसुरेश्वरः वृषपर्वण इदं वार्षपर्वणम् । 'तस्येदम्' इत्यण् । चारु मनोहर मणिरेव दारु काष्ठम् । मणिमयं स्तम्भादिकलापमित्यर्थः । तद्बिन्दुसरसो हैमवतात् सरोविशेषादुपनीय समीपमानीय, किलेत्यैतिह्ये, या संसद्विदधे निर्मिता । अवधूताऽधरीकृता सुरसद्मसम्पद्दिन्द्रभवनलक्ष्मीर्यया सा तां संसदं सभाम् ।

'सभासमितिसंसदः ।
आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥

इत्यमरः । स हरिः सपदि समुपासदत्प्रापत् । सदेर्लुङि 'पुषादि-' इति च्लेरङादेशः । पुरा किल खाण्डवदाहे पाण्डवेनाऽग्निदाहान्मोचितेन मयेन प्रत्युपकारार्थं पूर्वमात्मनैव बिन्दुसरसि गुप्तेन वृषपर्वगृहनिर्माणाऽवशिष्टेन मणिशिलाकलापेन काञ्चनसभा धर्मराजाय निर्मितेति भारते । सभावर्णनाङ्गत्वेनाऽर्जुनमयचरितवर्णनादुदात्तालङ्कारः । प्रभूतमहापुरुषचिन्तनं चेति सूत्रम् ॥ ५० ॥

भूयोऽपि तच्छब्देन योऽस्यां विवक्षितो धर्मस्तमाह—

**अधिरात्रि यत्र निपतन्नभोलिहः(१) कलधौतधौतमणिवेश्मनां रुचः ॥**
**पुनरप्यवापदिव दुग्धवारिधेः (२)क्षणगर्भवासमनिदाघदीधितिः ॥५१॥**

अधिरात्रीति ॥ यत्र यस्यां संसदि अनिदाघदीधितिः शीतकिरणः चन्द्रः पुनरपि भूयोऽपि दुग्धवारिधेः क्षीरसागरस्य क्षणं गर्भवासं मध्यावस्थितिम् अवापदिव प्राप्तवान् यथा । शशी हि दुग्धवारिधेः अजनि । किं कुर्वन् अवापत् अधिरात्रि रजन्यां कलधौतधौतमणिवेश्मनां रुचः रजतश्वेतस्फटिकगृहाणां भासः निपतन् विशन्, किंलक्षणा भासः नभोलिहः गगनस्पृशः, इत्युच्छ्रायोक्तिः । स्फटिकगृहरुचां क्षीरोदधिरुपमानम् ॥ ५१ ॥

अथ दशभिः सभां वर्णयति—

अधिरात्रीति ॥ अधिरात्रि रात्रिषु । विभक्त्यर्थेऽव्ययीभावः । यत्र सभायां नभोलिहामभ्रंलिहाम् । क्विप् । कलधौतं रौप्यम् । कलधौतं रूप्यहेम्नोः' इत्यमरः । तद्धौता धवलाः शिला येषां तानि वेश्मानि । स्फटिकभवनानीत्यर्थः । तेषां रुचौ प्रभायां निपतन् प्रविशन् अनिदाघदीधितिरनुष्णरश्मिर्हिमांशुः पुनरपि दुग्धवारिधौ क्षीराब्धौ क्षणं गर्भवासम् । न तु मथनात्प्रागिव चिरगर्भवासमिति भावः । अवापत् प्रापदिवेत्युत्प्रेक्षा । तया वेश्मना चन्द्रमण्डलातिक्रमो व्यज्यते ॥ ५१ ॥

**निलयेषु(३) लोहितकनिर्मिता भुवः शितिरत्नरश्मिहरितीकृताऽन्तराः ॥**
**जमदग्निसूनुपितृतर्पणीरपस्तनुते (४)स्म या विरलशैवला इव ॥ ५२ ॥**

---

( १ ) ०लिहां....धौतशिल....रुचौ । ( २ ) वारिधिक्षण । ( ३ ) लयनेषु । ( ४ ) ०रपो वहति ।

निलयेष्विति ॥ या संसत् निलयेषु वेश्मसु भुवः व्यतनोत् भूमीः तनोति स्म । प्रकटीचकारेत्यर्थः । किंलक्षणाः भुवः लोहितकनिर्मिताः पद्मरागमणिरचिताः, अपरं किंलक्षणा भुवः शितिरत्नरश्मिहरितीकृताऽन्तराः नीलरत्नकिरणनीलीकृतमध्याः । अपरं किंलक्षणाः भुवः, अतश्चोत्प्रेक्ष्यन्ते—अप इव अम्भांसीव । किंलक्षणाः अपः जमदग्निसूनुपितृतर्पणीः परशुरामपितृतृप्तिकरीः, जमदग्निसूनोः परशुरामस्य पितॄन् तर्पयन्ति तास्तथा ताः । रुधिरमयीरित्यर्थः । पूर्वं हि किल जनकवधात् क्रुद्धेन परशुरामेण त्रिःसप्तकृत्वो हतानां क्षत्रियाणां रुधिरह्रदे पितरस्तर्पिताः इत्यागमः । अपरं किंलक्षणाः अपः विरलशैवलगर्भाः । लोहितभुवाम् आप उपमाने, मरकतमणीनां शैवलम् ॥ ५२ ॥

लयनेष्विति ॥ लीयते एष्विति लयनानि तेषु गृहेषु शितिरत्नानां नीलमणीनां रश्मिभिर्हरितीकृतान्यन्तराणि मध्यानि यासां ताः लोहितमणयो लोहितकाः पद्मरागाः । 'लोहितान्मणौ' इति कन्प्रत्ययः । तैर्निर्मिता भुवो भूमीर्विरलाः शैवला यासु ताः जमदग्निसूनोः परशुरामस्य पितॄणां तर्पणीस्तृप्तिकरीरप इवेत्युपमा । या सभा वहति स्म । जामदग्न्यः क्षत्रियाऽस्रैः पञ्चशो ह्रदानुत्पाद्य ताभिरद्भिः पितॄनतर्पयत्, ताश्च रुधिरप्रकृतिकत्वाद्रक्तवर्णा एवेति पुराणम् ॥ ५२ ॥

विशदाऽश्मकूटघटिताः क्षपाकृतः क्षणदासु यत्र च रुचैकतां गताः ॥
गृहपङ्क्तयश्चिरमतीयिरे जनैस्तमसीव हस्तपरिमर्शसूचिताः ॥ ५३ ॥

विशदाऽश्मेति ॥ यत्र यस्यां संसदि क्षणदासु रात्रिषु जनैर्लोकैः गृहपङ्क्तयः वास्तव्यवेश्माऽऽवलयः चिरं दीर्घकालं हस्तपरिमर्शसूचिताः सत्यः पाणिस्पर्शज्ञापिताः सत्यः अतीयिरे हस्तेन चिरं परिमृश्य सूचिताः ज्ञापिताः सत्यः अतिक्रान्ताः । किंलक्षणा गृहपङ्क्तयः विशदाऽश्मकूटघटिताः विशदा अत्युज्ज्वला ये अश्मानः पाषाणाः स्फटिकोपलाः तेषां कूटानि समूहाः तैः घटिताः रचिताः स्फटिकोपलनिचयरचिताः, अपरं किंलक्षणाः गृहपङ्क्तयः क्षपाकृतः चन्द्रमसः रुचा कान्त्या एकतां गताः चन्द्रस्य ज्योत्स्नया अभेदं प्राप्ताः । अतश्च सारूप्याद्विवेकाभावः । कस्मिन्निव तमसीव अन्धकारे इव । यथाऽन्धकारे हि यावत्पाणिना परिमृष्टं वस्तु परिज्ञायते ॥ ५३ ॥

विशदाऽश्मेति ॥ किञ्चेति चार्थः । यत्र सभायां विशदाऽश्मकूटघटिताः स्फाटिकशिलासङ्घातनिर्मिता अत एव क्षणदासु क्षपाकृतो निशाकरस्य रुचा चन्द्रिकया एकतां सावर्ण्यादभेदं गताः अत एव तमसीव हस्तपरिमर्शसूचिताः । पाणिस्पर्शैकगम्या इत्यर्थः । गृहपङ्क्तयो जनैश्चिरमतीयिरे गति क्रान्ताः । पुरोगतान्यपि स्फाटिकभवनानि चन्द्रिकाभ्रमादतीत्य गत्वा पश्चात्करपरामर्शैः कथञ्चित् प्राप्यन्त इत्यर्थः । अत्र प्रकृतानां स्फाटिकवेश्मनां गुणसाम्यादप्रस्तुतचन्द्रिकैक्योक्त्या सामान्यालङ्कारः । 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् ॥ ५३ ॥

निलयेषु नक्तमसिताऽश्मनां चयैर्बिसिनीवधूपरिभवस्फुटागसः ॥
मुहुरत्रसद्भिरपि यत्र गौरवाच्छशलाञ्छनांऽशव उपांशु जघ्निरे ॥ ५४ ॥

निलयेष्विति ॥ यत्र यस्यां सभायां निलयेषु गृहेषु असिताश्मनां चयैः इन्द्रनीलमणीनां कूटैः नक्तं रात्रौ शशलाञ्छनांशवः मृगाङ्ककिरणाः जघ्निरे हताः । निष्प्रभीकृता इत्यर्थः । क उपांशु विजने एकान्ते, स्वरश्मिसमीपे न तु सर्वत्र । कथं गौरवात् अतिबाहुल्यात्, किंलक्षणैश्चयैः मुहुः अत्रसद्भिः अनष्टैः महाप्रभैः । हनने तर्कमाह—किंलक्षणाः शशलाञ्छनांशवः नलिनीवधूपरिभवस्फुटागसः नलिनीवध्वाः पद्मिनीजायायाः परिभवः

सङ्कोचलक्षणः तेन स्फुटं प्रकटम् आगोऽपराधो येषां ते तथा। पद्मिनीजायायाः सङ्कोचेन प्रकटाऽपराधाः सापराधा इव तैस्ते हताः। तत्र हि इन्द्रनीलपरिवृता पद्मिनी विद्यते, सा च यदेन्दुरश्मिभिः संमिलिता, अतस्तदपराधादिव तैस्ते हताः। यथा किल केषां च वध्वाः केचित् प्रकटमेव परिभवं कुर्वते, तदा ते त्रसन्तोऽपि नक्तमुपांशु मौनं यथातथाऽऽगत्य गृहे सुप्तं तं घ्नन्ति। गौरवात् गौरवरक्षार्थं यदि हि ते व्यक्तं हन्युः, तर्हि लोको 'वधकाः एते' इति गौरवं न कुर्यात् ॥ ५४ ॥

निलयेष्विति ॥ यत्र सभायां निलयेषु नक्तं रात्रौ बिसिन्यो दीर्घिकापद्मिन्यस्ता एव वध्वस्तासां परिभवेन निमीलितेन दूषणेन च स्फुटागसः स्पष्टापराधाः शशलाञ्छनांशवश्चन्द्रपादाः, अत्रसाद्भिरत्रस्यद्भिरपि निर्दोषैरपि इति चार्थः। 'त्रासो भीमाणिदोषयोः' इति विश्वः। 'वा भ्राश–' इत्यादिना श्यनभावपक्षे शतृप्रत्ययः। असिताश्मनामिन्द्रनीलमणीनां चयैः समूहैः गौरवात्स्वयंप्रभूतत्वात् सम्भावितत्वाच्च उपांशु अंशुसमीपे रहश्च। 'रहश्चोपांशु चालिङ्गे' इत्यमरः। मुहुर्जघ्निरे तिरोहिताः मारिताश्च। हन्तेः कर्मणि लिट्। समीपगताश्चन्द्रांशवः प्रभूतैरिन्द्रनीलांशुभिस्तिरस्कृता इत्यर्थः। अन्यत्राऽन्तःपुरद्रोहिणो निर्भीकैरपि सम्भावितैर्दुष्कीर्तिभयाद् गूढं हन्यन्त इति भावः। अत्र बिसिनीनां वधूत्वरूपणात्तत्परिभाविनां चन्द्रांशूनां धूर्तकामुकत्वरूपणप्रतीतेरेकदेशविवर्तिरूपकं, तच्च गौरवादुपांशु जघ्निरे इति च श्लेषेणाऽत्रसद्भिरपीति विरोधेन च सङ्कीर्यते ॥ ५४ ॥

**सुखिनः पुरोऽभिमुखतामुपागतैः प्रतिमासु यत्र गृहरत्नभित्तिषु ॥**
**नवसङ्गमैरबिभरुः प्रियाजनैः प्रमदं त्रपाभरपराङ्मुखैरपि ॥ ५५ ॥**

सुखिन इति ॥ यत्र यस्यां संसदि सुखिनः कामिनः प्रियाजनैः कामिनीजनैः प्रमदमबिभरुः हर्षमूहुः। कदाचिन्मुखेन्दुदर्शनं भवेदिति नेत्याह—किंलक्षणैः प्रियाजनैः त्रपाभरपराङ्मुखैरपि लज्जाऽतिशयप्रतिकूलवदनैः, अपरं किंलक्षणैः प्रियाजनैः यतः नवसङ्गमैः अचिरोढैः। कथं तर्हि ते जहृषुरित्याह—अपरं किंलक्षणैः प्रियाजनैः पुरोऽग्रे गृहरत्नभित्तिषु मणिमन्दिरकुड्येषु अधिकरणेषु प्रतिमासु प्रतिबिम्बेषु विषये अभिमुखतामुपागतैः संमुखतां प्राप्तैः। अतश्च तासां वदनालोकात् तेषां तोषः। अपि विरोधे, यो हि पराङ्मुखः स कथं संमुखो भवेत् ॥ ५५ ॥

सुखिन इति ॥ यत्र सभायां नवः सङ्गमो येषां तैर्नवसङ्गमैरत एव त्रपाभरेण पराङ्मुखैर्विमुखैरपि गृहाणां रत्नभित्तिषु प्रतिमासु तत्संक्रान्तप्रतिबिम्बेषु पुरोऽग्रेऽभिमुखतामुपागतैः प्रियाजनैः कान्ताजनैः सुखिनो भोगिनः प्रमदं हर्षमबिभरुर्बिभ्रति स्म। भृञो लङि 'श्लौ' इति द्विर्भावे 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशः। स्त्रीणां वैमुख्येऽपि तत्प्रतिबिम्बाभिमुख्यात्पुंसां सुखमेव, स्त्रीणां तु उभयथापि क्लिष्टमित्यर्थः। अत्र वैमुख्येऽप्याभिमुख्यमिति विरोधस्य प्रतिमास्विति निरासाद्विरोधाभासोऽलङ्कारः ॥ ५५ ॥

**तृणवाञ्छया मुहुरवाञ्चिताननान् निचयेषु यत्र हरिताऽश्मवेश्मनाम् ॥**
**रसनाऽग्रलग्नकिरणाङ्कुराञ्जनो हरिणान् गृहीतकवलानिवैक्षत ॥ ५६ ॥**

तृणेति ॥ यत्र संसदि जनो लोकः हरिणान् मृगान् गृहीतकवलानिवैक्षत आत्तग्रासानिव विलोकयामास। किंलक्षणान् हरिणान् हरिताऽश्मवेश्मनां मरकतोपलगृहाणां निचयेषु समूहेषु मुहुरसकृत् अवाञ्चिताननान् प्रसारितवदनान्, कया तृणवाञ्छया शाद्वलाशङ्कया, अपरं किंलक्षणान् हरिणान् रसनाग्रलग्नकिरणाऽङ्कुरान् रसनाग्रे जिह्वाग्रे लग्नाः संसक्ताः किरणा रश्मय एव अङ्कुरा उद्गमा येषां ते तथा तान्। अतश्च गृहीतकवलानिव जनो मन्यते ५६ ॥

तृणेति ॥ यत्र सभायां हरिताऽश्मवेश्मनां मरकतमणीनां गृहाणाम् । 'गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः' इत्यमरः । निचयेषु सङ्घेषु तृणवाञ्छया तृणाशया मुहुरवाञ्चितानननान् नमितमुखान अत एव रसनाग्रेषु लग्नाः किरणा अङ्कुरा इव येषां ते तान् । अत एव गृहीतकवलानुपात्ततृणग्रासानिव स्थितान् हरिणान् जन ऐक्षत ईक्षितवान् । ईक्षतेर्लङि 'आडजादीनाम्' इत्याट् 'आटश्च' इति वृद्धिः । अत्र तृणवाञ्छयेति हरिणानां मरकतेषु तृणभ्रान्तेर्भ्रान्तिमदलङ्कारः । तन्मूला चेयं गृहीतकवलत्वोत्प्रेक्षेति सङ्करः ॥५६॥

**विपुलाऽऽलवालभृतवारिदर्पणप्रतिमागतैरभिविरेजुरात्मभिः ॥**
**यदुपान्तिकेषु दधतो महीरुहः सपलाशराशिमिव मूलसंहतिम् ॥ ५७ ॥**

विपुलेति ॥ यदुपान्तिकेषु यस्या उपान्तिकेषु महीरुहो वृक्षा आत्मभिः देहैः अभिविरेजु बभुः । किंलक्षणा महीरुहाः मूलसंहतिं दधतः बुध्नश्रेणिं बिभ्राणाः, किंलक्षणां मूलसंहतिं सपलाशराशिमिव पलाशराशिभिः पर्णसमूहैः सह वर्तमाना सपलाशराशिः तामिव सञ्जातपत्रनिचयामिव । ननु मूले क्व पर्णानि स्युरित्यत आह—किंलक्षणैरात्मभिः विपुलाऽऽलवालभृतवारिदर्पणप्रतिमागतैः विपुलं विशालं यत् आलवालं सेकधारणं तेन भृतम् अतिप्रसन्नीकृतं यद्वारि पानीयं तदेव दर्पणो मुकुरः तत्र प्रतिमां गताः प्रतिबिम्बं प्राप्ताः तैः प्रतिकृतिं प्राप्तैः । अतश्च ज्ञायते मूलान्यप्येषां सपत्राणीति ॥ ५७ ॥

विपुलेति ॥ यदुपान्तिकेषु यस्याः सभाया उपान्तिकेषु समीपेषु महीरुहो वृक्षाः विपुलेष्वालवालेषु मूलजलाधारेषु । 'स्यादालवालमावालम्' इत्यमरः । भृतानि सम्भृतानि वारीण्येव दर्पणास्तेषु प्रतिमां प्रतिबिम्बतां गतैः, प्रतिबिम्बितैरित्यर्थः । आत्मभिः, स्वमूर्तिभिरित्यर्थः । सपलाशराशि सपत्रसन्ततिं मूलसंहतिं दधत इव दधाना इवाऽभिविरेजुः । स्वालवालेषु स्वप्रतिबिम्बितैरधोमुखैः मूलेष्वपि सपत्रा इव रेजुरित्युत्प्रेक्षा ॥५७॥

**उरगेन्द्रमूर्धरुहरत्नसन्निधेर्मुहुरुन्नतस्य रसितैः पयोमुचः ॥**
**अभवन् यदङ्गणभुवः समुच्छ्वसन्नववालवायजमणिस्थलाऽङ्कुराः ॥५८॥**

उरगेन्द्रेति ॥ अपरं तस्यां कस्यां-यदङ्गणभुवः यस्याः सभायाः अङ्गणभुवः अजिरोर्व्यः एवंविधा अभवन् बभूवुः । किंलक्षणाः समुच्छ्वसन्नववालवायजमणिस्थलाऽङ्कुराः समुच्छ्वसन्तः उद्भिद्यमानाः नववालवायजमणिस्थलेषु नूतनवैदूर्यमणिभूमिषु अङ्कुराः शलाकाः यासु ताः तथोक्ताः, कैः उन्नतस्य बृहतः सन्नद्धस्य पयोमुचः मेघस्य रसितैः गर्जितैः । मेघरवात् किल वैदूर्योर्वीषु रत्नानि जायन्ते । यदुक्तं—'तया दुहित्रा सुतरां सवित्री'त्यादि । मेघाः कथं सर्वदा ध्वनन्तीत्याह—कस्मात् उरगेन्द्रमूर्धरुहरत्नसन्निधेः उरगेन्द्रमूर्धरुहस्य सर्पेशफणजस्य रत्नस्य सन्निधेः सन्निधानात् । सर्पमणिसन्निधौ ह्यकालेऽपि मेघा गर्जन्तीति वार्ता । केचित्तु द्वयमप्यङ्कुरोत्पत्तावपि कारणमाहुः । यत्र हि उरगमणिरभ्रगर्जितं च, तत्र वैदूर्यमणिस्थलेषु तदुत्पत्तेरिति वदन्ति । पूर्वं हि केचिद्व्याख्याने एतद्धुम्यमेव । वालवायजजननेऽप्यभ्रनिर्घोषाद्वैदूर्यमणयो जायन्ते ॥ ५८ ॥

उरगेन्द्रेति ॥ उरगेन्द्राणां मूर्धसु रुहाणि रूढानि । इगुपधलक्षणः कः । तेषां रत्नानां सन्निधेः सन्निधानान्मुहुरुन्नतस्य । यदायदा तत्सन्निधिस्तदातदोदितस्येत्यर्थः । पयोमुचो मेघस्य रसितैः स्तनितैर्यदङ्गणभुवो यस्याः प्राङ्गणप्रदेशाः समुच्छ्वसन्तः प्रादुर्भवन्तो नवाः प्रत्यग्रा वालवायजमणिस्थलाऽङ्कुरा वैदूर्यभूप्ररोहा यासु तास्तथोक्ता अभवन् । 'वैदूर्यं वालवायजम्' इत्यमरः । वालवायो नाम वैदूर्यप्रभवो देशविशेषः । उरगेन्द्रमूर्धन्यरत्नाऽङ्कुरैः सह्योदितमेघध्वनेर्विदूरभूमिरुह्यन्नाऽङ्कुरा भवतीति प्रसिद्धिः । तदुक्तम्—उरगमूर्धन्यरत्नसन्निधानादकालेऽपि मेघा गर्जन्तीति वार्ता । केचित्तु यत्रैवोरगरत्नं मेघरसितं च तत्रैव वैदूर्यभूमिः । अत्र समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारभेदः । 'तदुदात्तं भवेद्यत्र समृद्धं वस्तु वर्ण्यते' इति लक्षणात् ॥

**नलिनी निगूढसलिला च यत्र सा स्थलमित्यधःपतति या सुयोधने ॥**
**अनिलात्मजप्रहसनाकुले(१)ऽखिलक्षितिपक्षयाऽऽगमनिमित्ततां ययौ॥५९॥**

नलिनीति ॥ यत्र संसदि सा नलिनी पद्मिनी वर्तते । सा का या नलिनी सुयोधने धार्तराष्ट्रे राज्ञि अधः पतति सति अखिलक्षितिपक्षयाऽऽगमनिमित्ततां ययौ सकलनृपतिनाशोत्पत्तिहेतुतां जगाम । ननु स्पष्टे मार्गे किमित्यसौ निपपातेत्याह—अद इति जलं न तु स्थलम् इत्यतो हेतोः, किंभूता नलिनी निगूढसलिला अलक्षितजला । तादृशं तस्याः सलिलं मयेन अकारि, यत्र स्थलभ्रान्तिः । अतश्च भूरेषा इति धिया व्रजन् असावपतत् । अथ च पातमात्रादेव कस्मादसौ राजन्यकाऽन्ते हेतुरभूत् इत्याह—किंलक्षणे सुयोधने अनिलात्मजप्रहसनाकुले अनिलात्मजो वायुनन्दनो भीमसेनः तस्य प्रहसनम् अट्टहासः तेन आकुलः किङ्कर्तव्यतामूढः तस्मिन् । यदा ह्यसौ निपपात, तदामारुतिर्जहासेत्यर्थः ॥५९॥

नलिनीति ॥ यत्र सभायां निगूढसलिला दलच्छन्नत्वाददृश्यसलिला नलिनी । वर्तत इति शेषः । या नलिनी सुष्ठु युध्यत इति सुयोधने दुर्योधने । भाषायां शासियुधिदृशिधृषिमृषिभ्यो युच् वक्तव्यः । स्थलमिति भ्रान्त्या अधः पतति सति अनिलात्मजस्य भीमसेनस्य प्रहसनेनाऽट्टहासेनाकुलानां क्षुभितानामखिलक्षितिपानां क्षयागमे नाशप्राप्तौ निमित्ततां ययौ । नलिनीदलच्छन्नत्वात्सुयोधनस्य जले स्थलभ्रान्तिः। तया तस्य पातस्तेन भीमसेनप्रहासस्तेन राज्ञां क्षोभस्ततस्तेषां मारणे रणः प्रवृत्त इति परम्परया तत्क्षयकारणत्वं गतेत्यर्थः । अत्र सभावर्णनाऽङ्गतया भीमसेनादिचारितवर्णनादुदात्तालङ्कारभेदः । लक्षणं चोक्तम् ॥ ५९ ॥

**हसितुं परेण परितः परिस्फुरत्करवालकोमलरुचावुपेक्षितैः ॥**
**उदकर्षि यत्र जलशङ्कया जनैर्मुहुरिन्द्रनीलभुवि दूरमम्बरम् ॥ ६० ॥**

हसितुमिति ॥ यत्र यस्यां संसदि इन्द्रनीलभुवि वालवायजभूमौ मुहुरत्यर्थं जनैः तत्र सञ्चारिभिर्लोकैः दूरं दूरादेव अम्बरं वासः उदकर्षि उत्क्षिप्तम् । कया जलशङ्कया उदकभ्रान्त्या, किंलक्षणायामिन्द्रनालभुवि परितः समन्तात् परिस्फुरन् उल्लसन् यः करवालः खड्गः तस्येव कोमला मृदुला रुचिः कान्तिर्यस्याः सा तथा तस्याम् उल्लसत्खड्गसदृशच्छवौ । किं कोऽपि जनस्तत्र नास्तीत्याह—किंलक्षणैर्जनैः परेण अन्येन उपेक्षितैः अनादृतैः, किं कर्तुं हसितुं हासाय । भ्रान्त्या हि तादृशविधान् सर्वो हसति ॥ ६० ॥

हसितुमिति ॥ यत्र सभायां परितः परिस्फुरन्ती करवालकोमला असिश्यामा रुचिर्यस्यास्तस्यामिन्द्रनीलभुवि हसितुं परेण जानताऽन्येन जनेनोपेक्षितैः 'स्थलमेतत् न जल'मित्युपदिष्टैर्जनैरज्ञैरागन्तुकजनैर्जलशङ्कया जलभ्रान्त्या मुहुर्दूरमम्बरं वस्त्रमुदकर्षि नितम्बादुद्धृतम् । अत्रेन्द्रनीलस्थलसादृश्यात्सलिलभ्रान्तेर्भ्रान्तिमदलङ्कारः ॥ ६० ॥

**अभितः सदोऽथ हरिपाण्डवौ रथादमलांशुमण्डलसमुल्लसत्तनू ॥**
**अवतेरतुर्नयननन्दनौ नभः शशिभास्करा(२)वुदयपर्वतादिव ॥ ६१ ॥**

अभित इति ॥ अथाऽनन्तरं सदः अभितः सभायाः संमुखौ हरिपाण्डवौ श्रीकृष्णधर्मराजौ रथात् अवतेरतुः स्यन्दनात् अवरूढौ । किंलक्षणौ हरिपाण्डवौ अमलांशुमण्डलसमुल्लसत्तनू अमलांशुमण्डलेन देदीप्यमानतेजश्चक्रेण समुल्लसत्तनू स्फुरद्देहौ, अपरं किंलक्षणौ तौ नयननन्दनौ नेत्रानन्दकरौ । कौ यथा कुतोऽवतरत इत्याह—काविव शशिभास्कराविव यथा चन्द्रसूर्यौ नभोऽभितः आकाशसंमुखम् उदयपर्वतात् उदयाद्रेः अवतरतः ॥ ६१ ॥

---

(१) ०कुलाखिल । (२) भार्गवा० ।

अभित इति ॥ अथाऽमलांशुमण्डलेन तेजःपुञ्जेन समुल्लसन्त्यौ भासमाने तनू मूर्ती ययोस्तौ नयननन्दनौ नेत्रानन्दकरौ हरिपाण्डवौ सदोऽभितः सभाऽभिमुखम् । 'अभितःपरितः—' इति द्वितीया । रथात् शशिभार्गवौ अमलेत्यादिविशेषणविशिष्टौ चन्द्रशुक्रौ नभोऽभितो नभोऽभिमुखमुदयाख्यात्पर्वतादुदयाचलादिवाऽवतेरतुरवतीर्णवन्तौ । तरतेर्लिट् 'तृफलभजत्रपश्च' इत्येत्वाभ्यासलोपौ । उपमा ॥ ६१ ॥

**तदलक्ष्यरत्नमयकुड्यमादरादभिधातरीत इत इत्यथो नृपे ॥**
**धवलाऽश्मरश्मिपटलाऽविभावितप्रतिहारमाविशदसौ सदः शनैः ॥६२॥**

तदिति ॥ अथो अनन्तरं तत्सदः तां सभाम् असौ श्रीकृष्णः शनैः स्वैरम् आविशत् न्यविशत । किंलक्षणं तत्सदः अलक्ष्यरत्नमयकुड्यम् अलक्ष्याणि अदृश्यानि रत्नमयानि मणिखचितानि कुड्यानि भित्तयो यत्र तत्तथा, अपरं किंलक्षणं सदः धवलाऽश्मरश्मिपटलाऽविभावितप्रतिहारं धवलाऽश्मनां श्वेतपाषाणानां स्फटिकोपलानां रश्मिपटलेन दीप्तिपुञ्जेन अविभावितमपरिज्ञातं प्रतिहारं द्वारं यत्र यस्य वा त त्तथा, क्व सति आविशत् नृपे राज्ञि युधिष्ठिरे आदरात् प्रीत्या 'इत इत' इति अभिधातरि सति 'अत्र गम्यताम् अत्र गम्यताम्' इति ब्रुवति सति ॥ ६२ ॥

तदिति ॥ अथो रथावतरणानन्तरं असौ हरिर्नृपे युधिष्ठिरे आदरात् इत इत इत्यभिधातरि सति, इत इत आगम्यतामित्यभिदधाने सतीत्यर्थः । तत्पूर्वोक्तमलक्ष्यरत्नमयकुड्यमदृश्यरत्नाभित्तिकम् , धवलेन शुभ्रेण अश्मरश्मिपटलेन माणिप्रभापुञ्जेनाऽविभावितप्रतिहारमलक्ष्यद्वारम् । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । सदः सभां शनैराविशत्प्रविष्टवान् । अत्र कुड्यप्रतीहारयोरलक्ष्यत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥

**नवहाटकेष्टकचितं ददर्श सः क्षितिपस्य पस्त्यमथ तत्र संसदि ॥**
**गगनस्पृशां मणिरुचां चयेन यत्सदनान्युदस्मयत नाकिनामिव(१)॥६३॥**

नवेति ॥ अथाऽनन्तरं सः श्रीकृष्णः तत्संसदि तस्यां सभायां क्षितिपस्य भूपतेः युधिष्ठिरस्य पस्त्यं वेश्म ददर्श अपश्यत्, किंलक्षणं पस्त्यं नवहाटकेष्टकचितं नवाश्च ते हाटकस्य सुवर्णस्य इष्टकाः कृत्रिमदृषदश्च तैः चितं रचितम् उज्ज्वलकनकशिलाबद्धम् । यद्वेश्म गगनस्पृशां नभोलिहां मणिरुचां चयेन रत्नदीप्तीनां मण्डलेन नाकिनां देवानां सदनानि भुवनानि उदस्मयत इव अहसदिव—कियन्ति यूयं रम्याणीति ॥ ६३ ॥

नवेति ॥ अथ प्रवेशाऽनन्तरं स हरिस्तत्र संसदि सभायां नवाभिर्हाटकेष्टकाभिः हिरण्येष्टकाभिश्चितम् । 'हिरण्यं हेम हाटकम्' इत्यमरः । 'इष्टकेषीकामालनां चिततूलभारिषु' इति ह्रस्वः । पक्वमृत्तिकाविशेषवाचकस्येष्टकाशब्दस्य तादृशि सुवर्णविकारे सुवर्णघटवदुपचारात्प्रयोगः । क्षितिपस्य युधिष्ठिरस्य पस्त्यं सदनम् । 'निशान्तपस्त्यसदनम्' इत्यमरः । ददर्श । यत्सदनं गगनस्पृशामुच्चैस्तराणां मणिरुचां चयेन समूहेन नाकिनां देवानामपि सदनान्युदस्मयताऽहसत् । स्मयतेरुत्पूर्वात्कर्तरि लङ् । अत्रापि नृपसदनस्य सुरसदनादाधिक्याऽसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ६३ ॥

**उदयाद्रिमूर्ध्नि युगपच्चकासतोर्दिननाथपूर्णशशिनोरसम्भवाम् ॥**
**रुचिमासने रुचिरधाम्नि बिभ्रतावलघुन्यथ न्यषदतां नृपाऽच्युतौ ॥६४॥**

उदयाद्रीति ॥ अथाऽनन्तरं नृपाऽच्युतौ युधिष्ठिरश्रीकृष्णौ सहितौ आसने कनकविष्टरे न्यषदतामुपविविशतुः । किंलक्षणौ नृपाच्युतौ दिननाथपूर्णशशिनोः दिवाकरपार्वणचन्द्रमसोः रुचिं कान्तिं बिभ्रतौ वहमानौ, किंलक्षणयोः दिननाथचन्द्रयोः उदयाद्रिमूर्ध्नि

(१) ०मपि ।

उदयाचलशिखरे युगपत् समकालं चकासतोः विराजमानयोः। ननु रविपूर्णेन्दू न कदाचिदपि साकमुद्गच्छतः, तत्कथं तद्वत् शोभेयातामित्याशङ्क्य विशेषणमुखेनाह—किंलक्षणां रुचिम् असम्भवाम् असतीमभूतपूर्वाम्। एतदुक्तं भवति—यदि युगपदुदयगिरिशिरसि रविशशिनावुद्गच्छेतां, तदा तयोरुपमा स्यादित्युत्पाद्योपमा। किंलक्षणे विष्टरे रुचिधाम्नि महातेजोयुक्ते, रुचेर्धाम आस्पदं तत्र, (१)अपरं किंलक्षणे विष्टरे अलघुनि महति ॥६४॥

उदयाद्रीति॥ अथ नृपसदनदर्शनाऽनन्तरमुदयाद्रेर्मूर्ध्नि शिखरे युगपच्चकासतोः प्रकाशमानयोः 'चकासृ दीप्तौ' इति धातोर्लटः शत्रादेशः। दिननाथपूर्णशशिनोः सूर्यपूर्णचन्द्रमसोरसम्भवां सम्भवरहिताम्। तयोस्तथाभूतयोर्यौगपद्यायोगादभूतपूर्वामित्यर्थः। रुचिं शोभां बिभ्रतौ नृपाच्युतौ रुचिरधाम्न्युज्ज्वलतेजसि अलघुनि विपुले आसने सिंहासने न्यषदतामुपविष्टौ। सदेर्लुङि 'पुषादि—' इति च्लेरङादेशः 'सदिरप्रतेः' इति षत्वम्। अत्र सम्भावनया अर्कपूर्णेन्दुशोभासम्बन्धोक्तेरसम्बन्धे सम्बन्धरूपातिशयोक्तिः॥

**सुतरां सुखेन सकलक्लमच्छिदा सनिदाघमङ्गमिव मातरिश्वना॥**
**यदुनन्दनेन तदुदन्वतः पयः शशिनेव राजकुलमाप नन्दथुम्॥ ६५॥**

सुतरामिति॥ तत् राजकुलं राजकं यदुनन्दनेन भगवता तोषं नन्दथुं हर्षम् आप लेभे। माधवागमनेन सभ्या मुदमापुरित्यर्थः। किंलक्षणेन यदुनन्दनेन सुतरां सुखेन अत्यर्थं सुखकारिणा, सुखयतीति सुखः तेन, अपरं किंलक्षणेन यदुनन्दनेन सकलक्लमच्छिदा सकलः सम्पूर्णः यः क्लमः संसारश्रमः तं छिनत्ति उन्मूलयतीति छित् तेन छिदा। केन यथा को हृष्यतीत्याह—यथा मातरिश्वना वायुना सनिदाघं सतापमङ्गं शरीरं नन्दथुं तोषं याति। रोमाञ्चितत्वोक्तिः। अपरं केन किमिव उदन्वतः अब्धेः पाथः उदकं शशिनेन चन्द्रेणेव। यथा शशिना अब्धिजलं हर्षं याति, इत्युच्छ्वासकथनम्। द्वावपि सुखौ क्लमहरौ च॥ ६५॥

सुतरामिति॥ तद्राजकुलं कुरुकुलम्। सकलक्लमच्छिदा सकलदुःखहारिणा यदुनन्दनेन कृष्णेन सनिदाघं ससन्तापमङ्गं, मातरिश्वा वायुस्तेन। उदकान्यस्य सन्तीत्युदन्वानुदधिः। 'उदन्वानुदधौ च' इति निपातः। तस्य पयो जलं शशिनेव सुतरामत्यन्तम्। 'अव्ययादाम्वक्तव्यः' इत्यामुप्रत्ययः। सुखेनाक्लेशेन नन्दथुमानन्दमाप। 'स्यादानन्दथुरानन्दः' इत्यमरः। 'ट्वितोऽथुच्' इत्यथुच्प्रत्ययः। मालोपमा॥ ६५॥

**अनवद्यवाद्यलयगामि कोमलं नवगीतमप्यनवगीततां दधत्॥**
**स्फुटसात्त्विकाऽऽङ्गिकमनृत्यदुज्ज्वलं सविलासलासक(२)विलासिनीजनः॥**

अनवद्येति॥ सविलासलासकविलासिनीजनः सविलासो विभ्रमान्वितो लासको नर्तको यो विलासिनीजनः दासीलोकः, सः कोमलं सुकुमारम् अनृत्यत् प्रयुयुजे। नर्तक्यो हि विलासिन्यो भवन्ति। लासकग्रहणं च(३)। वाद्यमपि द्विविधं, सुकुमारमुद्धतं चेति। किंलक्षणं कोमलम् अनवद्यवाद्यलयगामि अनवद्यम् अगर्हलक्षणान्वितं यत् वाद्यं तताऽवनद्धघनसुषिरात्मकं तस्य यो लयो द्रुतमध्यविलम्बितभेदेन त्रिविधः, यद्वा वाद्यं च लयश्च तं गच्छत्यनुवर्तते इति अनवद्यवाद्यलयगामि, अपरं किंलक्षणं कोमलं नवगीतमपि अपूर्व-

(१) वल्लभदेवव्याख्यापुस्तकेऽपि मूलं 'रुचिरधाम्नि' इत्येव पाठो दृश्यते, परं व्याख्यासमीक्षया 'रुचिधाम्नि' इति पाठो व्याख्यातुरिष्ट इति स्पष्टं प्रतिभाति। तत्र च पाठे एकाक्षरन्यूनतेति 'रुचिमासनेऽतिरुचिधाम्नि'। इत्ययं कदाचित् पाठः कल्पितः स्यात्।

(२) लासिक। (३) अत्र ग्रन्थांशः पतितः।

गीतमेवंरूपमपि अनवगीततां दधत् अश्रुतपूर्वत्वं दधत्, अवगीतं गर्ह्यमसकृदनुभूतं च, अनिन्द्यतां बिभ्रत् । अपि विरोधे, यत्किल नवगीतमुक्तं तत्कथं तेनैव रहितं स्यात्, नाऽवगीतमनवगीतमिति कृत्वा । अपरं किंलक्षणं कोमलं स्फुटसात्त्विकाऽऽङ्गिकं स्फुटम् अहीनं सात्त्विकं स्तम्भादि आङ्गिकं च भ्रूक्षेपादि यत्र तत्, अत एव अपरं किंलक्षणम् उज्ज्वलं मनोहरम् । एतेन गीताऽनुगतं च वाद्यं तदनुगतं नृत्यमुक्तं भवति । श्रीभगवतोऽग्रे प्रेक्षणकं, विलासिन्यो ननृतुरिति वाक्यार्थः ।

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥
आङ्गिकस्त्वभिनयः शिरोदृष्टिकरवक्षःकटिपादभेदतः षड्विधः ॥ ६६ ॥

अनवद्येति ॥ सविलासो विलासयुक्तो लासिकाविलासिनीजनो नर्तकीजनः सविलासलासिकाविलासिनीजनः । 'नर्तकीलासिके समे' इत्यमरः । अनवद्यमगर्ह्यं वाद्यं वंशादि तस्य लयः साम्यं गीतस्य समकालत्वं तद्गामि । द्रुतविलम्बादिमानाऽनुवर्तीत्यर्थः । 'तालः कालक्रियामानं लयः साम्यम्' इत्यमरः । नवं गीतं यस्य तन्नववगीतं तथाप्यनवगीततां दधदिति विरोधेऽपिशब्दः । अगर्हितत्वं दधादित्यविरोधाद्विरोधाभासः । 'अवगीतं तु निर्वादे मुहुर्गीते च गर्हिते' इति विश्वः । सत्त्वमन्तःकरणं तेन निर्वृत्तं नृत्यं सात्त्विकम् । अङ्गं हस्तादि तेन निर्वृत्तमाङ्गिकम् । 'निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके' इत्यमरः । ते स्फुटे यस्मिंस्तत्तथोक्तम् । वाचिकस्याऽप्युपलक्षणमेतत् । यथाह भगवान् भरतः- 'पदार्थाभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः' इति । अत एव कालिदासोऽपि-'अङ्गसत्त्ववचनाश्रयं मिथः स्त्रीषु नृत्यमुपधाय दर्शयन्' इति । कोमलं मधुरनृत्यमुज्ज्वलमुद्धतं चाऽनृत्यत् । तथोक्तं दशरूपके—

'भावाश्रयं तु नृत्यं स्यान्नृत्तं ताललयाश्रयम् ।
आद्यं पदार्थाभिनयो मार्गो देशी तथा परम् ॥
मधुरोद्धतभेदेन तद्द्वयं द्विविधं पुनः ।
लास्यताण्डवरूपेण नाटकाद्युपकारकम्' ॥

इति ॥ ६६ ॥

**सकले च तत्र नगरे हरा गृहान् गतवत्यकाल(१)महमादिदेश सः ॥**
**सततोत्सवं तदिति नूनमुन्मुदो रभसेन विस्मृतमभून्महीभृतः ॥ ६७ ॥**

सकले इति ॥ हरौ भगवति श्रीकृष्णे गृहान् भवनं गतवति प्राप्तवति आगते सति सः राजा तत्र सकले समग्रे नगरे पुरे अकालमहम् अप्रस्तुतोत्सवम् आदिदेश आज्ञापयत् । अस्य महीभृतः राज्ञो युधिष्ठिरस्य उन्मुदः उत्पन्नहर्षस्य सतः नूनं निश्चितं रभसेन औत्सुक्येन तत् नगरं सततोत्सवमजस्रमहोत्सववत् वर्तते इति विस्मृतमभूत् । इति तेन न स्मृतमित्यर्थः ॥ ६७ ॥

सकले इति ॥ किञ्चेति चार्थः । स राजा हरौ कृष्णे गृहमागते सकले तत्र नगरे इन्द्रप्रस्थे । अकाले प्रसिद्धवसन्ताद्यतिरिक्ते काले महमुत्सवम् । 'मह उद्धव उत्सवः' इत्यमरः । आदिदेशाज्ञापयामास । नूनमत्रोत्प्रेक्ष्यते । उन्मुदः कृष्णागमनादुत्कटानन्दस्य महीभृतो धर्मनन्दनस्य तन्नगरं सततमुत्सवा यस्मिंस्तत्सततोत्सवमिति इत्येतद्रभसेन त्वरया विस्मृतमभूत् । अन्यथा कथं कृतकरणोपदेश इति भावः ॥ ६७ ॥

**हरिराकुमारमखिलाऽभिधानवित् स्वजनस्य वार्तमयमन्वयुङ्क्त सः(२) ॥**
**महतीमपि श्रियमवाप्य विस्मयः सुजनो न विस्मरति जातु किञ्चन ॥**

(१) तत्र गृहमागते हरौ नगरेऽप्यकाल । (२) च ।

हरिरिति ॥ सः भगवान् श्रीकृष्णः स्वजनस्य बान्धवलोकस्य आकुमारमाबालकं कुमारेभ्योऽभिव्याप्य वार्तमयं वार्तम् अन्वयुङ्क्त पप्रच्छ । किंलक्षणो हरिः अखिलाऽभिधानवित् अखिलानां सर्वेषां बन्धूनामभिधानानि नामानि वेत्तीति तथा सर्वेषां नामविज्ञः । अत एव नामग्राहमित्यर्थः । यदि वा अखिलाऽभिधानवित् सर्वेषां संज्ञां वेत्तीति स एवार्थः । ननु भगवान् त्रिभुवनकार्यव्यग्रः, तत्कथं तस्यैतच्चित्ते वर्तते । यद्बालानामपि नाम गृहीत्वा कुशलं पप्रच्छेत्याशङ्क्याह—अत्रार्थान्तरन्यासः, यः स्वजनः साधुः सः महतीमपि स्फीतामपि श्रियं समृद्धिमवाप्य आसाद्य जातु कदाचिदपि किञ्चन नैव विस्मरति । अपरं किंलक्षणो हरिः विस्मयः विगतः स्मयो गर्वो यस्य सः तथा निरभिमानः ॥६८॥

हरिरिति ॥ किञ्चेति चार्थः। अखिलान्यभिधानानि नामानि वेत्तीत्यखिलाभिधानवित् सकलनामप्रपञ्चाभिज्ञः । 'नामरूपे व्याकरवाणि' इति श्रुतेरिति भावः । 'आख्याह्वे चाभिधानं च नामधेयं च नाम च' इत्यमरः । अयं हरिः कृष्णः कुमारमारभ्येत्याकुमारम् । 'आङ् मर्यादाभिविध्योः' इत्यभिधानादव्ययीभावः । स्वजनस्य बन्धुजनस्य । 'बन्धुस्वस्वजनाः समाः' इत्यमरः । वार्तमनामयम् । आरोग्यमित्यर्थः । 'वार्तं फल्गुन्यरोगे च' इत्यमरः । 'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम्' इति मनुस्मरणात् । अन्वयुङ्क्त अपृच्छत् । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । युजेः कर्तरि लङ् । तथा हि—महतीं श्रियं सम्पदमवाप्यापि विस्मयो निरहङ्कारः सुजनः, अत एव जातु कदाचिदपि किञ्चन किमपि न विस्मरति । सुजनः सम्पन्नोऽप्यहङ्कारं न करोतीति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६८ ॥

**मर्त्यलोकदुरवापमवाप्तरसोदयं नूतनत्वमवितृप्त(१)तयाऽनुपदं दधत् ॥**
**श्रीपतिः पतिरसाववनेश्च परस्परं सङ्कथाऽमृतमनेकमसिस्वदतां तदा(२) ॥६९॥**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये श्रीकृष्णसमागमो नाम त्रयोदशः सर्गः ॥१३ ॥

मर्त्येति ॥ असौ श्रीपतिः लक्ष्मीकान्तः श्रीकृष्णः अवनेः भूम्याश्च पतिः स्वामी युधिष्ठिरः, उभौ तदा तस्मिन् समये परस्परमन्योन्यम् अनेकं बहुप्रकारं सङ्कथाऽमृतं संलापपीयूषम् असिस्वदतामास्वादितवन्तौ । योगक्षेमकथां बहुकालं चक्रतुरित्यर्थः । सङ्कथैवाऽमृतम् । किंलक्षणमिति तत्साधर्म्यमाह—मर्त्यलोकदुरवापं मनुष्यलोके दुर्लभम् । न हि तयोर्यत्सौष्ठवमुत्तमकर्म, तत् अन्यस्य भवति । अपरं किंलक्षणं सङ्कथाऽमृतम् अवाप्तरसोदयम् अवाप्तः प्राप्तः रसेन रागेण स्नेहेन वा उदय आविर्भावो यत्र तत् । सर्वत्र हि तत्त्वतः क्रियमाणे वस्तुनि रागो भवति । अपरं किंलक्षणं सङ्कथाऽमृतम् अवितृप्ततया अवैतृष्ण्येन अनुपदं पदे पदे नूतनत्वं दधत् अपूर्वत्वं बिभ्रत्, यदि वा अवितृप्ततया अवैराग्येण । यत्र हि उद्विज्यते तत्पुराणमिति ज्ञायते । अमृतमपि मनुष्यलोके दुर्लभं प्राप्तरसोदयमवितृप्ततया नूतनत्वं च धत्ते । रात्रभङ्गितयरैरुदितं रमणीयकम् । अतिशक्करी छन्दः । रसो माधुर्यम्, म्रियन्ते इति मर्त्याः ॥ ६९ ॥

इति श्रीशिशुपालवधे महाकाव्ये दत्तकसूनोर्माघस्य कृतौ श्रीवल्लभविरचितायां सन्देहविषौषधिसारटीकायां हरेरिन्द्रप्रस्थप्रवेशे सभावर्णनं नाम त्रयोदशः सर्गः ॥

---

मर्त्येति ॥ उभौ श्रीपतिः कृष्णः असाववनेः पतिर्धर्मसुतश्च परस्परं मर्त्यलोकैर्मनुष्यलोकैर्दुरवापं

---

(१) ०मतिरिक्त० । (२) ०तामुभौ ।

दुर्लभमवाप्तरसोदयं प्राप्तरसोत्कर्षम् । स्वादु भवदित्यर्थः । अतिरिक्ततयाऽतिस्निग्धतया अनुपदमनुक्षणं प्रतिवाक्यं च नूतनत्वमपूर्वतां दधत् अनेकं बहुलं सङ्कथां सम्भाषणं चेदिराजजरासन्धादिकार्यचिन्तारूपं तदेवाऽमृतं तदास्वदतां स्वादितन्तौ । 'आकरः स्वपरभूरिकथानां प्रायशो हि सुहृदोः सहवासः' इति भावः । स्वदतेः णौ चङ्युपधाया ह्रस्वः । सङ्कथाऽमृतमिति रूपकालङ्कारः, स्वादनालिङ्गात् ॥ ६९ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवधकाव्यव्याख्याने सर्वङ्कषायां त्रयोदशः सर्गः ॥ १३ ॥

---

# चतुर्दशः सर्गः ।

**तं जगाद गिरमुद्गिरन्निव स्नेहमाहितविकासया दृशा ॥**
**यज्ञकर्मणि मनः समादधद् वाग्मिनां(१) वरमकद्वदो नृपः ॥ १ ॥**

**तमिति ॥** अथाऽनन्तरं नृपो युधिष्ठिरः तं भगवन्तं श्रीकृष्णं प्रति गिरं जगाद वाचमुवाच । गीर्ग्रहणं विस्फुटार्थम् । किं कुर्वन् आहितविकासया उत्पन्नहर्षया धृतविशालतया वा दृशा दृष्ट्या स्नेहमुद्गिरन्निव प्रेम उद्वमन् यथा । नेत्रविस्फारादयो हि स्नेहसूचकाः । अपरं किं कुर्वन् यज्ञकर्मणि क्रतुक्रियायां मनः समादधत् चित्तमारोपयन् । प्रस्तुतक्रमे तु सम्बन्धमवोचदित्यर्थः । किंलक्षणं तं हरिं वाग्मिनां वरं वाग्विदां श्रेष्ठं, किंलक्षणो नृपः अकद्वदः अगर्ह्यवादी । वाग्मीति द्वयोरपि वाक्सौष्ठवोक्तिः । अथ वा अकद्वदः सत्यवादी । राान्नराविह रथोद्धता लगौ । त्रिष्टुप् छन्दः ॥ १ ॥

तमिति ॥ वदतीति वदः । पचाद्यच् । कुत्सितस्य वदः कद्वदः गर्ह्यवाक् । 'गर्ह्यवादी तु कद्वदः' इत्यमरः । 'रथवदयोश्च' इति कोः कदादेशः । स न भवतीत्यकद्वदः साधुवादी नृपो युधिष्ठिरो यज्ञाऽनुष्ठाने मनः समादधत्सम्यगादधत् । तदेव हृदि निधायेत्यर्थः । आहितविकासया कृतप्रसादया दृशा दृष्ट्या स्नेहमुद्गिरन्नुद्वमन्निवेत्युत्प्रेक्षा । दृष्टिविकासात्प्रकटितस्नेहः सन्नित्यर्थः । वाचो विदन्ति वक्तुं विवेकं च जानन्तीति वाग्विदो वाक्यकोविदाः । 'सत्सूद्विष—' इत्यादिना क्विप् । तेषां वरं श्रेष्ठं तं हरिं गिरं जगाद । ब्रूतेरर्थग्रहणात् 'दुह्याच्—' इत्यादिना गदेर्द्विकर्मकत्वम् । अत्रोत्प्रेक्षावृत्त्यनुप्रासयोः संसृष्टिः । अस्मिन्सर्गे रथोद्धता वृत्तम् । 'रान्नराविह रथोद्धता लगौ' इति लक्षणात् ॥ १ ॥

किमुवाचेत्याह—

**लज्जते न गदितः प्रियं परो वक्तुरेव भवति त्रपाऽधिका ॥**
**व्रीडमेति न तव प्रियंवदो ह्रीमता तु(२) भवतैव भूयते ॥ २ ॥**

**लज्जते इति ॥** हे भगवन् ! परः त्वदन्यः कश्चित् प्रियं गदितः अभीष्टम् उक्तः सन् न लज्जते न जिह्रेति धृष्टत्वात्, प्रत्युत वक्तुरेव प्रियमाख्यातुरेव अधिका त्रपा भवति अत्यर्थं लज्जा जायते । तव पुनः प्रियंवदश्चाटुकारी स्तोता न व्रीडमेति न लज्जां प्राप्नोति तत्त्वकथनात्, प्रत्युत भवतैव त्वयैव ह्रीमता त्रपान्वितेनैव भूयते । महात्मानो हि निजगुणश्रवणादवनतवदना भवन्ति । उक्तं च—

गहिंज्जंता वि जणे जणे ण यज्जं वहन्ति काउरिसा ।
सप्पुरिसा उण गुणकित्तणा अवणअवअणा होन्ति(३) ॥

---

(१) वाग्विदां । (२) प्रियं वदन्'''ऽत्र । (३) गर्ह्यमाणा अपि जने जने न लज्जां वहन्ति कापुरुषाः । सत्पुरुषाः पुनर्गुणकीर्तनादवनतवदना भवन्ति ॥ इति च्छाया ।

तस्मादुत्कृष्टत्वात् त्वमस्माकं स्तुत्यः, वयमपि स्थानस्तुत्या नाऽनृतवादिन इति वाक्यार्थः ॥ २ ॥

गिरं जगादेत्युक्तं, तामेव गिरं दशभिः प्रपञ्चयति—

लज्जते इति ॥ परोऽन्यः कश्चित्पुमान् प्रियं गदितः प्रियवाक्यमुक्तः सन्नित्यर्थः । गदेर्दुहादित्वादप्रधाने कर्मणि क्तः । 'अप्रधाने दुहादीनाम्' इति वचनात् । न लज्जते । तस्योत्सुकत्वादिति भावः । किन्तु वक्तुः स्तोतुरेवाऽधिका त्रपा भवति । भयादिना मिथ्यावाचकत्वादिति भावः । प्रकृते तु नैवमित्याह—तव प्रियं वदन् । त्वां स्तुवन्नित्यर्थः । व्रीडं नैति । अनन्तगुणाधारे त्वयि बहोरपि प्रियस्याऽमिथ्यात्वादिति भावः । किन्तु स्तवनेनाऽत्रभवता पूज्येनैव ह्रीमता भूयते । प्रत्युत त्वमेवार्श जिह्रेषीत्यर्थः । महतामनुत्सुकत्वादिति भावः । 'पूज्यस्तत्रभवान्' इति सज्जनः । 'इतराभ्योऽपि—' इति सार्वविभक्तिके त्रल्प्रत्यये 'सुप्सुपा' इति समासः ॥२॥

**तोषमेति वितथस्तवैः(१) परस्ते च तस्य सुलभाः शरीरिभिः ॥**
**अस्ति न स्तुतिवचोऽनृतं तव स्तोत्रयोग्य ! न च तेन तुष्यसि ॥ ३ ॥**

तोषमिति ॥ हे भगवन् ! परः अन्यः वितथस्तवैः अलीकस्तुतिभिः तोषमेति हर्षं प्राप्नोति । गुणाध्यारोपणं हि लघूनामुल्लासयते । ते च वितथस्तवाः तस्य शरीभिरिर्जनैः सुलभाः सुप्रापाः । अलीकस्य तु निष्ठैव नास्ति । तव पुनः अनृतमसत्यं स्तुतिवचः नास्ति स्तोत्रवचनं न विद्यते । हे स्तोत्रयोग्य ! हे स्तुत्यर्ह ! यतः त्वं तेन वितथस्तवेन न तुष्यसि न हृष्यसि, सगुणत्वादेव । अथ वा तेन स्तुतिवचसा त्वं न तुष्यसीति केचित् । सगुणस्य हि 'गुणवानसि' इत्युक्ते को नाम सन्तोषः । एतदुक्तं भवति—आत्महितार्थं त्वां वयं नुमो, न चैतावता तव तोषः । स हि स्तोतरि निन्दके च समः ॥ ३ ॥

तोषमिति ॥ परस्त्वदन्यः वितथैरसत्यभूतैः स्तवैः स्तोत्रैः । 'स्तवः स्तोत्रं नुतिः स्तुतिः' इत्यमरः । तोषमुत्सुकतामेति । ते च-तस्य परस्य ते मिथ्यास्तवाः शरीरिभिः प्राणिभिः सुलभाः । असम्बद्धप्रलापानामनिरर्गलत्वादिति भावः । त्वयि तु नैवमित्याह—अस्तीति । हे स्तोत्रयोग्य ! गुणाकरत्वादिति भावः । अत एव तव सम्बन्धि स्तुतिवचोऽनृतं नास्ति न भवति, तेन स्तुतिवचसा न तुष्यसि न प्रसीदसि । गम्भीरत्वादिति भावः । अत्र श्लोकद्वये पुरुषान्तरादुपमानभूतादाधिक्यकथनाद्व्यतिरेकालङ्कारः ॥ ३ ॥

**बह्वपि प्रियमयं तव ब्रुवन् न व्रजत्यनृतवादितां जनः ॥**
**सम्भवन्ति यददोषदूषिते सार्व ! सर्वगुणसम्पदस्त्वयि ॥ ४ ॥**

बह्वपीति ॥ हे भगवन् ! अयं मादृशो जनः बह्वपि भूर्यपि प्रियं वदन् सन् अभीष्टं ब्रुवन् सन् तव अनृतवादितां न व्रजति अलीकभाषित्वं न प्राप्नोति । यस्मात् हे सार्व ! हेसर्वहित ! हे सर्वजनीन ! त्वयि विषये सर्वगुणसम्पदः सम्भवन्ति सर्वा एव गुणसम्पदो गुणातिशयाः । किंलक्षणे त्वयि अदोषदूषिते न दोषेण दूषितः अदोषदूषितः तस्मिन्नि दोषे निर्मले ४॥

बह्वपीति ॥ अयं जनः । स्वयमित्यर्थः परामृश्यते । बह्वपि तव प्रियं ब्रुवन्सन् अनृतवादितां मिथ्यावादित्वं न व्रजति न गच्छति । यद् यस्मात् हे सार्व ! सर्वहितत्वात्सार्वः तत्सम्बोधने । 'सर्वपुरुषाभ्यां णढञौ' इति णप्रत्ययः । दोषदूषितो न भवतीत्यदोषदूषिते सर्वाऽगुणवर्जिते त्वयि सर्वगुणसम्पदः सम्भवन्ति । अनारोपितगुणवादो भूयानपि न विपर्येतीति भावः । अत्रोत्तरवाक्यार्थेन पूर्ववाक्यार्थसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ४ ॥

**सा विभूतिरनुभावसम्पदां भूयसी तव यदायतायति ॥**
**एतदूढगुरुभार ! भारतं वर्षमद्य मम वर्तते वशे ॥ ५ ॥**

---

(१) वितथैः स्तवैः ।

**सेति** ॥ हे ऊढगुरुभार ! धृतभुवन ! उद्धृतविश्वम्भर ! एतत् यत् समग्रं भारतं वर्षं भरतखण्डं भूलोकः मम वशे वर्तते ममायत्तं विद्यते, सा तव अनुभावसम्पदां प्रभावातिशयानां भूयसी महती विभूतिर्महिमा। भवन्माहात्म्यवशादहं सार्वभौम इत्यर्थः। किंलक्षणं भारतं वर्षम् आयतायति आयता दीर्घा प्रसृता आयतिरस्मत्प्रतापो यत्र तत् वर्षम् ॥५॥

**सेति** ॥ हे ऊढगुरुभार ! विश्वम्भरत्वादिति भावः। एतत् भरतस्य राज्ञ इदं भारतम्। भारताख्यं वर्षम्(१)। 'वर्षोऽस्त्री भारतादौ च' इति हैमः। 'लोकोऽयं भारतं वर्षम्' **इत्यमरः**। अथेदानीमायतायति बहुतरकालं, स्थिरं यथा तथेत्यर्थः। 'उत्तरः काल आयतिः' **इत्यमरः**। मम वशे आयत्ततायां, वर्तत इति यावत्। 'वश आयत्ततायां च' इति **विश्वः**। सा तद्वशवर्तनं विधेयप्राधान्यत्स्त्रीलिङ्गता। तवाऽनुभावसम्पदा सामर्थ्याऽतिशयानां भूयसी महती विभूतिर्महिमा। कार्यमिति यावत्। त्वत्प्रसादलब्धमिदमैश्वर्यमित्यर्थः। अत्र निजैश्वर्यस्य भगवदनुभावसम्पदं विना सम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ५ ॥

वशवर्तने चोपकृतमाह—

**सप्ततन्तुमधिगन्तुमिच्छतः कुर्वनुग्रहमनुज्ञया मम ॥**
**मूलतामुपगते खलु त्वयि प्रापि धर्ममयवृक्षता मया ॥ ६ ॥**

**सप्ततन्तुमिति** ॥ हे भगवन् ! सप्ततन्तुं यज्ञम् अधिगन्तुं प्राप्तुमिच्छतो वाञ्छतो मम अनुज्ञया अनुग्रहं प्रसादं कुरु विधेहि अनुज्ञां देहि। यावद्राजसूययाजी भवामीत्यर्थः। खलु यस्मात्त्वयि मूलतामुपगते कारणत्वं प्राप्ते सति मया धर्ममयवृक्षता प्रापि सुकृतमयतरुता प्राप्ता। त्वया मूलभूतेन अहं धर्मवृक्ष इति प्रसिद्धः इत्यर्थः। उक्तं च महाभारते—

युधिष्ठिरो धर्ममयो महाद्रुमः स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः।
माद्रीपुत्रौ पुष्पफले समृद्धे मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ॥

इति ॥ ६ ॥

तदेवं स्तुत्या हरिमभिमुखीकृत्य कृत्यांशमावेदयति—

**सप्ततन्तुमिति** ॥ सप्त तन्तवः संस्था यस्य तं सप्ततन्तुं क्रतुम्। 'सप्ततन्तुर्मखः क्रतुः' **इत्यमरः**। अधिगन्तुं प्राप्तुमिच्छतो मम अनुज्ञयाऽनुज्ञादानेनानुग्रहं प्रसादं कुरु। साहाय्यं कुर्वित्यर्थः। स्वतः समर्थस्य किं मदनुग्रहेणेत्याह—हे प्रभो ! त्वयि मूलतां मुख्यकारणतामङ्घ्रित्वं चोपगते सति मया धर्ममयवृक्षता प्रापि प्राप्ता। प्राप्नोतेः कर्मणि लुङ्। प्रागपि त्वदनुग्रहादेव धर्ममर्जयन् धर्मराजोऽहमस्मीति भावः। अत्र नृपस्य धर्मवृक्षत्वेन हरेस्तन्मूलत्वेन रूपणात्सावयवरूपकम्। तेन त्वदनुग्रहः सर्वथा प्रार्थनीयो मया धर्मार्थिनेति तात्पर्यं व्यज्यते ॥ ६ ॥

अत्र च त्वदाज्ञाया अभाव एव विघ्न इति दर्शयितुमाह—

**सम्भृतोपकरणेन निर्मलां कर्तुमिष्टिमभिवाञ्छता मया ॥**
**त्वं समीरण इव प्रतीक्षितः कर्षुकेण(२) वलजान् पुपूषता ॥ ७ ॥**

**सम्भृतेति** ॥ हे भगवन् ! श्रीकृष्ण ! मया निर्मलां शुद्धाम् इष्टिं यागं कर्तुं विधातुम् अभिवाञ्छता इच्छता सता, (३)उपणिवा इति प्राकृतं, समीरणो वायुः प्रतीक्ष्यते। किंलक्षणेन मया सम्भृतोपकरणेन सम्भृतं ढौकितमुपकरणम् आज्यदक्षिणादि येनेति द्रव्यसम्पदुक्तिः। कर्षुकेण(४) सूपकाराणि संमार्जनादीनि उपकाराणि येन। इष्टेर्निर्मलत्वमर्थशुद्धिः श्रद्धा-

---

(१) भारतनामाख्यं वर्षम्—इति पाठश्चिन्त्यः, नामाख्ययोरैकार्थ्यात्।　　(२) कर्षकेण।
(३)—(४) उभयत्र कश्चिदंशो ग्रन्थस्याऽऽदर्शपुस्तके त्रुटितोऽस्ति।

पूतत्वं च । पवितुमिच्छति पुपूषति, पुपूषतीति पुपूषन् तेन पुपूषता ॥ ७ ॥

सम्भृतेति ॥ निर्मलां निर्दोषामिष्टिं यागम् । यजेः स्त्रियां क्तिन 'वचिस्वपि-' इत्यादिना सम्प्रसारणम् । कर्तुमभिवाञ्छता अत एव सम्भृतोपकरणेन सम्पादितसाधनेन मया बलजान्धान्यराशीन् । 'बलजो धान्य-राशिः स्यात्' इति वैजयन्ती । पुपूषता पवितुं साधयितुं निर्बुसीकर्तुमिच्छता । पुनातेः सन्नन्ताल्लटः शत्रा-देशः 'सनि ग्रहगुहोश्च' इति चकारादिटः प्रतिषेधः । कर्षकेण कृषीवलेन समीरणो वायुरिव प्रतीक्षितः । प्रवाते शूर्पादिना धान्यस्योत्क्षेपः पवनम् । तद्वातं विनेव त्वां विना समाहृतसम्भारेणापि मया यागो दुष्कर इति भावः ॥ ७ ॥

न च त्वमाज्ञादानार्थमेव प्रतीक्षितोऽपि तु यागसमाप्तयेऽपीति दर्शयितुमाह—

**वीतविघ्नमनघेन भाविता सन्निधेस्तव मखेन मेऽधुना ॥**
**को विहन्तुमलमास्थितोदये वासरश्रियमशीतदीधितौ ॥ ८ ॥**

**वीतविघ्नमिति** ॥ हे भगवन् ! अधुना इदानीं तव सन्निधेः त्वत्सन्निधानात् मे मम मखेन यज्ञेन वीतविघ्नं निर्विघ्नमेव अनघेण निर्दोषेण परिपूर्णेन भाविता भविष्यते । त्वयि पालके सति निरन्तरायमेव राजसूयो भविष्यतीत्यर्थः । अद्य व्यसनम् । एतदेव दृष्टान्तेन साधयति—अशीतदीधितौ उष्णकिरणे श्रीसूर्ये आस्थितोदये कृतोदये सति वासर-श्रियं दिनलक्ष्मीं कः पुमान् विहन्तुं बाधितुम् अलं समर्थः, अपि तु न कोऽपि ॥ ८ ॥

वीतविघ्नमिति ॥ अधुना तव सन्निधेर्हेतोर्मे मखेन क्रतुना कर्त्रा वीतविघ्नमविघ्नम् अनघेन निर्दोषेण भाविता, भविष्यत इत्यर्थः । भावे लुट् 'स्यसिच्सीयुट्-' इत्यादिना लुटि चिण्वद्भावाद्वृद्धिः । तथा हि— अशीतदीधितावुष्णांशावास्थितोदये प्राप्तोदये सति को वासरश्रियं दिनशोभां विहन्तुमलं शक्तः । न कोऽपी-त्यर्थः । अत्र हरिमरीचिमालिनोर्वाक्यभेदाद्बिम्बप्रतिबिम्बतया सन्निहितद्योतितया समानधर्मतया निर्देशो दृष्टान्तालङ्कारः ।

> 'यत्र वाक्यद्वये बिम्बप्रतिबिम्बतयोच्यते ।
> सामान्यधर्मवाक्योक्तेः स दृष्टान्तो निगद्यते' ॥

इति लक्षणात् ॥ ८ ॥

न चाऽत्र ममाऽधिकार इति वक्तुमाह—

**स्वापतेयमधिगम्य धर्मतः पर्यपालयमवीवृधं च यत् ॥**
**तीर्थगामि करवै विधानतस्तज्जुषस्व जुहवानि चाऽनले ॥ ९ ॥**

**स्वापतेयमिति** ॥ हे भगवन् ! यत् अहं स्वापतेयं द्रव्यं धर्मतः क्षात्रवृत्त्या अधि-गम्य अर्जयित्वा पर्यपालयं पर्यरक्षं तथा अवीवृधं वर्धितवान्, तत्स्वापतेयमधुना तीर्थगामि पात्रसाद् विधानतः करवै कर्तुं प्रार्थये, तथा अनले अग्नौ जुहवानि जुहोमि, त्वं जुषस्व अनुमोदयस्व । कुरु प्रसादम्, आज्ञा दीयताम् । कालोऽयं सोमं पातुमित्यर्थः । अस्य हि शास्त्रनिर्दिष्ट एवंविधः क्रमः । तथा चोक्तम्—

> धर्मेण लब्धुमीहेत लब्धं यत्नेन पालयेत् ।
> पालितं वर्धनीयं च वृद्धं पात्रेषु निक्षिपेत् ॥

तीर्थं पात्रम् ।

> स्वाध्यायाढ्यं शुद्धयोनिं प्रशान्तं वैतानस्थं पापभीतं बहुज्ञम् ।
> गोषु क्षान्तं नाऽतितीक्ष्णं शरण्यं वृत्तग्लानं तादृशं पात्रमाहुः ॥

तद्गच्छति साध्विति(?) । स्वपतौ साधु स्वापतेयं धनं, पथ्यतिथिवसतिस्वपतेर्ढञ् ।

द्वारादीनां वृद्धिनिषेधस्यागतस्य वा प्रतिषेधः । अवीवृधमिति वर्धतेर्लुङ् । करवै जुहवानि इति प्रार्थने लोडभिमन्त्रणे च । अभिमन्त्रणं नियोगकरणम् । एत ऐ, मेर्निः आट् । 'लघूपधस्ये'त्यनुवृत्त्या 'नाभ्यस्तस्याचि' इति गुणनिषेधाभावः । जुषस्वेति प्रार्थनायाम् ॥ ९ ॥

स्वापतेयमिति ॥ यत् स्वपतौ स्वामिनि साधु स्वापतेयं वित्तम । पथ्यातिथिवसतिस्वपतेर्ढञ् । 'द्रव्यं वित्तं स्वापतेयम्' इत्यमरः । धर्मतः क्षत्रियस्य विजितामिति शास्त्रोक्तप्रकारादित्यर्थः । अधिगम्य लब्ध्वा यत्नेन पर्यपालयं पालितवान्, अवीवृध वृद्धिं च प्रापितवान् । तत् तीर्थगामि विप्राधीनं करवै करिष्यामि विधानतः । 'पालितं वर्धयेन्नित्यं वृद्धं पात्रेषु निर्वपेत्' इति स्मरणात । तच्च पात्रं त्वमेवेत्याह—तत्सर्वं जुषस्व सेवस्व । सदैव भुङ्क्ष्वेत्यर्थः । 'जुषी प्रीतिसेवनयोः' इति धातोर्लोट् । अनले जुहवानि च जुहुयाम् । तन्मुखेनापि त्वैव भोक्तृत्वादिति भावः । जुहोतेः संप्रश्नलोटि मेर्निरादेशः ॥ ९ ॥

गौरवे चित्ते स्थिते सति आत्मनः कर्तृत्वे धाष्टर्यमाशङ्कमान आह—

**पूर्वमङ्ग ! जुहुधि त्वमेव वा स्नातवत्यवभृथे ततस्त्वयि ॥**
**सोमपायिनि भविष्यते मया वाञ्छितोत्तमवितानयाजिना ॥ १० ॥**

**पूर्वमिति** ॥ अङ्गेत्यामन्त्रणे, हे तात ! वा अथ वा त्वमेव पूर्वं जुहुधि प्रथमं वह्निं प्रीणय, ततः पश्चात् त्वयि भवति अवभृथे यज्ञान्ते स्नातवति स्नाते सति सोमपायिनि पीताऽमृते ततोऽनन्तरं मया वाञ्छितोत्तमवितानयाजिना भविष्यते वाञ्छितेन चिकीर्षितेन उत्तमेन श्रेष्ठेन वितानेन मखेन राजसूयाख्येन इष्टवान् इति वाञ्छितोत्तमवितानयाजी तेन तादृशेन सम्पत्स्यते । अनन्तरमहं होष्यामीत्यर्थः ॥ १० ॥

पूर्वमिति ॥ वेति पक्षान्तरे । अथ वेत्यर्थः । अङ्ग हे कृष्ण ! 'अथ सम्बोधनार्थकाः । स्युः प्याट्पाडङ्ग हे है भोः' इत्यमरः । पूर्वं त्वमेव जुहुधि । यजस्वेत्यर्थः । 'हुझल्भ्यो हेर्धिः' इति हेर्धिरादेशः । सोमपायिनि त्वयि अवभृथे यज्ञे । 'दीक्षान्तोऽवभृथो यज्ञे' इत्यमरः । स्नातवति सति ततोऽनन्तरं मया वाञ्छित उत्तमो वितानो राजसूयाख्यः । 'क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके' इत्यमरः । तेन तथा याजिना भविष्यते । भावे लट् । त्वयि इष्टवति पश्चादहं यक्ष्य इत्यर्थः । अत्र श्लोकद्वयेन हरेर्यागाऽसम्बन्धे तत्सम्बन्धोक्तेरतिशयोक्तिः॥

आज्ञां ददाने औद्धत्यं मन्यमान आह—

**किं विधेयमनया विधीयतां त्वत्प्रताप(१)जितयाऽर्थसम्पदा ॥**
**शाधि शासक ! जगत्त्रयस्य मामाश्रवोऽस्मि भवतः सहाऽनुजः ॥ ११ ॥**

**किमिति** ॥ हे जगत्त्रयस्य शासक ! हे त्रिभुवनरक्षक ! मां शाधि आदिश, अनया अमुया त्वत्प्रतापजितया अर्थसम्पदा भवत्तेजोऽर्जितया धनसमृद्ध्या किं विधेयं विधीयतां किं कार्यं क्रियताम् । यत् अहं सानुजः सभ्रातृकः भवतस्तव आश्रवोऽस्मि वचनकारी भवामि । यदेव त्वं वक्षि, तदेव निर्विचारं सम्पादयामीत्यर्थः ॥ ११ ॥

किमिति ॥ अथ वा त्वत्प्रसादेन त्वदनुग्रहेण जितया जयलब्धया अनयाऽर्थसम्पदा धनसम्पदा किं विधेयं किमनुष्ठेयं, विधीयतां त्वयैव क्रियताम् । अहं तु अस्वतन्त्र इत्याह—हे जगत्त्रयस्य शासक ! न तु ममैवेति भावः । मां शाधि । शिक्षयेत्यर्थः । शासेर्लोटि 'हुझल्भ्यो हेर्धिः' इति धिरादेशः, 'झलो झलि' इति सकारलोपः । सहानुजः सन् सानुजः । 'वोपसर्जनस्य' इति सहशब्दस्य सभावविकल्पः । भवतस्तवाश्रवो विधेयोऽस्मि । 'विधेयो विनयग्राही वचने स्थित आश्रवः' इत्यमरः । अत्राऽनाश्रवस्याश्रवत्वसम्बन्धोक्तेरतिशयोक्तिरिति दशश्लोकग्रामाचार्यमतेऽतिप्रियतराख्यानात्प्रेयोऽलङ्कारः । 'प्रेयः प्रियतराख्यानम्' इति लक्षणात् । आधुनिकास्तु भावनिबन्धने प्रेयोऽलङ्कार इति लक्षयन्ति । स चोत्तरत्र प्रोक्ष्यते च ॥ ११ ॥

---

(१) त्वत्प्रसाद ।

तं वदन्तमिति विष्टरश्रवाः श्रावयन्नथ समस्तभूभृतः ॥
व्याजहार दशनांशुमण्डलव्याजहारशबलं दधद्वपुः ॥ १२ ॥

तमिति ॥ अथाऽनन्तरं विष्टरश्रवाः श्रीकृष्णः तं राजानं व्याजहार जगाद । किंलक्षणं नृपम् इति पूर्वोक्तप्रकारेण वदन्तं ब्रुवाणं, किं कुर्वन् व्याजहार समस्तभूभृतः सर्वान् राज्ञः पार्थिवान् निशामयन्, राजकप्रत्यक्षम्। अत्र च वक्ष्यमाणोऽभिप्रायः, 'यस्तवेह सवन' इति । अपरं किं कुर्वन् वपुः दधत् शरीरं बिभ्रत्, किंलक्षणं वपुः दशनांशुमण्डलव्याजहारशबलं दशनांशुमण्डलव्याजेन दन्तकिरणच्छद्मना हारेण मुक्तावल्या शबलं कर्बुरम् ॥ १२ ॥

तामिति ॥ अथाऽनन्तरं विष्टराविव श्रवसी यस्य स विष्टरश्रवाः । 'विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः' इत्यमरः । इति एतादृशं तं वदन्तं नृपम् । समस्तभूभृतः सर्वान्नृपान् श्रावयन्, दशनांशुमण्डलमिति व्याजोऽपदेशो यस्य तेन हारेण मुक्ताहारेण शबलं शारं वपुर्दधद् व्याजहार व्याहृतवान्। अत्र दशनांशुमण्डलस्य व्याजशब्देनाऽसत्यत्वप्रतिपादनादपह्नवभेदः ॥ १२ ॥

किमुवाचेत्याह—

साधिता(१)ऽखिलनृपं महन्महः सम्प्रति स्वनयसम्पदैव ते ॥
किं परस्य स गुणः समश्नुते पथ्यवृत्तिरिह(२) यद्यरोगिताम् ॥ १३ ॥

साधितेति ॥ हे राजन् ! ते तव महः राज्यं सम्प्रतीदानीं स्वनयसम्पदैव निजनीत्युत्कर्षेणैव साधिताऽखिलनृपं वशीकृतसकलराजकं वर्तते, न तु मदनुभावेन । किंलक्षणं महः महत् विशालं, चतुरुदधिमालामहीपर्याप्तमित्यर्थः । एतदेव दृष्टान्तेन द्रढयति-पथ्यवृत्तिर्हिताशी यदि चेत् अरोगितां समश्नुते आरोग्यं विगतरोगत्वं प्राप्नोति, तर्हि स किं परस्य वैद्यस्य गुणः कौशलम्, अपि तु पथ्यवृत्तेरेव गुणः । साधिताः करदीकृताः । महत् राज्यं महर्द्धि विस्तीर्णं, नयः षाड्गुण्यम् ॥ १३ ॥

यदुक्तं 'सा विभूति'रित्यादि, तत्रोत्तरमाह—

सादितेति ॥ सम्प्रति ते तव महन्महस्तेजः स्वनयसम्पदैव निजनीतिमहिम्नैव सादिताखिलनृपं विजितसमस्तराजकं, न तु मदनुभावादिति भावः । तथा हि-पथ्या हिता वृत्तिरन्नपानादिक्रिया यस्य सोऽप्यरोगितामारोग्यं समश्नुते यदि प्राप्नोतीति चेत् । सोऽपि तदारोग्यमित्यर्थः। विधेयप्राधान्यात्पुंलिङ्गता । परस्य भिषजः स गुणः किं, नेत्यर्थः। अपथ्यवृत्तेरारोग्यमौषधसाध्यत्वाद्भिषजो गुणोऽस्तु, हितमेध्याऽशिनो न तथेत्यर्थः । स्वयमसमर्थः पराधीनसिद्धिरित्युपचार इति भावः । दृष्टान्तालङ्कारः सुगमः ॥ १३ ॥

यदित्युक्तं-'पूर्वमङ्ग जुहुधी'त्यादि, तद्युक्तमिति दर्शयितुमाह—

तत्सुराज्ञि भवति स्थिते परः(३) कः क्रतुं यजतु राजलक्षणम् ॥
उद्धृतौ भवति कस्य वा भुवः श्रीवराहमपहाय योग्यता ॥ १४ ॥

तदिति ॥ हे राजन् ! यतः स्वनय उक्तः, तस्मात् भवति त्वयि सुराज्ञि महाराजे स्थिते सन्निहिते सति कः परोऽन्यः राजलक्षणं क्रतुं राजसूयं यज्ञं यजतु यजताम् । अपि तु न कोऽपि । त्वमेवात्र योग्यः, नाऽपर इत्यर्थः । एतदेवाऽऽक्षेपेण पूर्वदृष्टान्तेन द्रढयति-भुवः भूमेः उद्धृतौ उद्धरणे श्रीवराहमपहाय आदिवराहं वर्जयित्वा कस्य अन्यस्य योग्यता भवतु सम्भावना सम्पद्यताम्, इति भङ्ग्याऽनुज्ञानदानम् ॥ १४ ॥

---

(१) सादिता० । (२) ०रपि । (३) पुरः ।

यदुक्तं 'पूर्वमङ्ग जुहुधि त्वमेवे'ति, तत्राह—

सदिति ॥ तत्तस्मादुक्तरीत्या, तवैवाऽधिकारित्वादित्यर्थः । सुराज्ञि विजयप्रजारक्षणादिगुणयोगाच्छुद्धक्षत्रिये । 'न पूजनात्' इति समासान्तप्रतिषेधः । भवति त्वयि पुरः स्थिते सति कः । त्वदन्यः क इत्यर्थः । राज्ञः क्षत्रियस्य लक्षणं चिह्नमसाधारणं यस्य तं क्रतुम् । राजसूयमित्यर्थः । यजतु । न कोऽपीत्यर्थः । 'राजा राजसूयेन यजेत' इति राजाधिकारताश्रवणाद्राजा त्वमेवेति भावः । सम्भावनायां लोट् । अत्र दृष्टान्तमाह–भुव उद्धृतौ भुव उद्धरणे श्रीवराहमादिवराहमपहाय कस्य पुनर्योग्यता सामर्थ्यं भवति । न कस्यापीत्यर्थः । योगाय प्रभवतीति योग्यः । 'योगाद्यच्च' इति यत्प्रत्ययः । अत्र राजवराहयोर्वाक्यभेदेन प्रतिबिम्बकरणाद् दृष्टान्तालङ्कारः ॥ १४ ॥

यच्चोक्तम्–'इष्टिमभिवाञ्छता मया त्वं समीरण इव प्रतीक्षितः', इत्युद्दिश्याह—

**शासनेऽपि गुरुणि व्यवस्थितं कृत्यवस्तुषु नियुङ्क्ष्व कामतः ॥**
**त्वत्प्रयोजनधनं धनञ्जयादन्य एष इति मां च माऽवगाः ॥ १५ ॥**

**शासनेऽपीति** ॥ हे राजन् ! त्वं कामतः यथेष्टं कृत्यवस्तुषु कार्यशरीरेषु कर्तव्यपदार्थेषु मां नियुङ्क्ष्व व्यापारय । देहि अनुज्ञां किं कर्म क्रियतामित्यर्थः । किंलक्षणं मां गुरुणि महति कार्ये शासने आदेशे व्यवस्थितं वर्तमानम् । यतो गुरुण्यधुना साधुशासनेऽप्याज्ञायामपि स्थितोऽहम् । अपरं किंलक्षणं मां त्वत्प्रयोजनधनं त्वत्प्रयोजनं भवत्कार्यमेव धनं रक्षणीयत्वेन द्रविणं यस्य तः तथा तम् । किं बहुना धनञ्जयात् अर्जुनात् एषः कृष्णः अन्यः इतरः इति त्वं मां माऽवगाः मा ज्ञासीः । यथाऽर्जुनस्तव कनीयान् निदेशे वर्तते, तथाऽहमपीत्यर्थः ॥ १५ ॥

यच्चोक्तं 'सम्भृतोपकरणेने'त्यादिना, तत्राह—

शासनेऽपीति ॥ गुरुण्यतिदुष्करेऽपि शासने नियोगे व्यवस्थितम् । त्वदाज्ञाकरमित्यर्थः । मां कृत्यवस्तुषु कर्तव्यार्थेषु कामतो यथेच्छं नियुङ्क्ष्व प्रेषय । अनुचितमेतन्नियन्तरीति सङ्कोचं वारयन्नाह–त्वदिति । त्वत्प्रयोजनमेव धनं यस्य तम् । त्वदर्थैकनिष्ठमित्यर्थः । मां धनानि जयतीति धनञ्जयोऽर्जुनः । 'संज्ञायां भृतॄवृजिधारिसहितपिदमः' इति खश्प्रत्यये मुमागमः । तस्मादेषोऽन्यः कृष्ण इति मां माऽवगाः माऽवेहि च । नियोगसमुच्चयार्थश्चकारः । अवपूर्वादिणो 'माङि लुङ्,' 'इणो गा लुङि' इति गादेशः 'न माङ्योगे' इत्यट्प्रतिषेधः । उभयोस्तत्कार्यनिबन्धनान्नारायणात्मत्वाच्च नाऽनयोर्भेदप्रतिपत्तिः कार्येत्यर्थः । तथा च तद्वदेव नियोगेऽप्यसङ्कोच उचित इति भावः । अत एवानयोर्वाक्यार्थयोर्हेतुहेतुमद्भावाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । स च कृष्णयोर्भेदाऽभेदरूपातिशयोक्तिमूल इत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥१५॥

यच्चोक्तं–'वीतविघ्नमनघेने'त्यादि, तत्सत्यमिति वक्तुमाह—

**यस्तवेह सवने न भूपतिः कर्म कर्मकरवत् करिष्यति ॥**
**तस्य नेष्यति वपुः कबन्धतां बन्धुरेष जगतां सुदर्शनः ॥ १६ ॥**

**य इति** ॥ हे राजन् ! यः भूपतिः राजा तव भवतः इह सवने अस्मिन् यज्ञे कर्मकरवत् भृतक इव कर्म न करिष्यति व्यापारं न विधास्यति तस्य भूपतेः वपुः शरीरं कर्मभूतम् एषोऽयं सुदर्शनः चक्रं कबन्धतां नेष्यति अपमूर्धकलेवरत्वं प्रापयिष्यति । शिरश्छेत्स्यतीत्यर्थः । किंलक्षणः सुदर्शनः दुष्टनिग्रहणेन जगतां बन्धुः विश्वेषां सहायः ॥ १६ ॥

यच्चोक्तं 'वीतविघ्न'मित्यादि, तत्राभयदानं प्रतिजानीते—

य इति ॥ यो भूपतिः तवेहाऽस्मिन्सवने यज्ञे । 'सवनं यजने स्नाने सोमे निर्दलनेऽपि च' इति विश्वः । कर्मकरवद्भृत्यवत् कर्म न करिष्यति, तस्य भूपतेर्वपुः जगतां बन्धुः । क्षेमङ्करत्वादिति भावः । एष सुदर्शनो

मचक्रम्। 'शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनम्' इत्यमरः। कबन्धतां शिरःशून्यतां नेष्यति प्रापयिष्यति। छेत्स्यामि चक्रेणाऽस्य शिर इत्यर्थः। 'कबन्धं सलिले प्रोक्तमपमूर्धकलेवरे' इति विश्वः। अतो विघ्नशङ्का न कार्येति भावः। अत्र सुदर्शने बन्धुत्वरूपणाद्रूपकालङ्कारः॥ १६॥

**इत्युदीरितगिरं नृपस्त्वयि श्रेयसि स्थितवति स्थिरे(१) मम॥**
**सर्वसम्पदिति शौरिमुक्तवानुद्वहन्मुदमुदस्थित क्रतौ॥ १७॥**

**इतीति॥ अथाऽनन्तरं नृपो राजा युधिष्ठिरः क्रतौ राजसूये निमित्ते उदस्थित उदतिष्ठत उद्यमं चक्रे। किंलक्षणो नृपः शौरिं भगवन्तम् इतीत्थमुक्तवान् भाषमाणः, इतीति किं-हे कृष्ण! त्वयि श्रेयसि शुभहेतौ स्थिरे दृढे स्थितवति सति वर्तमाने सति मम सर्वसम्पत् अखिलाः समृद्धयः। किंलक्षणं शौरिम् इति उक्तप्रकारेण उदीरितगिरं प्रोक्तवाचम्, अत एव राजा किं कुर्वन् मुदमुद्वहन् हर्षं बिभ्राणः प्रीयमाणः॥ १७॥**

इतीति॥ इतीत्थमुदीरितगिरमुपन्यस्तवाचं शौरिं नृपो युधिष्ठिरः त्वयि श्रेयस्यभ्युदये विषये स्थितवति। त्वयि क्षेमङ्करे सतीत्यर्थः। मम सर्वसम्पत् स्थिरेत्युक्तवान् मुदमुद्वहन् सहायसम्पत्त्या सन्तुष्यन् सन् क्रतावुदस्थित। क्रतुं कर्तुमुद्युक्तवानित्यर्थः। तिष्ठतेर्लुङि 'उदोऽनूर्ध्वकर्मणि' इत्यादिनात्मनेपदं 'स्थाघ्वोरिच्च' इति सिचः कित्त्वादिकारः। 'ह्रस्वादङ्गात्' इति सकारलोपः॥ १७॥

**आननेन शशिनः कलां दधद् दर्शनक्षपित(२)कामविभ्रमः॥**
**आप्लुतः स विमलैर्जलैरभूदष्टमूर्तिधरमूर्तिरष्टमी॥ १८॥**

**आननेनेति॥ अथानन्तरं स राजा अष्टमी अष्टमूर्तिधरमूर्तिः अभवत् क्षितिजलपवनहुताशनाऽऽकाशसोमसूर्ययजमानाख्याः अष्टौ मूर्तीः देहान् धारयति बिभर्तीति अष्टमूर्तिधरो महादेवः, तस्य सम्बन्धिनी मूर्तिरसौ राजा अभवत्। काऽसावित्याह-अष्टमी यजमानाख्या। एतेन राजा यजमानोऽभवदिति वाक्यार्थः। यजमानग्रहणमेव कस्मान्न कृतं, श्लेषार्थं देवस्य सर्वव्यापित्वख्यापनार्थम्। छन्दतश्च वाचां वृत्तिः(?)। किंलक्षणो नृपः आननेन मुखेन शशिनः चन्द्रस्य कलां स्वभावं दधत् बिभ्रत। एतेन नोपवासग्लानिः तेजस्वित्वं चोक्तम्। अपरं किंलक्षणो नृपः दर्शनक्षपितकामविभ्रमः दर्शनेन ईक्षणमात्रेण क्षपितो निवर्तितः कामस्याऽभिलाषस्य याच्ञाया विभ्रमो विलसितं विकारो येन सः तथा। दृष्टिमात्रेण धनं दत्त्वा परिपूरिताऽऽशा अर्थिनो येन कृता इत्यर्थः। अपरं किंलक्षणो नृपः विमलैर्जलैः पुण्यैस्तोयैः आप्लुतः स्नातः। भगवान् श्रीरुद्रोऽपि शशिकलावतंसः दग्धकन्दर्पशरीरः गङ्गाजलोक्षितमूर्धजश्च॥ १८॥**

अथ पञ्चविंशतिश्लोकैरनेकधा क्रतुं वर्णयति—

**आननेनेति**॥ आननेन शशिनः कलामिव कलां कान्तिं दधत्। निदर्शनालङ्कारः। शशिमुख इत्यर्थः। अन्यत्र शशिखण्डधरेत्यर्थः। दर्शनेन क्षयितौ नाशितौ कामविग्रहौ कामक्रोधौ येन सः, अन्यत्र दृष्टिदग्धस्मरशरीरः। विमलैर्जलैराप्लुतः स्नातः। 'नद्यां स्नाती'ति दीक्षायां स्नानविधानादिति भावः। अन्यत्र गङ्गोदकासिक्तः। गङ्गाधरीत्यर्थः। स नृपः अष्टानां पूरणी अष्टमी। 'तस्य पूरणे डट्' इति डट् प्रत्ययः, 'नान्तादसंख्यादेर्मट्' इति मडागमः। 'टिड्ढाणञ्–' इत्यादिना ङीप्। अष्टानां मूर्तीनां समाहारोऽष्टमूर्तिः। 'तद्धितार्थ–' इत्यादिना समाहारे द्विगुरेकवचनं नपुंसकं च। तस्य धरो धारयिताऽष्टमूर्तिधरः शिवः तस्याऽष्टमी मूर्तिरभूत्। सोमदीक्षितोऽभूदित्यर्थः। तस्याप्यागमे शिवमूर्तित्वप्रसिद्धेः। अत्र प्रकृताऽप्रकृतयोर्नृपशिवयोः शिवशब्दमात्रसाधर्म्यात् श्लेषालङ्कारः॥ १८॥

---

(१) स्थिरा। (२) क्षयितकामविग्रहः।

**तस्य साङ्ख्यपुरुषेण तुल्यतां बिभ्रतः स्वयमकुर्वतः क्रियाः ॥**
**कर्तृता तदुपलम्भतोऽभवद्वृत्तिभाजि करणे यथर्त्विजि ॥ १९ ॥**

**तस्येति** ॥ तस्य राज्ञो युधिष्ठिरस्य यागे कर्तृता अभवत् कर्तुर्भावो बभूव । ऋत्विग्-इत्यस्य शब्दस्याऽसौ वाच्योऽभूदित्यर्थः । कदाचित् स्वयं क्रियाः कुर्यात्, तदवश्य-मेव भवतीत्याह-किंलक्षणस्य तस्य आत्मना स्वयं क्रियाः कर्माणि अकुर्वतः अनिर्वर्तयतः । कदा कर्तृताऽभूदित्याह-ऋत्विजि याजके करणे यथा बुद्धितुल्ये वृत्तिभाजि वेतनभृति मूल्य-क्रीते । ऋत्विजि कर्माणि कुर्वतीत्याह, कदाचित् स्वयं न कुरुते तत्कथमन्यसात् क्रियते । तस्य कर्तृत्वमाह—कस्मात् तदुपलम्भतः तासां क्रियाणामुपलम्भतः उपलम्भात् दर्शनात् धनक्रीतवत् ऋत्विङ्निर्वर्तितव्यापाराणां दर्शनात् । फलभोक्तरि च कर्तृत्वम् । अत एव साङ्ख्यपुरुषेण समीक्ष्योक्तेन आत्मना तुल्यतां साम्यं बिभ्रतः बिभ्राणस्य, किंलक्षणे बुद्धौ वृत्तिभाजिसव्यापारे सुखदुःखभोक्तरि । निष्क्रियस्याऽपि पुरुषस्य कर्तृत्वं कुतः, तासां बुद्धि-कृतानां क्रियाणाम् उपलम्भात् दर्शनात् । प्रकृतिजनितानां क्रियाणां द्रष्टा साङ्ख्यपुरुष उदा-सीनः । अतश्च बुद्धौ बन्धमोक्षाऽनुभावात् आत्मा बद्धो मुक्त इत्यभिधीयते । तदुक्तं पूर्वम्—

विजयस्त्वयि सेनायाः साक्षिमात्रेऽपदिश्यताम् ।
फलभाजि समीक्ष्योक्ते बुद्धेर्भोग इवात्मनि ॥

याजकाः कर्माणि अकुर्वन्, नृपतिस्तु द्रष्टा अभवदित्यत्र वाक्यार्थः ॥ १९ ॥

तस्येति ॥ क्रियाः कर्माणि होमादीनि, अन्यत्र पुण्यपापकर्माणि स्वयमकुर्वतोऽननुतिष्ठतः, अन्यत्र उदासीनस्य । अत एव साङ्ख्यपुरुषेण साङ्ख्यशास्त्रोक्तेनात्मना तुल्यतां बिभ्रतस्तस्य राज्ञः करणेऽन्तःकरणे यथा । बुद्धाविवेत्यर्थः । ऋतौ यजतीति ऋत्विग्याजकः । 'ऋत्विजो याजकाश्च ते' इत्यमरः । 'ऋत्विग्दधृ-ग्—' इति निपातः । तस्मिन्वृत्तिभाजि । होमादिव्यापारं कुर्वतीत्यर्थः । अन्यत्र पुण्यपापकारिणि सति तदुपलम्भतः तस्य ऋत्विग्वृत्तेरुपलम्भान्ममेदमित्यनुसन्धानादेव कर्तृता क्रियाऽनुष्ठातृत्वमभवत् । तथैव विधिसामर्थ्यादिति भावः । अत एवाह भगवान् जैमिनिः—'अन्या वा स्यात्परिक्रिया स्नानात्सत्यप्यात्मने-पदे' इति । अन्यत्र तदुपलम्भतस्तस्या बुद्धिवृत्तेरुपलम्भात्साक्षित्वेनाऽनुसन्धानादेव कर्तृत्वमभवत् । स्वयं क्रियाभोगरहितोऽप्यात्मा बुद्धेः सन्निधानाद्रक्तस्फटिकवत्तथा भवतीत्यर्थः । उपमालङ्कारः ॥ १९ ॥

अथ ता एव क्रिया आह—

**शब्दितामनपशब्दमुच्चकैर्वाक्यलक्षणविदोऽनुवाक्यया ॥**
**याज्यया यजनधर्मिणो(१)ऽत्यजन् द्रव्यजातमपदिश्य देवताम् ॥ २० ॥**

**शब्दितामिति** ॥ अथाऽनन्तरं यजनधर्मिणो यजनकर्माणो याजकाः द्रव्यजातं पुरो-डाशादिकम् अत्यजन् जुहुवुः; किं कृत्वा देवतामाज्यादिस्वामिनीम् अपदिश्य अभिस-न्धाय । किंलक्षणां देवताम् अनुवाक्यया आह्वानमन्त्रेण शब्दिताम् उपहूतां, कथम् अनप-शब्दमनसाधुशब्दम् । यज्ञे हि कर्मणि अपशब्दोच्चारणात् महान् प्रत्यवायः । उक्तं च—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

अपरं कथम् उच्चकैः उच्चैः तारं, वाक्येनेत्यर्थः । तद्यथा—इन्द्र ! आगच्छ, हरे !

---

( १ ) कर्मिणो० ।

आगच्छ इत्यादि । किंलक्षणा यजनधर्मिणः वाक्यलक्षणविदः मीमांसकाः वाक्यार्थविचार-क्षमाः । केन द्रव्यजातमत्यजन्नित्याह—कया याज्यया हविःप्रक्षेपणमन्त्रेण । आह्वानमन्त्रस्त्वनुवाक्या । यजनं यजानमन्त्रस्तदेव धर्मः स विद्यते येषां ते यजनधर्मिणः । सर्व एव होत्रध्वर्युप्रभृतयः ऋत्विजः । धर्मशीलवर्णान्तादिनिः । तत्र होता याज्याऽनुवाक्ये पठति, यजमानो देवतामुद्दिशति, अध्वर्युराज्यमग्नौ प्रक्षिपति ॥ २० ॥

**शब्दितामिति** ॥ वाक्यलक्षणविदो मीमांसाशास्त्रज्ञाः यजनकर्मिणो यजनव्यापारवन्त ऋत्विजः । व्रीह्यादित्वादिनिप्रत्ययः । अनूच्यत इत्यनुवाक्या तयाऽनुवाक्यया । 'अनूच्यया याज्यया जुहोति' इति श्रुतेः । सा च प्रशास्तृपाठ्या, तदभावे होतृपाठ्या देवताह्वानी ऋक् । वचेः ऋहलोर्ण्यत्, 'चजोः कुघिण्यतोः' इति कुत्वम् । शब्दसंज्ञात्वात् 'वचोऽशब्दसंज्ञायाम्' इति न प्रतिषेधः । उच्चकैः अनपशब्दं यथा तथा शब्दिताम् । मन्त्रवर्णेनोच्चैःप्रकाशितामित्यर्थः । 'उच्चैः ऋचा क्रियत' इति विधानात् । 'शब्द संशब्दने' इति धातोश्चौरादिकात्कर्मणि क्तः । देवतामिन्द्रादिकामपदिश्य द्रव्यजातं पशुपुरोडाशादि हविःसमूहम् इज्यतेऽनयेति याज्या सा च होतृपाठ्या यागाङ्गसाधनमृक् । 'याज्यया जुहोति' इति श्रुतेः । पूर्ववत् 'ऋहलोर्ण्यत्' इति करणे ण्यत् । 'यजयाचरुचप्रवचर्चश्च' इति कुत्वप्रतिषेधः । तया अत्यजन् । अयजन्नित्यर्थः । देवतोद्देशेन द्रव्यत्यागो याग इति लक्षणात् । स च त्यागः सामान्यत 'आहवनीये जुहोतीति तदाहवनीय' इति सामान्य-न्यायाद्विधानादन्यत्रेति ध्येयम् । द्रव्यत्यागस्याऽध्वर्युमात्रकर्तृत्वेऽपि याज्यापुरोनुवाक्याद्वारा होतृप्रशास्त्रोरपि साहित्यादत्यजन्निति बहुत्वव्यपदेशः । तथा च मैत्रावरुणेन पुरोऽनुवाक्यायामनूक्तायां तत्प्रकाशितदेवतो-द्देशेनाऽध्वर्युर्होतृपठितयाज्याऽन्ते वषट्कारेण सोमादिकं हविरग्नावत्याक्षीदित्यर्थः । स्वभावोक्तिरलङ्कारः ॥ २० ॥

**सप्तभेदकरकल्पितस्वरं साम सामविदसङ्गमुज्जगौ ॥**
**तत्र सूनृतगिरश्च सूरयः पुण्यमृग्यजुषमध्यगीषत ॥ २१ ॥**

**सप्तभेदेति** ॥ तत्र यज्ञे सामवित् उद्गाता छन्दोगः असङ्गमनवरतं साम उज्जगौ साम गीतविशेषमगासीत् । सामवेदो हि गीयते । किंलक्षणं साम सप्तभेदकरकल्पितस्वरं षड्जादिरूपेण सप्त भेदाः करे पाणौ कल्पिताः पर्वभागेन रचिताः स्वरा उदात्तादयो यत्र तत्, अपरं तत्र सूरयश्च बहुश्रुताश्च पुण्यं पवित्रम् ऋग्यजुषम् अध्यगीषत । ऋक् च यजूंषि च ऋग्यजुषम् । सर्वेषां विशेषणमाह—किंलक्षणाः सूरयः सूनृतगिरः सूनृताः प्रियाः गिरो वाचो येषां ते तथा । सामर्ग्यजुर्विदस्तत्र हि शाखाभेदेन द्विजास्तिष्ठन्ति । पादबद्धो मन्त्रः ऋक्, अपादबद्धो मन्त्रो यजुः, सामानि वाक्य-विशेषस्था गीतयः ॥ २१ ॥

**सप्तभेदेति** ॥ तत्र क्रतौ, सामानि वेत्तीति सामविदुद्गाता सप्तभेदं सप्तप्रकारं यथा तथा करेण हस्तेन कल्पिताः सम्पादिताः स्वरा निषादादयो यस्य तत् । करविन्यासभेदादिभिर्व्यञ्जितसप्तस्वरमित्यर्थः ।

'निषादर्षभगान्धारषड्जमध्यमधैवताः ।
पञ्चमश्चेत्यमी सप्त-'

इत्यमरः । यद्वा स्वराः क्रुष्टादयः क्रुष्टः प्रथमो द्वितीयो मन्द्रो नीच इत्यादयः । साम बृहद्रथन्तरादिकम् असङ्गमस्खलितमुज्जगावुदगायत् । किञ्च सूनृतगिरः प्रियसत्यवाचः । 'प्रियं सत्यं च सूनृतम्' इत्य-मरः । सूरयो विद्वांसो होत्रध्वर्य्वादयः पुण्यं श्रेयस्करम् । ऋचश्च यजूंषि च तत् ऋग्यजुषम् 'अग्निमीळे'-'इषे' इत्यादिकम् । द्वन्द्वैकवद्भावः, 'अचतुर—' इत्यादिना द्वन्द्वे समासान्तनिपातः । अध्यगीषत । इङो लुङि 'विभाषा लुङ्लृङोः' इति गाङादेशपक्षे 'गाङ्कुटादि-' इति सिचः ङित्त्वे 'घुमा-' इत्यादिना ईत्वम् । अत्र सामसामेत्यादौ वृत्त्यनुप्रासभेदो द्रष्टव्यः ॥ २१ ॥

बद्धदर्भमयकाञ्चिदामया वीक्षितानि यजमानजायया ॥
शुष्मणि प्रणयनाऽभि(१)संस्कृते तैर्हवींषि जुहवाम्बभूविरे ॥ २२ ॥

बद्धेति ॥ तैर्याजकैः शुष्मणि अग्नौ आहवनीयाख्ये हवींषि आज्यादीनि जुहवाम्बभूविरे हुतानि । किंलक्षणानि हवींषि यजमानजायया द्रौपद्या वीक्षितानि दृष्टानि । एवंविधो ह्येष विधिः । किंलक्षणया यजमानजायया बद्धदर्भमयकाञ्चिदामया बद्धं नद्धं दर्भमयं प्रचुरकुशं काञ्चिदाम मेखलागुणो यया सा तथा तया, किंलक्षणे शुष्मणि प्रणयनाऽभिसंस्कृते प्रणयेन संस्कारविशेषेण अभिसंस्कृतः कृतसंस्कारः तस्मिन् । गार्हपत्यादुद्धृत्य प्राचीरं नीत्वा उत्तरवेद्यां निधानं प्रणयनम् ॥ २२ ॥

बद्धेति ॥ बद्धं दर्भमयं दर्भविकारं काञ्चिदाम रशनागुणो यस्यास्तस्याः । आग्नीध्रमंनद्धयेत्यर्थः । 'आशासाना सौमनसम्' इत्युत्तरेण 'गार्हपत्यमूर्ध्वजुमासीना पत्नीं संनह्य तिष्ठन्तीं वाचयतीत्येके, मौञ्जेन दाम्नाऽन्यतरतः पाशेन योक्त्रेण च' इत्यापस्तम्बवचनात । दामेति 'डाबुभाभ्यामन्यतरस्याम्' इति डाप् प्रत्ययः, यजमानो यष्टा । 'पूङ्यजोः शानन्' इति यजेः शानन्प्रत्ययः । तस्य जायया पत्न्या वीक्षितानि दृष्टानि हवींष्याज्यादीनि । 'पत्न्यवेक्षते' इत्याज्यस्य पत्न्यवेक्षणसंस्कारविधानादर्थप्रधानत्वात्सर्वेषामाज्यादीनां प्राधान्यायेन वीक्षितत्वव्यपदेशः । प्रणयनं नाम गार्हपत्यादुद्धृत्य मन्त्रेणायतने सादनम् । आदिशब्दात्परिस्तरणपरिधानसंमार्गादिसंस्कारसङ्ग्रहः । तैः प्रणयनादिभिः संस्कृते आहितातिशये शुष्मण्यग्नौ । 'बर्हिः शुष्मा कृष्णवर्त्मा' इत्यमरः । अत्राप्याहवनीये जुहोतीति हूयमानेऽध्वर्युः कर्ता । जुहूपात्रव्यापृतया स्रुवाहवनीयं प्रधानामिति न्यायवचनात् । तैः ऋत्विग्भिः जुहवाम्बभूविरे । जुहोतेः कर्मणि लिट् 'भीह्रीभृहुवाम्–' इति विकल्पादाम्प्रत्ययः । अत्र विषयस्य योक्त्रस्याऽनुपादानेन विषयिणः काञ्चीगुणस्यैव तदभेदेन निर्देशाद्भेदेऽभेदरूपातिशयोक्तेरनुप्रासेन सङ्करः ॥ २२ ॥

नाञ्जसा निगदितं(२) विभक्तिभिर्व्यक्तिभिश्च निखिलाभिरागमे ॥
तत्र कर्मसु(३) विपर्यणीनमन्मन्त्रमूहकुशलाः प्रयोगिणः ॥ २३ ॥

नाऽञ्जसेति ॥ यत्र यज्ञे प्रयोगिणः प्रयोगज्ञाः वैयाकरणाः ऋत्विजः कर्मसु निर्वापादिकासु क्रियासु मन्त्रं वेदवाक्यं विपर्यणीनमन् विपरीणमतः विपर्ययेण पेठुः । किंलक्षणं मन्त्रं यत आगमे वेदे निखिलाभिः सर्वाभिः विभक्तिभिः सुबादिभिः व्यक्तिभिश्च लिङ्गैः पुमादिभिः अञ्जसा तत्त्वतः न निगदितं न निश्चयीकृतम् । व्यक्तिः स्त्रीपुंयोगित्वमेव । कारणं शब्दशास्त्रे किलेदमुक्तम्–'रक्षोहागमलघ्वसन्देहाः प्रयोजन'मिति । सम्बन्धादेकस्मादपरस्याऽनुमानमूहः । उत्प्रेक्ष्यते–आगमे किल न सर्वैः वचनैः नापि सर्वैर्लिङ्गैः मन्त्रा उक्ताः, तेन यज्ञगतेन यथायथं विपरिणाम्याः । यथा वैयाकरणो विपरिणमितुं शक्नोति, इति ऊहार्थं व्याकरणमध्येयम् । तद्यथा—ये मन्त्रास्तु अग्नये त्वा जुष्टं निर्वपामीति । सूर्यस्य तु नास्ति, चोदना च विद्यते । प्रकृतिवत्तु विकृतिः कर्तव्येति सम्पाद्यते । सूर्याय त्वा जुष्टं निर्वपामीति । तथाऽपां मन्त्रो—देवीरापः ॥ २३ ॥

नेति ॥ तत्र तस्मिन्कर्मणि यज्ञकर्मणि । अन्यथाश्रुतस्य शब्दस्यान्यथालिङ्गवचनादिभेदेन विपरिणमनमूहः । तत्र कुशलाः । प्रयोग एषामस्तीति प्रयोगिणः प्रयोक्तार ऋत्विजः आगमे आम्नाये निखिलाभिर्विभक्तिभिः प्रथमादिभिः सुब्विभक्तिभिस्तिङ्विभक्तिभिश्च । विभक्तिग्रहणं वचनोपलक्षणम । व्यक्तिभिर्लिङ्गैश्चाऽञ्जसा सुखेन निगदितुं पठितुं न भवन्त्यशक्यत्वादिति नाञ्जसा निगदितुम् । 'अञ्जस उपसंख्यानम्' इति अलुक्, नञर्थस्य नशब्दस्य सुप्सुपेति समासः । अथ वा अञ्जसेति तृतीयान्तप्रतिरूपकमव्ययं तत्त्वार्थं

---

(१) प्रणयनादि । (२) निगदितुं । (३) कर्मणि ।

'अञ्जसा तत्त्वतूर्णयोः' इति विश्वः । अञ्जसा तत्त्वत इत्यर्थः। अस्मिन्पक्षे नैकपद्यनियमः। तं मन्त्रं कर्माङ्गदेवतारूपवाक्यं विपर्ययणीनमन् विपरिणमन्ति स्म । विपरिणमितवन्त इत्यर्थः। विपरिपूर्वकाण्ण्यन्तात् णमधातोर्लुङ्। सन्वद्भावे 'सन्यतः' इत्यभ्यासस्येत्वम् । 'दीर्घो लघोः' इति दीर्घः । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम्। अत्र नाञ्जसेति पाठविशेषणगत्या मन्त्रविपरिणमनेहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ २३ ॥

असन्देहार्थं व्याकरणमध्येयमित्युक्तम्, तद्दर्शयितुमाह—

**संशयाय दधतोः सरूपतां दूरभिन्नफलयोः क्रियां प्रति ॥**
**शब्दशासनविदः समासयोर्विग्रहं व्यवससुः स्वरेण ते ॥ २४ ॥**

**संशयायेति** ॥ शब्दशासनविदः समासयोः तत्पुरुषबहुव्रीह्योः विग्रहं वाक्यं स्वरेण अन्तोदात्तादिना व्यवससुः निश्चिक्युः। शब्दाः शिष्यन्ते संस्क्रियन्तेऽनेनेति शब्दशासनं, शब्दशासनं शब्दशास्त्रं व्याकरणं तद्विदन्तीति तद्विदो वैयाकरणाः ते । किंलक्षणयोः समासयोः इति भ्रान्तिकारणमाह—संशयाय सन्देहाय सरूपतां दधतोः सारूप्यं बिभ्रतोः । उभयकोटिस्पृक् विज्ञानं संशयः । कदाचिदर्थभेदः स्यात्तन्मा भून्निश्चय इत्याह— क्रियामनुष्ठानं प्रति दूरमत्यर्थं भिन्नं विलक्षणं फलं साध्यं ययोस्तथा तयोः । तद्यथा— 'स्थूलपृषतीमालभेते'ति याजकाः पठन्ति । तत्र संशयः—स्थूला चासौ पृषतीति चेति कर्मधारयः, उत स्थूलानि पृषन्ति रोमाणि यस्या इति बहुव्रीहिः। उभयत्र हि सदृशं रूपं, क्रियायां फलभेदश्च । कर्मधारये हि पीवराया मृग्या आलभनं, बहुव्रीहौ सर्वस्या गवादेरिति संशयः । एवंविधे सन्देहे वैयाकरणाः स्वरात् समासं व्यवससुः ॥ २४ ॥

संशयायेति ॥ संशयाय सन्देहोत्पादनाय सरूपतां सादृश्यं दधतोः। उभयत्र रूपसाम्यादयं समासोऽयं समासो वेति संशयं कुर्वतोरित्यर्थः। यथेन्द्रशत्रुरित्यत्रेन्द्रस्य शत्रुः शातयिता हन्तेति षष्ठीतत्पुरुषः। उतेन्द्रः शत्रुर्यस्येति बहुव्रीहिरिति सारूप्यसंशयः। तत्राऽनियमे दोषमाह—क्रिया प्रकृतं कर्म तां प्रति । तामुद्दिश्येत्यर्थः । दूरभिन्नमत्यन्तविलक्षणं फलं ययोर्दूरभिन्नफलयोस्तयोरर्थभेदात्कर्मणः फलभेदं प्रतिपादयतोरित्यर्थः । यथेन्द्रशत्रुरित्यत्रैव षष्ठीसमासस्येष्टत्वे वृत्रस्येन्द्रहन्तृत्वम् । बहुव्रीहौ तु तस्येन्द्रेण वध्यत्वमिति फलभेद इति भावः । समासयोरेवंविधयोः प्रसक्तयोः सतोरित्यर्थः । भावलक्षणे सप्तमी। शब्दशासनविदः शब्दशास्त्रज्ञाः । अन्येषामनधिकारादिति भावः । ते प्रकृता ऋत्विजः स्वरेण तत्तत्समासविहितस्वरवशेन विग्रहं वाक्येन समर्थाभिधानं व्यवससुर्निश्चिक्युः। अस्मिन्स्वरेऽयं समासः तत्रायं विग्रह इति अन्यतरपक्षावधारणं चक्रुः । यथेन्द्रशत्रुरित्यत्रैव पूर्वपदे उदात्तत्वेन बहुव्रीहिस्वरेण बहुव्रीहिसमासनिश्चयः। इन्द्रः शत्रुर्यस्येति विग्रहावधारणमित्यर्थः । व्यवपूर्वस्य स्यतेर्लिटि 'आदेच—' इत्यात्वे द्विर्वचनादिकार्ये झरुसादेशः। अत्र संशयजनकत्वफले भेदप्रतिपादकपदार्थयोर्विशेषणगत्या 'सन्दिग्धे न्यायः प्रवर्तते' इति न्यायेन विग्रहस्य व्यवसायहेतुकत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २४ ॥

**लोलहेतिरसनाशतप्रभामण्डलेन लसता हसन्निव ॥**
**प्राज्यमाज्यमसकृद्वषट्कृतं निर्मलीमसमलीढ पावकः ॥ २५ ॥**

**लोलेति** ॥ पावकोऽग्निः आज्यं घृतम् अलीढ अलिक्षत् । किंलक्षणमाज्यं प्राज्यं प्रभूतम्, अपरं किंलक्षणमाज्यं वषट्कृतं पुनःपुनः मन्त्रैर्हुतम्, अपरं किंलक्षणं निर्मलीमसं निर्मलं, किंलक्षणः पावकः लसता स्फुरता लोलहेतिरसनाशतप्रभामण्डलेन हसन्निव लोलाश्चटुला हेतयः ज्वालाः ता एव रसनाः जिह्वाः तच्छतानां तत्सहस्राणां प्रभामण्डलेन दीप्तिचक्रेण हसन्निव तृप्तियोगात् हृष्यमाण इव ॥ २५ ॥

लोलेति ॥ लसता प्रकाशमानेन लोलाश्चला हेतयो ज्वाला एव रसना रसज्ञाः । 'वह्नेर्द्वयोर्ज्वालकीला-र्चिर्हेतिः शिखा स्त्रियाम्' इति, 'रसज्ञा रसना जिह्वा' इति चामरः । तासां शतानि तेषां प्रभामण्डलेन हसन्निवेति रूपकसङ्कीर्णोत्प्रेक्षा । पावको वह्निः वषट्कृतं वषट्कारेण त्यक्तम् । हुतमित्यर्थः । 'हुतं त्रिषु वषट्कृतम्' इत्यमरः । निर्मलीमसममलिनं । शुद्धमित्यर्थः । 'मलीमसं तु मलिनम्' इत्यमरः । 'ज्योत्स्ना-तमिस्रा—' इत्यादिना मलिनशब्दान्मत्वर्थे ईमसच्प्रत्ययान्तो निपातः । प्राज्यं प्रभूतमाज्यमसकृदलीढ आस्वादयत् । लिहेः स्वरितेत्त्वाल्लङि कृते 'हो ढः' इति ढत्वं 'झषस्तथोर्धोऽधः' इति धत्वे ष्टुत्वे ढूलोपदीर्घौ ॥

**तत्र मन्त्रपवितं हविः क्रतावश्नतो न वपुरेव केवलम् ॥**
**वर्णसम्पदमतिस्फुटां दधन्नाम चोज्ज्वलमभूद्धविर्भुजः ॥ २६ ॥**

**तत्रेति ॥** तत्र यज्ञे हविर्भुजोऽग्नेः मन्त्रपवितं मन्त्रपूतं हविः सान्नाय्यम् अश्नतो भुञ्जानस्य सतः न केवलं वपुरेव शरीरमेव उज्ज्वलमभूत् स्निग्धं बभूव, यावन्नाम च उज्ज्वलमभूत् । हविर्भुगितिनामा, नाम्नोऽप्यौज्ज्वल्यम् अर्थानुमानात् । किल हवींषि भुङ्क्ते इति हविर्भुक् । किंलक्षणं वपुः अतिस्फुटां प्रकटतरां वर्णसम्पदम् उज्ज्वलत्वस्य प्रकर्षं दधत् बिभ्रत् । नामापि वर्णानामक्षराणां सम्पदं बाहुल्यम् अतिस्फुटामसन्दिग्धां धत्ते । हविर्भुग् इत्यत्र बहवो वर्णाः ॥ २६ ॥

**तत्रेति** ॥ तत्र क्रतौ मन्त्रैरुत्पवनादिमन्त्रैः पवितं पवित्रितम् । शोधितमित्यर्थः । 'पूङश्च' इति विकल्पादिडागमः । हविराज्यादिकमश्नतो भुञ्जानस्य । अशेर्भोजनार्थाल्लटः शत्रादेशः । हवींषि भुङ्क्ते इति हविर्भुजोऽग्नेः सम्बन्धि । अतिस्फुटामतिविकासितां वर्णसम्पदं रूपसमृद्धिं दधत् केवलमेकम् । 'केवलं त्वेककृत्स्नयोः' इति शाश्वतः । वपुरेवोज्ज्वलमोजिष्ठं नाऽभूत् । किन्तु अतिस्फुटामतिव्यक्तां वर्णसम्पदमक्षरसमुदायं दधत् । 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु चाक्षरे' इत्यमरः । नाम हविर्भुगिति नामधेयं चोज्ज्वलं रूढमभूत् । निरन्तरं हविर्भोजनाद्वपुः पुष्टिमाप, नाम चार्थवदासीदित्यर्थः । अत्र भोजनस्याश्नत-इति विशेषणगत्या हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ २६ ॥

**स्पर्शमुष्णमुचितं दधच्छिखी यद्ददाह हविरद्भुतं न तत् ॥**
**गन्धतोऽपि हुतहव्यसम्भवाद्देहिनामदहदोघमंहसाम् ॥ २७ ॥**

**स्पर्शमिति ॥** शिखी वह्निः उचितं सहजम् उष्णं तीक्ष्णं स्पर्शं स्पर्शनं दधत् वहन् यद् हविः पुरोडाशादि ददाह दहति स्म, न तत् अद्भुतं न तदाश्चर्यम् । यतः हुतहव्यसम्भवात् वषट्कृतसान्नाय्योत्थात् गन्धतोऽपि गन्धेनाऽपि देहिनां प्राणभृताम् अंहसामोघं पापानां पूगम् अदहत् अधाक्षीत् । हविर्गन्धग्रहणेन हि पापं क्षीयते । अतश्च यो गन्धेनाऽपि दहति, स तीक्ष्णस्पर्शेन दहतीति किं चित्रम् । ये तु एवं व्याचक्षते—शिखी हविर्यत् ददाह न तदद्भुतम्, यत् उष्णं स्पर्शं दधत् । इदं तु अद्भुतं, यत् गन्धेनाऽपि अंहसां संहतिमदहत् इति । तेषां साध्याहारोऽयं श्लोकः स्यात् ॥ २७ ॥

**स्पर्शमिति** ॥ उचितं स्वाभाविकमुष्णमुष्णाख्यं स्पर्शं स्पर्शनेन्द्रियमात्रग्राह्यं गुणविशेषं दधद्दधानः शिखी शिखावानग्निः । व्रीह्यादित्वादिनिः । हविराज्यादिकं ददाह भस्मीचकारेति यत् तदद्भुतं न । उष्णस्पर्शसहकृतस्याग्नेः पार्थिवद्रव्यदहनशक्तेः स्वाभाविकत्वादिति भावः । कुतः—हुतहव्यसम्भवाद् हुतहवनीयहविर्जन्याद्गन्धतो गन्धादपि । साङ्क्रामिकगुणादपीत्यर्थः । देहिनां गन्धं जिघ्रतां प्राणिनामित्यर्थः । अंहसां पापानामोघमपीति भावः । अदहद्भस्मीकृतवान् । नाशितवानित्यर्थः । अदाह्यदहनं त्वाश्चर्यमिति भावः । अत्रोष्णस्पर्शधारणस्य शिखिविशेषणभावेनास्य हविर्दाहहेतुत्वात्पदार्थहेतुकं तावदेकं काव्यलिङ्गम् । उत्तरार्धे त्वंहसां भस्मीकरणाभावलक्षणदाहविरोधस्य नाशलक्षणया समाधानाद्विरोधाभासे लक्ष्यस्य वाच्याभेदाध्यव-

सायमूलातिशयोक्तिप्रतिभोत्थापितः स एवादाह्यदाहकत्वरूपो वाक्यार्थभूतपूर्वोक्तपदार्थहेतुककाव्यलिङ्गसङ्कृतो हविर्दहनाद्भुतत्वहेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमन्यैः प्राधान्येन सङ्कीर्यते ॥ २७ ॥

**उन्नमन् सपदि धूम्रयन् दिशः सान्द्रतां दधदधःकृताऽम्बुदः ॥**
**द्यामियाय दहनस्य केतनः केतयन्निव(१) दिवौकसां प्रियम् ॥ २८ ॥**

**उन्नमन्निति** ॥ दहनस्य वैश्वानरस्य केतनो ध्वजो धूमो द्याम् इयाय खं प्रससार । किंभूतो धूमः उन्नमन् ऊर्ध्वं गच्छन्, पुनः किंभूतः सपदि तत्क्षणं दिशः धूम्रयन् आशाः धूम्राः कुर्वन्, अत एवाऽपरं किंभूतो धूमः सान्द्रतां दधत् घनतां बिभ्रत्, अपरं किंलक्षणः धूमः अधःकृताऽम्बुदः अभ्राणामुपरि स्थितः, यद्वा अम्बुदेऽभ्योऽपि निबिडत्वात् जितमेघः, अत एवाऽपरं किंलक्षणो धूमः दिवौकसां देवानां प्रियं केतयन्निव अभीष्टं कथयन्निव 'आगच्छत भो देवाः ! युष्माकं महानुत्सवोऽय'मिति आख्यन्निव ॥ २८ ॥

**उन्नमन्निति** ॥ सपदि होमक्षणमेवोन्नमन्नुद्गच्छन् दिशो धूम्रयन्धूम्रवर्णाः कुर्वन् सान्द्रतां नीरन्ध्रतां दधत् अत एवाऽधःकृताऽम्बुदः शोभयावधीरितमेघो मेघोपरि गतश्च दहनस्याग्नेः केतनः केतुः । धूम इत्यर्थः । द्यौरोको येषां तेषां दिवौकसां देवानाम् । पृषोदरादित्वात्साधुः । अथ वा दिवमोको येषामिति विग्रहः । 'दिवं स्वर्गान्तरिक्षयोः' इति विश्वः । तेषां प्रियमिष्टं कीर्तयन्कथयन्निव कीर्तनहेतोरिव । कीर्तनार्थमिवेत्यर्थः । अत एव फलोत्प्रेक्षा । कीर्तयन्निति 'लक्षणहेत्वोः क्रियायाः' इति हेत्वर्थे लटः शत्रादेशः । द्यामन्तरिक्षमियाय प्राप । इणो लिट् ॥ २८ ॥

**निर्जिताखिलमहार्णवौषधिस्यन्दसारममृतं ववल्भिरे(२) ॥**
**नाकिनः कथमपि प्रतीक्षितुं हूयमानमनले विषेहिरे ॥ २९ ॥**

**निर्जितेति** ॥ नाकिनो देवा अमृतं ववल्भिरे हव्यं जक्षुः, तु पुनः अनिलेऽग्नौ हूयमानं दीयमानं कथमपि महता कष्टेन प्रतीक्षितुं विषेहिरे विसाढवन्तः । ननु पूर्वं तैः अमृतं जग्धं, तत् कथं सस्वदिरे इत्याह—किंलक्षणममृतं निर्जिताखिलमहार्णवौषधिस्यन्दसारं निर्जितः न्यूनः कृतः अखिलः समग्रः महार्णवस्य क्षीराब्धेः ओषधीनां फलपाकान्तानां च स्यन्दसारो रसोत्कर्षो येन तत्तथा तत् । अब्धिमथनलब्धादमृतात् तत् स्वादुतरम् । उक्तं च—

अमृतं नाम यत्सन्तो मन्त्रजिह्वेषु जुह्वति ।
शोभैव मन्दरक्षुब्धक्षुभिताऽम्भोधिवर्णना ॥

इति ॥ २९ ॥

**निर्जितेति** ॥ नाकः स्वर्ग एषामस्तीति नाकिनो देवाः अखिलानां महार्णवौषधीनां महार्णवमन्थनसमये उत्थितानां दिव्यौषधिलतानां स्यन्दो मन्थनान्निःसृतो रसस्तस्य सारो मृष्टांशः । अमृतमिति यावत् । स निर्जितो येन तत् । अमृतादपि स्वाद्वित्यर्थः । अमृतं हविराख्यातम् । 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते' इति मेदिनी । ववल्गिरेऽभ्यवजह्रुः । वल्ग भोजने, कर्तरि लिट् । 'वल्गं चाभ्यवहारं प्रत्यवसानं च जेमनं जग्धिः' इति हलायुधः । तस्याऽमृताधिक्यं व्यनक्ति । अनले हूयमानं दीयमानममृतमिति भावः । प्रतीक्षितुं कथमपि विषेहिरे सोढवन्तः । होमविलम्बं कथञ्चिदसहन्तेत्यर्थः । तृष्णा तु प्रागेव जिघ्रतीति रसातिशयोक्तिः । अत्र हविषोऽमृतमित्यभेदोक्त्या भेदरूपातिशयोक्तिस्तद्विशेषणपदार्थस्य वल्गनहेतुत्वात्काव्यलिङ्गभेदस्तया सङ्कीर्यते । 'परिनिविभ्यः सेवसितसयसिवुसह—' इत्यादिना सहेः षत्वम् ॥ २९ ॥

---

( १ ) कीर्तयन्निव । ( २ ) ववल्गिरे । भोजनार्थस्य वल्गतेरनुपलम्भात् कथमेष पाठ इति न विद्मः ।

तत्र नित्यविहितोपहूतिषु प्रोषितेषु पतिषु द्युयोषिताम् ॥
गुम्फिताः शिरसि वेणयोऽभवन्नप्रफुल्लसुरपादपस्रजः ॥ ३० ॥

तत्रेति ॥ द्युयोषितां स्वर्गनारीणां शिरसि शीर्षणि वेणयः कचकलापाः गुम्फिता अभवन् बद्धा बभूवुः । किंलक्षणा वेणयः अप्रफुल्लसुरपादपस्रजः न प्रफुल्लाः अविकसिताः सुरपादपानां देवतरूणां मन्दारादीनां स्रजो माला यासु ताः तथा । ननु ता एवंविधाः कुतः, केषु सत्सु पतिषु प्रोषितेषु सत्सु कान्तेषु प्रवासिषु सत्सु । किं सङ्ग्रामे, नेत्याह—किंलक्षणेषु पतिषु तत्र यज्ञे नित्यविहितोपहूतिषु नित्यं विहिता अनवरतं कृता उपहूतिराह्वानं येषां ते तथा तेषु । अतश्च देवानां नित्यं मर्त्यलोकवासात्प्रोषितत्वम् । अत एव देवाङ्गनानां केशरचनेऽनादरः । दीर्घसत्रमकारयदिति वाक्यार्थः । उक्तं च—

क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।
हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका ॥

इति ॥ ३० ॥

तत्रेति ॥ तत्र क्रतौ नित्यं विहितोपहूतिषु कृताह्वानेषु पतिषु भर्तृषु इन्द्रादिषु प्रोषितेषु प्रवासं गतेषु । वसेः कर्तरि क्तः, 'वसतिक्षुधोः-'इतीडागमः । द्युयोषितां स्वर्गस्त्रीणामिन्द्राण्यादीनां शिरसि वेणयो जटा एव गुम्फिता अभवन्, प्रफुल्ला विकसिताः सुरपादस्रजो मन्दारमाला न गुम्फिता अभवन् । अत्र सुरयोषितां वेण्यसम्बन्धेऽपि सम्बन्धोक्तेः स्रक्सम्बन्धेऽप्यसम्बन्धोक्तेश्च सम्बन्धेऽसम्बन्धरूपा असम्बन्धे सम्बन्धरूपा चातिशयोक्तिः । ताभ्यां च क्रतोरजस्रत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ३० ॥

प्राशुराशु हवनीयमत्र यत् तेन दीर्घममरत्वमध्यगुः ॥
उद्धतानधिकमेधितौजसो दानवांश्च विबुधा विजिग्यिरे ॥ ३१ ॥

प्राशुरिति ॥ अत्र मखे विबुधा देवाः यत् हवनीयं हविः प्राशुः प्राश्नन्ति स्म आदुः, तेन हविषा आशु शीघ्रं दीर्घं चिरकालम् अमरत्वमध्यगुः अजरामरतां लेभिरे । सामुद्रे हि अमृते भुक्ते किञ्चिदमरत्वं प्राप्तं तैः, अद्य तु दीर्घम् । इत्यतिशयोत्प्रेक्षा । तेनेवेत्यर्थः । अपरं विबुधा उद्धतानपि उत्कटानपि दानवानसुरान् विजिग्यिरे जितवन्तः । किंलक्षणाः देवाः अधिकम् एधितौजसः तेन हविषा अतिवर्धिततेजस्काः ॥ ३१ ॥

प्राशुरिति ॥ विबुधाः सुरा अत्र क्रतौ आशु क्षिप्रं हूयत इति हवनीयं हविर्यत् प्राशुः प्राशितवन्तः । अश भोजने, लिट् द्विर्वचनादिकार्ये 'अत आदेः' इत्यभ्यासदीर्घः । तेन हविःप्राशनेन दीर्घं चिरभोग्यममरत्वं देवत्वमध्यगुः प्रापुः । 'इणो गा लुङि' इति गादेशः । किञ्च अधिकमत्यन्तमेधितौजसो वर्धितबलाः सन्तः उद्धतानुद्दृप्तान् दानवान् असुरांश्च विजिग्यिरे जितवन्तः । विपूर्वाज्जयतेः कर्तरि लिट् । 'विपराभ्यां जेः' इत्यात्मनेपदम् । अत्र विबुधानां दीर्घामरत्वासुरविजयित्वाऽसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । एधितौजस्त्वस्य विशेषणगत्या विजयहेतुत्वात्काव्यलिङ्गं, तदुत्थापितश्चामरत्वासुरविजयक्रियासमुच्चय इति सङ्करः । गुणक्रियायौगपद्यं समुच्चयः ॥ ३१ ॥

नाऽपचारमगमन् क्वचित्क्रियाः सर्वमत्र समपादि साधनम् ॥
अत्यशेरत परस्परं धियः सत्रिणां नरपतेश्च सम्पदः ॥ ३२ ॥

नाऽपचारमिति ॥ अत्र मखे क्रियाः निर्वापादिकाः अपचारं विधिभ्रंशं न अगमन् न प्रापुः । यज्ञसूत्रविधेरभ्यस्तत्वात् । तथा सर्वमखण्डं साधनमुपकरणम् आज्यादिकं समपादि सम्पन्नं, किञ्च सत्रिणाम् ऋत्विजां धियो बुद्धयः, अपरं नरपतेश्च युधिष्ठिरस्य राज्ञः

सम्पदः समृद्धयः परस्परम् अत्यशेरत अन्योन्यमतिशयं जग्मुः । द्विगुणे दक्षिणादिके ऋत्विग्भिः निरूप्यमाणे राज्ञा चतुर्गुणस्य दक्षिणादिकस्य ढौकनात् । अन्योन्यजय इति भावः॥३२

नापचारमिति ॥ अत्र क्रतौ क्वचित्कुत्रापि क्रियाः कर्माण्यपचारं लोपविषयविपर्यासादिदोषं नागमन् । गमेर्लुङि 'पुषादि-' इति च्लेरङादेशः । अनपचारे हेतुमाह—अत्र सर्वं साधनं समपादि सम्पन्नम् । पद्यतेः कर्तरि लुङ् 'चिण् ते पदः' इति चिण् प्रत्ययः । कर्मणि वा सम्पादितमित्यर्थः । 'चिण् भावकर्मणोः' इति चिण्प्रत्ययः । साधनसम्पत्तिमेव व्यनक्ति—अतीति । सत्रं यज्ञतन्त्रं येषामस्तीति सात्रिणामृत्विजाम् । 'सत्रमाच्छादने यज्ञ' इत्यमरः । धिय उत्तरोत्तरप्रयोगविज्ञानानि । तदुक्तम्—'आचतुर्थाः कर्मणोऽन्ते समीक्षेतेदं करिष्यामी'ति । तथा नरपते राज्ञः सम्पदः पदार्थसमृद्धयश्च परस्परमत्यशेरताऽतिशयितवत्यः । उभयेऽप्यतिसममा इत्यर्थः । ज्ञानद्रव्ये हि क्रियासाधने तत्सम्पन्नस्य कुतः क्रियापचार इति भावः । अत्राऽनपचारवाक्यार्थस्य साधनसम्पत्तिवाक्यार्थहेतुकत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् । तस्य परस्परातिशयाक्रियारूपधर्मसाम्यगम्यौपम्यकेवलप्रकृतधीसम्पद्गोचरया तुल्ययोगितयोज्जीवितेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥

**दक्षिणीयमवगम्य पङ्क्तिशः पङ्क्तिपावनमथ द्विजव्रजम् ॥**
**दक्षिणः क्षितिपतिर्व्यशिश्रणद्दक्षिणाः सदसि राजसूयकीः ॥ ३३ ॥**

**दक्षिणीयमिति ॥ अथाऽनन्तरं क्षितिपतिः राजा युधिष्ठिरः सदसि सभायां पङ्क्तिशः पङ्क्तौ पङ्क्तौ राजसूयिकीः राजसूयसम्बन्धिनीः दक्षिणाः यज्ञान्तढौकनानि व्यशिश्रणत् ददौ । तस्य दक्षिणा यज्ञाख्येभ्यः इति । किं कृत्वा द्विजव्रजं विप्रसङ्घम् अवगम्य प्राप्य, किंलक्षणं द्विजव्रजं पङ्क्तिपावनं स्वाध्यायश्रुतयमनियमादिभिः यः पङ्क्तिं पुनीते पवित्रयति स पङ्क्तिपावनः तम्, अत एव अपरं किंलक्षणं द्विजव्रजं दक्षिणीयं दक्षिणाम् अर्हतीति दक्षिणीयः तं, किंलक्षणो राजा दक्षिणः शक्तिमान् उदारो वा । 'दक्षिणे सरलोदारा'वित्यमरः ॥ ३३ ॥**

दक्षिणीयमिति ॥ अथानऽन्तरं दक्षिण औदार्यवान् । 'दक्षिणः सरलोदारौ' इत्यमरः । क्षितिपतिः राजा । दक्षिणामर्हतीति दक्षिणीयः । 'दाक्षिणीयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि' इत्यमरः । 'कडङ्करदक्षिणाच्छ च' इति छप्रत्ययः । तं पङ्क्तेः स्वाधिष्ठितायाः पावनं पावयितारं पङ्क्तिपावनम् । पावयतेः कर्तरि ल्युट् । द्विजव्रजम्, ऋत्विग्वर्गमित्यर्थः । पङ्क्तिशः पङ्क्त्यनुसारेणाऽधिगम्य प्राप्य सदसि राजसूयकीः । राजसूयकाण्डोक्ता इत्यर्थः । दक्षिणाशब्दः स्फुटार्थः । राजसूयेत्यत्र दक्षिणार्थ एव ढको विधानात् । व्यशिश्रणद्विश्राणयति स्म । वितीर्णवानित्यर्थः । 'विश्राणनं वितरणम्' इत्यमरः । 'श्रण दाने' इति धातोर्लुङ् णौ चङ्युपधाया ह्रस्वः । वृत्त्यनुप्रासोऽलङ्कारः ॥ ३३ ॥

**वारिपूर्वमखिलासु सत्क्रियालब्धशुद्धिषु धनानि बीजवत् ॥**
**भावि बिभ्रति फलं महद्द्विजक्षेत्रभूमिषु नराधिपोऽवपत् ॥ ३४ ॥**

**वारिपूर्वमिति ॥ स नराधिपो राजा युधिष्ठिरः अखिलासु समग्रासु द्विजक्षेत्रभूमिषु धनानि अवपत् द्रविणानि वपति स्म उप्तवान्, ददावित्यर्थः । द्विजाः ब्राह्मणा एव क्षेत्रभूमयः आवपनाऽवनयः तासु । कथं यथा भवति वारिपूर्वम् आदौ जलं दत्त्वा । एवंविधो हि विधिः, यद्दानादौ जलं दीयते । किंलक्षणासु द्विजक्षेत्रभूमिषु संस्क्रियालब्धशुद्धिषु संस्क्रिया संस्कारः कुलपाट्ट (?) तया लब्धा शुद्धिः निष्कलमषत्वं याभिस्तास्तथा तासु । पवित्रास्वित्यर्थः । किंलक्षणानि धनानि महत् अक्षयं भावि भविष्यत् फलं स्वर्गादिकं बिभ्रति वहमानानि । किमिवाऽवपदित्याह—किंवत् बीजवत् । यथा कश्चित् कीनाशः क्षेत्रभूमिषु बीजानि वपति, कथं वारिपूर्वम् । आदौ हि पानीयमारोप्यते । संस्क्रियया**

गोमयादिकया लब्धा शुद्धिः उत्कर्षो याभिस्तासु । बीजान्यपि भावि सारादिकं धान्यं महत् अलघु धारयन्ति ॥ ३४ ॥

वारिपूर्वामिति ॥ नराधिपो राजा सत्क्रियाभिरभिषेकसंस्कारैर्लब्धा शुद्धिर्निर्दोषता याभिस्तास्वखिलासु द्विजा एव क्षेत्रभूमयः केदारभूमयस्तासु । 'क्षेत्रं गेहे पुरे देहे केदारे योनिभार्ययोः' इति वैजयन्ती । भावि भविष्यन्महत्फलं स्वर्गादिकं धान्यादिकं च बिभ्रति । बिभ्राणानित्यर्थः । 'वा नपुंसकस्य' इति विकल्पान्नुमागमप्रतिषेधः । धनानि बीजवद्बीजैस्तुल्यं वारिपूर्वमुदकदानपूर्वकमवपदुप्तवान् । दत्तवानित्यर्थः । अत्र बीजवदित्युपमानम् , 'तेन तुल्यम्–' इति तुल्यार्थे वतेर्विधानात् । तथापि वापक्रियायोगाद् द्विजक्षेत्रेति रूपकसमासो नोपमितसमासः । किन्तु रूपकस्याङ्गमुपमा, तदुत्थापितत्वादिति सङ्करः ॥ ३४ ॥

**किं नु चित्रमधिवेदि भूपतिर्दक्षयन् द्विजगणानपूयत ॥**
**राजतः पुपुविरे निरेनसः प्राप्य तेऽपि विमलं प्रतिग्रहम् ॥ ३५ ॥**

**किमिति** ॥ भूपतिः राजा युधिष्ठिरः अधिवेदि अन्तर्वेद्यां द्विजगणान् ब्राह्मणपूगान् दक्षयन् दक्षिणयाऽर्चयन् सन् अपूयत पूतः, तु पुनः तत् किं चित्रं, नैतदाश्चर्यम् । यतस्तेऽपि द्विजगणाः अपि राजतो भूपतेः युधिष्ठिरात् विमलमनिन्द्यं श्रद्धापूतं प्रतिग्रहं प्राप्य परिग्रहं लब्ध्वा पुपुविरे पूताः । अतश्च ग्रहीतारो यत्र पूयन्ते, तत्र दातरि का गणना । किंलक्षणाद्राजतः निरेनसः निष्पापात् धर्मिष्ठात् । सपापात् किल प्रतिग्रहो दोषाय । उक्तं च—

> यो राज्ञः प्रतिगृण्हाति लुब्धादुच्छास्त्रवर्तिनः ।
> स याति नरकान्घोरान् सपुत्रपशुबान्धवः ॥ ३५ ॥

किमिति ॥ भूपतिरधिवेदि वेद्याम् । मखवेद्यामित्यर्थः । अत्र विभक्त्यर्थेऽव्ययीभावः । द्विजगणानृत्विग्गणान्दक्षयन्हर्षयन् दाक्षिणाप्रतिग्रहेण सदक्षिणान् कुर्वन् । प्रतिग्राहयन्नित्यर्थः । 'तत्क्षणे दाक्षिणां प्रतिगृह्ये'ति श्रुतिदर्शनात् । 'दक्ष नैपुण्ये' इति धातोर्ण्यन्ताल्लटः शत्रादेशः । अत एव 'निष्णाते दक्षिणे वापि नैपुण्ये निपुणेऽपि च' इति भट्टः । अपूयत पूतोऽभवदिति कर्मकर्तरि लङ् । किं चित्रं दाता पूत इति । न चित्रमित्यर्थः । किन्तु प्रतिग्रहीताऽपि पूत इति चित्रमाह । ते द्विजगणा अपि निरेनसो निष्पापात् राजतो राज्ञः । पञ्चम्यास्तासिल् । विमलं शुद्धं प्रतिग्रहं प्राप्य पुपुविरे पूता बभूवुः 'विशुद्धाच्च प्रतिग्रह' इत्यभिधानादिति भावः । अत्रापि पूञः कर्मकर्तरि लिट् । प्रतिग्रहीताऽपि शुद्ध इति विरोधः । स एव वाक्यार्थभूतश्चित्रत्वनिषेधहेतुरिति विरोधवाक्यार्थहेतुककाव्यलिङ्गयोरङ्गाङ्गिभावेन सङ्करः ॥ ३५ ॥

**स स्वहस्तकृतचिह्नशासनाः(१) पाकशासनसमानशासनः ॥**
**आशशाङ्कतपनाऽर्णवस्थितेर्विप्रसादकृत भूयसीर्भुवः ॥ ३६ ॥**

**स इति** ॥ स राजा भूयसीर्भुवः बह्वीर्भूमीः विप्रसात् अकृत ब्राह्मणायत्ताः चक्रे । द्विजेभ्यो ददावित्यर्थः । किमवधि किमित्याह—कथम् आशशाङ्कतपनाऽर्णवस्थितेः । कल्पान्तं यावदित्यर्थः । निशाकरदिवाकरसागरभूमीः मर्यादीकृत्य । किंलक्षणा भुवः स्वहस्तकृतचिह्नशासनाः स्वहस्तेन निजहस्तेन स्वहस्त एव वा कृतं विहितं चिह्नम् अङ्को येषां तानि स्वहस्तकृतचिह्नानि तथाविधानि शासनानि पट्टिकाः यासु तास्तथा ताः । न च कालान्तरे राजान्तरादेतासां हरणभयम् । किंलक्षणो राजा पाकशासनसमानशासनः इन्द्राज्ञातुल्यादेशः, अनुल्लङ्घ्याऽऽज्ञ इत्यर्थः ॥ ३६ ॥

स इति ॥ पाको नाम कोऽपि राक्षसस्तस्य शासनः शासको हन्ता पाकशासनः इन्द्रस्तेन समानं शासनं तुल्याज्ञा यस्य स इत्यर्थः । स राजा स्वहस्तेन कृतं लिखितं चिह्नं स्वनामलेखनादिलाञ्छनं येषु तानि शासना-

(१) शासनः ।

नि नियमपत्राणि यस्य सः । दत्तस्वहस्तलेखाङ्कितशासनः सन्नित्यर्थः । आ शशाङ्कतपनाऽर्णवस्थितेः शशाङ्कतपनार्णवानभिव्याप्य । आकल्पमित्यर्थः । अभिविधावाङ् । 'आङ् मर्यादाऽभिविध्योः' इति विकल्पादसमासः । भूयसीर्भुवो देयभूमीः विप्रसाद्विप्राधीनाः । 'दे ये त्रा च' इति चकारात्सातिप्रत्ययः । अकृत कृतवान् । दत्तवानित्यर्थः । कृञो लुङि तङ् 'उश्च' इति सिचः कित्त्वात् 'ह्रस्वादङ्गात्' इति सकारलोपो गुणाभावश्च । पाकशासनसमानशन इत्युपमानुप्रासयोः संसृष्टिः ॥ ३६ ॥

**शुद्धमश्रुतिविरोधि बिभ्रतं शास्त्रमुज्ज्वलमवर्णसङ्करैः ॥**
**पुस्तकैः सममसौ गणं मुहुर्वाच्यमानमशृणोद् द्विजन्मनाम् ॥ ३७ ॥**

शुद्धमिति ॥ असौ राजा द्विजन्मनां गणं द्विजानां वर्गं वाच्यमानम् आशिषं कार्यमाणम् अशृणोत शुश्राव । स्वस्तिवाचनं कुर्वन्तो ब्राह्मणा वीक्षिता इत्यर्थः । किं केवलं कैः समं पुस्तकान्यपि वाच्यमानानि अश्रौषीत् अथ पुस्तकैः समं तुल्यमिति अर्थान्तरम् । तदेव साम्यमाह—किंलक्षणं द्विजगणं शुद्धं पवित्रं निर्मायम्, अपरं किंलक्षणं द्विजगणं शास्त्रं मीमांसादिकं बिभ्रतं बिभ्राणं, किंलक्षणं शास्त्रम् अश्रुतिविरोधि अवेदविरुद्धं, वेदानुगामीत्यर्थः । अपरं किंलक्षणं द्विजगणम् अवर्णसङ्करैः उज्ज्वलं चतुर्णां वर्णानां ब्राह्मणादीनामसाङ्कर्येण उज्ज्वलं निर्मलममलीमसम् । ब्राह्मणस्य असाङ्कर्यं निष्कल्मषत्वमित्यर्थः । पुस्तकान्यपि शास्त्रं पुराणादिकं बिभ्रति । किंलक्षणं शास्त्रं शुद्धमनपशब्दम्, अपरं किंलक्षणं शास्त्रम् अश्रुतिविरोधि श्रवणमधुरम्, अपरं किंलक्षणं शास्त्रम् उज्ज्वलं सुबोधं, किंलक्षणैः पुस्तकैः अवर्णसङ्करैः अविद्यमानो वर्णसङ्करः अक्षरसाहित्यं येषु तानि अवर्णसङ्कराणि तैः सुस्पष्टलिपिभिः पुस्तकैः वाच्यमानमिति । अग्रजन्मा द्विजन्मा च ब्राह्मणः सद्भिरिष्यते ॥ ३७ ॥

शुद्धमिति ॥ असौ नृपः शुद्धमाचारपूतम् । अन्यत्र विभक्तिविपरिणामेन शुद्धैरकलङ्कैः । श्रुतिविरोधि वेदविरुद्धं न भवतीत्यश्रुतिविरोधि शास्त्रं बिभ्रतमात्मनि धारयन्तम् । सकलवैदिकशास्त्राभिज्ञमित्यर्थः । 'नाभ्यस्ताच्छतुः' इति नुम्प्रतिषेधः । अन्यत्र श्रुत्यविरोधिभिः पुराणादिभिः वाच्यमानमन्वयगुणादिक्रमेण प्रस्तूयमानम् । अन्यत्र वाच्यमानैर्द्विजगणेन व्याख्यायमानैरित्यर्थः । वचेर्ण्यन्तादिकात्कर्मणि लटः शानजादेशः । द्विजन्मनां ब्राह्मणानां गणम् अवर्णसङ्करैरसङ्कीर्णाक्षरैः, अन्यत्र जातिसङ्कररहितमिति विपरिणामः । पुस्तकैः समं पुस्तकाक्षरैर्वाक्यैः सह अशृणोत् । दानकाले प्रत्येकं ब्राह्मणानां गुणान् गोष्ठीश्च श्रुतवानित्यर्थः । मुखस्थविद्यानामपि पुस्तकधारणं विलक्षणत्वेनोक्तमित्यदोषः । अन्यत्र पुस्तकैः समं द्विजगुणमशृणोदिति, सम्बन्धिभेदे भिन्नयोः श्रवणयोरभेदाध्यवसायभेदेऽभेदरूपातिशयोक्तिचमत्कारिणी द्विजानां प्रकृतत्वात्पुस्तकानीव द्विजानिति वैवक्षिकोपमनोपमेयभावपर्यवसायिनी श्लेषसङ्कीर्णसहोक्तिरलङ्कारः ।

'सहार्थेनान्वयो यत्र भवेदतिशयोक्तितः ।
कल्पितौपम्यपर्यन्ता सा सहोक्तिरिहेष्यते' ॥

इति लक्षणात् । केचित् पुस्तकैः समं वाच्यमानमिति योजयित्वा पुस्तकेषु द्विजगणान्, लेख्येष्वायतमानानिति व्याचक्षते । तैः पुस्तकेषु शास्त्रभरणासम्भवादवर्णसङ्करेति श्लिष्टविशेषणावगतप्रकृतश्लेषभङ्गः पुस्तकानां वाचनकरणत्वात् समादिशब्दवैयर्थ्यमुक्तसहोक्त्यलङ्कारभ्रंशश्चेत्येवमादयो दोषा दुस्तरा इत्यलं विस्तरेण ॥ ३७ ॥

**तत्प्रतीत(१)मनसामुपेयुषां द्रष्टुमाहवनमग्रजन्मनाम् ॥**
**आतिथेयमनिवारिताऽतिथिः कर्तुमाश्रमगुरुः स नाऽश्रमत् ॥ ३८ ॥**

---

( १ ) तत्प्रणीत ।

तदिति ॥ स आश्रमगुरुः आश्रमाणां ब्रह्मचारिगृहस्थवानप्रस्थयतीनां रक्षकत्वात् गुरुः राजा युधिष्ठिरः अग्रजन्मनां द्विजन्मनाम् आतिथेयं कर्तुं पूजनं विधातुं न अश्रमत् न अखिद्यत । किंलक्षणानामग्रजन्मनां तत् आहवनं द्रष्टुं यज्ञमीक्षितुम् उपेयुषामागतानाम्, अपरं किंलक्षणानां प्रतीतमनसां हृष्टचित्तानां, किंलक्षणः सः अनिवारिताऽतिथिः अनिषिद्धागन्तुकः । यो यः आगच्छत, तं तमखिन्नेन मनसा आर्चिचदिति भावः ॥३८॥

तदिति ॥ अनिवारिता अप्रत्याख्याता अतिथयो येन स आश्रमाणां ब्रह्मचर्यादीनां गुरुर्नियन्ता स राजा । आ समन्ताज्जुहोत्यस्मिन्नित्याहवनं यागम् । जुहोतेर्ल्युट् । द्रष्टुमुपेयुषामागतानाम् । अत एव प्रणीतमनसां सत्कर्मदर्शनाद् हृष्टचित्तानामग्रजन्मनाम् । अतिथिषु साध्वातिथेयमातिथिसत्कारम्, 'पथ्यतिथि—' इत्यादिना ढञ्प्रत्ययः । कर्तुं नाश्रमत् न श्रान्तः । श्राम्यतेः पुषादित्वाल्लुङि च्लेरङादेशः । अत्राऽनिवारिताऽतिथित्वस्य विशेषणगत्या श्रमनिषेधहेतुत्वात्काव्यलिङ्गं तदनुप्रासेन संसृज्यते ॥ ३८ ॥

**मृग्यमाणमपि यद् दुरासदं भूरिसारमुपनीय तत्स्वयम् ॥**
**आसताऽवसरकाङ्क्षिणो बहिस्तस्य रत्नमुपदीकृतं नृपाः ॥ ३९ ॥**

मृग्यमाणमिति । तस्य राज्ञो युधिष्ठिरस्य अन्ये राजानः स्वयमेव रत्नं श्रेष्ठं वस्तु उपनीय आदाय अवसरकाङ्क्षिणः प्रस्तावमाकाङ्क्षमाणाः(?) सन्तः बहिरेव आसत तस्थुः। किंलक्षणं रत्नं यत् रत्नं मृग्यमाणमपि अर्थ्यमानमपि दुरासदं दुष्प्रापम्, अपरं किंलक्षणं सारमुत्कृष्टम्, अपरं किंलक्षणं रत्नं भूरि प्रभूतं न स्वल्पम्, अपरं किंलक्षणम् उपदीकृतं ढौकनिकार्थमानीतम् ॥ ३९ ॥

मृग्यमाणमिति ॥ यद्रत्नं मृग्यमाणमन्विष्यमाणमपि दुरासदं दुर्लभम् । भूरिसारं महासारमुपदीकृतमुपायनीकृतम् । मनसा यथासङ्कल्पितमित्यर्थः । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । तद्रत्नं श्रेष्ठवस्तु 'रत्नं श्रेष्ठे मणावपि' इति विश्वः । नृपाः स्वयमुपनीय तस्य राज्ञोऽवसरकाङ्क्षिणः सेवावसरं प्रतीक्षमाणा बहिरासत स्थिता इत्यैश्वर्यातिशयोक्तिः । अत्र रत्ने उपदात्वस्यारोप्यमाणस्य प्रकृतोपयोगात्परिणामालङ्कारः॥३९॥

**एक एव वसु यद्ददौ नृपस्तत्समापकमतर्क्यत क्रतोः ॥**
**त्यागशालिनि तपःसुते ययुः सर्वपार्थिवधनान्यपि क्षयम् ॥ ४० ॥**

एक एवेति ॥ एक एव केवल एव नृपोऽन्यो राजा यत् वसु धनं ददौ तदेव धनं लोकैरितिशेषः क्रतोः समापकं यज्ञस्य समाप्तिजनकम् अतर्क्यत अलक्ष्यत । तेनैव नूनं क्रतुः समाप्यते इति सर्वेषां बुद्धिरभूदित्यर्थः । तपःसुते धर्मात्मजे युधिष्ठिरे राज्ञि त्यागशालिनि उदारे सति सकलपार्थिवधनान्यपि सकलराजकवसून्यपि क्षयं ययुः अपचयमगमन् । सर्वमेव ददावित्यर्थः ॥ ४० ॥

एक एवेति ॥ एके नृपा यद्वसु धनं ददौ । उपायनमिति भावः । तद्धनमेव क्रतोः समापकं सम्पूरकमतर्क्यत । दक्षिणादानादिसर्वक्रतुव्ययपर्याप्ततया तर्कितमित्यर्थः । तपःसुते धर्मपुत्रे त्यागशालिनि सति सर्वपार्थिवधनान्यपि क्षयं व्ययं ययुः । अत्रैकपार्थिवधनस्य क्रतुसमापकत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः । तयोश्च सापेक्षत्वात्सजातीयसङ्करः ॥ ४० ॥

**प्रीतिरस्य ददतोऽभवत्तथा येन तत्प्रियचिकीर्षवो नृपाः ॥**
**स्पर्शितैरधिकमागमन् मुदं नाऽधिवेश्म निहितैरुपायनैः ॥ ४१ ॥**

प्रीतिरिति ॥ अस्य च राज्ञः तथा तेन प्रकारेण ददतः सतः प्रीतिरभवत् मुद् बभूव। येन तत्प्रियचिकीर्षवो नृपाः तस्य प्रियकारिणो राजानः स्पर्शितैः उपायनैः अस्मै निवेदितैः अधिकमतिशयेन मुदम् आगमन् हर्षं प्रापुः, न तु अधिवेश्मनिहितैः गृहप्रक्षिप्तैः । सर्वमेव

कथमस्माभिर्वस्तु न निवेदितम् इति तच्छङ्कया ते नृपा अचिन्तयन्नित्यर्थः । उक्तं च—

विश्राणनमतिसर्गः स्पर्शनमपवर्जनं वितरणं च ।
दानं विहापितं स्यात् प्रादेशनमंहतिश्च तथा ॥ ॥ ४१ ॥

प्रीतिरिति ॥ ददतो दानं कुर्वतोऽस्य राज्ञस्तथा तेनैव प्रकारेण राजोपायनानामर्थिसात्करणेनैव प्रीतिरभवदासीत् । न तु कोशगृहार्पणेनेत्यर्थः । कुतः—येन प्रकारेण तस्य राज्ञः प्रियं चिकीर्षवः प्रियं कर्तुमिच्छवः । मधुपिपासुप्रभृतित्वाद् द्वितीयासमासः । नृपाः स्पर्शितैः प्रतिपादितैः । 'स्पर्शनं प्रतिपादनम्' इत्यमरः । उपायनैरुपहारैराधिकं यथा तथा मुदमागमन् प्राप्ताः । तथैव प्रभुप्रीतिसिद्धेः सोपायनानां सिद्धिनियोगलाभाच्चेति भावः । अधिवेश्म वेश्मनि निहितैरुपायनैर्मुदं नागमन् । तथोक्तप्रयोजनासिद्धेरिति भावः । येनैव राज्ञो मोदः स्वस्य च महान् धर्मलाभः तेनोपायनानामर्थिसात्करणादेव राज्ञः प्रीतिरासीत् । न कोशगृहार्पणादित्यर्थः । अत एव दानसङ्ग्रहयोः प्रकृतयोः प्रीतेः सङ्ग्रहपरिहारेण दान एव नियमनात्परिसङ्ख्यालङ्कारः । 'एकस्याऽनेकत्र प्राप्तावेकत्र नियमनं परिसङ्ख्ये'ति लक्षणात् । एतेन सर्वस्वदानं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ४१ ॥

यं लघुन्यपि लघूकृताऽहितः शिष्यभूतमशिषत् स कर्मणि ॥
सस्पृहं नृपतिभिर्नृपोऽपरैर्गौरवेण ददृशेतरामसौ ॥ ४२ ॥

यमिति ॥ स राजा युधिष्ठिरः यं नृपं लघुन्यपि कर्मणि तुच्छेऽपि द्वाररक्षणादौ व्यापारे अशिषत् अयुङ्क्त, स नृपः अन्यैः अनभियुक्तैः नृपैः सस्पृहं साभिलाषं महता गौरवेण ददृशेतरां दृष्टः । कीदृगेष पुण्यभाक् यत् राजा स्वयं नियुङ्क्तेति । किंलक्षणं यं शिष्यभूतं शिष्यरूपतां गतम् । शिष्यः किल यत्र तत्र नियुज्यते । किंलक्षणो राजा लघूकृताऽहितः लघूकृताः क्षयं नीताः अहिता अरयो येन सः तथा ॥ ४२ ॥

यमिति ॥ लघूकृता अल्पीकृता अहिताः शत्रवो येन सः, स राजा शिष्येण तुल्यं शिष्यभूतम् । 'भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः' इति विश्वः । सुप्सुपेति नित्यसमासः । यं नृपं लघुन्यल्पेऽपि यज्ञीयपशुरक्षणादिकर्मण्यशिषदाज्ञापितवान् । 'सर्तिशास्त्यर्तिभ्यश्च' इति लुङि च्लेरङादेशः 'शास इदङ्हलोः' इतीकारः । असौ कर्मकरो नृपः अपरैस्ततोऽन्यैर्नृपतिभिः सस्पृहम् 'अहो संमान' इति साभिलाषं गौरवेण ददृशेतरामतिशयेन दृष्टः । दृशेः कर्मणि लिट्, 'तिङश्च' इति तरप्प्रत्यये 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्यामुप्रत्ययः । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययसंज्ञा । अत्र कर्मकरनृपस्येतरनृपकर्तृकाविशिष्टदर्शनकर्मत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः, तया राज्ञो निरङ्कुशाज्ञत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥४२॥

आद्यकोलतुलितां प्रकम्पनैः कम्पितां मुहुरनीदृगात्मनि ॥
वाचि रोपितवताऽमुना महीं राजकाय विषया विलेभिरे(१) ॥ ४३ ॥

आद्येति ॥ तेन राज्ञा युधिष्ठिरेण राजकाय नृपतिवृन्दाय विषया देशाः विलेभिरे प्रसादीकृताः । किंलक्षणेन अमुना वाचि महीं रोपितवता । मनसा किल निश्चयः, वाचा उच्यते दीयतामिदमस्येति । अथ च वाचि महीं रोपितवता बिभ्रता इत्यर्थान्तरम् । स कश्चिद्वाचि भुवं बिभर्ति यः सत्यं वक्ति । सत्येन भूमिर्ध्रियते । किंलक्षणां महीम् आद्यकोलतुलिताम् आद्यकोलेन श्रीवराहेण तुलिता परिच्छिन्ना ताम्, अपरं किंलक्षणां महीं प्रकम्पनैर्वातैः मुहुरसकृत् कम्पितां चलिताम् अत एव वाचि रोपिताम् । चलितं किल रोप्यते । किंभूतायां वाचि अनीदृगात्मनि न ईदृग् एतादृशः आत्मा स्वभावो यस्याः सा, महार्थत्वात् । न केनचित्तुलिता नापि कम्पिता न जितेत्यर्थः, इति व्यतिरेकोक्तिः ॥ ४३ ॥

---

(१) विभेजिरे ।

आद्येति ॥ आद्यकोल आदिवराहः । 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः । तेन तुलितां कल्पादौ उद्धृताम् । तथापि प्रकम्पनैः प्रक्षोभकैर्हिरण्याक्षप्रमुखैः कम्पितां क्षोभितां महीम् । अनादृगात्मन्येनंवरूपायां फेनाप्यकम्पितायामस्खलितायां वाचि रोपितवता स्थापितवता । स्थिरेण रोपणेन स्थिरीकुर्वतेत्यर्थः । अमुना राज्ञा राजकाय राज्ञां समूहाय । 'गोत्रोक्ष—' इत्यादिना वुञ्प्रत्ययः । विषया देशाः । 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इत्यमरः । विभेजिरे अस्यायमिति विभक्ताः । प्राक् विजयोद्धृतान् राज्ञः पुनः पदेषु स्थापयामासेत्यर्थः । अत्राऽऽदिवराहो महीमुद्धृतवानेव, वाचैवाऽसौ तु निरातङ्कं स्थापितवानित्युपमानादुपमेयस्याधिक्यकथनाद्व्यतिरेकालङ्कारः ॥ ४३ ॥

**आगताद्व्यवसितेन चेतसा सत्त्वसम्पदविकारिमानसः ॥**
**तत्र नाऽभवदसौ महाहवे शात्रवादिव पराङ्मुखोऽर्थिनः ॥ ४४ ॥**

**आगतादिति** ॥ तत्र महाहवे महायज्ञे राजसूये असौ राजा युधिष्ठिरः अर्थिनो याचकात्, जात्या एकवचनं, पराङ्मुखो न अभवत् । यत् यस्मै अरोचत तत्तस्मै ददावित्यर्थः । किंलक्षणः असौ सत्त्वसम्पदविकारिमानसः सत्त्वसम्पदा ज्ञानसमृद्ध्या अविकारि निर्विकारं मानसं चित्तं यस्य सः तथा लोभेन अहृतचित्तः, किंलक्षणात् अर्थिनः नृपात् मया नूनं दारिद्र्यमपास्यमितिव्यवसितं कृतनिश्चयं तेन मनसा चेतसा आगतात् प्राप्तात् । कस्मादिव पराङ्मुख इत्याह—शात्रवादिव शत्रुरेव शात्रवः तस्मात् । यथा योद्धुं कृतनिश्चयात् असौ राजा महाहवे सङ्ग्रामे वैरिणः पराङ्मुखो न भवति । यद्वशात् कार्पण्यविषादभयादीनि चेतसि स्थितिं न बध्नन्ति । 'दस्युशात्रवशत्रवः' इत्यमरः ॥ ४४ ॥

आगतादिति ॥ सत्त्वसम्पदा गुणाधिक्येन अविकारिमानसः, लोभाऽभिभवाभ्यामनुपप्लुतचित्त इत्यर्थः । 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः' इति विश्वः । असौ राजा तत्र तस्मिन् आसमन्ताज्जुह्वत्यस्मिन्नित्याहवो यागः । 'ऋदोरप्' इति जुहोतेरप्प्रत्यये गुणवादेशौ । आहूयन्ते शत्रवो यस्मिन्नित्याहवो युद्धम् । 'आङि युद्धे' इति ह्वयतेराङ्पूर्वादप्प्रत्ययः सम्प्रसारणम् । 'आहवो यागयुद्धयोः' इति विश्वः । महांश्चासौ स च महाहवस्तस्मिन्महाहवे व्यवसितेन निश्चितेन धनलाभं निश्चितवता । अन्यत्र शत्रोर्मृत्युरेवेति निश्चितवतेत्यर्थः । व्यवपूर्वात्स्यतेः सकर्मकत्वादप्यविवक्षिते कर्मकर्तरि क्तः । 'प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' इति वचनात्, चेतसा आगतात् । चेतसा स्वयं निश्चित्य अगतादित्यर्थः । अर्थिनो याचकात् । शत्रुरेव शात्रवः । स्वार्थेऽण्प्रत्ययो राक्षसवत् । तस्मादिव पराङ्मुखो नाभवत् ।

> 'आहवेष्वनिवर्तित्वं प्रजानां चैव पालनम् ।
> शुश्रूषा ब्राह्मणानां च राज्ञां श्रेयस्करं परम्' ॥

इति मनुस्मरणादिति भावः । श्लेषसङ्कीर्णेयमुपमा ॥ ४४ ॥

**नैक्षताऽर्थिनमवज्ञया मुहुर्याचितस्तु न च कालमक्षिपत् ॥**
**नाऽदिताऽल्पमथ न व्यकत्थत प्रत्त(१)मिष्टमपि नाऽन्वशेत सः ॥ ४५ ॥**

**नैक्षतेति** ॥ स राजा युधिष्ठिरः अर्थिनं याचकम् अवज्ञया न ऐक्षत अगौरवेण नाऽद्राक्षीत् । स कदाचित् सकृत् प्रार्थितो भविष्यति, नेत्याह—मुहुः पुनःपुनः याचितः याच्यते स्म । याचितः प्रार्थितः सन् कालं नाक्षिपत् कालक्षेपं न चकार । अविलम्बेन ददावित्यर्थः । धनाशया तु महुमुहुर्याच्ञा । कदाचिदेकवारं दातव्यं बहुभिर्वारैर्दद्यादित्याह—सः अल्पं न अदित स्तोकं न ददौ । कदाचिदपि श्लाघार्थं बहु दद्यादित्यर्थः । अथ दानं दत्वा न व्यकत्थत कीर्तनेन नाऽश्लाघत । अकथितत्वात्कदाचित्तापं भजेदित्याह—इष्टमपि स्ववल्लभमपि प्रत्तं दत्तं न अन्वशेत न अनुशेते स्म । दत्वा नाऽदूयतेत्यर्थः ॥ ४५ ॥

---

( १ ) व्यकत्थयद्दत्त ।

नैच्छतेति ॥ स राजा अर्थिनं याचकं मुहुरवज्ञयाऽनादरेण नैच्छत । तर्हि विलम्बितं किं, नेत्याह—याचितस्तु प्रार्थित एव कालं नाक्षिपन्न यापयामास । याचकबहुत्वात् । तर्ह्यल्पदाता नेत्याह—अल्पमपि नाऽदित न ददौ । किन्तु यथार्थिकाममिति भावः । ददातेर्लुङि तङि 'स्थाघ्वोरिच्च' इतीकारः, 'ह्रस्वादङ्गात्' इति सलोपः । तर्हि विकत्थनः किं, नेत्याह—न व्यकत्थयदात्मश्लाघां न चकार । कत्थ श्लाघायाम् । किञ्च इष्टं प्रियमपि दत्तं वस्तु नाऽन्वशेत नानुतप्तवान् । दत्तानुतापस्याऽतिप्रत्यवायहेतुत्वादिति भावः । अत्राऽर्थिसन्दोह-याच्ञादिबाहुल्यरूपकारणसामग्र्येऽपि विलम्बादिकार्याऽनुत्पत्तेर्विशेषोक्तिरलङ्कारः । 'तत्सामग्र्यादनुत्पत्तिर्विशेषोक्तिर्निगद्यते' इति लक्षणात् । तथा दातुः सात्त्विकं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ४५ ॥

**निर्गुणोऽपि विमुखो न भूपतेर्दानशौण्डमनसः परो(१)ऽभवत् ॥**
**वर्षुकस्य किमपः कृतोन्नतेरम्बुदस्य परिहार्यमूषरम् ॥ ४६ ॥**

**निर्गुणोऽपीति ॥ भूपतेः राज्ञो युधिष्ठिरस्य निर्गुणोऽपि अध्ययनादिगुणरहितोऽपि विमुखो न अभवत् निराशो न बभूव । किंलक्षणस्य भूपतेः दानशौण्डमनसः दाने दातव्ये शौण्डं प्रगल्भं प्रवणं मनो यस्य सः तथा तस्य दानप्रवणचित्तस्य । परः शत्रुरन्यो वा । ननु पात्रे देयमित्युक्तं शास्त्रेषु, तत्कथं निर्गुणाय दद्यादित्याह—अपः तोयानि वर्षुकस्य वर्षणशीलस्य अम्बुदस्य मेघस्य परितः समन्तात् किम् ऊषरं परिहार्यं भवति क्षारभूमिः किमु त्यक्तव्या । अपि तु कुभूमावप्यसौ वर्षत्येवेत्यर्थः । किंलक्षणस्य अम्बुदस्य कृतोन्नतेः खव्याप्तवपुषः ॥ ४६ ॥**

निर्गुणोऽपीति ॥ दानशौण्डमनसो दानशूरचित्तस्य । बहुप्रदस्येत्यर्थः । 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' । 'मत्ते शौण्डोत्कटक्षीबाः' इत्यमरः । भूपतेः पुरोऽग्रे निर्गुणस्तपोविद्यादिगुणहीनोऽपि विमुखो निष्फलो नाभवत्, किन्तु पूर्णकाम एवाऽभवत् । भूरिदाने सर्वस्यापि पात्रत्वादिति भावः । अत एव तेनाऽपात्रवर्षदोषोऽपि न करुणवृत्तेरित्याशयेन दृष्टान्तमाह—वर्षुकस्येति । अपो जलानि । 'न लोक—' इत्यादिना षष्ठीप्रतिषेधः । वर्षुकस्य वर्षणशीलस्य । 'लषपत—' इत्यादिना उकञ्प्रत्यये लघूपधगुणः । कृतोन्नतेः कृतोदयस्याऽम्बुदस्य । अम्बुदेनेत्यर्थः । 'कृत्यानां कर्तरि वा' इति षष्ठी । 'स्यादूषः क्षारमृत्तिका' इत्यमरः । तद्वत्क्षेत्रमूषरम् । 'ऊषवानूषरो द्वावप्यन्यलिङ्गौ स्थलं स्थली' इत्यमरः । 'ऊषशुषिमुष्कमधो रः' इति रप्रत्ययः । परिहार्यं त्याज्यं किम् । नेत्यर्थः । अत्र पर्जन्यभूपालयोर्वाक्यभेदेन बिम्बप्रतिबिम्बतया समानधर्माभिधानाद् दृष्टान्तालङ्कारः ॥ ४६ ॥

**प्रेम तस्य न गुणेषु नाऽधिकं न स्म वेद न गुणान्तरं च सः ॥**
**दित्सया तदपि पार्थिवोऽर्थिनं गुण्यगुण्य इति न व्यचारयत्(२) ॥४७॥**

**प्रेमेति ॥ स पार्थिवो राजा अर्थिनं याचकं गुणी अगुण्यश्च इति न व्यचारयत् । अयं गुणी गुणवान् दानार्हः, अयम् अगुण्यः न गुणमर्हतीति अगुण्यः । निर्गुणाय न देयमस्मै इति नालुलोच । सर्वत्रैव ददावित्यर्थः । कदाचित् गुणद्वेषी स्यादित्यत आह—तस्य राज्ञः गुणेषु अध्ययनाचारादिषु अधिकं न न प्रेम, अपि तु प्रेम एव । ननु कदाचित् गुणान्तराऽज्ञानं स्यात् तदवश्यमेव समदृष्टिर्भवतीत्याह—स राजा गुणान्तरं गुणानामन्तरं विशेषं न न वेद स्म, अपि तु वेद । कथं तर्हि अविचार इत्याह—किं कर्तुमिच्छया गुणप्रियोऽपि गुणज्ञोऽपि दातव्यसत्त्वेन गुणिनमगुण्यं न च व्यचारयत् । अर्थयते अवश्यं दातव्यमित्यर्थः ॥ ४७ ॥**

प्रेमेति ॥ तस्य राज्ञो गुणेष्वधिकं प्रेम नेति न, किन्त्वस्त्येवेत्यर्थः । राजा गुणान्तरं गुणविशेषं न वेद न वेत्ति स्मेति न च, किन्तु वेदैवेत्यर्थः । 'लट् स्मे' इति भूतार्थे लट्, 'विदो लटो वा' इति णलादिः ।

(१) पुरा० । (२) व्यजीगणत् ।

'सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति वामनः । सम्भावितयोरविमर्शादेवाऽगुणप्रीतिज्ञानयोर्निषेध- इति भावः । तदपि तथापि, पृथिव्या ईश्वरः पार्थिवः । 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यण्प्रत्ययः । दित्सया दातुमिच्छया । सर्वपात्रदानकौतुकेनेत्यर्थः । 'सनि मीमा—' इत्यादिना इसादेशः । 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । अर्थिनं याचकं 'गुणी गुणवान् अगुण्यो नायं गुणवान्' इति न व्यजीगणत् न गणयति स्म । गुणप्रियोऽपि गुणज्ञोऽपि दानशौण्डोऽर्थितया गुण्यगुण्यो न गणयामासेत्यर्थः । गणेर्णौ चङि 'ई च गणः' इत्यभ्यासस्य विकल्पादीकारः । अत्र गुणप्रियत्वगुणज्ञत्वरूपकारणसामग्र्येऽपि गुणागुणविमर्शरूपकार्याऽनुत्पत्तेः दित्सयेत्युक्तनिमित्ता विशेषोक्तिरुक्तलक्षणात् ॥ ४७ ॥

**दर्शनाऽनुपदमेव कामतः स्वं वनीपकजनेऽधिगच्छति ॥**
**प्रार्थनाऽर्थरहितं तदाऽभवद्दीयतामिति वचोऽतिसर्जने ॥ ४८ ॥**

**दर्शनेति ॥ इह लोकवशात् ददातिः प्रार्थनायां प्रैषे च वर्तते । उक्तं च—**

**देहि देहीति ददतः सैव (?) देहीति याचतः ।**
**अहो ! गिरितृणप्रख्या वचसः सारफल्गुता ॥**

**एवं स्थिते तदा तस्मिन् काले दीयतामित्येतद्वचनं प्रार्थनाऽर्थरहितं प्रार्थनालक्षणेन अर्थेन रहितं सत अतिसर्जन एव त्यागविषय एव अभवत् बभूव । ददातेः प्रैष एव लोडुत्पादितः, प्रार्थनायामित्यर्थः । कुत इत्याह—क सति वनीपकजने याचकलोके दर्शनाऽनुपदमेव आलोकसमनन्तरमेव कामतः यथेच्छं स्वं धनम् अधिगच्छति प्राप्तवति सति । अयाचितमेव राजा ददावित्यर्थः ॥ ४८ ॥**

दर्शनेति ॥ वनीपकजनेऽर्थिजने दर्शनाऽनुपदं राजविलोकनाऽनन्तरमेव । प्रार्थनामकृत्वेत्यर्थः । 'वनीपकौ याचनको मार्गणो याचकार्थिनौ' इत्यमरः । कामतो यथेच्छं स्वं धनमधिगच्छति लभमाने सति तदा दीयतामिति वचो दीयतामित्येतत्पदं प्रार्थना याच्ञा मह्यं दीयतामिति वाञ्छा सैवार्थस्तेन रहितं शून्यं सत् तदा अतिसर्जने त्यागेऽभवदवर्तत । मह्यं दीयतामित्यर्थिवाक्याभावादस्मै दीयतामिति दातृवाक्यमेवाऽन्वर्थमभूदित्यर्थः । अर्थिनामागमनमेव याचनमिति विवेकिना किं याच्ञादैन्यदर्शनचापलेनेति भावः । अत्र दीयतामिति वचः सम्प्रार्थनाऽर्थवर्जनेन । तेनाऽतिसर्जनार्थताकथनादेकस्याऽनेकत्वप्रसक्तावेकत्र नियमनाख्या परिसङ्ख्या ॥

**नाऽनवाप्तवसुनाऽर्थकाम्यता नाऽचिकित्सितगदेन रोगिणा ॥**
**इच्छताऽशितुमनाशुषा न च प्रत्यगामि तदुपेयुषा सदः ॥ ४९ ॥**

**नेति ॥ अर्थकाम्यता धनेच्छुना तत् सदः तां सभाम् उपेयुषा प्राप्तवता सता अनवाप्तवसुना अप्राप्तधनेन न प्रत्यगामि न प्रतीपं गतम्, अपि तु धनमासाद्य । अर्थं धनं काम्यति वाञ्छति इति अर्थकाम्यन्, तेन अर्थकाम्यता । तथा रोगिणा व्याधितेन अचिकित्सितगदेन अनुन्मूलितव्याधिना सह न प्रत्यगामि, अपि तु स्वस्थेन । तथा अशितुमिच्छता भोक्तुं वाञ्छता वा अनाशुषा अभुक्तेन सता न प्रत्यगामि न प्रतिगतम् , अपि तु तृप्तेनेति सर्वकामप्रदत्वोक्तिः ॥ ४९ ॥**

नेति ॥ अर्थकाम्यता अर्थमात्मन इच्छता धनार्थिना । 'काम्यच्च' इति काम्यच्प्रत्यये सनाद्यन्तत्वेन धातुत्वाल्लटि शत्रादेशः । तत्सद उपेयुषा प्राप्तवता पुरुषेणाऽनवाप्तवसुनाऽलब्धधनेन न प्रत्यगामि न प्रत्यावर्ति । रोगिणोपेयुषा अचिकित्सितगदेनाऽशमितरोगेण । 'रोगव्याधिगदामयाः' इत्यमरः । न प्रत्यगामि । अशितुं भोक्तुमिच्छता उपेयुषा अनाशुषा च अनाशितेन, अभुक्तवतेत्यर्थः । 'उपेयिवाननाश्वाननूचानश्च' इति क्वसुप्रत्ययान्तो निपातितः । न प्रत्यगामि । किन्तु सर्वेणापि पूर्णकामेनैव प्रत्यगामीत्यर्थः । गमेर्भावे लुङ् । अत्रार्थिरोगिक्षुधितानां प्रकृतानामेव पूर्णकामत्वसाम्यात्प्रम्येऽपम्यत्वात्केवलप्रकृतविषया तुल्ययोगिता । तथा च यो यत्काम आगतः, स तत्सर्वमेवाऽस्मादभजतेति व्यज्यते ॥ ४९ ॥

**स्वादयन् रसमनेकसंस्कृतप्राकृतैरकृतपात्रसङ्करैः ॥**
**भावशुद्धिविहितै(१)र्मुदं जनो नाटकैरिव बभार भोजनैः ॥ ५० ॥**

**स्वादयन्निति ॥** तदा जनो बुभुक्षितलोकः भोजनैर्मुदं बभार भुक्तिभिर्हर्षं दधे । भुञ्जानः सुतुतोषेत्यर्थः । किंलक्षणो जनः रसं मधुरादिकं षड्विधं स्वादयन् अनुभवन्, किंलक्षणैर्भोजनैः अनेकसंस्कृतप्राकृतैः अनेकानि बहूनि संस्कृतानि मांसादीनि प्राकृतानि फलशाकादीनि येषु तानि तथा तैः । यद् दिव्यद्रव्यान्तरे संस्कारार्थपक्वाऽपक्वसंमार्जितादिकं भोजनं संस्कृतम् ,अन्यत्तु द्राक्षादिकमनाहार्यं प्राकृतम्।अपरं किंलक्षणैर्भोजनैः अकृतपात्रसङ्करैः अकृतः न विहितः पात्रसङ्करः सहभोजनं येषु तानि तथा तैः, अपरं किंलक्षणैः भोजनैः भावशुद्धिविहितैः भावशुद्ध्या निर्मलेन चित्तेन विहितानि दत्तानि तैः । एवंविधैर्भोजनैः जनो मुमुदे । कैरिव नाटकैरिव । यथा नाटकैः सामाजिकजनः, तथा तुतोषेत्यर्थः । इत्यौपम्यम् । सहोक्तिः । यज्ञे हि दशरूपकमपि प्रीतये प्रस्तूयते । किंलक्षणः सामाजिकजनः रसं शृङ्गारादिकं विविधं स्वादयन् अनुभवन् । रसानां हि आस्वादनत्वात् रसत्वम् । उक्तं च—

अनेकद्रव्यसंयुक्तैर्व्यञ्जनैर्बहुभिर्वृतम् ।
आस्वादयन्ति भुञ्जाना रसं भुक्तभुजो यथा ॥
भावाऽभिनयसम्बन्धाः स्थायिभावास्तथाऽपरे ।
आस्वादयन्ति मनसा तस्मान्नाट्यरसः स्मृतः ॥

किंलक्षणैर्नाटकैः अनेकसंस्कृतप्राकृतैः अनेकं बहुभेदं संस्कृतं प्राकृतं च येषु तानि तथा तैः । संस्कृतभाषायामनेकत्वं गद्यपद्यादिरूपेण, प्राकृतभाषायां तु मागधशौरसेनादिभेदेन । अपरं किंलक्षणैर्नाटकैः अकृतपात्रसङ्करैः अकृतः पात्राणां सङ्करो मिश्रीभावो येषु तानि तथा तैः । यस्य पात्रस्य येन सह प्रवेशनिष्क्रमौ, तस्य तेनैव कृतावित्यर्थः । अपरं किंलक्षणैर्नाटकैः भावशुद्धिविहितैः भावा रत्यादयः तेषां शुद्धिः रससंस्कारः तया विहितैः । रसविभागेन विभावा उक्ताः ॥ ५० ॥

स्वादयन्निति ॥ अनेकानि बहूनि संस्कृतानि हिङ्गुमरिचादिना कृतसंस्काराणि प्राकृतानि प्रकृतिसिद्धानि संस्कारं विना स्वादूनि कृतानि फलादीनि च येषु तैः, अन्यत्राऽनेकविचित्रसंस्कृतप्राकृतौ भाषाविशेषौ येषु तैः । अकृतः पात्राणां भाजनाम् अन्यत्र भूमिकानां च सङ्करो व्यतिकरो येषु तैः । भावशुद्धिः पदार्थानां मृष्टता, अथ वा भावशुद्धिः गर्हाविरहः तत्सहितैः । अन्यत्र भावाः स्थायिनो रत्यादयस्तेषां शुद्धिः सजातीयविजातीयाऽतिरस्कृतरूपत्वम् ।

'सजातीयैर्विजातीयैरतिरस्कृतमूर्तिमान् ।
यावद्रसं वर्तमानः स्थायीभाव उदाहृतः' ॥

इति लक्षणात् । तत्सहितैर्भोजनैरभ्यवहार्यैर्नाटकै रूपकविशेषैरिव रसं मधुरादिकं शृङ्गारादिकं च स्वादयन्ननुभवन् जनो भोक्तृजनः सामाजिकजनश्च मुदमानन्दं बभार । श्लेषसङ्कीर्णेयमुपमा ॥ ५० ॥

**रक्षितारमिति तत्र कर्मणां(२) न्यस्य दुष्टदमनक्षमं हरिम् ॥**
**अक्षतानि निरवर्तयत्तदा दानहोमयजनानि भूपतिः ॥ ५१ ॥**

**रक्षितारमिति ॥** स भूपती राजा युधिष्ठिरः तत्र मखे हरिं श्रीकृष्णं कर्मणां क्रियाणां रक्षितारं गोपायकं न्यस्य नियुज्य इति इत्थमेव अक्षतानि अखण्डानि दानहोमयजनानि निरवर्तयत् समापयत् । परस्वप्रतिपादनं दानम् , अग्नावाज्यादिप्रक्षेपो होमः, देवतो-

(१) सहितै० । (२) कर्मणि ।

द्देशेन द्रव्यत्यागो यजनम् । किंलक्षणं हरिं दुष्टदमनक्षमं विघ्नादिनाशनसमर्थम् । अत एव रक्षायां नियोगः ॥ ५१ ॥

रक्षितारमिति ॥ इतीत्थं भूपतिर्युधिष्ठिरः तत्र कर्मणि राजसूयाऽध्वरे दुष्टानां दमने मर्दने क्षमं समर्थं हरिं रक्षितारं विघ्नेभ्यस्त्रातारं न्यस्य निधाय अक्षतान्यविहतानि दानहोमयजनानि निरवर्तयदन्वतिष्ठत् । स्वकीयस्य द्रव्यस्य स्वस्वत्वनिवृत्तिपरस्वत्वोत्पादनं दानम् । देवतोद्देशेनाऽग्नौ हविषः प्रक्षेपो होमः । हुतस्य देवतोद्देशेन वाङ्मनसाभ्यां न ममेति त्यागो यागः । अत्र दुष्टदमनक्षमत्वस्य विशेषणगत्या हरे रक्षाधिकारहेतुन्यासहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ ५१ ॥

**एक एव सुसखैष सुन्वतां शौरिरित्यभिनयं(१) वितन्वती ॥**
**यूपमङ्गुलिमिवोदनीनमद्(२) भूश्चषालतुलिताऽङ्गुलीयकम् ॥ ५२ ॥**

**एक एवेति** ॥ भूः पृथ्वी यूपम् उदनीनमत् यज्ञस्तम्भम् उन्नमयामास । यज्ञसमासौ हि खादिरः शैंशपः पालाशः शामिलो(?)वा यूपोऽवनौ रोप्यते । किंलक्षणं यूपं चषालतुलिताऽङ्गुलीयकं चषालेन यज्ञभाण्डेन तुलितमनुकृतम् अङ्गुलीयकं करशाखाभरणं येन सः तथा तम् । किंलक्षणा भूः, उत्प्रेक्ष्यते—अभिनयं वितन्वती नृत्यविशेषं कुर्वती उच्चकैः उच्चैस्तराम् अङ्गुलिमिव करशाखामिव उदनीनमत् उदशिश्रियत् । कुत इत्याह—सुन्वतां यायजूकानाम् एषः असौ शौरिरिति श्रीकृष्णः एक एव सखा सुसहायः । वरमेतेन यज्वना निर्विघ्नं यज्ञः समाप्यते, इति चिन्तयन्ती भूर्विस्मयवशाच्छोटिकां ददती अङ्गुलीयकभूषितामङ्गुलिमिव चषालं यूपमुन्नतीचकारेत्यर्थः ॥ ५२ ॥

एक एवेति ॥ सुन्वतां सोमाभिषवं कुर्वताम् । सोमयाजिनामित्यर्थः । सुनोतेर्लटः शत्रादेशः । सुसखा सत्सहायः । 'न पूजनात्' इति समासान्तप्रतिषेधः । एष शौरिरेक एवेत्यभिनयादिव तद्व्यञ्जकचेष्टां कृत्वेवेत्युत्प्रेक्षा । 'व्यञ्जकाभिनयौ समौ' इत्यमरः । भूर्देवयजनभूमिः चषालेन यूपकटकेन । 'चषालो यूपकटकः' इत्यमरः । तेन तुलितम् । समीकृतमित्यर्थः । तुलयतेः 'तत्करोति—' इति ण्यन्तात्कर्मणि क्तः । तदङ्गुलीयकमूर्मिका यस्य तम् । अङ्गुलीयकोपमानचषालमित्यर्थः । 'अङ्गुलीयकमूर्मिका' इत्यमरः । 'जिह्वामूलाङ्गुलेश्छः' इति भावे छप्रत्ययः । उच्चकैरुन्नतं यूपं पशुबन्धनदारुविशेषो रूपकं स्वरूपं यस्य तं भुजमनीनमदुन्नमितवती । नमेर्णौ चङि सन्वत्कार्यम् । अत्र सापेक्षत्वादुपमोत्प्रेक्षयोः सङ्करः ॥ ५२ ॥

**इत्थमत्र विततक्रमे क्रतौ वीक्ष्य धर्ममथ धर्मजन्मना ॥**
**अर्घदानमनु नोदितो(३) वचः सभ्यमभ्यधित शन्तनोः सुतः ॥ ५३ ॥**

**इत्थमिति** ॥ अथाऽनन्तरम् इत्थमनेन प्रकारेण विततक्रमे विस्तीर्णपरिपाटीके क्रतौ मखे शन्तनोः सुतः भीष्मः सभ्यं सभायां वक्तुं योग्यं वचः अभ्यधित वाक्यमवोचत् । किंलक्षणः शन्तनोः सुतः यतो धर्मजन्मना धर्मपुत्रेण राज्ञा युधिष्ठिरेण अर्घदानम् अनु उद्दिश्य नोदितः प्रेरितः, किं कृत्वा धर्मं वीक्ष्य आचारमालोच्य । यज्ञान्ते हि अर्घो गुणवते देयः ॥ ५३ ॥

इत्थमिति ॥ इत्थमत्र क्रतौ विततक्रमे विस्तृतानुष्ठाने सति अथाऽनन्तरं धर्माज्जन्म यस्य तेन धर्मजन्मना धर्मात्मजेन । 'जन्माद्युत्तरपदो बहुव्रीहिर्व्यधिकरण' इति वामनः । धर्मं वीक्ष्य । धर्मशास्त्रमनुस्मृत्येत्यर्थः । अर्घदानं पूजादानमनु । सदस्यपूजामुद्दिश्येत्यर्थः । 'मूल्ये पूजाविधावर्घः' इत्यमरः । चोदितः कस्मै देयमिदमिति पृष्टः शन्तनोः सुतो भीष्मः सभ्यं सभायां साधु । 'सभाया यः' इति यप्रत्ययः । वचो वाक्यमभ्यधिताऽभिहितवान् । दधातेर्लुङि तङि 'स्थाघ्वोरिच्च' इति किच्चे 'ह्रस्वादङ्गात्' इति सकारलोपः । वृत्त्यनुप्रासः ॥ ५३ ॥

---

(१) ०नयादिवोच्चकैः । (२) यूपरूपकमनीनमद्भुजं । (३) चोदितो ।

गाङ्गेयः किमुवाचेत्याह—

**आत्मनैव गुणदोषकोविदः किं न वेत्थ(१) करणीयवस्तुषु ॥**

**यस्तथापि न गुरून्न पृच्छसि त्वं क्रमोऽयमिति तत्र कारणम् ॥ ५४ ॥**

**आत्मनैवेति** ॥ हे राजन् ! करणीयवस्तुषु कृत्यशरीरेषु मध्ये किं त्वमात्मनैव स्वयमेव न वेत्थ न जानासि, सर्वमेव कार्यजातमवैषि इत्यर्थः । यतोऽसि त्वं गुणदोषकोविदः युक्ताऽयुक्तविशेषज्ञः । यद्यप्येवं तथापि गुरून् मान्यान् न पृच्छसि इति न, अपि तु पृच्छसि । तत्र प्रश्ने क्रमोऽयमिति कारणम् । तेन प्रष्टव्या गुरवः इत्याचारत्वेन पृच्छसि, न तु संशयान् इत्यर्थः ॥ ५४ ॥

अथासर्गसमाप्तेः भीष्मवचःप्रपञ्चमेव सफलं दर्शयति—

**आत्मनैवेति** ॥ तत्रात्मनो बहुमानकरणात्प्रीतस्तत्रभवान् भीष्मो राजानं तावदुत्साहार्थकेनोपश्लोकयति-वेत्तीति विदो ज्ञाता । इगुपधलक्षणः कप्रत्ययः । कसो विद्यास्थानस्य विदः कोविदः, गुणदोषयोः कोविदो विवेक्ता करणीयवस्तुषु कर्तव्यार्थेष्वात्मनैव स्वयमेव । परोपदेशाऽनपेक्षयैवेत्यर्थः । प्रकृत्यादित्वात्तृतीया । किं न वेत्सि । सर्वं जानासीत्यर्थः । तथापि त्वं ज्ञाताऽपि गुरून् न पृच्छसीति न, किन्तु पृच्छस्येवेति यत् । ज्ञानप्रसक्तं न पृच्छसीति वारणाय नञ्द्वयम् । तत्र गुर्वनुयोगे अयं क्रम इति न्यायः सदाचारपरिपाटीत्येतदेव कारणं, न त्वज्ञानमित्यर्थः । अत्र कर्तव्यार्थप्रश्नस्याऽज्ञानहेतुकत्ववारणेनाऽपरहेतुकत्वे नियमनात्पूर्वोक्तलक्षणपरिसङ्ख्यानम् ॥ ५४ ॥

**स्नातकं गुरुमभीष्टमृत्विजं संयुजा च सह मेदिनीपतिम् ॥**

**अर्घभाज इति कीर्तयन्ति षट् ते च ते युगपदागताः सदः ॥ ५५ ॥**

**स्नातकमिति** ॥ हे राजन् ! बुधाः षट् इमान् अर्घभाज इति पूज्यानिति कीर्तयन्ति शिष्टा ब्रुवन्ति । कान् तान् इत्याह—स्नातकं साङ्गवेदाध्यापकम्, अपरं गुरुमाचार्यं, तथा अभीष्टं प्रियं, तथा ऋत्विजं याजकं, तथा मेदिनीपतिं पार्थिवं केन सह संयुजा सह जामात्रा सह । हे नृप ! तेऽपि षट् ते तव युगपत् तुल्यकालमेव सदः आगताः सभां प्राप्ताः वर्तन्ते । स्नातकादिभ्यः सर्वकर्मकत्वात् एवं भवत्येवेति यथा अनुमितिस्नातकं सममेवेदं व्रतम् (?) ॥ ५५ ॥

एवं राजानमुपश्लोक्य प्रश्नस्योत्तरमाह—

**स्नातकमिति** ॥ स्नातको गृहस्थविशेषस्तम्, गुरुं पित्रादिकम्, अभीष्टमिष्टबन्धुम्, ऋत्विजं याजकम्, संयुज्यत इति संयुक् सम्बन्धी जामाता तेन सह मेदिनीपतिं राजानं च । तं च मेदिनीपतिं चेत्यर्थः । षट् षडेतान् अर्घभाजः पूजार्हा इति । इति शब्देनाभिहितत्वान्न कर्मणि द्वितीया । यथाऽऽह वामनः—'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः, परिगणनस्य प्रायिकत्वात्' इति । कीर्तयन्ति कथयन्ति, वृद्धा इति शेषः । न च ते दूरा इत्याह—ते च षडपि ते तव सदः सभां युगपदागताः प्राप्ताः । अत्र स्नातकादीनां प्रकृतानामेवाऽर्घभाक्त्वसाधर्म्यादौपम्याऽवगमात्तुल्ययोगिताभेदः ॥ ५५ ॥

'ते च ते युगपदागताः सदः' इत्येतदेव द्रढयति—

**शोभयन्ति परितः प्रभाविनो(२) मन्त्रशक्तिविनिवारिताऽऽपदः ॥**

**त्वन्मखं मुखभुवः स्वयम्भुवो भूभुजश्च परलोकजिष्णवः ॥ ५६ ॥**

**शोभयन्तीति** ॥ हे भगवन् ! स्वयम्भुवो मुखभुवः ब्राह्मणाः । मुखाज्जाता ब्राह्मणा भण्यन्ते । ते च विप्राः भूभुजो राजानश्च त्वन्मखं तव यज्ञं परितः समन्तात् शोभयन्ति

---

( १ ) वेत्सि । ( २ ) प्रतापिनो ।

भूषयन्ति । किंलक्षणाः द्विजाः तावत् प्रभाविनः तपःप्रभावयुक्ताः, अपरं किंलक्षणा द्विजाः मन्त्रशक्तिविनिवारिताऽऽपदः मन्त्रशक्त्या वेदबलेन विनिवारिता निवर्तिता आपदो विषादिकृता उपद्रवा यैस्ते तथा, अपरं किंलक्षणा विप्राः परलोकजिष्णवः, चिरञ्जीवित्वात् यमलोकजेतारः शुभाचरणाद्वा परलोकजेतारः । राजानोऽपि प्रभाविनः प्रभुशक्तियुक्ताः, तथा मन्त्रशक्त्या नीतिशास्त्रबलेन विनिवारिताऽऽपदः शमितकष्टाः, अपरं परलोकजिष्णवः शत्रुपूगस्य जिष्णवोऽभिभाविनः ॥ ५६ ॥

शोभयन्तीति ॥ किञ्च प्रतापयितुं शीलं येषां ते प्रतापिनः शत्रुतापकाः । ताच्छील्ये णिनिः । अन्यत्र तेजस्विनः । 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरः । 'अत इनिठनौ' इति इन्प्रत्ययः । मन्त्रशक्त्या वेदमाहिम्ना, अन्यत्र विचारसामर्थ्येन विनिवारिता आपदो दैवमानुषविपत्तयो यैस्ते । 'वेदभेदे गुप्तवादे मन्त्रः' इत्यमरः । परलोकस्य लोकान्तरस्य शत्रुजनस्य च जिष्णवो जयशीलाः । स्वयम्भुवो ब्रह्मणो मुखभुवो मुखजाता ब्राह्मणाः । 'ब्राह्मणोऽस्य मुखमासीत्' इति श्रुतेः । भूभुजो राजानश्च त्वन्मखं तव क्रतुं परितः शोभयन्ति परिष्कुर्वन्ति । सर्वेऽप्यागत्य वसन्तीत्यर्थः । अत्र राज्ञां ब्राह्मणानां च प्रकृतानामेव प्रतापादिसाधर्म्येणोपमानात्तुल्ययोगिताभेदः । साधर्म्यं च श्लेषानिबन्धनमिति सङ्करः ॥ ५६ ॥

**आभजन्ति गुणिनः पृथक्पृथक् पार्थ ! सत्कृतिमकृत्रिमाममी ॥**
**एक एव गुणवत्तमोऽथ वा पूज्य इत्ययमपीष्यते विधिः ॥ ५७ ॥**

आभजन्तीति ॥ हे राजन् ! पार्थ ! हे पृथायाः कुन्त्याः सूनो ! अमी गुणिनः स्नातकादयः अकृत्रिमां महतीं सत्कृतिमर्हणां पृथक् पृथक् प्रत्येकं प्रत्येकम् आभजन्ति अर्हन्ति । षण्णां सन्निधौ षडप्यर्थाः इत्यर्थः । अथ वा अयमपि विधिः इष्यते असावपि कर्तव्यार्थोपदेशः वाञ्छ्यते, यत् एक एव केवल एव गुणवत्तमः पूजायोग्यः । प्रकृष्टो गुणवान् गुणवत्तमः ॥ ५७ ॥

आभजन्तीति ॥ हे पार्थ ! पृथापुत्र ! 'तस्येदम्' इत्यण् । सामान्यस्य योग्यविशेषपर्यवसाननियमादपत्यार्थलाभः । अन्यथा स्त्रीभ्यो ढक् स्यात् । गुणिनो गुणाढ्या अमी पूर्वश्लोकद्वयोक्ताः स्नातकादयः पृथक् पृथक् प्रत्येकमकृत्रिमामकपटां सत्कृतिं सत्कारमाभजन्ति अर्हन्ति । सममेषां प्रत्येकं पूजा कार्येत्यर्थः । अथ स्वाभिमतं पक्षान्तरमाह—अथ वेति । अथ वा गुणवत्तमोऽतिगुणवानेक एव पूज्य इत्ययमपि विधिः शास्त्रमनुष्ठानं वेष्यते, वृद्धैरिति शेषः । अत्र स्नातकादीनां पूज्यत्वे गुणो विशेषणगत्या हेतुरिति काव्यलिङ्गभेदः । तदपेक्षया गुणवत्तमत्वमेकस्यैव पूज्यत्वे तथैव हेतुरिति काव्यलिङ्गान्तरमिति सजातीयसङ्करः ॥

**अत्र चैष सकलेऽपि भाति मां प्रत्यशेषगुणबन्धुरर्हति ॥**
**भूमिदेवनरदेवसङ्गमे पूर्वदेवरिपुरर्हणां हरिः ॥ ५८ ॥**

अत्रेति ॥ हे राजन् ! अस्मिन् भूमिदेवनरदेवसङ्गमे ब्राह्मणनृपतिसमागमे सकलेऽखिले सम्मेऽपि एष हरिः श्रीकृष्णः अर्हणां पूजाम् अर्हति पूज्यो भवति, मां प्रति भाति। भगवानेव अर्हति, मम प्रतिभासते इत्यर्थः । किंलक्षणो हरिः पूर्वदेवरिपुः पूर्वदेवानां सुरशत्रूणां रिपुः, अपरं किंलक्षणो हरिः अशेषगुणबन्धुः सकलगुणाधारः ॥ ५८ ॥

अथ कस्तथा सर्वोत्तरः पुमानस्तीत्याकाङ्क्षायां, कोऽन्यो हरिं विनेत्याह—

अत्रेति ॥ अत्राऽस्मिन्कालेऽपि भूमिदेवा ब्राह्मणाः नरदेवा राजानस्तेषां सङ्गमे । ब्राह्मणक्षत्रियसमवाय इत्यर्थः । अशेषगुणानां बन्धुः सुहृत् । सर्वगुणाढ्य इत्यर्थः । असाधारणगुणानाह—पूर्वदेवाः सुरद्विषस्तेषां रिपुर्हन्ता एष हरिः कृष्णः अर्हणां पूजामर्हति प्राप्नोतीति मामाधिकृत्य भाति । मम प्रतिभातीत्यर्थः । अन्ये तु नार्हन्तीत्यपि सिद्धमिति भावः । अत्र तत्रान्येषु च प्रसक्तायां पूजायां हरावेव नियमात्परिसङ्ख्यालङ्कारः ।

'एकस्य वस्तुनः प्राप्तावनेकत्रैकधा यदा ।
एकत्र नियमः सा हि परिसङ्ख्या निगद्यते' ॥

इति लक्षणात् ॥ ५८ ॥

**मर्त्यमात्रमवदीधरद्भवान् मैनमानमितदैत्यदानवम् ॥**
**अंश एष जनताऽतिवर्तिनो वेधसः प्रतिजनं कृतस्थितेः ॥ ५९ ॥**

**मर्त्यमात्रमिति** ॥ हे राजन् ! भवान् एनममुं श्रीकृष्णं मर्त्यमात्रं मा अवदीधरत् मनुष्यमात्रं माऽवज्ञासीः, किंलक्षणमेनम् आनमितदैत्यदानवं वशीकृतदितिजदनुसुतम् । कस्तर्हि अयमित्यत आह—वेधसः प्रजापतेः श्रीनारायणस्य एषः अंशो भागः । तर्हि कदाचित् वेधा अपि मर्त्यः स्यादित्यत आह—किंभूतस्य वेधसः जनताऽतिवर्तिनः सकललोकाऽतिक्रान्तस्य । दुर्ज्ञानस्येत्यर्थः । अपरं किंलक्षणस्य वेधसः प्रतिजनं कृतस्थितेः सर्वदेहिषु कृताऽवस्थानस्य, आत्मरूपत्वात् ॥ ५९ ॥

ननु तस्मिन् ब्राह्मणक्षत्रियसमूहे कथमस्यैव पूज्यत्वमित्याशङ्क्य सर्वोत्तमत्वादित्याशयेनाऽऽसर्गसमाप्तेरेनं स्तौति—

मर्त्यमात्रमिति ॥ आनमिताः प्रह्वीकृता दैत्या दितिसुताः दानवा दनुसुताश्च येन तमेनं हरिं भवान् मर्त्यमात्रं मनुष्यमात्रं माऽवदीधरन्न जानीयात् । 'शेषे प्रथमः' इति प्रथमपुरुषः । कुतः—एष कृष्णो जनताऽतिवर्तिनः सर्वलोकाऽतीतस्य प्रतिजनं कृतस्थितेश्च, सर्वभूतान्तर्यामिण इत्यर्थः । वेधसः परमात्मनोऽशः कला । अतो न मर्त्यमात्रमित्यर्थः । अत एव वाक्यहेतुकं काव्यलिङ्गम् ॥ ५९ ॥

**ध्येयमेकमपथे स्थितं धियः स्तुत्यमुत्तममतीतवाक्पथम् ॥**
**आमनन्ति यमुपास्यमादराद्दूरवर्तिनमतीव योगिनः ॥ ६० ॥**

**ध्येयमिति** ॥ हे राजन् ! योगिनोऽध्यात्मविदः यं हरिम् एवंविधमामनन्ति कथयन्ति । किंलक्षणं हरिम् एकं प्रधानम्, अपरं किंलक्षणं ध्येयं ध्यानगम्यं चिन्त्यं स्थूलरूपम्, अपरं किंलक्षणं धियः बुद्धेः अपथे स्थितम् अमार्गे वर्तमानम् । पुरुषो हि मनसोऽप्यविषयः । उक्तं च-'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' । यदि वा बुद्धितत्त्वाऽतिक्रमेण तत्पथे स्थितम् । अन्या हि बुद्धिरन्य आत्मा । विरुद्धं चैतत्—यो बुद्धेरगोचरः, स कथं ध्येयो भवति । अविरोधस्तु उक्त एव । अपरं किंलक्षणं स्तुत्यं स्तवाऽर्हम्, अपरं किंलक्षणम् उत्तममुत्कृष्टम् । ततस्तु वाचामगोचरः । 'यतो वाचो निवर्तन्ते' इति न्यायेन तथाऽऽदरात् । अपरं किंलक्षणम् अतीतवाक्पथमुल्लङ्घितवाग्गोचरम् । यः वाचामतीतः, स कथं स्तूयते । अथ च सर्व एव 'नमो विष्णवे' इति स्तौति । अपरं किंलक्षणम् आदरात् यत्नात् उपास्यं जपोपवासैः सेव्यम्, अपरं किंलक्षणम् अतीव दूरवर्तिनम् अतिशयेन दुष्प्रापम् अनेकजन्मलभ्यम् । यश्च दूरस्थः, स कथं सेव्यः । विषयभेदेन विरोधः परिहार्य इति तु केचित् । ज्ञानिनो हि भगवान् ध्येयः स्तुत्य उपास्यश्च । अन्येषां तु बुद्धेर्वाचो मनसश्च दूरवर्ती ॥

पुनरप्यमानुषत्वमेव व्यनक्ति—

ध्येयमिति ॥ योगिनो नारदादयः एकमद्वितीयमुत्तमं सर्वोत्तमं यमेनं ध्येयं ध्यातव्यम् । एकार्थगोचरात्मधारणं ध्यानं तदर्हमित्यर्थः । तथापि धियो ज्ञानस्याऽपथेऽमार्गे स्थितम् । तदगोचरमित्यर्थः । 'पथो विभाषा' इति समासान्तः । 'अपथं नपुंसकम्' इति नपुंसकत्वम् । आमनन्ति कथयन्ति । 'पाघ्रा—' इत्यादिना म्नाधातोर्मनादेशः । स्तुत्यं स्तोतुमर्हम्, तथापि अतीतो वाक्पथो येन तम् । अवाङ्मनसगोचरमित्यर्थः । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेः । आमनन्ति आदरादास्थयोपास्यं सेव्यम् ।

तथापि अतीवात्यन्तम् । अतीवेति निपातसमुदायोऽत्यन्तार्थेऽव्ययम् । दूरवर्तिनमामनन्ति यमेनमचिन्त्यरूपमामनन्ति तमेनं मर्त्यमात्रं माऽवधारयेदिति पूर्वेणान्वयः । अवाङ्मनसगोचरत्वदूरवर्तित्वानां ध्येयत्वस्तुत्यत्वोपास्यत्वैः सह विरोधस्य हरेरचिन्त्यमहिमत्वेन समाधानाद्विरोधाभासोऽलङ्कारः ॥ ६० ॥

**पद्मभूरिति सृजञ्जगद्रजः सत्त्वमच्युत इति स्थितिं नयन् ॥**
**संहरन् हर इति श्रितस्तमस्त्रैधमेष भवति(१) त्रिभिर्गुणैः ॥ ६१ ॥**

**पद्मभूरिति** ॥ हे राजन् ! एष हरिः त्रिभिर्गुणैः सत्त्वरजस्तमोभिः त्रैधं भवति त्रिधा भवति । तथा हि—जगत् सृजन् विश्वमुत्पादयन् रजोगुणविशेषं श्रितः सन् पद्मभूरिति भवति ब्रह्मेति भवति । तथा सत्त्वं गुणविशेषं श्रितः जगत् विश्वं स्थितिं नयन् सत्क्रियत्वं प्रापयन् अच्युत इति विष्णुरिति भवति । तथा जगत् संहरन् नाशयन् तमः गुणविशेषं श्रितः सन् हर इति रुद्र इति भवति । उक्तं च—

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलयेतमःस्पृशे ।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥

इति ॥ ६१ ॥

ननु हरिहरहिरण्यगर्भास्त्रयो देवाः सर्वोत्तरमहिमानः सन्ति, एवं न जानीम इत्यत आह—

**पद्मभूरिति** ॥ एष हरिः रजः रजोगुणं श्रितो जगत्सृजन् पद्मभूर्ब्रह्मेति, सत्त्वं सत्त्वगुणं श्रितः जगत्स्थितिं नयन्स्थापयन्नच्युतो विष्णुरिति, तमस्तमोगुणं श्रितो जगत्संहरन् हर इति, त्रिभिर्गुणैः सत्त्वरजस्तमोभिस्त्रैधं त्रैविध्यं भजति । 'द्वित्र्योश्च धमुञ्' इति विधार्थे धमुञ्प्रत्ययः । अस्यैव गुणभिन्नास्तास्तिस्रोऽपि मूर्तय इत्ययमेव सर्वोपास्य इति भावः । अत्र सत्त्वादिगुणयोगस्य सृष्ट्यादिगुणयोगस्य च विशेषणगत्या त्रैविध्यहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ ६१ ॥

**सर्ववेदिनमनादिमास्थितं देहिनामनुजिघृक्षया वपुः ॥**
**क्लेशकर्मफलभोगवर्जितं पुंविशेषममुमीश्वरं विदुः ॥ ६२ ॥**

**सर्ववेदिनमिति** ॥ हे राजन् ! पातञ्जलिकाः योगिनः अमुं श्रीकृष्णं पुंविशेषं पुरुषविशेषमीश्वराख्यं विदुः जानन्ति अविदन् । किंलक्षणममुं सर्ववेदिनं सर्वज्ञं तथा अनादिं पुराणम्, अपरं किंलक्षणममुं देहिनां प्राणिनाम् अनुजिघृक्षया अनुग्रहेच्छया वपुः देहम् आस्थितमाश्रितम्, आत्मरूपत्वात् । ईश्वरस्य हि लोकाऽनुग्रहं वर्जयित्वा नान्यत् कारणं देहाश्रयणे(२) । अपरं किंलक्षणममुं क्लेशकर्मफलभोगवर्जितम् अविद्यास्मितारागद्वेषाऽभिनिवेशाः क्लेशाः कर्माणि शुभाशुभानि आचरणानि तेषां फलं विपाकः तस्य भोगोऽनुभवः तेन वर्जितो रहितस्तम् । यदि वा प्रकृतिपुरुषयोरभेदो योगः, क्लेशाश्च कर्माणि च फलं च भोगश्च तैर्वर्जितः । उक्तं च—'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुष ईश्वर' इति । एतच्च तच्छास्त्रादेव सुबोधम् । इह तु विचारे ग्रन्थगौरवं भवति ॥ ६२ ॥

तर्हि कीदृशमस्य स्वरूपं कुतो वा मानुषविग्रह इत्यपेक्षायामुभयं निरूपयन्नाह—

**सर्ववेदिनमिति** ॥ अमुं कृष्णं सर्ववेदिनम् । सर्वज्ञमित्यर्थः । अत एवाऽनादिमादिरहितम् । अनादिनिधनमित्यर्थः । तथापि देहिनां प्राणिनामनुजिघृक्षयाऽनुग्रहीतुमिच्छया । भूभाराऽवतरणार्थमित्यर्थः । ग्रहेः सन्नन्तात्स्त्रियाम् 'अप्रत्ययात्' इत्यप्रत्यये टाप् । वपुरास्थितं मानुषविग्रहमास्थितम् । न कर्मारब्धशरीरभाजमित्यर्थः । अत एव क्लेशकर्मफलभोगवर्जितम् क्लेशाः पञ्च क्लेशाः अविद्यास्मितारागद्वेषाभिनिवेशाख्याः, कर्माणि पुण्यपापानि तेषां फले सुखदुःखे तयोर्भोगोऽनुभवस्तेन क्लेशैश्च वर्जितम् । तैरसंस्पृष्टमित्यर्थः । ईश्वरमीश्वरशब्दितं पुंविशेषं क्षेत्रज्ञविलक्षणं पुरुषविशेषं परमपुरुषं वा विदुर्विदन्ति । सन्त इति

---

(१) भजति । (२) हेतोः श्रयेण—इति मूलपुस्तके ।

शेषः। 'विदो लटो वा' इति झरुसादेशः । अत्राऽकर्मारब्धत्वान्नित्यज्ञानत्वादिविरोधसमर्थनाद्विरोधाभासो-ऽलङ्कारः। तेषामेव गुणानां विशेषणगत्या पुंविशेषहेतुत्वात्काव्यलिङ्गमिति सङ्करः ॥ ६२ ॥

**भक्तिमन्त इह भक्तवत्सले सन्ततस्मरणरीणकल्मषाः ॥**
**यान्ति निर्वहणमस्य संसृतिक्लेशनाटकविडम्बनाविधेः ॥ ६३ ॥**

**भक्तिमन्त इति ॥ हे राजन्! इह श्रीकृष्णे भक्तिमन्तः भक्ताः पुरुषाः अस्य संसृति-क्लेशनाटकविडम्बनाविधेः निर्वहणमन्तं यान्ति, संसृतिः संसारो जन्ममरणप्रबन्धः स एव क्लेशो दुःखं स एव नाटकं मायामयत्वं तेन या विडम्बना विप्रतारणा लज्जा तस्याः विधिः कृतिः तस्य निर्वहणमन्तं यान्ति गच्छन्ति। भूयः संसारदुःखं नाऽनुभवन्तीत्यर्थः। किंलक्षणे हरौ भक्तवत्सले भक्ताऽनुकम्पिनि, किंलक्षणा भक्तिमन्तः सन्ततस्मरणरीण-कल्मषाः सन्ततं सदैव स्मरणेन अनुध्यानेन रीणं क्षयं गतं कल्मषं पापं येषां ते तथा। अन्ये हि नाटकस्य निर्वहणाख्यसन्धिं यान्ति ॥ ६३ ॥**

एवं हरेः स्वरूपं निरूप्य तदुपासनात्फलं युग्मेनाह —

**भक्तिमन्त इति** ॥ भक्तवत्सले भक्तप्रिये इहाऽस्मिन्हरौ भक्तिमन्तोऽनुरागवन्तो जनाः। पूज्येष्वनु-रागो भक्तिः। सन्ततं सततं तत्स्मरणेन निरन्तरध्यानेन रीणकल्मषाः क्षीणपापाः सन्तः। री क्षये, 'ल्वादि-भ्यः' इति निष्ठानत्वम्। अस्याऽनुभूयमानस्य कृष्णस्य संसृतिः संसारस्तस्य क्लेशो दुःखं तदेव नाटकमिति रूपकम्, तस्य विडम्बनाऽभिनयस्तस्य निर्वहणं समाप्तिं यान्ति। मुच्यन्ते इत्यर्थः। 'तमेवं विद्वानमृत इह भवति' इति श्रुतेरिति भावः ॥ ६३ ॥

**ग्राम्यभावमपहातुमिच्छवो योगमार्गपतितेन चेतसा ॥**
**दुर्गमेकमपुनर्निवृत्तये यं विशन्ति वशिनं मुमुक्षवः ॥ ६४ ॥**

**ग्राम्येति ॥ हे राजन्! मुमुक्षवो मुक्तिकाङ्क्षिणः यं भगवन्तं श्रीकृष्णं विशन्ति लीयन्ते। तेन सायुज्यं यान्तीत्यर्थः। किमर्थम् अपुनर्निवृत्तये भूयः संसारमनागन्तुम्। उक्तं च भारते—'मामुपेत्य च कौन्तेय! पुनर्जन्म न विद्यते' इति। किंलक्षणा योगिनः ग्राम्यभावम् अपहातुमिच्छवः ग्राम्यभावं त्रैगुण्यं सांसारिकं भावमपहातुं त्यक्तु-मिच्छवः, तितिक्षवः। जननमरणप्रबन्धानुभवो हि पुनरुक्तत्वात् ग्राम्यत्वम्। केन योग-मार्गपतितेन चेतसा योगमार्गे अध्यात्मशास्त्रे पतितं सक्तं प्रवृत्तं तेन अध्यात्मसक्तेन मनसा, किंलक्षणं यं दुर्गं, दुर्गमिव दुर्गः तं दुरासदम्। न हि सर्वः परं स्थानमाप्नोति। किंलक्षणाः मुमुक्षवः वशिनः जितेन्द्रियाः। एकं कृष्णं, वशिनं विभुं स्वतन्त्रम् ॥ ६४ ॥**

**ग्राम्येति** ॥ ग्रामे भवा ग्राम्याः प्राकृताः। मूढा इति यावत्। 'ग्रामाद्यखञौ' इति यप्रत्ययः। तेषां भावस्तमपहातुं मोक्तुमिच्छवः मुमुक्षवो मोक्षार्थिनः अपुनर्निवृत्तयेऽपुनरावृत्तये पुनरावृत्त्यभावाय। मोक्षा-येत्यर्थः। दुःखेन गम्यत इति दुर्गं दुष्प्रापम् एकमेवाऽद्वितीयं वशिनं स्वतन्त्रं यं हरिं योगमार्गपतितेन ध्यानमार्गनिविष्टेन। 'योगः संनहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः। चेतसा विशन्ति, ध्यायन्तीत्यर्थः। यं विशन्ति इह भक्तिमन्त इति पूर्वेणान्वयः ॥ ६४ ॥

**आदितामजननाय देहिनामन्ततां च दधतेऽनपायिने ॥**
**बिभ्रते भुवमधः सदाऽऽथ च ब्रह्मणोऽप्युपरि तिष्ठते नमः ॥ ६५ ॥**

**आदितामिति ॥ हे राजन्! एवंविधायाऽस्मै नमः, अस्त्विति शेषः। किंलक्षणाय देहिनां भूतानाम् आदितां कारणत्वं दधते बिभ्रते, अपरं किंलक्षणाय अजननाय अविद्यमानं**

नास्ति जननं जन्म यस्य सः तथा तस्मै । स जगत्कारणं, तस्य तु न किञ्चिदित्यर्थः । विरुद्धं चैतत्, यो हि न जायते स कथमादित्वं बिभर्ति । अपरं किंलक्षणाय रुद्ररूपेण देहिनां भूतानाम् अन्ततां नाशकत्वं च दधते, अन्तयति नाशयतीति अन्तः तस्य भावः तत्ता ताम्, अपरं किंलक्षणाय अनपायिने अविद्यमानः अपायो नाशो यस्य सः तथा तस्मै । अनन्ताय जगदन्ताय चेत्यर्थः । यश्च अन्तत्वं दधाति स कथमनपायः स्यादिति विरोधः । अपरं किंलक्षणाय अधः अधस्तात् भुवं बिभ्रते पृथ्वीं धारयते अनन्तनागरूपेण, अपरं किंलक्षणाय सदा नित्यं ब्रह्मणोऽपि वेधसोऽपि उपरि तिष्ठते ऊर्ध्वमवस्थिताय सर्वोत्कृष्टत्वयोगात् । यदि वा ब्रह्मलोकादपि ऊर्ध्वं भगवतोऽवस्थितिः, सर्वव्यापकत्वात् । यः किल पातालस्थः, स कथं ब्रह्मलोकमधः कुर्यादिति विरोधः । उक्तं च—

अनाद्यनन्ताय · · जगतो जन्मकारिणे ।
सर्वगाय नमस्तुभ्यं वाक्यार्थोऽयमिह स्थितः ॥ ॥ ६५ ॥

अथ भक्त्युद्रेकान्नमस्करोति—

आदितामिति ॥ देहिनां प्राणिनामादितां कारणताम् , अन्तोऽन्तकरो नाशहेतुः । 'तत्करोति—' इति ण्यन्तादन्तयतेः पचाद्यच् । तस्य भावस्तत्तामन्ततां च दधते । 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतेः । स्वयमजननाय जन्मरहिताय, अपायोऽस्यास्तीत्यपायी स न भवतीत्यनपायी तस्मा अनपायिने नाशरहिताय च । कालतोऽपरिच्छिन्नायेत्यर्थः । देशतोऽपि तथेत्याह—सदाऽधः पाताले भुवं बिभ्रते कूर्मरूपेण दधते । अथ च तथैव ब्रह्मणो लोकस्याऽप्युपरि तिष्ठते, सर्वव्यापिन इत्यर्थः । तस्मै । हरय इति शेषः । नमः नमस्कारः । 'नमःस्वस्ति—' इत्यादिना चतुर्थी । अत्र हरेरनादिनिधनत्वेन तद्वतः पुरुषान्तरादाधिक्यवर्णनाद्व्यतिरेकालङ्कारः ॥ ६५ ॥

**केवलं दधति कर्तृवाचिनः प्रत्ययानिह न जातु कर्मणि ॥**
**धातवः सृजतिसंहृशास्तयः स्तौतिरत्र विपरीतकारकः ॥ ६६ ॥**

केवलमिति ॥ हे राजन् ! सृजतिसंहृशास्तयः सृजतिश्च संहृ च शास्तिश्च ते सृजतिसंहृशास्तयः धातवः इह भगवद्विषये केवलं कर्तृवाचिनः प्रत्ययान् दधति सदा कर्तृकारकवाचकान् प्रत्ययान् तिबादीन् धारयन्ति, जातु कदाचिन्न कर्मणि कारके न कर्मवाचकान् दधति । एष हि ब्रह्मविष्णुरुद्ररूपेण सृजति शास्ति संहरति च । उक्तं च—

विश्वं जगत्सृजति यः परमादिदेवो यश्च स्थितिं त्रिभुवनस्य भवं(?) विधत्ते ।
यश्चोपसंहरति सर्वमिदं युगान्ते तस्मै नमो भगवते पुरुषोत्तमाय ॥

ननु एष सृज्यते संह्रियते शिष्यते च इति कदाचिन्न । अपरम् इह श्रीकृष्णे स्तौतिः स्तुत्यर्थो धातुः विपरीतकारकः विपरीतं कारकं कर्ता यस्य सः तथा । कर्मण्येव प्रत्ययं दधाति न तु कर्तरीत्यादि स भगवान् किल ब्रह्मादिभिः स्तूयते । न तु एष कञ्चित् स्तौति ॥ ६६ ॥

केवलमिति ॥ सृजतिश्च संहा च शास्तिश्च सृजतिसंहृशास्तयः । सृज विसर्गे, हृञ् हरणे सम्पूर्वोऽयं, शासु अनुशिष्टौ इत्येते त्रय इत्यर्थः । 'इक्श्तिपौ धातुनिर्देशे' इति वचनादेवं निर्देशः । धातवो 'भूवादयो धातवः' इत्युक्तलक्षणाः शब्दविशेषाः । इहाऽस्मिन्भगवति विषये केवलमन्ययोगव्यवच्छिन्नं यथा तथा कर्तृवाचिनः कर्तृकारकवाचकान् दधति । तदन्ता एव भवन्तीत्यर्थः । जातु कदाचित्कर्मणि प्रत्ययान् कर्मार्थविहितान् यागादीन् न दधति । न तदन्ता भवन्तीत्यर्थः । सर्वकर्तृत्वान्नियन्तृत्वाच्च—सृजति स्रष्टा, संहरति हर्ता, शास्तीति शासितेत्यादिभिः कर्तृत्वेन निर्दिश्यते । न कदाचित् सृज्यते, संह्रियते, शिष्यत इत्यादिभिः कर्मत्वेन । अनादिनिधनत्वादनियम्यत्वाच्चेति भावः । किञ्च अत्र भगवति स्तौतिः 'ष्टुञ् स्तुतौ' इति धातुः । विप-

रीतं कारकं यस्य सः विपरीतकारकः, स्तूयते स्तुत्य इत्यादिकर्मप्रत्ययान्त एव। न तु कदाचित् स्तौति स्तोता इत्यादिकर्तृप्रत्ययान्तः। सकललोकस्तुत्यस्य तस्य स्तुत्यन्तराभावादित्यर्थः। अत्र शब्दानां कर्मकर्तृप्रत्ययविधिनिषेधद्वारा विभक्त्यन्तरेण सर्वकर्तृत्वसर्वोपास्यत्वादिसूक्ष्मार्थबोधपरत्वात्सौक्ष्म्याख्यो गुणः। 'अन्तःसङ्कल्परूपत्वं शब्दानां सौक्ष्म्यमुच्यते' इति लक्षणात्। अत्र भगवतः सृष्ट्यादिकर्तृकर्मत्वोभयप्राप्तावेकत्रैकनियमात्परिसङ्ख्या। तत्र जातु कर्मणीति शब्दादेव कर्मत्वनिषेधादितरानिवृत्तिः, शब्दात् स्तुतौ कर्तृत्वनिवृत्तिरार्थीति भेदद्वयसंसर्गः। अनया च भगवतः पुरुषान्तराधिक्यप्रतीतेर्व्यतिरेकश्च प्रतीयत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ६६ ॥

**पूर्वमेष किल सृष्टवानपस्तासु वीर्यमनिवार्यमादधौ ॥**
**तत्र (१)कारणमभूद्धिरण्मयं ब्रह्मणोऽसृजदसाविदं जगत् ॥ ६७ ॥**

पूर्वमिति ॥ हे राजन्! एष भगवान् पूर्वमादौ किल पुराणादौ श्रूयते—अपः सृष्टवान् जलानि ससर्ज, तासु अप्सु अनिवार्यं दुःसहं वीर्यं शक्तिम् आदधौ चिक्षेप, तत्र वीर्ये ब्रह्मणः कारणं वेधसः उत्पादकं हिरण्मयं सौवर्णमभूत् अभवत्। किं तदिति चेत्—आगमात् अण्डम्। स ब्रह्मा इदं जगत् विश्वम् असृजत् ससर्ज। तेन विष्णुः कथं न स्रष्टः इति न वक्तव्यमिति भावः। किलाऽऽगमे। एवं हि मनुः। उक्तं च—

> सोऽभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः।
> अप एव ससर्जादौ तासु वीर्यमवाक्षिपत् ॥
> तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।
> तत्र जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥

इति ॥ ६७ ॥

पूर्वमिति ॥ एष हरिः पूर्वं प्रथममपः सृष्टवान्। किलेत्यैतिह्ये। तास्वप्सु अनिवार्यं वीर्यं रेतः। 'शुक्रं तेजो रेतसी च बीजवीर्येन्द्रियाणि च' इत्यमरः। आदधावाहितवान्। तद्वीर्यं तु हिरण्यस्य स्वर्णस्य विकारः हिरण्मयम्। 'दाण्डिनायन' इत्यादिना निपातः। ब्रह्मणश्चतुर्मुखस्य कारणमभूत्। ब्राह्ममण्डं जातमित्यर्थः। असौ तदुत्पन्नो ब्रह्मा ब्रह्माण्डमिदं जगदसृजत्। सर्वस्यापि प्रपञ्चस्याऽयमेव मूलकारणमिति भावः। मनुः—

> 'अप एव ससर्जादौ तासु बीजमवासृजत्।
> तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥
> तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः'।

इति। अत्र वीर्यमनिवार्यमिति वृत्त्यनुप्रासः ॥ ६७ ॥

**मत्कुणाविव पुरा परिप्लवौ सिन्धुनाथशयने निषेदुषः ॥**
**गच्छतः स्म मधुकैटभौ विभोर्यस्य नैद्रसुखविघ्नतां क्षणम् ॥ ६८ ॥**

मत्कुणाविवेति ॥ हे राजन्! यस्य विभोः स्वामिनः श्रीकृष्णस्य पुरा पूर्वं सृष्टिकाले सिन्धुनाथशयने निषेदुषः सागरशय्यायां स्वपितवतः मधुकैटभौ दानवौ क्षणं नैद्रसुखविघ्नतां नैद्रसुखस्य निद्राजनितस्य सुखस्य क्षणमात्रं विघ्नतां गच्छतः स्म अन्तरायत्वं जग्मतुः। किंलक्षणौ मधुकैटभौ परिप्लवौ चापलौ, काविव मत्कुणाविव। यथा कस्यचित् सुप्तस्य चपलौ मत्कुणौ निद्रासुखस्य विघ्नतां गच्छतः। एतेन हनने नाऽऽयास उक्तः। यथा चपलौ मत्कुणौ हस्तस्पर्शमात्रेणैव नश्यतः, एवं तौ भगवदङ्गसङ्गेनैव नष्टौ इत्यर्थः ॥ ६८ ॥

---

(१) तच्च।

अथैनं त्रिभिर्विशिनष्टि—

मत्कुणाविवेति ॥ पुरा पूर्वं परिप्लवौ चञ्चलौ । मुहुरितस्ततश्चलन्तावित्यर्थः । 'चञ्चलं चपलं तूर्णं(?) पारिप्लवपरिप्लव' इत्यमरः । मधुकैटभावसुरविशेषौ मत्कुणौ सुप्तासृक्पायिनौ मलोद्भवौ कीटविशेषौ ताविवे-न्युपमा । सिन्धुनाथः सरित्पतिः स एव शयनं तत्र निषेदुषो निषण्णस्य । समुद्रशायिन इत्यर्थः । 'भाषायां सदवसश्रुवः' इति लिटः क्वसुरादेशः । विभोः यस्य हरेः क्षणं निद्रायाः सम्बन्धिनः आगतं वा नेदं यत्सुखं तस्य विघ्नतां विधातुं कर्तुं गच्छतः स्म गतौ । तादृशावपि महासुरौ मत्कुणाविव क्षणमात्रेण प्रनष्टाविति भग-वतः प्रभावातिशयोक्तिः । एषां त्रयाणां पूर्वेणान्वयः ॥ ६८ ॥

**श्रौतमार्गसुखगानकोविदब्रह्मषट्चरणगर्भमुज्ज्वलम् ॥**
**श्रीमुखेन्दुसविधेऽपि राजते (१)यस्य नाभिसरसीसरोरुहम् ॥ ६९ ॥**

श्रौतेति ॥ हे राजन् ! यस्य विभोः नाभिसरसीसरोरुहं राजते शोभते, नाभिरेव सरसी कासारः तत्र सरोरुहं पद्मं राजते शोभते, न तु सङ्कुचितम् । क्व सति श्रीमुखेन्दु-सविधेऽपि सति लक्ष्मीवदनचन्द्रसन्निधानेऽपि सति । इन्दूदयात् हि पद्मानि संमीलन्ति । किंलक्षणं नाभिसरसीसरोरुहं श्रौतमार्गसुखगानकोविदब्रह्मषट्चरणगर्भं श्रुतिर्वेदः तस्य भावः श्रौतं (?) स चासौ मार्गः श्रौतमार्गः वेदमार्गः तस्य सुखं सुखकारि यत् गानं पाठः तत्र कोविदश्चतुरो योऽसौ ब्रह्मा विधाता षट्चरणः षट्पदो भृङ्गः स गर्भो गर्भे वा यस्य तत् तथोक्तम् । ब्रह्मा हि भगवतो नाभिकमले वसति । सरोजमपि श्रुतिपथसुखकारि, चतुर-भ्रमरगर्भं भवति । अपरं किंलक्षणं नाभिसरसीसरोरुहम् उज्ज्वलं मनोज्ञम् ॥ ६९ ॥

श्रौतेति ॥ श्रौतमार्गस्य सुखं सुखकरं यद्गानं तस्य कोविदोऽभिज्ञः । कोविदो व्याख्यातः । स चासौ ब्रह्मा स एव षट्चरणः स गर्भे यस्य तत् उज्ज्वलं निर्मलं यस्य हरेर्नाभिरेव सरसी सरः कासारः । 'कासारः सरसी सरः' इत्यमरः । तस्यां सरोरुहं पद्मं श्रियो मुखमिवेन्दुस्तस्य सन्निधौ समीपेऽपि शोभत इति विरोधः । स च मुखस्येन्दुत्वरूपणायत्त इत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ६९ ॥

**सत्यवृत्तमपि मायिनं जगद्वृद्धमप्युचितनिद्रमर्भकम् ॥**
**जन्म बिभ्रतमजं नवंनवं यं (२)पुराणपुरुषं प्रचक्षते ॥ ७० ॥**

सत्येति ॥ हे राजन् ! यं भगवन्तं श्रीकृष्णम् एवंविधं प्रचक्षते आहुः बुधाः । किं-लक्षणं सत्यवृत्तं परमार्थचेष्टं ब्रह्मरूपत्वात्, अपरं किंलक्षणं यं मायिनं मोहकम् । यदाह— 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति । माया ऋद्धिः, तत्त्वविशेषो वा । यः सत्यवाक्, स कथं मायिको भवेत् । माया कपटः । अपरं किंलक्षणं यं जगद्वृद्धम् आद्य-कारणत्वात्, अपरं किंलक्षणं यम् उचितनिद्रं परिचितयोगस्वापम् । अपरं किंलक्षणं यम् अर्भकं बालकम्, उक्तं च—'बालः स्वपिति यश्चैकः तस्मै मायात्मने नमः' इति । यश्च निद्रालुर्बालः स कथं वृद्धो भवेत् । अपरं किंलक्षणं यं जन्म अवतारं बिभ्रतं धार-यन्तं, रामादिरूपत्वात । अपरं किंलक्षणं यम् अजं जन्मरहितम्, आत्मरूपत्वात् । उक्तं च—'न जायते न म्रियते' इति । यश्च जन्म बिभर्ति, स कथम् अजः स्यात् । अपरं किं-लक्षणं यं नवंनवं नित्यनवम् अक्रियत्वात्, अपरं किंलक्षणं यं पुराणपुरुषं नित्यमीश्वरम् । यश्च पुराणः, स कथं नवो नवो भवेत्। अपि तु सर्वत्र विरोधे । नवंनवमिति वीप्सायां द्वित्वम् ॥ ७० ॥

---

(१) शोभते । (२) नवं बुधा यं ।

सत्येति ॥ यं हरिं सत्यवृत्तमकपटचरितमपि मायिनं मायाविनं कपटवन्तमिति विरोधः। माया नाम शक्तिः, तद्वन्तमित्याविरोधः। व्रीह्यादित्वादिनिप्रत्ययः। जगद्वृद्धं सर्वलोकपितामहत्वात् स्थविरमपि। 'प्रवयाः स्थविरो वृद्धः' इत्यमरः। डाचितमिदं पारिचितयोगानिद्रमर्भकं डिम्भम्।'वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि' इत्यागमवचनादिति भावः। 'पोतः पाकोऽर्भको डिम्भः'। इत्यमरः। न जायत इत्यजो जन्मरहितः। 'अन्येभ्योऽपि दृश्यते' इति जनेर्डप्रत्ययः। तमपि, जन्म बिभ्रतम्। कामवशात्कृष्णादिजन्मभाजमित्यर्थः। नवं रमणीयत्वादभिनवं तथापि पुराणं प्राचीनमनादिं च पुरुषं प्रचक्षते बुधा इति वाक्यं सर्वत्र सम्बध्यते। सर्वेऽपि विरोधा हरेरचिन्त्यमहिमत्वेनाऽऽभास्या इति विरोधाभासचतुष्टयसंसृष्टिः ॥ ७० ॥

इदानीं प्रादुर्भावमुखेन स्तौति—

**स्कन्धधूननविसारिकेसरक्षिप्तसागरमहाप्लवामयम् ॥**
**उद्धृतामिव मुहूर्तमैक्षत स्थूलनासिकवपुर्वसुन्धराम् ॥ ७१ ॥**

स्कन्धेति ॥ हे राजन् ! अयं भगवान् श्रीकृष्णः स्थूलनासिकवपुः वराहरूपः सन् वसुन्धरां पृथ्वीं मुहूर्तं क्षणम् उद्धृतामिव कृतोद्धारामिव ऐक्षत ददर्श विवेद। किंलक्षणां वसुन्धरां स्कन्धधूननविसारिकेसरक्षिप्तसागरमहाप्लवां स्कन्धस्य धूननेन अंसस्य कम्पनेन विसारिभिः प्रसृतैः केसरैः सटाभिः क्षिप्तः प्रेरितः सागरस्याऽम्भोधेः सम्बन्धी महाप्लवः उदकस्य पूरो यस्याः सा तथा ताम्। अतः अदृश्यरूपत्वात् उद्धृतामेषोऽबोधीत्यर्थान्तरम्। स्थूलनासिकस्य शूकरस्य वपुर्देहो यस्य सः स्थूलनासिकवपुः ॥ ७१ ॥

अथ षोडशभिरवतारान्वर्णयिष्यन् वराहावतारं तावदेकेनाह—

स्कन्धेति ॥ स्थूलनासिकवपुर्वराहमूर्तिरयं हरिः स्कन्धस्य कन्धरायाः धूननेन कम्पनेन विसारिभिरुत्सर्पिभिः केसरैः सटाभिः क्षिप्तोऽवकीर्णः सागरस्य महाप्लवो महापूरः यस्यास्ताम्। जलाऽपसारेण प्रकाशितामित्यर्थः। वसुन्धरां भुवं मुहूर्तं क्षणमात्रम्। 'मुहूर्तमल्पकालेऽपि' इति शब्दार्णवे। उद्धृतामनावृतत्वात्सागरादुत्क्षिप्तामिव ऐक्षत प्रेक्षितवानित्युत्प्रेक्षा। ईक्षतेर्लङि आडजादीनाम्. 'आटश्च' इति वृद्धिः ॥

**दिव्यकेसरिवपुः सुरद्विषो नैव लब्धशममायुधैरपि ॥**
**दुर्निवाररणकण्डु कोमलैर्वक्ष एष निरवापय(१)न्नखैः ॥ ७२ ॥**

दिव्येति ॥ हे राजन् ! एष श्रीकृष्णः दिव्यकेसरिवपुः नृसिंहरूपः सन् सुरद्विषः हिरण्यकशिपोः वक्षः उरस्तटं नखैः करजैः निरवापयत् शमं निन्ये। व्यदारयदित्यर्थः। किंलक्षणं वक्षः दुर्निवाररणकण्डु दुर्निवारा निरसितुमशक्या रणकण्डूः समरदर्पो यस्य यत्र वा तत्तथा, अपरं किंलक्षणं वपुः आयुधैरपि वज्रादिभिः प्रहरणैरपि नैव लब्धशमं नैव प्राप्तशान्ति, किंलक्षणैर्नखैः कोमलैः मृदुभिः। नखैरशीशमदित्यनायासः प्रतिपाद्यते। यस्यापि महती कण्डूर्भवति, तस्य कश्चित्कोमलैर्नखैः न शमयति ॥ ७२ ॥

द्वाभ्यां नृसिंहावतारमाह—

दिव्येति ॥ दिव्यकेसरिवपुर्दिव्यसिंहमूर्तिः हरेरायुधैर्वज्रादिभिरपि नैव लब्धशममप्राप्तशान्ति, दुर्निवारा दुर्जया रणकण्डूर्यस्य तत्। रणव्यसनीत्यर्थः। 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः। सुरद्विषो हिरण्यकशिपोर्वक्षः कोमलैर्नखैः निरदारयदभिनत्। वज्राद्यभेद्यस्य कोमलनखविदार्यत्वं भगवत्प्रभावादिति विरोधाभासोऽलङ्कारः ॥ ७२ ॥

**वारिधेरिव कराग्रवीचिभिर्दिङ्मतङ्गजमुखान्यभिघ्नतः ॥**
**यस्य चारुनखशुक्तयः स्फुरन्मौक्तिकप्रकरगर्भतां दधुः ॥ ७३ ॥**

---

(१) निरदार०।

**वारिधेरिवेति** ॥ हे राजन् ! यस्य च दिव्यनृसिंहमूर्तेः चारुनखशुक्तयः मनोज्ञनखरपुटाः स्फुरन्मौक्तिकप्रकरगर्भतां दधुः स्फुरन् उल्लसन् योऽसौ मौक्तिकप्रकरः मुक्ताफलसमूहः सः गर्भे यस्य सः तथा स्फुरन्मौक्तिकप्रकरगर्भः तस्य भावः तत्ता ताम् । मौक्तिकानि विचकरुरित्यर्थः । यस्य किं कुर्वतः कराग्रवीचिभिः दिङ्मतङ्गजमुखानि अभिघ्नतः कराग्रैरेव वीचिभिः ऊर्मिभिः दिग्गजवक्त्राणि अभिघ्नतः विदारयतः। सिंहानां हि जातिस्वभावोऽयं, यद्विदारणम् । कस्येवेत्याह—वारिधेरिव । यथा वारिधेः समुद्रस्य स्वैर्वीचिभिः मुखान्यभिघ्नतः शुक्तयः स्फुरन्मौक्तिकप्रकरगर्भत्वं दधति । वेगवत्तरङ्गसङ्गात् हि शुक्तीनां कपाटभेदो भवति ॥ ७३ ॥

वारिधेरिवेति ॥ कराग्राणि वीचय इवेत्युपमितसमासः, वारिधेरिवेति लिङ्गात् । ताभिः कराग्रवीचिभिः। दिगन्तविततामिरिति भावः । अत एव दिङ्गतङ्गजानां मुखान्यभिघ्नतो रोषांऽतिरेकात्प्रहरतो यस्य सिंहमूर्तेर्हरेर्वारिधेरिव चारुनखाः शुक्तय इव । पूर्ववदुपमितसमासः । स्फुरन्मौक्तिकप्रकरो दिग्गजकुम्भसम्भूतमुक्ताव्रातो गर्भेऽन्तर्गतो यासां तासां भावस्तत्ता तां दधुः । एष निरदारयदिति पूर्वेणान्वयः । एतेन नरहरिक्रोधस्य महासुरेऽपि न पर्याप्तमिति (?) व्यज्यत इति वस्तुना वस्तुध्वनिः । उपमालङ्कारः ॥ ७३ ॥

**दीप्तिनिर्जितविरोचनादयं द्यां(१) विरोचनसुतादभीप्सतः ॥**
**आत्मभूरवरजाऽखिलप्रजः स्वर्पतेरवरजत्वमाययौ ॥ ७४ ॥**

**दीप्तीति** ॥ हे राजन् ! अयं श्रीकृष्णः स्वर्पतेः इन्द्रस्य अवरजत्वम् आययौ अनुजन्मत्वं प्राप, किंलक्षणस्य स्वर्पतेः विरोचनसुतात् वैरोचनात् बलेः दैत्यात् द्यां स्वर्गम् अभीप्सतः जिघृक्षतः । तेन हि बलिना बलेन देवेन्द्रस्य प्रभुत्वं हृतमासीत् । किंलक्षणात् विरोचनसुतात् दीप्तिनिर्जितविरोचनात् दीप्त्या तेजसा निर्जितः विरोचनः श्रीसूर्यो येन सः तथा तस्मात् तेजसा निर्जितसूर्यात्, किंलक्षणोऽयम् आत्मभूः आत्मनः एव भूर्जन्म यस्य सः तथा अजः, अत एव अपरं किंलक्षणोऽयम् अवरजाऽखिलप्रजः अवरजा- अर्वाचीना अखिलाः समग्राः प्रजाः लोका यस्य सः तथा जगच्छ्रेष्ठः । एतेन कर्माधीनत्वं निरस्तम् । आत्मभूरपि दितिजशत्रुहितार्थं जातो, न तु कर्मप्रेरित इत्यर्थः ॥ ७४ ॥

अथ चतुर्भिर्वामनावतारमाह—

दीप्तीति ॥ आत्मना भवतीति आत्मभूः स्वयम्भूरपि, अवरजाश्चरमजा अखिलाः प्रजा जना यस्य सोऽपि । सर्वज्येष्ठोऽपीत्यर्थः । अयं हरिः दीप्तिनिर्जितविरोचनाज्ज्योतिर्विजितमार्तण्डात् । विरोचनः प्रह्लादपुत्रः । 'विरोचनोऽर्के दहने चन्द्रे प्रह्लादनन्दने' इत्युभयत्रापि विश्वः । तस्य सुताद्बलेर्वा भुवमभीप्सतः प्राप्तुमिच्छतोऽभ्याहर्तुमिच्छतः । सन्नन्तादाप्नोतेर्लटः शत्रादेशः । स्वर्पतेरवरजत्वमिन्द्रानुजत्वं ययौ । बालिध्वंसनार्थमिति शेषः । लोकानुग्रहार्थिनः किं न कुर्वन्तीति भावः । अत्राऽजत्वावरजत्वसामानाधिकरण्याविरोधो भगवत्प्रभावादाभासीकृत इति विरोधाभासोऽलङ्कारः ॥ ७४ ॥

**क्रमिष्यति किलैष वामनो यावदित्थमहसन् न दानवाः ॥**
**तावदस्य न ममौ नभस्तले लङ्घिताऽर्कशशिमण्डलः क्रमः ॥ ७५ ॥**

**किमिति** ॥ हे राजन् ! तदा च यावत् इत्थमनेन प्रकारेण दानवाः असुराः न अहसन् न जहसुः, तावत् अस्य भगवतः क्रमः पादविक्षेपः नभस्तले न ममौ आकाशे न माति स्म । ववृधे इत्यर्थः । किंलक्षणः क्रमः लङ्घिताऽर्कशशिमण्डलः लङ्घितमतिक्रान्तम् अर्क-

(१) गां।

शशिमण्डलं सूर्यचन्द्रबिम्बं येन सः तथा सर्वव्यापी । कथमहसन् दानवा इत्यत आह—किलेत्युपहासे, एष वामनः अल्पप्रमाणो विप्रः किं क्रमिष्यति कियतीं भुवं लङ्घयिष्यति व्याप्स्यतीति । एतेन हि क्रमत्रयमर्थितमभूत् ॥ ७५ ॥

किमिति ॥ एष वामनः खर्वः । 'खर्वो ह्रस्वश्च वामनः' इत्यमरः । किं क्रमिष्यति इत्थमनेन प्रकारेण दानवा यावन्नाऽहसंस्तावत्ततः प्रागेव लङ्घितेऽतिक्रान्ते अर्कशशिमण्डले येन सोऽस्य हरेः क्रमः पादविक्षेपो नभस्तले न ममौ न परिमाणं गतवान् । यथा न माति तथा ववृधे इत्यर्थः । अत्राधारान्नभस्तलादाधेयस्य क्रमस्याधिक्यकथनादाधिकालङ्कारभेदः । 'आश्रयाश्रयिणोराधिक्यमधिक'मिति लक्षणात् ॥ ७५ ॥

**गच्छताऽपि गगनाऽग्रमुच्चकैर्यस्य भूधरगरीयसाऽङ्घ्रिणा ॥**
**क्रान्तकन्धर इवाऽचलो(१) बलिः स्वर्गभर्तुरगमत्सुबन्धताम् ॥ ७६ ॥**

गच्छताऽपीति ॥ हे राजन् ! यस्य श्रीकृष्णस्य अङ्घ्रिणा पादेन क्रान्तकन्धर इव क्रान्तग्रीव इव अचलो निश्चेष्टो बलिः वैरोचनः स्वर्गभर्तुः इन्द्रस्य सुबन्धताम् अगमत् ययौ, सुखेन बध्य इति सुबन्धः तस्य भावः तत्ता तां ययौ । अक्लेशेनैव बद्ध इत्यर्थः।यस्य गले हि पादः क्रियते, स निश्चेष्टत्वात् सुबन्धो भवति । किंलक्षणेन अङ्घ्रिणा उच्चकैः उन्नतेन, अपरं किंलक्षणेन अङ्घ्रिणा भूधरगरीयसा भूधरवत् अद्रिवत् गरीयसा अतिमहता, अपरं किंलक्षणेन अङ्घ्रिणा गगनाऽग्रं गच्छताऽपि आकाशप्रान्तं गच्छताऽपि क्रामताऽपि । अपि विरोधे-यः किल नभः आक्रान्तः, स कथं भूस्थस्य कन्धरामाक्रमते ॥ ७६ ॥

गच्छताऽपीति ॥ गगनाऽग्रं गगनोपरिभागं गच्छताऽपीति विरोधः । भूधरगरीयसेत्युपमा । यस्य वामनस्योच्चकैरुन्नतेनाऽङ्घ्रिणा क्रान्तकन्धरोऽवष्टब्धकण्ठ इवाऽबलो दुर्बलो बलिर्वैरोचनिः स्वर्गभर्तुरिन्द्रस्य सुखेन बध्यत इति सुबन्धः। 'ईषद्दुःसुषु-'इत्यादिना खल्प्रत्ययः। तत्तामगमत् । गुरुद्रव्याऽवष्टब्धकण्ठो हि सुखेन बध्येत इति भावः । 'न लोका-' इत्यादिना कृद्योगलक्षणाया एव षष्ठ्या निषेधात्स्वर्गभर्तुरिति शेषे षष्ठी । अत्र क्रान्तकन्धर इवेत्युत्प्रेक्षाया भूधरगरीयसेत्युपमासापेक्षत्वात्सङ्करः। विरोधेन त्वनपेक्षिता संसृष्टिः ॥७६॥

**क्रामतोऽस्य ददृशुर्दिवौकसो दूरमूरुमलिनीलमायतम् ॥**
**व्योम्नि दिव्यसरिदम्बुपद्धतिस्पर्धयेव यमुनौघमुत्थितम् ॥ ७७ ॥**

क्रामत इति ॥ हे राजन् ! तदा च अस्य हरेः दूरमत्यर्थं क्रामतः सतः दिवौकसो देवाः आयतं दीर्घम् ऊरुं ददृशुः सक्थिम् ऐक्षन्त, किंलक्षणमूरुम् अलिनीलं भृङ्गकृष्णम् । अपरं किंलक्षणमूरुम्, उत्प्रेक्ष्यते—व्योम्नि आकाशे उत्थितं यमुनौघमिव कालिन्दीपूरमिव, कया उत्थितं दिव्यसरिदम्बुपद्धतिस्पर्धया दिव्यसरित् त्रिपथगा तस्याः अम्बु पानीयं तस्य पद्धतिः सरणिः तस्याः स्पर्धा ईर्ष्या तयेव मन्दाकिनीजलसरणीर्ष्ययेव । एषाऽत्र गङ्गा, अहं किं न भव्या । मम पार्श्वात् ( ? ) ॥ ७७ ॥

क्रामत इति ॥ क्रामनः पादं विक्षिपतोऽस्य सम्बन्धिनं दूरमायतमलिनीलं भृङ्गश्याममूरुं सक्थि दिवौकसो देवा व्योम्नि दिव्यसरितो मन्दाकिन्या अम्बुपद्धत्या जलप्रवाहेण स्पर्धया उत्थितमूर्ध्वतः प्रवृत्तं यमुनौघं यमुनाप्रवाहमिव ददृशुरित्युत्प्रेक्षेयमुपमासङ्कीर्णा ॥ ७७ ॥

**यस्य किञ्चिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः ॥**
**कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनाऽपि बाधते ॥ ७८ ॥**

यस्येति ॥ हे राजन् ! यस्य हरेः किञ्चित् मनागपि अपकर्तुमक्षमः अपकारं विधातु-

( १ ) ०ऽबलो ।

मसमर्थः सन् राहुः स्वर्भानुः इन्दुं चन्द्रमसम् अधुनापि बाधते इदानीमपि पीडयते, ग्रसति इत्यर्थः । किंलक्षणो राहुः कायनिग्रहगृहीतविग्रहः कायस्य शरीरस्य निग्रहो नाशः तस्मात् गृहीतः स्वीकृतः विग्रहो वैरं येन सः तथा देहनाशात् स्वीकृतविरोधः । अथ यदि हरिणाऽस्य शिरश्छिन्नं, तं चासौ बाधितुमक्षमः, तन्निरागसः शशिनः किमायातं, यत् तमत्तीत्याह—किंलक्षणमिन्दुं कान्तवक्त्रसदृशाकृतिं कान्तं तेजोयुक्तं यत् वैष्णवं वक्त्रं तस्य सदृशी आकृतिः शोभा यस्य सः तथा तम्। स किल हस्तिबाधायामशक्तः तत्पुरीषे क्रोधं मुञ्चति। यदि असौ शौरिं बाधितुं न शक्नोति, तन्मुखेन्दुसाम्याच्च इन्दुं बाधते । किंलक्षणो राहुः कृती, उल्लुण्ठनायाम् । एतावताऽसौ कृती कृतार्थः, मूर्खोऽसौ । यतस्तद्बाधया भगवता वैरं शुद्धं वेत्तीत्यर्थः । लोकहितार्थं राहोरनेन शिरश्छिन्नमिति वाक्यार्थः ॥ ७८ ॥

अवताराऽन्तरमाह—

यस्येति ॥ कायनिग्रहेणाऽमृतावभागकाले देहच्छेदेन गृहीतविग्रहो बद्धवैरः कृती कुशलो राहुर्यस्य हरेः किञ्चिपदकर्तुमक्षमः सन् कान्तं रम्यं यद्वक्त्रं हरिमुखं तेन सदृशी आकृतिर्यस्य तम् । तत्सुहृदामित्यर्थः। इन्दुमधुनाऽपि बाधते पीडयति। उपरागमिषेणेति भावः । अत्र साक्षात्प्रतिपक्षहरिनिग्रहाऽशक्त्या राहोस्तदीयेन्दुनिग्रहोक्त्या प्रत्यनीकालङ्कारः। तथा च सूत्रम्- 'प्रतिपक्षप्रतीकाराशक्तौ तदीयतिरस्कारः प्रत्यनीकम्' इति ॥

**सम्प्रदायविगमादुपेयुषीरेष नाशमविनाशिविग्रहः ॥**
**स्मर्तुमप्रतिहतस्मृतिः श्रुतीर्दत्त इत्यभवदत्रिगोत्रजः ॥ ७९ ॥**

**सम्प्रदायेति** ॥ हे राजन् ! एष हरिः अत्रिगोत्रजः दत्त इति अभवत् पूर्वं दत्तात्रेयो नाम्नाऽभूत् । अत्रिगोत्रं शिश्रायेत्यर्थः । किं कर्तुं श्रुतीः वेदान् स्मर्तुं श्रुतीनां स्मरणाय, किंलक्षणाः श्रुतीः सम्प्रदायविगमात् नाशमुपेयुषीः आम्नानाऽभावात् विनाशं प्राप्ताः । पूर्वं हि द्वादशवार्षिक्यामनावृष्ट्यां जगन्नष्टमभवदित्यागमः । तर्हि एष कथं स्मरतीत्याह—किंलक्षणः एषः अप्रतिहतस्मृतिः अनष्टज्ञानः, अपरं किंलक्षणः एषः अविनाशिविग्रहः अविनाशी नित्यः विग्रहः शरीरं यस्य सः तथा शाश्वतिकदेहः, नित्य इत्यर्थः । जगद्धितार्थमेष जन्म गृह्णाति । उक्तं च—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ! ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥

इति ॥ ७९ ॥

दत्तात्रेयावतारमाह—

**सम्प्रदायेति** ॥ अविनाशिविग्रहोऽनपायस्वरूपः अत एव अप्रतिहता स्मृतिः स्मरणशक्तिर्यस्य स एष हरिः सम्प्रदाय उपदेशपरम्परा तस्य विगमादपायान्नाशं कालदोषादध्ययनविच्छेदमुपेयुषीः प्राप्ताः । 'उगितश्च' इति ङीप् । श्रुतीर्वेदान् । 'श्रुतिः स्त्री वेद आम्नायः' इत्यमरः । स्मर्तुम्, श्रुतिसम्प्रदायं प्रवर्तयितुमित्यर्थः । दत्त इति विख्यात इति शेषः । अत्रिगोत्रे जातोऽत्रिगोत्रजोऽभवत् । दत्तात्रेयोऽभूदित्यर्थः । अत्राऽनपायित्वस्मृत्यप्रतिघातयोर्विशेषणगत्या श्रुतिस्मृतिहेतुत्वोक्त्या काव्यलिङ्गम् ॥ ७९ ॥

**रेणुकातनयतामुपागतः शातितप्रचुरपत्रसंहति ॥**
**लूनभूरिभुजशाखमुज्झितच्छायमर्जुनवनं व्यधादयम् ॥ ८० ॥**

**रेणुकेति** ॥ हे राजन् ! अयं च हरिः रेणुकातनयतां रेणुकायाः तनयतां पुत्रतामुपागतः

प्राप्तः सन् अर्जुनवनम् अर्जुनमेव वनं कार्तवीर्यमेव काननम् एवं व्यधात् चकार । कृत-मित्यर्थः । किंलक्षणमर्जुनवनं शातितप्रचुरपत्रसंहति शातिता नाशिता प्रचुराणां बहूनां पत्राणां वाहनानाम् अश्वेभरथादीनां संहतिः सङ्घातो यस्य तत्तथोक्तम् , अपरं किंलक्षण-मर्जुनवनं लूनभूरिभुजशाखं लूनाः छिन्ना भूरयो बहवः भुजा हस्ता एव शाखाः शिफाः यस्य तत्तथा । किलाऽसौ सहस्रबाहुरभवत् । अपरं किंलक्षणं वनम् उज्झितच्छायं त्यक्तकान्ति । भार्गवो रामः भगवानेष तं जघानेति वाक्यार्थः । वनमपि शातितप्रचुरपत्र-संहति सत् तथा लूनशाखं च सत् उज्झितच्छायं भवति ॥ ८० ॥

परशुरामावतारमाह—

रेणुकेति ॥ अयं हरिः रेणुकातनयतां परशुरामत्वमुपागतः सन् , अर्जुनः कार्तवीर्यार्जुनः । 'अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः' इत्यनेकार्थेऽपि रेणुकेयविरोधित्वान्निश्चयः । तदुक्तं हरिणा—

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्याऽन्यस्य सान्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्याऽनवच्छेदे विशेषस्मृतिहेतवः' ॥

इति । स एव वनं तत् , शातिता छिन्ना प्रचुरा प्रभूताः पत्रसंहतिर्वाहनसमूहः पर्णसङ्घातश्च यस्य तत् । 'पत्रं स्याद्वाहने पर्णे' इति विश्वः । लूनाश्छिन्ना भूरयः प्रचुरा भुजा एव शाखा यस्य तत् , उज्झिता छाया कान्तिरनातपश्च यस्य तत्तथा व्यधाद्विहितवान् । दधातेर्लुङि 'गातिस्था-'इत्यादिना सिचो लुक् । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । अत्र समस्तवस्तुविषयं सावयवं रूपकं व्यक्तं, तच्च छायेति पत्रेति च श्लेषप्रतिभोत्थापिताऽभेदातिशयोक्त्याऽनुप्राणितामिति सङ्करः ॥ ८० ॥

**एष दाशरथिभूयमेत्य च ध्वंसितोद्धतदशाननामपि ॥**
**राक्षसीमकृत रक्षितप्रजस्तेजसाऽधिप(१)विभीषणां पुरीम् ॥ ८१ ॥**

**एष इति** ॥ हे राजन् ! एष श्रीकृष्णः दाशरथिभूयम् एत्य दशरथपुत्रत्वं प्राप्य राक्षसीं पुरीं रक्षसां सम्बन्धिनीं नगरीं लङ्कां ध्वंसितोद्धतदशाननामपि हतोत्कटरावणामपि यतः तेजसा प्रभावेन अधिपविभीषणाम् अकृत विभीषणो रावणभ्राता अधिपो नाथो यस्यां सा तथा अधिपविभीषणा ताम् अकरोत् । रावणं हत्वा विभीषणस्वामिकां चकारेत्यर्थः । अपि विरोधे, यस्या हि भयकारी दशमुखो हतः, साऽधिकविभीषणा स्यात् । किंलक्षणः एषः रक्षितप्रजः रक्षोवधात् पालितभुवनः ॥ ८१ ॥

रामाऽवतारमाह—

**एष इति** ॥ किञ्चेति चार्थः । रक्षितप्रजः एष हरिर्दशरथस्याऽपत्यं पुमान् दाशरथी रामः । अत इञ् । तस्य भावः दाशरथिभूयं रामत्वम् । 'भुवो भावे' इति क्यप् । एत्य प्राप्य ध्वंसितो हत उद्धतो दृप्तो दशाननो रावणो यस्यां तामपि राक्षसीं रक्षःसम्बन्धिनीं पुरीं लङ्कां तेजसा स्ववीर्येणाधिकविभीषणा-मत्यन्तभीषणामकृतेति विरोधः । भयहेतोरुद्धतस्य रावणस्य ध्वंसनादधिको महान् विभीषणो रावणाऽनुजो यस्यां तामित्यविरोधः । अत एव विरोधाभासोऽलङ्कारः ॥ ८१ ॥

**निग्रहन्तु(२)ममरेशविद्विषामर्थितः स्वयमथ स्वयम्भुवा ॥**
**सम्प्रति श्रयति सूनुतामयं कश्यपस्य वसुदेवरूपिणः ॥ ८२ ॥**

**निष्प्रहन्तुमिति** ॥ हे राजन् ! अथाऽनन्तरं सम्प्रतीदानीं वसुदेवरूपिणः कश्यपस्य

( १ ) ०ऽधिक । ( २ ) निष्प्रहन्तु० ।

सूनुतां श्रयति अयं हरिः कश्यपावतारस्य वसुदेवस्य शौरेः पुत्रत्वं भजति । किंलक्षणोऽयं स्वयम्भुवा ब्रह्मणा अमरेशविद्विषां देवेशाऽरीणां केशिकंसचाणूरचैद्यादीनां निग्रहन्तुं पेष्टुं स्वयमर्थितः, न तु कर्मणा प्रेरितः । विद्विषामिति 'जासिनिप्रहणे'ति कर्मणि षष्ठी । कश्यपः प्रजापतिः, तस्यांशो वसुदेवः इत्यागमः ॥ ८२ ॥

अथ पञ्चभिः प्रस्तुतं कृष्णावतारमाह—

निष्प्रहन्तुमिति ॥ अथ रामावताराऽनन्तरम् अयं हरिः अमरेशविद्विषां निष्प्रहन्तुम् । चैद्यादीनिन्द्रशत्रून् हन्तुमित्यर्थः । 'जासिनिप्रहण–' इत्यादिना कर्मणि षष्ठी । स्वयम्भुवा ब्रह्मणा स्वयमात्मनैवाऽर्थितः प्रार्थितः सन् सम्प्रतीदानीं वसुदेवरूपिणो वसुदेवमूर्तिधरस्य कश्यपस्य पुत्रतां श्रयति व्रजति । कृष्णरूपेणेति भावः । अत्र स्वयम्भूप्रार्थनाया विशेषणगत्या वसुदेवपुत्रताप्राप्ति हेतुत्वात्पदार्थहेतुकं काव्यालिङ्गम् ॥८२॥

**तात ! नोदधिविलोडनं प्रति त्वद्विनाऽद्य(१) वयमुत्सहामहे ॥**
**यः सुरैरिति सुराघवल्लभो बल्लवैश्च जगदे जगत्पतिः ॥ ८३ ॥**

तातेति ॥ हे राजन् ! यः भगवान् श्रीकृष्णः सुरैरमरैः अपरं बल्लवैश्च गोपालैः इति जगदे एवमुक्तः । इतीति किं—हे तात ! हे पूज्य ! त्वद्विना त्वया विना उदधिविलोडनं प्रति सागरमथनं प्रति न उत्सहामहे न शक्ताः स्मः। किंलक्षणो यः सुरौघवल्लभः देवसमूहप्रेष्ठः, अपरं किंलक्षणो यः जगत्पतिः त्रिभुवनेश्वरः । यद्वा नो इति पदच्छेदः । बल्लवैरित्युक्तः—हे तात ! वयं त्वद्विना दधिविलोडनं प्रति नोत्सहामहे ॥ ८३ ॥

तातेति ॥ सुरौघवल्लभः सुरगणप्रियः जगत्पतिर्यो हरिः सुरैर्देवैर्बल्लवैर्गोपैश्च हे तात ! जनक ! 'न' इति छेदे उदधिविलोडनं समुद्रमथनं प्रति, 'नो' इति छेदे दधिविलोडनं दधिमन्थनं च प्रति त्वद्विना । त्वां विहायेत्यर्थः । 'पृथग्विना–' इत्यादिना विकल्पात्पञ्चमी । अथ वयं न नो वोत्सहामहे न क्षमामहे इति जगदे गदितम् । अत्र हरिवर्णनाऽङ्गत्वे सुराणां बल्लवानां च प्रकृतानामेव नोदधिशब्दमूलाभेदाध्यवसायलब्धदध्युदधिविलोडनक्षमत्वकर्मसाम्यादुभयैपम्यत्वात्तुल्ययोगिताभेदः । तेन च हरेर्दधिमन्थनकलावदुदधिमन्थनमपीति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ८३ ॥

**नात्तगन्धमवधूय शत्रुभिश्छायया च शमिताऽमरश्रमम् ॥**
**योऽभिमानमिव वृत्रविद्विषः पारिजातमुदमूलयद्दिवः ॥ ८४ ॥**

नात्तगन्धमिति ॥ हे राजन् ! यश्च देवः श्रीकृष्णः वृत्रविद्विषः देवेन्द्रस्य दिवः स्वर्गात् पारिजातं कल्पपादपम् उदमूलयत् उज्जहार, कमिव अभिमानमिव अहङ्कारमिव अभिमानेन तुल्यम् । द्वयमपि जहारेत्यर्थः । कल्पवृक्षहरणादिन्द्रस्य मानग्लानिरभवदिति भावः । किंलक्षणं पारिजातं शत्रुभिरभिघातिभिः अवधूय तिरस्कृत्य नात्तगन्धं नगृहीतसौरभम् । शत्रुभिर्बलेन यस्य गन्धो नाऽनुभूत इत्यर्थः। यदि वा पराजित्य अवधूय उदमूलयदिति योज्यम् । अपरं किंलक्षणं पारिजातं छायया आतपप्रत्यनीकया च शमिताऽमरश्रमं शमितः अपासितः अमराणां देवनां श्रमः श्रान्तिर्येन सः तथा तम् । इन्द्रस्याभिमानोऽपि शत्रुभिर्नात्तगन्धः नाऽभिभूतः । 'आत्तगन्धोऽभिभूतः स्यात्' इत्यमरः । तथा छायया प्रभावेन शमिताऽमरश्रमश्च ॥ ८४ ॥

नात्तगन्धमिति ॥ किञ्चेति चार्थः । यो हरिः शत्रुभिरवधूयाऽभिभूय नात्तगन्धमनाघ्रातसौरभमनभिभूतं च । 'आत्तगन्धोऽभिभूतः स्यात्' इत्यमरः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। छाययाऽऽतपेन पालनेन च ।

---

(१) ०ऽथ ।

'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः ।
पालनोत्कर्षयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियाम्' ॥

इति विश्वः । शमिताऽमरश्रमं निवारितसुरखेदं पारिजातं वृत्रद्विषः शक्रस्याऽभिमानमहङ्कारमिव दिवः स्वर्गादुदमूलयदुन्मूलितवानिति पारिजातहरणोक्तिः । श्लेषसविशेषणेयमुपमेति केचित् । श्लेषश्चान्ये ॥८४॥

**यं समेत्य च ललाटलेखया मुञ्चतः(१) सपदि शम्भुविभ्रमम् ॥
चण्डमारुतमिव प्रदीपवच्चेदिपस्य निरवाद्विलोचनम् ॥ ८५ ॥**

**यमिति** ॥ हे राजन् ! यं श्रीकृष्णं समेत्य प्राप्य चेदिपस्य शिशुपालस्य तृतीयं विलोचनं नयनं निरवात् विनष्टं शशाम । कमिव प्राप्येत्याह—चण्डमारुतमिव प्रचण्डसमीरणमिव, किंवत् निरवात् प्रदीपवत् । यथा चण्डमारुतमासाद्य प्रदीपः निर्वाति शाम्यति, एवमेनं श्रीहरिं दृष्ट्वा शिशुपालस्य नेत्रं निरवादित्यर्थः। किंलक्षणस्य चैद्यस्य ललाटलेखया अलिकरेखया सपदि तत्क्षणं शम्भुविभ्रमं त्रिनयनलीलां त्र्यक्षसारूप्यं मुञ्चतः जहतः । तृतीयनेत्रसद्भावात् किल असौ हरेण सदृशो, न तु अन्यदा ।एवमत्राऽऽगमः—

शिशुपालः पुरा जातः त्रिनेत्रश्च चतुर्भुजः ।
पितरौ चापि तं दृष्ट्वा हातुं वै चक्रतुर्मतिम् ॥
अथोच्चचार नभसो वागेवमशरीरिणी ।
नैष त्याज्यो महाराज ! श्रीमान् वीरो भविष्यति ॥
स चाऽस्य वधको भावी यं दृष्ट्वा न भविष्यतः ।
बाहू नेत्रं च सहसा तस्माद्वै पाल्यतामयम् ॥
कौतुकादथ तं द्रष्टुं नृपाः सर्वे समागमन् ।
अवाक् पूर्वं नृपोऽर्धाङ्के पुत्रं तेषां न्यवेशयत ॥
नाऽसौ प्राप्तविकारं च कृष्णादन्यत्र बान्धवात् ।
तं दृष्ट्वा व्यथिता माता कृष्णं वरमयाचत ॥
न वध्योऽयं त्वया देव ! पुत्रो मे दीयतामिति ।
सहिष्ये शतमागांसि तामुवाच हरिस्तदा ॥ ॥ ८५ ॥

**यमिति** ॥ किञ्चेति चार्थः । ललाटमेव लेखा तया ललाटलेखया ललाटदेशेन शम्भोर्विभ्रमं सौन्दर्यं बिभ्रतः । ललाटलोचनमित्यर्थः । चेदिपस्य शिशुपालस्य लोचनं तृतीयनेत्रं कर्तृ यं हरिमेव चण्डमारुतं चण्डमारुतमिव समेत्य प्रदीपवत्प्रदीपेन तुल्यम् । 'तेन तुल्यम्—' इति वतिप्रत्ययः । निरवान्निर्वाति स्म । नष्टमित्यर्थः । निरपूर्वाद्वाधातोर्लङ् । 'निरवाप' इति क्वाचित्कः पाठः स न सम्यक् । वातेः प्रक्रियाविरोधादप्रीतिरसङ्गतार्थत्वादिति अनेकार्थेयमुपमा ॥ ८५ ॥

**यः कालतां बलवतां च बिभ्रद्दंष्ट्रामुदस्याशु भुजां च गुर्वीम् ॥
मग्नस्य तोयाऽऽपदि दुस्तरायां गोमण्डलस्योद्धरणं चकार ॥ ८६ ॥**

**य इति** ॥ हे राजन् ! यो भगवान् श्रीकृष्णः कोलतां बिभ्रत् सूकरतां धारयन् सन् गुर्वीं महतीं भुजां भुजं च आशु शीघ्रम् उदस्य उत्क्षिप्य गोमण्डलस्य उद्धरणं चकार । किंलक्षणस्य गोमण्डलस्य तोयाऽऽपदि मग्नस्य प्रलयजले मग्नस्य ब्रुडितस्य, द्वयोर्विशेषणम्, किंलक्षणायां तोयापदि दुस्तरायां दुःखेन तीर्यते इति दुस्तरा तस्याम् । यथा पूर्वं कोलतां

(१) बिभ्रतः ।

बिभ्रत् सन् दंष्ट्रामुत्क्षिप्य आशु गोमण्डलं पृथ्वीवलयमुज्जहार, एवमधुनाऽपि बल्लवतां गोपालतां बिभ्रत् भुजामुद्यम्य तोयाऽऽपदि मग्नस्य कष्टजले मुडितस्य गोमण्डलस्य सुरभिवर्गस्य उद्धरणं चकारेत्यर्थः ॥ ८६ ॥

य इति ॥ यो हरिः कोलतां वराहत्वम्। 'वराहः शूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः। बल्लवतां गोपालत्वं च बिभ्रत्। आशु गुर्वीं दंष्ट्रां भुजां च यथासङ्ख्यमिति भावः। उदस्योद्यम्य दुस्तरायां तोयापदि जलसङ्कटे एकत्र समुद्रकृतायाम् अन्यत्र वर्षकृतायां च मग्नस्य गोमण्डलस्य भूगोलस्य धेनुवृन्दस्य चोद्धरणं चकार। अत्र कोलत्वबल्लवत्वयोः प्रकृतयोरेव श्लेषमूलाभेदाध्यवसायेन गोमण्डलोद्धरणस्य दंष्ट्राभुजोद्यमनस्य च साम्यादौपम्यगम्यतायां तुल्ययोगिता सती यथासङ्ख्येन सङ्कीर्यते। इन्द्रवज्रा वृत्तम्। 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति लक्षणात् ॥ ८६ ॥

**धन्योऽसि यस्य हरिरेष समक्ष एव दूरादपि क्रतुषु यज्वभिरिज्यते यः ॥**
**दत्त्वाऽर्घमत्रभवते भुवनेषु यावत्संसारमण्डलमवाप्नुहि साधुवादम् ॥८७॥**

धन्योऽसीति ॥ हे राजन् युधिष्ठिर! धन्योऽसि पुण्यवानसि त्वम्, यस्य ते तव एष हरिः श्रीकृष्णः समक्ष एव प्रत्यक्ष एव। कदाचिदसौ दुर्दर्शनः स्यादित्याह-यो हरिः यज्वभिर्यायजूकैः क्रतुषु यज्ञेषु दूरादपि इज्यते। अप्रत्यक्षोऽपि पूज्यते इत्यर्थः। अतश्च त्वम् अत्रभवते पूज्याय श्रीकृष्णाय अर्घं दत्त्वा पूजां विधाय भुवनेषु जगत्सु संसारमण्डलं यावत् आसंसृतिचक्रं साधुवादमाप्नुहि कीर्तिं लभस्व। कीदृक् पुण्यभाक् युधिष्ठिरो राजा, यस्य योगिभिरदृश्येन भगवता श्रीनारायणेन स्वयं पूजा गृहीतेति यशो लभस्वेति ॥८७॥

एवं देवं स्तुत्वाऽनन्तरं कर्तव्यमुपदिशति—

धन्योऽसीति ॥ धनं लब्धो धन्यः पुण्यवानसि। 'सुकृती पुण्यवान् धन्यः' इत्यमरः। 'धनगणं लब्धा' इति यत्प्रत्ययः। यस्य ते एष हरिः समक्ष एव अक्ष्णोः समीप एव। पुरत एवेत्यर्थः। स्थित इति शेषः। सामीप्येऽव्ययीभावः। 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तः। अत एव 'तृतीयासप्तम्योर्बहुलम्' इति सप्तम्या अमभावः। अन्यत्र को विशेषस्तत्राह—यो हरिर्दूरादपि परोक्षेऽपि क्रतुषु यागेषु यज्वभिर्विधिवदिष्टवद्भिः। 'यज्वा तु विधिनेष्टवान्' इत्यमरः। 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्प्रत्ययः। इज्यते पूज्यते स ते प्रत्यक्ष इति धन्यस्त्वमित्यर्थः। फलितमाह-अत्रभवते, पूज्यायेत्यर्थः। 'पूज्यस्तत्रभवान्' इति सज्जनः। 'इतरेभ्योऽपि दृश्यते' इति सार्वविभक्तिके त्रल्प्रत्यये 'सुप्सुपे'ति समासः। अर्घं पूजां दत्वा यावत्संसारमण्डलं वर्तते तावदिति शेषः। भुवनेषु साधुर्वादः शब्दस्तं साधुवादं साधुसमाख्यामवाप्नुहि। लभस्वेत्यर्थः। अत्र राज्ञो धन्योऽसीति विशेषणगत्या यस्येत्यादिवाक्यार्थहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। वसन्ततिलका वृत्तम् ॥ ८७ ॥

**भीष्मोक्तं तदिति वचो निशम्य सम्यक् साम्राज्यश्रियमथ बिभ्रता(१) नृपेण ॥**
**दत्तेऽर्घे महति महीभृतां पुरोऽपि त्रैलोक्ये मधुभिदभूदनर्घ्य(२) एव ॥८८॥**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये श्रीकृष्णार्घदानं नाम चतुर्दशः सर्गः ॥ १४ ॥

भीष्मोक्तमिति ॥ इति इत्थं तत् भीष्मोक्तं गाङ्गेयभाषितं वचः वचनं सम्यक् निशम्य आदरेण श्रुत्वा अनन्तरं पश्चात् नृपेण राज्ञा युधिष्ठिरेण महीभृतां पुरोऽग्रे राजकप्रत्यक्षम् अर्घे दत्ते सति पूजायां कृतायां सत्यां मधुभित् श्रीकृष्णः अनर्घ्य एव अभवत्, न अर्घ्यः पूज्यो यस्मादित्यनर्घ्यः अतिपूज्य इत्यर्थः। क्व त्रैलोक्ये सकलजगत्सु, अपरिच्छेद्य-

(१) ०मधिगच्छता। (२) दनर्घ।

एवाऽऽसीत् सर्वोत्कृष्टत्वात् अज्ञातरूपत्वाच्च । यस्मै किल अर्घो दत्तः, स कथमनर्घ्यः इति विरोधः स्यात् । किंलक्षणेन नृपेण साम्राज्यश्रियं बिभ्रता चक्रवर्तित्वशोभां दधता, सम्राजः भावः साम्राज्यं तस्य श्रीः ताम् । उक्तं च—

येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।
शास्ति यश्चाऽऽज्ञया राज्ञः स सम्राडभिधीयते ॥

इति । प्रहर्षिणीछन्दः ।। ८८ ॥

इति श्रीशिशुपालवधे महाकाव्ये दत्तकसूनोर्माघस्य कृतौ श्रीमहादेवायनिवल्लभदेव-विरचितायां सन्देहविषौषध्यां टीकायां यज्ञार्घदानं नाम चतुर्दशः सर्गः ।



भीष्मोक्तमिति ॥

'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।
शास्ति यश्चाज्ञया राज्ञः स सम्राट्-'

इत्यमरः । सम्राजो भावः साम्राज्यं तदेव श्रीस्तां श्रियमधिगच्छता भजता नृपेण युधिष्ठिरेण इतीत्थं भीष्मोक्तं तद्वचः सम्यङ् निशम्य श्रुत्वा महीभृता राज्ञा पुरोऽग्रे महति अर्घपूजायां दत्तेऽपि मधुभिद्धरिः त्रयो लोकास्त्रैलोक्यम् । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः । तत्र त्रैलोक्ये कृष्णोऽनर्घः पूजारहित-एवाऽभूदिति विरोधः । अमूल्य एवाऽभूदित्यविरोधः । 'मूल्ये पूजाविधावर्घः' इत्यमरः । अत्रार्घयोरभेदाध्यवसायाद्विरोधः, तदनध्यवसायादविरोध इति विरोधाभासोऽलङ्कारः । प्रहर्षिणी वृत्तम् ॥ ८८ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां शिशुपालवधकाव्यव्याख्यायां सर्वङ्कषाख्यायां चतुर्दशः सर्गः ॥ १४ ॥

---

# पञ्चदशः सर्गः ।

**अथ तत्र पाण्डुतनयेन सदसि विहितं मधुद्विषः ॥**
**मानमसहत न चेदिपतिः परवृद्धिमत्सरि मनो हि मानिनाम् ॥ १ ॥**

अथेति ॥ अथाऽनन्तरं तत्र यज्ञे पाण्डुतनयेन युधिष्ठिरेण मधुद्विषो भगवतः विहितं दत्तं मानम् अर्घं चेदिपतिः शिशुपालः सदसि सभायां न असहत न चक्षमे । हि यतः कारणात् मानिनां मनः अभिमानवतां चित्तं परवृद्धिमत्सरि परर्द्धिषु मात्सर्ययुक्तं भवति । परवृद्ध्या दूयते इत्यर्थः ॥ १ ॥

अथेति ॥ अथ हरिपूजाऽनन्तरं चेदिपतिः शिशुपालः तत्र सदसि सभायां पाण्डुसुतेन युधिष्ठिरेण विहितं मुरद्विषो हरेर्मानं पूजां नाऽसहत । ईर्ष्यां चकारेत्यर्थः । 'परोत्कर्षाऽक्षमेर्ष्या स्याद्दौर्जन्यान्मन्युतोऽपि च' इति लक्षणात् । तथा हि —मानिनामहङ्कारिणां मनः परवृद्धौ मत्सरि हि । परशुभद्वेषि खल्वित्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । अस्मिन्सर्गे उद्गता वृत्तम् ।

'सजसादिमे सलघुके च नसजगुरुकेऽप्यथोद्गता ।
अङ्घ्रिगतभजनजला गयुताः सजसा जगौ चरणमेकतः पठेत्' ॥

इति लक्षणात् ॥ १ ॥

**पुर एव शार्ङ्गिणि सवैरमथ पुनरमुं तदर्चया ॥**
**मन्युरभजदवगाढतरः समदोषकाल इव देहिनं ज्वरः ॥ २ ॥**

**पुर इति ॥** अथाऽनन्तरं मन्युः कोपः तदर्चया तस्य हरेः अर्चया पूजया अमुं शिशुपालं पुनर्भूयः अभजत् सिषेवे । किंलक्षणममुं पुर एव पूर्वमेव शार्ङ्गिणि श्रीकृष्णे सवैरं सामर्षं, किंलक्षणो मन्युः अवगाढतरः अत्यर्थमुत्पन्नः, कः कमिव भजते ज्वर इव देहिनम्। यथा ज्वरः श्रीरुद्रोत्थकृत्यारूपः देहिनं शरीरिणं भृशं श्रयति । किंलक्षणो ज्वरः समदोषकालः समौ अविषमौ दोषकालौ धातुसमयौ यस्य सः तथाविधः । तद्यथा—वसन्तः श्लेष्मकालः । तत्र च यथा श्लैष्मिकं भोजनं दध्यादिकं श्लेष्मप्रकृतिको नरो भुङ्क्ते, तदा तस्य गाढतरो ज्वरो भवति । अन्यदा तावन्मात्रं दोषो धातुः ॥ २ ॥

पुर इति ॥ पुरः पूर्वमेव शार्ङ्गिणि सवैरं सक्रोधममुं चैद्यम् । अथ पुनः अतः परं तदर्चया हरिपूजया अवगाढतरो निबिडतरो मन्युः क्रोधः । रौद्ररसस्य स्थायीभाव इति भावः । देहिनं शरीरिणं समौ तुलितौ दोषोऽपथ्यसेवा कालः कर्मविपाकश्च यस्य स ज्वर इवाऽभजत् । उपमाऽलङ्कारः ॥ २ ॥

अत्र कथं ज्ञायते सकोपोऽसाविति, तदनुभावनामाह—

**अभितर्जयन्निव समस्तनृपगणमसावकम्पयत् ॥**
**लोलमुकुटमणिरश्मि शनैरशनैः प्रकम्पितजगत्त्रयं शिरः ॥ ३ ॥**

**अभितर्जयन्निवेति ॥** असौ चेदिपतिः शनैर्मन्थरं शिरो मस्तकम् अकम्पयत् कम्पयति स्म । उत्प्रेक्ष्यते—समस्तनृपगणमभितर्जयन्निव सकलं राजकं भर्त्सयन्निव । किंलक्षणं शिरः लोलमुकुटमणिरश्मि लोलाः कम्पवशाच्चपला मुकुटमणिरश्मयः किरीटरत्नमरीचयो यस्य तत्तथा, अपरं किंलक्षणं शिरः अशनैर्वेगेन प्रकम्पितजगत्त्रयं प्रकम्पितं भीषितं जगत्त्रयं त्रिभुवनं येन तत्तथा ॥ ३ ॥

अथाऽष्टभिरस्य गात्रारब्धक्रोधचेष्टां प्रपञ्चयति—

अभितर्जयन्निवेति ॥ असौ चैद्यः समस्तनृपगणमभितर्जयन्निवेत्युत्प्रेक्षा । तर्ज भर्त्सने, चौरादिकस्याऽनुदात्तेत्त्वेन प्राप्तस्य आत्मनेपदस्य चक्षिङ्(१)देशस्य ख्याञः स्थानिवद्भावाऽनादरेण पुनर्ञित्करणसामर्थ्यादनित्यत्वज्ञापनात्परस्मैपदम् । अत एव तर्जयतीत्यपि दृश्यते काव्येष्विति भट्टमल्लः । अशनैरतिमात्रं प्रकम्पितं जगत्त्रयं येन तत् त्रैलोक्यभीषणं शिरः शनैर्लोलाश्चपला मुकुटमणिरश्मयो यस्मिन्कर्मणि तद्यथा तथा अकम्पयत् । क्रोधाऽतिरेकादिति भावः ॥ ३ ॥

**स वमन् रुषाऽश्रु घनघर्मविगलदुरुगण्डमण्डलः ॥**
**स्वेदजलकणकरालकरो व्यरुचत् प्रभिन्न इव कुञ्जरस्त्रिधा ॥ ४ ॥**

**स इति ॥** स चैद्यो रुषा कोपेन अश्रु वमन् बाष्पं मुञ्चन् सन् व्यरुचत् नितरां रेजे । किंलक्षण सः घनघर्मविगलदुरुगण्डमण्डलः घनघर्मेण संहतस्वेदेन विगलत् क्षरत् उरु विशालं गण्डमण्डलं गण्डफलकं यस्य सः तथा, अपरं किंलक्षणोऽसौ स्वेदजलकणकरालकरः स्वेदजलकणैः प्रस्वेदवारिसीकरैः करालौ भासुरौ करौ पाणी यस्य सः तथा । उत्प्रेक्षते—त्रिधा प्रभिन्नः कुञ्जर इव त्रिभिर्नेत्रगण्डकरैः मदस्रावी मतङ्गज इव । स्रोतस्त्रयगलितमदजलगजतुल्य इत्यर्थः ॥ ४ ॥

---

(१) 'ञित्त्वस्य पदद्वयार्थं कृतत्वेनाऽज्ञापकत्वादिदमसङ्गतम् । तस्मात् विचक्षण इत्यत्र युजर्थमावश्यकेनाऽनुदात्तेत्त्वेनात्मनेपदे सिद्धे ञित्करणसामर्थ्यात् 'अनुदात्तेत्त्वलक्षणमात्मनेपदमानित्यम्' इत्यस्य सिद्धिर्वक्तव्या' । टिप्पणीयं "निर्णयसागर"मुद्रिते पुस्तके दृश्यते ।

स इति ॥ रुषा रोषेणाऽश्रु वमन्मुञ्चन् , घनेन सान्द्रेण घर्मेण क्रोधोष्मणा विगलत्स्रवत् उरु महत् गण्डमण्डलं यस्य सः । स्विद्यत्कपोल इत्यर्थः । स्वेदजलकणैः स्वेदबिन्दुभिः करालकरो दन्तुरहस्तः स चैद्यः त्रिधा नेत्रकपोलहस्तदेशैः प्रभिन्नो मदस्रावी मत्तः । 'प्रभिन्नो मत्तः स्यात्' इति वैजयन्ती । कुञ्जर इव व्यरुचत् । रुचेः 'द्युद्भ्यो लुङि' इति विकल्पात्परस्मैपदम् । एतेन स्वेदाख्यः सात्त्विकभाव उक्तः । उपमाऽलङ्कारः ॥ ४ ॥

**स निकामघर्मितमभीक्ष्णमधुवदवधूतराजकः ॥**

**क्षिप्तबहुलजलबिन्दु वपुः प्रलयाऽर्णवोत्थित इवादिशूकरः ॥ ५ ॥**

**स इति ॥ स चैद्यः अभीक्ष्णमत्यर्थं वपुः अधुवत् शरीरमकम्पयत् । किंलक्षणं वपुः निकामघर्मितं भृशस्विन्नम्, अत एव अपरं किंलक्षणं वपुः क्षिप्तबहुलजलबिन्दु क्षिप्ताः प्रेरिताः बहुला बहवो जलबिन्दवो वारिकणा यस्मात् तत्तथा । किंलक्षणः सः, अतश्चोत्प्रेक्ष्यते— प्रलयाऽर्णवोत्थितः आदिशूकर इव कल्पान्तोदधिमध्यात् उत्थितः निःसृतः आदिवराह इव । स किल निजबाहुच्छाययाऽऽत्मानं धुवन् उदकविप्रुषश्चिक्षेप । अपरं किंलक्षणः सः अवधूतराजकः निर्भर्त्सितनृपतिमण्डलः ॥ ९ ॥**

स इति ॥ राज्ञां समूहो राजकम् । 'गोत्रोक्ष—' इत्यादिना वुञ्प्रत्ययः । तदवधूतमभिभूतं येन स तथोक्तः स चैद्यो निकामं घर्मितं सञ्जातघर्मम् । उद्भवत्स्वेदमित्यर्थः । 'घर्मः स्यादातपे ग्रीष्म उष्णस्वेदाऽम्भसोरपि' इति विश्वः । तारकादित्वादितच्प्रत्ययः । वपुः, प्रलये अर्णवस्तस्मादुत्थितः ओदशूकर इव क्षिप्ताः प्रेरिता बहुलाः सान्द्रजलबिन्दवो यस्मिन्कर्मणि तथथा तथा अभीक्ष्णमधुवत् क्रोधाद् धुवति स्म । 'धूञ् विधूनने' इति धातोस्तौदादिकाल्लङ् । अत्रापि स्वेदः सात्त्विक एवोक्तः । उपमाऽलङ्कारः ॥ ५ ॥

**क्षणमाश्लिषद्घटितशैलशिखरकठिनांऽसमंसलः(१) ॥**

**स्तम्भमुपहितविधूतिमसावधिकाऽवधूनितसमस्तसंसदम् ॥ ६ ॥**

**क्षणमिति ॥ सः चैद्यः क्षणं क्षणमात्रं स्तम्भम् आश्लिषत् स्तम्भे निषसाद । किंलक्षणं स्तम्भं घटितशैलशिखरकठिनांऽसं घटितो योजितः शैलशिखरमिव गिरिशृङ्गमिव कठिनः कठोरः अंसः स्कन्धो यस्य सः तथा तम्, अपरं किंलक्षणं स्कन्धम् उपहितविधूतिम् आरोपितकम्पं, चालितमित्यर्थः । अत एव अपरं किंलक्षणं स्तम्भम् अधिकाऽवधूनितसमस्तसंसदम् अधिकमतिशयेन अवधूनिता कम्पिता संसत् सभा येन सः तथा तं, किंलक्षणोऽसौ अंसलः बलवान् । 'बलवान् मांसलोंऽसल' इत्यमरः ॥ ६ ॥**

क्षणमिति ॥ घटितं सुसंहितं यच्छैलशिखरं तद्वत्काठिनमंसमण्डलं यस्य सोऽसौ चैद्यः, उपहिताऽवगाहिता । आरोपितेत्यर्थः । विधूतिः कम्पो यस्मिंस्तम् अधिकमत्यन्तमवधूनिता कम्पिता समस्ता सकला संसत् सभा येन तं स्तम्भं क्षणम् आश्लिषत् श्लिष्टवान् । तेनांऽसमण्डलेनाहतवानित्यर्थः । अत एव कठिनांऽसमण्डल इति विशेषणं च । पुषादित्वाच्च्लेरङादेशः । आलिङ्गनार्थत्वे तु 'श्लिष आलिङ्गने' इति क्सादेशः स्यात् । क्रोधाऽन्धाः किमु न कुर्वन्तीति भावः । अत्रांऽसकाठिन्यस्य विशेषणगत्या स्तम्भाश्लेषहेतुत्वात्काव्यलिङ्गं शैलशिखरोपमया सङ्कीर्यते ॥ ६ ॥

**कनकाऽङ्गदद्युतिभिरस्य गमितमरुचत् पिशङ्गताम् ॥**

**क्रोधमयशिखिशिखापटलैः परितः परीतमिव बाहुमण्डलम् ॥ ७ ॥**

**कनकेति ॥ अस्य चेदिपतेः बाहुमण्डलं भुजचक्रम् अरुचत् शुशुभे । किंलक्षणं बाहुमण्डलं कनकाऽङ्गदद्युतिभिः काञ्चनबाहुकटककान्तिभिः पिशङ्गतां गमितं पीतत्वं प्रापितम् ।**

---

( १ ) मण्डलः ।

अपरं किंलक्षणं बाहुमण्डलम्, उत्प्रेक्ष्यते—क्रोधमयशिखिशिखापटलैः क्रोधमयः कोपमयः यः शिखी वैश्वानरः तस्य शिखा ज्वालाः तासां पटलानि समूहास्तैः कोपोत्थवह्निज्वाला-पुञ्जैः परितः समन्तात् परीतमिव व्याप्तमिव ॥ ७ ॥

कनकेति ॥ कनकस्याङ्गदयोः केयूरयोः द्युतिभिः पिशङ्गतां पिङ्गलवर्णतां गमितं प्रापितमिति तद्गुणालङ्कारः । अस्य चैद्यस्य बाहुमण्डलं क्रोधमयशिखिशिखापटलैः क्रोधाग्निज्वालाजालैः परितः परीतं परिवृतमिवाऽरुचादित्युत्प्रेक्षा । 'द्युद्भ्यो लुङि' इति परस्मैपदम् ॥ ७ ॥

**कृतसन्निधानमिव तस्य पुनरपि तृतीयचक्षुषा ॥**
**क्रूरमजनि कुटिलभ्रु गुरुभ्रुकुटीकठोरितललाटमाननम् ॥ ८ ॥**

कृतेति ॥ तस्य चेदिपतेः आननं वदनं क्रूरमजनि भीषणं जातम् । किंलक्षणमाननं कुटिलभ्रु विषमितभ्रूकम्, अपरं किंलक्षणमाननं गुरुभ्रुकुटीकठोरितललाटं गुर्व्या बृहत्याः भ्रुकुट्याः भ्रूकुट्याः कठोरितं कर्कशितं दुर्निरीक्ष्यं कृतं ललाटमलकं यस्य यत्र वा तत्तथोक्तम्। अपरं किंलक्षणमाननम्, उत्प्रेक्ष्यते–पुनरपि भूयोऽपि तृतीयचक्षुषा तृतीयनेत्रेण कृतसन्निधानमिव आहिताऽवस्थानमिव । भ्रुकुटीनयनयोः सादृश्यात् पूर्वं वा असौ त्रिनेत्रोऽभवत् ॥८॥

कृतेति ॥ कुटिले भ्रुवौ यस्य तत्कुटिलभ्रु । उपसर्जनस्य ह्रस्वः । गुर्व्या भ्रूकुट्या भ्रूभङ्गेन कठोरितं भीषणीकृतं ललाटं यस्य तत् तस्य चैद्यस्याऽऽननं पुनरपि तृतीयचक्षुषा कृतसान्निधानं कृतसंसर्गमिवेत्युत्प्रेक्षा । क्रूरमजनि भयङ्करमभूत् । जनेः कर्तरि लुङ्, 'दीपजन–' इत्यादिना विकल्पाच्चिण्प्रत्ययः ॥ ८ ॥

**अतिरक्तभावमुपगम्य कृतमतिरमुष्य साहसे ॥**
**दृष्टिरगणितभयाऽसिलतामवलम्बते स्म समया सखीमिव ॥ ९ ॥**

अतिरक्तेति ॥ अमुष्य चैद्यस्य दृष्टिः दृक् समया समीपवर्तिनीम् असिलतामवलम्बते स्म, खड्गलतामद्राक्षीदित्यर्थः । किंलक्षणा दृष्टिः साहसे हरिवधलक्षणे महाकर्मणि कृतमतिः विहितबुद्धिः, अपरं किंलक्षणा दृष्टिः अगणितभया तृणीकृतत्रासा । दृष्टिद्वारेण तस्यैव ते विशेषणे बोद्धव्ये । किं कृत्वा अतिरक्तभावमुपगम्य अतिशयेन लौहित्यं प्राप्य । क्रोधात् हि चक्षुः रक्तं जायते । कामिव अवलम्बते स्म सखीमिव वयस्यामिव । यथा काचित्तरुणी साहसे असाध्ये अकार्ये कृतमतिः अगणितभया मुक्तकान्तभीः क्वचिद्रक्तभावं व्यसनित्वमुपगम्य समीपस्थां विश्वासधारिणीं सखीमवलम्बते श्रयति । सा हि तस्याः वक्ति—हे सखि ! अत्र पुरुषे मम मनो गतं, त्वमत्र शरणमिति ॥ ९ ॥

अतिरक्तेति ॥ अमुष्य चैद्यस्य दृष्टिः । अतिरक्तस्य भावस्तमतिरक्तभावं रोषाऽतिरेकादत्यरुणताम् अन्यत्र कर्माऽतिरेकादत्यनुरागितामुपगम्य प्राप्य साहसे कृष्णादिवधरूपे, अन्यत्र युद्धे कृतमतिः । सर्वथा गमिष्यामि हनिष्यामि इति च कृतनिश्चया अर्थनिर्धारणं मतिरिति । अगणितमविचारितं भयं शत्रोर्गुरुजनाच्च यया सा सती समया समीपे असिलतां सखीमिवाऽऽलम्बते स्म साधनत्वेन स्वीचकार । क्रोधाज्जिघांसया खड्गमद्राक्षीदित्यर्थः । अत्र प्रस्तुतदृष्टिविशेषणसाम्यादप्रस्तुतनायिकाप्रतीतेः समासोक्तिरुपमासङ्कीर्णा ॥ ९ ॥

**करकुड्मलेन निजमूरुमुरुतरनगाऽश्मकर्कशम् ॥**
**त्रस्तचपलवलमान(१)जनश्रुतभीमनादमयमाहतोच्चकैः ॥ १० ॥**

करेति ॥ अयं चैद्यः करकुड्मलेन पाणिमुकुलेन निजमात्मीयम् ऊरुं सक्थिम् उच्चकैः

(१) चलमान ।

वेगेन आहत अताडयत् । किंलक्षणमूरुम् उरुतरनगाऽश्मकर्कशम् उरुतरः गरीयान् यः नगाऽश्मा गण्डशैलः तद्वत् कर्कशः कठिनः तं गरीयोगण्डशैलकठिनम्, अपरं किंलक्षणमूरुं त्रस्तचपलवलमानजनश्रुतभीमनादं त्रस्तैः 'किमिदं स्या'दिति भीतैः चपलैः सरलहृदयैः वलमानैः इतस्ततो गच्छद्भिः जनैः सभालोकैः श्रुतः आकर्णितः भीमो भयङ्करो नादः शब्दो यस्य सः तथा तं, यत्र आहवने इति क्रियाविशेषणं वा ॥ १० ॥

करेति ॥ अयं चैद्यः उरुतरो महत्तरो नगाऽश्मवच्छैलशिलेव कर्कश इत्युपमा । तं निजमात्मीयमूरुं सक्थि । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । करः कुड्मल इवेत्युपमितसमासः, तेन । संहतप्रसारिताऽङ्गुलिना पाणितलेनेत्यर्थः । त्रस्तो भीतः अत एव चपलं चञ्चलं चलमानेन जनेन श्रुतो भीमनादो भयङ्करध्वनिर्यस्मिन्कर्मणि तद्यथा तथा उच्चकैराहत आहतवान् । अलब्धलक्ष्याः क्रोधाऽन्धाः स्वात्मानमेव घ्नन्तीति भावः । आङ्पूर्वाद्धन्तेर्लङ्, 'आङो यमहनः' इत्यकर्मकाधिकारेऽपि 'स्वाङ्गकर्मकाच्चेति वक्तव्यम्' इत्यात्मनेपदे 'अनुदात्तोपदेश–' इत्यादिनाऽनुनासिकलोपः ॥ १० ॥

**इति चुक्रुधे भृशमनेन ननु महदवाप्य विप्रियम् ॥**
**याति विकृतिमपि संवृतिमत् किमु यन्निसर्गनिरवग्रहं मनः ॥ ११ ॥**

इतीति ॥ अनेन चैद्येन इति इत्थं भृशमत्यर्थं चुक्रुधे । युक्तं चैतत्, ननु यत् यस्मात् अपि संवृतिमत् गभीरमपि मनः चित्तं महत् विप्रियम् अतिशयेन अवमानम् अवाप्य प्राप्य विकृतिं याति विकारं प्राप्नोति । यत्तर्हि निसर्गनिरवग्रहं स्वभावनिरङ्कुशं स्वतन्त्रं निर्मर्यादं, किमु । किं पुनर्भण्यते इत्यर्थः ॥ ११ ॥

इतीति ॥ इतीत्थमनेन प्रकारेण अनेन चैद्येन भृशं चुक्रुधे क्रुद्धम् । भावे लिट् । संवृतिमदपि संवृतिर्विकारगुप्तिः तद्वदपि । धीरमपीत्यर्थः । मनो महाद्विप्रियमप्रियमवाप्य विकृतिं विकारं याति ननु प्राप्नोति खलु । यन्मनो निसर्गात्स्वभावान्निरवग्रहम् । चपलमित्यर्थः । ग्रहेः खल्प्रत्ययः । तदिति शेषः । किमु । विकृतिं यातीति किमु वक्तव्यमित्यर्थः । चपलचित्तश्चाऽयं चैद्य इति भावः । अत्र चैद्यक्रोधस्य नन्वित्यादिवाक्यार्थहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ११ ॥

**प्रथमं शरीरजविकारकृतमुकुलबन्धमव्यथी ॥**
**भाविकलहफलयोगमसौ वचनेन कोपकुसुमं व्यचीकसत् ॥ १२ ॥**

प्रथममिति ॥ असौ चैद्यः वचनेन गिरा कोपकुसुमं व्यचीकसत् कोप एव कुसुमं प्रसूनं व्याकोशयामास । गिरा कोपमाविश्चकारेत्यर्थः । उवाचेति भावः । किंलक्षणं कोपकुसुममिति पुष्पसाधर्म्यमाह—प्रथमं शरीरजविकारकृतमुकुलबन्धं पूर्वं शरीरजैर्देहोत्थैः विकारैरनुभावैः घर्मलौहित्योरुताडनादिभिः कृतः मुकुलबन्धः कलिकाप्रादुर्भावो यस्य तत् तथा तत्, शरीरविकार एव मुकुलबन्धः । अपरं किंलक्षणं कोपकुसुमं भाविकलहफलयोगं भावी भविष्यन् यः कलहः कोपः सङ्ग्रामः स एव फलयोगो यस्य तत्तथा तत् । कुसुमे हि मुकुलेन विकासेन फलेन च भाव्यम् । किंलक्षणोऽसौ अव्यथी निर्भयः ॥ १२ ॥

एवं गात्रारब्धविकारानुक्त्वा वागारब्धान् वक्तुमुपोद्घातयति—

प्रथममिति ॥ न व्यथते बिभेतीत्यव्यथी निर्भयः । 'द्विषद्वि' इत्यादिना नञ्पूर्वाद्व्यथतेरिनिः । असौ चैद्यः प्रथमं शरीरजैर्विकारैः पूर्वोक्तैः शिरःकम्पनादिभिः कृतो मुकुलबन्धो मुकुलप्रादुर्भावो यस्य तत् । भाविकलहस्य रणस्यैव फलस्य योगो यस्य तत् । 'अस्त्रियां समराऽनीकरणाः कलहविग्रहौ' इत्यमरः । कोप एव कुसुमं तत् वचनेन 'यदपूपुज' इत्यादिवक्ष्यमाणवाक्येन व्यचीकसद्विकासयति स्म । कसेः णौ चङ्युपधाया ह्रस्वः । 'दीर्घो लघोः' इत्यभ्यासदीर्घः । अत्र विकारकलहवचनकोपेषु मुकुलफलाविकासकुसुमत्वरूपणात्समस्तवस्तुवर्तिसावयवरूपकम् ॥ १२ ॥

ध्वनयन् सभामथ सनीरघनरवगभीरवागभीः ॥
वाचमवददिति रोष(१)वशादतिनिष्ठुरस्फुटतराऽक्षरामसौ ॥ १३ ॥

ध्वनयन्निति ॥ अथाऽनन्तरम् असौ चैद्यः इति वक्ष्यमाणां वाचमवदत् गिरमवोचत् । किं कुर्वन् सभां ध्वनयन् सदः प्रतिरवेण मुखरयन्, अपरं किंलक्षणोऽसौ सनीरघनरवगभीरवाक् सनीरो जलयुतो यो घनो मेघः तस्य रवो गर्जितं तद्वत् गभीरा कालान्तरस्थायिनी वाक् वाणी यस्य सः तथा, अपरं किंलक्षणोऽसौ अभीर्निर्भयः, किंलक्षणां वाचं रोषवशात् अतिनिष्ठुरस्फुटतराऽक्षरां कोपबलात् अतिनिष्ठुराणि भृशं परुषाणि स्फुटतराणि अतिव्यक्तानि अक्षराणि वर्णा यस्यां सा तथा ताम् ॥ १३ ॥

ध्वनयन्निति ॥ अथ सनीरघनरवगभीरवाक्, सजलमेघगर्जितगभीरस्वर इत्यर्थः । अभीः निर्भीकः असौ चैद्यः सभामास्थानं ध्वनयन् अतिरोषवशादतिनिष्ठुराण्यतिपरुषाणि स्फुटतराणि चाऽक्षराणि यस्यास्तां वाचमवदत् । घनरवगभीरेत्युपमालङ्कारः ॥ १३ ॥

यदपूपुजस्त्वमिह पार्थ! मुरजितमपूजितं सताम् ॥
प्रेम विलसति महत्तदहो ! दयितं जनः खलु गुणीति मन्यते ॥ १४ ॥

यदिति ॥ हे पार्थ ! हे युधिष्ठिर ! यत् त्वमिह यज्ञे सतामपूजितं साधूनामपूजितं मुरजितं मुरहन्तारं श्रीकृष्णम् अपूपुजः अर्चितवान्, तत् अहो आश्चर्यं महत्प्रेम विलसति अतिहार्दं विजृम्भते । खलु यस्मात्कारणात् दयितं प्रियं जनो लोक इति मन्यते जानाति–यत्, अयं गुणी गुणवान् अयम् । यो हि यस्य प्रियो भवति, स तं निर्गुणमपि गुणिं मन्यते इत्यर्थः ॥ १४ ॥

वाचमवददित्युक्तम्, अथ तामेव प्रपञ्चयन् पञ्चभिः पाण्डवोपालम्भमाह —

यदिति ॥ हे पार्थ ! पृथापुत्रेति मातृप्राधान्येनाऽमन्त्रणं मर्मोद्घाटनार्थम् । सतामपूजितम्, सद्भिरपूज्यमानामित्यर्थः । 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः । 'क्तस्य च वर्तमाने' इति षष्ठी । मुराजितं कृष्णम् इह सदसि यद् यस्मादपूपुजः पूजयासि स्म । णौ चङ्युपधाया ह्रस्वः । तत्तस्मान्महत्प्रेम विलसति स्फुरति । अन्यथा कथमपूज्ये पूज्यत्वाऽभिमान इत्यभिप्रेत्याह--जनो लोकः दयितं प्रियं जनं गुणीति मन्यते खलु । अगुणिनमपीत्यर्थः । अहो आश्चर्यम् । कृष्णः प्रेम्णा पूजितो न गुणादिति भावः । अत्र प्रेमविलसितस्योत्तरवाक्यार्थहेतुकं काव्यलिङ्गम् ॥ १४ ॥

यदराज्ञि राजवदिहाऽर्घ्यमुपहृत(२)मिदं मुरद्विषि ॥
ग्राम्यमृग इव हविस्तदयं भजते ज्वलत्सु न महीश !–वह्निषु ॥ १५ ॥

यदिति ॥ हेपार्थ ! इह यज्ञे इदम् अर्घ्यं पूजनं त्वया मुरद्विषि श्रीकृष्णे उपहृतमुपढौकितं, किंलक्षणे मुरद्विषि अराज्ञि अभूपतौ । तावदेष केषां राज्ञां मध्ये इत्यर्थः । किंवत् राजवत् राज्ञि इव । यथा राज्ञि अर्घ्यमुपहियते । हे महीश ! हे पृथ्वीपते । तत् अर्घ्यम् अयं कृष्णः न भजति न अर्हति, न प्राप्नोतीत्यर्थः । क इव ग्राम्यमृग इव । यथा ग्राम्यमृगः कुक्कुरः वह्निषु वैश्वानरेषु ज्वलत्सु उल्लसत्सु सत्सु हविः सान्नाय्यं न भजते । वह्निषु देदीप्यमानेषु कथं कोऽपि ग्राम्यमृगे हविः निःक्षपतीति भावः ॥ १५ ॥

यदिति ॥ अराज्ञि । अभिषेकादिराजगुणविरहिणीत्यर्थः । 'नञस्तत्पुरुषात्' इति समासान्तप्रतिषेधः । इहाऽस्मिन्मुरद्विषि कृष्णे । अपात्रत्वद्योतनार्थमसम्प्रदानविभक्तिनिर्देशः । राजानमर्हतीति राजवद्राजा-

(१) दतिरोष० । (२) मुपाहित ।

ऽर्हम्। 'तदर्ह'मिति वतिप्रत्ययः। 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वम्। यादिदमर्घ्यमर्घार्थं द्रव्यम्। अर्हण-मित्यर्थः। उपहितमर्पितं, तदर्घ्यमयं कृष्णः महीशा अवनिपा वह्नय इवेत्युपमितसमासः। तेषु महीशवह्निषु ज्वलत्सु सत्सु, अन्यत्र महीशा इव वह्नयस्तेषु ज्वलत्सु सन्स्वित्यर्थः। ग्राम्यमृगः शुनको हविरिव न भजते न प्राप्नोति। उपमाऽलङ्कारः॥ १५॥

**अनृतां गिरं न गदसीति जगति पटहैर्विघुष्यसे॥**
**निन्द्यमथ च हरिमर्चयतस्तव कर्मणैव विकसत्यसत्यता॥ १६॥**

**अनृतामिति॥ हे पार्थ! त्वं जगति विश्वस्मिन् पटहैः आनकैः कृत्वा इति विघुष्यसे शब्द्यसे। इतीति किम्—यत्, अनृतां गिरं न गदसि असत्यां वाणीं न भाषसे इति। अथ च निन्द्यं निन्दनीयं हरिं श्रीकृष्णम् अर्चयतः पूजयतः तव कर्मणैव असत्यता विकसति तव अलीकभाषित्वं हरिपूजयैव पृथिव्यामुल्लसतीति भावः। अग्रे त्वं सत्यवादीति प्रथितः, परममुना हरिपूजनकर्मणा तव असत्यता जातैवेत्यर्थः॥ १६॥**

अनृतामिति॥ हे पार्थ! अनृतामसत्यां गिरं न गदसि न वदसीति जगति लोके पटहैर्वाद्यविशेषैः कर्तृभिर्विघुष्यसे उद्घोष्यसे। अथ च तथापि निन्द्यं हरिमर्चयतस्तव कर्मणा अपूज्यपूजाकरणेनैवाऽसत्यता सत्यहीनता विकसति प्रकाशते। अत्राऽसत्यप्रसिद्धसत्याचरणयोर्विरूपयोर्घटनाद्विरूपघटनारूपो विषमालङ्कारः॥

**तव धर्मराज इति नाम कथमिदमपष्ठु पठ्यते॥**
**भौमदिनमभिदधत्यथ वा भृशमप्रशस्तमपि मङ्गलं जनाः॥ १७॥**

**तवेति॥ हे पार्थ! तव धर्मराज इति नाम धर्मराज एवमभिधानं कथम् अपष्ठु पठ्यते किमु वृथा उच्यते। धर्मराज इति नाम तव न घटते इत्यर्थः। अथ वा इदमपि युक्तं, यतः कारणात् जना लोकाः भृशमत्यर्थमतिशयेन अप्रशस्तमपि निन्द्यमपि भौमदिनं मङ्गलम् अभिदधति। सर्वकार्येषु निषिद्धमपि भौमदिनं जना मङ्गलं वदन्ति। तथा तवापि लोकोक्तमिदं नामेति भावः॥ १७॥**

तवेति॥ हे पार्थ! तवेदं धर्मराज इति नाम कथमपष्ठु असत्यमेव पठ्यते। 'अपदुःसुभ्यः स्थः' इत्यौणादिकः कुप्रत्ययः। 'अम्बाम्बगोभूमि-' इत्यादिना षत्वम्। यद्वा युक्तमेव तादित्याह—अथ वा जनाः भृशमप्रशस्तमपि भौमदिनमङ्गारकवारं मङ्गलमभिदधति व्यपदिशन्ति। तद्वदिदमपीत्यर्थः। लोकैरप्रशस्तं प्रशस्तशब्देन विरुद्धार्थेनाऽपि व्यपदिश्यते तदुच्चारणदोषात्, तद्वदधर्मराजस्यापि ते धर्मराजव्यपदेश इति भावः। अत्र धर्मराजभौमदिनयोर्निरपेक्षवाक्यद्वये प्रतिबिम्बकरणाद् दृष्टान्तालङ्कारः॥ १७॥

**यदि वाऽर्चनीयतम एष किमपि भवतां पृथासुताः!॥**
**शौरिरवनिपतिभिर्निखिलैरवमानार्थमिह किं निमन्त्रितैः॥ १८॥**

**यदि वेति॥ हे पृथासुताः! कुन्तीपुत्राः युधिष्ठिरप्रमुखाः! वा अथ वा यदि चेत् किमपि केनापि प्रकारेण भवतां युष्माकम् एष शौरिः अयं श्रीकृष्णः अर्चनीयतमोऽभूत् पूज्यतमोऽभवत्, तदा इह यज्ञे अखिलैः समस्तैः अवनिपतिभिः राजभिः अवमाननार्थमवगणनाय निमन्त्रितैः आकारितैः किं कार्यमभवत्॥ १८॥**

यदि वेति॥ हे पृथासुताः! कौन्तेयाः! एष शौरिर्वा, शौरिरेवेत्यर्थः। 'वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये' इति विश्वः। किमपि कथमपि भवतामर्चनीयतमो यदि पूज्यश्चेत्। तर्हीति शेषः। अवमानस्तिरस्कारः तस्मै तदर्थमेव। अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या। क्रियाविशेषणम्। निमन्त्रितैराहूतैर्निखिलैरवनिपतिभिरिह किम्। कोऽर्थः साध्य इत्यर्थः। अत एव साधनक्रियापेक्षया करणत्वे तृतीया। अत्र गम्यमानक्रियापेक्षयाऽपि कारकवृत्तिरिति न्यासोद्योते। अत्र सकलराजनिषेधस्य पूर्ववाक्यार्थहेतुकत्वात्काव्यलिङ्गभेदः॥ १८॥

**अथ वा न धर्ममसुबोधसमयमवयात बालिशाः ! ॥**
**काममयमिह वृथापलितो हतबुद्धिरप्रणिहितः सरित्सुतः ॥ १९ ॥**

**अथ वेति** ॥ हे ! बालिशाः मूर्खाः ! अथ वा यूयं धर्मं न अवयात आचारं न जानीत । किंलक्षणं धर्मम् असुबोधसमयं दुर्ज्ञेयसिद्धान्तम् । धर्मसमयो दुर्ज्ञेयः । अपरं कामं निश्चितम् अयं सरित्सुतो नदीपुत्रो गाङ्गेयोऽपि वृथापलितः मिथ्यावृद्धः । यतः किंलक्षणः हतबुद्धिः निन्द्यमतिः, अपरं किंलक्षणः अप्रणिहितः असावधानः अज्ञानः । एनं भीष्मं वर्जयित्वा कोऽप्यन्यो हरिपूजने मतिं ददातीति काकूक्तिः । अत एव हतबुद्धिरित्यर्थः ॥ १९ ॥

अथ त्रिभिर्भीष्मोपालम्भमाह—

अथ वेति ॥ अथ वा बालिशा! मूर्खाः ! यूयमिति शेषः । सुबोधो न भवतीत्यसुबोधो दुर्बोधः समय-आचारो यस्य तं धर्मं नाऽवयात न जानीत । अवपूर्वात् याधातोर्लोटः 'तस्थस्थ—'इत्यादिना थस्य तादेशः । किन्तु वृथा निष्फलं पलितं यस्य स वृथापलितः, वृथापरिणत इत्यर्थः । 'पलितं जरसा शौक्ल्यम्' इत्यमरः । वृथात्वे हेतुः—हतबुद्धिर्नष्टमतिरयं सरित्सुतो भीष्मोऽपि काममप्रणिहितोऽनवहितः प्रमत्तः । बालाः पार्था न जानन्तु, हन्त ! वृद्धोऽपि न जानातीति चित्रमित्यर्थः । अत एव सत्यपि कारणे कार्याऽनुदयाद्विशेषोक्तिरलङ्कारः । तथा बालिशत्वधर्मदुर्बोधत्वयोर्विशेषणगत्या धर्मज्ञानाहेतुत्वात्काव्यलिङ्गं चेत्यनयोः सापेक्षत्वात्सङ्करः ॥ १९ ॥

**स्वयमेव शन्तनुतनूज ! यमिह (१) गणमर्घ्यमभ्यधाः ॥**
**तत्र मुररिपुरयं कतमो यमवद्य(२)बन्दिवदभिष्टुषे वृथा ॥ २० ॥**

**स्वयमेवेति** ॥ हे शन्तनुतनूज ! शन्तनोः पुत्र ! गाङ्गेय ! इह अस्मिन् त्वं स्वयमेव आत्मनैव यम् अर्घ्यं पूज्यं गणं स्नातकादिसमवायम् अभ्यधाः अवोचः, तत्र अर्घ्ये गणे अयं मुररिपुः श्रीकृष्णः कतमः तन्मध्ये अयं कः, न कोऽपीत्यर्थः । यं कृष्णम् अवद्यबन्दिवत् दूष्यभट्ट इव वृथा मृषा असत्येन अभिष्टुषे स्तौषि । २० ॥

स्वयमेवेति ॥ हे शन्तनुतनूज ! भीष्म ! स्वयमेवेत्यर्थः । यमपि गणं वर्गमर्घ्यमर्घार्हं पूज्यम् । 'दण्डादिभ्यो यत्' इति यत्प्रत्ययः । अभ्यधा अवोचः । 'स्नातकं गुरुम्' इत्यादिश्लोक इति भावः । धाधातोर्लुङि 'गातिस्था–' इत्यादिना सिचो लुक् । तत्र स्नातकादिगणे अयं मुररिपुः कतमः । न कोऽपीत्यर्थः । माऽस्तु अस्तु वा, अस्मदुपालम्भे को हेतुरत आह-यमिति । यं मुररिपुमनिन्द्यबन्दिवत्प्रगल्भवैतालिकवदित्युपमा । अभिष्टुषे मिथ्या स्तौषि । अतस्त्वमेवोपालभ्यस इति भावः । 'उपसर्गात्सुनोति–' इत्यादिना षत्वम् ॥ २० ॥

**अवनीभृतां त्वमपहाय गणमतिजडः समुन्नतम् ॥**
**नीचि नियतमिह यच्चपलो निरतः स्फुटं भवसि निम्नगासुतः ॥२१॥**

**अवनीभृतामिति**॥ हे गाङ्गेय ! त्वं समुन्नतं महान्तम् अवनीभृतां गणं राज्ञां समूहम् अपहाय परित्यज्य नियतं निश्चितम् इह नीचि नीचे निन्द्ये श्रीकृष्णे यत् निरतः भक्तिपरः, तदा स्फुटं निश्चितं निम्नगात्मजो भवसि निम्नं नीचं गच्छतीति निम्नगा तस्याः पुत्रो वर्तसे । नीचगायाः पुत्रस्य एतदेव युक्तमित्यर्थः । किंलक्षणस्त्वम् अतिजडः महामूढः, अपरं किंलक्षणस्त्वं चपलः अस्थिरस्वभावः । नद्यो यतः अवनीभृतां पर्वतानां समुन्नतं गणं परित्यज्य नीचासक्ता हि भवन्ति, तत्पुत्रस्त्वमित्यर्थः ॥ २१ ॥

---

(१) यमपि । (२) यमनिन्द्य ।

अवनीभृतामिति ॥ अतिजडोऽतिमूढोऽतिशीतश्च चपलोऽस्थिरः सत्वरश्च त्वं समुन्नतमुन्नतमवनीभृतां राज्ञां भूधराणां च गणमपहाय । न्यञ्चतीति न्यङ् तस्मिन्नीचि नीचवृत्ते निम्ने च । 'अचः' इत्यकारलोपे 'चौ' इति दीर्घः । इहाऽस्मिन्कृष्णे यद् यस्मान्नियतं नित्यं निरतोऽनुरक्तः प्रवणश्च, तदिति शेषः । निम्नं नीचं गच्छतीति निम्नगा नदी । 'डोऽन्यत्रापि दृश्यते' इति डप्रत्ययः । तस्याः सुतो भवसि स्फुटं व्यक्तम् । नीचनिरतत्वादिधर्मसंक्रमादिति भावः । उक्तं च—'न पित्र्यमनुवर्तन्ते मातृकं द्विपदाः' इति । अत्र चतुर्थपादार्थस्य पूर्ववाक्यार्थहेतुकत्वात्काव्यलिङ्गभेदः ॥ २१ ॥

**प्रतिपत्तुमङ्ग ! घटते च न तव नृपयोग्यमर्हणम् ॥**
**कृष्ण ! कलय ननु कोऽहमिति स्फुटमापदां पदमनात्मवेदिता ॥ २२ ॥**

**प्रतिपत्तुमिति ॥ पुनः श्रीकृष्णं प्रत्याह—अङ्गेत्यामन्त्रणे, हे श्रीकृष्ण ! च परं तव इदं नृपयोग्यमर्हणं राजयोग्यमर्घ्यं प्रतिपत्तुमङ्गीकर्तुं न घटते न युज्यते । नन्विति सम्बोधने, हे कृष्ण ! त्वम् इति कलय आत्मनैवेति विचारय । इतीति किं-यत्, अहं कः कस्य सुतः। अपरं स्फुटं निश्चितम् अनात्मवेदिता अनात्मज्ञत्वम् आपदां पदम् । अविचारणा आपदास्पदमित्यर्थः ॥ २२ ॥**

अथ सप्तदशाभिः कृष्णोपालम्भं करोति—

प्रतिपत्तुमिति ॥ हे अङ्ग ! तव नृपयोग्यं राजाऽर्हमर्हणं पूजनं प्रतिपत्तुं स्वीकर्तुं न च घटते न युज्यते। नन्वहमपि राजैव, कथमर्हणं मे न युक्तं तत्राह—कृष्णेति । हे कृष्ण ! अहं क इति कलय । अहं राजा न वेति निजस्वरूपमालोचयेत्यर्थः । अनालोचनेऽनर्थमाह—अनात्मवेदिता अनात्मज्ञत्वम् आपदां पदं स्थानं स्फुटं खलु । सत्यमित्यर्थः । आत्मा च कंसकिङ्करस्तस्य पशुपालकत्वादिति भावः । अतो निजस्वरूपं चिन्त्यमिति हेतुमद्भावात्काव्यलिङ्गमिति ॥ २२ ॥

**असुरस्त्वया न्यवधि कोऽपि मधुरिति कथं प्रतीयते ॥**
**दण्डदलितसरघः प्रथसे मधुसूदनस्त्वमिति सूदयन्मधु ॥ २३ ॥**

**असुर इति ॥ हे कृष्ण ! इति कथं प्रतीयते ईदृशं कथं ज्ञायते, यत् त्वया कोऽपि मधुनामा असुरः न्यवधि निहतः । अपरं पुनस्त्वं मधुसूदन इति प्रथसे विख्यातो भवसि, किं कुर्वन् मधु सूदयन् मक्षिकापटलं घातयन् । किंलक्षणः त्वं दण्डदलितसरघः दण्डेन दलिताः सरघाः लगुडेन ताडिता मधुमक्षिका येन सः तथा । अत एव मधुसूदन- उच्यसे इत्यर्थः ॥ २३ ॥**

असुर इति ॥ मधुरिति कोऽप्यसुरस्त्वया न्यवधि हतः । 'आत्मनेपदेष्वन्यतरस्याम्' इति हन्तेर्लुङि विकल्पाद्वधादेशः । इति कथं प्रतीयते विश्वस्यते । न कथञ्चिदित्यर्थः । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । किन्तु दण्डेन दलिता ध्वस्ता सरघा मधुमक्षिका येनेदृशस्त्वम् । 'सरघा मधुमक्षिका' इत्यमरः । अत एव मधु क्षौद्रं सूदयन्पीडयन् मधुसूदन इति प्रथसे प्रथितोऽसि । मक्षिकासूदनमेव मधुसूदनसंज्ञाप्रवृत्तिनिमित्तं, न तु मधुनाम्नो दैत्यस्य सूदनमित्यर्थः । अत्र मधुसूदनसंज्ञायां प्रसिद्धार्थनिषेधस्योत्तरवाक्यस्याऽन्यथा व्युत्पादनहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ २३ ॥

**मुचुकुन्दतल्पशरणस्य यवन(१)पतिशाततौजसः ॥**
**सिद्धमबल ! सबलत्वमहो ! तव रोहिणीतनयसाहचर्यतः ॥ २४ ॥**

**मुचुकुन्देति ॥ अहो इति सम्बोधने, हे अबल ! हे निर्बल ! कृष्ण ! तव सबलत्वं रोहिणीतनयसाहचर्यतः रोहिणीतनयो बलभद्रस्तस्य साहचर्यं योगः तस्मात् बलदेवयोगात्**

---

(१) मगध ।

सिद्धं निष्पन्नम्। कथंभूतस्य तव मुचुकुन्दतल्पशरणस्य मुचुकुन्दनाम्नो नृपस्य तल्पं शय्या एव शरणं रक्षितृ यस्य सः मुचुकुन्दतल्पशरणः तस्य । मुचुकुन्दनाम्नो नृपस्य शय्यायाः अधः प्रविश्य येनाऽऽत्मा रक्षित इत्यर्थः । अपरं किंलक्षणस्य तव यवनपतिशातितौजसः यवनिपतिना कालयवनेन शातितं नाशितं कृत्तम् ओजस्तेजो यस्य सः तथा तस्य । अत-एव त्वमबलः, परं सह बलेन हलिना वर्तसे इति कृत्वा सबलः । पौरुषवृत्त्या न सबल इत्यर्थः॥

मुचुकुन्देति॥ हे अबल ! बलहीन ! कुतः–मुचुकुन्दो नाम कश्चिद्राजा। यस्याऽसुरविजयश्रान्त्या निद्राय-माणस्य देवतावरप्रसादान्निद्राविघातकारी दृष्टिपाताद्भस्मीभवति। तस्य तल्पं शय्या तदेव शरणं रक्षकं यस्य तस्य। कालयवनाविद्रावितस्येति भावः। तथा मगधपतिना जरासन्धेन शातितौजसः अष्टादशकृत्वो नष्टवीर्यस्य तव, रोहिणीतनयस्य बलाऽपरनाम्नो बलभद्रस्य साहचर्यतः साहचर्यात्सबलत्वं सिद्धम्। न तु स्वबलसम्पत्त्येत्यर्थः। अहो ! कारणं विना कार्योदय'दाश्चर्यम्। अत एव विभावनाऽलङ्कारः। पुण्यैर्यशो लभ्यते इति भावः॥२४॥

**छलयन् प्रजास्त्वमनृतेन कपटपटुरैन्द्रजालिकः॥**
**प्रीतिमनुभवसि नग्नजितः सुतयेष्टसत्य इति सम्प्रतीयसे॥ २५॥**

छलयन्निति॥ हे कृष्ण! त्वम् इति हेतोः इष्टसत्यः वल्लभसत्यः सम्प्रतीयसे मन्यसे, सर्वलोकैरिति शेषः। इतीति किं–यतः, नग्नजितः सत्राजितस्य सुतया तनयया सत्य-भामया सह प्रीतिमनुभवसि स्नेहं वहसि इति। इष्टा सत्या सत्यभामा यस्य सः इष्ट-सत्यः, न पुनरिष्टं सत्यं यस्येति। अत एव इष्टसत्य उच्यसे। किं कुर्वन् अनृतेन कपटेन प्रजाः छलयन् लोकान् वञ्चयन्। प्रजाः छलयतः कुतः इष्टसत्यत्वमित्यर्थः। अपरं किं-लक्षणस्त्वं कपटपटुः कपटे छद्मनि पटुश्चतुरः कपटपटुः, कापटिकः। धूर्त इत्यर्थः। यतः अपरं किंलक्षणः ऐन्द्रजालिकः इन्द्रजालेन मायया चरतीत्यैन्द्रजालिकः। यः किल कापटिकः प्रजा-छलनोद्यतः, स कथमिष्टसत्यो भवति। परम् इष्टा सत्या सत्यभामा यस्येत्यत एव इष्ट-सत्य इति भावः॥ २५॥

छलयन्निति॥ इन्द्रजालं वेत्तीत्यैन्द्रजालिकः। अत एव कपटपटुर्वञ्चनाकुशलस्त्वम् अनृतेनाऽसत्येन प्रजाश्छलयन्वञ्चयन् इष्टं सत्यं यस्य स इष्टसत्यः प्रियसत्य इति सम्प्रतीयसे सम्यक्ख्यायसे। 'प्रतीते प्रथित-ख्यातवित्तविज्ञातविश्रुताः' इत्यमरः। नग्नजितो नग्नजिन्नाम्नो राज्ञः सुतया सत्यभामया सत्याऽपराख्यया प्रीतिमानन्दमनुभवसि। सत्यायोगादिष्टसत्यो न तु सत्ययोगादिति भावः। अत्र हरेः सत्यसम्बन्धेऽपि तदस-म्बन्धोक्तेः सम्बन्धेऽसम्बन्धरूपातिशयोक्तिः॥ २५॥

**बहुशो रणेषु रथचक्रमधित परिमण्डलं त्वया॥**
**साधु तदिदमयशःशकलं करणे धृतं नु यदुचक्रसम्पदा(१)॥**

बहुश इति॥ हे कृष्ण! यत् त्वया बहुशो रणेषु यदुचक्रसम्पदा रथचक्रम् अधित धृतं, तदिदं त्वया करणे साधु यथा स्यात्तथा अयशःशकलं ध्रियते। किंलक्षणं चक्रं परिमण्डलं मण्डलाकारम्। तदिदं करणे चक्रं च धृतं, किन्तु अयशःखण्डमित्यर्थः। लोकेषु त्वम् इति कथयसि। इति किमिति–यत्, मया चक्रं धृतम्। तु पुनः इदमयशःखण्डमित्यर्थः॥

**धृतवान् न चक्रमरिचक्रभयचलित(२)माहवे निजम्॥**
**चक्रधर इति रथाङ्गमदः सततं बिभर्षि भुवनेषु रूढये॥ २६॥**

---

(१) श्लोकोऽयं मल्लिनाथव्याख्यायां नास्ति। आदर्शपुस्तकेऽपि 'बहुशो रणेषु' इत्येतावन्मात्रमेव दृश्यते। अवशिष्टोंऽशः टीकानुसन्धानेनोपन्यस्तः।

(२) चकित।

धृतवानिति ॥ हे कृष्ण ! सततमनवरतं रथाङ्गं चक्रं बिभर्षि धारयसि । किमर्थं भुवनेषु विश्वेषु कृष्णः चक्रधर इति रूढये प्रसिद्धये। परं त्वम् आहवे सङ्ग्रामे निजमात्मीयं चक्रं राष्ट्रं न धृतवान् न पालितवानसि । किंलक्षणं निजं चक्रम् अरिचक्रभयचलितम् अरिचक्रात् शत्रुसमूहात् भयं साध्वसं तेन चलितं त्रस्तम् । चक्रं राष्ट्रं धरतीति चक्रधरः । रथाङ्गधरणात् किल चक्रधरस्त्वमित्यर्थः ॥ २६ ॥

धृतवानिति ॥ आहवे युद्धे अरिचक्रादरिसैन्याद्भयेन चकितं सम्भ्रान्तम्। 'चकितं भयसम्भ्रमः' इति सज्जनः । निजमात्मीयं चक्रं सैन्यं न धृतवान् नाऽवलम्बितवान्। न रक्षितवानित्यर्थः। किन्तु चक्रधर इति भुवनेषु रूढये प्रसिद्धये अदः इदं रथाङ्गं चक्राऽपराख्यं सततं बिभर्षि दधासि । वृथाभारमिति भावः । 'चक्रं सैन्यरथाङ्गयोः' इति हेमसज्जनौ । अयोविकारधरः चक्रधरो भवान् न, अरिभीतचक्राऽधरत्वादित्यर्थः। अत्र हरौ भगवति चक्रधारणसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ २६ ॥

**जगति श्रिया विरहितोऽपि यदुदधिसुतामुपायथाः ॥**
**ज्ञातिजनजनितनामपदां त्वमतः श्रियः पतिरिति प्रथामगाः ॥ २७ ॥**

जगतीति ॥ हे कृष्ण ! त्वम् अतः कारणात् इति प्रथामगाः एवं प्रसिद्धिं प्राप्तः । इतीति किम्—यत्, श्रियः पतिरिति । अतः कुतः—यत् यस्मात् कारणात् त्वम् उदधिसुतामुपायथाः उदधिर्नाम गोलिकः आभीरः तस्य सुतां तनयां परिणीतवान् । किंलक्षणामुदधिसुतां ज्ञातिजनजनितनामपदां बन्धुवर्गोत्पादितनाम्नीम् । बन्धुवर्गतः तन्नाम श्रीरिति चकारेत्यर्थः । किंलक्षणस्त्वं जगति विश्वस्मिन् श्रिया लक्ष्म्या विरहितोऽपि विहीनोऽपि । त्वं श्रीनाम्नीगोलिकसुतापरिणयनात् श्रीपतिरित्युच्यसे इत्यर्थः ॥ २७ ॥

जगतीति ॥ श्रिया राजलक्ष्म्या विरहितोऽपि, यदूनां ययातिशापाद्राज्याऽनधिकारित्वादिति भावः । ज्ञातिजनेन बन्धुजनेन जनितं प्रवर्तितं नामपदं श्रीरिति पारिभाषिकसंज्ञाशब्दो यस्यास्ताम् उदधिसुतामब्धिकन्यां यद् यस्मादुपायथाः । उदूढवानित्यर्थः । 'विवाहोपयमौ समौ' इत्यमरः । 'उपायमः स्वकरणे' इत्यात्मनेपदम्। 'तनादिभ्यस्तथासोः' इति सिचो लुक् 'अनुदात्तोपदेश—' इत्यादिनाऽनुनासिकलोपः । अतो जगति श्रियः पतिरिति प्रथां ख्यातिमगाः प्राप्तवानसि । 'इणो गा लुङि' इति गादेशः । न राजान्तरवद्राज्यलक्ष्मीयोगात्तव श्रीपतित्वम् , किन्तु श्रीसंज्ञिकायाः कस्याश्चिद्वराकयाः परिग्रहादिति भावः । अत्रोग्रसेनस्याभिषेकसंस्कारेऽपि त्रैलोक्यप्रतिष्ठापकस्य हरेरेव सकलराज्यश्रीधुरन्धरत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः २७

**अभिशत्रु संयति कदाचिदविहितपराक्रमोऽपि यत् ॥**
**व्योम्नि कथमपि चकर्थ पदं व्यपदिश्यसे जगति विक्रमीत्यतः ॥ २८ ॥**

अभिशत्रु इति ॥ हे कृष्ण ! संयति सङ्ग्रामे अभिशत्रु शत्रुमभि लक्षीकृत्य कदाचित् कस्मिन्नपि प्रस्तावे अविहितपराक्रमोऽपि अदर्शितशौर्योऽपि सन् अतोऽस्माद्धेतोः जगति लोके विक्रमी पराक्रमी इति व्यपदिश्यसे कथ्यसे, विक्रमहीनोऽपि अत एव विक्रमीत्युच्यसे । इतीति किम्—यत् यस्माद्धतोः कथमपि महता कष्टेन केनापि प्रकारेण वा व्योम्नि आकाशे पदं चकर्थ चरणन्यासं कृतवान् । अम्बरे पदविक्रमात् विक्रमीत्यभिधानं, न पुनः शत्रुं प्रति कदाचित् कृतविक्रमादिति भावः ॥ २८ ॥

अभिशत्रु इति ॥ संयति युद्धे कदाचित् कदापि अभिशत्रु शत्रुमभिव्याप्य । आभिमुख्येऽव्ययीभावः । अविहितपराक्रमोऽकृतपौरुषोऽपि यद् यस्मात्कथमपि महता प्रयत्नेन व्योम्नि पदं पादक्षेपं चकर्थ कृतवानसि । 'ऋतो भारद्वाजस्य' इति इट्प्रतिषेधः। पित्त्वेनाऽकित्त्वाद् गुणः । अतो जगति विक्रमी विक्रमवानिति व्यपदिश्यसे व्यवह्रियसे, न तु पराक्रमयोगादित्यर्थः । अत्रापि पराक्रमसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥२८॥

**पृथिवीं बिभर्थ यदि पूर्वमिदमपि गुणाय कल्पते(१) ॥**
**भूमिभृदिति परहारितभूस्त्वमुदाह्रियस्व कथमन्यथा जनैः ॥ २९ ॥**

पृथिवीमिति ॥ हे कृष्ण ! यदि त्वं पूर्वं पृथ्वीं बिभर्थ भूमिं धृतवान् । अपरं तव इदमपि गुणाय कल्पते वर्तते कीर्तये विद्यते, यत् त्वं जनैर्लोकैः अन्यथा अलीकेन इति कथमुदाह्रियस्व इति कथमुच्यसे । इतीति किं—यत्, भूमिभृत् पृथ्वीभृत् इति । यतः किंलक्षणस्त्वं परिहारितभूः परैः शत्रुभिः हारिता गृहीता भूः भूमिर्यस्य सः तथा । यस्य भूः शत्रुभिः हारिता भवति, स कथं पृथ्वीभृत् भवेदित्यर्थः । त्वं परेषां शत्रूणां भूमिं धरसि, ततस्त्वं पृथ्वीधरः । शत्रुभिस्त्वदीया भूमिर्हृता ॥ २९ ॥

पृथिवीमिति ॥ पूर्वं प्रागपि । सम्पत्सम्भवेऽपीति भावः । पृथिवीं बिभर्थ यदि भृतवांश्चेत् । भृञो लिटि भारद्वाजीयेट्प्रतिषेधः । पित्त्वेनाऽकित्त्वाद् गुणः । इदं भूधारणमपि गुणायोत्कर्षाय वर्तते । भूतपूर्वगत्यापि व्यपदेशत्वात्तदपि नास्तीति भावः । प्रत्युत परैः शत्रुभिः हारितभूः परिहारितभूमिकः । जरासन्धेन मथुरानगरान्निष्कासितत्वादिति भावः । अत्र हर्तुरवहरणक्षमत्वमेव हारयितृत्वमिति णिजर्थोपपत्तिः । जनैः कथमन्यथा अर्थवैपरीत्येन भूमिभृदित्युदाह्रियस्व उदाह्रियेथाः । सम्भावनायां लोट् । असम्भावितमेवेत्यर्थः । अत्रापि भूधरणसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ २९ ॥

**तव धन्यतेयमपि सर्वनृपतिकलितो(२)ऽपि यत्क्षणम् ॥**
**क्लान्तकरतलधृताऽचलकः पृथिवीतले तुलितभूभृदुच्यसे ॥ ३० ॥**

तवेति ॥ हे कृष्ण ! तव इयमपि धन्यता इदमपि कृतार्थत्वम्, यत् त्वं पृथ्वीतले भूतले तुलितभूभृत् उच्यसे । तर्हि पर्वतः उन्मूलितो भविष्यति नेत्याह—किंलक्षणस्त्वं क्लान्तकरतलधृताऽचलकः (?) खिन्नहस्ततलनिपण्णदृटकः । स्वल्पोऽचलोऽचलकः, धृतपाषाणः धृतगोलकः । तर्हि भूभृतो राजानस्तुलिता भविष्यन्ति, नेत्याह—अपरं किंलक्षणस्त्वं तत्क्षणं सर्वदा सर्वनृपतिकलितोऽपि समस्तक्षितीशनिर्जितोऽपि ॥ ३० ॥

तवेति ॥ तवेयं धन्यता पुण्यवत्ता । कथं-सर्वैर्नृपतिभिस्तुलितोऽवधूतोऽपि, तिरस्कृतोऽपीत्यर्थः । क्षणं श्रान्ते भारवत्त्वेव श्रान्ते करतले धृतः अचलकोऽल्पाचलो येन स सन् पृथिवीतले तुलितभूभृद् उद्धृतराजकश्चोच्यस इति यत्, इयमप्यपरा ते धन्यतेत्यर्थः । गोवर्धनाख्यक्षुद्रभूधरतोलनात्तुलितभूभृत्त्वं भवति । न मादृशामिव महावीराणांतितुलनादिति भावः । अत्र सर्वनृपतितुलितोऽपि तत्तोलक इति विरोधो भूभृदिति श्लेषमूलाऽभेदाध्यवसायोत्थापित इति विरोधातिशयोक्त्योः सङ्करः । तेन गोवर्धनोद्धरणमपि नातीवाऽद्भुतं बाहुबलशालिनामिति वस्तु व्यज्यते ॥ ३० ॥

**त्वमशक्नुवन्नशुभकर्मनियत(३)परिपाकदारुणम् ॥**
**जेतुमकुशलमतिर्नरकं यशसेऽधिलोकमजयः सुतं भुवः ॥ ३१ ॥**

त्वमिति ॥ हे कृष्ण ! त्वम् अधिलोकं जगति यशसे कीर्तये भुवः सुतम् अजयः भूनाम्नी अबला काचित् तस्याः पुत्रं जितवान् । किंलक्षणस्त्वम् अकुशलमतिः अप्रवीणबुद्धिः, किं कुर्वन् नरकं भौमासुरं जेतुं वशीकर्तुमशक्नुवन् असमर्थः, किंलक्षणं नरकम् अशुभकर्मनियतपरिपाकदारुणम् अशुभानां रौद्राणां कर्मणामाचरणानां नियतो नियन्त्रितो योऽसौ परिपाकः परिणामः तद्वद्दारुणो रौद्रः तम् । अथ नरकं दुर्गतिं जेतुमशक्नुवन् ॥ ३१ ॥

त्वमिति ॥ हे अशुभकर्मनिरत ! पापाचारपर ! अत एवा कुशलमतिर्दुर्बुद्धिस्त्वं परिपाके फलकाले

(१) वर्तते । (२) तुलितोऽपि । (३) निरत (! परि० ।

दारुणम् । विचित्रपापयातनामयत्वाद्भयङ्करमित्यर्थः । नरकं निरयम् । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः । जेतुमशक्नुवन् । पापिष्ठैर्दुर्जेयत्वादिति भावः । अभिलोकं लोके । विभक्त्यर्थेऽव्ययीभावः । यशसे नरकविजयीति प्रसिद्धये भुवः सुतं नरकाख्यमजयः जितवानसि । परलोकप्रतारणमात्रपरो, न परलोकबाध्योऽसीति भावः । अत्र निरयाऽपराख्यनरकविजयाऽशक्तेर्विशेषणगत्या तज्जयस्यार्थिनो हरेर्नरकासुरविजयप्रकृतिहेतुकत्वात्पदार्थहेतुकं काव्यालिङ्गम् । तच्च नरकयोः श्लेषमूलाभेदात्तदुत्थापितामिति सङ्करः ॥

**सकलैर्वपुः सकलदोषसमुदितमिदं गुणैस्तव ॥**

**त्यक्तमपगुण ! गुणत्रितयत्यजनप्रयासमुपयासि किं मुधा ॥ ३२ ॥**

**सकलैरिति ॥ हे कृष्ण ! तव इदं वपुः शरीरं सकलैर्गुणैः सौन्दर्यादिभिः त्यक्तमुज्झितं, किंलक्षणं वपुः सकलदोषसमुदितं बहुदोषाश्रितम् । हे अपगुण ! गुणवर्जित ! गुणत्रितयत्यजनप्रयासं मुधा किमुपयासि । कृष्ण ! त्वं देवानां पुर इति वदसि—यत् , मया सत्त्वादयस्त्रयो गुणास्त्यक्ताः । एष तव निष्फलः प्रयासः । यतस्तत्र शरीरे एकोऽपि गुणो नास्ति, ततस्त्वया गुणत्रयं कथं त्यक्तम् । यः किल सकलगुणविहीनो भवति, स गुणत्रयं त्यजन् प्रयासं खेदं मुधा प्राप्नोतीत्यर्थः । अथ च कृष्णो गुणत्रितयात् सत्त्वरजस्तमोलक्षणात् पृथगिति भावः ॥ ३२ ॥**

सकलैरिति ॥ हे अपगुण ! निर्गुण ! सकलैः सर्वदोषैः समुदितं युक्तं तवेदं वपुः सकलैर्गुणैः शौर्यादिभिस्त्यक्तम् । सर्वगुणान्निवर्तितमेवेत्यर्थः । एवं च सति गुणत्रयस्य त्यजने त्यागे यः प्रयासः, तं मुधा वृथा किं किमर्थमुपयासि । मुमुक्षयेति भावः । यत्र सकलगुणस्य त्यागस्तत्र गुणत्रयस्य त्यागोऽन्तर्गत्या सिद्ध एव, अन्यथा साकल्यव्याघातादित्यर्थः । स्वभावतो निर्गुणस्य परवस्तुनः कुतो गुणत्रयचिन्तेति ध्वनिः । गुणत्रयत्यागनिषेधस्य सकलैरित्यादिवाक्यार्थहेतुकत्वात्काव्यलिङ्गभेदः ॥ ३२ ॥

**त्वयि पूजनं जगति जाल्म ! कृतमिदमपाकृते गुणैः ॥**

**हासकरमघधृते नितरां शिरसीव कङ्कणमपोढ(१)मूर्धजे ॥ ३३ ॥**

**त्वयीति ॥ हे कृष्ण ! हे जाल्म ! हे वराक ! त्वयि विषये कृतं निष्पादितम् इदं पूजनमेतदर्घदानं जगति विश्वस्मिन् हासकरं हास्यकारि भवति । किंलक्षणे त्वयि गुणैः अपाकृते ज्ञानशौर्यादिभिर्गुणैः वर्जिते, अपरं किंलक्षणे त्वयि नितरामतिशयेन अघधृते अघं पापं धृतं सञ्चितं येन सः तथा तस्मिन् , पापिष्ठे इत्यर्थः । कस्मिन् किमिव हासकरमित्याह—अपोढमूर्धजे गतकेशे शिरसि मस्तके कङ्कणमिव । यथा त्यक्तकेशे शिरसि कङ्कणं हासकरं भवति कचभूषणिका हास्यकरा भवति । 'काङ्कणी'ति प्राकृतम् ॥ ३३ ॥**

त्वयीति ॥ हे जाल्म ! असमीक्ष्यकारिन् ! 'जाल्मोऽसमीक्ष्यकारी स्यात्' इत्यमरः । गुणैरपाकृते निरस्ते गुणैर्हीने त्वयि पूजनं कृतं जगति हासकरं परिहासजनकम् । इदं पूजनम् अपेतमूर्धजेऽपगतकेशे शिरसि कङ्कतं दारुदन्तादिमयः केशप्रसाधनाविशेषः । 'प्रसाधने कङ्कतिका' इति विश्वामरौ । कङ्कतमेव कङ्कतिका । 'कङ्कणम्' इति पाठे शेखरमित्यर्थः । 'कङ्कणं शेखरे हस्तसूत्रमण्डनयोरपि' इति विश्वः । तदिव नितरामघटते । न सङ्गच्छत इत्यर्थः । 'नञो नलोपस्तिङि क्षेप इत्युपसङ्ख्यान'मिति निन्दायां लिङ्योगेऽपि नलोपः । उपमालङ्कारः ॥ ३३ ॥

भूपतीन् प्रत्याह—

**मृगविद्विषामिव यदित्थमजनि मिषतां पृथासुतैः ॥**

**अस्य वनशुन इवाऽपचितिः परिभाव एष भवतां भुवोऽधिपाः ! ॥३४॥**

---

( १ ) ०मघटते''' कङ्कणमपेत ।

मृगेति ॥ हे भुवः अधिपाः ! हे भूमेः पतयो राजानः ! पृथासुतैः कुन्तीपुत्रैः युधिष्ठिरप्रभृतिभिः यत् इत्थम् अमुना प्रकारेण अस्य पुरोवर्तिनः कृष्णस्य अपचितिः अजनि पूजा निष्पादिता, एष भवतां युष्माकं परिभावः परिभवः । किंलक्षणानां भवतां मिषतां पश्यतां, स्पर्शमानानामित्यर्थः(?) । केषामिव मृगविद्विषामिव सिंहानामिव, हरेः कस्येव वनशुन इव । यथा मृगविद्विषां सिंहानां मिषतां सतां वनशुनः शृगालस्य जनिता अपचितिः परिभवकारिणी भवतीत्यर्थः । मृगाणां विद्विषः शत्रवः मृगविद्विषः तेषाम् । वने वनस्य वा श्वा वनश्वा तस्य वनशुनः ॥ ३४ ॥

सम्प्रति राज्ञां रोषमुत्पादयन्नाह—

मृगेति ॥ हे भुवोऽधिपाः ! राजानः ! मृगविद्विषां सिंहानामिव भवतां मिषतां पश्यतां भवत्सु मिषत्सु । मिषतो युष्माननादृत्येत्यर्थः । 'षष्ठी चानादरे' इति विकल्पाद्भावलक्षणे षष्ठी । इत्थं पृथासुतैः कौन्तेयैः । पितरमेतेषां न वेद्मीति भावः । अस्य कृष्णस्य वनशुनो वनशुनकस्येव । जम्बुकस्येवेति यावत् । अपचितिः पूजा अजनि जनिता । कृतेति यत् । जनेर्ण्यन्तात्कर्मणि लुङ् । एष भवतां परिभावः परिभवः । 'परौ भुवोऽवज्ञाने' इति विभाषया घञ्प्रत्ययः ॥ ३४ ॥

अवधीज्जनङ्गम इवैष यदि हतवृषो वृषं ननु ॥
स्पर्शमशुचिवपुरर्हति न प्रतिमाननां तु नितरां नृपोचिताम् ॥ ३५ ॥

अवधीदिति ॥ ननु इति सम्बोधने, हे नृपाः ! एष कृष्णः यदि चेत् जनङ्गम इव चण्डाल इव वृषं बलीवर्दम् अवधीत् जघान, किंलक्षणः एष हतवृषः हतधर्मः । तदा अस्य वपुः शरीरं स्पर्शं न अर्हति स्पर्शाय योग्यं न भवति । किंलक्षणं वपुः अशुचि अपवित्रम् । तु पुनः नितरामतिशयेन नृपोचितां नृपयोग्यां प्रतिमाननां पूजां किमु कथम् अर्हति । पूजायोग्यः कथं भवतीत्यर्थः ॥ ३५ ॥

अवधीदिति ॥ हतवृषो हतसुकृतः ; 'सुकृतं वृषभे वृषे' इति विश्वः । एष कृष्णो जनङ्गमश्चाण्डाल इव । 'चाण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः' इत्यमरः । 'गमेश्च' इति संज्ञायां जनपूर्वाद्गमधातोः खच्प्रत्ययः 'अरुर्द्विषत्—' इत्यादिना मुमागमः । वृषं वृषभरूपिणमरिष्टाख्यमसुरमवधीद् यदि हतवांश्चेत् । 'लुङि च' इति हनो वधादेशः । अत एव अशुचिवपुरशुद्धात्मा स्पर्शं नार्हति । स्पर्शाऽयोग्यो गोघ्नः कथं पूज्य इत्यर्थः । उपमा ॥ ३५ ॥

यदि नाऽङ्गनेति मतिरस्य मृदुरजनि पूतनां प्रति ॥
स्तन्यमघृणमनसः पिबतः किल धर्मतो भवति सा जनन्यपि ॥ ३६ ॥

यदीति ॥ हे भुवोऽधिपाः ! यदि चेत् अस्य कृष्णस्य मतिः पूतनां बकीं प्रतिइ ति मृदुः सदयत्वात्कोमला बुद्धिः न अजनि न बभूव । इतीति किं—यदियमङ्गना स्त्री सर्वथा अवध्या एव । तदा अस्य अघृणमनसः निर्दयचित्तस्य स्तन्यं पिबतः पयःपानं कुर्वतः, किल सत्ये, धर्मतः शास्त्रतः सा जनन्यपि माताऽपि भवति । जिह्वाप्रतिपन्ना माता भवतीत्यर्थः । मातृघाती असावित्यर्थः ॥ ३६ ॥

यदीति ॥ अस्य कृष्णस्य मतिः पूतना नाम बालग्रहविशेषः तां प्रति अङ्गनेति हेतोर्मृदुः कृपा(?)दया नाऽजनि यदि न जाता चेत्, माऽस्त्विति शेषः । जनेः कर्तरि लुङ् 'दीपजन—' इत्यादिना चिण्प्रत्ययः। अघृणमनसो निर्घृणचित्तस्य । स्तने भवं स्तन्यं पयः । 'शरीरावयवाच्च' इति यत्प्रत्ययः । पिबतोऽस्य सा पूतना धर्मतः शास्त्रतो जनन्यपि माता च भवति खलु । स्त्रीति कृपाभावेऽपि मातेति जुगुप्साऽप्यस्य नास्तीत्यहो ।

न केवलं स्त्रीहन्ता, किन्तु मातृहन्ता चायम्। स्तनपदाया उपमातृत्वादिति भावः। अत्र स्तनपानस्य विशेषणगत्या जननीत्वात्काव्यलिङ्गम् ॥ ३६ ॥

**शकटं व्युदास तरु(१)भङ्गधरणिधरधारणादिकम् ॥**
**कर्म यदयमकरोत्तरलः स्थिरचेतसां क इव तेन विस्मयः ॥ ३७ ॥**

**शकटमिति** ॥ हे भुवोऽधिपाः! यदयं कृष्णः शकटं व्युदास अनम् उत्क्षिक्षेप। तरुभङ्गधरणिधरधारणादिकं कर्म अकरोत् तर्वोर्वृक्षयोर्यमलार्जुनयोः भङ्गः मूलतः आमर्दनं तरुभङ्गः, धरणिधरस्य भूधरगोवर्धनस्य धारणमुद्धरणं धरणिधरधारणं, तरुभङ्गश्चध रणिधरधारणं च तरुभङ्गधरणिधरधारणे ते आदौ यस्य तत्तथा तत्कर्म चरितं चकार। तेन कर्मणा स्थिरचेतसां गम्भीरमनसां क इव विस्मयः किमिवाऽऽश्चर्यम्। यतः किंलक्षणोऽयं तरलः चपलः। द्वितीयपक्षे स्तुतिव्याख्यानम्। तेन कर्मणा स्थिरचेतसां क इव विस्मयः, यतः किंलक्षणः तरलः तरन्ति संसारसागरमिति तराः योगिनः, तान् लाति स्वीकरोति इति तरलः ॥३७॥

शकटेति ॥ तरलश्चपलोऽयं कृष्णः, शकटव्युदासः शकटासुरमर्दनं तरुभङ्गो यमलार्जुनभञ्जनं धराणिधरधारणं गोवर्धनोद्धरणम् तान्यादिर्यस्य तत्तथोक्तं यत्कर्माऽकरोत् तेन कर्मणा स्थिरचेतसां धीरचित्तानां क इव विस्मयः। न कोऽपीत्यर्थः। अत्र स्थिरचेतस्कताया विशेषणगत्या विस्मयनिषेधहेतुत्वात् काव्यलिङ्गं वृत्त्यनुप्रासेन संसृज्यते ॥ ३७ ॥

**अयमुग्रसेनतनयस्य नृपशुरपरः पशूनवन् ॥**
**स्वामिवधमसुकरं पुरुषैः कुरुते स्म यत् परममेतदद्भुतम् ॥३८॥**

**अयमिति** ॥ हे नृपाः! अयं कृष्णः उग्रसेनतनयस्य उग्रसेनराज्ञः पुत्रस्य कंसस्य पशून् ढोराणि (?) अवन् रक्षन् सन् यत् स्वामिवधं कुरुते स्म परिवृढघातं कृतवान्, एतत् परममद्भुतम् इदं महदाश्चर्यम्। किंलक्षणोऽयम् अपरो नृपशुः द्विपदरूपपशुः। किंलक्षणं स्वामिवधं पुरुषैर्गुणवद्भिर्नरैः असुकरं कर्तुमनुचितम् ॥ ३८ ॥

अयमिति ॥ अपरोऽन्यः ना पशुरिवेति नृपशुरित्युपमितसमासः। कार्याकार्यविवेकशून्यत्वादित्यर्थः। अयं कृष्णः उग्रसेनतनयस्य कंसस्य पशूनवन् गाः पालयन् पुरुषैरसुकरं लोकवेदाविगीतत्वाद् दुष्करं स्वामिवधं यत्कुरुते स्म। चकारेति यावत्। एतत्परममद्भुतम्। अभूतपूर्वादिति भावः। अत्र पश्ववनस्य विशेषणगत्या कंसकृष्णयोः स्वामिभृत्यभावहेतुत्वात्काव्यलिङ्गम् ॥ ३८ ॥

**इति वाचमुद्धतमुदीर्य सपदि सह वेणुदारिणा ॥**
**सोढरिपुबलभरोऽसहनः स जहास दत्तकरतालमुच्चकैः(२) ॥ ३९ ॥**

**इतीति** ॥ शिशुपालः उच्चैर्गाढं यथा भवति तथा जहास हसितः(३)। कथं यथा भवति वेणुदारिणा सह जरासन्धपुत्रेण सार्धं दत्तकरतालं यथा स्यात् दत्तः करतालः पाणिचपेटो यत्र क्रियायां तद्यथा भवत्येवं, किं कृत्वा सपदि वेगेन उद्धतं साक्षेपं यथा भवत्येवं वाचमुदीर्य वाणीमुदित्वा, किंलक्षणः सः सोढरिपुबलभरः सोढः क्षान्तः रिपुबलानां शत्रुसैन्यानां वीर्याणां वा भरः आधिक्यं येन सः तथा। एतेन समस्तशत्रूणां बलानि जग्राहेत्यर्थः। अपरं किंलक्षणः सः असहनः असह्यः। तेन सर्वेषां बलानि सोढानि, तस्य तु बलं न केनापि सोढमिति भावः ॥ ३९ ॥

---

(१) शकटव्युदासतरु। (२) श्लोकोऽयं मुद्रितपुस्तकान्तरे मल्लिनाथेन प्रक्षिप्ततयोपेक्षितानां चतुस्त्रिंशच्छलोकानामग्रे दृश्यते। (३) क्तान्तप्रयोगोऽयं कर्तरि चिन्त्यः।

इतीति ॥ सोढः क्षान्तो रिपूणां बलभरो वीर्यातिशयो येन सः न सहत इत्यसहन: असहिष्णुः स चैद्यः इतीत्थमुद्धतं निष्ठुरं यथा तथा वाचमुदीर्य सपदि वेणुदारिणा नरकात्मजेन सह दत्तः करतालः परस्परपाणिताडनं यस्मिन्कर्मणि तद्यथा तथा उच्चकैस्तारं जहास । कृष्णदोषोद्घाटनहर्षादट्टहासं चकारेत्यर्थः । स्वभावोक्तिः ॥ ३९ ॥

**ननु सर्व एव समवेक्ष्य कमपि गुणमेति पूज्यताम् ॥**

**सर्वगुणविरहितस्य हरेः परिपूजया कुरुनरेन्द्र ! को गुणः(१) ॥ १ ॥**

नन्विति ॥ नन्विति अमर्षे, सर्व एव सर्वः कश्चिल्लोकः कमपि गुणं पौरुषश्रुतादिकं समवेक्ष्य विलोक्य पूज्यतामेति अर्च्यत्वं प्राप्नोति । हे कुरुनरेन्द्र ! हे कौरवेश्वर युधिष्ठिर ! सर्वगुणविरहितस्य सकलगुणवर्जितस्य हरेः वानरतुल्यस्य परिपूजया को गुणः । एनमर्चयित्वा न कश्चिद् गुणः त्वया लब्ध इत्यर्थः । न च त्वं यादृशस्तादृशो, येनाऽगुणं पूजयसीति 'कुरुनरेन्द्रे'त्यामन्त्रणेन सूच्यते ॥

अत्र कविरतिभक्तत्वात् भगवतः यथाक्रमागतामपि निन्दामसहमानः स्तुतिं व्यरचयत्, इति तदर्थोऽधुना व्याख्यायते–द्वितीयपक्षे निर्गुणस्य सत्त्वरजस्तमोविरहितस्य हरेः पूजया को गुणः नीरागद्वेषत्वात्, नैवास्य गुण उपकारः। अथ वा कोऽगुणः, स्वर्गादिको गुणः ॥१॥

किमवोचदित्याह—

नन्विति ॥ हे कुरुनरेन्द्र ! कौरवनाथ ! ननु सर्व एव कश्चित्कमपि पौरुषश्रुतादिकं समवेक्ष्य पूज्यतामेति पूज्यते गुणैः । गुणाः पूजाया निमित्तमित्यर्थः । यदि वा गुणं स्वप्रयोजनं पर्यालोच्य । अतश्चैवं स्थिते अस्य हरेर्वानरतुल्यस्य सर्वैर्गुणैः कृतज्ञत्वादिभिर्विरहितस्य विशेषेण रहितस्य परिपूजनात्को गुणः । एनमर्चयित्वा न कश्चिद्गुणस्त्वया प्राप्तः । ननुरमर्षे । कमपि । स्वल्पमपीत्यर्थः । हरिर्वानरः तत्साधर्म्याद्भगवानत्र हरिर्विवक्षितः । यथाग्निर्माणवक इति तत्त्वम् । यादृशस्तादृशस्त्वम्, येनाऽगुणं पूजयसीति 'कुरुनरेन्द्र' इत्यामन्त्रणपदेन सूच्यते ॥

अत्र कविरतिभक्तत्वाद्भगवतः कथाक्रमागतामपि निन्दामसहमानः प्रतीयमानां स्तुतिं व्यरचयदिति तदर्थोऽधुना व्याख्यायते—हरेर्विष्णोः परिपूजया कोऽगुणः अपि तु स्वर्गादिको गुणः । न तु गुण एवेत्यर्थः । यदि वा को गुणो नीरागत्वेन । नैवास्य गुण उपकार इत्यर्थः । कीदृशस्य सर्वैस्त्रिभिरपि गुणैः सत्त्वरजस्तमोभिर्विरहितस्य । 'निर्गुणो हि पुरुषः' इति साङ्ख्याः । अत्र द्वितीयार्धमेव तेन भिद्यते । प्रथमार्धे तु न किञ्चित्प्रयोजनम् । न हि तत्र ते गुणानिन्दागताः । पूज्यतामेतीति इण्धात्वर्थस्य तु अवेक्षत्येककर्ता य एव हि समीक्षते स एव पूजयते इति ल्यब् भवत्येव । सर्वो गुणान् दृष्ट्वा पूज्यत इत्यर्थः । वक्रश्लेषोऽत्र । निन्दास्तुतावकारः ॥ १ ॥

तदेव निर्गुणत्वं दर्शयितुमाह—

**न महानयं न च बिभर्ति गुणसमतया प्रधानताम् ॥**

**स्वस्य कथयति चिराय पृथग्जनतां जगत्यनभिमानितां दधत् ॥ २ ॥**

नेति ॥ हे राजन् ! अयं हरिर्न महान् न गुणोत्कृष्टः, अपरं गुणसमतया गुणसाम्येन समुदायेन प्रधानतां न च बिभर्ति मुख्यत्वं न च धारयति । अगुणज्ञोऽयमित्यर्थः। अपरम् अयं स्वस्य आत्मनः चिराय चिरकालं यावत् पृथग्जनतां कथयति हीनत्वं सूचयति प्राकृतत्वं निवेदयति । किं कुर्वन् जगति विश्वस्मिन् अनभिमानितां दधत् अहङ्कारित्वं

(१) इत आरभ्य चतुस्त्रिंशच्छ्लोकान् मल्लिनाथः प्रक्षिप्तान् मत्वा न व्याख्यातवान्। मोहमय्यां मुद्रितपुस्तके तु वल्लभदेवव्याख्यया सहैते सङ्गृहीताः । परं सा व्याख्या अस्मदादर्शपुस्तकाद्भिन्नरूपेति द्विधापि सङ्गृहीताऽस्माभिरत्र ।

त्यजन् । प्राकृतो हि निरभिमानो भवति । इति निन्दा ।।

अथ स्तुतिः-अयं न महान् महत्तत्वं न भवति । गुणानामुद्रेके अतिशयसाम्याभावे बुद्धेरव महत्त्वम् । बुद्धिरेवोत्कृष्टा, न आत्मा महान् । अपरं गुणानां सत्त्वरजस्तमसां समतया साम्येन प्रधानतामपि न बिभर्ति । प्रधानमपि अयं न भवतीत्यर्थः । अनुद्भूतविक्रियाणि निर्विकाराणि प्रकृतिस्थानि सत्त्वरजस्तमांसि प्रधानशब्देनाऽऽहुः । सत्त्वादिगुणत्रितयं घटस्थितम् अस्यात्मनः पुरुषस्य विक्रियां नोत्पादयति । स्वस्यात्मनः पृथक्जनतां कथयति । जन्यन्ते एभ्यः शरीराणीति जनाः पञ्चतन्मात्राणि पृथिव्यादीनि पञ्चमहाभूतानि तेभ्यो व्यतिरिक्त आत्मा जनेभ्यः पृथक् सर्वाऽतीतत्वात् । जनव्यतिरिक्तत्वं कथयति—किं कुर्वन् अनभिमानितां दधत् अनहङ्कारित्वं बिभ्रत् ॥ २ ॥

तदेव निर्गुणत्वं दर्शयितुमाह—

नेति ॥ अयं हरिर्न महान् सर्वोत्कृष्टः । सर्वनाम सर्वत्र प्रत्यक्षनिर्देशे । कदाचिदन्येषां प्रधानानां गुणैः समः स्यात्तदापि पूज्यः । एतदपि नेत्याह—गुणसमतया गुणसाम्येन या प्रधानता विवक्षितत्वं तदपि न बिभर्ति । यतोऽन्येषां गुणैरसम इत्यर्थः । गुणोत्कर्षाद्धि प्राधान्यमाप्यते । कदाचित् महत्प्रधानं च न भवेद्यावद्धेतोऽपि (?) न तत्स्यात् । तदपि नेत्याह—अनभिमानितां निरहङ्कारित्वं दधत् स्वस्यात्मनः चिराय जगति पृथग्जनतां हीनत्वं कथयति । प्राकृतोऽपि निरभिमानो भवति । इति निन्दा ॥

स्तुतिस्तु—अयं न महान् महत्तत्त्वं न भवति । गुणाऽनुद्रेके साम्याभावे बुद्धेरेव महत्त्वम् । अथ गुणानां सत्त्वरजस्तमसां समतया या प्रधानता तामपि न बिभर्ति । प्रधानमप्ययं न भवतीत्यर्थः । अनुभूतविक्रियाणि प्रकृतिस्थानि सत्त्वरजस्तमांसि प्रधानशब्देनाहुः । तथाऽनभिमानितामनहङ्कारितां दधत्स्वस्यात्मनः पृथग्जनतां जनव्यतिरिक्तत्वं कथयतीति वा । जनाः पञ्चतन्मात्राणि । पृथग्भूतो जनेभ्यः, पृथग्वा जनो यस्मात्स पृथग्जनः । तद्भावस्तत्ता तां कथयति । सर्वाऽतीतत्वात् । तेनायं न महान्, न प्रधानम्, न भूतानि, न तन्मात्राणि, नाहङ्कारः इति वाक्यार्थः । पञ्चविंशकोऽयं पुरुषः । चतुर्विंशकबाह्य इति यावत् ॥

**रहितं कलाभिरखिलाभिरकृतरसभावसंविदम् ॥**
**क्षेत्रविदमपदिशन्ति जनाः पुरबाह्यमेनमगतं विदग्धताम् ॥ ३ ॥**

**रहितमिति** ॥ जना लोकाः एनं श्रीकृष्णं क्षेत्रविदम् आवनर्ज्जं कर्षुकम्(?)अपदिशन्ति कुटुम्बिनं वदन्ति, किंलक्षणमेनं पुरबाह्यं पुरान्नगराद्बाह्यः तम् । कर्षुको हि नगराद्बहिर्वसति। अपरं किंलक्षणमेनम् अखिलाभिः समग्राभिः कलाभिः गीतवाद्यादिभिः रहितं वर्जितम्, अपरं किंलक्षणमेनम् अकृतरसभावसंविदम् अकृता न कृता न विहिता रसानां शृङ्गारादीनां भावानां रत्यादीनां च संवित् संवेदनं सङ्केतो येन सः तथा तम् । विदग्धशास्त्राणां सङ्केतमपि यो न वेत्तीत्यर्थः । अपरं किंलक्षणमेनं विदग्धतामगतं चातुर्यमप्राप्तम्, अत एव दोषत्वम् । इति निन्दा ॥

अथ स्तुतिः—जना एनं क्षेत्रविदं क्षेत्रज्ञम् अपदिशन्ति आहुः आत्मानं ब्रुवन्ति आमनन्ति । क्षेत्रं शरीरम् । किंलक्षणं क्षेत्रज्ञम् अखिलाभिः कलाभिरवयवैर्हस्तपादादिभिः रहितं वर्जितं निष्कलम्, अपरं किंलक्षणम् अकृतरसभावसंविदम् अकृतरसा अकृतरागा भावसंवित् पदार्थसंवेदनं यस्य सः तथा तम् । पुरुषो हि भावान् वेत्ति, न तु तत्र रसं भजति । यदि वा अविद्यमानाः कृतरसभावाः कर्मरागवृत्तयो यस्य सः तथा स चासौ संविद्रूपः तम् । अपरं किंलक्षणमेनं पुरबाह्यं पुराद्देहाद्बाह्यं विलक्षणम्, अपरं

किंलक्षणमेनं विदग्धतामगतं विशेषेण दाह्यमगतम् । उक्तं च—'नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः' इति ॥ ३ ॥

भूयोऽपि निर्गुणत्वमाह—

रहितामिति ॥ एनं हरिं क्षेत्रविदमपदिशन्ति कर्षकमाहुः । अत एव पुरबाह्यं ग्राम्यम् । कार्षिका हि नगराद्बहिर्वसन्ति । यद्वा पुरस्य वाहनीयो बाह्यः पुरायत्तः । तथा सर्वाभिः कलाभिर्गीतवाद्यादिभिर्वर्जितम्, यतः अकृता रसानां शृङ्गारादीनां भावानां रत्यादिकानां च संवित्सङ्केतः संवचनं येन । विदग्धशास्त्राणां सङ्केतमपि यो न वेदेत्यर्थः । यतो विदग्धतां वैदग्ध्यम् अगतमप्राप्तम् । इति निन्दा ॥

स्तुतिस्तु—एनं भगवन्तं क्षेत्रज्ञमात्मानमामनन्ति । क्षेत्रं शरीरम् । कीदृशम् समग्राभिः कलाभिरवयवैः रहितं निष्कलम्, अकृतरसा अविहितरागा भावसंवित् पदार्थसंवेदनं यस्य । पुरुषो हि भावान् वेत्ति न तु तत्र रसज्ञतां भजते । यद्वा अविद्यमानाः कृतरसभावाः कर्मरागोत्पत्तयो यस्य स चासौ संवित् चिद्रूपः । पुरा देहाद्बाह्यं सर्वलक्षणम् । विदग्धतां विशेषेण दाह्यत्वमगतम् । यदाह—'नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः' इति ॥

**अतिभूयसाऽपि सुकृतेन दुरुपचर एष शक्यते ॥**
**भक्तिशुचिभिरुपचारपरैरपि न ग्रहीतुमभियोगिभिर्नृभिः ॥ ४ ॥**

**अतिभूयसाऽपीति** ॥ अभियोगिभिः उद्यमपरैः नृभिः पुरुषैः एष श्रीकृष्णः ग्रहीतुमावर्जयितुं न शक्यते न पार्यते, किंलक्षणैर्नृभिः भक्तिशुचिभिः भक्त्या तत्त्वतः शुचिभिः शुद्धमतिभिः, अपरं किंलक्षणैर्नृभिः उपचारपरैः आराधनतत्परैः । कथं तर्हि न शक्यत इत्याह(१) ।

किंलक्षणैर्नृभिः भक्तिशुचिभिः निर्मलमानसैः । केचित्तु परमताऽऽशङ्कया नञं काक्वा व्याचक्षते—एष सुकृतेन दुरुपचरोऽपि न ग्रहीतुं शक्यते । परं तैरेव ज्ञायते इत्यर्थः । उक्तं च—

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥

इति ॥ ४ ॥

अतिभूयसाऽपीति ॥ अयमेवंविधैरपि नृभिर्ग्रहीतुमावर्जयितुं न शक्यते । कीदृशैः भक्त्या तत्त्वतः शुचिभिः शुद्धमतिभिरुपचारपरैराराधनपरैरभियोगिभिः एतन्मनोभिः । कथं तर्हि न शक्यत इत्याह—यतोऽतिभूयसापि बहुतरेणापि सुकृतेनोपकारेण दुरुपचरो दुराराधः । अकृतज्ञोऽयमिति वाक्यार्थः । इति निन्दा ॥

स्तुतिस्तु—एषोऽभियोगिभिराभिमुख्येन योगिभिरपि नृभिर्ग्रहीतुं परिच्छेत्तुं न शक्यते । आत्मतत्त्वस्य दुर्ज्ञानत्वात् । कीदृगेषः अतिभूयसापि सुकृतेन यज्ञदानादिना दुरुपचरो दुराराधः । भक्तिगम्यो हि भगवान् । कीदृशैर्नृभिः भक्त्या शुचिभिर्निर्मलीमसैः । केचित्त्वन्यमताशङ्कया नञं काक्वा व्याचक्षते—नैष सुकृतेन दुरुपचरो योगिभिरपि न ग्रहीतुं शक्यते । परं तु तैरेव ज्ञायत इत्यर्थः । यदुक्तम्—'नाहं वेदैर्न तपसा—' इत्यादि ॥ ४ ॥

**व्रजति स्वतामनुचितोऽपि सविनयमुपासितो जनैः ॥**
**नित्यमपरिचितचित्ततया पर एव सर्वजगतस्तथाऽप्ययम् ॥ ५ ॥**

**व्रजतीति** ॥ अयं कृष्णः अनुचितोऽपि अयोग्योऽपि स्वतां व्रजति अस्माकं ज्ञातित्वं याति । अस्माकमसमोऽपि शिशुपालस्याऽहं स्वजन इति वक्तीत्यर्थः । स्वस्य भावः स्वता ताम् । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' । किंलक्षणोऽयं जनैः लोकैः सविनयं सोपचारम् उपासितोऽपि सेवितोऽपि सर्वजगतस्त्रिभुवनस्य पर एव शत्रुरेव ।

---

(१) ग्रन्थस्त्रुटितः ।

यद्ययमकृतज्ञः सेवितोऽपि शत्रुः, तत्कथं जनाः सेवन्ते इत्याह-कया अपरिचितचित्ततया अज्ञातचित्तत्वेन । ते हि जानते साधुरयं सेव्य इति । यदि वा अपरिचितचित्ततया अविश्वस्तहृदयत्वेन सर्वजगतः पर एवेति योज्यम् । इति निन्दा ॥

अथ स्तुतिः-अयं स्वतामात्मत्वं व्रजति प्रतिपद्यते । क्षेत्रज्ञोऽयमित्यर्थः । लोकप्रसिद्ध्याऽत्र आत्मा स्वशब्देनोक्तः । आत्माऽऽत्मीयज्ञाति(धन)वचनः स्वशब्दः । साङ्ख्या हि आत्मानं स्वामिशब्दवाच्यमाहुः । किंलक्षणोऽसौ अनुचितोऽपि अनभ्यस्तोऽपि अज्ञेयोऽपि सविनयमेकाग्रेण योगिभिः उपासितः सेवितः, अपरं किंलक्षणोऽयं सर्वजगतः सर्वस्मात् जगतः विश्वस्मात् जगतः परः विलक्षणः, कया अपरिचितचित्ततया अपरिचितमसङ्कृतं चित्तं मनो बुद्धिर्वा यस्य सः अपरिचित्तचित्तः तद्भावस्तत्ता तया । अन्यो ह्यात्मा, अन्या च बुद्धिः, अन्यच्च चित्तम्, जगच्चेदं प्राकृतो भागः ॥ ५ ॥

व्रजतीति ॥ अयमनुचितोऽप्ययोग्योऽपि स्वतां जन्मना ज्ञातित्वं याति । असमोऽपि शिशुपालस्याऽहं स्वजन इति वक्तीत्यर्थः । तथा जनैः सविनयं साचारं सेवितोऽपि परः शत्रुरेवायं त्रिभुवनस्य । यद्ययमकृतज्ञः सेवितोऽपि शत्रुस्तत्कथं जनाः सेवन्त इत्याह—अपरिचितचित्ततया चलचित्ततया अविश्वस्तहृदयत्वेन सर्वजगतः पर एवेति योज्यम् । इति निन्दा ॥

स्तुतिश्च—असौ स्वतामात्मत्वं व्रजति प्रतिपद्यते । क्षेत्रज्ञोऽयमित्यर्थः । लोकप्रसिद्ध्याऽत्र स्वशब्देनात्मोक्तः । आत्मात्मीयज्ञातिधनवचनः स्वशब्दः । साङ्ख्या ह्यात्मानं स्वामिशब्दवाच्यमाहुः । कीदृशोऽयम् अनुचितोऽप्यनभ्यस्तोऽप्यज्ञेयोऽपि सविनयमेकाग्रेण योगिभिरुपासितश्चिन्तितः । तस्मात्सर्वस्माज्जगतो व्यक्तात्परो विलक्षणः । कुतः—अपरिचितमसङ्कृत चित्तं मनो बुद्धिर्वा यस्य सोऽपरिचितचित्तस्तद्भावस्तत्ता तया । अन्यो ह्यात्मा, अन्या च बुद्धिः, अन्यच्च चित्तम्, जगच्चेदं प्राकृतो भागः ॥ ५ ॥

**उपकारिणं निरुपकारमनरिमरिमप्रियं प्रियम् ॥**
**साधुमितरमबुधं बुधमित्यविशेषतः सततमेष पश्यति ॥ ६ ॥**

उपकारिणमिति ॥ एष कृष्णः उपकारिणमुपकर्तारं निरुपकारमनुपकर्तारं वा अविशेषतः अविशेषेण पश्यति जानाति । अपकारिणमिव उपकारकमपि असौ समया दृष्ट्या पश्यतीत्यर्थः । इति अकृतज्ञत्वकथनम् । एवमन्यत्र । तथा अरिं शत्रुम् अनरिं मित्रम् । नायं नियमो, यत् मित्रमुपकार्येव भवत्यनुपकारतः शत्रुरेवेति पृथगुपादानम् । मित्रमपि नोपकुरुते, निरुपकारी शत्रुरपि सम्भवति । अप्रियं द्वेष्यं प्रियं मनोज्ञं, साधुमार्यम् इतरमसाधुं खलम्, अबुधं मूर्खं बुधं पण्डितमिति विशेषो नास्ति । इति निन्दा ॥

अथ स्तुतिः-समदृष्टित्वात्पुरुषस्य समदृष्टित्वम्(१) ॥ ६ ॥

उपकारिणमिति ॥ अयमुपकारिणमपकारिणं चाऽविशेषेण पश्यति । अपकारिणमिवोपकारकमप्यसौ समया दृष्ट्या पश्यतीत्यर्थः । इत्यकृतज्ञत्वकथनम् । एवमन्यत्र । तथा अरिं शत्रुं त्वनरिं मित्रम् । नायं नियमो यन्मित्रमुपकार्येव भवति, अनुपकारकश्च शत्रुरेव सम्भवति । अप्रियं द्वेष्यं प्रियं मनोज्ञम् । साधुमार्यमितरं खलम् । अबुधं मूर्खं बुधं पण्डितम् । इति दुरुक्तनिर्देशः । एषा निन्दा ॥

स्तुतौ तु—निर्गुणत्वात्पुरुषस्य समदृष्टित्वम् ॥ ६ ॥

**उपकारकस्य दधतोऽपि बहुगुणतया प्रधानताम् ॥**
**दुःखमथमनिशमाप्तवतो न परस्य किञ्चिदुपकर्तुमिच्छति ॥ ७ ॥**

---

( १ ) हेतुसाध्ययोर्वैयधिकरण्यं युक्तम् । द्वितीयव्याख्यायां 'निर्गुणत्वा'दिति हेतूक्तिः सङ्गच्छते ।

उपकारकस्येति ॥ अयं कृष्णः परस्य अन्यस्य किञ्चिदपि मनागपि नोपकर्तुमिच्छति । कस्यांचिदप्युपकारकरणेऽस्य बुद्धिर्न भवतीत्यर्थः । कदाचित्परोऽनुपकारी भविष्यतीत्याशङ्क्याह—किंलक्षणस्य परस्य उपकारकस्यापि उपकर्तुरपि, अपरं किंलक्षणस्य अनिशं निरन्तरं दुःखमाप्तवतः कष्टं प्राप्तस्य । कदाचिदमुख्यः परः स्यात, तदप्रत्युपकारित्वे वा लज्जादोषो न भवतीत्याह—अपरं किंलक्षणस्य परस्य बहुगुणतया श्रुतशौर्यादिसकलगुणसद्भावेन प्रधानतां दधतोऽपि मुख्यत्वं बिभ्रतोऽपि । तदेतेन पूर्वोऽर्थो दृढीकृतः। इति निन्दा ॥

अथ स्तुतिः-अयं कृष्णः परस्य बुद्धितत्त्वस्य प्रधानसंज्ञस्य किञ्चिदपि नोपचिकीर्षति । किंलक्षणस्य बुद्धितत्त्वस्य पुरुषप्रवृत्तिद्वारेण उपकारकस्य, अपरं किंलक्षणस्य बहवस्त्रयोऽपि ये गुणा(१)दिकं सदा प्राप्तस्य । सर्वं बुद्धिरनुभवति न पुरुषः ॥ ७ ॥

उपकारकस्येति ॥ अयं परस्याऽन्यस्य किञ्चिदपि मनागपि नोपकर्तुमिच्छति । उपकारकरणे बुद्धिरेवास्य न भवतीत्यर्थः । कदाचित्परोऽनुपकारी स्यादित्याह—उपकारकस्यापि । अत एवैतदर्थमनिशं दुःखं क्लेशमाप्तवतः प्राप्तस्य । कदाचिदमुख्यः परः स्यात्तदप्रत्युपकारित्वे न तथा लज्जादोषो भवेदित्याह—बहुगुणतया श्रुतशौर्यादिसद्भावेन प्रधानतां मुख्यत्वं दधतो बिभ्रतः । तदेतेन पूर्वोक्तार्थो दृढीकृतः । इति निन्दा ॥

स्तुतिस्तु—अयं परस्य बुद्धितत्त्वस्य प्रधानसंज्ञकस्य किञ्चिदपि नोपचिकीर्षति । द्रष्टा हि पुरुषो न सक्रियः । कीदृशस्य पुरुषप्रवृत्तिद्वारेणोपकारकस्य, तथा बहवस्त्रयोऽपि ये गुणास्तद्भावेन प्रधानतां प्रकृतित्वं दधतः । सत्त्वरजस्तमांसि प्रधानम् । तथा दुःखं जननमरणादिकं सदा प्राप्तस्य । सर्वं हि बुद्धिरनुभवति न पुरुषः ॥ ७ ॥

**स्वयमक्रियः कुटिलमेष तृणमपि विधातुमक्षमः ॥**
**भोक्तुमविरतमलज्जतया फलमीहते परकृतस्य कर्मणः ॥ ८ ॥**

स्वयमिति ॥ एष कृष्णः अविरतं सदैव परकृतस्य अन्यनिष्पादितस्य कर्मणः क्रियायाः फलं धनं लाभं वा भोक्तुमीहते प्राप्तुं वाञ्छति, कया अलज्जतया निस्त्रपत्वेन । कदाचिदैश्वर्यादिकं स्यादित्याह—किंलक्षणः एषः स्वयमात्मना तृणमपि यवसं कुटिलं विधातुं वक्रं कर्तुम् अक्षमः असमर्थः अनीशः, अपरं किंलक्षणः एषः अक्रियः अलसः अशक्त्या स्वयं निष्क्रियः । पराधीनोऽयमन्यदत्तेन पिण्डेन जीवतीति वाक्यार्थः। इति निन्दा ॥

अथ च वाक्यार्थकल्पनया स्तुतिः-एष भगवान् परकृतस्य बुद्धिजनितस्य कर्मणः शुभाशुभं फलं सुखदुःखात्मकं भोक्तुमीहते । आत्मा हि फलभागिति साङ्ख्याः । किंलक्षणः एषः इति पुरुषस्वरूपमाह—स्वयमक्रियो निष्कर्मकः, तथा तृणमपि कुटिलीकर्तुमशक्तः । निर्लज्जत्वं निर्गुणत्वात् ॥ ८ ॥

स्वयमिति ॥ एषः देवः परकृतस्याऽन्यनिष्पादितस्य कर्मणः क्रियायाः फलं भोक्तुमीहते वाञ्छति । कथम् अलज्जतया निस्त्रपत्वेन । कदाचिदैश्वर्यादेवं स्यादित्याह—आत्मना तृणमपि कुटिलं कर्तुमक्षमोऽसमर्थोऽनीशः । यतोऽक्रियोऽलसः अशक्त्या स्वयं निष्क्रियः। पराधीनोऽन्यदत्तेन पिण्डेन जीवति । इति निन्दा ॥

अथ च वाक्यार्थपर्यालोचनया स्तुतिः—एष भगवान् परजनितस्य बुद्धिकृतस्य कर्मणः शुभाशुभस्य फलं सुखदुःखात्मकं भोक्तुमीहते । आत्मा हि फलभागीति साङ्ख्याः । कीदृगेष इति पुरुषस्य स्वरूपमाह—स्वयमक्रियो निष्कर्मा । तथा तृणमपि कुटिलं कर्तुमनीशः । निर्लज्जत्वं निर्गुणत्वात् ॥ ८ ॥

**य इमं समाश्रयति कश्चिदुदयविपदोर्निराकुलम् ॥**
**तस्य भवति जगतीह कुतः पुनरुद्भवो विकरणत्वमीयुषः(२) ॥ ९ ॥**

---

(१) ग्रन्थोऽत्र स्खलितः । स च द्वितीयव्याख्यातोऽवगन्तव्यः । (२) ०मेयुषः ।

य इति॥ यः कश्चित् मूर्खः इमं कृष्णं समाश्रयति सेवते, तस्य मूर्खस्य इह एतस्मिन् जगति संसारे कुतः पुनरुद्भवो भवति । नैव समुत्थानं भवतीत्यर्थः । किंलक्षणमिमम् उदयविपदोः लाभविपस्योः निराकुलम् उदये विपदि च निश्चिन्तम् । यदि आश्रितस्य सम्पत् भवति ततोऽस्य न सुखम्, अथ विपत् ततो नैव दुःखमित्यर्थः । अविवेकित्वादिति भावः । किंलक्षणस्य तस्य विकरणत्वमीयुषः विगतानि करणानि इन्द्रियाणि यस्य सः विकरणः तस्य भावस्तत्त्वं, मृतिं प्राप्तस्य । एतदाश्रयणात् स मृत एवेत्यर्थः । सामग्रीवैकल्यं वा विकरणत्वम् । इति निन्दा ॥

अथ स्तुतिः—यः कश्चित् योगी एनं परमात्मानं सेवते तस्य विकरणत्वमीयुषो नष्टदेहस्य पुनरिह संसारे कुतः उद्भवो जन्म । मुक्त एवाऽसावित्यर्थः । किंलक्षणममुम् उदयविपदोः निराकुलमव्यग्रम् , आप्तकामत्वात् ॥ ९ ॥

य इति ॥ यः कश्चिन्मूर्ख इमं कृष्णं समाश्रयति सेवते तस्याऽस्मिन् संसारे कुतः पुनरुद्भवो भवति । नैव समुत्थानं भवतीत्यर्थः । य एन(?)मुदये विपदि च निराकुलं निश्चिन्तम् । आश्रितस्य यदि सम्पत् ततोऽस्य नैव सुखम् , यदि वा विपत् ततो नैव दुःखमित्यर्थः । तस्य कीदृशस्य विकरणत्वं मृतिमेयुषः प्राप्तस्य । एतदाश्रयणात्स मृत एव । सामग्रीवैकल्यं वा विकरणत्वम् । इति निन्दा ॥

स्तुतिश्च—यः कश्चियोगी एनं परमात्मानं सेवते तस्य विकरणत्वमेयुषो नष्टदेहस्य पुनरिह कुत उद्भवो जन्म । मुक्त एवासावित्यर्थः । कीदृशं तम् उदयविपदोर्निराकुलमव्यग्रम् । अक्रियत्वात् । करणानि इन्द्रियाणि । एयुष इत्याङ्पूर्वस्येणः क्वसुः । 'उपेयिवान्—' इत्यत्र हि उपसर्गानिर्देशोऽतन्त्रम् ॥ ९ ॥

**गुणवन्तमप्ययमपास्य जनमखिलमव्यवस्थितैः ॥**
**याति सुचिरमतिबालतया धृतिमेक एव परिवारितो जडैः ॥ १० ॥**

गुणवन्तमिति ॥ अयं कृष्णः एक एव गुणवन्तमपि गुणिनमपि अखिलं समस्तं जनं लोकम् अतिबालतया अतिचापलेन अपास्य हित्वा अव्यवस्थितैर्निर्मर्यादैः चपलैर्जडमूर्खैः परिवारितः परिवृतः सन् सुचिरमजस्रं धृतिं याति प्रीयते । एतद्वर्जं नाऽन्यो नाकमपास्य गोपमध्ये रमते । इति निन्दा ॥

अथ स्तुतिः—एष भगवान् बालतया बालरूपः सन् जलैः उदकैः परिवारितश्च सन् सुचिरं धृतिं याति एति । उक्तं च—

'संभक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत् ।
बालः स्वपिति यश्चैकः तस्मै मायात्मने नमः' ॥

इति । किंलक्षणैर्जलैः अव्यवस्थितैः भरितसकलभुवनैः, किं कृत्वा धृतिं याति गुणवन्तं सत्त्वादिगुणाश्रितं जनम् अपास्य क्षिप्त्वा विनाश्य । सर्वजनं संहृत्य बालरूपधरो मायया जलमध्ये यः शेते इत्यर्थः ॥ १० ॥

गुणवन्तमिति ॥ अयं सर्वमेव गुणिनं जनमतिबालतयाऽतिचापलेन हित्वा अव्यवस्थितैश्चपलैर्जडैः परिवारितः सन्नजस्रमेक एव धृतिमेति प्रीयते । एतद्वर्जं नान्यो नाकलोकमपास्य गोपमध्ये रमते । इति निन्दा ॥

स्तुतिस्तु—एष भगवान् बालतया बालरूपो भवन् जलैरद्भिः परिवारित आवृतः सुचिरं धृतिमेति । उक्तं च—

'संभक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत् ।
बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः' ॥

कीदृशैर्जलैरव्यवस्थितैर्भरितसकलभुवनैः, किं कृत्वा धृतिं याति गुणवन्तं सत्त्वाद्याश्रयं जनमपास्य क्षिप्त्वा विनाश्य । सर्वं जनं संहृत्य बालरूपधरो जलमध्येऽयं शेते ॥ १० ॥

**सुकृतोऽपि सेवकजनस्य बहुदिवसखिन्नचेतसः ॥**
**सर्वजनविहितनिर्विदयं सकृदेव दर्शनमुपैति कस्यचित् ॥ ११ ॥**

**सुकृतोऽपीति** ॥ हे भुवोऽधिपाः ! अयं कृष्णः सुकृतोऽपि उपकारकस्यापि सेवकजनस्य आश्रितलोकस्य सकृत् एकवारमेव दर्शनमुपैति दर्शनं ददाति कस्यचित्, न सर्वस्य । किंलक्षणः अयं सर्वजनविहितनिर्वित् सर्वजनस्य विहिता उत्पादिता निर्वित् निर्वेदः खेदो येन सः तथा, किंलक्षणस्य जनस्य बहुभिर्दिवसैः भूरिभिर्दिनैः खिन्नं विपन्नं चेतो यस्य सः तथा तस्य । चिरकालोद्विग्नचित्तस्येत्यर्थः । इति निन्दा ॥

अथ स्तुतिः—अयं परमात्मा कस्यचिदेव सेवकजनस्य भक्तलोकस्य सकृदेव दर्शनमुपैति । न हि क्षेत्रज्ञः सर्वस्य । कीदृशस्य बहुदिवसखिन्नचेतसः क्षुण्णमनसः, दीर्घयोगेन श्रान्तचेतसः । न ह्यनभ्यासगम्य ईश्वरः । अपरं किंलक्षणस्य सेवकजनस्य सुकृतः पुण्यवतः, किंलक्षणोऽयं सर्वजनविहितनिर्वित् सर्वेषु जनेषु विगतो हितनिर्वेदो यस्य सः विगतसर्वजनहितनिर्वित् । यस्य कश्चिन्न प्रियः न द्वेष्यः । सर्वे जना यत्र स सर्वजनः विगतौ हितनिर्वेदौ सुखःदुखे यस्य सः विहितनिर्वित् ततः कर्मधारयः । सर्वजनस्य विहिता निर्वित् निर्वाणम् इत्यन्ये । आश्रितं जनं यः संसारान्मोचयतीत्यर्थः । निर्वित् निर्वेदो निर्वाणम् ॥ ११ ॥

**सुकृतोऽपीति** ॥ अयं सुकृतोऽप्युपकारकस्याप्याश्रितजनस्य सकृदेकवारमेव दर्शनमुपैति दर्शनं ददाति कस्यचित्, न सर्वस्य । किंभूतः सर्वजनविहितनिर्वित् सर्वजनस्य विहिता निर्वित् खेदो येन, कीदृशस्य जनस्य बहुदिवसखिन्नचेतसः बहुभिर्दिवसैः खिन्नं चेतो यस्य तस्य । चिरकालमेवोद्विग्नचित्तस्येत्यर्थः । इति निन्दा ॥

स्तुतिस्तु—अयं कस्यचिदेव सेवकजनस्य भक्तलोकस्य सकृदेव दर्शनमुपैति । न हि क्षेत्रज्ञः सर्वस्य सदैव । कीदृशस्य सुकृतः पुण्यकृतः । तथा बहुभिर्दिवसैर्भूयसा कालेन खिन्नचेतसः क्षुण्णमनसः । दीर्घेण योगेन श्रान्तचेतस इत्यर्थः । न ह्यनभ्यासगम्य ईश्वरः । अत एव सर्वजनविहितनिर्वेदः । श्रेयस्यपि चिरकालमभ्यसनो निर्विद्यते । यदि वा सर्वेषु जनेषु विगतौ हितनिर्वेदौ यस्य स सर्वजनविहितनिर्वित् । नाऽस्य कश्चित्प्रियो न च द्वेष्य इत्यर्थः। यदि वा सर्वे जना यत्र स सर्वजनः, विगते हितनिर्विदौ सुखदुःखे यस्य स विहितनिर्वित् । ततः कर्मधारयः। सर्वजनस्य विहिता निर्वित् निर्वाणं येनेत्यन्ये । आश्रितजनं संसारान्मोचयतीत्यर्थः । शोभनं करोति सुकृदुपकारी, पुण्यकृच्च । निर्विन्निर्वेदो निर्वाणं च ॥ ११ ॥

**स्वजने सखिष्वनुगतेषु नियतमनुरागवत्स्वपि ॥**
**स्नेहममृदुहृदयः क्षपयन्निरपेक्ष एष समुपैति निर्वृतिम् ॥ १२ ॥**

**स्वजने इति** ॥ हे राजन् ! एष कृष्णः स्वजने बन्धुवर्गे तथा सखिषु मित्रेषु तथा अनुगतेषु आश्रितेषु स्नेहं प्रीतिं क्षपयन् नाशयन् नियतं सदैव निर्वृतिं समुपैति सुखं प्राप्नोति । सर्वत्रैव वैरायते इत्यर्थः । कदाचिदेते विरक्ताः स्युरित्यत आह—किंलक्षणेषु एतेषु अनुरागवत्स्वपि अनुरक्तेष्वपि । कथं तर्हि न स्नेह इत्यत आह—किंलक्षणोऽयम् अमृदुहृदयः क्रूरचित्तः, अपरं किंलक्षणोऽयं निरपेक्षः निर्विवेकः । इति निन्दा ॥

अथ स्तुतिः—एष स्वजने सखिषु अनुगतेषु आश्रितेषु स्नेहं क्षपयन् तृष्णां तनूकुर्वन् निर्वृतिं समुपैति निर्वाणं याति । तृष्णाक्षयात् किल मुक्तिरित्यर्थः । किंलक्षणः अमृदुहृदयः

नार्द्रभावः वीतरागत्वात् , यदि वा अमृदु दुर्बोधं हृदयं स्वरूपं यस्य सः तथा, अपरं किंलक्षणः निरपेक्षः निःसङ्गः ॥ १२ ॥

स्वजने इति ॥ एष बन्धुमित्राश्रितेषु प्रीतिं नाशयन्निर्वृतिं सदा समुपैति सुखं प्राप्नोति । सर्वत्रैव वैरायमाणः सुखायत इत्यर्थः । कदाचिदेते विरक्ताः स्युरित्याह—अनुरक्तेष्वपि । कथं तर्हि निःस्नेह इत्याह—यतो हृदयेऽमृदुः क्रूरचित्तः, तथा निरपेक्षो निर्विवेकः । इति निन्दा ॥

स्तुतिस्तु—एष स्वजनादिषु अनुरागवत्स्वपि स्नेहं क्षपयंस्तृष्णां तनूकुर्वन्निर्वृतिं समुपैति निर्वाणं याति । तृष्णाक्षयात्किल मुक्तिः । अमृदुहृदयः नार्द्रभावो वीतरागत्वात् । यदि वा अमृदु दुर्बोधं हृदयं स्वरूपं यस्य । निरपेक्षो निःसङ्गः । क्षपिर्धातुष्वपठितोऽपि क्रियावाचित्वात्वाचिमिलोकस्यार्घत्वादिक(?)-वद्धातुरेव ॥ १२ ॥

**क्षणमेष राजसतयैव जगदुदयदर्शितोद्यतिः ॥**
**सत्त्वहितकृतमतिः सहसा तमसा विनाशयति सर्वमावृतः ॥ १३ ॥**

क्षणमिति ॥ हे नृपाः ! एष कृष्णः राजसतया चापलेन क्षणं क्षणमात्रं जगदुदयदर्शितोद्यतिः जगदुदये लोकहिते दर्शितोद्यतिः दर्शितोद्यम इति क्रिया । राजसिकत्वेन क्षणमुपकुरुते इत्यर्थः । तु पुनः तमसा मोहेन स आवृतः सन् सहसैव तत्क्षणमेव सत् सुकृतं सर्वं विनाशयति । किंलक्षणः सः अहितकृतमतिः उपद्रवविहितबुद्धिः । यदेव पूर्वं सुकृतं तदेव मोहयन् नाशयतीत्यर्थः । इति निन्दा ॥

अथ स्तुतिः—एष त्रिमूर्तिः । राजसतया रजोगुणमाश्रित्य ब्रह्मरूपेण जगदुदये प्रजासर्गे दर्शितोद्यतिः विहितोद्यमः, तथा सत्त्वहितकृतमतिः सत्त्वेन गुणेन हिते रक्षायां कृतमतिः विहितचित्तः विष्णुरूपेण, तथा तमसा गुणेन आवृतः सन् व्याप्तः सन् सहसैव व्यक्तं विश्वं रुद्ररूपेण नाशयति । तथा चोक्तम्—

> ब्रह्मत्वे सृजते लोकान् विष्णुत्वे पालयत्यपि ।
> रुद्रत्वे संहरत्येष तिस्रोऽवस्थाः स्वयम्भुवः ॥

इति ॥ १३ ॥

क्षणमिति ॥ एष राजतया चापलेन क्षणं जगदुदये लोकहिते दर्शितोद्यतिर्दर्शितोद्यम इति क्रिया । राजसिकत्वेन क्षणमुपकुरुते इत्यर्थः । तमसा तु मोहेन पुनरनन्तरमावृतत्वादहितकृतमतिरुपद्रवविहितबुद्धिः सन् सहसैव सर्वं सत् सुकृतं विनाशयति । यदेव पूर्वमुपकृतं तदेव मोहयन् नाशयतीत्यर्थः । सत् सुकृतम् । तु भिन्नक्रमः । इति गर्हा ॥

स्तुतिरपि-एष त्रिमूर्तिः । राजसतया रजोगुणेनाश्रितः सन् ब्रह्मरूपेण जगदुदये प्रजासर्गे दर्शितोद्यमः । तथा सत्त्वेन गुणेन हिते रक्षायां विहितचित्तो विष्णुरूपेण । तथा तमसा गुणेनावृतः सन् सहसैव सर्वं व्यक्तं रुद्ररूपेण नाशयति ॥ १३ ॥

**अभिहन्यते यदभिहन्ति परितपति यच्च तप्यते ॥**
**नास्य भवति वचनीयमिदं चपलात्मिका प्रकृतिरेव हीदृशी ॥ १४ ॥**

अभिहन्यत इति ॥ हे नृपाः ! एष कृष्णः अन्येन अभिहन्यते ताड्यते, द्विषोऽन्यान् अभिहन्ति । तथा यत्परितपति बाधते, यच्च तप्यते उपद्रूयते । अतोऽस्य इदं वचनीयं न भवति । यत् अस्य ईदृशी एवंविधा चपलात्मिका अविनीता प्रकृतिः । चपलः स्वभावो हि अयोग्यतामर्हति । इति क्षेपः ॥

अथ स्तुतिः—अस्य परमात्मनो यथोक्तं वचनीयं न भवति न वर्तते । हन्ति हन्यते

तपति तप्यते, इति न वाच्यमित्यर्थः । यत् ईदृशी चपलात्मिका अनेकरूपा प्रकृतिर्बुद्धिः, न तु एषः । हननादिकं तमसा भवति, पुरुषस्तु निर्गुण इति भावः । उक्तं च—

'य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते' ॥

इति । तस्मादसौ न बध्यते, न मुच्यते । नानाश्रया प्रकृतिः । तपिः सकर्मोऽपि । शारीरं दुःखमभिघातः, मानसं तु परितापः ॥ १४ ॥

अभिहन्यते इति ॥ यदेष हरिरन्येनाभिहन्यते ताड्यते यच्चैषोऽन्यानभिहन्ति, तथा यत्परितपति बाधते यच्च तप्यते उपद्रूयते । अतोऽस्य वचनीयता वाच्यता भवति । यतोऽस्यैवंविधैव चपलात्मिका अविनीता प्रकृतिः स्वभावः । स्वभावाच्चपलस्त्वयोग्यतामर्हति । इति क्षेपः ॥

स्तुतिस्तु—अस्य परमात्मनो यथोक्तं वचनीयं वचनं न भवति न प्रवर्तते । 'एष हन्ति हन्यते तपति परितप्यते च', न वाच्यमित्यर्थः । यत ईदृशी चपलात्मिकाऽनेकरूपा प्रकृतिर्बुद्धिः, न त्वेषः । हननादिकं तमसा भवति । पुरुषश्च निर्गुण इत्यर्थः । उक्तं च—

'य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते' ॥

इति । 'तस्मान्न बुध्यतेऽसौ न मुच्यतेऽसौ नापि संसरति । सरति बुध्यते मुच्यते च नानाश्रया प्रकृतिः' । तपिः सकर्मकोऽपि । शारीरं दुःखमभिघातः, मानसं तु परितापः ॥ १४ ॥

**अतिसत्त्वयुक्त इति पुंभिरयमतिशयेन वर्ण्यते ॥**
**सूक्ष्ममतिभिरथ चापगते समुपैति नाल्पमपि सत्त्वसङ्करम् ॥ १५ ॥**

अतिसत्त्वेति ॥ हे नृपाः ! यूयं शृणुत, अयं कृष्णः सूक्ष्ममतिभिः स्वल्पबुद्धिभिः पुंभिः पुरुषैः अतिशयेन इति वर्ण्यते—यदयं कृष्णः अतिसत्त्वयुक्तः महता धैर्येण युक्तः । अथ पश्चात् चापगते गृहीतधनुषि अल्पमपि सत्त्वसङ्करं पौरुषलेशं न समुपैति न भजति । इति निन्दा ॥

अथ स्तुतिः—अयं कृष्णः सूक्ष्ममतिभिः कुशाग्रबुद्धिभिः पुंभिः इति वर्ण्यते—यत् अयं कृष्णः अतिसत्त्वयुक्तः । अथ च पुनः अपगते अस्तबीजनिर्बीजयोगे अल्पमपि सत्त्वसङ्करं सत्त्वगुणं न भजते । तत्त्वतः सत्त्वादिकात् पृथगित्यर्थः ॥ १५ ॥

अतिसत्त्वेति ॥ एष सूक्ष्ममतिभिः स्वल्पप्रज्ञैर्नृभिर्महता सत्त्वेन धैर्येण युक्त इति सुष्ठु वर्ण्यते । अथ अनन्तरं चापगते प्राप्तचापे गृहीतधनुषि कस्मिंश्चित्स्वल्पमपि सत्त्वसङ्करं पौरुषलेशं न भजति, पलायनादिना । परेणोत्तम्भस्यास्य सत्त्वलेशोऽपि न लभ्यत इत्यर्थः । तस्मादयुक्तं च तैर्वर्ण्यत इति भावः । इति निन्दा ॥

स्तुतिस्तु—चापं गतश्चापगतः, यद्वा चापस्य गतं प्राप्तिश्चापगतं तस्मिंश्चापगते धनुःसन्निधाने सतीत्यर्थः । अथ च सबीजनिर्बीजसमाधौ पुंभिर्योगिभिः 'सत्त्वेन गुणेन युक्त' इति कथ्यते । सूक्ष्ममतिभिः कुशाग्रीयबुद्धिभिर्बहुदृश्वभिरपगते ज्ञाते सति निर्बीजसमाधौ स्वल्पमपि सत्त्वसङ्करं नोपैति । निर्गुणो हि पुरुषः । अथ चेति विस्मये ॥ १५ ॥

**प्रलयं परस्य महतोऽपि नियतमिह निःसुखे गुणाः ॥**
**यान्ति जगदपि सदोषमदः स्वरुचैव पश्यति गुणान् द्विषन्नयम् ॥ १६ ॥**

प्रलयमिति ॥ हे नृपाः ! परस्य अन्यस्य गुणाः शौर्यादयः इह कृष्णे प्रलयं यान्ति नाशं प्राप्नुवन्ति । नैष कस्यचित् गुणानङ्गीकरोतीत्यर्थः । किंलक्षणस्य परस्य

महतोऽपि मुख्यस्याऽपि, किंलक्षणे कृष्णे नियतं नित्यमेव निःसुखे । गुणसंहाराद्धि कुतः सुखम् । अपरमयं कृष्णः अदः जगदपि एतद्विश्वमपि स्वरुचैव आत्मेच्छयैव सदोषं पश्यति दोषावृतं विलोकयति । किं कुर्वन् गुणान् द्विषन् । गुणद्वेषित्वात् अन्यानपि सदोषान् वेत्तीत्यर्थः । इति निन्दा ॥

अथ स्तुतिः—परस्य बुद्धितत्त्वस्य गुणाः सत्वरजस्तमांसि इह परमात्मनि कृष्णे प्रलयं नाशं यान्ति । गुणा हि पुरुषं प्राप्य निवर्तन्ते । किंलक्षणे इह नियतं निःसुखे निश्चितं सुखवर्जिते, अविक्रियत्वात् । अपरमयमात्मा अदः एतज्जगद्विश्वं स्वरुचैव ज्ञानेनैव सदोषं पश्यति जन्ममरणादियोगात् प्रकृतिं सक्लेशां वेत्ति । किं कुर्वन् गुणान् सत्त्वादीन् द्विषन् निन्दन् ॥ १६ ॥

प्रलयमिति ॥ परस्यान्यस्य महतोऽपि मुख्यस्यापीह कृष्णे गुणाः सौन्दर्यादयो नियतमवश्यं प्रलयं यान्ति नश्यान्ति । नैष कस्याचिद् गुणानङ्गीकरोतीत्यर्थः । अविद्यमानं सुखमस्मादिति निःसुखः । गुणाऽपहाराद्धि कुतः सुखम् । यद्वा अविद्यमानं सुखमस्मादिति निःसुखः । अत एव ते नाशमत्र यान्ति । अतश्चायं गुणान् द्विषन्नखिलमप्येतज्जगद्विश्वं स्वरुचैवाऽऽत्मेच्छयैव सदोषं पश्यति । गुणद्वेषित्वादन्यानपि सदोषान् वेत्तीत्यर्थः । इति निन्दा ॥

अथ स्तुतिः—इह परमात्मनि कृष्णे परस्य बुद्धितत्त्वस्य महतोऽपि महत्तत्त्वस्य गुणाः सत्त्वरजस्तमांसि प्रलयं यान्ति नाशं गच्छन्ति । पुरुषं प्राप्य निवर्तन्त इत्यर्थः । कीदृशेऽत्र निःसुखे सुखवर्जिते । अविक्रियत्वात् । सुखासुखे नात्मनः । तथैष गुणान्सत्त्वादीन् द्विषन्ननभिनन्दन्नस्पृशन् अदो जगत् प्रकृतिं सदोषं क्लेशयुक्तं पश्यतीक्षते । द्रष्टा हि पुरुषः प्रकृतेरिष्यते जगत्प्रकृतिर्हि भागो व्यक्तम् । तच्च सदोषं जननमरणयोगात् । केन पश्यति स्वरुचा, आत्मभावेनेत्यर्थः ॥ १६ ॥

एवं साङ्ख्यदर्शनेन निन्दास्तुती कृते । साम्प्रतं पुराणदर्शनेन तुष्टूषुर्निनिन्दिषुश्चाह—

**क्षितिपीठमम्भसि निमग्नमुदहरत यः परः पुमान् ॥**
**एष किल स इति कैरबुधैरभिधीयमानमपि तत्प्रतीयते ॥ १७ ॥**

क्षितिपीठमिति ॥ हे नृपाः ! कैरपि अबुधैः मूर्खैरिति तत् अभिधीयमानमपि उच्यमानमपि प्रतीयते । मूर्ख एव सत्यमवगच्छतीत्यर्थः । इतीति किं-यत्, किल एष परः पुमान् एष स परमपुरुषः । एष कः, यः पुमान् क्षितिपीठं पृथिवीमण्डलम् अम्भसि मग्नं जले ब्रुडितम् उदहरत उद्धृतवान् । इति निन्दा ॥

अथ स्तुतिः—मूर्खा अपि सत्यमवगच्छन्ति । कैश्चिन्मूर्खैः शिशुपालप्रमुखैः एतत् श्रुत्वापि न सम्भाव्यते न मन्यते, यत् अनेन कृष्णेन भूमिरुद्धृता ॥ १७ ॥

एवं साङ्ख्यदर्शनेन स्तुत्वा अधुना पुराणदर्शनेन तुष्टूषुर्निनिन्दिषुश्चाह—

क्षितिपीठमिति ॥ कैरबुधैर्मूर्खैरिति तदभिधीयमानमप्युच्यमानमपि प्रतीयते । मूर्ख एव सत्यमवगच्छतीत्यर्थः । इतीति किम्-स एष परमपुरुषः । यो वराहरूपेणाऽम्भसि निमग्नं क्षितिपीठं पृथ्वीमण्डलमुदहरतोद्धृतवान् । इति निन्दा ॥

स्तुतिस्तु—कैश्चिदभिधीयमानं तत् मूर्खैरपि प्रतीयते । मूर्खा अपि सत्यमवगच्छन्तीत्यर्थः ॥ १७ ॥

**नरसिंहमूर्तिरयमेव दितिसुतमदारयन्नखैः ॥**
**आप्तजनवचनमेतदपि प्रतिपत्तुमोमिति जनोऽयमर्हति ॥ १८ ॥**

नरसिंहेति ॥ हे नृपाः ! अयमेव कृष्णः नरसिंहमूर्तिः सन् नरस्येव सिंहस्येव च मूर्तिः तथा च सन् दितिसुतं दितेः पुत्रं हिरण्यकशिपुं नखैः करजैः अदारयत् विदारयामास । एतदपि इदमपि आप्तवचनं यदुमाधवभाषितम् अयं जनो भीष्मादिः ओमिति एवमेतत् प्रतिपत्तुमङ्गीकर्तुमर्हति योग्यो भवति(१) ।

(२) नान्यः। आप्तोक्तत्वात् पण्डिता जानन्तीत्यर्थः। आप्ता अवितथवादिनो व्यासादयः१८

नरसिंहेति ॥ नृसिंहवपुः सन्नयमेव नखैर्हिरण्यकशिपुमदारयदिति यदाप्तवचनं तदप्ययं भीष्मादिक-एव जन ओमित्येवमेवैतदिति प्रतिपत्तुमङ्गीकर्तुमर्हति । सुहृद एवैनं स्तुवन्ति, तच्च मूर्खैरेव सत्यं बुध्यत-इत्यर्थः । इतिशब्दोऽर्थार्थयोः सम्बन्धोपादानायाऽध्याहार्यः । इति निन्दा ॥

स्तुतौ त्वयमर्थः—अयमेव भगवानपरो नरसिंहमूर्तिमाश्रित्य नखैर्दैत्येन्द्रमदारयादित्येतदप्याप्तजनवचनं शिष्टवाक्यम् अयं मनीषी जनः प्रतिपत्तुमर्हति नान्यः। आप्तोक्तत्वात्पण्डिता एव सत्यं जानन्तीत्यर्थः। आप्ता-अवितथवादिनो व्यासादयः ॥ १८ ॥

**अपहाय तुङ्गमपि मानमुचितमवलम्ब्य नीचताम् ॥**
**स्वार्थकरणपटुरेष पुरा बलिना परेण सह सम्प्रयुज्यते ॥ १९ ॥**

अपहायेति ॥ हे नृपाः ! अयं कृष्णः पुरा अग्रे बलिना बलिष्ठेन परेण अरिणा सह सम्प्रयुज्यते संयोगं प्राप्नोति । समर्थं चेत् परं वेत्ति तत् भयात् तं प्रविशतीत्यर्थः । किं कृत्वा तुङ्गमपि उच्चमपि उचितं योग्यं मानमपहाय अहङ्कारं त्यक्त्वा, किंलक्षणः एषः स्वार्थकरणपटुः आत्मप्रयोजनविधानचतुरः, अपरं किं कृत्वा नीचतामवलम्ब्य प्राकृतत्वमाश्रित्य । शक्तिर्वताऽऽत्मनो नाशाय । इति निन्दा ॥

अथ स्तुतिः—एष कृष्णः पुरा पूर्वं बलिना विरोचनसुतेन असुरेन्द्रेण सह सम्प्रयुज्यते प्रयोगं कुरुते । किंलक्षणेन बलिना परेण उत्कृष्टेन, किंलक्षणः अयम् उचितं योग्यं तुङ्गमपि मानमपहाय प्रमाणं परित्यज्य स्वार्थकरणपटुः स्वस्य ज्ञातेः इन्द्रस्य यः अर्थः प्रयोजनं तस्य करणं शत्रुवशीकरणं तत्र पटुः । किं कृत्वा नीचतामवलम्ब्य । इन्द्रस्य प्रीतये वामनत्वमवलम्ब्य एष भगवान् बलिं बद्धवानित्यर्थः ॥ १९ ॥

अपहायेति ॥ एष बलिना बलवता परेणान्येनाऽरिणा वा सह पुरा अचिरात्सम्प्रयुज्यते सम्बध्यते । समर्थं चेत्परं वेत्ति तद्भयात् तमेव प्रविशतीत्यर्थः । सर्वनामनिर्देशः सर्वत्र निन्दायामनास्थां सूचयति । स्तुतौ तु गौरवम् । किं कृत्वा उचितं योग्यं तुङ्गमुन्नतं मानमप्यपहाय अहङ्कारमपि त्यक्त्वा । तथा नीचतां प्राकृतत्वमाश्रित्य । यतः स्वार्थकरणपटुरात्मप्रयोजनसम्पादनचतुरः । शक्तिः किलात्मानो नाशाय । इति निन्दा ॥

स्तुतिस्तु—एष तुङ्गं मानं प्रमाणं हित्वा नीचतां खर्वत्वं चावलम्ब्य । पुरा पूर्वमुत्कृष्टेन बलिना वैरोचनिना सह सम्प्रयुज्यते सम्प्रयुयुजे । यतः स्वस्य ज्ञातेरिन्द्रस्य योऽर्थः शत्रुवशीकरणलक्षणस्तत्र पटुः कुशलः । इन्द्रप्रीतये वामनरूपत्वमवलम्ब्यैष भगवान् बलिं बबन्धेत्यर्थः ॥ १९ ॥

**क्रमते नभो रभसयैव विरचयति विश्वरूपताम् ॥**
**सर्वमतिशयगतं कुरुते स्फुटमिन्द्रजालमिदमेष मायया ॥ २० ॥**

क्रमते इति ॥ हे नृपाः ! एष कृष्णः सर्वम् अतिशयगतं कुरुते विशेषेण प्राप्तं कुरुते साश्चर्यं करोति, स्फुटमितिशब्द इवार्थे । इदमिन्द्रजालं कुरुते, कया मायया कपटेन । तावन्नभः क्रमते आकाशमुल्लङ्घयति, कया रभसेनैव औत्सुक्येनैव । अपरं विश्वरूपतां विरचयति विः पक्षी श्वा कुक्कुरः रूपो मृगः तद्भावं विरचयति । कदाचित् पक्षी भवति, कदाचित् कुक्कुरः मृगश्च

(१),-(२) अत्र ग्रन्थपातः ।

भवतीत्यर्थः। अत एव नभः क्रमते। सर्वमतिशयगतं कुरुते विशेषं प्राप्तं करोति। तात्त्विको व्यवहारोऽस्य न कश्चिदिति वाक्यार्थः। इति निन्दा॥

अथ स्तुतिः—इदं जगत् स्फुटम् एष भगवान् मायया ऋद्ध्या इन्द्रजालं कुरुते। इन्द्रजालमिव इन्द्रजालं भ्रमकारित्वात्। तदेवमाह—नभः क्रमते बलिबन्धनार्थं विश्वरूपतां सर्वमयत्वं विरचयति, सर्वम् अतिशयगतं कुरुते। किंलक्षणया मायया रभसया रभसमौत्सुक्यं करोतीति रभसा तया। लोकस्य वञ्चनं(?) तयेत्यर्थः॥ २०॥

क्रमते इति॥ एषः कृष्णः स्फुटमिन्द्रजालमसद्भूतं मायया हेतुभूतया कुरुते। किमित्याह—रभसया रभसेन युद्धादौ नभः क्रमते आरोहति। वयः पक्षिणः, श्वानः कुक्कुराः, तद्रूपा मृगाः तद्भावं विरचयति। यदि वा विश्वरूपतां नानारूपत्वम्। तथा सर्वमतिशयगतं विशेषप्राप्तं कुरुते। तात्त्विकोऽस्य व्यवहारो न कश्चित्। इति निन्दा॥

स्तुतिस्तु—इदमीदृक् स्फुटमेष भगवान् मायया ऋद्ध्या इन्द्रजालं कुरुते। इन्द्रजालमिवेन्द्रजालं भ्रमकारित्वात्। तदेवाह—नभः क्रमते बलिबन्धनार्थं विश्वरूपत्वं सर्वदेवमयत्वं विरचयति। सर्वं च जगदतिशयगतं प्राप्तविशेषं कुरुते। कीदृश्या मायया रभसमौत्सुक्यं करोतीति रभसा तया रभसया। क्रमते इति 'अनुपसर्गाद्वा' इत्यात्मनेपदम्॥ २०॥

**किल रावणारिरयमेव किमिदमियदेव कथ्यते॥**
**सत्त्वमतिबलमधिद्युति यत्तदशेषमेष इति धृष्टमुच्यताम्॥ २१॥**

किलेति॥ हे नृपाः! अयं हरिः किल रावणारिः रावणहन्ता एतेन दशास्यो हतः, इदम् इयदेव किं कथ्यते एतत् स्वल्पमात्रं कस्मादुच्यते। ननु अतिबलं महाशक्ति तथा अधिद्युति अधिकद्युति महत्तेजः यत्सत्त्वं प्राणी, तत्सर्वम् एष एव इति धृष्टं निःशङ्कम् उच्यतां कथ्यताम्। न हि अलीकस्य अन्तो भवतीति भावः। अतश्च येनाऽसत्यं वाच्यं, स बह्वेव कस्मान्नाह। तस्मान्नैतेन किञ्चिदपि कृतमिति वाक्यार्थः। इति निन्दा॥

अथ स्तुतिः-अयं रावणारिरेवेति किमिति एतावदुच्यते, यत् यस्मात् अधिबलम् अधिकद्युति च सत्त्वं सर्वम् एष एवेति धृष्टं सप्रतिज्ञमुच्यताम्। उक्तं च—

'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवाऽवगच्छ त्वं ममतेजोंऽशसम्भवम्'॥

इति। किलाऽऽगमे॥ २१॥

किलेति॥ अयं हरी रावणारिरिति। एतेन दशास्यो हत इति यदेवैतत्स्वल्पमात्रकं किमिति कस्मादुच्यते। अतिबलं महाशक्ति अधिद्युति महातेजश्च यत्सत्त्वं प्राणी तत्सर्वमेष एवेति धृष्टं निःशङ्कमुच्यताम्। न ह्यलीकस्यान्तो भवतीति भावः। अतश्च येनासत्यं वाच्यं स बह्वेव कस्मान्नाह। तस्मान्नैतेन किञ्चिदपि कृतमिति वाक्यार्थः। इति निन्दा॥

स्तुतिस्तु—अयं रावणारिरेवेति किमेतावदेवोच्यते। यद् यस्मादतिबलमधिद्युति च सत्त्वं तत्सर्वमेष इति धृष्टं निःशङ्कमुच्यताम्। उक्तं च—

'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवाऽवगच्छ त्वं मम तेजोंऽशसम्भवम्'॥

किलाऽऽगमे॥ २१॥

यच्च बाल्ये शकटमेष एव चिक्षेपेत्युच्यते, तदप्यसत्यमिति वक्तुमाह—

**चलतैष पादयुगलेन गुरु शकटमीषदस्पृशत्॥**
**दैवकलितमथ चोदलसद्दलितोरुभाण्डचयमात्मनैव तत्॥ २२॥**

चलतेति ॥ हे नृपाः ! एष कृष्णः चलता चपलेन पादयुगलेन चरणयुग्मेन गुरु महत् शकटम् अनः ईषत् अस्पृशत् किञ्चिदस्प्राक्षीत् , तत् दैवकलितं विधिनोदितम् अथ च तत् शकटम् आत्मनैव स्वयमेव उदलसत् ऊर्ध्वमपतत् । नन्वेतस्य न किञ्चित् पौरुषमित्याह— किंलक्षणं शकटं दलितोरुभाण्डचयं दलितः स्फुटितः उरुर्महान् भाण्डानां दधिदुग्धघृतादीनामत्राणां घटादीनां चयो राशिर्यत्र येनेति वा तत् तथा तत् । इति निन्दा ॥

अथ स्तुतिः—एष भगवान् चलता पादयुगलेन गुरु शकटम् ईषदेव अस्पृशत् अथ च उदलसत् परिवृत्तम् , यत एतेन दैवेन भगवता कलितं प्रेरितम् । अथ चेति विस्मये । ईषत्स्पर्शमात्रात् किल भङ्गो न युक्तः । शकटशब्दोऽस्त्रीलिङ्गः ॥ २२ ॥

यच्च बाल्ये शकटमेष एव चिक्षेपेत्युच्यते, तदप्यसत्यमिति वक्तुमाह—

चलतेति ॥ एष वै चलद्भ्यां चरणाभ्यां गुरु शकटं किञ्चिदस्प्राक्षीत् , तच्च दैवकलितं दैवचोदितं स्वयमेवोदलसदपतत् । न त्वेतस्यात्र किञ्चित्पौरुषम् । दलितः स्फुटित उरुर्महान् भाण्डानां दधिघृतघटादीनां चयो राशिर्यत्र । इति निन्दा ॥

स्तुतिस्तु—एष भगवांश्चलता पादयुगलेन गुरु शकटमीषदेवास्पृशत् । अथ चोदलसत्परिवृत्तम् । यत् एतेन दैवेन भगवता कलितं प्रेरितम् । अथेति विस्मये । ईषत्स्पर्शमात्रात्किल भङ्गो न युक्तः । शकटशब्दोऽस्त्रीलिङ्गः ॥ २२ ॥

**स्रवता(१)ऽमुना स्तनयुगेन जनितजननीजनादरा ॥**
**स्त्रीति सदयमविधाय मनस्तदकारि साधु यदघानि पूतना ॥ २३ ॥**

स्रवतेति ॥ हे नृपाः ! अमुना कृष्णेन तत् साधु अकारि शोभनं विहितम् । अपि तु न साधु विहितम् । तत् किं–यत् , पूतना राक्षसी अघानि निहता । किं कृत्वा इति अमुना प्रकारेण मनः चित्तं सदयमविधाय सकरुणमकृत्वा । इतीति किं–यदियं स्त्री सर्वथा अवध्येति। तन्न साधु कृतमित्यर्थः । किंलक्षणा पूतना स्रवता क्षीरं मुञ्चता स्तनयुगेन कुचद्वितयेन जनितजननीजनादरा कृतमातृस्नेहा । मातृघाती एवायमित्यर्थः । इति निन्दा ॥

अथ स्तुतिः—अमुना कृष्णेन मनश्चित्तं सदयमविधाय यत् पूतना अघानि, तत्साधु अकारि युक्तमेव कृतम् । सा हि राक्षसी स्तनाभ्यां विषं स्रवन्ती तन्मारणार्थमेवाऽगमदित्यर्थः ॥ २३ ॥

स्नुवतेति ॥ अमुना यत् पूतना राक्षसी स्त्री इति सदयं मनः अकृत्वा अघानि हता, तत्साध्वकारि युक्तं कृतमिति काक्वा, प्रयोजने नैव साधु कृतमित्यर्थः । कीदृशी सा स्नुवता क्षीरं स्रवता स्तनयुगेन कृतो जननीजनादरो मातृस्नेहो यया । अतश्च मातृघात्येवायम् । इति निन्दा ॥

स्तुतिस्तु—यदमुना स्नुवता स्तनयुगेन कृतमातृस्नेहापि पूतना राक्षसी स्त्रीति मनः सदयमकृत्वा हता, तत्साध्वकारि युक्तमेवानुष्ठितामिति स्पष्ट एवार्थः । सा हि राक्षसी स्तनाभ्यां क्षीरं स्रवन्ती तन्मारणार्थमेवागमदित्यागमार्थः । निष्कारणवधोद्यतस्य वधे कथमधर्मः स्यात् ॥ २३ ॥

**अभनक् तरू कथमिवैष कृतधरणिरिङ्गणः क्षणात् ॥**
**बाढमिदमपि न बालकृतं ननु देवताविधिरयं विजृम्भते ॥ २४ ॥**

अभनगिति ॥ हे नृपाः ! एष कृष्णः कथमपि केनैव प्रकारेण तरू अभनक् अर्जुनाख्यौ वृक्षौ बभञ्ज । किंलक्षणः एषः क्षणात्क्षणेनैव कृतधरणिरिङ्गणः विहितोर्वीगतिः,

(१) स्नुवता ।

पुनर्बाढं निश्रितम् इदमपि न बालकृतं नैव शिशुकर्म । ननु अयमहो देवताविधिः विजृम्भते केनापि अदृष्टेन दैवेन कृतम् न तु एतेन । इति निन्दा ॥

अथ स्तुतिः—एष कृष्णः कथमिव तरू बभञ्ज इदं किं न बालकृतम् । अयं न तत्त्वतो बाल इत्यर्थः । देवत्वमाश्रित्य अयं चकारेत्यर्थः ॥ २४ ॥

अभनगिति ॥ कृतधरणिरिङ्गणो विहितोर्वीगतिः स कथमिव केन प्रकारेण क्षणेनैव तरू अर्जुनाख्यौ बाढं भृशमभनग्बभञ्ज । न सम्भावयाम एतादित्यर्थः । ननु सर्वत्रैव तेनैव भिन्नाविति प्रतीतिः, तत्कथं भवतो न सम्भावनेत्याह—इदमपि न बालकृतं न शिशुकर्म । ननु देवताविधिरयं विजृम्भते विलसति । केनाप्यदृष्टेन देवेन तत्कृतं न त्वनेन । यस्य हि गमनमात्रे न शक्तिः स कथममानुषं कर्म कुर्यादिति भावः । ननु अमर्षे । न केवलं शकटभङ्गो, देवताविधिर्यावदयमपीत्यपिशब्दार्थः। इति निन्दा ॥

स्तुतिस्तु—यदेष कृतधराणेरिङ्गणः कथमिवाऽशक्तिवत्र क्षणादर्जुनौ बभञ्ज इदमपि न बालकृतम् । नन्वयं देवताविधिरुज्जृम्भते । एतस्य देवरूपत्वं, देवत्वमाश्रित्यैतदेतेन कृतम् । न तु तत्त्वतो बालेनेत्यर्थः । ननुराभिमुख्ये । अभनगिति भञ्जेर्लङि रूपम् ॥ २४ ॥

**विहरन् वने विजन एव महति दधदेष गोपताम् ॥**
**नाम जगति मधुसूदन इत्यगमद्धतेन मधुना महीयसा ॥ २५ ॥**

विहरन्निति ॥ हे नृपाः ! एष कृष्णः जगति विश्वस्मिन् मधुसूदन इति नाम अगमत् प्राप । केन हतेन चूर्णितेन मधुना मक्षिकापटलेन महीयसा गुरुतरेण, किंलक्षणः एषः विजने विगतलोके एव वने अरण्ये विहरन् , किंलक्षणे वने महति विशाले, किं कुर्वन् गोपतां दधत् गोपालो भवन् । इति निन्दा ॥

अथ स्तुतिः—एष कृष्णः जगति विश्वे मधुसूदन इति नाम अगमत् , एतत्किमसत्यम् । केन मधुना दैत्येन, किंलक्षणः वने जले विहरन् क्रीडन् , किं कुर्वन् गोपतां दधत् गौः पृथिवी तां पाति रक्षतीति गोपः तद्भावो गोपता ताम् ॥ २५ ॥

विहरन्निति ॥ एष महति विशाले विजने वनेऽरण्ये गोपरूपो विहरन् बृहता मधुना माक्षिकपटलेन हतेन जगति मधुसूदन इति नाम प्राप्तवान् । वने मधु सूदितवान् , न तु मधुनामानं दैत्यम् । इति निन्दा ॥

स्तुतिस्तु—एष कृष्ण एव महीयसा बलवत्तरेण मधुना दैत्येन हतेन मधुसूदन इति नाम जगति अगमत्प्राप । कीदृगेषः वने तोये महति सर्वलोकव्यापिनि विगतजने विहरन् । तथा गां पृथ्वीं पातीति गोपस्तद्भावं बिभ्रत् ॥ २५ ॥

**अविमृश्यगोवधसमुत्थमयमघममीमरद्रुषा ॥**
**रिष्टमुपगु समुपोढमदं यदसौ किलाऽसुर इति प्रमार्ष्टि तत् ॥ २६ ॥**

अविमृश्येति ॥ हे नृपाः ! अयं कृष्णः यत् रुषा कोपेन गोवधसमुत्थं बलीवर्दहत्यासमुद्भवम् अघं पापम् अविमृश्य अविचार्य रिष्टं वृषमनड्वाहम् अमीमरत अवधीत् , तदकार्यम् । असौ पापी । किंलक्षणम् रिष्टम् उपगु गवां समीपे समुपोढमदं धृतहर्षं सुरभीः कामयमानम् । अतश्च सुरतासक्तदान्तवधपातकित्वात् न पूजार्होऽयम् । किलेत्यलीके, असौ कृष्णः तदघम् इति प्रमार्ष्टि, यदसौ असुर इति अमुना प्रकारेण नाशयति यत् मयाऽयं दान्तरूपी असुरो हतो, न गौरेष इति लोकस्य परिशुध्यति । तत्त्वतोऽसौ गौरेव हतो न असुरः । एतेनाऽयं गोघातीत्यर्थः । इति निन्दा ॥

अथ स्तुतिः—किलेतिशब्दस्य सत्यार्थत्वात् असौ असुरो हतो, न गौरिति भावः ।

किलेति सत्ये, यदसौ उपगु गोनिकटे रिष्टम् अमीमरत्, तदसौ असुर इति प्रमार्ष्टि । असौ असुर एवाऽनेन हतः, तत्सत्यं न गौरेषः । किंलक्षणं रिष्टम् अविमृश्यगोवधसमुत्थम् अविमृश्यः चिन्तयितुमशक्यो यो गोवधः गवां धेनूनां वधो हननं तत्र समुत्था उत्थानम् उद्यमो यस्य सः तथा तम्, अपरं किंलक्षणं रिष्टम् अघं पापिनम्, अपरं किंलक्षणं रिष्टं समुपोढमदं धृतदर्पम् । अत एव गोवधाय समुत्थितस्य उद्यतस्य दर्पिष्ठस्य पापमतेर्दानवस्य वधेन भगवतो महती नुतिरेव ॥ २६ ॥

अविमृष्येति ॥ अयं गोवधसमुत्थं तन्मारणोद्भवं पापमविमृष्याऽगणयित्वा यत् रुषा कोपेन रिष्टमनड्वाहममीमरदवधीत् तदकार्यम् । असौ पापी असुरः इति किल प्रमार्ष्टि नाशयति । दान्तरूपी असुरो मया हतो न तु गौरीति लोकस्य परिशुध्यति । किलाऽलीके । तत्त्वतस्त्वसौ गौरेव, अयं च गोघातीत्यर्थः । कीदृशं रिष्टम् उपगु गवां समीपे समुपोढपदं धृतहर्षम् । सुरभीः कामयमानामित्यर्थः । अतश्च सुरतासक्तदान्तवधपातकित्वान्नायं पूजार्हः । इति निन्दा ॥

स्तुतिस्तु—किलशब्दस्य सत्यार्थत्वात् यदसावुपगु गोनिकटे रिष्टमतृणेट्, तदसौ किलासुर इति प्रमार्ष्टि । असुर एवानेन हत इत्यर्थः । कीदृशं तम् अविमृष्यश्चिन्तयितुमशक्यो यो गोवधस्तत्र समुत्था उत्थानमुद्यमो यस्य तमविमृष्यगोवधसमुत्थं, यतोऽघं पापिनम्, अघमस्यास्तीति कृत्वा । तथा समुपोढमदं धृतदर्पम् । अतश्च गोवधसमुत्थस्य दार्पिष्ठस्य पापमतेर्दानवस्य वधाद्भगवतो महती नुतिरेव । अविमृष्येति ल्यप् । 'ऋदुपधात्–' इति क्यप् । अमीमरदिति मारयतेर्लुङ् चङ् । प्रमार्ष्टीति मृजेर्वृद्धिः ॥ २६ ॥

मुखकन्दराऽन्तरगतोऽपि विकटदशनेन केशिना ॥
नाऽस्य सपदि यदखादि भुजस्तदहो ! तिरश्चि सहजैव मूढता ॥ २७ ॥

मुखेति ॥ हे नृपाः ! अस्य कृष्णस्य भुजो बाहुः यत् सपदि वेगेन केशिनाऽश्वेन न अखादि न भक्षितः, तत् अहो इत्याश्चर्यं, तिरश्चि पशौ विषये सहजैव मूढता स्वाभाविक्येव मूर्खता । मूर्खत्वेनैव न भक्षिता, न काचिदस्य शक्तिरिति वाक्यार्थः । कदाचिदसौ अप्राप्तो भवेन्नेत्याह—किंलक्षणो भुजः मुखकन्दराऽन्तरगतोऽपि आस्यदरीमध्यप्राप्तोऽपि । कदाचित्तर्हि तस्य दन्ताभावः स्यान्नेत्याह—किंलक्षणेन केशिना विकटदशनेन उतन्नदन्तेनापि दन्तुरेणापि । इति निन्दा ॥

अथ स्तुतिः—इति परमतमाशङ्क्य काकुप्रयोगेण, यत् अस्य भुजः केशिना दैत्येन न अखादि तत्किं तिरश्चि विषये सहजैव मूढता । अपि तु तस्यैव प्रभावः । अहोशब्दः परस्योल्लुण्ठनायाम् ॥ २७ ॥

मुखेति ॥ अस्य केशिनाम्ना अश्वेन यद् भुजो नाखादि न जग्धः, तदहो तिरश्चि तिर्यक्षु सहजैव स्वाभाविक्येव मूढता अज्ञत्वं, तिर्यक्त्वात् । मूर्खेण तेन न भक्षितो, न त्वस्य कापि शक्तिरिति वाक्यार्थः । कदाचिदप्राप्तोऽसौ भवेन्नेत्याह—आस्यदरीविवरप्राप्तः । कदाचिद्दन्ताभावः स्यादित्याह—विकटदशनेन दन्तुरेणापि । सपदि अस्य प्राप्त्यनन्तरम् । अहो विषादे । इति निन्दा ॥

स्तुतिरत्र—परमतमाशङ्क्य काकुप्रयोगेण । यदस्य केशिना दैत्येन भुजो नाऽखादि तत्किं तिरश्चि सहजैव मूढता । न त्वस्य माहात्म्यमित्यर्थः । एतस्यैव ह्येवमसौ शक्तिः । न स तात्त्विकोऽर्थः । अहोशब्दः परस्योल्लुण्ठनाय । तिरश्चीति सप्तमी ॥ २७ ॥

यदुदस्य बाहुमयमेकमधृत गिरिमद्भुतं न तत् ॥
भूरि सलिलमविषह्यमियं जलदे विमुञ्चति गवां सभाग्यता ॥ २८ ॥

यदिति ॥ हे नृपाः ! अयं कृष्णः एकं बाहुमुदस्य एकं भुजमुत्क्षिप्य गिरिं गोवर्धना-

ख्यम् अधृत धारयामास, तन्न अद्भुतं नाश्चर्यम् । यत् इयं गवां सभाग्यता धेनूनां सुभाग्यत्वं, न तु अस्य काचिच्छक्तिः । क सति जलदे मेघे अविषह्यं सोढुमशक्यं सलिलं विमुञ्चति उदकं त्यजति सति, किंलक्षणं सलिलं भूरि प्रचुरम् । इति निन्दा ॥

अथ स्तुतिः—परमतमाशङ्क्य काकुप्रयोगेण, न अद्भुतं नाश्चर्यम् । इयं किं गवां सभाग्यता । अयमेव स्वमहिम्ना बभारेत्यर्थः ॥ २८ ॥

यादिति ॥ मेघे दुःसहं प्रभूतं वारि वर्षति यदयं हरिरेकं भुजमुत्क्षिप्य गिरिं गोवर्धनमधृत दध्रे तन्नाऽद्भुतं नाश्चर्यम् । इयं गवां सभाग्यता पुण्यवत्त्वम् । गवां महिम्नाऽसौ धृतो. न त्वेनस्य काचिच्छक्तिरित्यर्थः । इति निन्दा ॥

स्तुतिस्तु—परमतमाशङ्क्य काकुप्रयोगेण । न तदद्भुतम्, अपि त्वाश्चर्यमेव । तथेयं गवां सभाग्यता किम्, न त्वस्य सा । अयमेव स्वमहिम्ना बभारेत्यर्थः ॥ २८ ॥

**किमिवात्र चित्रमयमन्नमचलमहकल्पितं यदि ॥**
**प्राश निखिलमखिलेऽपि जगत्युदरं गते बहुभुजोऽस्य न व्यथा ॥ २९ ॥**

किमिवाऽत्रेति ॥ हे नृपाः ! अयं कृष्णः अचलमहकल्पितं पर्वतोत्सवनिष्पादितम् अन्नं भोज्यं यदि चेत् प्राश प्रकर्षेण बुभुजे, अत्रार्थे किमिव चित्रं किमाश्चर्यम् । यतोऽस्य बहुभुजः बह्वाहारस्य औदरिकस्य अखिलेऽपि जगति निखिलेऽपि विश्वे उदरं गते जठरं प्रविष्टे सति न व्यथा न पीडा न अजीर्णम् । अतश्च यः कुक्षिम्भरित्वात् सर्वमेव जिघत्सति, तस्यौदनमात्रभोजनाद्विस्मयः कः । इति आत्मम्भरित्वकथनेन निन्दा ॥

अथ स्तुतिः-अस्य अन्नाऽदनात् को विस्मयः, यतोऽस्य जगन्निवासस्य सर्वेषु जगत्सु उदरं गतेषु न व्यथा । किंलक्षणस्याऽस्य बहुभुजः बहु भुनक्तीति बहुभुक् तस्य निखिलभुवनपरिपालकस्य । यदि वा बहुभुजस्येति पाठः, तत्र बहवो भुजा हस्ता यस्य सः बहुभुजस्तस्य ॥ २९ ॥

किमिवाऽत्रेति ॥ अयं हरिरचलमहकल्पितं पर्वतोत्सवकृतमन्नं यदि प्राश भुक्तवांस्तत्किमिवात्र चित्रमाश्चर्यम् । यतोऽस्य बहुभुज औदरिकस्य सकलेऽपि जगत्युदरं प्राप्ते न व्यथा पीडा अजीर्णत्वात् । अतश्च यः कुक्षिम्भरत्वात्सर्वमेव जिघत्सति तस्यौदनमात्रभोजनात्को विस्मयः । इत्यात्मम्भरित्वकथनेन निन्दा ॥

स्तुतिस्तु—अस्याऽन्नादनात्को विस्मयः । यतोऽस्य जगन्निवासस्य सर्वेषु जगत्सूदरस्थितेषु न व्यथा । बहु भुनक्तीति बहुभुक् निखिलभुवनपालकः, यदि वा बहवो भुजा यस्य स बहुभुजोऽयम् । पूर्वत्र तु बहु भुङ्क्ते इति बहुभुक् । प्राशेत्यश्नाऽतेर्लिट् ॥ २९ ॥

**अमुना करेण पृथुदन्तमुसलमुदखानि(१) दन्तिनः ॥**
**तेन यदवधि स एव पुनर्बलशालिनां क इव तत्र विस्मयः ॥ ३० ॥**

अमुनेति ॥ हे नृपाः ! अमुना कृष्णेन दन्तिनः कुवलयापीडनाम्नो गजस्य यत् पृथुदन्तमुसलं विशालदन्तमुसलं करेण पाणिना उदखानि उत्खातं, तेन उत्खातेन दन्तमुसलेन यत् स एव दन्ती अवधि हतः । तत्रार्थे बलशालिनां बलवतां क इव विस्मयः । न युक्तस्तत्र विस्मय इत्यर्थः । मर्महननात् शिशुरपि मारयतीति भावः । इति निन्दा ॥

अथ स्तुतिः—काक्वा गम्यते, को विस्मयः अपि तु विस्मय एव । मत्तहस्तिनो हन्तुमशक्यत्वादिति भावः । यदुक्तम्-एकः क्रुद्धो गजो हन्ति षट्सहस्राणि वाजिनाम् ॥ ३० ॥

अमुनेति ॥ अमुना हरिणा दन्तिनः कुवलयापीडस्य यत्पृथुदन्तमुसलं करेणोदपाटि उत्खातम्, तेनो-

(१) ०मुदपाटि ।

त्वातेन योऽसौ हस्ती अवधि हतः तत्र बलशालिना क इव विस्मयः । न युक्तस्तत्र विस्मयः । मर्महननाद्धि शिशुरपि मारयति । इति निन्दा ॥

स्तुतिस्तु—काक्वा गम्यते, को विस्मयः विस्मय एवेत्यर्थः । मत्तहस्तिनो हन्तुमशक्यत्वादिति भावः । यदुक्तम्–एकः क्रुद्धो गजो हन्ति षट्सहस्राणि वाजिनाम् । अवधीति कर्मणि लकारः, च्लेश्चिण् अकारलोपः ॥ ३० ॥

**शिशुरेष शिक्षितनियुद्धकरणमकृतक्रियः स्वयम् ॥**

**मल्लमलघुकठिनांसतटं न्यवधीद् यदेष तददृष्टकारितम् ॥ ३१ ॥**

शिशुरिति ॥ हे नृपाः! अयं कृष्णः शिशुरेव बालः सन् यन्मल्लं चाणूराख्यम् अवधीत् जघान, तददृष्टकारितं दैवविहितम् । विधिवशात् हि बलवान् अशक्तेनापि अभिभूयते । तदेव बलवत्त्वमाह—किंलक्षणं मल्लं शिक्षितनियुद्धकरणं शिक्षितानि अभ्यस्तानि नियुद्धकरणानि बाहुयुद्धक्रियाः येन सः तथा तम् ,अपरं किंलक्षणं मल्लम् अलघुकठिनांसतटम् अलघु पीनं बृहत् तथा कठिनं कठोरम् अंसतटं स्कन्धस्थलं यस्य सः तथा तं, किंलक्षणः एषः स्वयम् अकृतक्रियः आत्मना अशिक्षितनियुद्धकरणः, यतः शिशुः अर्भकः । इतिनिन्दा ॥

अथ स्तुतिः—पूर्ववत् काक्वा, तत्किमदृष्टकारितं नैवैतद्दैवविजृम्भितम्, अपि तु एतस्यैवायं महिमा इत्यर्थः ॥ ३१ ॥

शिशुरिति ॥ एष हरिः शिशुरेव बालः सन् यन्मल्लं चाणूराख्यं न्यवधीज्जघान, तददृष्टकारितं दैवविहितम् । विधिवशाद्धि अबलोऽपि बलीयांसमभिभवति । तदेव बलवत्त्वमाह–कीदृशं मल्लम् शिक्षितानि नियुद्धकरणानि बाहुयुद्धक्रियाः येन तं शिक्षितनियुद्धकरणं युद्धज्ञं, तथा अलघु पीनं कठिनमंसतटं यस्य तम् । एष तु स्वयमकृताक्रियोऽशिक्षितकरणः, यतः शिशुः । इति निन्दा ॥

स्तुतिस्तु—पूर्ववत्काक्वा । तत्किमदृष्टकारितं नैतद्दैवविजृम्भितम्, अपि त्वस्यैवायं महिमेत्यर्थः॥ ३१ ॥

**यदयुध्यमानमपि सन्तमुपहितसुरौघसाध्वसम् ॥**

**कंसमभय(१)मयमभ्यभवत्समुदा जनेन तदपि प्रशस्यते ॥ ३२ ॥**

यदिति ॥ हे नृपाः ! यदयं हरिः अयुध्यमानमपि निष्क्रियमपि उपविष्टं सन्तं कंसम् औग्रसेनिं राजानम् अभ्यभवत् अभिभवति स्म, जघानेत्यर्थः । तदपि समुदा जनेन ससन्तोषेण लोकेन प्रशस्यते स्तूयते एव। अहो मूर्खो जन इति भावः । किंलक्षणं कंसम् उपहितसुरौघसाध्वसं जनितदेवपूगाऽऽतङ्कम्, अत एव अपरं किंलक्षणं कंसम् अभयं निर्भयं त्रासरहितं, धीरमित्यर्थः । नैवाऽभिनन्द्यत इति काकुप्रयोगः । निष्क्रियस्य वधे का नाम नुतिः । इति निन्दा ॥

अथ स्तुतिः—अयुध्यमानमपि सन्तं कंसं यत् अयमभ्यभवत् तदपि समुदा जनेन प्रशस्यते, यत् उपहितसुरौघसाध्वसं निर्भयं च । जगत्कण्टकोद्धरणेनाऽवश्यमेव प्रहृष्टो जनः प्रशंसां करोति ॥ ३२ ॥

यदिति ॥ यदयमयुध्यमानं कंसं स्वजनमध्यमभ्यभवदाचकर्ष, तदपि समुदा जनेन प्रशस्यते नैवाभिनन्द्यत इति काकुप्रयोगः । निष्क्रियस्य हि वधे का नाम स्तुतिः । कीदृशं तं जनितदेवपूगकम्पम्, अभियं त्रासरहितं, धीरमित्यर्थः । इति निन्दा॥

स्तुतिस्तु—अयुध्यमानमपि सन्तं कंसमभियं त्रासरहितं धीरं यदभ्यभवत्तदपि सन्तोषवता जनेन प्रशस्यते स्तूयत एव । यत उपहितसुरौघसाध्वसं सदर्पं च । कण्टकोद्धरणेन चावश्यं प्रहृष्टो जनः प्रशंसां करोति ॥ ३२ ॥

---

(१) ०मभिय०।

**इति निन्दितुं कृतधियाऽपि वचनममुना यदाददे ॥**
**स्तोतुमनिशमुचितस्य परैः स्तुतिरेव सा मधुनिघातिनोऽभवत् ॥३३॥**

**इतीति** ॥ अमुना चैद्येन इति पूर्वोक्तप्रकारेण निन्दितुं कृतधियाऽपि विहितबुद्धिनाऽपि यद्वचनं वचः आददे ऊचे, सा वाणी मधुनिघातिनः श्रीकृष्णस्य स्तुतिरेवाऽभवत् स्तोत्रमेव बभूव। किंलक्षणस्य मधुनिघातिनः परैः जनैः अनिशमहोरात्रं स्तोतुमुचितस्य नवितुं योग्यस्य ॥ ३३ ॥

इतीति ॥ इत्युक्तप्रकारेण अमुना चैद्येन यद्वच आददेऽभ्यधायि । [सा] मधुरिपोर्नुतिरेवाऽभवत् । कदाचिन्नुष्टूषुरसौ स्यादित्याह—निन्दितुं कृतधियाऽपीति । किंविधस्य हरेः परैः शत्रुभिरपि स्तोतुमजस्रं योग्यस्य । अत एतत्स्तुतिरभवत् । एतेन पूर्वेषां वाक्यानामुभयार्थताऽऽख्याता यथा, तथा व्याख्यातमेव । आददे इत्यस्य विहरणस्याशब्दार्थत्वात्प्रतिषेधाभावः प्रतीयते । अत्र तत्र तु शब्दोपात्तं, यथा आस्यं व्याददातीति । मधुं निहन्तीत्यावश्यके णिनिः । 'कर्मणि हनः' इत्यर्थेकुत्सायाम् ॥ ३३ ॥

**यदुवाच दुष्टमतिरेष परिविवदिषुर्मुरद्विषम् ॥**
**द्व्यर्थमपि सदसि चेदिपतेस्तदतोऽपराधगणनामगाद्वचः ॥ ३४ ॥**

**यदुवाचेति** ॥ एष चैद्यः दुष्टमतिः दुर्बुद्धिः सन् यद् वचः उवाच दुष्टबुद्ध्या वाक्यं जगाद, किं कर्तुमिच्छुः मुरद्विषं मुरारिं परिविवदिषुः निनिन्दिषुः । अतः कारणात् तद्वचः द्व्यर्थमपि अर्थद्वयवदपि सदसि सभायां चेदिपतेः चैद्यस्य अपराधगणनामगात् अपराधसङ्ख्यां जगाम ॥ ३४ ॥

यदुवाचेति ॥ एष सभायां यद्वचोऽवोचत् तदुभयार्थं निन्दास्तुतिवाचकमपि अतो हेतोरपराधगणनामगात् अपराधगणनामध्ये गणितम् । यतो दुष्टत्वान्मुरारिं परिविवादिषुर्निनिन्दिषुः । तेन हि तद्वच आक्रोशता उक्तम् । या तु तस्य स्तोत्ररूपता सा काकतालीयेति भगवतो वा माहात्म्यम् । नैतावताऽसौ प्रियंवद इति अपराधगणनामगात् । यस्मादेष दुष्टमतिः सन् देवं परिविवादिषुराह इत्येवं वा योज्यम् ॥ ३४ ॥

**(१)कटुनाऽपि चैद्यवचनेन विकृतिमगमन्न माधवः ॥**
**सत्यनियतवचसं वचसः (२)सुजनं जनाश्चलयितुं क ईशते ॥ ४० ॥**

**कटुनाऽपीति** ॥ माधवः श्रीवासुदेवः कटुनापि श्रवणाऽप्रियेणापि चैद्यवचनेन शिशुपालवचसा विकृतिं न अगमत् विकारं न ययौ । अत्रार्थान्तरं न्यसस्यति—के जनाः के पुमांसः सुजनमार्यं वचसः वाक्यात् चलयितुम् ईशते समर्था भवन्ति, अपितु न केऽपि ॥४०॥

कटुनाऽपीति ॥ माधवः कटुनापि चैद्यवचनेन विकृतिं नागमत् । गमेर्लुङि 'पुषादि—' इति च्लेरङादेशः । तथा हि—सत्ये नियतवचसमस्खलितवचसं सत्यसन्धं सुजनं के जनाः वचसा तां वेगापीति भावः । चलयितुमीशते शक्नुवन्ति । न केऽपीत्यर्थः । 'सहिष्ये शतमागांसी'ति प्रतिज्ञाभङ्गभयादसहतेति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४० ॥

**न च तं तदेति शपमानमपि यदुनृपाः प्रचुक्रुधुः ॥**
**शौरिसमयनिगृहीतधियः प्रभुचित्तमेव हि जनोऽनुवर्तते ॥ ४१ ॥**

**न चेति** ॥ तस्मिन् क्षणे यदुनृपाः यादवभूपालाः तं शिशुपालं प्रति न च प्रचुक्रुधुः क्रोधं न प्रापुः तं चैद्यं प्रति क्रोधं न चक्रुः, किंलक्षणं तम् इति पूर्वप्रकारेण शपमानमपि निन्दन्तमपि । हि युक्तोऽयमर्थः, हि यस्मात्कारणाज्जनो भृत्यवर्गः प्रभुचित्तमेव परिवृढान्तःकरणमेव अनुवर्तते स्वामिचित्तमनुसरति । किंलक्षणाः नृपाः शौरिसमय-

---

(१) इत आरभ्य मल्लिनाथी व्याख्याऽनुस्यूता दृश्यते । (२) वचसा ।

निगृहीतधियः शौरेः श्रीकृष्णस्य समयेन संविदा मर्यादया निगृहीता वशीकृता धीर्मतिः येषां ते तथा श्रीकृष्णकृतमर्यादावशीकृतबुद्धयः ॥ ७६ ॥

न चेति ॥ किञ्चेति चार्थः । तदा तत्काले इतीत्थं शपमानमाक्रोशन्तमपि । शपतेराक्रोश इति भट्टमल्लः । तं चैद्यं यदुनृपा यादवाः शौरेः कृष्णस्य समयेन सङ्केतेन निगृहीतधियो निरुद्धबुद्धयः सन्तो न प्रचुक्रुधुः । 'क्रुधद्रुहोरुपसृष्टयोः कर्म' इति कर्मत्वम् । तथा हि—जनो लोकः प्रभुचित्तमेवानुवर्तते । शौरिसङ्केतनिरुद्धबुद्धेर्यदुविशेषणगत्या क्रोधाभावहेतुत्वात्काव्यलिङ्गमर्थान्तरन्यासेन सङ्कीर्यते ॥ ४१ ॥

**विहितागसो मुहुरलङ्घ्यनिजवचनदामसंयतः ॥**
**तस्य कतिथ इति तत्प्रथमं मनसा समाख्यदपराधमच्युतः ॥ ४२ ॥**

**विहितेति** ॥ अच्युतः श्रीकृष्णः तत्प्रथमं तदादि तस्य अपराधं मन्तुं मनसा समाख्यत् चित्तेन इति चिन्तयामास । इतीति किं—यत्, तस्य शिशुपालस्य अयं कतिथः कतमोऽपराधः । किंलक्षणस्य तस्य मुहुरत्यर्थं विहितागसः कृतापराधस्य, किंलक्षणोऽयमच्युतः अलङ्घ्यनिजवचनदामसंयतः अलङ्घ्येन अनतिक्रमणीयेन निजवचनदाम्ना स्ववाक्यरज्ज्वा संयतो बद्धः ॥ ४१ ॥

विहितेति ॥ अलङ्घ्येन निजवचनदाम्ना स्वप्रतिज्ञापाशेन संयतो बद्धोऽच्युतः मुहुर्विहितागसः पूर्वं सहस्रशः कृतापराधस्यापि तस्य चैद्यस्यापराधं स एव प्रथमो यस्मिन्कर्मणि तत्प्रथमं यथा तथा कतिथः । कतीनां पूरण इति 'तस्य पूरणे डट्' इति डट्प्रत्ययः । 'षट्कतिकतिपयचतुरां थुक्' इति थुगागमः । मनसा समाख्यद्गणनां चकार । 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः । अत्र प्रतिज्ञापाशबन्धनस्य विशेषणगत्या प्राचीनापराधाऽऽनन्त्येपि तात्कालिकापराधगणनाहेतुत्वात्काव्यलिङ्गभेदः ॥ ४२ ॥

**स्मृतिवर्त्म तस्य न समस्तमपकृतमियाय विद्विषः ॥**
**स्मर्तुमधिगतगुणस्मरणाः पटवो न दोषमखिलं खलूत्तमाः ॥ ४३ ॥**

**स्मृतीति** ॥ तस्य श्रीवासुदेवस्य द्विषः शत्रोः शिशुपालस्य समस्तमपकृतं सकलं निन्दावाक्यं स्मृतिवर्त्म न इयाय स्मरणमार्गं न ययौ । खलु यस्मात्कारणात् उत्तमाः श्रेष्ठाः पुमांसः अखिलं समस्तं दोषमपकारं स्मर्तुं स्मरणविषयं कर्तुं पटवो न योग्या न भवन्ति । किंलक्षणाः उत्तमाः अधिगतगुणस्मरणाः अधिगतं प्राप्तं गुणस्मरणं यैस्ते तथा । महान्तो हि दोषान् परिच्छाद्य गुणान् स्मरन्तीत्यर्थः ॥ ४२ ॥

स्मृतीति ॥ विद्विषश्चैद्यस्य सम्बन्धि समस्तमपकृतमपकारजातम् । नपुंसके भावे क्तः । तस्य हरेः कृष्णस्य स्मृतिपथं नेयाय न प्राप । न तमपकारं सस्मारेत्यर्थः । अर्थान्तरं न्यस्यति—अधिगतगुणस्मरणाः परिचितोपकारस्मृतयः उत्तमाः सज्जनाः अखिलं दोषमपकारं स्मर्तुं न पटवः खलु । नालं भवन्तीत्यर्थः । 'पर्याप्तिवचनेष्वलमर्थेषु—' इति तुमुन्प्रत्ययः । उपकारमेव स्मरन्ति साधवो नापकारमित्यर्थः॥४३

**नृपतावधिक्षिपति शौरिमथ सुरसरित्सुतो वचः ॥**
**स्माऽऽह चलयति भुवं मरुति क्षुभितस्य नादमनुकुर्वदम्बुधेः ॥ ४४ ॥**

**नृपताविति** ॥ अथाऽनन्तरं सुरसरित्सुतो जाह्नवीतनयो गाङ्गेयः वचः प्राह स्म वचनमवोचत् । क्व सति नृपतौ शिशुपाले राजनि शौरिं वासुदेवम् अधिक्षिपति सति निन्दति सति, किं कुर्वत् वचः अम्बुधेः समुद्रस्य नादं शब्दम् अनुकुर्वत् अनुसरत्, किंलक्षणस्य अम्बुधेः क्षुभितस्य क्षोभं प्राप्तस्य, क्व सति मरुति वायौ भुवं पृथिवीं चलयति सति कम्पयमाने सति ॥ ४४ ॥

नृपताविति ॥ अथ नृपतौ चेदिपे शौरिं हरिमाधिक्षिपति सति सुरसरित्सुतो भीष्मः महति प्रलय-मारुते भुवं चलयति कम्पयति सति क्षुभितस्योद्वेलस्याम्बुधेर्नादमनुकुर्वत् तद्गम्भीरं वचः आह स्म उवाच। 'लट् स्मे' इति भूतार्थे लट्। 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इति णल्याहादेशः। यद्यपि 'न पादादौ खल्वादयः' इत्याह वामनस्तथापि कविप्रौढ्या स्मशब्दस्य पादादौ प्रयोगः। उपमालङ्कारः ॥ ४४ ॥

**अथ गौरवेण परिवादमपरिगणयंस्तमात्मनः ॥**
**प्राह मुररिपुतिरस्करणक्षुभितः स्म वाचमिति जाह्नवीसुतः ॥ ४५ ॥**

अथेति ॥ अथाऽनन्तरं जाह्नवीसुतो गाङ्गेयः इति वक्ष्यमाणां वाचं वाणीं प्राह स्म उवाच, किंलक्षणो जाह्नवीसुतः मुररिपुतिरस्करणक्षुभितः मुररिपोः मुरारेः श्रीकृष्णस्य तिर-स्करणेन निन्दाकरणेन क्षुभितः चलितः, क्रुद्ध इत्यर्थः । किं कुर्वन् गौरवेण गुरुत्वेन आत्मनस्तं परिवादं निन्दाम् अपरिगणयन् अविजानन् ॥ ४५ ॥

उक्तमेवार्थं वक्तुराशयाविष्कारार्थमाह—

अथेति॥ अथ शिशुपालप्रलापाऽनन्तरं मुररिपुतिरस्करणेन हरिनिन्दया क्षुभितः कलुषमनाः जाह्नवी-सुतो गाङ्गेयः गौरवेण धैर्येण तमात्मनः परिवादं 'काममयं वृथापलित' इत्यादि स्वनिन्दामपरिगणयन् इति वक्ष्यमाणप्रकारेण वाचं प्राह स्म प्रोक्तवान्। गतमेतत्, धीराः स्वनिन्दामेव सहन्ते न गुरुदेवादि-निन्दामिति भावः। अत्र क्षोभस्य विशेषणगत्या वचनहेतुत्वात्काव्यलिङ्गभेदः ॥ ४५ ॥

**विहितं मयाऽद्य सदसीदमपमृषितमच्युताऽर्चनम् ॥**
**यस्य नमयतु स चापमयं चरणः कृतः शिरसि सर्वभूभृताम् ॥ ४६ ॥**

विहितमिति ॥ हे नृपाः! यस्य राज्ञः सदसि सभायाम् अद्य अधुना मया विहितं कृतम् अच्युतार्चनं हरिपूजनम् अपमृषितं न रुचितं, स राजा चापं नमयतु धनुराकर्षतु। अयं चरणः वामः पादः सर्वभूभृतां निखिलनरपतीनां सिरसि मस्तके कृतः विहितः, आरोपित इत्यर्थः ॥ ४६ ॥

विहितमिति ॥ मया अद्य सदसि सभायां विहितं कृतमिदमच्युतार्चनं यस्याऽपमृषितमतितिक्षितम्, असोढमित्यर्थः। 'मृष तितिक्षायाम्' इति धातोः कर्मणि क्तः। उपसर्गवशाद्विपरीतार्थता। अत एव मृष-स्तितिक्षायामेव किन्त्वनिषेधादातितिक्षार्थत्वान्न गुणः। 'मतिबुद्धिपूजार्थेभ्यश्च' इति चकाराद्वर्तमानार्थता, 'क्तस्य च वर्तमाने' इति षष्ठी। सोऽपमृष्टा पुरुषश्चापं नमयतु आरोपयतु। सर्वभूभृतां, मिषतामिति भावः, शिरस्ययं चरणः कृतो न्यस्तः। अयमिति भूमौ पात्यमानस्य चरणस्य हस्तेन निर्देशः। अयं कोपामर्ष इत्यनुसन्धेयम् ॥ ४६ ॥

**इति भीष्मभाषितवचोऽर्थमधिगतवतामिव क्षणात् ॥**
**क्षोभमगमदतिमात्रमथो शिशुपालपक्षपृथिवीभृतां गणः ॥ ४७ ॥**

इतीति ॥ अथो अनन्तरं भीष्मोक्ताद्वचनादनन्तरं शिशुपालपक्षपृथिवीभृतां गणः चैद्य-वर्गभूपालानां समूहः अतिमात्रमतिशयेन क्षोभमगमत् चलनं जगाम। सर्वे राजानः सकोपाः समभवन्नित्यर्थः। कथं क्षणात् क्षणमात्रेणैव, किंलक्षणानां पृथिवीभृताम् इति पूर्वोक्त-प्रकारेण भीष्मभाषितवचोऽर्थं गाङ्गेयोक्तवाक्यप्रयोजनम् अधिगतवतामिव शिरसि दत्तं पदं पश्यतामिव ॥ ४७ ॥

इतीति ॥ इतीत्थं भीष्मेण भाषितस्योक्तस्य वचसोऽर्थमभिधेयं शिरसि पादन्यासरूपं क्षणादधिगत-वताम्, प्राप्तवतामिव सतामित्यर्थः। शिशुपालस्य पक्षा ये पृथिवीभृतो राजानस्तेषामसौ गणोऽतिमात्रं क्षोभं क्रोधं विकारमगमत्। एतेनैषामात्मविनाशावसायी रौद्रस्थायी क्रोधः प्रादुरभूदित्युक्तम्। उत्प्रेक्षा ॥

**शितितारकाऽनुमितताम्रनयनमरुणीकृतं क्रुधा ॥**
**बाणवदनमुददीपि भिये जगतः सकीलमिव सूर्यमण्डलम् ॥ ४८ ॥**

**शितीति ॥** बाणवदनं बाणासुरमुखम् उददीपि उद्दीप्तं जातं कोपाग्निना ज्वलितम् । किंलक्षणं बाणवदनं क्रुधा कोपेन अरुणीकृतं आरक्तीकृतम्, अपरं किंलक्षणं बाणवदनं शितितारकाऽनुमितताम्रनयनं शितितारकाभ्यां कृष्णकनीनिकाभ्याम् अनुमिते ज्ञाते नयने लोचने यस्य तत्तथा । किमर्थं मुखमुददीपि इत्याह—जगतो भिये विश्वस्य भयाय, किमिव सूर्यमण्डलमिव श्रीसूर्यबिम्बमिव । किंलक्षणं सूर्यमण्डलं सकीलं कीलाभ्यां पापग्रहाभ्यां शनिभौमाभ्यां सह वर्तमानम् । यथा पापग्रहाभ्यां शनिभौमाभ्यां सह वर्तमानं सूर्यमण्डलं जगतो भयाय भवति ॥ ४८ ॥

अथैषां दशभिर्गात्रारम्भान् क्रोधानुभावानाह—

**शितीति ॥** क्रुधा क्रोधेन अरुणीकृतमत एव शिती श्यामे ये तारके कनीनिके ताभ्यामनुमिते अनुमापिते ताम्रे नयने यस्य तत् । 'तारकाऽक्ष्णः कनीनिका' इत्यमरः । सर्वमुखस्य रक्तत्वादिति भावः । बाणो नृपस्तस्य वदनं सकीलं कीलाकारच्छायासहितम् । पारिधियुक्तमिति यावत् । सूर्यमण्डलमिव जगतो भिये भयाय उददीपि प्रजज्वाल । दीप्यतेः कर्तरि लुङि 'दीपजन–' इत्यादिना चिण्प्रत्यये तलुक् । अत्र नयनयोः स्वभावल्यत्यागेनाऽऽरुण्यस्वीकारात्तद्गुणः । तत्सापेक्षत्वादौत्पातिकसूर्यमण्डलोपमासंकरः ॥ ४८ ॥

**अनिशान्तवैरदहनेन विरहितवताऽन्तरार्द्रताम् ॥**
**कोपमरुदभिहतेन भृशं नरकात्मजेन तरुणेव जज्वले(१) ॥ ४९ ॥**

**अनिशान्तेति ॥** नरकात्मजेन भगदत्तेन जज्वले ज्वलितम् । किंलक्षणेन नरकात्मजेन अनिशान्तवैरदहनेन अप्रशान्तवैराऽनलेन, अपरं किंलक्षणेन अन्तः अन्तरे मानसे आर्द्रतां विरहितवता सदयत्वं त्यक्तवता, अपरं किंलक्षणेन कोपमरुदभिहतेन क्रोधपवनप्रेरितेन, केनेव तरुणेव, यथा तरुणा वृक्षेण वायुना प्रेरिताग्निना भृशं ज्वल्यते । किंलक्षणेन तरुणा अन्तर्मध्ये आर्द्रतां सरसतां त्यजता, शुष्केणेत्यर्थः ॥ ४९ ॥

**अनिशान्तेति ॥** अनिशान्तोऽनिर्वाणो वैरदहनो विरोधाग्निर्यस्य तेन अत एवाऽन्तरभ्यन्तरे आर्द्रतां सारस्यं विरहितवता त्यक्तवता । रहयतेः क्तवतुप्रत्ययः । कोपो मरुदिव तेनाऽभिहतः प्रज्वलितः तेन नरकात्मजेन वेणुदारिणा तरुणा वृक्षेणेव भृशं जज्वले ज्वलितम् । भावे लिट् । उपमालङ्कारः ॥ ४९ ॥

**अभिधित्सतः किमपि राहुवदनविकृतं व्यभाव्यत ॥**
**ग्रस्तशशधरमिवोपलसत्सितदन्तपङ्क्ति मुखमुत्तमौजसः ॥ ५० ॥**

**अभिधित्सत इति ॥** उत्तमौजसो राज्ञः मुखं वदनं राहुवदनविकृतं व्यभाव्यत सैंहिकेयमुखविकरालं लक्ष्यते स्म । किंलक्षणस्य उत्तमौजसः किमपि अनिर्वाच्यमभिधित्सतः, अभिधातुमिच्छति अभिधित्सति अभिधित्सतीति अभिधित्सन् तस्य वक्तुमिच्छतः, किंलक्षणं मुखम् उपलसत्सितदन्तपङ्क्ति देदीप्यमानश्वेतदशनश्रेणि । अपरं किंलक्षणं मुखम्, उत्प्रेक्ष्यते—ग्रस्तशशधरमिव गिलितचन्द्रमिव ॥ ५० ॥

**अभिधित्सत इति ॥** किमप्यभिधित्सतोऽभिधातुमिच्छतः । दधातेः सन्नन्ताल्लटः शत्रादेशः । उत्तमौजसो नाम राज्ञः सम्बन्धि राहुवदनविकृतं व्यात्तत्वाद्राहुवक्त्रवत्करालम्, उपलसन्ती लक्ष्यमाणा सिता दन्तपङ्क्तिर्यस्य तन्मुखं ग्रस्तशशधरमिव सन्दष्टचन्द्रमिव व्यभाव्यताऽतर्क्यत । इत्युत्प्रेक्षा ॥ ५० ॥

---

(१) सर्वङ्कषायां तु 'प्रविदारितारुण, अनिशान्तवैर, अभिधित्सतः' इति क्रमः ।

प्रविदारिताऽरुणतरोग्रनयनकुसुमोज्ज्वलः स्फुरन् ॥
प्रातरहिमकरताम्रतनुर्विषविद्रुमो(१)ऽपर इवाऽभवद् द्रुमः ॥ ५१ ॥

प्रविदारितेति ॥ द्रुमः द्रुमाख्यो राजा अपरो विषविद्रुम इवाऽभवत् विषवृक्ष इव बभूव । किंलक्षणो द्रुमः प्रविदारिताऽरुणतरोग्रनयनकुसुमोज्ज्वलः प्रविदारिते प्रसारिते अरुणतरे अत्यारक्ते उग्रे भीषणे नयने नेत्रे एव कुसुमे पुष्पे ताभ्याम् उज्ज्वलः प्रसिद्धः उपलक्षितः, अपरं किंलक्षणो द्रुमः प्रातः अहिमकरताम्रतनुः प्रगे दिनकरारक्तदेहः । विषद्रुमोऽपि स्फुरता रविणा आरक्तो भवति, स्वभावाद्वा रक्तः । अत एव अरुणकुसुमः, दृष्ट्या विषवृक्षोऽपि लोकं संमूर्छयेदिति वाक्यार्थः ॥ ५१ ॥

प्रविदारितेति ॥ प्रविदारिते अतिविकासिते अरुणतरे क्रोधादतिरक्ततरे अत एवोग्रे भयङ्करे ये नयने ते एव कुसुमे ताभ्यामुज्ज्वलो दीप्तः स्फुरन् स्वतेजसा दीप्यमानः प्रातरहिमकरताम्रतनुः प्रभातार्काऽरुणविग्रहः प्रसिद्धो द्रुमो द्रुमाख्यो नृपः अपरो विषजद्रुम इवाऽभवदित्युत्प्रेक्षा रूपकसङ्कीर्णा ॥ ५१ ॥

कुपिताकृतिं प्रथममेव हसितमशनैरसूचयत् ॥
क्रुद्धमशनिदलिताऽद्रितटध्वनि दन्तवक्त्रमरिचक्रभीषणम् ॥ ५२ ॥

कुपितेति ॥ हसितं कर्तृ दन्तवक्त्रं कारूषदेशेश्वरं राजानं प्रथममेव आदावेव कुपिताकृतिं क्रुद्धाकारम् अशनैर्वेगेन असूचयत् अकथयत् गाढतरेण कुपितं कथयामास । प्रसन्नेनापि रूपेण यः क्रुद्ध इत्यर्थः । तथापि दन्तैर्वक्त्रत्वाद्दन्तवक्त्र इति नाम । अतश्च द्रुतहासेन क्रुद्धोऽसौ इति सूचितः । किंलक्षणं दन्तवक्त्रं क्रुद्धं कुपितम्, अत एवाऽपरं किंलक्षणं दन्तवक्त्रम् अरिचक्रभीषणम् अरिचक्रं शत्रुदलं भीषयति त्रासयति इति तथा तं, किंलक्षणं हसितम् अशनिदलिताऽद्रितटध्वनि अशनिना वज्रेण दलितं चूर्णितं यत् अद्रितटं पर्वतभृगुः तस्येव ध्वनिः शब्दो यस्य तत्तथा ॥ ५२ ॥

कुपितेति ॥ प्रथमं प्रागेव, अकुपितावस्थायामपीत्यर्थः । कुपितस्येवाकृतिर्मुखरागो यस्येत्युपमा । अरिचक्रभीषणं परबलभयङ्करं दन्तवक्त्रं दन्तवक्त्रनामानं राजानम्, अशनिदलितस्य वज्राहतस्याऽद्रितटस्य ध्वनिरिव ध्वनिर्यस्य तदित्युपमा । न शनैरशनैः उच्चैर्हसितमट्टहासः क्रुद्धमसूचयत् । सर्वदा मुखरागस्य विशेषणादनुभावान्तरवेद्यः क्रुद्ध इत्यर्थः । अत्र कोपव्यञ्जकसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिरुपमासङ्कीर्णा ॥ ५२ ॥

प्रतिघः कुतोऽपि समुपेत्य नरपतिगणं समाश्रयत् ॥
जामिहरणजनितोऽनुशयः(२) समुदाचचार निज एव रुक्मिणः ॥ ५३ ॥

प्रतिघ इति ॥ प्रतिघः कोपः कुतोऽपि कस्मादपि कारणं विनैव समुपेत्य आगत्य नरपतिगणं समाश्रयत् भूपालवृन्दं समाश्रितवान् । निर्निमित्तमेव सर्वे राजानः तदा श्रीकृष्णे क्रुद्धा इत्यर्थः । अपरं रुक्मिणः भीष्मकात्मजस्य राज्ञः निज एव स्वाभाविक एव अनुशयः पश्चात्तापः वैरं वा समुदाचचार उत्पन्नः । तदेव जनितत्वमाह—किंलक्षणोऽनुशयः जामिहरणजनितः भगिनीहृतिविहितः । तस्य हि स्वसा रुक्मिणी पूर्वं चैद्याय दत्ताऽऽसीत्, ततो बलेन हरिणा हृता । अतः कारणात् स्वभावात् तस्य क्रोधो युक्तः । अन्ये तु नृपाः मौर्ख्यादेव क्रुद्धा इत्यर्थः ॥ ५३ ॥

प्रतिघ इति ॥ प्रतिघः कोपः । 'कोपक्रोधाऽमर्षरोषप्रतिघा' इत्यमरः । कुतोऽपि समुपेत्याऽऽगत्य नरपति-

(१) ०र्विषजद्रुमो० । (२) यामि…जनिताऽनुशय ।

गणं राजमण्डलं समाश्रयत्समाविशत् । रुक्मिणस्तु यामिः स्वसा । 'यामिः स्वसृकुलस्त्रियोः' इत्यमरः । तस्या रुक्मिण्या हरणेन जनितोऽनुशयो 'हा कष्टमापन्नं कदा निर्यातयामी'त्यनुतापो यस्मिन् सः । 'अथाऽनुशयो दीर्घद्वेषानुतापयोः' इत्यमरः । निजो नित्य एव प्रतिघः । 'निजमात्मीयनित्ययोः' इति विश्वः । समुदाचचार समुद्दिदीपे । भीष्मवाक्यमन्येषां कोपोत्पादकमासीत्, रुक्मिणस्तु प्रागेवाऽवरूढकोपस्योद्दीपकमासीदित्यर्थः । अत्रानुशयस्य विशेषणगत्या कोपोद्दीपनहेतुत्वात्काव्यलिङ्गभेदः ॥ ५३ ॥

**चरणेन हन्ति सुबलः स्म शिथिलितमहीध्रबन्धनाम् ॥**
**तीरतरलजलराशिजलामवभुग्नभोगिफणमण्डलां भुवम् ॥ ५४ ॥**

**चरणेनेति ॥ सुबलो गान्धारराजः चरणेन पादेन भुवं हन्ति स्म भूमिं जघान । किंलक्षणां भुवं शिथिलिताश्चालिताः महीधराः पर्वता एव बन्धनानि यस्याः सा तथा ताम्, अपरं किंलक्षणां भुवं तीरतरलजलराशिजलां तीरे पुलिने तरलं कम्प्रं जलराशेः सागरस्य जलं पानीयं यस्याः सा तथा ताम्, अपरं किंलक्षणां भुवम् अवभुग्नभोगिफणमण्डलाम् अवभुग्नं कुटिलं भोगिनः सर्पस्याऽनन्तस्य फणमण्डलं शिरश्चक्रवालं यस्याः सा तथा ताम् ॥ ५४ ॥**

चरणेनेति ॥ सुबलो नाम राजा, महीं धारयन्तीति महीध्राः पर्वताः । कप्रकरणे 'मूलविभुजादिभ्य उपसङ्ख्यानम्' इति कप्रत्ययः । शिथिलितानि विश्लेषितानि महीध्राणां बन्धनानि सन्धयो यस्यास्ताम् । तीरेण तरलानि भूकम्पाच्चलितानि जलराशेरम्बुधेर्जलानि यस्यास्ताम् । अवभुग्नं कुटिलम्, अतिभारादित्यर्थः । भोगिनां फणिनां फलमण्डलं फणसमूहो यस्यास्तां भुवं चरणेन हन्ति स्म जघान । 'लट् स्मे' इति भूतार्थे लट् । अत्र पादाघाताद् भुवः कम्पासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ५४ ॥

**रुषितेषु (१) राजसु तथापि रथचरणपाणिपूजया ॥**
**चित्तकलितकलहागमनो मुदमाहृतिः(२) सुहृदिवाऽधिकां दधौ ॥५५॥**

**रुषितेष्विति ॥ आहृतिः भीष्मः अधिकां मुदं दधौ अतिशयेन हर्षं बभार । केषु सत्सु तथापि तेन प्रकारेणापि राजसु नृपेषु रुषितेषु कुपितेषु सत्सु, कया रथचरणपाणिपूजया रथचरणं चक्रं पाणौ यस्य सः रथचरणपाणिः तस्य पूजा तया विष्णोरर्चया । किमिव मुदं दधौ सुहृदिव मित्रमिव । यथा मित्रं तुष्यति । किंलक्षणः भीष्मः चित्तकलितकलहागमनः चित्तेन मनसा कलितं लक्षितं कलहस्य युद्धस्य आगमनं प्राप्तिर्येन सः तथा । निश्चयीकृतरणसमय इत्यर्थः । शूरा हि युद्धे उपस्थिते हृष्यन्तीति ॥ ५५ ॥**

कुपितेष्विति ॥ रथचरणपाणेश्चक्रपाणेः पूजया राजसु तथा कुपितेष्वपि चित्ते कलितं निश्चितं कलहागमनं युद्धलाभो येन स आहुकिः आहुकिर्नाम राजा शोभनं हृदयं यस्य स सुहृन्मित्रमिव । कृष्णपक्षपातीवेत्यर्थः । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातः । अधिकां मुदं दधौ सन्तोषं धृतवान् । सुदुःसहोऽपि कृष्णोत्कर्षः कलहकण्डूलबाहोराहुकेर्मोदहेतुरासीदित्यर्थः । उपमालङ्कारः ॥ ५५ ॥

**गुरुकोपरुद्धपदमापदसितयवनस्य रौद्रताम् ॥**
**व्यात्तमशितुमिव सर्वजगद्विकरालमास्यकुहरं विवक्षतः ॥ ५६ ॥**

**गुरुकोपेति ॥ असितयवनस्य कालयवनस्य विवक्षतो वक्तुमिच्छतः आस्यकुहरं वक्त्रविवरं रौद्रताम् आपत् भीषणमभूत् । किंलक्षणमास्यकुहरं गुरुकोपरुद्धपदं गुरुणा महता कोपेन क्रोधेन रुद्धं निवृत्तं पदं वाक्यं यस्य तत्तथा अतिक्रोधनिर्वर्तितवाक्यम् । अति-**

(१) कुपितेषु । (२) ०माहुकिः ।

रोषवशाद्धि वाक् प्रतिहतप्रसरा भवति । अपरं किंलक्षणमास्यकुहरं विकरालं भास्वरम्, अपरं किंलक्षणं व्यात्तं विवृतं प्रसारितम् अभिधित्सया विस्तारितम् । किं कर्तुम्, उत्प्रेक्ष्यते—सर्वजगत् त्रिभुवनम् अशितुमिव ग्रसितुमिव ॥ ९६ ॥

गुरुकोपेति ॥ विवक्षतः किमपि वक्तुमिच्छतः । वचेः सन्नन्ताल्लटः शत्रादेशः । असितयवनस्य कालयवनस्य राज्ञः सम्बन्धि सर्वं जगदशितुमत्तुमिव व्यात्तं विवृतम्, अत एव विकरालमतिविकृतम् । 'करालो दन्तुरे तुङ्गे विशाले विकृतेऽपि च' इति वैजयन्ती । गुरुणा कोपेन रुद्धपदं प्रतिबद्धवचनमास्यकुहरं वक्त्रविवरं रौद्रतां भयङ्करतामापत् । अत्राऽशितुमिवेति फलोत्प्रेक्षा व्यादानक्रियानिमित्ता ॥५६॥

**विवृढोरुबाहुपरिघेण सरभसपदं निपित्सता(१) ॥**
**हन्तुमखिलनृपतीन् वसुना वसने विलम्बिनि निजे विचस्खले ॥५७॥**

विवृढेति ॥ वसुना वसुनाम्ना नृपेण निजे वसने आत्मीये एवांऽशुके विचस्खले स्खलितम् । किंलक्षणे वसने विलम्बिनि लम्बमाने, किंलक्षणेन वसुना विवृढोरुबाहुपरिघेण विवृढः उद्यतः बाहुरेव भुज एव परिघ आयुधविशेषो येन उत्क्षिप्तभुजपरिघातेन, अपरं किंलक्षणेन वसुना अखिलनृपतीन् हन्तुं सकलराजन्यकं हिंसितुं सरभसपदं यथा भवति तथा निपित्सिता सरभसानि सवेगानि पदानि चरणन्यासा यत्र क्रियायां तद्यथा त्वरितक्रमं गन्तुकामेन । बाहुमुद्यम्य राजन्यकं निहन्तुं तूर्णं धावतेत्यर्थः । अतश्च त्वरावशादसौ लम्बमाने वाससि चस्खले इति भावः । पाठान्तरे विवृतः ॥ ९२ ॥

विवृतेति ॥ अखिलनृपतीन् हन्तुं विवृतः प्रसारित उरुबाहुरेव परिघ आयुधविशेषो येन तेन । 'परिघः प्रतिघातेऽस्त्री' इति हैमः । सरभसं सत्वरं यत्पदं तन्निधित्सता निधातुमिच्छता । दधातेः सन्नन्ताल्लटः शत्रादेशः । वसुना तन्नाम्ना राज्ञा विलम्बिनि उत्पातवेगाद्विस्रंसिनि निजे वसने स्वाम्बरे विचस्खले स्खलितम् । तद्यस्य दुर्निमित्तमिति भावः । भावे लिट् । अत्र वस्त्रस्रंसनस्य विशेषणगत्या स्खलनहेतुत्वात्काव्यलिङ्गं, तद् बाहुपरिघेति रूपकेण संसृज्यते ॥ ५७ ॥

**इति तत्तदा विकृतरूपमभजदविभिन्नचेतसम् ॥**
**मारबलमिव भयङ्करतां हरिबोधिसत्त्वमभि(२) राजमण्डलम् ॥ ५८ ॥**

इतीति ॥ अथ तत् राजमण्डलं राजन्यकम् इति इत्थं प्रकारेण भयङ्करतामभजत् भयानकतां भेजे रौद्रत्वं शिश्राय । किंलक्षणं राजमण्डलं हरिबोधिसत्त्वमभि विकृतरूपं हरिः श्रीकृष्ण एव बोधिसत्त्वः भट्टारकः तम् अभि प्रति विकृतरूपं विकारावस्थामापन्नं, क्रुद्धमित्यर्थः । किंलक्षणं हरिबोधिसत्त्वम् अविभिन्नचेतसम् अविकृतम् अविक्षुभ्यन्तम् । किमिव रौद्ररूपतामभजदित्याह—मारबलमिव कामसैन्यमिव । यथा कामस्य बलं सैन्यं बोधिसत्त्वम् अभि प्रति विकृतरूपं नानाचेष्टं भयङ्करतां समाधिविरुद्धत्वं भेजे । बुद्धस्तु तथापि अभिन्नचेता एव । उक्तं च—

कामेनाऽऽकृष्य चापं हतपटुपटहावल्गिभिर्मारवीरैः
भ्रूभङ्गोत्कम्पजृम्भास्मितललितकृता दिव्यनारीजनेन ।
सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयाद्वासवेन
ध्यायन् बोधेरवाप्तां(?) धवलित इति वः पातु दृष्टो मुनीन्द्रः ॥-॥९३॥

---

( १ ) विवृतोरु ''' निधित्सता । ( २ ) सत्त्वमपि ।

इतीति ॥ इतीत्थं तदा तस्मिन्काले विकृतरूपं रोषभीषणाकारं तद्राजमण्डलं मारबलमिव मदनसैन्यमिव 'मदनो मन्मथो मारः' इत्यमरः । अविभिन्नचेतसमविकृतचित्तं, बोधिसत्त्वो बुद्धः । 'बुद्धस्तु श्रीघनः शास्ता बोधिसत्त्वो विनायकः' इति वैजयन्ती । स हरिरिवेत्युपमितसमासः । तं हरिबोधिसत्त्वमभि । तत्समक्षमित्यर्थः । 'अभिरभागे' इत्यभेः कर्मप्रवचनीयत्वात्तद्योगे द्वितीया । भयं करोतीति भयङ्करः । 'मेघर्तिभयेषु कृञः' इति खच्प्रत्यये मुमागमः । तस्य भावस्तत्तामभजत् । उपमालङ्कारः । तेन भगवतो बुद्धस्य समाधिभङ्गाय प्रवृत्तं मारबलं यथा तेन भग्नं, तथा राजमण्डलमपि हरिणा भज्यत इति वस्तु व्यज्यते ॥ ५८ ॥

**रभसादुदस्थुरथ युद्धमनुचितभियोऽभिलाषुकाः ॥**
**सान्द्रमुकुटकिरणोच्छलितस्फटिकांशवः सदसि मेदिनीभृतः ॥ ५९ ॥**

**रभसादिति** ॥ अथाऽनन्तरं मेदिनीभृतः चैद्यपक्षीया राजानः रभसात् उदस्थुः वेगेन उत्थिताः । किंलक्षणाः मेदिनीभृतः युद्धमभिलाषुकाः युयुत्सवः, अपरं किंलक्षणा राजानः अनुचितभियः, अनभ्यस्तत्रासाः अपरं किंलक्षणा राजानः सदसि सभायां सान्द्रमुकुटकिरणोच्छलितस्फटिकांशवः सान्द्रेषु घनेषु मुकुटकिरणेषु शेखरमयूखेषु उच्छलिता बहुलीकृताः प्रणामवशात् स्फटिकांशवः स्फटिककिरणा येषां ते तथा। सा सभा हि क्वचित् धवलाऽश्ममयी वर्तते ॥ ९४ ॥

रभसादिति ॥ अथाऽनन्तरमनुचितभियोऽनभ्यस्तसाध्वसाः । 'अभ्यस्तेऽप्युचितम्' इति यादवः । अत एव युद्धमाभिलाषुका युद्धार्थिनः । 'लषपत—' इत्यादिना उकञ्प्रत्यये 'न लोका—' इत्यादिना षष्ठीप्रतिषेधः । सदसि मेदिनीभृतः सदसि स्थिताश्चैद्यपक्षीया राजानः सान्द्रैर्मुकुटकिरणैरुच्छलिताः स्फाटिकांशवः सभाभित्तिस्फाटिकमणिमयूखा यैस्ते तथोक्ताः सन्तो रभसाद्वेगादुदस्थुरुत्थिताः । 'उदोऽनूर्ध्वकर्मणि' इत्यस्य प्रत्युदाहरणमेतत् । अत्र युद्धाभिलाषुकस्य विशेषणगत्योत्थानहेतुत्वात्काव्यलिङ्गभेदः ॥ ५९ ॥

**स्फुरमाणनेत्रकुसुमौष्ठ(१)दलमभूत भूभृदङ्घ्रिपैः ॥**
**धूतपृथुभुजलतं चलितैर्द्रुतवातवान(२)वनविभ्रमं सदः ॥ ६० ॥**

**स्फुरमाणेति** ॥ तत्सदः सा सभा द्रुतवातवानवनविभ्रमम् अभृत द्रुतं तूर्णं यत् वातस्य वायोः वानं वहनं यत्र तत् द्रुतवातवानम् एवंभूतं च तद्वनं काननं च तस्य विभ्रमो लीला सारूप्यं तत् अभृत उवाह । शीघ्रवातकम्पितकाननविभ्रमं बभारेत्यर्थः । कैः भूभृदङ्घ्रिपैः भूभृतो राजानः त एवाऽङ्घ्रिपाः वृक्षाः तैः राजवृक्षैः, किंलक्षणैः चलितैः उत्थितैः, किंलक्षणं सदः स्फुरमाणनेत्रकुसुमौष्ठदलं नेत्राण्येव कुसुमानि पुष्पाणि ओष्ठा एव अधरा एव दलानि किसलयानि तानि स्फुरमाणानि कम्प्राणि यत्र तत्तथा, अपरं किंलक्षणं सदः धूतपृथुभुजलतं धूताः कम्पिताः पृथवः भुजा एव लता वल्ल्यो यत्र तत्तथा । वनमपि वाते वाति सति कम्पमानपुष्पपत्रलतापादपं भवति ॥ ६० ॥

स्फुरमाणेति ॥ स्फुरमाणानि नेत्राण्येव कुसुमान्योष्ठा एव दलानि च यस्मिन्कर्मणि तद्यथा तथा धूताः कम्पिताः पृथवो भुजा एव लताः शाखा यस्मिन्कर्मणि तद्यथा तथा चलितैः, भूभृतो राजानस्त एव अङ्घ्रिपाः पादपास्तैः सदः सभामण्डपं द्रुतः शीघ्रो वातपातो वायुप्रचारो यस्य तस्य वनस्य विभ्रमं शोभाम् । 'विभ्रमः संशये भ्रान्तौ शोभायां च' इति वैजयन्ती । अभृत बभार । भृञो लुङि तङ्, 'उश्च' इति सिचः कित्त्वाद् गुणाभावः । 'ह्रस्वादङ्गात्' इति सलोपः । अत्र वनविभ्रमामिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शना नेत्रकुसुमेत्यादिरूपकोत्थापितेति सङ्करः ॥ ६० ॥

---

(१) कुसुमोष्ठ ।　(२) वातपात ।

**हरिमप्यमंसत तृणाय कुरुपतिमजीगणन् न वा ॥**
**मानतुलितभुवनत्रितयाः सरितः सुतादबिभयुर्न भूभृतः ॥ ६१ ॥**

**हरिमिति** ॥ ते भूभुजः चैद्यादयो राजानः हरिमपि श्रीकृष्णमपि तृणाय अमंसत तृणतुल्यं बुबुधिरे, वा अथ वा कुरुपतिमपि युधिष्ठिरमपि न अजीगणन् न गणयामासुः मनसि न चक्रुः । पाण्डवबलमपि तेषां न पुस्फोरेत्यर्थः । तथा सरितः सुतात् गङ्गायाः पुत्राद्भीष्मा-दपि न अबिभयुः न तत्रसुः । किंलक्षणा भूभुजः मानतुलितभुवनत्रितयाः मानेनाऽहङ्कारेण तुलितं परिच्छिन्नं स्वल्पसारं भुवनत्रितयं जगत्त्रितयं यैस्ते तथा ॥ ६१ ॥

हरिमिति ॥ मानतुलितभुवनत्रितया अहङ्कारावधीरितजगत्त्रयाः भूभृतश्चैद्यपक्षा राजानः हरिमपि तृणायाऽमंसत तृणसममन्यन्त, तथा लघुं मेनिर इत्यनादरोक्तिः । मन्यतेः कर्तरि लुङि च्लेः सिच् । अनुदात्तत्वादिट्प्रतिषेधः, 'मन्यकर्मणि—'इति चतुर्थी । कुरुपतिं च नाजीगणन् , न धर्मराजं गणयन्ति स्मेत्यर्थः । गणेर्णौ चङि 'ई च गणः' इत्यभ्यासस्येकारः । सरितः सुताद्भीष्मादपि नाऽबिभयुर्न भीताः । बिभेतेर्लुङि 'श्लौ' इति द्विर्भावे 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशः, 'जुसि च' इति गुणः । अत्र राजसु हर्येत्रमानाद्यनेकक्रियायौगपद्यात्समुच्चय इति सर्वस्वकारः ॥ ६१ ॥

**गुरु निःश्वसन्नथ विलोलसदवथुवपुर्वचोविषम् ॥**
**कीर्णदशनकिरणाग्निकणः फणवानिवेति(१) विससर्ज चेदिपः ॥ ६२ ॥**

**गुर्विति** ॥ अथाऽनन्तरं चेदिपः चैद्यः शिशुपालः इत्थम् अमुना प्रकारेण वचोविषं विससर्ज वचनमेव विषम् उदवमत् । किंलक्षणः चेदिपः कीर्णदशनकिरणाऽग्निकणः कीर्णा विक्षिप्ताः दशनकिरणाः दन्तमयूखा एव अग्निकणा वह्निविस्फुलिङ्गा येन सः तथा, क इव वचोविषमुदवमत् फणवानिव । यथा फणवान् सर्पः विषं सृजति । सर्पोऽपि विषमुद्वमन् एवंविध एव भवति ॥ ६२ ॥

गुर्विति ॥ अथैष चेदिपः फणवान् फणीव गुर्वधिकं निःश्वसन्फूत्कुर्वन् विलोलं सदवथु ससन्तापम् । 'सन्तापो दवथुः' इत्यनेकार्थादिति सज्जनः । तद्वपुर्यस्य स विलोलसदवथुवपुः । ट्वितोऽथुच् । कीर्णा विक्षिप्ता दशनकिरणा अग्निकणा इव यस्य सः तथा सन् वचो विषमिव तद्वचोविषं विससर्ज । विषप्रायं वच-उज्जगारेत्यर्थः । अतः फणवानि वेति व्यस्तोपमालिङ्गात्सर्वत्रोपमितसमासाश्रयणम् ॥ ६२ ॥

किमुवाचेत्याह—

**किमहो नृपाः ! सममभिरुपपतिसुतैर्न पञ्चभिः ॥**
**वध्यमभिहथ भुजिष्यममुं सह चाऽनया स्थविरराजकन्यया ॥ ६३ ॥**

**किमिति** ॥ अहो इति आक्षेपे, अहो नृपाः ! हे राजानः ! अमुं भुजिष्यं कंसदासं किं कस्मात् न अभिहथ न मारयध्वे । किंलक्षणममुं वध्यं वधार्हम् । अमुमिति हरेः प्रत्यक्षनिर्देशः । किं केवलं नेत्याह—कैः सह अमीभिः पञ्चभिः उपपतिसुतैः सह एभिः पञ्चसङ्ख्याकैः जारपुत्रैः पाण्डवैः सार्धं, तथा अनया एतया स्थविरराजकन्यया सह वृद्धराजकुमार्या सार्धम् । क्लीबेन भीष्मेण साकमित्यर्थः । स हि वृद्धो ब्रह्मचारी च । कन्यात्वेन अत्र क्लीबत्वं विवक्षितम् ॥ ६३ ॥

अथैतद्वचोविषमेव चतुर्भिराह—

किमिति ॥ हे नृपाः ! अमीभिः पञ्चभिरुपपतिसुतैः समं जारजैः सह । पाण्डवानां क्षेत्रजत्वादित्थं प्रलापः । अनया स्थविरराजकन्यया क्षत्रियाङ्गनया च सह । 'कन्या कुमारिकानार्योः' इति विश्वः । भीष्म-

(१) ०निवेष ।

स्योर्ध्वरेतस्कत्वेन निन्दा। वध्यं वधार्हम्। अराज्ञो राजाऽर्हणग्रहणापराधादिति भावः। अराजत्वं व्यनक्ति। अमुं भुजिष्यं किङ्करम्, कंसपशुपालनादिति भावः। 'भुजिष्यः किङ्करो मतः' इति हलायुधः। किं नाऽभिहत किमिति न मारयत। किन्त्वभिहतेत्यर्थः। हन्तेर्वधार्थे लोट्। 'लोटो लङ्वत्' इति थस्य तादेशः 'अनुदात्तोपदेश–' इत्यादि नाऽनुनासिकलोपः। अहो अतिवध्योऽपि न हन्यत इत्याश्चर्यं। अत्रामर्षानुभावो वागारम्भः। 'क्रोधः कृतापराधेषु स्थिरोऽमर्ष इतीर्यते' इति ॥ ६३ ॥

**अथ वाऽऽध्वमेव खलु यूयमगणितमरुद्गणौजसः ॥**
**वस्तु कियदिदमयं न मृधे मम केवलस्य मुखमीक्षितुं क्षमः ॥ ६४ ॥**

**अथ वेति** ॥ अथ वा पक्षान्तरे, हे नृपाः! यूयम् आध्वम् एवमेव तिष्ठध्वम्(१)। किंलक्षणा यूयम् अगणितमरुद्गणौजसः निर्जितदेवसमूहतेजसः। अयं कृष्णः यत्, इदं कियद्वस्तु कियन्मात्रम्। किंभूतः अयं मृधे रणे सङ्ग्रामे केवलस्य एकस्य असहायस्य मम मुखमीक्षितुं न क्षमः न समर्थः ॥ ६४ ॥

अथ वेति ॥ अथ वा अगणितमरुद्गणौजसोऽवधीरितसुरसङ्घसत्त्वाः यूयमाध्वमेव तूष्णीं तिष्ठतैव खलु। आस्तेर्लोटि 'धि च' इति सकारलोपः। इदं कृष्णहननं कियद्वस्तु कियत्कार्यम्। अल्पामित्यर्थः। कुतः– अयं कृष्णो मृधे युद्धे। 'मृधमास्कन्दनं संख्यम्' इति युद्धपर्यायेष्वमरः। केवलस्यैकाकिनो ममैव मुखमीक्षितुं न क्षमः, युष्माकं का वार्तेति भावः। एतेनास्य बलगर्वो व्यज्यते। 'आत्मोत्कर्षोऽन्यधिक्कारो यत्रावण्यविभूतिभिः' इति लक्षणात् ॥ ६४ ॥

**विदतुर्यमुत्तममशेषपरिषदि नदीजधर्मजौ ॥**
**यातु निकषमधियुद्धमसौ वचनेन किं भवति(२) साध्वसाधु वा ॥६५॥**

**विदतुरिति** ॥ हे नृपाः! अशेषपरिषदि सर्वस्यां सभायां नदीजधर्मजौ नदीपुत्रधर्मगाङ्गेययुधिष्ठिरौ यं कृष्णम् उत्तमं श्रेष्ठं विदतुः जानीतः, सोऽयं हरिः अभियुद्धं युद्धे निकषं यातु समीपं यातु प्राप्नोतु। यो हि परीक्ष्यः स तत्स्थाने भवत्येव। वचनेन कथनेन किं साधु वा अथ वा असाधु अशोभनं भवति, अपि तु न ॥ ६५ ॥

विदतुरिति ॥ किञ्च नदीजधर्मजौ भीष्मयुधिष्ठिरौ अशेषपरिषदि समग्रसंसदि। 'परिषत्संसत्' इति विश्वः। यं कृष्णमुत्तमं विदतुः, विदितवन्तावित्यर्थः। 'विदो लटो वा' इति तसोऽतुसादेशः। असौ कृष्णः अधियुद्धं युद्धे। विभक्त्यर्थेऽव्ययीभावः। निकषं निकषणं यातु। परीक्ष्यतामित्यर्थः। ततः साधूत्कर्षोऽसाधवनुत्कर्षो वा भवतु। व्यक्तमास्त्वित्यर्थः। वचनेन किं, वृथा वाग्वीर्यैरलमित्यर्थः। अत्रापि गर्वामर्षौ व्यज्येते ॥ ६५ ॥

**अचिरान्मया सह गतस्य समरमुरगाऽरिलक्ष्मणः ॥**
**तीक्ष्णविशिखमुखपीतमसृक् पततां गणैः पिबतु साक(३)मुर्वरा ॥६६॥**

**अचिरादिति** ॥ उर्वरा पृथ्वी उरगाऽरिलक्ष्मणः गरुडध्वजस्य कृष्णस्य असृक् रुधिरं पततां गणैः साकं पक्षिणां समूहैः सार्धं पिबतु धयतु। उरगाऽरिः सर्पशत्रुर्गरुडः लक्ष्म लाञ्छनं यस्य स उरगाऽरिलक्ष्मा तस्य। किंलक्षणमसृक् तीक्ष्णविशिखमुखपीतं तीव्रसायकाऽग्रास्वादितं, किंलक्षणस्य हरेः अचिरात् तत्क्षणं मया सह समरं गतस्य युद्धं प्राप्तस्य। मया हतमेवाऽमुं भवन्तः पश्यन्त्वित्यर्थः ॥ ६६ ॥

अचिरादिति ॥ किञ्च मया सह समरं गतस्योरगारिलक्ष्मणो गरुडध्वजस्य सम्बन्धि तीक्ष्णैर्विशिखमुखैः पीतं, मद्बाणोच्छिष्टमित्यर्थः। असृक् रक्तमुर्वरा भूमिः। 'उर्वरा सर्वसस्याढ्यभूमौ स्याद् भूमिमात्रके'

---

(१) युज्यते परस्मैपदम्। (२) भवतु। (३) सार्धं०।

इति विश्वः। पतताँ गणैः पक्षिसमूहैः। 'पतत्पत्त्रथाण्डजाः' इत्यमरः। सार्धमचिरात्पिबतु। अद्यैवाहमेनं हनिष्यामीत्यर्थः। अत्रापि अमर्ष एवेति भावः॥ ६६॥

**अभिधाय रूक्षमिति मा स्म गम इति पृथासुतेरिताम्॥**
**वाचमनुनयपरां स ततः सहसाऽवकर्ण्य निरियाय संसदः॥ ६७॥**

अभिधायेति॥ ततोऽनन्तरं स चैद्यः संसदः सभायाः सहसा वेगेन निरियाय निरगमत्। किं कृत्वा इति पूर्वोक्तप्रकारेण रूक्षं कर्णकर्कशम् अभिधाय उक्त्वा, पुनः किं कृत्वा इति एवंविधां पृथासुतेरितां कुन्तीपुत्रेण युधिष्ठिरेणोक्ताम् अनुनयपरां वाचं वाणीम् अवकर्ण्य श्रुत्वा अवगम्य। इतीति किं—हे राजन्! हे चैद्य! इति रूक्षं कठोरम् उक्त्वा मा स्म गमः मा याहि॥ ६७॥

अभिधायेति॥ स चैद्य इतीत्थं रूक्षं परुषमभिधाय ततः पृथासुतैः पार्थैरीरितामुक्तामनुनयपरां 'मा स्म गमो न गच्छे'ति वाचम्। 'स्मोत्तरे लङ् च' इति चकाराद्गमेराशिषि लुङि 'पुषादि-' इति च्लेरङादेशः, 'न माङ्योगे' इत्यडभावः। अवकर्ण्य अनादरेण श्रुत्वा सहसा संसदः सदसो निरियाय निर्ययौ। अमर्षादेवेति भावः॥ ६७॥

**गृहमागताय कृपया च कथमपि निसर्गदक्षिणाः॥**
**क्षान्तिसहित(१)मनसो जननीस्वसुरात्मजाय चुकुपुर्न पाण्डवाः॥६८॥**

गृहमिति॥ पाण्डवाः पाण्डोः पुत्राः जननीस्वसुः मातृभगिन्याः श्रुतश्रवसः आत्मजाय पुत्राय मातृष्वस्रीयाय शिशुपालाय कथमपि केनापि प्रकारेण न चुकुपुः न चुक्रुधुः। क्रोधकारणे सत्यपि कथमपि न क्रुद्धा इत्यर्थः। किंलक्षणाय चैद्याय गृहमागताय गेहं प्राप्ताय। गृहमागतोऽतिथिः, जननीस्वसुः सुतश्चाऽवश्यमवध्य इति भावः। कया न चुकुपुरित्याह—कृपया च अनुकम्पया च। अस्मिन् हते मातृष्वसा दुःखिनी स्यादिति भावः। किंलक्षणाः पाण्डवाः निसर्गदक्षिणाः स्वभावप्रियंवदाः, अपरं किंलक्षणाः पाण्डवाः क्षान्तिसहितमनसः क्षमाऽधिष्ठितचित्ताश्च। इति कारणपञ्चकस्य भावः। महितं पूजितम्। जननीस्वसुरात्मजायेति च-शूरसेनयादवस्य हि द्वे दुहितरौ, कुन्ती सात्वती चेति॥

गृहमिति॥ निसर्गदाक्षिणाः स्वभावतो दाक्षिण्यसम्पन्नाः। परच्छन्दानुवर्तिन इत्यर्थः। 'त्रिषु वाक्कुशला-ऽवामपरच्छन्दानुवर्तिषु। दाक्षिणा' इति वैजयन्ती। किञ्च क्षान्त्या क्षमया महितमनसः पूजितचित्ताः क्षमावन्तः पाण्डवाः। किञ्च गृहमागताय, अभ्यागतायेत्यर्थः। किञ्च जननीस्वसुर्मातृष्वसुरात्मजाय शिशुपालाय कृपया च कथमपि। असह्यापराधेऽपीत्यर्थः। न चुकुपुः न चुक्रुधुः। सद्यो वध्यस्यापि तस्या-भ्यागतत्वान्मातृबन्धुत्वात्स्वयं क्षान्तत्वाद्दाक्षिण्यात्कृपया च कथमपि जिघांसां न चक्रुरित्यर्थः। 'क्रुधद्रुह-' इत्यादिना सम्प्रदानत्वाच्चतुर्थी। अत्राभ्यागतत्वादिविशेषणानां साभिप्रायत्वादकोपहेतुत्वाच्च परिकरः काव्य-लिङ्गे सति सापेक्षत्वात्सङ्कीर्यते॥ ६८॥

**चलितं ततोऽनभिहितेच्छ(२)मवनिपतियज्ञभूमितः॥**
**तूर्णमथ ययुमिवाऽनुययुर्दमघोषसूनुमवनीशसूनवः॥ ६९॥**

चलितमिति॥ अथाऽनन्तरम् अवनीशसूनवो भूपालपुत्रा राजानः दमघोषसूनुं चैद्यं तूर्णम् अनुययुः पश्चाज्जग्मुः। किंलक्षणं चैद्यं ततस्तस्याः अवनिपतियज्ञभूमितः सकाशात् अवनिपतेः युधिष्ठिरस्य यः यज्ञोऽध्वरः तस्य भूमितः भूमेः सकाशात् चलितं

(१) महित। (२) ०हतेच्छ।

प्रस्थितम्, अपरं किंलक्षणम् अनभिहतेच्छमकथिताऽभिलाषम् । कमिवाऽनुययुरित्याह— ययुमिव अश्वमेधीयाश्वमिव । यथा यज्ञभूमितः चलितं ययुं राजपुत्रा अनुयान्ति तद्वत् । अश्वमेधे हि चिकीर्षति सति अश्व आदौ भ्राम्यति ॥ ६९ ॥

चलितमिति ॥ अथ चैद्यनिर्याणानन्तरम् अवनीशसूनवस्तत्पक्षराजपुत्राः ततस्तस्याः अवनिपतेर्युधिष्ठिरस्य यज्ञभूमितो यज्ञभूमेर्देवयजनात् । पञ्चम्यास्तसिल् । अनभिहतेच्छमप्रतिहतमनोरथं यथा तथा चलितं प्रस्थितं दमघोषसूनुं शिशुपालम् , याति परलोकमिति ययुः परलोकप्रापकोऽश्वमेधीयोऽश्वः । 'ययुरश्वोऽश्वमेधीयः' इत्यमरः । 'यो द्वे च' इति यातेरौणादिक उक् द्वित्वं च । तं ययुमिव तूर्णमनुययुः । ययुरपि राजकैः राजपुत्रैरन्वीयते । 'चतुःशता रक्षन्ति' इति श्रुतेः । अश्वमेधीयाश्वोपमया चैद्यस्य वध्यत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ६९ ॥

विशिखान्तराण्यतिपपात सपदि जवनैः स वाजिभिः ॥
द्रष्टुमलघुरभसाऽऽपतिता वनिताश्चकार न सकामचेतसः ॥ ७० ॥

विशिखान्तराणीति ॥ स चैद्यः वनिताः स्त्रियः सकामचेतसः सम्पन्नमनोरथाः न चकार न विदधे । किंभूता योषितः अलघुरभसेन महतौत्सुक्येन द्रष्टुमीक्षितुम् आपतिताः आगताः । यतः कारणात् स चैद्यः सपदि तत्क्षणमेव जवनैः अधिकजवैः वाजिभिरश्वैः विशिखान्तराणि रथ्यान्तराणि अतिपपात अतिचक्राम । त्वरया गमनेन तासां तस्य दर्शनं न निष्पन्नमित्यर्थः। एकस्या विशिखायाः अन्या विशिखाः विशिखान्तराणि ॥७०॥

विशिखान्तराणीति ॥ स चैद्यः सपदि जवनैर्वेगशालिभिर्वाजिभिरश्वैर्विशिखान्तराणि रथ्यान्तराणि । 'रथ्या प्रतोली विशिखा' इत्यमरः । अतिपपात अतिचक्राम । अत एव द्रष्टुमलघुरभसेनाऽतिवेगेनाऽऽपतिता आधावन्तीर्वनिताः सकामानि साभिलाषाणि चेतांसि चित्तवृत्तयो यासां ताः सकामचेतसः। सफलमनोरथा इत्यर्थः । न चकार । अतिशीघ्रलङ्घनान्न दर्शनावकाशस्तासामासीदित्यर्थः । अत एव वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ७० ॥

क्षणमीक्षितः पथि जनेन किमिदमिति जल्पता मिथः ॥
प्राप्य शिबिरमविशङ्किमनाः समनीनहद् द्रुतमनीकिनीमसौ ॥ ७१ ॥

क्षणमिति ॥ अथाऽन्तरम् असौ चैद्यः शिबिरं प्राप्य स्कन्धावारमवाप्य अविशङ्किमनाः निर्भयचित्तः सन् द्रुतं तूर्णम् अनीकिनीं समनीनहत् सेनां सन्नाहयामास । किंलक्षणः सः जनेन सर्वलोकेन पथि मार्गे क्षणं क्षणमात्रम् ईक्षितः दृष्टः, किंलक्षणेन जनेन मिथः परस्परम् इति जल्पता इति वदता, इतीति किं—किमिदमिति किमेतदिति ॥ ७१ ॥

क्षणमिति ॥ असौ चैद्यः पथि किमिदमिति मिथः जल्पता 'कोऽयमनर्थः संवृत्त' इति परस्परमालपता जनेन क्षणमीक्षितः सन् शिबिरं स्वकटकं प्राप्याऽविशङ्किमना निःशङ्कचित्तः द्रुतं शीघ्रमनीकिनीं सेनां समनीनहत्संनाहयति स्म । नह्यतेः सम्पूर्वकाल्लुङि णौ चङ्युपधाया ह्रस्वः, अभ्यासदीर्घश्च । शिबिरं शकटमिति केचित् । एतेनास्य रौद्रस्थायिनः कोपस्य प्ररूढत्वं वेदितव्यम् ॥ ७१ ॥

त्वरमाणशाङ्खिकसवेगवदनपवनाऽभिपूरितः ॥
शैलकटकतटभिन्नरवः प्रणनाद सान्नहनिकोऽस्य वारिजः ॥ ७२ ॥

त्वरमाणेति ॥ अस्य चैद्यस्य सान्नहनिकः सन्नहनार्थो वारिजः शङ्खः प्रणनाद दध्वान । सैनिकान् सन्नाहयितुं शङ्खो ध्मायत इत्यर्थः। किंलक्षणो वारिजः त्वरमाणशाङ्खिकसवेगवदनपवनाऽभिपूरितः त्वरमाणेन व्यग्रेण शाङ्खिकेन शङ्खध्मा शङ्खवादकेन काम्बविकेन

इति विश्वप्रकाशश्च। अधिरोपयितुमारोपयितुं कथञ्चन कृच्छ्रादशकच्छशाक। शकेर्लुङि 'पुषादि-' इति च्लेरङादेशः। अत्र विशेषणगत्या सेनाकलकलस्य मदहेतुत्वान्मदस्य शारिदुरारोपत्वहेतुत्वाच्च काव्य-लिङ्गद्वयं तत्सापेक्षत्वात्सङ्कीर्यते ॥ ७७ ॥

**परितश्च धौतमुखरुक्मविलसदहिमांशुमण्डलाः ॥**
**तेनुरतनुवपुषः पृथिवीं स्फुटलक्ष्यतेजस इवात्मजाः श्रियः ॥ ७८ ॥**

परितश्चेति ॥ श्रियो लक्ष्म्याः आत्मजाः पुत्राः अश्वाः पृथिवीं भूमिं परितः समन्तात् तेनुः व्यापुः। 'श्रियः किलाऽश्वा जाताः, सामभ्य एव गजा' इत्यागमः। किंलक्षणाः श्रिय आत्मजाः धौतमुखरुक्मविलसदहिमांशुमण्डलाः धौतं वर्णितं यन्मुखरुक्म मुखत्राणकवचं तत्र विलसत् स्फुरत् अहिमांशुमण्डलं श्रीसूर्यबिम्बं येषां ते तथा। अपरं किंलक्षणाः श्रिय आत्मजाः, अतश्चोत्प्रेक्ष्यन्ते—स्फुटलक्ष्यतेजस इव स्फुटलक्ष्यं प्रकटदृश्यं तेजः स्फुरितं येषां ते तथा। तेज इवोल्लसेत्यर्थः। अपरं किंलक्षणा अश्वाः अतनुवपुषः महाकायाः ॥ ७८ ॥

परितश्चेति ॥ किञ्चेति चार्थः। धौतेषु शोधितेषु मुखरुक्मेषु मुखस्य रुक्माभरणेषु विलसत् प्रत्येकं प्रतिफलदहिमांशुमण्डलमर्कबिम्बं येषां ते तथोक्ताः। अत एव स्फुटलक्ष्यमन्तर्गतत्वा बहिः स्फुरितं तेजोऽन्तःसारो येषां ते इव स्थिता इत्युत्प्रेक्षा। तेजो व्याख्यातं पञ्चमे 'तेजोनिरोधे'त्यत्र। अतनुवपुषो महाकायाः श्रिय आत्मजा अश्वाः। 'लक्ष्मीपुत्रोऽश्व आद्ये च' इति वैजयन्ती। परितः पृथिवीं तेनुर्व्याप्तवन्तः ॥७८॥

**प्रधिमण्डलोद्धतपरागघनवलयमध्यवर्तिनः ॥**
**पेतुरशनय इवाऽशनकैर्गुरुनिस्वनव्यथितजन्तवो रथाः ॥ ७९ ॥**

प्रधीति ॥ रथाः स्यन्दनाः अशनकैर्जवेन पेतुः निर्ययुः। किंलक्षणाः रथाः प्रधिमण्डलोद्धतपरागघनवलयमध्यवर्तिनः प्रधिमण्डलेन नेमिमण्डलेन उद्धतः क्षुभितः यः परागो रेणुः तस्य यत् घनं वलयं संहतं पटलं स एव वा घनवलयम् अभ्रवृन्दं तस्य मध्यवर्तिनः अन्तराले वर्तमानाः, अपरं किंलक्षणाः रथाः गुरुनिःस्वनव्यथितजन्तवः बृहच्चीत्कारपीडितसत्त्वाः। अपरं किंलक्षणा रथाः, उत्प्रेक्ष्यन्ते—अशनय इव वज्रा इव। तेऽपि घनवलयस्था भवन्ति, गुरुगर्जितव्यथितजन्तवश्च। यदि वा अशनय इव पेतुः, अनिमित्तसूचकाः अशनयोऽपि पेतुरित्यौपम्यम् ॥ ७९ ॥

प्रधीति ॥ 'चक्रधारा प्रधिर्नेमिः' इति हलायुधः। प्रधिमण्डलैर्नेमिवलयैरुद्धता उत्थापिताः परागाः पांसव एव घना मेघास्तेषां वलयानि मण्डलानि तेषां मध्यवर्तिनः गुरुभिर्निःस्वनैः स्वघोषैर्व्यथिता भीषिता जन्तवः प्राणिनो यैस्ते रथा अशनयः वज्रा इवाऽशनकैः पेतुस्त्वरमधावन्। अत्र रथानामशनित्वेनोत्प्रेक्षा परागाणां घनत्वरूपणसापेक्षेति सङ्करः ॥ ७९ ॥

**दधतः शशाङ्कितशशाङ्करुचि लसदुरश्छदं वपुः ॥**
**चक्रुरथ सह पुरन्ध्रिजनैरयथार्थसिद्धि सरकं महीभृतः ॥ ८० ॥**

दधत इति ॥ अथाऽनन्तरं महीभृतः राजानः पुरन्ध्रीजनैः सह स्त्रीजनैः सार्धम् अयथार्थसिद्धि चक्रुः किल। सरन्ति अस्मिन् इति सरकम्, इति निर्वचनम्। किंलक्षणा महीभृतः वपुर्दधतः शरीरं धारयन्तः, किंलक्षणं वपुः शशाङ्कितशशाङ्करुचि शशेन हरिणेन अङ्कितस्य चिह्नितस्य शशाङ्कस्य शशिनश्चन्द्रस्येव रुचिः कान्तिर्यस्य तत्तथा, अपरं किंलक्षणं वपुः लसदुरश्छदं द्योतमानकवचम् ॥ ८० ॥

दधत इति ॥ लसन्नुरश्छदः कवचो यस्मिन्कर्मणि तद्यथा तथा । 'उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्' इत्यमरः । अत एव शशाङ्कितो मृगलाञ्छितो यः शशाङ्क इन्दुस्तस्य रुचिरिव रुचिर्यस्येत्युपमा । तद्वपुर्दधतो दधानाः महीभृतो राजानः पुरन्ध्रिजनैरङ्गनाजनैः सह । अयथार्था असत्या सिद्धिर्मदकार्योत्पत्तिर्यस्मिंस्तद्यथार्थसिद्धिरहितम् । अनिर्वृतचित्तत्वादमादकमित्यर्थः । सरकं मधुपानं चक्रुः । उत्साहवर्धनार्थमिति भावः । 'मणौ शीधौ शीधुपाने सरकं मधुभाजनम्' इति वैजयन्ती ॥ ८० ॥

तदेव अयथार्थमाह—

**दयिताय साऽऽसवमुदस्तमपतदवसादिनः करात् ॥**
**कांस्यमुपहितसरोजपतद्भ्रमरौघभारगुरु राजयोषितः ॥ ८१ ॥**

दयितायेति ॥ कस्याश्चित् राजयोषितः नृपाङ्गनायाः करात् पाणेः कांस्यं चषकम् अपतत् पानपात्रं पपात । किंलक्षणात् करात् अवसादिनः अवसन्नादलसात् , किंलक्षणं कांस्यं दयिताय कान्ताय साऽऽसवं समदिरं समधु उदस्तम् अर्पणायोत्क्षिप्तम् , अपरं किंभूतं कांस्यम् उपहितसरोजपतद्भ्रमरौघभारगुरु उपहितमुपक्षिप्तं यत्सरोजमुत्पलं तत्र पतता गच्छता भ्रमरौघेण भ्रमरसमूहेन यः भारः तेन गुरु दुर्वहम् , उत्प्रेक्ष्यते-(विनापि विप्रयोगं प्रयुज्यते ?) भ्रमरभरगौरवादिव पपातेत्यर्थः । कांस्यं पानभाण्डम् ॥ ८१ ॥

अथाऽऽसर्गसमाप्तेः प्रयाणिकामन्त्रणाय प्रियासङ्गतानां भटानामागामिशुचः सूचिकास्तात्कालिकचेष्टा वर्णयति—

दयितायेति ॥ दयिताय प्रेयसे उदस्तं पानार्थमुत्क्षिप्तं सासवं समद्यम् अत एवोपहिते वासनार्थं निहिते सरोजे पतन् भ्रमरौघ एव भारस्तेन गुरु दुर्भरम् । 'गुरुस्तु वाक्पतौ श्रेष्ठे तुङ्गे पितरि दुर्भरे' इति शब्दार्णवे । कांस्यं पानभाजनम् । 'कंसोऽस्त्री पानभाजनम्' इत्यमरः । 'वृतॄवदिहनिकमिकषिभ्यः सः' इति कमेर्धातोरौणादिकः सप्रत्ययः । तस्मै हितं कंसीयं लोहविशेषः । 'प्राक्क्रीताच्छः' इति छप्रत्ययः । तस्य विकारः कांस्यं पानपात्रम् । 'कंसीयपरशव्ययोर्यञञौ लुक्च' इति यञ्प्रत्यये छस्य लुक् । राजयोषितः कस्याश्चिद्राजवध्वाः सम्बन्धिनः अवसादिनः शैथिल्यभाजः करादपतत् । तच्च दुर्निमित्तमिति भावः । एतेनाऽस्या भाविविरहशोकादेवाऽप्रसन्नदृष्टेः काचिच्चिन्ता व्यज्यते । अत्राऽवसादभारगौरवयोर्विशेषणगत्या पात्रपातहेतुत्वात्काव्यलिङ्गम् ॥ ८१ ॥

**भृशमङ्गसादमरुणत्वमविशदृशः कपोलयोः ॥**
**वाक्यमसकलमपास्य मदं विदधुस्तदीयगुणमात्मना शुचः ॥ ८२ ॥**

भृशमिति ॥ कस्याश्चिदविशददृशः अलसाक्ष्याः शुचः शोकाः मदं क्षीबत्वम् अपास्य त्यक्त्वा तदीयगुणं मदगुणम् आत्मना स्वयमेव विदधुः चक्रुः । कं तद्गुणमित्याह— भृशमत्यर्थमङ्गसादं शरीरालस्यं, कपोलयोर्गल्लयोः अरुणत्वं लौहित्यम् , असकलं वाक्यमर्धोक्तं वचः । दृशः अविशदत्वमविकासः । एतानि हि मदेनाऽपि भवन्ति ॥ ८२ ॥

भृशमिति ॥ शुचो भाविविरहभावनाप्रसूताः शोकाः आविशददृशः शोकादेवाऽप्रसन्नदृष्टेः । कस्याश्चिदिति शेषः । मदमपास्य तदुत्पत्तिं प्रतिरुध्य तदीयं गुणं तद्धर्मम् । मदकार्यभूतमित्यर्थः । अङ्गसादमङ्गशैथिल्यं कपोलयोररुणत्वमसकलमसमाप्तं वाक्यं चात्मना स्वयम् । प्रकृत्यादिभ्य उपसङ्ख्यानात्तृतीया । भृशं विदधुः । करुणेन शृङ्गारास्तिरस्कृत इत्यर्थः । अत्र मदाभावेऽपि तत्कार्योदयात्तस्यावलोकननिमित्तकत्वोक्त्या उक्तनिमित्ताख्यो विभावनाभेदः ॥ ८२ ॥

**सुदृशः समीकगमनाय युवभिरथ सम्बभाषिरे ॥**
**शोकपिहितगलरुद्धगिरस्तरसाऽऽगताश्रुजलकेवलोत्तराः ॥ ८३ ॥**

सुदृश इति ॥ अथाऽनन्तरं युवभिस्तरुणैः समीकगमनाय सङ्ग्रामाऽवतरणाय सुदृशो युवतयः सम्बभाषिरे सम्भाषिताः । 'एते वयं याम' इति आपृष्टा इत्यर्थः । किंलक्षणा युवतयः शोकपिहितगलरुद्धगिरः शोकपिहिते दुःखसंवृते गले कण्ठे रुद्धाः प्रतिहता गिरो वाचो यासां तास्तथा, अपरं किंलक्षणा युवतयः तरसा वेगेन आगताऽश्रुजलकेवलोत्तराः आगताऽश्रुजलमेव केवलम् उत्तरं प्रतिवचनं यासां तास्तथा । विरहभयात् रुरुदुरिति भावः । अश्रुकथनम् (?) ॥ ८३ ॥

सुदृश इति ॥ अथाऽस्मिन्नवसरे युवभिः समीकगमनाय युद्धगमनाय। 'समीकं साम्परायिकम्' इत्यमरः। सुदृशः शोकपिहिते शोकावृते गले कण्ठे रुद्धगिरः प्रतिबद्धोत्तरवाचस्तथापि तरसा वेगेनाऽऽगतमश्रुजलमेव केवलं निर्णीतमुत्तरं यासां ताः । 'निर्णीतं केवलं चोक्तम्' इति विश्वः। संबभाषिरे सम्भाषिताः। योद्धुं गच्छामेत्यामन्त्रिताः । 'हा कष्टमिदमेवान्तिमदर्शन'मिति वाक्यभेदेऽप्यश्रुपातेनैवाऽनक्षरं दत्तोत्तराश्चासन्नित्यर्थः । अत्राप्यश्रुपातो दुर्निमित्तमिति भावः । एतेन गन्तव्यं चेद्गम्यतां, वयं च युष्मत्सालोक्यकामा- इत्यनिष्टविध्याभासरूपाक्षेपालङ्कारो व्यज्यते। 'अनिष्टविध्याभासश्च'ेति सूत्रणेष्टनिषेधाभासवदस्यापि लक्षणात् ॥

विपुलाऽचलस्थलघनेन जिगमिषुभिरङ्गनाः प्रियैः ॥
पीनकुचतटनिपीडदलद्वरवारबाणमुरसाऽऽलिलिङ्गिरे ॥ ८४ ॥

विपुलाऽचलेति ॥ जिगमिषुभिः यियासुभिः प्रियैः कान्तैः अङ्गना योषितः उरसा वक्षसा आलिलिङ्गिरे आश्लिष्टाः । कथं यथा भवति पीनकुचतटनिपीडदलद्वरवारबाणं यथा स्यात्तथा पीनौ मांसलौ यौ कुचतटौ तयोस्ताभ्यां वा यो निपीडः पीडनं तेन दलत् त्रुट्यत् यत् वरं नूतनं वारबाणं स्तनावरणं सन्नाहो वा यत्र तद्यथा स्यात्तथा, किंलक्षणेन उरसा विपुलाऽचलस्थलघनेन विस्तीर्णनगकटकनिबिडेन ॥ ८४ ॥

विपुलाऽचलेति ॥ जिगमिषुभिर्युद्धाय गन्तुमिच्छुभिः प्रियैः कर्तृभिः अङ्गनाः विपुलं यदचलस्य स्थलं तद्वद्घनेन दृढेनोरसा निजवक्षसा करणेन पीने कुचतटे निपीडो नितरां पीडनं तेन दलन्तो विदीर्यमाणा वराः श्रेष्ठा वारबाणाः कञ्चुका यस्मिन्कर्मणि तद्यथा तथा । 'कञ्चुको वारबाणोऽस्त्री' इत्यमरः । आलिलिङ्गिरे आलिङ्गिताः । अत्र वारबाणानां दलनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ८४ ॥

न मुमोच लोचनजलानि दयितजयमङ्गलैषिणि ॥
यातमवनिमवसन्नभुजान्न गलद्विवेद वलयं विलासिनी ॥ ८५ ॥

नेति ॥ काचिद्विलासिनी ललना लोचनजलानि नयनवारीणि न मुमोच न तत्याज । किंलक्षणा विलासिनी दयितजयमङ्गलैषिणी दयितस्य कान्तस्य जये मङ्गलमिच्छतीत्येवंशीला । सा वनिता मुग्धा अवसन्नभुजात् खिन्नहस्तात् गलत् भ्रश्यत् वलयं कङ्कणम् अवनिं यातं भूमौ पतितं न विवेद नाऽज्ञासीत् । मङ्गलभङ्गभीरुत्वात् किञ्चित् असौ न रोदिति । वलयपातान्महदशकुनम् ॥ ८९ ॥

नेति ॥ दयितस्य जयमङ्गलं, तदर्थमङ्गलमित्यर्थः । अश्वघासादिवत्तदर्थे षष्ठीसमासः । तादिच्छतीति तदेषिणी विलासिनी काचिदङ्गना लोचनजलान्यश्रूणि न मुमोच । अश्रुपातस्याऽमङ्गलत्वादिति भावः । अमङ्गलं तदन्यतः प्रवृत्तमेवेत्याह—यातमिति । अवसन्नभुजाच्छोकाशिथिलात्करात्गलद्भ्रश्यदेवाऽवनिं भुवं यातं प्राप्तं वलयं कङ्कणं न विवेद । अवश्यभाविनो को निवारक इति भावः। एषा च दैन्यचिन्तेति । अत्राऽवसादस्य विशेषणगत्या वलयपातहेतुत्वात्काव्यलिङ्गम् ॥ ८५ ॥

प्रविवत्सतः प्रियतमस्य निगडमिव चक्षुरक्षिपत् ॥
नीलनलिनदलदामरुचि प्रतिपादयुग्ममचिरोढसुन्दरी॥ ८६ ॥

प्रविवत्सत इति ॥ काचिदचिरोढसुन्दरी नवपरिणीतवधूः प्रविवत्सतः प्रियतमस्य जिगमिषोः कान्तस्य प्रतिपादयुग्मं चरणयुगलाभिमुखं चक्षुः अक्षिपत् नेत्रं पातयामास । किंलक्षणं चक्षुः नीलनलिनदलदामरुचि असितोत्पलकिसलयस्रक्कान्ति । अपरं किंलक्षणं चक्षुः, उत्प्रेक्ष्यते—निगडमिव गमननिषेधार्थं बन्धनदामेव ॥ ८६ ॥

प्रविवत्सत इति ॥ अचिरोढसुन्दरी काचिन्नवोढा स्त्री प्रविवत्सतः प्रवासं कर्तुमिच्छतः । वसेः सन्नन्ताल्लटः शत्रादेशः । प्रियतमस्य प्रतिपादयुग्मं पादयुग्मे । विभक्त्यर्थेऽव्ययीभावः । नीलनलिनदलदामरुचि नीलोत्पलमालासच्छायमित्युपमा । निगडमिव शृङ्खलामिव चक्षुर्नेत्रमाक्षिपत् । प्रेरयदित्यर्थः । चक्षुषो दूरे पदमपि गन्तुं न शशाकेत्यर्थः । तच्च दुर्निमित्तमिति भावः । प्रयाणे ह्यवलोकननिषेधात् । उक्तोपमासापेक्षा चक्षुषो निगडत्वोत्प्रेक्षेति सङ्करः ॥ ८६ ॥

**व्रजतः क्व तात वजसीति परिचयगतार्थमस्फुटम् ॥**
**धैर्यमभिनदुदितं शिशुना जननीनिभर्त्सनविवृद्धमन्युना ॥ ८७ ॥**

व्रजत इति ॥ कस्यचित् सुभटस्य व्रजतः सङ्ग्रामाय गच्छतः सतः शिशुना बालकेन उदितमुक्तं वाक्यं धैर्यमभिनत् सत्त्वं नुनोद । किमुक्तमित्याह—किंलक्षणमुक्तम् अस्फुटं श्लिष्टवर्णम् अपटु, रेफहीनत्वादस्फुटम् । ननु यदि अस्फुटं, तत्कथं गृहीतार्थमित्याह—अपरं किंलक्षणमुदितं परिचयगतार्थं परिचयेन संस्तववशेन गतार्थं ज्ञाताभिधेयम् । तादृशी ज्ञा तैस्तस्य गृहीतेत्यर्थः । किंलक्षणेन शिशुना जननीनिर्भत्सनविवृद्धमन्युना जननीनिभर्त्सनेन मातृविहितधिक्करणेन विवृद्धिं गतो मन्युः कोपो यस्य सः तथा तेन । इति किमुदितमित्याह—'हे तात ! हे पितः ! त्वं क्व वजसी'ति । स हि शिशुः पश्चात् शब्दयन् अमङ्गलत्वात् मात्रा तर्जित इत्यर्थः ॥ ८७ ॥

व्रजत इति ॥ जनन्याः अपशकुनभीतायाः मातुर्निभर्त्सनाद्विवृद्धमन्युना प्रवृद्धकोपेन शिशुना बालकेन हे तात ! जनक ! 'तातस्तु जनकः पिता' इत्यमरः । क्व वजसि कुत्र व्रजसि इत्यस्फुटमुदितमुक्तम् । वदेः कर्मणि क्तः । 'वचिस्वपि—' इत्यादिना सम्प्रसारणम् । वजसीति सरेफपदमपाटवादरेफमुच्चारितमित्यर्थः । तथापि परिचयादभ्यासपाटवाद्गतार्थम् । पितृभ्यां केवलावगताभिधेयं वचनमिति शेषः । व्रजतः प्रस्थातुः धैर्यं प्रयाणोत्साहमभिनत् । गमनकारिणो दुर्निमित्तत्वादिति भावः । उक्तं च योगयात्रायाम्—

'यानात्पुरा निपतनं बृहतीव काचिद्गर्भेण भारबृहती स्वपुरःस्थिता स्त्री ।
आगच्छ तिष्ठ कुत इत्यलमर्थवाचिशब्दाश्च राजगमने प्रतिषेधकाः स्युः' ॥

इति । अत्र दम्पत्योर्दैन्यविषादचिन्ताशङ्कादयः सञ्चारिणोऽनुसन्धेयाः ॥ ८७ ॥

**शठ ! नाकलोकललनाभिरविरतरसं(१)रिरंससे ॥**
**तेन वहसि मुदमित्यवदद्रणरागिणं रमणमीर्ष्ययाऽपरा ॥ ८८ ॥**

शठेति ॥ अपरा अन्या काचित्कामिनी रणरागिणं समररसिकं रमणं वल्लभम् ईर्ष्यया मत्सरेण इति इत्थम् अवदत् अब्रवीत् । इतीति किं—हे शठ ! हे धूर्त ! त्वं नाकलोकललनाभिः दिव्यस्त्रीभिः अविरतरसं निरन्तररागं यथा भवति तथा रिरंससे निर्विविक्षसि(२), त्वं तेन हेतुना मुदं वहसि हर्षं दधासि । अविरतोऽतिगाढो रसो रागो यत्र तद्यथा ॥ ८८ ॥

शठेति ॥ अपरा स्त्री रणरागिणं युद्धोत्साहिनं रमणं हे शठ ! वञ्चक ! नाकलोकललनाभिः अप्सरोभिः सहेत्यर्थः । 'सहयुक्तेऽप्रधाने' इति सहार्थे तृतीया । 'वृद्धो यूने'तिवत् । अविरतरतमविच्छिन्नसुरतं यथा भवति तथा रिरंससे रन्तुमिच्छसि । रमेः सन्नन्ताल्लट् । 'पूर्ववत्सनः' इत्यात्मनेपदम् । तेनाऽप्सरोरिरंसा-

(१) रतं । (२) विवेविषसि—इति पुस्तके ।

करणेन मुदं वहसीति ईर्ष्यया सापत्न्याऽक्षमया अवदत्। अर्थाद्विरहाऽसहनया प्रस्थानप्रतिषेधपरया व्याहृतमिदमेवास्य मरणशंसिनी दुरुपश्रुतिरिति भावः। ईर्ष्याऽत्र कण्ठोक्त एव सञ्चारी ॥ ८८ ॥

**ध्रियमाणमप्यगलदश्रु चलति दयिते नतभ्रुवः ॥**
**स्नेहमकृतकरसं दधतामिदमेव युक्तमतिमुग्धचेतसाम् ॥ ८९ ॥**

**ध्रियमाणमिति** ॥ कस्याश्चिन्नतभ्रुवः कुटिलभ्रुवः नायिकायाः दयिते कान्ते चलति सति व्रजति सति ध्रियमाणमपि निरुध्यमानमपि अश्रु अगलत् बाष्पं पपात । ननु प्रस्थाने अश्रुजलममङ्गलं, तत् कथमसौ अरुददित्याह—अतिमुग्धचेतसां मृदुहृदयानाम् अकृतकरसमकृत्रिमादरं प्रेम दधतां स्नेहं वहमानानाम् इदमेव युक्तमेतदेव साम्प्रतं यत् रोदनम् । यः किल आचारवान्, सः कृत्रिमं व्यवहारं दर्शयति । परमार्थतस्तु स्निग्धस्य प्रिये धार्यमाणमपि अश्रु पतत्येव, किमत्र क्रियते । न ह्येतद् दूष्यतास्थानम् । रसो रागः ॥ ८९ ॥

ध्रियमाणमिति ॥ दयिते चलति प्रतिष्ठमाने सति नतभ्रुवः वध्वाः अश्रु ध्रियमाणममङ्गलभिया धार्यमाणमपि । धरतेः कर्मणि लटः शानजादेशः। अगलदस्रवत् । शोकातिरेकाद्धारयितुमशक्यमासीदित्यर्थः। तथा हि—अकृतकरसमकृत्रिमरागं स्नेहं प्रेम दधताम् अत एव अतिमुग्धचेतसामत्यन्ताऽकपटबुद्धीनामिदमेवाऽसंवरणं युक्तम् । अन्यथा स्नेहव्याघातेन तत्कालविरुद्धमोचनं नाऽनुचितमिति भावः। रसस्नेहयो रागप्रेमाऽपरनाम्नोरवस्थाभेदोद्भेदः । 'रागस्तत्सम्बन्धि प्रेम तद्वियोगासहिष्णुता' इति **रससागरे** । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ८९ ॥

**सह कज्जलेन विरराज नयनकमलाम्बुसन्ततिः ॥**
**गण्डफलकमभितः सुतनोः पदवीव शोकमयकृष्णवर्त्मनः ॥ ९० ॥**

**सहेति** ॥ कस्याश्चित् सुतनोः तन्व्याः गण्डफलकमभितः कपोलयोः संमुखं कज्जलेन सह अञ्जनेन सार्धं नयनकमलाम्बुसन्ततिः साञ्जनो नेत्राम्बुपूरः विरराज बभौ । किंलक्षणाऽम्बुसन्ततिः, उत्प्रेक्ष्यते-शोकमयस्य कृष्णवर्त्मनः पदवी इव दुःखाग्नेः पद्धतिरिव ॥ ९० ॥

**सहेति** ॥ सुतनोः शुभाङ्ग्याः गण्डफलकमभितः । गण्डस्थलयोरित्यर्थः । 'अभितः परितः—' इत्यादिना द्वितीया । नयनकमलाम्बुसन्ततिरश्रुधारा कज्जलेनाऽञ्जनेन सह शोक एव शोकमयस्तस्य कृष्णवर्त्मनः शोकाग्नेः पदवी निःसरणमार्ग इव विरराज शुशुभे । येन वर्त्मनाऽग्निर्गच्छति तत्कृष्णं भवतीति कृष्णवर्त्मा । अत्राप्यश्रुपात एव दुर्निमित्तमिति भावः ॥ ९० ॥

**क्षणमात्ररोधि चलितेन कतिपयपदं नतभ्रुवः ॥**
**स्रस्तभुजयुगगलद्वलयस्वनितं प्रतिक्षिपदिवो(१)पशुश्रुवे ॥ ९१ ॥**

**क्षणेति** ॥ केनचित् सुभटेन नतभ्रुवः कुटिलभ्रुकुटेः अङ्गनायाः स्रस्तभुजयुगगलद्वलयस्वनितमुपशुश्रुवे स्रस्ते भुजयुगे बाहुद्वये गलतां चलतां वलयानां कङ्कणानां स्वनितं रणत्कारः उपशुश्रुवे आकर्णितम् । किंभूतेन भटेन कतिपयपदं पञ्चषट्पदं चलितेन प्रस्थितेन, किंलक्षणं स्वनितं क्षणमात्ररोधि, क्रियाविशेषणं वा, क्षणं निवृत्य अश्रौषीदित्यर्थः। अपरं किंलक्षणं स्वनितम्, उत्प्रेक्ष्यते—प्रतिक्षिपदिव इत्थं दुःखितायाः कान्तायाः 'मूर्ख ! क यासी'ति वारणार्थं निर्भर्त्सयदिव । प्रतिक्षुतमिवेति पाठे-यथा कस्यचित् प्रतिक्षुतं संमुखे छिक्का उपश्रूयते । तदपि चलतः क्षणमात्ररोधि भवति ॥ ९१ ॥

---

( १ ) प्रतिक्षुतमिवो० ।

चयोति ॥ कतिपयं च तत्पदं च तत् । जातावेकवचनम् । कतिचित्पदानीत्यर्थः । पदशब्दस्य तदवच्छिन्नदेशवाचित्वादत्यन्तसंयोगे द्वितीया । चलितेन प्रस्थितेन । केनाचिदिति शेषः । क्षणमात्ररोधि क्षणमात्रप्रतिबन्धकम् । प्राणदानैकजीविनामवसरे सत्यधिक स्थातुमनौचित्यादिति भावः । नतभ्रुवः स्रस्तानामङ्गसादेन झटिति प्रकोष्ठाग्रे पतितानां भुजयुगगलद्वलयानां हस्तद्वयचलत्कङ्कणानां स्वनितं रणत्कारं प्रति प्रतिमुखं क्षुतामिवोपशुश्रुवे उपश्रुतम् । 'स्त्री क्षुत्क्षुतं क्षवः पुंसि' इत्यमरः । रणत्कारे क्षुतभ्रान्त्या निवृत्तम् । क्षणमात्रं स्थितामित्यर्थः । अक्षुते क्षुतभ्रान्त्या भ्रान्तिमदलङ्कारः । दैन्यविषादाख्याः सञ्चारिणः ॥९१॥

अनुवर्त्म(१)वल्लभतमस्य विगलदमलायतांशुकम् ॥
भूमिनभसि रभसेन यती विरराज काचन समं महोल्कया ॥ ९२ ॥

अनुवर्त्मेति ॥ काचन कान्ता वल्लभतमस्य अतिप्रियस्य कान्तस्य अनुवर्त्म पथः पश्चात् भूमिनभसि भूवियति रभसेन यती वेगेन गच्छन्ती सती विरराज शुशुभे । किमेकाकिन्येव यती, नेत्याह—कया समं महोल्कया सह । अनिष्टसूचिका महोल्का । सापि तस्य पश्चाद् व्रजन्ती भूमिनभसि रेजे । इति सहोक्तिः। कथं यथा भवति तथा यतीत्याह—विगलदमलायतांशुकं विगलत् सम्भ्रमवशात् भ्रश्यत् अमलमुज्ज्वलम् आयतं दीर्घम् अंशुकमुत्तरीयवसनं तद्यथा भवति यत्र क्रियायाम्, इत्येतदमङ्गलसूचकं विशेषणम् । उल्काऽपि विगलन्तः प्रसरन्तोऽमला निर्मला आयता दीर्घा अंशवस्तेजांसि यस्याः सा विगलदमलायतांशुः, ततः स्वार्थे कः प्रत्ययः, अमलांशुरेव अमलांशुका ॥ ९२ ॥

अभिवर्त्मेति ॥ वल्लभतमस्य प्रियतमस्याऽभिवर्त्माऽभिमार्गं विगलदङ्गसादात्स्रंसमानममलमायतं चांऽशुकं वस्त्रं यस्याः, अन्यत्र विगलन्तो विशीर्यमाणा अमला उज्ज्वलाः आयता दीर्घीभूता अंशवो रश्मयो यस्याः सा । शैषिकः कप्रत्ययः । भूमिर्नभ इव तस्मिन्भूमिनभसि रभसेन वेगेन यती यान्ती । इणः शतरि 'उगितश्च' इति ङीप् । काचनाऽङ्गना महोल्कया समं सदृशं विरराज । अत्र प्रस्थातुरग्रे स्वकान्ताया महोल्कासादृश्यभवनमेव दुर्निमित्तमिति भावः । उपमालङ्कारः ॥ ९२ ॥

समरोत्सुके(२) नृपगणेऽपि तदनुसरणोद्यतैकधीः ॥
दीनपरिजनकृताश्रुजलो न भटीजनः स्थिरमना विचक्लवे(३) ॥ ९३ ॥

समरोत्सुके इति ॥ भटीजनः सुभटाङ्गनावर्गः न विचक्लवे विक्लवतां न ययौ । किंलक्षणो भटीजनः स्थिरमनाः दृढचित्तः, अपरं किंलक्षणः दीनपरिजनकृताऽश्रुजलः दीनसखीजनादिकृतरोदनः, क सति न विचक्लवे नृपगणे समरोत्सुकेऽपि सति राजसमूहे सङ्ग्रामोद्यतेऽपि सति । तर्हि कथं न विचक्लवे, कथंभूतः तदनुसरणोद्यतैकधीः तेषामनुसरणे अनुगमने काष्ठभक्षारोहणे उद्यता विकस्वरा अचला धीर्बुद्धिर्यस्य सः तथा । अवश्यमेव मया गन्तव्यमिति यदा निश्चयो भवति, तदाः दुखं प्रायेण न बाधते । क्लविः सूत्रधातुर्ज्ञातव्यः ९३

समरोन्मुखे इति ॥ नृपगणे समरोन्मुखेऽपि तस्य नृपगणस्याऽनुमरणे सहमरणे उद्यताऽयुक्ता अत एवैका मुख्या धीर्यस्य सः । दीनेनाप्यशोच्येन परिजनेन कृताश्रुजलो मुक्तबाष्पः । दासीमुक्ताश्रुबिन्दुरित्यर्थः । तथापि स्वयं स्थिरमना अचलितचित्तो भटीजनो भटस्त्रीलोकः । जातावेकवचनम् । 'पुंयोगादाख्यायाम्' इति ङीप् । न विचक्रमे न तत्रास । सहमृत्युप्रियाणां कुतः संत्रास इति भावः । अत्र मरणोद्योगस्य विशेषणगत्या अक्लैब्यहेतुत्वात्काव्यलिङ्गभेदः ॥ ९३ ॥

विदुषीव दर्शनममुष्य युवतिरतिदुर्लभं पुनः ॥
यान्तमनिमिषमतृप्तमनाः पतिमीक्षते स्म भृशमा दृशः पथः ॥ ९४ ॥

---

(१) अभिवर्त्म'' 'यतांशुका । (२) समरोन्मुखे'' 'तदनुमरणो० । (३) विचक्रमे ।

**विदुषीवेति ॥** काचिदङ्गना आ दृशः पथः दृष्टिगोचरं यावत् भृशमत्यर्थं पतिं वल्लभम् ईक्षते स्म पश्यति स्म । कथं यथा भवति अनिमिषं निमेषरहितं यथा स्यात्, किंलक्षणा अङ्गना अतृप्तमनाः असन्तुष्टचित्ता, किंलक्षणं पतिं यान्तं सङ्ग्रामाय गच्छन्तम् । अनिमिषदर्शने तर्कमाह—अपरं किंलक्षणा अङ्गना, उत्प्रेक्ष्यते—अमुष्य पत्युर्दर्शनं विलोकनं पुनर्भूयोऽपि अतिदुर्लभमत्यन्तदुष्प्रापं विदुषीव जानतीव । अत एव सादरं विलोकित इत्यर्थः ॥ ९४ ॥

विदुषीवेति ॥ युवतिः काचिदङ्गना अमुष्य पत्युर्दर्शनं पुनः पश्चादतिदुर्लभम् । तस्याऽपुनरावृत्तेरिति भावः । विदुषी जानतीवेत्युत्प्रेक्षा । 'विदेः शतुर्वसुः' इति वस्वादेशः 'उगितश्च' इति ङीप् । आवितृप्तमना-अवितृप्तचित्ता सती यान्तं योद्धुं गच्छन्तं पतिं भर्तारम् आ दृशः पथः आ दृष्टिपथात् । दृष्टिपथातिक्रमपर्यन्तमित्यर्थः । 'आङ्मर्यादाभिविध्योः' इति विकल्पादाङो न समासः । भृशमनिमिषं निमेषरहितं यथा तथा ईक्षते स्म ॥ ९४ ॥

**सम्प्रत्युपेयाः कुशली पुनर्युधः सस्नेहमाशीरिति भर्तुरीरिता ॥**
**सद्यः प्रसह्य द्वितयेन नेत्रयोः प्रत्याचचक्षे गलता भटस्त्रिया(१) ॥९५॥**

**सम्प्रतीति ॥** कयाचित् भटस्त्रिया सुभटाङ्गनया वीरपत्न्या भर्तुः कान्तस्य सस्नेहं सप्रेम यथा भवत्येवम् इति आशीः हितेषणावाक्यम् ईरिता दत्ता नेत्रद्वितयेन नेत्रयोर्द्वयेन सद्यो वेगेनैव प्रसह्य बलात्कारेण प्रत्याचचक्षे प्रत्याख्याता निराकृता । द्वाभ्यां किलैको निराक्रियते । नेत्रयोर्द्वयम्, आशीरेका । किंलक्षणेन नेत्रयोर्द्वितयेन गलता क्षरता, अश्रूणि मुञ्चतेत्यर्थः । रोदनं हि अमङ्गलम् । काऽसावाशीरित्याह—यत, हे कान्त ! त्वं पुनर्भूयोऽपि युधः सङ्ग्रामात् सकाशात् कुशली स्वस्थः सन् सम्प्रति अधुनैव उपेया-आगच्छेरिति ॥ ९५ ॥

सम्प्रतीति ॥ सम्प्रतीदानीमेव कुशली अक्षतः सन् युधो युद्धात् पुनः उपेयाः प्रत्यावर्तस्वेति सस्नेहं भर्तुरीरिता भर्त्रे प्रत्युक्ता आशीराशीर्वादः सद्यः प्रसह्य बलाद्गलदम्भसा स्रवदश्रुणा तस्या भटस्त्रियास्तस्य वध्वा एव । अस्तीति प्रतिषेधाभावादीत्वादाडागमः । नेत्रयोर्द्वितयेन प्रत्याचचक्षे प्रत्याख्याता, निराकृतेत्यर्थः । अमङ्गलेनाऽश्रुपातेन निष्फलीकृतेत्यवश्यं भवितव्यं भवत्येवेति भावः । 'वा लिटि' इति विकल्पान्न चक्षिङः ख्याञादेशः । अत्राऽश्रुपातस्य नेत्रविशेषणद्वारा आशीःप्रत्याख्याने हेतुत्वात्काव्यलिङ्गभेदः ॥ ९५ ॥

**काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुलक्ष्म्यो**
**निःश्रीकाः(२) काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ॥**
**भ्रेमुर्वात्या इवाऽन्याः प्रतिपदमपरा भूमिवत्कम्पमापुः**
**प्रस्थाने पार्थिवानामशिव(३)मिति पुरो भावि नार्यः शशंसुः ॥९६॥**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये पञ्चदशः सर्गः ॥ १५ ॥

**काश्चिदिति ॥** नार्यः अङ्गनाः पार्थिवानां प्रस्थाने राज्ञां समरावतरणे इति अमुना प्रकारेण पुरोभावि अग्रवर्ति अशिवममङ्गलं शशंसुः कथयामासुः । तावत्—काश्चिन्नार्यः रजोभिः कीर्णा आर्तवैर्व्याप्ताः रजस्वला जाताः । किंलक्षणाः काश्चित् मन्दवक्त्रेन्दुलक्ष्म्यः नष्टमुखचन्द्रशोभाः, अत एव दिवमनुविदधुः व्योम अनुचक्रुः । यतो द्यौरपि रजोभिः रेणुभिः

(१) भटस्त्रियाः । (२) काचित्कीर्णा रजोभिर्दिवमनुविदधे भिन्नवक्त्रेन्दुलक्ष्मीरश्रीकाः । (३) ०मशुभ० ।

कीर्णा जाता, अत एव निस्तेजोऽर्केन्दुरभूत् । तथा काश्चिन्नार्यः अन्तर्दाहं दधिरे हृदये सन्तापं दधुः । किंलक्षणाः निःश्रीकाः गतशोभाः, अपरं किंलक्षणा नार्यः उद्भ्रान्तसत्त्वाः चकितप्राणाः, का इव तापं दधिरे दिश इव । यथा दिशः काष्ठा अन्तर्दाहं दावानलं दधिरे। दिक्ष्वपि तदा दावानला जज्वलुरित्यर्थः । किंलक्षणा दिशः निःश्रीकाः वृक्षादीनां दग्धत्वात् निर्लक्ष्मीकाः, अपरं किंलक्षणा दिशः उद्भ्रान्तसत्त्वाः उद्भ्रान्ताः इतस्ततो भ्रमन्तः सत्त्वाः प्राणिनो यासु तास्तथा । तथा अन्या अपरा नार्यः भ्रेमुर्भ्रमन्ति स्म, का इव वात्या इव वातमण्डल्य इव । तदा वात्या अपि बभ्रमुरित्यर्थः । तथा अपरा अन्या नार्यः प्रतिपदं पदेपदे कम्पमापुः कम्पन्ते स्म, किंवत् भूमिवत् भूमितुल्यम् । भूरपि तदा चकम्पे इत्यर्थः । एतानि हि उत्पातलक्षणानि । अथ पुरः पूर्वं भावि भविष्यत् अमङ्गलं शशंसुरिति योज्यम् । शरीरापचयाऽकुशलद्वारेण अमङ्गलमाचख्युरिति भावः । स्रग्धरा छन्दः ॥ ९६ ॥

इति शिशुपालवधे महाकाव्ये वल्लभविरचितायां सन्देहविषौषध्यां सारटीकायाम् अपशकुनाविर्भावो नाम पञ्चदशः सर्गः ।



काचिदिति ॥ काचित्स्त्री रजोभिरार्तवैरङ्गसंस्कारत्यागात्पांसुभिर्वा कीर्णा । 'स्याद्रजः पुष्पमार्तवम्' इति । 'पांसुर्ना न द्वयो रजः' इति चामरः । दिवस्त्वौत्पातिकपांसुवर्षणाद्रजःकीर्णता । वक्त्रमिन्दुरिव, अन्यत्र वक्त्रमिवेन्दुर्भिन्नास्तस्य लक्ष्म्यो यस्याः सा भिन्नवक्त्रेन्दुलक्ष्मीः । बहुवचनान्तो बहुव्रीहिः । एवमपि एकवचनान्तस्यैव लक्ष्मीशब्दस्योरःप्रभृतिषु पाठान्न तन्निमित्तः कप्रत्ययः । शैषिकस्तु वैभाषिक इत्यविरोधः । काचिन्नारी दिवमनुविदधेऽनुचकार । काश्चिन्नार्यो दिश इवाऽश्रीका वीतशोभाः उद्भ्रान्तसत्त्वा-उद्भ्रान्तचित्ता उद्भ्रान्तजन्तुकाश्च सत्यः अन्तरात्मनि मध्ये च दाहं सन्तापम्, अन्यत्रौत्पातिकं प्रज्वलनं दधिरे दधुः । अन्या नार्यो वात्या इव वातसमूहा इव । 'शाखादिभ्यो यत्' इति यत्प्रत्ययः । प्रतिदिशं दिशि दिशि । 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तष्टच्प्रत्ययः । भ्रेमुर्बभ्रमुः । 'वा जॄभ्रमुत्रसाम्' इति विकल्पादेत्वाभ्यासलोपौ । अपरा नार्यो भूम्या तुल्यं भूमिवत्कम्पमापुः । इतीत्थं पार्थिवानां प्रस्थाने प्रयाणे नार्यो भाव्यशुभं पुरः पूर्वं शशंसुः । सूचयामासुरित्यर्थः । अत्र नारीणां भाव्यशुभसूचनस्य रजोदाहादिवाक्यार्थहेतुकं काव्यलिङ्गम् । तत्र नारीणां द्युदिगाद्युपमाभिस्तद्रजोदाहादिवन्नारीरजोदाहादीनामशुभसूचकत्वमित्युपमाकाव्यलिङ्गयोरङ्गाङ्गिभावेन सङ्करः । सञ्चारिणश्च पूर्ववद्विषादादयः सुगमाः । अत्र 'काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्भिन्नवक्त्रेन्दुलक्ष्म्यो निश्रीकाः काश्चित्' इति पाठे काचित्कीर्णेत्येकवचनप्रक्रमभङ्गे दोषो नास्ति । न चैवमुपमानोपमेययोर्भिन्नवचनत्वदोषः । लोकेषु चन्द्रादिष्वेकत्र नियतेषु दोषबुद्ध्यनुदयात् । यथाह दण्डी —

> 'न लिङ्गवचने भिन्ने न हीनाधिकताऽपि वा ।
> उपमादूषणायाऽलं यत्रोद्वेगो न धीमताम्' ॥

इति । स्रग्धरा वृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति लक्षणात् ॥९६॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां शिशुपालवधकाव्यव्याख्यायां सर्वङ्कषाख्यायां पञ्चदशः सर्गः ॥ १५ ॥

# षोडशः सर्गः ।

**दमघोषसुतेन कश्चन प्रतिशिष्टः प्रतिभानवानथ ॥**
**उपगम्य हरिं सदस्यदः स्फुटभिन्नार्थमुदाहरद्वचः ॥ १ ॥**

**दमघोषेति ॥** अथ अनन्तरं कश्चन् दूतः सदसि सभायां हरिमुपगम्य श्रीकृष्णं प्राप्य अदः एतत् वचः वाक्यम् उदाहरत् बभाषे । किंलक्षणं वचः स्फुटभिन्नार्थं स्फुटः प्रकटः भिन्नो विभक्तः प्रियः अप्रियश्च अर्थोऽभिधेयं यस्य तत्तथा । द्व्यर्थत्वाद्भिन्नम् । यतः किंलक्षणो दूतः प्रतिभानवान् सप्रतिभः वाक्यचतुरः, अपरं किंलक्षणो दूतः दमघोषसुतेन शिशुपालेन प्रतिशिष्टः आज्ञप्तः । चैद्येन प्रहित इत्यर्थः ॥ १ ॥

अथाऽनन्तरसर्गे हरेश्चैद्यदूतसंवादं वर्णयति—

**दमघोषेति** ॥ अथ संनाहाऽनन्तरं दमघोषसुतेन शिशुपालेन प्रतिशिष्टः प्रहितः प्रतिभानमस्यास्तीति प्रतिभानवान्, अवसरोचितोत्तरस्फुरणशक्तिमानित्यर्थः । कश्चन कश्चिद् दूतः हरिं कृष्णमुपगम्य प्राप्य सदसि सभायां स्फुटौ भिन्नार्थौ पृथगर्थौ प्रियाप्रियरूपौ यस्मिंस्तत्स्फुटभिन्नार्थम् । युगपदुभयार्थाभिधायकमित्यर्थः । तथैव वक्ष्यति—'उभयं युगपन्मयोदितं त्वरया सान्त्वमथेतरच्च ते' इति । अदः इदं वक्ष्यमाणं वचः उदाहरत् व्याहरत् । अस्मिन्सर्गे वैतालीयाख्यं मात्रावृत्तम् ।

'षड्विषमेऽष्टौ समे कलाश्च समे स्युर्नो निरन्तराः ।
न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः' ॥

इति लक्षणात् ॥ १ ॥

किमुवाचेत्याह—

**अभिधाय तथा(१) तदप्रियं शिशुपालोऽनुशयं परं गतः ॥**
**भवतोऽभिमनाः समीहते सरुषः कर्तुमुपेत्य माननाम् ॥ २ ॥**

**अभिधायेति ॥** यत्, हे कृष्ण ! शिशुपालः चैद्य उपेत्य आगत्य भवतस्तव माननां सम्मानं कर्तुं समीहते विधातुं वाञ्छति । किंलक्षणः शिशुपालः अभिमनाः उत्कण्ठितचित्तः, किंलक्षणस्य तव सरुषः सकोपस्य, अपरं किंलक्षणः शिशुपालः परमनुशयं गतः महान्तं पश्चात्तापं प्राप्तः, किं कृत्वा तथा तेन प्रकारेण अप्रियमभिधाय 'सर्वगुणविरहितस्य हरेः परिपूजया कुरुनरेन्द्र ! को गुण' इत्यादि कर्णकटुकमुक्त्वा । इति प्रियम् ।

अप्रियं तु—स चैद्यः उपेत्य आगत्य भवतस्तव माननां खण्डनां कर्तुमीहते । अथ वा रुषः कोपस्य माननां सफलीकरणत्वं वाञ्छति । रोषस्य सफलीकरणं हि रिपुशिरसि निक्षेपः । एतेन त्वां जिघांसतीति वाक्यार्थः । किंलक्षणः सः परमुत्कृष्टम् अनुशयं कोपं गतः प्राप्तः, किं कृत्वा तेन प्रकारेण अप्रियं कठोरम् अभिधाय उक्त्वा, अपरं किंलक्षणः सः अभिमनाः निर्भयः । अथ वा सः रुषः कोपात् तव खण्डनां नाशं वाञ्छतीत्यर्थः:२

'स्फुटभिन्नार्थमुदाहरद्वच' इत्युक्तं, तदेव चतुर्दशभिः श्लोकैरभिधत्ते—

**अभिधायेति** ॥ शिशुपालस्तदाऽर्धस्वीकारकाले तत्तादृशमप्रियमभिधाय परमनुशयमनुतापं गतः अभिमना उत्कण्ठितचित्तः सन् उपेत्यागत्य सरुषः समन्योर्भवतस्तव माननां पूजां कर्तुं समीहते । अनुनेतुमिच्छतीत्यर्थः । अयं मधुरोऽर्थः ।

परुषस्तु—तदा तदप्रियमभिधाय परम् अनुशयं 'केवलं न शप्तव्यः, किन्तु हन्तव्यश्चे'ति दीर्घद्वेषं

(१) तदा ।

गतः प्राप्तः । 'रन्ध्रे 'शब्देऽथानुशयो दीर्घद्वेषानुतापयोः' इत्युभयत्राप्यमरः । अतएव नास्ति भीर्यस्येत्यभिनिर्भीकं मनो यस्य सोऽभिमनाः निःशङ्कचित्तः सन् उपेत्य स्वयमागत्य सरुषः सकोपस्य भवतो माननां हननं कर्तुं समीहते । 'मानना हनने माने' इत्युभयत्रापि केशवः । भवन्तं हन्तुमिच्छतीत्यर्थः । 'मन स्तम्भे' इति धातोश्चौरादिकाल्ल्युट्, णिचो लुक् । अत्र चतुर्दशश्लोक्यां परहृदयपरीक्षापराणां दूतानां प्रियाप्रिये द्वे अपि वक्तव्ये, चमत्काराय तु श्लेषभङ्ग्याऽभिधीयेते इति प्रियाप्रिययोर्द्वयोरपि प्रकृतत्वादाभिधेयत्वाच्छब्दमात्रसाधर्म्याच्च केवलप्रकृतगोचरः श्लेषः । 'प्रकृताप्रकृतोभयगतमुक्तं चेच्छब्दमात्रसाधर्म्यम् । श्लेषोऽय'मिति लक्षणात् । न चोभयगतः, निन्दास्तुत्योरन्यतरगम्यतया तदुत्थापनात् । इह 'उभयं युगपन्मयोदितं त्वरया सान्त्वमथेतरच्च ते' इति वक्ष्यमाणलिङ्गादुभयोर्वाच्यत्वावगमादित्यलं प्रपञ्चेन ॥ २ ॥

**विपुलेन निपीड्य निर्दयं मुदमायातु नितान्तमुन्मनाः ॥**
**प्रचुराधिगताङ्गनिर्वृतिं परितस्त्वां खलु विग्रहेण सः ॥ ३ ॥**

**विपुलेनेति** ॥ हे कृष्ण ! सः शिशुपालः विपुलेन महता विग्रहेण शरीरेण खलु निश्चितं परितः समन्तात् त्वां निर्दयं निपीड्य दृढमालिङ्ग्य नितान्तमत्यर्थं मुदमायातु हर्षं प्राप्नोतु । यतः किंलक्षणः सः उन्मना उत्कण्ठितः, किंलक्षणं त्वां प्रचुराधिगताङ्गनिर्वृतिं प्रचुरं बहु अधिगता प्राप्ता अङ्गनिर्वृतिः शरीरसौख्यं येन सः तथा तं, तदाश्लेषवशात् बहुप्राप्तशरीरसौख्यम् । इति प्रियम् ।

अप्रियं तु—स चैद्यः विपुलेन महता विग्रहेण युद्धेन निर्दयं यथा स्यात्तथा त्वां निपीड्य नितान्तमतिशयेन मुदमायातु हर्षं प्राप्नोतु । किंलक्षणः सः उन्मनाः मानी, यदि वा नितान्तमनल्पा मुत् तुष्टिर्यस्य मनसः तत् नितान्तमुत् एवंविधं मनश्चेतो यस्य सः तथा, किंलक्षणं त्वां प्रचुराधिगताङ्गनिर्वृतिं प्रचुरा बहुला आधयो मनःपीडाः यस्य सः प्रचुराधिः अत एव गता अङ्गनिर्वृतिः शरीरसौख्यं यस्य सः गताङ्गनिर्वृतिः, ततः कर्मधारयः, प्रचुराधिश्चासौ गताङ्गनिर्वृतिश्च तम् । सङ्ग्रामेण त्वां निपीडयिष्यति इत्यर्थः ॥ ३ ॥

विपुलेनेति ॥ उन्मना उत्सुकचेताः स चैद्यः परितः प्रचुरं प्रभूतं यथा तथा अधिगता प्राप्ता अङ्गनिर्वृतिः सुहृत्स्पर्शकृतमङ्गसुखं येन तं त्वां विपुलेन विशिष्टपुलकेन 'पुलः स्यात्पुलके नापि पुलं तु विपुलेऽन्यवत्' इति विश्वः । विग्रहेण वपुषा निर्दयं गाढं निपीड्याऽऽलिङ्ग्य नितान्तं मुदमायातु खलु ।

परुषस्तु—उन्मनाः मनस्वी स चैद्यः प्रचुरेणाधिना मनोव्यथया गताङ्गनिर्वृतिं विगतशरीरसौख्यं त्वां विपुलेन महता विग्रहेण समरेण । 'विग्रहः समरे काये' इति विश्वः । निर्दयं निष्कृपं निपीड्य हत्वा मुदमायातु ॥ ३ ॥

**शिरसाप्रणतः करिष्यते सकलैरेत्य समं नराधिपैः(१) ॥**
**तव शासनमाशु भूपतिः परवानद्य यतस्त्वयैव सः ॥ ४ ॥**

**शिरसेति** ॥ हे कृष्ण ! स भूपतिः शिशुपालः शिरसा प्रणतः मूर्ध्ना नम्रः सन् सकलैः समग्रैर्नराधिपैः समं राजभिः सह एत्यागत्य आशु शीघ्रं तव शासनं करिष्यते तवाज्ञां विधास्यति, यतः कारणात् स चैद्यः अधुना अद्य त्वयैव परवान् भवतैव नाथवान् । त्वमेव तस्य प्रभुः इत्यर्थः । प्रभोरादेशो ह्यवश्यं क्रियते इति । इति प्रियम् ।

अप्रियं तु—हे कृष्ण ! स चैद्यः सकलैर्नराधिपैः सममेत्यागत्य तव शासनं करिष्यते तव निग्रहं विधास्यते, स यतः त्वयैव परवान् भवतैव कृत्वा शत्रुमान् । त्वमेव तस्य रिपु-

(१) प्रणतः शिरसा''''धराधिपैः ।

रित्यर्थः । किंलक्षणः चैद्यः शिरसा अप्रणतः मानित्वात्कमपि न नतः । अथ वा शिरसा प्रणतः, अर्थात् भूपैरेव नमस्कृतः ॥ ४ ॥

प्रणत इति ॥ भूपतिः चैद्यः सकलैर्धराधिपैः समं सह एत्यागत्य शिरसा प्रणतः प्रणामं कृतवान् । कर्तरि क्तः । आशु तव शासनमाज्ञां करिष्यते त्वदाज्ञाकरो भविष्यति । कुतः–यतः स चैद्योऽस्मिन्नवसरे त्वय्येव परवांस्त्वदेकपरतन्त्रः ।

परुषस्तु—शिरसा प्रणतो नमस्कृतः नराधिपैरिति भावः । कर्मणि क्तः । भूपतिस्तव शासनं शास्ति शिक्षां करिष्यते, यतस्त्वय्येव परवाञ्छत्रुमान् । त्वमेक एवास्य शत्रुरवशिष्ट इति भावः । अन्यत्समम् । 'शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशास्तिषु' इति विश्वः ॥ ४ ॥

अधिवह्निपतङ्गतेजसो नियतस्वान्तसमर्थकर्मणः ॥
तव सर्वविधेयवर्तिनः प्रणतिं बिभ्रति केन भूभृतः ॥ ५ ॥

अधिवह्नीति ॥ हे कृष्ण ! के भूभृतः के राजानः तव प्रणतिं न बिभ्रति भवतो नतिं न धारयन्ति । अपि तु सर्व एव राजानः त्वयि नम्राः, अतो वयमपि प्रणता इत्यर्थः। किंलक्षणस्य तव अधिवह्निपतङ्गतेजसः अधि अधिकं वह्नेः वैश्वानरात् पतङ्गात् श्रीसूर्याच्च तेजो दीप्तिर्यस्य तथा तस्य, यदि वा (अधिगतं) वह्नेः पतङ्गात्तेजो येन सः तथा तस्य, अपरं किंलक्षणस्य तव नियतस्वान्तसमर्थकर्मणः नियतं स्वस्थं स्वान्तं मनो यस्य सः नियतस्वान्तः, समर्थं सङ्गतियोग्यं कर्म व्यापारो यस्य सः समर्थकर्मा, ततः कर्मधारयः, नियतस्वान्तश्चासौ समर्थकर्मा च नियतस्वान्तसमर्थकर्मा तस्य। अपरं किंलक्षणस्य तव सर्वविधेयवर्तिनः सर्वे लोका विधेयवर्तिनः आज्ञाकारिणो यस्य सः सर्वविधेयवर्ती तस्य । अतश्च के प्रणतिं न बिभ्रतीत्यर्थः । इति प्रियम् ।

अप्रियं तु–हे कृष्ण ! तव केन हेतुना भूभृतो राजानः प्रणतिं बिभ्रति नमन्ति, अपि तु न । किंलक्षणस्य तव अधिवह्निपतङ्गतेजसः अधिवह्नि वैश्वानरे पतङ्गस्य शलभस्येव तेजो यस्य सः पतङ्गतेजाः तस्य । विपक्षाग्निं प्रति शलभसदृशस्येत्यर्थः । अपरं किंलक्षणस्य तव नियतस्वान्तसमर्थकर्मणः नियतं निश्चितं चपलं वा स्वस्य आत्मनोऽन्तसमर्थं विनाशक्षमं कर्म व्यापारो यस्य सः तथा तस्य । शलभोऽपि हि स्वचापल्याद्वह्नौ निपत्य म्रियते । अपरं किंलक्षणस्य तव सर्वविधेयवर्तिनः सर्वेषां विधेयवर्तिनो वशवर्तिनो वचनकारिणो वश्यस्य । अतः केन गुणेन तव भूभृतः प्रणतिं बिभ्रति, अपि तु नेति ॥ ५ ॥

प्रणामे हेतुमाह —

अधिवह्नीति ॥ अधिगतं वह्निपतङ्गयोरग्निभान्वोरिव तेजो येन तस्य । तत्तुल्यतेजस इत्यर्थः । नियतस्वान्तो नियतचित्तः स चासौ समर्थकर्मा च, खञ्जकुब्जवद्विशेषणसमासः । तस्य तथोक्तस्य सर्वे विधेयवर्तिनो वशवर्तिनः कर्मकरा यस्य तस्य तव के भूभृतः प्रणतिं नतिं न बिभ्रति। सर्वेऽपि बिभ्रतीत्यर्थः।

परुषस्तु—प्रणामे हेतुमाह—अधिवह्नि अग्नौ पतङ्गस्य शलभस्येव तेजः पौरुषं यस्य तस्य । 'पतङ्गः शलभे भानौ' इति विश्वः । नियते अव्यभिचारे स्वान्ते स्वविनाशे समर्थं हेतुभूतं कर्म यस्य तस्य, सर्वेषां विधेये वर्तते विधेयं वर्तयति वा सर्वविधेयवर्तिनः सर्वकिङ्करस्य निष्पौरुषस्य तव केन गुणेन भूभृतः प्रणतिं बिभ्रति । न केनापीत्यर्थः ॥ ५ ॥

जनतां भयशून्यधीः परैरभिभूतामवलम्बसे यतः ॥
तव कृष्ण ! गुणास्ततो नरैरसमानस्य दधत्यगण्यताम् ॥ ६ ॥

अनतामिति ॥ हे कृष्ण! ततो हेतोः तव गुणाः सौन्दर्यादयः अगण्यतां दधति असङ्ख्यतां बिभ्रति। ततः कुतः, यतो हेतोः परैः शत्रुभिः अभिभूतां जनतां बाधितलोकसमूहम् अवलम्बसे वहसि। त्रायसे इत्यर्थः। किंलक्षणस्त्वं भयशून्यधीः भयेन भीत्या शून्या रहिता धीर्बुद्धिर्यस्य सः निर्भयचित्तः, किंलक्षणस्य तव नरैरसमानस्याऽतुल्यस्य सर्वोत्कृष्टस्य। इति प्रियम्।

अप्रियं तु-हे कृष्ण! पाप! यतस्त्वं भयशून्यधीः भयमूढबुद्धिः सन् परैरन्यैरभिभूतां वर्जितां पराभूतामपूजितां वा जनतां प्राकृतलोकसमूहम् अवलम्बसे आश्रयसि, अतः कारणात् तव गुणाः अगण्यतां दधति अकथ्यतां धारयन्ति। कथनीया न भवन्तीत्यर्थः। किंलक्षणस्य तव नरैः पुरुषैरसमानस्य सह मानेन पूजया वर्तते इति समानः, तद्विपरीतः असमानः तस्य। पुरुषैः अपूजितस्येत्यर्थः ॥ ६ ॥

अनतामिति ॥ हे कृष्ण! हे हरे! भयशून्यधीर्निर्भीकचित्तः सन् परैः शत्रुभिरभिभूता जनतां जनसमूहम्। 'ग्रामजन—' इत्यादिना समूहे तल् प्रत्ययः। यतोऽवलम्बसे परिगृह्णासि। रक्षसीत्यर्थः। अतो हेतोर्नरैरसमानस्य सर्वोत्कृष्टस्य तव गुणा आर्तभूमरणादयः अगण्यतामसङ्ख्येयतां दधाति।

परुषस्तु-हे मलिनात्मक! भयशून्यधीर्मूढबुद्धिः परैस्त्वदन्यैः। 'परं दूराऽन्यमुख्येषु परोऽरिपरमात्मनोः' इत्युभयत्रापि वैजयन्ती। अभिभूतामवधीरितां जनतां पशुपालनपारतन्त्र्यादिना पृथग्जनत्वम्। भावेऽर्थे तल्प्रत्ययः। यतोऽवलम्बस आश्रयसि, ततो नरैरसमानस्य। ततोऽपि हीनस्येत्यर्थः। तव गुणाः लेशतः स्वभावतोऽपीति भावः, अगण्यतामनादरणीयतां दधाति ॥ ६ ॥

अहितादनपत्रपस्त्रसन्नतिमात्रोज्झितभीरनास्तिकः।
विनयोपहितस्त्वया कुतः सदृशोऽन्योगुणवानविस्मयः ॥ ७ ॥

अहितादिति ॥ हे कृष्ण! त्वया सदृशः भवता समानः अन्यः अपरः एवंविधः कुतो गुणवान् गुणयुक्तः। किंलक्षणस्त्वमिति तानेव गुणानाह—अहितात् पापात् त्रसन् बिभ्यत् अकार्यभीरुः, अपरं किंलक्षणः अनपत्रपः अपगता त्रपा यस्य सः अपत्रपः गतलज्जः न अपत्रपः अनपत्रपः सलज्जः। खललक्षणं धाष्ट्र्यम्। अपरं किंलक्षणः त्वम् अतिमात्रोज्झितभीः अतिमात्रमत्यर्थम् उज्झिता परित्यक्ता भीर्भयं येन सः तथा, अपरं किंलक्षणः त्वम् अनास्तिकः नास्ति परलोकमतिर्यस्य स नास्तिकः, न नास्तिकः अनास्तिकः। धर्मिष्ठ इत्यर्थः। अपरं किंलक्षणः विनयोपहितः विनयेन आचारेणोपहितो युक्तः। जितेन्द्रिय इत्यर्थः। अपरं किंलक्षणः अविस्मयः विगतः स्मयो गर्वो यस्य सः विस्मयः, न विस्मय अविस्मयः। सगर्व इत्यर्थः। पेशलः अन्यशब्द इवार्थे विशेषणत्वेऽपि एषां विशभगवशेषणमेवं प्रतीयते(?)। अन्यत्र ह्येते गुणा निषेध्यन्ते भगवति विधीयन्ते। एवंविधस्त्वया सदृशः कुतो गुणवान्, त्वमेव गुणविशिष्ट इत्यर्थः। इति प्रियम्।

अप्रियं तु-विपर्ययेण, हे कृष्ण! अन्य एवंविधः त्वया सदृशः कुतोऽगुणवान् त्वया सदृशो निर्गुणः कुतो भवेत्। यादृशो निर्गुणस्त्वं,तादृशोऽन्यो न विद्यते इत्यर्थः। तावदत्राऽन्यविशेषणद्वारेणाह-किंलक्षणस्त्वम् अहितात् शत्रोः त्रसन् कातरत्वात्, अपरं किंलक्षणः अनपत्रपः न विद्यमाना अपत्रपा लज्जा यस्य सः तथा निर्लज्जः, अपरं किंलक्षणः नतिमात्रोज्झितभीः नतिमात्रेण नम्रत्वमात्रेण उज्झिता त्यक्ता भीर्येन सः तथा। परस्य नम्रा-

भूतत्वात् स्वस्थ इत्यर्थः । अपरं किंलक्षणः अनास्तिकः अस्तीति मतिर्यस्य स आस्तिकः न आस्तिकोऽनास्तिकः । पापी इत्यर्थः । अपरं किंलक्षणः विनयः विगतो नयो नीतिर्यस्य सः तथा दुर्विनीतः, अपरं किंलक्षणः अपहितः अपगतं हितं यस्य सः तथा विमुखः, अपरं किंलक्षणः अविस्मयः अवेः पशोरिव स्मयो दर्पो यस्य सः तथा । हुडशौर्य-इत्यर्थः । यदि वा विस्मयजनकं कर्मैव विस्मयः, स न विद्यते यस्य स अविस्मयः । केचित्तु–त्वया सदृशः कोऽन्यो ना पुरुषः अस्तीति व्याचक्षते । एवं च कुत इति यथासङ्गतं स्यात् ॥ ७ ॥

अहितादिति ॥ त्वया सदृशोऽन्यो गुणावान्गुणाढ्यः कुतः । न कुत्रापीत्यर्थः । कुतः—त्वम् अहिता-दनर्थात्त्रसन् । अधर्मभीरुरित्यर्थः । अपत्रपो निस्त्रपो न भवतीत्यनपत्रपस्त्रपावान् । अकार्यजुगुप्सुरित्यर्थः । अतिमात्रमत्यन्तमुज्झितभीः । त्यक्ताऽरिभय इत्यर्थः । नास्ति मतिरस्येति नास्तिकः नास्तिपरलोकः । 'अस्तिनास्तिदिष्टं मतिः' इति ठक् । स न भवतीत्यनास्तिकः । आस्तिक इत्यर्थः । विनयेनाऽनौद्धत्येनो-पहितो विशिष्टः । विनयवानित्यर्थः । विस्मयो विशिष्टगर्वो न भवतीत्यविस्मयोऽगर्वः ।

परुषस्तु—त्वया सदृशोऽन्यो गुणवान् न भवतीत्यगुणवान्निर्गुणः कुतः । न कुत्रापीत्यर्थः । कुतः—त्वम् अहिताच्छत्रोस्त्रसन् भीरुः । नास्त्यपत्रपा लज्जाविशेषो यस्येत्यनपत्रपो निर्लज्जः । 'लज्जा सापत्रपाऽन्यतः' इत्यमरः । नतिमात्रेण प्रणामेनैवोज्झितभीरपाकृताऽरिभयः, न तु पराक्रमेणेति भावः । अस्ति मतिरस्येत्या-स्तिकोऽस्तिपरलोकः । पूर्ववत् ठक् । स न भवतीत्यनास्तिकः । नास्तिक इत्यर्थः । विनयो नयातीतः, अप-हितो हितादपेतः, विस्मयो विगर्वो न भवतीत्यविस्मयो गर्वी । गर्वयुक्त इत्यर्थः ।अत्राऽहितादित्यर्थश्लेषः । अन्यत्र शब्दश्लेष इत्यनयोः सङ्करः ॥ ७ ॥

**कृतगोपवधूरतेर्घ्नतो वृषमुग्रे नरकेऽपि सम्प्रति ॥**
**प्रतिपत्तिरधःकृतैनसो जनताभिस्तव साधु वर्ण्यते ॥ ८ ॥**

कृतेति ॥ हे कृष्ण ! तव भवतः उग्रे उत्कटे नरके भूमितनये दानवे प्रतिपत्तिः वधाय अनुष्ठानं जनताभिः कृतोद्योगैः जनसमूहैः सम्प्रतीदानीं साधु वर्ण्यते समीचीनं स्तूयते । हरिणा शोभनं कृतमिति पुनःपुनः कथ्यते इत्यर्थः । यतः उग्रो नरकासुरोऽवधीति यशस्तव सर्वत्र गीयते । किंलक्षणस्य तव कृतगोपवधूरतेः कृता विहिता गोपवधूनां गोपा-ङ्गनानां रतिः प्रीतिर्येन सः तथा तस्य, यद्वा गां पृथिवीं पान्ति रक्षन्तीति गोपाः राजानः तद्वधूनां कृतप्रीतेः, तव किं कुर्वतः वृषं दान्तरूपिणमरिष्टाख्यं दानवं घ्नतो मारयतः, हन्तीति घ्नन् तस्य घ्नतः, अपरं किंलक्षणस्य तव अधःकृतैनसः अधःकृतम् अस्पृष्टम् एनः पातकं येन सोऽधःकृतैनाः तस्य, पुण्यवत इत्यर्थः । इति प्रियम् ।

अप्रियं तु–हे कृष्ण ! उग्रे घोरे नरके अवीचिमहातामिस्रादौ अधः प्रतिपत्तिः पतनं प्राप्तिर्वा जनताभिःजनसमूहैः अधुना साधु अत्यर्थं वर्ण्यते । कृष्णो नरके पतेदिति पुनः-पुनः कथ्यते । किंलक्षणस्य तव कृतैनसः अङ्गीकृतपापस्य । कृतैनाः पापिष्ठस्त्वम् । एतदपि कुत इत्याह—किंलक्षणस्य तव कृतगोपवधूरतेः कृता गोपवधूनां रतिः सुरतं येन सः तथा तस्य, अपरं किंलक्षणस्य तव वृषमनड्वाहं घ्नतः । परदारगमनं गोवधश्च महापापम् । यतः कृतैनसः नरके पतनं युक्तं कथ्यते ॥ ८ ॥

कृतेति ॥ गोप्य एव वध्वो गोपवध्वः । 'स्त्रियाः पुंवत्—' इत्यादिना पुंवद्भावः । तासु रतिः कृता येन तस्य । गोपीजनवल्लभस्येत्यर्थः । वृषं वृषभरूपिणमरिष्टाख्यमसुरं घ्नतो मारयतः । हन्तेर्लटः शत्रादेशः ।

अधःकृतैनसो निरस्तकल्मषस्य तवाग्रे भयङ्करे नरके नरकासुरे प्रतिपत्तिः प्रवृत्तिः, पुरुषकार इति यावत्। सम्प्रति जनताभिर्जनसमूहैः साधु वर्ण्यते। अहो! महद् दुष्करं कृतमित्युपश्लोक्यते।

परुषस्तु—गोपानां वधूषु रतिः कृता येन तस्य पारदारिकस्य, वृषं धर्मं वृषभं वा घ्नतः। 'सुकृते वृषभे वृषः' इति विश्वः। अत एव कृतैनसः पापकृतः तव उग्रे दारुणे नरके निरये अधःप्रतिपत्तिरधःप्राप्तिः। 'प्रतिपत्तिः पदप्राप्तौ पौरुषे गौरवेऽपि च' इति विश्वः। जनताभिः साधु वर्ण्यते। दुस्तरोऽस्य पापिष्ठस्य नरकपात इत्युद्घोष्यत इत्यर्थः। अत्र गोपपरदारिकोऽप्यधःकृतैना इति विरोधाभासः श्लेषेण सङ्कीर्यते॥ ८॥

**विहिताऽपचितिर्महीभुजा(१) द्विषतामाहितसाध्वसो बलैः॥**
**भव सानुचरस्त्वमुच्चकैर्महतामप्युपरि क्षमाभृताम्॥ ९॥**

**विहितेति**॥ हे कृष्ण! त्वं महतामपि प्रौढकुलैश्वर्याणामपि क्षमाभृतां राज्ञाम् उपरि भव प्रधानं सम्पद्यस्व। किंलक्षणस्त्वं सानुचरः सभृत्यः, अपरं किंलक्षणस्त्वं महीभुजा राज्ञा विहिताऽपचितिः कृतसम्मानः, अत एव अपरं किंलक्षणस्त्वं बलैः सैन्यैः द्विषतां शत्रूणाम् आहितसाध्वसः कृतकम्पः, अपरं किंलक्षणस्त्वम् उच्चकैरुन्नतः। इति प्रियम्।

अप्रियं तु—हे कृष्ण! त्वं महतामपि अत्युच्चानामपि क्षमाभृतां पर्वतानाम् उपरि पृष्ठे सानुचरो भव सानुगो भव। यद्वा सानुषु शृङ्गेषु चरति गच्छतीति सानुचरः। किंलक्षणस्त्वं महीभुजा शिशुपालेन विहिताऽपचितिः विशेषेण हिता त्यक्ता अपचितिः पूजा यस्य सः त्वं कृतपूजात्यागः कृतपूजाक्षयो वा, अपरं किंलक्षणस्त्वं द्विषतां शत्रूणां बलैः सैन्यैः आहितसाध्वसः जनितकम्पः॥ ९॥

विहितेति॥ सहानुचरः सानुचरः सभृत्यो महीभृता चैद्येन विहिताऽपचितिः कृतपूजः। लोकवेदयोः सानुचरस्यैव राज्ञः पूज्यत्वप्रसिद्धेरिति भावः। अत एव बलैः सैन्यैर्द्विषतां शत्रूणामाहितसाध्वसो जनितभयः सन् महतामपि क्षमाभृतां राज्ञामुपर्युच्चकैरुन्नतस्त्वं भव सर्वोत्कर्षेण वर्तस्व।

परुषस्तु—महीभृता चैद्येन विहिताऽपचितिः कृतहानिः। 'भवेदपचितिः पूजाव्ययहानिषु निष्कृतौ' इति विश्वः। अत एव द्विषतां बलैराहितसाध्वसो भीषितः सन् महतां क्षमाभृतां भूधराणामुपरि सानुषु चरतीति सानुचरः स भव। चरेष्टः। अत्रापि शब्दार्थश्लेषसङ्करः॥ ९॥

**घनजालनिभैर्दुरासदाः परितो नागकदम्बकैस्तव॥**
**नगरेषु भवन्तु वीथयः परिकीर्णा वनजैर्मृगादिभिः॥ १०॥**

**घनेति**॥ हे कृष्ण! अतश्च मैत्र्यां विहितायां तव नगरेषु भवतः पत्तनेषु वीथयो रथ्याः वनजैः अरण्यभवैः मृगादिभिः मृगभद्रमन्दादिभिः नागकदम्बकैः गजसमूहैः परिकीर्णाः भवन्तु समन्ताद्भावेन व्याप्ताः सम्पद्यन्ताम्। किंलक्षणैः नागकदम्बकैः वनजैः वानेयैः, अपरं किंलक्षणैः नागकदम्बकैः घनजालनिभैः मेघपटलवन्मलिनैः, किंलक्षणा वीथयः दुरासदाः कैरपि शत्रुभिर्दुष्प्रवेश्याः। इति प्रियम्।

अप्रियं तु—हे कृष्ण! तव नगरेषु वीथयो रथ्याः वनजैः वनभवैः मृगादिभिः सिंहव्याघ्रवराहशशकजम्बुकहरिणादिभिः परिकीर्णाः परितः समन्तात् कीर्णाः व्याप्ताः भवन्तु सम्पद्यन्ताम्। किंलक्षणाः रथ्याः नागकदम्बकैः सर्पव्रातैः दुरासदाः दुष्प्रवेश्याः, किंलक्षणैः सर्पव्रातैः घनजालनिभैः संहतजलाकारपञ्जरसदृशैः। जलाकार 'बाऊआ' इति प्राकृतम्॥ १०॥

घनेति॥ तव नगरेषु वीथयो रथ्याः घनजालनिभैर्मेघसमूहकल्पैः वनजैर्वनभवैर्मृगादिभिः मृगप्रभृ-

(१) महीभृता।

तिभिः । भद्रो मन्द्रो मृगश्चेत्येवं त्रिविधैरपीत्यर्थः । नागकदम्बकैर्गजवृन्दैः परितः परिकीर्णा व्याप्ताः अत एव दुरासदा दुष्प्रवेशा भवन्तु । राज्ञा सन्धाने महैश्वर्यं च ते भविष्यतीत्यर्थः ।

परुषस्तु—घनजालनिभैः सान्द्राऽऽनायतुल्यैः । 'आनायः पुंसि जालं स्यात्' इत्यमरः । नागकदम्बकैः सर्पसङ्घैर्वनजैर्मृगव्यालपुलिन्दप्रभृतिभिः, अथ वा मृगादिभिः मृगभक्षकैः शार्दूलादिभिः दुरासदा भवन्तु । राजविग्रहादरण्यप्रायं गता भवन्त्वित्यर्थः ॥ १० ॥

**सकलाऽपिहितस्वपौरुषो नियतव्यापदवर्धितोदयः ॥**
**रिपुरुन्नतधीरचेतसः सततव्याधिरनीतिरस्तु ते ॥ ११ ॥**

सकलेति ॥ हे कृष्ण ! ते तव रिपुः शत्रुः चैद्यः एवंविध उक्तप्रकारोऽस्तु भवतु । किंलक्षणो रिपुः सकलाऽपिहितस्वपौरुषः सकलं समस्तम् अपिहितं स्थगितमाच्छादितं स्वपौरुषं निजपराक्रमो यस्य सः तथा, अपरं किंलक्षणो रिपुः नियतव्यापत् नियता निश्चिताः व्यापद आपत्तयो व्यसनानि यस्य सः तथा, अपरं किंलक्षणो रिपुः अवर्धितोदयः अवर्धितः उदयं न गतः न प्राप्तः वृक्षाग्रवत् उदयः उन्नतिः गुरुत्वं यस्य सः तथा, अपरं किंलक्षणो रिपुः सततव्याधिः सततं निरन्तरं सदा व्याधयो रोगाः ज्वरादयो यस्य सः तथा, अपरं किंलक्षणो रिपुः अनीतिः न विद्यमाना नीतिर्नयपदवी यस्य सः तथा, किंलक्षणस्य तव उन्नतधीरचेतसः उन्नतमतिविपुलं धीरमगाधं गम्भीरम् अपरिकलितं चेतो मानसं यस्य सः तथा तस्य । इति प्रियम् ।

अप्रियं तु हे कृष्ण ! अचेतसोऽबुद्धेः चेतोरहितस्य अज्ञानस्य तव रिपुः शत्रुः शिशुपालः एवंविधोऽस्तु भवतात् । किंलक्षणस्तव रिपुः चैद्यः सकलाऽपिहितस्वपौरुषः सकलं समस्तमपिहितं स्थगितं परैरनाक्रान्तं पौरुषं पराक्रमः शौर्यं यस्य सः तथा, अथ वा सकलानाम् अर्थात्सर्वेषां राज्ञाम् ( आसमन्तात् ) पिहितमाच्छादितं स्वमसाधारणं पौरुषं पुरुषकारो येन सः तथा । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो'-रित्यनेन अकारलोपः । अपरं किंलक्षणो रिपुः नियतव्यापत् नियता नित्या विगता आपत् विपत्तिर्यस्य सः तथा, अपरं किंलक्षणो रिपुः अवर्धितोदयः अवर्धितः अविच्छिन्नः उदय-उत्तरकालसुखं यस्य सः तथा । 'वृधु छेदने'ऽस्य वर्धितेति रूपम् । यदि वा अवर्धितः अक्षीणः भवन्तं प्रति योऽदयो निर्दयो दयारहितः, अपरं किंलक्षणो रिपुः उन्नतधीः उन्नता उदारा धीर्बुद्धिर्यस्य सः तथा, अपरं किंलक्षणो रिपुः सततव्याधिः सततं विगता नित्यमेव गताः आधयो मनःपीडा यस्मात् सः तथा, अपरं किंलक्षणो रिपुः अनीतिः न विद्यमाना ईतयः अतिवृष्ट्यादयः उपद्रवा यस्य सः तथा । एतेन भवदभिभवेन राजा महोदयो भवत्विति वाक्यार्थः ॥ ११ ॥

सकलेति ॥ उन्नतमुदारं धीरमविकारं चेतो यस्य तस्य ते तव रिपुः सकलैरपिहितं तिरस्कृतं स्वपौरुषं यस्य सः, नियता नित्याः व्यापदो विशिष्टापदो यस्य सः, अवर्धितोदयोऽसम्पूरिताभ्युदयः, सततव्याधिः सततरोगः, अनीतिर्नीतिरहितः एवंविधोऽस्तु ।

परुषस्तु—अचेतसोऽमनस्विनः ते रिपुश्चैद्यः सकलैरपिहितस्वपौरुषः अतिरस्कृतात्मविक्रमः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यलोपे नञ्समासः। नियतं नित्यं व्यापद्विगतापत् अवर्धितोदयोऽच्छिन्नोदयः । 'वृधु च्छेदने वृद्धौ' इति धातोः कर्मणि क्तः । उन्नतधीरुदारबुद्धिः सततव्याधिर्विगताधिर्मनोव्यथारहितः अनीतिः ईतिबाधारहितोऽस्तु ।

'अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः ।
प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः' ॥

अत्र सर्वत्र पदभङ्गेनार्थद्वयप्रतिपादनाज्जतुकाष्ठवदेकशब्दप्रतीतेः शब्दश्लेषः ॥ ११ ॥

**विकचोत्पलचारुलोचनस्तव चैद्येन घटामुपेयुषा(१) ॥**
**यदुपुङ्गव ! बन्धुगौरवादपि(२) पाता ससुरो नवासवः ॥ १२ ॥**

विकचेति ॥ हे यदुपुङ्गव ! हे यादवनन्दन ! हे कृष्ण! चैद्येन शिशुपालेन घटामुपेयुषा मैत्रीप्राप्तेन सता तव सम्बन्धी बन्धुवर्गः ससुरः सुरासहितो नवाऽऽसवः प्रत्यग्रपानं पाता पास्यते । सन्धौ हि विहिते परस्परगृहगमनमधुपानादिकं च क्रियते इति स्थितिः । कस्माद् बन्धुगौरवादपि स्वजनबहुमानात्। यतो हि त्वं तस्य मातुलजः । किंलक्षणो नवाऽऽसवः विकचोत्पलचारुलोचनः विकचानि उत्फुल्लानि उत्पलानि पद्मान्येव चारूणि मनोहराणि लोचनानि चक्षूंषि यस्य सः तथा । आसवे हि पद्मानि निक्षिप्यन्ते इति स्थितिः । इति प्रियम् ।

अप्रियं तु–हे यदुपुङ्गव ! हे यादबलीवर्द ! कृष्ण ! चैद्येन घटामुपेयुषा करिघटामारूढेन सता ससुरो देवसहितः वासवोऽपि इन्द्रोऽपि तव भवतः न पाता न रक्षिष्यति, किं पुनर्भीष्मादयः । इन्द्रस्य रक्षायां कारणमाह—कस्मात् बन्धुगौरवात् भ्रातृस्नेहात् । तस्योपेन्द्रत्वादित्यर्थः । किंलक्षणो वासवः विकचोत्पलचारुलोचनः विकसितेन्दीवरदिव्यनयनः ॥ १२ ॥

विकचेति ॥ पुमान् गौरिव पुङ्गवः पुरुषर्षभः । उपमितसमासः । 'गोरतद्धितलुकि' इति समासान्तष्टच्प्रत्ययः । यदुपु पुङ्गव ! यदुश्रेष्ठ ! । 'श्रेष्ठोक्षाणौ तु पुङ्गवौ' इति वैजयन्ती । चैद्येन कर्त्रा घटां घनसन्धिमुपेयुषस्तव सम्बन्धीनि विकचोत्पलानि वासनार्थविहितानि तान्येव चारुलोचनानि यस्य सः । सह सुरया माध्व्या गौड्या वा ससुरः । 'गौडी पैष्टी च माध्वी च विज्ञेया सा सुरा त्रिधा' इति वचनात् । अत्र क्षत्रियवैश्ययोः पैष्ट्यामेव निषेधः । नवासवो नवमयं नालिकेरादिकामिति सुरासवयोर्न पौनरुक्त्यम् । बन्धुसौहृदाद्बन्धौ त्वयि स्नेहात् पाता पास्यते त्वद्गृहे सह पानं करिष्यते । सम्प्रति ते सत्प्रतिपक्षत्वादिति भावः । पिबतेः कर्मणि लुट् ।

परुषस्तु—हे यदुपुङ्गव ! यादवबलीवर्द ! चैद्येन सह घटामुपेयुषः समराभियोगं गतस्य तव विकचोत्पलचारुलोचनः ससुरः सदेवो वासवोऽपि बन्धुसौहृदात् । उपेन्द्रे त्वयि सौभ्रात्रादित्यर्थः । पाता त्राता न । किं पुनर्मशका भीष्मादय इति भावः । पातेस्तृच् । सुहृदयस्य भावः सौहृदमिति विग्रहः । युवादित्वादण्प्रत्ययः । 'हृदयस्य हृल्लेख—' इति हृद्भावविधानसामर्थ्यान्न 'हृद्भग—' इत्युभयपदवृद्धिः । अत एव 'सौहृददौर्हृदशब्दावपि हृद्भावात्' इति वामनः । सुहृदस्तु सौहार्दमेव । शब्दार्थश्लेषसङ्करः ॥ १२ ॥

**चलिताऽऽनकदुन्दुभिः पुरः सबलस्त्वं सहसारणेन तम् ॥**
**समितौ रभसादुपागतं (३) सगदः सम्प्रतिपत्तुमर्हसि ॥ १३ ॥**

चलितेति ॥ हे कृष्ण ! त्वं चैद्यं सम्प्रतिपत्तुमर्हसि प्राप्तुं योग्योऽसि, किंलक्षणं चैद्यं समितौ सभायां रभसादौत्सुक्यात् उपागतं प्राप्तम् । किं केवलस्त्वं नेत्याह—किंलक्षणस्त्वं पुरः अग्रे चलितानकदुन्दुभिः चलितः आगतः आनकदुन्दुभिः वसुदेवो यस्य

(१) ०मुपेयुषः । (२) बन्धुसौहृदात्त्वयि । (३) ०दुपागतः ।

सः तथा । अग्रे त्वत्पिता निर्यात्वित्यर्थः । अपरं किंलक्षणस्त्वं सबलः सह बलेन बलभद्रेण ज्येष्ठभ्रात्रा(?) वर्तते इति तथा । कथं सम्प्रतिपत्तुमर्हसि इत्याह—सारणेन सह कनीयसा भ्रात्रा सह समम्, अपरं किंलक्षणस्त्वं सगदः सह गदेन अनुजेन सह वर्तमानः सगदः । त्वत्समागमोत्कण्ठया सभायामागतं सम्मानयितुमर्हसि । इति प्रियम् ।

अप्रियं तु–हे कृष्ण ! त्वं रभसात् क्षोभेण समितौ सङ्ग्रामे उपागतं तं चैद्यं सहसा झटित्येव रणेन युद्धेन सम्प्रतिपत्तुं प्रत्येतुम् अर्हसि युद्धार्थं प्राप्तुं योग्योऽसि । युद्धार्थमनेन त्वं मा पलायिष्यसे इत्यर्थः । किंलक्षणस्त्वं चलितानकदुन्दुभिः पुरः चलिताः ताडिता आनकाः पटहा दुन्दुभयो भेर्यश्च यस्य सः तथा, अपरं किंलक्षणस्त्वं सबलः ससैन्यः, अपरं किंक्षणस्त्वं सगदः सह गदया वर्तते इति तथा सहायुधः सकौमोदकीकः॥१३॥

चलितेति ॥ रभसाद्धर्षादुपागतः प्राप्तस्तं चैद्यं त्वं पुरश्चलितानकदुन्दुभिः पुरोगतवसुदेवः । 'वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः' इत्यमरः । सबलो बलभद्रसहितः । सारणेन सारणाख्येन पुत्रेण सह सगदः गदाख्येनानुजेन सहितः समितौ सभायां सम्प्रतिपत्तुं सम्भावयितुमर्हसि सर्वबन्धुसमेतः प्रत्येतुमर्हसीत्यर्थः ।

परुषस्तु—समितौ समरे रभसाद्वेगादुपागतः ।

'रभसो वेगहर्षयोः ।

समितिः समरे साम्ये सभायामपि सङ्गता' ॥

इत्युभयत्रापि विश्वः । तं चैद्यं पुरतश्चलिता आनकाः पटहाः दुन्दुभयो भेर्यश्च यस्य सः । 'आनकपटहोऽस्त्री स्याद्भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । सबलः ससैन्यः सगदः गदया कौमोदक्या सहितः सन् सहसा झटिति रणेन युद्धेन सम्प्रतिपत्तुमभियोक्तुमर्हसि । अत्रापि शब्दार्थश्लेषसङ्करः ॥ १३ ॥

**समरेषु रिपून् विनिघ्नता शिशुपालेन समेत्य सम्प्रति ॥**
**सुचिरं सह सर्वसात्वतैर्भव विश्वस्तविलासिनीजनः ॥ १४ ॥**

**समरेष्विति** ॥ हे कृष्ण ! त्वं सम्प्रति अधुना शिशुपालेन समेत्य चैद्येन सह सन्धि कृत्वा सर्वसात्वतैः सह समस्तयादवैः सार्धं सुचिरं बहुकालं विश्वस्तविलासिनीजनः भव सुखितललनाजनः सम्पद्यस्व । कलहे हि स्त्रीणां भयं भवति किल । किंलक्षणेन शिशुपालेन समरेषु सङ्ग्रामेषु रिपून् विनिघ्नता शत्रून् नाशयता । इति प्रियम् ।

अप्रियं तु–हे कृष्ण ! समरेषु सङ्ग्रामेषु शिशुपालेन समेत्य मिलित्वा सर्वसात्वतैः सह समस्तयादवैः सार्धं विश्वस्तविलासिनीजनो भव विधवयुवतिको भव सम्पद्यस्व । म्रियन्तां भवता सह सर्वे एव यादवाः इत्यर्थः । किंलक्षणेन शिशुपालेन रिपून् घ्नता शत्रून् मारयता । अत्र शिशुपालेनेति साभिप्रायं नाम । अस्मासु हतेषु यदि असौ शिशून् हनिष्यतीति मा शङ्कीरिति । विश्वस्तजननीभिः सहाऽसौ शिशून् पालयिष्यति इत्यर्थः । 'विश्वस्ताविधवे समे' ॥ १४ ॥

समरेष्विति ॥ किञ्च समरेषु रिपून् विनिघ्नता । अतिशूरेणेत्यर्थः । शिशुपालेन समेत्यैक्यं प्राप्य सम्प्रति सुचिरं बहुकालं, सत्वतः अपत्यानि पुमांसः सात्वता यादवाः। उत्सादिभ्योऽञ् । तैः सर्वैः सर्वसात्वतैः सह विश्वस्तविलासिनीजनः शिशुपालभयनिवृत्तिविश्रब्धविलासिनीजनो भव । 'समौ विश्रम्भविश्वासौ' इत्यमरः ।

परुषस्तु—रिपुघातिना शिशुपालेन सह समरेषु समेत्य सङ्गत्य सम्प्रत्येव सर्वसात्वतैः सह विश्वस्तविलासिनीजनो भव । 'विश्वस्ताविधवे समे' इत्यमरः । 'आदितश्च' इति चकारादनुक्तसमुच्चयार्थात्

च्वसेर्निष्ठायामिट्प्रतिषेधः । शिशूनामनुद्धतानामेवाऽयं पालयिता नोद्धतानामिति सर्वथा यादवानथैव हनिष्यतीति भावः ॥ १४ ॥

**विजितक्रुधमीक्षतामसौ महतां त्वामहितं महीभृताम् ॥**
**असकृज्जितसंयतं पुरो मुदितः सप्रमदं महीपतिः ॥ १५ ॥**

**विजितेति ॥** हे कृष्ण ! असौ महीपतिः चैद्यः मुदितः प्रहृष्टः सन् त्वा त्वां भवन्तं पुरः अग्रे एवंविधम् ईक्षतां पश्यतु । किंलक्षणं त्वां विजितक्रुधं त्यक्तमन्युम्, अपरं किंलक्षणं त्वां क्षमाभृतां राज्ञां महितं पूजितम्, अपरं किंलक्षणं त्वाम् असकृत् बहुकृत्वः जितसंयतं पराजितसमरम्, अपरं किंलक्षणं त्वां सप्रमदं सहर्षम् । इति प्रियम् ।

अप्रियं तु–हे कृष्ण ! असौ महीपतिश्चैद्यो मुदितः सन् सप्रमदं सस्त्रीकं त्वां जितसंयतं पूर्वं जितं पश्चात्संयतं बद्धम् ईक्षतां पश्यतु । किंलक्षणं त्वां विजितक्रुधं अशक्त्या उत्सृष्टकोपम्, अपरं किंलक्षणं त्वां महीपतीनां चैद्यादीनाम् अहितं विपक्षमिति सर्वत्र स्तुतिनिन्दात्मको व्याजश्लेषोऽलङ्कारः । इति द्व्यर्थाः ॥ १५ ॥

विजितेति ॥ असौ महीपतिश्चैद्यः मुदितः सन् विजितक्रुधं मैत्रीबन्धान्निरस्तक्रोधं महतां महीभृतां राज्ञां महितं पूजितम् । 'मतिबुद्धि—' इत्यादिना वर्तमाने क्तः, तद्योगे षष्ठी । असकृद्बहुशो जिताः संयतः आजयो येन स तम् । 'समुदायः स्त्रियां संयत्समित्याजिसमिद्युधः' इत्यमरः । सप्रमदं सहर्षं त्वा त्वाम् । 'त्वामौ द्वितीयायाः' इति त्वादेशः । पुरोऽग्रे ईक्षतां पश्यतु ।

परुषस्तु–विजितक्रुधं संत्यक्तक्रोधं महतां महीभृतां चैद्यादीनामहितमरिम्, असकृज्जितश्चासौ संयतश्च तम् । स्नातानुलिप्तवत् 'पूर्वकाले'ति समासः । 'बद्धो नद्धश्च संयतः' इति वैजयन्ती । सप्रमदं सस्त्रीकं, त्वामिति पदच्छेदः, असकृदीक्षताम् ॥ १५ ॥

**इति जोषमवस्थितं द्विषः प्रणिधिं गामभिधाय सात्यकिः ॥**
**वदति स्म वचोऽथ नोदित(१)श्चलितैकभ्रु रथाङ्गपाणिना ॥ १६ ॥**

**इतीति ॥** अथ अनन्तरं सात्यकिः शिनिनन्दनो यादवः द्विषः शत्रोः चैद्यस्य प्रणिधिं चरं प्रति वचः वदति स्म वाक्यमवादीत् । किंलक्षणः सात्यकिः रथाङ्गपाणिना चक्रधरेण श्रीकृष्णेन नोदितः प्रेरितः, कथं यथा भवति तथा चलितैकभ्रु यथा भवति तथा चलिता नर्तिता एका केवला भ्रूर्भ्रुकुटिः मुखराजि(?)र्यत्र तत् । अक्षिसङ्कोचनेन कृतसंज्ञमित्यर्थः । किंलक्षणं प्रणिधिम् इति पूर्वोक्तप्रकारेण गां वाचमभिधाय उक्त्वा जोषं स्थितं तूष्णींभूतम् ॥

इतीति ॥ इतीत्थंभूतां गां वाचम् । 'अर्जुनीनेत्रदिग्बाणभूवाग्वारिषु गौर्मता' इति विश्वः । अभिधाय जोषमवस्थितम् । 'तूष्णीं जोषं भवेन्मौने' इति वैजयन्ती । द्विषः प्रणिधिं दूतं सात्यकिः शैनेयः अथ दूतवाक्यानन्तरं रथाङ्गं चक्रं पाणौ यस्य तेन रथाङ्गपाणिना हरिणा । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति पाणेः परनिपातः । चलिता प्रेरिता एका भ्रूर्यस्मिन्कर्मणि तत् । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । चोदितः, अस्योत्तरं देहीति भ्रूसंज्ञया प्रेरितः सन्नित्यर्थः । वचो वदति स्माऽवादीत् ॥ १६ ॥

किमुवाचेत्यत आह—

**मधुरं बहिरन्तरप्रियं कृतिनाऽवाचि वचस्तथा त्वया ॥**
**सकलार्थतया विभाव्यते प्रियमन्तर्बहिरप्रियं यथा ॥ १७ ॥**

**मधुरमिति ॥** यत्, हे दूत ! त्वया तथा तेन प्रकारेण कृतिना सता विदुषा सता वचः अवादि वाक्यमुक्तम् । किंलक्षणं वचः बहिः प्रकटं मधुरं प्रियम्,

---

(१) चोदित ।

अपरं किंलक्षणं वचः अन्तर्मध्ये गुप्तम् अप्रियमश्रवणीयं, तथा कथं यथा येन प्रकारेण सकलार्थतया वाक्यार्थप्रत्यालोचनया अन्तर्मध्ये प्रियं बहिर्बाह्येऽप्रियं विभाव्यते ज्ञायते। सकल उभयरूपोऽर्थः अभिधेयं यस्य तत्सकलार्थं तद्भावस्तत्ता तया। प्रियाऽप्रियावर्थौ उक्तावित्यर्थः॥ १७॥

किं तद्वचस्तदेकविंशतिश्लोकैराह—

मधुरमिति॥ कृतिना कुशलेन त्वया बहिः प्रकाशे मधुरं प्रियम् अन्तर्गर्भेऽप्रियं वचस्तथा तेन प्रकारेणाऽवाचि उक्तम्। वचेः कर्मणि लुङि चिणि वृद्धिः। यथा येन प्रकारेण सकलार्थतया सम्पूर्णोभयार्थतया हेतुना अन्तः प्रियं बहिरप्रियं विभाव्यतेऽवधार्यते। अप्रियगर्भं प्रियं यदुक्तं, तदस्माकं तु प्रियगर्भमप्रियमेव प्रतीयते। इदमुक्तिचातुर्यं तवैवेत्याभिप्रेत्योक्तं कृतिनेति। अतो न श्रद्धेयमिदं वच इति भावः॥१७॥

**अतिकोमलमेकतोऽन्यतः सरसाऽम्भोरुहवृन्तकर्कशम्॥**
**वहति स्फुटमेकमेव ते वचनं शाकपलाशदेश्यताम्॥ १८॥**

**अतिकोमलमिति॥** हे दूत! ते तव वचनं वाक्यम् एकमेव स्फुटं निश्चितं प्रकटं च शाकपलाशदेश्यतां वहति शाकस्य बर्बराभिधस्य तरोः यत्पलाशं पर्णं तत्सारूप्यं दधाति, शाकपलाशात् ईषन्न्यूनं शाकपलाशदेश्यं तद्भावस्तत्ता ताम्। किंलक्षणं तव वचनम् एकतः एकस्मिन् पक्षेऽतिकोमलं म्रदीयः मृदुतरम्, अपरं किंलक्षणं वचनम् अन्यस्मिन् पक्षे सरसाऽम्भोरुहवृन्तकर्कशं सरसमार्द्रं यदम्भोरुहं पद्मं तस्य वृन्तवत् प्रसवबन्धनवत् कर्कशं कठिनमशुष्ककमलनालपरुषम्। शाकस्यापि पत्रमेकतः एकस्मिन् पार्श्वे अतिकोमलम्, अन्यतः परुषं च। सागवृक्षपत्रं वार्तया॥ १८॥

अथ वा बहिरेव प्रियम् अन्तरेवाप्रियं, तथापि न ग्राह्यमित्युपमया व्यनक्ति—

**अतिकोमलमिति॥** एकतो बहिरतिकोमलम्, अन्यतः अन्तः सरसमार्द्रं यदम्भोरुहस्य वृन्तं प्रसवबन्धनं तदिव कर्कशं परुषम् एकमेव ते तव वचनम्, ईषदसमाप्तं शाकपलाशं महापत्राख्यतरुपत्रं तत्तुल्यम्।

'शाकः पलाशसारः स्याद्वरदारुः करच्छदः।
महापत्रो महाशाकः स्थिरदारुर्हनीटकः'॥

**इत्यभिधानरत्नमालायाम्।** 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति देश्यप्रत्ययः। कल्पदेश्यदेशीयानि सादृश्यवाचकानीति **दण्डी।** तस्य भावस्तत्ता तां स्फुटं वहति। अन्तःपरुषस्य बहिर्माधुर्ये शाकपलाशवदिति भावः। अत्र शाकपलाशोपमायाः पद्मवृन्तोपमासापेक्षत्वात्सङ्करः॥ १८॥

ननु यद्येवंविधमस्मद्वचनं, तत्किं क्रियतामित्यत आह—

**प्रकटं मृदु नाम जल्पतः परुषं सूचयतोऽर्थमन्तरा॥**
**शकुनादिव मार्गवर्तिभिः पुरुषादुद्विजितव्यमीदृशात्॥ १९॥**

**प्रकटमिति॥** हे दूत! ईदृशात् एवंविधात् पुरुषात् मनुष्यात् मार्गवर्तिभिः सत्पथस्थैः नरैः उद्विजितव्यम्। किंलक्षणात् पुरुषात् मनुष्यात् प्रकटं प्रकाशं मृदु कोमलं जल्पतः ब्रुवाणात्, अपरं किंलक्षणात् पुरुषात् अन्तरा गुप्तं परुषं रूक्षमर्थमभिधेयं सूचयतः ज्ञापयतः, कस्मादिव शकुनादिव। यथा मार्गवर्तिभिः अध्वस्थैः एवंविधात् शकुनात् पिङ्गलापोदतक्यादेः पक्षिणः सकाशादुद्विज्यते त्रस्यते। किंलक्षणात् शकुनात् प्रकटं मृदु जल्पतः भाषतः(?), तथा अन्तरा मध्ये परुषमर्थं सूचयतः रूक्षमभिधेयं बोधयतः, अनिष्टमर्थं ज्ञापयतः इत्यर्थः। यथा अध्वस्थैः मृदुभाषिणोऽथ चाऽरिष्टसङ्ख्यानात् खगात् त्रस्यते॥ १९॥

नन्वप्रियगर्भेऽपि वाक्ये गुणग्राहिभिः प्रियमेव गृह्यतां, हंसैः क्षीरमिवाऽम्भसीत्याशङ्क्याह—

प्रकटमिति ॥ प्रकटं प्रकाशं मृदु नाम मृदुकल्पं जल्पतः कथयतः, अन्तरा अन्तः परुषमनिष्टमर्थं सूचयतः ईदृशादन्तःशुद्धिशून्यात्पुरुषादीदृशः शकुनादिव . बहिः शुभङ्करं कुर्वतोऽन्तरा परुषं सूचयतः पिङ्गलादिपक्षिण इव मार्गवर्तिभिः सन्मार्गवर्तिभिरध्वगैश्चोद्विजितव्यम् । न चांशतोऽपि ग्राह्यम् , विषसंपृक्ताऽन्नवदखिलस्याऽनर्थहेतुत्वादिति भावः । 'विज इट्' इतीटः क्ङित्त्वान्न गुणः ॥ १९ ॥

एवं सामान्यतो दूतं निर्भर्त्स्य प्रस्तुतमाह—

**हरिमर्चितवान् महीपति(१)र्यदि राज्ञस्तव कोऽत्र मत्सरः ॥**
**न्यसनाय ससौरभस्य कस्तरुसूनस्य शिरस्यसूयति ॥ २० ॥**

**हरिमिति** ॥ हे दूत ! यदि चेत् महीपतिः राजा युधिष्ठिरः हरिमर्चितवान् श्रीकृष्णं पूजयामास, तर्हि अत्रार्थे तव राज्ञः चैद्यस्य कः कीदृग्विधो मत्सरः । अत्र कोपो न युज्यते इत्यर्थः । अत्र अर्थान्तरं न्यस्यति—यतः कारणात् तरुसूनस्य सुगन्धिवृक्षकुसुमस्य शिरसि न्यसनाय कः असूयति वृक्षपुष्पारोपणाय कः क्रुध्यति, कुसुमप्रक्षिप्ते शिरसि कः कोपः । यतः एकः पुरुषः स्वमस्तके सुगन्धिवृक्षकुसुमानि प्रक्षिपति, तदा द्वितीयः कस्मात् कोपं करोति । सोऽपि स्वमस्तके किं न क्षिपतीति भावः ॥ २० ॥

एवं दूतं निर्भर्त्स्य अथ चैद्यं तद्दोषोद्घाटनपूर्वकं भर्त्सयते—

हरिमिति ॥ स भूपतिर्युधिष्ठिरो हरिमार्चितवान् यदि पूजितवांश्चेत् , अत्र हर्यर्चनेन तव राज्ञश्चैद्यस्य मत्सरः कः । निरर्थक इत्यर्थः । ससौरभस्य परिमलयुक्तस्य तरुसूनस्य । तरुग्रहणं सूनस्य साधारणताद्योतनार्थम् । शिरसि न्यसनायाऽर्पणाय कोऽसूयति । न कोऽपीत्यर्थः । 'क्रुधद्रुह—' इत्यादिना सम्प्रदानसंज्ञा । सर्वत्र गुणवद्वस्तु गुणज्ञैर्बहु मन्यते, तदस्थानां किमत्र वृथा सन्तापेनेति भावः । अत्र हरितरुसूनयोर्वाक्यद्वये बिम्बप्रतिबिम्बभावेनाऽर्चाशिरोधारणरूपसमानधर्मनिर्देशाद् दृष्टान्तालङ्कारः ॥ २० ॥

**सुकुमारमहो ! लघीयसां हृदयं तद्गतमप्रियं यतः ॥**
**सहसैव समुद्गिरन्त्यमी जरयन्त्येव हि तन्मनस्विनः(२) ॥ २१ ॥**

**सुकुमारमिति** ॥ हे दूत! अहो इति आश्चर्ये, लघीयसामतितुच्छानां नीचानां हृदयं मानसं सुकुमारं तुच्छं स्वल्पं, यतः कारणादमी लघीयांसो नीचाः तद्गतं हृदयस्थितम् अप्रियमरुच्यं सहसैव समुद्गिरन्ति झटित्येव वमन्ति । तत्क्षणमेव वदन्तीत्यर्थः । स्वल्पचित्ततया रूक्षमुच्यते । हि यतः कारणात् मनस्विनः प्रशस्तमनसः पुरुषाः तदप्रियं हृदयस्थं जरयन्त्येव । यस्यापि उदरमदीप्तं भवति तुच्छं स्यात्, स सहसैव उद्वमति । दीप्तोदरस्तु जरयत्येव । आगतमेव निवर्तयत्येवेत्यर्थः । तदेतेन सदसतोर्व्यक्तीकरणे हरिचैद्ययोरन्तरमुक्तवान् । एवमुत्तरत्रापि ॥ २१ ॥

अथ कथं महान् महतः पूजां सहत इत्याशङ्क्य, हरिचैद्ययोर्महदन्तरं मनसि निधाय सामान्यतः सुजनदुर्जनयोरन्तरं चतुर्भिराह—

सुकुमारमिति ॥ लघीयसामल्पयिसां हृदयं सुकुमारं तुच्छम् । कुतः—यतोऽमी लघीयांसस्तद्गतं हृदयगतमप्रियं सहसैव झटित्येव समुद्गिरन्ति समुच्चारयन्ति । मनीषिणस्तु तदप्रियं कथञ्चित्, सम्भाव्यमानमपीति शेषः । अन्तरेव क्षपयन्ति । न तूद्गिरन्तीत्यर्थः । अहो इत्याश्चर्ये । चैद्यश्चोद्गिरति नैवं हरिरित्यहो ! महदन्तरमनयोरिति भावः । अत एवाप्रस्तुतात्सामान्यात् प्रस्तुतविशेषप्रतिपत्तिरूपोऽयमप्रस्तुतप्रशंसाभेदः ।

(१) स भूपति । (२) क्षपयन्त्येव हि तन्मनीषिणः ।

'अप्रस्तुतस्य कथनात्प्रस्तुतं यत्र गम्यते ।
अप्रस्तुतप्रशंसेयं सारूप्यादिनियन्त्रिता' ॥

इति लक्षणात् । आदिशब्दात्सामान्यविशेषसङ्ग्रहः । एवमुत्तरश्लोकत्रयेऽपि द्रष्टव्यम् । विशेषं तु वक्ष्यामः ॥

**उपकारपरः स्वभावतः सततं सर्वजनस्य सज्जनः ॥**
**असतामनिशं तथाप्यहो ! गुरुहृद्रोगकरी तदुन्नतिः ॥ २२ ॥**

**उपकारेति** ॥ हे दूत ! सज्जनः सत्पुरुषः सततं नित्यमेव स्वभावतः स्वभावात् सर्वजनस्य सकललोकस्य साधोरसाधोर्वा उपकारपरः प्रियङ्करः । अपरम् अहो इत्याश्चर्यं, असतां दुष्टात्मनां तथापि तदुन्नतिः तस्योन्नतिः सज्जनोच्छ्रायः गुरुहृद्रोगकरी गुरुं महान्तं हृद्रोगं मनःपीडां करोतीति गुरुहृद्रोगकरी तां महतीं मनःपीडां विधत्ते । अत एव श्रीहरिपूजा भवतामपि अनुकूलैव । तत्कस्मान्मात्सर्यमिति वाक्यार्थः ॥ २२ ॥

**उपकारेति** ॥ किञ्च सज्जनः स्वभावतः सततं सर्वजनस्योपकारपरो भवति । न तूपाधिवशात्कदाचित्कस्यचिदेवेति भावः । तथापि सर्वोपकारित्वेऽपि तदुन्नतिस्तस्य सज्जनस्योत्कर्षः असतामसाधूनामनिशं गुरुहृद्रोगकरी अत्यन्तहृदयसन्तापकारिणी, अहो आश्चर्यम् । 'कृञो हेतु-' इत्यादिना ताच्छील्ये टप्रत्यये 'टिड्ढाऽणञ्-' इत्यादिना ङीप् । हरिचैद्यावेवंभूताविति सैवाऽप्रस्तुतप्रशंसा ॥ २२ ॥

न यूयं सज्जना इति वक्तुमाह—

**परितप्यत एव नोत्तमः परितप्तोऽप्यपरः सुसंवृतः(१) ॥**
**परवृद्धिभिराहितव्यथः स्फुटनिर्भिन्नदुराशयोऽधमः ॥ २३ ॥**

**परितप्यत इति** ॥ हे दूत ! उत्तमः सज्जनः न परितप्यत एव सन्तप्तो न भवति परितापमेव न भजते । अपरो मध्यमः परितप्तोऽपि सुसंवृतः सुष्ठुगम्भीरः परितापं मनसि धारयति दुःखं न प्रकटयति । अपरोऽधमो नीचः परवृद्धिभिः अन्यसमृद्धिभिः आहितव्यथः जनितदुःखः सन् स्फुटनिर्भिन्नदुराशयः स्फुटं निश्चितं निर्भिन्नः स्फुटितः दुराशयः दुष्टं हृदयं यस्य सः तथा । परवृद्धिं दृष्ट्वा अतीव दुःखयुक्तो भवतीत्यर्थः । निश्चितं स्फुटितदुष्टाभिप्रायः । यदि हि निर्भिन्न आशयो न स्यात्तत्कथं हृदयस्थं प्रकाशयतीति भावः । यो हि भोजनादिना आहितव्यथो भवति, स स्फुटति । केचिन्निर्भिन्नं प्रकटीभूतमाहुः । तदेतेन मात्सर्यप्रकाशनादतोषसाधनत्वमुक्तम् ॥ २३ ॥

**परितप्यत इति** ॥ किञ्च उत्तमः परवृद्धिभिर्न परितप्यते न व्यथत एव । उत्तमस्याऽपरशुभद्वेष एव नास्तीत्यर्थः । अपरो मध्यम एवेत्यर्थः । परितप्तोऽपि शोभना संवृतिः परितापगोपनं यस्य सः सुसंवृतिः । सन्तमपि परशुभद्वेषं न प्रकाशयतीत्यर्थः । अधमस्तु परवृद्धिभिराहितव्यथः उत्पादितसन्तापः तथा स्फुटं निर्भिन्नः प्रकाशितो दुराशयः परशुभद्वेषलक्षणो दुरभिप्रायो यस्य सः । परशुभद्वेषं प्रकाशयत्येवेत्यर्थः । चैद्यश्चाऽधमो हरिस्तूत्तम इति प्रतीतेः पूर्वोक्त एवालङ्कारः ॥ २३ ॥

ननु राजा सर्वगुणत्वात् सज्जन एवेत्याह—

**अनिराकृततापसम्पदं फलहीनां सुमनोभिरुज्झिताम् ॥**
**खलतां खलतामिवाऽसतीं प्रतिपद्येत कथं बुधो जनः ॥ २४ ॥**

**अनिराकृतेति** ॥ हे दूत ! बुधो जनः सज्जनः असतीं निन्द्यां खलतां दुर्जनतां कथं प्रतिपद्येत कथमाश्रयेत, कामिव खलतामिव आकाशवल्लीमिव । यथा कः विद्वज्जनः असती-

(१) सुसंवृतिः ।

अविद्यमानां खलतां खे लता खलता ताम् आकाशवल्लीं कथं प्राप्नोति । उभयोः साम्यमाह—किंलक्षणां खलतां दुर्जनताम् अनिराकृततापसम्पदम् अवारितदुःखप्रकर्षाम् । खलो हि सर्वतापान्न निराकरोति, नभोलताऽपि तापं न निराकरोति । अपरं किंलक्षणां दुर्जनतां फलहीनाम् उपकारकत्ववर्जितामप्रतिपत्तिं, द्वितीयपक्षे फलहीनां फलरहिताम् । अपरं किंलक्षणां दुर्जनतां सुमनोभिः मनस्विभिः उज्झितां त्यक्ताम् । खलतां किल सत्पुरुषास्त्यजन्ति इत्यर्थः । द्वितीया खलता सुमनोभिः पुष्पैरुज्झिता हीना भवति । तदेतेन यदि चैद्यः साधुः स्यात्तत्कथं खलत्वं दर्शयेत्, तस्मान्नीच एवाऽसौ इत्युक्तं भवति ॥

ननु मानिनां परोत्कर्षे परद्वेषो भूषणमेवेत्याशङ्क्य नेत्याह—

अनिराकृतेति ॥ अनिराकृता अनिवारिता तापसम्पत् तापातिशयो यया ताम् । एकत्र सन्तापजननैकस्वभावादपरत्राऽसतश्छायाविरहाच्चेति भावः । तथा फलहीनाम् । एकत्र—इहाऽमुत्र चोपकारशून्यां प्रत्युतोभयत्राप्यनर्थकरीं चेति भावः । अन्यत्र सर्वार्थरहिताम् । सुमनोभिर्बुधैरुज्झिताम्, अन्यत्र पुष्पैर्वर्जिताम् । 'सुमनाः पुष्पमालत्योः स्त्री देवबुधयोः पुमान्' इति वैजयन्ती । असतीं दुष्टाम्, अन्यत्र निरुपाख्यां खलस्य भावः खलता तां खलतां दुर्जनत्वम्, खस्य लता तां खलतां गगनलतिकामिव बुधो जनः सदसद्विवेककुशलो जनः कथं प्रतिपद्येताऽवलम्बेत । न कथमपीत्यर्थः । वृथा मत्सरो न कस्यापि गुण इति भावः । तथापि स खलतां प्रतिपद्यते, न चैवं हरिरिति प्रतीतेः सैवाऽप्रस्तुतप्रशंसा खलतामिवेत्युपमया सङ्कीर्यते । 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति न्यायादसत्याया अपि खलतिकायाः प्रतीतिसत्यतया खलतोपमत्वप्रसिद्धिः ॥ २४ ॥

आक्रोशेऽपि स्वस्थात् कातरत्वेन हरेः परमतेन(?) निरस्यन्नाह—

**प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभुजे ॥**
**अनुहुङ्कुरुते घनध्वनिं न हि गोमायुरुतानि केसरी ॥ २५ ॥**

प्रतिवाचमिति ॥ हे दूत ! केशवः श्रीकृष्णः चेदिभूभुजे चैद्याय प्रतिवाचं प्रतिवचनं न अदत्त न ददौ । किंलक्षणाय चेदिभूभुजे शपमानाय, शपते स शपमानः तस्मै निन्दां कुर्वते । हि युक्तमेवैतत्—हि यतः कारणात् केसरी सिंहः घनध्वनिमनु मेघगर्जितमुद्दिश्य हुङ्कुरुते कुप्यति, गोमायुरुतानि श्रुत्वा न कुप्यति शृगालवाशितानि आकर्ण्य न क्रुध्यति । अतश्च साम्याभावात् महात्मनाम् ऊनेषु उपेक्षैवौचित्यम् । 'गण्डस्थले मदकरी मदवारिलुब्धमत्तभ्रमद्भ्रमरे'त्यादि उक्तम् ॥ २५ ॥

नन्वेवं महानुभावो हरिः किमर्थं तथा सदसि राज्ञा निर्भर्त्स्यमानो मौनमास्थित इत्याशङ्क्य सत्यमनादरान्न तु कातर्यादित्याह—

प्रतिवाचमिति ॥ केशवः शपमानाय क्रोशते । स्वरितेत्त्वादात्मनेपदम् । चेदिभूभुजे । क्रियाग्रहणात्सम्प्रदानत्वम् । प्रतिवाचं प्रत्युत्तरं नादत्त । केसरी सिंहो घनध्वनिमनुहुङ्कुरुते प्रतिगर्जति, गोमायुरुतानि शिवारुतानि नाऽनुहुङ्कुरुते । 'स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः' इत्यमरः । महतामधमेष्ववज्ञैव नीतिरिति भावः । दृष्टान्तालङ्कारः ॥ २५ ॥

सतां कोपाभावे हेत्वन्तरमाह—

**जितरोषरया महाधियः सपदि क्रोधजितो लघुर्जनः ॥**
**विजितेन जितस्य दुर्मतेर्मतिमद्भिः सह का विरोधिता ॥ २६ ॥**

जितेति ॥ हे दूत ! महाधियो बुद्धिमन्तः सज्जनाः जितरोषरयाः मुक्तरोषजवा भवन्ति । न कदाचिदपि कुप्यन्तीत्यर्थः । पुनः लघुर्जनः नीचो जनः सपदि क्रोधजितः

क्रोधेन रोषेण जितः पराभूतः वशीकृतः । विजितेन जितस्य वशीकृतेन क्रोधेन जितस्य आक्रान्तस्य दुर्मतेः दुरात्मनः लघुजनस्य मतिमद्भिः सन्मतिभिः सज्जनैः सह का विरोधिता को विरोधः । सज्जनैः क्रोधो जितः, अयं जनश्च क्रोधेन जितः । तत्कथं स महद्भिः विरुध्यते । त्वं च क्रोधेन जितः इति कीदृक् साम्यं युवयोरित्यर्थः ॥ २६ ॥

किञ्च राज्ञो हरिणा विरोधोऽपि न योग्य इत्याह—

जितेति ॥ महाधियः सुधियो जितो रोषरयो यैस्ते तथोक्ताः, लघुरल्पो जनस्तु सपदि क्रोधाजितः । एवं विजितेन जितस्य । जितेन क्रोधेन जितस्येत्यर्थः । दुर्मतेर्मूर्खस्य मतिमद्भिः पण्डितैः सह विरोधिता स्पर्धा का । मूर्खपाण्डितयोर्मैत्रीव स्पर्धापि न सङ्गतेत्यर्थः । मूर्खश्चायं चैद्य इत्यप्रस्तुतात्सामान्याद्विशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥ २६ ॥

न च क्षमया श्रीकृष्णस्य किञ्चिल्लाघवमिति दर्शयितुमाह—

**वचनैरसतां महीयसो न खलु व्येति गुरुत्वमुद्धतैः ॥**
**किमपैति रजोभिरौर्वरैरवकीर्णस्य मणेर्महार्घता ॥ २७ ॥**

वचनैरिति ॥ हे दूत ! महीयसः अतिमहतः पुरुषस्य गुरुत्वं महत्त्वम् असतां वचनैः दुर्जनानां वाक्यैः खलु निश्चितं न व्येति न व्ययं याति, किंलक्षणैर्वचनैः उद्धतैः असम्भव्यैः । युक्तमिदमित्यत्र अर्थान्तरन्यासः—यतः कारणात् और्वरैः उर्वरायाः इमानि और्वराणि तैः पृथ्वीसम्भवैः रजोभिः धूलिभिः अवकीर्णस्य परिव्याप्तस्य मणेः रत्नस्य महार्घता महामूल्यता किमपैति कथं विनाशं प्राप्नोति ॥ २७ ॥

नापि चैद्यप्रलापैः कृष्णस्य किञ्चिल्लाघवमित्याशयेनाह—

वचनैरिति ॥ उद्धतैर्निष्ठुरैरसतां दुर्जनानां वचनैर्महीयसो महत्तमस्य गुरुत्वं गौरवं न व्येति नापैति खलु । और्वरैर्भौमैः । 'उर्वरा सर्वसस्याढ्यभूमौ स्याद् भूमिमात्रके' इति विश्वः । रजोभिरवकीर्णस्य छन्नस्य मणेर्महार्घता महामूल्यत्वम् । 'मूल्ये पूजाविधावर्घः' इत्यमरः । अपैति किम् । नापैत्येवेत्यर्थः । अत्र मणिमहीयसोर्वाक्यभेदेन प्रतिबिम्बकरणाद् दृष्टान्तालङ्कारः । महीयस इति सामान्याद्धरेरिति विशेषप्रतीतेरप्रस्तुतप्रशंसा चेति सङ्करः । हरिमण्योरुपमाध्वनिश्च ॥ २७ ॥

निर्गुणत्वाद्भवतः परुषवाक्त्वं युक्तमेवेति वक्तुमाह—

**परितोषयिता न कश्चन स्वगतो यस्य गुणोऽस्ति देहिनः ॥**
**परदोषकथाभिरल्पकः स जनं(१) तोषयितुं किलेच्छति ॥ २८ ॥**

परितोषयितेति ॥ हे दूत ! यस्य देहिनः स्वगतः आत्मनि वर्तमानः कश्चन गुणः कोऽपि गुणः कश्चिदपि वैदुष्यचातुर्यादिधर्मः न परितोषयिताऽस्ति न परितोषकः भवति अर्थात् सज्जनस्यैव, सः अल्पको नीचः परदोषकथाभिः परापवादवचनैः किल सत्ये जनं साधुलोकं तोषयितुमिच्छति हर्षयितुं वाञ्छति । यः किल स्वगुणैरपि जनं तोषयितुं न समर्थः, स परदोषकथनैः कथं परितोषयिष्यते । अथ च गुणहीनः परगुणदूषक एव भवतीत्यर्थः । तदेतेन तेषां निर्गुणत्वमुक्तम् ॥ २८ ॥

युक्तं चैतत्पारुष्यं दुरात्मनामित्याह—

परितोषयितेति ॥ यस्य देहिनो जन्तोः परितोषयिता परेषामानन्दयिता स्वगतो गुणः कश्चन कश्चिदपि नास्ति, अल्पकः तुच्छः स इति शेषः । यत्तदोर्नित्यसम्बन्धात् । परदोषकथाभिरन्यजनदोषोक्तिभिः

(१) स्वजनं ।

स्वजनं, न तु मध्यस्थामिति भावः । तोषयितुमिच्छति किल ईहते खलु । चैद्यस्यापि निर्गुणत्वात्परदूषणं युक्तमिति । अत एवाऽप्रस्तुतप्रशंसाभेदः ॥ २८ ॥

न तु स्वयमात्मनो दोषं हरेर्वा गुणं पश्यामः, तत्कथं भवानेवमाहेत्याह—

**सहजाऽन्धदृशः स्वदुर्नये परदोषेक्षणदिव्यचक्षुषः ॥**
**स्वगुणोच्चगिरो मुनिव्रताः परवर्णग्रहणेष्वसाधवः ॥ २९ ॥**

**सहजाऽन्धेति** ॥ हे दूत ! असाधवो दुर्जनाः स्वदुर्नये निजदोषे सहजाऽन्धदृशः जायन्ते जात्यन्धा भवन्ति । जात्यन्धो हि न किञ्चित्पश्यति । अतस्ते स्वदोषं न कदाचिदपि पश्यन्तीत्यर्थः । तथा असाधवः परदोषेक्षणदिव्यचक्षुषो भवन्ति परदोषाणामन्यतमच्छिद्राणाम् ईक्षणे दिव्यानि अनुपमानि चक्षूंषि लोचनानि येषां ते तथा । परच्छिद्राऽवलोकने सहस्रनेत्राः स्युरित्यर्थः । अपरं किलक्षणा असाधवः स्वगुणोच्चगिरः स्वगुणग्रहणे स्फुटवाणीकाः आत्मगुणग्रहणे सहस्रजिह्वाः, अन्यत् परवर्णग्रहणेषु अन्ययशःकीर्तनेषु मुनिव्रताः मुनीनां व्रतं तूष्णींभावो येषां ते तथा । कदाचिदपि परगुणं नैव भाषन्त इत्यर्थः । अतश्च असाधुः स्वभावादेव आत्मनो दोषं परस्य च गुणं नैव पश्यतीत्यर्थः ॥ २९ ॥

नन्वात्मनो निर्दोषत्वाभिमानादित्थं विजृम्भणमित्याशङ्क्याह—

**सहजाऽन्धेति** ॥ असाधवः खलाः स्वदुर्नये स्वदोषे । महत्यपीति भावः । सहजा स्वाभाविकी अन्धा अपश्यन्ती दृग्येषां ते । जात्यन्धा इत्यर्थः । परदोषाणां सूक्ष्माणामपीति भावः, ईक्षणे दर्शने दिव्यचक्षुषोऽप्रतिहतदृष्टयः । किञ्च स्वगुणेषूच्चगिरः । आत्मप्रशंसायामतिप्रगल्भवाच इत्यर्थः । परवर्णग्रहणेषु परस्तुतिवचनेषु । 'स्तुतौ वर्णं तु वाऽक्षरे' इत्यमरः । मुनिव्रता मौनव्रतिनः । अर्शआदिभ्योऽच् । चैद्यश्चैवंविध इति प्रतीतेरप्रस्तुतप्रशंसा ॥ २९ ॥

यच्च हरिणा दोषाविष्करणं नाऽकारि, एष महत्तरस्य स्वभाव एवेति वक्तुमाह—

**प्रकटान्यपि नैपुणं महत्परवाच्यानि चिराय गोपितुम् ॥**
**विवरीतुमथाऽऽत्मनो गुणान् भृशमाकौशलमार्यचेतसाम् ॥ ३० ॥**

**प्रकटान्यपीति** ॥ हे दूत ! आर्यचेतसाम् आर्यं श्रेष्ठं चेतो येषां ते आर्यचेतसः उदारमनसः तेषां सत्पुरुषाणां प्रकटान्यपि स्फुटानि विश्वविदितान्यपि परवाच्यानि परदूषणानि चिराय गोपितुं बहुकालं रक्षितुं महत् अति नैपुण्यं चातुर्यं भवति । अथ आत्मनो गुणान् स्वस्य गुणान् औदार्यवैदुष्यादीन् धर्मान् विवरीतुं भृशमतिशयेन प्रकटीकर्तुम् आकौशलमकुशलत्वमनैपुण्यं भवति । आर्यास्तु परदोषान् रक्षन्ति, आत्मगुणान् न वदन्तीत्यर्थः ॥ ३० ॥

साधवस्तु नैवमित्याह—

**प्रकटान्यपीति** ॥ आर्यचेतसां सुमनसां प्रकटान्यपि परवाच्यानि परदूषणानि चिराय गोपितुं गोपायितुम् । संवरितुमित्यर्थः । 'आयादय आर्धधातुके वा' इति विकल्पादायप्रत्ययाभावः । महन्नैपुणं कौशलम् । अथेति वाक्यारम्भे । अथाऽऽत्मनो गुणान् विवरीतुं प्रकटयितुम् । आत्मप्रशंसां कर्तुमित्यर्थः । भृशमाकौशलमत्यन्तमकौशलम् । साधवो न परान्निन्दन्ति न वाऽऽत्मानं प्रशंसन्ति । 'आत्मप्रशंसां परगर्हामिव वर्जये'दित्यापस्तम्बीये निषेधस्मरणादिति भावः । 'नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्' इति विकल्पादुत्तरपदस्यापि वृद्धिः । कृष्णश्चैवंभूत इति विशेषप्रतीतेरप्रस्तुतप्रशंसैव ॥ ३० ॥

**किमिवाऽखिललोककीर्तितं कथयत्यात्मगुणं महामनाः ॥**
**वदिता न लघीयसोऽपरः स्वगुणं तेन वदत्यसौ स्वयम् ॥ ३१ ॥**

किमिवेति ॥ हे दूत ! महामना उदारचित्तः पुमान् अखिललोककीर्तितमात्मगुणं किमिव कथयति सर्वजनवर्णितं निजगुणं कथं वदति, परं लघीयसो नीचस्य पुरुषस्य गुणम् अपरः अन्यः कोऽपि पुरुषमात्रोऽपि न वदिता न कीर्तयिता भवति । तेन हेतुना असौ नीचः स्वगुणमात्मगुणं स्वयं वदति आत्मना कथयति । आत्मानं स्वयमेव स्तौतीत्यर्थः । यद्यसौ स्वयं नाचष्टे, तदा अस्य वराकस्य का गतिः । तस्मात् युक्ता भवतात्मनः स्तुतिः ॥ ३१ ॥

किमिवेति ॥ किञ्च महामना महात्मा अखिललोककीर्तितं स्वत एव सर्वैर्लोकैः प्रख्यातमात्मगुणं किमिव किमर्थं कथयत्येव । स्वत एव सर्वैर्लोकैः कीर्त्यमानत्वादित्यर्थः । लघीयसस्तुच्छस्य तु स्वगुणं वदिता वक्ता । वदेस्तृच्प्रत्ययः । अत एव 'न लोका—' इत्यादिना षष्ठीप्रतिषेधः । अपरोऽन्यो नास्ति । तेन कारणेनाऽसौ लघीयान् स्वगुणं स्वयमेव वदति । न केवलं निषेधात्, किञ्च प्रयोजनाभावादपि महानात्मप्रशंसां न करोति, तुच्छस्तु वक्त्रन्तरासम्भवात्स्वयमेव तां प्रलपतीत्यर्थः । पूर्वार्धे पदार्थहेतुकं काव्यलिङ्गम्, उत्तरार्धे वाक्यार्थहेतुकं चात्रेयम् । कृष्णचैद्यौ चैवंविधाविति विशेषप्रतीतेरप्रस्तुतप्रशंसा चेति सङ्करः ॥ ३१ ॥

पुरुषास्तु कर्मणैव कोपं दर्शयन्तीति वक्तुमाह—

**विसृजन्त्यविकत्थनाः (१)परे विषमाशीविषवन्नराः क्रुधम् ॥**
**दधतोऽन्तरसाररूपतां ध्वनिसाराः पटहा इवेतरे ॥ ३२ ॥**

विसृजन्तीति ॥ हे दूत ! अविकत्थनाः स्तुतिरहिताः परे नराः पुरुषाः क्रुधं विसृजन्ति कोपं प्रकटयन्ति, किंवत् आशीविषवत् सर्पवत् । यथा आशीविषाः सर्पाः तूष्णीभूताः विषं विसृजन्ति मुञ्चन्ति । इतरे नराः अन्ये जनाः अन्तर्मध्ये असाररूपतां दधतः तुच्छत्वं धारयन्तो निःसारत्वं बिभ्रतो ध्वनिसारा भवन्ति वाक्प्रधानाः स्युः । न तु कर्मणा । के इव पटहा इव आनका इव । यथा पटहाः अन्तर्मध्येऽसारतां शून्यतां दधतोऽपि ध्वनिसाराः शब्दपटवो भवन्ति ॥ ३२ ॥

किञ्च महात्मानः क्रुद्धाः काले पराक्रमन्ति, दुरात्मानस्तु केवलं प्रलपन्तीत्याह—

विसृजन्तीति ॥ परे नराः सत्पुरुषाः विषमाशीविषवत्क्रूरसर्पवदित्युपमा । अविकत्थिनोऽनात्मश्लाघिन एव क्रुधं क्रोधं विसृजन्ति वमन्ति । पराक्रामन्तीत्यर्थः । अन्तरभ्यन्तरे असाररूपतां निःसाररूपतां दधतो दधानाः । 'नाऽभ्यस्ताच्छतुः' इति नुमभावः । इतरे जना दुर्जनाः पटहा इव ध्वनिरेव सारो बलं येषां ते ध्वनिसारा वाक्शूरा एव । न तु बाहुबलशालिन इति भावः । अत्राऽपीदृशौ कृष्णचैद्यावित्यप्रस्तुतसामान्यात्प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥ ३२ ॥

तदेतेन तेषां तुच्छत्वमुक्तं, हरेश्च शौर्ययुक्तत्वमुक्तम् । द्व्यर्थमुक्त्वा चोत्तरं वक्तुमाह—

**नरकच्छिदमिच्छतीक्षितुं विधिना येन स चेदिभूपतिः ॥**
**द्रुतमेतु न हापयिष्यते सदृशं तस्य विधातुमुत्तरम् ॥ ३३ ॥**

नरकच्छिदमिति ॥ हे दूत ! स चेदिभूपतिः चैद्यः येन विधिना (सन्धिना) विग्रहेण वा नरकच्छिदं नरकहन्तारं श्रीकृष्णम् ईक्षितुमिच्छति द्रष्टुं वाञ्छति, तेन विधिना स द्रुतमेतु शीघ्रमागच्छतु । एष श्रीकृष्णः तस्य विधेः सदृशं योग्यम् उत्तरं विधातुं न हापयिष्यते तस्य चैद्यस्य वाञ्छां पूरयिष्यति । स अनागच्छन् हारयति, अतो द्रुतमेतु, यथा न हारयतीत्यर्थः । वैरायमाणो नूनमसौ मरिष्यतीति नरकच्छिद्ग्रहणेन सूच्यते ॥ ३३ ॥

---

(१) ० विकत्थिनः ।

'अभिधाय तदा तदप्रिय'मित्यादिना यद् दूतेन युगपत् प्रियाप्रिये अभिहिते, तत्रोत्तरमाह—

नरकेति ॥ स महीपतिश्चेदिभूपतिर्येन विधिना येन प्रकारेण सन्धिना विग्रहेण वा नरकाच्छिदं नरकस्याऽप्यन्तकम् । किमन्येषामशक्तानामिति भावः । ईप्सितुमिच्छति, तस्य विधेः सदृशमुत्तरं प्रतिक्रिया स्नेहो विरोधो वा विधातुं न हापयिष्यते । अविलम्बेन विधास्यत इत्यर्थः । जहातेर्ण्यन्तात्कर्मणि लृट् । विधानाक्रियया अनभिधानेऽपि प्रधानभूतक्रिययाऽभिहितत्वादुत्तरमिति न कर्मणि द्वितीया । द्रुतं शीघ्रमेतु आगच्छतु । आगमने स्वयमेव हीयत इति भावः ॥ ३३ ॥

'अभिधाय तथा तदप्रिय'मिति यद्वचनमुक्तं, तदनुपपन्नमिति वक्तुमाह—

**समनह्य किमङ्ग ! भूपतिर्यदि सन्धित्सुरसौ सहाऽमुना ॥**
**हरिराक्रमणेन संनतिं किल बिभ्रीत भियेत्यसम्भवः ॥ ३४ ॥**

**समनह्येति** ॥ अङ्ग इत्यामन्त्रणे, हे दूत ! यदि चेदसौ भूपतिः शिशुपालः अमुना श्रीकृष्णेन सन्धित्सुः सन्धिं कर्तुमिच्छुः, तदा किं समनह्य सेनां संनद्धां कथं चकार । किलेति सत्ये, हरिः श्रीकृष्णः आक्रमणेन आक्रान्त्या भिया भीत्या च संनतिं बिभ्रीत नम्रतां भजेत इति असम्भवः एतन्नैव सम्भवति ॥ ३४ ॥

नन्वभिधायेत्यादौ मया साम्त्वमेव विवक्षितं न विग्रहस्तत्किमुभयाऽप्यनुज्ञयेत्याशङ्क्याह—

समनह्येति ॥ अङ्गेत्यामन्त्रणे, असौ भूपतिश्चैद्योऽमुना हरिणा सह सन्धित्सुर्यदि सन्धातुमिच्छुश्चेत् । दधातेः सन्नन्तादुप्रत्ययः । किं समनह्य किमर्थं संनद्धवान् । ततो नायं सन्धित्सुरिति भावः । नह्यतेः स्वरितेत्त्वात्कर्तरि लुङि तङ् 'झलो झलि' इति सकारलोपः । कृष्णभीषणार्थं संनाह इत्यत आह—हरिः सिंहः कृष्णश्च किलाऽऽक्रमणेनाऽभिभवेन या भीस्तया संनतिं नम्रतां बिभ्रीत बिभृयादित्यसम्भवः । सम्भवो नास्ति खल्वित्यर्थः ॥ ३४ ॥

यच्च भवद्भिः भगवतो रूक्षमभिहितं तद्युष्माकमेवाऽनर्थाय भवतीति वक्तुमाह—

**महतस्तरसा विलङ्घयन्निजदोषेण विधी(१)र्विनश्यति ॥**
**कुरुते न खलु स्वयेच्छया शलभानिन्धनमिद्धदीधितिः ॥ ३५ ॥**

**महत इति** ॥ हे दूत ! विधीः नष्टबुद्धिः निजदोषेण आत्मापराधेनैव विनश्यति विनाशं प्राप्नोति, किं कुर्वन् महतः उत्तमान् तरसा बलेन विलङ्घयन् आक्रामन् । युक्तं चैतत्, यतः कारणात् इद्धदीधितिः दीप्तद्युतिः वैश्वानरः शलभान् पतङ्गान् खलु निश्चितं स्वया इच्छया आत्मीयया वाञ्छया इन्धनं न कुरुते समिधं न विदधाति भस्मसात् न विदधाति, किन्तु ते तत्र स्वयं पतन्तीत्यर्थः । यावत्तेनैव नाक्रान्ताः, तस्मात्स्वदोषेणैव यूयं न भविष्यथेति वाक्यार्थः ॥ ३५ ॥

अथाऽऽक्रमणेऽनिष्टमाचष्टे—

महत इति ॥ कुधीरासन्नविनाशत्वाद्विपरीतबुद्धिमान् महतो महानुभावांस्तरसा बलेन । 'तरसी बलरंहसी' इति विश्वः । विलङ्घयन्नाक्रामन्निजदोषेण स्वापराधेनैवोल्लङ्घनरूपेण विनश्यति । तथा हि—इद्धदीधितिर्दीप्तार्चिरग्निः स्वया निजयेच्छया शलभान्पतङ्गान् । 'समौ पतङ्गशलभौ' इत्यमरः । इन्धनं दाह्यं न कुरुते खलु, किन्तु त एव निजौद्धत्यान्निपत्य दह्यन्त इत्यर्थः । इतः परं न क्षम्यत इति भावः । दृष्टान्तालङ्कारः ॥ ३५ ॥

त्वया शपमानेन अस्मदहितमेवोक्तमिति वक्तुमाह—

**यदपूरि पुरा महीभुजा न(२) मुखेन स्वयमागसां शतम् ॥**
**अथ सम्प्रति पर्यपूपुरत्तदसौ दूतमुखेन शार्ङ्गिणः ॥ ३६ ॥**

---

(१) कुधी० ।　　(२) महीपातिर्न ।

यदिति ॥ हे दूत ! महीभुजा राज्ञा चैद्येन पुरा पूर्वम् आगसां शतमपराधानां दशकदशकं स्वयमात्मना मुखेन स्ववक्त्रेण न अपूरि न सम्पूर्णं चक्रे । अथ पश्चात् तदपराधशतं शार्ङ्गिणः श्रीकृष्णस्य असौ चैद्यः दूतमुखेन भवद्वक्त्रेण पर्यपूपुरत् पूरयामास । भगवदपराधशतस्यैव गणयामास । भृत्यापराधे हि स्वामिनो दण्डः । तस्मात्सम्पन्नमनोरथा वयमिति भावः ॥ ३६ ॥

नन्वसहने शार्ङ्गिणः शतापराधसहनप्रतिज्ञाभङ्गः स्यादित्यत्राह—

यदिति ॥ पुरा पूर्वं महीपतिश्चैद्यो मुखेन स्ववाचा यदागसामपराधानां शतम् । 'आगोऽपराधो मन्तुश्च' इत्यमरः । शार्ङ्गिणः कृष्णस्य स्वयं नाऽपूरि । नापूरयदित्यर्थः । पूरयतेः कर्तरि लुङ् 'दीपजन—'इत्यादिना विकल्पाच्चिण्प्रत्यये चिणो लुक् । अथ स्वप्रलापानन्तरं सम्प्रतीदानीमसौ चैद्यः दूतमुखेन दूतवाचा तत् आगसां शतं पर्यपूपुरत्परिपूरयामास,दूतमुखत्वाद्राज्ञाम् । तेन कृष्णक्रोधावसरदानेन महदुपकृतमायुष्मतेति भावः । पूरयतेर्लुङि णौ चङ्युपधाया ह्रस्वः, अभ्यासदीर्घः ॥ ३६ ॥

**यदनर्गलगोपुराननस्त्वमतो(१) वक्ष्यसि किञ्चिदप्रियम् ॥**
**विवरिष्यति तच्चिरस्य नः समयोदीक्षण(२)रक्षितां क्रुधम् ॥ ३७ ॥**

यदिति ॥ क्रुधशब्दः स्त्रीलिङ्गः । हे दूत ! त्वमतः परं यत्किञ्चिदप्रियं कठोरम् अरुच्यं वक्ष्यसि वदिष्यसि । किंलक्षणस्त्वम् अनर्गलगोपुराननः अनर्गलमर्गलारहितम् अनवष्टम्भं यद्गोपुरं पुरद्वारं तद्वदाननं मुखं यस्य सः तथा उद्घाटितप्रतोलिकावदनः । तदप्रियं नः अस्माकं क्रुधं कोपं विवरिष्यति प्रकटयिष्यति । किंलक्षणां क्रुधं चिरस्य बहुकालात् समयोदीक्षणरक्षितां समयस्य संविदः उदीक्षणं प्रतीक्षणं तेन रक्षितां पालितां वचनप्रतिपालननिगडिताम् । पाठान्तरे समयोदीक्षणरक्षिताः क्रुधः । अस्मदीयः कोपः समयं कालमवसरं प्रतीक्षन्नस्ति(३) । तं कोपं त्वं साम्प्रतमपि प्रकटं मा कारयेत्यर्थः ॥ ३७ ॥

निगमयन्फलितमाह—

यदिति ॥ अनर्गलमविष्कम्भम् , विकृतमिति यावत् । 'तद्विष्कम्भोऽर्गलं न ना' इत्यमरः । यद्गोपुरं पुरद्वारं तदिवाननं यस्य सः । वाच्याऽवाच्यविवेकशून्य इत्यर्थः । त्वमितः इतः परं यदप्रियं वक्ष्यसि तदप्रियं चिरस्य चिरात्प्रभृति । 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यव्ययेष्वमरः । समयोदीक्षणेन संवित्प्रतीक्षणेन रक्षितां, रुद्धामित्यर्थः । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । क्रुधं क्रोधं विवरिष्यति । 'वृतो वा' इति दीर्घविकल्पः । इतः परं त्वमपि दण्ड्य एवेति भावः ॥ ३७ ॥

**निशमय्य तदूर्जितं शिनेर्वचनं नप्तुरनाप्तुरेनसाम् ॥**
**पुनरुज्झितसाध्वसं (४)द्विषामभिधत्ते स्म वचो वचोहरः ॥ ३८ ॥**

निशमय्येति ॥ अथाऽनन्तरं द्विषां वचोहरः वचनहारी चैद्यस्य दूतः पुनर्भूयोऽपि वचः अभिधत्ते स्म वचनं बभाषे । कथं यथा भवति उज्झितसाध्वसं संत्यक्तभयं यथा स्यात्तथा । निर्भयेण हि दूतेन भवितव्यम् । किं कृत्वोवाचेत्याह—शिनेः यादवमुख्यस्य राज्ञो नप्तुः पौत्रस्य सात्यकेः तत् वचनम् ऊर्जितं सबलं निशमय्य श्रुत्वा, किंलक्षणस्य शिनेः नप्तुः एनसाम् अनाप्तुः पापानाम् अप्रापकस्य, आप्नोतीत्याप्ता न आप्ता अनाप्ता तस्य अनाप्तुः, निष्पापस्य पातकरहितस्य । नप्ता पौत्रः ॥ ३८ ॥

निशमय्येति ॥ एनसामनाप्तुरसंस्प्रष्टुः । सत्यवादिन इति भावः । आप्नोतेस्तृच् । शिनेर्नाम्नः कस्य-

---

(१) ०स्त्वमितो । (२) समयोद्वीक्षण० । (३) परस्मैपदं चिन्त्यम् । (४) साध्वसो ।

चित् यादवस्य नप्तुः पौत्रस्य । सात्यकेरिति भावः । तदूर्जितमर्थयुक्तं वचनं निशमय्य श्रुत्वा । 'ल्यपि लघुपूर्वात्' इति णेरयादेशः । पुनर्भूयोऽप्युज्झितसाध्वसं त्यक्तभयं यथा तथा द्विषां वचो हरतीति वचोहरो दूतः । हरतेरनुद्यमनेऽच् । वचोऽभिधत्ते स्म अभिहितवान् ॥ ३८ ॥

दूतः किमुवाचेत्याह—

**विविनक्ति न बुद्धिदुर्विधः स्वयमेव स्वहितं पृथग्जनः ॥**
**यदुदीरितमप्यदः परैर्न विजानाति तदद्भुतं महत् ॥ ३९ ॥**

विविनक्तीति ॥ हे कृष्ण ! पृथग्जनो नीचजनः स्वयमेव आत्मनैव स्वहितं स्वपथ्यं न विविनक्ति न विचारयति । किंलक्षणः पृथग्जनः बुद्धिदुर्विधः बुद्धौ दुर्विधः प्रज्ञादरिद्रः, अत एव स्वहितं न जानाति । अपरम् अद एतत् स्वहितं यत् परैः अन्यैरुदीरितमपि उक्तमपि न जानाति न बुध्यते, तत् महत् अद्भुतं महदाश्चर्यम् ॥ ३९ ॥

विविनक्तीति ॥ बुद्ध्या दुर्विधो दरिद्रः । बुद्धिशून्य इत्यर्थः । 'निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः' इत्यमरः । पृथग्जनः पामरजनः स्वयमेव परोपदेशं विनैवात्महितं न विविनक्ति । तद्युक्तमेवेति भावः । किन्तु परैरुदीरितमुपदिष्टमप्यदो हितं न विजानातीति यत्तन्महदद्भुतम् । यतः सूक्तं न गृह्णातीति भावः ॥ ३९ ॥

**विदुरेष्यदपायमात्मना परतः श्रद्दधतेऽथ वा बुधाः ॥**
**न परोपहितं न च स्वतः प्रमिमीतेऽनुभवादृतेऽल्पधीः ॥ ४० ॥**

विदुरिति ॥ हे कृष्ण ! बुधाः विद्वांसः एष्यत् अपायम् आत्मना विदुः भविष्यद्विघ्नं विनाशं स्वयं जानन्ति स्वयं विदन्ति, अथ वा परतः श्रद्दधते परकथनेन मन्यन्ते । अपरं स्वल्पधीः मन्दबुद्धिः न परोपहितं परेण अन्येन उपहितम् उक्तं न च स्वतः न च आत्मनः च प्रमिमीते न जानात्येव । कथम् अनुभवादृते अनुभवं विना, अन्यथा न जानात्येव ॥ ४० ॥

अथ किमद्भुतं मूर्खेष्वित्याशयेनाह—

विदुरिति ॥ बुधा बुद्धिमन्तः एष्यन्तमागामिनमपायमनर्थम् आत्मना स्वयमेव । प्रकृत्यादिभ्य उपसङ्ख्यानात्तृतीया । विदुर्विदन्ति । 'विदो लटो वा' इति विकल्पाज्जुसादेशः । अथ वा परतोऽन्यस्मादाप्तात्श्रद्दधते विश्वसन्ति । आप्तोक्तं गृह्णन्तीत्यर्थः । 'श्रदन्तरोरुपसर्गवद्वृत्तिः' इत्युपसर्गसंज्ञोपसङ्ख्यानाद्धातोः प्राक्प्रयोगः । अल्पधीर्मूढस्त्वनुभवादृते स्वानुभवं विना । 'अन्यारादितरर्ते—' इति पञ्चमी । न प्रमिमीते न जानाति । अधमस्तु स्वानुभवैकप्रमाण इत्यर्थः । अधमस्त्वमिति भावः । अत एवाप्रस्तुतसामान्यात् प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥ ४० ॥

येनाऽभिप्रायेणोक्तं, तदाविष्कर्तुमाह—

**कुशलं खलु तुभ्यमेव तद्वचनं कृष्ण ! यदभ्यधामहम् ॥**
**उपदेशपराः परेष्वपि स्वविनाशाऽभिमुखेषु साधवः ॥ ४१ ॥**

कुशलमिति ॥ हे कृष्ण ! यद्वचनं वाक्यम् अहमभ्यधाम् अहमवोचं, खलु निश्चितं तद्वचनं तुभ्यमेव कुशलं भवते एव हितकारि । मया हि त्वत्प्रियार्थमुक्तमित्यर्थः । यतः कारणात् साधवः सज्जनाः परेष्वपि शत्रुष्वपि उपदेशपराः युक्ताऽभिधायिनो भवन्ति । किंलक्षणेषु परेषु स्वविनाशाभिमुखेषु आत्मविनाशोद्यतेषु ॥ ४१ ॥

अतः प्रस्तुते किमायातं, तत्राह—

कुशलमिति ॥ हे कृष्ण ! अहं यद्वचनमभ्यधाम् । 'अभिधाये'त्यादिना राज्ञां सन्धिर्गुणाय विग्रहस्तु

अनर्थायेत्येवमवोचमित्यर्थः। तद्वचनं तुभ्यमेव कुशलं हितम्।'चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः' इति चतुर्थी। नन्वहितेषु हितोपदेशात्प्रत्ययः कथमित्याशङ्क्यार्थान्तरन्यासेन परिहरति—साधवः सुजनाः स्वविनाशाभिमुखेषु। प्रबलविरोधादात्मविनाशहेतुभूतकर्मप्रवृत्तेष्वित्यर्थः। परेषु शत्रुष्वप्युपदेशपरा उपदिशन्त्येव। कृपालुतयेति भावः ॥ ४१ ॥

**उभयं युगपन्मयोदितं त्वरया सान्त्वमथेतरच्च ते ॥**
**प्रविभज्य पृथङ्मनीषया सगुणं (१) यत्किल तत्करिष्यसि ॥ ४२ ॥**

**उभयमिति ॥** हे कृष्ण ! मया युगपत् तुल्यकालक्षेपरहितम् औत्सुक्येन उभयम् उदितं द्वयं बभाषे, उभयं किं—ते तव सान्त्वं प्रियम्, अथ अपरम् इतरत् अप्रियम्। तत् त्वरया मनीषया बुद्ध्या पृथक् प्रविभज्य भिन्नं कृत्याकृत्यं विचार्य यत्किल सगुणं चित्तोचितं तत्करिष्यसि तद्विधास्यसि। त्वं स्वबुद्ध्या विचार्य करिष्यसीति द्वयमेवाऽभिधातुमागतः। तत्त्वरया युगपदुभयमुक्तं, प्रावीण्यं दर्शितार्थं च ॥ ४२ ॥

तथाप्यर्थद्वये त्वद्वाक्ये किं ग्राह्यं तत्राह—

उभयमिति ॥ मया सान्त्वं सामादि। अथेति पक्षान्तरे। इतरदसान्त्वम्, विग्रहश्चेत्यर्थः। युगपदुदितं, त्वं तु मनीषया बुद्ध्या पृथग्भेदेन प्रविभज्य विविच्य यत्स्वगुणं तत्र द्वयेऽपि त्वरया यच्छुभोदर्कं तत्करिष्यसि किल खलु। हंसः क्षीरमिवाम्भसीति भावः ॥ ४२ ॥

अस्थाने चैवं कथनादसत् मया कृतमिति वक्तुमाह—

**अथ वाऽभिनिविष्टबुद्धिषु व्रजति व्यर्थकतां सुभाषितम् ॥**
**रविरागिषु शीतरोचिषः करजालं कमलाकरेष्विव ॥ ४३ ॥**

**अथ वेति ॥** अथ वा स्ववचनाक्षेपे युक्तं मयाऽकारीत्याह—हे कृष्ण ! अभिनिविष्टबुद्धिषु एकत्रापि अभिनिवेशितमतिषु पुरुषेषु विपयेषु भाषितं सुवचनं हितोपदेशवाक्यं व्यर्थकतां व्रजति निष्फलतां याति। यस्य हि बुद्धिरेकत्राऽभिनिविशन्ती(?) भवति, स कथं कस्यापि सुभाषितं शृणोतीति भावः। केषु किमिव कमलाकरेषु शीतरोचिषः करजालमिव। यथा शीतरोचिषः चन्द्रमसः करजालं किरणपटलं कमलाकरेषु पद्मवनेषु व्यर्थकतां व्रजति निष्फलत्वं प्रयाति, किंलक्षणेषु कमलाकरेषु रविरागिषु श्रीसूर्ये प्रीतिमत्सु ॥ ४३ ॥

अथ वा सुजनस्वभावात्कृतोऽपि हितोपदेशो मूर्खेषु निष्फल इत्याह—

**अथ वेति ॥** अथ वा अभिनिविष्टबुद्धिषु दुराग्रहग्रस्तचित्तेषु विषये सुभाषितं हितोपदेशवचनं रविरागिषु कमलाकरेषु शीतरोचिषः शीतभानोः करजालमिव व्यर्थकतां व्रजति। तस्मादलमेव त्वयि हितोपदेशचिन्तयेति भावः ॥ ४३ ॥

**अनपेक्ष्य गुणागुणं(२) जनः स्वरुचिं निश्चयतोऽनुधावति ॥**
**अपहाय महीशमार्चिचत्सदसि त्वां ननु भीमपूर्वजः ॥ ४४ ॥**

**अनपेक्ष्येति ।** हे कृष्ण ! जनो लोकः गुणागुणमनपेक्ष्य हिताहितमनवलोक्य निश्चयतः निश्चयेन स्वरुचिमनुधावति स्वप्रीतिविषयमनुसरति। निजमतिं कुरुते इत्यर्थः। कुत इत्याह—ननु इति सम्बोधने, हे कृष्ण ! भीमपूर्वजः वृकोदरज्येष्ठभ्राता युधिष्ठिरः महीशं भूपतिं चैद्यम् अपहाय त्यक्त्वा सदसि सभायां त्वामार्चिचत् भवन्तं पूजयामास। तत्त्वतो हि गुणवत्तरः। एतेन स्वरुचिरेव आश्रीयत इत्यर्थः ॥ ४४ ॥

---

(१) स्वगुणं। (२) गुणागुणौ।

नन्वभिनिविष्टोऽपि सुजनैर्बलादपि हिते प्रवर्तयितव्य इत्याशङ्क्य न शक्यत इत्याह—

अनपेक्ष्येति ॥ जनस्त्वादृशः पृथग्जनः । गुणागुणौ गुणदोषौ । 'विप्रतिषिद्धं चाऽनधिकरणवाचि' इति विभाषया न द्वन्द्वैकवद्भावः । अनपेक्ष्याऽविमृश्य निश्चयतः स्वनिश्चयादेव स्वरुचिं स्वेच्छामनुधावति । न तु स्वहितमनुसरतीत्यर्थः । तत्र पार्थ एव प्रमाणमित्याह—भीमपूर्वजः भीमाग्रजो युधिष्ठिरः । मूर्खाऽग्रणीरिति भावः । महीशं चेदिपमपहाय सदसि त्वामार्चिचदर्चितवान्खलु । अर्चयतेर्णौ चङि 'अजादेर्द्वितीयस्य' 'नन्द्राः संयोगादयः' इति रेफवर्जितस्यैकाचो द्विर्भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४४ ॥

न चैतावताऽस्माकं वाचि कदाचिद्दीनता इत्याह—

**त्वयि भक्तिमता न सत्कृतः कुरुराजा गुरुरेव चेदिपः ॥**
**प्रियमांसमृगाधिपोज्झितः किमवद्यः करिकुम्भजो मणिः ॥ ४५ ॥**

त्वयीति ॥ हे कृष्ण ! कुरुराजा युधिष्ठिरेण न सत्कृतः न पूजितोऽपि अस्मत्स्वामी चेदिपः चेदिपतिः शिशुपालः गुरुरेव महानेव । एतदेव दृष्टान्तेन आह—युक्तमेवैतत्, यतः कारणात् प्रियमांसमृगाधिपोज्झितः प्रियमांसेन मांसप्रियेण मृगाधिपेन सिंहेन उज्झितस्त्यक्तः करिकुम्भजो मणिः हस्तिकुम्भस्थलोद्भवो मणिः किम् अवद्यः किं दूष्यो भवति । मांसप्रियसिंहेन त्यक्तोऽपि करिकुम्भजो मणिः न दूष्य एवेत्यर्थः ॥ ४५ ॥

त्वयीति ॥ हे कृष्ण ! त्वयि भक्तिमता प्रेमवता, कुरूणां राट् । 'सत्सूद्विष–' इत्यादिना क्विप् । तेन कुरुराजा कुरुराजेन पार्थेन न सत्कृतो नार्चितश्चेदिपो गुरुरेव पूज्य एव । तथा हि–प्रियं मांसं यस्य तेन मांसगृध्नुना मृगाधिपेन सिंहेनोज्झितस्त्यक्तः करिकुम्भजो मणिर्मुक्तामणिरवद्यो गर्ह्यः किम् । अनवद्य एवेत्यर्थः । मूर्खोऽनादरात्र महतां किञ्चिल्लाघवमित्यर्थः । 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इत्यमरः । 'अवद्यपण्य–' इत्यादिना निपातः । दृष्टान्तालङ्कारः ॥ ४५ ॥

**क्रियते धवलः खलूच्चकैर्धवलैरेव सितेतरैरधः ॥**
**शिरसौघमधत्त शङ्करः सुरसिन्धोर्मधुशत्रुरङ्घ्रिणा(१) ॥ ४६ ॥**

क्रियत इति ॥ हे कृष्ण ! खलु निश्चयेन धवलः पुरुषः धवलैः उत्तमैरेव उच्चकैः क्रियते महान् विधीयते । स्तुतिपूजादिभिः अधिकः क्रियते इत्यर्थः । अपरं सितेतरैः कृष्णैर्धवलः निर्मलः पुरुषः अधस्तान्नीचस्थाने क्रियते । अमहद्भिर्महान् निन्द्यत इत्यर्थः । अत्रार्थान्तरन्यासः—यतः कारणात् शङ्करः श्रीमहादेवः सुरसिन्धोर्देवनद्याः गङ्गाया ओघं प्रवाहम् शिरसा अधत्त मस्तकेन दधौ, अपरं मधुशत्रुर्मधुसूदनः श्रीनारायणः कृष्णः तमेवौघं प्रवाहम् अङ्घ्रिणा पादेन अधत्त । एतेन धवलो गङ्गाप्रवाहो धवलेन पुरुषेण श्रीशङ्करेण उच्चैः कृतः, कृष्णेन कृष्णवपुषा श्रीनारायणेन चरणधरणात् अधःकृत इत्यर्थः ॥ ४६ ॥

विदुषां तु पूज्य एव चैद्य इत्याशयेनाह—

क्रियत इति ॥ धवलो निर्मलो धवलैर्निर्मलैरेवोच्चकैरुन्नतः क्रियते खलु, सितेतरैर्मलिनैरधः क्रियते । तथा हि–शङ्करः शिवः सुरसिन्धोरोघं मन्दाकिनीपूरं शिरसा अधत्त । उभयोर्नैर्मल्यादिति भाव.। मधुजिन्मधुशत्रुर्विष्णुस्तु तमोघमङ्घ्रिणा अधत्त । स्वयं मलिनत्वादिति भावः । अतो विशेषविदुषां राजा पूज्य एवेति भावः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४६ ॥

**अबुधैः कृतमानसंविदस्तव पार्थैः कुत एव योग्यता ॥**
**सहसि प्लवगैरुपासितं न हि गुञ्जाफलमेति सोष्मताम् ॥ ४७ ॥**

---

( १ ) ०र्मधुजित्तमङ्घ्रिणा ।

अबुधैरिति ॥ हे कृष्ण ! पार्थैः कौन्तेयैः अबुधैः मूर्खैः पाण्डवैः कृतमानसंविदः विहितपूजाचारस्य सतस्तव भवतः योग्यता कुत एव भवति अधिकारिता कथं स्यात् । अत्र दृष्टान्तमाह—हि युक्तोऽयमर्थः, हि यस्मात्कारणात् सहसि मार्गशीर्षे मासि प्लवगैः वानरैः उपासितं सेवितं गुञ्जाफलं रक्तिकाबीजं सोष्मतां न एति उष्णत्वमग्नित्वं न प्राप्नोति । हेमन्ते हि मर्कटा अग्निभ्रान्त्या गुञ्जाफलानि सेवन्ते । वानरैः सेवितस्य गुञ्जाफलस्य यथा उष्णत्वं भविष्यति, पाण्डवैः कृतसत्कारस्तथा त्वं तेन गुरुः सञ्जातः इत्यर्थः ॥४७॥

किञ्च यथा पार्थोऽनादराद्राज्ञो न किञ्चिल्लाघवं, तथा तदादराच्च न ते किञ्चिद्गौरवमित्याह—

अबुधैरिति ॥ अबुधैरज्ञैः पार्थैः कृते मानसंविदो पूजातोषणे यस्य तस्य ।

'संवित्क्रिया प्रतिज्ञायां सङ्केताचारनामसु ।

सम्भाषणे तोषणे च-'

इति विश्वः । तव योग्यता कुत एव । न कुतोऽपीत्यर्थः । तथा हि-सहसि मार्गशीर्षे । 'मार्गशीर्षे सहा मार्गः' इत्यमरः । प्लवगैरुपासितं सेवितं गुञ्जाफलं काकफलानि । जातावेकवचनम् । 'काकचिञ्ची-गुञ्जे तु कृष्णला' इत्यमरः । सोष्मतामुष्णतां नैति हि । न हि पुंसां मूढपरिग्रहौ गौरवाऽगौरवयोः प्रयोजकावित्यर्थः । अत्र कृष्णगुञ्जाफलयोर्विशेषयोरेव वाक्यभेदेन प्रतिबिम्बकरणाद् दृष्टान्तालङ्कारः ॥४७॥

**अपराधशतक्षमं नृपः क्षमयाऽत्येति भवन्तमेकया ॥**
**हृतवत्यपि भीष्मकात्मजां त्वयि चक्षाम समर्थ एव यत् ॥ ४८ ॥**

अपराधेति ॥ हे कृष्ण ! नृपोऽस्मत्स्वामी शिशुपालः भवन्तं त्वाम् एकया केवलया क्षमया क्षान्त्या अत्येति जयति, किंलक्षणं भवन्तम् अपराधशतक्षमम् आगःशतसहिष्णुमपि । यद् यस्मात्कारणात् असौ समर्थ एव प्रबलोऽपि सन् त्वयि भवति विषये चक्षमे सेहे । अग्रे हि शिशुपालेन त्वयि विषये एवंविधरुक्मिणीहरणलक्षणोऽपराधः निजमनसि धृत्वा सहितः । किंलक्षणे त्वयि भीष्मकात्मजां रुक्मिणीं हृतवत्यपि हठाद् आनीतवत्यपि । स्त्रीरत्नहरणान्महानपराधः । यदा त्वया भीष्मकात्मजा रुक्मिणी हृता, तदा असौ चक्षमे । तदमुना समानः न कोऽपि क्षमावान् ॥ ४८ ॥

यदपूरीत्यादिना यत्सात्यकिना शतापराधक्षमत्वमुक्तं, तत्रोत्तरमाह—

अपराधेति ॥ नृपश्चैद्यः अपराधस्य शतक्षम राज्ञः शतापराधसहिष्णुं भवन्तम् एकया क्षमया । एकापराधसहनेनेत्यर्थः । अत्येति अतिक्रामति । अपराधकोटीनामपि तदंशेनापि साम्यासम्भवादिति भावः । तामेव क्षमां दर्शयति—त्वयि भीष्मकात्मजां रुक्मिणीं हृतवत्यपि समर्थः प्रतीकारक्षम एव सन्नपि चक्षाम क्षाम्यति स्मेति यत् । तया क्षमयेत्यर्थः ॥ ४८ ॥

कथं शिशुपालः क्षमावान् सहिष्णुर्भवतीत्याह—

**गुरुभिः प्रतिपादितां वधूमपहृत्य स्वजनस्य भूपतेः ॥**
**जनकोऽसि जनार्दन ! स्फुटं हतधर्मार्थतया मनोभुवः ॥ ४९ ॥**

गुरुभिरिति ॥ हे कृष्ण ! जनार्दन ! त्वं स्फुटं निश्चितं मनोभुवः कन्दर्पस्य जनकोऽसि पिता वर्तसे, कथं यतः हतधर्मार्थतया उल्लङ्घितधर्मार्थत्वेन । यतः कामोऽपि हतधर्मार्थ एव। किं कृत्वा भूपतेः शिशुपालस्य राज्ञः वधूमपहृत्य भार्यां हृत्वा, किंलक्षणस्य भूपतेः स्वजनस्य बान्धवस्य, किंलक्षणां वधूं गुरुभिः मातृपित्रादिभिः प्रतिपादितां दत्ताम्। तेन हेतुना त्वं कामस्य पिता । प्रद्युम्नो मनोभूः हरेः पुत्रः ॥ ४९ ॥

'राक्षसः क्षत्रियस्यैवम्' इति स्मरणाद्राक्षसोद्वाहस्य क्षात्रधर्मत्वाद्रुक्मिणीहरणे कोऽस्माकमपराधः, राज्ञो वा काऽत्र क्षमेत्याकाङ्क्षायामाह—

गुरुभिरिति ॥ हे जनार्दन ! गुरुभिः पित्रादिभिः प्रतिपादितां राज्ञे दत्ताम् अत एव स्वजनस्य बन्धोर्भूपतेर्महाराजस्य वधूं जायामपहृत्य हृतौ धर्मार्थौ येन तत्तया हृतधर्मार्थतया हेतुना स्फुटं मनोभुवः कामस्य जनकोऽसि । धर्मार्थबाधेन काममात्रनिष्ठोऽसीत्यर्थः । नायं राक्षसो विवाहः ।

'हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं तथा ।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते' ॥

इति कन्याहरणस्य राक्षसत्वलक्षणात् । अयं तु परदारापहरणे बन्धुद्रोहो राजद्रोहश्चेत्यहो ! पापिष्ठस्य कामान्धस्य ते परमसाहसिकत्वमिति भावः ॥ ४९ ॥

**अनिरूपितरूपसम्पदस्तमसो वाऽन्यभृतच्छदच्छवेः ॥**
**तव सर्वगतस्य सम्प्रति क्षितिपः क्षिप्नुरभीशुमानिव ॥ ५० ॥**

**अनिरूपितेति ॥ हे कृष्ण ! क्षितिपश्चैद्यः सम्प्रति अधुना ते तव क्षिप्नुः तिरस्कर्ता । किंलक्षणस्य तव सर्वगतस्य सर्वं यत् गम्यागम्यं तद्गतस्य । तव स्वभावं न जानातीत्यर्थः, कपटित्वात् । अपरं किंलक्षणस्य तव अन्यभृतच्छदच्छवेः परपुष्टपक्षकालकान्तेः, क इव क्षिप्नुः अभीशुमान् इव, वा शब्द इवार्थे, कस्येव तमसो वा तमस इव । यथा तमसोऽन्धकारस्य अभीशुमान् श्रीसूर्यः क्षिप्नुः तिरस्कर्ता निराकर्ता वर्तते । किंलक्षणस्य तमसः सर्वगतस्य सर्वव्यापिनः, अपरं किंलक्षणस्य तमसः अनिरूपितरूपसम्पदः अदर्शितरूपस्य । अन्ये त्वाहुः– अनिरूपिता अदृष्टा रूपाणां शुक्लपीतादीनां सम्पत् समृद्धिर्यत्र तत्तथा तस्य । अपरं किंलक्षणस्य तमसः अन्यभृतच्छदच्छवेः कोकिलपिच्छकान्तेः, अतिश्यामस्येत्यर्थः । अथ स्तुतिः–तमसो यथा क्षिप्नुरेवं चैद्यस्तव क्षिप्नुरिति । काकुप्रयोगेण नैव क्षिप्नुरित्यर्थः । किंलक्षणस्य अनिरूपितरूपसम्पदः अनिरूपिता अदृष्टा रूपाणां वराहसिंहादीनां सम्पदो भूतयो यस्य सः तथा तस्य विश्वरूपस्य, अपरं किंलक्षणस्य तव सर्वगतस्य सर्वव्यापिनः । चैद्यस्य श्रीसूर्य उपमानं, श्रीकृष्णस्य तम इति ॥ ५० ॥**

सत्यमीदृगेवाहं, ततः किमित्याशङ्क्य किमन्यद्ब्रवीदित्याह—

अनिरूपितेति ॥ अनिरूपितरूपसम्पदः शैलूषवद्बहुरूपधारित्वादज्ञातरूपविशेषस्याऽवाङ्मनसगोचररूपवैभवस्येति च गम्यते । अन्यत्र आरोपितकृष्णरूपं तमः, तेजोविशेषाभावस्तम इति च मतद्वयेऽपि प्रमाणाऽनवधृतरूपसम्पद इत्यर्थः । अन्यभृतच्छदच्छवेः कोकिलपक्षकान्तेस्तव तमसो वा तिमिरस्येव । 'वा स्याद्विकल्पोपमयोः' इति विश्वः । सर्वगतस्य क्षितिपश्चैद्योऽभीशुमानंशुमानिव सम्प्रतीदानीमेव क्षिप्नुः क्षेप्ता । आहन्तेत्यर्थः । शास्ताऽसौ दुरात्मनामिति भावः । 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति क्नुप्रत्ययः । 'न लोका—' इत्यादिना कृद्योगे षष्ठ्या निषेधे तवेति शेषे षष्ठी । पर्यवसानात्तु कर्मत्वलाभः । 'अभीषुः प्रग्रहे रश्मौ' इत्यमरः । विश्वप्रकाशादयः सर्वेऽप्यभिधानिका मूर्धन्यान्तेषु पेठुः । लोकवेदयोस्तालव्यान्तो दृश्यते । 'अभीशूनां महिमान'मित्यादि ॥ ५० ॥

**यद्येवं तर्हि किमर्थं सान्त्वमवादीरित्यत आह—**

**क्षुभितस्य महीभृतस्त्वयि प्रशमोपन्यसनं वृथा मम ॥**
**प्रलयोल्लसितस्य वारिधेः परिवाहो जगतः करोति किम् ॥ ५१ ॥**

**क्षुभितस्येति ॥ हे कृष्ण ! मम मे त्वयि विषये महीभृतः चेदिपतेः प्रशमोप-**

न्यसनं सामकथनं (निराकरणं?) वृथा अनर्थकमेव, किंलक्षणस्य महीभृतः क्षुभितस्य कुपितस्य। अत्र अर्थान्तरं न्यस्यति—यतः कारणात् प्रलयोल्लसितस्य कल्पान्तोच्छृङ्खलस्य वारिधेः समुद्रस्य परिवाहो जलनिर्गममार्गो जगतो विश्वस्य किं करोति किं सुखं विधत्ते। परिवाहो नौकमार्गः(?) प्राकृतम्। तदेतेन एतदुक्तं भवति—अहं तुल्ये आगमने सान्त्वं स्वेच्छयैवाऽवोचं, तस्य तु सन्धिवार्ता नास्तीत्यर्थः ॥ ५१ ॥

तर्ह्यस्मदर्थं त्वया राजा सान्त्वयितव्य इत्याशङ्क्य नेत्याह—

क्षुभितस्येति ॥ त्वयि विषये क्षुभितस्याऽतिकुद्धस्य महीभृतो राज्ञो मम प्रशमोपन्यसनं शान्तोपदेशो वृथा निष्फलः। तथा हि—प्रलयोल्लसितस्य कल्पान्तक्षुभितस्य वारिधेः जगतः परिवाहो जगत्कृतो जलनिर्गममार्गः किं करोति। न किञ्चिदित्यर्थः। दृष्टान्तालङ्कारः ॥ ५१ ॥

**प्रहितः प्रधनाय माधवानहमाकारयितुं महीभृता ॥**
**न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव ॥ ५२ ॥**

**प्रहित इति** ॥ हे कृष्ण! अहं महीभृता राज्ञा चैद्येन माधवान् यादवान् आकारयितुमाह्वातुं प्रहितः प्रस्थापितोऽस्मि, किमर्थं प्रधनाय सङ्ग्रामाय। ननु शत्रूणां छलेन प्रहर्तव्यं नेति तमसौ आह्वास्त। यतः कारणात् महौजसो बलिष्ठाः परेषु शत्रुषु छलात् व्याजात् न अपकुर्वन्ति द्रोहं न विदधति, के इव मलिम्लुचा इव। यथा मलिम्लुचाः चौराः परेषु लोकेषु छलात् अपकुर्वन्ति, तथा न साधवः नोत्तमाः ॥ ५२ ॥

तर्ह्यसन्धित्सुना राज्ञा किमर्थं भवानिह प्रहितस्तत्राह—

प्रहित इति ॥ प्रधनाय युद्धाय माधवान् यादवानाकारयितुमाह्वातुम्। 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्'। 'हूतिराकारणाह्वानम्' इति चामरः। महीभृता राज्ञाऽहं प्रहितः प्रेरितः। ननु रन्ध्रे हन्तव्याः शत्रवो नाह्वातव्या इत्यत्राऽऽह—नेति। महौजसो महावीराः परेष्वरिषु मलिम्लुचाः पाटच्चरा इव। 'पाटच्चरमलिम्लुचाः' इत्यमरः। छलात्कपटान्नाऽपकुर्वन्ति। तस्मादाह्वानं कर्तव्यमिति वाक्यार्थहेतुकं काव्यलिङ्गमुपमालङ्कारसङ्कीर्णम् ॥ ५२ ॥

**तदयं समुपैति भूपतिः पयसां पूर इवाऽनिवारितः ॥**
**अविलम्बितमेधि वेतसस्तलव(१)न्माधव! मा स्म भज्यथाः ॥ ५३ ॥**

**तदयमिति** ॥ तदिति वाक्योपसंहारे, हे कृष्ण! तत्तस्मात्कारणात् अयं भूपतिः चैद्यः समुपैति शिशुपालः राजा आगच्छति, किंलक्षणो भूपतिः अनिवारितः निषेद्धुमशक्यः, क इव पयसां पूर इव उदकानां प्रवाह इव। यथा पयसामुदकानां पूरः महाप्रवाहः समुपैति। त्वं च अविलम्बितं शीघ्रम् अविलम्बेन एधि वेतसो वञ्जुलवत्। यतः कारणात् तलवत् तालवत् मा स्म भज्यथाः तालद्रुमवत् भङ्गं मा प्राप्नुहि। यदि प्रणामं न भजसि, तदा नूनं नङ्क्ष्यसीत्यर्थः। अत्र वेतसो निदर्शनम्। पयःपूरे ह्यागते वेतसः प्रणतत्वान्न नश्यति। यदुक्तम्—'वैतसीं वृत्तिमाश्रित्ये'ति। उन्नता अनमन्तस्तु तालाः अधः पतन्त्येव। उक्तं च—

पतत्यङ्गारवर्षेऽस्मिन् वाति वा प्रलयानिले।
तालः स्तब्धतयारब्धतयैव(?) सह नङ्क्ष्यति ॥

इति। तालस्य तलशब्दः ॥ ५३ ॥

---

(१) ०स्तरुव०।

तदेवागमनप्रयोजनमुक्त्वा हितमुपादिशति—

**तदयमिति** ॥ तत्तस्मात्युद्धार्थत्वादयं भूपतिश्चैद्यः पयसा पूरः प्रवाह इवाऽनिवारितः समुपैति । हे माधव ! अविलम्बितं शीघ्रं वेतसः एधि भव। तद्वन्नम्रमात्मानं रक्षेत्यर्थः। अस्तेर्लोट् सिपि हेर्धिः 'घ्वसोरेद्धावभ्यासलोपश्च' इति एत्वम् । 'धि च' इति सकारलोपः(१) । माधव ! त्वं तरुवन्महावृक्षवत् मा स्म भज्यथाः मा भज्यस्व । अतः आत्मानं न विनाशयेत्यर्थः । भजः कर्मण्याशिषि लिङः ( अर्थे ) 'स्मोत्तरे लङ् च' इति लङ् 'न माङ्योगे' इत्यडभावः। उपमालङ्कारः ॥ ५३ ॥

**परिपाति स केवलं शिशूनिति तन्नामनि मा स्म विश्वसीः ॥**
**तरुणानपि रक्षति क्षमी स शरण्यः शरणागतान् द्विषः ॥ ५४ ॥**

**परिपातीति ॥ हे कृष्ण ! त्वम् इति तन्नामनि तदभिधाने तस्य शिशुपालस्य नामनि मा स्म विश्वसीः मा विश्वासं कार्षीः । इत्यर्थयुक्तं तन्नाम मा ज्ञासीरित्यर्थः । इतीति किं—यत्, असौ केवलं शिशून् पाति परिरक्षति । न केवलं शिशून् रक्षति, अपरं तरुणानपि यूनोऽपि द्विषः शत्रून् रक्षति पात्येव, किंलक्षणान् तरुणान् द्विषः शरणागतान् प्राणत्राणाय प्राप्तान्, किंभूतोऽयं शरण्यः शरणागतवत्सलः, अपरं किंलक्षणः क्षमी सहिष्णुः ॥ ५४ ॥**

ननु राज्ञि शिशुपाले यूनामफलमित्याशङ्क्याह—

**परिपातीति** ॥ शिशुपालः । केवलमित्यवधारणे क्रियाविशेषणम् । शिशून्परिपातीति शिशूनेव पालयतीति तन्नामनि तस्य शिशुपालसंज्ञायां मा स्म विश्वसीः मा विश्वासं कुर्वित्यर्थः। श्वसेः 'स्मोत्तरे लङ् च' इति लङि 'रुदश्च पञ्चभ्यः' इति ईडागमः । चकाराल्लुङि वा तत्र 'अस्ति सिचोऽपृक्ते' इति ईडागमः, 'ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्' इति वृद्धिप्रतिषेधः । 'न माङ्योगे' इत्यडभावस्तूभयत्र । किन्तु क्षमी क्षमावान । व्रीह्यादित्वादिनिः । शरणे रक्षणे साधुः शरण्यः रक्षणक्षमः । 'तत्र साधुः' इति यत्प्रत्ययः । स शिशुपालः शरणं रक्षितारमागतान्प्राप्तान् । 'शरणं गृहरक्षित्रोः', 'शरणं रक्षणे गृहे' इत्युभयत्रापि विश्वः । द्विषः शत्रूंस्तरुणान् यूनोऽपि रक्षति । अतो निःशङ्कं शरणमागच्छेत्यर्थः ॥ ५४ ॥

**न विदध्युरशङ्कमप्रियं महतः स्वार्थपराः परे कथम् ॥**
**भजते कुपितोऽप्युदारधीरनुनीतिं नतिमात्रकेण सः ॥ ५५ ॥**

**नेति ॥ हे कृष्ण ! परे महात्मानः स्वार्थपराः स्वार्थकरणोद्यताः सन्तः महतः उत्तमस्य अशङ्कं निर्भयं शीघ्रं वा कथम् अप्रियमनभिप्रेतं न विदध्युः न कुर्वन्ति, अपि तु कुर्वन्त्येव । परं स उदारधीः विपुलचित्तः कुपितोऽपि क्रुद्धोऽपि नतिमात्रकेण नमस्कारमात्रेण अनुनीतिं भजते प्रसादं भजति। उक्तं च रघुकाव्ये श्रीकालिदासेन—'प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम्' इति ॥ ५५ ॥**

ननु वयं द्रोग्धारः । सोऽप्यातिक्षुभितः किल कथं नः पालयेदित्याशङ्क्याह—

**नेति** ॥ स्वार्थपराः स्वार्थनिष्ठाः परे शत्रवो महतोऽधिकस्य कथमप्रियमपकारम् अशङ्कं यथा तथा न विदध्युः । कुर्युरेव कार्यवशादित्यर्थः । किन्तु उदारधीर्महामतिः । 'उदारो दातृमहतोः' इत्यमरः । स राजा कुपितोऽपि नतिमात्रकेण प्रणतिमात्रकेणाऽनुनीतिमनुनयं भजते । अनुग्रहीष्यतीत्यर्थः । 'प्रणिपातप्रतीकारः संरम्भो हि महात्मना'मिति भावः ॥ ५५ ॥

**हितमप्रियमिच्छसि श्रुतं यदि सन्धत्स्व पुरा विनश्यसि(२) ॥**
**अनृतैरथ तुष्यसि प्रियैर्जयताज्जीव भवाऽवनीश्वरः ॥ ५६ ॥**

---

( १ ) 'उपन्यस्तसूत्रेण सकारस्यैवाऽलोऽन्त्यपरिभाषया एत्वे 'श्नसोरल्लोपः' इत्यकारलोपे रूपासिद्धेः 'धि च' इत्यस्योपन्यासो भ्रममूलकः' । टिप्पणीयं निर्णयसागरीयसर्वङ्कषायामुपलभ्यते । ( २ ) न नश्यसि ।

हितमिति ॥ हे कृष्ण ! यदि त्वम् अप्रियं श्रुतं हितमिच्छसि वाञ्छसि तदा सन्धत्स्व सन्धिं कुरुष्व, पुरा पश्चात् विनश्यसि विनङ्क्ष्यसि विनाशं प्राप्स्यसि । अथ वा यदि अनृतैः प्रियैः तुष्यसि प्रियत्वादन्यैरपि वाक्यैस्तोषं प्राप्नोषि, तदा त्वं जयतात् विजयी भव जीव नन्द तदा अवनीश्वरो भव राजा सम्पद्यस्व । यदि भणितेनापि किञ्चि-द्भवति तदा त्वम् ईदृशो भव । एतानि किल प्रियवाक्यानि असत्यानि चेत्यर्थः ॥ ५६ ॥

किं बहुना, तवायं हितोपदेशसङ्ग्रह इत्याशङ्क्याह—

हितमिति ॥ श्रुतम् अप्रियं हितमिच्छसि यदि । अप्रियं हितं श्रुतमाप्तादाकर्णितं ग्रहीतुमिच्छसि चेदित्यर्थः । सन्धत्स्व राज्ञा सन्धेहि । पुरा न नश्यसि । अन्यथा विनङ्क्ष्यसीत्यर्थः । 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट् । अथेति पक्षान्तरे । अनृतैरसत्यैः प्रियैस्तुष्यसि यदि, जयताज्जयतु । 'तुह्योस्तात-ङ्ङाशिष्यन्यतरस्याम्' इति तोस्तातङादेशः । जीव, अवनीश्वरः सार्वभौमो भव । ततः किमेभिः प्रियालापैः । अप्रियमपि हितमेव गृहाणेति भावः ॥ ५६ ॥

प्रतिपक्षजिदप्यसंशयं युधि चैद्येन विजेष्यते भवान् ॥
ग्रसते हि तमोऽपहं मुहुर्ननु राहुाह्वमहर्पतिं तमः ॥ ५७ ॥

प्रतिपक्षजिदिति ॥ हे कृष्ण ! असंशयं निश्चितं युधि सङ्ग्रामे चैद्येन शिशुपालेन भवान् त्वं विजेष्यते पराभूयते अभिभूयते, किंलक्षणो भवान् प्रतिपक्षजिदपि शत्रुविना-शकोऽपि । युक्तं चैतत्, हि यस्मात्कारणात् नन्विति सम्बोधने, अहो ! राहुाह्वं सैंहिकेया-भिधानं तमः अन्धकारः अहर्पतिं श्रीसूर्यं ग्रसते गिलति राहुसंज्ञं तमो रविं परिभवति, किंलक्षणमहर्पतिं मुहुर्वारंवारं तमोऽपहं ध्वान्तध्वंसकरम् । रविः सर्वतमांस्यपहरति, परं राहुसंज्ञकतमसा अहर्पतिरपि ग्रस्यते । तथा तेन राज्ञा त्वं चेति भावः ॥ ५७ ॥

ननु कंसाद्यनेकविजयी कृष्णः कथं विजेष्यते राज्ञेत्याशङ्क्याह—

प्रतिपक्षजिदिति ॥ प्रतिपक्षजिदनेकारिहन्तापि भवानसंशयं संशयो नास्ति । अर्थाभावेऽव्ययी-भावः । युधि सङ्ग्रामे चैद्येन शिशुपालेन विजेष्यते । जयतेः कर्मणि लट् । शेषे प्रथमः । तमांस्यपहन्तीति तमोऽपहं सर्वतमोऽपहारिणम् । 'अपे क्लेशतमसोः' इति हन्तेर्डप्रत्ययः । अह्नां पतिमहर्पतिं सूर्यम् । 'अह-रादीनां पत्यादिषूपसङ्ख्यानम्' इति वैकल्पिको रेफादेशः । राहुरिति आह्वा यस्य तत् राहुाह्वं तमः । 'आह्वयाह्व अभिधानं च' इत्यमरः । मुहुर्ग्रसते ननु गिलति हि । अत्र हरिसूर्ययोः राहुचैद्ययोश्च वाक्यभेदेन प्रतिबिम्बकरणाद् दृष्टान्तालङ्कारः ॥ ५७ ॥

अचिराज्जितमीनकेतनो विलसद्वृष्णि(१)गणैर्नमस्कृतः ॥
क्षितिपः क्षपितो(२)द्धताऽन्धको हरलीलां स विडम्बयिष्यति ॥ ५८ ॥

अचिरादिति ॥ हे कृष्ण ! सः क्षितिपः भूमिपः चैद्यः हरलीलां विडम्बयिष्यति रुद्रसादृश्यं भजिष्यति, यतः किंलक्षणः क्षितिपः अचिरात् शीघ्रं जितमीनकेतनः भग्न-कन्दर्पः । भवत्सुतं कन्दर्पं प्रद्युम्नं स जेष्यतीत्यर्थः । अपरं किंलक्षणः क्षितिपः विलसद्-वृष्णिगणैर्नमस्कृतः विलसद्भिः नृत्यद्भिः सहर्षैः वृष्णिगणैः यादवसमूहैः नमस्कृतः प्रणतः, अपरं किंलक्षणः क्षितिपः क्षपितोद्धताऽन्धकः क्षपिता जिताः उद्धताः सर्वतोऽन्धकाः यादवविशेषा येन सः तथा । हरोऽपि एवंविधो भवति—दग्धकन्दर्पः विलसद्भिः क्रीडद्भिः वृष्णिगणैः प्रमथादिभिर्नमस्कृतः ध्वस्तोद्धताऽन्धकासुरः ॥ ५८ ॥

---

( १ ) विलसन् वृष्णि । ( २ ) क्षयितो० ।

किञ्च न भवानेक एव विजेष्यते, किन्तु सर्वैर्यादवैः सहेत्याह—

अचिरादिति ॥ स क्षितिपः राजा अचिरादविलम्बितमेव जितो मीनकेतनः कार्ष्णिः प्रद्युम्नः स्मरश्च येन सः, वृष्णयो यादवभेदास्तेषां गणैरोघैर्नमस्कृतो भीत्या प्रणतः सन् । अत एव विलसन् दीप्यमानः । अन्यत्र वृष्णीति पदच्छेदः । वृष्णि उक्षाणि विलसन् । वृषारूढ इत्यर्थः । गणैः प्रमथैर्नमस्कृतः । 'गणाः प्रमथसङ्ख्यौघाः' इति, 'वृषा महेन्द्रे वृषभे' इति च वैजयन्ती । चायिता नाशिता उद्धता दृप्ता अन्धका यादवभेदाः, अन्यत्राऽन्धकोऽसुरो येन सः हरलीलां शम्भुविभ्रमं विडम्बयिष्यत्यनुकरिष्यति । अत्र हरलीलामिति सादृश्याक्षेपान्निदर्शना श्लेषसङ्कीर्णा ॥ ५८ ॥

**निहतोन्मददुष्टकुञ्जराद्दधतो भूरि यशः क्रमार्जितम् ॥**
**न बिभेति रणे हरेरपि क्षितिपः का गणनाऽस्य वृष्णिषु ॥ ५९ ॥**

**निहतोन्मदेति ॥ हे कृष्ण ! क्षितिपः चैद्यः रणे सङ्ग्रामे हरेरपि शक्रादपि न बिभेति न त्रस्यति,वृष्णिषु यादवेषु अस्य चैद्यस्य का गणना क आदरः। अथ च यः हरेरपि सिंहादपि न बिभेति तस्य वृष्णिषु एडकेषु पशुषु मृगादिषु वा का गणना । किंलक्षणात् हरेः इन्द्रात्सिंहाच्च निहतोन्मददुष्टकुञ्जरात् निहतो हतः उन्मदः अधिकमदो दुष्टकुञ्जरो गजः कुवलयापीडः ऐरावणो वा येन सः तथा तस्मात् । हरिणा हि पूर्वं दुष्टकुञ्जरो गोकुले निहतोऽभूत् । द्वितीयपक्षे निहता मारिता उन्मदा मत्ता दुष्टा व्यालाः कुञ्जरा हस्तिनो येन सिंहेन तस्मात् । किं कुर्वतः भूरि प्रभूतं क्रमार्जितम् अनुक्रमोपार्जितं यशो दधतः कीर्तिं धारयतः । द्वितीयपक्षे क्रमार्जितं क्रमोच्छ्रितं फालोत्पन्नं यशो दधतः ॥५९॥**

ननु देवासुरैरप्यजय्या यादवाः कथं राज्ञा जेष्यन्ते, तत्राह—

निहतोन्मदेति ॥ क्षितिपश्चेदिपो, निहत उन्मदो दुष्टकुञ्जरः कुवलयापीडाख्यो येन तस्मात्, अन्यत्र हताऽनेकमत्तमातङ्गात् । अत एव क्रमार्जितं भूरि यशो दधतः हरेः कृष्णात्सिंहाच्चेति ध्वनिः । रणे न बिभेति । अस्यैतादृशश्चैद्यस्य वृष्णिषु यादवेषु मेषेषु च । 'वृष्णिस्तु यादवे मेषे' इति विश्वः । का गणना । कृष्णमगणयतो यादवाः के इत्यर्थः । अत्र कुञ्जरघातिनः सिंहस्य का कथा मेषेष्वित्यर्थान्तरप्रतीतिध्वनिरेव न श्लेषः । हरेर्वृष्णिविशेषस्यापि श्लिष्टत्वात्प्रकृताऽप्रकृतश्लेषे तदङ्गीकारादित्युक्तं प्राक् ॥ ५९ ॥

**न तदद्भुतमस्य यन्मुखं युधि पश्यन्ति भिया न शात्रवः ॥**
**द्रवतां ननु पृष्ठमीक्षते वदनं सोऽपि न जातु विद्विषाम् ॥ ६० ॥**

**नेति ॥ हे कृष्ण ! शात्रवो वैरिणः युधि सङ्ग्रामे यदस्य चैद्यस्य मुखमास्यं भिया भीत्या न पश्यन्ति न विलोकयन्ति, तन्न अद्भुतं न आश्चर्यम् । यतः कारणात् सोऽपि चैद्योऽपि द्विषां शत्रूणां पृष्ठमेव ईक्षते जातु कदाचिदपि न वदनम् । किंलक्षणानां द्विषां द्रवतां पलायमानानाम् ॥ ६० ॥**

हरेरपि न बिभेतीत्युक्तं, तदेव सम्भावयितुं तस्य पराक्रमान् आसर्गसमाप्तेर्वर्णयति—

नेति ॥ युधि शात्रवो भियाऽस्य मुखं न पश्यन्तीति यत्, तन्नाऽद्भुतम् । कुतः—सोऽपि न ईक्षते ननु खलु । द्रवतां भयात्पलायमानानां विद्विषां पृष्ठं कायपार्श्वाङ्गमीक्षते, जातु कदाचित् वदनं न ईक्षते ननु खलु । द्वयोरन्यतरमुखेष्वन्योन्यस्य मुखाविलोकनाऽसम्भवात्स्वयं विमुखानां विद्विषामभिमुखस्याऽप्यस्य मुखाऽदर्शनादद्भुतमित्यर्थः । अत एव वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ६० ॥

**प्रतनूल्लसिताऽचिरद्युतः शरदं प्राप्य विखण्डितायुधाः ॥**
**दधतेऽरिभिरस्य तुल्यतां यदि नासारभृतः पयोमुचः(१) ॥ ६१ ॥**

---

(१) पयोभृतः ।

**प्रतनूल्लसितेति** ॥ हे कृष्ण ! पयोमुचो मेघाः यदि चेत् आसारभृतः न भवन्ति यदि वेगवर्षिणो न स्युः, तर्हि अस्य चैद्यस्य अरिभिः शत्रुभिः सह तुल्यतां दधते साम्यं बिभ्रति । आसारभृत्त्वेन साम्यम्, एतच्छत्रूणाम् आसाररहितत्वात् । इदानीं साम्यमाह—किंलक्षणाः पयोमुचः प्रतनूल्लसिताऽचिरद्युतः प्रतन्व्यः सूक्ष्मा उल्लसिताः प्रदीप्ता अचिरद्युतो विद्युतो येषां ते तथा, किंलक्षणाः रिपुगणाः प्रतनूल्लसिताऽचिरद्युतः प्रतनु स्वल्पम् उल्लसितमुल्लसत् स्फुरितं येषां ते तथा, अचिरा घनकालाऽनवस्थायिनी द्युत् द्युतिः कान्तिर्येषां ते अचिरद्युतः, ततः कर्मधारयः । अपरं किंलक्षणाः पयोमुचः शरदं प्राप्य विखण्डितायुधाः शरदम् ऋतुं प्राप्य प्रणष्टेन्द्रचापाः । द्वितीयपक्षे शरान् बाणान् ददातीति शरदः तं शरदं चैद्यं प्राप्य विखण्डितायुधाः छिन्नप्रहरणाः ॥ ६१ ॥

प्रतनूल्लसितेति ॥ शरदम् ऋतुं प्राप्य विखण्डितायुधाः खण्डितेन्द्रचापाः, अन्यत्र शरान् ददातीति शरदस्तं शरदं शरवर्षिणं प्राप्य खण्डितशस्त्राः प्रतनूल्लसिताऽचिरद्युतोऽल्पस्फुरितविद्युतः, अन्यत्र प्रतनूल्लसिताः स्वल्पोल्लसितास्त एवाऽचिरद्युतोऽस्थिरद्युतः पयोभृतो मेघा आसारभृतः वृष्टिमन्तः न यदि । शरदि वृष्टिशून्यत्वादिति भावः । सुहृद्बलशून्या इत्यर्थः । 'आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले' इति वैजयन्ती । अस्याऽरिभिस्तुल्यतां दधते । अत्र पयोभृतामुपमानानामुपमेयभावोक्तेः प्रतीपालङ्कारः । तेषामासारासम्बन्धेऽपि सम्भावनया तदसम्बन्धोक्तेरतिशयोक्तिभेदश्चेति सङ्करः ॥ ६१ ॥

**मलिनं रणरेणुभिर्मुहुर्द्विषतां क्षालितमङ्गनाश्रुभिः ॥**
**नृपमौलिमरीचिवर्णकैरथ(१) यस्याऽङ्घ्रियुगं विलिप्यते ॥ ६२ ॥**

**मलिनमिति** ॥ हे कृष्ण ! यस्य चैद्यस्य अङ्घ्रियुगं चरणयुगलम् अथ पश्चात् नृपमौलिमरीचिवर्णकैः विलिप्यते मण्ड्यते रज्यते । राजानो यस्य पादवन्दनं शिरसा कुर्वन्तीत्यर्थः । नृपाणां राज्ञां मौलयः मुकुटाः तेषां मरीचयः किरणाः त एव वर्णकाः सुगन्धद्रव्यक्षोदाः तैः । किंलक्षणमङ्घ्रियुगं रणरेणुभिर्मलिनं समरधूलिभिर्धूसरं मालिन्यं नीतम्, अपरं किंलक्षणमङ्घ्रियुगं द्विषतां शत्रूणामङ्गनाऽश्रुभिः मुहुर्वारंवारं क्षालितं शत्रुवल्लभानयनजलैः निरन्तरं धौतम् । योऽपि वर्णकेन अनुलिप्यते, स पूर्वं धूलिभिः रूक्षितत्वात् स्नाप्यते, अपरम् अन्यदपि वस्त्रं मुहुर्मुहुः प्रक्षाल्यते, पश्चात् वर्णकेन विचित्र्यते ॥ ६२ ॥

मलिनमिति ॥ मुहुरसकृत् रणरेणुभिर्मलिनमत एव द्विषतामङ्गनाश्रुभिः क्षालितं । नाऽहत्वाऽरीन् रणान्निवर्तिन इति भावः । यस्याऽङ्घ्रियुगं चरणयुगलम्, अथ रेणुक्षालितानां नृपाणां प्रणतानां राज्ञां मौलिमरीचयो मुकुटमणिरश्मयस्तैरेव वर्णकैर्विलेपनैश्चन्दनैः । 'चन्दने चापि वर्णकम्' इति विश्वः । विलिप्यते विशोध्यते । अत्राऽङ्घ्रियुगस्य विशेषणमाहिम्ना स्नाताऽनुलिप्तपुरुषसाम्यप्रतीतेः समासोक्तिः ॥ ६२ ॥

**समराय निकामकर्कशं क्षणमाकृष्टमुपैति यस्य च ॥**
**धनुषा सममाशु विद्विषां कुलमाशङ्कितभङ्गमानतिम् ॥ ६३ ॥**

**समरायेति** ॥ हे कृष्ण ! यस्य चैद्यस्य विद्विषां कुलम् अरीणां वृन्दं धनुषा समं चापेन सह आनतिमुपैति नम्रतां गच्छति । यदा धनुरेतेन सज्जीकृतं, तदैव अरयो नता इत्यर्थः । अथ च अरिकुलं धनुषा समं कृतं सदृशं विहितमित्यर्थः । किंलक्षणं विद्विषां कुलं समराय निकामकर्कशं युद्धायाऽत्यर्थकठोरम् । चैद्यं विना अनेनाऽरिकुलेन सह अन्यः शत्रुर्युद्धं कर्तुं न शक्नोति । धनुःपक्षेऽतिकठोरम् । अपरं किंलक्षणमरिवृन्दं क्षणमाकृष्टं क्षण-

---

(१) वर्णकैः खलु ।

माक्रान्तम्, द्वितीयपक्षे आकृष्टं कुण्डलीकृतम् । अपरं किंलक्षणमरिवृन्दम् आशङ्कितभङ्गं सम्भावितविनाशम् । यं हि राजाऽऽह्वयते रणाय, सोऽवश्यमेवात्मनाशमाशङ्कते । द्वितीयपक्षे अत्याकृष्टत्वात् आशङ्कितभङ्गं शङ्कितद्वैधीभावम् । अत्याकर्षणाद्धि धनुर्भज्यते । अनेन धनुषा सदृशत्वमुक्तम् । धनुषो रिपुवर्गस्य च गुणसादृश्यमभूदित्यर्थः । क्रूरमपि चैद्यस्य कर्षणात् स्फुटत्यधुना च इत्याशङ्कते ॥ ६३ ॥

समरायेति ॥ किञ्चेति चार्थः । निकामकर्कशमतिकठिनम् । दुर्धर्षमित्यर्थः । समराय सम्प्रहाराय आकृष्टमाहूतमावर्जितं च क्षणम् आशङ्कितभङ्गं मनसोत्प्रेक्षितस्वपराजयम्, अन्यत्राऽतिकर्षणात्सम्भावितदलनं यस्य विद्विषां कुलमाशु धनुषा सममानतिं नम्रतामुपैति । अत्र धनुर्नमनकार्यस्य द्विषन्नमनस्य तत्सहभावोक्तेः कार्यकारणयोः पौर्वापर्यविपर्ययनिमित्तरूपाऽतिशयोक्तिमूला सहोक्तिरलङ्कारः ॥ ६३ ॥

**तुहिनांशुममुं सुहृज्जनाः कलयन्त्युष्णरुचिं(१) विरोधिनः ॥**
**कृतिभिः कृतदृष्टिविभ्रमाः स्रजमेके भुजगं यथाऽपरे ॥ ६४ ॥**

तुहिनांशुमिति ॥ हे कृष्ण ! सुहृज्जनाः बान्धवा मित्रवर्गाः अमुं शिशुपालं तुहिनांशुं कलयन्ति प्रह्लादकत्वात् हिमांशुं गणयन्ति जानन्ति, विरोधिनो रिपवः उष्णरुचिमुष्णरश्मिं श्रीसूर्यं जानन्ति, तापकारित्वात् । तथा एकमपि अनेकरूपं मन्यन्ते इत्याह—यथा कृतिभिः कुशलैः ऐन्द्रजालिकैः पुरुषैः कृतदृष्टिविभ्रमाः जनितदृष्टिबन्धाः एके जनाः स्रजं पश्यन्ति मालां विलोकयन्ति, अपरे अन्ये तामेव स्रजं भुजगं सर्पं पश्यन्ति इति ॥ ६४ ॥

तुहिनांशुमिति ॥ अमुमेवंविधं चैद्यं सुहृज्जनाः तुहिनांशुं कलयन्ति आह्लादकत्वाच्चन्द्रं मन्यन्ते । विरोधिनः उष्णकरं तपनं कलयन्ति । एकस्याऽनेकप्रतीतिमुपमिमीते—कृतिभिरिति । कृतिभिः कुशलैरैन्द्रजालिकादिभिः कृतदृष्टिविभ्रमा जनितदृष्टिविपर्यया एके नराः यथा स्रजं मालां कलयन्ति, अपरे तु भुजगं कलयन्ति, एकमेव रज्ज्वादिकामिति शेषः । उपमालङ्कारः । स चैकस्य निमित्तवशाद् गृहीतेनेदन्ताऽदस्तानेकधोल्लिखनात्मकेनोल्लेखेन सङ्कीर्यते ॥ ६४ ॥

**दधतोऽसुलभक्षयागमास्तनुमेकान्तरताममानुषीम् ॥**
**भुवि साम्प्रतमप्रतिष्ठिताः(२) सदृशा यस्य सुरैररातयः ॥ ६५ ॥**

दधत इति ॥ हे कृष्ण ! यस्याऽरातयः शत्रवः सुरैः सदृशाः देवैस्तुल्या भवन्ति । साम्प्रतं चैद्यारयो देवसदृशा इत्यर्थः । अरीणां देवानां च साम्यमाह—किंलक्षणा अरातयः असुलभक्षयागमाः असुलभो दुष्प्रापः क्षयागमो गृहागमनं येषां ते तथा । सङ्ग्रामे यं समेत्य येषां गृहागमनं दुर्लभमित्यर्थः । द्वितीयपक्षे देवाः किंलक्षणाः दुष्प्रापविनाशागमाः । देवा न क्षीयन्ते इत्यर्थः । रिपवः किं कुर्वन्तः एकान्तरतां केवमरणासक्तां तनुं दधतः मूर्तिं वहन्तः, देवाश्च किं कुर्वन्तः एकान्तरताम् एकान्तं निरन्तरं रतं निधुवनं यस्याः सा तां तनुं दधतः । देवा हि अतिविषयिण इत्यर्थः । यद्वा एकान्ते रता दुर्लक्ष्यां तनुं दधतः । अपरं किंलक्षणाः अरातयः अमानुषाः अविद्यमाना मानुषाः परिचारजनादयो येषां ते तथा, द्वितीयपक्षे देवाः किंलक्षणा अमानुषा अमर्त्याः मानवेभ्योऽन्ये अमानुषाः । अपरं किंलक्षणाः अरातयः भुवि अप्रतिष्ठिताः भूमौ अलब्धमहिमानः, किंलक्षणाश्च देवाः भुवि अप्रतिष्ठिताः भूमौ अवर्तमानाः स्वर्गस्थत्वात् ॥ ६५ ॥

---

(१) करं । (२) सम्प्रति न प्रति० ।

दधत इति ॥ असुलभच्चयागमाः दुर्लभगृहप्राप्तय', अन्यथाऽमरत्वाद् दुर्लभनाशयोगाः। 'निलयाऽपचयौ क्षया' इत्यमरः । एकान्तरतां भयाद्विजनस्थाने निरताममानुषीं कार्श्यमालिन्यादिना पिशाचादिवत्प्रतीयमानाम् , अन्यत्रैकान्तरतां नियतसुरतां नित्यभोगाममानुषीं दिव्यां तनुं दधतो दधानाः भुवि सम्प्रति क्वचन न प्रतिष्ठिताः राज्यभ्रंशात्क्वापि स्थितिमप्राप्ताः, अन्यत्र च भुवं न स्पृशन्तीत्यर्थः । देवत्वाद् यस्याऽरातयः सुरैः सदृशाः । अत्राऽप्यमुमिति पूर्वेण सम्बन्धः। श्लिष्टविशेषणेयमुपमा । श्लेष एवेत्यन्ये ॥ ६५ ॥

**अतिविस्मयनीयकर्मणो नृपतेः पश्य विरोधि चेष्टितम्(१) ॥**
**यदि मुक्तनयो नयत्यसावहितानां कुलमक्षयं क्षयम् ॥ ६६ ॥**

**अतिविस्मयनीयेति ॥ हे कृष्ण ! त्वं नृपतेः चैद्यस्य राज्ञः विरोधि चेष्टितं पश्य विरोधार्थां चेष्टां विलोकय, किंलक्षणस्य नृपतेः अतिविस्मयनीयकर्मणः अत्यद्भुतकार्यकारकस्य । किं विरोधि चेष्टितमित्याशङ्क्याह—यदसौ चैद्यः अहितानां कुलं शत्रूणां वंशम् अक्षयमपि अविनाशमपि क्षयं नयति । न विद्यते क्षयो यस्य तत् अक्षयं, क्षयं नयति गृहयुक्तं करोति। यस्य क्षयो विनाशो गृहं वा नास्ति, स कथं नाशं गृहं वा नीयते इति विरोधः । अविरोधस्तु क्षयशब्दस्य विनाशार्थत्वात् अक्षयशब्दस्याऽविद्यमानगृहार्थत्वात् । गृहेभ्योऽरीनुत्सार्य अयमेव वनं प्रवेशयतीत्यर्थः । किंलक्षणोऽसौ अमुक्तनयः श्रितनीतिमार्गः अत्यक्तनीतिः, किंलक्षणा नीतिः यत् , अयं गृहीतं कुलं क्षयं गृहं नयति रिपूणां कुलमक्षयमपि क्षयं नीयते इति विस्मयः। अथ चाऽक्षयमपि अविनश्वरमपि क्षयं विनाशं नयतीति भावार्थः॥**

अतिविस्मयनीयेति ॥ अतिविस्मयनीयकर्मणोऽत्यन्तविस्मितपौरुषस्य । स्मयतेरनीयर्प्रत्ययः । यस्य नृपतेश्चैद्यस्य विरोधि चेष्टितं द्वेषिरूपं(?) न किञ्चिदस्तीत्यर्थः। यस्मात् अमुक्तनयोऽत्यक्तनीतिमार्गोऽसौ अक्षयमविनाशि । पूर्वं केनापि क्षयं न नीतमित्यर्थः। अहितानां कुलं शत्रुजातं चयं नाशं नयति । नीतिपौरुषाभ्यां द्विषन्निर्मूलयितुरस्य का विरोधिवार्तेति भावः। अक्षयमपि क्षयं नयतीति विरोधस्य नेतृभेदेन परिहाराद्विरोधाभासोऽलङ्कारः ॥ ६६ ॥

**चलितोर्ध्वकबन्धसम्पदो मकरव्यूहनिरुद्धवर्त्मनः ॥**
**अतरत् स्वभुजौजसा मुहुर्महतः सङ्गरसागरानसौ ॥ ६७ ॥**

**चलितोर्ध्वेति ॥ हे कृष्ण! असौ चैद्यो महतः अतिविपुलान् सङ्गरसागरान् सङ्ग्रामसमुद्रान् मुहुरनेकशः स्वभुजौजसा निजबाहुबलेन अतरत् ततार, इति पौरुषातिशयोक्तिः । किंलक्षणान् सङ्गरसागरान् चलितोर्ध्वकबन्धसम्पदः चलिता निवृत्ता ऊर्ध्वाः उच्चाः कबन्धसम्पदोऽपमूर्धकलेवरसमृद्धयः छिन्नोत्तमाङ्गबहुलता येषु ते तथा तान्, द्वितीयपक्षे सागरान् किंलक्षणान् चलिता भुजास्फालनवशात् प्रवृत्ताः उर्ध्वाः कबन्धसम्पदो जललहरीणां समृद्धयो येषां ते तथा तान् । समुद्रे हि तरणसमये भुजास्फालनवशात् उर्ध्वाः कबन्धसम्पदो जलमयकबन्धा इवोत्पद्यन्ते । अपरं किंलक्षणान् सङ्गरसागरान् मकरव्यूहनिरुद्धवर्त्मनः मकराख्येन व्यूहेन रचनाविशेषेण निरुद्धवर्त्मनो रुद्धप्रसरान् । यो हि बाहुबलेन सागरं तरति तस्य महद् बलम् । मकरव्यूहेन यादसङ्घेन क्रूरजलचरजीवसमूहेन निवर्तितमार्गान् । तत्र केऽपि न सञ्चरन्ति इत्यर्थः ॥ ६७ ॥**

चलितोर्ध्वेति ॥ असौ चैद्यश्चलिताः प्रवृत्ता ऊर्ध्वा उत्थिताः कबन्धसम्पदः शिरोहीनकलेवरसम्पद एव कबन्धसम्पद उदकसमृद्धयो येषु तान् । श्लिष्टरूपकम् । 'कबन्धं सलिले प्रोक्तमपमूर्धकलेवरे' इति

(१) नृपतेर्यस्य ''किञ्चन ।

वैजयन्ती । मकरव्यूहाः मकराकारसैन्यविन्यासाः त एव मकरव्यूहा इति श्लिष्टरूपकम् । 'व्यूहौ समूहविन्यासौ' इति वैजयन्ती । निरुद्धवर्त्मनो निरुद्धप्रवेशमार्गान् अत एव महतो दुस्तरान् सङ्गरसागरान् समरसमुद्रान् स्वभुजौजसा निजभुजबलेनैव मुहुरसकृदतरत् । भुजेनाऽब्धितरणमदृष्टचरमत्यद्भुतमिति भावः । अत्र कबन्धा एव कबन्धाः मकरव्यूहा एव कच्छपादिव्यूहा इति श्लिष्टरूपकस्य सङ्गरेषु सागररूपणहेतुत्वात्केवलं श्लिष्टपरम्परितरूपकम् ॥ ६७ ॥

**न चिकीर्षति यः स्मयोद्धतं(१) नृपतिस्त्वच्चरणोपगं शिरः ॥**
**चरणं कुरुते गतस्मयः स्वमसावेव तदीयमूर्धनि ॥ ६८ ॥**

**नेति** ॥ हे कृष्ण ! यो नृपतिः राजा शिशुपालः स्मयोद्धतं दर्पोद्धतं शिरः मस्तकं त्वच्चरणोपगं तत्पादगतं न चिकीर्षति न कर्तुमिच्छति, असावेव चैद्यः स्वं चरणम् आत्मीयं पादं तदीयमूर्धनि कुरुते तस्य मस्तके न्यस्यति । किंलक्षणोऽसौ गतस्मयः गतदर्पः । यो राजा सगर्वः सन् निजमस्तकं चैद्यपादगतं न विदधाति, असौ स्वमेव निजपादं तन्मस्तकगतं कुरुते इति भावार्थः ॥ ६८ ॥

नेति ॥ स्मयोद्धतो गर्वेण दुर्विनीतो नृपतिः शिरो निजोत्तमाङ्गं तस्य शिशुपालस्य चरणमुपगच्छतीति तच्चरणोपगं तत्पादगतं यो न चिकीर्षति कर्तुं नेच्छति, तदीये तस्य नृपतेः सम्बन्धिनि मूर्धनि गतस्मयो विगर्वोऽसौ शिशुपाल एव स्वं चरणं कुरुते । निधत्त इत्यर्थः । अनमान् सद्यो नमयति, नम्रान् अवतीति तात्पर्यम् ॥ ६८ ॥

**स्वभुजद्वयकेवलायुधश्चतुरङ्गामपहाय वाहिनीम् ॥**
**बहुशः सह शक्रदन्तिना स चतुर्दन्तमगच्छदाहवम् ॥ ६९ ॥**

**स्वभुजद्वयेति** ॥ हे कृष्ण ! स चैद्यः शक्रदन्तिना देवेन्द्रहस्तिना ऐरावणेन सह बहुशः अनेकवेलम् आहवमगच्छत् सङ्ग्रामं प्रविष्टः । किंलक्षणः सः स्वभुजद्वयकेवलायुधः स्वभुजद्वयमेव स्वबाहुयुगलमेव केवलमायुधं प्रहरणं यस्य सः तथा, किंलक्षणमाहवं चतुर्दन्तम् । चतुर्दन्तत्वादैरावणेन सह युद्धम् । ऐरावणस्य चत्वारो दन्ताः सन्ति तेन स बाहुयुद्धेन विजयी भवतीत्यर्थः । किं कृत्वा वाहिनीं सेनाम् अपहाय परित्यज्य, किंलक्षणां वाहिनीं चतुरङ्गां गजरथतुरगपदातिलक्षणानि चत्वारि अङ्गानि अवयवाः यस्याः सा तथा ताम् । विरुद्धं चैतत्, यत्र हि बलद्वयेऽपि दन्तिसद्भावः स चतुर्दन्त आहवः । यश्च सेनां हित्वा स्वभुजसहायः पदातिरेव युद्धवान्, स कथं चतुर्दन्तमाहवमगच्छत् ॥ ६९ ॥

स्वभुजद्वयेति ॥ स चैद्यः चत्वार्यङ्गानि हस्त्यादीनि यस्यास्तां चतुरङ्गां वाहिनीं सेनामपहाय स्वभुजद्वयं केवलमेकमायुधं यस्य सः सन् शक्रदन्तिना ऐरावतेन सह । चत्वारो दन्ता यस्मिंस्तं चतुर्दन्तम् आहवं रणं बहुशोऽगच्छत् । चतुर्दन्तेन शक्रदन्तिना दोर्द्वयेन योद्धुं चैद्यं विना कोऽन्यः शक्त इति भावः । दन्तिनोराहवश्चतुर्दन्त इत्युक्तं न तु मनुष्यदन्तिनोरिति विरोधः । स च शक्रदन्तिनेति परिहृतः, तस्य चतुर्दन्तत्वादिति विरोधाभासः ॥ ६९ ॥

**अविचालितचारुचक्रयोरनुरागादुपगूढयोः श्रिया ॥**
**युवयोरियदेव(२) भिद्यते यदुपेन्द्रस्त्वमतीन्द्र एव सः ॥ ७० ॥**

**अविचालितेति** ॥ हे कृष्ण ! युवयोः चेदिपतिभवतोः इयदेव इदमेव भिद्यते एष एव भेदः, यत्त्वम् उपेन्द्रः इन्द्रानुचरः शक्रमुखप्रेक्षी, स चैद्यः अतीन्द्रः जितशक्रः । किंलक्ष-

(१) स्मयोद्धतो ।　　(२) ०रिदमेव ।

णयोः युवयोः अविचालितचारुचक्रयोः अविचालितम् अजस्रं सन्निहितं चारु मनोज्ञं चक्रं सुदर्शनं यस्य सः तथा तस्य, द्वितीयपक्षे अविचालितमभेद्यं निषेद्धुमशक्यं चारु चक्रं राष्ट्रं ययोस्तौ तयोः, अपरं किंलक्षणयोः युवयोः अनुरागात् श्रिया उपगूढयोः प्रीत्या विजयलक्ष्म्या आलिङ्गितयोः, अनुरागात् प्रेम्णः श्रिया पद्मया आलिङ्गितयोः ॥ ७० ॥

अविचालितेति ॥ अविचालितं परैरपर्यासितम् अत एव चारु शोभनं चक्रं सुदर्शनं राष्ट्रं च ययोस्तयोः । 'चक्रं राष्ट्ररथाङ्गयोः' इति विश्वः । श्रिया कमलया सम्पदा चाऽनुरागादुपगूढयोराश्लिष्टयोर्युवयोस्तव तस्य च । 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषः । इदमेव भिद्यते विशेष्यते । कर्मकर्तरि लट् । किं तादित्यत्राह—त्वामिन्द्रमुपगत उपेन्द्र इन्द्रानुजः । तदनुचर इति यावत् । स तु इन्द्रमतिक्रान्तः अतीन्द्रः । इन्द्रविजयीति यावत् । इदमेव भिद्यते इति सम्बन्धः । इन्द्रकिङ्करेन्द्रजयिनोः का साम्यकथेति भावः । अत्रोपमानात्कृष्णादुपमेयस्य चैद्यस्याधिक्याद्धृदप्राधान्यसाधर्म्योक्तेर्व्यतिरेकालङ्कारः ॥ ७० ॥

भृतभूतिरहीनभोगभाग्विजिताऽनेकपुरोऽपि विद्विषाम् ॥
रुचिमिन्दुदले करोत्यजः परिपूर्णेन्दुरुचिर्महीपतिः ॥ ७१ ॥

भृतभूतिरिति ॥ हे कृष्ण ! अपीति विस्मये, अजः श्रीमहादेवः इन्दुदले रुचिं करोति चन्द्रखण्डे मुदं विधत्ते शशिकलाभरणत्वात्, अपरं महीपतिः शिशुपालः परिपूर्णेन्दुरुचिः भवति अखण्डमण्डलशशिदीप्तिः सम्पूर्णचन्द्रवदनः शशिरुचित्वात्, चैद्यस्य सम्पूर्णचन्द्ररुचित्वात् महान् विशेषः । उभयोः साम्यमाह—किंलक्षणोऽजः भृतभूतिः धृतभस्मा, महीपतिश्च भृतभूतिः धृतैश्वर्यः, अपरं किंलक्षणोऽजः अहीनभोगभाक् अहीनां नागेश्वराणां वासुकिप्रभृतीनां भोगान् देहान् भजते धारयतीति तथा सर्पशरीरभूषितः, महीपतिश्च अहीनान् सम्पूर्णान् भोगान् स्त्र्यादिविषयान् भजते इति तथा, अपरं किंलक्षणोऽजः विद्विषां विजिताऽनेकपुरः विद्विषां त्रिपुरवासिनां शत्रूणां विजिताऽनेकपुरः भग्नत्रिपुरः, महीपतिश्च विद्विषां भग्नबहुनगरः ॥ ७१ ॥

किञ्च त्वत्तोऽप्यधिको राजेत्यवाच्योऽयमर्थः, यदीश्वरादप्यधिक इत्याह--

भृतभूतिरिति ॥ भृता भूतिर्भस्म सम्पच्च येन स भृतभूतिः । 'भूतिर्भस्मनि सम्पदि' इत्यमरः । अहीनां भोगिनामिनोऽहीनः तस्य भोगं कायं भजतीत्यहीनभोगभाक् । शेषभूषण इत्यर्थः । अन्यत्र अहीनमन्यूनं भोगं सुखानुभवं भजतीत्यहीनभोगभाक् । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । विद्विषां विजिताऽनेकपुरः, विजिताऽनेकविद्विट्पुर इत्यर्थः । एकत्र त्रिपुरविजयादन्यत्र शत्रुनगरविजयाच्चेति भावः । सापेक्षत्वेऽपि गमकत्वात्समासः । एवंभूतोऽप्यजो हरः । 'अजा विष्णुहरच्छागाः' इत्यमरः । इन्दुदले चन्द्रखण्डे विषये रुचिमभिलाषं करोति । इन्दुदले या रुचिः शोभा तां करोति दधातीति चार्थः । सामान्यशब्देन विशेषलक्षणा । महीपतिस्तु परिपूर्णेन्दो रुचिरिव रुचिः शोभा यस्य सः, तस्मिन् रुचिरभिलाषो यस्येति च परिपूर्णेन्दुरुचिः । 'रुचिर्मयूखे शोभायामभिषङ्गाभिलाषयोः' इति विश्वः । अत्र हरखण्डेन्दुरुचिः राजा पूर्णेन्दुरुचिरिति व्यतिरेकः । स च रुच्योरभेदाश्रयादिति श्लेषमूलाऽभेदातिशयोक्त्या सङ्कीर्णः ॥ ७१ ॥

चतुर्भिः कलापकम्—

नयति द्रुतमुद्धतिश्रितः प्रसभं भङ्गमभङ्गुरोदयः ॥
गमयत्यवनीतलस्फुरद्भुजशाखाभृतमन्यमानतिम्(१) ॥ ७२ ॥

---

(१) शाखं भृशमन्यमुन्नतिम् ।

अधिगम्य च रन्ध्रमन्तरा जनयन् मण्डलभेदमन्ततः(१) ॥
खनति क्षतसंहति क्षणादपि मूलानि महान्ति कस्यचित् ॥ ७३ ॥
घनपत्रभृतोऽनुगामिनस्तरसाऽऽकृष्य करोति कांश्चन ॥
दृढमप्यपरं प्रतिष्ठितं प्रतिकूलं नितरां निरस्यति ॥ ७४ ॥
इति पूर इवोदकस्य यः सरितां प्रावृषिजस्तटद्रुमैः ॥
क्वचनापि महानखण्डितप्रसरः क्रीडति भूभृतां गणैः ॥ ७५ ॥

नयतीत्यादि ॥ इतीति ॥ हे कृष्ण ! यश्चैद्यः इति वक्ष्यमाणप्रकारेण क्रीडति जगत्यां विहरति, कैः सह भूभृतां गणैः सह राज्ञां समूहैः सार्धं, किंलक्षणश्चैद्यः क्वचनापि क्वचिदपि अखण्डितप्रसरः अनिवारितेच्छः, अपरं किंलक्षणः चैद्यः महान् गुरुतरः, क इव क्रीडति सरितामुदकस्य पूर इव । यथा सरितां नदीनामुदकस्य पूरः पानीयस्य वेगः तटद्रुमैः कूलतरुभिः सह अखण्डितप्रसरः अनिवारितविसर्पणः सन् क्रीडति । किंलक्षणः पूरः प्रावृषिजः वर्षाकालीनः, अत एव महान् पूरः। नयतीति ॥ यश्चैद्यः उद्धतिश्रितः उद्धतिं श्रयमाणान् उन्नतान् भूभृतः प्रसभं हठात् बलात्कारेण द्रुतं शीघ्रं भङ्गं नयति भनक्ति । किंलक्षणः अभङ्गुरोदयः स्थिरोन्नतिः, अपरम् अन्यमुन्नतं राजानम् आनतिं गमयति नम्रतां प्रापयति, किंलक्षणमन्यम् अवनीतलस्फुरद्भुजशाखाभृतम् आनतिवशात् अवनीतले भूपृष्ठे स्फुरन्तौ चलन्तौ भुजौ हस्तावेव शाखाः शिफाः बिभर्ति इति तथा तम् । उदकपूरोऽपि उद्धतिश्रितः उन्नतान् देवदारुप्रभृतीन् द्रुमान् वेगाद्भनक्ति, तथा वेतसप्रभृतीनां तरूणां शाखाः नमयति । सोऽपि निरन्तरः वार्षिकत्वात् अभङ्गुरोदयः चिराविर्भावो भवति । राजपक्षे भूमिलुठनवशात् शत्रुसक्त(?)बाहुयुगलं भूमितले स्फुरति । एतेनाष्टाऽङ्गनमस्कारलक्षणं नमनमुक्तम् । अधिगम्येति ॥ हे कृष्ण ! यश्चैद्यः कस्यचिद्राज्ञः महान्त्यपि मूलानि क्षणात् वेगात् खनति उन्मूलयति । अत्र मूलशब्देन कुलक्रमायातपौराऽमात्यादयो ज्ञेयाः । किंलक्षणो यः क्षतसंहतिः विदारितविग्रहः, किं कुर्वन् अन्ततः मण्डलभेदं जनयन् कार्यसमाप्तौ उपजापं कुर्वन् , किं कृत्वा अन्तरा मध्ये कार्यमध्ये रन्ध्रं छिद्रम् अधिगम्य प्राप्य । उदकपूरोऽपि कस्यचित्तटद्रुमस्य महान्त्यपि मूलानि खनति । अन्ततो वर्तमानस्य मण्डलस्य स्थानस्य भेदं जनयन् , किं कृत्वा अन्तरा मध्ये रन्ध्रमधिगम्य, किंलक्षणः क्षतसंहतिः भग्नसङ्घातः । घनपत्रेति ॥ हे कृष्ण ! यश्चैद्यः कांश्चन नृपान् तरसा बलेन आकृष्य आक्षिप्य अनुगामिनः करोति सेवकान् विधत्ते, किंलक्षणान् राज्ञः घनपत्रभृतः घनानि पत्राणि बहुलानि वाहनानि बिभ्रति धारयन्तीति ते तथा तान् संहतवाहनधारिणः । तथा अन्यमपरं राजानं दृढमपि भृशं प्रतिष्ठितं लब्धावस्थितिं प्रतिकूलम् अप्रणतं नितरामतिशयेन निरस्यति तिरस्करोति । उदकपूरोऽपि कांश्चन वृक्षान् तरसा बलेन आकृष्य उत्पाट्य अनुगामिनः करोति पृष्ठानुयायिनो विधत्ते । किंलक्षणान् वृक्षान् घनपत्रभृतः बहुलपल्लवपर्णयुक्तान् तरसा बलेन आकृष्य उत्पाट्य, अपरम् अन्यं वृक्षं दृढमपि प्रतिष्ठितं लब्धावस्थानमपि नितरामतिशयेन निरस्यति क्षिपति। किंलक्षणं वृक्षं प्रतिकूलम् अनम्रम्। चतुर्भिः कलापकम् ॥ ७२-७५ ॥

(१) ०मन्यतः ।

अथ कलापकमाह—

**नयतीति** ॥ यः तटद्रुमैः सरितामुदकस्य पूर एव भूभृतां गणैः क्रीडतीति चतुर्थे वक्ष्यति । तत्क्रीडाप्रकारं त्रिभिर्वर्णयति । अभङ्गुरोदयः स्थिरवृद्धिः य उद्धतिश्रित औद्धत्यभाजः । अनम्रानिति यावत् । श्रयतेः क्विप् । नृपान् द्रुमांश्चेत्यर्थः । द्रुतं शीघ्रं प्रसभं प्रसह्य भङ्गं नयति । अवनीतले स्फुरन्त्यौ भुजौ शाखे इव भुजशाखे यस्य तम् । भुजौ प्रसार्य भुवि प्राणिपातितामित्यर्थः । अन्यं नृपं द्रुमं च वेतसादिकं भृशमुन्नतिं गमयति ॥ ७२ ॥

**अधिगम्येति** ॥ किञ्चेति चार्थः । अन्तरा मण्डलमध्य आलवालमध्ये च रन्ध्रमवकाशं सुषिरं चाऽधिगम्य । अन्यतः मण्डलस्याऽमात्यादिचक्रस्य भेदमुपजापं जनयन् , अन्यत्र मण्डलस्याधारदेशस्य भेदं विदारणं कुर्वन्नित्यर्थः । क्षता संहतिरैकमत्यं मूलानामाश्लेषश्च यस्मिन्कर्मणि तद्यथा तथा क्षणात् कस्यचिद्राज्ञः द्रुमस्य च महान्ति मूलानि मुख्यान् जनानपि खनति तापयति, अन्यत्राद्रीनपि खनत्यवदारयति७३॥

**घनपत्रेति** ॥ घनानि सान्द्राणि पत्राणि वाहनानि पर्णानि च बिभ्रतीति घनपत्रभृतः कांश्चन नृपान् द्रुमांश्च तरसा बलेन वेगेन च । 'तरसी बलरंहसी' इति विश्वः । आकृष्याऽनुगामिनोऽनुचरान करोति । दृढं यथा तथा प्रतिष्ठितं प्रतिष्ठां गतमपि प्रतिकूलं प्रातिकूल्यभाजमपरं नृपं द्रुमं च नितरां निरस्यति उत्पाट्याऽन्यतः क्षिपति । द्रुमपक्षे प्रतिकूलं कूले क्षिपतीति चार्थः ॥ ७४ ॥

**इतीति** ॥ इतीत्थं क्वचनाऽप्यखण्डितप्रसरः । सर्वत्राऽखण्डितप्रवृत्तिरित्यर्थः । महान् यः शिशुपालः प्रावृषि जातः प्रावृषिजः । 'सप्तम्यां जनेर्डः' इति डप्रत्ययः । 'प्रावृट्शरत्कालदिवां जे' इत्यलुक् । 'प्रावृषिकः' इति पाठे तत्र जात इत्यर्थे 'प्रावृषष्ठक्' इति ठक् प्रत्ययः । ठस्येकः । सरितामुदकानां पूरस्तटद्रुमैरिव भूभृतां राज्ञां गणैः साधनैः क्रीडति । 'महतः कुकुरे'त्यागामिश्लोके स महीपतिरित्यनेनाऽस्य सम्बन्धः ॥ ७५ ॥

**त्रिभिर्विशेषकम्—**

> **अलघूपलपङ्क्तिशालिनीः परितो रुद्धनिरन्तराऽम्बराः ॥**
> **अधिरूढनितम्बभूमयो न विमुञ्चन्ति चिराय मेखलाः ॥ ७६ ॥**
> **कटकानि भजन्ति चारुभिर्नवमुक्ताफलभूषणैर्भुजैः ॥**
> **नियतं दधते च चित्रकैरवियोगं पृथुगण्डशैलतः ॥ ७७ ॥**
> **इति यस्य ससम्पदः पुरा यदवापुः सदने(१)ष्वरिस्त्रियः ॥**
> **स्फुटमेव समस्तमापदा तदिदानीमवनीध्रमूर्धसु ॥ ७८ ॥**

**अलघूपलेत्यादि ॥ इतीति ॥** हे कृष्ण ! यस्य चैद्यस्य अरिस्त्रियो रिपुनार्यः सदनेषु अन्तःपुरेषु ससम्पदः समृद्धाः सत्यः पुरा पूर्वं यदिदं वक्ष्यमाणम् अवापुः आप्नुवन्ति स्म, तत् इदानीमधुना आपदा विपत्त्याऽपि अवनीध्रमूर्धसु भूधरशिखरेषु स्फुटं प्रकटं समस्तमेव सकलमेव अवापुः लेभिरे । **अलघूपलेति ॥** हे कृष्ण ! यस्य चैद्यस्य अरिस्त्रियः चिरात्प्रभृति मेखलाः न विमुञ्चन्ति गिरिमध्यभागान् न त्यजन्ति । पूर्वं ताः मेखलाः रशनाकलापान् न मुमुचुः । किंलक्षणा मेखलाः अलघूपलपङ्क्तिशालिनीः महाशिलाश्रेणिभिः शोभमानाः, द्वितीयपक्षे अलघूपलानां महानीलप्रभृतिमणीनां पङ्क्तिभिः श्रेणिभिः शालन्ते यास्तथा ताः । अपरं किंलक्षणाः मेखलाः परितः समन्तात् रुद्धनिरन्तराऽम्बराः व्याप्तनिःशेषाऽऽकाशाः, द्वितीयपक्षे रुद्धमवष्टब्धं निरन्तरं निर्विवरम् अम्बरं दुकूलं याभिस्ताः तथा ताः । अपरं किंलक्षणा मेखलाः अधिरूढनितम्बभूमयः अधिरूढा अधिष्ठिता

---

(१) ०भवने० ।

नितम्बभूमिः कटितटं स्त्रीणां याभिस्तास्तथा, द्वितीयपक्षे किंलक्षणा मेखलाः अर्थवशाद्विभक्तिविपरिणामः, किंलक्षणा अधिरूढा आश्रिता नितम्बभूमयो मेखलोपान्ता याभिस्ताः । कटकानीति ॥ हे कृष्ण ! यस्य चैद्यस्य अरिस्त्रियः रिपुनार्यः कटकानि भजन्ते शृङ्गाणि आश्रयन्ते । किंलक्षणा अरिस्त्रियः भुजैर्बाहुभिरुपलक्षिताः, उपलक्षणे तृतीया । किंलक्षणैः भुजैः चारुभिः रम्यैः, अपरं किंलक्षणैः भुजैः नवमुक्ताफलभूषणैः नवानि प्रत्यग्राणि सम्प्रति मुक्तानि त्यक्तानि अफलानि शोकवत्त्वात् निरर्थकानि भूषणानि अङ्गदादीनि यैस्ते तथा तैः, अग्रे ससमृद्धयस्ताः स्त्रियो भुजैः कटकानि वलयानि भजन्ति स्म । किंलक्षणै र्भुजैः नवमुक्ताफलभूषणैः प्रत्यग्रमुक्तामयमण्डनैः,अत एव अपरं किंलक्षणैः भुजैः चारुभिर्मनोहरैः,अपरं नियतं नित्यमेव पृथुगण्डशैलतः विशालगलितपाषाणेभ्यः चित्रकैः प्राणिविशेषैः सह अवियोगं दधते नित्यं सहचारं धारयन्ति । चित्रकाः प्राणिविशेषाः तैः सह मिलिताः। यथा गलितस्थूलपाषाणान् न त्यजन्ति । अग्रे ताः पृथुगण्डशैलतः विशालकपोलस्थलेभ्यः नियतं सदा चित्रकैः तिलकादिभिः अवियोगं दधति स्म । त्रिभिर्विशेषकम् ॥ ७६-७८ ॥

अथ विशेषकमाह--

अलघूपलेति ॥ यस्याऽरिस्त्रियः सम्पद्यनुभूतमापद्यप्यनुभवन्तीति वक्ष्यति। तत्प्रकारमेवाह-अधिरूढनितम्बभूमय उन्नतश्रोणिभागाः अलघुभिरुपलानां मणीनां पाषाणानां च पङ्क्तिभिः शालन्त इति तच्छालिनीः। 'उपलौ मणिपाषाणौ' इति विश्वः । परितो रुद्धमावृतं निरन्तरं सान्द्रं सन्निहितं च अम्बरं वस्त्रमाकाशं च याभिस्ताः अधिरूढनितम्बभूमीराक्रान्तश्रोणिभागाः प्राप्तकटकाश्चेति विभक्तिविपरिणामः । मेखला रशनाः पर्वतमध्यभूमीश्च चिराय न विमुञ्चन्ति । अत्र सम्पदादिविषयत्वेनोभयेषामपि मेखलादीनां वर्ण्यत्वेन प्रकृतत्वात् केवलप्रकृतगोचरः श्लेषः ॥ ७६ ॥

कटकानीति ॥ किञ्च । नवमुक्ताफलानि नूतनमौक्तिकानि भूषणानि येषां तैश्चारुभिः भुजैः कटकानि वलयानि भजन्ति, अन्यत्र नवमुक्तान्यचिरत्यक्तानि अतः अफलानि वैधव्यान्निष्फलान्याभरणानि यैस्तैर्भुजैरुपलक्षिताः कटकानि तटानि भजन्ति । किञ्चेति चार्थः । पृथुगण्डशैलतः पृथुगण्डस्थलेषु चित्रकैः पत्ररचनाभिर्नियतमवियोगं सम्पर्कं दधते, अन्यत्र च्युतस्थूलोपलेषु चित्रकैर्मृगविशेषैः सह वासं दधते । अत्रापि प्रकृतगोचरः श्लेषः ॥ ७७ ॥

इतीति ॥ यस्याऽरिस्त्रियः पुरा पूर्वं ससम्पदः सश्रीकाः भवनेषु सदनेषु यदवापुर्मेखलादिकमनुबभूवुः । समस्तमशेषं तदिदानीमापदा अवनीध्रमूर्धसु शैलशृङ्गेषु इतीत्थं स्फुटमेवाऽवापुः । न ह्यस्य वैरिणां जीविताशेति भावः । अत्रापि यदर्थस्योत्तरश्लोकेनाऽन्वयः ॥ ७८ ॥

महतः कुकुराऽन्धकद्रुमानतिमात्रं दववद्दहन्नपि ॥
अतिचित्रमिदं महीपतिर्यदकृष्णामवनीं(१) करिष्यति ॥ ७९ ॥

महत इति ॥ हे कृष्ण ! इदमतिचित्रं महदाश्चर्यं, यन्महीपतिः चैद्यः महतः प्रौढमहिम्नः विशालान् वा कुकुराऽन्धकद्रुमान् अतिमात्रमतिशयेन दववत् दावानलवत् दहन्नपि मारयन्नपि भस्मीकुर्वन्नपि अवनीं पृथिवीम् अकृष्णां करिष्यति । दवो हि किल भूमिं दहन् कृष्णां करोति । अयं तु नृपतरून् दहन्नपि यादववृक्षान् भस्मीकुर्वन्नपि पृथिवीमकृष्णां करिष्यति । इति महदाश्चर्यम् । न विद्यते कृष्णो यस्यां सा तथा तां कृष्णहीनां कर्ता ॥ ७९ ॥

---

(१) दकृष्णां पृथिवीं ।

महत इति ॥ यत्तदोर्नित्यसम्बन्धात् । स महीपतिर्महतोऽधिकान् कुकुराश्चाऽन्धकाश्च यादवभेदास्तानेव द्रुमानतिमात्रं दववह्निरिव दवदवाग्निरिव। 'दवदावौ वनारण्यवह्नी' इत्यमरः । दहन्नपि अवनीमकृष्णामश्यामां करिष्यति इति यत्, इदमतिचित्रम्। विरुद्धमित्यर्थः। कृष्णरहितामित्यविरोधः। अत एव विरोधाभासोऽलङ्कारः। कुकुराऽन्धकैः सह कृष्णं हनिष्यतीति श्लेषार्थः ॥ ७९ ॥

**परितः प्रमिताक्षराऽपि सर्वं विषयं व्याप्नुवती(१) गता प्रतिष्ठाम् ॥**
**न खलु प्रतिहन्यते कुतश्चित्परिभाषेव गरीयसी यदाज्ञा ॥ ८० ॥**

परित इति ॥ हे कृष्ण ! यदाज्ञा यस्य चैद्यस्य आज्ञा निदेशः प्रमिताक्षराऽपि स्वल्पाक्षराऽपि स्तोकवर्णाऽपि कुतश्चित् क्वापि न खलु प्रतिहन्यते नैव निषिध्यते । किंलक्षणा यदाज्ञा गरीयसी गुरुतरा, अपरं किंलक्षणा यदाज्ञा प्रतिष्ठां गता गौरवं प्राप्ता, अपरं किंलक्षणा यदाज्ञा परितः समन्तात् सर्वं विषयं व्याप्नुवती सर्वत्र गच्छन्ती । केव न प्रतिहन्यते परिभाषेव । यथा परिभाषा क्वापि न खलु प्रतिहन्यते । साऽपि प्रमिताक्षरा, तथा प्रतिष्ठां गता,अपरं सर्वं विषयं सर्वव्याकरणानि व्याप्नुवती । वक्तव्यरूपा परिभाषा ॥ ८०

अथ युग्मेनाह —

परित इति ॥ प्रकर्षेण मिताक्षरापि एकत्र मितभाषितत्वादन्यत्र तु सूत्रत्वाच्चाऽल्पाक्षरापि सर्वं विषयं राष्ट्रकार्यं देशं च परितो व्याप्तवती । सर्वत्र प्रवृत्तेत्यर्थः । प्रतिष्ठां प्रामाण्यं स्थितिं गता गरीयसी भूयिष्ठार्था यदाज्ञा यस्य राज्ञः शासनं परिभाषा अनियमनिवारको न्यायविशेषः सेव कुतश्चित्कुत्रापि न प्रतिहन्यते खलु न बाध्यते हि । परिभाषा ह्येकदेशे स्थिता सर्वशास्त्रमभिज्वलयतीति भाष्यकारः । 'इको गुणवृद्धी' इत्यादिका परिभाषा । 'सिचि वृद्धिः—' इत्यादिर्विषयः । उपमालङ्कारः। औपच्छन्दसिकं वृत्तम् ॥ ८० ॥

**यामूढवानूढवराहमूर्तिर्मुहूर्तमादौ पुरुषः पुराणः ॥**
**तेनोह्यते साम्प्रतमक्षतैव क्षताऽरिणा सम्यगसौ पुनर्भूः ॥ ८१ ॥**

यामिति ॥ हे कृष्ण ! तेन चैद्येन साम्प्रतमधुना सम्यक् निश्चितमसौ भूः पृथिवीः अक्षतैव अविनाशनैव पुनर्भूर्योऽपि उह्यते परिणीयते । किंलक्षणेन तेन क्षताऽरिणा उच्छिन्नविपक्षेण, असौ का भूः आदौ प्रथमं पुराणः पुरुषः यां भूमिं मुहूर्तम् ऊढवान् दध्रे, किंलक्षणः पुराणः पुरुषः ऊढवराहमूर्तिः धृतशूकररूपः । यथा येन केनापि परिणीता स्त्री अन्येन पुनरुह्यते सा पुनर्भूः कथ्यते ॥ ८१ ॥

यामिति ॥ यां भुवमादौ पूर्वं पुराणपुरुषो विष्णुः ऊढवराहमूर्तिर्धृतवराहशरीरः स च, न तु स्वरूपेणेति भावः । मुहूर्तं क्षणमात्रमूढवान्धृतवान्। क्षताऽरिणा संहृतसकलविपक्षेण अत एवैनां पुनस्तेन राज्ञा अविकृतेनेति भावः । अक्षतैव विपक्षैरनुपद्रुतैवाऽसौ भूः साम्प्रतमद्यापि न तु मुहूर्तमिति भावः । सम्यक् यथाशास्त्रमुह्यते धार्यते । वहेः कर्मणि लट् ,'वचिस्वपि–' इत्यादिना सम्प्रसारणम् । अत्र राज्ञो विष्णोराधिक्यकथनाद्व्यतिरेकः। अत्र ध्वनिः । कश्चिद्वृद्धः स चोढवराहमूर्तिर्यामविकृतामादौ प्रथमं मुहूर्तमूढवान्परिणीतवानिति, अत एव अक्षता पूर्वेण अक्षतयोनिका । अत एवासौ भूर्वोढुः क्षतारिणा, शौर्यादिगुणाढ्येनेत्यर्थः । तेन केनचिद्यूना साम्प्रतं पुनरुह्यते पुनः पुनः परिणीयते । 'सा चेदक्षतयोनिः स्यात्पुनःसंस्कारमर्हति' इति स्मरणादिति भावः । सा पुनर्भूरुच्यते इति योज्यम् । 'पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः' इत्यमरः । अत्राऽभिधायाः प्रकृतार्थ एव नियन्त्रणादप्रकृतार्थप्रतीतिर्ध्वनिरेव ॥ ८१ ॥

**भूयांसः क्वचिदपि काममस्खलन्तस्तुङ्गत्वं दधति च यद्यपि द्वयेऽपि ॥**
**कल्लोलाः सलिलनिधेरवाप्य पारं शीर्यन्ते न गुणमहोर्मयस्तदीयाः ॥८२॥**

---

( १ ) प्राप्तवती ।

भूयांस इति ॥ हे कृष्ण ! सलिलनिधेः समुद्रस्य कल्लोलाः तरङ्गाः पारं तीरम् अवाप्य प्राप्य शीर्यन्ते तटं प्राप्य लीयन्ते, परं तदीयाः चैद्यसम्बन्धिनो गुणमहोर्मयः गुणकल्लोलाः समुद्रस्याऽपि पारमवाप्य न शीर्यन्ते । तत्रापि बहुला भवन्तीत्यर्थः । किंलक्षणा ऊर्मयः भूयांसः अतिबहवः, तथा कामं निश्चितं क्वचिदपि कुत्राऽपि अस्खलन्तः स्खलनामप्राप्नुवन्तः लब्धप्रसराश्च । अपरं यद्यपि-द्वयेऽपि उभयेऽपि तुङ्गत्वं दधति उच्चैस्तरतामौन्नत्यं च धारयन्ति, परं तथापि तटस्खलनात् गुणैः कल्लोला जिता इत्यर्थः ॥८२॥

भूयांस इति ॥ द्वयेऽपि समुद्रोर्मयो गुणोर्मयश्चेति द्वितया अप्यूर्मय इति । द्वेस्तयप् । तस्य 'द्वित्रिभ्याम्—' इत्यनेनाऽयजादेशः, 'प्रथमचरम-' इत्यादिना जसि विभाषया सर्वनामसंज्ञा । भूयांसो बहुतराः क्वचिदप्यस्खलन्तः । अप्रतिहतप्रसरा इत्यर्थः । कामं तुङ्गत्वं दधाति यद्यपि दधत्येव । 'यद्यपीत्यवधारणे' इति केशवः । तथापीति शेषः । सलिलनिधेः समुद्रस्य कल्लोला महोर्मयः । 'अथोर्मिषु । महत्सूल्लोलकल्लोलौ' इत्यमरः । पारं तीरमवाप्य शीर्यन्ते विलीयन्ते । शीर्यतेर्दैवादिकात्कर्तरि लट् । तदीया गुणमहोर्मयस्तु पारमवाप्य न शीर्यन्ते । अत्र गुणमहोर्मीणां भूयस्त्वादिति साधर्म्येण गुरुत्वेन समुद्रस्याधिक्याद्व्यतिरेकः । अनेन राज्ञोऽपि समुद्रादाधिक्यं व्यज्यते । प्रहर्षिणी वृत्तम् ॥ ८२ ॥

लोकालोकव्याहतं घर्मरश्मेः शालीनं वा धाम नाऽलं प्रसर्तुम् ॥
लोकस्याग्रे पश्यतो धृष्टमाशु क्रामत्युच्चैर्भूभृतो यस्य तेजः ॥ ८३ ॥

लोकालोकेति ॥ हे कृष्ण ! यस्य चैद्यस्य तेजः प्रतापः पश्यतो विलोकमानस्य लोकस्य सर्वजगतः अग्रे पुरस्तात् धृष्टं निर्भयं यथा भवति तथा आशु शीघ्रम् उच्चैः उन्नतान् महाप्रभावान् भूभृतो नृपान् क्रामति पार्थिवान् तिरस्करोति । यतः कारणात् घर्मरश्मेः श्रीसूर्यस्य धाम तेजो लोकालोकव्याहतम् उदयाचलेन अस्ताचलेन च अस्खलत् सत् प्रसर्तुं परतः गन्तुं नालं न समर्थम् । वाशब्द इवार्थे । किंलक्षणं धाम, उत्प्रेक्ष्यते— शालीनं वा सलज्जमिव । लज्जायां किं कारणं, यस्य तेजो लोकालोकव्याहतं लोकस्यालोकः लोकालोकः तेन अस्खलितम् । यतः कारणात् पश्यत आलोकयतो लोकस्याग्रे उच्चैर्भूभृतः क्रामति । रवेस्तेजो भूभृता अस्ताचलेन स्खलितं श्रीसूर्यतेज इति जल्पति इदमाह, यत् लोकालोकेन व्याहतमहम् । अथ च लोकालोकेन उदयाचलेन स्खलितं तेजः स्वयमेव प्रसर्तुम् न अलं न समर्थं, किन्तु ज्ञायते शालीनं वा सलज्जमिव, चैद्यतेजसा तिरस्कृतमिव सव्रीडम् । अथ वा परं तेजः चैद्यस्य तेजः भूभृतः क्रामति । रवेस्तेजो भूभृताऽस्ताचलेन स्खलितम्, अतोऽपि सव्रीडम् । एतावता रवेरपि तेजसोऽस्य चैद्यस्य तेजो धाम अधिकमित्यर्थः । यतः कारणादधिकेन जितः सर्वोऽपि सव्रीडत्वात् प्रसर्तुं नालं न समर्थ इति भावः । मालिनी छन्दः ॥ ८३ ॥

अथ युग्मेनाह—

लोकालोकेति ॥ लोक्यते आलोक्यते च पार्श्वान्तरेणेति लोकालोकः । 'लोकालोकश्चक्रवालः' इत्यमरः । विशेषणसमासः । तेन व्याहतं निरुद्धप्रसारं लोकस्यालोकेन चक्षुःप्रकाशेन व्याहतमित्यपि स्फुरति । अत एव शालीनमधृष्टम् । लज्जया भैरुधाष्टर्यमित्यर्थः । 'शालीनकौपीने अधृष्टाकार्ययोः' इति निपातः । इवार्थे वाशब्दः, तद्धेतूत्प्रेक्षा । घर्मरश्मेर्धाम तेजः पश्यतो लोकान् उच्चैर्भूभृतः पर्वतान् राज्ञश्च प्रसर्तुं व्याप्तुं नालं न समर्थम् । लोकालोकव्याहतस्य लोकाग्रे सञ्चरत्वादित्यर्थः । यस्य राज्ञस्तु तेजः पश्यतो लोकस्याऽग्रत एव धृष्टं केनाप्यव्याहतत्वात्प्रगल्भं सत् उच्चैर्भूभृतो राज्ञः पर्वतांश्च क्रामति व्याप्नोति।

अत्राऽप्रतिहतप्रतापत्वेन राज्ञः सूर्यादाधिक्याद्व्यतिरेकः। स च द्वयोर्लोकालोकयोर्द्वयानां भूभृतामभेदाध्यवसायात् श्लेषमूलातिशयोक्त्युत्थापितया शालीनत्वोत्प्रेक्षया सङ्कीर्यते । शालिनी वृत्तमेतत् ॥ ८३ ॥

**विच्छित्तिर्नवचन्दनेन वपुषो भिन्नोऽधरोऽलक्तकै-**
**रच्छाच्छे पतिताञ्जने च नयने श्रोण्योलसन्मेखलाः ॥**
**प्राप्तो मौक्तिकहारमुन्नतकुचाभोगस्तदीयद्विषा-**
**मित्थं नित्यविभूषणा युवतयः सम्पत्स्वापद्यपि(१६) ॥ ८४ ॥**

**विच्छित्तिरिति** ॥ हे कृष्ण ! तदीयद्विषां चैद्यसम्बन्धिरिपूणां युवतयोऽङ्गना एवंविधा भवन्तु । किंलक्षणाः आपद्यपि विपन्मध्येऽपि सम्पद्वत् समृद्धितुल्यम् इत्थममुना प्रकारेण नित्यविभूषणाः नित्याभरणाः। यथा सम्पदि सत्यां नित्यालङ्करणाः, विपद्यपि तथैव तासां विभूषणमित्यर्थः । विगतानि भ्रष्टानि भूषणानि यासां तास्तथा । तासां वपुषः शरीरस्य नवचन्दनेन प्रत्यग्रमलयजेन विच्छित्तिरस्तु । विच्छेदनं विच्छित्तिः । वपुषि श्रीखण्डहीनत्वमस्तु । द्वितीयपक्षे सम्पदि सत्यां नवचन्दनेन विच्छित्तिरभूत् नवश्रीखण्डभक्तिः समजनि । अपरम् अधरः ओष्ठः अलक्तकैः यावकैर्भिन्नोऽस्तु अलक्तकरसैः हीनोऽस्तु, द्वितीयपक्षे सम्पदि सत्याम् अधरः अलक्तकरसैर्भिन्नो मिश्रितो युक्तोऽभवत् । तथा अच्छाच्छे स्वल्पतरे नयने विलोचने पतिताञ्जने च भवेतां भ्रष्टकज्जले स्ताम्, द्वितीयपक्षे सम्पदि सत्यां नेत्रे पतिताऽञ्जने प्राप्तकज्जले अभूताम्। अपरं श्रोण्यः कट्यः अलसन्मेखलाः सन्तु भ्रष्टरशनाः भवन्तु, द्वितीयपक्षे सम्पदि सत्यां श्रोण्यः लसन्मेखलाः शोभमानरशनाः अभवन् । अपरम् उन्नतकुचाभोगः मौक्तिकहारं प्राप्तोऽस्तु उद्धतस्तनमण्डलः मौक्तिकहारं प्राप्तः। हृञ् हरणे,हरणं हारः विनाशः। मुक्ताकलापविहीनो भवतु, अग्रे सम्पदि तत्र कुचाभोगे मौक्तिकहारोऽभवत् । एतेन विधिना रिपुवधूनां सम्पदि यादृशानि मण्डनानि अभवन्, विपद्यपि तादृशान्येव भवन्त्विति भावः । शार्दूलविक्रीडितं छन्दः॥८४॥

**विच्छित्तिरिति** ॥ वपुषो नवचन्दनेन विच्छित्तिर्वियोग आपदि, अन्यत्र चन्दनालेपनमिति यावत् । अधरोष्ठोऽलक्तकैर्लाक्षारागैर्भिन्नो वियुक्तः, अन्यत्र युक्तः। नयने च पतिताञ्जने गलितकज्जले अत एवाऽच्छाच्छे अच्छप्रकारे । 'प्रकारे गुणवचनस्य' इति द्विर्भावः, 'कर्मधारयवत्--' इति सुपो लुक् । अन्यत्र अच्छाऽच्छे नयने पतिताञ्जने प्राप्ताऽञ्जने । श्रोण्यो नितम्बाः लसन्मेखला न भवन्तीत्यलसन्मेखलाः । निर्मेखला इत्यर्थः । अन्यत्र लसन्मेखला इति पदच्छेदः । उन्नतः कुचाभोगः कुचविस्तारो मौक्तिकानां हारं हरणं प्राप्तः, अन्यत्र मुक्तादाम प्राप्तः । इत्थमुक्तरीत्या तदीयद्विषां युवतयः सम्पत्सु चापत्स्वपि नित्यविभूषणाः । अत्राऽऽपत्सम्पदोः प्रकृताप्रकृतयोः युवतिविशेषणद्वारा वर्णनात् श्लेषः। शार्दूलविक्रीडितं वृत्तम् । लक्षणमुक्तम् ॥

**विनिहत्य भवन्तमूर्जितश्रीर्युधि चैद्यः(१७) शिशुपालतां यथार्थाम् ॥**
**रुदतां भवदङ्गनागणानां करुणाऽन्तःकरणः करिष्यतेऽसौ ॥ ८५ ॥**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये षोडशः सर्गः ॥ १६ ॥

**विनिहत्येति** ॥ हे कृष्ण ! असौ चैद्यः शिशुपालः भवदङ्गनागणानां त्वाद्विलासिनीवर्गाणां रुदतां रोदमानानां(?) सतां यथार्थां सत्यां शिशुपालतां करिष्यते शिशून् पाल-

(१ सम्पत्सु चापत्स्वपि । ( २ ) सद्यः ।

यतीति शिशुपालः तद्भावस्तत्ता ताम्। शिशून् पालयिष्यतीत्यर्थः। किंलक्षणोऽसौ करुणाऽन्तःकरणः करुणं दयापरम् अन्तःकरणं मानसं यस्य सः तथा, किं कृत्वा युधि सङ्ग्रामे भवन्तं त्वां विनिहत्य व्यापाद्य, अपरं किंलक्षणः ऊर्जितश्रीः सबलसमृद्धिः। भवति हते यदा त्वदङ्गनागणाः चैद्यस्य पुरस्तात् अश्रूणि मोक्ष्यन्ति, तदा असौ दयार्द्रचित्तः सन् तेषां शिशून् पालयिष्यति रक्षयिष्यति न हनिष्यतीति भावः। ततः शिशुपाल इति नाम सार्थकं करिष्यतीति॥ ८९॥

इति श्रीशिशुपालवधे महाकाव्ये दत्तकसूनोर्माघस्य कृतौ वल्लभविरचितायां सन्देहविषौषध्यां सारटीकायां दूतसंवादो नाम षोडशः सर्गः।



सत्यमीदृशस्ते राजा, ततः किमित्याशङ्क्य तर्हि तत्त्वमाकर्णयेत्याह—

विनिहत्येति॥ ऊर्जितश्रीरधिकैश्वर्योऽसौ राजा युधि भवन्तं सद्यो विनिहत्य हत्वा रुदतां क्रन्दतां भवदङ्गनागणानां करुणाऽन्तःकरणः कृपाविष्टचित्तः सन् शिशुपालतां यथार्थां करिष्यते। अङ्गनागणान् प्रति तच्छिशुपालनेन निजां शिशुपालसंज्ञामन्वर्थां करिष्यतीत्यर्थः। अत्र रोदनकरुणापदार्थयोर्विशेषणगत्या क्रमात् करुणाशिशुपालनहेतुकत्वात्काव्यलिङ्गयोः सङ्करः। औपच्छन्दसिकं वृत्तम्॥ ८९॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां शिशुपालवधकाव्यव्याख्यायां सर्वङ्कषाख्यायां षोडशः सर्गः॥ १६॥

## सप्तदशः सर्गः।

**इतीरिते वचसि तरस्विना(१)ऽमुना युगक्षयक्षुभितमरुद्गरीयसि॥**
**प्रचुक्षुभे सपदि तदम्बुराशिना समं महाप्रलयसमुद्यतं सदः॥ १॥**

इतीति॥ तत् सदः सभा सपदि शीघ्रं प्रचुक्षुभे चलितं क्षुब्धम्। किंलक्षणं सदः अम्बुराशिना समं समुद्रेण तुल्यम्, अपरं किंलक्षणं सदः महाप्रलयसमुद्यतं कल्पान्तकालतुल्यम्, अथ वा महाप्रलयाय नरादिसंहाराय समुद्यतं समुदितं, क सति अमुना दूतेन इति वचसि ईरिते सति इति पूर्वोक्तवाक्ये उक्ते सति, किंलक्षणेनाऽमुना तरस्विना बलिष्ठेन, किंलक्षणे वचसि युगक्षयक्षुभितमरुद्गरीयसि कल्पान्तकालोद्धतपवनगुरुतरे॥ १॥

इतीति॥ इतीत्थममुना वचस्विना वाग्मिना, 'मनस्विना' इति पाठे मनस्विना धीरेण दूतेन युगक्षये कल्पान्ते क्षुभित उद्धतो मरुत् तद्वद्गरीयसि वचसि ईरिते सति, तदम्बुराशिना युगक्षयवार्धिना समं तुल्यं यथा तथा सदो हरेरास्थानं महाप्रलये सर्वसंहारे समुद्यतमुद्युक्तं सत् सपदि प्रचुक्षुभे प्रचुकोप। कल्पोद्धतमहामारुतेन महार्णव इव तद्वचनेन तत्सदः क्षुभितमासीदित्यर्थः। उपमा। रुचिरा वृत्तम्। 'चतुर्ग्रहैरिह रुचिरा जभस्जगाः' इति लक्षणात्॥ १॥

**सरागया स्रुतघनघर्मतोयया कराहतिध्वनितपृथूरुपीठया॥**
**मुहुर्मुहुर्दशनविलङ्घितौष्ठया(२) रुषा नृपाः प्रियतमयेव भेजिरे॥ २॥**

(१) वचस्विना। (२) विखण्डितोष्ठया।

**सरागयेति** ॥ रुषा क्रोधेन नृपा राजानो भेजिरे प्राप्यन्ते स्म । नृपाः प्रचुक्रुधुरित्यर्थः । किंलक्षणया रुषा सरागया सरक्ततया । रुट्शब्दः स्त्रीलिङ्गः । अपरं किंलक्षणया रुषा स्रुतघनघर्मतोयया स्रुतं स्रवत् घनं बहुलं घर्मतोयं प्रस्वेदो यस्याः सा तथा तया, अपरं किंलक्षणया रुषा कराहतिध्वनितपृथूरुपीठया कराहत्या पाणितलास्फालनेन ध्वनितं ध्वनत् पृथु विशालम् ऊरुपीठं सक्थिमण्डलं यया सा तथा तया । अपरं किंलक्षणया रुषा, अतश्चोत्प्रेक्ष्यते—प्रियतमयेव । यथा प्रियतमया कान्तया केचित् सेव्यन्ते । सापि सरागा आसक्तिमती भवति । अत एव स्रुतघनघर्मजला प्रियतमसंयोगात् स्वेदवती भवति, तथा कराहत्या सम्भोगसमये करास्फालनेन ध्वनितोरुर्भवति, मुहुर्मुहुः दशनविलङ्घितौष्ठा च भवति । रुषाऽपि देहे रागो भवति, प्रस्वेदश्च स्यात्, करतलेन चोरुमाहन्ति, दन्तैश्चौष्ठं विखण्डयति ॥ २ ॥

अथाष्टादशभिः सभाक्षोभं वर्णयति—

**सरागयेति** ॥ नृपा राजानः सह रागेण पाटलिम्ना अनुरागेण च सरागया । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । स्रुतं घनं सान्द्रं घर्मतोयं स्वेदोदकं यस्यां सा तया कराहत्या पाणितलास्फालनेन ध्वनितं पृथु महद्गुरु पीठमिव ऊरुपीठं यस्यां तया मुहुर्मुहुर्दशनविखण्डितोष्ठया दन्तदष्टाधरया रुषा प्रियतमयेव भेजिरे । आविष्टोऽनाविष्टश्च रौद्रस्थायी क्रोधः प्रादुर्भूत इत्यर्थः । उपमालङ्कारः ॥ २ ॥

**अलक्ष्यत क्षणदलिताऽङ्गदे गदे करोदरप्रहत(१)निजांऽसधामनि ॥**
**समुच्छल(२)च्छकलितपाटलोपलस्फुलिङ्गवान्स्फुटमिव कोपपावकः॥३॥**

**अलक्ष्यतेति** ॥ गदे गदनामनि श्रीभगवदनुजे कोपपावकः क्रोधानलः स्फुटमिवाऽलक्ष्यत मूर्त इव दृष्टः । कथं स्फुटं प्रकटं प्रत्यक्षमेवेति । किंलक्षणे गदे क्रोधात् करोदरप्रहतनिजांसधामनि करोदरेण पाणितलेन प्रहतं ताडितं निजमात्मीयम् अंसधाम स्कन्धप्रदेशो येन सः तथा तस्मिन् पाणितलताडितात्मीयस्कन्धदेशे, अपरं किंलक्षणे गदे क्षणदलिताऽङ्गदे क्षणेनैव मुहूर्तेनैव दलिताऽङ्गदे पिष्टकेयूरे, किंलक्षणः कोपपावकः समुच्छलच्छकलितपाटलोपलस्फुलिङ्गवान् समुच्छलन्त उल्लसमानाः(?) शकलिताः स्फाटिताः ये पाटलोपलाः पद्मरागमणयः ते एव स्फुलिङ्गाः अग्निकणाः विद्यन्ते यस्य सः तथा ॥ ३ ॥

अथ सप्तदशभिः राज्ञां क्रोधानुभावानाह—

**अलक्ष्यतेति** ॥ करोदरप्रहितं पाणितलास्फालितं निजमंसधाम स्वांसप्रदेशो येन तस्मिन्, अत एव क्षणाद्दलिताङ्गदे भग्नकेयूरे गदे गदाख्ये कृष्णानुजे समुच्छलद्भिरुत्पतद्भिः शकलितैः शकलीकृतैर्दलदङ्गदगलितैः पाटलोपलैः पद्मरागैः कोपपावकः स्फुलिङ्गवानिव स्फुटं व्यक्तमलक्ष्यतेत्युत्प्रेक्षा । 'त्रिषु स्फुलिङ्गोऽग्निकणः' इत्यमरः ॥ ३ ॥

**अवज्ञया यदहसदुच्चकैर्बलः समुल्लसद्दशनमयूखमण्डलः ॥**
**रुषाऽरुणीकृतमपि तेन तत्क्षणं निजं वपुः पुनरनयन्निजां रुचम्(३) ॥४॥**

**अवज्ञयेति** ॥ बलो बलभद्रः यत् अवज्ञया हेलया वेगेन उच्चकैः गाढम् अहसत् जहास, तेन हासेन असौ बलः रुषा रोषेण अरुणीकृतमपि आरक्तीकृतमपि निजं वपुः आत्मीयं शरीरं तत्क्षणं तस्मिन् क्षणे स्वां रुचम् अनयत् निजां कान्तिं पुनर्भूयः प्रापयत् । शुक्लमेव व्यधादित्यर्थः । किंलक्षणोऽसौ हासवशात् समुल्लसद्दशनमयूखमण्डलः स्फुरद्दन्त-

(१) प्रहित । (२) समुल्लस० । (३) रुचिम् ।

किरणनिचयः । दन्तकान्त्या पुनर्देहो गौरो भूत इत्यर्थः ॥ ४ ॥

अवज्ञयेति ॥ बलो बलभद्रः समुल्लसत् समन्ततः प्रसरत् दशनमयूखमण्डलं दन्तरश्मिपटलं यस्य सः सन् अवज्ञयाऽनादरेण उच्चैरहसदिति यत्, तेन हासेन रुषाऽरुणीकृतमपि निजं वपुः तत्क्षणं तस्मिन् क्षणे। अत्यन्तसंयोगे द्वितीया । पुनर्निजां रुचिं धावल्यमेवाऽनयत् । अत्र वपुषः स्वधावल्यत्यागेन दन्तधावल्यस्वीकारात्तद्गुणालङ्कारः । 'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः' इति लक्षणात् ॥ ४ ॥

**यदुत्पतत्पृथुतरहारमण्डलं व्यवर्तत द्रुतमभिदूतमुल्मुकः ॥**
**बृहच्छिलातटकठिनांसघट्टितं ततोऽभवद्भ्रमितमिवाखिलं जगत्(१) ॥**

यदिति ॥ उल्मुको रौहिणेयो रोहणीनन्दनः यत् अभिदूतं दूतसंमुखं व्यवर्तत परिवृत्तः, ततो हेतोः बृहच्छिलातटकठिनांसघट्टितमखिलं जगत् भ्रमितमिवाभवत् महापाषाणस्थलकर्कशेन स्कन्धेन घट्टितमाहतं सत् समस्तमेव विश्वं भ्रमितमिव आसीत् चलितमिवाऽभूत् । ज्ञायते परिवृत्तं जगदित्यर्थः । कथं व्यवर्तत उत्पतत्पृथुतरहारमण्डलम् उत्पतत् उच्छलत् पृथुतरं द्राघीयः हारमण्डलं मुक्ताकलापो यत्र क्रियायां तत् यथा भवति॥

यदिति ॥ उल्मुको नाम राजा उत्पतदुल्लुठत्पृथुतरं हारमण्डलं मुक्ताकलापो यस्मिन्कर्मणि तद्यथा तथा अभिदूतं दूताभिमुखं व्यवर्तत विवृत्त इति द्रुतं यत्, ततो विवर्तनादखिलं सदः बृहता शिलातलकठिनेनांसेन स्कन्धेन घट्टितं भ्रमितमिवाभवत् । विवर्तवेगवशोत्थादंसघट्टनाद् भ्रमितमिवाऽभूदित्युत्प्रेक्षा ॥ ५ ॥

**प्रकुप्यतः श्वसनसमीरणाहतिस्फुटोष्मभिस्तनुवसनाऽन्तमारुतैः ॥**
**युधाजितः कृतपरितूर्णवीजनं पुनस्तरां वदनसरोजमस्विदत् ॥ ६ ॥**

प्रकुप्यत इति ॥ प्रकुप्यतः क्रुद्धस्य युधाजितो राजन्यविशेषस्य वदनसरोजं मुखपद्मं तनुवसनाऽन्तमारुतैः सूक्ष्मवस्त्रप्रान्तवायुभिः कृतपरितूर्णवीजनमपि विहितशीघ्रवीजनमपि पुनस्तराम् अस्विदत् भूयोभूयः घर्मितम् । यदि तालवृन्ताऽनिलैस्तत् निहितक्षिप्रवीजनं,कथं तर्हि भृशं स्विन्नमभूदित्याह–किंलक्षणैस्तनुवसनाऽन्तमारुतैः श्वसनसमीरणाहतिस्फुटोष्मभिः श्वसनसमीरणस्य श्वासपवनस्य आहतिः आस्फालनं तया स्फुटः प्रकटः ऊष्मा बाष्पो येषां ते तथा तैः श्वसनपवनाहननभृशोष्णैः ॥ ६ ॥

प्रकुप्यत इति ॥ प्रकुप्यतोऽतिक्रुध्यतो युधाजितो नाम राज्ञो वदनसरोजं श्वसनसमीरणस्य निःश्वासमारुतस्याहतिभिः स्फुटः प्रकट ऊष्मा उष्णत्वं येषां तैः तनुवसनाऽन्तमारुतैः सूक्ष्मवस्त्राञ्चलवातैः कृतं परितूर्णवीजनं शीघ्रविधूननं यस्य तत् । अतिशीघ्रं वीज्यमानमपीत्यर्थः । पुनस्तरां पुनरत्यन्तम् । अव्ययादामुप्रत्ययः । अस्विदत्स्विद्यति स्म । स्विदेर्लुङि पुषादित्वादङ्प्रत्ययः । अत्रोष्मविशेषणगत्या स्वेदहेतुत्वात्काव्यलिङ्गम् । वीजनेऽपि स्वेद इति विरोधः । वीजिरयं चुरादिष्वन्वेषणीयः ॥ ६ ॥

**प्रजापतिक्रतुनिधनार्थमुत्थितं व्यतर्कयज्ज्वरमिव रौद्रमुद्द्रुतः(२) ॥**
**कृतक्षणं सपदि वधाय विद्विषामधिक्रुधं(३) निषधमनौषधं जनः ॥७॥**

प्रजापतीति ॥ निषधं निषधाख्यं राजानम् उद्द्रुतो जनः भीतो लोकः प्रजापतिक्रतुनिधनार्थं युधिष्ठिराऽध्वरविनाशार्थं ज्वरमिव उत्थितमुदितं व्यतर्कयत् ऊहामास । नृपतिमखदाहाय नूनमिदं ज्वरान्तरमजनि इत्यवेदि । पुरा किल रौद्रेण ज्वरेण वीरभद्राख्येन प्रजापतेर्दक्षस्य मखोऽधानि । किंलक्षणं निषधं रौद्रं घोरम्, अपरं किंलक्षणं निषधं विद्विषां वधाय शत्रूणां घाताय कृतक्षणं कृतयत्नम्, अपरं किंलक्षणं निषधम् अधिक्रुधम् अधिगता

(१) सदः । (२) ०मुद्धतम् । (३) समुद्यतं''मतिक्रुधं ।

क्रुध् ईन सः तथा तं प्राप्तरोषम्, अपरं किंलक्षणं निषधम् अनौषधम् अविद्यमानप्रणाशोपायम्। सोऽपि ज्वरो रौद्रो रुद्रदैवतः भगवद् द्विष्टानां च वधोद्यतः, सक्रोधो निरौषधश्च। प्रजापतिर्युधिष्ठिरो दक्षश्च ॥ ७ ॥

प्रजापतीति ॥ जनः सपदि विद्विषां वधाय समुद्यतमुपक्रमम् उद्धूतं तीव्रम् अत एवाऽतिक्रुधमाधिकक्रोधि अनौषधम्। अप्रतीकारामित्यर्थः। निषधं निषधाख्यं नृपं प्रजापतिक्रतुनिधनार्थं दक्षाध्वरध्वंसनार्थमुत्थितं रुद्रस्येमं रौद्रं रुद्रसम्बन्धिनं ज्वरमिव, वीरभद्ररूपिणामित्यर्थः। व्यतर्कयत। अत्र राज्ञोऽपि प्रजापातित्वात्पुनः प्रजापतिक्रतुनिधनार्थमुत्थितः साक्षाद्दक्षाध्वरविध्वंसी वीरभद्र इवायमित्युत्प्रेक्षितवानित्यर्थः। उपमा ॥ ७ ॥

परस्परं परिकुपितस्य पिंषतः क्षतोर्मिकाकनकपरागपङ्कितम्(१) ॥
करद्वयं सपदि सुधन्वनः स्वजै(२)रनारतस्रुतिभिरधाव्यताऽम्बुभिः ॥८॥

परस्परमिति ॥ परिकुपितस्य अतिक्रुद्धस्य सुधन्वनः राज्ञः परस्परमन्योन्यं करद्वयं हस्तयुग्मं पिंषतः मृदूनतः सतः स्वजैः आत्मनोत्थैः अनारतस्रुतिभिः निरन्तरप्रस्रवद्भिः अम्बुभिः स्वेदजलैः तत्करद्वयमधाव्यत क्षालितम्। किंलक्षणं करद्वयं क्षतोर्मिकाकनकपरागपङ्कितं पेषवशात् क्षतानां क्षुण्णानाम् ऊर्मिकाणामङ्गुलीयकानां कनकपरागेण रुक्मरजसा पङ्कितं कर्दमितं लिप्तम्। धूलिजलसंयोगात् किल पङ्क उत्पद्यते। अत एव अधाव्यत। पङ्कितं हि करादिजलेन क्षाल्यते ॥ ८ ॥

परस्परमिति ॥ परिकुपितस्यातिक्रुद्धस्य अत एव परस्परं पिंषतः पीडयतः, करद्वयमित्यर्थः। सपदि सुधन्वनो राज्ञः क्षतानां पिष्टानामूर्मिकानामङ्गुलीयकानां कनकपरागेण सुवर्णचूर्णेन पाङ्किलं पङ्कवत्। पिच्छादित्वान्मत्वर्थीय इलचप्रत्ययः। 'अङ्गुलीयकमूर्मिका' इत्यमरः। करद्वयं पाणियुग्मं निजैः करद्वयजन्यैरेवाऽनारतस्रुतिभिरविरतस्रावैरम्बुभिः स्वेदोदकैरधाव्यताऽक्षाल्यत। 'धावु गतिशुद्ध्योः' इति धातोः कर्मणि लङ्। अत्रोर्मिकाणां करद्वयस्य च परागत्वपङ्किलत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्ती, तयोः सङ्करः ॥८॥

निरायतामनलशिखोज्ज्वलज्वल(३)न्नखप्रभाकृतपरिवेषसम्पदम् ॥
अविभ्रमद्भ्रमदनलोल्मुकाकृतिं प्रदेशिनीं जगदिव दग्धुमाहुकः(४) ॥९॥

निरायतामिति ॥ आहुकः राजा प्रदेशिनीमविभ्रमत् तर्जनीमचालयत्। किंलक्षणां प्रदेशिनीं निरायताम् ऋज्वीं द्राघीयसीम्, अपरं किंलक्षणां प्रदेशिनीम् अनलशिखोज्ज्वलज्वलन्नखप्रभाकृतपरिवेषसम्पदम् अनलशिखावत् सप्तार्चिर्ज्वालावत् उज्ज्वलाभिर्निर्मलाभिः अत एव ज्वलन्तीभिर्देदीप्यमानाभिः नखप्रभाभिः करजदीप्तिभिः कृता विहिता परिवेषसम्पत् वेष्टनं यस्याः सा तथा ताम्, अपरं किंलक्षणां प्रदेशिनीं भ्रमदनलोल्मुकाकृतिं भ्रमतः परिचलतोऽनलस्योल्मुकस्येव आकृतिराकारो यस्याः सा तथा तां, किं कर्तुमिव अविभ्रमत, उत्प्रेक्ष्यते—जगद् दग्धुमिव विश्वं भस्मीकर्तुमिवाऽविभ्रमत्। परिवेषः परिभ्रमणमभिव्याप्तिः ॥ ९ ॥

निरायतामिति ॥ आहुकिर्नाम राजा निरायतां प्रसारिताम् अनलशिखाग्निज्वाला तद्वदुज्ज्वला ज्वलन्तीभिर्नखप्रभाभिः कृता परिवेषसम्पत् परिधिशोभा यस्यास्ताम् अत एव भ्रमतोऽनलोल्मुकस्यालातस्येवाकृतिः संस्थानं यस्यास्ताम्। 'अङ्गारोऽलातमुल्मुकम्' इत्यमरः। प्रदेशिनीं जगद्दग्धुमिवेत्युत्प्रेक्षा। अविभ्रमद् भ्रमयति स्म। भ्रमेर्णौ चङ्। दूतसन्तर्जनाय भ्राम्यमाणनखप्रभापटला तर्जनी जगद्दाहाय भ्राम्यमाणाऽलातचक्रवदलक्ष्यतेत्यर्थः ॥ ९ ॥

---

(१) पाङ्किलम्। (२) सुधन्वनो निजै०। (३) शिखाज्ज्वलां ज्वल०। (४) ०माहुकिः।

**दुरीक्ष्यता(१)मभजत मन्मथस्तथा यथा पुरा परिचितदाहधाष्टर्यया ॥**
**ध्रुवं पुनः सशरममुं तृतीयया हरोऽपि न व्यषहत(२) वीक्षितुं दृशा १०॥**

**दुरीक्ष्यतामिति ॥** मन्मथः कन्दर्पावतारः प्रद्युम्नः तथा तेन प्रकारेण दुरीक्ष्यतामभजत दुर्दर्श्यत्वं शिश्राय, यथा येन प्रकारेण तं प्रद्युम्नं सशरं ससायकं ध्रुवं निश्चितं भगवान् हरोऽपि श्रीमहादेवोऽपि तृतीयया दृष्ट्या ललाटजेन नेत्रेण अमुमेनं द्रष्टुं न व्यषहत विलोकितुं न शशाक । कुत इत्याह—किंलक्षणया दृशा पुरा परिचितदाहधाष्टर्यया पुरा पूर्वं परिचितमभ्यस्तं दाहधाष्टर्यं दहनप्रागल्भ्यं यस्याः सा तथा तया । पुरा हि किल भगवता श्रीभवेन तृतीयेन ईक्षणेन कामो भस्मीकृत इति ॥ १० ॥

दुरीक्षतामिति ॥ मन्मथः प्रद्युम्नावतारः कामस्तथा दुरीक्षतां दुर्दर्शनत्वम् । ईक्षतेः खलन्तात्तल् प्रत्ययः । अभजत । यथा हरोऽपि पुरा पूर्वजन्मनि परिचितमभ्यस्तं दाहधाष्टर्यं दहनसाहसं यस्यास्तया तृतीयया दृशा सशरममुं मन्मथं ध्रुवं पुनर्वीक्षितुं न व्यसहत न शक्तः । 'परिनिविभ्यः सेवासितसयसिवुसहसुट्स्तुस्वञ्जाम्' 'सिवादीनां वाऽड्व्यवायेऽपि' इति विकल्पान्न षत्वम् । अनयोत्प्रेक्षया रुद्रस्यापि भीषणः, किमुतान्येषामिति वस्तु व्यज्यते ॥ १० ॥

**विचिन्तयन्नुपनतमाहवं रसादुरः स्फुरत्तनुरुहमग्रपाणिना ॥**
**परामृशत् कठिनकठोरकामिनीकुचस्थलप्रमुषितचन्दनं पृथुः ॥ ११ ॥**

**विचिन्तयन्निति ॥** पृथुः सत्यभामानन्दनः कार्ष्णिः आहवं रणम् उपनतमागतं विचिन्तयन् आकलयन् सन् उरो भुजमध्यम् अग्रपाणिना कराग्रेण परामृशत् । किंलक्षणमुरः रसात् रणरागात् स्फुरत्तनुरुहं समुद्यद्रोम, रोमाञ्चितमित्यर्थः । अपरं किंलक्षणमुरः कठिनकठोरकामिनीकुचस्थलप्रमुषितचन्दनं कठिनाः कर्कशाः ये कठोरकामिनीस्तनतटाः तरितयौवननितम्बिनीकुचप्रान्ताः तैः प्रमुषितमुत्पुंसितं चन्दनं मलयजं श्रीखण्डं यस्य तत्तथा तत् । एतेन स शृङ्गारीत्यर्थः ॥ ११ ॥

विचिन्तयन्निति ॥ पृथुर्नाम राजा उपनतं प्राप्तमाहवं युद्धं रसाद्रणरागाद्विचिन्तयन् कदेति ध्यायन् कठिनेन कर्कशेन कठोरेण प्रवृद्धेन कामिन्याः कुचस्थलेन प्रमुषितमपहृतं चन्दनं यस्य तत् । एतेनास्य सुरतसमरयोः समरसत्वं व्यज्यते । अत एव स्फुरत्तनुरुहमुदञ्चत्पुलकमुरः । अग्रश्चासौ पाणिश्चेति समानाधिकरणसमासः । अत एव 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदयो'रिति वामनः । तेनाग्रपाणिना पाणितलेन परामृशत्परामृष्टवान् । रणकण्डूलपाणित्वादिति भावः । अत एव यदन्येषां रोषजनकं दूतवाक्यं तदागामिरणकारणतयाऽस्य हर्षहेतुरिति श्लोकार्थः॥ ११ ॥

**विलङ्घितस्थितिमभिवीक्ष्य रूक्षया रिपोर्गिरा गुरुमपि गान्दिनीसुतम् ॥**
**जनैस्तदा युगपरिवर्तवायुभिर्विवर्तिता गिरिपतयः प्रतीयिरे ॥ १२ ॥**

**विलङ्घितेति ॥** गान्दिनीसुतमक्रूरं रिपोः शत्रोर्दूतस्य रूक्षया कठोरया गिरा वाचा विलङ्घितस्थितिमभिवीक्ष्य उत्क्रान्तमर्यादं क्रुद्धं दृष्ट्वा जनैर्लोकैः तदा तस्मिन् समये युगपरिवर्तवायुभिः कल्पान्तवातैः गिरिपतयः महागिरयः विवर्तिता उन्मूलिताः प्रतीयिरे ज्ञायन्ते स्म । किंलक्षणं गान्दिनीसुतं गुरुमपि शास्त्रज्ञं गम्भीरमपि वा । यत्रायं गुरुर्गम्भीरोऽपि स्थितिमुत्सृजति, तत्र स्थावराणां का गणनेति भावः ॥ १२ ॥

विलङ्घितेति ॥ गुरुं स्वभावतो धीरमपि सन्तं रूक्षया परुषया रिपोर्गिरा दूतवाचा विलङ्घितस्थिति-

(१) दुरीक्षता० ।　　(२) व्यसहत ।

मुल्लङ्घितमर्यादं क्रोधादुन्मर्यादं, विकुर्वाणामित्यर्थः । गान्दिनीसुतमक्रूरमभिवीक्ष्य जनैस्तथा अक्रूरविक्रिया-लोकनसमये युगपरिवर्तवायुभिः कल्पान्तवातैर्विवर्तिताः स्थानाद्‍चालिता गिरिपतयोऽद्रयः प्रतीयिरे विशश्वसिरे । अक्रूरविक्रियादर्शनाद्गिरिचलनमपि युगान्ते सम्भावितमेवेति जनैर्विश्वस्तमित्यर्थः । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । प्रतिपूर्वादिणः कर्मणि लिट् । अत्र कल्पान्ते गिरिचलनविक्रिया-कल्पेयमक्रूरविक्रियेति वाक्यभेदेन सादृश्याक्षेपान्निदर्शनालङ्कारः । तेनाऽक्रूरस्य लोकोत्तरं धैर्यं नैसर्गिकमिति वस्तु व्यज्यते ॥ १२ ॥

**विवर्तयन्मदकलुषीकृते दृशौ कराहतक्षितिकृतभैरवाऽऽरवः ॥**
**क्रुधा दधत् तनुमतिलोहिनीमभूत्प्रसेनजिद्गज इव गैरिकाऽरुणः ॥१३॥**

**विवर्तयन्निति** ॥ प्रसेनजिन्नामा यादवर्षभः गैरिकाऽरुणः सन् गैरेयरक्तः सन् गज इव अभवत् सिन्दूरलोहितरुचिर्गजतुल्यो बभूव । किंलक्षणः प्रसेनजित् क्रुधा कोपेन अतिलोहिनीं तनुं दधत् अतिशयरक्तां मूर्तिं धारयन् , पुनः किंभूतः प्रसेनजित् मदकलुषीकृते मदेन वीर्य-विकारेण कलुषीकृते आविलीकृते दृशौ लोचने विवर्तयन् परिभ्रामयन् , अपरं किंलक्षणः कृतभैरवः कृतो विहितो भैरवो भीषण आरवो ध्वनिर्येन सः तथा, कथं कराहतक्षिति यथा भवति तथा करेण पाणिना आहता ताडिता क्षितिर्भूमिर्यत्र तद्यथा भवति । गजोऽपि क्रुधा मदाविले दृशौ धारयति, करेण च भुवं हत्वा भैरवं गर्जति । मदो वीर्यविकारो दानं च ॥ १३ ॥

विवर्तयन्निति ॥ मदो मद्यविकारो दानं च । 'मदो मद्यमदानयोः' इति विश्वः । तेन कलुषीकृते दृशौ विवर्तयन् घूर्णयन् करेण पाणिना शुण्डादण्डेन चाहतायां क्षितौ भूमौ कृतो भैरवारवो भयङ्करध्वनि-र्येन सः । क्रोधात्सध्वानं करेण क्षितिमाघ्नन्नित्यर्थः । क्रुधा क्रोधेन अतिलोहिनीमतिलोहिताम् । 'वर्णादनु-दात्तात्तोपधात्तो नः' इति विकल्पात् ङीष् तकारस्य च नकारः । तनुं वपुर्दधत् प्रसेनजिन्नाम राजा गैरिकारुणो धातुरक्तो गज इवाभूत् । तद्वदलक्ष्यतेत्यर्थः ॥ १३ ॥

**सकुङ्कुमैरविरलमम्बुबिन्दुभिर्गवेषणः परिणतदाडिमाऽरुणैः ॥**
**समत्सरस्फुटितवपुर्विनिःसृतैर्बभौ चिरं निचित इवाऽसृजां लवैः ॥१४॥**

**सकुङ्कुमैरिति** ॥ गवेषणो नाम राजा अम्बुबिन्दुभिः स्वेदजललवैः बभौ रेजे । किंलक्षणैः अम्बुबिन्दुभिः सकुङ्कुमैः काश्मीरयुक्तैः, अत एव अपरं किंलक्षणैः अम्बुबिन्दु-भिः परिणितदाडिमाऽरुणैः पक्वदाडिमफललोहितैः। किंलक्षणो गवेषणः, अतश्चोत्प्रेक्ष्यते— असृजां लवैः रुधिराणां बिन्दुभिः अविरलं संहतं चिरं बहुकालं निचित इव व्याप्त इव । ननु रुधिरकणानां कुत आगम इत्याह—किंलक्षणैः असृजां लवैः समत्सरःस्फुटितवपु-र्विनिःसृतैः समत्सरं सरोषम् अत एव स्फुटितं विदीर्णं यद्वपुः शरीरं ततः विनिःसृताः विनिर्गताः तैः ॥ १४ ॥

सकुङ्कुमैरिति ॥ स प्रसिद्धो गवेषणो नाम राजा सकुङ्कुमैः सर्वाङ्गीणकश्मीरजलेपैरित्यर्थः । अत एव परिणतदाडिमारुणैः परिपक्वदाडिमबीजरक्तैरम्बुबिन्दुभिः । क्रोधसात्त्विकैः स्वेदबिन्दुभिरित्यर्थः । मत्सरे-णान्तःसम्भृतेनात्युत्कटवैरेण स्फुटितान्निर्भिन्नाद्वपुषो विनिःसृतैरसृजां लवैरसृग्बिन्दुभिराविरलं निरन्तरं निचितो व्याप्त इव चिरं बभौ । उत्प्रेक्षा ॥ १४ ॥

**ससम्भ्रमश्चरण(१)तलाऽभिताडनस्फुटन्महीविवरवितीर्णवर्त्मभिः ॥**
**रवेः करैरनुचिततापितोरगं प्रकाशतां शिनिरनयद्रसातलम् ॥ १५ ॥**

---

(१) ससम्भ्रमं चरण ।

ससम्भ्रम इति ॥ शिनिः सात्यकिपिता राजा ससम्भ्रमः सवेगः रवेः करैः श्रीसूर्यस्य किरणैः कृत्वा रसातलं पातालं प्रकाशतामनयत् प्रकटतां प्रापयामास प्रकटीचकार । तस्य क्रुद्धस्य रसातले श्रीसूर्यभासां क आगम इत्याह—किंलक्षणैः करैः चरणतलाऽभिताडनस्फुटन्महीविवरवितीर्णवर्त्मभिः चरणतलाभिताडनेन पादतलाभिघातेन स्फुटन्त्या विदीर्यन्त्या(१) मह्याः पृथिव्या विवरे छिद्रे वितीर्णवर्त्मभिः दत्तमार्गैः, किंलक्षणं रसातलम् अनुचिततापितोरगम् अनुचितमनभ्यस्तं तापिताः परितापं प्रापिता उरगाः सर्पाः यत्र तत्तथा तत् ॥ १५ ॥

ससम्भ्रममिति ॥ शिनिः सात्यकेः पितामहः ससम्भ्रमं ससत्वरं चरणतलाभिताडनेन पादतलाभिघातेन स्फुटन्त्या दलन्त्या मह्या विवरैश्छिद्रैर्वितीर्णवर्त्मभिर्दत्तमार्गैः । तत्प्रसरणैरित्यर्थः । रवेः करैरनुचितं पूर्वमपरिचितमिदं यथा तथा तापिताः सन्तापं गमिता उरगा यस्मिंस्तत् रसातलं प्रकाशतां प्रकटत्वमनयत् । अत्र महीराविकरोरगरसातलानां क्रमेण स्फुटनान्तःप्रवेशतापप्रकाशनैरसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । पादाहननैरमानुर्षी तीव्रतां व्रजति स्मेति ध्वनिः ॥ १५ ॥

प्रतिक्षणं विधुवति सारणे(२) शिरः शिखिद्युतः कनककिरीटरश्मयः ।
अशङ्कितं युधमधुना विशन्त्वमी क्षमापतीनिति निरराजयन्निव ॥१६॥

प्रतिक्षणमिति ॥ सारणे सारणाख्ये रौहिणेये बलदेवभ्रातरि शिरः मस्तकं विधुवति सति धुन्वति सति शिखिद्युतः वैश्वानरनिभाः कनककिरीटरश्मयः रुक्ममुकुटकिरणाः क्षमापतीन् भूमिपालान् इति हेतोः निरराजयन्निव नीराजितवन्त इव । इतीति किम्—अमी क्षमापतयः अधुना इदानीम् अशङ्कितं निर्भयं यथा भवत्येवं युधं विशन्तु सङ्ग्रामं प्रविशन्तु इति हेतोः । समरे हि प्रस्तुते राज्ञां नीराजनाख्यं शान्तिकर्म रक्षार्थं क्रियते । दहनसदृशमुकुटकिरणकपिशीकृतराजकत्वात् एषोत्प्रेक्षा ॥ १६ ॥

प्रतिक्षणमिति ॥ शारणे नाम राज्ञि प्रतिक्षणं शिरो विधुवति क्रोधात् कम्पयति सति । धुवस्तौदादिकाल्लटः शत्रादेशः, 'आचि श्नुधातु—' इत्यादिनोवङादेशः । शिखिवद्द्योतन्त इति शिखियुतोऽग्निप्रभाः । क्विप् । कनककिरीटरश्मयो नीराजनकर्तारः अमी भूपाः अधुना अशङ्कितं निःशङ्कं युधमाजिम् । 'समित्याजिसमियुध' इत्यमरः । विशन्त्विति क्षमापतीन्निरराजयन्निव नीराजयन्ति स्मेवेत्युत्प्रेक्षा । नीराजनात्स्याद्विजय इत्यागमः ॥ १६ ॥

दधौ चलत्पृथुरसनं विवक्षया विदारितं विततबृहद्भुजालतः ॥
विदूरथः प्रतिभयमास्यकन्दरं लस(३)त्फणाधरमिव कोटरं तरुः ॥१७॥

दधाविति ॥ विदूरथः विदूरथसंज्ञो नृपः प्रतिभयं भयानकम् आस्यकन्दरं वदनविवरं दधौ बभार । किंलक्षणमास्यकन्दरं विवक्षया वक्तुमिच्छया विदारितं विकासितम्, अपरं किंलक्षणमास्यकन्दरं चलत्पृथुरसनं कम्पमानदीर्घजिह्वं, किंलक्षणः विदूरथः विततबृहद्भुजालतः वितते प्रसारिते बृहत्यौ दीर्घे भुजे एव भुजावेव लते वल्ल्यौ येन सः तथा । कः किमिव दधावित्यत आह—यथा विततबृहद्भुजाकारलतः तरुर्वृक्षः चलत्फणाधरं सर्पं सर्पं कोटरं धत्ते । तदपि प्रतिभयम् । राज्ञस्तरुरुपमा, आस्यस्य कोटरं, जिह्वायाः भुजङ्गमः, भुजानां लता ॥ १७ ॥

---

(१) परस्मैपदं चिन्त्यम् । (२) शारणे । (३) चल० ।

दधाविति ॥ विततेविस्तृते बृहत्यौ भुजे लते इव यस्य स विदूरथो नाम राजा विवक्षया किमपि वक्तुमिच्छया विदारितं व्यात्तम् अत एव चलन्ती पृथुर्महती रसना जिह्वा यस्मिंस्तम् । 'रसज्ञा रसना जिह्वा' इत्यमरः । प्रतिभयं भयङ्करमास्यं कन्दर इवास्यकन्दरस्तम् । 'दरी तु कन्दरो वा स्त्री' इत्यमरः । चलन् फणाधरः फणी यस्मिंस्तत् कोटरमिव । 'निष्कुहः कोटरं वा ना' इत्यमरः । दधौ । श्रौती पूर्णोपमा ॥

**समाकुले सदसि तथापि विक्रियां मनोऽगमन्न मुरभिदः परोदितैः ॥**
**घनाम्बुभिर्बहलित(१)निम्नगाजलैर्जलं न हि व्रजति विकारमम्बुधेः १८**

**समाकुल इति ॥** तथापि धूतवत्(?) सदसि समाकुलेऽपि सभायां क्षुभितायामपि मुरभिदः श्रीकृष्णस्य मनः चित्तं विक्रियां नागमत् विकारं न जगाम, कैः परोदितैः शत्रुवचोभिः परस्य शत्रोः उदितानि वाक्यानि तैः, सभायां क्षुभितायामपि विक्रियां न ययौ । युक्तं चैतत्, यस्मात् घनाम्बुभिः मेघजलैः अम्बुधेः समुद्रस्य जलं वारि विकारं न व्रजति विक्रियां न प्राप्नोति । किंलक्षणैः घनाम्बुभिः बहलितनिम्नगाजलैः उल्लासितसरित्तोयैरपि, नैवाब्धेर्जलं विक्रियते न क्षुभ्यति ॥ १८ ॥

समाकुल इति ॥ परोदितैः शत्रुवाक्यैः सदसि आस्थाने तथा समाकुले क्षुभितेऽपि मुरभिदो हरेर्मनो विक्रियां क्षोभं नागमत् । तथा हि—बहुलितानि बहुलीकृतानि क्षोभितानि निम्नगाजलानि यैस्तैर्घनाम्बुभिर्मेघोदकैरम्बुधेर्जलं विकारं न व्रजति । यथा वर्षोदकैर्नद्यः क्षुभ्यन्ति न समुद्रस्तद्वदिति भावः । दृष्टान्तालङ्कारः ॥ १८ ॥

**परानमी यदपवदन्त आत्मनः स्तुवन्ति च स्थितिरसतामसाविति ॥**
**मुमोच न प्रकृतिमविस्मितः स्मितं मुखं दधच्छशधर(२)मुग्धमुद्धवः १९॥**

**परानिति ॥** उद्धवः पवनव्याधिः गुरुः इत्यतो हेतोः प्रकृतिं न मुमोच स्वभावं न जहौ । न चुकोपेत्यर्थः । कुत इत्यत आह—यत् अमी दुर्जनाः परान् अन्यान् अपवदन्तो निन्दन्तः सन्तः आत्मनः स्वान् स्तुवन्ति श्लाघन्ते, असौ एषा असतां खलानां स्थितिः स्वभावः । अतश्चैषां प्रकृतिरेषा । चैद्यस्य कटुभाषणं नासौ कोपस्थानमित्यवगच्छन्न चुक्षुभे । किंलक्षणः उद्धवः अविस्मितः अविद्यमानं विस्मितं विस्मयो यस्य सः तथा, अपरं किंलक्षणः स्मितं प्रहृष्टं विकसितं मुखं दधत् वदनं बिभ्रत्, किंलक्षणं मुखं शशधरमुग्धं मृगाङ्कमनोहरम् । अपवादः अपक्रोशः । यद्वा अमी दुर्जनाः परान् अपवदन्ते निन्दन्ति, च पुनः आत्मनः स्तुवन्ति आत्मीयान् कीर्तयन्तीत्यन्वयः ॥ १९ ॥

परानिति ॥ अमी खलाः परानन्यानपवदन्ते निन्दन्ति । 'अपाद्वदः' इत्यात्मनेपदम् । आत्मनः स्वानि स्तुवन्ति चेति यत्, असावसतां खलानां स्थितिः-प्रकृतिरिति । इति मत्वेत्यर्थः । गम्यमानार्थत्वाप्रयोगः । अन्यथा पौनरुक्त्यमित्यालङ्कारिकाः । विस्मितो न भवतीत्यविस्मितो दूतप्रलापैर्विस्मयं न गतः उद्धवः । स्मितं स्मेरम् । उभयत्र कर्तरि क्तः । अत एव शरच्छशधरमुग्धं शरदिन्दुसुन्दरमित्युपमा । मुखं विकृतिं न निनाय न प्रापयामास । न हि महतां निन्दा स्तुतिर्वा विकारकारणमिति भावः ॥ १९ ॥

**निराकृते यदुभिरिति प्रकोपिभिः स्पशे शनैर्गतवति तत्र विद्विषाम् ॥**
**मुरद्विषः स्तनितभयानकाऽऽनकं बलं क्षणादथ समनह्यदाजये(३) ॥**

**निराकृत इति ॥** अथ अनन्तरं मुरद्विषः श्रीकृष्णस्य बलं सैन्यं क्षणादेव तत्क्षणम् आजये सङ्ग्रामाय समनह्यत् समवर्मयत् । क्व सति इत्थममुना प्रकारेण प्रकोपिभिः क्रुद्धैः

(१) ०र्बहुलित । (२) निनाय नो विकृति ' ' ' मुखं शरच्छशधर । (३) स्वनित ' ' ' ०नह्यताजये ।

यदुभिर्यादवैः निराकृते निर्भर्त्सिते विद्विषां शत्रूणां स्पशे चैद्यस्य दूते शनैः स्वैरं गतवति गते सति, किंलक्षणं बलं स्तनितभयानकाऽऽनकं स्तनिता वादिता भयानका: भीषणाः आनकाः पटहाः यत्र तत्तथा वादितभीषणसंज्ञापटहम् ॥ २० ॥

निराकृत इति ॥ तत्र सदसि इतीत्थं प्रकोपिभिरतिक्रुद्धैर्यदुभिः विद्विषां स्पशे चरे । 'अपसर्पश्चरः स्पशः' इत्यमरः । निराकृते धिक्कृते शनैर्गतवति गच्छति सति सागसोऽपि, दूतस्याऽवध्यत्वादिति भावः । अथ दूतगमनानन्तरं स्वनितेन ध्वानिना भयानका भयङ्करा आनकाः पटहा यस्मिंस्तन्मुरद्विषो बलं क्षणादाजये युद्धाय समनह्यत संनद्धम् ॥ २० ॥

**मुहुः प्रतिस्खलितपरायुधा युधि स्थवीयसीरचलनितम्बनिर्भराः ॥**
**अदंशयन्नरहितशौर्यदंशनास्तनूरयं नय इति वृष्णिभूभृतः ॥ २१ ॥**

मुहुरिति ॥ वृष्णिभूभृतः यादवभूपालाः तनूः मूर्तीः अदंशयन् समनीनहन् । किं भयेन नेत्याह—कथम् इति हेतोः । इतीति किम्— अयं नय इति शास्त्रोक्तनीतिरेषेति, यत्संनहनं नीयते-इति समवर्मयन्, न तु शरीरक्षार्थं । यतस्ते किंलक्षणाः अरहितशौर्यदंशनाः अरहितमत्यक्तं शौर्यमेव शूरत्वमेव दंशनं वर्म यैस्ते तथा पौरुषवित्ताः, पुनस्ते युधि सङ्ग्रामे प्रतिस्खलितपरायुधाः तनूश्च किंलक्षणाः युधि मुहुः वारंवारं प्रतिस्खलितानि प्रतिहतानि परायुधानि रिपुप्रहरणानि याभिस्तथा, अपरं किंलक्षणास्तनूः स्थवीयसीः अतिस्थूलाः, अपरं किंलक्षणाः तनूः अचलनितम्बनिर्भराः पर्वतप्रस्थैस्तुल्याः । अर्थे द्रढीयसीः(?) ॥ २१ ॥

मुहुरिति ॥ वृष्णिभूभृतो यादवनरेन्द्राः मुहुरसकृत् युधि प्रतिस्खलितपरायुधाः भग्नप्रतिपक्षायुधाः स्थवीयसीः स्थूलतराः । पराक्रमानुरूपप्रकर्षवतीरित्यर्थः । 'स्थूलदूर—' इत्यादिना पूर्वस्य गुणलोपौ । अचलनितम्बनिर्भरा अद्रिकटकनिबिडाः । अन्तःसारवतीरित्यर्थः । अरहितमत्यक्तं शौर्यमेव दंशनं वर्म यासां तास्तनूर्देहान् अयं नय इति वर्मधारणं नीतिरिति हेतोः न तु भयादिति भावः, अदंशयन्नवर्मयन् । दंशेरनुदात्तेत्वात्परस्मैपदं चिन्त्यमित्याहुः । अत एव भट्टमल्लः—

'संवर्मयति संनह्यत्यात्मने सज्जतीत्यमी ।
संदंशयते दंशयते संनाहे पदपञ्चकम्' ॥

इति । केचित्तु चुरादिषूभयपादिषु पठन्ति । अत्र साभिप्रायविशेषणत्वात्परिकरालङ्कारः ॥ २१ ॥

**दुरुद्वहाः क्षणमपरैस्तदन्तरे रणश्रवादुपचयमाशु बिभ्रति ॥**
**महीभृतां महिमभृतां (१)न संममुर्मुदोऽन्तरा वपुषि बहिश्च कञ्चुकाः ॥**

दुरुद्वहा इति ॥ महीभृतां राज्ञां तदन्तरे युद्धावसरे वपुषि देहे अन्तरा मध्ये मुदः हर्षा न संममुः न मान्ति स्म, बहिश्च बाह्ये कञ्चुकाः कवचाः । तोषस्य अमाने हेतुमाह—किंलक्षणानां महीभृतां महिमभृतां महिम माहात्म्यं बिभ्रति ते महिमभृतः तेषां माहात्म्ययुक्तानां तेजस्विनाम्, अत एव किंलक्षणे वपुषि रणश्रवात् सङ्ग्रामश्रवणात् आशु शीघ्रम् उपचयं बिभ्रति वृद्धिं दधति । मनोरथप्राप्तसङ्ग्रामावतरणपरितोषात् उच्छ्वसिते इत्यर्थः । किंलक्षणाः मुदः कञ्चुकाश्च अपरैः अन्यैः क्षणं दुरुद्वहाः दुर्धराः । तां मुदं वर्म चाऽधीरो दुर्बलः उद्वोढुं न शक्नोति ॥ २२ ॥

दुरुद्वहा इति ॥ महिमभृतामैश्वर्यवतां महीभुजां राज्ञां सम्बन्धिनि रणश्रवात् युद्धश्रवणादाशु शीघ्रमुप-

(१) महीभुजां ।

चयं वृद्धिं बिभ्रति बिभ्राणे वपुषि अपैरस्थैः क्षणं क्षणमपि दुरुद्वहा दुर्भरा मुदः सन्तोषाः अन्तरा अन्तराले न संममुः । बहिः कञ्चुकाश्च न संममुः न मान्ति स्म । नाऽवर्तन्तेत्यर्थः। पूर्वत्र आधेयाधिक्यादुत्तरत्राधाराधिक्यादिति विवेकः । अत्र मुदां कञ्चुकानां च प्रकृतानामेव विशेषणसाम्यादौपम्यगम्यतायां केवलप्रकृतास्पदा तुल्ययोगिता ॥ २२ ॥

**सकल्पनं द्विरदगणं वरूथिनस्तुरङ्गिणो जवन(१)युजश्च वाजिनः ॥**
**त्वरावतः (२)स्वयमपि कुर्वतो नृपाः पुनःपुनस्तदधिकृतानतत्वरन् ॥२३॥**

**सकल्पनमिति ॥** नृपाः राजानः पुनःपुनर्वारंवारं तदधिकृतान् तेषु इभरथाश्वेषु अधिकृताः तान् अतत्वरन् त्वरयामासुः । किंलक्षणान् तदधिकृतान् द्विरदगणं हास्तिकं सकल्पनं ध्वजादियुतं, तथा वरूथिनो रथान् तुरङ्गिणोऽश्वयुक्तान्, यदि वा तुरङ्गिणो रथान् वरूथिनो गुप्तिमतो रथयुक्तान्, वाजिनश्च अश्वान् जवनयुजश्च समरोपकरणयुक्तान् कुर्वतो विदधतः । जवनं शस्त्रं, यस्य वरक इति प्रसिद्धिः । अत एव स्वाधिकारप्रवृत्तत्वात् त्वरावतः सत्वरान् ॥ २३ ॥

**सकल्पनमिति ॥** द्विरदगणं सह कल्पनया सकल्पनं यथोचितसंनाहसहितम् । 'कल्पना सज्जना समे' इत्यमरः । वरूथो रथगुप्तिरेषामस्तीति वरूथिनो रथान् । 'रथगुप्तिर्वरूथो ना' इत्यमरः । तुरङ्गिणोऽश्वयुक्तान् वाजिनोऽश्वान् जयनयुजः पल्ययनादिसंयुक्तान् । सम्पदादिभ्यः क्विप् । 'जयनः स्यात्तुरङ्गादिसंनाहे विजयेऽपि च' इति विश्वः । स्वयं त्वरायुजः त्वरायुक्तान् स्वतः कुर्वतोऽपि । स्वत एव त्वरया कुर्वाणानपीत्यर्थः। तदधिकृतान् हस्त्यादिषु नियुक्तपुरुषान् नृपाः पुनःपुनरतत्वरन् त्वरयन्ति स्म । तेषां तथा रणौत्सुक्यादिति भावः । त्वरणौ चङि 'अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्' इत्यभ्यासस्याकारः ॥ २३ ॥

**युधे परैः सह दृढबद्धकक्षया कलक्वणन्मधुपकुलोपगीतया ॥**
**अदीयत द्विपघटया सवारिभिः करोदरैः स्वयमथ दानमक्षयम् ॥ २४ ॥**

**युध इति ॥** अथ द्विपघटया गजश्रेण्या सवारिभिः सहजलैः करोदरैः पुष्करविवरैः आत्मना स्वयम् अक्षयं प्रभूतं दानं मदोदकम् अदीयत व्यतारि । समरदर्शनात् कुञ्जरा माद्यन्ति हि । किंलक्षणया द्विपघटया परैः सह युधे शत्रुभिः सार्धं युद्धाय दृढबद्धकक्षया दृढं बद्धा नद्धा कक्षा मध्येभबन्धनं यस्याः सा तया, अपरं किंलक्षणया द्विपघटया कलक्वणन्मधुपकुलोपगीतया कलं मधुरं क्वणत् शब्दायमानं यन्मधुपकुलं भ्रमरवृन्दं तेन उपगीता गातुं प्रवृत्ता तया । यो हि वीरो रणे दृढबद्धकक्षः कृतनिश्चयः, स बन्दिमागधमधुपैः गीयमानयशाः सवारिभिः करैः अक्षयं दानं ददाति ॥ २४ ॥

**युध इति ॥** अथ परैः सह युधे युद्धाय दृढबद्धा कक्षा मध्यबन्धनं यस्यास्तया । 'कक्षा बृहतिकायां स्यात्काञ्च्यां मध्येभबन्धने' इति विश्वः ।अन्यत्र दृढोद्योगयेत्यर्थः। कलं क्वणता मधुपकुलेनाऽलिगणेनोपगीतया बन्दिमागधस्तुतया चेति गम्यते । द्विपघटया कर्त्र्या स्वयं सवारिभिः सोदकैः करोदरैः पुष्कराग्रैः पाणितलाग्रैश्चाऽक्षयमपरिमितं दानं मदः अदीयत, दानं द्रव्यं चाऽदीयत दत्तम । अत्र प्रस्तुतगजघटाविशेषणसाम्येनाप्रस्तुतदानकर्तृप्रतीतेः समासोक्तिरलङ्कारः ॥ २४ ॥

**सुमेखलाः सिततरदन्तचारवः समुल्लसत्तनुपरिवार(३)सम्पदः ॥**
**रणैषिणां पुलकभृतोऽधिकन्धरं ललम्बिरे सदसिलताः प्रिया इव ॥२५॥**

**सुमेखला इति ॥** रणैषिणां युयुत्सूनाम् अधिकन्धरं कण्ठे सदसिलताः सत्यः

---

( १ ) जयन । ( २ ) त्वरायुजः । ( ३ ) परिधान ।

असिलताः प्रशस्ताः खड्गमुष्टयो ललम्बिरे लम्बिताः, का इव प्रिया इव कान्ता इव। प्रिया अपि तेषां निर्गच्छतां गले लेगुरित्यर्थः । किंलक्षणाः सुमेखलाः सुशोभना मेखलाः कोशबन्धा यासां तास्तथा, अपरं किंलक्षणाः सिततरदन्तचारवः सिततरेण अत्युज्ज्वलेन मुष्टिदेशस्थितेन दन्तेन करिदशनखण्डेन चारवः मनोहराः, अपरं किंलक्षणाः समुल्लसत्तनुपरिवारसम्पदः। समुल्लसन्ती संश्लिष्टा स्फुरन्ती च तनोः सूक्ष्मस्य परिवारस्य कोशस्य सम्पत् उत्कर्षो यासां तास्तथा, अपरं किंलक्षणाः पुलकभृतः पुलकं गुणविशेषं बिभ्रति धारयन्ति इति तथा । अथ श्लेषः–प्रियास्तु सुमेखलाः सद्दशनाः अतिधवलदशनमनोहराः स्फुरत्तनुदुकूलसम्पदः पुलकभृतो रोमाञ्चधारिण्यश्च भवन्ति ॥२५॥

सुमेखला इति ॥ शोभना मेखला बन्धनसूत्राणि काञ्च्यश्च यासां ताः सुमेखलाः । 'मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः' इति विश्वः। सिततरैर्दन्तैर्दन्तमयत्सरुभिर्दशनैश्च चारवः, उल्लसन्त्यः तनवः सूक्ष्माः परिधानसम्पदः कोशसम्पदो वस्त्रसम्पदश्च यासां ताः पुलकभृतः रोमाञ्चधारिण्यश्च सदसिलताः चारुखड्गवल्ल्यः प्रिया इव रणैषिणां रणाकाङ्क्षिणां कन्धरास्वधिकन्धरमधिकण्ठम् । विभक्त्यर्थेऽव्ययीभावः । ललम्बिरे । लग्ना इत्यर्थः । श्लेषः श्लिष्टोपमा वा मतभेदात् ॥ २५ ॥

**मनोरमैः(१) प्रकृतिमनोरमाकृतिर्भयप्रदैः समितिषु भीमदर्शनः ॥**
**सदैवतैः सततमथाऽनपायिभिर्निजाङ्गवन्मुरजिदसेव्यताऽऽयुधैः ॥२६॥**

मनोहरैरिति ॥ अथ मुरजित् श्रीकृष्णः आयुधैः खड्गचक्रगदाधनुर्भिः प्रहरणैः असेव्यत अभाजि, कथं निजाङ्गवत् स्वशरीरेणेव । यथा स्वशरीरेण सेव्यते । उभयेषां साम्यम् । किंलक्षणैः आयुधैः मनोरमैः रम्यैः, किंलक्षणो भगवान् प्रकृतिमनोरमाकृतिः स्वभावरम्यसंस्थानः, अपरं किंलक्षणैः भयप्रदैः साध्वसकारिभिः । सोऽपि समितिषु युद्धेषु भीमदर्शनः भयानकाऽऽलोकनः । अपरं किंलक्षणैरायुधैः सदैवतैरधिष्ठातृदेवतायुक्तैः । सोऽपि सदैवतः सनातनश्च । अपरं किंलक्षणैरायुधैः सततं निरन्तरम् अनपायिभिः अपायोऽपसरणं तद्रहितैः अवियुक्तैः, सदा सन्निहितत्वात् । अङ्गं शरीरं तच्च निरूप्यमाणं श्रीभगवानेव ॥२६॥

मनोहरैरिति ॥ अथ प्रकृतिमनोरमाकृतिः स्वभावसुन्दरमूर्तिः समितिषु युद्धेषु भीमं दर्शनं यस्य स भीमदर्शनो मुरजिद्धरिर्मनोहरैः प्रकृतिमनोहरैः समितिषु भयप्रदैः सदैवतैः अधिदेवतायुक्तैः सततमनपायिभिरायुधैः शार्ङ्गादिभिर्निजाङ्गवत्पृथगवस्थितैः शरीरैरिवेत्युत्प्रेक्षा । असेव्यत सेवितः ॥ २६ ॥

**अवारितं गतमुभयेषु भूरिशः क्षमाभृतामथ कटकान्तरेष्वपि ॥**
**मुहुर्युधि क्षतसुरशत्रुशोणितप्लुतप्रधिं रथमधिरोहति स्म सः ॥ २७ ॥**

अवारितमिति ॥ स देवः श्रीकृष्णः रथमधिरोहति स्म स्यन्दनमारूढः । किंलक्षणं रथं क्षमाभृतां राजपर्वताख्यानाम् उभयेषु कटकान्तरेषु स्कन्धावारमध्यसानुषु अवारितमप्रतिषिद्धं युधि सङ्ग्रामे भूरिशोऽनेकवारं गतं प्रविष्टम्, अपरं किंलक्षणं रथं मुहुरसकृत् युधि सङ्ग्रामे क्षतसुरशत्रुशोणितप्लुतप्रधिं क्षता हता ये सुरशत्रवो दानवाः तेषां शोणितेन क्षतजेन प्लुता व्याप्ता प्रधिर्नेमिर्यस्य सः तथा तम् । एतेन साम्परायिकं रथमारूढः इत्युक्तं भवति ॥ २७ ॥

अवारितमिति ॥ अथायुधसन्निधानाऽऽनन्तरं स हरिरुभयेषु द्वयेषु । द्विविधेष्वित्यर्थः। क्षमाभृतां राज्ञां गिरीणां च कटकान्तरेष्वपि शिबिराभ्यन्तरेषु नितम्बावकाशेषु च भूरिशो बहुशः अवारितमप्रतिहतं गतं

(१) मनोहरैः।

प्रस्थितं मुहुरसकृत् युधि क्षतानां सुरशत्रूणामसुराणां शोणितैः प्लुताः सिक्ताः प्रधयो नेमयो यस्य तम् । 'चक्रधारा प्रधिर्नेमिः' इति हलायुधः । रथमधिरोहति स्म आरुरोह ॥ २७ ॥

**उपेत्य च स्वनगुरुपक्षमारुतं दिवस्त्विषा कपिशितदूरदिङ्मुखः ॥**
**प्रकम्पितस्थिरतरयष्टि तत्क्षणं पतत्पतिः पदमधिकेतनं दधौ ॥ २८ ॥**

**उपेत्येति ॥** पतत्पतिः पक्षिनाथो गरुडः तत्क्षणं तदैव अधिकेतनं चिन्हे पदं दधौ स्थानं बबन्ध । पताकायामुपविष्टः इत्यर्थः किंलक्षणं पदं प्रकम्पितस्थिरतरयष्टि प्रकम्पिता विधूनिता स्थिरतरा स्थेयसी दृढा यष्टिर्दण्डो यत्र तथा, किं कृत्वा दिवः स्वर्गात् उपेत्य आगत्य, कथं स्वनगुरुपक्षमारुतं स्वनेन शब्देन गुरुः दुस्सहः पक्षमारुतः पक्षवातो यत्र क्रियायां तद्यथा भवति, किंलक्षणः पतत्पतिः त्विषा कपिशितदूरदिङ्मुखः त्विषा कनकभासा कपिशितानि पिशङ्गीकृतानि दूरमत्यर्थं दिङ्मुखानि आशामण्डलानि येन सः तथा॥२८॥

**उपेत्येति ॥** किञ्चेति चार्थः । पतत्पतिरण्डजमण्डलेश्वरः । 'पतत्पत्ररथाऽण्डजाः' इत्यमरः । त्विषा कान्त्या कपिशितानि कपिलीकृतानि दूराणि दिङ्मुखानि येन सः, स्वनेन गुरुर्महान्पक्षमारुतो यस्मिन् कर्मणि तत्तथा दिवः स्वर्गादुपेत्यागत्य तत्क्षणं तस्मिन्क्षणे प्रकम्पिता स्थिरतरा निश्चला यष्टिरावासस्तम्भो यस्मिंस्तत्तथा अधिकेतनं केतने । विभक्त्यर्थेऽव्ययीभावः । पदं दधौ निहितवान् ॥ २८ ॥

**गभीरया विजित(१)मृदङ्गनादया स्वनश्रिया हतरिपुहंसहर्षया ॥**
**प्रमोदयन्नथ मुखरान् कलापिनः प्रतिष्ठते नवघनवद्रथः स्म सः ॥ २९ ॥**

**गभीरयेति ॥** अथानन्तरं स रथः प्रतिष्ठते स्म स्यन्दनश्चचाल । किं कुर्वन् नवघनवत् प्रावृण्मेघवत् स्वनश्रिया शब्दसमृद्ध्या कलापिनो मयूरान् प्रमोदयन् हर्षयन् । रथचीत्कारं श्रुत्वा हि अभ्रस्वनशङ्कया ग्राममयूरा हृष्यन्ति । अत एव मुखरान् सशब्दान् कुर्वन् । किंलक्षणया स्वनश्रिया गभीरया गम्भीरया, अपरं किंलक्षणया विजितमृदङ्गनादया जितपणवशब्दया, अपरं किंलक्षणया अत एव हतरिपुहंसहर्षया । वर्षाऽभ्रमपि प्रमोदितकलापि गाम्भीर्याऽभिभूतमृदङ्गनादं हतहंसहर्षं च भवति, मानससरः प्रति गमनक्लेशात् ॥ २९ ॥

**गभीरतेति ॥** अथ गरुडागमनानन्तरं स रथो नवघनवत् नवघनेन नवाम्बुदेन तुल्यम् । 'तेन तुल्यम्—' इति वतिप्रत्ययः । गभीरतया गाम्भीर्येण विजितो मृदङ्गनादो यया तया हतो रिपुहंसानां हंसानामिव रिपूणां हर्षो यया तया स्वनश्रिया ध्वनिसम्पदा मुखरान् कूजतः कलापिनो मयूरान् प्रमोदयन् प्रतिष्ठते स्म प्रतस्थे । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । 'लट् स्मे' इति भूते लट् । तद्धितगता श्रौती पूर्णोपमा ॥

**निरन्तरस्थगितदिगन्तरं ततस्तदुच्चल(२)द्बलमवलोकयन् जनः ॥**
**विकौतुकः प्रकृतमहाप्लवेऽभवद्विश्रृङ्खलप्रचलित(३)सिन्धुवारिणि ३०॥**

**निरन्तरेति ॥** निरन्तरस्थगितदिगन्तरं समग्रभृताऽऽशाविवरं तद्बलं तत्सैन्यम् उच्चलत् प्रतिष्ठमानमवलोकयन् पश्यन् जनो लोकः विश्रृङ्खलप्रचलितसिन्धुवारिणि विश्रृङ्खलं प्रचलिते निर्मर्यादं क्षुभिते सिन्धुवारिणि जलनिधिजले विकौतुकः निकौतूहलोऽभवत् बभूव समुद्रदर्शने विकुतूहलोऽभूत् । किंलक्षणे विश्रृङ्खलप्रचलितसिन्धुवारिणि प्रकृतमहाप्लवे प्रकृतः प्रस्तुतो महाप्लवः पौरक्षोभो यत्र तस्मिन् । कल्पान्ते किल जनस्य समग्र व्याप्ति

---

( १ ) गभीरताविजित । ( २ ) ततः समुच्चल० । ( ३ ) ०द्विशृङ्खलं प्रचालित ।

हरति क्षुभ्यत्युदधौ कौतुकं भवति । तच्चोच्चलद्बलं दृष्ट्वा दृश्यं दृष्टत्वात् न कुतूहलपदं बध्नाति । प्रकृतीति पाठे प्रकृतिमहाप्लवे महाभूतसंक्षये कल्पान्ते विशृङ्खलं प्रचलितं यस्मिन्धुवारि तत्र जनो विकौतुको भवतीति ॥ ३० ॥

निरन्तरेति ॥ ततो रथप्रस्थानादनन्तरं निरन्तरं नीरन्ध्रं स्थगितान्याच्छादितानि दिगन्तराणि येन तत् समुच्चलत्प्रतिष्ठमानं तद्बलं सैन्यमवलोकयन् जनो लोकः प्रकृतः प्रक्रान्तो महाप्लवो महापूरो जगत्संप्लवरूपो येन तस्मिन् विशृङ्खलमप्रतिघातं प्रचलितं क्षुभितं यस्मिन्धोरब्धेर्वारि तस्मिन्विकौतुको निवृत्तकौतूहलोऽभवत् । कल्पान्तक्षुभितवारिधेर्वारिवच्च तद्बलं सकलजगत्संहारशङ्कयाऽलक्ष्यतेत्यर्थः । अत्राऽन्यदर्शनादन्यादिदृक्षानिवृत्तेर्बलवारिधिवारिणोरेकत्वाक्षेपे बाधात्सादृश्याक्षेपाद्वाक्यभेदेन प्रतिबिम्बकरणान्निदर्शनालङ्कारः ॥ ३० ॥

बबृंहिरे गजपतयो महाऽऽनकाः प्रदध्वनुर्जयतुरगा जिहेषिरे ॥
असम्भवद्भृतगिरि(१)गह्वरैरभूत्तदारवैर्दलित इव स्व आश्रयः ॥३१॥

बबृंहिर इति ॥ गजपतयो महेभाः बबृंहिरे जगर्जुः, महानकाः प्रदध्वनुः बृहत्पटहाः सस्वनुः, जयतुरगा जिहेषिरे जयाश्वाः हेषारवं चक्रुः । अत एव तदारवैः तेषां गजादीनाम् आरवैः शब्दैः स्व आश्रयः शब्दस्य आत्मीय आधारः आकाशाख्यो दलित इवाऽभूत् भग्न इवाभवत् भग्नतुल्य इवासीत् । किंलक्षणैः तदारवैः असम्भवद्भृतगिरिगह्वरैः असम्भवन्ति परिपूरितानि गिरिगह्वराणि पर्वतगहनानि यैस्ते तथा तैः पूरितपर्वतगहनैः॥

बबृंहिर इति ॥ गजपतयो बबृंहिरे बबृंहुः । बृंहणं चक्रुरित्यर्थः । बृहि वृद्धौ शब्दे च । आत्मनेपदं चिन्त्यम् । अत एव मल्लः—'हेषते ह्रेषतेऽश्वानां हस्तिनां बृंहतीति च' इति । महानकाः प्रदध्वनुः । जयशालास्तुरगा जयतुरगा जिहेषिरे । हेषां चक्रुरित्यर्थः । हेषृ ह्रेषृ अव्यक्ते शब्दे । तदा तस्मिन्काले असम्भवन्त्यन्तर्धातुमपर्याप्नुवन्ति गिरिवरगह्वराणि येषां तैः गिरिवरगह्वरेषु अमाद्भिः । अवर्तमानैरित्यर्थः । रवैर्बृंहणादिघोषैः स्व आश्रयः स्वसमवायिकारणमाकाशो दलित इव विदारित इवाभूदित्युत्प्रेक्षा । तयः तेषामतितीव्रत्वं व्यज्यते ॥ ३१ ॥

अनारतं रसति जयाय दुन्दुभौ मधुद्विषः फलदलघुप्रतिस्वनैः ॥
विनिष्पतन्मृगपतिभिर्गुहामुखैर्गताः परां मुदमहसन्निवाऽद्रयः ॥ ३२ ॥

अनारतमिति ॥ मधुद्विषः श्रीकृष्णस्य दुन्दुभौ पटहे जयाय जयप्राप्त्यर्थम् अनारतं सततं रसति ध्वनति सति प्राप्तहर्षत्वात् गुहामुखैर्दरीवदनैः अद्रयः पर्वता अहसन्निव जहसुरिव, किंलक्षणाः अद्रयः परामुत्कृष्टां मुदं गताः हर्षं प्राप्ताः । अतिहासस्य कारणमाह– किंलक्षणैः गुहामुखैः विनिष्पतन्मृगपतिभिः निर्यत्कण्ठीरवैः, अपरं किंलक्षणैः फलदलघुप्रतिस्वनैः प्रतिबिम्बितगुरुध्वनितैः । यदा हि ढक्कादि वाद्यते तदा प्रतिध्वनेन क्षुभिताः सिंहा गुहाभ्यो निस्सरन्ति । अतश्च सिंहानां शौक्ल्यात् ज्ञायते श्रीभगवज्जयानन्दिता नगा जहसुरिति ॥ ३२ ॥

अनारतमिति ॥ मधुद्विषो हरेः दुन्दुभौ रणभेर्यां जयायाऽनारतमश्रान्तं रसति ध्वनति सति फलन्तः सङ्क्रामन्तोऽलघवो महान्तः प्रतिस्वनाः प्रतिध्वनयो येषु तैः, विनिष्पतन्तः क्षोभान्निर्गच्छन्तः मृगपतयः सिंहा येभ्यस्तैर्गुहाभिरेव मुखैरद्रयः परां मुदं गताः सन्तः अहसन्निव । सिंहानां धावल्याद् ध्वनियोगाच्च हसनोत्प्रेक्षा ॥ ३२ ॥

जडीकृतश्रवणपथे दिवौकसां चमूरवे विशति सुराऽद्रिकन्दराः ॥
अनर्थकैरजनि विदग्धकामिनीरतान्तरक्वणितविलासकौशलैः ॥ ३३ ॥

---

(१) असम्भवद्गिरिवर ।

जडीकृतेति ॥ विदग्धकामिनीरतान्तरक्वणितविलासकौशलैः अनर्थकैः अजनि विदग्धानां चतुराणां प्रौढानां वा कामिनीनां सुन्दरीणां रतान्तरे निधुवनमध्ये यत्क्वणितं शब्दितं मणितं तत्र यो विलासः लीला तत्र कौशलानि नैपुण्यानि तैर्निरर्थकैः निष्फलैः अजनि समपादि । क्व सति चमूरवे सेनाकोलाहले सुराऽद्रिकन्दराः सुमेरुदरीः विशति सति प्रविशमाने(?)सति, किंलक्षणे चमूरवे दिवौकसां देवानां जडीकृतश्रवणपथे बधिरितकर्णमार्गे । सुमेरुगुहासु देवाः रमणीभिः सह रन्तुमारभन्त । यावच्च दुन्दुभिध्वनितेन सर्वं व्यानशे, तावच्च मणितादेरश्रवणात् विलासवतीविलासनैपुण्यस्य निरर्थकत्वमिति भावः ॥ ३३ ॥

जडीकृतेति ॥ दिवमोको येषां तेषां दिवौकसां देवानाम् । कन्दराऽन्तर्गतानामित्यर्थः । जडीकृतश्रवणपथे बधिरीकृतश्रोत्रमार्गे । सापेक्षत्वेऽपि गमकत्वात्समासः । चमूरवे सेनाघोषे सुराद्रिकन्दराः मेरुगह्वराणि विशति सति, विदग्धकामिनीनां प्रौढाङ्गनानां रतान्तरे सुरतमध्ये क्वणितविलासाः कूजितसम्पदस्तासु यानि कौशलानि तैरनर्थकैरजनि जातम् । प्रेयसां बाधिर्यादिति भावः । अत्र श्रोत्रजाड्यस्य विशेषणगत्या क्वणिताऽऽनर्थक्यहेतुत्वात्काव्यलिङ्गम् । तदुपजीवितेन क्वणितानामानर्थक्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरित्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ३३ ॥

**अरातिभिर्युधि सह युध्यता (१)हताञ्जिघृक्षवः श्रुतरणतूर्यनिःस्वनाः ॥**
**अकुर्वत प्रथमसमागमोचितं चिरोज्झितं सुरगणिकाः प्रसाधनम् ॥ ३४ ॥**

अरातिभिरिति ॥ सुरगणिकाः देववाराङ्गनाः अप्सरसः प्रथमसमागमोचितं नवसङ्गमयोग्यं प्रसाधनमलङ्करणम् अकुर्वत विदधुः । किंलक्षणाः सुरगणिकाः यतः अरातिभिः शत्रुभिः युधि सङ्ग्रामे हतान् व्यापादितान् वीरान् जिघृक्षवः ग्रहीतुकामाः, अरातिभिः हतान् किंलक्षणान् सह युध्यतः सार्धं युध्यमानान् । सहप्रकृतित्वाच्च अरिभिः सार्कं युध्यन्ते । युद्धं प्रस्तुतमिति कथं ताः अमंसतेत्याह—किंलक्षणाः सुरगणिकाः श्रुतरणतूर्यनिःस्वनाः आकर्णितसमरवादित्रध्वनयः, किंलक्षणं प्रसाधनं चिरोज्झितं बहुकालत्यक्तं, सङ्ग्रामाभावे वीरसमागमाभावात् ॥ ३४ ॥

अरातिभिरिति ॥ सह युध्यन्ते इति तान् सहयुध्वनः । 'सहे च' इति क्वनिप् । अत एवाऽरातिभिर्युधि हतान् जिघृक्षवो ग्रहीतुमिच्छवः स्वयंवरणकामाः । ग्रहेः सन्नन्तादुप्रत्ययः । सुरगणिका अप्सरसः श्रुतरणतूर्यनिःस्वनाः सत्याश्चिरोज्झितम् । प्रायेण प्रवीरसम्वादाभावादिति भावः । प्रथमसमागमोचितम् । अतिमोहनमित्यर्थः । प्राथम्यं च पुंसामिदम्प्रथमत्वादिति भावः । प्रसाधनमकुर्वत । परिष्कृतवत्य इत्यर्थः । 'प्रतिकर्म प्रसाधनम्' इत्यमरः । अत्र स्वयंवरणतूर्यश्रवणयोर्विशेषणगत्या प्रसाधनहेतुत्वात्काव्यलिङ्गम् ॥

**प्रणोदिताः परिगतयन्तृकर्मभिर्निषादिभिर्विदितमताऽङ्कुश(२)क्रियैः ॥**
**गजाः सकृत्करतललोललालिका(३)हता मुहुः प्रणदितघण्टमाययुः ॥ ३५ ॥**

प्रणोदिता इति ॥ गजाः स्तम्बेरमाः आययुः आगताः सेनामध्यं प्राविक्षन् । किंलक्षणाः गजाः यतो निषादिभिः आरोहैः प्रणोदिताः प्रेरिताः, किंलक्षणैर्निषादिभिः परिगतयन्तृकर्मभिः परिगतं ज्ञातं यन्तृकर्म हस्तिव्यापारो यैस्ते तथा तैः, अपरं किंलक्षणैः निषादिभिः विदितमताऽङ्कुशक्रियैः विदिता ज्ञाता मता अभीष्टा अनुद्वेजिनी अङ्कुशक्रिया सृणिकर्म यैस्ते तथा, किंलक्षणाः करतललोललालिकाहताः करतलेन पाणितलेन लोलया लालिकया लालनतया सान्त्वनतया सकृदाहताः आस्फालिताः । केचित्

(१) सहयुध्वनो । (२) प्रचोदिताः परिचित······यताङ्कुश । (३) नालिका ।

नालिकां कशासङ्ख्यानमाहुः । कथं यथा आययुः प्रणदितघण्टं यथा मुहुः असकृत् पुनः-पुनः प्रणदिताः शब्दिता घण्टाः घर्घराः यत्र गमने तद्यथा ॥ ३५ ॥

प्रचोदिता इति ॥ परिचितं यन्तृकर्म सादिकृत्यं यैस्तैः । स्वभ्यस्तगजशास्त्रैरित्यर्थः । अत एव विदिते यताङ्कुशक्रिये यतयाताख्ये पादाङ्कुशकर्मणी यैस्तैः । 'पादकर्म यतं प्रोक्तं यातमङ्कुशवारणम्' इति हलायुधः । निषादिभिर्यन्तृभिः प्रचोदिताः प्रेरिता गजाः सकृदेकवारमेव करतललोलाभिः पाणितलचलिताभिर्नालिकाभिरन्तर्नाडिकाभिहतास्ताडितास्तथापि मुहुः प्रणदिता असकृद् ध्वनन्ती घण्टा यस्मिन् कर्मणि तत्तथा आययुः प्रस्थातुमागताः । स्वभावोक्तिः ॥ ३५ ॥

**सविक्रमक्रमणचलैरितस्ततः प्रकीर्णकैः क्षिपत इव क्षिते रजः ॥**
**व्यरंसिषुर्न खलु जनस्य दृष्टयस्तुरङ्गमादभिनवभाण्डधारिणः(१) ॥३६॥**

**सविक्रमेति** ॥ जनस्य लोकस्य दृष्टयः दृशः खलु निश्चितं तुरङ्गमात् अश्वात् न व्यरंसिषुः नन्यवर्तयन्(२) । अविरतं दृष्टोऽसावित्यर्थः । किंलक्षणात् तुरङ्गमात् सविक्रमक्रमणचलैः प्रकीर्णकैः इतस्ततः क्षितेः रजः क्षिपत इव सविक्रमं अतितूर्णं विक्रमान्वितं च यत् क्रमणं गमनं तेन चलानि कम्प्राणि यानि प्रकीर्णकानि चामराणि तैः क्षितेः रजः भुवः रेणुं क्षिपत इव कीर्यमाणादिव, (३)अपरं किंलक्षणात् तुरङ्गमात् अभिनवभाण्डधारिणः नूतनाऽलङ्कारधारिणः । भाण्डमश्वाभरणम् ॥ ३६ ॥

सविक्रमेति ॥ सविक्रमेण साऽङ्घ्रिविन्यासविशेषेण क्रमणेन गमनेन चलैः प्रकीर्णकैश्चामरैः । 'चामरं तु प्रकीर्णकम्' इत्यमरः । क्षिते रजः स्वखुरोद्धतमितस्ततः क्षिपतो निरस्यत इव स्थितादित्युत्प्रेक्षा । अभिनवभाण्डभारिणः प्रत्यग्राभरणधारिणः । 'स्याद्भाण्डमश्वाभरणे' इत्यमरः । तुरङ्गमात्तुरङ्गमेभ्यः । जातावेकवचनम् । 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' इत्यपादानत्वम् । जनस्य दृष्टयो न व्यरंसिषुर्न विरताः खलु । रमेर्लुङि 'व्याङ्परिभ्यो रमः' इति परस्मैपदं 'यमरमनमातां सक्च' इति सगिडागमौ । इटि 'नेटि' इति वृद्धिप्रतिषेधः ॥ ३६ ॥

त्रिभिर्विशेषकम्—

**चलाऽङ्गुलीकिसलयमुद्धतैः करैरनृत्यत स्फुटकृतकर्णतालया ॥**
**मदोदकद्रवकटभित्तिसङ्गिभिः कलस्वनं भ्रमर(४) गणैरगीयत ॥ ३७ ॥**
**असिच्यत प्रशमितपांसुभिर्मही मदाम्बुभिर्धृतनवपूर्णकुम्भया ॥**
**अवाद्यत श्रवणसुखं समुन्नमत्पयोधरध्वनिगुरुतूर्यमानकैः(५) ॥ ३८ ॥**
**उदासिरे पवनविधूतवासस इतस्ततो(६) गगनलिहश्च केतवः ॥**
**यतः पुरः प्रतिरिपु शार्ङ्गिणः स्वयं व्यधीयत द्विपघटयेति मङ्गलम् ३९**

**चलाऽङ्गुलीत्यादि ॥ यत इति** ॥ शार्ङ्गिणः शार्ङ्गधरस्य श्रीकृष्णस्य प्रतिरिपु विपक्षसंमुखं यतो गच्छतः सतः द्विपघटया गजघटया पुरोऽग्रे स्वयमात्मना इति मङ्गलं शुभसूचनं व्यधीयत कृतम् । **चलाङ्गुलीति** ॥ तथा हि—यतः, तया उद्धतैः उच्छ्रितैः करैः शुण्डादण्डैः अनृत्यत नृत्तम् । कथं चलाङ्गुलीकिसलयं चलानि चटुलानि अङ्गुलीकिसलयानि करकलिकापल्लवानि यत्र क्रियायां तद्यथा, किंलक्षणया तया स्फुटकृतकर्णतालया स्फुटं कृतं प्रकटं विहितं कर्णतालं श्रोत्रविक्षेपो यया सा तथा तया, तथा भ्रमर-

(१) भारिणः । (२) प्रयोजकव्यापारश्चिन्त्यः । (३) कर्तृवाच्यमुचितं, न कर्मवाच्यम् ।
(४) स्वरं मधुप । (५) ०माननैः । (६) वाससस्ततस्ततो ।

गणैः मधुपसमूहैः कलस्वनं मधुरशब्दं यथा भवति तथा अगीयत गीतं, किंलक्षणैः भ्रमरगणैः मदोदकद्रवकटभित्तिसङ्गिभिः मदोदकेन दानवारिणा द्रवा आर्द्रा दानाऽम्बुस्राविणी या कटभित्तिः गण्डभित्तिः कपोलस्थली तत्र सङ्गः सम्बन्धो विद्यते येषां ते तथा तैः तत्र लीनैः । **असिच्यतेति॥** तथा तया धृतनवपूर्णकुम्भया धृता नवाः पूर्णा सुजाताः कुम्भाः मस्तकपिण्डा यया सा तथा तया एवंविधया, तथा प्रशमितपांसुभिः अपास्तधूलिभिः मदाम्बुभिः दानजलैः महीभूमिः असिच्यत सिक्ता उक्षाम्बभूवे । अन्ययापि धृतनवपूर्णकुम्भया कयाचित् नायिकाया मही सिच्यते । तथा आनकैः पटहैः करणभूतैः तूर्यमवाद्यत वादित्रं वादितं, कथमवाद्यत श्रवणसुखं श्रोतृसुखकारि, किंलक्षणं तूर्यं समुन्नमत्पयोधरध्वनिगुरु समुन्नमन्तः समुद्यताः ये पयोधरा मेघाः तेषां यो ध्वनिर्गर्जितं तद्वद् गुरु गम्भीरम् । **उदासिरे इति ॥** गगनलिहो नभःस्पृशः अत एव पवनविधूतवाससः समीरणकम्पितवसनाः इतस्ततः सर्वासु दिक्षु केतवः ध्वजाः उदासिरे उच्चिक्षिपिरे ऊर्ध्वीकृताः । इत्थं शार्ङ्गिणः श्रीकृष्णस्य जयार्थं यतो गच्छतः द्विपघटया स्वयं मङ्गलं व्यधीयत अकारि । अन्यस्यापि सुभटस्य रिपून् जेतुं गच्छतः सतः वारविलासिनीजनतया स्वयं मङ्गलं विधीयते । तथा हि—कृतविधितालया चलदङ्गुलीकिसलयं नृत्यते, मधुरं च गीयते, तथा प्रशमितपांसुभिरम्बुभिर्मही सिच्यते, नवाश्च पूर्णकुम्भा ध्रियन्ते, श्रोत्रसुखं च वाद्यते, उच्चाः चलांशुकाः केतवश्च उत्तम्भ्यन्ते । त्रिभिर्विशेषकम् ॥ ३७–३९ ॥

अथ विशेषकेणाह—

**चलाऽङ्गुलीति ॥** स्फुटं कृतः कर्णतालः कर्णताडनं यया तया द्विपघटया कर्त्र्या चलाऽङ्गुल्य एव किसलया यस्मिन्कर्मणि तत्तथोद्धतैः करैर्हस्तैरनृत्यत अनर्ति । भावे लङ् । तथा मदोदकेन द्रवास्वार्द्रासु कटभित्तिषु गण्डस्थलेषु सङ्गिभिरासक्तैः मधुपगणैर्भ्रमरगणैः कलस्वरं मधुरस्वरमगीयत गीतम् । भावे लङ् ॥३७॥

**असिच्यतेति ॥** धृतौ नवौ पूर्णकुम्भौ शिरःपिण्डकलशौ यया तया द्विपघटया कर्त्र्या । 'कुम्भौ घटेभमूर्धांशौ' इत्यमरः । प्रशमितपांसुभिर्मदाम्बुभिर्मही असिच्यत सिक्ता । आनकैर्मुखैः करणैः श्रवणयोः सुखयतीति सुखं सुखकरम् । 'सुखहितौ सुखं सुखम्' इति **शब्दार्णवे** । समुन्नमत्पयोधरध्वनिगुरु उन्नमन्मेघगर्जितगम्भीरं तूर्यमवाद्यत वादितम् । स्वमुखबृंहणैरेव तूर्यं सम्पादितामित्यर्थः ॥ ३८ ॥

**उदासिरे इति ॥** पवनेन विधूतवाससः कम्पितपटाः गगनलिहोऽभ्रङ्कषाः केतवो ध्वजाश्च ततस्तत उदासिरे उत्क्षिप्ता इतीत्थं द्विपघटया प्रतिरिपु रिपून्प्रति । आभिमुख्येऽव्ययीभावः । यतो गच्छतः । इणो लटः शत्रादेशः । शार्ङ्गिणः पुरोऽग्रे स्वयं मङ्गलं व्यधीयत विहितम् । अत्र श्लोकत्रये प्रस्तुतद्विपघटाविशेषणसाम्यादप्रस्तुतमङ्गलाचरणपरपुरन्ध्रीप्रतीतेः समासोक्तिरलङ्कारः ॥ ३९ ॥

**न शून्यतामगमदसौ निवेशभूः प्रभूततां दधति बले चलत्यपि ॥**
**पयस्यभिद्रवति भुवं युगाऽवधौ सरित्पतिर्न हि समुपैति रिक्तताम् ४०**

**नेति ॥** असौ निवेशभूः सेनासंनिवेशस्थानं चलत्यपि बले गच्छत्यपि सैन्ये सति शून्यतां न अगमत् रिक्ततां न आससाद । यतः किंलक्षणे बले प्रभूततां दधति बाहुल्यं बिभ्राणे । बहुलत्वाद्विजनं न भवति । अत्रैव दृष्टान्तः—युगाऽवधौ कल्पान्ते सलिले उदके भुवं क्षोणीम् अभिद्रवति व्यश्नुवाने सति सरित्पतिः समुद्रः रिक्ततां न समुपैति शून्यतां निर्जलत्वं न प्राप्नोति ॥ ४० ॥

नेति ॥प्रभूततां भूमानं दधाति दधाने बले सैन्ये चलति प्रतिष्ठमानेऽपि असौ निवेशभूः सेनानिवेशभूमिः

शून्यतां रिक्ततां नाऽगमत् । तथा हि–युगाऽवधौ युगान्ते पयसि भुवमभिद्रवत्यभिद्रवमाने सति सरित्पतिः समुद्रो रिक्ततां न समुपैति हि । दृष्टान्तालङ्कारः ॥ ४० ॥

**यियासितामथ मधुभिद्विवस्वता जनो जरन्महिषविषाणधूसराम् ॥**
**पुरः पतत्परबलरेणुमालिनीमलक्षयद्दिशमभिधूमितामिव ॥ ४१ ॥**

**यियासितामिति ॥** अथाऽनन्तरं मधुभिदेव श्रीकृष्ण एव तेजस्वित्वात् वक्ष्यमाणधर्मयोगाच्च विवस्वान् श्रीसूर्यः तेन यियासितां जिगिमिषिताम् आशां दिशं जनो लोकः अभिधूमितामिव अलक्षयत् धूमधूम्रामिव अदर्शत् । किंलक्षणां दिशं पुरोऽग्रे पतत्परबलरेणुमालिनीं पतन्तमागच्छतं परबलरेणुं मलते बिभर्ति सा तथा ताम्, अपरं किंलक्षणां दिशं जरन्महिषविषाणधूसरां जरत्कठोरं यन्महिषविषाणं कासरशृङ्गं तद्वत् धूसरा मलिना ताम् । याऽपि दिक् रविणा यियासिता भवति, सा धूमितेत्युच्यते । उक्तं च—

अङ्गारिता दिक् रविविप्रयुक्ता यस्यामसौ तिष्ठति सा प्रदीप्ता ।
प्रधूमिता याति च यां दिशं स शेषाः प्रशस्ताः शुभदाश्च ताः स्युः ॥

इति ॥ ४१ ॥

**यियासितामिति ॥** अथ मधुभिद्धरिरेव विवस्वान् तेन यियासितां यातुमिष्टां जिगमिषिताम् । यातेः सन्नन्तात्कर्मणि क्तः । पततोऽभिधावतः परबलस्य शत्रुसैन्यस्य रेणून् मलते धारयतीति तन्मालिनी । मलतेर्णिनिप्रत्ययः । अत एव जरतो वृद्धस्य माहिषस्य विषाणवद्धूसरां धूम्रां पुरोऽग्रे दिशम्, अभितो धूमोऽस्याः सञ्जातस्तामभिधूमितामिव जनो लोकोऽलक्षयत् । मधुभिद्विवस्वतेति रूपकोत्थापिताऽप्रादिशि धूमितत्वोत्प्रेक्षेति सङ्करः । अत्राहुः—

'अङ्गारिणी दिगू रविविप्रयुक्ता यस्यां रविस्तिष्ठति सा प्रदीप्ता ।
प्रधूमिता यास्यति यां दिनेशः शेषाः प्रशस्ताः शुभदाश्च ताः स्युः' ॥

इति ॥ ४१ ॥

**मनस्विनामुदितगुरुप्रतिश्रुतः श्रुतास्तथा न निजमृदङ्गनिःस्वनाः(१) ॥**
**यथा पुरः समरसमुद्यतद्विषद्बलाऽऽनकध्वनिरुदकर्षयन्मनः ॥ ४२ ॥**

**मनस्विनामिति ॥** मनस्विनां मानिनाम् उदितगुरुप्रतिश्रुतः उत्पन्नगम्भीरप्रतिस्वनाः निजमृदङ्गनिःस्वनाः आत्मीयमुरजध्वनयः श्रुताः आकर्णिताः मनः चित्तं तथा तेन प्रकारेण न उदकर्षयन् न उत्कृष्टं चक्रुः । यथा येन प्रकारेण पुरः अग्रे समरसमुद्यतद्विषद्बलाऽऽनकध्वनिः सङ्ग्रामप्रसभोत्थितशत्रुसैन्यपटहनिनादः मनः उदकर्षयत् उत्कृष्टं व्यधात् रणरसिकत्वं चकार । परबलतूर्यश्रवणाद्वीराणां सुतरां युयुत्सुता उदपादीत्यर्थः ॥ ४२ ॥

**मनस्विनामिति ॥** उदिता उत्पन्ना गुरुगर्भीरा प्रतिश्रुतिः प्रतिध्वनिर्यस्य सः निजमृदङ्गनिःस्वनः स्वसेनातूर्यघोषः श्रुतः सन् तथा मनस्विनां मनो नोदकर्षयन्नाचकर्ष । कृषिरयं स्वार्थण्यन्तः । यथा पुरोऽग्रे समरसमुद्यते समरोत्सुके द्विषद्बले शत्रुसैन्ये ये आनकास्तेषां ध्वनिरुदकर्षयत् । एतेनैषां वीरस्थायी महोत्साह उक्तः । अत्र भयङ्करस्यापि परसैन्यघोषस्योत्साहजनकत्वं महावीरेषु न विरुध्यत इति विरोधाभासोऽलङ्कारः । भीहेतौ सत्यपि भयाऽनुत्पत्तेर्विशेषोक्तिर्विरुद्धकार्योत्पत्तेर्विषमभेदश्चेति सङ्करः ॥ ४२ ॥

**यथा यथा पटहरवः समीपतामुपागमत् स हरिवराऽग्रतःसरः ॥**
**तथा तथा हृषितवपुर्मुदाकुला द्विषां चमूरजनि जनीव चेतसा ॥ ४३ ॥**

**यथा यथेति ॥** यथा यथा स हरिवराऽग्रतःसरः स भगवद्वरपुरःसरः पटहरवः तूर्यध्वनिः

---

(१) प्रतिश्रुतिः श्रुतस्तथा ''निःस्वनः ।

समीपतामुपागमत् निकटत्वमुपाययौ, तथा तथा द्विषां चमूः रिपूणां सेना हृषितवपुः कण्टकितदेहा सती मुदाकुला हर्षव्यग्रचेता अजनि बभूव । निर्भयहृदया आसीदित्यर्थः । का इव जनी इव वधूरिव । सा हि यथा यथा वरस्य अग्रेसरः पटहरवः सामीप्यमेति, तथा तथा रोमाञ्चितशरीरा मुदाकुला च भवति । 'जनी सीमन्तिनीवध्वो' रित्यमरः ४३

यथा यथेति ॥ हरिर्वरो जामातेव हरिवरः । 'वरो जामातृवर्ययोः' इति विश्वः । तस्याग्रतः सरतीत्यग्रतःसरोऽग्रेसरः । 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टप्रत्ययः । स पूर्वोक्तः पटहरवो यथा यथा यावद्यावत् समीपतामासन्नतामुपागमत् तथा तथा तावत्तावद् द्विषतां चमूर्जनीव वधूरिव । 'जनी सीमन्तिनी वधूः' इति विश्वः । चेतसा मुदाकुला आनन्दाविला हृषितवपू रोमाञ्चिताङ्गी । 'हृषलोमसु' इतीडागमः । अजनि जाता । जनेः कर्तरि लुङ्, दीपजन-' इत्यादिना चिण् प्रत्ययः। वधूवरसमागमवत् प्रतिद्वन्द्विसमागमो महोत्साहवर्धनो वीरसेनाया इत्युपमार्थः। तेन सैन्ययोरन्योन्यशब्दश्रवणकारिणी प्रत्यासत्तिरासीदिति व्यज्यते ॥४३॥

**प्रसारिणी सपदि नभस्तले ततः समीरणभ्रमितपरागरूषिता ॥**
**व्यभाव्यत प्रलयजकालिकाकृतिर्विदूरतः प्रतिबलकेतनावली(१) ॥४४॥**

प्रसारिणीति ॥ विदूरतः दूरादेव प्रतिबलकेतनावली शत्रुसैन्यध्वजपङ्क्तिः व्यभाव्यत आलुलोके चक्षुर्विषयं प्राप्ता । किंलक्षणा प्रतिबलकेतनावली सपदि नभस्तले आकाशपृष्ठे प्रसारिणी प्रसृता, अपरं किंलक्षणा समीरणभ्रमितपरागरूषिता पवनक्षुभितभूरेणुधूसरा, इति निमित्तकथनम् । अपरं किंलक्षणा अतश्च प्रलयजकालिकाकृतिः कल्पान्तोच्छ्रितमेघमालासंस्थाना । साऽपि नभस्तले प्रसारिणी वातभ्रमितभूरेणुरूषिता च ॥ ४४ ॥

प्रसारिणीति ॥ ततः श्रवणानन्तरं सपद्यविलम्बेन नभस्तले प्रसारिणी व्याप्ता समीरणेन वायुना भ्रमितेन परागेण रूषिता रूक्षीकृता अत एव प्रलयजायाः कल्पान्तप्रादुर्भूतायाः कालिकाया महाकाल्या आकृतिरिवाकृतिर्यस्याः सा प्रतिबले प्रतिपक्षसैन्ये केतनावलिर्ध्वजपङ्क्तिर्विदूरतो दूरादलक्ष्यत । एतावता प्रत्यासत्तिरासीदित्यर्थः । उपमालङ्कारः ॥ ४४ ॥

**क्षणेन च प्रतिमुखतिग्मदीधितिप्रतिप्रभास्फुरदसिदुःखदर्शना ॥**
**भयङ्करा भृशमपि दर्शनीयतां ययावसावसुरचमूश्च भूभृताम् ॥ ४५ ॥**

क्षणेनेति ॥ असौ असुरचमूः दैत्याऽन्वयचैद्यध्वजिनी च पुनः भूभृतां यादवभूपतीनां चमूः सेना दर्शनीयतां दृश्यत्वं ययौ प्राप । चिह्नालोकनात् क्षणेन दृष्टेत्यर्थः । किंलक्षणा चमूः भृशमत्यर्थं भयङ्कराऽपि घोराऽपि । अपि विरोधे । या किल भयङ्करा सा कथं दर्शनीया रम्या भवति । अपरं किंलक्षणा चमूः प्रतिमुखतिग्मदीधितिप्रतिप्रभास्फुरदसिदुःखदर्शना प्रतिमुखः प्रतिसंमुखो यः तिग्मदीधितिः उष्णकिरणः श्रीसूर्यः तस्य या प्रतिप्रभा प्रतिबिम्बिता कान्तिः तया स्फुरन्तः उल्लसन्तो येऽसयः कौक्षेयकाः तैर्दुःखदर्शना दुर्दर्श्या दुर्निरीक्ष्या । एतेन अनिमित्तसूचनम् । न हि रविः संमुखो जयाय भवति । या हि दुर्दर्शा, सा कथं दृश्यत्वं यातीति विरोधः ॥ ४५ ॥

क्षणेनेति ॥ प्रतिमुखस्याऽभिमुखस्य तिग्मरश्मेरुष्णांशोः प्रतिप्रभाभिः प्रतिफलितदीप्तिभिः स्फुरद्भिर्देदीप्यमानैरसिभिः खड्गैर्दुःखं दुष्करं दर्शनं यस्याः सा । दुर्दर्शेत्यर्थः । असावसुरचमूश्चैद्यसेना क्षणेन च भूभृतां हरिसैनिकानां भृशं भयं करोतीति भयङ्कराऽपि । 'मेघर्तिभयेषु कृञः' इति खच्प्रत्ययः । दर्शनीयतां मनोहरतामिति विरोधः । दृष्टिविषयतां ययावित्यविरोधः । अत एव विरोधाभासोऽलङ्कारः ॥ ४५ ॥

---

( १ ) ०वालि० ।

पयोमुचामभिपततां दिवि द्रुतं विपर्ययः परित इवातपस्य सः ॥
समक्रियः(१) समविषमेष्वथ क्षणात्क्ष्मातलं बलजलराशिरानशे ॥४६॥

**पयोमुचामिति ॥** अथाऽनन्तरं बलजलराशिः माधवीयसैन्योदधिः क्षणात्क्षणेनैव परितः समन्तात् क्ष्मातलम् आनशे क्षोणीपृष्ठं व्याप । किंलक्षणो बलजलराशिः समविषमेषु समक्रियः समेषु अदुर्गेषु विषमेषु दुर्गेषु च समक्रियः तुल्यविक्रमः, क इव व्याप पयोमुचां मेघानां दिवि पततां खे गच्छतां सताम् आतपस्य विपर्यय इव छाया इव । यथा छाया क्षणात्क्ष्मातलं व्याप्नोति व्यश्नुते ॥ ४६ ॥

पयोमुचामिति ॥ अथाऽसुरसेनादर्शनानन्तरं समाविषमेषु निम्नोन्नतेषु समक्रमस्तुल्यसञ्चारः बलजलराशिः सैन्यसागरः दिवि व्योम्नि द्रुतमभिपततामभिधावतां पयोमुचां सम्बन्धी आतपस्य विपर्ययः छायेव परितः क्षणात्क्ष्मातलं भूतलमानशे । अशू व्याप्तौ । 'अत आदेः' इत्यभ्यासदीर्घः । 'अश्नोतेश्च' इति नुमागमः । उपमालङ्कारः ॥ ४६ ॥

ममौ पुरः क्षणमिव पश्यतो महत्तनूदरस्थितभुवनत्रयस्य तत् ॥
विशालतां दधति नितान्तमायते बलं द्विषां मधुमथनस्य चक्षुषि ॥४७॥

**ममाविति ॥** तस्य मधुमथनस्य चक्षुषि नयने तत् द्विषां बलं शत्रूणां सैन्यं महदपि बृहदपि ममौ माति स्म, किंलक्षणस्य मधुमथनस्य पुरोऽग्रे क्षणमिव पश्यतः विलोकयतः । क्षणमात्रेण समग्रं बलम् इयदेतत् इति दृष्ट्वा पर्यच्छैत्सीत् इति वाक्यार्थः। किंलक्षणस्य मधुमथनस्य तनूदरस्थितभुवनत्रयस्य तनौ सूक्ष्मे उदरे स्थितं वर्तमानं भुवनत्रयं त्रैलोक्यं यस्य तथा तस्य, किंलक्षणे चक्षुषि विशालतां दधति पृथुनि नितान्तमायतेऽतिदीर्घे च । अक्ष्णि यद्बलं वृत्तं येन, एतच्चित्रमित्यर्थः ॥ ४७ ॥

ममाविति ॥ पुरोऽग्रे क्षणमिव पश्यतः क्षणमात्रं विलोकयतः । इवशब्दो वाक्यालङ्कारे । तनौ क्षोदीयस्युदरे कुक्षौ स्थितं भुवनत्रयं यस्य तस्य मधुमथनस्य हरेः सम्बन्धिनि विशालतां वैपुल्यं दधाति दधाने नितान्तमायते दीर्घे द्राघीयसि चक्षुषि महत् द्विषां बलं ममौ ववृते । क्षणमीक्षणादेव परबले इयत्तां परिच्छिच्छेदेत्यर्थः । क्षोदीयस्यपि कुक्षौ भुवनत्रयं परिच्छिन्दतो हरेरतिमहति चक्षुषि अल्पबलपरिच्छेदः कियानिति भावः। अत्र भुवनत्रयापेक्षया आधारस्य कुक्षेरल्पत्वाच्चक्षुरपेक्षया आधेयस्य बलस्याऽल्पत्वाच्चाऽधिकालङ्कारौ सङ्कीर्येते ॥ ४७ ॥

भृशस्विदः पुलकविकासिमूर्तयो रसाधिके मनसि निविष्टसाहसाः ॥
मुखे युधः सपदि रतेरिवाऽभवन् ससम्भ्रमाः क्षितिपचमूवधूगणाः ॥४८॥

**भृशस्विद इति ॥** क्षितिपचमूवधूगणाः नृपतिसेनाङ्गनाजना युधः मुखे समितः प्रारम्भे सपदि एकपदे एवंविधा अभवन् आसन् । किंलक्षणाः चमूवधूगणाः भृशस्विदः तीव्रघर्मिणः, अपरं किंलक्षणाः क्षितिपचमूवधूगणाः पुलकविकासिमूर्तयः रोमोद्गमोच्छ्वसिततनवः, अपरं किंलक्षणाः चमूवधूगणाः रसाधिके सौख्यबहुले मनसि चेतसि निविष्टसाहसाः निविष्टं कृतपदं साहसं दुःसाधं कर्म येषां ते तथा, अपरं किंलक्षणाः ससम्भ्रमाः सत्वराः । एवंविधा नृपतिसेनाङ्गणागणाः युद्धमुखे बभूवुः । कस्या मुखे इव रतेरिव । यथा रतेः सम्भोगस्य मुखे सुरतारम्भे वधूगणा इव । यथा सुरतारम्भे वधूगणाः भृशस्विदः

---

(१) समक्रमः ।

पुलकविकासिमूर्तयः रसाधिके शृङ्गाराधिक्ये मनसि निविष्टसाहसाश्च भवन्ति। रसोऽत्र शृङ्गारः। साहसं वैयात्यम् ॥ ४८ ॥

भृशस्विद इति ॥ क्षितिपचम्वो वध्व इवेत्युपमितसमासः, रतेरिवेति लिङ्गात्। तासां गणाः युधो मुखे युद्धारम्भे रतेर्मुखे रत्यारम्भ इव सपदि भृशं स्विद्यन्तीति भृशस्विदः। क्विप्। पुलकविकासिमूर्तयो रोमाञ्चोदञ्चितगात्राः, रसः वीरः शृङ्गारश्च तेनाधिके निर्भरे मनसि निविष्टसाहसाः प्रविष्टधाष्टर्याः ससम्भ्रमाः ससत्वराश्चाऽभवन्। यादृशी वधूनां सुरतरसकर्मण्युत्कण्ठा तादृशी चमूनां समरकर्मणीत्युपमार्थः। तेन-तासां समरसुरतयोः समरसत्वं व्यज्यते ॥ ४८ ॥

**ध्वजांशुकैर्ध्रुवमनुकूलमारुतप्रसारितैः प्रसभकृतोपहूतयः ॥**
**यदूनभिद्रुततरमुद्यतायुधाः क्रुधा परं रयमरयः प्रपेदिरे ॥ ४९ ॥**

ध्वजांशुकैरिति ॥ अरयः शत्रवः क्रुधा कोपेन कृत्वा भृशं यदून् अभि विपक्षसंमुखं रयं वेगं क्षोभं प्रपेदिरे प्रापुः, किंलक्षणाः द्रुततरं सत्वरम् उद्यतायुधाः उद्यतहेतयः। उत्प्रेक्षा-अनुकूलमारुतप्रसारितैः ध्वजांशुकैः प्रसभकृतोपहूतयः ध्रुवं निश्चितम्, यदूनां पृष्ठतो वायुर्वहति तेन अनुकूलेन पृष्ठाऽनुगामिना मारुतेन प्रसारितानि प्रेरितानि तैः ध्वजांशुकैः केतनवसनैः कृत्वा प्रसभं हठात् उच्चैर्वा कृता उपहूतिराकरणं येषां ते तथा। यश्चाहूयते, स यत् किञ्चित् गृहीत्वा याति ॥ ४९ ॥

ध्वजांशुकैरिति ॥ अरयः चैद्यपक्षाः अनुकूलमारुतेन प्रसारितैर्ध्वजांशुकैर्ध्रुवं प्रसभेन बलात्कारेण कृतोपहूतयः। कृताह्वाना इवेत्यर्थः। यदूनभि यादवान्प्रति द्रुततरमुद्यतायुधा उत्क्षिप्तायुधाः सन्तः क्रुधा क्रोधेन परमधिकं रयं त्वरां प्रपेदिरे। ध्वजांशुकदर्शनोत्थक्रोधहेतुकस्य शीघ्राभिपातस्य ध्वजाह्वानहेतुकत्व-मुत्प्रेक्ष्यते ध्रुवमिति ॥ ४९ ॥

**हरेरपि प्रति परकीयवाहिनीमधि(१)स्यदं प्रववृतिरे चमूचराः ॥**
**विलम्बितुं न खलु सहा मनस्विनो विधित्सतः कलहमवेक्ष्य विद्विषः**

हरेति ॥ हरेः श्रीभगवतोऽपि चमूचराः सैनिकाः प्रतिपरकीयवाहिनीं विपक्षसेनासंमुखम् अधिस्यदं स्यदमधिकृत्य वेगेन प्रववृतिरे ढुढौकिरे। अपि पूर्वापेक्षासमुच्चये। न केवलं यदूनपि अरयः प्रवृत्ताः,तर्हि किं हरेः सेनाचराः अपि तान् प्रति प्रववृतिरे इत्यर्थः। अत्रार्था-ऽन्तरं न्यस्यति-खलु यस्मात् कारणात् ये मनस्विनः तेजस्विनः ते कलहं विधित्सतः वैरं चिकीर्षून् विद्विषोऽरीन् अवेक्ष्य विलोक्य विलम्बितुं प्रतीक्षितुं न सहाः न समर्थाः। वैरायमाणान् शत्रूनवगम्य सपद्येव युध्यन्ते इति भावः ॥ ५० ॥

हरेरिति ॥ हरेरपि चमूषु चरन्तीति चमूचराः सैनिकाः। चरेष्टः। परेषामिमाः परकीया वाहिनीः सेनाः प्रति आधिस्यदमाधिकरय्यं यथा तथा। 'रंहस्तरसी तु रयः स्यदः' इत्यमरः। प्रववृतिरे प्रवृत्ताः। तथा हि—मनस्विनो धीराः कलहं युद्धं विधित्सतः विधातुमिच्छतः। दधातेः सन्नन्ताल्लटः शतरि रूपम्। तान् विद्विषः शत्रूनवेक्ष्य विलम्बितुम्। 'शकधृष—' इत्यादिना तुमुन्प्रत्ययः। सहन्त इति सहाः क्षमाः। पचाद्यच्। न खलु। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५० ॥

**निवाततां दधदपि वर्म बिभ्रतः(२) स्फुरन्मणिप्रसृतमरीचिसूचिभिः ॥**
**निरन्तरं नरपतयो विरेजिरे रणाजिरे शरनिकराचिता इव ॥ ५१ ॥**

निवाततामिति ॥ रणाजिरे सङ्ग्रामाङ्गणे नरपतयः राजानः विरेजिरे बभुः।

---

( १ ) वाहिनीरधि०। ( २ ) उपाहितैर्वपुषि निवातवर्मभिः।

किंलक्षणाः नरपतयः वर्म बिभ्रतः कवचं दधतः, किंलक्षणं कवचं निवाततां दधदपि निश्छिद्रतां धारयदपि, अपरं किंलक्षणं वर्म स्फुरन्मणिप्रसृतमरीचिसूचिभिः निरन्तरम् उल्लसद्रत्नकिरणाऽङ्कुरैः व्याप्तम्, किंलक्षणाः नरपतयः, उत्प्रेक्ष्यन्ते—शरनिकराचिता इव विशिखसमूहव्याप्ता इव । अपि विरोधे—दंशनं नीरन्ध्रं, तत् कथं कवची शरनिकरचितो भवतीति॥ ५१॥

उपाहितैरिति ॥ रणाजिरे रणाङ्गणे नरपतयो राजानो वपुषि उपाहितैरामुक्तैः स्फुरन्तो मणिप्रसृता रत्नानिर्गता मरीचय एव सूचयो येषां तैः निवातवर्मभिरच्छिद्रकञ्चुकैः । 'निवातो दृढसंनाहे निर्वाते चाश्रयेऽपि च' इति विश्वः । 'तनुत्रं वर्म कञ्चुकम्' इत्यमरः । निरन्तरं नीरन्ध्रं शरनिकरैराचिताः प्रोता इव रराजिरे । 'फणां च सप्तानाम्' इति विकल्पादेत्वाभ्यासलोपाभावः । मणिरोचिषः सादृश्याच्छरनिकरत्वोत्प्रेक्षा॥

अथोच्चकैर्जरठकपोतकन्धरातनूरुहप्रकरविपाण्डुरद्युति ॥
बलैश्चलच्चरणविधूतमुच्चरद्घनावलीरुदचरत क्षमारजः ॥ ५२ ॥

अथेति ॥ अथाऽनन्तरं क्षमारजः पृथ्वीरेणुः उच्चरत् उद्गच्छत् सत् घनावलीः जलदमालाः उदचरत आचक्राम । किंलक्षणं क्षमारजः जरठकपोतकन्धरातनूरुहप्रकरविपाण्डुरद्युति जरठोऽतिप्रौढो यः कपोतः पारावतः तस्य कन्धरा ग्रीवा तस्या यः तनूरुहप्रकरः लोमसमूहः तस्येव पाण्डुरा धवला धूसरा वा द्युतिः कान्तिर्यस्य तत्तथा, धूलिधूसरकपोतकण्ठलोमधूसरमित्यर्थः। अपरं किंलक्षणं रजः बलैः सैन्यैः अश्वरथनरगजैः चलच्चरणविधूतं चलद्भिः धावद्भिः चरणैः पादैः विधूतमुत्थापितम्, अपरं किंलक्षणं क्षमारजः उच्चकैः उन्नतम् ॥ ५२ ॥

अथेति ॥ अथाऽनन्तरम् उच्चकैरुन्नतं जरठकपोतकन्धराविपाण्डुरद्युति जीर्णपारावतकन्धरारोमनिकरधूसरच्छायमित्युपमा । 'पारावतः कलरवः कपोतः' इत्यमरः । बलैः सैन्यैश्चलद्भिश्चरणैर्विधूतमुद्धूतं प्रेरितं सदुच्चरदुत्पतत् क्षमारजो भूरेणुर्घनावलीर्घनपङ्क्तीरुदचरत् । प्रचक्रामेत्यर्थः । 'उदश्चरः सकर्मकात्' इत्यात्मनेपदम् । अस्य प्रत्युदाहरणमुच्चरादिति । अत्र भूरेणोर्मेघमण्डलाक्रमणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरुपमासङ्कीर्णा ॥ ५२ ॥

विषङ्गिभिः क्वचिदभितो निरन्तरं(१) तुरङ्गमैरुपरि निरुद्धनिर्गमाः ॥
चलाचलैरनुपदमाहताः खुरैर्विबभ्रमुश्चिरमध एव धूलयः ॥ ५३ ॥

विषङ्गिभिरिति ॥ तुरङ्गमैरश्वैः अनुपदमनुक्रमं चलाचलैः चटुलैः खुरैः शफैः आहताः ताडिताः क्षोभिता धूलयः रेणवः अध एव नीचैरेव क्वचित् चिरं बहुकालं विबभ्रमुः भ्रमन्ति स्म । किंलक्षणाः धूलयः निरन्तरं विषङ्गिभिः दृढसंश्लेषिभिः तुरङ्गमैः उपरि निरुद्धनिर्गमाः निषिद्धप्रसराः ॥ ५३ ॥

विषङ्गिभिरिति ॥ चलाचलैश्चटुलैः खुरैरनुपदं प्रतिपदमाहता उद्धताः भृशमितरेतरं परस्परम् । 'निरन्तरम्' इति पाठेऽभितो निरन्तरं नीरन्ध्रं विषङ्गिभिर्मिथः श्लिष्टैस्तुरङ्गमैरुपरि निरुद्धो निर्गमो यासां ताः धूलयः क्वचित् चिरमध एव विबभ्रमुर्नोत्पेतुरिति भावः । अत्रोद्धतानामधोभ्रमणविरोधस्योपरिनिर्गमरोधेन विशेषणगत्या परिहारात्काव्यलिङ्गसङ्कीर्णो विरोधाभासोऽलङ्कारः ॥ ५३ ॥

गरीयसः प्रचुरमुखस्य रागिणो रजोऽभवद्व्यवहितसत्त्वमुत्कटम् ॥
सिसृक्षतः सरसिजजन्मनो जनं(२)बलस्य तु क्षयमपनेतुमिच्छतः॥५४॥

गरीयस इति ॥ सरसिजजन्मनः कमलसम्भवस्य ब्रह्मणः बलस्य च सैन्यस्य

(१) ०भिर्भृशमितरेतरं क्वचित् । (२) जगद्बलस्य ।

अयमेव भेदः, यतः सरसिजजन्मनो ब्रह्मणः जनं लोकं सिसृक्षतः स्रष्टुकामस्य रजः ,गुणः उत्कटम् अभवत् विवृद्धमभूत् । तु पुनः बलस्य सैन्यस्य जनं क्षयमपनेतुमिच्छतः लोकं नाशं प्रापयितुमिच्छतः जिघांसतः रजः अभूत् रेणुरासीत् । अन्येन सर्वं सादृश्यमासीत् । तथा हि—किंलक्षणस्य सरसिजजन्मनः गरीयसः योग्यतरस्य, अपरं किंलक्षणस्य प्रचुरमुखस्य बहुवदनस्य, चतुर्वक्त्रस्येत्यर्थः । अपरं किंलक्षणस्य रागिणः लौहित्यवतः, बलस्यापि किंलक्षणस्य गरीयसो विस्तीर्णस्य तथा प्रचुरमुखस्य बहुद्वारस्य, अपरं किंलक्षणस्य बलस्य रागिणः रणरसिकस्य । ब्रह्मपक्षे रजः किंलक्षणम् उत्कटमुद्रिक्तं बलवत्, अपरं किंलक्षणं रजः व्यवहितसत्त्वं व्यवहितं प्रवृद्धत्वात् आच्छादितं सत्त्वं सत्त्वाख्यो गुणो येन तत् । रजसो ह्याधिक्ये विरञ्चिः प्रजाः सृजति । सैन्यपक्षे रजः किंलक्षणम् उत्कटं प्रभूतं, रजो धूलिः, अत एव अपरं किंलक्षणं रजः व्यवहितसत्त्वं पिहितप्राणि ॥ ५४ ॥

गरीयस इति ॥ गरीयसः सर्वलोकपितामहत्वात्पूज्यतरस्य अन्यत्र महत्तरस्य प्रचुरमुखस्य । चतुर्मुखस्येत्यर्थः । अन्यत्र बहुप्रवाहस्य रागिणो रक्तवर्णस्य अन्यत्र रणे रागिणोऽनुरागवतः एवंभूतस्य सरसिजजन्मनो ब्रह्मणो जगत्सिसृक्षतः जगत्स्रष्टुमिच्छतः सतः । सृजेः सन्नन्तात्लटः शत्रादेशः । व्यवहितसत्त्वं तिरस्कृतसत्त्वगुणकम् अन्यत्र तिरोहितजन्तुकं रजो रजोगुणो रेणुश्चोत्कटमुद्रिक्तमभवत । बलस्य सैन्यस्य तु जगत्क्षयमपनेतुमिच्छतः सतोऽभवत् । अत्र ब्रह्मबलयोर्गरीयस्त्वादिसाधर्म्येऽपि रजःशब्दैनैकस्य सिसृक्षोरन्यस्य संजिहीर्षोरिति व्यतिरेकः श्लेषोत्थापित इति सङ्करः ॥ ५४ ॥

पुरा शरक्षतिगलितानि(१) संयुगे नयन्ति नः प्रसभमसृञ्जि पङ्कताम् ॥
इति ध्रुवं व्यलगिषुरात्तभीतयः समुच्चकैरनलसखस्य केतवः ॥ ५५ ॥

पुरेति ॥ अनलसखस्य अग्निसहचरस्य वायोः केतवः ध्वजाः रेणवः ध्रुवं निश्चितम् इति अतो हेतोः आत्तभीतयः गृहीतभयाः सन्तः उच्चैरतिशयेन खमाकाशं व्यलगिषुः व्यलगन् आरुरुहुः । इति कुत इत्यत आह—संयुगे सङ्ग्रामे शरक्षतिगलितानि सायकप्रहारस्रुतानि असृञ्जि क्षतजानि प्रसभं बलात् नोऽस्मान् पङ्कतां नयन्ति पुरा कर्दमीकुर्वन्ति । कर्दमतां नयिष्यन्तीति । यावत्पुरानिपातयोर्लट् । धूलिदर्शनात् वातानुमाने नांशुके तु त्वं रणार्थिना(?) । वातमग्निर्ज्वलयतीति वायोरग्निसखत्वम् । एतदर्थं प्रतिपादयितुं च रेणुग्रहणं नाकारि ॥५५॥

पुरेति ॥ संयुगे युद्धे सति शरक्षतिजनितानि क्षतजानि असृञ्जि रुधिराणि नोऽस्मान्प्रसभं प्रसह्य पङ्कतां पुरा नयन्ति नेष्यन्ति । 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट् । इतीत्थमालोक्य ध्रुवमात्तभीतयः प्राप्तभयाः सन्तोऽनलसखस्याऽग्निमित्रस्य वायोः केतवो रेणवः । तल्लिङ्गत्वात्तस्येति भावः । उच्चकैरुन्नतं खमाकाशं व्यलगिषुः । वियदारूढा इत्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् ॥ ५५ ॥

समुन्नम(२)द्घननिकुरम्बकर्बुरः क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः ॥
क्वचिच्छरज्जलधर(३)खण्डपाण्डुरः खुरक्षतः क्षितितलरेणुरुद्ययौ ॥५६॥

समुन्नमदिति ॥ खुरक्षतः शफाहतः खुरप्रेरितः क्षितितलरेणुः अवनिपृष्ठपांसुः उद्ययौ उन्ननाम । किंलक्षणः क्षितितलरेणुः भूमेर्नानावर्णत्वात् क्वचित् समुन्नमद्घननिकुरम्बकर्बुरः उद्गच्छदभ्रपटलधूसरः, अपरं किंलक्षणः क्षितितलरेणुः क्वचित् कस्मिंश्चित् प्रदेशे शरज्जलधरखण्डपाण्डुरः शरत्कालीनजलदसमूहधवलः । निर्जलोऽपि घनो जलधर उच्यते ।

(१) जनितानि । (२) क्वचिल्लस० । (३) ०च्छशधर ।

अपचन्नपि पाचकः इतिवत् । अपरं किंलक्षणो भूरेणुः क्वचिद्देशे हिरण्मयकणपुञ्जपिञ्जरः सौवर्णचूर्णपिशङ्गः । हिरण्यस्य विकारो हिरण्मयः ॥ ५६ ॥

क्वचिदिति ॥ क्वचिल्लसन् घननिकुरम्बवन्नवाभ्रपटलवत्कर्बुरः शबलः, क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः कनकचूर्णराशिकपिशः, क्वचिच्छरच्छशधरखण्डपाण्डुरः खुरैः चतस्य क्षितितलस्य रेणुरुच्चयौ उज्जगाम । अत्रोपमात्रयस्य संसृष्टिः ॥ ५६ ॥

**महीयसां महति दिगन्तदन्तिनामनीकजे रजसि मुखानुषङ्गिणि ॥**
**विसारितामजिहत कोकिलावलीमलीमसा जलदमदाम्बुराजयः ॥ ५७ ॥**

महीयसामिति ॥ दिगन्तदन्तिनां जलदा अभ्राणि मदाम्बुराजयः विसारितामजिहत विकासं विस्तारमीयुः विस्तारितामीयुः। दिगन्ता आशान्ताः। दिशो मेघा आवृण्वन्नित्यर्थः। क्व सति महति घनेन बृहति अनीकजे रजसि सैन्योद्भवे रेणौ मुखानुषङ्गिणि सति वदनलग्ने सति सेनासमुद्भूतरेणुनिकरे मुखे लग्ने सति, किंलक्षणाः मदाम्बुराजयः कोकिलावलीमलीमसाः परभृतमालामलिनाः । दिङ्मुखेषु रजः प्रसृतं नानारूपमभवदिति तात्पर्यार्थः । यदा सेनारजो महेभस्य मुखमावृणोति, तदा तस्य कोकिलावलीमलीमसा मदाम्बुराजयो विसरन्ति । केचिद्दिगन्तेषु गामिनो दिग्गजाः, जलदतुल्यं मदाम्बु इत्याहुः । अनीकजे रजसि मुखे लग्ने सति दिग्दन्तिनां मदाम्बुराजयः प्रसस्रुरित्यर्थः ॥ ५७ ॥

महीयसामिति ॥ महति अनीकजे सेनासमुत्थे रजसि महीयसां दिगन्ता एव दन्तिनः तेषां मुखानि पुरोभागा एव मुखान्याननानीति श्लिष्टरूपकम् । तेष्वनुषङ्गिणि लग्ने सति, कोकिलावलीवन्मलीमसा मलिना जलदा दिङ्मुखसङ्गिन एव ये मेघास्त एव मदाम्बुराजयो मदरेखाः विसारितां प्रसृमरत्वमजिहताऽगच्छन् । प्राप्ता इत्यर्थः । पांसुपातस्य दन्तिनां मदहेतुत्वादिति भावः। तदुक्तं महाभारते—

'स्त्रियो जारेण तुष्यन्ति गावः स्वच्छन्दचारतः ।
कुञ्जराः पांसुवर्षेण ब्राह्मणाः परनिन्दया' ॥

इति । दिगन्तलम्बिनो मेघाः सेनारजोमेलनाद्बहुलीबभूवुरित्यर्थः । अत्र दिगन्तेषु तन्मेघेषु च दन्तित्वतन्मदत्वरूपणात्समस्तवस्तुवर्ति सावयवरूपकं, मुखमेव मुखमिति श्लिष्टपरम्परितमिति सङ्करः । अजिहतेति ओहाङो लङि तङ्, 'श्नाभ्यस्तयोरातः' इत्याकारलोपः 'अदभ्यस्तात्' इत्यदादेशः ॥ ५७ ॥

**शिरोरुहैरलिकुलकोमलरमी मुधा मृधे मृषत युवान एव मा ॥**
**बलोद्धतं धवलितमूर्धजानिति ध्रुवं जनान् जरत इवाऽकरोद्रजः ॥ ५८ ॥**

शिरोरुहैरिति ॥ बलोद्धतं सैन्यचालितं रजः धूलिः जनान् धवलितमूर्धजान् सितीकृतकेशान् अकरोत् चकार । कस्मात्, उत्प्रेक्ष्यते–इति हेतोः जरत इव वृद्धानिव व्यधित । कुत इत्यत आह–अमी जनाः मृधे सङ्ग्रामे युवान एव तरुणा एव मुधा वृथा मा मृषत मा प्राणानत्याक्षुः । वृद्धस्य हि मरणं सफलं, तत्तरुणस्य दुःखायैव । ननु तारुण्यमेव कथमेषामबोधीत्याह–यतः किंलक्षणाः जनाः शिरोरुहैः केशैः उपलक्षिताः, किंलक्षणैः शिरोरुहैः अलिकुलकोमलैः अलिकुलवत् भृङ्गवृन्दवत् कोमला मनोहराः तैः, अतिकृष्णैरित्यर्थः । ध्रुवशब्दसन्निधानादिवशब्दोऽत्राऽवधारणे, नौपम्ये ॥ ५८ ॥

शिरोरुहैरिति ॥ अलिकुलकोमलैर्भ्रमरवृन्दमनोरमैः शिरोरुहैः केशैरुपलक्षिता अमी राजानो युवान एव मुधा वृथा मृधे युद्धे । 'मृधमास्कन्दनम्' इति युद्धपर्यायेष्वमरः । मा मृषत न म्रियन्ताम् । म्रियते-

र्माङि लुङि 'न माङ्योगे' इत्यडभावः । 'उश्च' इति सिचः कित्त्वान्न गुणः । इति, इत्थमालोच्येत्यर्थः । बलोद्धतं रजः कर्तृ धवलितमूर्धजान् धवलीकृतकेशान् जनान् जरत इवाऽकरोत्, वृद्धानिवाऽकरोदित्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् । अत्रैवशब्दस्याऽवधारणार्थत्वान्न तेन पौनरुक्त्यम् । 'इवौपम्येऽवधारणे' इति विश्वः । 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि' इत्यमरः । 'जीर्यतेरतृन्' इत्यतृन्प्रत्ययः ॥ ५८ ॥

**सुसंहतैर्दधदपि धाम नीयते तिरस्कृतिं बहुभिरसंशयं परः(१) ॥**
**यतः क्षितेरवयवसम्पदोऽणवस्त्विषां निधेरपि वपुरावरीषत ॥ ५९ ॥**

**सुसंहतैरिति ॥** असंशयं निश्चितं सुसंहतैः एककार्यार्थमिलितैः बहुभिः अनेकैः परः एकः धाम दधदपि तेजस्व्यपि तिरस्कृतिं नीयते परिभूयते । तत्कथं ज्ञायत इत्याह— यतः यस्मात्कारणात् क्षितेः पृथिव्याः अवयवसम्पदः प्रतीककारणानि अणवः सूक्ष्माः रेणुनिकराः त्विषां निधेरपि भासां पतेः श्रीसूर्यस्यापि वपुः बिम्बम् आवरीषत और्णविषुः तिरोदधुः । अत्रावरीषतेति सिच्, आत्मनेपदेष्वनतः, इडागमः । 'वृतो वे'ति दीर्घः । सांहत्यमेव कारणम् ॥ ५९ ॥

सुसंहतैरिति ॥ धाम तेजो दधदपि दधानोऽपि । तेजस्व्यपीत्यर्थः । परैरन्यैः सुसंहतैः सुसङ्गतैः परैरैक्यं गतैश्च बहुभिस्तिरस्कृतिं नीयते असंशयं निश्चितम् । अर्थाभावेऽव्ययीभावः । कुतः—यतोऽणवः सूक्ष्माः क्षितेरवयवसम्पदो रेणुसमृद्धयः त्विषां निधेः सूर्यस्यापि वपुरावरीषत आच्छादितवत्यः । वृङो लुङि 'वृतो वा' इतीटो दीर्घः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५९ ॥

**द्रुतद्रवद्रथचरणक्षतक्षमातलोल्लसद्बहुलरजोऽवगुण्ठितम् ॥**
**युगक्षयक्षणनिरवग्रहे जगत् पयोनिधेर्जल इव मग्नमाबभौ ॥ ६० ॥**

**द्रुतेति ॥** जगद् विश्वं पयोनिधेर्जले मग्नमिव आबभौ सागरस्य तोये ब्रुडितमिव रेजे । किंलक्षणं जगत् द्रुतद्रवद्रथचरणक्षतक्षमातलोल्लसद्बहुलरजोऽवगुण्ठितं द्रुतं शीघ्रम् द्रवन्तः गच्छन्तो ये रथचरणाः स्यन्दनचक्राणि तैः क्षतं खातं यत् क्षमातलं महीमण्डलं ततउल्लसत् ऊर्ध्वं गच्छत् यत् बहुलरजः भूरिः पांसुः तेनाऽवगुण्ठितं व्याप्तं परिवेष्टितं, किंलक्षणे पयोनिधेर्जले युगक्षयक्षणनिरवग्रहे युगक्षयः कल्पान्तः स एव क्षणः उत्सवः तेन निरवग्रहमुच्छृङ्खलं तस्मिन् सर्वव्यापिनि ॥ ६० ॥

द्रुतेति ॥ द्रुतं शीघ्रं द्रवतां धावतां रथानां चरणैश्चक्रैः क्षतात् क्षुण्णात्क्षमातलादुल्लसता पतता बहुलेन सान्द्रेण रजसाऽवगुण्ठितमाच्छादितं जगद् युगक्षयक्षणे कल्पान्तकाले निरवग्रहे निष्प्रतिबन्धे पयोनिधेर्जले मग्नमिवाऽऽबभावित्युत्प्रेक्षा ॥ ६० ॥

**अनुल्लसद्दिनकरवक्त्रकान्तयो रजस्वलाः परिमलिना(२)म्बरश्रियः ॥**
**दिगङ्गनाः क्षणमविलोकनक्षमाः शरीरिणां परिहरणीयतां ययुः ॥ ६१ ॥**

**अनुल्लसदिति ॥** दिगङ्गनाः आशावनिताः शरीरिणां जनानां परिहरणीयतां ययुः त्याज्यत्वं प्राप्ताः । किंलक्षणाः दिगङ्गनाः रजस्वलाः रेणुपूर्णाः, अपरं किंलक्षणाः दिगङ्गनाः अनुल्लसद्दिनकरवक्त्रकान्तयः अनुल्लसन्ती दिनकर एव रविरेव वक्त्रं मुखं तस्य कान्तिः दीप्तिर्यासां तास्तथा, अपरं किंलक्षणा दिगङ्गनाः परिमलिनाम्बरश्रियः परिमलिना धूसरा अम्बरश्रीः नभोलक्ष्मीर्यासां तास्तथा धूसरनभोलक्ष्मीकाः, अपरं किंलक्षणाः दिगङ्गनाः अत एव अविलोकनक्षमाः विलोकनाय दर्शनाय न क्षमाः नयोग्याः द्रष्टुमशक्याः, अत एव

( १ ) परैः । ( २ ) समुल्लस...परिमलिता ।

परिहरणीयतां ययुः । या ह्यङ्गना रजस्वला स्त्रीधर्मिणी भवति, सा लोकानां परिहरणीयता-मगम्यतां याति । सापि अनुल्लसद्वक्त्रकान्तिर्मलिनाम्बरा अदृश्या च भवति । उक्तं च—

यदा स्पृशति सा किञ्चित् यदाक्रामति वा यदा ।
पश्यत्याभाषते वापि तदलक्ष्म्याऽभिभूयते ॥

इति ॥ ६१ ॥

समुल्लसदिति ॥ समुल्लन्ती दिनकरस्येव वक्त्रस्य कान्तिर्यासां ताः रजो रेणुरेव रज आर्तवमासा-मस्तीति रजस्वलाः । 'रजःकृष्यासुतिपरिषदो वलच्' इत्यादिना मत्वर्थीयो वलच्प्रत्ययः । धूलिधूसरा उदक्या-श्च । परिमलिताः परितः सञ्जातमला अम्बरस्याकाशस्येवाऽम्बरस्य वस्त्रस्य च श्रीर्यासां ताः अत एवाऽविलो-कनक्षमा विलोकनाऽनर्हाः दिश एवाऽङ्गना दिगङ्गनाः शरीरिणां क्षणमीषत्कालं परिहरणीयतामगम्यतां ययुः । 'तस्मात् मलवद्वाससं न संविशेदवे'त्यादिनिषेधादिति भावः । श्लिष्टपरम्परितरूपकम् ॥ ६१ ॥

**निरीक्षितुं वियति समेत्य कौतुकात्पराक्रमं समरमुखे महीभृताम् ॥**
**रजस्ततावनिमिषलोचनोत्पलव्यथाकृति त्रिदशगणैः पलाय्यत ॥ ६२ ॥**

निरीक्षितुमिति ॥ त्रिदशगणैः सुरसमूहैः पलाय्यत पलायितं प्रतीये । किं कृत्वा समरमुखे सङ्ग्रामारम्भे महीभृतां राज्ञां पराक्रमं निरीक्षितुं शौर्यं द्रष्टुं वियति आकाशे कौतुकात् कुतूहलात् समेत्य मिलित्वा । कदा पलाय्यतेति कारणमाह—कस्यां सत्यां रजस्ततौ धूलिश्रेणौ अनिमिषलोचनोत्पलव्यथाकृति सत्याम् अनिमिषाणि असङ्-कुचितानि यानि लोचनोत्पलानि नयनकमलानि तेषु व्यथां पीडां करोति सा अनि-मिषलोचनोत्पलव्यथाकृत् तस्यां सत्याम् असङ्कुचितनयनकुवलयपीडाकारिण्याम् । देवा ह्यनिमिषलोचनाः, अतश्च अक्षिषु रजोभरणभयात्ते दुद्रुवुरित्यर्थः ॥ ६२ ॥

निरीक्षितुमिति ॥ त्रिदशगणैर्देवगणैः समरमुखे रणारम्भे महीभृतां राज्ञां पराक्रमं निरीक्षितुं वियति कौतुकात्समेत्य रजस्ततौ रजःस्तोमे न निमिषन्त्यनिमिषाणि पक्ष्मपातरहितानि । मिषेः पचाद्यच् । कुटादि-त्वान्न गुणः । तेषां लोचनोत्पलानां व्यथाकृति दुःखकारिण्यां सत्याम् । कृञः क्विप् । पलाय्यताऽधाव्यत । भावे परापूर्वादयतेर्लङ् तङ् 'उपसर्गस्यायतौ' इति रेफस्य लत्वम् । अत्र लोचनोत्पलानां व्यथाऽसम्बन्धो-क्तेरतिशयोक्तिभेदः ॥ ६२ ॥

**विषङ्गिणि प्रतिपदमापिबत्यपो हताऽचिरद्युतिनि समीरलक्ष्मणि ॥**
**शनैः शनैरुपचितपङ्कभारिकाः पयोधराः(१) प्रययुरपेतवृष्टयः ॥ ६३ ॥**

विषङ्गिणीति ॥ पयोधराः मेघाः शनैःशनैः प्रययुः मन्दंमन्दं यान्ति स्म । किं-लक्षणाः पयोमुचः उपचितपङ्कभारिकाः अतिवृद्धकर्दमभारवाहिनः, क्व सति समीरो वातः तस्य लक्ष्म ध्वजः तस्मिन् समीरलक्ष्मणि वातध्वजे रजसि विषङ्गिणि सति लग्ने सति, किंलक्षणे समीरलक्ष्मणि प्रतिपदं पदेपदे अपः वारीणि आपिबति आचामति, अपरं किंलक्षणे रजसि हताऽचिरद्युतिनि हता क्षपिता अचिरद्युतिः विद्युत् येन तत्तथा तस्मिन् क्षपित-शम्पे, अपरं किंलक्षणाः मेघाः अपेतवृष्टयः गतवर्षाः, मेघानामपेतवृष्टित्वात् । जलवशात् हि प्रायेण तडितो भवन्ति । अतश्च जलधरस्य रेणुयोगेन पङ्कीभूतत्वाद्भारे सति स्वैर-गमनम् । यो हि भारिको महाभारं गृह्णाति, स शनैः याति । उपचितं पङ्कभारं वहन्तीति उपचितपङ्कभारिकाः ॥ ६३ ॥

---

(१) पयोमुचः ।

विषक्त्रिणीति ॥ विषक्त्रिणि विषक्ते अत एव इताऽचिरद्युतिनि विरमिताऽचिरद्युतिनि समीरलक्ष्माणि घातकेतौ रजसि प्रतिपदं प्रतिक्षणमपोऽम्भांस्यापिबत्याकर्षति सति अत एवाऽपेतवृष्टयो निवृत्तवर्षाः पयोमुचः उपचिताः प्रवर्धिताः पङ्कभारिकाः पङ्कभरणानि येषां ते उपचितपङ्कभारिकाः सन्तः । 'पर्यायार्हणोत्पत्तिषु ण्वुल्' इत्यर्हणार्थे ण्वुल् प्रत्ययः । अर्हणं च करणसामर्थ्यम् । अत एव भाराच्छनैःशनैः प्रययुः प्राप्ताः । अत्र पयोमुचां पङ्कभरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ६३ ॥

**नभोनदीव्यतिकरधौतमूर्तिभिर्वियद्गतैरनधिगतानि लेभिरे ॥**
**चलश्चमूतुरगखुराहतोत्पतन्महीरजःस्नपनसुखानि दिग्गजैः ॥ ६४ ॥**

**नभोनदीति** ॥ दिग्गजैः आशामातङ्गैः चलच्चमूतुरगखुराहतोत्पतन्महीरजःस्नपनसुखानि लेभिरे लब्धानि, चलन्तो गच्छन्तो ये तुरगाः सेनावाजिनः तेषां खुराः शफाः तैः आह (१) नां हि धूलिस्नानात् अतिसुखं भवति । किंलक्षणानि स्नपनसुखानि अनधिगतानि पूर्वं हि तैर्न प्राप्तानि, किंलक्षणैर्दिग्गजैः वियद्गतैः आकाशवर्तिभिः खगतैः, अपरं किंलक्षणैर्दिग्गजैः नभोनदीव्यतिकरधौतमूर्तिभिः नभोनदीव्यतिकरेण स्वःसिन्धुसम्पर्केण धौतमूर्तिभिः क्षालितदेहैः। यो हि गजो धूलिस्नानं कुरुते, स पूर्वं नद्यादौ स्नातीति जातिस्वभावः ॥

नभोनदीति ॥ नभोनदीव्यतिकरेणाकाऽऽशगङ्गाया अवगाहेन धौतमूर्तिभिः क्षालिताङ्गैः वियद्गतैः खेचरैः अत एव दिग्गजैरनधिगतान्यननुभूतचराणि चलद्भिश्चमूतुरगखुरैराहतम् अत एवोत्पतदुद्गच्छन्महीरजस्तेन स्नपनमभिषेचनं तेन यानि सुखानि तानि लेभिरे । 'कुञ्जराः पांसुवर्षिणे'त्युदाहृतम् । अत्रापि दिग्गजानां रजःस्नपनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६४ ॥

**गजव्रजाक्रमणभरावनम्रया रसातलं यदखिलमानशे भुवा ॥**
**नभस्तलं बहलतरेण रेणुना ततोऽगमत् त्रिभुवनमेकतामिव(२) ॥ ६५ ॥**

**गजेति** ॥ ततो हेतोः त्रिभुवनं त्रैलोक्यम् एकतामिव अगमत् ऐक्यमिव जगाम । यद् यस्मात्कारणात् भुवा उर्व्या अखिलं रसातलं समग्रं पातालम् आनशे व्याप्तं, किंलक्षणया भुवा गजव्रजाक्रमणभरावनम्रया हस्तिसमूहपदाक्षेपभारनम्रया, तथा नभस्तलमाकाशं बहुलतरेण अतिबहुलेन रेणुना रजसा आनशे । अतश्च सर्वमेव मृण्मयत्वात् ज्ञायते ऐक्यमिव त्रिभुवनेन सम्पन्नम् ॥ ६५ ॥

गजेति ॥ यद् यस्माद्गजव्रजानामाक्रमणभरेण पादक्षेपगौरवेणाऽवनम्रया भुवाऽखिलं रसातलं पातालमानशे व्याप्तम् , यद् यस्माच्च नभस्तलं बहुलतरेण रेणुनाऽऽनशे, ततः कारणात्त्रिजगज्जगत्त्रयम् । 'तद्धितार्थ-" इत्यादिना समाहारे द्विगुः, द्विगुरेकवचनम् । एकतां भूलोकतामिवाऽगमत् । स्फुटमित्युत्प्रेक्षायाम् ॥ ६५ ॥

**समस्थलीकृतविवरेण पूरिताः क्षमाभृतां(३) बलरजसा महागुहाः ॥**
**रहस्त्रपाविधुरवधूरतार्थिनां नभःसदामुपकरणीयतां ययुः ॥ ६६ ॥**

**समस्थलीति** ॥ क्षमाभृतां पर्वतानां महागुहाः बृहत्यः कन्दराः बलरजसा सैन्यरेणुना पूरिता व्याप्ताः भरिताः सत्यः नभःसदां विद्याधरादीनाम् उपकरणीयतां ययुः उपयोग्यतां प्रापुः । किंलक्षणानां नभःसदां रहस्त्रपाविधुरवधूरतार्थिनाम् एकान्ते लज्जामूढनवोढसुन्दरीनिधुवनाभिलाषिणां, त्रपाविधुरत्वात् वधूनां रहसि चिरंभूता(?)मित्यर्थः । यदा तु रजसा गुहा व्याप्ताः तदाऽन्योन्यदर्शनाभावात् अकरणीयत्वम् । किंलक्षणेन रजसा समस्थलीकृतविवरेण समस्थलीकृतानि स्थलतां प्रापितानि विवराणि कुहराणि येन सः तथा तेन ॥ ६६ ॥

---

(१) ग्रन्थांशोऽत्र स्खलित इति भाति। (२) बहुलतरेण······त्रिजगदि वैकतां स्फुटम् । (३) महीभृतां ।

समस्थलीति ॥ समस्थलीकृतानि विवराणि निम्नस्थानानि येन तेन बलरजसा पूरिताः महीभृतां भूधराणां महागुहाः रहो रहसि । अत्यन्तसंयोगे द्वितीया । अपया विधुराणां विलक्षाणां वधूनां रतं सुरतमर्थयन्त इति तदर्थिनां नभःसदां सुराणामुपकरणीयतामुपकारकत्वं ययुः । तासां रजःपूरणात्पुंसामन्धकरणत्वादिति भावः । 'कृत्यल्युटो बहुलम्' इत्यनीयरः कर्त्रर्थता । अत्र रजःपूरणस्य विशेषणगत्योपकारकहेतुत्वात्काव्यलिङ्गभेदः, तथोपकारकत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरिति सङ्करः ॥ ६६ ॥

**गते मुखच्छदपटतुल्यतां(१) दृशः पथस्तिरोदधति घने रजस्यपि ॥**
**मदानिलैरधिमधुचूतगन्धिभिर्द्विपा द्विपानभिययुरेव रंहसा ॥ ६७ ॥**

गते इति ॥ द्विपाः गजाः द्विपान् गजान् रंहसा अभिययुः वेगेनाऽभियान्ति स्म । कदाचिदन्योन्यदर्शनं स्यादिति चेन्नेत्याह—क्व सति घने सान्द्रे रजसि रेणौ दृशः पथः दृष्टेर्मार्गान् तिरोदधत्यपि सति आवृण्वत्यपि सति, अत एव किंलक्षणे रजसि मुखच्छदपटतुल्यतां गते वदनाच्छादनवसनसादृश्यं प्राप्ते । गजानां हि युध्यमानानां वदनावरणं वसनं दीयते इति स्थितिः । कथं तर्हि संमुखा इत्याह—कैः मदानिलैः दानवायुभिः, किंलक्षणैर्मदानिलैः अधिमधुचूतगन्धिभिः अधिगतं मधु रसो यैः तानि अधिमधूनि फुल्लानि यानि चूतानि सहकारकुसुमानि तेषामिव गन्धः सौरभं येषां ते अधिमधुचूतगन्धयः तैः, केचित्–अधिमधौ वसन्ते चूतानामिव गन्धो येषां ते तथा तैः ॥ ६७ ॥

गते इति ॥ छाद्यतेऽनेनेति छदः, मुखस्य छदो मुखच्छदः । 'पुंसि संज्ञायां घः प्रायेण' इति घप्रत्ययः, 'छादेर्घेऽद्व्युपसर्गस्य' इति ह्रस्वः । स चासौ पटश्च तत्सादृशीं तत्सादृश्यम् । ब्राह्मणादित्वात् ष्यञ्प्रत्यये 'षिद्गौरादिभ्यश्च' इति ङीष् । स च 'ष्यञः षित्करणादीकारो बहुल'मिति वामनवचनाद्वैकल्पिकः । गते प्राप्ते । गजानां युद्धपूर्वकालेषु मुखावरणकारणात्तत्सदृशे घने सान्द्रे रजसि दृशो दृष्टेः पथो मार्गांस्तिरोदधति छादयति सत्यपि, अधिमधोराधिकमकरन्दस्य चूतस्येव गन्धो येषां तैः । 'उपमानाच्च' इति गन्धस्येत्वे तदेकान्तग्रहणं तु व्यभिचारि । मदानिलैरभिज्ञानैर्द्विपा गजाः द्विपान्गजान्प्रति रंहसा वेगेनाऽभिययुरेव। अत्र तिरोहितदृष्टेरभियानविरोधस्य मदानिलैः परिहाराद्विरोधाभासोऽलङ्कारः ॥ ६७ ॥

**मदाम्भसा परिगलितेन सप्तधा गजान् जनः शमितरजश्चयानधः ॥**
**उपर्यवस्थितघनपांसुमण्डलानलोकयत् ततपटमण्डपानिव ॥ ६८ ॥**

मदाम्भसेति ॥ जनो लोकः गजान् मातङ्गान् अलोकयत अद्राक्षीत् आलोकयामास । किंलक्षणान् गजान् सप्तधा सप्तभिः प्रकारैः परिगलितेन स्रुतेन मदाम्भसा मदजलेन अधः बुध्ने शमितरजश्चयान् क्षपितमरुद्ध्वजसमूहान् नाशितरेणुनिवहान्, अपरं किंलक्षणान् गजान् उपर्यवस्थितघनपांसुमण्डलान् उपरिभागे वर्तमानसान्द्ररेणुमण्डलान् । अपरं किंलक्षणान्, उत्प्रेक्ष्यन्ते—ततपटमण्डपानिव ततानि प्रसारितानि पटमण्डपानि येषां ते तथा तान्, कृतवितानानिव विहितकदकानिव । 'उल्लोचः कदकस्तकथा'। कुत्सितम् अकतीति कदकः ।

चक्षुषी च कपोलौ च करो मेढ्रं गुदस्तथा ।
सप्त स्थानानि मातङ्गमदस्य स्रुतिहेतवः ॥

गण्डौ कुम्भौ तालु(?)चक्षुषी करश्चेति सप्त मदस्रुतिस्थानानि । अत्र सर्गे रुचिरा वृत्तम्॥

मदाम्भसेति ॥ सप्तधा 'करात्कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिः' इति पालकाप्ये । सप्तभिः

---

(१) सादृशीं ।

स्रोतोभिः परिगलितेन स्रुतेन मदाम्भसा अधः शमितो रजश्चयो यैस्तान् उपर्यवस्थितानि तथैव स्थितानि घनानि सान्द्राणि पांसुमण्डलानि पूर्वोत्थरजःपुञ्जा येषां तान्गजान् जनो लोकः तत उपरि विततः पटमण्डपा येषां तानिवैत्युत्प्रेक्षा । अलोकयत ॥ ६८ ॥

अन्यूनोन्नतयोऽतिमात्रपृथवः पृथ्वीधरश्रीभृत-
स्तन्वन्तः कनकावलीभिरुपमां सौदामनीदामभिः ॥
वर्षन्तः शममानयन्नुपलसच्छृङ्गारलेखायुधाः
काले कालियकायकालवपुषः पांसून् गजाम्भोमुचः ॥६९॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये यदुवंशक्षोभणो नाम सप्तदशः सर्गः ॥१७॥

**अन्यूनोन्नतय इति** ॥ काष्र्ण्यात् उन्नतत्वात् महत्त्वाच्च गजाम्भोमुचः गजा हस्तिन एव अम्भोमुचः मेघाः ते काले रणावसरे वर्षन्तः मन्दं क्षरन्तः सन्तः पांसून् रेणून् शममानयन् अन्तमनैषुः । मेघा अपि काले वर्षन्तः पांसून् अन्तं नयन्ति । किंलक्षणा गजाअम्भोमुचश्च, अधुना श्लेषः–अन्यूनोन्नतयः अन्यूना महती उन्नतिः उच्छ्रायः येषां ते तथा, अपरं किंलक्षणाः अतिमात्रपृथवः नितरां दीर्घाः पृथवो विस्तीर्णाः, अपरं किंलक्षणास्ते पृथ्वीधरश्रीभृतः पृथ्वीधराणां श्रियं शोभां बिभ्रति ते तथा पर्वताकाराः, इत्युभयत्रापि तुल्यम् । गजाः कनकावलीभिः कनककक्ष्यानक्षत्रमालाभिः सुवर्णपङ्क्तिभिः सौदामनीदामभिः विद्युद्ग्रहणविषयाम् (?) उपमां सादृश्यं तन्वन्तः विस्तारयन्तः बिभ्रतः, अपरं किंलक्षणाः उभये उपलसच्छृङ्गारलेखायुधाः उपलसन्ति द्योतमानानि श्लिष्यन्ती श्रृङ्गारलेखा गैरिकादिराजिरेव आयुधं येषां ते तथा । विद्युत्वन्तोऽपि सलेखायुधाश्च भवन्ति । लेखायुधं सुरेन्द्रधनुः शक्रचापम् । 'लेखा अदितिनन्दना' इत्यमरः । अपरं किंलक्षणाः उभये कालियकायकालवपुषः कालियस्य कालियाख्यस्य नागस्य कायो देहः तद्वत्कालानि कृष्णानि वपूंषि शरीराणि येषां ते तथा, अतिकृष्णमूर्तयः इत्यर्थः । श्लेषालङ्कारः । 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' ॥ ६९ ॥

इति श्रीशिशुपालवधे महाकाव्ये दत्तकसूनोर्माघस्य कृतौ आनन्ददेवायनिवल्लभदेवविरचितायां सन्देहविषौषध्यां सारटीकायाम् उभयसैन्यसमागमो नाम सप्तदशः सर्गः ।

---

**अन्यूनोन्नतय इति** ॥ अन्यूनोन्नतयो महोच्छ्रायाः अतिमात्रपृथवोऽत्यन्तविपुलाः अत एव पृथ्वीधरश्रीभृतः शैलशोभाधारिण इति निदर्शनालङ्कारः । कनकावलीभिरावरणहेतुहेमराजिभिः करणैः । सुदाम्ना पर्वतेनैकदिशः सौदामन्यो विद्युतः । 'तेनैकदिक्' इत्यण्प्रत्यये ङीप् । ताभिर्दामभिरिव सौदामनीदामभिर्विद्युल्लताभिरुपमां सादृश्यं तन्वन्तः । 'तडित्सौदामनी विद्युत्' इत्यमरः । 'अतुलोपमाभ्याम्–' इति सदृशवचनस्यैव निषेधादिह सादृश्यवाचित्वात्तृतीया । उपलसन्तः शृङ्गाराः सिन्दूरादिमण्डलान्येव लेखायुधानि सुरधनूंषि येषां ते तथोक्ताः ।

'शृङ्गारः सुरते नाट्ये रसे च गजमण्डने ।
'लखो लेख्ये सुरे—'

इति च विश्वः । कालियस्य कालियनागस्य कायवत्कालवपुषः कृष्णदेहाः गजा एवाऽम्भोमुचो मेघाः काले योग्यकाले वर्षन्तो मदाम्बु मुञ्चन्तः पांसून् शमं शान्तिमानयन्नापयन् । रूपकालङ्कारः । शार्दूलविक्रीडितं वृत्तमुक्तम् ॥ ६९ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां शिशुपालवधकाव्यव्याख्यायां सर्वङ्कषाख्यायां सप्तदशः सर्गः ॥ १७ ॥

# अष्टादशः सर्गः ।

**सञ्जग्माते तावपायाऽनपेक्षौ सेनाम्भोधी धीरनादौ रयेण ॥**
**पक्षच्छेदात्पूर्वमेकत्र देशे वाञ्छन्तौ वा सह्यविन्ध्यौ(१) निलेतुम् ॥१॥**

**सञ्जग्माते इति** ॥ तौ सेनाम्भोधी सैन्यसागरौ रयेण वेगेन सञ्जग्माते ढुढौकाते, मिलितावित्यर्थः। किंलक्षणौ सेनाम्भोधी अपायाऽनपेक्षौ अपायं नाशं न अपेक्षेते न गणयेते तौ तथा मरणमपि अगणयन्तौ, अपरं किंलक्षणौ सेनाम्भोधी धीरनादौ निर्भयरवौ, मुक्तसिंहरवनावित्यर्थः। अपरं किंलक्षणौ सेनाम्भोधी,उत्प्रेक्ष्येते–पक्षच्छेदात् पूर्वं पतत्रच्छेदनात्प्रथमम् एकत्र देशे एकस्मिन् स्थाने निलेतुम् उपवेष्टुं सङ्गन्तुं वाञ्छन्तौ अभिलषन्तौ सह्यविन्ध्यौ इव सह्याचलविन्ध्याचलाविव गिरिश्रेष्ठाविव सपक्षौ पर्वताविव सङ्गतावित्यर्थः। वाशब्द इवार्थे । सञ्जग्माते इति 'समो गम्यृच्छिभ्या'मिति। अत्र सर्गे शालिनी वृत्तम्, म्तौ त्गौ गश्चेच्छालिनी वेदलोकैः ॥ १ ॥

अथाऽग्रिमसर्गे तुमुलयुद्धवर्णनाय सेनयोर्मेलनं तावदाह—

**सञ्जग्माते इति** ॥ अपायोऽपगमो युद्धादपसरणं तस्याऽनपेक्षौ तमनिच्छन्तौ । युद्धादनिवर्तिनावित्यर्थः। ईक्षतेः पचाद्याचि नञ्समासः। धीरनादौ गम्भीरघोषौ तौ सेनाम्भोधी सेनासागरौ । पक्षच्छेदात्पूर्वं पश्चादसम्भवादिति भावः । एकत्र देशे एकस्थाने निलेतुं वस्तुम् । 'लीङ् गतौ' इति धातोस्तुमुन्प्रत्यये गुणः। वाञ्छन्तौ इच्छन्तौ सह्यविन्ध्यौ वा सह्यविन्ध्याख्यौ पर्वताविव। 'वा स्याद्विकल्पोपमयोः' इति विश्वः । संजग्माते मिलितवन्तौ । संपूर्वाद्गच्छतेरकर्मकाल्लिटि 'समो गम्यृच्छि—' इत्यादिना आत्मनेपदम्। अत्र सह्यविन्ध्ययोः सपक्षयोरप्येकत्र मिलनस्याऽप्रसिद्धस्य सम्भावनामात्रेणोक्तत्वादुपमानाप्रसिद्धेर्नोपमा, किन्तूत्प्रेक्षेति संक्षेपः। अस्मिन्सर्गे शालिनी वृत्तम्। 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति लक्षणात्॥

तदेव सङ्गतमाह—

**पत्तिः पत्तिं वाहमेयाय वाजी नागं नागः स्यन्दनस्थो रथस्थम् ॥**
**इत्थं सेना वल्लभस्येव रागादङ्गेनाऽङ्गं प्रत्यनीकस्य भेजे ॥ २ ॥**

**पत्तिरिति** ॥ सेना वाहिनी प्रत्यनीकस्य विपक्षसैन्यस्य रागात् रसात् इत्थमनेन प्रकारेण अङ्गेन पदातिना अङ्गं पदात्यादि भेजे सिषेवे, सेना च जवेन सदृशमङ्गं शिश्राय । रथगजतुरगपदातयः सेनाया अङ्गानि । तमेव प्रकारमाह—पत्तिः पदातिः पत्तिं पदातिम् एयाय, वाजी अश्वः वाहमश्वम् एयाय जगाम,तथा नागः करी नागं करिणम् एयाय प्राप, तथा स्यन्दनस्थः रथस्थः रथस्थं रथिनम् एयायेति धर्मयुद्धकथनम् । कस्येव भेजे वल्लभस्येव । यथा कामिनी रागादनुरागाद्वल्लभस्य प्रियस्य अङ्गेन ऊर्वादिना अङ्गमूर्वादिकं भजते । पत्तिशब्दः औणादिकः । एयायेति आङ्पूर्वस्य इणो लिटि आद्गुणः ॥ २ ॥

सेनाम्भोधी संजग्माते इत्युक्तं, तत्सङ्गतिप्रकारं तावद्वर्णयति—

**पत्तिरिति** ॥ पत्तिः पदातिः पत्तिं पदातिम् । 'पदातिपत्तिपदगपादातिकपदातयः' इत्यमरः । एयाय प्राप । आङ्पूर्वादिणो लिट् । वाजी अश्वो वाहमश्वमेयाय । 'वाजिवाहार्वगन्धर्व—' इत्यमरः । नागो गजो नागमेयाय, स्यन्दनस्थो रथस्थमेयाय । न तु व्युत्क्रमेण, धर्मयुद्धत्वादिति भावः । इतीत्थमुक्तरीत्या सेना रागात् रणरागादतिरागाच्च । अङ्गेन स्वाङ्गेन पत्त्यादिना करचरणादिना च वल्लभस्य प्रियतमस्येव प्रत्यनीकस्य प्रतिबलस्य । 'वरूथिनी बलं सैन्यं चक्रं चाऽनीकमस्त्रियाम्' इत्यमरः । अङ्गं पत्त्यादिकं कर-

(१) विन्ध्यसह्यौ ।

चरणादिकं च भेजे। यथा कान्ता कान्तस्योरूरुणा करं करेण मुखं मुखेन भजति, तथा सेना प्रतिसैन्यस्य पत्तिं पत्तिना अश्वमश्वेनेत्यादिक्रमेण भेजे न तु व्युत्क्रमेणेत्यर्थः । वल्लभयेवेत्युपमया समरसुरतयोः समरसत्वं व्यज्यते ॥ २ ॥

**रथ्याघोषैर्बृंहया वारणानामैक्यं गच्छन् वाजिनां हेषया च(१) ॥**
**व्योमव्यापी सन्ततं दुन्दुभीनामव्यक्तोऽभूदीशितेव प्रणादः ॥ ३ ॥**

रथ्याघोषैरिति ॥ दुन्दुभीनां ढक्कानां प्रणादो ध्वनिः अव्यक्तोऽभूत् अस्फुट आसीत् । दुन्दुभिर्ध्वनतीति निःसंशयं न ज्ञातमित्यर्थः । यतः रथ्याघोषैः स्यन्दनवृन्दचीत्कारैः वारणानां गजानां हस्तिनां बृंहया गलगर्जितेन,तथा वाजिनामश्वानां हेषया स्वनेन ऐक्यमभेदं गच्छन् प्राप्नुवन् अत एव व्योमव्यापी दिवःस्पृक्,क इव ईशितेव ब्रह्मेव । यथा स हि प्रणादमयो व्योमव्यापी शब्दस्याऽऽकाशे लयात् अव्यक्तः परमात्मस्वरूपत्वात् ऐक्यं शब्दान्तरैर्याति प्राणिभिर्वा जठरे स्वनात् । रथानां समूहो रथ्या, खलगोरथात् ॥ ३ ॥

रथ्याघोषैरिति ॥ सततं व्योमव्यापी गगनस्पृक् अन्यत्र सर्वगत इत्यर्थः । दुन्दुभीनां रणभेरीणां प्रणादो महाघोषः । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । रथानां समूहो रथ्या । 'त्रिषु द्वैपादयो रथ्या रथकट्या रथव्रज' इत्यमरः । 'खलगोरथात्' इति यत्प्रत्ययः समूहार्थे । तासां घोषैः वारणानां बृंहणैः कण्ठघोषैः । 'बृंहणं गजगर्जितम्' इति वैजयन्ती । वाजिनामश्वानां ह्रेषया हेषणेन च । 'हेषा ह्रेषा च निस्वनः' इत्यमरः । 'गुरोश्च हलः' इत्यप्रत्यये टाप् । ऐक्यं मेलनं गच्छन् , अन्यत्र तत्त्वम्पदार्थशोधनादद्वितीयतां गच्छन् ईशिता ईशयिता ईश्वरत्वोपाधिमान् परमात्मेव । ईशेस्तृच् । अव्यक्तोऽभूत् । अयं दुन्दुभिघोष इति दुर्भेदो बभूव । अन्यत्र जीवेश्वरोपाधिविलयादयमीश्वरोऽयं जीव इति भेदरहितोऽभूदित्यर्थः । अत्रैक्यगमनस्य विशेषणगत्या अव्यक्तहेतुत्वात्काव्यलिङ्गमुपमाऽङ्गमिति सङ्करः ॥ ३ ॥

**क्रोधावेशाद्धावतः प्रत्यमित्रं दूरोत्क्षिप्तस्थूलबाहुध्वजस्य(२) ॥**
**दीर्घास्तिर्यग्वैजयन्तीसदृक्ष्यः पादातस्य(३) भ्रेजिरे खड्गलेखाः ॥ ४ ॥**

क्रोधावेशादिति ॥ पादातस्य पदातिसङ्घस्य खड्गलेखाः भ्रेजिरे असिलताः रेजुः । किंलक्षणस्य पादातस्य क्रोधावेशात् रोषवशात् प्रत्यमित्रं शत्रुसंमुखं धावतः आगच्छतः, अपरं किंलक्षणस्य पादातस्य दूरोत्क्षिप्तस्थूलबाहुध्वजस्य दूरमत्यर्थम् उत्क्षिप्तः उद्यतः स्थूलः पृथुः बाहुरेव भुज एव ध्वजं चिन्हं येन सः तथा तस्य, अत एव किंलक्षणाः खड्गलेखाः वैजयन्तीसदृक्ष्यः पताकातुल्याः, अपरं किंलक्षणाः तिर्यक् तिरश्चीनाः । पदातीनां समूहः पादातं, भिक्षादिभ्योऽण् । भ्रेजिरे इति 'फणां च सप्तानाम्' इत्यभ्यासलोपः ॥४॥

रोषावेशादिति ॥ रोषावेशात् प्रत्यमित्रमभिशत्रुम् । आभिमुख्येऽव्ययीभावः । गच्छतां धावतां द्रवत दूरादुत्क्षिप्ता उद्यताः स्थूलाः पीवराः बाहुध्वजाः ध्वजस्तम्भा इव बाहवो येषां तेषां पादातानां पदातिसमूहानाम् । 'पादातं पत्तिसंहतिः' इत्यमरः । भिक्षादिभ्योऽञ् । तिर्यग्दीर्घाः, तिर्यगायता इत्यर्थः । लेखा इव खड्गाः खड्गलेखा वैजयन्तीसदृक्ष्यः । पताकासदृक्ष्यः सत्य इत्यर्थः । 'वैजयन्ती पताका स्यात्' इत्यमरः । दृशेः 'समानान्ययोश्च' इति 'कृञ् च वक्तव्य' इति समानशब्दोपपदाद् दृशेः क्सप्रत्ययः । 'दृक्षे चे'ति वक्तव्यम्' इति समानस्य सभावः(४) । भ्रेजिरे रेजिरे । 'भ्राजृ दीप्तौ' इति धातोः कर्तरि लिट् 'फणां च सप्तानाम्' इति विकल्पादेत्वाभ्यासलोपौ । आर्थीयमुपमा ॥ ४ ॥

---

( १ ) ०र्बृंहणै० । ( २ ) रोषावेशाद्गच्छतां······ध्वजानाम् । ( ३ ) पादातानां ।

( ४ ) 'अत्र दृक्षशब्दपरत्वाभावेनास्य वार्तिकस्योपन्यासो भ्रममूलकः । तस्मात् 'दृग्दृशवतुषु' इति सूत्रेण सभावो बोध्यः' । इदं 'निर्णयसागर'मुद्रिते पुस्तके समुपलभ्यते ।

**वर्ध्राऽऽबद्धा धौरितेन प्रयातामश्वीयानामुच्चकैरुच्छलन्तः(१) ॥**
**रौक्मा रेजुः स्थासका मूर्तिभाजो दर्पस्येव व्याप्तदेहस्य शेषाः ॥ ५ ॥**

**वर्ध्राबद्धा इति** ।। अश्वीयानां तुरगसमूहानां रौक्माः सौवर्णाः स्थासकाः रेजुः चकासिरे । किंलक्षणाः स्थासकाः, उत्प्रेक्ष्यन्ते-व्याप्तदेहस्य सर्वाङ्गीणस्य दर्पस्य तेजसो मूर्तिभाजः मूर्तस्य शेषा इव भागाः यथा । किंलक्षणास्ते वर्ध्राबद्धाः वध्रेंषु अग्रिमेषु ( ? ) आबद्धाः योजिताः,अपरं किंलक्षणाः स्थासकाः उच्छलन्तः स्फुरन्तः,किंलक्षणानामश्वीयानां धौरितेन गतिविशेषेण प्रयातां गच्छताम्,अपरं किंलक्षणानामश्वीयानाम् उच्चकैरुन्नतानाम् । अश्वानां समूहोऽश्वीयम् ॥ ५ ॥

**वर्ध्राबद्धा इति** ॥ धौरितेन धौरिताख्येन गतिविशेषेण प्रयातां धावताम् । यातेर्लटः शत्रादेशः । अश्वीयानामश्वसमूहानाम् । 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' इति छप्रत्ययः । उच्चकैरुच्चलन्तो गतिवशादूर्ध्वमुत्पतन्तः, वर्धन्ते इति वर्ध्राणि पर्याणबन्धनवरत्राः । 'वर्ध्रं त्रपुवरत्रयोः' इति विश्वः । 'वृधुवाधिवपिभ्यो रन्' इति रन्प्रत्ययः । लघूपधगुणो रपरः । तेष्वाबद्धाः स्थापिता रौक्माः सौवर्णाः स्थासकाः बुद्बुदाकारमण्डलानि व्याप्तदेहस्य सर्वाङ्गीणस्य मूर्तिभाजो मूर्तिभृतः दर्पस्याऽऽन्तरस्य तेजसः शेषाः अन्तर्मानाद्बहिर्निर्गता अतिरेका इव रेजुरित्युत्प्रेक्षा ॥ ५ ॥

**सान्द्रत्वक्कास्तल्पलाश्लिष्टकक्ष्या(२) आर्ङ्गीं शोभामाप्नुवन्तश्चतुर्थीम् ॥**
**कल्पस्यान्ते मारुतेन प्रणुन्नाश्चेलुश्चण्डा(३) गण्डशैला इवेभाः ॥ ६ ॥**

**सान्द्रेति** ॥ इभा द्विरदाः चेलुः प्रतस्थिरे । किंलक्षणाः इभाः सान्द्रत्वक्काः घनचर्माणः, सान्द्रा त्वक् येषां ते तथा । प्रहारसहा इत्यर्थः । अपरं किंलक्षणाः इभाः तल्पलाश्लिष्टकक्ष्याः तल्पलेन पृष्ठवंशेन आश्लिष्टा कक्ष्या मध्यबन्धनरुक्मरज्जुर्येषां ते तथा, अपरं किंलक्षणाः इभाः आर्ङ्गीं चतुर्थीं शोभां कान्तिम् आप्नुवन्तः प्राप्ताः । चत्वारिंशद्वर्षदेश्या इत्यर्थः । दशवर्षा हि दन्तिनः पुरुषस्यैव(?) चण्डा उग्राः । अपरं किंलक्षणाः इभाः कल्पस्य अन्ते प्रलये मारुतेन वायुना प्रणुन्नाः प्रेरिताः गण्डशैला इव स्थूलपाषाणा इव । पर्वतैकदेशा इवेत्यर्थः ॥ ६ ॥

**सान्द्रेति** ॥ सान्द्रत्वक्काः सान्द्रचर्माणः । शैषिकः कप्प्रत्ययः । तल्पलाः पृष्ठवंशास्तेषु आश्लिष्टाः कक्ष्याः मध्यबद्धवरत्रा येषां ते । 'दूष्या कक्षा वरत्रा स्यात्' इत्यमरः । गजानां विंशत्युत्तरशतायुषां द्वादश दशा भवन्ति. तत्र चतुर्दशारूढाप्रौढशोभा । तदेवाह—अथ चतुर्थीमार्ङ्गीं शारीरीं शोभामाप्नुवन्तः । चत्वारिंशद्वर्षदेश्या इत्यर्थः । इभा गजाः कल्पस्यान्ते मारुतेनोपनुन्नाः प्रलयमारुतप्रेरिताः गण्डशैलाः स्थूलोपला इव चण्डं तीव्रं चेलुः प्रतस्थिर इत्युपमा ॥ ६ ॥

**सङ्क्रीडन्ती तेजिताऽश्वस्य रागादुद्यम्याराद्ग्रकायोत्थितस्य(४) ॥**
**रंहोभाजामक्षधूः स्यन्दनानां हाकारं नु(५) प्राजितुः प्रत्यनन्दत् ॥ ७ ॥**

**सङ्क्रीडन्तीति** ॥ रथानाम् अक्षधूः स्यन्दनानाम् अक्षस्य अवयवविशेषस्य धूः काष्ठविशेषः अक्षधूः । अनक्ष इतिवचनात् समासान्ताभावः । सा सङ्क्रीडन्ती कूजन्ती सती प्राजितुः सारथेः प्रोत्साहनार्थं हाकारं हाशब्दं प्रत्यनन्दत नु अभ्यनन्दत् नु । नु इति वितर्के । सुष्ठु रम्या तेजना कृतेति । प्राजयति तेजयतीति प्राजिता तस्य । किंलक्षणस्य प्राजितुः, रसात् रागात् उद्यम्य उद्यमं गृहीत्वा तेजिताश्वस्य तेजिताः प्रोत्साहिता अश्वाः तुरङ्गमा

(१) ०रुच्चलन्तः ।(२) तल्पला''कक्षा । (३) ०नोपनुन्नाश्चेलुश्चण्डं । (४) ०म्यारामग्र । (५) हाहाकारं ।

येन सः तथा, तस्य, अपरं किंलक्षणस्य प्राजितुः आरात् दूरमत्यर्थम् अग्रकायोत्थितस्य अग्रकायेन पूर्वदेहेन उत्थितः उद्यतः तस्य । पूर्वकायेनोत्थाय हाकारपूर्वं तेजिताश्वस्येत्यर्थः। अत एव किंलक्षणानां स्यन्दनानां रंहोभाजां जविनाम् । अतश्च सङ्क्रीडनात् ज्ञायते-साधु त्वया योजिताः अश्वाः,रम्यो हाकारः कृतः इति तत्प्राजितारमाह । सङ्क्रीडन्तीति 'क्रीडोऽनुसंपरिभ्यश्चे'ति तङ् न भवति, 'समोऽकूजने' इति निषेधात् । प्राजितेति 'वलादावार्धधातुके वे'ति इड्भावो विकल्पितः । नु इवार्थे ॥ ७ ॥

सङ्क्रीडन्तीति ॥ सङ्क्रीडन्ती सङ्घर्षात्कूजन्ती । 'समोऽकूजने च वक्तव्यम्' इति वचनात्कूजने क्रीडोऽनुसम्परिभ्यश्च' इति नात्मनेपदम् । रंहोभाजां वेगभाजां स्यन्दनानां रथानामक्षस्य चक्राधारकाष्ठस्य धूरग्रमक्षधूः । 'अक्षं रथाङ्ग आधारे' इति वैजयन्ती । अनक्षे इति निषेधात् 'ऋक्पूः-' इत्यादिना न समासान्तः । रागात् आरात् प्रतोदमुद्यम्य तेजिता उत्साहिता अथवा येन तस्य अग्रं चासौ कायश्च स उत्थितो यस्य तस्य । उत्थितपूर्वकायस्येत्यर्थः । आहिताग्न्यादित्वात्साधुः । प्राजितुः सारथेः । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः । हाहाकारमुत्साहवर्धनार्थं हाहाशब्दम् । एवकार इत्यत्रैव-ग्रहणस्योपलक्षणत्वादन्यत्रापि यथादर्शनं शब्दनिर्देशात्कारप्रत्ययः । अथवा हाहाकारं हाहाकरणम् । भावे घञ् प्रत्ययः । प्रत्यनन्दत् साधु साधित्यन्वमोदत किमित्युत्प्रेक्षा ॥ ७ ॥

**कुर्वाणानां सम्परायाय(१)ऽन्तरायं भूरेणूनां मृत्युना मार्जनाय ॥**
**संमार्जन्यो नूनमुद्धूयमाना भान्ति स्मोच्चैः केतनानां पताकाः ॥ ८ ॥**

कुर्वाणानामिति ॥ केतनानां ध्वजानां पताकाः वैजयन्त्यः भान्ति स्म चकासिरे । किंलक्षणाः पताकाः, नूनम् उत्प्रेक्ष्यन्ते—मृत्युना यमेन भूरेणूनामुर्वीरजसां मार्जनाय संमार्जनार्थम् उद्धूयमानाः चाल्यमानाः संमार्जन्य इव शोधन्य इव, यतः किंलक्षणानां भूरेणूनां सम्परायाऽन्तरायं कुर्वाणानां सङ्ग्रामप्रत्यूहं कुर्वताम् । एतच्च प्राणहरस्य नेष्टम् । मृज्यते साध्यते धूलिः आभिरिति संमार्जन्यः ॥ ८ ॥

कुर्वाणानामिति ॥ उच्चैरुन्नता केतनानां ध्वजस्तम्भानां पताका वैजयन्त्यः साम्परायान्तरायं युद्धविघ्नं कुर्वाणानाम् । 'समीकं साम्परायिकम्' इत्यमरः । भूरेणूनां मार्जनाय प्रमार्जनार्थं मृत्युनाऽन्तकेनोद्धूयमानाः प्रकम्प्यमानाः संमार्जन्यः शोधन्य इव भान्ति स्म । 'संमार्जनी शोधनी स्यात्' इत्यमरः । नूनमित्युत्प्रेक्षा ॥ ८ ॥

**उद्यन्नादं धन्विभिर्निष्ठुराणि स्थूलान्युच्चैर्मण्डलत्वं दधन्ति ॥**
**आस्फाल्यन्ते कार्मुकाणि स्म कामं हस्त्यारोहैः कुञ्जराणां शिरांसि ९**

उद्यन्नादमिति ॥ धन्विभिर्धानुष्कैः काममत्यर्थम् उद्यन्नादं प्रसरच्छब्दं यथा भवति तथा कार्मुकाणि कोदण्डानि आस्फाल्यन्ते स्म आस्फालितानि धूतानि, हस्त्यारोहैश्च नियन्तृभिः कुञ्जराणां शिरांसि गजानां मस्तकानि च आस्फाल्यन्ते स्म । किंलक्षणानि कार्मुकाणि हस्तिशिरांसि च निष्ठुराणि कर्कशानि, अपरं किंलक्षणानि उच्चैः उच्चानि, अपरं किंलक्षणानि मण्डलत्वं दधन्ति चक्राकारत्वं बिभ्राणानि, परिणाहीनीत्यर्थः । आकर्षात्स्वभावाच्चेति सर्वं तुल्यम् ।'धनुश्चापौ धन्वशरासनकोदण्डकार्मुक'मित्यमरः ॥९॥

उद्यन्नादमिति ॥ धन्विभिर्धनुष्मद्भिः । व्रीह्यादित्वादिनिः प्रत्ययः । निष्ठुराणि कर्कशानि स्थूलानि पीवराण्युच्चैरुन्नतानि मण्डलत्वं दधन्ति वर्तुलत्वं दधानानि । एकत्राऽऽकर्षणादन्यत्र स्वभावाच्चेति भावः । कर्मणि

(१) साम्परायाय० ।

प्रभवन्तीति कार्मुकाणि धनूंषि । उकञ् । उच्चैरादनुज्जृम्भमाणघोषं यथा तथा काममास्फाल्यन्ते स्म पाटवपरीक्षार्थं पाणिभिरास्फालितानि । हस्तिनं रोहन्तीति हस्त्यारोहैर्निषादिभिः । कर्मण्यण् । कुञ्जराणां शिरांसि आस्फाल्यन्ते स्म । उत्साहार्थमिति भावः । अत्र कार्मुकाणां कुञ्जरशिरसां च प्रकृतानामेव निष्ठुरत्वादिविशेषणसाम्येनौपम्यावगमात्केवलप्रकृतास्पदा तुल्ययोगिता ॥ ९ ॥

**घण्टानादो निस्वनो डिण्डिमानां ग्रैवेयाणामारवो बृंहितानि ॥**
**आमेतीव प्रत्यवोचन् गजानामुत्साहार्थं वाचमाधोरणस्य ॥ १० ॥**

**घण्टानाद इति ॥** गजानां मातङ्गानाम् उत्साहार्थं तेजनार्थम् आधोरणस्य हस्तिपकस्य वाचं वाणीम् अमूनि वस्तूनि आम इति प्रत्यवोचन्निव एवमेव इति ऊचुरिव तस्यैवार्थेऽप्रतीपं जगदुरिव । यस्य किल वाग् दीयते तेन प्रतिवक्तव्यम् । कानि वस्तूनीत्याह—घण्टानादः किङ्किणीस्वनः, पुनः डिण्डिमानां निस्वनः ढक्कानामारवः, अपरं ग्रैवेयाणामारवः ग्रीवाशृङ्खलादीनां रणत्कारः, तथा बृंहितानि गजगलगर्जितानि । ग्रीवायां भवानि आभरणादीनि घण्टादीनि, 'ग्रीवादिभ्योऽण् चे'ति ढञ् ॥ १० ॥

घण्टानाद इति ॥ घण्टानादः किङ्किण्यादिघोषः डिण्डिमानां वाद्यविशेषाणां निस्वनः, ग्रीवासु भवानां ग्रैवेयाणां कण्ठशृङ्खलानाम् । 'ग्रीवादिभ्योऽण् चे'ति ढञ् प्रत्ययः । आरवः, बृंहितानि बृंहणानि गजानामुत्साहार्थमाधोरणस्य हस्तिपकस्य । 'आधोरणा हस्तिपकाः' इत्यमरः । वाचं बृंहणादिशब्दं आमेति प्रत्यवोचन्निव एवमेवेत्यनुकूलमूचिर इवेत्युत्प्रेक्षा । 'आमानुगुण्ये स्मरणे' इत्यमरः ॥ १० ॥

**यातैश्चातुर्विध्यमस्त्रादिभेदादव्यासङ्गैः सौष्ठवाल्लाघवाच्च ॥**
**शिक्षाशक्तीः(१) प्राहरन् दर्शयन्तो मुक्तामुक्तैरायुधैरायुधीयाः ॥ ११ ॥**

**यातैरिति ॥** आयुधीयाः आयुधिकाः शस्त्रजीविनो भटाः मुक्ताऽमुक्तैः आयुधैः प्रहरणैः प्राहरन् प्रहारं चक्रुः । मुच्यन्ते इति मुक्तानि शरादीनि, न मुच्यन्ते गृह्यन्ते इति अमुक्तानि खड्गादीनि, मुक्तानि च अमुक्तानि च मुक्ताऽमुक्तानि तैः । किंलक्षणैः आयुधैः चातुर्विध्यं यातैः चतुःप्रकारत्वं प्रापितैः, कस्मात् अस्त्रादिभेदात् अस्त्राऽपास्त्रव्यस्त्रमहास्त्रादिभेदात् । अस्त्रं धनुः, तदेव बहिःसन्धानम् अपास्त्रं, व्यस्त्रं परिघं परशुश्च आयुधादि, आग्नेयादि महास्त्रम् । अस्त्रमपास्त्रं पाशः क्षेपणीयमिति केचित् । अपरं किंलक्षणैरायुधैः अव्यासङ्गैः अप्रतिहतैः, कुतः सौष्ठवात् सलीलत्वात् अवधानाद्वा, लाघवाच्चातुर्यात्, अत एव शिक्षाशक्तीः दर्शयन्तः शिक्षा अभ्यासः तस्याः शक्तीः सामर्थ्यानि आविर्भावयन्तः । आयुधेन जीवन्तीत्यायुधीयाः, आयुधाच्छ च । सुष्ठु इत्यस्य भावः सौष्ठवम् उद्गात्रादित्वादञ् ॥

यातैरिति ॥ आयुधेन जीवन्तीत्यायुधीया आयुधजीविनः । 'शस्त्राजीवे काण्डपृष्ठायुधियायुधिकाः समाः' इत्यमरः । 'आयुधाच्छ च' इति छप्रत्ययः । शिक्षाशक्तिमभ्यासपाटवं दर्शयन्तः, अस्त्रादिभेदादस्त्रमहास्त्रादिकभेदाच्चातुर्विध्यं यातैः प्राप्तैः, सुष्ठुभावः सौष्ठवं नैशित्यादिगुणवत्त्वं तस्मात् । उद्गात्रादित्वादञ्प्रत्ययः । लाघवाद्वेगवत्त्वाच्च । 'इगन्ताच्च लघुपूर्वात्' इत्यण्प्रत्ययः । अव्यासङ्गैरप्रतिषिद्धैः, मुच्यन्ते इति मुक्तानि शरादीनि, न मुच्यन्ते इत्यमुक्तानि खड्गादीनि च तैस्तैर्मुक्ताऽमुक्तैरिति द्वन्द्वः । आयुधैः प्राहरन् । स्वभावानुप्रासयोः संसृष्टिः ॥ ११ ॥

**रोषावेशादाभिमुख्येन कौचित्पाणिग्राहं रंहसैवोपयातौ ।**
**हित्वा हेतीर्मल्लवन्मुष्टिघातं घ्नन्तौ बाहूबाहवि व्यासजेताम् ॥ १२ ॥**

---

(१) शिक्षाशक्तिं ।

**रोषावेशादिति ॥** बाहुभ्यां प्रहृत्य युद्धं प्रवृत्तं बाहूबाहवि, 'तत्र तेनेदमिति सरूप' इति समासः। इच् कर्मव्यतिहारे, 'अन्येषामपीति' दीर्घः। तिष्ठद्गुप्रभृतित्वादव्ययीभावः। तत्र व्यासजेतां लेगतुः व्यासक्तौ, बाहुयुद्धं चक्रतुरित्यर्थः। किं कृत्वा रोषावेशात् क्रोधयोगात् हेतीः हित्वा आयुधानि त्यक्त्वा, अतश्च मल्लवत् मल्लाविव मुष्टिघातं मुष्टिना घ्नन्तौ ताडयन्तौ, तथा रंहसा जवेन पाणिग्राहं हस्तानेव गृहीत्वा आभिमुख्येन संमुखमुपयातौ प्राप्तौ। पाणी गृहीत्वा पाणिग्राहं, द्वितीयायां णमुल्। मुष्टिना हन्यते इति मुष्टिघातं 'करणे हन' इति णमुल्, यथाविध्यनुप्रयोगः। व्यासजेतामिति कर्मव्यतिहारे तङ् ॥ १२ ॥

**रोषावेषादिति ॥** कौचिद्योधौ रोषावेशाद्रोषपारवश्यादाभिमुख्येन रंहसा वेगेनेवोपयातौ मिथः प्रत्यासन्नौ अत एव पाणिग्राहमन्योन्यं पाणिं गृहीत्वा। 'द्वितीयायां च' इति णमुल्प्रत्ययः। हेतीः शस्त्राणि हित्वा त्यक्त्वा। वैकल्यादिति भावः। 'हेतिस्तु शस्त्रे द्वयोः' इति केशवः। मल्लवन्मल्लाभ्यां तुल्यम्। 'तेन तुल्यम्—' इति वतिप्रत्ययः। मुष्टिघातं मुष्टिभिर्हत्वा। 'करणे हनः' इति णमुल्प्रत्ययः। घ्नन्तौ प्रहरन्तौ। हन्तेर्लटः शत्रादेशः, कषादित्वादनुप्रयोगः। मुष्टिभिघ्नन्तावित्यर्थः। बाहुभ्यां प्रहृत्य प्रवृत्तमिदं युद्धं बाहूबाहवि बाहुयुद्धम्। 'तत्र तेनेदमिति सरूप' इति बहुव्रीहौ 'इच् कर्मव्यतिहारे' इतीच्प्रत्ययः समासान्तः। 'अन्येषामपि दृश्यते' इति दीर्घः। तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावत्वादव्ययत्वम्। तत्र व्यासृजेतां व्यासक्तवन्तौ। 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदम्। मल्लवदिति तद्धितगता श्रौती पूर्णोपमा ॥ १२ ॥

शुद्धाः सङ्गं न क्वचित्प्राप्नुवन्तो(१) दूरान्मुक्ताः शीघ्रतां दर्शयन्तः ॥
अन्तःसेनं विद्विषामाविशन्तो युक्तं चक्रुः सायका वाजितायाः ॥ १३ ॥

**शुद्धा इति ॥** सायका बाणाः वाजितायाः पक्षवत्त्वस्य युक्तं चक्रुः सदृशं विदधिरे। वाजाः पक्षा विद्यन्ते येषां ते वाजिनः कथ्यन्ते। भङ्गिभणितेः तुरगसदृशक्रियाः अभूवन्नित्यर्थः। किंलक्षणाः सायकाः वाजिनश्च शुद्धाः जात्या सुषिरोत्पन्नाः, अश्वाश्च काम्बोजादिदेशसमुद्भवाः, अत एव अपरं किंलक्षणाः उभये क्वचित् कुत्रापि सङ्गं प्रतिहतिं स्खलनां च न प्राप्नुवन्तः अनासादयन्तः, अत एव अपरं किंलक्षणाः उभये विद्विषां रिपूणाम् अन्तःसेनं सेनायाः पृतनाया मध्यम् आविशन्तः प्रविशन्तः हतये जयाय च। सेनायाः अन्तः अन्तःसेनमित्यव्ययीभवः ॥ १३ ॥

**शुद्धा इति ॥** शुद्धा निर्विषाः। 'न कर्णिभिर्नापि दग्धैर्नाग्निज्वलिततेजनैः' इति निषेधादिति भावः। अन्यत्र जात्येत्यर्थः। क्वचित्कुत्रापि सङ्गं प्रतिबन्धं न प्राप्तवन्तः न प्राप्ताः। दुर्वारा इत्यर्थः। दूरान्मुक्ता दूरत एव विसृष्टाः। 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासः। 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक्। शीघ्रतां जवनत्वं दर्शयन्तः, विद्विषां सेनास्वन्तः अन्तःसेनम्। विभक्त्यर्थेऽव्ययीभावः। आविशन्तः, सेनामध्यं प्रविशन्त इत्यर्थः। सायका बाणाः वाजितायाः पक्षवत्तायाः अश्वत्वस्य च। 'वाजो निःस्वनपक्षयोः' इति विश्वः। युक्तमनुरूपं कर्म चक्रुः। एवंविधसेनाप्रवेशस्य वाजिनामेव सम्भवादिति भावः। अत्राभिधायाः प्रकृतपक्षतामात्रोपक्षीणत्वाद्वाजिताशब्देन प्रकृतस्यैव प्रतीतेः ध्वनिरेवेति न श्लेषावकाशः। किन्तु शुद्धादिपदार्थपुञ्जविशेषणगत्या सायकानां युक्तकारिताहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ १३ ॥

आक्रम्याऽऽजेरग्रिमस्कन्धमुच्चैरास्थायाऽथो वीतशङ्कं शिरश्च ॥
हेलालोला वर्त्म गत्वाऽतिमर्त्यं द्यामारोहन् मानभाजः सुखेन ॥ १४ ॥

---

(१) प्राप्तवन्तो।

आक्रम्येति ॥ मानभाजः मनस्विनः सुखेन अकृच्छ्रेण द्यामारोहन् दिवमुत्पेतुः, समरमरणेन तदवाप्त्या । किं कृत्वा आजेः सङ्ग्रामस्य अग्रिमं पौरस्त्यं प्रधानं वा स्कन्धं स्कन्धतुल्यं देशम् आक्रम्य उल्लङ्घ्य, किंलक्षणम् आजेः अग्रिमस्कन्धम् उच्चैः उच्चम् , अथाऽनन्तरं वीतशङ्कं निर्भयं शिरः आस्थाय अधिष्ठाय जित्वा ततः अतिमर्त्यं मानुषदुष्प्रापं वर्त्म मार्गं हेलालोलाः विलासचटुलाः सन्तः गत्वा प्राप्य, अतिमानुषं युद्धं कृत्वेत्यर्थः । ततो मृताः सन्तः सुखेन स्वर्गमारुरुहुः । यो ह्युच्चं स्थानं सुखेनाऽऽरोढुमिच्छति, स उन्नततमं समाक्रामति, ततः याति सोऽतिमानुषं देशम् ॥ १४ ॥

आक्रम्येति ॥ मानभाजोऽभिमानवन्तः उच्चैरुन्नतम् आजेर्युद्धस्याग्रिमस्कन्धमग्रभागमंसप्रदेशं चाक्रम्यारुह्य वीतशङ्कं शिरः संमुखमुत्तमकायं चास्थायारुह्य हेलासु युद्धक्रीडासु लीलासु च लोलाउत्सुकाः सन्तः अतिमर्त्यं वर्त्म गत्वा, अमानुषं युद्धं कृत्वेत्यर्थः । अन्यत्राऽमानुषगम्यमारोहणमार्गं गत्वा सुखेनाऽनायासेन द्यां स्वर्गमभ्रङ्कषं गिरिशिखरादि क्रीडास्थानम् । 'द्यौः स्वर्गसुखवर्त्मनोः' इति विश्वः । आरोहन्नारूढाः । 'युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः' इति मनुस्मरणादिति भावः । यथा कश्चित्कश्चित् स्कन्धमूर्धारोहणक्रमेण किञ्चिद्दुरारोहमद्रितटादिकमारोहति तद्वदिति प्रतीतेर्विशेषणमाहिम्नागता समासोक्तिः ॥ १४ ॥

**रोदोरन्ध्रं व्यश्नुवानानि लोलैरङ्गस्याऽन्तर्मापितैः स्थावराणि ॥**
**केचिद्गुर्वीरेत्य संयन्निषद्याः(१) क्रीणन्ति स्म प्राणमूल्यैर्यशांसि ॥१५॥**

रोदोरन्ध्रमिति ॥ केचित्सुभटाः गुर्वीः दुःसहाः संयन्निषद्याः समराऽऽपणान् एत्य प्राप्य प्राणमूल्यैः असुधनैः कृत्वा यशांसि क्रीणन्ति स्म कीर्तीः अक्रीणन् । असून् दत्वा कीर्तिं जगृहुरिति भावः । किंलक्षणानि यशांसि रोदोरन्ध्रं नभोमहीतलविवरं व्यश्नुवानानि व्याप्नुवन्ति, किंलक्षणैः प्राणमूल्यैः लोलैश्चपलैः अस्थिरैः, अपरं किंलक्षणैः प्राणमूल्यैः अङ्गस्य अन्तः मापितैः देहस्य मध्ये स्थापितैः, किंलक्षणानि यशांसि स्थावराणि स्थिराणि । महदन्तरम्, लोका हि निकृष्टं विक्रीय उत्कृष्टं क्रीणन्ति । उक्तं च—

अनशानि नश्वराभिर्लभ्यन्ते निर्मलानि मलिनाभिः ।
तनुभिर्यशांसि धीरैरवसरतुलिताभिरतुलानि ॥

द्यौश्च पृथिवी च रोदसी । निषीदन्त्यस्यामिति निषद्या वणिक्पथः ॥ १५ ॥

रोदोरन्ध्रमिति ॥ केचिद्वीराः गुर्वीः महतीः, संयतो युध एव निषीदन्त्यस्यामिति निषद्यामापणम् । "आपणस्तु निषद्यायाम्' इत्यमरः । 'संज्ञायां समजनिषद—' इत्यादिना क्यप् । एत्य प्राप्य । आङ्पूर्वादिणः क्त्वो ल्यप् । देहस्यान्तरभ्यन्तरे मापितैः परिच्छिन्नैः । मातेर्माङो वा ण्यन्तात्कर्मणि क्तः । 'अर्त्तिह्री—'इत्यादिना पुगागमः । लोलैरस्थिरैः प्राणैरेव मूल्यैः प्राणमूल्यै रोदसोर्द्यावापृथिव्यो रन्ध्रमन्तरालं व्यश्नुवानानि व्याप्नुवन्ति । अश्नोतेर्लटः शानजादेशः । स्थावराणि स्थिराणि यशांसि क्रीणन्ति स्म । स्वीचक्रुरित्यर्थः । अत्र न्यूनैः प्राणैस्ततोऽधिकयशःपरिवर्तनान्न्यूनपरिवृत्तिरलङ्कारः ।

'समन्यूनाधिकानां च यदा विनिमयो भवेत् ।
साकं समाधिकन्यूनैः परिवृत्तिरसौ मता' ॥

इति लक्षणात् ॥ १५ ॥

**वीर्योत्सेक(२)श्लाघि कृत्वाऽवदानं सङ्ग्रामाऽग्रे मानिनां लज्जितानाम् ॥**
**अज्ञातानां शत्रुभिर्युक्तमुच्चैः श्रीमन्नाम श्रावयन्ति स्म नग्नाः ॥ १६ ॥**

---

( १ ) ०मेत्य संयन्निषद्याः ।　　( २ ) वीर्योत्साह ।

वीर्योत्सेकेति ॥ मानिनां मनस्विनां नग्नाः मागधाः सङ्ग्रामाऽग्रे रणशिरसि श्रीमत् श्रीशब्दाङ्कितं नाम अभिधानं नृपं प्रति श्रावयन्ति स्म। किंलक्षणं नाम वीर्योत्सेकश्लाघि वीर्योत्सेकाभ्यां बलोत्साहाभ्यां श्लाघ्यते कीर्त्यते तथा, किंलक्षणानां मानिनाम् अवदानं कृत्वा लज्जितानाम् अद्भुतं कर्म कृत्वा सञ्जातलज्जानाम्, अपरं किंलक्षणानां मानिनाम् अत एव अरिभिः शत्रुभिः अज्ञातानाम् अविदितानाम्। अतश्च तन्नामश्रावणं युक्तम् साम्प्रतम्। अविकत्थिनां हि महाकर्मकीर्तनमुचितम् ॥ १६ ॥

वीर्योत्साहेति ॥ सङ्ग्रामाग्रे रणाग्रे वीर्योत्साहाभ्यां श्लाघ्यते इति श्लाघि विक्रमाऽहङ्कारशोभि अवदानं महत्कर्म कृत्वा। 'अवदानं कर्म वृत्तम्' इत्यमरः। लज्जितानां, मानित्वात् स्वनामाख्याने सङ्कोचवतामित्यर्थः। शत्रुभिरज्ञातानामज्ञातनामकानां मानिनां मानशालिनां शूराणां सम्बन्धि श्रीमत् शौर्यश्रीयुक्तं नाम नग्नाः बन्दिनः। 'बन्दिनि क्षपणे नग्नः' इति विश्वः। उच्चैः श्रावयन्ति स्म। अयमसाविति कथयामासुरित्यर्थः। युक्तं सर्वमेतदुचितमित्यर्थः। अत्र लज्जमानाऽज्ञातयोर्विशेषणगत्या बन्दिश्रवणहेतुत्वात् काव्यलिङ्गभेदः ॥ १६ ॥

**आधावन्तः संमुखं धारितानामन्यैरन्ये तीक्ष्णकौक्षेयकाणाम् ॥**
**वक्षःपीठैरात्सरोरात्मनैव क्रोधेनाऽन्धाः प्राविशन् पुष्कराणि ॥ १७ ॥**

आधावन्त इति ॥ अन्ये भटा आधावन्तः कोपान्धत्वात् आत्मनैव स्वयमेव तीक्ष्णकौक्षेयकाणां सितखड्गाणां पुष्कराणि कमलानि आत्सरोः मुष्टिं यावत् वक्षःपीठैः उरस्तटैः प्राविशन् प्रविविशुः। किंलक्षणानां तीक्ष्णकौक्षेयकाणां यतः अन्यैरपरैः संमुखं धारितानां प्रतिष्ठापितानाम् ॥ १७ ॥

आधावन्त इति ॥ क्रोधेनाऽन्धा अपश्यन्तोऽन्ये भटाः आधावन्तोऽभिमुखमापतन्तः सन्तः अन्यैः सैन्यैः प्रतिद्वन्द्वाभिसंमुखं धारितानां धृतानां तीक्ष्णकौक्षेयकाणां निशिताऽसिनाम्। 'कुलकुक्षिग्रीवाभ्यः श्वाऽस्यलङ्कारेषु' इति ढकञ्प्रत्ययः। पुष्कराणि फलानि, खड्गमुखानीत्यर्थः। 'पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च' इति विश्वः। वक्षांसि पीठानीव वक्षःपीठैर्वक्षःस्थलैः आत्सरोरामुष्टेः। 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यमरः। 'आङ् मर्यादाभिविध्योः' इति विकल्पादसमासः। आत्मना स्वयमेव, परप्रयत्नं विनेत्यर्थः। प्राविशन् प्रविष्टाः। अत्र क्रोधान्धविशेषणगत्या पुष्करप्रवेशहेतुत्वात्काव्यलिङ्गभेदः ॥ १७ ॥

**मिश्रीभूते तत्र सैन्यद्वयेऽपि प्रायेणाऽयं व्यक्त आसी(१)द्विशेषः ॥**
**आत्मीयास्ते ये पराञ्चः पुरस्तादभ्यावर्ती संमुखो यः परोऽसौ ॥ १८ ॥**

मिश्रीभूते इति ॥ तत्र रणे सैन्यद्वयेऽपि अनीकयुग्मेऽपि मिश्रीभूते ऐक्यं प्राप्तेऽपि प्रायेण एष विशेषः भेदो व्यक्त आसीत् प्रकटोऽभवत्, यत् आत्मीयाः स्ववर्ग्यास्ते, ये पुरस्तादग्रतः पराञ्चः पराङ्मुखाः। यस्तु अभिमुखः अभ्यावर्ती आगतः, स परः। न कश्चित् तदा पलायामासेति तात्पर्यार्थः। परान् अन्यान् अञ्चन्ति गच्छन्तीति पराञ्चः, क्विप् लोपः, जस् 'उगिदचा'मिति नुम् ॥ १८ ॥

मिश्रीभूते इति ॥ तत्र युद्धे सैन्यद्वयेऽपि मिश्रीभूते मिलिते सति प्रायेणाऽयं विशेषोऽसाधारणधर्मो व्यक्तमासीत्। क इत्याह— पुरस्तादग्रे ये पराञ्चः पराङ्मुखाः परेऽपीति भावः। ते आत्मीयाः। अवध्या इत्यर्थः। 'न भीतं न परावृत्तम्' इति वधनिषेधश्रवणात्। यः पुरस्तादभ्यावर्ती परावर्ती संमुखोऽभिमुखः, स्वकीयोऽपीति भावः। असौ परः शत्रुर्वध्य इत्यर्थः। प्राणलुब्धस्य स्वामिद्रोहित्वादित्यर्थः ॥ १८ ॥

---

(१) व्यक्तमासी०।

सद्वंशत्वादङ्गसंसङ्गिनीत्वं नीत्वा कामं गौरवेणाऽवबद्धा ॥
नीता हस्तं वञ्चयित्वा परेण द्रोहं चक्रे कस्यचित् स्वा कृपाणी ॥ १९ ॥

सद्वंशत्वादिति ॥ कस्यचित् सुभटस्य स्वा कृपाणी आत्मीयैव छुरिका द्रोहं चक्रे मारणं व्यधात् । किंलक्षणा कृपाणी परेण अन्येन शत्रुणा वञ्चयित्वा प्रतार्य छलयित्वा हस्तं नीता करं प्रापिता । अनसूययैव हननात् तद्द्रोहः कृतः। अपरं किंलक्षणा कृपाणी सद्वंशत्वात् शोभनाङ्गयष्टित्वात् अङ्गसंसङ्गिनीत्वं नीत्वा कटीसम्पर्कं प्रापय्य काममत्यर्थं गौरवेण आदरेण अवबद्धा ग्रथिता । वंशस्य मध्ये धारितापि स्वभार्यापि अन्येन वञ्चयित्वा हस्तं नीता सती पत्युर्द्रोहं कुरुते । सापि सद्वंशत्वात् महाकुलीनत्वात गौरवेण प्रतिष्ठया शरीरसङ्गं नीता भवति ॥ १९ ॥

सद्वंशत्वादिति ॥ सद्वंशत्वाच्छुद्धाकरत्वात्कुलीनत्वाच्च अङ्गसंसङ्गिनीत्वमङ्गसम्बन्धिनीत्वं नीत्वा । अगुणत्वविवक्षायां 'त्वतलोर्गुणवचनस्य' इति न पुंवद्भावः । कामं गौरवेणादरेणाऽवबद्धा संयता च कस्याचित् स्वा स्वकीया कृपाणी असिलता परेणान्येन वञ्चयित्वा प्रतार्य हस्तं नीता स्वायत्तीकृता सती द्रोहं हिंसां व्यभिचारं च चक्रे कृतवती । अत्र प्रकृतकृपाणीविशेषणसाम्यादप्रकृतस्वैरिणीप्रतीतेः समासोक्तिः ॥ १९ ॥

नीते भेदं धौतधाराऽसिपाता(१)दम्भोदाऽऽभे शात्रवेणापरस्य ॥
साऽसृग्राजिस्तीक्ष्णमार्गस्य मार्गो विद्युद्दीप्तः कङ्कटे लक्ष्यते स्म ॥ २० ॥

नीत इति ॥ अपरस्य योधस्य कङ्कटे कवचे तीक्ष्णमार्गस्य निस्त्रिंशस्य मार्गः पदं लक्ष्यते स्म आलुलोके । तीक्ष्णः तीव्रः दुस्सहः मार्गः पन्था गमनं यस्य सः तीक्ष्णमार्गः । किंलक्षणे कङ्कटे अम्भोदाऽऽभे मेघसदृशे,अपरं किंलक्षणे कङ्कटे धौतधाराऽसिपातात् भेदं नीते धौता संमार्जिता धारा कोटिर्यस्य स धौतधारः, एवंविधो योऽसिः खड्गः तस्य पातः पतनं तस्मात् विपक्षेण भेदं नीते विदारं प्रापिते, विदारिते इत्यर्थः । किंलक्षणो मार्गः अत एव अन्तःप्रवेशात् साऽसृग्राजिः कीलालरेखायुक्तः, असृग्राज्या सह वर्तमानः साऽसृग्राजिः, अपरं किंलक्षणो मार्गः अत एव विद्युद्दीप्तः तडिद्भास्वरः । अतश्च लक्षणम् । सौदामनीसहितमेघनिभे रुधिरच्छुरितं खड्गधारापदं तनुत्रे प्रत्यभादिति वाक्यार्थः । शत्रुरेव शात्रवः । शितधारत्वादसिः तीक्ष्णमार्गः ॥ २० ॥

नीत इति ॥ शात्रवेण शत्रुणा । प्रज्ञादित्वात्स्वार्थेऽण्प्रत्ययः । धौताया उत्तेजिताया धारायाः खड्गधाराया अभिघाताद्भेदं नीते विदारितेऽम्भोदाभे मेघश्यामे अपरस्य भटस्य कङ्कटे कवचे । 'उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्' इत्यमरः । सहाऽसृग्राज्या साऽसृग्राजिः सरक्तरेखः तीक्ष्णमार्गस्य खड्गस्य मार्गः प्रहारो विद्युद्दीप्तस्तडिदुज्ज्वलो लक्ष्यते स्म । उपमालङ्कारः ॥ २० ॥

आमूलान्तात्सायकेनाऽऽयतेन स्यूते बाहौ मण्डुकश्लिष्टमुष्टेः ॥
प्राप्याऽसह्यां वेदनां त्यक्त(२)धैर्यादप्यभ्रश्यच्चर्म नान्यस्य पाणेः ॥ २१ ॥

आमूलान्तादिति ॥ अन्यस्य अपरस्य सुभटस्य त्यक्तधैर्याद् अवसन्नादपि पाणेः करात् चर्म फलकं न अभ्रश्यत् अपास्तं न अपतत् । किं कृत्वा त्यक्तधैर्यात् असह्यां दुःसह्यां वेदनां पीडामनुभवं प्राप्यापि आसाद्य, महतीं पीडां प्राप्येत्यर्थः । एतेन अवसादकारणमुक्तम् । इदानीं पीडाया अपि तदाह—क सति न अभ्रश्यत् आमूलान्तात्

(१) धाराभिघाता० । (२) वेदनामस्त ।

आकुञ्चनात् आयतेन सायकेण दीर्घेणेषुणा बाहौ स्यूते भुजे विद्धे सति। कथं तर्हि न अपतदित्याह—किंलक्षणात् पाणेः मण्डुकश्लिष्टमुष्टेः मण्डुकेन मध्यस्थचर्मवर्ध्रया श्लिष्टा आलिङ्गिता मुष्टिः सम्पिण्डिताङ्गुलिबन्धो यस्य सः तथा तस्मात्, हस्तवासकसहित-बद्धाङ्गुलीकात्, इति करविशेषणम्। प्राप्येति त्यजिक्रियापेक्षया वकल्यम्। भ्रष्टधैर्या-दिति पाठे समानकर्तृत्वं दुर्घटं, भ्रंशे हि धैर्यं कर्तृ, वेदनाप्राप्तिस्तु पाणेः ॥ २१ ॥

आमूलान्तादिति ॥ अन्यस्य भटस्य बाहौ आयतेन दीर्घेण सायकेन आमूलान्तान्मूलप्रदेशपर्यन्तम्, आकक्षमित्यर्थः। विकल्पादसमासः। स्यूते प्रोते सति असह्यां वेदनां व्यथां प्राप्य अत एव।ऽस्तधैर्यात्त्यक्त-धैर्यादपि धारयितुमक्षमादपि मण्डुके सङ्ग्राहे श्लिष्टा सन्दष्टा मुष्टिर्यस्य तस्मात्पाणेश्चर्म फलकम्। 'फलको-ऽस्त्री फलं चर्म सङ्ग्राहो मुष्टिरस्य यः' इत्यमरः। नाऽभ्रश्यन्नापतत्। अत्र सायकप्रोतमुष्टिश्लेषयोर्विशेषण-गत्या धैर्यत्यागचर्मभ्रंशौ प्रति हेतुत्वात्काव्यलिङ्गभेदः ॥ २१ ॥

भित्त्वा घोणामायसेनाऽधिवक्षः स्थूरीपृष्ठो गार्ध्रपक्षेण विद्धः ॥
शिक्षाहेतोर्गाढरज्ज्वेव बद्धं(१) हर्तुं वक्त्रं नाऽशकद् दुर्मुखोऽपि ॥ २२ ॥

भित्त्वेति ॥ स्थूरीपृष्ठो वाजी दुर्मुखोऽपि वक्त्रं वदनं हर्तुं चालयितुं न अशकत् न शशाक, मुखकर्मणि अभ्यस्तशिक्षत्वात्। ननु चपलमुखो दुर्मुखश्चेत्तर्हि कथं वक्त्रं नाहर-दित्याह—किंलक्षणः स्थूरीपृष्ठः घोणां नासां भित्त्वा विदार्य आयसेन अयोमुखेन दीर्घेण गार्ध्रपक्षेण गृध्रपक्षवता नाराचविशेषेण अधिवक्षः वक्षसि विद्धस्ताडितः स्यूतः। किं-लक्षणं वक्त्रम्, उत्प्रेक्ष्यते-शिक्षाहेतोः मुखकर्मणि शिक्षयितुं गाढरज्ज्वा दृढवरत्रया बद्ध-मिव नद्धं यथा। बद्धो हि न चलति। अयसो विकारः आयसः। गृध्रपक्षसम्बन्धिनः पक्षा वाजा यस्य सः गार्ध्रपक्षः ॥ २२ ॥

भित्त्वेति ॥ आयसेनाऽयोमयेन गार्ध्रो गृध्रसम्बन्धी पक्षः पत्रं यस्य तेन गार्ध्रपक्षेण बाणविशेषेण घोणां नासां भित्त्वा। 'घोणा नासा च नासिका' इत्यमरः। अधिवक्षो वक्षसि। विभक्त्यर्थेऽव्ययीभावः। विद्धः प्रहतः। व्यधेः कर्मणि क्तः, 'ग्रहिज्या–' इत्यादिना सम्प्रसारणम्। स्थूरीपृष्ठो नवारूढोऽश्वः, शिक्षैव हेतु तस्य शिक्षाहेतोः शिक्षया निमित्तेन। शिक्षार्थमिति यावत्। 'षष्ठी हेतुप्रयोगे' इति षष्ठी। गाढरज्ज्वा गाढ-पाशेन बद्ध इवेत्युत्प्रेक्षा। दुर्मुखोऽप्यशिक्षितमुखोऽपि वक्त्रं हर्तुमपाक्रष्टुं नाऽशकन्न शक्तः। शकेर्लुङ् 'पुषादि—' इति च्लेरङादेशः। शिक्षितो हि शिक्षावशादबद्धोऽपि बद्धवदास्ते, अशिक्षितस्तु निबद्धोऽपि झटिति मुखमपहरतीति भावः। अपिर्विरोधे। अत एव विरोधाभासोऽलङ्कारः॥ २२ ॥

कुन्तेनोच्चैः सादिना हन्तुमिष्टान्नाऽऽजानेयो दन्तिनस्त्रस्यति स्म ॥
कर्मोदारं कीर्तये कर्तुकामान् किं वा जात्याः स्वामिनो ह्रेपयन्ति ॥ २३ ॥

कुन्तेनेति ॥ आजानेयः कुलीनाऽश्वः दन्तिनः गजात् न त्रस्यति स्म न अभैषीत् न पलायाञ्चक्रे इत्यर्थः। किंलक्षणात् दन्तिनः सादिनाऽश्वारोहेण कुन्तेन प्रासेन कृत्वा हन्तुमिष्टात् हिंसितुं वाञ्छितात्, अपरं किंलक्षणात् दन्तिनः उच्चैः उन्नतात्। न चैतच्चित्रमित्याह—कीर्तये यशोऽर्थम् उदारं महत् कर्म व्यापारं कर्तुकामान् चिकीर्षून् स्वामिनः प्रभून् जात्याः कुलीनाः किं ह्रेपयन्ति, अपि तु न। उक्तं च—

न जानन्ति यतः संज्ञामाजानेयास्ततः स्मृताः।
प्रध्वस्तगात्राः शस्त्रौघैरपि मृत्युवशं गताः॥

---

(१) बद्धो।

तावन्नोज्झन्ति ते प्राणान् यावत्पृष्ठे प्रभुर्भवेत् ।

इति । सादी च महत्कर्म चिकीर्षुरश्वत्रासादसौ लज्जते । वाशब्दः प्रश्नाक्षेपे । किंशब्दोऽसम्भावनायाम् । असम्भावनापरश्च प्रश्नपूर्वको विधिः प्रतिषेधतात्पर्येणाऽवगमयितव्यः । यथा किं देवदत्तः पापानि कुरुते । नैव ह्रेपयन्तीति वाक्यार्थः ॥ २३ ॥

कुन्तेनेति ॥ आजानेयः कुलीनाश्वः । 'आजानेयाः कुलीनाः स्युः' इत्यमरः । 'शुभ्रादिभ्यश्च' इति ढक् प्रत्ययः । सादिनाऽश्वारोहेण कर्त्रा उच्चैरुन्नतेन कुन्तेन प्रासेन करणेन हन्तुं प्रहर्तुमिष्टादभिप्रेताद्धन्तिनो न त्रस्यति स्म न त्रस्तः । 'वा भ्राश—' इत्यादिना श्यन्प्रत्ययः । तथा हि—जात्याः कुलीनाः । भवार्थे यत् प्रत्ययः । कीर्तये उदारं कर्म महापौरुषं कर्तुं कामो येषां तान्कर्तुकामान् । 'तुं काममनसोरपि' इति मकारलोपः । स्वमेषामस्तीति स्वामिनो भर्तॄन् । 'स्वामिन्नैश्वर्ये' इति निपातः । ह्रेपयन्ति लज्जयन्ति किम् । न ह्रेपयन्तीत्यर्थः । 'अर्तिह्री—' इत्यादिना पुगागमः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २३ ॥

**जेतुं जैत्राः शेकिरे नाऽरिसैन्यैः पश्यन्तोऽधो लोकमस्तेषुजालाः ।**
**नागारूढाः पार्वतानि श्रयन्तो दुर्गाणीव त्रासहीनास्त्रसानि ॥ २४ ॥**

जेतुमिति ॥ अरिसैन्यैः विपक्षकटकैः नागारूढाः मतङ्गजस्था जेतुं न शेकिरे वशीकर्तुं न सोढाः । यतः किंलक्षणाः नागारूढाः जैत्रा जिष्णवः पौरुषान्विताः, अपरं किंलक्षणाः नागारूढाः गजारूढत्वाल्लोकं सर्वशत्रुपक्षम् अधः पश्यन्तः ऊनबलमवगच्छन्तः, अपरं किंलक्षणाः अत एव अस्तेषुजालाः क्षिप्तनाराचनिकराः, अपरं किंलक्षणाः अत एव त्रासहीनाः भयवर्जिताः । अपरं किंलक्षणाः, उत्प्रेक्ष्यन्ते—त्रस्यते भीयते एभ्यः इति त्रसानि भयप्रदानि, जङ्गमानीत्यर्थः । पार्वतानि गिरिसम्बन्धीनि दुर्गाणि वप्रान् आश्रयन्त इव आश्रयमाणा इव । ये हि दुर्गाणि गैरेयाणि श्रयन्ति, ते त्रासहीनाः जैत्राः क्षिप्तशरा लोकं चाधः पश्यन्तीति ॥ २४ ॥

जेतुमिति ॥ जेतार एव जैत्रा जयशीलाः । जेतृप्रकृतेः प्रज्ञादित्वात्स्वार्थेऽण् प्रत्ययः । लोकं जनमधः पश्यन्तः स्वयमुपर्यवस्थानाल्लोकमधोदेशे पश्यन्तः, अधःकृतं मन्यमानाश्च अस्तेषुजालाः क्षिप्तशरनिकराः त्रासहीना दुर्गस्थत्वान्निर्भीका नागारूढा गजारोहाः, त्रस्यन्ति गच्छन्तीति त्रसानि जङ्गमानि । 'चरिष्णु जङ्गमचरं त्रसमिङ्गं चराचरम्' इत्यमरः । पार्वतानि पर्वतसम्बन्धीनि दुर्गाणि । गिरिदुर्गाणीत्यर्थः । श्रयन्तोऽधितिष्ठन्त इत्युत्प्रेक्षा । तेऽप्येवंभूता एवेति भावः । अरिसैन्यैः कर्तृभिः जेतुं न शेकिरे । अशक्या बभूवुरित्यर्थः । शकेः कर्मणि लिट् । अत्र मनुः—

'धनुर्दुर्गं महीदुर्गमदुर्गं वनमेव च ।
नृदुर्गं गिरिदुर्गं च समाश्रित्य वसेन्नृपः ॥
सर्वेणैव प्रकारेण गिरिदुर्गं समाश्रयेत् ।
तेषां हि बहुगुण्येन गिरिदुर्गं विशिष्यते' ॥

इति ॥ २४ ॥

**विष्वद्रीचीर्विक्षिपन् सैन्यवीचीराजावन्तः क्वापि दूरं प्रयातम् ।**
**बभ्रामैको बन्धुमिष्टं दिदृक्षुः सिन्धौ वाऽऽद्यो मण्डलं गोर्वराहः ॥ २५ ॥**

विश्वद्रीचीरिति ॥ एकः कश्चित् सुहृत् सुभटः आजौ सङ्ग्रामे, रणभुवीत्यर्थः । बभ्राम इतस्ततोऽटाट्यते स्म । किंलक्षणः एकः यतः क्वापि दूरं कुत्रापि दूरं विप्रकृष्टदेशं प्रयातं गतम् इष्टं वल्लभं बन्धुं सुहृदं दिदृक्षुः ईचिक्षिपुः, किंलक्षणः कश्चित् अत एव विश्वद्रीचीः सर्वव्यापिनीः सैन्यवीचीः बलोर्मीः विक्षिपन् प्रेरयन् । क इव बभ्रामेत्याह—

वाशब्द इवार्थे । यथा गोः मण्डलं भुवः मण्डलं क्वापि दूरं गतं मुडितं दिदृक्षुः आद्यः वराह इव श्रीभगवानिव । यथा स भूमण्डलं द्रष्टुं सिन्धौ अन्तः अम्बुधिमध्ये विष्वद्रीचीः सर्वतः प्रसरमाणाः वीचीः कल्लोलान् विक्षिपन् अस्यन् बभ्राम । विष्वक् समन्तात् अञ्चन्ति यान्तीति विष्वद्रीच्यः, क्विप्, 'विष्वग्देवयोश्चे'ति टेरद्र्यादेशः, अञ्चतेश्चेति ङीप् । विष्वद्रीचः इति पाठे वीचिशब्दस्य स्त्रीत्वं दुर्लभम् ॥ २५ ॥

विष्वद्रीचीरिति ॥ एकः कोऽपि वीरः विष्वगञ्चन्तीति विष्वद्रीचीः सर्वव्यापिनीः । 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इति टेरद्र्यादेशः । धातोरप्यञ्चतेरुपसङ्ख्यानात् 'उगितश्च' इति ङीप्, 'अचः' इत्यकारलोपे 'चौ' इति दीर्घः । सैन्यानि वीचिरिव सैन्यवीचिरित्युपमितसमासः, सिन्धौ वेति लिङ्गात् । विक्षिपन्नपाकुर्वन् अन्तराजिमध्ये क्वापि दूरं प्रयातमिष्टं बन्धुं दिदृक्षुर्द्रष्टुमिच्छुः सन् । दृशेः सन्नन्तादुप्रत्ययः । क्वापि प्रयातं मग्नं गोर्भूमेर्मण्डलं भूगोलं दिदृक्षुराद्यो वराहः सिन्धौ वा समुद्रे इव । 'उपमायां विकल्पे वा' इत्यमरः । आजौ बभ्राम । एकवीरस्य कुतो भयमित्यर्थः ॥ २५ ॥

**यावच्चक्रे नाऽञ्जनं बोधनाय विस्तारज्ञो (१)हस्तिचारी मदस्य ॥**
**सैन्य(२)स्वानाद्दन्तिनामात्मनैव स्थूलास्तावत्प्रावहन् दानकुल्याः ॥२६॥**

यावदिति ॥ हस्तिना गजेन चरतीति हस्तिचारी निषादी मदस्य बोधनाय दानस्योञ्छनाय यावत् अञ्जनं क्रियाविशेषं न चक्रे नारेभे, तावदेव दन्तिनां गजानाम् आत्मनैव स्वयमेव स्थूला दीर्घाः दानकुल्याः मदनद्यः प्रावहन् प्रसस्रुः । कस्मात् सैन्यस्वानात् अनीककोलाहलात् । युद्धकाले जनारवाकर्णनादेव कुञ्जराणां मदजलानि श्च्योतन्तीति । किंलक्षणो हस्तिचारी विस्तारज्ञः विस्तारं मदोत्थानं जानातीति विस्तारज्ञः । हस्तिव्यवहारपण्डित इत्यर्थः ॥ २६ ॥

यावदिति ॥ व्युत्थानं गजोत्थापनं जानातीति व्युत्थानज्ञः, हस्तिनि चरतीति हस्तिचारी यन्ता मदस्य बोधनायोत्थापनायाऽञ्जनमुद्दीपनं कर्म यावन्न चक्रे, तावत्प्रागेव । असमाप्ते विधावित्यर्थः । सेनास्वानात्, सेनाकलकलश्रवणादित्यर्थः । दन्तिनामात्मना स्वयमेव स्थूला महत्यो दानकुल्या मदसरितः प्रावहन्निति दन्तिनामुत्साहातिरेकोक्तिः । अञ्जनात्प्राक् दानसम्बन्धोक्तेरतिशयोक्तिः ॥ २६ ॥

**क्रुध्यन् गन्धादन्यनागाय दूरादारोढारं धूतमूर्धाऽवमत्य ॥**
**घोरारावध्वानिताशेषदिक्के(३)दिक्के नागः पर्यणंसीत् स्व एव ॥ २७ ॥**

क्रुध्यन्निति ॥ कश्चिन्नागः करी स्वे एव दिक्के निजे एव कलभे पर्यणंसीत् निपपात परिणतः । यतः किंलक्षणो नागः अन्यनागाय प्रतिद्विरदाय गन्धात् मदगन्धोपलब्धेः दूरादेव क्रुध्यन् रुष्यन्, किं कृत्वा पर्यणंसीत् आरोढारं यन्तारम् अवमत्य अवज्ञाय, अत एव अपरं किंलक्षणो नागः धूतमूर्धा कम्पितमस्तकः, किंलक्षणे दिक्के घोराऽऽरावध्वानिताऽशेषदिक्के घोरारावेण रौद्रशब्देन ध्वानिता मुखरिताः अशेषाः सकला दिशः काष्ठा येन सः तथा तस्मिन् । स्वे इति ज्ञातित्वात् सर्वनामसंज्ञाऽभावः । पुत्रो हि कथं न ज्ञातिः । अष्टादशवर्षः करी दिक्क उच्यते । पर्यणंसीदिति, यमरमनमातां सक्च ॥ २७ ॥

क्रुध्यन्निति ॥ दूराद् दूरत एव गन्धान्मदगन्धाघ्राणात् अन्यनागाय प्रतिगजाय क्रुध्यन् । तं जिघांसुरित्यर्थः । 'क्रुधद्रुह-' इत्यादिना सम्प्रदानत्वम् । नागो धूनमूर्धा विधूनमस्तकः सन् आरोढारं यन्तारमवमत्याऽवधूय घोरारावैर्दारुणक्रन्दनैः ध्वानिता अशेषदिशो येन तस्मिंस्तथा । उच्चैराक्रोशतीत्यर्थः ।

(१) व्युत्थानज्ञो । (२) सेना । (३) विष्के ।

शैषिकः कप्रत्ययः। स्वे स्वकीय एव, स्वपुत्रे एवेत्यर्थः। 'पूर्वादिभ्यो नवभ्यो वा' इति विकल्पाश्च स्मिन्नादेशः। अत एव स्वे स्वपुत्रे विष्क इति श्लिष्टगत्या व्याख्याय पुत्रस्यापि ज्ञातित्वान्न सर्वनामसंज्ञेति वल्लभोक्तिः प्रामादिकी। विष्के विंशतिवर्षके डिम्भे।'विष्को विंशतिवर्षकः'इति वैजयन्ती। पर्यणंसीत्। तिर्यक्प्रजहारेत्यर्थः। 'तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः' इति हलायुधः। 'यमरमनमातां सक्च' इति नमेर्लुङि सगिडागमौ, 'नेटि' इति वृद्धिप्रतिषेधः॥ २७॥

**प्रत्यासन्ने दन्तिनि प्रातिपक्षे यन्त्रा नागः प्रास्तवक्त्रच्छदोऽपि॥**
**क्रोधाक्रान्तक्रूर(१)निर्दारिताक्षः प्रेक्षाञ्चक्रे नैव किञ्चिन्मदाऽन्धः॥२८॥**

**प्रत्यासन्ने इति॥** कश्चिन्नागः पीलुः किञ्चिन्नैव प्रेक्षाञ्चक्रे न किमपि ददर्श। तर्हि कदाचित् मुखं प्रच्छादितं स्यान्नेत्याह—किंलक्षणो नागः यन्त्रा निषादिना प्रास्तवक्त्रच्छदोऽपि निराकृतवदनाच्छादनवसनोऽपि, अपरं किंलक्षणो नागः क्रोधाक्रान्तक्रूरनिर्दारिताक्षः कोपनिर्भरभीषणविवृत्तनयनोऽपि, क्व सति नाऽद्राक्षीदित्याह—प्रातिपक्षे दन्तिनि शात्रवे हस्तिनि प्रत्यासन्ने सति निकटस्थे सति। अत्र प्रतिगजालोकनमेव कारणम्। कथं तर्हि नैक्षतेत्याह—यतः अपरं किंलक्षणो नागः मदान्धः दानपिहितनेत्रः। अत्रापि तदेव कारणम्। अन्योऽपि मदान्धो न किञ्चित् पश्यतीति॥ २८॥

**प्रत्यासन्ने इति॥** प्रातिपक्षे प्रतिपक्षसम्बन्धिनि। 'तस्येदम्' इत्यण्। दन्तिनि गजे प्रत्यासन्ने सति यन्त्रा सादिना प्रास्तवक्त्रच्छदोऽपि निरस्तमुखपटोऽपि क्रोधाक्रान्तः अत एव क्रूरं घोरं निर्दारिताक्षः तथापि मदान्धो नागो गजो न किञ्चिदेव प्रेक्षाञ्चक्रे। किमपि पुरोगतं प्रातिपक्षमन्यद्वा न ददर्शेत्यर्थः। आवरणान्तारभावेऽपि मदावरणस्याऽनपायादिति भावः। 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्ययः। अत्र अनावृत्तोन्मीलिताक्षस्याप्यदर्शनाविरोधस्य मदान्धेनाविरोधाद्विरोधाभासोऽलङ्कारः॥ २८॥

**तूर्णं यावन्नाऽपनिन्ये निषादी वासश्चक्षुर्वारणं वारणस्य॥**
**तावत्पूगैरन्यनागाधिरोहः (२)कादम्बानामेकपातैरसीव्यत्॥ २९॥**

**तूर्णमिति॥** निषादी यन्ता वारणस्याऽनेकपस्य चक्षुर्वारणं दृष्टिनिरोधकं वासः मुखच्छदाख्यं यावत् नाऽपनिन्ये न निरास, तावदेव तत्क्षणमेव अन्यनागाधिरोहः प्रतिद्विरदसादी तूर्णं शीघ्रं कादम्बानां पूगैः शराणां जालैः तद्वासः असीव्यत् मुखलग्नं चकार, इति चातुर्योक्तिः। किंलक्षणैः कादम्बानां पूगैः एकपातैः एकः पातो येषां ते एकपाताः तैः सन्ततगामिभिः। अन्यं नागमधिरोहतीति अन्यनागाधिरोहः॥ २९॥

**तूर्णमिति॥** निषादी यन्ता वारणस्य गजस्य चक्षुर्वारणं नेत्रावरणं वासो मुखपटं यावत्तूर्णं नाऽपनिन्ये नाऽपचकार तावदन्यनागाधिरूढः प्रतिगजाधिरोहः, एक एककालीनः पातो येषां तैरेकपातैर्युगपत्पातिभिरिति शीघ्रतोक्तिः। कादम्बानां शराणाम्। 'कादम्बमार्गणशराः' इत्यमरः। पूगैर्वातैरसीव्यत्। चक्षुषा सह तद्वासः स्यूतवानित्यर्थः। सीव्यतेर्लङ्। अत्र चक्षुषः सीवनाऽसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः॥ २९॥

**आस्थद् दूराच्छदं चाऽप्रमत्तो यन्ता यातः (३)प्रत्यरीभं द्विपस्य॥**
**मग्नस्योच्चैर्बर्हभारेण शङ्कोरावव्राते वीक्षणे च क्षणेन॥ ३०॥**

**आस्थदिति॥** यन्ता हस्तिपकः अप्रमत्तः सावधानः सन् प्रत्यरीभं प्रतिपक्षद्विपसंमुखं यातो गच्छतः द्विपस्य करिणः दृष्टेः आच्छदं नयनयोराच्छादकं मुखपटम् आस्थत् चिक्षेप, तावदेव उच्चैर्महतः शङ्कोर्भल्लस्य मग्नस्य त्रुटितस्य सम्बन्धिना बर्हभारेण

(१) क्रोधाक्रान्त। (२) ०धिरूढः। (३) यातुः।

मयूरपिच्छभारेण तस्य वीक्षणे नयने क्षणेन तत्क्षणमेव आवव्राते व्यधायिषातां पिहिते च । चशब्दौ समुच्चयं ब्रुवाणौ एककालत्वमाहतुः । आस्थदिति 'अस्यतेस्थुक्' इति थुक् । आवव्राते इति वृञः कर्मणि । शङ्कुरायुधविशेषः । बर्हेलाञ्छनः(?) ॥ ३० ॥

आस्थदिति ॥ यन्ताऽप्रमत्तः सन् प्रत्यरीभमरिगजं प्रति । आभिमुख्येऽव्ययीभावः । यातुर्गन्तुः यातेस्तृच् । द्विपस्य दृष्टेराच्छदमावरणम् । पुंसि संज्ञायां घः । आस्थन्निरस्तवान् । 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः, 'अस्यतेस्थुक्' इति थुगागमः । मग्नस्य मुखनिमग्नस्य शङ्कोः शल्यायुधस्य । 'वा पुंसि शल्यं शङ्कुर्ना' इत्यमरः । उच्चैर्बर्हभारेण पिच्छपटलेन वीक्षणे चक्षुषी क्षणेनाऽऽवव्राते आवृते । वृणोतेः कर्मणि लिट् । अन्योन्यसमुच्चयचकाराभ्यामावरणनिरासे पुनरावरणयोरेककाले सम्बन्धोक्तेरतिशयोक्तिः ॥ ३० ॥

**यत्नाद्रक्षन् सुस्थितत्वादनाशं निश्चिन्तोऽन्य(१)श्चेतसा भावितेन ॥**
**अन्त्यावस्थाकालयोग्योपयोगं दध्रेऽभीष्टं नागमापद्धनं वा ॥ ३१ ॥**

यत्नादिति ॥ अन्यः कश्चित् निषादी नागं दध्रे गजम् अरुधत्, सङ्ग्रामभुवं न न्यवीविशदित्यर्थः । यतः किंलक्षणं नागम् अन्त्यावस्थाकालयोग्योपयोगम् अन्त्यावस्थायाः चरमदशायाः कालः समयः तत्र योग्यः घटमानः उपयोगः उपयोजनं प्रेरणं यस्य सः तथा तं, तत्रोपकारिणमित्यर्थः । यदाऽहमाभीतो भवेयं तदाऽस्यावसरः । अपरं किंलक्षणं नागम् अनाशमक्षयं, कुतः सुस्थितत्वात् निरपायदेशेऽवस्थितत्वात् । किंलक्षणो निषादी अत एव निश्चिन्तः निर्भयः, अपरं किंलक्षणः भावितेन चेतसा विश्वासवता चेतसा मनसा यत्नात् रक्षन् आदरात् पालयन् । नूनमवसन्ने याने दुष्करं कर्म न कार्यमिति चेतसो भावना किमिव दध्रे । वा शब्द इवार्थे, आपद्धनं वा सञ्चयार्थमिव । यथा कश्चित् भावितेन विश्वस्तेन चेतसा यत्नाद्रक्षन् सन् आपद्धनमापत्कालधनं धारयति न व्ययीकुरुते इत्यर्थः । यतोऽन्त्यावस्थाकाले दरिद्रदशासमये अस्य योग्यः उपयोगः प्रवृत्तिः इति कर्मधारयः । उपयोगः उपकारः । यदि बहुव्रीहिः, तदा उपयोगस्तु व्यापारः । तदा शोभने स्थाने स्थापितत्वात् अनाशं भवति । अत एवासौ निश्चिन्तः ॥ ३१ ॥

यत्नादिति ॥ अन्यः गजारोहः भावितेनालोचितेन चेतसा सुस्थितत्वादनपायिदेशत्वादनाशमनपायं निश्चिन्य यत्नाद्रक्षन् वञ्चकेभ्यस्त्रायन् (२) सन् अन्त्यावस्थाकाले साधनान्तरकाले नाशकाले योग्योपयोगम् अत एवाऽभीष्टं नागं गजमापद्धनं वा आपद्धनमिव दध्रे अन्यतोऽपसार्य धारयामास । धरतेः स्वरितेत्त्वात्कर्तरि लिट् तङ् ॥ ३१ ॥

**अन्योन्येषां पुष्करैरामृशन्तो दानोद्भेदानुच्चकैर्भुग्नवालाः ॥**
**उन्मूर्धानः संनिषद्याऽपराभिः (३)प्रायुध्यन्त स्पष्टदन्तध्वनीभाः ॥३२॥**

अन्योन्येषामिति ॥ इभा हस्तिनः प्रायुध्यन्त प्रकर्षेण युयुधिरे । कथं स्पष्टदन्तध्वनि स्पष्टः प्रकटः दन्तध्वनिः रदनशब्दो यत्र यस्यां क्रियायां तथा, किंलक्षणाः इभाः पुष्करैः कराग्रैः कृत्वा अन्योन्येषां परस्परेषां दानोद्भेदान् मदस्रुतिमार्गान् आमृशन्तः स्पृशन्तः, इति जातिस्वभावः । अपरं किंलक्षणाः इभाः उच्चैः उन्नताः, अपरं किंलक्षणाः इभाः भुग्नवालाः आकुञ्चितपुच्छाः, अपरं किंलक्षणाः इभाः उन्मूर्धानः उत्क्षिप्तशिरसः, गात्रमूर्ध्वीकृत्वेत्यर्थः । किं कृत्वा अपराभिः पश्चाद्भागैः संनिषद्य सम्यक् स्थित्वा ३२

---

(१) निश्चित्याऽन्य । (२) त्रैङो ङित्त्वात्परस्मैपदं चिन्त्यम् । (३) संनिपत्याऽपरान्तः ।

अन्योन्येषामिति ॥ इभा गजाः अन्योन्येषां परस्परेषाम् । 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवत' इति वक्तव्याद् द्वित्वम्, समासश्च। 'बहुलम्' इति विकल्पादसमासत्वपक्षे पूर्वपदस्य प्रथमैकवचनं वक्तव्यम्। डाह्रियन्ते एष्विति डङ्केदाः। 'अकर्तरि च कारके संज्ञायाम्' इत्यधिकरणार्थे घञ् प्रत्ययः। दानेड्डदान् कटादिमदस्थानानि पुष्करैर्हस्ताग्रैः। 'पुष्करं करिहस्ताग्रे' इत्यमरः। आमृशन्तो जिघ्रन्त उच्चकैरुन्नता भुग्नवालाः प्रह्वीकृतपुच्छाः। 'बालः केशे शिशौ मूर्खे वालो वाजीभपुच्छयोः' इति विश्वः। उन्मूर्धान उन्नतमस्तकाः सन्तः स्पष्टदन्तध्वनि यथा तथा संनिपत्याऽपरान्तैः सह प्रायुध्यन्त। दिवादियुध्यतेः कर्तरि लङ्। स्वभावोक्ति ॥३२॥

**द्राघीयांसः संहताः स्थाम(१)भाजश्चारूदग्रास्तीक्ष्णतामत्यजन्तः ॥**
**दन्ता दन्तैराहताः सामजानां भङ्गं जग्मुर्न स्वयं सामजाताः ॥३३॥**

**द्राघीयांस इति ॥** सामजानां करिणां सम्बन्धिभिः दन्तैः दशनैः आहताः ताडिताः सन्तः दन्ता भङ्गं जग्मुः खण्डनां प्रापुः, न तु स्वयं सामजाताः सामजाः हस्तिनो भङ्गं जग्मुः भग्नाः, पलायिता इत्यर्थः। सामजाता इति करिणां विशेषणं, न तु दन्तानाम् इति। भयद्धिसामजग्रहणा(?)दन्ययोरप्येवं स्यात्। दन्तैः आहताः सामजानां दन्ता भग्नाः न तु स्वयमिति। किंलक्षणाः दन्ताः सामजा वा, दन्तास्तावत् द्राघीयांसः अतिदीर्घाः स्थूलाः, अपरं किंलक्षणाः संहताः अविरलाः, अपरं किंलक्षणाः स्थामभाजः बलवन्तः। 'विद्या बलं सह स्थाम द्युम्नेतर शुष्म च,(?)। यदि वा स्थामभाजः स्थिराः दृढाः, अपरं किंलक्षणाः चारूदग्राः चारवश्च ते उदग्राश्च चारूदग्राः चारवो रम्यवर्णाढ्याः उदग्राः भीषणाश्च, अपरं किंलक्षणाः तीक्ष्णतामत्यजन्तः कर्कशत्वममुञ्चन्तः, सामजाश्च किंलक्षणाः द्राघीयांसः अतिशयेन दीर्घाः। 'प्रियस्थिरे'त्यादिना इयसुनि द्राघादेशः। संहताश्च घण्टाबन्धात् स्थामभाजः, तथा चारवः उदग्रा भीषणाश्च तथा तीक्ष्णा अकातराः। स्थेमभाज-इति पाठे जयादित्यमतेन स्थिरशब्दस्यापि पृथ्वादित्वादिमनिचि 'प्रियस्थिरे'ति स्थादेशः॥

द्राघीयांस इति ॥ द्राघीयांसो दीर्घतराः। 'प्रियस्थिर—' इत्यादिना दीर्घस्य ईयसुनि द्राघादेशः। संहताः सुघटिताः अत एव स्थेमभाजः स्थैर्यभाजः। 'प्रियस्थिर—' इत्यादिना स्थिरशब्दस्येमनिचि स्थादेशः। चारवो रम्या उदग्रा उन्नताश्च ते चारूदग्राः। विशेषणसमासः। तीक्ष्णतां नैशित्यम् अत्यजन्तः सामजाना गजानां दन्ताः दन्तैः प्रतिगजविषाणैराहताः सन्तो भङ्गं भेदं जग्मुः बभञ्जुः। सामजाताः दान्तिनस्तु स्वयं भङ्गं पराजयं न जग्मुः। दन्तभङ्गेऽपि स्वयं न परावर्तन्त इत्यर्थः। अत्राऽपरावर्तित्वेन वर्ण्यतया प्रकृतत्वादुपमेयानां दन्तिनामुपमानदन्तापेक्षया अभग्नत्वेनाधिक्योक्तेर्व्यतिरेकस्तुल्ययोगिताया बाधक इति गमयितव्यम् ॥ ३३ ॥

**मातङ्गानां दन्तसङ्घट्टजन्मा हेमच्छेदच्छायचञ्चच्छिखाग्रः ॥**
**लग्नोऽप्यग्निश्चामरेषु प्रकामं माञ्जिष्ठेषु व्यज्यते न स्म सैन्यैः ॥ ३४ ॥**

**मातङ्गानामिति ॥** मातङ्गानां हस्तिनां चामरेषु प्रकीर्णकेषु प्रकाममत्यर्थं लग्नोऽपि श्लिष्टोऽपि अग्निः ज्वलनः सैनिकैः सुभटैः न व्यज्यते स्म नोपलक्ष्यते स्म। किंलक्षणेषु चामरेषु माञ्जिष्ठेषु मञ्जिष्ठया समङ्गया रञ्जितेषु, रक्तेष्वित्यर्थः। अतश्च सौवर्णत्वात् अग्नेरपरिज्ञानम्। ननु तत्र वह्निः कुतस्त्यः, तत्राह—किंलक्षणोऽग्निः दन्तसङ्घट्टजन्मा रदनसम्पेषसमुत्थः, दन्तानां सङ्घट्टात् आस्फालनात् जन्म उत्पत्तिर्यस्य सः तथा, अपरं किंलक्षणो वह्निः हेमच्छेदच्छायचञ्चच्छिखाग्रः हेमच्छेदच्छायानि रुक्मभङ्गकान्तीनि चञ्चन्ति स्फुरमाणानि शिखाग्राणि ज्वालान्ता यस्य सः तथोक्तः ॥३४॥

---

(१) स्थेम।

मातङ्गानामिति ॥ मातङ्गानां दन्तिनां दन्तसङ्घट्टजन्मा दन्तसङ्घर्षोत्थः हेमच्छेदच्छायानि कनकपराग-वर्णानि चञ्चन्ति चलन्ति च शिखाग्राणि ज्वालाग्राणि यस्य सोऽग्निः मञ्जिष्ठया ओषधिविशेषेण रक्तेषु माञ्जिष्ठेषु । 'तेन रक्तं रागात्' इत्यण्प्रत्ययः । 'मञ्जिष्ठा विकसा जिङ्गी' इत्यमरः । चामरेषु लग्नोऽपि सैन्यैः प्रकामं न व्यज्यते न विविच्यते स्म । सावर्ण्यादिति भावः । अतः सामान्यालङ्कारः । 'सामान्यं गुण-साम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् । स च विशेषणोत्थकाव्यलिङ्गसङ्कीर्णः ॥ ३४ ॥

**ओषामासे मत्सरोत्पातवाताऽऽश्लिष्यद्दन्तक्ष्मारुहां घर्षणोत्थैः ॥**
**यौगान्तैर्वा वह्निभिर्वारणानामुच्चैर्मूर्धव्योम्नि नक्षत्रमाला ॥ ३५ ॥**

**ओषामासे इति ॥ वारणानां गजानाम् उच्चैः उच्चे मूर्धव्योम्नि शिरोनभसि नक्षत्र-माला अलङ्करणमाला ओषामासे दग्धा । कैः वह्निभिर्वैश्वानरैः, किंलक्षणैर्वह्निभिः मत्सरो-त्पातवाताऽऽश्लिष्यद्दन्तक्ष्मारुहां मत्सरः क्रोध एव उत्पातवातः कल्पान्तकालसमीरणः तेनाऽऽश्लिष्यन्तो मिलन्तो ये दन्ताः रदनाः त एव स्थौल्यात् क्ष्मारुहो वृक्षाः तेषां घर्षणं सङ्घट्टनं तस्मात् उत्थैः उदितैः । अपरं किंलक्षणैर्वह्निभिः, वा शब्द इवार्थे, उत्प्रेक्ष्यन्ते-यौगान्तैर्वा युगान्ते भवाः यौगान्ताः तैः कल्पावसानवह्नितुल्यैः । यथा उत्पातसमीरण-श्लिष्यद्भूरुहसम्पेपोत्थैः युगान्ताग्निभिः किल व्योम्नि नक्षत्रमाला तारावलिर्दह्यते । ओषामासे इति कर्मणि लकारः । 'उपविदे'त्याम्, अगुरुत्वात् ॥ ३५ ॥**

ओषामासे इति ॥ मत्सरो वैरमेवोत्पातवात आकस्मिकवायुस्तेनाश्लिष्यतां संयुज्यमानानां दन्ताना-मेव क्ष्मारुहां वृक्षाणां घर्षणेनोत्था जन्म येषां तैर्वाह्निभिर्यौगान्तैर्वा युगान्तभवैर्वह्निभिरिव वारणानामुच्चैरुन्नतै-मूर्धा व्योमेव तस्मिन्मूर्धव्योम्नि नक्षत्रमाला हारविशेषः । 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्य-मरः । ज्योतिर्मण्डलं च ओषामासे । दग्धेत्यर्थः । 'उष दाहे' इति धातोः कर्मणि लिट् । 'उषविदजागृभ्यो-ऽन्यतरस्याम्' इत्याम्प्रत्ययः । लघूपधगुणः 'कृञ्चाऽनुप्रयुज्यते लिटि' इत्यस्तेश्चाऽनुप्रयोगः । अत्र नक्षत्र-मालयोरभेदाध्यवसायेन निर्देशाद्रूपकश्लेषसङ्कीर्णेयमुपमा ॥ ३५ ॥

**सान्द्राऽम्भोदश्यामले सामजानां वृन्दे नीताः शोणितैः शोणिमानम् ॥**
**दन्ताः शोभामापुरम्भोनिधीनां कन्दोद्भेदा वैद्रुमा वारिणीव ॥ ३६ ॥**

**सान्द्राम्भोदेति ॥ सामजानां वृन्दे द्विपेन्द्राणां विसरे दन्ताः दशनाः शोभामापुः बभुः । किंलक्षणे सामजानां वृन्दे सान्द्राऽम्भोदश्यामले घनाघननीले, किंलक्षणाः दन्ताः शोणितैः रुधिरैः शोणिमानं लोहितिमानं नीता आपादिताः, कस्मिन् के इव शोभन्ते इत्याह—अम्भोनिधीनां वारिणि समुद्राणां पयसि वैद्रुमाः प्रवालसम्बन्धिनः कन्दोद्भेदाः अङ्कुरा इव । यथा समुद्राणां पयसि विद्रुमाऽङ्कुराः शोभां प्राप्नुवन्ति । श्याम इव श्यामलः । यदि वा श्यामं लातीति श्यामलः ॥ ३६ ॥**

सान्द्राम्भोदेति ॥ सान्द्रं च तदम्भोदश्यामलं च तस्मिन् सामजानां गजानां वृन्दे शोणितैः शोणिमान-मारुण्यं नीता दन्ताः अम्भोनिधीनां वारिनिधानां वारिणीव विद्रुमाणां प्रवालानामिमे वैद्रुमाः । 'विद्रुमः पुंसि प्रवालं पुंनपुंसकम्' इत्यमरः । कन्दो मूलपिण्डः तस्योद्भेदाः प्ररोहा इव शोभामापुरित्युपमा ॥ ३६ ॥

**आकम्पाग्रैः केतुभिः संनिपातं तारोदीर्णग्रैवनादं व्रजन्तः ॥**
**मग्नानङ्गे गाढमन्यद्विपानां दन्तान् दुःखादुत्खनन्ति स्म नागाः ॥ ३७ ॥**

**आकम्पाग्रैरिति ॥ नागाः गजाः अन्यद्विपानां प्रतिगजानाम् अङ्गे गाढमत्यर्थं मग्नान् त्रुटितान् दन्तान् दशनान् दुःखात् कृच्छ्रात् उत्खनन्ति स्म उच्चख्नुः । किंलक्षणाः**

नागाः केतुभिर्ध्वजैः सन्निपातं संश्लेषं मिश्रीभावं व्रजन्तो यान्तः, किंलक्षणैः केतुभिः आकम्प्राग्रैः आकम्प्राणि एजमानानि अग्राणि कोटयो येषां ते आकम्पाग्राः तैः चिह्नै· मिश्रीभावं व्रजन्तः तारोदीर्णग्रैवनादं यथा भवति तारः अत्युच्चः उदीर्णः उत्थितः ग्रैवाणां ग्रीवाशृङ्खलानां नादः रवो यत्र यस्यां क्रियायां तद्यथा भवतीति। यदा ह्येतेषां केतवोऽन्यो- न्यं सम्बद्धाः, तदा दुःखेन विश्लेषो भवतीति। दन्तानां केतुसन्निपातात् गाढमग्न- त्वाच्च दुरुत्खनत्वम्। जगत्विख्यातस्योदीर्णशब्दः(?) ॥ ३७ ॥

आकम्प्राग्रैरिति ॥ आकम्प्राणि दन्तोत्खननसंक्षोभाद् भृशं कम्प्राण्यग्राणि येषां तैः केतुभिर्ध्वजैः संनि पातं सङ्कर्षं व्रजन्त इति दुःखहेतूक्तिः, नागा गजास्तारमुच्चैरुदीर्णं उत्पन्नः ग्रैवाणां ग्रीवामूत्पन्नानां शृङ्खल- भूषणादीनां नादो यस्मिन्कर्मणि तत्तथा अन्यद्विपानां प्रतिगजानामङ्गे गाढं मग्नान् अन्तः प्रविष्टान् दन्तान्दुःखा दुत्खनन्ति स्म। तेषां गाढमग्नत्वात्स्वयं केतुभाराक्रान्तत्वाच्च कृच्छ्रादुज्जहुरित्यर्थः। अत्रोक्तभारमज्जनयो- र्विशेषणगत्या दुःखोत्खननहेतुत्वात्काव्यलिङ्गम् ॥ ३७ ॥

उत्क्षिप्योच्चैरस्फुरन्तं (१)रदाभ्यामीषादन्तः कुञ्जरं शात्रवीयम् ॥
शृङ्गप्रोतप्रावृषेण्याऽम्बुदस्य स्पष्टं प्रापत् साम्यमुर्वीधरस्य ॥ ३८ ॥

उत्क्षिप्येति ॥ ईषा रथकीलिका सा इव तत्तुल्यौ तीक्ष्णौ दन्तौ विषाणौ यस्य स ईषादन्तो गजः शात्रवीयं शत्रुसम्बन्धिनं परकीयं कुञ्जरं हस्तिनं रदाभ्यां विषाणाभ्याम् उच्चैः अतिशयेन उत्क्षिप्य ऊर्ध्वं क्षिप्त्वा स्पष्टं प्रकटम् उर्वीधरस्य पर्वतस्य साम्यं समत्वं प्रापत् लेभे। किंलक्षणं कुञ्जरम् अस्फुरन्तं मृतम्, किंलक्षणस्य उर्वीधरस्य शृङ्गप्रोत- प्रावृषेण्याऽम्बुदस्य शिरःस्यूतवार्षिकवारिदस्य अद्रेः सादृश्यं लेभे। शत्रुरेव शात्रवः,तस्यैव शात्रवीयम्। प्रावृषि भवः प्रावृषेण्यः ॥ ३८ ॥

उत्क्षिप्येति ॥ ईषे लाङ्गलदण्डाविव दन्तौ यस्य स ईषादन्तो महादन्तो दन्ती। 'ईषा लाङ्गलदण्डः स्यात्' इत्यमरः। अस्फुरन्तं प्राणोत्क्रमणदुःखादुल्लसन्तं शात्रवस्येदं शात्रवीयं कुञ्जरं रदाभ्यां दन्ताभ्या उच्चैरुत्क्षिप्योर्ध्वमुद्यम्य शृङ्गे शिखरे प्रोतः स्यूतः प्रावृषेण्यः प्रावृषि भवोऽम्बुदो यस्य तस्य। 'प्रावृष- एण्य.' इत्येण्यप्रत्ययः। उर्वीधरस्य गिरेः साम्यं सादृश्यं स्पष्टं प्रापत्। आप्नोतेर्लुङि 'पुषादि—' इति च्लेरङादेशः ॥ ३८ ॥

भग्नेऽपीभे स्वे परावृत्य(२)देहं योद्धा सार्धं व्रीडया मुञ्चतेषून् ॥
साकं यन्तुः संमदेनाऽनुबन्धी दूनोऽभीक्ष्णं वारणः प्रत्यरोधि ॥ ३९ ॥

भग्नेऽपीति ॥ केनचित् योद्धा योधेन अनुबन्धी उत्तम्भकः वारणः प्रतिगजः प्रत्यरोधि निवारितः। किं केवलेनेत्याह—कथं निवारितः यन्तुः संमदेन साकं सादिन- उद्भवेन सह। इभे निरस्ते यन्तुरपि हर्षोचितत्वमित्यर्थः। कदाचित् तस्येभो मत्तो भवेदित्याह-क सति स्वे इभे निजे गजे भग्नेऽपि पलायितेऽपि सति। कथं तर्हि अरोधि देहं परावृत्य शरीरं परावृत्तं कृत्वा इषून् बाणान् मुञ्चता अस्यता, व्रीडया सार्धं लज्जया सह। पलायमाने करिणि लज्जया तानपि स्वयमभग्नत्वात् त्यजतेत्यर्थः। किंलक्षणो वारणः अभीक्ष्णमत्यर्थं दूनः योद्धृशरैः पीडितः, अत एव रोधितः ॥ ३९ ॥

भग्नेऽपीति ॥ स्वे स्वकीये इभे गजे भग्नेऽपि देहं स्वाङ्गं परावर्त्य प्रतिपक्षाभिमुखमावर्त्य। वृते- र्ण्यन्तात्ल्यप्। अण्यन्तस्त्वपपाठः, अकर्मकस्य कर्माऽनन्वयात्। व्रीडया सार्धमिषून्मुञ्चता। इषुमोक्षणेन

---

(१) ०च्चैः रस्फुरन्तं। (२) परावर्त्य।

स्वगजभङ्गव्रीडां निरस्यतेत्यर्थः । योद्ध्रा भग्नेभस्थेन भटेन कर्त्रा अभीक्ष्णं दून इषुभिस्ततः । 'ल्वादिभ्यः' इति निष्ठानत्वम् । अनुबध्नातीत्यनुबन्धी वारणो यन्तुः प्रतिगजारोहस्य संमदेन साकं स्वेभजयजन्येन हर्षेण सह । 'प्रमदसंमदौ हर्षे' इति निपातः । प्रत्यरोधि प्रतिरुद्धः । तत्प्रतिरोधेन तत्संमदस्यापि प्रतिरोधव्याप्तेरिति भावः । 'साकं सार्धं समं सह' इत्यमरः । अत्र व्रीडितेषुमोक्षयोः संमदयन्तृप्रतिरोधयोश्च कारणयोस्तत्पौर्वापर्यविपर्ययरूपयातिशयोक्त्या सहभावोक्तेः सहोक्तिः सङ्कीर्यते ॥ ३९ ॥

**व्याप्तं लोकैर्दुःखलभ्याऽपसारं संरम्भित्वादेत्य धीरो महीयः ॥**
**सेनामध्यं गाहते वारणः स्म ब्रह्मेव प्रागादिदेवोदरान्तः ॥ ४० ॥**

**व्याप्तमिति ॥ कश्चिद्वारणः गजः संरम्भित्वात् क्षोभात् एत्य प्राप्य सेनामध्यं गाहते स्म परसैन्यमध्यं जगाहे व्यलोडयत् । किंलक्षणं सेनामध्यं महीयः अतिविस्तीर्णं, यतः अपरं किंलक्षणं लोकैर्व्याप्तं योधैः सङ्कुलम् , अपरं किंलक्षणं सेनामध्यम् अत एव दुःखलभ्याऽपसारं दुःखेन लभ्यः प्राप्यः अपसारो निर्गमो यस्मात् तत्तथा कृच्छ्रप्राप्तव्यनिर्गमं, कथं तर्हि जगाहे, किंलक्षणो वारणः धीरः बलवान् , क इव ब्रह्मेव । यथा प्राक् पूर्वं कल्पान्ते आदिदेवोदरान्तः आदिदेवस्य विभोः उदरान्तः कुक्षिमध्यं ब्रह्मा मार्कण्डयो जगाहे । तदपि सर्वैर्लोकैर्व्याप्तं दुःखलभ्याऽपसारं महीयश्च । सोऽपि धीरो निर्भयश्च निर्मोहः । अन्तः-शब्दस्याधिकरणप्रधानता चिन्त्या(?) ॥ ४० ॥**

**व्याप्तमिति** ॥ वारणः कश्चिद्दन्ती संरम्भित्वात्क्रोधित्वात् । 'संरम्भः सम्भ्रमे कोपे' इति **विश्वः** । धीरो निर्भीकः सन् एत्यागत्य महीयो विपुलं लोकैर्जनैः अन्यत्र भुवनैश्च व्याप्तम् । 'लोकस्तु भुवने जने' **इत्यमरः** । अतो दुःखलभ्योऽपसारोऽपसरणं यत्र तत्सेनामध्यं प्राक् पुरा आदिदेवस्य विष्णोः उदरान्तरुदराभ्यन्तरं ब्रह्मा स्रष्टेव गाहते स्म प्रविवेश । पुरा किल वाद्यं सिसृक्षुर्ब्रह्मा पूर्वसृष्टिदिदृक्षया विष्णोः कुक्षिं प्राविशदिति पौराणिकी कथा । केचिद्ब्रह्मा ब्राह्मणो मार्कण्डेय इति व्याचक्षते । सोऽपि भगवन्महिमाऽवलोकनकौतुकात्तदनुज्ञया महाप्रलये तदुदरं प्रविश्य बभ्रामेत्यागमः । 'ब्रह्मा विप्रः प्रजापतिः' **इत्यमरः** । उपमालङ्कारः ॥ ४० ॥

**भृङ्गश्रेणीश्यामभासां समूहैर्नाराचानां विद्धनीरन्ध्रदेहः ॥**
**निर्भीकत्वादाहवेऽनाहतेच्छो हृष्यन् हस्ती हृष्टरोमेव रेजे ॥ ४१ ॥**

**भृङ्गेति ॥ हस्ती रेजे दन्ती बभौ । किंलक्षणो हस्ती निर्भीकत्वात् त्रासशून्यत्वात् आहवे सङ्ग्रामेऽनाहतेच्छः नष्टवाञ्छः, तथा यो मत्तत्वात् भृङ्गश्रेणीश्यामभासाम् अलि-पङ्क्तिश्यामच्छवीनां नाराचानां बाणानां समूहैः स्तोमैः विद्धनीरन्ध्रदेहः विद्धः स्यूतो नीरन्ध्रो निर्विवरः देहः मूर्तिः यस्य सः तथा, अतश्च हृष्यन् प्रीतिं प्राप्नुवन् । किंलक्षणो दन्ती, उत्प्रेक्ष्यते—हृष्टरोमा इव कण्टकित इव । नाराचवृन्दानि हृषितरोमस्थानीयानि । योऽपि हृष्यति, स हृष्टरोमाऽनाहतेच्छश्च भवति । हृष्टानि हृषितानि रोमाणि तनूरुहाणि यस्य सः हृष्टरोमा ॥ ४१ ॥**

**भृङ्गेति** ॥ भृङ्गश्रेणीव श्यामभासां कृष्णवर्णानां नाराचानामयोमयेषुविशेषाणां समूहैः विद्धो नीरन्ध्रो निर्विवरो देहो यस्य सः तथापि निर्भीकत्वादाहवेऽनाहतेच्छः अव्याहतोत्साहः अत एव हृष्यन् मोदमानो हस्ती हृष्टरोमेव हर्षात्पुलकित इवेत्युत्प्रेक्षा । 'हृषेर्लोमसु' इति विकल्पादिडभावः । रेजे शुशुभे । 'फणां च सप्तानाम्' इति विकल्पादेत्वाभ्यासलोपौ ॥ ४१ ॥

**आताम्राऽऽभा रोषभाजः कटान्तादाशूत्खाते मार्गणे धूर्गतेन ॥**
**निश्च्योतन्ती नागराजस्य जज्ञे दानस्याऽऽहो लोहितस्येव धारा ॥४२॥**

आताम्राभा इति ॥ आहो आहोस्वित् लोहितस्य रुधिरस्य सावर्ण्यात संशयः कदाचित् धूर्गतेन सादिना कटान्तात् गण्डदेशात मार्गणे नाराचे आशु तूर्णम् उत्खाते निष्कासिते सति । अतश्च यत् द्वयस्यापि सम्भवः हराहतत्वात रुधिरस्य गण्डसामीप्यात् च मदस्य(?) । जज्ञे इति जनेः कर्तरि तङ् 'गमहनजने'त्युपधालोपः ॥ ४२ ॥

आताम्राभा इति ॥ रोषभाजः क्रुद्धस्य नागराजस्य महेभस्य कटान्ताद्गण्डस्थलान्निश्च्योतन्ती प्रागेव स्रवन्ती दानस्य मदस्य धारा आताम्राभा क्रोधादरुणवर्णा जज्ञे जाता । आहो धूर्गतेन पुरोगतेन यन्त्रा मार्गणे शरे आशून्खाते लोहितस्य क्षतजस्येव धारा जज्ञ । जनः कर्तरि लिट् । किमियं क्रोधारुणा मदधारा शरोद्धरणजन्या रक्तधारा वेत्युभयकारणसम्भवात्सादृश्याच्च संशयः, स च विकल्पितसादृश्यमूल इत्यलङ्कारः ४२

**क्रामन् दन्तौ दन्तिनः साहसिक्यादीषादण्डौ मृत्युशय्यातलस्य ॥**
**सैन्यैरन्यस्तत्क्षणादाशशङ्के स्वर्गस्योच्चैरर्धमार्गाधिरूढः ॥ ४३ ॥**

क्रामन्निति ॥ कश्चिदन्यः सुभटः तत्क्षणात्तदानीं सैन्यैः सैनिकैः स्वर्गस्य अर्धमार्गाऽधिरूढः आशशङ्के दिवः सामिपन्थानमाश्रितः समभावि । यतः किं कुर्वन् अन्यः साहसिक्यात् साहसिकत्वात् दन्तिनः गजेन्द्रस्य दन्तौ दशनौ क्रामन् आरोहन् ,किंलक्षणौ दन्तौ उच्चैः प्रलम्बौ उच्चौ वा,अपरं किंलक्षणौ दन्तौ मृत्युशय्यातलस्य अन्तकखट्वायाः ईषादण्डौ बाहू इति रूपकम् । ईषादण्डतुल्यौ ईषादण्डावित्यर्थः ॥ ४३ ॥

क्रामन्निति ॥ मृत्युशय्यातलस्याऽन्तकपर्यङ्करूपस्य । 'अधःस्वरूपयोरस्त्री तलम्' इत्यमरः । ईषादण्डौ दारुविशेषौ तत्सदृशौ । आयतावित्यर्थः । दन्तिनो दन्तौ, सहसा वर्तत इति साहसिकः । 'ओजःसहोऽम्भसा वर्तत' इति ठक् प्रत्ययः । तस्य भावात्साहसिक्यात् क्रामन् । साहसवानित्यर्थः । अन्यः तत्क्षणादुच्चैरूर्ध्वस्य स्वर्गस्य अर्धश्चासौ मार्गश्चेति तदर्धमार्गाधिरूढ इति सैन्यैराशशङ्के उत्प्रेक्षित इत्युत्प्रेक्षा ॥ ४३ ॥

**कुर्वन् ज्योत्स्नाविप्रुषां तुल्यरूपस्तारस्ताराजालसारामिव द्याम् ॥**
**खड्गाऽऽघातं दारिता(१)द्दन्तिकुम्भादाभाति स्म प्रोच्छलन्मौक्तिकौघः**

कुर्वन्निति ॥ खड्गाघातं कृपाणप्रहारात दारितात् पाटितात् दन्तिकुम्भात् करिशिरःपिण्डात् प्रोच्छलन् निर्गच्छन् मौक्तिकौघः मुक्ताफलनिकरः आभाति स्म रराज । किंलक्षणो मौक्तिकौघः तारः सितः, अपरं किंलक्षणः अत एव ज्योत्स्नाविप्रुषां चन्द्रिकाकणानां तुल्यरूपः सदृशाकारः, अपरं किंलक्षणो मौक्तिकौघः प्रोच्छलितत्वात दिवमाकाशं ताराजालसारामिव कुर्वन् नक्षत्रसमूहकिर्मीरां यथा विदधत् । खड्गाघातं दारितादिति दन्तिकुम्भविशेषणम् । तत्र खड्गस्य हेतुत्वविवक्षायां 'हिंसार्थानां च समानकर्मकाणा'मिति णमुल् । यथा दण्डोपघातं गाः कालयति इति । सामाप्यविवक्षायां 'समासत्ता'वित्यनेन । यदि तु करणः खड्गादिः स्यात् पूर्वविप्रतिषेधन 'करणे हन' इत्यनेन णमुल् । प्रत्ययादित्वात् यथाविध्यनुप्रयागो भवेत् । असिघातं हन्ति शरघातं हन्तीति ॥ ४४ ॥

कुर्वन्निति ॥ ज्योत्स्नाविप्रुषां तुल्यरूपः चन्द्रिकाबिन्दुस्वरूपः तारः शुद्धः । 'तारो मुक्तादिसंशुद्धौ' इति विश्वः । खड्गाघातैर्दारिताद्दन्तिकुम्भात् प्रोच्छलन्नुत्पतन् मौक्तिकौघो मुक्तापुञ्जो द्यामाकाशं ताराजालसारां नक्षत्रशबलितां तारकितां कुर्वन्नित्युत्प्रेक्षा । 'सारः शबलपीतयोः' इति विश्वः । आभाति स्म बभौ ॥

**दूरोत्क्षिप्तक्षिप्रचक्राऽवकृत्तं (२)मत्तो हस्तं हस्तिराजः स्वमेव ॥**
**भीमं भूमौ लोलमानं सरोषः पादेनाऽसृक्पङ्कपेषं पिपेष ॥ ४५ ॥**

(१) ०घातैर्दारिता० (२) चक्रेण कृत्तं ।

दूरोत्क्षिप्तेति ॥ कश्चित् मत्तो मदवान् हस्ती गजः सरोषः सक्रोधः सन् स्वमेव हस्तं निजमेव शुण्डादण्डं पादेन चरणेन असृक्पङ्कपेषं पिपेष असृक्पङ्केन रक्तकर्दमेन पिष्ट्वा इति असृक्पङ्कपेषं पिष्टवान् । 'स्नेहने पिष' इति णमुल् । किंलक्षणं हस्तं भूमौ लोलमानं भुवि चेष्टनशीलम्, अपरं किंलक्षणं हस्तं यतः दूरोत्क्षिप्तक्षिप्रचक्राऽवकृत्तं दूरोत्क्षिप्तेन दूरदेशात् निक्षिप्तेन क्षिप्रेण आशुगामिना चक्रेण वलयाकृतिलोहायुधविशेषेण अवकृत्तं लूनम्, अत एवाऽपरं किंलक्षणं हस्तं भीमं भयकारिणम् ॥ ४५ ॥

दूरोत्क्षिप्तेति ॥ मत्तो हस्तिराजः करीन्द्रः दूरादुत्क्षिप्तेन प्रास्तेन अत एव क्षिप्रेण सत्वरेण चक्रेण कृत्तम् अत एव भूमौ लोलमानं लुठमानम् । लोलतेरनात्मनेपदित्वात् 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति ताच्छील्ये चानश् प्रत्ययः । अत एव 'लोलमानादयश्चानशी'ति वामनः । भीमं भयङ्करं स्वं स्वकीयमेव हस्तं सरोषः सन् पादेनाऽङ्घ्रिणा असृक्पङ्केन पङ्कीभूतेनाऽसृजा पिनष्टीत्यसृक्पङ्कपेषम् । 'स्नेहने पिषः' इति णमुल् । पिपेष । कषादित्वादनुप्रयोगः । रक्तपङ्केन स्नेहद्रव्येण ममर्देत्यर्थः । क्रुद्धमत्तयोः कुतो विवेक इति भावः । अत्र पेषणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ४५ ॥

आपस्कारात्लूनगात्रस्य भूमिं निःसाधारं गच्छतोऽवाङ्मुखस्य ॥
लब्धायामं दन्तयोर्युग्ममेव स्वं नागस्य प्रापदुत्तम्भनत्वम् ॥ ४६ ॥

आपस्कारादिति ॥ नागस्य करिणः भूमिं गच्छतः भुवि पततः सतः स्वमेव आत्मीयमेव दन्तयोर्युग्ममेव विषाणयोर्युगलमेव द्राघीयस्त्वादुत्तम्भनत्वं धारणत्वं प्रापत् । स्वेनैव रदनयुग्मेन धृतमित्यर्थः । तस्य भुवि पतने हेतुगर्भं विशेषणमाह—किंलक्षणस्य नागस्य लूनगात्रस्य छिन्नपूर्वकायस्य, किमवधि कुतः आपस्कारात् आजङ्घामूलात् । आपस्कारं यावच्छिन्नस्येत्यर्थः । अपरं किंलक्षणस्य नागस्य अत एव निस्साधारं निरवलम्बमेव भूमिमवनिं(१)पतन्नरोधि गजस्य पूर्वकायः । अपस्कारो जानुमूलम् । केचित्तु किल—गात्रं करमाहुः, तन्मूलं चाऽपस्कारं साधारमवलम्बनम् । आयामो दैर्घ्यम्, उत्तम्भनं धारणम् ॥ ४६ ॥

आपस्कारादिति ॥ गात्रमूलमापस्कारम्, आपस्कारादामूलात् । आङो विकल्पादसमासः । लूनगात्रस्य छिन्नजङ्घस्य । 'द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात्' इत्यमरः । अत एवाऽवाङ्मुखस्य सतः साधारं सावलम्बनं न भवतीति निःसाधारं यथा तथा भूमिं गच्छतः । पतत इत्यर्थः । नागस्य लब्धायामं प्राप्तदैर्घ्यम् । आयतमित्यर्थः । स्वं स्वकीयं दन्तयोर्युग्ममेवोत्तम्भनत्वमवलम्बनत्वं प्रापत् । जङ्घाच्छेदेऽपि दन्तावष्टम्भादपतित इत्यर्थः । अत्र स्वभावातिशयोक्त्योः संसृष्टिः ॥ ४६ ॥

लब्धस्पर्शं भूव्यधादव्यथेन स्थित्वा किञ्चिद्दन्तयोरन्तराले ॥
ऊर्ध्वाऽर्धाऽसिक्षुण्ण(२)दन्तप्रवेष्टं जित्वोत्तस्थे नागमन्येन सद्यः ॥४७॥

लब्धस्पर्शमिति ॥ अन्येन अपरेण योधेन नागं जित्वा महेभमभिभूय सद्यः तत्क्षणात् उत्तस्थे उत्थितम् । किंलक्षणं नागं भूव्यधात् उर्वीतलाघातात् लब्धस्पर्शं मयाऽयं विद्ध इति प्राप्तसुखम् । तस्यायं भावः—यथा एनं भित्त्वा मया भूमिर्विद्धेति । तत्त्वतस्तु भुवमेव विद्धवान् । किंलक्षणं नागं किञ्चित्पादयोरन्तराले स्थित्वा चरणयोर्मध्ये क्षणम् आसित्वा ऊर्ध्वाऽर्धासिक्षुण्णदन्तप्रवेष्टम् ऊर्ध्वेन ऊर्ध्वीकृतेन अर्धासिना खड्गविशेषेण क्षुण्णाः भग्नाः दारिताः दन्तौ दशनौ प्रवेष्टो बाहुश्च यस्य सः तथा तं, ततस्तं

(१) ग्रन्थांशः पतितोऽत्र । (२) ०च्छिन्न···प्रविष्टं ।

जित्वा उदस्थात् । प्रवेष्टो बाहुः । यदुक्तं 'भुजः प्रवेष्टश्च दोर्बाहु'रिति । गजस्यायं भावः- यथा, मया एनं भित्त्वा भूमिर्विद्धेति भुवमेवाऽविध्यत् न सुभटम् । केचित्तु दन्तयोरधोभागं दन्तप्रवेष्टमाहुः ॥ ४७ ॥

लब्धस्पर्शमिति ॥ भूव्यधात् । दन्ताभ्यां भुवो विद्धत्वादित्यर्थः । 'व्यधजपोरनुपसर्गे' इत्यप्प्रत्ययः । अव्यथेन स्वयमविद्धत्वादव्यथेन सताऽन्येन केनचिद्भटेन दन्तयोरन्तराले किञ्चिल्लब्धः स्पर्शो यस्मिन् कर्मणि तद्दन्ताभ्यां भटस्पर्शो यथा तथा स्थित्वा ऊर्ध्वं प्रसारितेनाऽर्धासिना खड्गैकदेशेन छिन्नः चूर्णितो दन्तप्रवेष्टो दन्तवेष्टनं यस्य तं नागं जित्वा सद्य एव उत्तस्थे उत्थितम् । भावे लिट् । अत्रापि तथोत्थानाद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ४७ ॥

हस्तेनाऽग्रे वीतभीतिं गृहीत्वा कञ्चिद्व्यालः क्षिप्तवानूर्ध्वमुच्चैः ॥
आलीनानां व्योम्नि तस्यैव हेतोः स्वर्गस्त्रीणा(१)मर्पयामास नूनम् ४८

हस्तेनेति ॥ व्यालो दुष्टगजः कञ्चित्सुभटम् उच्चैः ऊर्ध्वं क्षिप्तवान् चिक्षेप । किं कृत्वा अग्रे हस्तेन हस्ताग्रेण गृहीत्वा आदाय, किंलक्षणं सुभटं वीतभीतिं गतसाध्वसं, कथं यथा भवति तथा गृहीत्वा नूनमुत्प्रेक्ष्यते—स्वर्गस्त्रीणां देवाङ्गनानां, देवाङ्गनाभ्य-इत्यर्थः । अर्पयामासेव ददाविव । किंलक्षणानां स्वर्गस्त्रीणां तस्यैव हेतोः तदर्थमेव व्योम्नि अन्तरिक्षे आलीनानां आगतानाम् । रणे हतान् किल देवाङ्गना अप्सरसो नयन्तीत्यागमः ॥ ४८ ॥

हस्तेनेति ॥ व्यालो दुष्टदन्ती । 'व्यालो दुष्टगजे सर्पे' इति विश्वः । अग्रे वीतभीतिं निर्भीकं, भीरोः स्वर्गाभावादिति भावः । कञ्चिद्वीरं हस्तेन गृहीत्वा ऊर्ध्वमुपर्युच्चैः क्षिप्तवान् । उत्प्रेक्ष्यते—तस्यैव हेतोस्तेनैव हेतुना । तद्धरणार्थमेवेत्यर्थः । 'सर्वनाम्नस्तृतीया च' इति चकारात्षष्ठी । व्योम्नि आलीनानामवस्थितानाम् । 'ईदासः' इति शानच ईकारः । स्वर्गस्त्रीणाममरनारीणामर्पयामास नूनम् ॥ ४८ ॥

कञ्चिद् दूरादायतेन द्रढीयःप्रासप्रोतस्रोतसाऽन्तः क्षतेन ॥
हस्ताग्रेण प्राप्तमप्यग्रतो(२)ऽभूदानैश्वर्यं वारणस्य ग्रहीतुम् ॥ ४९ ॥

कञ्चिदिति ॥ वारणस्य गजेन्द्रस्य कञ्चिद्भटं दूरात् दूरं प्राप्तमपि लब्धमपि अग्रतः पुरस्तात् हस्ताग्रेण कराग्रेण ग्रहीतुमादातुम् आनैश्वर्यमभूत् असामर्थ्यमासीत् । आदातुं न शशाकेत्यर्थः । किंलक्षणेन हस्ताग्रेण आयतेन दीर्घेण, अपरं किंलक्षणेन अन्तः क्षतेन मध्ये हिंसितेन, कुतः किंलक्षणेन द्रढीयःप्रासप्रोतस्रोतसा द्रढीयसा अतिदृढेन प्रासेन कुन्तेन प्रोतं विद्धं स्रोतः विवरं यस्य तत्तथा तेन । स हि योधं दूरादानीय अग्रे क्षिप्त्वा यावत् हन्तुमादित्सति, तावत् कुन्तेन अस्य करं स्रोतोद्वयम् आयतेन पृथुलेनेति दूराप्तिः(?) । अनीश्वरस्य भावः आनैश्वर्यम् । 'नञः शुचीश्वरक्षेत्रज्ञ—' इत्युभयपद-वृद्धिः । अग्रादग्रतः ॥ ४९ ॥

कञ्चिदिति ॥ दूरादायतेनाऽन्तः क्षतेन विक्षतेन अत एव द्रढीयसा प्रासेन प्रोतं स्रोतो यत्र तेन हस्ताग्रेण करेण अग्रतः प्राप्तमपि कञ्चिद्भटं ग्रहीतुमादातुं वारणस्य, अनीश्वरस्य भाव आनैश्वर्यमसामर्थ्यमभूत् । 'नञः शुचीश्वर—' इत्यादिना नञ्पूर्वपदोभयपदवृद्धिः । अत्रापि आनैश्वर्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ४९ ॥

तन्वाः पुंसो नन्दगोपात्मजायाः कंसेनेव स्फोटितायाः गजेन ॥
दिव्या मूर्तिर्व्योमगैरुत्पतन्ती वीक्षामासे विस्मितैश्चण्डिकेव ॥ ५० ॥

---

(१) आसीनानां···दिव्यस्त्रीणा० । (२) ०मेवाग्रतो० ।

तन्वा इति ॥ कस्यचित् पुंसः पुरुषस्य योधस्य गजेन द्विपेन स्फोटितायाः उत्क्षिप्य पाटितायाः तन्वाः वपुषः उत्पतन्ती निस्सरन्ती दिव्या मूर्तिः आत्माख्या भोगतनुर्वा विस्मितैः सकौतुकैः व्योमगैर्नभश्चरैः वीक्षामासे ददृशे । केन कुतः किमिवेत्याह—नन्दगोपात्मजायाः नन्दनामगोपालदुहितुः योगमायायाः तन्वाः देहात् कंसेन औग्रसेनिना स्फोटितायाः उत्क्षिप्य दृषदि आस्फालितायाः उत्पतन्ती भगवती चण्डिका निद्राख्या व्योमगैः पूर्वमैक्षि यथा । एवं ह्यागमः पुरा नारद आगत्य कंसमाह—यथा, वसुदेवात्मजात् तव मृत्युर्भविष्यतीति उक्त्वा तिरोदधे । ततश्च कंसः देवक्याः षट् गर्भान् जघान। अथ भगवान्नारायणः देवक्यामवतितीर्षुर्योगमायामाहूयाह, तद्यथा—

नन्दगोपात् यशोदाया गर्भे त्वं च यथासुखम् ।
देवक्यां वसुदेवात्तु जायेऽहमपि तत्त्वतः ॥
अहं यशोदां यास्यामि त्वं तथा देवकीं भज ॥
आवयोः स्थानव्यत्यासात् कंसो यास्यति मूढताम् ।
ततस्त्वां गृह्य चरणे शिलायां निरसिष्यति ॥
निरस्यमाना गगने स्थानं प्राप्स्यसि शाश्वतम् ॥

इत्यादि ॥ ५० ॥

तन्वा इति ॥ गजेन स्फोटिताया विदारितायाः पुंसः कस्याचिद्वीरस्य तन्वाः शरीरात् कंसेन स्फोटितायाः नन्दगोपात्मजाया नन्दकन्याया इवोत्पतन्ती दिव्या मूर्तिः चण्डिकेव नन्दकन्याशरीरादाविर्भवन्ती कालिकेव विस्मितैर्व्योमगैः खेचरैर्वीक्षामासे वीक्षिता । ईक्षतेः कर्मणि लिट् । 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम् प्रत्ययः । मनुष्यभावमुत्सृज्य देवभावं गतेत्यर्थः । उपमा व्यक्ता । पुरा किल दुरात्मनः कंसस्य प्रतारणाय भगवदाज्ञया तन्मायाशक्तिर्नन्दगोपाज्जाता कंसेन हिंसितेति पौराणिकाः ॥ ५० ॥

आक्रम्यैकामग्रपादेन जङ्घामन्यामुच्चैराददानः करेण ॥
साऽस्थिस्वानं दारुवद्दारुणात्मा कश्चिन्मध्यात्पाटयामास दन्ती ॥५१॥

आक्रम्येति ॥ दन्ती गजः कञ्चित् सुभटं मध्यात् मध्यभागात् पाटयामास व्यदारयत् । किंवत् दारुवत् काष्ठं यथा, कथं व्यदारयत् साऽस्थिस्वानम् अस्थिस्वानेन सह वर्तमानम् अस्थिशब्दसंयुक्तं यथा भवत्येवं, किंलक्षणो दन्ती दारुणात्मा अतिदुष्टान्तःकरणः, किं कृत्वा व्यदारयत् एकां जङ्घां स्फिजम् अग्रपादेन पादाग्रेण आक्रम्य अवष्टभ्य, अपरं किंभूतः अन्यामपरां जङ्घां करेण शुण्डादण्डेन आददानः गृह्णन्, किंलक्षणेन करेण उच्चैः अतिमहता ॥ ५१ ॥

आक्रम्येति ॥ दारुणात्मा क्रुद्धचित्तो दन्ती एकां जङ्घामग्रपादेनाक्रम्य अन्यां जङ्घामुच्चैरुन्नतेन करेणाऽऽददान आकर्षयन् साऽस्थिस्वानं भज्यमानाऽस्थिचटचटाशब्दयुक्तं यथा तथा कञ्चिद्वीरं दारुवत्काष्ठवत् मध्यात्पाटयामास । मध्यं विभज्य पाटयामासेत्यर्थः । ल्यब्लोपे पञ्चमी । उपमा ॥ ५१ ॥

शोचित्वाऽग्रे भृत्ययोर्मृत्युभाजोरर्यः प्रेम्णा नो तथा वल्लभस्य ॥
पूर्वं कृत्वा नेतरस्य प्रसादं पश्चात्तापादाप दाहं यथाऽन्तः ॥ ५२ ॥

शोचित्वेति ॥ कस्यचित्स्वामिनो द्वौ सेवकौ वर्तेते । तयोर्मध्ये एकः वाल्लभ्याल्लब्धप्रसादः,अपरश्च असंमतः। तदग्रे च तौ द्वावपि प्रमीतौ अभूताम् । तदा तत्स्थितिं कथयति-

अर्यः स्वामी द्वयोः भृत्ययोः पुरोऽग्रे मृत्युभाजोः मृतयोः सतोः शोचित्वा रुदित्वा वल्लभस्य प्रियस्य सेवकस्य प्रेम्णा हार्देन अन्तः हृदये तथा तेन प्रकारेण दाहं न आप दुःखं न लेभे। तथा कथं, यथा येन प्रकारेण इतरस्याऽसंमतस्य सेवकस्य पूर्वं प्रसादमकृत्वा आदौ वेतनमदत्वा पश्चात्तापादनुशयात् दाहं तापमाप ततापः । कष्टमसंमतोऽसौ ममार इति भावः । अत्र कुरुते इति सम्बन्धः तेनापि प्रसादस्याऽप्रसादं कृत्वेत्यर्थः(?) । 'स्यादर्यः स्वामिवैश्ययो'रित्यमरः ॥ ९२ ॥

शोचित्वेति ॥ ऋच्छतीत्यर्यः। 'अर्यः स्वामिवैश्ययोः' इति यत्प्रत्ययान्तो निपातः । अग्रे समक्षमेव मृत्युभाजोर्मरणं गतयोर्भृत्ययोः शोचित्वा वल्लभस्यैतयोर्मध्ये प्रियभृत्यस्य सम्बन्धिना प्रेम्णा। तद्गतप्रेम्णेत्यर्थः । तथा तेन प्रकारेणाऽन्तर्दाहं सन्तापं नो आप । यथा येन प्रकारेणेतरस्याऽवल्लभस्य पूर्वं जीवनकाले प्रसादं प्रीतिदानाद्यनुग्रहं न कृत्वा पश्चात्तापात् 'हतोऽयमस्माभिरप्रीणित एव प्राणान् प्रादा'दित्यनुशयाद्दाहमाप । प्रियभृत्यमरणादप्यसंमानितमरणमेव स्वामिनो दुःसहम् । दुःखहेतुरासीदित्यर्थः । स्वभावोक्तिः ॥९२॥

उत्पत्याऽऽरादर्धचन्द्राऽवलूने वक्त्रेऽन्यस्य क्रोधदष्टाधरोष्ठे(१) ॥
सैन्यैः कण्ठच्छेदलीने कबन्धाद् भूयो बिभ्ये वल्गतः साऽसिपाणेः॥९३॥

उत्पत्येति ॥ सैन्यैः सैनिकैः भूयः अतिशयेन पुनरपि वा अन्यस्यापरस्य कबन्धात् अपमूर्धकलेवरात् बिभ्ये भीतम्, ततः खड्गप्रहरणमाशङ्कितम् । स्वस्थात् किल तस्मात्तैरादौ भीतम् इति भूयःशब्दार्थप्रतीतिः। कदा बिभ्ये अन्यस्य भयात् आरात् समीपे वक्त्रे वदने अर्धचन्द्राऽवलूने अर्धचन्द्रेण चन्द्रार्धाकारनाराचेणाऽवलूनं छिन्नं कृतं तस्मिन् सति, अतएवोत्पत्य तदीयकण्ठच्छेदार्थं लीने संश्लिष्टे, किंलक्षणे वक्त्रे क्रोधदष्टाधरोष्ठे क्रोधेन कोपेन दष्टौ दन्तैर्गृहीतौ अधरोष्ठौ ओष्ठाधरौ यत्र तत्तथा तस्मिन् । कोपाद्दशनैः ओष्ठं विदश्य कबन्धस्योपरि स्थित इत्यर्थः । किंलक्षणात् कबन्धात् साऽसिपाणेः साऽसिः सखड्गः पाणिः करो यस्य सः साऽसिपाणिः तस्तात् खड्गहस्तात्, अपरं किंलक्षणात् कबन्धात् वल्गतः वल्गनां कुर्वाणात्, वल्गति इति वल्गन् तस्मात्, नृत्यत इत्यर्थः । अतश्च सैनिकैराशङ्कितं, यत् किमयं भूयोऽप्यस्माकं कदनं कुर्यादिति ॥ ९३ ॥

उत्प्लुत्येति ॥ अर्धचन्द्रेण बाणेन लूने छिन्ने तथापि क्रोधेन दष्टौ ओष्ठौ यैस्ते दन्ता यस्य तस्मिन् अन्यस्य योधस्य वक्त्रे आरादनतिदूरमुत्प्लुत्य । 'आराद् दूरसमीपयोः' इत्यमरः । भूयः पुनरपि कण्ठस्य छेदः छिन्नदेशः तत्र लीने स्थिते सति वल्गतो नृत्यतः साऽसिः पाणिर्यस्य तस्मात्कबन्धादपमूर्धकलेवरात् । 'भीत्रार्थानां भयहेतुः' इति पञ्चमी । सैन्यैर्बिभ्ये भीतम् । भावे लिट् । लूनस्यापि वक्त्रस्य पुनः स्वस्थानप्राप्तित्वाद्वल्गनाऽसिधारणाभ्यां कबन्धादप्यकबन्धभ्रान्त्या सर्वे बिभ्युरित्यर्थः । अत एव भ्रान्तिमदलङ्कारः ॥९३॥

तूर्याऽऽरावैराहतो(२)त्तालतालैर्गायन्तीभिः काहलं काहलाभिः ॥
नृत्ते चक्षुःशून्यहस्तप्रयोगं काये कूजन् कम्बुरुच्चैर्जहास ॥ ९४ ॥

तूर्यारावैरिति ॥ कम्बुः शङ्खः उच्चैः तारं कूजन् ध्वनन् सन् जहास अहसत् इव इत्युत्प्रेक्षा । हसने हेतुमाह—कदा जहास क्व सति काये कबन्धे नृत्ते नर्तितुं प्रवृत्ते सति, कैः तूर्यारावैः वादित्रध्वनिभिः, किंलक्षणैः तूर्यारावैः आहतोत्तालतालैः आहता आच्छादिता जिता वा उत्ताला अत्युदीर्णाः तालाः कालक्रियामानकर्तारः यैस्ते तथा तैः, अपरं काभिः नृत्ते सति काहलाभिः ताम्रकर्णकटुमुखवाद्यविशेषैः,किंलक्षणाभिः काहलाभिः काहलं परुषं

(१) उत्प्लुत्या ... चन्द्रेण लूने ... दष्टोष्ठदन्ते । (२) ०राहितो ।

भाषणं वा गायन्तीभिः गानमिव कुर्वन्तीभिः, कथं नृत्ते चक्षुःशून्यहस्तप्रयोगं चक्षुःशून्यः दृष्टिरहितः हस्तप्रयोगः कराभिनयः यत्र क्रियायां तद्यथा। यदि किल दृष्ट्यननुगतं नृत्यं स्यात्तदा परुषमुल्बणतालं च गीयते, तदा पार्श्वस्था हसन्तीति ॥ ५४ ॥

तूर्यारावैरिति ॥ आहितः सम्पादितो उत्तालः प्रस्फुटास्तालाः करपुटादिक्रियामानानि येषु तैः। 'तालः कालक्रियामानम्' इत्यमरः। तूर्यारावैर्मृदङ्गादिवाद्यघोषैस्तथा काहलं भृशं गायन्तीभिः ध्वनन्तीभिः काहलाभिः शुष्कैर्वाद्यविशेषैश्च कारणैः।

'काहलं भृशशुष्कयोः।
वाद्यभाण्डविशेषे तु काहलः काहला खले' ॥

इति विश्वः। काये अमूर्धनि कलेवरे। अत एव चक्षुःशून्यो दृष्टिरहितः हस्तप्रयोगो यस्मिन् कर्मणि तत्तथा नृत्ते नत्यति सति। कर्तरि क्तः। कूजन् ध्वनन् कम्बुः शङ्खः। तटस्थ इवेत्यर्थः। उच्चैस्तारं जहास। दृष्टिशून्याभिनयस्य नाट्यशास्त्रविरोधादट्टहासमकरोदित्यर्थः। व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा।

'अङ्गैरालापयेद्गीतं हस्तेनार्थं प्रदर्शयेत्।
दृष्टिभ्यां भावयद्भावं पादाभ्यां तालनिर्णयः' ॥

इति नाट्यविदः ॥ ५४ ॥

**प्रत्यावृत्तं भङ्गभाजि स्वसैन्ये तुल्यं मुक्तैराकिरन्ति स्म कश्चित् ॥**
**एकौघेन स्वर्णपुङ्खैर्द्विषन्तः सिद्धा माल्यैः साधुवादैर्द्वयेऽपि ॥ ५५ ॥**

प्रत्यावृत्तमिति ॥ द्विषन्तः शत्रवः स्वर्णपुङ्खैः कनकपुङ्खैः शरैः, तथा सिद्धा नभश्चरा देवविशेषाः माल्यैः कुसुमैः कृत्वा एकौघेन एकप्रवाहेन, सह मिलितैस्तैरित्यर्थः। कश्चित्सुभटम् आकिरन्ति स्म आचकरुः आच्छादयन्ति स्म। द्वयेऽपि सर्वेऽपि द्विषन्तः सिद्धाश्च साधुवादैः साधु साधु इति वचनैः प्रोत्साहनाभिः तम् आकिरन्ति स्म वर्षन्ति स्म। तं प्रत्यूचुरित्यर्थः। किंलक्षणैः स्वर्णपुङ्खैः माल्यैः साधुवादैश्च तुल्यं मुक्तैर्युगपद्दीरितैः, किमर्थमाकिरन्ति स्मेत्यत आह—यतः किंलक्षणं सुभटं स्वसैन्ये निजकटके भङ्गभाजि भग्ने पलायत्यपि(?) सति प्रत्यावृत्तं प्रतीपमागतम्। युद्धाय संमुखावस्थितमित्यर्थः ॥ ५५ ॥

प्रत्यावृत्तमिति ॥ स्वसैन्ये भङ्गभाजि सति प्रत्यावृत्तमभ्यमित्रं कञ्चिद्वीरं तुल्यमेककालं मुक्तैः स्वर्णपुङ्खैः शरविशेषैः एकौघेन एकप्रहारेण द्विषन्तः आकिरन्ति स्म। सिद्धाः खेचराः माल्यैर्दिव्यमालाभिः चातुर्वर्ण्यादित्वात्ष्यञ्प्रत्ययः। आकिरन्ति स्म। द्वयेऽपि द्विषन्तः सिद्धाश्च साधुवादैः साधु साध्विति वाक्यैराकिरन्ति स्म। एतत्त्रितयमपि युगपत्प्रवृत्तमित्यर्थः। अत्र स्वर्णपुङ्खसुरमाल्यसाधुवादानां प्रकृतानामेव तुल्यकालैकौघप्रवृत्तिसाम्यादौपम्यावगमात्केवलप्रकृतास्पदा तुल्ययोगिता ॥ ५५ ॥

**बाणाऽऽक्षिप्तारोहशून्यासनानां प्रक्रान्तानामन्यसैन्यैर्ग्रहीतुम् ॥**
**संरब्धानां भ्राम्यतामाजिभूमौ वारी वा : सस्मरे वारणानाम् ॥ ५६ ॥**

बाणाक्षिप्तेति ॥ वारणानां वारैः पीलूनां समूहैः वारी सस्मरे स्मर्यते स्म। वार्यन्ते गृह्यन्ते गजा यया सा वारी बन्धनस्थानं स्मृतम्। 'वारी च गजबन्धन'मित्यमरः। वारीस्मरणे कारणमाह—किंलक्षणानां वारणानां बाणाक्षिप्तारोहशून्यासनानां बाणैः आक्षिप्ताः पातिता आरोहा सादिनः येषां तानि बाणाक्षिप्तारोहाणि शरप्रक्षिप्तसादीनि अत एव शून्यानि अपुरुषाणि आसनानि पर्याणानि येषां ते तथा तेषां शरनिरस्तसादिरहितपर्याणानाम्, अपरं किंलक्षणानां वारणानाम् अन्यसैन्यैः परबलैः ग्रहीतुं प्रक्रान्तानां बद्धुं

प्रस्तुतानाम्, अत एव अपरं किंलक्षणानां वारणानां संरब्धानाम् क्षुभितानाम्, अपरं किंलक्षणानाम् वारणानाम् आजिभूमौ भ्राम्यताम् आयोधनोर्व्यां पलायमानानाम्। वार्यामपि वा ते संरब्धाः वनभुवि भ्राम्यन्तो भवन्ति। यतोऽन्यैर्जिघृक्षिताः वने यथा वारोहशून्याः अटव्याम्(?)। यत्रेभा बध्यन्ते सा वारी । 'उसिवसी'ति कः, 'कृदिकारा'दिति ङीप् । सस्मरे इति कर्मणि ५६

बाणाक्षिप्तेति ॥ बाणैराक्षिप्ताः पातिता आरोहाः सादिनो येभ्यस्तानि अत एव शून्यानि रिक्तान्यासनानि आस्तरणानि येषाम् , अत एवान्यैः सैन्यैः परसैनिकैर्ग्रहीतुं प्रक्रान्तानामारब्धानाम्। समन्तादवरुध्यमानानामित्यर्थः । अत एव संरब्धानां क्षुभितानाम् अत एव आजिभूमौ भ्राम्यतामवतिष्ठमानानां वारणानां वारैर्वृन्दैः वारी बन्धनस्थानम् ।

'वारः सूर्यादिदिवसे वारो वरणवृन्दयोः ।
वारी कटीभबन्धन्योः—'

इति विश्वः । सस्मरे स्मृता । तद्धर्मयोगादिति भावः । कर्मणि लिट् । अत्र शून्यासनत्वादीनां विशेषणगत्या वारीस्मरणहेतुत्वात्काव्यलिङ्गम् ॥ ५६ ॥

**पौनःपुन्यादस्रगन्धेन मत्तो मृद्नन् कोपाल्लोकमायोधनोर्व्याम् ॥**
**पादे लग्नामन्त्रमाला(१)मिभेन्द्रः पाशीकल्पामायतामाचकर्ष ॥ ५७ ॥**

पौनःपुन्यादिति ॥ कश्चिदिभेन्द्रः द्विपराजः पादे लग्नां चरणे संश्लिष्टाम् अन्त्रमालां पुरीतत्स्रजम् आचकर्ष आकृष्टवान् । किंलक्षणः इभेन्द्रः अस्रगन्धेन मत्तः रुधिरपरिमलेन मदिष्टः, अपरं किंलक्षणः इभेन्द्रः अत एव आयोधनोर्व्यां रणभुवि लोकं सैन्यजनं पौनःपुन्यात् असकृत् मृद्नन् आस्कन्दन्, किंलक्षणाम् अन्त्रमालाम् आयतां दीर्घाम्, अपरं किंलक्षणाम्, अन्त्रमालां पाशीकल्पां रज्जुतुल्याम् । ईषदपरिसमाप्ता पाशी पाशीकल्पा । अयःशृङ्खला हि करिणां पादे बध्यते ॥ ५७ ॥

पौनःपुन्यादिति ॥ अत्र आयोधनोर्व्यां युद्धभूमौ पौनःपुन्यात् । पुनःपुनरावृत्तेरित्यर्थः । ब्राह्मणादित्वात्ष्यञ्प्रत्ययः । अव्ययानां भमात्रे टिलोपस्य सायंप्रातिकाद्यर्थमुपसङ्ख्यानामिति टिलोपः । अस्रगन्धेन रक्तगन्धाघ्राणादित्यर्थः । मत्त इभेन्द्रो महागजः कोपाल्लोकं जनं मृद्नन् क्षुन्दन् पादे लग्नामीषदसमाप्तां पाशीं पाशीकल्पां पाशबन्धसदृशीम् । 'पाशस्त्वश्वादिबन्धनम्' इति विश्वः । 'बह्वादिभ्यश्च' इति विकल्पादीकारः । अभाषितपुंस्कत्वात् 'घरूप—' इत्यादिना ह्रस्वो न भवति । आयतां दीर्घां मालामाचकर्ष । पाशीकल्पेत्यत्र ताद्धिगता पूर्णोपमा ॥ ५७ ॥

**कश्चिन्मूर्छामेत्य गाढप्रहारः सिक्तः शीतैः शीकरैर्वारणस्य ॥**
**उच्छश्वास प्रस्थिता तं जिघृक्षुर्व्यर्थीकृता नाकनारी मुमूर्छ ॥ ५८ ॥**

कश्चिदिति ॥ कश्चित्सुभटः गाढप्रहारः तीव्रक्षतः तस्मात् मूर्छामेत्य मोहं प्राप्य उच्छश्वास निर्ववार । यतः किंलक्षणः सुभटः शीतैः शीतलैः वारणस्य गजेन्द्रस्य शीकरैः सिक्तः उक्षितः, पुनश्च तं सुभटं जिघृक्षुः सङ्ग्रहीतुमिच्छुः प्रस्थिता आगता नाकनारी दिव्यस्त्री मुमूर्छ मुमोह, किंलक्षणा नाकनारी यतो व्यर्थीकृता निष्फलाभिप्राया । सा हि तं परासुमादातुमैच्छत्, समाश्वसिते च तस्मिन् असौ तमनासाद्य विफलमनोरथा बभूव । 'आकूतं स्यादभिप्रायः' इत्यमरः ॥ ५८ ॥

कश्चिदिति ॥ गाढः प्रहारो यस्य सः कश्चिद्वीरो मूर्छामेत्य वारणस्य शीतैः शीकरैः पुष्करतुषारैः सिक्तः सन् उच्छश्वास उज्जीवति स्म, किन्तु तं मूर्छामागतं जिघृक्षुर्ग्रहीतुमिच्छुः । ग्रहेः सन्नन्तादुप्रत्ययः।

(१) ०मत्र माला ।

प्रस्थिता, तं वरीतुमागतेत्यर्थः। नाकनारी व्यर्थाकूता तदुज्जीवनादिफलमनोरथा सती मुमूर्छ। अत्राकूत-वैयर्थ्यस्य विशेषणगत्या नाकनारीमूर्छाहेतुत्वात्काव्यलिङ्गं मूर्छासम्बन्धातिशयोक्त्या सङ्कीर्यते ॥ ५८ ॥

**लूनग्रीवात्सायकेनाऽपरस्य द्यामत्युच्चैराननादुत्पतिष्णोः ॥**
**त्रेसे मुग्धैः सैंहिकेयानुकारात्सभ्रूभङ्गा(१)दप्सरोवक्त्रचन्द्रैः ॥ ५९ ॥**

**लूनग्रीवादिति** ॥ अपरस्याऽन्यस्य योधस्य आननात् वक्त्रात् मुग्धैर्मनोज्ञैः अप्सरोवक्त्रचन्द्रैः दिव्यस्त्रीवदनशशिभिः त्रेसे त्रस्तम्। किंलक्षणात् आननात् सायकेन शरेण लूनग्रीवात् कृत्तकन्धरात्, अपरं किंलक्षणात् आननात् अत एव द्यामुत्पतिष्णोः आकाशमुत्पततः उद्गतात्, अपरं किंलक्षणात् आननात् अत्युच्चैः बृहतः, अपरं किंलक्षणात् सैंहिकेयानुकारात् सैंहिकेयस्य राहोः अनुकारः सादृश्यं यस्य तत्तथा तस्मात् विधुन्तुदतुल्यात्, अपरं किंलक्षणात् यतः सभ्रूभङ्गात् भ्रुकुटीभीषणात्। अतश्च त्रासो युक्तः। अतएव वक्त्रस्य चन्द्रत्वम्। शशी हि राहोः त्रस्यति, मुग्धत्वं पुनर्ग्रासभयात्। सिंहिकायाः अपत्यं सैंहिकेयः, तमनुकरोतीति कर्मणि अण् ॥ ५९ ॥

लूनग्रीवादिति ॥ अपरस्य सायकेन लूनग्रीवाच्छिन्नकण्ठात् अत एव द्यामाकाशं प्रति आशु उच्चैरुत्पतिष्णोरुत्पतनशीलात्। 'अलंकृञ्–' इत्यादिना इष्णुच्प्रत्ययः। अत एव सिंहिकाया अपत्यं पुमान् सैंहिकेयो राहुः। 'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' इत्यमरः। स्त्रीभ्यो ढक्। तमनुकरोतीति तदनुकारात्। तत्सदृशादित्यर्थः। कर्मण्यण्प्रत्ययः। रौद्राकाराद्भीषणाकृतेरस्य वीरस्य आननान्मुग्धैः सुन्दरैरप्सरसां वक्त्रैरेव चन्द्रैः त्रेसे त्रस्तम्। भावे लिट्। अत्र राहुहेतुकत्रासस्य चन्द्र एव सम्भवाद्वक्त्रचन्द्रैरिति रूपकं सिद्धम्। तस्य सैंहिकेयाऽनुकारादिति स्पष्टोपमापेक्षत्वात्सङ्करः ॥ ५९ ॥

**वृत्तं युद्धे शूरमाश्लिष्य काचिद्रन्तुं तूर्णं मेरुकुञ्जं जगाम ॥**
**त्यक्त्वा नाऽग्नौ देहमेति स्म यावत् पत्नी सद्यस्तद्वियोगाऽसमर्था ॥६०॥**

**वृत्तमिति** ॥ यावत् पत्नी स्वभार्या अग्नौ देहं त्यक्त्वा वैश्वानरे शरीरं दग्ध्वा युद्धे वृत्तं सङ्ग्रामे मृतं शूरं वीरं भर्तारं न एति स्म न प्राप। किंलक्षणा पत्नी तद्वियोगाऽसमर्था तस्य वियोगः विरहः तत्राऽसमर्था वियोगं सोढुमशक्ता। तावदेव काचिद्दिव्यस्त्री तूर्णं त्वरितं तं शूरम् आश्लिष्य आलिङ्ग्य रन्तुं क्रीडितुं मेरुकुञ्जं देवोद्याने जगाम अगमत्, इति दम्पत्योः सात्त्विकत्वोक्तिः ॥ ६० ॥

वृत्तमिति ॥ काचिदमरनारी युद्धे वृत्तं मृतम्। 'वृत्तोऽनीते दृढे ख्याते वर्तुलेऽपि वृते मृते' इति विश्वः। शूरमाश्लिष्य रन्तुं तूर्णं मेरोः कुञ्जं गह्वरं जगाम। यावत्तद्वियोगासामर्थ्यात् तद्विरहाऽसहा पत्नी सद्योऽग्नौ देहं त्यक्त्वा नैति स्म नाजगाम। अत्र मेरुकुञ्जासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६० ॥

**त्यक्तप्राणं संयुगे हस्तिनीस्था वीक्ष्य प्रेम्णा तत्क्षणादुद्गताऽसुः ॥**
**प्राप्याऽखण्डाद्देव(२)भूयं सतीत्वादाशिश्लेष स्वैव कश्चित्पुरन्ध्री ॥६१॥**

**त्यक्तप्राणमिति** ॥ कञ्चिद् भटं स्वैव पुरन्ध्री आत्मीयैव महिला आशिश्लेष सस्वजे। किं कृत्वा अखण्डात् अलुप्तात् अलुप्तसतीत्वात् भर्त्रेकशरणत्वाद्देवभूयं प्राप्य देवत्वमासाद्य, किंलक्षणा पुरन्ध्री हस्तिनीस्था करिण्यां वर्तमाना, अपरं किंलक्षणा पुरन्ध्री प्रेम्णा प्रीत्या तत्क्षणात् सपद्येव उद्गतासुः नष्टप्राणा, किं कृत्वा संयुगे सङ्ग्रामे त्यक्तप्राणमुज्झिताऽसुम् अर्थादमुं भटमवनिपतितं वीक्ष्य दृष्ट्वा। अतश्च परलोके सैव अश्लिषत्। देवभवनं देवभूयं

(१) ०द्रौद्राकारा०। (२) ०खण्डं देव।

देवत्वम् , भुवो भावे क्यप् । पुरन्ध्रीशब्दः पृषोदरादिः ॥ ६१ ॥

त्यक्तप्राणमिति ॥ संयुगे युद्धे त्यक्तप्राणं कञ्चिद्वीरं, हास्तिन्यां तिष्ठतीति हस्तिनीस्था करिणीमारूढा सती वीक्ष्य प्रेम्णा तत्क्षणादुद्गताऽसुर्गतप्राणा सैव पुरन्ध्री स्वभार्यैव सतीत्वात्पतिव्रतात्वादखण्डमक्षयं देवभूयं देवत्वम् । 'भुवो भावे' इति क्यप् । प्राप्याऽऽशिश्लेष । स्त्रीणां पातिव्रत्यमेव पतिसालोक्यनिदानं नाग्निप्रवेशादिकमिति भावः । अत्र सतीत्वस्य विशेषणगत्या देवभूयहेतुत्वाऽनुक्तेन काव्यलिङ्गम् । अतिशयोक्त्यादिकं तु यथासम्भवमूह्यम् ॥ ६१ ॥

**स्वर्गेवासं कारयन्त्या चिराय प्रत्यग्रत्वं प्रत्यहं धारयन्त्या ॥**
**कश्चिद्दु भेजे दिव्यनार्या परस्मिंल्लोके लोकं प्रीणयन्त्येह कीर्त्या ॥६२॥**

**स्वर्गेवासमिति** ॥ कश्चित् वीरः परस्मिन् लोके परलोके दिव्यनार्या देवाङ्गनया अप्सरसा भेजे शिश्रिये, इह लोके भूमौ च कीर्त्या यशसा भेजे । किंलक्षणया दिव्यनार्या कीर्त्या च, अधुना श्लेषः—किंलक्षणया अप्सरसा चिराय चिरकालं स्वर्गे त्रिविष्टपे वासं कारयन्त्या कुर्वत्या । यामभिलष्य पुमान् चिरं स्वर्गे निवासं कर्तुमिच्छतीत्यर्थः। कीर्त्याऽपि चिराय स्वर्गे वासं कारयन्त्या । यदुक्तम्—

रुणद्धि रोदसी यस्य यावत्कीर्तिरनश्वरी ।
तावत्किलाऽयमध्यास्ते सुकृती वै ध्रुवं पदम् ॥

अन्यत्र—

यावत्कीर्तिर्मनुष्यस्य स्वर्गे लोके च गीयते ।
तावद्देही वसेत्स्वर्गे कुरुतेऽमृतभोजनम् ॥

अपरं किंलक्षणया अप्सरसा प्रत्यहं दिवसे दिवसे प्रत्यग्रत्वं नूतनत्वं धारयन्त्या बिभ्रत्या, समरमरणे स्थिरस्वर्गवासत्वात् । अथ वा अगतसारत्वेन स्थिरयौवनायाः प्रथमसमागमात् नूतनता भवति । अपरं किंलक्षणया अप्सरसा लोकं प्रीणयन्त्या समरमृतस्य दिव्यस्त्रीभोगाय नित्यस्वर्गवासत्वात् लोकं सुभटजनमाकर्षयन्त्या । कीर्त्यापि प्रत्यहं प्रत्यग्रत्वं धार्यते, तस्य सुचरितत्वेनापूर्ववन्नित्यश्रव्यत्वात् । प्रीणातीति प्रीणयन्तीति, 'प्रीञ्धूञोर्नुगि'ति नुक् ॥ ६२ ॥

स्वर्गेवासमिति ॥ कश्चिद्वीरश्चिराय चिरकालं स्वर्गेवासम् । 'शयवासवासिष्वकालात्' इति विकल्पादलुक् । कारयन्त्या अनुभावयन्त्या अहन्यहनि प्रत्यहम् । 'नपुंसकादन्यतरस्याम्' इत्यव्ययीभावे समासान्तष्टच्प्रत्ययः । 'अव्ययानां भमात्रे टिलोपः' इत्युक्तम् । प्रत्यग्रत्वं नूतनत्वं धारयन्त्या । परप्रेमास्पदत्वादिति भावः । लोकं प्रीणयन्त्या अद्भुतत्वं प्रापयन्त्या । प्रीञो ण्यन्ताल्लटः शतरि ङीप् । 'धूञ्प्रीञोर्नुग् वक्तव्यः' इति नुगागमः । दिव्यनार्या परस्मिंल्लोके, इह लोके कीर्त्या च भेजे प्राप्तः । भजः कर्मणि लिट् । रणमरणाल्लोकद्वयमपि जिगायेत्यर्थः । अत्र दिव्याङ्गनाकीर्त्योः प्रकृतयोरेव तुल्यधर्मसम्बन्धात्केवलप्रकृतास्पदा तुल्ययोगिता ॥ ६२ ॥

**गत्वा नूनं वैबुधं सद्म रम्यं मूर्छाभाजामाजगामाऽन्तरात्मा ॥**
**भूयो दृष्टप्रत्ययाः प्राप्य संज्ञां(१) साधीयस्ते यद्रणायाऽऽद्रियन्ते ॥ ६३ ॥**

**गत्वेति** ॥ एवं नूनमुत्प्रेक्षे—मोहभाजां मूर्छाजुषाम् अन्तरात्मा चेतना रम्यं मनोहरं वैबुधं सद्म गत्वा नाकलोकं प्राप्य नूनमाजगाम पुनः प्राप्तः । कुत इत्यत आह—यत् यस्मात्कारणात् ते योधाः सुभटाः संज्ञां प्राप्य चेतनां लब्ध्वा दृष्टप्रत्ययाः उपलब्ध-

---

(१) प्राप्तसंज्ञाः ।

निश्चयाः सन्तो भूयः पुनरपि यत्साधीयः दृढतरं रणाय आद्रियन्ते युद्धाय व्यवस्यन्ति । यदि चैवं न स्यात्, तत्कस्मादिदानीमत्यर्थं युयुधिरे। नूनं तदास्माभिः समरहतानां लोकाः स्वयमदृष्टाः। अतिशयेन साधु साधीयः, इत्यादरविशेषणम् । रणायेति तादर्थ्ये चतुर्थी, क्रियाग्रहणाद्वा । आद्रियन्ते इति दृङः कर्तरि लट् ॥ ६३ ॥

गत्वेति ॥ मूर्छाभाजामन्तरात्मा जीवः रम्यं वैबुधं सद्म दिव्यभवनं गत्वा आजगाम मूर्छासमये सुरलोकरामणीयकं दृष्ट्वा आजगाम, नूनमुत्प्रेक्षायाम् । कुतः—यद् यस्मात् प्राप्तसंज्ञा लब्धबोधाः सन्तः दृष्टप्रत्ययाः दृढविश्वासाः भूयः पुनरपि साधीयो बाढतरम् । बाढादीयसुनि 'अन्तिकबाढयोर्नेदसाधौ' इति साधादेशः। रणाय रणं कर्तुमाद्रियन्ते। उत्सहिरे इत्यर्थः। कर्तरि लट्, श्यन्प्रत्ययः । कथञ्चिदुज्जीवितानां पुनर्मृत्युप्राप्तिः श्रेयोदर्शनहेतुकेति भावः ॥ ६३ ॥

**कश्चिच्छस्त्राऽऽबाध(१)मूढोऽपबोढुर्लब्ध्वा भूयश्चेतनामाहवाय ॥**
**व्यावर्तिष्ट क्रोशतः सख्युरुच्चैस्त्यक्तश्चात्मा का च लोकानुवृत्तिः ६४**

कश्चिदिति ॥ कश्चित् सुभटः चेतनां लब्ध्वा संज्ञां प्राप्य भूयः पुनरपि आहवाय सङ्ग्रामाय व्यावर्तिष्ट व्यावृत्तः । किंलक्षणः सुभटः शस्त्राबाधमूढः शस्त्रस्य प्रहरणस्य आबाधः पीडनं तेन मूढः मोहं प्राप्तः । आयुधकृतपीडानिश्चेतनः इत्यर्थः । कदा व्यावर्तिष्टेत्याह—कस्य सतः सख्युः सुहृदः उच्चैस्तारं क्रोशतः फूत्कुर्वतः सतः, समाश्वसिहीति उदितवतो वा। त्यक्तश्च आत्मा देहश्च उज्झितः । यतः कारणात् का च लोकानुवृत्तिः लोकानामनुवृत्तिः चित्तानुवर्तनम्। धार्यमाणे ह्यात्मनि अन्योन्योपरोधो युक्तः। स च मुमूर्षुः, किं तस्य लोकचित्तग्रहणेन । प्रथमश्च हेतोः उपरोधः स रणे यस्मात् त्यक्तात्मा । तस्मान्निष्फलैव लोकानुवृत्तिरित्यर्थः । एककालपूरणार्थो वा। यदैव आत्मा कायस्त्यक्तः, तदैव लोकानुवृत्तिर्न भवतीत्यर्थः। सख्युरिति षष्ठी चाऽनादरे । किंलक्षणस्य सख्युः अपबोढुः प्रत्याख्यानपरस्य॥

कश्चिदिति ॥ शस्त्रापातमूढः प्रहारमूर्छितः कश्चिद्वीरश्चेतनां संज्ञां लब्ध्वा अपबोढुर्मूर्छासमये युद्धभूमेरपनेतुः सख्युर्मित्रस्योच्चैः क्रोशतः 'आगच्छागच्छे'त्याक्रोशति सति । 'षष्ठी चाऽनादरे' इति षष्ठी। क्रोशन्तमनादृत्येत्यर्थः । भूयः पुनरपि आहवाय रणाय व्यावर्तिष्ट, आत्मा देहस्त्यक्तश्च । तथा हि-लोकानुवृत्तिश्च का । नैवेत्यर्थः। सुहृज्जनानुरोधस्तु हितानर्थिनः परिच्छेत्तुं वृथेत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६४ ॥

**भिन्नोरस्कौ शत्रुणाऽऽकृष्य दूरादासन्नत्वात्कौचिदेकेषुणैव ॥**
**अन्योन्याऽवष्टम्भसामर्थ्ययोगादूर्ध्वावेव स्वर्गतावप्यभूताम् ॥ ६५ ॥**

भिन्नोरस्काविति ॥ कौचित् सुभटौ स्वर्गतावपि मृतावपि ऊर्ध्वावेव अभूताम् अपतितौ बभूवतुः । किंलक्षणो योधौ शत्रुणा वैरिणा दूरमतिशयेन आकृष्य आकृष्ट्वा(?) एकेषुणैव एकेनैव इषुणा मार्गणेन आसन्नत्वात् नेदीयस्त्वात् भिन्नोरस्कौ विद्धवक्षसौ । कस्मादपतितौ स्थितौ अन्योन्यावष्टम्भसामर्थ्ययोगात् परस्परावरणशक्तिसम्बन्धात् ऊर्ध्वत्वादवस्थितौ । अन्योन्यस्यावष्टम्भः परस्परस्य सन्धारणं तत्र शक्तिः सामर्थ्यं तस्य योगः सम्बन्धः तस्मात् स्वः स्वर्गं गतौ ॥ ६५ ॥

भिन्नोरस्काविति ॥ शत्रुणा दूरादाकृष्य, आसन्नत्वात्तयोरित्यर्थः । सन्निकृष्टत्वादेकेषुणैव भिन्नोरस्कौ विदारितवक्षसौ काचिद्वीरावन्योन्यावष्टम्भ एव सामर्थ्यं तस्य योगात्स्वभावादूर्ध्वावेव ऊर्ध्वं तिष्ठन्तावेव स्वर्गता-

(१) ०च्छस्त्रापात ।

यपि मृतावभूताम् । अपिरर्थः । तत्र मृतयोरूर्ध्वाऽवस्थानासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६५ ॥

**भिन्नानस्त्रैर्मोहभाजोऽभिजातान् हन्तुं लोलं वारयन्तः स्ववर्गम् ॥**
**जीवग्राहं ग्राहयामासुरन्ये योग्येनाऽर्थः कस्य न स्याज्जनेन ॥ ६६ ॥**

भिन्नानिति ॥ अन्ये धीराः अस्त्रैरायुधैः भिन्नान् विद्धान् अतश्च मोहभाजः मूर्छितान् एवंभूतान् अभिजातान् प्रख्यातकुलैश्वर्यान् पुरुषान् हन्तुं हिंसितुं लोलं चपलं जिघांसुं स्ववर्गं निजसहायसमुदयं वारयन्तः निवर्तयन्तः, 'मा एनान् वधी'रिति वदन्तः इत्यर्थः, जीवग्राहं, जीवन्तीति जीवाः जीवान् गृहीत्वा इति जीवग्राहं, 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति णमुल् । न किञ्चिच्चैतच्चित्रमित्याह—यतः योग्येन भव्येन जनेन लोकेन कस्यार्थः न स्यात् कस्य प्रयोजनं न भवेत् । यतः शत्रोरपि तेनार्थो भवेत । ते च योग्याः भव्याः, अभिजातत्वात् ॥ ६६ ॥

भिन्नानिति ॥ अन्ये वीरा अस्त्रैर्भिन्नान् विदारितान् अत एव मोहभाजो मूर्छाभाजो मूर्छागतानभिजातान् कुलीनान् । 'अभिजातः स्थितौ न्याय्ये कुलीनप्राप्तयोरपि' इति विश्वः । हन्तुं लोलमुत्सुकं स्ववर्गं वारयन्तः जीवं गृहीत्वा जीवग्राहं ग्राहयामासुः । जीवमेव ग्राहयामासुरित्यर्थः । 'समूलाकृतजीवेषु हनकृञ्ग्रह' इति णमुल्प्रत्ययः । कषादित्वादनुप्रयोगः । जीवग्रहणप्रयोजनमर्थान्तरन्यासेनाह—तथा हि–योग्येन जनेन हेतुना कस्य पुंसोऽर्थः कीर्त्यादिप्रयोजनं न स्यात् । स्यादेव सर्वस्याऽपीत्यर्थः । अतो वीराणां रणेष्वप्यतिपरिक्षतरक्षणमेव श्रेयः । 'नार्तं नाऽतिपरिक्षतम्' इति हननानिषेधादिति भावः ॥ ६६ ॥

**भग्नैर्दण्डैरातपत्राणि भूमौ पर्यस्तानि प्रौढचन्द्रद्युतीनि ॥**
**आहाराय प्रेतराजस्य रूप्य(१)स्थालानीव स्थापितानि स्म भान्ति ॥ ६७ ॥**

भग्नैरिति ॥ आतपत्राणि छत्राणि भान्ति स्म चकाशिरे । कैः भग्नैर्दण्डैः छिन्नैरवष्टम्भकाष्ठैः, किंलक्षणानि आतपत्राणि भूमौ पर्यस्तानि छिन्नदण्डत्वात् क्षितौ पतितानि, अपरं किंलक्षणानि प्रौढचन्द्रद्युतीनि जरठशशधरधवलानि । अपरं किंलक्षणानि आतपत्राणि, उत्प्रेक्ष्यन्ते—प्रेतराजस्य यमस्य आहारार्थमाहाराय स्थापितानि सज्जीकृतानि रूप्यस्थालानीव जातरूप(?)भाजनानीव । रणे किल मृत्युना प्राणिनोऽत्तव्याइति स्थापितानीति ॥ ६७ ॥

भग्नैरिति ॥ भग्नैर्दण्डैर्हेतुना । भग्नदण्डत्वादिति भावः । भूमौ पर्यस्तान्युत्तानपतितानि प्रौढचन्द्रद्युतीनि पूर्णेन्दुप्रभाण्यातपत्राणि, श्वेतच्छत्राणीत्यर्थः । प्रेतराजस्याऽन्तकस्याहाराय भोजनाय स्थापितानि विहितानि रौप्यस्थालानि राजतभाजनानीव भान्ति स्मेत्युत्प्रेक्षा ॥ ६७ ॥

**रेजुर्भ्रष्टा वक्षसः कुङ्कुमाऽङ्का मुक्ताहाराः पार्थिवानां व्यसूनाम् ॥**
**हासाल्लक्ष्याः पूर्णकामस्य मन्ये मृत्योर्दन्ताः पीतरक्ताऽऽसवस्य ॥ ६८ ॥**

रेजुरिति ॥ व्यसूनां गतप्राणानां मृतानां पार्थिवानां राज्ञां वक्षसः भ्रष्टाः उरस्तः पतिताः मुक्ताहारा मौक्तिकदोरका रेजुः बभुः । किंलक्षणाः मुक्ताहाराः कुङ्कुमाङ्काः काश्मीरलिप्ताः, कुङ्कुमस्य केसरस्य अङ्को लाञ्छनं येषु ते तथा । अपरं किंलक्षणा मुक्ताहाराः, उत्प्रेक्ष्यन्ते—पूर्णकामस्य प्राप्तमनोरथस्य कृतकृत्यस्य मृत्योः दन्ता इव यमस्य दशना इव, अहम् इति मन्ये नूनं निश्चितम् । किंलक्षणाः दन्ताः हासाल्लक्ष्याः

---

( १ ) रौप्य ।

हासवशाद् दृश्याः । ननु दशना धवला भवन्तीति कथमिदमुपमानं भवतीत्याह—किलक्ष-णस्य मृत्योः पीतरक्तासवस्य पीतरुधिरासवस्य ॥ ६८ ॥

रेजुरिति ॥ व्यसूनां मृतानां पार्थिवानां वक्षसो भ्रष्टाः पतिताः कुङ्कुमाङ्काः । कुङ्कुमारुणिता इत्यर्थः । मुक्ताहाराः पूर्णकामस्य सकलराजकसंहारात्सफलमनोरथस्य अत एव पीतं रक्तमेवासवं येन तस्य मृत्योः हासादट्टहासाल्लक्ष्या दृश्या दन्ता रेजुरिति मन्ये इत्युत्प्रेक्षा ॥ ६८ ॥

**निम्नेष्वोघीभूतमस्त्रक्षतानामस्रं भूमौ यच्चकासाञ्चकार ॥**
**रागार्थं तत्किं नु कौसुम्भमम्भः संव्यानानामन्तकाऽन्तःपुरस्य ॥ ६९ ॥**

निम्नेष्विति ॥ अस्त्रक्षतानां प्रहरणाहतानाम् अश्वगजपुरुषाणाम् अस्रं रुधिरं निम्नेषु अनुत्तानेषु नीचेषु प्रदेशेषु ओघीभूतं सत् एकस्थं सत् यत् चकासाञ्चकार बभासे । तत्किं नु वितर्के, अन्तकाऽन्तःपुरस्य मृत्युशुद्धान्तस्य संव्यानानां वाससां रागार्थं लोहितीकरणाय कौसुम्भं महारजनम् अम्भः पानीयं स्यादिति संशयालङ्कारः । कुसु-म्भेन रक्तं कौसुम्भम् ॥ ६९ ॥

निम्नेष्विति ॥ भूमौ निम्नेषु निम्नस्थलेष्वोघीभूतं राशीभूतमस्त्रक्षतानां सम्बन्धि यदस्रं रक्तं चकासा-ञ्चकार दिदीपे । 'चकासृ दीप्तौ' इति धातोर्लिट् । 'कास्यनेकाच आम्वक्तव्यः' इत्याम्प्रत्यये कृञोऽनुप्र-योगः । तदस्रमन्तकाऽन्तःपुरस्य कृतान्तावरोधस्य संव्यानानामुत्तरीयाणां रागार्थं रञ्जनार्थं कुसुम्भस्येदं कौसुम्भम् अम्भः किं नु कुसुम्भद्रवो नु वेत्युत्प्रेक्षा ॥ ६९ ॥

**रामेण त्रिःसप्तकृत्वो ह्रदानां चित्रं चक्रे पञ्चकं क्षत्रियाऽस्रैः ॥**
**रक्ताऽम्भोभिस्तत्क्षणादेव तस्मिन्सङ्ख्येऽसङ्ख्याः प्रासरन्(१) द्वीपवत्यः ॥**

रामेणेति ॥ तस्मिन् सङ्ख्ये सङ्ग्रामे रक्ताम्भोभिः कीलालवारिभिः असङ्ख्याः अगणेयाः अनन्ताः द्वीपवत्यो नद्यः प्रासरन् प्रावहन्, ऊढा इत्यर्थः । एतत्पूर्वं जामदग्न्य-स्यैवंविधं युद्धमभूत्, तत्को विस्मयः इत्याशयेनाह—यतः रामेण जामदग्न्येन क्षत्रियाऽस्रैः राजन्यरुधिरैः कृत्वा चित्रमाश्चर्यरूपं ह्रदानां पञ्चकं जलाशयानां पञ्चकं स्यमन्तपञ्चकाख्यं त्रिःसप्तकृत्वः एकविंशतिवारैः चक्रे कृतमिति । पूर्वमुपलक्षणादेवेति महान् विशेषः । उपमानस्य चित्रत्वे उपमेयस्य चित्रान्तरत्वं प्रतीयते तच्चित्रम् । इदं त्वति-चित्रमित्यर्थः । त्रीन् वारान् त्रिः, द्वित्रिचतुर्भ्यः सुच् । सप्तवारान् सप्त कृत्वः, सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् । सप्त च त्रिर्गुणिता एकविंशतिर्भवति । पञ्चपरिमाणमस्य पञ्चकं 'सङ्ख्यायाः संज्ञे'ति कन् ॥ ७० ॥

रामेणेति ॥ रामेण भार्गवेण सामर्थ्यात् त्रीन्वारान् त्रिः । 'द्वित्रिचतुर्भ्यः सुच्' इति सुच्प्रत्ययः । त्रि-रावृत्ताः सप्त त्रिःसप्तकृत्वः । एकविंशतिवारानित्यर्थः । 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति कृत्व-सुच् प्रत्ययः । क्षत्रियास्रैः राजन्यरक्तैः चित्रमद्भुतं ह्रदानां, पञ्च परिमाणमस्य पञ्चकम् । 'सङ्ख्यायाः संज्ञा-सङ्घसूत्राध्ययनेषु' इति सङ्घार्थे कन्प्रत्ययः । चक्रे कृतम् । तस्मिन् सङ्ख्ये युद्धे । 'मृधमास्कन्दनं सङ्ख्यम्' इत्यमरः । क्षणादेव रक्तैरेवाऽम्भोभिः असङ्ख्या द्वीपवत्यो नद्यः प्रावहन् प्रासरन् । रामेण बहुकालेन च स्यमन्तपञ्चकाख्यं ह्रदपञ्चकमेव कथञ्चित्कृतम् । अत्र तु क्षणमात्रेणाऽसङ्ख्या नद्यः प्रवृत्ता इत्युपमानादुप-मेयस्याधिक्योक्तेर्व्यतिरेकालङ्कारः ॥ ७० ॥

---

(१) प्रावहन् ।

सन्दानान्तादङ्घ्रिभिः शिक्षितास्त्रैराविश्याऽधः शातशस्त्राऽवलूनाः ॥
कूर्मौपम्यं व्यक्तमन्तर्नदीनामैभाः प्रापन्नंह्रयो(१)ऽसृङ्मयीणाम् ॥ ७१ ॥

सन्दानान्तादिति ॥ असृङ्मयीणां नदीनां रक्तसरिताम् अन्तर्मध्ये ऐभाः अंह्रयः गजसम्बन्धिनः पादाः सन्दानान्तात् गुल्फप्रदेशात् अङ्घ्रिभिः आयुधधारिभिर्वीरैः शातशस्त्राऽवलूनाः तीक्ष्णखड्गच्छिन्नाः, किं कृत्वा अधः आविश्य उदरभागे प्रविश्य, अतश्च ज्ञायते असृक्सरितां मध्ये कूर्मौपम्यं प्रापन् कच्छपतुल्यतां प्रापुः । नदीषु किल कूर्मैर्भाव्यम् । अंह्रिशब्दे अहि गतावितिति (सम्बन्धात् ?) वङ्क्र्यादित्वात् क्रिन् । अनुस्वारभावे हकारस्य यय्त्वाभावात् परसवर्णाऽभावः । क्वचित्तु निपातयन्ति । शातशब्दे 'शाच्छोरन्यतरस्या'मितीत्वं विभाषितम् ॥ ७१ ॥

सन्दानान्तादिति ॥ शिक्षितास्त्रैरभ्यस्तास्त्रविद्यैरङ्घ्रिभिरायुधीयैः अधः रथानामधस्तादाविश्य प्रविश्य सन्दानान्ताद्बन्धनप्रदेशात् । गुल्फप्रदेशमाधिकृत्येत्यर्थः । 'सन्दानं पशूनां पादबन्धनम्' इति विश्वः । शातं शितम् । 'शाच्छोरन्यतरस्याम्' इति विकल्पादीत्वाभावः । तेन शस्त्रेणाऽवलूनाश्छिन्नाः इभानामिमे ऐभाः अङ्घ्रयश्चरणाः असृङ्मयीणां रक्तविकाराणां नदीनामन्तरभ्यन्तरे व्यक्तं कूर्मौपम्यं कमठोपमाम् । स्वार्थे ष्यञ् प्रत्ययः । अत एवौपम्यादयः चातुर्वर्ण्यवदिति वामनः । प्रापन् प्राप्ताः । आपो लुङि 'पुषादि–'इति च्लेरङादेशः । उपमा ॥ ७१ ॥

पद्माकारैर्योधवक्त्रैर्गजानां(२) कर्णभ्रष्टैश्चामरैरेव हंसैः ॥
सोपस्काराः प्राभव(३)न्नस्रतोयाः स्रोतस्विन्यो वीचिषूच्चैस्तरद्भिः ॥७२॥

पद्माकारैरिति ॥ अस्रतोयाः रुधिराऽम्बवः स्रोतस्विन्यः नद्यः प्राभवन् जज्ञिरे । किंलक्षणाः स्रोतस्विन्यः योधवक्त्रैः वीरवदनैः सोपस्कराः सालङ्काराः भूषिताः, किंलक्षणैः योधवक्त्रैः पद्माकारैः कमलाकृतिभिः, अपरं किंलक्षणाः स्रोतस्विन्यः चामरैरेव हंसैः चामररूपैर्हंसैः सितच्छदैः सोपस्कराः । 'संपर्युपेभ्यः करोतौ भूषणे' इति सुडागमः । किंलक्षणैः चामरैः वीचिषु ऊर्मिषु उच्चैरतिशयेन तरद्भिः प्लवमानैः । नद्यो हि पद्मैर्हंसैश्च भूष्यन्ते, हंसाश्च वीचिषु तरन्तीति साम्यम् । अपरं किंलक्षणैः चामरैः गजानां कर्णभ्रष्टैः दन्तिनां कर्णेभ्यश्च्युतैः । चामरैरेव हंसैरिति रूपकम् ॥ ७२ ॥

पद्माकारैरिति ॥ उच्चैर्वीचिषु तरद्भिः प्लवमानैः पद्माकारैः कमलकल्पैर्योधवक्त्रैर्भटमुखैरिभानां कर्णेभ्यो भ्रष्टैश्चामरैर्हंसैः सोपस्काराः सपरिकराः । 'संपर्युपेभ्यः करोतौ भूषणे' इति सुडागमः । अस्रतोया रक्तजलाः स्रोतस्विन्यो नद्यः प्रावहन् । अत्र रूपकोपमयोः सङ्करः सुगमः ॥ ७२ ॥

उत्क्रान्तानामामिषायोपरिष्टादध्याकाशं बभ्रमुः पत्त्रवाहाः ॥
मूर्ताः प्राणा नूनमद्याप्यपेक्षामासुः(४) कायं त्याजिता दारुणास्त्रैः ॥७३॥

उत्क्रान्तानामिति॥ पत्त्राणि वहन्ति धारयन्तीति ते पत्त्रवाहाः पक्षिणो गृध्राः अध्याकाशं बभ्रमुः आकाशे भ्रमन्ति स्म । क उत्क्रान्तानामुपरिष्टात् मृतानामुपरि, किमर्थं बभ्रमुः आमिषाय मांसाय मांसमादातुम् । किंलक्षणाः पत्त्रवाहाः, नूनमुत्प्रेक्ष्यन्ते—मूर्ताः मूर्तिमन्तः प्राणाः असवः अद्यापि एतर्ह्यपि कायं देहम् अपेक्षामासुरिव प्रत्यैक्षन्तेव । यतः किंलक्षणाः प्राणाः दारुणास्त्रैः घोरैरायुधैः त्याजिताः हापिताः । तैश्चाऽकाले वयमुद्वासिताः भूयः प्रविशाम इति प्रतिपालयन्त इव ॥ ७३ ॥

(१) प्रापन्नङ्घ्रयो । (२) ०रिभानां । (३) प्रावह० । (४) ०प्यवेक्षामासुः ।

उत्क्रान्तानामिति ॥ पत्त्राणि वहन्तीति पत्त्रवाहाः पत्त्रिणः आमिषाय आमिषमत्तुम् । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । उत्क्रान्तानां मृतानामुपरिष्टात् अध्याकाशमाकाशे । विभक्त्यर्थेऽव्ययीभावः । बभ्रमुः भ्रेमुः । 'फणां च सप्तानाम्'इति विकल्पादेत्वाभ्यासलोपाभावः । अत्रोत्प्रेक्ष्यते—दारुणाभिर्घोराभिः कायं त्याजिता विसर्जिताः । त्यजेर्ण्यन्ताद् द्विकर्मकात्कर्मणि क्तः । 'ण्यन्ते कर्तुश्च कर्मणः' इति वचनात् । मूर्ता मूर्तिमन्तः प्राणा अद्येदानीमपि कायमवेक्षामासुः । पूर्वाभिमानात्पुनः कायप्रवेशाऽपेक्षिणो मूर्ताः प्राणा एव नूनमाराद्भ्रमन्तीत्युत्प्रेक्षार्थः । 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्ययः, 'कृञ्चानुप्रयुज्यते लिटि' इत्यस्तेरनुप्रयोगः । 'आम्प्रत्ययवत्—' इत्यत्र कृञ एवेति नियमादस्तेर्नात्मनेपदम् ॥ ७३ ॥

**आतन्वद्भिर्दिक्षु पक्षाग्रवातं(१) प्राप्तैर्दूरादाशु तीक्ष्णैर्मुखेषु ॥**
**आदौ रक्तं सैनिकानामजीवैर्जीवैः पश्चात्पत्त्रिपूगैरपायि ॥ ७४ ॥**

आतन्वद्भिरिति ॥ सैनिकानां सेनाचराणां वीराणां रक्तं रुधिरम् आदौ पूर्वम् अजीवैः अप्राणवद्भिः पत्त्रिपूगैः शरसमूहैः अपायि पपे, पश्चात् जीवैः प्राणवद्भिः पत्त्रिपूगैः कङ्कगृध्रादिसमूहैः अपायि पीतम् । किंलक्षणैः पत्त्रिपूगैः दिक्षु आशासु पक्षाग्रवातं पतत्त्रप्रान्तमरुतम् आतन्वद्भिः विस्तारयद्भिः, अपरं किंलक्षणैः पत्त्रिपूगैः दूरादाशु प्राप्तैः विप्रकृष्टदेशात् शीघ्रमागतैः इत्युभयत्रापि तुल्यम् । अपरं किंलक्षणैः पत्त्रिपूगैः मुखेषु अग्रेषु वदनेषु च तीक्ष्णैः शितैः तीव्रैश्च । अजीवैरित्यत्र 'जीवाजीवश्च प्राणजीवै'रिति । जीवन्तीति जीवाः । अपायीति पिबतेः कर्मणि चिण् ॥ ७४ ॥

आतन्वद्भिरिति ॥ दिक्षु पत्त्राग्रनादं पक्षान्तघोषमातन्वद्भिर्विस्तृणद्भिर्दूरादाशु प्राप्तैरागतैरजीवैरचेतनैः । पचाद्यजन्तेन नञ्समासः । पत्त्रिपूगैः, बाणव्रातैरित्यर्थः । तीक्ष्णैर्मुखाग्रैः करणैः सैनिकानां रक्तमपायि पीतम् । पिबतेः कर्मणि लुङ् 'आतो युक् चिण्कृतोः' इति युगागमः । पश्चाज्जीवैश्चेतनैः पत्त्रिपूगैः पक्षिसङ्घैः कर्तृभिस्तीक्ष्णैर्मुखाग्रैश्चञ्चुपुटैः करणैरपायि । अत्रोभयेषां पत्त्रिणां प्रकृतत्वात् केवलप्रकृतविषयः श्लेषः ॥७४॥

**ओजोभाजां यद्रणे संस्थितानामादत् तीव्रं सार्धमङ्गेन नूनम् ॥**
**ज्वालाव्याजादुद्वमन्ती तदन्तस्तेजस्तारं दीप्तजिह्वा ववाशे ॥ ७५ ॥**

ओजोभाजामिति ॥ दीप्ता ज्वलन्ती जिह्वा रसना यस्याः सा दीप्तजिह्वा शृगाली तारं ववाशे सस्वान । किंलक्षणा दीप्तजिह्वा तत् तेजः नूनं निश्चितं ज्वालायाः व्याजात् अर्चिच्छलात् अन्तः हृदयात् उद्वमन्ती वमन्ती, तत् किं—यत्, रणे सङ्ग्रामे संस्थितानां मृतानामोजोभाजां तेजस्विनाम् अङ्गेन सार्धं वपुषा सह आदत् बुभुजे । किंलक्षणं तेजः तीव्रं दुस्सहं, दीप्तजिह्वत्वादेवोत्प्रेक्षा । शिवाया हि वाशन्त्या वदनात् ज्वाला निस्सरतीति प्रसिद्धम् । आददिति 'अदः सर्वेषा'मिति अडागमः ॥ ७५ ॥

ओजोभाजामिति ॥ दीप्ता ज्वलन्ती जिह्वा यस्याः सा दीप्तजिह्वा शिवा रणे संस्थितानां मृतानामोजोभाजामोजस्विनामङ्गेन गात्रेण सार्धं यत्तीव्रं तिग्मं तेज आददभक्षयत् । अदेर्लङ् 'अदः सर्वेषाम्' इत्यडागमेऽपृक्तस्य 'आडजादीनाम्' इत्याडागमोऽङ्गस्य 'आटश्च' इति वृद्धिः । तदन्तरन्तरेऽन्तरितं तेजो ज्वालाव्याजान्मुखोल्काच्छलादुद्वमन्ती तारमुच्चैर्ववाशे रौति स्म । 'तिरश्चां वाशितं रुतम्' इत्यमरः । नूनमित्युत्प्रेक्षायाम् । अत्र व्याजशब्देन ज्वालात्वापह्नवेन तेजस्त्वोत्प्रेक्षणे सापह्नवोत्प्रेक्षेति सर्वस्वकारः ॥७५॥

**नैरन्तर्यच्छन्नदेहाऽन्तरालं दुर्भक्ष्यस्य(२) ज्वालिना वाशितेन ॥**
**योद्धुर्घ्राणघ्रात(३)मादीप्य मांसं पाकाऽपूर्वस्वादमादे शिवाभिः ॥७६॥**

---

( १ ) पत्त्राग्रनादं...॰र्मुखाग्रैः । ( २ ) ॰च्छिन्न... दुर्भक्षस्य । ( ३ ) प्रीत ।

नैरन्तर्येति ॥ शिवाभिः शृगालीभिः योद्धुर्भटस्य मांसं पिशितम् आदे जग्धम् । किं कृत्वा ज्वालिना ज्वालावता वाशितेन स्वनेन बाणव्रातं शरनिकरम् आदीप्य दग्ध्वा, किंलक्षणं मांसं पाकाऽपूर्वस्वादं पाकेन रन्धनेन अपूर्वः अननुभूतपूर्वः स्वादः आस्वादो यस्य तत्तथा, किंलक्षणं बाणव्रातं नैरन्तर्यच्छन्नदेहान्तरालं नैरन्तर्येण सामस्त्यात् छन्नं छादितं देहान्तरालं शरीरमध्यं येन सः तथा तम् , अत एव किंलक्षणस्य योद्धुः दुर्भक्ष्यस्य अत्तुमशक्यस्य । अतश्च दीपितेषु शरेषु ज्वालिना वाशितेन पलं पक्त्वा भुक्तम् । आदे इति कर्मणि लिट् ॥ ७६ ॥

नैरन्तर्येति ॥ नैरन्तर्येणाऽविच्छेदेन छिन्नं देहस्यान्तरालं यस्मिन्कर्मणि तद्यथा तथा बाणैः प्रोतं स्यूतम् अत एव दुर्भक्षस्य भक्षितुमशक्यस्य । कृच्छार्थे खल्प्रत्ययः । योद्धुर्योधस्य सम्बन्धि मांसं ज्वालिना ज्वालावता वाशितेन रुतेन । शिवानां वाशने जिह्वा ज्वलतीति प्रसिद्धिः । आदीप्य प्रज्वाल्य । बाणदाहाय मांसपाकाय चेति भावः । अत एव पाकेनापूर्वोऽभिनवः स्वादो रुचिर्यस्य तत्तथा शिवाभिर्गोमायुभिः । 'स्त्रिया शिवा भूरिमायगोमायुमृगधूर्तकाः' इत्यमरः । आदे जघसे । भक्षितमित्यर्थः । 'लिट्यन्यतरस्याम्' इति विकल्पाददेर्घस्लादेशः । वाशितोत्थया जिह्वाज्वालया दग्धेषुप्रतिबन्धेन पाकरुचिरं जघस इत्यर्थः । अत्र पाकापूर्वास्वादाद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ७६ ॥

ग्लानिच्छेदि(१)क्षुत्प्रबाधाय पीत्वा रक्तारिष्टं शोषिताजीर्णशेषम् ॥
स्वादुङ्कारं कालखण्डोपदंशं क्रोष्टा डिम्बं व्यष्वणद्व्यस्वनच्च ॥ ७७ ॥

ग्लानिच्छेदीति ॥ क्रोष्टा शृगालः डिम्बं प्लीहं व्यष्वणत् बुभुजे,अत एव व्यस्वनत् ववाशे च । भक्षयन्निव ववाशे इत्यर्थः। कथं व्यष्वणत् स्वादुङ्कारम् , अस्वादुं स्वादुं कृत्वा इति स्वादुङ्कारमिति णमुल् । अपरं कथं कालखण्डोपदंशं कालखण्डस्य यकृतः उपदंशं प्रतिकर्मत्वं यत्र क्रियायां तद्यथा । डिम्बभोजने तु कारणत्वमेव । अपरं किं कृत्वा रक्तारिष्टं पीत्वा रक्तं रुधिरमेव अरिष्टं पानविशेषं क्षुत्प्रबोधाय बुभुक्षोत्पादनाय पीत्वा धयित्वा, किंलक्षणं रक्तारिष्टं ग्लानिच्छेदि आलस्यनाशयितृ, अपरं किंलक्षणं रक्तारिष्टं शोषिताजीर्णशेषं क्षपितरसं, शोषितः अजीर्णस्य शेषः येन तत् तथा पाचिताऽपक्वान्नोर्वरितभागम् । क्रव्यादानां हि असृक्पानेन जीर्णिर्भवति । रक्तडिम्बं कालखण्डं क्रोष्टा आददित्यर्थः । यो गाढं स्वादु मांसमशनं भुङ्क्ते अपूर्वं गुलिकमश्नाति, ततो ग्लानिच्छेदि निरस्ताजीर्णशेषं पानम् । व्यष्वणदिति 'वेश्च स्वनो भोजने' इति षत्वम् । व्यस्वनदिति व्यसोढत्वात्(?) प्रत्युदाहरणम् ॥ ७७ ॥

ग्लानिच्छेदीति ॥ क्रोष्टा जम्बुकः क्षुत्प्रबोधाय ग्लानिच्छेदी खेदहारी शोषितो जारितः अजीर्णशेषो येन तद्रक्तमेवारिष्टं पानविशेष इति रूपकम् । तत्पीत्वा स्वादुङ्कारं स्वादूकृत्य । 'स्वादुमि–' इति णमुल् । कालखण्डेन यकृता उपदंशम् । कालखण्डमुपदंशं कृत्वेत्यर्थः । 'कालखण्डयकृती तु समे' इत्यमरः । 'उपदंशस्तृतीयायाम्' इति णमुल् । कालखण्डस्य दशनक्रियाकर्मत्वेऽपि भुजिक्रियाकरणत्वात्तृतीयोपपदतया 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति विकल्पेनोपपदसमासः । डिम्बं कलेवरं व्यष्वणत् । भुक्तवानित्यर्थः । 'वेश्च स्वनो भोजने' इति षत्वम् । व्यस्वनदवादयच्चेति समुच्चयः । अभोजनार्थत्वात्षत्वं न ॥ ७७ ॥

क्रव्यात्पूगैः पुष्कराण्यानकानां प्रत्याशाभिर्मेदसो दारितानि ॥
आभीलानि प्राणिनः प्रत्यवस्यन् कालो नूनं व्याददावाननानि ॥ ७८ ॥

क्रव्यात्पूगैरिति ॥ आनकानां पटहानां पुष्कराणि मुखानि क्रव्यात्पूगैः क्रव्यादां

(१) ०च्छेदी ।

मांसभक्षिणां पूगाः समूहाः तैः कङ्कगृध्रादिव्रातैः मेदसः प्रत्याशाभिः स्त्यानपिशितस्य वाञ्छाभिः आभीलानि कृच्छ्रात् पाट्यानि दारितानि पाटितानि। नूनम् उत्प्रेक्ष्यते—ध्रुवं वा प्राणिनः प्रत्यवस्यन् गजतुरङ्गमनुष्यादीन् जीवान् भुञ्जानः कालो मृत्युः आननानि मुखानि व्याददाविव व्यकासयदिव। जन्तून् अत्तुं कृच्छ्रदार्याणि आभीलानि आस्यानि मृत्युः विवृतवानित्यर्थः। आनकपुष्करस्य शुक्लत्वात् मेदोभ्रान्तिः। यदुक्तं पञ्चोपाख्याने—

पूर्वमेतन्मया ज्ञातं पूर्णमेतद्धि मेदसा।
अन्तः प्रविश्य विज्ञातं यावच्चर्म च दारु च॥

इति। आभीलमुच्यते कृच्छ्रम्। अत्र तु कृच्छ्रदार्यत्वाच्च कृच्छ्रम्। क्रव्यमदन्तीति क्रव्यादो मांसभक्षाः, 'क्रव्ये च' इति विट्॥ ७८॥

क्रव्यात्पूगैरिति॥ क्रव्यमदन्तीति क्रव्यादो मांसभक्षकाः कङ्कगृध्रादयः। 'क्रव्ये च' इति विट् प्रत्ययः। तेषां पूगैः कर्तृभिः मेदसो वसायाः। 'मेदस्तु वपा वसा' इत्यमरः। प्रत्याशाभिस्तृष्णाभिर्दारितानि मेदस्त्विवत्वभ्रान्त्या पाटितान्यानकानां तूर्याणां पुष्कराणि मुखानि। 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले' इत्यमरः। प्राणिनः करितुरगादीन् प्रत्यवस्यन्नभ्यवहरन्। 'अभ्यवहारः प्रत्यवसनं भोजनं जग्धिः' इति हलायुधः। कालोऽन्तकः आभीलानि भयङ्कराणि। 'आभीलं भीमकृच्छ्रयोः' इति विश्वः। आननानि व्याददौ विददार। 'आङो दोऽनास्यविहरणे' इत्यस्य प्रत्युदाहरणमेतत्। यानि विदारितानि पुष्कराणि तान्येवाननानि नूनमित्युत्प्रेक्षायाम्॥ ७८॥

कीर्णा रेजे साऽऽजिभूमिः समन्तादप्राणद्भिः प्राणभाजां प्रतीकैः।
बह्वारब्धै(१)रर्धसंयोजितैर्वा रूपैः स्रष्टुः सृष्टिकर्मान्तशाला॥ ७९॥

कीर्णेति॥ सा आजिभूमिः सङ्ग्रामोर्वी रेजे विदिद्युते, किंलक्षणा आजिभूमिः प्राणिन गजतुरङ्गमनुष्यादीनाम् अप्राणद्भिः छिन्नत्वान्निश्चेष्टैः प्रतीकैः अङ्गावयवैः समन्ताच्चतुर्दिक्षु कीर्णा व्याप्ता। अपरं किंलक्षणा आजिभूमिः, उत्प्रेक्ष्यते-स्रष्टुः विश्वकर्मणः सृष्टिकर्मान्तशालेव सृष्टये सर्गाय कर्मान्तशालेव व्यापारस्थानमिव, किंलक्षणा सृष्टिकर्मान्तशाला बह्वारब्धैः किञ्चिच्छेषैः तथा अर्धसंयोजितैः सामिघटितैः रूपैर्देहैः कीर्णा व्याप्ता। भक्षादिकर्मशाला ह्येवंविधैव भवति। वा इवार्थे। भिन्नशब्दो रूपशब्दपरोऽवसेयः बह्वारब्धैरिव वक्ष्यति क्रियाविशेषणम्(?)। बह्वनूनमारब्धैरित्यर्थः। उत्प्रेक्षोपमालङ्कारौ। अस्मिन् सर्गे शालिनी वृत्तम्॥ ७९॥

कीर्णेति॥ अप्राणद्भिरजीवद्भिः। भिन्नत्वान्निष्प्राणैरित्यर्थः। 'अन प्राणने' इति धातोर्लटः शत्रादेशः। प्राणभाजां प्राणिनां प्रतीकैरवयवैः। 'अङ्गं प्रतीकोऽवयवः' इत्यमरः। समन्तात्कीर्णा सा आजिभूमिः ईषद्समाप्तारम्भैरिति बह्वारम्भैः। किञ्चिदूनसृष्टैरित्यर्थः। 'विभाषा सुपो बहुच्पुरस्तात्तु-' इति बहुच्प्रत्ययः। तथाऽर्धसंयोजितैरर्धसृष्टैश्च रूपैराकारैः। 'रूपं स्वरूपे सौन्दर्ये आकारश्लेषयोरपि' इति विश्वः। कीर्णा स्रष्टुः धातुः सृष्टिकर्मान्तशाला वा सृष्टिकर्मणो नियतागारमिव रेज इत्युत्प्रेक्षा॥ ७९॥

आयान्तीना(२)मविरतरयं राजकाऽनीकिनीना-
मित्थं सैन्यैः सममलघुभिः श्रीपतेरूर्मिमद्भिः॥
आसीत् तोयै(३)र्मुहुरिव महद्वारिधेरापगानां
दोलायुद्धं कृतगुरुतरध्वानमौद्धत्यभाजाम्॥ ८०॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये सङ्कुलयुद्धवर्णनं नामाऽष्टादशः सर्गः॥ १८॥

---

(१) बह्वारम्भैः। (२) आयन्तीना०। (३) आसीदोघैः।

आयान्तीनामिति ॥ राजकाऽनीकिनीनां नृपतिपूगसेनानां श्रीपतेर्भगवतो लक्ष्मीनाथस्य श्रीकृष्णस्य सन्यैरनीकैः सार्धं समम् इत्थमुक्तप्रकारेण मुहुरसकृत् दोलायुद्धं संशयरणम् आसीत् बभूव । क्षणं पराजयन्ते जयन्ति च मुहुर्भगवतो बलानीत्यर्थः । किंलक्षणानां राजकाऽनीकिनीनाम् अविरतरयमनिवृत्तवेगं यथा भवत्येवम् आयान्तीनां संमुखमागच्छन्तीनाम्, अपरं किंलक्षणानाम् औद्धत्यभाजां दर्पिष्ठानां, किंलक्षणैः सैन्यैः अलघुभिः विस्तीर्णैः, अपरं किंलक्षणैः ऊर्मिमद्भिः समूहेन गच्छद्भिः । कैः कासामिवेत्याह—वारिधेः तोयराशेः तोयैः जलैः आपगानामिव नदीनामिव । यथा वारिधेः तोयैः सह आपगानां सरितां दोलायुद्धं भवति । तासामपि अविरतरयमनिवृत्तवेगं गच्छन्तीनां तथा औद्धत्यभाजां क्षुभितानाम् । किंलक्षणैः वारिधेः तोयैः अलघुभिः महद्भिः, बहुभिरित्यर्थः । अपरं किंलक्षणैः ऊर्मिमद्भिः सकल्लोलैश्च । सह महत्तु दोलायुद्धं भवति । दोलावत् हिन्दोलवत् युद्धं दोलायुद्धम्। दोला हि उभयकोट्योर्गच्छति । कदाचित् श्रीकृष्णस्य सैन्यानि जयन्ति, कदाचित् राजकाऽनीकिन्यश्च जयन्ति । कथं युद्धं बभूवेत्याह—कृतगुरुतरध्वानं विहितमहत्तरकलकलं यथा भवति तथा । एवं भगवत्सैन्यैः सह परपृतनानां महत् युद्धं बभूवेत्यर्थः । उपमाश्लेषालङ्कारः । मन्दाक्रान्ता वृत्तम् ॥ ८० ॥

इति शिशुपालवधे महाकाव्ये कविचक्रचूडामणिना माघेन विरचिते आनन्ददेवायनिवल्लभविरचितायां सन्देहविषौषध्यां सारटीकायां सङ्कुलयुद्धवर्णनं नामाऽष्टादशः सर्गः ।



आयन्तीनामिति ॥ इत्थमुक्तरीत्या अविरतरयमाविच्छिन्नवेगं यथा तथा आयन्तीनामभिधावन्तीनामौद्धत्यभाजां प्रागल्भ्यभाजां, राज्ञां समूहा राजकानि । 'गोत्रोक्ष-' इत्यादिना वुञ् प्रत्ययः । तेषामनीकिन्यः सेनास्तासां राजकाऽनीकिनीनाम् अलघुभिर्महद्भिरूर्मिमद्भिस्तरङ्गवद्भिः श्रीपतेः कृष्णस्य सैन्यैः समं सेनाभिः सह, अपां समूह आपम् । भिक्षादिभ्योऽण् । आपेन गच्छन्तीति आपगानामुक्तविशेषणविशिष्टानां वारिधेरोघैः प्रवाहैरिव कृतो गुरुतरध्वनिर्यस्मिंस्तन्महद्दोलायुद्धम् अनियतजयपराजययुद्धं मुहुरासीत् । मन्दाक्रान्ता वृत्तमेतत् ॥ ८० ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां शिशुपालवधकाव्यव्याख्यायां सर्वङ्कषाख्यायामष्टादशः सर्गः ॥ १८ ॥

---

## एकोनविंशः सर्गः ।

**अथोत्तस्थे रणाऽटव्यामसुहृद्वेणुदारिणा ॥**
**नृपाऽङ्घ्रिपौघसङ्घर्षादग्निवद्वेणुदारिणा ॥ १ ॥**

अथेति ॥ अथाऽनन्तरं वेणुदारिणा राजन्यविशेषेण रणाटव्यां समरारण्ये उत्तस्थे उत्थितम्, उद्यमोऽभाजि । रणमेव अटवी तस्याम् । कुतः नृपाऽङ्घ्रिपौघसङ्घर्षात् नृपा राजानः त एव अङ्घ्रिपाः पादपाः तेषामोघः समूहः तस्य सङ्घर्षः स्पर्धा तस्मात्, रिपुनरपतितत्स्पर्धात इत्यर्थः । यतः किंलक्षणेन वेणुदारिणा असुहृद्वेणुदारिणा असुहृदः

शत्रवः एव वेणवः त्वक्साराः मृदुकाष्ठविशेषा वा तान् दारयति क्षपयतीति असुहृद्वेणुदारी तेन, केनेवोत्तस्थे अग्निवत् अग्निनेव। यथा पादपौघानां सङ्घर्षात् घर्षणात् अटव्यां महावने वेणुदारिणा वंशतरुज्वालिना वह्निना उत्थीयते। सर्गेऽस्मिन् अनुष्टुप् छन्दः। श्लोको नाम प्रायेण वृत्तम्।

पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
षष्ठं गुरुं विजानीयादेतत् श्लोकस्य लक्षणम्॥

पर्यायेण चैकस्मिन् श्लोके यमकादीनामेकत्र शब्दालङ्कारोऽपरत्र तूपमादीनामेकार्थालङ्कारः॥ १॥

तदेवमष्टादशसर्गे तुमुलं युद्धमभिधायेदानीमेकोनविंशतिसर्गे द्वन्द्वयुद्धमानुष्टुभेन छन्दसा चित्रबन्धेन वर्णयितुमारभते—

**अथेति**॥ अथैवं तुमुलयुद्धाऽनन्तरम्। रणोऽटवी वेत्युत्युपमितसमासः, अग्निवदिति तद्धितौपम्यलिङ्गात्। एवमुत्तरत्रापि द्रष्टव्यम्। तस्यां रणाटव्यामसुहृदः शत्रवो वेणवो वंशा इव। 'वेणुमस्करतेजनाः' इति वंशपर्यायेष्वमरः। तान् दारयति यस्तेनाऽसुहृद्वेणुदारिणा वेणुदारिणा बाणात्मजेन नृपा अङ्घ्रिपाः पादपा इव तेषामोघाः सङ्घाः तेषां सङ्घर्षात् मत्सरात् श्लेषाच्च अग्निवदग्नितुल्यम्। 'तेन तुल्यम्—' इति तुल्यार्थे वतिप्रत्ययः। उत्तस्थे उत्थितम्। भावे लिट्। अत्राग्निवदिति तुल्यार्थेन वतिना धर्मव्यवधाने सादृश्यप्रतिपादिना उपमानोपमेयसमानधर्मसादृश्यप्रतिपादकानां चतुर्णां चोपादानाच्चेयमार्थी तद्धितगता पूर्णोपमा। सा च रणाऽटव्यादिसमासगतोपमासापेक्षेति सङ्करः। सर्गेऽस्मिन्नानुष्टुभं वृत्तम्।

'पञ्चमं लघु सर्वेषु सप्तमं द्विचतुर्थयोः।
गुरु षष्ठं च सर्वेषामेतत् श्लोकस्य लक्षणम्'॥

इति लक्षणात्। अत्रैकान्तरक्रमेण यमकाद्यन्यतमशब्दालङ्कारनियमः, सर्वत्र यथासम्भवमर्थालङ्कारश्च। तत्र यमकलक्षणमुक्तं दण्डिना—

'अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः।
यमकं तच्च पादानामादिमध्यान्तगोचरम्॥
एकद्वित्रिचतुष्पादैर्यमकानां विकल्पना।
आदिमध्यान्तमध्यान्तमध्याद्याद्यान्तसर्वतः'॥

इति। अत्रेदं समपादान्तं यमकं द्विपादयमकभेदः॥ १॥

**आपतन्तममुं दूरादूरीकृतपराक्रमः॥**
**बलोऽवलोकयामास मातङ्गमिव केसरी॥ २॥**

**आपतन्तमिति**॥ अमुं वेणुदारिणमापतन्तमागच्छन्तम् अपरम् ऊरीकृतपराक्रमम् अङ्गीकृतपौरुषं बलो हलधरः दूरादालोकयामास दूरतः अदर्शत्। बलभद्रो युयुत्सया तं जग्राहेत्यर्थः। कः कमिव व्यलोकयत् केसरी मातङ्गमिव। यथा मातङ्गं द्विपम् आपतन्तं केसरी सिंहः पौरुषाश्रयेण दूरादालोकयति। उपमालङ्कारः॥ २॥

**आपतन्तमिति**॥ आपतन्तमाधावन्तममुं वेणुदारिणं दूरात् ऊरीकृतपराक्रमोऽङ्गीकृतपौरुषः। तेन सहाऽनुगतसम्प्रहार इत्यर्थः। बलो बलभद्रः केसरी सिंहो मातङ्गं गजमिवाऽवलोकयामास। अनयोरिव तदन्तरमिति भावः। अतोऽलङ्कारेण वस्तुध्वनिः॥ २॥

**॥ एकाक्षरपादः॥**

**जजौजोजाऽऽजिजिज्जाजी तं ततोऽतितताऽतितुत्॥**
**भाऽऽभोऽभीभाऽभिभूभाभूराराऽरिररिरीररः॥ ३॥**

**जजौजोजेति** ॥ ततोऽनन्तरम् अरिः शत्रुः बलः तं वेणुदारिणम् आर आजगाम अभियुयुजे । किंलक्षणो बलः जजौजोजाऽऽजिजित, जज जजि युद्धे, जजन्ति युध्यन्त इति जजाः योधाः तेषामोजः तेजो बलं वा जजौजः, जजौजसः जायते उत्पद्यते सा जजौजोजा, एवंभूता या आजिः सङ्ग्रामः तां जयति अभिभवति स जजौजोजाऽऽजिजित योदृधबलसमुत्थसमरजेता, अपरं किंलक्षणो बलः जाजी सुष्टु जजति युध्यते इति जाजी सुभटः, अपरं किंलक्षणो बलः अतिततताऽतितुत् अतिशयेन तताः विस्तीर्णाः बहुसाधनयुक्ताः तान् अतन्ति तेषामुपरि गच्छन्ति ये ते अतितताऽतिनः अतिमहत्त्ववदुपरिस्थिताः तानपि तुदति पीडयतीति यः सः अतिततताऽतितुत् महाबलवीरजेतृजेता, अपरं किंलक्षणो बलः भाऽऽभः भानाम् आभा इव आभा यस्य सः भाभः नक्षत्रकान्तिः गौरत्वात, अपरं किंलक्षणो बलः अभीभाऽभिभूभाभूः अभियः भयवर्जिताः ये इभाः गजेन्द्राः ते अभीभाः निर्भयगजाः तान् अभिभवति पराभवति त्रासयति या सा अभीभाऽभिभूः, एवंभूता या भा कान्तिः तस्या भूः भवत्यस्मादिति भूः स्थानम् अभीभाऽभिभूभाभूः मत्तद्विपपरिभाविदीप्तिनिलयः, अपरं किंलक्षणो बलः अरिरीररः अरा विद्यन्ते येषां ते अरिणः रथाः चक्राणि वा तैः रिणन्ति घ्नन्ति रीयन्ते गच्छन्ति वा ते अरिरीरिणः रथिनः चक्रक्षेपका वा तेषाम् ईरः ईरणमाजौ क्षेपणं राति ददातीति यः अरिरीररः सवाहनयोधजिष्णुः । प्रतिपादमनुप्रासोऽलङ्कारः ।

> एकद्वित्रान्तरितं व्यञ्जनमविवक्षितस्वरं बहुशः ।
> आवर्त्यते निरन्तरमथ वा यदसावनुप्रासः ॥ ॥ ३ ॥

**जजौजोजेति** ॥ ततोऽवलोकनानन्तरं, जजन्तीति जजाः योधाः । जज युद्धे, पचाद्यच् । जजानामोजसो जाता जजौजोजा, तामाजिं जयतीति जजौजोजाजिजित् । जयतेः क्विप् । जजतीति जाजी योधी । ताच्छील्ये णिनिः । अतिततानत्युद्धतान् अतितुदति अतिव्यथयतीत्यतितुत् । तुदतेः क्विप् । भस्यामेवाभा यस्य स भाभो नक्षत्रकान्तिः । 'नक्षत्रमृक्षं भं तारा' इत्यमरः । नास्ति भीर्येषां तेऽभियो निर्भीकाः तानिभान् गजान् अभिभवतीति अभीभाऽभिभूः । क्विप् । तस्याः भासस्तेजसो भूः स्थानम् अभीभाऽभिभूभाभूः । अराः सन्त्येषामित्यराणि चक्राणि तैः रीणन्ति गच्छन्तीति अरिरियो रथाः । 'री गतिश्लेषणयोः' इति धातोः क्विप् । तेषाम् ईरं प्रेरणं राति अरिरीररो रथिकः । आतोऽनुपसर्गे कः । अरिः शत्रुर्बलभद्रः तं वेणुदारिणम् आर । योद्धुमाससारेत्यर्थः । 'ऋ गतौ' इति धातोर्लिट् । द्विभावे कृते णलि वृद्धिः, अभ्यासस्योरदत्वे 'अत आदेः' इति दीर्घे पुनः सवर्णदीर्घः । भिन्नैकाक्षरपादाख्योऽनुप्रासभेदः । भाभ इत्युपमाऽनुप्रासयोरेकवाचकानुप्रवेशलक्षणसङ्करः ॥ ३ ॥

> भवन् भयाय लोकानामाकम्पितमहीतलः ॥
> निर्घात इव निर्घोषभीमस्तस्याऽऽपतद्रथः ॥ ४ ॥

**भवन्निति** ॥ तस्य बलभद्रस्य रथः आपतत् स्यन्दन आजगाम । किंलक्षणः रथः लोकानां सैन्यानां भयाय भवन् त्रासाय जायमानः, अपरं किंलक्षणः रथः आकम्पितमहीतलः आकम्पिताऽवनिपृष्ठः, अपरं किंलक्षणो रथः निर्घोषभीमः चीत्कारभयानकः । अत एव उत्प्रेक्ष्यते—निर्घात इव उत्पाततुल्यः । सोऽपि जनभयङ्करः कम्पितमहीतलः निर्घोषभीमश्च । उपमाश्लेषोऽलङ्कारः ॥ ४ ॥

भवन्निति ॥ लोकानां जनानां जगतां च । 'लोकस्तु भुवने जने' इत्यमरः। भयाय भवन् सम्पद्यमानः। भयं जनयन्नित्यर्थः। 'क्लृपि सम्पद्यमाने च' इति क्लृपेरर्थनिर्देशाच्चतुर्थी। आकम्पितमहीतलः, भूकम्पं कुर्वन्नित्यर्थः। निर्घोषेण भीमो भयङ्करः तस्य बलभद्रस्य रथो निर्घात इवाऽऽपतदधावत्। श्रौती पूर्णोपमा ॥

**रामे रिपुः शरानाजिमहेष्वास विचक्षणे ॥**
**कोपादथैनं शितया महेष्वा स विचक्षणे ॥ ५ ॥**

राम इति ॥ रिपुः शत्रुः वेणुदारी रामे बलभद्रे शरान् आस सायकान् चिक्षेप। किंलक्षणे रामे आजिमहेषु समरोत्सवेषु विचक्षणे पण्डिते, समरव्यापाराभिज्ञे इत्यर्थः। अथाऽनन्तरम् एनं वेणुदारिणं स रामः कोपात् क्रोधात् शितया तीक्ष्णया महेष्वा महेषुणा महापृषतेन विचक्षणे जघान अक्षणोत्। विचक्षणे इति क्षणेः लिटि रूपम्। इषुशब्दः स्त्रीपुंसोः। सन्दष्टयमकालङ्कारः ॥ ५ ॥

राम इति ॥ रिपुर्वेणुदारी आजिमहेषु रणोत्सवेष्विति रूपकम्। 'महउद्धव उत्सवः' इत्यमरः। विचक्षणे प्रगल्भे। विचष्टे इति कर्तरि ल्युडिति न्यासकारः। 'असनयोश्च प्रतिषेधो वक्तव्यः' इति चक्षिङः ख्याञादेशाभावः। रामे बलभद्रे शरान् आस चिक्षेप। अस्यतेर्लिट् 'अत आदेः' इत्यभ्यासदीर्घे सवर्णदीर्घः। कोपात् स राम एनं वेणुदारिणं शितया शातया। 'शाच्छोरन्यतरस्याम्' इतीत्वम्। महेष्वा महेषुणा। 'पत्री रोप इषुर्द्वयोः' इत्यमरः। विचक्षणे जघान। 'क्षणु हिंसायाम्' इति धातोः कर्तरि लिट्। अभिन्नसमपादो नाम पादाभ्यासयमकभेदः। एवमुत्तरत्रापि द्रष्टव्यम् ॥ ५ ॥

**दिशमर्कमिवाऽपाचीं मूर्छां गत(१)मपाहरत् ॥**
**मन्दप्रतापं तं सूतः शीघ्रमाजिविहायसः ॥ ६ ॥**

दिशमिति ॥ सूतः सारथिः तं वेणुदारिणमाशु शीघ्रम् आजिविहायसः सङ्ग्रामाऽऽकाशादपाहरत् अपहरति स्म अपचकर्ष। अन्यतो निनायेत्यर्थः। किंलक्षणं तं वेणुदारिणं यतः मूर्छां गतं मोहं प्राप्तम्, अपरं किंलक्षणं तम् अत एव मन्दप्रतापं स्वल्पप्रभावं स्तोकतेजस्कम्। कमिव कः कुतोऽपाहरदित्याह—अपाचीं दिशं दक्षिणामाशां गतमर्कं श्रीसूर्यं मन्दप्रतापं स्वल्पतेजस्कं ततः विहायसः आकाशात् सूतः सारथिः अरुणः आशु कर्षति। दक्षिणायने हि सूर्यः मृदुतेजाः शीघ्रगामी च भवति। मूर्छाया अपाची दिगुपमानम्। रूपकोपमाश्लेषसङ्कराः अलङ्काराः ॥ ६ ॥

दिशमिति ॥ मूर्छागतं रामेषुपातान्मोहमुपगतम् अत एव मन्दप्रतापमल्पप्रकाशं तं वेणुदारिणमवाचीं दक्षिणां दिशं प्राप्तम्, अत एव मन्दप्रतापमर्कमिव सूतः सारथिररुणश्च आजेर्विहायसः आकाशादिवाऽऽजिविहायस इत्युपमितसमासः। शीघ्रमपाहरदपसारितवान्। उपमा ॥ ६ ॥

**कृत्वा शिनेः शाल्वचमूं सप्रभावा चमूर्जिताम् ॥**
**ससर्ज वक्त्रैः फुल्लाब्जसप्रभा वाचमूर्जिताम् ॥ ७ ॥**

कृत्वेति ॥ शिनेः चमूः सात्यकेः सेना ऊर्जितामुत्कटाम् अदीनां तेजस्विनीं वाचं ससर्ज वाणीमुदैरयत। किं कृत्वा शाल्वचमूं जितां कृत्वा शाल्वस्य शिशुपालपक्षस्य राज्ञः चमूं सेनां जितां कृत्वा अभिभूय, किंलक्षणा शिनेः चमूः सप्रभावा प्रभाववती, बलवती इत्यर्थः। अपरं किंलक्षणा शिनेः चमूः वक्त्रैः वदनैः करणभूतैः फुल्लाब्जसप्रभा विकसितसरसिजकान्तिः, फुल्लाब्जैः सदृशी प्रभा यस्याः सा तथा। इति कृत्वा शिनेर्वाहिनी शाल्वचमूं जित्वा प्रहृष्टा जगर्जेति वाक्यार्थः ॥ ७ ॥

---

(१) ०मिवाऽवाचीं मूर्छागत।

कृत्वेति ॥ प्रभावेन सह वर्तत इति सप्रभावा महानुभावा शिनेः सात्यकिपितामहस्य चमूः सेना, शाल्वो नाम चैद्यपक्षो राजा तस्य चमूं सेनां जितां कृत्वा । जित्वेत्यर्थः । अत एव वक्त्रैर्मुखैः । 'येनाङ्गविकारः' इति तृतीया । विकासस्यापि विकारत्वात् । फुल्लाब्जस्य प्रफुल्लारविन्दस्य सप्रभा समानप्रभा । हर्षेण विकासितवक्त्रा सतीत्यर्थः । ऊर्जितामुदारां वाचं ससर्ज 'के यूयमस्मदग्र' इत्याद्युच्चैर्जगर्ज । जगादेत्यर्थः । उपमायमकयोः संसृष्टिः ॥ ७ ॥

**उल्मुकेन द्रुमं प्राप्य सङ्कुचत्पत्रसम्पदम् ॥**
**तेजः प्रकिरता दिक्षु सप्रतापमदीप्यत ॥ ८ ॥**

उल्मुकेनेति ॥ उल्मुकेन श्रीबलदेवसुतेन द्रुमं चैद्यपक्षपातिनं द्रुमाख्यं राजानं प्राप्य आसाद्य सप्रतापं तेजोऽन्वितं यथा स्यात्तथा अदीप्यत दिदीपे चकाशे । किंलक्षणं द्रुमं सङ्कुचत्पत्रसम्पदं सङ्कुचन्ती पीडाऽनुभवात् एकत्र भवन्ती पत्रसम्पत् वाहनसमृद्धिर्यस्य तथा तं, किंलक्षणेन उल्मुकेन दिक्षु आशासु तेजः प्रतापं कीर्तिं वा प्रकिरता विक्षिपता, मुञ्चतेत्यर्थः । यदपि उल्मुकम् अर्धदग्धं काष्ठं, तेन सङ्कुचत्पत्रसम्पदं म्लायत्किसलयसमृद्धं द्रुमं शुष्कं वृक्षं प्राप्य दिक्षु तेजः प्रकिरता सता सप्रतापं सौष्ण्यातिशयं यथा भवत्येवं दीप्यते । श्लेषालङ्कारः ॥ ८ ॥

उल्मुकेनेति ॥ दिक्षु तेजः प्रभावं प्रकाशं च प्रकिरता विक्षिपता उल्मुकेन भागवतेन राज्ञा अलातेन च सङ्कुचन्ती पत्रसम्पत् वाहनसम्पत् पर्णसमृद्धिश्च यस्य तं सप्रतापं सपराक्रमं प्रकटतापसहितं च द्रुमं द्रुमाख्यं राजानं वृक्षं च प्राप्याऽदीप्यत प्रजज्वले । भावे लङ् । अत्राभिधायाः प्रकृतार्थे नियन्त्रणादप्रकृतार्थप्रतीतिर्ध्वनिरेव न श्लेषः ॥ ८ ॥

**पृथोरध्यक्षिपद्रुक्मी यया चापमुदायुधः ॥**
**तयैव वाचाऽपगमं ययाचाऽपमुदा युधः ॥ ९ ॥**

पृथोरिति ॥ रुक्मी भीष्मकात्मजः उदायुधः उद्गीर्णायुधः सन् ऊर्ध्वीकृतप्रहरणः सन् यया वाचा वाण्या पृथोः भगवत्सुतस्य चापं धनुः अध्यक्षिपत् जगर्हे । धिक् ते चापमिति निनिन्देत्यर्थः । तयैव वाचा युधः सङ्ग्रामात् अपगमं निःसरणं ययाच अयाचत अध्यैपीत् । प्रसीद मा प्रहार्षीः श्रान्तोऽस्मि अपयामीत्यवोचदित्यर्थः । किंलक्षणया वाचा अपमुदा दीनया गतहर्षया ॥ ९ ॥

पृथोरिति ॥ रुक्मी भीष्मकात्मजो रुक्मिणीभ्राता उदायुध उद्यतायुधः सन् यया वाचा पृथो राज्ञश्चापमध्यक्षिपत् 'धिगिदं वृथा कष्ट'मिति निनिन्द । अपगता मुत् यस्यास्तयाऽपमुदा निरुत्साहया तयैव वाचा युधो युद्धादपगममपसरणं ययाच । 'मां त्राहि(?) पलायमानं, शरणागतोऽस्मी'ति प्रार्थयामासेत्यर्थः । याचेर्द्विकर्मकत्वादपादानस्यापि कर्मत्वेन .... स्यादित्युपेक्षितम् ॥ यमकम् ॥ ९ ॥

**समं समन्ततो राज्ञामापतन्तीरनीकिनीः ॥**
**कार्ष्णिः प्रत्यग्रहीदेकः सरस्वानिव निम्नगाः ॥ १० ॥**

सममिति ॥ कार्ष्णिः श्रीकृष्णस्यापत्यं पृथुः प्रद्युम्नो वा एकः असहायः सन् समं युगपत् राज्ञामनीकिनीः भूपतीनां पृतनाः प्रत्यग्रहीत् प्रत्यैच्छत् । किंलक्षणाः अनीकिनीः समन्ताच्चतुर्दिग्भ्यः आपतन्तीः आगच्छन्तीः, कः का इव सरस्वान् निम्नगा इव । यथा सरस्वान् समुद्र एकः सन् सर्वाः निम्नगाः नदीः प्रतिगृह्णाति प्रतीच्छति ॥ १० ॥

समामिति ॥ समं युगपत् समन्तत आपतन्तीरागच्छन्तीः राज्ञां चैद्यपक्षाणामनीकिनीः सेनाः, कृष्णस्यापत्यं पुमान् कार्ष्णिः प्रद्युम्नः । अत इञ् । निम्नगा नदीः सरस्वान्समुद्र इवैकोऽसहायः प्रत्यग्रहीत प्रत्यवरुरोध ॥ १० ॥

**दधानैर्घनसादृश्यं लसदायसदंशनैः ॥**
**तत्र काञ्चनसच्छाया ससृजे तैः शराऽशनिः ॥ ११ ॥**

दधानैरिति ॥ तत्र कार्ष्णौ तैः अरिभिः काञ्चनसच्छाया सुवर्णगौरी शराऽशनिः सायकोल्का ससृजे निरासे । मुमुचे इत्यर्थः । किंलक्षणैः तैः लसदायसदंशनैः लसन्ति शोभमानानि आयसानि लोहमयानि दंशनानि कवचानि येषां ते तथा तैः राजदयोमयसन्नाहैः, अपरं किंलक्षणैस्तैः अतश्च कार्ष्ण्यात् घनसादृश्यं दधानैः जलदसाम्यं बिभ्रद्भिः । अत्रौष्ठ्याक्षराणामभावात् निरोष्ठ्योऽयं श्लोकः ।। ११ ।।

दधानैरिति ॥ लसन्ति आयसान्ययोमयानि दंशनानि वर्माणि येषां तैः । 'तनुत्रं वर्म दंशनम्' इत्यमरः । अत एव घनसादृश्यं कार्ष्ण्यान्मेघसाम्यं दधानैस्तैः सैनिकैः तत्र कार्ष्णौ काञ्चनसच्छाया सुवर्णवर्णा शर एवाऽशनिः विद्युत्ससृजे उत्सृष्टा । उपमारूपकयोः संसृष्टिः । ओष्ठ्यवर्णविरहान्निरोष्ठ्यं चित्रभेदः शब्दालङ्कारः ॥ ११ ॥

**नखांशुमञ्जरीकीर्णामसौ तरुरिवोच्चकैः ॥**
**बभौ बिभ्रद्धनुःशाखामधिरूढशिलीमुखाम् ॥ १२ ॥**

नखेति ॥ असौ कार्ष्णिः बभौ शुशुभे । किंलक्षणोऽसौ धनुःशाखां बिभ्रत् कोदण्डलतां धारयन्, किंलक्षणां धनुःशाखां नखांशुमञ्जरीकीर्णां नखानां नखराणामंशवः किरणाः त एव मञ्जरी प्रफुल्लकलिकापुञ्जः तया कीर्णा व्याप्ता तां करजदीप्तिपुञ्जव्याप्ताम् अपरं किंलक्षणां धनुःशाखाम् अधिरूढशिलीमुखाम् अधिरूढः आरोपितः शिलीमुखो नाराचो यस्यां सा तथा ताम् आरोपितपृषत्कां, किंलक्षणोऽसौ उच्चकैः प्रांशुः, क इव बभौ तरुरिव पादप इव । यथा स भाति । किंलक्षणो वृक्षः मञ्जरीकीर्णामधिरूढशिलीमुखां समारूढभ्रमरां शाखां शिफां बिभ्रत् धारयन्, उच्चश्च भवति ॥ १२ ॥

नखेति ॥ नखांशवो मञ्जर्य इव ताभिः कीर्णां व्याप्ताम् , अधिरूढाः शिलीमुखा बाणाः अलयश्च यस्यां ताम् । 'अलिबाणौ शिलीमुखौ' इत्यमरः । धनुः शाखेव तां बिभ्रदसौ कार्ष्णिरुच्चकैरुन्नतस्तरुरिव बभौ । तरुरिवेति लिङ्गात्सर्वत्रोपमितसमासः । शिलीमुखेति श्लिष्टविशेषणेयमुपमा ॥ १२ ॥

**प्राप्य भीममसा जन्यं सौजन्यं दधदानते ॥**
**विध्यन् मुमोच न रिपूनरिपूगान्तकः शरैः ॥ १३ ॥**

प्राप्येति ॥ असौ कार्ष्णिः भीमं घोरं जन्यं सङ्ग्रामं प्राप्य आसाद्य रिपून् न मुमोच शत्रून् नोपैक्षत । किं कुर्वन् शरैर्विध्यन् इषुभिस्ताडयन्, किंलक्षणः कार्ष्णिः अरिपूगान्तकः शत्रुसङ्घातमृत्युः, अपरं किंलक्षणः कार्ष्णिः आनते नम्रे सौजन्यं दधत् सुजनतां साधुतां बिभ्रत् । त्वय्यस्मीतिवादिनम् अविध्यन्नित्यर्थः । अन्ताक्षराणां पादादावावृत्तत्वात पादान्तादियमकम् ॥ १३ ॥

प्राप्येति ॥ अरिपूगानां शत्रुसङ्घानामन्तकः अरिपूगान्तकोऽसौ कार्ष्णिः भीमं भयङ्करं जन्यं युद्धं प्राप्य । 'युद्धमायोधनं जन्यम्' इत्यमरः । आनते नम्रे सौजन्यं सौहार्दं दधत् न तु विध्यन् । 'न क्लीबं न कृताञ्जलिम्' इति निषेधादिति भावः । रिपून्प्रतिपक्षान् शरैर्विध्यन्प्रहरन् न मुमोच । न ररक्षेत्यर्थः । सन्दंशयमकभेदः ॥ १३ ॥

कृतस्य सर्वक्षितिपैर्विजयाशंसया पुरः ॥
अनेकस्य चकाराऽसौ बाणैर्बाणस्य खण्डनम् ॥ १४ ॥

कृतस्येति ॥ असौ कार्ष्णिः बाणैः शरैः बाणस्य बाणासुरस्य खण्डनं चकार हिंसां व्यधात् । किंलक्षणस्य बाणस्य सर्वक्षितिपैः सकलराजकैः विजयाशंसया पुरोऽग्रे कृतस्य नियुक्तस्य, अपरं किंलक्षणस्य बाणस्य अनेकस्य बहुभिः परिवृतस्य, न एकः अनेकः तस्य। बहूनां बाणानां बाणैः छेदमकरोत् इत्युक्तेः, तत्रोक्तया शरैः शरांश्चिच्छेदेत्यर्थः । तेऽपि विजयाशंसया जयवाञ्छया राजभिः पुरः प्रक्षिप्यन्ते, उक्तिः । श्लेषोऽलङ्कारः ॥ १४ ॥

कृतस्येति ॥ असौ कार्ष्णिः सर्वक्षितिपैर्विजयाशंसया विजयाकाङ्क्षया पुरोऽग्रे कृतस्य नियुक्तस्य प्रयुक्तस्य वा अनेकस्याऽनेकाकिनः । ससहायस्येत्यर्थः । अन्यत्राऽनेकस्य बहुसङ्ख्यस्य बाणस्य बाणासुरस्य शरजातस्य च बाणैः खण्डनं छेदं चकार । अत्र बाणयोर्द्वयोरपि प्रकृतत्वात्केवलप्रकृतयोः श्लेषः ॥ १४ ॥

या बभार कृताऽनेकमाया सेना ससारताम् ॥
धनुः स कर्षन् रहितमायासेनाऽऽससार ताम् ॥ १५ ॥

येति ॥ स कार्ष्णिः तां सेनाम् आससार अभीयाय । तां कां, या सेना अनीकिनी कृताऽनेकमाया सती विहितबहुच्छला सती ससारतां बभार सबलत्वमुत्कर्षं दधे, किं कुर्वन् आससार धनुः कर्षन् कार्मुकमाकर्षन् सन्, कथं यथा भवति आयासेन रहितं श्रमेण विना, सलीलमित्यर्थः । यदि वा आयासेन स्फोटभयेन रहितं वर्जितमिति धनुर्विशेषणम् ॥ १५ ॥

येति ॥ या सेना कृताऽनेकमाया कृतबहुकपटा सती ससारतां सारवत्तां बभार, तां सेनां स कार्ष्णिः कर्षन् । धनुषा विध्यन्नित्यर्थः । आयासेन रहितमनायासं यथा तथा आससार । अभियुक्तवानित्यर्थः । बाणं मकृत्वा तत्सेनां बभञ्जेत्यर्थः ॥ १५ ॥

ओजो महौजाः कृत्वाऽधः स क्षणा(१)दुत्तमौजसः ॥
कुर्वन्नाजावमुख्यत्वमनयन्नाम मुख्यताम् ॥ १६ ॥

ओज इति ॥ स कार्ष्णिः आजौ सङ्ग्रामे स्वं नाम स्वाऽभिधानं मुख्यतामनयत् प्राधान्यं प्रापयामास, रिपुपराभवकरणात् । किं कृत्वा उत्तमौजसः उत्तमौजो ऽभिधानस्य द्रुपदात्मजस्य अन्यस्य वा राज्ञः क्षणादेकमुहूर्तादेव ओजस्तेजः प्रभावम् अधः कृत्वा नीचं विधाय अभिभूय, यतः स किंलक्षणः महौजाः तेजस्वी, महाप्रभाव इत्यर्थः । अत एव किं कुर्वन् तस्य उत्तमौजसः अमुख्यत्वं कुर्वन् अप्राधान्यं जनयन् । शत्रुणाऽभिभूतस्य हि कीदृक् प्राधान्यम् । अथ च तस्याऽमुख्यत्वम् अर्थशून्यत्वं कुर्वन् स्वनाम मुख्यत्वं सार्थकत्वमनयदिति अर्थान्तरप्रतीतिः । न ह्युत्तमौजसः महाबलस्य स्वनाम्नि निमित्तत्वमस्ति, तेनौजसोऽधःकृतत्वात् । कार्ष्णौ तु तन्महौजस्त्वात् विद्यते इति मुख्यता॥ १६ ॥

ओज इति ॥ महौजा महाबलः प्रद्युम्नः उत्तमौजसो नाम राज्ञः ओजस्तत्क्षणादेवाऽधः कृत्वाऽभिभूय आजौ युद्धे अमुख्यत्वमप्रधानत्वं कुर्वन्, अथवा अमुख्यत्वममुख्यार्थत्वं तन्नाम्नः कुर्वन् नाम निजं प्रद्युम्ननामधेयं मुख्यतां प्रधानतां प्रसिद्धार्थतां चाऽनयत् । प्रकृष्टं द्युम्नं बलं यस्येति प्रद्युम्न इति स्वामी ॥

दूरादेव चमूर्भल्लैः कुमारो हन्ति स स्म याः ॥
न पुनः सांयुगीं ताः स्म कुमारोहन्ति ससमयाः ॥ १७ ॥

(१) ०धस्तत्क्षणा० ।

**दूरादेवेति** ॥ स कुमारः पृथुः प्रद्युम्नो वा दूरादेव विप्रकृष्टदेशादेव याः सस्मयाः गर्विष्ठाः चमूः सेनाः भल्लैर्बाणैर्हन्ति स्म जघान, ताः चम्वः पुनः भूयः सांयुगीं कुं सङ्ग्रामयोग्यां पृथिवीं न आरोहन्ति स्म नारूढाः, मृतपलायितत्वात् । संयुगाय साधुः सांयुगी ताम् ॥ १७ ॥

दूरादेवेति ॥ स कुमारः प्रद्युम्नः सस्मयाः सगर्वाः याश्चमूर्दूरादेव भल्लैर्बाणविशेषैर्हन्ति स्म जघान, ताश्चम्वः पुनर्भूयः संयुगस्येमां सांयुगीं कुं पृथ्वीं । रणभुवमित्यर्थः । 'गोत्रा कुः पृथिवी पृथ्वी' इत्यमरः । न आरोहन्ति स्म नारूढाः ॥ १७ ॥

**निपीड्य तरसा तेन मुक्ताः काममनास्थया ॥**
**उपाययुर्विलक्ष्यत्वं(१) विद्विषो न शिलीमुखाः ॥ १८ ॥**

**निपीड्येति** ॥ तेन कुमारेण तरसा बलात् निपीड्य पीडयित्वा कामम् अत्यर्थम् अनास्थया मुक्ताः हेलया त्यक्ताः सन्तो विद्विषः शत्रवः विलक्ष्यत्वं निष्प्रभवदनत्वम् उपाययुः प्रापुः, न शराः न बाणाः । शत्रवो हि तेनोपताप्य पराभवात् मुक्ताः सन्तो विलक्ष्या बभूवुः विनेशुः । न हि तेषु तस्य कश्चिद्भरः । शरास्तु तेनाऽवहेलयाऽऽकृष्य मुक्ताः क्षिप्ताः न विलक्ष्यतां लक्ष्यादन्यत्र जग्मुः, अपि तु लक्ष्ये शरव्ये एव पतिताः इति व्यतिरेकः ॥१८॥

निपीड्येति ॥ तेन प्रद्युम्नेन तरसा बलेन कामं निपीड्य अनास्थयाऽनादरेण मुक्ताः । 'आर्ता न परिहन्तव्याः' इति निषेधेनाऽवध्या इति जीवन्तो मुक्ता इत्यर्थः । अन्यत्र क्षिप्ताः विद्विषो विलक्षत्वं सत्रपत्वमाययुः । 'विलक्षस्तु त्रपान्विते' इत्यमरः । शिलीमुखा बाणास्तु विलक्षत्वं लक्षभ्रष्टत्वं नाययुः । अत्र द्वयोऽपि विलक्षणत्वयोरभेदाध्यवसायादयं व्यतिरेको विद्विषां शिलीमुखानां च प्रकृतत्वात्तुल्ययोगितौपम्याश्रितइति सङ्करः ॥ १८ ॥

**तस्याऽवदानैः समरे सहसा रोमहर्षिभिः ॥**
**सुरैरशंसि व्योमस्थैः सह सारो महर्षिभिः ॥ १९ ॥**

**तस्येति** ॥ तस्य कार्ष्णेः व्योमस्थैः खे वर्तमानैः सुरैर्देवैः महर्षिभिः सह महामुनिभिः सार्धं समरे सङ्ग्रामे सारो बलम् अशंसि स्तुतः । किंलक्षणैः सुरैर्महर्षिभिश्च अवदानैस्तदीयैरुत्कृष्टव्यापारैः सहसा अतर्कितं रोमहर्षिभिः सरोमाञ्चैः कण्टकितैः ॥ १९ ॥

तस्येति ॥ समरे तस्य प्रद्युम्नस्याऽवदानैरत्युग्रकर्मभिः करणैः सहसा सद्यः रोमहर्षिभिः रोमाञ्चवद्भिः व्योमस्थैः सुरैः महर्षिभिः सह सार्धं सारो बलमशंसि शंसितम् ॥ १९ ॥

**सुगन्धयद्दिशः शुक्ल(२)मम्लानि कुसुमं दिवः ॥**
**भूरि तत्राऽपतत्तस्मादुत्पपात दिवं यशः ॥ २० ॥**

**सुगन्धयदिति** ॥ तत्र तस्मिन् कुमारे दिवः आकाशात् भूरि प्रभूतं कुसुमं पुष्पम् अपतत् अभ्रश्यत् । तस्मात् प्रद्युम्नात् यशः श्लोकः दिवमाकाशम् उत्पपात आरुरोह । कृतप्रशस्यकर्मत्वात् देवैरस्य पुष्पवर्षममोचीत्यर्थः । किंलक्षणं कुसुमं दिशः सुगन्धयत् काष्ठा आमोदयत्, अपरं किंलक्षणं कुसुमं शुक्लं सितं, यदि वा स्थूलं प्रभूतम्, अपरं किंलक्षणं कुसुमम् अम्लानि विकासि । यशोऽप्याशाः सुगन्धयत् सामोदाः कुर्वत्, प्राप्नुवदित्यर्थः । शुक्लं स्थूलं वा सुगन्धि सितं च यश इत्यौपचारिको व्यवहारः । अम्लान्यनष्टं नवम् । परिवृत्तिश्लेषसङ्करोऽलङ्कारः ॥ २० ॥

---

(१) ०र्विलक्षत्वं । (२) शुभ्र ।

सुगन्धयदिति ॥ दिशः सुगन्धयत् सुगन्धाः कुर्वत् । सुगन्धात् 'तत्करोति–' इति ण्यन्ताल्लटः शत्रादेशः । शुभ्रं धवलम् अम्लानि म्लानिरहितं भूरि प्रभूतं कुसुमं दिवोऽन्तरिक्षात्तत्र प्रद्युम्ने अपतत् । तस्मात्प्रद्युम्नात् यशः पूर्वोक्तगुणयुक्तं दिवमन्तरिक्षं प्रति उत्पपात । अत्र पुष्पप्रद्युम्नयोः कुसुमयशोभ्यामन्योन्योपस्कारजननादन्योन्यालङ्कारः । 'परस्परं क्रियाजननेऽन्योन्यम्' इति लक्षणात् ॥ २० ॥

**सोढुं तस्य द्विषो नाऽलमपयोधरवा रणम् ॥**
**ऊर्णुनाव यशश्च द्यामपयोधरवारणम् ॥ २१ ॥**

सोढुमिति ॥ द्विषः शत्रवः तस्य कार्ष्णेः रणं सङ्ग्रामं सोढुं विषहितुम् अलं न समर्थाः न । किंलक्षणा द्विषः अत एव अपयोधरवाः अपगतो निवृत्तः योधानां भटानां रवः शब्दः सिंहनादो येषां ते तथा । अतश्च यशः कीर्तिः द्यां स्वर्गम् ऊर्णुनाव पिदधे व्याप । किंलक्षणं यशः अपयोधरवारणम् अविद्यमानं पयोधरैर्मेघैः वारणं निवृत्तिर्यत्र तत्तथा । मेघपथमुल्लङ्घ्य स्वर्गं जगामेत्यर्थः ॥ २१ ॥

सोढुमिति ॥ अपगता भयान्निवृत्ता योधानां रवाः सिंहनादा येषां ते अपयोधरवाः द्विषः शत्रवः तस्य कार्ष्णेः रणं सोढुं नाऽलमशक्ताः, अत एव यशश्च अविद्यमानं पयोधराणां वारणं मेघप्रतिघातो यस्य तत् अपयोधरवारणं सत् द्यामूर्णुनाव । मेघमण्डलं व्यतिलङ्घ्य स्वर्गमाच्छादयामासेत्यर्थः । ऊर्णोतेर्लिट् । 'अजादेर्द्वितीयस्य' इति द्वितीयस्याचो द्विर्भावः । नुवङ्भावादाम्प्रतिषेधः । यमकवाक्यार्थहेतुकाव्यलिङ्गयोः संसृष्टिः ॥२१॥

**केशप्रचुरलोकस्य पर्यस्कारि विकासिना ॥**
**शेखरेणेव युद्धस्य शिरः कुसुमलक्ष्मणा ॥ २२ ॥**

केशेति ॥ कुसुमलक्ष्मणा पुष्पधनुषा कन्दर्पावतारेणैव प्रद्युम्नेन युद्धस्य सङ्ग्रामस्य शिरः मस्तकं पर्यस्कारि परिष्कृतं भूषितमिति, कर्मणि लुङ् च्लेश्चिण् 'संपर्युपेभ्यः करोतौ भूषण' इति सुडागमः । शिर इव शिरः । किंलक्षणस्य युद्धस्य केशप्रचुरलोकस्य केशाः कचा इव प्रचुराः प्रभूताः लोकाः सैन्यजना यस्य तत्तथा तस्य, यदि वा कस्य जलस्य ईशः आधारः केशः समुद्रः स इव प्रचुरा लोका यस्य तत्तथा तस्य, किंलक्षणेन कुसुमलक्ष्मणा विकासिना विविधं कसति गच्छति वल्गतीति विकासी तेन अनेकमार्गचारिणा, केनेव पर्यस्कारि शेखरेणेव अवतंसनेव । यथा शेखरेण आपीडेन शिरः मस्तकं परिष्क्रियते । किंलक्षणेन शेखरेण विकासिना प्रफुल्लेन, यतः किंलक्षणेन शेखरेण कुसुमलक्ष्मणा कुसुमानि लक्ष्म चिह्नं यस्य सः कुसुमलक्ष्मा तेन सपुष्पेण, न तु पत्रवता । यथा तेन केशप्रचुरं प्रचुरकेशं शिरः परिष्क्रियते, न तु मुण्डं शिरः ॥ २२ ॥

केशेति ॥ विकासिना विविधमार्गचारिणा विकस्वरेण च कुसुमलक्ष्मणा पुष्पकेतुना प्रद्युम्नेन अन्यत्र कुसुमचिन्हेन । तन्मयेनेत्यर्थः । केशवत्प्रचुराः प्रभूता लोका जना यस्मिंस्तस्य युद्धस्य शिरोऽग्रभूमिः, अन्यत्र केशैः प्रचुरस्य केशाढ्यस्य लोकस्य जनस्य शिरः मूर्धा शेखरेणापीडेनेव । शिखामाल्येनेवेत्यर्थः । 'शिखास्वापीडशेखरौ' इत्यमरः । पर्यस्कारि परिष्कृतम् । भूषितमित्यर्थः । परिपूर्वात्करोतेः कर्मणि लिट् । 'सम्पर्युपेभ्यः करोतौ भूषणे' इति सुडागमः, 'अड्भ्यासव्यवायेऽपी'ति नियमात् । 'परिनिविभ्यः–'इत्यादिना षत्वे 'सिवादीनां वाऽड्व्यवायेपि' इति विकल्पः । उपमा ।। २२ ॥

**सादरं युध्यमानाऽपि तेनाऽन्यनरसादरम् ॥**
**सा दरं पृतना निन्ये हीयमाना रसादरम् ॥ २३ ॥**

सादरमिति ॥ तेन प्रद्युम्नेन सा पृतना अनीकिनी शत्रुसेना सादरं सश्रद्धं युध्य-

मानापि युध्यन्त्यपि अरं शीघ्रं दरं निन्ये भयं नीता । किंलक्षणा पृतना अत एव रसात् वीराख्यात् हीयमाना त्यज्यमाना, किंलक्षणं दरम् अन्यनरसादरम् अन्येषामभीतानामपि नराणां पुरुषाणां सादमवसादं खेदमनुद्योगं राति ददाति तत् अन्यनरसादरम् । पलायने हि सति वीराणामनुद्योगो भवति ।हीयमाना क्रियाविशेषणं चैतत् । हीयमानेति कर्मकर्तरि।।२३

सादरमिति ।। सादरं साभिनिवेशं युध्यमानापि सम्प्रहरन्त्यपि अरं द्रुतम् । हठादिति यावत् । रसात् रणे रागात् हीयमानाऽपकृष्यमाणा । प्रद्युम्नमहिम्नेति भावः । अत एवात्र विरोधाभासोऽलङ्कारः । जहातेः कर्मणि लिटः शानजादेशः । सा पृतना चैद्यसेना तेन प्रद्युम्नेन अन्येषां तटस्थानामपि नराणां सादं निश्चेष्टतां राति ददातीति अन्यनरसादरम् । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । दरं भयम् । 'दरोऽस्त्रियां भये श्वभ्रे' इत्यमरः । निन्ये नीता । नयतेः प्रधान कर्मणि लिट् । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति वचनात् । विरोधाभासयमकयोः संसृष्टिः ।। २३ ।।

इत्यालिङ्गितमालोक्य जयलक्ष्म्या झषध्वजम् ॥
क्रुद्धयेव क्रुधा सद्यः प्रपेदे चेदिभूपतिः ॥ २४ ॥

इतीति॥अथ चेदिभूपतिः शिशुपालः क्रुधा रुषा प्रपेदे आश्रितः। किंलक्षणया क्रुधा, उत्प्रेक्ष्यते—क्रुद्धयेव रुषितयेव । किं कृत्वेति क्रोधे निमित्तमाह—इति पूर्वोक्तप्रकारेण झषध्वजं मकरध्वजं प्रद्युम्नं जयलक्ष्म्या जयश्रिया आलिङ्गितमाश्लिष्टम् आलोक्य दृष्ट्वा । यदा किल कश्चित् रम्यपतिं नायिकाऽऽलिङ्गति, तदाऽन्या नारी तत्स्पर्धया ईश्वरं प्रतिपद्यते॥२४॥

इतीति ।। इतीत्थं जयलक्ष्म्या आलिङ्गितं झषध्वजं मत्स्यकेतुं प्रद्युम्नम् । 'पृथुरोमा झषो मत्स्यः' इत्यमरः । आलोक्य सद्यः क्रुद्धया सपत्न्यागमात्कोपितयेवेत्युत्प्रेक्षा । क्रुधा प्रद्युम्नाश्रितया रुषा कर्त्र्या चेदिभूपतिः प्रपेदे प्राप्तः । तं विहायेति शेषः । कामिन्यः प्रायेण साहसिक्यः सपत्नीगन्धमसहमानाः सद्यः पुरुषान्तरमाश्रयन्त इति भावः । विजयिनं प्रद्युम्नं दृष्ट्वा सद्यश्चैद्यश्चुकोपेत्यर्थः ॥ २४ ॥

अहितानभि वाहिन्या स मानी चतुरङ्गया ॥
चचाल वल्गत्कलभसमाऽनीचतुरङ्गया ॥ २५ ॥

अहितानिति ॥ स मानी साभिमानः चैद्यः चतुरङ्गया वाहिन्या सेनया अहितान् अभि शत्रून् प्रति चचाल जगाम । चत्वारि गजरथतुरङ्गमपदातिलक्षणानि अङ्गानि अवयवाः यस्याः सा चतुरङ्गा तया । किंलक्षणया वाहिन्या वल्गत्कलभसमाऽनीचतुरङ्गया वल्गन्तः नृत्यन्तः कलभसमाः बालगजतुल्याः अनीचाः उच्चाः तुरङ्गा वाजिनो यस्यां सा तथा तया । उच्चत्वात्करिपोतदघ्ना वाजिनो यस्या इत्यर्थः ॥ २५ ॥

अहितानिति ॥ मानी अभिमानवान् स क्रुद्धश्चैद्यः वल्गन्तः प्लवमानाः कलभसमाः कलभप्रमाणाः अत एवाऽनीचा उच्चास्तुरङ्गा यस्यां तया वल्गत्कलभसमाऽनीचतुरङ्गया, चत्वार्यङ्गानि हस्त्यादीनि यस्यास्तया चतुरङ्गया वाहिन्या करणेन अहितानभि शत्रून्प्रति चचाल । कलभसमेत्युपमा यमकेन संसृज्यते ॥२५॥

चतुर्भिः कलापकम्—

ततस्ततधनुर्मौर्वीविस्फारस्फारनिःस्वनैः ॥
तूर्यैर्युगक्षयक्षुभ्य(१)दकूपाराऽनुकारिणी ॥ २६ ॥

॥ सर्वतोभद्रः ॥

स का र ना ना र का स-
का य सा द द सा य का ॥

---

( १ ) क्षये क्षुभ्य० ।

र सा ह वा वा ह सा र-
ना द वा द द वा द ना ॥ २७ ॥

लोलाऽसिकालियकुला यमस्येव स्वसा स्वयम् ॥
चिकीर्षुरुल्लसल्लोहवर्मश्यामा सहायताम् ॥ २८ ॥

॥ मुरजबन्धः ॥

सा से ना ग म ना र म्भे
र से ना सी द ना र ता ॥
ता र ना द ज ना म त्त-
धी र ना ग म ना म या ॥ २९ ॥

तत इत्यादि ॥ सा सेनेति ॥ ततोऽनन्तरं सा सेना चैद्यपताकिनी गमनारम्भे प्रस्थानावसरे रसेन रणश्रद्धया अनारता अनिवृत्ता आसीत् अभवत् । रोषेणाऽभीयाये-त्यर्थः । कथं यथा भवति मत्तधीरनागं मत्ताः प्रमत्ताः प्रभिन्नाः धीरा निर्भया नागाः करिणो यत्र तत् मत्तधीरनागं, किंलक्षणा सेना तारनादजना तारः उच्चः नादः शब्दः कलकलो येषां ते तारनादाः एवंभूता जना लोका योद्धृलक्षणा यस्यां सा तथा उच्चकोला-हललोका, अपरं किंलक्षणा सेना यतः अनामया न आमयः कष्टं व्यसनं वा यस्याः सा तथा निर्व्यसना । तत इति ॥ अपरं किंलक्षणा सेना युगक्षयक्षुभ्यदकूपाराऽनुकारिणी युगक्षये कल्पान्ते क्षुभ्यन् कम्पमानो योऽकूपारः सागरः तमनुकरोति विडम्बयति इति तथा । कैः तूर्यैः वादित्रैः, किंलक्षणैः तूर्यैः ततधनुर्मौर्वीविस्फारस्फारनिःस्वनैः तता आकृष्टाः या धनुर्मौर्व्यः चापशिञ्जिन्यः तासां यो विस्फारः क्रेङ्कारः, तेन स्फारः महान् निःस्वनः घोषो येषां तानि तथा तैः, आकृष्टचापज्याक्रेङ्कारमहास्वरकैरित्यर्थः । सकारेति ॥ अ-परं किंलक्षणा सेना सकारनानारकासकायसाददसायका करणं कारः अरीणां समूहः आरं, सकाराणि सक्रियाणि नानाविधानि यानि आराणि रिपुवृन्दानि तेषां यः कासः भ्रमणं वल्गनं तथा कायाः देहाः तेषां साददाः क्लेशदायिनः सायकाः मार्गणा यस्याः सा तथो-क्ता । यदीयशराः द्विषां गमनं कायं च खण्डयन्तीत्यर्थः । अपरं किंलक्षणा सेना रसाहवा रसेन रागेण न तु भयेन आहवो युद्धं यस्याः सा तथा, अपरं किंलक्षणा सेना वाहसारनाद-वाददवादना वाहसाराणां वाहश्रेष्ठाणाम् अश्वीयादीनां यो नादः शब्दो हेषितादिः स एव वाद इव वादः मिथो महाजल्पनं तं घ्नन्ति खण्डयन्ति स्थगयन्तीति वाहसारनादवाद-दानि एवंविधानि वादनानि तूर्याणि यस्यां सा तथा । व्याख्यान्तराणां तु निरर्थकत्वात् नादरोऽस्त्यस्माकं तत्रेति हि स्पष्टे व्याख्याने दुष्टव्याख्याप्रतिपत्तिर्मोहायैव । न च ताः कवेर्विवक्षिताः, सर्वतो वाचयितुं शक्यत्वात् । लोलेति ॥ अपरं किंलक्षणा सेना सहायतां चिकीर्षुः साहाय्यं कर्तुकामा स्वयं मूर्ता यमस्य अन्तकस्य स्वसा भगिनीव यमुनेव । कस्य साहाय्यमिति चेत् प्रकृतत्वात् चैद्यस्यैव । यमेन हि किल प्राणिनो वध्याः, तत्स्वसा च यमुना भ्रातृस्नेहात् तान् घ्नती साहाय्यं कृतवतीति । ननु किं सेनाया हि यमुना-सारूप्यं, येनैष तर्क इत्याह—अपरं किंलक्षणा सेना लोलाऽसिकालियकुला लोलाः असयः

खड्गा एव नीलत्वात् कालियकुलं कालियस्य महानागविशेषस्य कुलं वंशो यस्यां सा तथा, अपरं किंलक्षणा सेना उल्लसल्लोहवर्मश्यामा उल्लसद्भिः शोभमानैः लोहवर्मभिः आयसकवचैः श्यामा कृष्णा । यमुना हि किल नीलजला कालियाऽहिकुलवसतिश्च । चक्रकमेतत् । चतुर्भिः कलापकम् ॥ २६—२९ ॥

अथ कलापकेन सेनां वर्णयति—

**तत इति** ॥ ततश्चैद्यचलनाऽनन्तरं ततानामाकृष्टानां धनुर्मौर्वीणां विस्फारैः स्फाराः प्रभूता निःस्वना येषां तैस्तूर्यैः युगचये कल्पान्ते क्षुभ्यन्तमुद्वेल्लन्तमकूपारं समुद्रमनुकरोतीति तदनुकारिणी सा सेनेत्युत्तरेणाऽन्वयः । उपमा ॥ २६ ॥

**सकारेति** ॥ पुनः कीदृशी । कारो वधे निश्चय च बले यत्ने रतावपि' इति विश्वः । सकाराः सयत्नाः सोत्साहाः नाना नानाविधाश्च ये आरा अरीणां समूहाः । भिक्षादिभ्योऽण् । तेषां कायाः गतिभेदाः कायाः विग्रहाश्च तेषां सादं ददतीति साददाः नाशकारकाः सायका यस्यां सा तथोक्ता, रसेन रागेणाहवो यस्याः सा रसाहवा । रणरागिणीत्यर्थः । वाहसाराणां वाहश्रेष्ठानां ये नादा हेषादिघोषास्तेषां वादं कलहं वदन्तीति वादनानि तैः सह कलहायमानानि वादनानि वाद्यानि यस्यां सा वाहसारनादवाददवादना । तूर्यतुल्यवाहघोषेत्यर्थः । अत एव तेषां तुल्यतोक्तेरतिशयोक्तिः । सर्वतो भ्रमणात्सर्वतोभद्राख्यश्चित्रबन्धः । अत एव दण्डी—'तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वतः' इति । उद्धारस्तु—चतुःषष्टिकोष्ठे चतुरङ्गबन्धे क्रमेणाद्यपाङ्क्तिचतुष्टये पादचतुष्कं विलिख्याऽनन्तरं पङ्क्तिचतुष्टयेऽप्यधःक्रमेण पादचतुष्टयलेखने प्रथमासु चतसृषु प्रथमपादः सर्वतो वाच्यते । एवं द्वितीयादिषु द्वितीय इत्यादि ॥

**लोलेति** ॥ लोलान्यसीनामिव कालियानां कृष्णसर्पविशेषाणां कुलानि यस्यां सा, उल्लसद्भिर्लोहवर्मभिरयःकञ्चुकैः श्यामा अत एव यमस्याऽन्तकस्य सहायतां भ्रातृस्नेहादस्मिन् सेनासंहारे साहाय्यं चिकीर्षुः स्वयं साक्षात् स्वसा तस्यैव भगिनी यमुनेव स्थितेत्युत्प्रेक्षा ॥ २८ ॥

**सा सेनेति** ॥ तारोऽत्युच्चैर्नादः सिंहनादो येषां ते जना यस्यां सा तारनदजना अनामया अव्यथा सा पूर्वोक्ता सेना, मत्ता धीरा अदुष्टाश्च नागा गजा यस्मिन्कर्मणि तत्तथा गमनारम्भे रसेन रागेण अनारता अविरता आसीत् । अविच्छिन्नरणरागाऽभूदित्यर्थः । मुरजबन्धः । तस्योद्धारस्तु—

'तिर्यग्रेखा लिखेत्पञ्च नवोर्ध्वास्तत्र पङ्क्तयः ।
अष्ट कोष्ठाश्चतस्रः स्युस्तासु श्लोकं लिखेत्क्रमात् ॥
तत्राद्यद्वित्रितुर्यासु तुर्यत्रिद्व्याद्यपङ्क्तिषु ।
आद्यद्वित्रिचतुःपञ्चषट्सप्ताऽष्टमकोष्ठगः ॥
दृश्यते प्रथमः पादश्चतुर्थश्चैवमेव हि ।
चतुर्थपङ्क्तिप्राथम्यात्प्रथमावधिवीक्षणात् ॥
द्वितीयादावाद्यद्वित्र्योर्द्वितुर्ये त्रितुरीयके ।
तुर्यत्रिद्योस्तृतीयाद्ये द्रष्टव्योऽङ्घ्रिर्द्वितीयकः ॥
तृतीयोऽङ्घ्रिर्द्वितीयान्त्ये आद्यसप्तमषष्ठयोः ।
द्वित्रिपञ्चमयोस्तुर्यषष्ठसप्तमयोः क्रमात् ॥
तृतीयान्त्ये च लक्ष्योऽयमथान्यः क्रम उच्यते ।
आद्यन्त्ययुग्मयोः पङ्क्त्योश्चिन्त्यो गोमूत्रिकाक्रमः ॥
कृत्वैकं द्वितयं द्वे च द्वयमेकमिति क्रमात् ।
यद्वा द्वितयमेकं च द्वयमेकं द्वयं पुनः ॥
स्वपङ्क्तिप्रक्रमादेव विन्यासाद्द्वितयं भवेत् ।
यद्वा प्रथमतुर्याऽङ्घ्री स्वपङ्क्त्योस्तदनुक्रमात् ॥
द्वितीयोऽङ्घ्रिर्द्वितीयस्यां क्रमादाद्यचतुष्टये ।

व्युत्क्रमाच्च तृतीयस्यामाद्यमेव चतुष्टये ॥
व्युत्क्रमेण द्वितीयस्यां तृतीयस्यां क्रमेण च ।
द्रष्टव्यो हि तृतीयोऽङ्घ्रिरन्त्यकोष्ठचतुष्टये ॥
विन्यासभेदास्त्वन्येऽपि सन्त्येव बहवोऽत्र हि ।
विस्तरात्तु न लिख्यन्ते स्वयमूह्या विचक्षणैः' ॥

इति । कलापकम् ॥ २९ ॥

**धौतधारा(५)ऽसयः प्रष्ठाः प्रातिष्ठन्त क्षमाभृताम् ॥**
**शौर्यानुरागनिकषः सा हि वेलाऽनुजीविनाम् ॥ ३० ॥**

धौतेति ॥ क्षमाभृतां पार्थिवानां प्रष्ठाः अग्रेसराः प्रातिष्ठन्त युद्धाय प्रतस्थिरे । किंलक्षणाः प्रष्ठाः धौतधाराऽसयः धौतधाराः संमार्जिताग्राः असयः खड्गा येषां ते तथा । हि युक्तोऽमयर्थः, हि यस्मात् कारणात् अनुजीविनां सेवकानां सा वेला असौ समयः शौर्यानुरागनिकषः भवति, शौर्यानुरागयोर्निकषः शौर्यस्य प्रीतेश्च निकषः कषोपलः,परीक्षेत्यर्थः। युद्धसमये हि भृत्यानां पौरुषस्नेहौ लक्ष्येते । यदुक्तम्—

उपस्थिते विप्लव एव पुंसां सारेतरत्वं प्रतिभाव्यतेऽन्तः ।
अवाति वायौ न हि तूलराशेर्गिरेश्च कश्चित् प्रतिभाति भेदः ॥ ३० ॥

धूतेति ॥ क्षमाभृतां राज्ञां, प्रतिष्ठन्त इति प्रष्ठा अग्रेसराः । 'सुपि स्थः' इति कप्रत्ययः, 'प्रष्ठोऽग्रगामिनि' इति षत्वे ष्टुत्वम् । धूताः कम्पिताः धौता उत्तेजिता असयो यैस्ते धूतधौताऽसयः सन्तः प्रातिष्ठन्त प्रस्थिताः । 'समवप्रविभ्यः स्थः' इति तङ् । सा वेला अनुजीविनां शस्त्रजीविनां शौर्यानुरागयोः पुरुषकारस्वामिभक्त्योर्निकषः परीक्षास्थानं हि । अतोऽग्रे स्थातव्यम् । अन्यथा भीरुत्वं स्वामिद्रोहश्च स्यातामिति भावः । वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ३० ॥

**दिवमिच्छन् युधा गन्तुं कोमलाऽमलसम्पदम् ॥**
**दधौ दधानोऽसिलतां कोऽमलामलसं पदम् ॥ ३१ ॥**

दिवमिति ॥ तदा कः पुरुषः अमलां धौताम् असिलतां खड्गवल्लीं दधानः बिभ्रत सन् अलसं पदं दधौ सालस्यं मन्थरं क्रमं न्यधित । सर्व एव धृतखड्गाः रसेन रणभुवं प्राविक्षन्नित्यर्थः । किंलक्षणः कः पुरुषः सुखेन दिवं स्वर्गं गन्तुं प्राप्तुमिच्छन् यियासुः, किंलक्षणां दिवं कोमलाऽमलसम्पदं कोमला सच्छाया अमला निर्मला दुःखवर्जिता सम्पत् समृद्धिर्यस्यां सा तथा ताम् ॥ ३१ ॥

दिवमिति ॥ युधा युद्धेन कोमलाश्चारवः अमलाः शीतोष्णादिदोषरहिताः सम्पदो यस्यां तां कोमलाऽमलसम्पदं दिवं स्वर्गं गन्तुमिच्छन् कः पुमान् अमलां धौतामसिलतां दधानः अलसं पदं दधौ । सर्वोऽपि निःशङ्कमाक्रमतेत्यर्थः । अत्र स्वर्गेच्छया विशेषणगत्या निःशङ्कप्रस्थानहेतुत्वात्काव्यलिङ्गं, तद्यमकेन संसृज्यते ।

**कृतोरुवेगं युगपद्व्यजिगीषन्त सैनिकाः ॥**
**विपक्षं बाहुपरिघैर्जङ्घाभिरितरेतरम् ॥ ३२ ॥**

कृतोरुवेगमिति ॥ सैनिकाः सेनाचराः सुभटाः युगपत्समकालं द्वयं व्यजिगीषन्त विजिगियिरे। विपराभ्यां जेः। कथमित्याह—बाहुपरिघैः भुजपरिघातनैः विपक्षं शत्रुं व्यजिगीषन्त, इतरेतरं परस्परं तु जङ्घाभिः प्रसृताभिः। स्ववर्ग्यानपि हि तेऽवस्कन्द्य प्रविशन्तो-

(५) धूतधौता० ।

ऽतिशिशयिषन्ते । किंलक्षणं विपक्षं कृतोरुवेगं कृतः विहितः उरुर्महान् वेगो रयो यस्य येन वा, इतरेतरं तु कृत ऊर्वोः वेगो येन सः तथा तम् ॥ ३२ ॥

कृतोरुवेगमिति ॥ सेनायां समवेताः सैनिकाः सैन्याः । सेनायाः पार्श्विकष्ठक् । बाहुभिः परिघैरिव बाहुपरिघैः बाहुदण्डैः विपक्षं शत्रुं जङ्घाभिः प्रसृताभिः । 'जङ्घा तु प्रसृता' इत्यमरः । इतरेतरमन्योन्यं सयूथीयमेव कृत उरुर्महानूर्वोश्च वेगो यस्मिन्कर्मणि तद्यथा तथा युगपद्व्यजिगीषन्त विजेतुमैच्छन् । अहमहमिकया योद्धुमधावन्नित्यर्थः । विपूर्वाज्जयतेः सन्नन्तान्लङि 'पूर्ववत्सनः' इत्यात्मनेपदम् । अत्र विपक्षसयूथयोर्बाहुजङ्घयोश्च प्रकृतत्वात्केवलप्रकृतास्पदा तुल्ययोगिता ॥ ३२ ॥

वाहनाऽजनि मानाऽसे साराऽऽजावनमा ततः ॥
मत्तसारगराजेभे भारीहावज्जनध्वनि ॥ ३३ ॥

वाहनेति ॥ ततोऽनन्तरं तस्मिन् साराजौ उत्कृष्टयुद्धे वाहना वाहिनी अनमा अप्रह्वा अजनि जाता । दुर्जया समपद्यतेत्यर्थः । किंलक्षणे साराजौ मानाऽसे मानमहङ्कारम् अस्यति नाशयति इति मानासः तस्मिन् परेषां दर्पक्षेप्तरि, अपरं किंलक्षणे साराजौ मत्तसारगराजेभे मत्ता दर्पिताः सारगा उत्कृष्टगामिनो राजेभाः नृपकरिणो मतङ्गजराजा वा यत्र सः तथा तस्मिन् , यदि वा मत्तानां सारं बलं गच्छन्ति आक्रामन्ति ते तथाभूता राजेभा- इति योज्यम् । कथमजनि भारीहावज्जनध्वनि भारिणः संनाहादिभारयुक्तस्य ईहावतः समरकर्मव्यापृतस्य जनस्य सुभटलोकस्य ध्वनिः 'हत आगच्छत गृह्णीते'त्यादिकः शब्दो यत्र क्रियायां तथा तत् । येषां त्वाजिशब्दः स्त्रियामेव वर्तते,तेषामेवं योजना–तस्यां साराजौ मत्तः सारगो यो राजेभः तत्र वाहना अजनि तद्विषयवाहनं जातम् । परबलमहेभाः प्रेरिता- इत्यर्थः । किंलक्षणे मत्तसारगराजेभे मानासे दर्पनाशके । अत्रैव प्रतिलोमेनाऽर्थान्तरम् ॥

वाहनेति ॥ ततोऽनन्तरं मानमभिमानम् अस्यति क्षिपतीति तस्मिन्मानाऽसे पराहङ्कारहारिणि । कर्मण्यण् । मत्ताः सारगा बलभाजश्च राजेभा नृपगजा यस्मिन्मत्तसारगराजेभे साराजौ श्रेष्ठयुद्धे । आजेः पुंलिङ्गता ज्ञेया । भारी भारवान् पूर्ण ईहावतामुत्साहवतां जनानां ध्वनिर्यस्मिस्तत् भारीहावज्जनध्वनि यथा तथा न नमतीत्यनमा अभङ्गुरा । पचाद्यजन्तेन नञ्समासः । वाहना निर्वाहयितृत्वम् । ण्यासश्रन्थो युच् । अजनि जाता, सैनिकानामित्यर्थात्सिद्धम् । जनेः कर्तरि लुङि 'दीपजन–' इत्यादिना चिण् ॥ ३३ ॥

॥ श्लोकप्रतिलोमयमकम् ॥

निध्वनज्जवहारीभा भेजे रागरसात्तमः ॥
ततमानवजाऽऽरासा सेना मानिजनाऽऽहवा ॥ ३४ ॥

निध्वनदिति ॥ सा सेना अनीकिनी रागरसात् द्वेषानुभावात् तमः भेजे अन्धकारमाप तमोगुणं क्रोधं प्राप, क्रुद्धेत्यर्थः। तमः भेजे इति कोऽर्थः, क्रोधावेशान्न किञ्चिदपश्यदित्यर्थः । किंलक्षणा सेना निध्वनज्जवहारीभा निध्वनन्तः गर्जन्तः जवहारिणः वेगगमनशोभिनः इभा गजा यस्यां सा तथा, अपरं किंलक्षणा सेना ततमानवजाऽऽरासा ततो विस्तीर्णः मानवजः शूरमानुषसमुत्थः आरासो ध्वनिर्यस्यां सा तथा, अपरं किंलक्षणा सेना मानिजनाहवा मानिजनस्य वीरलोकस्य आहवो युद्धं यस्यां सा तथा ॥ ३४ ॥

एतत्प्रातिलोम्येन श्लोकान्तरमाह –

निध्वनादिति ॥ निध्वनन्तो बृंहन्तो जवा जवनाः हारिणो मनोहराश्चेभा यस्यां सा निध्वनज्जवहारीभा, ततो विस्तृतो मानवजो मनुष्यजातः आरासः कलकलो यस्यां सा ततमानवजाऽऽरासा मानिना

मानवतां जनानामाहवो यस्यां सा मानिजनाहवा सेना, रज्यतेऽनेनेति रागः क्रोधः स एव रसस्तस्माद्राग-रसात् तमो मोहं भेजे । क्रोधान्धाऽजनीत्यर्थः । अत्र प्रातिलोम्येन पूर्वश्लोकावृत्तेः श्लोकप्रतिलोमयमकम् । तदुक्तं दण्डिना—

'आवृत्तिः प्रातिलोम्येन पादार्धश्लोकगोचरा ।
'यमकं प्रतिलोमत्वात्प्रतिलोममिति स्मृतम्' ॥

इति ॥ ३४ ॥

**अभग्नवृत्ताः प्रसभादाकृष्टा यौवनोद्धतैः ॥**
**चक्रन्दुरुच्चकैर्मुष्टिग्राह्यमध्या धनुर्लताः ॥ ३५ ॥**

**अभग्नवृत्ता इति** ॥ धनुर्लताः कार्मुकवल्ल्यः उच्चकैः चक्रन्दुः तारं चुकूजुः । किंलक्षणा धनुर्लताः यौवनोद्धतैस्तारुण्यगर्वितैः वीरैः प्रसभात् बलेन उ(आ)कृष्टा आस्फालिताः, अपरं किंलक्षणाः धनुर्लताः अभग्नवृत्ताः अत्रुटितवृत्तभागाः । आकर्षवशात् वक्रीभूता इत्यर्थः । अपरं किंलक्षणाः धनुर्लताः मुष्टिग्राह्यमध्याः मुष्टिना सम्पिण्डिताङ्गुलिकरेण ग्राह्यमवष्टभ्यं मध्यं मध्यप्रदेशो यासां तास्तथा । अथ चोक्तिलेशः—याः किल मुष्टिग्राह्यमध्याः कृशोदर्यो भवन्ति, ताः यौवनोद्धतैर्युवभिः बलादाकृष्टाः केशेष्वाकृष्य हृताः सत्योऽपि उच्चैः क्रन्दन्ति । यतस्ता अभग्नवृत्ताः ननष्टचरित्राः । कदि क्रदि क्लदि आह्वाने रोदने चे'ति धातोश्चक्रन्दुरिति रूपम् । अपरस्त्वात्मनेपदी ॥ ३५ ॥

अभग्नवृत्ता इति ॥ अभग्ना अभङ्गुरा वृत्ता वर्तुलाश्च यास्ता अभग्नवृत्ताः । विशेषणसमासः । अन्यत्राऽचलितचरित्राः । बहुव्रीहिः । मुष्टिग्राह्यं मुष्टिधार्यं मध्यं यासां ताः धनुर्लताः अन्यत्र मुष्टिमेयमध्याः यौवनेनोद्धतैर्धृष्टैर्दृप्तैश्च प्रसभाद्बलादाकृष्टाः सत्यः । एकत्र गुणेष्वन्यत्र कचेषु चेति भावः । उच्चैस्तरां चक्रन्दुः टङ्कारध्वानं चक्रुर्धनुर्लताः, अन्यत्र चुक्रुशुश्च । अत्र प्रस्तुतधनुर्लताविशेषणादप्रस्तुतधूर्ताक्रन्दितपातिव्रताप्रतीतेः समासोक्तिः । तथा च आकर्षणस्य विशेषणगत्या क्रन्दनहेतुत्वात्काव्यलिङ्गमङ्गाङ्गिभावेन सङ्कीर्यते ॥ ३५ ॥

**करेणुः प्रस्थितोऽनेको रेणुर्घण्टाः सहस्रशः ॥**
**करेऽणुः शीकरो जज्ञे रेणुस्तेन शमं ययौ ॥ ३६ ॥**

**करेणुरिति** ॥ अनेको बहुसङ्ख्यः करेणुः हस्तिजातं हास्तिकं प्रस्थितः योद्धुं प्रययौ, तदा सहस्रशो बहुसङ्ख्याः घण्टाः रेणुः अक्वणन् , तथा करे पुष्करे अणुः सूक्ष्मः परमाणुः शीकरो जज्ञे वमथुरुदपादि । तेन कारणेन रेणुर्धूली शमं ययौ ननाश ॥ ३६ ॥

करेणुरिति ॥ अनेको बहुः करेणुः करेणवः प्रस्थितः । जातावेकवचनम् । असङ्ख्याताः करिणो योद्धुं ययुरित्यर्थः । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । सहस्रशो घण्टाः करिकण्ठस्था रेणुर्दध्वनुः । 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाभ्यासलोपौ । करे पुष्करे अणुरल्पः शीकरोऽम्बुकणो जज्ञे । जातावेकवचनम् । करेष्वणवः शीकरा जाता इत्यर्थः । जनेः कर्तरि लिट् । तेनाऽणुना शीकरेण रेणू रजः शमं ययौ । एतेन करिणां बाहुल्यं व्यज्यते ॥ ३६ ॥

**धृतप्रत्यग्रशृङ्गाररसरागैरपि द्विपैः ॥**
**सरोषसम्भ्रमैर्दध्रे(१) रौद्र एव रणे रसः ॥ ३७ ॥**

**धृतेति** ॥ द्विपैः द्विरदैः रणे सङ्ग्रामे रौद्र एव रसः भीषण एव रसः दध्रे बभ्रे धृतः । किंलक्षणैर्द्विपैः धृतप्रत्यग्रशृङ्गाररसरागैरपि धृतः कलितः प्रत्यग्रो नूतनः शृङ्गाररसरागो

---

(१) ०र्बभ्रे ।

भूषणरसरङ्गो यैस्ते तथा तैः। अपिशब्दो विरोधे, यैः किल शृङ्गाररसे राग उह्यते, ते कथं रौद्रं रसमबिभरुः, तयोर्वैलक्षण्यात्। अनुरक्तयोर्हि पुरुषनार्योः व्यवहारो मनोहरवेषो यः, स रतिप्रकृतिः शृङ्गारः। क्रोधप्रकृतिस्तु रौद्रः। अविरोधस्तु शृङ्गारशब्दस्य गैरिकादिरागवाचकत्वात्। धृतः प्रत्यग्रः शृङ्गाररसरागो गैरिकादिद्रवरसरञ्जनं यैः। रोषेण सम्भ्रमो रोषसम्भ्रमः सह तेन वर्तन्ते ये तथा तैः सरोषसम्भ्रमैः क्रोधव्याकुलैः॥ ३७॥

धृतेति॥ धृतः प्रत्यग्रः शृङ्गाररस एव रागो यैस्तैरपीति विरोधः। रौद्रशृङ्गारयोर्विरोधित्वाद्धृतासिन्दूररञ्जनैरित्यविरोधः। अत एव विरोधाभासोऽलङ्कारः।

'शृङ्गारः सुरते नाट्ये रसे च गजमण्डने।
शृङ्गारं चूर्णसिन्दूरे लवङ्गकुसुमेऽपि च'॥

इति विश्वः। सरोषसम्भ्रमैः द्विषैः रणे रौद्ररस एव क्रोधरस एव बभ्रे भृतः। कर्मणि लिट्॥ ३७॥

**न तस्थौ भर्तृतः प्राप्तमानसंप्रतिपत्तिषु॥**
**रणैकसर्गेषु भयं मानसं प्रति पत्तिषु॥ ३८॥**

नेति॥ पत्तिषु पादचारेषु भृत्येषु मानसं प्रति मनस्सु भयं न तस्थौ त्रासो न आसीत्। यतः किंलक्षणेषु पत्तिषु भर्तृतः प्रभोः सकाशात् प्राप्तमानसम्प्रतिपत्तिषु प्राप्तः लब्धः मानः पूजा तथा सम्प्रतिपत्तिश्च प्रसादो मानचिह्नादिको यैस्ते तथा तेषु, अपरं किंलक्षणेषु भृत्येषु रणैकसर्गेषु रणे सङ्ग्रामे एकः मुख्यः सर्गो रागः उत्साहो येषां ते तथा तेषु। ये त्वेवंविधास्ते कथं त्रसेयुरित्यर्थः॥ ३८॥

नेति॥ भर्तृतः स्वामिनः प्राप्त मानसंप्रतिपत्ती पूजासंमनस्ये यैस्तेषु प्राप्तमानसंप्रतिपत्तिषु रणे एकसर्गेषु नियतोत्साहेषु नियतनिश्चयेषु वा। 'सर्गास्तु सज्जनाध्यायस्वभावोत्साहनिश्चयाः' इति वैजयन्ती। पत्तिषु पदातिषु मानसं प्रति। पत्तीनां मानसेष्वित्यर्थः। कर्मप्रवचनीययुक्ते द्वितीया। भयं न तस्थौ। पूर्वोपकारस्मारिणो रणाय निर्भीकाः प्रातिष्ठन्तेत्यर्थः। अन्यथा—

'यस्तु भीतिपरावृत्तः सङ्ग्रामे हन्यते परैः।
भर्तुर्यद् दुष्कृतं किञ्चित्तत्सर्वं प्रतिपद्यते॥
यदस्य सुकृतं किञ्चिदमुत्रार्थमुपार्जितम्।
भर्ता तत्सर्वमादत्ते परावृत्तहतस्य तु'॥

इति निषेधस्मरणादिति भावः। अत्र मानसंप्रतिपत्त्योर्विशेषणगत्या भयाऽनवस्थानहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गं यमकेन संसृज्यते॥ ३८॥

**बाणाऽहिपूर्णतूणीरकोटरैर्धन्विशाखिभिः॥**
**गोधाश्लिष्टभुजाशाखैरभूद्भीमा बला(१)टवी॥ ३९॥**

बाणेति॥ असौ बलाटवी सैन्याऽरण्यानी धन्विशाखिभिः धानुष्कतरुभिः भीमा अभूत् भयदा अजनि। किंलक्षणैर्धन्विशाखिभिः बाणाऽहिपूर्णतूणीरकोटरैः बाणाः शरा एव अहयः सर्पाः तैः पूर्णा व्याप्ताः तूणीराः तूणा उपासङ्गा एव कोटराः कुहराणि येषां ते तथा, अपरं किंलक्षणैर्धन्विशाखिभिः गोधाश्लिष्टभुजाशाखैः गोधाभिर्बाहुत्रैः आश्लिष्टा वेष्टिता भुजा एव हस्ता एव शाखाः शिफा येषां ते तथा तैः। अटव्यपि सायकसदृशसर्पपूर्णकोटरैः तथा गोधाभिः प्राणिविशेषैः आश्लिष्टा आलिङ्गिता भुजातुल्याः शाखाः येषां ते तथा तैः एवंविधैर्वृक्षैर्भयानका भवति॥ ३९॥

---

(१) रणाटवी।

बाणेति ॥ रणमेवाटवी रणाटवी, बाणैरिवाऽहिभिः पूर्णा तूणीरा निषङ्गा एव कोटराः कुहरा येषां तैः गोधास्तलानि निहाकाश्च। 'गोधा तले निहाकायाम्' इति विश्वः । तलं ज्याघातवारणम् । ततो गोधा एव गोधा इति श्लिष्टरूपकम् । ताभिराश्लिष्टा भुजा एव शाखा येषां तैर्धन्विभिर्धानुष्कैरेव शाखिभिर्वृक्षैर्भीमा भयङ्करा अभूत् । समस्तवस्तुवर्णनात्सावयवरूपकम् ॥ ३९ ॥

॥ प्रतिलोमानुलोमपादः ॥

नानाऽऽजाववजानाना सा जनौघघनौजसा ॥
परानिहाऽहानिराप तान्वियाततयाऽन्विता ॥ ४० ॥

नानेति ॥ सा शिशुपालसेना इह अस्यां नानाऽऽजौ नानाविधायां युधि तान् परान् अरीन् दुर्हृदो वृष्णीन् आप आससाद । किंलक्षणा सा सेना जनौघघनौजसा अवजानाना जनौघस्य बलवृन्दस्य घनं बहुलं यत् ओजः प्रभावः तत् जनौघघनौजः तेन जनौघबहुप्रतापेन अवजानातीति अवजानाना अवज्ञां कुर्वती, यद्वि वा ओजसा प्रतापेन अवजानाना, तदा किल किंलक्षणा सेना जनौघघना जनसमूहव्याप्ता च, अपरं किंलक्षणा सेना अहानिः न हानिः क्षतिर्यस्याः सा तथा अखण्डिता, अपरं किंलक्षणा सेना वियाततया अन्विता निर्लज्जतया प्रतिभया अनुगता । प्रतिलोमाऽनुलोमपादोऽयम् ॥ ४० ॥

नानेति ॥ इहाऽस्यां नानाविधायामाजौ चित्रयुद्धे ओजसा तेजसा अवजानाना अवज्ञां कुर्वती । 'अकर्मकाच्च' इत्यात्मनेपदम् । जनौघैर्घना सान्द्रा जनौघघना । बहुजनेत्यर्थः । अहानिरभया वियाततया वैयात्येन धार्ष्ट्येनान्विता । धृष्टेत्यर्थः । 'धृष्टो धृष्णुर्वियातश्च' इत्यमरः । सा चैद्यसेना तान् परानरीन् आप प्राप । अत्र प्रतिपादं पादार्धस्यैवावृत्तेरर्धपादप्रतिलोमयमकम् ॥ ४० ॥

विषमं सर्वतोभद्रचक्रगोमूत्रिकादिभिः ॥
श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद्बलम् ॥ ४१ ॥

विषममिति ॥ तत् बलं चैद्यस्य सैन्यं व्यूहैः रचनादिभिः विषममभवत् दुष्प्रवेशमभूत्, किंलक्षणैः व्यूहैः सर्वतोभद्रचक्रगोमूत्रिकादिभिः सर्वतोभद्रचक्रगोमूत्रिकादिनामधेयैः। सर्वतोभद्रो नाम व्यूहः, चक्रव्यूहः चक्राकारव्यूहः, गोमूत्रिका नाम व्यूहः । कैः किमिव विषममित्याह—श्लोकैः पद्यैर्महाकाव्यमिव । तत् यथा श्लोकैर्विषमं दुर्बोधं च भवति । किंलक्षणैः श्लोकैः सर्वतोभद्रचक्रगोमूत्रिकादिभिः, सर्वतोभद्रं नाम जातिः, चक्रं च जातिः चक्रबन्धः, गोमूत्रिका जातिः, सर्वतोभद्रचक्रगोमूत्रिकामुरजखड्गशूलादिभिः श्लोकैर्महाकाव्यं यथा दुर्बोधं भवति । यत्र सर्वे रसाः सर्वेऽलङ्काराः सर्वाणि च काव्यस्थानानि चतुर्वर्गसम्बन्धाय क्रियन्ते, तन्महाकाव्यमुच्यते शिशुपालवधकिरातार्जुनीयादिकम् ॥ ४१ ॥

विषममिति ॥ तद्बलं चैद्यसेना सर्वतोभद्रचक्रगोमूत्रिकादिभिः । आदिग्रहणान्मुरजबन्धादिसङ्ग्रहः । श्लोकैर्महाकाव्यं शिशुपालवधादिकमिव व्यूहैः सर्वतोभद्रादिभिरेव बलविन्यासैः । 'व्यूहस्तु बलविन्यासे' इत्यमरः । विषमं दुरवग्रहमभवत् । नगनगरादिवर्णनयुक्तलक्षणं महाकाव्यम् ॥ ४१ ॥

संहत्या सत्वतां(१) चैद्यं प्रति भास्वरसेनया ॥
ववले योद्धुमुत्पन्नप्रतिभा स्वरसेन या ॥ ४२ ॥

संहत्येति ॥ अथ सत्वतां यादवीनां संहत्या वृन्देन चैद्यं प्रति शिशुपालमभि ववले वलितं परिवृत्तम् । किंलक्षणया सत्वतां संहत्या भास्वरसेनया भास्वराः शोभनाः सेनाः

(१) सात्वतां ।

पृतनाः यस्याः सा तथा तया परिदीप्तवाहिन्या। या सत्वतां संहतिः स्वरसेन आत्मवीर्येणैव योद्धुं युद्धं विधातुमुत्पन्नप्रतिभा सञ्जातधार्ष्ट्या। न तु परप्रेरणया योद्धुं कृतमतिः। सात्वतामिति केचित्पठन्ति, तदयुक्तम्। एवमकारान्तत्वे हि सात्वतानामित्येव भाव्यम्॥

संहत्येति॥ भास्वरा तेजिष्ठा सेना यस्यास्तया भास्वरसेनया सात्वतां यदूनां संहत्या सङ्घेन चैद्यं प्रति ववले प्रचेले। 'वल चलने' इति धातोर्भावे लिट्। 'न शसददवादि-' इति वकारादित्वादेत्वाभ्यासलोपयोः प्रतिषेधः। या यदूनां संहतिः स्वरसेन स्वभावेन योद्धुमुत्पन्नप्रतिभा सञ्जातप्रतिभा। या स्वयं रणकण्डूला सा पराहूता कथं निवर्तेत इति भावः॥ ४२॥

युग्मम्—

विस्तीर्णमायामवती लोललोकनिरन्तरा॥
नरेन्द्रमार्गं रथ्येव पपात द्विषतां बलम्॥ ४३॥

विस्तीर्णमिति॥ सा यदुवाहिनी द्विषतां बलं पपात शत्रूणां सैन्यं प्रविवेश, का कमिव रथ्या नरेन्द्रमार्गमिव। यथा रथ्या विशिखा नरेन्द्रमार्गं रथ्याविशेषं पतति। सकलनगररथ्यानां हि राजमार्गे समागतिः। किंलक्षणं शत्रूणां बलं राजमार्गं च विस्तीर्णमसङ्कटं, किंलक्षणा सेना रथ्या च आयामवती द्राघीयसी, अपरं किंलक्षणा सेना रथ्या च लोललोकनिरन्तरा लोलैः आकुलैः चपलैश्च लोकैर्जनैः निरन्तरा नीरन्ध्रा॥ ४३॥

अथ यदुसेनायाः प्रतिबलाभियोगं युग्मेनाह—

विस्तीर्णमिति॥ आयामवती द्राघीयसी लोललोकनिरन्तरा चलज्जनसङ्कुला सा सेनेत्युत्तरश्लोकेनान्वयः। सा यदुसेना विस्तीर्णं द्विषतां बलं नरेन्द्रमार्गं राजपथं रथ्या विशिखेव पपात सञ्जगाम। उपमानेऽपि विशेषणं योज्यम्॥ ४३॥

वारणाऽगगभीरा सा साराऽभीगगणाऽऽरवा॥
कारिताऽरिवधा सेनाऽनासेधा वारताऽरिका॥ ४४॥

वारणेति॥ अपरं किंलक्षणा सेना वारणाऽगगभीरा वारणाःगजा एव अगाः पर्वताः तैर्गभीरा दुर्विगाहा, दुष्प्रवेशेत्यर्थः। अपरं किंलक्षणा सेना सारा उत्कृष्टा बलवती, अपरं किंलक्षणा सेना अभीगगणारवा अभीगानामप्राप्तभयानां गणानां वीरवृन्दानाम् आरवो ध्वनिर्यस्यां सा तथा तां, भियं गच्छन्ति प्राप्नुवन्तीति भीगाः ततोऽन्ये अभीगाः। अपरं किंलक्षणा सेना कारिताऽरिवधा कारितः कृतः अरिवधः शत्रुक्षयो यया सा तथा। कारितइत्यत्र स्वार्थे णिच् प्रत्ययः। यथा रामो राज्यमकारयत्। अपरं किंलक्षणा सेना अनासेधा न विद्यमानः आसेधो बाधा यस्याः सा अनासेधा निरातङ्का। केचित्तु आसेधं प्रवेशमाहुः। वारणाऽगगभीरत्वात् अरीणामनासेधा, दुष्प्रवेशेत्यर्थः। अपरं किंलक्षणा सेना वरिताऽरिका वरिताः प्रार्थिताः 'मया सह युध्यध्व'मितीत्थम्, अरयो विपक्षा यया सा तथा। अत्र स्वार्थे कप्रत्ययः। वर ईप्सायाम्। प्रतिलोमार्धोऽयम्। युग्मम्॥ ४४॥

वारणेति॥ कीदृशी सेना, वारणैरेवाऽगैरचलैर्गभीरा दुरवगाहा वारणाऽगगभीरा सा साराणां श्रेष्ठानां न भियं गच्छन्तीत्यभीगानां निर्भीकाणां गणानां जन्तुसङ्घानामारवो यस्यां सा साराऽभीगगणारवा, कारिताऽरिवधा कृतशत्रुवधा। 'रामो राज्यमकारय'दितिवदत्र स्वार्थे णिच्। नास्त्यासेधः प्रतिषेधो यस्यां सा नासेधा। नञर्थेन नशब्देन बहुव्रीहिः। अनासेधा वा। वरिताऽरिका ईप्सितशत्रुका। 'अनेनाहं योत्स्य' इति स्वयं वृतप्रतिभटेत्यर्थः। शैषिकः कप्प्रत्ययः। सा सेना पपातेति पूर्वेणान्वयः। अत्र प्रातिलोम्येन अर्धावृत्तेरर्धप्रतिलोमयमकमेतत्। लक्षणं तूक्तं 'निध्वन'दित्यादिश्लोकप्रतिलोमयमके॥ ४४॥

अधिनागं प्रजविनो विकसत्पिच्छचारवः ॥
पेतुर्बर्हिणदेशीया शङ्कवः प्राणहारिणः ॥ ४५ ॥

**अधिनागमिति** ॥ शङ्कवः कुन्ताः अधिनागं द्विपेषु पेतुः अभ्रश्यन् । किंलक्षणाः शङ्कवः प्राणहारिणः असुमुषः, अपरं किंलक्षणाः शङ्कवः प्रजविनः वेगगामिनः, अपरं किंलक्षणाः शङ्कवः विकसत्पिच्छचारवः विकसता प्रसरता पिच्छेन पक्षभारेण चारवो रम्याः, अत एव अपरं किंलक्षणा शङ्कवः बर्हिणदेशीयाः बर्हिणेभ्यो मयूरेभ्यो ईषत् न्यूनाः बर्हिणदेशीयाः मयूरतुल्याः । बर्हिणः किल स्यदेन अधिनागं सर्पेषु पतन्ति । तेऽपि विकसत्पिच्छचारवः प्राणहारिणश्च, अर्थान्नागानामेव । बर्हिण इति बर्हशब्दात् फलबर्हाभ्यामिनच् ॥४५॥

अधिनागमिति ॥ प्रजवन्तीति प्रजविनोऽतिजवनाः । 'प्रजोरिनिः' इति इनिप्रत्ययः । विकसद्भिः पिच्छैः कलापैश्चारवः अत एव ईषदसमाप्तबर्हिणा बर्हिणदेशीया मयूरकल्पाः । 'ईषदसमाप्तौ—' इत्यादिना देशीयर्प्रत्ययः । प्राणहारिणः शङ्कवः शल्यायुधानि । 'वा पुंसि शल्यं शङ्कुर्ना' इत्यमरः । नागेष्वधिनागम् । विभक्त्यर्थेऽव्ययीभावः । गजेषु सर्पेषु च निपेतुः । सर्पेषु बर्हिण इवेत्यर्थः । अत एवोपमालङ्कारः । 'महोरगाऽहिगजा नागाः' इति वैजयन्ती ॥ ४५ ॥

॥ गोमूत्रिकाबन्धः ॥

प्र वृ त्ते वि ल स(१) द्ध्वा नं सा ध नेऽ प्य वि षा दि भिः ॥
व वृ षे वि क स द्दा नं यु ध मा प्य वि षा णि भिः ॥ ४६ ॥

**प्रवृत्ते इति** ॥ विषाणिभिर्दन्तिभिः युधमाप्य सङ्ग्राममासाद्य दानं ववृषे मदो वृष्टः। किंलक्षणैर्विषाणिभिः साधने सैन्ये प्रवृत्तेऽपि युध्यमानेऽपि अविषादिभिः विषादरहितैः, अभीतैरित्यर्थः। कथं प्रवृत्ते विलसद्ध्वानं विलसन् विलासान्वितो ध्वानः जयारवः यत्र क्रियायां तद्यथा । सशब्दमित्यर्थः । किंलक्षणं दानं विकसत् वृद्धिं गच्छत् । अन्येऽपि वीराः साधने साटोपं प्रवृत्तेऽपि अविषण्णा युद्धे सामदानं बहु वितरन्ति । गोमूत्रस्य सारूप्यात् गोमूत्रिकाबन्धोऽयं नाम ॥ ४६ ॥

प्रवृत्ते इति ॥ विकसन् जृम्भमाणो ध्वानो ध्वनिर्यस्मिंस्तद्यथा तथा साधने संप्रहारे प्रवृत्तेऽप्यविषादिभिर्विषादरहितैर्विषाणिभिर्दन्तिभिर्युधमाप्य प्राप्य विकसत्प्रभूतं दानं मदो ववृषे । युद्धारम्भे धनदानं च ध्वन्यते, सत्त्वसम्पन्नत्वात् । साधनेऽप्यविषादस्याविरोधाद्विरोधाभासः । गोमूत्रिकाचित्रबन्धोऽयम् ।

'वर्णानामेकरूपत्वं यद्येकान्तरमर्धयोः ।
गोमूत्रिकेति तत्प्राहुर्दुष्करं तद्विदो विदुः' ॥

इति लक्षणात् । षोडशकोष्ठद्वये पङ्क्तिद्वयेऽर्धद्वयं क्रमेण विलिख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिरित्युद्धारः ॥ ४६ ॥

पुरः प्रयुक्तैर्युद्धं तद्वलितै(२)र्लब्धशुद्धिभिः ॥
आलापैरिव गान्धर्वमदीप्यत पदातिभिः ॥ ४७ ॥

**पुर इति** ॥ तत् युद्धं पदातिभिः पत्तिभिः अदीप्यत शुशुभे । किंलक्षणैः पदातिभिः पुरः प्रयुक्तैः अग्रे उत्थापितैः, अपरं किंलक्षणैः पदातिभिः वलितैः भ्रान्तैः मण्डलप्रचारिभिः, अपरं किंलक्षणैः पदातिभिः लब्धशुद्धिभिः प्राप्तनिर्दोषत्वैः उपधापरीक्षितैः, कातर-

(१) विकस० । (२) तच्चलितै ।

स्वादिदोषरहितैरित्यर्थः। केन किमिव दीप्यते इत्याह-आलापैर्गान्धर्वमिव। यथा आलापैः स्वरादिभिः गान्धर्वं गेयं दीप्यते शोभते। आलापैरपि किंलक्षणैः पुरः प्रयुक्तैः आदौ कृतैः वलितैः आवृत्तैः, तथा स्वराणामावृत्त्या लब्धशुद्धिभिः निर्दोषैः अविकृतैः ॥४७॥

पुर इति ॥ तद्युद्धं पुरः प्रयुक्तैः गजादिभ्यः प्राक् प्रवर्तितैः, अन्यत्र गानात्पूर्वमुच्चारितैः चालितैः मण्डलचारिभिः। अन्यत्र मुहुरावर्तितैरित्यर्थः। लब्धशुद्धिभिः, कातर्यकपटादिदोषरहितैरित्यर्थः। अन्यत्रावृत्तैः। रागानुगुणैरित्यर्थः। पदातिभिः पत्तिभिः करणैः गान्धर्वं गानमालापैरालापिभिरिवाक्षरविशेषैरिवाऽदीप्यताऽशोभत ॥ ४७ ॥

केनचित् स्वासिनाऽन्येषां मण्डलाग्रानवद्यता ॥
प्रापे कीर्तिप्लुतमहीमण्डलाग्राऽनवद्यता ॥ ४८ ॥

केनचिदिति ॥ केनचित् सुभटेन स्वासिना निजनिस्त्रिंशेन अन्येषां परेषां मण्डलाग्रान् कृपाणान् उ वद्यता खण्डयता छिन्दता सता अनवद्यता निर्दोषता प्रापे अगर्ह्यत्वं लेभे। साधुवादः प्राप्त इत्यर्थः। किंलक्षणा अनवद्यता कीर्तिप्लुतमहीमण्डलाग्रा कीर्तिप्लुतं यशसा व्याप्तं महीमण्डलाग्रं भूवलयपृष्ठं यया सा तथा। 'कौक्षेयेको मण्डलाग्र' इत्यमरः ॥४८॥

केनचिदिति ॥ स्वासिना स्वखड्गेन अन्येषां मण्डलाग्रानवद्यता खण्डयता। द्यतेर्लटः शत्रादेशः। केनचिद्वीरेण कीर्तिप्लुतं यशोव्याप्तं महीमण्डलाग्रं भूपृष्ठं यस्याः सा कीर्तिप्लुतमहीमण्डलाग्रा अनवद्यता अनिन्द्यता प्रापे प्राप्ता ॥ ४८ ॥

हन्तुं विद्विषत(१)स्तीक्ष्णः सममेव सुसंहतेः ॥
परिवारात् पृथक्चक्रे खड्ग आत्मा(२) च केनचित् ॥ ४९ ॥

हन्तुमिति ॥ केनचिद्वीरेण विद्विषतः हन्तुं शत्रून् विनाशयितुं परिवारात् कोशात् परिच्छदाच्च यथाक्रमं खड्गः असिः आत्मा च देहश्च सममेव युगपदेव पृथक् चक्रे भिन्नः कृतः। स्ववृन्दान्निर्याय खड्गमाकृष्य कश्चित् सपत्नानक्षणोदित्यर्थः। किंलक्षणः खड्गः आत्मा च तीक्ष्णः शितः पौरुषान्वितश्च, किंलक्षणात् परिवारात् सुसंहतेः दुर्भेद्यात्। घनत्वमेकयोगक्षेमता च संहतिः ॥ ४९ ॥

विहन्तुमिति ॥ केनचिद्वीरेण विद्विषो विहन्तुं तीक्ष्णो निशितः परिच्छेत्ता च खड्गः सुसंहतेः सुघटितात् सुष्ठु सङ्घीभूताच्च परिवारात्कोशात् परिजनाच्च। 'परिवारः परिजने खड्गकोशे परिच्छदे' इति विश्वः। सममेव पृथक् चक्रे उद्धृतः। आत्मा च पृथक् चक्रे विभक्तः। खड्गमुत्कृष्य स्वसैन्यान्निर्गत्याऽरिमध्ये पपातेत्यर्थः। अत्र खड्गात्मनोः प्रकृतयोः समानक्रियायोगात्केवलप्रकृतास्पदा तुल्ययोगिता ॥

अन्येन विदधेऽरीणामतिमात्रा विलासिना ॥
उद्गूर्णेन चमूस्तूर्णमतिमात्राविलाऽसिना ॥ ५० ॥

अन्येनेति ॥ अन्येन केनचित् विलासिना विलासवता युद्धविलासान् वितन्वता शूरेण अरीणामरातीनां चमूः पताकिनी उद्गूर्णेन उद्यतेन असिना कौक्षेयकेण तूर्णं क्षिप्रम् उ तिमात्राऽऽविला विदधे अतिमात्रं नितराम् अविला कलुषा भयाकुला अकारि। किंलक्षणाः चमूः अतिमात्रा मात्राम् इयत्त्वम् अतिक्रान्ता अतिमात्रा सुविस्तीर्णा। यदि वा तेन मतिमात्रा बुद्धेर्मात्रा जनन्या, प्राज्ञेनेत्यर्थः ॥ ५० ॥

---

( १ ) विहन्तुं विद्विष० । ( २ ) खड्गश्चात्मा ।

अन्येनेति ॥ अन्येन वीरेण विलासिना विलसनशीलेन उद्गूर्णेनोद्यतेन असिना खड्गेन मात्रं मान-मतिक्रान्ताऽतिमात्रा अपरिमिता अरीणां चमूः सेना तूर्णं शीघ्रमतिमात्रमत्यन्तमाविला कलुषा अतिमात्राविला अत्याविला विदधे कृता ॥ ५० ॥

**सहस्रपूरणः कश्चिल्लूनमूर्धाऽसिना द्विषः ॥**
**तदोर्ध्व(१) एव काबन्धीमभजन्नर्तनक्रियाम् ॥ ५१ ॥**

सहस्रेति॥ कश्चित् सुभटः तदा ऊर्ध्वं एव उच्च एव काबन्धीं कबन्धसम्बन्धिनीं नर्तन-क्रियाम् अभजत्। कम्बन्धवत् ववल्ग इत्यर्थः। 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्' इत्यमरः। किंलक्षणः कश्चित् द्विषः असिना शत्रोः करवालेन लूनमूर्धा कर्तितोत्तमाङ्गः, अपरं किंल क्षणः सुभटः अत एव सहस्रपूरणः सहस्राणि दशशतानि पूर्यन्ते आपाद्यन्ते समाप्यन्तेऽनेनेति सहस्रपूरणः। सहस्रे निहते कबन्ध उत्तिष्ठतीति वार्ता ॥ ५१ ॥

सहस्रेति ॥ पृणातीति पूरणः। पॄ पालनपूरणयोः कर्तरि ल्युट्(२)। सहस्राणां पूरणः पालयिता पूरयिता सहस्रपूरणः सहस्ररक्षी सहस्रहन्ता वा कश्चिद्भटः। कबन्धस्तु सहस्रपूरणः सहस्रमङ्ख्यापूरकः। सहस्र देकः कबन्धो नृत्यतीति प्रसिद्धिः। असिना स्वाऽसिना द्विषो लूनमूर्धा लूनशत्रुमूर्धा। सापेक्षत्वेऽपि गमकत्वात्समासः। कबन्धस्तु द्विषोऽसिना लूनमूर्धा तथा कबन्धवदेवोर्ध्व एव तिष्ठते। कबन्धस्येमां काबन्धीं नर्तनक्रियामभजत्। विजयहर्षात्स्वयमपि कबन्धवन्ननर्तेत्यर्थः। अत एव सादृश्याक्षेपादसम्भव-द्वस्तुसम्बन्धाख्यो निदर्शनाभेदः। 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्' इत्यमरः ॥ ५१ ॥

**शस्त्रव्रणमयश्रीमदलङ्करणभूषितः ॥**
**ददृशेऽन्यो रावणवदलङ्करणभूषितः ॥ ५२ ॥**

शस्त्रेति ॥ अन्यः अपरः सुभटः रावणवत् ददृशे दशाननवत् बुबुधे, भीषणत्वात्। किंलक्षणः अन्यः शस्त्रव्रणमयश्रीमदलङ्करणभूषितः शस्त्रव्रणमयैः आयुधक्षतिरूपैः श्रीमद्भिः शोभावद्भिः अलङ्करणैः आभरणैर्भूषितोऽलङ्कृतः। रावणाद्व्यतिरेकमाह—अपरं किंल-क्षणोऽन्यः अलङ्करणभूषितः अलङ्कायां रणभुवि उषितोऽवस्थितः। तस्य तु लङ्का समरा-ऽवनिः आसीत् ॥ ५२ ॥

शस्त्रेति ॥ शस्त्रव्रणमयानि तद्रूपाणि। स्वार्थे मयट्। तैरेव श्रीमद्भिः शोभावद्भिरलङ्करणैरलङ्कारैर्भूषितो-ऽलङ्कृतः, शस्त्रव्रणाऽलङ्कृत इत्यर्थः। अन्यः कश्चित्, अविद्यमाना लङ्का यस्याः सा अलङ्केति बहुव्रीहिः। अत एव 'स्त्रियाः पुंवत्—' इत्यादिना पुंवद्भावः। सा रणभूश्च तस्यामुषितः स्थितोऽलङ्करणभूषितः। वसेर्निवासार्थात्कर्तरि क्तः, 'वचिस्वपि' इत्यादिना सम्प्रसारणम्। रावणवद्ददृशे दृष्टः। सर्वाङ्गीणव्रणभूषणत्वेन रावण एवायं, लङ्कासम्बन्धविरहात्तु व्यतिरेक इत्यर्थः। उपमाव्यतिरेकयमकानां सङ्करः ॥ ५२ ॥

**द्विषद्विशसनच्छेदनिरस्तोरुयुगोऽपरः ॥**
**सिक्तश्चाऽस्रैरुभयथा बभूवाऽरुणविग्रहः ॥ ५३ ॥**

द्विषदिति ॥ अपरोऽन्यः भटः उभयथा द्वाभ्यां प्रकाराभ्याम् अरुणविग्रहो बभूव, अनूरुनिभशरीरो लोहिताङ्गश्चासीदित्यर्थः। एकस्मिन् पक्षे अरुणस्येव गरुडाग्रजस्येव

---

(१) तथोर्ध्व०।

(२) "अस्माद्धातोर्ल्युटि 'इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन' इति वार्तिकाद् गुणस्यैव न्याय्यत्वात्, ल्युन्युत्युत्वेऽपि दीर्घस्याऽप्रामाणिकत्वेऽपि चिन्त्यमिदम्। तस्मात् 'पूरी आप्यायने' इति धातुर्बोध्यः। अत एव 'पूरणी' इति पदव्याख्यायाम् 'पूरयति' इति स्वामिनोक्तम्। अत एव वल्लभेनापि 'पूर्यन्ते आप्यायन्ते' इति विवरणं कृतम्"। टिप्पणीयं 'निर्णयसागर'मुद्रितपुस्तके नयनपथं प्रयाति।

विग्रहो देहो यस्य सः तथा, अपरस्मिन् पक्षे अरुणो रक्तो विग्रहो देहो यस्य सः तथा । किंलक्षणोऽपरः यतः द्विषद्विशसनच्छेदनिरस्तोरुयुगः द्विषतः शत्रोर्यः विशसनः करवालः तेन यः छेदः कर्तनं तेन निरस्तं क्षिप्तम् ऊरुयुगं सक्थियुगलं यस्य सः तथा । अत एव अरुणस्येव विग्रहोऽस्येत्यरुणविग्रहः, ऊरुच्छेदात् । अस्यैवाऽसिना सक्थि क्षतम् , अस्रैः रुधिरैः सिक्त आर्द्रीकृतश्च, अतश्चारुणो लोहितो विग्रहो यस्याऽसौ अरुणविग्रहः। 'सक्थि क्लीबे पुमानूरु' रित्यमरः ॥ ५३ ॥

द्विषदिति ॥ द्विषद्विशसनम् । 'निर्वापणं विशसनं मारणं प्रतिघातनम्' इत्यमरः । तस्मिन्नरुच्छेदेनाऽरिशस्त्रप्रहारेण निरस्तमूरुयुगं यस्य सः अत एवास्रैरसृग्भिश्च सिक्तोऽपरो वीरः उभयथा उभाभ्यां प्रकाराभ्याम् । 'प्रकारे गुणवचनस्य' इति थाल् । अरुणस्याऽनूरोरिव अरुणोऽरुणवर्णश्च विग्रहो यस्य सोऽरुणविग्रहो बभूव। 'अरुणोऽर्कार्कसारथ्योररुणो लोहितेऽन्यवत्' इति विश्वः। अत्रोरुच्छेदाऽस्रसिक्तयोर्विशेषणगत्योभयथाऽरुणविग्रहभावहेतुत्वाकाव्यलिङ्गमुपमाश्लेषाभ्यां सङ्कीर्यते ॥ ५३ ॥

भीमतामपरोऽम्भोधिसमेऽधित महाहवे ॥
दाक्षे कोपः शिवस्येव समेधितमहा हवे ॥ ५४ ॥

भीमतामिति ॥ अपरोऽन्यः सुभटः तस्मिन् अम्भोधिसमे सागरसदृशे महाहवे बृहत्समरे भीमतामधित घोरत्वं दध्रे । क इव भीमतामधितेत्याह—दाक्षे महाहवे दक्षप्रजापतिसम्बन्धिनि यज्ञे अम्भोधिसमे भगवतः शिवस्य श्रीमहादेवस्य कोप इव । यथा दाक्षे यज्ञे श्रीरुद्रकोपः भीमत्वं दधौ । रौद्रो हि क्रोधोऽत्युग्रः, येन प्रजापतेर्दक्षस्य क्रतुर्ममन्थे । किंलक्षणः कोपः अपरश्च समेधितमहाः समेधितं वर्धितं महस्तेजो येन यस्य वा सः तथा वर्धिततेजस्कः, अर्थात् स्वपक्षीयाणाम् ॥ ५४ ॥

भीमतामिति ॥ अम्भोधिसमे सागरसदृशे महानाहवस्तस्मिन्महाहवे सम्यगेधितमहाः संवर्धिततेजाः अपरो वीरः, दक्षप्रजापतेरयं दाक्षस्तस्मिन्दाक्षे हवे यज्ञे । 'हवो यज्ञे तथाह्वाने' इति विश्वः । समेधितमहासन्दीपिततेजाः शिवस्य कोप इव । वीरभद्र इवेत्यर्थः । भीमतां भयङ्करतामाधित धृतवान् । बिभ्यत्यस्मादिति भीमः । 'भियः षुग्वा' इत्यौणादिके मप्रत्यये भीमो भीष्मश्च । 'भीमादयोऽपादाने' इति निपातनादपादानार्थता । उपमायमकयोः संसृष्टिः ॥ ५४ ॥

दन्तैश्चिच्छिदिरे कोपात्प्रतिपक्षं गजा इव ॥
परनिस्त्रिंशनिर्लूनकरवालाः पदातयः ॥ ५५ ॥

दन्तैरिति ॥ पदातयः पत्तयः प्रतिपक्षं परिपन्थिनं कोपात् क्रोधात् दन्तैः चिच्छिदिरे दन्तैरभैत्सुः । किंलक्षणाः पदातयः यतः परनिस्त्रिंशनिर्लूनकरवालाः रिपुकृपाणनिकृत्तकौक्षेयकाः, के इव चिच्छिदिरे गजा इव । यथा गजाः करिणः कोपात् अरिं दन्तैः विषाणैः छिन्दन्ति । गजा अपि किंलक्षणाः परनिस्त्रिंशनिर्लूनकरवालाः शत्रुखड्गछिन्नहस्तलाङ्गलाः ॥

दन्तैरिति ॥ परेषां निस्त्रिंशैः खड्गैर्निर्लूनकरवालाः छिन्नखड्गाः, पादाभ्यामतन्तीति पदातयः पत्तयः। 'अजयतिभ्यां पादे च' इत्यौणादिक इण्। 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः । कोपात् गजा इव प्रतिपक्षं शत्रुं दन्तैर्दशनैर्विषाणैश्च चिच्छिदिरे चिच्छिदुः ॥ ५५ ॥

रणे रभसनिर्भिन्नद्विपपाटविकासिनि ॥
न तत्र गतभीः कश्चिद्विपपाट विकासिनि ॥ ५६ ॥

रण इति ॥ तत्र रणे समीके विकासिनि प्रसृते परां भुवं प्राप्ते सति न कश्चित् विपपाट न कोऽपि पलायाञ्चक्रे । यतः किंलक्षणः स गतभीः निर्भयः । विकसितात्वानसर-

णतां प्राप्तं(?)। किंलक्षणे रणे रभसनिर्भिन्नद्विपपाटविकासिनि रभसेन औत्सुक्येन निर्भिन्न-द्विपाः क्षतकुञ्जराः पाटविकानां चतुराणाम् असयः खड्गा यत्र सः तथा तस्मिन् । पाटवं विद्यते येषां ते पाटविकाः । रभसेन निर्भिन्नानां द्विपानां पाटविकम् पाटवम् अस्यति क्षिपतीति केचित् ॥ ९६ ॥

रणे इति ॥ 'रभसो वेगहर्षयोः' इति विश्वः । रभसेन वेगेन निर्भिन्नद्विपाः पाटितगजाः पाटविकानां पाटववतामसयो यस्मिन् । पाटवशब्दान्मत्वर्थीयठक्प्रत्ययः । विकासिनि प्रवृद्धे तत्र तस्मिन् रणे गतभीर्निर्भीकः, अत एव कश्चित्कोऽपि न विपपाट न पाटयामास न पलायत । अत्र गतभीकत्वस्य विशेषणगत्या अपलायनहेतुत्वात्काव्यलिङ्गम् । द्विपदलनेऽपि रणे निर्भीक इति विरोधश्च यमकेन संसृज्यते ॥ ९६ ॥

**यावन्न सत्कृतैर्भर्तुः स्नेहस्याऽऽनृण्यमिच्छुभिः ॥**
**अमर्षादितरैस्तावत् तत्यजे युधि जीवितम् ॥ ९७ ॥**

यावदिति ॥ सत्कृतैः पूजितैः लब्धप्रसादैः तैरेव भर्तुः प्रभोः स्नेहस्य प्रेम्णः आनृण्यमनृणत्वम् इच्छुभिः जिगमिषुभिः सुभटैः युधि सङ्ग्रामे यावज्जीवितं न तत्यजे न यावत्प्राणास्त्यक्ताः न प्राणान् मुञ्चन्ति स्म, तावत् इतरैः असत्कृतैः अमर्षात् क्रोधात् जीवितम् त्यक्तम् । ते मेरुरित्यर्थः ॥ ९७ ॥

यावदिति ॥ सत्कृतैः स्वस्वामिना पूर्वसंमानितैः अत एव भर्तुः स्नेहस्य स्वामिप्रेम्ण आनृण्यमनृणत्वमिच्छुभिः । योधैरिति शेषः । युधि जीवितं यावन्न तत्यजे त्यक्तं, तावदितरैरसत्कृतैरमर्षादसत्कारक्रोधाज्जीवितं तत्यजे । अथ वा 'अस्मान्पश्ये'ति स्वामिनमुपालभ्य स्वयमेव प्राक्प्राणान् प्रजहुरित्यर्थः । सत्कारादिविशेषणोत्थकाव्यलिङ्गं सुगमम् ॥ ९७ ॥

**॥ समुद्गयमकम् ॥**

अथ कस्मात्तेऽपि जीवितं न जहतीत्याह—

**अयशोभिदुरालोके कोपधामरणाऽऽदृते ॥**
**अयशोभिदुरा लोके कोपधा मरणादृते ॥ ९८ ॥**

अयशोभिदुरालोके इति ॥ एवंविधे लोके जने मरणात् ऋते प्राणत्यागात् विना तद्व्रजं का अन्या अयशोभिदुरा अकीर्तिनाशनी उपधा उपपत्तिः । मरणेनैवास्य अयशोऽस्यतीत्यर्थः । किंलक्षणे लोके अयशोभिदुरालोके अयेन अनुकूलदैवेन शोभते इति अयशोभी, दुःखेन आलोक्यते इति दुरालोकः तेजस्वित्वात्, ततः कर्मधारयः । एतेन सत्कृतानां मरणे युक्तत्वमुक्तम् । यदि हि ते पलायेरन्, तर्हि अयशो भवेत् । अपरं किंलक्षणे लोके कोपधामरणादृते कोपस्य क्रोधस्य धाम आस्पदं यत् रणं सङ्ग्रामः तत्रादृते एवं वा योज्यम् । एतेनाऽसत्कृतानां मरणे न युक्तत्वमुक्तम् । यदि हि ते रणं प्राप्य सत्कृता अपि क्रुद्धा अपि जीवितं रक्षेयुः, तन्न किञ्चित् नैव कृतं स्यात् । अर्धद्वयसादृश्यात् समुद्गसदृशत्वेन समुद्गकं यमकम् ॥ ९८ ॥

अथैवंविधानां मरणस्यैव कर्तव्यतामुपपादयति—

अयशोभिदुरालोकेति ॥ 'अयः शुभावहो विधिः' इति अयशोभी भाग्यवान् स चासौ दुरालोकः तेजस्वित्वाद् दुर्दर्शश्चेति विशेषणमासः । तस्मिन्नयशोभिदुरालोके कोपधाम कोपाश्रयः । कुपित इत्यर्थः । अथाऽप्यकोपे भीरुत्वापातात् । अत एव रणमादृतः रणादृतः । रणार्थीत्यर्थः । कर्तरि क्तः । कोपधाम चासौ रणादृतश्च तस्मिन्कोपधामरणादृते लोके एवंविधे वीरलोके, अयशोभिदुरा स्वाम्यनादरनिमित्ताऽपकीर्तिनिवर्तिका । विदिभिदिच्छिदेः कुरच् । उपधा उपायो मरणादृते प्राणत्यागं विनेत्यर्थः । का । न काऽपीत्यर्थः । 'अन्यारादितरर्ते—' इति पञ्चमी । अत्राऽयशोभित्वादीनां लोकविशेषणद्वारा तद्वर्तिनामुपजीविनामवसरे

जीवत्यागहेतुत्वात्काव्यलिङ्गं यमकेन सङ्कीर्यते । समुद्गयमकभेदोऽयम् । 'अर्धाभ्यासः समुद्गः स्यादस्य भेदात्रयो मताः' इति लक्षणात् ॥ ५८ ॥

**स्खलन्ती न क्वचित्तैक्ष्ण्यादभ्यग्रफलशालिनी ॥**
**अमोचि शक्तिः शाक्तीकैर्लोहजा न शरीरजा ॥ ५९ ॥**

**स्खलन्तीति** ॥ शाक्तीकैः शक्तिप्रहरणैः सुभटैः लोहजा अयोमयी शक्तिः आयुधविशेषः अमोचि अभ्यमित्रं क्षिप्ता, न तु शरीरजा देहोद्भवा सामर्थ्याख्या । किंलक्षणा लोहजा शक्तिः तैक्ष्ण्यात् शितत्वात् न क्वचित् स्खलन्ती न प्रतिहन्यमाना अप्रतिहता, अपरं किंलक्षणा शक्तिः अभ्यग्रफलशालिनी अभ्यग्रेण अग्रवर्तिना फलेन शल्येन शलति आशु गच्छतीति तथा श्लाघ्यमाना, किंलक्षणा शरीरजा शक्तिः अभ्यग्रेण दूरवर्तिना फलेन लाभेन शालते इति शालिनी श्लाघ्यमाना, तैक्ष्ण्यादभिसरत्वात् न क्वचित् स्खलन्ती । तुल्यार्थाः उपकण्ठाभ्यर्णसनीडसविधनिकटासन्नाऽभ्यग्रसमीपाऽभ्याशसदेशान्तिकसवेशाः ॥ ५९ ॥

स्खलन्तीति ॥ शक्तिः प्रहरणं येषां तैः शाक्तीकैः । 'शाक्तीकः शक्तिहेतिकः' इत्यमरः । शक्तियष्ट्योरीकक्' इति प्रहरणार्थे ईकक् प्रत्ययः । तैक्ष्ण्यान्नैशित्यात्क्वचिदपि न स्खलन्ती प्रतिहतिं न प्राप्नुवती अभ्यग्रं समग्रं यत्फलं शल्यं तेन शालते, अन्यत्र अभ्यग्रेणासन्नेन फलेन श्रेयसा शालत इत्यभ्यग्रफलशालिनी लोहजा अयोमयी शक्तिरायुधविशेषः अमोचि शत्रुषु मुक्ता । शरीरजा शक्तिः सामर्थ्याख्या तु नाऽमोचि । अतिव्यायामेऽप्यक्षीणशक्तिका एवाऽयुध्यन्तेत्यर्थः । अत्र द्वयोरपि प्रकृतत्वात्केवलप्रकृतश्लेषः ॥

**आपदि व्यापृतनया रुषा(१) युयुधिरे नृपाः ॥**
**आप दिव्या पृतनया विस्मयं जनता तया(२) ॥ ६० ॥**

**आपदीति** ॥ नृपा राजानः रुषा रोषेण युयुधिरे सम्प्रजह्रुः । किंलक्षणाः नृपाः आपदि व्यसने व्यापृतनयाः योजितधनुर्वेदनीतयः अत्यक्तमर्यादा वा, अत एव तया पृतनया सेनया दिव्या जनता देवमुनिविद्याधरादिसंसत् विस्मयमाप विसिष्मिये चित्रीयमाणा जाता । चित्रं मरणकालेऽपि समयान्न चलन्ति ॥ ६० ॥

आपदिति ॥ नृपा राजानः आपदि व्यसनेऽपि व्यापृतनयाः प्रवृत्तनीतिका एव सन्तः । न तु स्वापद्वृत्त्येति भावः । पृतनया सेनया साधनेन । वाक्यान्तरस्थस्यापि पृतनाशब्दस्याऽत्रान्वयः चित्रे सोढव्यः । तथा तेन प्रकारेण युयुधिरे सम्प्रजह्रुः, यथा दिव्या जनता अन्तरिक्षवर्तिसिद्धविद्याधरसङ्घो विस्मयमाप । अमानुषं युद्धं चक्रुरित्यर्थः । अयं च पादाभ्यासयमकभेदः ॥ ६० ॥

**स्वगुणैराफलप्राप्तेराकृष्य गणिका इव ॥**
**कामुकानिव नालीकांस्त्रिणताः(३) सहसाऽमुचन् ॥ ६१ ॥**

**स्वगुणैरिति** ॥ त्रिणताः धनूंषि सहसा झटिति नालीकान् सायकान् अमुचन् चिक्षिपिरे । किं कृत्वा स्वगुणैः निजज्याभिः आफलप्राप्तेः फलं यावत् आकृष्य आकर्षयित्वा(?), काः कानिव गणिकाः कामुकानिव । यथा गणिकाः धर्षिण्यः कामुकान् कामिनः पुरुषान् स्वगुणैः रूपलावण्यमाधुर्यादिभिः आफलप्राप्तेः आधनलाभात् नाऽलीकान्

( १ ) नयास्तथा । ( २ ) यथा ।

(३) (१२९९) शकलिखितपुस्तके तु 'तृणताः' इति पाठ उपलभ्यते । अत एव 'तृणता तृणत्वे कार्मुकेऽपि च' इति हैमकोषव्याख्यावसरे कार्मुकार्थे इममेव श्लोकमुदाहृत्य वल्लभस्तु 'धनुषि त्रिषु नतास्त्रिणताः' इत्याह । 'तत्र गणिकापक्षे णत्वं चिन्त्यम्' इत्यनेकार्थकैरवाकरकौमुदी । निर्णयसागरयन्त्रालयमुद्रितपुस्तकस्थेयं टिप्पणी ।

असत्यान् मुग्धान् सहसा आकृष्य स्वीकृत्य अनन्तरं मुञ्चन्ति । त्रिषु स्थानेषु मध्ये कट्योश्च नताः कुटिलाः त्रिणताः । 'पूर्वपदात् संज्ञायामगः' इति णत्वम् । नार्योऽपि मध्ये भ्रुवोश्चेति त्रिषु नताः ॥ ६१ ॥

स्वगुणैरिति ॥ त्रिषु स्थानेषु मध्येषु नताः त्रिणताः शार्ङ्गाणि । 'पूर्वपदात्संज्ञायाम्' इति णत्वम् । गणिका वेश्या इव, ता अपि त्रिणताः मध्ये भ्रुवोश्च नतत्वात् । नालीकानिषुविशेषान् । 'नालीकः शरशल्ययोः' इति विश्वः । कामुकानिव, स्वगुणैर्ज्याभिः रूपलावण्यादिभिश्च । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती । आफलपातिराशल्यस्पर्शादाधनलाभाच्च आकृष्य कर्णान्तिकं नीत्वा वशीकृत्य च सहसा अमुचन्नत्याक्षुः । मुचेर्लुङि 'पुषादि—' इति च्लेरङादेशः । अत्रैकैवोपमा ॥ ६१ ॥

वाजिनः शत्रुसैन्यस्य समारब्धनवाऽऽजिनः ॥
वाजिनश्च शरा मध्यमविशन् द्रुतवाजिनः ॥ ६२ ॥

वाजिन इति ॥ शत्रुसैन्यस्य मध्यं विपक्षाऽनीकस्यान्तरं वाजिनोऽश्वाः अविशन् प्राविक्षन्, च पुनः शराः विशिखाः मध्यम् अविशन् । किंलक्षणा उभये वाजिनः वाजाः पक्षा विद्यन्ते येषां ते वाजिनः, अपरं किंलक्षणाः द्रुतवाजिनः द्रुतं क्षिप्रं वजन्ति चलन्ति द्रुतवाजिनः आशुगाः द्वयेऽपि, किंलक्षणस्य शत्रुसैन्यस्य समारब्धनवाऽऽजिनः प्रारब्धप्रत्यग्रसङ्ग्रामस्य ॥ ६२ ॥

वाजिन इति ॥ द्रुतं वजन्तीति द्रुतवाजिनः शीघ्रगामिनः । 'वज गतौ' इति धातोर्णिनिः । वाजिनोऽश्वाः वाजिनः पक्षवन्तः शराश्च । 'पक्षो वाजस्त्रिषूत्तरे' इत्यमरः । समारब्धा नवा अपूर्वा आजिर्युद्धं येन तस्य समारब्धनवाऽऽजिनः शत्रुसैन्यस्य मध्यमविशन् । अत्र वाजिनां शराणां च प्रवेशाख्यतुल्ययोगिताभेदो यमकेन संसृज्यते ॥ ६२ ॥

पुरस्कृत्य फलं प्राप्तैः सत्पक्षाश्रयशालिभिः ॥
कृतपुङ्खतया लेभे लक्ष्य(१)मप्याशु मार्गणैः ॥ ६३ ॥

पुरस्कृत्येति ॥ मार्गणैः शरैः आशु मङ्क्षु लक्ष्यमपि लेभे शरव्यमपि प्रापि । कया कृतपुङ्खतया सपुङ्खत्वेन । न हि पुङ्खहीनस्य गतिर्भवति । पुङ्ख उपरिभवो भागः । उक्तं च—

सपक्षो लभते लक्ष्यं मार्गणोऽपि गुणच्युतः ।
विपक्षो गुणयुक्तोऽपि पदमेकं न गच्छति ॥

इति । अपि प्रतीयमानार्थान्तरत्वेन विस्मये । किंलक्षणैः मार्गणैः फलं पुरस्कृत्य शल्यमग्रेकृत्य प्राप्तैः उपलक्ष्यं गतैः, अपरं किंलक्षणैर्मार्गणैः सत्पक्षाश्रयशालिभिः सद्भिः शोभनैः पक्षैर्वाजैः यः आश्रयः आश्रयणं तेन शलन्ति आशु गच्छन्ति ये ते सत्पक्षाश्रयशालिनः तैः । येऽपि मार्गयन्ति दातॄन् गवेषयन्ति ते मार्गणाः याचकाः । कृतपुङ्खाः चतुरास्ते लक्ष्यमपि आशु लभन्ते, किं पुना रूपम् । शतं सहस्राणि लक्ष्यं तेऽपि फलं धनं पुरस्कृत्य सन्धाय प्राप्ताः । तथा सन्तः पक्षाः सहायाः यस्य सः तथाविधो यः आश्रयः तेन शालिनः श्लाघ्यमानाः । आश्रीयते इति आश्रयोऽनुग्राहकः । यावत् हि सत्पक्षाश्रयो नास्ति तावत् कथं प्रभूतं लभ्यते ॥ ६३ ॥

पुरस्कृत्येति ॥ फलं शल्यं पुरस्कृत्य पुरोधाय, अन्यत्र फलं लाभं पुरस्कृत्य । सम्भाव्येत्यर्थः । प्राप्तैरागतैः, सत्पक्षाश्रयेण साधुकङ्कादिपत्रग्रन्थनेन, अन्यत्र साधुसहायावलम्बनेन शालन्ते इति तथोक्तैः

(१) लक्ष ।

मार्गणैः सायकैरर्थिभिश्च । 'मार्गणौ सायकार्थिनौ' इत्यमरः । कृतपुङ्खतया सुबद्धकर्तरीकतया । 'पुङ्खस्य-कर्तरी पुङ्खः' इति यादवः । अन्यत्र कुशलतयेत्यर्थः । लक्षं शरव्यम्, अन्यत्र लक्षसङ्ख्यमपि धनं लेभे, शतादिकं किमु वक्तव्यमिति भावः । 'लक्षं शरव्ये सङ्ख्यायाम्' इति विश्वः । अत्राभिधायाः प्रकृतार्थ-नियन्त्रणादर्थान्तरप्रतीतेर्ध्वनिरेव ॥ ६३ ॥

**रक्तस्रुतिं जपासूनसमरागामिषुव्यधात् ॥**
**कश्चित्पुरः सपत्नेषु समराऽऽगामिषु व्यधात् ॥ ६४ ॥**

**रक्तस्रुतिमिति** ॥ कश्चित् कोऽपि सुभटः पुरः अग्रवर्तिषु सपत्नेषु शत्रुषु रक्तस्रुतिं व्यधात् रुधिरधारां चकार । कस्मात् इषुव्यधात् शरताडनात्, किंलक्षणां रक्तस्रुतिं जपा-सूनसमरागां जपाकुसुमतुल्यलौहित्यां, किंलक्षणेषु सपत्नेषु समरागामिषु रणागतेषु ॥ ६४ ॥

रक्तस्रुतिमिति ॥ कश्चिद्वीरः पुरोऽग्रे समरागामिषु समरमागतेषु सपत्नेषु इषुव्यधाद्बाणप्रहारात् । 'व्यधजपोरनुपसर्गे' इत्यप्प्रत्ययः । जपासूनसमरागां रक्तस्रुतिं रक्तस्रावं व्यधाद्विहितवान् । दधातेर्लुङि 'गातिस्था-' इत्यादिना सिचो लुक् । उपमायमकयोः संसृष्टिः ॥ ६४ ॥

**रयेण रणकाम्यन्तौ दूरादुपगताविभौ ॥**
**गतासुरन्तरा दन्ती वरण्डक इवाऽभवत् ॥ ६५ ॥**

**रयेणेति** ॥ इभौ अन्तरा द्विरदयोर्मध्ये गतासुः संस्थितो दन्ती गजः वरण्डक इवा-ऽभवत् वरण्डकतुल्यो बभूव । क्रीडायुद्धे हस्तिनां काष्ठादिरूपवरण्डको रोधकः समपद्यत इत्यर्थः । किंलक्षणौ इभौ रणकाम्यन्तौ रणं युद्धं काम्यतः तौ रणकाम्यन्तौ रणमिच्छन्तौ युयुत्सू । काम्यच् । इभाविति अन्तरान्तरेण युक्ते द्वितीया । पृथग्विभक्तिनिर्दिष्टयोरेवा-ऽन्तराऽन्तरेणयुक्तयोर्द्वितीयेति न सर्वमतम् ॥ ६५ ॥

रयेणेति ॥ रणमात्मन इच्छन्तौ रणकाम्यन्तौ । 'काम्यच्च' इति रणशब्दात्काम्यच्प्रत्यये सनाद्यन्त-धातुत्वाल्लटि शत्रादेशः । रयेण दूरादुपगतौ इभावन्तरा इभयोर्मध्ये । 'अन्तरान्तरेण युक्ते' इति द्वितीया । गतासुर्मृतो दन्ती, दैवान्मध्यवर्ती हस्तिकुणप इत्यर्थः । वरण्डकोऽन्तरावेदिरिवाऽभवत् । 'वरण्डको-ऽन्तरावेदौ सन्दोहमुखरागयोः' इति विश्वः । अभ्यासकाले काञ्चनवेदिमन्तर्धाय दन्तिनौ योधयत इति प्रसिद्धम् । उपमा ॥ ६५ ॥

**॥ द्व्यक्षरः ॥**

**भूरिभिर्भरिभिर्भीरा भूभारै(१)रभिरेभिरे ॥**
**भेरीरेभिभिरभ्राऽऽभैरभीरुभिरिभैरिभाः ॥ ६६ ॥**

**भूरिभिरिति** ॥ इभा द्विपाः इभैः प्रतिद्विपैः अभिरेभिरे ढुढौकिरे सञ्जग्मिरे । अभिपूर्वस्य रभेः सङ्गतार्थत्वात् । किंलक्षणैर्द्विपैः भूरिभिर्बहुलैः, अपरं किंलक्षणैः इभैः भरिभिः कङ्कटपताकादियुक्तैः, अपरं किंलक्षणैः इभैः भूभारैः अत एव भूमेर्भारभूतैः, अपरं किंलक्षणैः इभैः भेरीरेभिभिः भेरीवत् दुन्दुभिवत् रेभन्ते शब्दायन्ते ते भेरीरेभिणः तैः, दुन्दुभिनिर्घोषैरित्यर्थः । अपरं किंलक्षणैरिभैः अत एव अभ्राऽऽभैः घनपटलसन्निभैः, अपरं किंक्षलणैरिभैः अभीरुभिः भीरुभ्यः कातरेभ्यः अन्ये अभीरवः तैः निर्भयैः, किंलक्षणाः इभाः भीराः भियं साध्वसं रान्ति ददति ते तथा, भयप्रदा इत्यर्थः । अनुप्रासो-ऽलङ्कारः । द्व्यक्षरः ॥ ६६ ॥

---

(१) ०भारिभिर्भीरैर्भूभारै० ।

भूरिभिरिति ॥ भूरिभिः भूयोभिः भारिभिः पताकास्तरणादिभारवद्भिः । मत्वर्थीय इनिप्रत्ययः । भियं रान्तीति भीरास्तैर्भीरैः भयदैः । रा दाने, आतोऽनुपसर्गे कः । भूभारैः महाकायत्वाद् भुवो भारायमाणैः, भेर्य इव रेभन्ते ध्वनन्तीति भेरीरेभिभिः । रेभृ शब्दे, ताच्छील्ये णिनिः । अभ्राभैर्मेचकैरिति चोपमाद्वयम् । अभीरुभिर्निर्भीकैरिभैर्गजैः इभाः प्रतिगजास्तादृशा एव अभिरेभिरे आभियुक्ताः । उपमानुप्रासयोः सङ्करः । द्व्यक्षरोऽनुप्रासः ॥ ६६ ॥

**निशिताऽऽसिलतालूनैस्तथा हस्तैर्न हस्तिनः ॥**
**युध्यमाना यथा दन्तैर्भग्नैरापुर्विहस्तताम् ॥ ६७ ॥**

**निशितेति** ॥ हस्तिनो गजाः युध्यमानाः युध्यन्तः सन्तः भग्नैः चूर्णितैः दन्तैः दशनैः यथा विहस्ततामापुः लेभिरे, तथा निशिताऽसिलतालूनैः तीक्ष्णखड्गवल्लीकृत्तैः हस्तैः करैः न । करैः किल कृत्तैः मुख्यतो विहस्तत्वं युक्तम् , न तु दन्तैः । तर्हि निर्दन्तत्वं युक्तं, कथं तद्धेवमिति चेत्–विहस्तशब्दस्य निष्प्रतिपत्त्यर्थत्वात् । विहस्ततां किङ्कर्तव्यमूढतां प्रापुरित्यर्थः । दन्तप्रहरणत्वात्तेषाम् ॥ ६७ ॥

निशितेति ॥ युध्यमानाः संप्रहरन्तः हस्ता येषां सन्तीति हस्तिनः । 'हस्ताज्जातौ' इति इनिप्रत्ययः । यथा भग्नैर्दन्तैः विषाणैः विहस्ततां हस्तहीनत्वमितिकर्तव्यतामूढत्वं चापुः । 'विहस्तव्याकुलौ समौ' इत्यमरः । तथा निशिताभिरसिलताभिर्लूनैश्छिन्नैर्हस्तैः शुण्डादण्डैर्विहस्ततां नापुः । हस्तेभ्योऽपि दन्तानां प्रहारसाधनत्वादिति भावः। अत्र हस्तस्यांऽच्छेदे वैहस्त्यं न हस्तच्छेदे इति विरोधः प्रातिपत्तिमूढतया समाहित इति विरोधाभासोऽलङ्कारः ॥ ६७ ॥

॥ असंयोगः ॥

**निपीडनादिव मिथो दानतोयमनारतम् ॥**
**वपुषामदयापातादिभानामभितोऽगलत् ॥ ६८ ॥**

**निपीडनादिवेति** ॥ इभानां दन्तिनां दानतोयं मदाम्बु अनारतं निरन्तरम् अभितः सर्वतः अगलत् सस्राव । कस्मात् वपुषां गात्राणाम् अदयापातात् निर्घृणपरिणामात् । अपरं कस्मात् , उत्प्रेक्ष्यते—मिथोऽन्योन्यं निपीडनादिव समाक्रोपनादिव । यत्किल वस्त्रादि बलात् पीड्यते, ततोऽम्बु गलति । संयोगाक्षरणामभावात् असंयोगाक्षरोऽयम् । हलोऽनन्तरा संयोगः ॥ ६८ ॥

निपीडनादिवेति ॥ इभानां वपुषाम् अदयापातान्निर्दयाऽभियोगाद्धेतोः मिथो निपीडनादिव वस्त्रादिनिपीडनादिवेत्युत्प्रेक्षा । अनारतमश्रान्तं दानतोयमभितोऽगलत् । वस्त्रवन्निर्दयापातेऽपि मदातिरेक इति गजानामुत्साहातिशयोक्तिः । अत्र संयोगाभावादसंयोगश्चित्रभेदः । हलोऽनन्तराः संयोगः ॥ ६८ ॥

**रणाङ्गणं सर इव प्लावितं मदवारिभिः ॥**
**गजः पृथुकराऽऽकृष्टशतपत्रमलोडयत् ॥ ६९ ॥**

**रणाङ्गणमिति** ॥ गजः द्विपः रणाङ्गणं समराङ्गणम् अलोडयत् विह्वलीचकार । किंलक्षणं रणाङ्गणं मदवारिभिः प्लावितं दानजलैः पूर्णम् , अपरं किंलक्षणं रणाङ्गणं पृथुकराकृष्टशतपत्रं पृथुना स्थूलेन करेण शुण्डादण्डेन आकृष्टानि आक्षिप्तानि शतमनेकानि पत्राणि धोरणानि यत्र तत्तथा, किमिव अलोडयत् सर इव तडागमिव । यथा गजः तोयप्लावितं स्थूलहस्ताकृष्टशतपत्रं सरो विलोडयति विलुलीकरोति । अत्र शतपत्रं पद्मम् ॥ ६९ ॥

रणाङ्गणमिति ॥ गजो मदवारिणा प्लावितमुक्षितं रणाङ्गणं सर इव पृथुना करेणाकृष्टानि शत-

पत्राणि अमितवाहनानि, अन्यत्र कुशेशयानि च यस्मिन्कर्मणि तत्तथा रणाङ्गणमलोडयदुपाक्षोभयत् । श्लेषविशेषणेयमुपमा ॥ ६९ ॥

**शरक्षते गजे भृङ्गैः सुविषादि(१)निषादिनि ॥**
**रुतव्याजेन रुदितं तत्राऽऽसीदतिसीदति ॥ ७० ॥**

शरक्षते इति ॥ तत्र सङ्ग्रामे गजे हस्तिनि शरक्षते सायकाहते सति भृङ्गैः अलिभिः रुतव्याजेन कूजितच्छद्मना रुदितम् आसीत् रोदनं बभूव, तैररोदि । किंलक्षणे गजे सुविषादिनिषादिनि सुष्ठु अतिशयेन विषादी खिन्नो निषादी यन्ता यस्य सः तथा तस्मिन्, यदि वा विषादी चासौ निषादी च सह तेन वर्तते । अपरं किंलक्षणे गजे यतः अतिसीदति शरक्षतत्वात् अतिशयेन प्राप्ताऽवसादे । अतो ज्ञायते आश्रयाभावात् भृङ्गा रुरुदुरिति भावः ॥ ७० ॥

शरक्षते इति ॥ गजे शरेण क्षते प्रहते अत एव विषादिना विषादवता निषादिना यन्त्रा सह वर्तते इति तस्मिन् विषादिनिषादिनि तत्र रणे अतिसीदति अतिसन्ने सति । मृते सतीत्यर्थः । सदेर्लटः शत्रादेशः । भृङ्गैः कर्तृभिः । 'न लोका—' इत्यादिना षष्ठीप्रतिषेधः । रुतव्याजेन रुतच्छलेन रुदितं रोदनमासीत् । स्वाश्रयनाशदुःखाद्रोदनं कृतमिवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । सा च रुतव्याजेनेत्यपह्नवपूर्वकत्वात्सापह्नवेति सर्वस्वकारः ॥ ७० ॥

**अन्तकस्य पृथौ तत्र शयनीय इवाहवे ॥**
**दशनव्यसनादीयुर्मत्कुणत्वं मतङ्गजाः ॥ ७१ ॥**

अन्तकस्येति ॥ तत्र तस्मिन्नाहवे सङ्ग्रामे मतङ्गजा गजेन्द्राः दशनव्यसनात् विषाणनाशात् मत्कुणत्वमीयुः प्रापुः । निर्दन्तो हि दन्ती मत्कुण उच्यते । दशनव्यसनग्रहणं मत्कुणरूपणार्थं च । किंलक्षणे आहवे पृथौ विस्तीर्णे, अपरं किंलक्षणे आहवे अन्तकस्य मृत्योः शयनीये पर्यङ्के इव भीषणत्वात् मृत्युशयनीयतुल्ये, अथ च मत्कुणत्वं क्षुद्रजन्तुविशेषस्वरूपत्वं प्रापुरित्युक्तयोक्तम् । शयनीये किल दशनव्यसनात् असृक्पानगार्ध्यात् मत्कुणाः क्षुद्रजन्तवः आयान्तीति ॥ ७१ ॥

अन्तकस्येति ॥ अन्तकस्य मृत्योः सम्बन्धिनि, शेतेऽस्मिन्निति शयनीये तल्प इव स्थित इत्यर्थः । 'कृत्यल्युटो बहुलम्' इत्याधिकरणेऽनीयर् । पृथौ विशाले तत्राहवे मतङ्गजाः दन्तव्यसनाद्विषाणभङ्गाद्धेतोः मत्कुणत्वमीयुः । मत्कुणा इव दृष्टा इत्यर्थः । सुतरक्तपायिनः खट्वाश्रयाः कीटविशेषा मत्कुणाः । कालेऽप्यजातदन्ते च शय्याजन्तौ च मत्कुणः, तत्सादृश्याददन्तेषु दन्तिषु तथात्वरूपकम् । अन्तकस्य शयनीय इवेत्युत्प्रेक्षासापेक्षमिति सङ्करः ॥ ७१ ॥

युग्मम्—

॥ अर्धभ्रमकः ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| अ | भी | क | म | ति | के | ने | द्धे |
| भी | ता | न | न्द | स्य | ना | श | ने ॥ |
| क | न | त्स | का | म | से | ना | के |
| म | न्द | का | म | क | म | स्य | ति ॥ ७२ ॥ |

---

( १ ) सविषादि ।

दधतोऽपि रणे भीममभीक्ष्णं भावमासुरम् ॥
हताः परैरभिमुखाः सुरभूयमुपाययुः ॥ ७३ ॥

**अभीकेत्यादि ॥ दधत इति ॥** तत्र रणे समरे परैः शत्रुभिः अभिमुखाः हताः संमुखाः हता वीराः सुरभूयमुपाययुः देवभावं प्रापुः । किंलक्षणास्ते भीमं घोरम् आसुरं भावं रौद्ररूपं दधतोऽपि अभीक्ष्णमतिशयेन धारयन्तोऽपि । **अभीकेति**॥अत्र अपिशब्दो विरोधे । ये किल आसुरं भावमसुरत्वं बिभ्रति, ते कथं देवत्वं प्राप्नुयुः । किंलक्षणे रणे अभीकमतिकेन निर्भयचित्तेन भटलोकेन इद्धे दीप्ते, अपरं किंलक्षणे रणे भीतानन्दस्य नाशने भीतानन्दस्य त्रस्तहर्षस्य नाशने निरासिनि । यं दृष्ट्वा कातरा मुह्यन्तीति । अपरं किंलक्षणे रणे कनत्सकामसेनाके कनन्ती देदीप्यमाना सकामा कान्तियुक्ता सप्रद्युम्ना सम्पन्नमनोरथा वा सेना चमूर्यत्र स कनत्सकामसेनः, ततः स्वार्थे कप्रत्ययः, तस्मिन्, अपरं किंलक्षणे रणे मन्दकामकं मन्दः स्वल्पः काम इच्छा अभिलाषो यस्य सः मन्दकामः, ततः स्वार्थे कप्रत्ययः, तं मन्दकामकं भीतचित्तम् असात्त्विकम् अस्यति क्षिपमाणे । अर्धभ्रमणात् अर्धभ्रमोऽयम् , न तु सर्वतोभद्रः । स हि सर्वतो भ्राम्यति । न्यासः(?) युग्मम् ॥ ७२–७३ ॥

अथ युग्मेनाह—

अभीकेति ॥ अभीका निर्भीका मतिर्यस्य तेनाऽभीकमतिकेन निर्भयचित्तेन । शैषिकः कप्प्रत्ययः । इद्धे दीप्ते, भीतानामानन्दस्य नाशने । नशेर्ण्यन्तात्कर्तरि ल्युट् । कनन्ती दीप्यमाना सकामा विजयित्वात्पूर्णकामा सेना यत्र तस्मिन्कनत्सकामसेनाके । पूर्ववत्कप् । मन्दकामकं मन्दोत्साहम् । पूर्ववदेव कप् । अस्यति निराकुर्वाणे रण इत्युत्तरेण सम्बन्धः । अत्र सर्वतोभद्रवत्सर्वपादभ्रमणाभावात्पादार्धानामेव भ्रमणादर्धभ्रमकम् । उद्धारस्तु सर्वतोभद्रवत्स्यादेव ॥ ७२ ॥

दधत इति ॥ रणे पूर्वोक्तप्रकारे अभीक्ष्णमत्यन्तं भीमं भयङ्करम् आसुरमसुरसम्बन्धिनं भावं पुरुषकारलक्षणम् । 'भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु' इति वैजयन्ती । असुरत्वं च दधतः दधाना अपि परैः शत्रुभिः अभिमुखा एव स्थिताः । हता वीरा इति शेषः । अत एव सुराणां भावं सुरभूयं सुरत्वं देवत्वमुपाययुः । 'स्वर्गं यान्त्यपराङ्मुखाः' इति स्मरणादिति भावः । 'भुवो भावे' इति क्यप् । अत्राऽसुरभावेऽपि सुरभूयमुपाययुरिति विरोधस्य भावशब्दस्यार्थान्तरत्वेन परिहाराद्विरोधाभासः । इति युग्मम् ॥

येनाङ्गमूहे व्रणवत्सरुचा परतोमरैः ॥
समत्वं स ययौ खड्गत्सरुचापरतोऽमरैः ॥ ७४ ॥

**येनाङ्गमिति ॥** येन वीरेण सरुचा कान्तिमता सता परतोमरैः शत्रुतोमरैः कृत्वा व्रणवत् क्षतियुक्तम् अङ्गमूहे वपुः धृतं, स वीरः अमरैः देवैः समत्वं साम्यं ययौ प्राप । अतिपौरुषात् कान्तिमत्त्वाच्च देवनिभ एवासौ बभावित्यर्थः । किंलक्षणः सः खड्गत्सरुचापरतः खड्गत्सरौ असिमुष्टौ चापे धनुषि च रतः सक्तः, बहुप्रहरण इत्यर्थः ।। ७४ ।।

येनाङ्गमिति ॥ रुचा सह वर्तते यस्तेन सरुचा तेजस्विना येन वीरेण परतोमरैः शत्रुशक्तिभिः व्रणवत् सव्रणमङ्गमूहे ऊढम् । वहेः कर्मणि लिट् सम्प्रसारणम् । खड्गत्सरौ खड्गमुष्टौ चापे च रतः खड्गत्सरुचापरतः । खड्गेषुप्रहारेण युद्धं कुर्वन्नित्यर्थः । 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यमरः । स वीरोऽमरैः समत्वं ययौ । पौरुषेणेति भावः । उपमायमकयोः संसृष्टिः ॥ ७४ ॥

निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम् ॥
पाणिनीयमिवाऽऽलोचि(१) धीरैस्तत्समराऽजिरम् ॥ ७५ ॥

निपातितेति ॥ तत्समराजिरं रणाङ्गणं धीरैः सुभटैरेव आलोचि द्रष्टुं शकितं, न कातरैः। किंलक्षणं समराऽजिरं यतः निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलं निपातिताः हताः सुहृदो मित्राणि स्वामिनः प्रभवः पितृव्याः जनकबन्धवः भ्रातरः सोदराः मातुलाः जननीभ्रातरः च यत्र तत्तथोक्तम् । उपलक्षणं चैतत्—पितृपितामहमातामहजामात्रादीनामपि निपातितत्वात् । अथ रौद्ररणदर्शनं धीराणामेवोपपद्यते, किमिव कैरालोचीत्याह—पाणिनीयमिव व्याकरणमिव धीरैः। पाणिनीयसंज्ञं हि व्याकरणं धीरा एवाऽऽलोचयन्ति पण्डिता एवाऽऽलोचयन्ति, न त्वन्ये सुकुमारमतयः। तत्रापि सुहृदादयो निपातिताः। साधुत्वाभ्युपगमनाय यत्स्वरूपेणोच्चारितास्तद्यथा—सुहृद्दुर्हृदौ मित्राऽमित्रयोः, स्वामिन्नैश्वर्ये, पितृव्यमातुलमातामहपितामहाः, नप्तृनेष्टृक्षत्तृहोतृजामातृपितृमातृदुहितृ इति । पाणिनिना प्रोक्तं पाणिनीयम् ॥ ७५ ॥

निपातितेति ॥ निपातिता वीरशय्यां गमिताः सुहृदादयो यत्र तत्तथोक्तम् । अभिमुखबन्धोरपि रणे वध्यत्वादिति भावः । अन्यत्र निपातिताः लक्षणाभावे शब्दसाधुत्वाय सूत्रकृता सूत्रस्वरूपेणोच्चारिताः सुहृदादिशब्दा यत्र तदित्यर्थः । अत एव तत्समराजिरं रणाङ्गणम् पाणिनिना प्रोक्तं पाणिनीयमष्टाध्यायीव्याकरणमिव । 'तेन प्रोक्तम्' इति छप्रत्ययः। धीरैर्धृष्टै रेवाऽऽलोकि दृष्टम् । उभयत्रापि धीरैर्दुरवगाहत्वादिति भावः । शोभनं हृदयं यस्य स सुहृत् । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति हृदयशब्दस्य हृद्भावो निपातितः । स्वमस्यास्तीति स्वामी ईश्वरः । 'स्वामिन्नैश्वर्ये' इति मत्वर्थीयनिपातः । 'पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः' इत्यमरः । 'पितृव्यमातुलमातामहपितामहाः' इति व्यड्डुलजन्तनिपाताः । बिभर्तीति भ्राता । नप्तृनेष्ट्रादिसूत्रादौणादिको निपातः ॥ ७५ ॥

अभावि सिन्ध्वा सन्ध्याऽभ्रसदृग्रुधिरतोयया ॥
हृते योद्धुं जनः पांसौ स दृग्रुधि रतो यया ॥ ७६ ॥

अभावीति ॥ सिन्ध्वा नद्या अभावि उदपादि, किंलक्षणया सिन्ध्वा सन्ध्याऽभ्रसदृग्रुधिरतोयया सन्ध्याऽभ्रसदृक् सन्ध्यावेलाघनसदृशं यत् रुधिरं रक्तं तदेव तोयं पानीयं यस्यां सा तथा तया रुधिरनद्येत्यर्थः। तथा यया सिन्ध्वा दृग्रुधि दृष्टिरोधके पांसौ रेणौ हृते अपाकृते सति स जनो भटलोकः भूयः योद्धुं प्रहर्तुं रतः प्रवृत्तः । दृशौ नेत्रे रुणद्धि आवृणोतीति दृग्रुत् तस्मिन् दृग्रुधि ।। ७६ ।।

अभावीति ॥ सन्ध्याभ्रसदृक् सन्ध्यामेघसदृशं रुधिरमेव तोयं यस्यास्तया सिन्ध्वा रक्तनद्या अभावि भूतम् । भावे लुङि चिण् । यया सिन्ध्वा दृशो रुणद्धीति दृग्रुधि दृष्टिरोधके । रुधेः क्विप् । पांसौ रजसि हृते सति स जनो वीरलोको योद्धुं रत उत्सुकः । अभूदिति शेषः । उपमायमकयोः संसृष्टिः ॥ ७६ ॥

विदलत्पुष्कराकीर्णाः पतच्छङ्खसमाकुलाः(२) ॥
तरत्पत्ररथा नद्यः प्रासर्पन् रक्तवारिजाः ॥ ७७ ॥

विदलदिति ॥ रक्तवारिजाः नद्यः प्रासर्पन् प्रसस्रुः, रक्तवारिणः रुधिरोदकाज्जाताः रक्तवारिजाः असृगुद्भवाः तरङ्गिण्यः प्रसस्रुः ऊहुः । किंलक्षणा नद्यः विदलत्पुष्कराकीर्णाः विदलद्भिः विशीर्णैः पुष्करैः करिशुण्डाग्रैः आकीर्णा व्याप्ताः, अपरं किंलक्षणाः रुधिरनद्यः

(१) ०लोकि। (२) कुलाकुलाः।

पतच्छङ्खसमाकुलाः पतद्भिः व्रजद्भिः शङ्खैः गजालङ्कारैः समाकुलाः, अपरं किंलक्षणाः नद्यः तरत्पत्ररथाः तरन्ति प्लवमानानि पत्राणि यानानि रथाः स्यन्दनाश्च यासु तास्तथा। गजरथग्रहणं प्राधान्यख्यापनार्थम्। तरन्तः पत्ररथा यास्विति वा योज्यम्। नद्यो हि रक्तवारिजाः लोहिताम्बुजा भवन्ति। रक्तानि वारिजानि यास्विति ताः। तथा विदलत्पुष्कराकीर्णाः विदलद्भिः विकसद्भिः पुष्करैः अन्यैः पद्मैः समाकीर्णाः स्युः, तथा पतद्भिः शङ्खैः प्राणिविशेषैः शम्बूकाभिधैः समाकुलाः सङ्कीर्णाः, तथा तरत्पत्ररथाः तरन्तो गच्छन्तः पत्ररथाः पक्षिणो यासु तास्तथा, पक्षिणो यासु प्रसर्पन्ति च ॥ ७७ ॥

विदलदिति ॥ विदलद्भिर्विदीर्यमाणैः पुष्करैः करिहस्ताग्रैः, अन्यत्र विकसद्भिः पद्मैराकीर्णा व्याप्ताः। पतद्भिः शङ्खकुलैः ललाटास्थिसङ्घैः कम्बुसङ्घैश्चाऽऽकुलाः, तरन्ति प्लवमानानि पत्राणि वाहनानि रथाश्च, अन्यत्र पत्ररथा अण्डजा यासु ताः रक्तवारिजा रुधिरतोयजन्याः, अन्यत्र रक्तानि वारिजानि यासु ताः नद्यः प्रासर्पन् प्रावहन्। अत्र नदीनां रक्तनदीनां च श्लेषः ॥ ७७ ॥

अस्रुग् जनोऽस्त्रक्षतिमानवमज्जवसादनम् ॥
रक्षःपिशाचं मुमुदे नवमज्जवसादनम् ॥ ७८ ॥

असृगिति ॥ जनो भटलोकः असृक् रुधिरम् अवमत् अवमीत्। किंलक्षणमसृक् जवसादनं जवरोधकं पिच्छलत्वात्, किंलक्षणो जनः अस्त्रक्षतिमान् आयुधप्रहारयुक्तः। तथा रक्षःपिशाचं मुमुदे मुदितं यातूनि पिशाचाश्च ननन्दुः। किंलक्षणं रक्षःपिशाचं नवमज्जवसाऽदनं नवा प्रत्यग्रप्रकटभूता या मज्जो धातुविशेषः वसा हृन्मेदश्च ते नवमज्जवसे तयोः ताभ्यां वा अदनं भोजनं यस्य तत् तथा। रक्षःपिशाचमिति रक्षांसि पिशाचाश्चेति समाहारद्वन्द्वः ॥ ७८ ॥

असृगिति ॥ अस्त्रक्षतिमानस्त्रप्रहारवान् जनो वीरजनोऽसृग् रक्तं अवसादनं जवस्य चेष्टावेगस्य सादनं यथा स्यात्तथा अवमत्। नवयोर्मज्जवसयोर्मेदोरसयोरदनं भक्षकम्। कर्तरि ल्युट्। रक्षांसि च पिशाचाश्च रक्षःपिशाचम्, समाहारे द्वन्द्वैकवद्भावः। मुमुदे जहर्ष। अत्र मोदस्य वमनवाक्यार्थहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गं, तच्च यमकेन संसृज्यते ॥ ७८ ॥

चित्रं चापैरपेतज्यैः स्फुरद्रक्तशतह्रदम् ॥
पयोदजालमिव तद्वैरा(१)शंसनमाबभौ ॥ ७९ ॥

चित्रमिति ॥ तद्वैराशंसनं रणम् आबभौ शुशुभे। किंलक्षणं वैराशंसनम् अपेतज्यैः छिन्नगुणैः चापैः कोदण्डैः चित्रं किर्मीरम्, अपरं किंलक्षणं वैराशंसनं स्फुरद्रक्तशतह्रदं स्फुरन्तः दीप्यन्तः रक्तस्य रुधिरस्य शतमनेके ह्रदा जलगर्ता यत्र तत्तथा, यदि वा स्फुरद्रक्ताः शतं ह्रदा यत्र तत्तथा। किमिव बभौ पयोदजालमिव घनपटलं यथा, तद्यथा आभाति। पयोदजालमपि किंलक्षणम् अपेतज्यैः गतमौर्वीकैः चापैः इन्द्रधनुर्भिश्चित्रम्, अपरं स्फुरद्रक्तशतह्रदम् ज्वलदारक्तविद्युत्कं च ॥ ७९ ॥

चित्रमिति ॥ अपेतज्यैरपगतमौर्वीकैः। 'मौर्वी ज्या शिञ्जिनी गुणः,' इत्यमरः। चापैश्चित्रं विचित्रं, स्फुरन्ति रक्तान्येव शतह्रदाः शम्पा यस्मिंस्तत्। 'शम्पा शतह्रदा ह्रादिनी' इत्यमरः। तत्प्रकृतं, वीरः आशंस्यते अत्रेति वीराशंसनं भयङ्करा युद्धभूमिः। 'सा वीराशंसनं युद्धभूमिर्याऽतिभयप्रदा' इत्यमरः। पयोदजालमिवाऽऽबभौ ॥ ७९ ॥

---

(१) तद्वीरा०।

बन्धौ विपन्नेऽनेकेन नरेणेह तदन्तिके ॥
अशोचि सैन्ये घण्टाभिर्न रेणे हतदन्तिके ॥ ८० ॥

बन्धाविति ॥ इहाऽत्र सैन्ये कटके अनेके बन्धौ, अनेकेषु बहुषु बन्धुष्वित्यर्थः। विपन्ने हते सति, अनेकेन नरेण, बहुभिर्नरैरित्यर्थः। तदन्तिके तस्य बन्धोः अन्तिके समीपे अशोचि शोचितं, रुदितमित्यर्थः। तथा इह सैन्ये घण्टाभिः घर्घराभिः न रेणे न क्वणितं, किंलक्षणे इह सैन्ये यतः हतदन्तिके हताः दन्तिनो यस्य तत्तथा तस्मिन् मारितमतङ्गजे ॥

बन्धाविति। इह सैन्ये बन्धौ विपन्ने मृते सति अनेकेन नरेण। अनेकैर्नरैरित्यर्थः। जातावेकवचनम्। तदन्तिके तस्य मृतस्य बन्धोरान्तिके अशोचि। किञ्च हता दन्तिनो यत्र तस्मिन् हतदन्तिके सैन्ये घण्टाभिर्न रेणे न दध्वने। रणतेर्भावे लिट्। अत्र हतदन्तिके इति विशेषणगत्या घण्टानामरणनहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं यमकेन संसृज्यते ॥ ८० ॥

कृत्तैः कीर्णा मही रेजे दन्तैर्गात्रैश्च दन्तिनाम् ॥
क्षुण्णलोकाऽसुभिर्मृत्योर्मुसलोलूखलैरिव ॥ ८१ ॥

कृत्तैरिति ॥ दन्तिनां गजानां दन्तैर्दशनैः गात्रैः वपुर्भिश्च कृत्तैश्छिन्नैः कीर्णा व्याप्ता मही रेजे भूमिः शुशुभे। किंलक्षणैर्दन्तैः गात्रैश्च, उत्प्रेक्ष्यते-मृत्योः अन्तकस्य मुसलोलूखलैरिव उलूखलमुसलैरिव, किंलक्षणैर्मुसलोलूखलैः क्षुण्णलोकाऽसुभिः क्षुण्णाः पिष्टा लोकानां जीवानाम् असवः प्राणा यैः येषु वा तानि तथा तैः। राजदन्तादिपरनिपातस्याऽनित्यत्वात् मुसलोलूखलैरिति प्रयोगः। यदि वा मुसलसहितानि उलूखलानीति, शाकपार्थिवादित्वात्समासः ॥ ८१ ॥

कृत्तैरिति ॥ कृत्तैः छिन्नैः दन्तिनां दन्तैर्गात्रैश्च कीर्णा मही रणभूमिः, क्षुण्णाः पिष्टाः लोकाऽसवो जनप्राणा यैस्तैः मृत्योर्मुसलोलूखलैः कीर्णेव रेजे। 'अयोऽग्रं मुसलोऽस्त्री स्यादुदूखलमुलूखलम्' इत्यमरः। अत्र मुसलोलूखलैरिति राजदन्तादिपाठेऽपि 'सर्वकूलाभ्र-'इत्यादिसूत्रादेव व्यभिचारज्ञापकात्परनिपातव्यत्ययः ॥

युद्धमित्थं विधूताऽन्यमानवानभियोगतः ॥
चैद्यः परान् पराजिग्ये मानवानभियो गतः ॥ ८२ ॥

युद्धमिति ॥ युद्धं गतः मानवान् मानी चैद्यः शिशुपालः परान् अभिघातीन् पराजिग्ये पराजितवान् व्यजेष्ट। कथम् अभियोगतः उद्यमात्, किंलक्षणान् परान् विधूताऽन्यमानवान् विधूताः कम्पिताः अन्ये इतरे मानवाः मनुष्या यैस्ते तथा तान्, अपरं किंलक्षणान् परान् अभियः निर्भयान् ॥ ८२ ॥

युद्धमिति ॥ मानवानभिमानवान् चैद्यो युद्धं गतः प्राप्तः सन् इत्थं विधूता अभिभूता अन्ये चैद्यातिरिक्ता मानवा यैस्तान् विधूताऽन्यमानवान् अभियः निर्भीकान् परानरीन् अभियोगतोऽभियोगादभ्यवरोधात् पराजिग्ये, जिगायेत्यर्थः। 'विपराभ्यां जेः' इत्यात्मनेपदम्। 'सन्लिटोर्जेः' इति कुत्वम् ॥ ८२ ॥

पञ्चभिः कुलकम्—

अथ वक्षोमणिच्छायाच्छुरिताऽऽपीतवाससा ॥
स्फुरदिन्द्रधनुर्भिन्नतडितेव तडित्वता ॥ ८३ ॥

॥ द्व्यक्षरः ॥

नीलेनाऽनालनलिननिलीनोल्लनाऽलिना ॥
ललनालालनेनाऽलं लीलाऽऽलानेन (१)लालिना ॥ ८४ ॥

---

(१) लोलेन।

अपूर्वयेव तत्कालसमागमसकामया ॥
दृष्टेन राजन् वपुषा कटाक्षैर्विजयश्रिया ॥ ८५ ॥

॥ द्व्यक्षरः ॥

विभावी विभवी भाऽऽभो विभाभावी विवो विभीः ॥
भवाऽभिभावी भावाऽवो भवाऽभावो भुवो विभुः ॥ ८६ ॥
उपैतुकामैस्तत्पारं निश्चितैर्योगिभिः परैः ॥
देहत्यागकृतोद्योगैरदृश्यत परः पुमान् ॥ ८७ ॥

**अथेत्यादि ॥ अदृश्यतेति ॥** अथाऽनन्तरं परः पुमान् भगवान् श्रीकृष्णः परैः विपक्षैः शत्रुभिः अदृश्यत आलुलोके दृष्टः । किंलक्षणः परः पुमान् वपुषा देहेन राजन् भासमानः शोभमानः । **अथेति ॥** किंलक्षणेन वपुषा वक्षोमणिच्छायाच्छुरिता-ऽऽपीतवाससा वक्षोमणेः कौस्तुभस्य मणेः छायया कान्त्या छुरिते भिन्ने कर्बुरिते आपीते पिशङ्गे वाससी अंशुके यस्य तत्तथा तेन । अपरं किंलक्षणेन वपुषा, अतश्चोत्प्रेक्ष्यते—स्फुरदिन्द्रधनुर्भिन्नतडिता तडित्वतेव स्फुरता शोभमानेन इन्द्रधनुषा देवेन्द्रकार्मुकेण भिन्ना युक्ता तडित् विद्युत् यस्य सः तथा तेन तादृशेन तडित्वता मेघेनेव, लसमानवासश्चापपरिभूषितविद्युज्जलदतुल्येनेत्यर्थः । **नीलेनेति ॥** अपरं किंलक्षणेन वपुषा नीलेन श्यामलेन, अपरं किंलक्षणेन वपुषा अनालनलिननिलीनोल्लुलनाऽलिना अनालमसृणालं यन्नलिनं कमलं तत्र निलीनाः श्लिष्टाः उल्लुलनाः चटुलाः उल्लासिनोऽलयो भ्रमरा यस्य तत्तथा तेन । आनालेत्यपि केचित् कवयः विद्यमाननालं यन्नलिनं नाभीपुण्डरीकमाहुः । अपरं किंलक्षणेन वपुषा ललनालालनेन ललनानां सीमन्तिनीनां लालनं क्रीडनं येन तत्तथा तेन, सुन्दरीणामभीप्सितेनेत्यर्थः । अपरं किंलक्षणेन वपुषा अलंलीलाऽऽलानेन अलमत्यर्थं लीलानां विलासानाम् आलानं बन्धनस्तम्भः तेन । एतेन सर्वा एव लीलाः तत्र स्थिता इत्यर्थः । अपरं किंलक्षणेन वपुषा लालिना साधु अवश्यं वा ललयति परश्रियमाप्तुमिच्छतीति लालि तेन । **अपूर्वयेवेति ॥** अपरं किंलक्षणेन वपुषा विजयश्रिया जयलक्ष्म्या कटाक्षैः अपाङ्गेक्षितैः दृष्टेन विलोकितेन, किंलक्षणया विजयश्रिया तत्कालसमागमसकामया तत्कालं तत्क्षणे समागमः मिलनं तत्र सकामया साभिलाषया । शिशुपालं हित्वा श्रीभगवन्तं जिघृक्षन्त्येत्यर्थः । अपरं किंलक्षणया विजयश्रिया, उत्प्रेक्ष्यते—अपूर्वयेव अभिनवयेव । या किल नवोढा कान्तसमागमोत्सुका भवति, सा कान्तं कटाक्षैर्निरीक्षते । भगवतस्तु लक्ष्मीर्नित्यं सन्निहिता समीपवर्तिनीत्युत्प्रेक्षा । **विभावीति ॥** अपरं किंलक्षणो भगवान् विभावी विभवतीति विभावी विभुः सर्वव्यापी, अपरं किंलक्षणो भगवान् विभवी विभव ऐश्वर्यं विद्यते यस्य स तथा, ईश्वर-इत्यर्थः, अपरं किंलक्षणो हरिः भाऽऽभः भासा कान्त्या ऋक्षनिभः, अपरं किंलक्षणो हरिः विभाभावी विभां दीप्तिं भावयते प्राप्नोतीति विभाभावी कान्तिधरः, अपरं किंलक्षणो हरिः विवः विना पक्षिणा गरुडेन वाति गच्छतीति विवः गरुडस्वामी, अपरं किंलक्षणो हरिः विभीः विगता भीः साध्वसं यस्मात् सः तथा निर्भयः, अपरं किंलक्षणो हरिः भवाऽभिभावी भवं संसारं भक्तानाम् अभिभवतीति क्षपयति सः तथा मोक्षप्रदः,

अपरं किंलक्षणो हरिः भावाऽवः भावान् पदार्थान् अवति रक्षतीति भावाऽवः जगत्पालकः, अपरं किंलक्षणो हरिः भवाऽभावः भवस्य भगवतः श्रीमहादेवस्य भट्टारकस्येव वा अभावः अनुत्पत्तिर्यस्य सः भवाऽभावः, अजन्मा इत्यर्थः। अपरं किंलक्षणो हरिः भुवः विभुः भूमेः स्वामी, उद्धरणात्। एवंविधो भगवान् परैःशत्रुभिरदृश्यत। उपैतुकामैरिति॥ किंलक्षणैः परैः तत्पारमुपैतुकामैः तस्य देवस्य पारमुपैतुकामैः अन्तं प्रेप्सुभिः, अन्तं जिगमिषुभिरित्यर्थः। अपरं किंलक्षणैः परैः निश्चितैः युद्धाय कृतनिश्चयैः, अपरं किंलक्षणैः परैः योगिभिः योगः सन्नहनोपायः विद्यते येषां ते योगिनः तैः सन्नद्धैः। 'योगः सन्नहनोपायध्याननिश्चययुक्तिषु' इत्यमरः। अपरं किंलक्षणैः परैः देहत्यागकृतोद्योगैः देहत्यागे देहत्यजने कृतः विहितः उद्योगः उद्यमो येषां ते तथा तैः शरीरत्यागाय विहितयत्नैः। मरणमप्यङ्गीकृत्य तज्जिगीषया युयुत्सुभिरित्यर्थः। योऽपि परः सर्वोत्कृष्टः आत्माख्यः, स परैः उत्कृष्टैः योगिभिः समाधिवद्भिः जैगीषव्यप्रभृतिभिरेव दृश्यते। किंलक्षणैः योगिभिः तस्य भगवतः पारमवसानम् आप्तुकामैः। तत्सायुज्यं यियासुभिरित्यर्थः। अपरं किंलक्षणैर्योगिभिः निश्चितैः निःसन्देहैः, विदितवेद्यत्वात्। पञ्चभिः कुलकम्॥ ८३—८७॥

अथ भगवदाभियोगं पञ्चभिः कुलकेनाह—

**अथेति**॥ अथ चैद्यजयाऽनन्तरं वपुषा राजन् परः पुमानदृश्यतेति पञ्चमेन सम्बन्धः। तद्वपुस्तावत् त्रिभिर्विशिनष्टि। वक्षोमणेः कौस्तुभस्य छायया छुरितानि श्यामान्यापीतवासांसि पीताम्बराणि यस्य तेन, अत एव स्फुरता इन्द्रधनुषा भिन्नाः सङ्गतास्तडितो यस्य तेन ताडित्वता मेघेनेव स्थितेनेत्यर्थः॥ ८३॥

**नीलेनेति**॥ पुनः कीदृशेन वपुषा। नीलेन श्यामलेन तथाऽनालं नालरहितं यन्नलिनं तत्र निलीना आसन्नाः उल्लसन्तीत्युल्ललनाः चलाश्चाऽलयो यस्य तेन अनालनलिननिलीनोल्ललनाऽलिना, मुखसौरभलोभपरिभ्रमद्भ्रमरेणेत्यर्थः। ललनानां विलासिनीनां स्त्रीणां लालनेन उपलालनेन। वशीकरणेनेत्यर्थः। अलमत्यन्तं लीलालोलेन क्रीडालोलुपेन। 'लीलालानेन' इति पाठे लीलानां विलासानामालानेन। आलयेनेत्यर्थः। ललयति भक्तानिति लालिना। भक्तानुकम्पिनेत्यर्थः। द्व्यक्षरानुप्रासोऽलङ्कारः॥ ८४॥

**अपूर्वयेवेति**॥ किञ्च अपूर्वयेव अपूर्वसमागमयेव तत्कालसमागमे सकामया साभिलाषया विजयश्रिया। चैद्यविरक्तयेति भावः। कटाक्षैरपाङ्गदृष्टेनाऽऽलोकितेन वपुषा राजन् दीप्यमानः। अत्र प्रस्तुतजयश्रीविशेषणसाम्यादप्रस्तुतानुरक्तमानिनीप्रतीतेः समासोक्तिः, प्रतीयमानाभेदाध्यवसायादपाङ्गदर्शनोत्प्रेक्षा च॥

**विभावीति**॥ विभावोऽस्यास्तीति विभावी प्रभावसम्पन्नः, विभवोऽस्यास्तीति विभवी ऐश्वर्यवान् भस्याभेवाभा यस्य स भाभः। नक्षत्रवदुज्ज्वल इत्यर्थः। विभां विशिष्टाभां भावयति सम्पादयति विश्वस्येति विभाभावी। 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः। भुवो ण्यन्ताण्णिनिः। विना पक्षिणा वाति गच्छतीति विवः। पक्षिवाहन इत्यर्थः। आतोऽनुपसर्गे कः। विभीर्निर्भीकः। भवं संसारमभिभवतीति भवाभिभावी। भक्तानां संसारनिवर्तक इत्यर्थः। भुवो णिनिः। भावाञ्जन्तूनवतीति भावाऽवः विश्वत्राता। 'भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु' इति वैजयन्ती। अवतेः कर्मण्यण्। भवाऽभावोऽस्यास्तीति, संसारदुःखैरस्पृष्ट इत्यर्थः। अर्शआदित्वादच्प्रत्ययः। भुवो भूमेर्विभुर्भर्ता॥ ८६॥

**उपैतुकामैरिति**॥ एवंभूतः परः पुमान् परमपुरुषो हरिः, तत्पारं तस्य हरेः पारमन्तमुपैतुकामैस्तं जिगीषुभिः। अन्यत्र दिदृक्षुभिरित्यर्थः। 'तुं काममनसोरपि' इति मकारलोपः। निश्चितैः। योद्धुं कृतनिश्चयैरित्यर्थः। अन्यत्र निश्चिततत्त्वैः। सकर्मकादप्यविवक्षिते कर्मणि क्तः। यद्वा पीता गावः, विभक्ता भ्रातर इत्यादिवदूहयितव्यम्। स्फुटीकृतं चैतद् घण्टापथे—'स वर्णिलिङ्गी विदितः' इत्यत्र। देहत्यागकृतोद्योगैर्मरणोद्यतैः। अन्यत्र मुमुक्षुभिरित्यर्थः। योगिभिः सन्नाहवद्भिरुपायवद्भिर्वा, अन्यत्र ध्यानवद्भिः। 'योगः

सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः । परैः शत्रुभिः, अन्यत्र परमयोगिभिः अदृश्यत । परेषामग्रेऽतिष्ठदित्यर्थः । अन्यत्र साक्षात्कृतः । 'तमेव विदित्वाऽतिमृत्युमेति' इति श्रुतेः । अर्थान्तरप्रतीतिर्ध्वनिरेव न श्लेषः, अभिधायाः प्रकृतार्थे नियन्त्रणात् ॥ ८७ ॥

युग्मम्—

॥ गतप्रत्यागतम् ॥

तं श्रिया घनयाऽनस्तरुचा सारतया तया ॥
यातया तरसा चारुस्तनयाऽनघयाऽऽश्रितम्(१) ॥ ८८ ॥
विद्विषोऽद्विषुरुद्वीक्ष्य तथाऽप्यासन्निरेनसः ॥
अरुच्यमपि रोगघ्नं निसर्गादेव भेषजम् ॥ ८९ ॥

तमिति ॥ तं देवं श्रीकृष्णम् अनघया श्रिया आश्रितं दृष्ट्वा विद्विषो द्विषन्तः तथापि एवमपि निरेनसः विरेपसः देवदर्शनादेव निष्पापाः आसन् अभूवन् । यस्मात् भेषजमौषधं पारदादिकम् अरुच्यमपि अप्रियमपि निसर्गादेव प्रकृत्यैव रोगघ्नं व्याधिहरम् । ओषति दहति रोगान् इति औषधम् । तथा औषधं विमुच्य नरस्य भैषज्यं रोगं न हन्ति । यतो यद्यपि ते देवा ये ईर्ष्यन्ते, तथापि पुण्यदर्शनत्वात् भगवांस्तेषामपि पापं जहारेत्यर्थः । किंलक्षणं तं श्रिया पद्मया तरसा बलात् आश्रितमाश्लिष्टं, किंलक्षणया श्रिया घनया अतनीयस्या, अपरं किंलक्षणया श्रिया अनस्तरुचा अत्यक्तकान्त्या, अपरं किंलक्षणया श्रिया तया सर्वप्रसिद्धया सारतया भगवदुत्कर्षेण यातया देवसमीपं प्राप्तया, अपरं किंलक्षणया श्रिया चारुस्तनया श्लिष्टपयोधरया । 'स्वाङ्गाच्चोपसर्जना'दिति ङीप् विकल्पः । प्रतिलोमानुलोमोऽयम् । द्विषन्तीति द्विषः, क्विप् । अद्विषुरिति झेर्जुस् । रोगं हन्तीति रोगघ्नम्, 'अमनुष्यकर्तृके चे'ति टः । युग्मम् ॥ ८८—८९ ॥

युग्मेनाह—

तमिति ॥ घनया आनन्दसान्द्रया, अनस्तरुचा अक्षीणकान्त्या, सारतया सारत्वेन सर्वोत्कर्षगुणेन यातया व्याप्तया, चारुस्तनया रम्यकुचया । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विकल्पादनीकारः । अनघया निर्दोषया तया प्रसिद्धया श्रिया रमया तरसा त्वरया आश्रितमालिङ्गितं तं हरिमुद्वीक्ष्येत्युत्तरेण सम्बन्धः । अत्रापि प्रातिलोम्येनाऽर्धावृत्तेरर्धप्रातिलोमयमकम् । एतल्लक्षणं तु प्रागेवोक्तम् ॥ ८८ ॥

विद्विष इति ॥ तं पूर्वोक्तं हरिमुद्वीक्ष्य विद्विषः शत्रवोऽद्विषुः द्विषन्ति स्म । लङि 'द्विषश्च' इति विकल्पेन झेर्जुसादेशः । तथापि द्विषन्तोऽपि निरेनसो निष्पापा आसन् । द्वेषवीक्षणस्याप्येनोनिवर्तकत्वे दृष्टान्तेनाह—अरुच्यमिति । रोचत इति रुच्यम् । 'राजसूय—' इत्यादिना क्यबन्तो निपातितः । अरुच्यमानमपि भेषजमौषधम् । 'भेषजौषधभैषज्यानि' इत्यमरः । निसर्गात्स्वभावशक्तेरेव रोगं हन्तीति रोगघ्नमारोग्यकारि 'हरिर्हरति पापानि' इति वचनादिति भावः । 'अमनुष्यकर्तृके च' इति टप्रत्ययः ॥ ८९ ॥

विदिते (२)दिवि केऽनीके तं यातं निजिताऽऽजिनि ॥
विगदं गवि रोद्धारो योद्धा यो नतिमेति न ॥ ९० ॥

॥ प्रतिलोमेनाऽयमेवार्थः ॥

विदितमिति ॥ तं देवं यातमुपागतं के पुरुषाः गवि भुवि रोद्धारः रोधकाः निवा-

(१) किङ्किणिखिणिखिणिरणितैरङ्गणपरिरम्भणे सदाऽटन्तम् ।
कुङ्कुमनिभपदयुगलं कङ्कणकरशोभितं हरिं वन्दे ॥ १ ॥
'तं श्रिये'ति पद्यात्पूर्वम् अस्माकमादर्शपुस्तके श्लोकोऽयं समुपलब्धः । (२) विदितं ।

रकाः । न केचिदरिषु सन्ति, ये तमभ्यायान्तं निवारयन्ति । किंलक्षणो यो भगवान् दिवि अनीके दिव्यसैन्ये योद्धा युध्यति, न तु नतिमेति नमति । अत एव यो भगवान् देवसेनास्वपि अभीतः, स कथं भूमिष्ठैर्युध्यमानो युध्यते । किंलक्षणेऽनीके विदिते सर्वत्र प्रसिद्धे, अत एव अपरं किंलक्षणे अनीके निर्जिताऽऽजिनि निर्जिता विजिता आजयः समितयो येन तत् निर्जिताऽजि तस्मिन् पराभूताऽन्यसैन्ये, किंलक्षणं देवं विगदं विगतो गदो रोगो यस्मात् सः तथा तम् । युध्यमानमपि निष्पीडमित्यर्थः । विविधा वा गदा आयुधविशेषा यस्य सः तथा तं, विशिष्टा वा गदा कौमोदकी यस्य सः विगदः तम् । प्रतिलोमेनाऽप्यस्य पठ्यमानस्य एष एवार्थः ॥ ९० ॥

विदितमिति ॥ किञ्च योद्धा वीरो यो हरिः नतिं परेषां नम्रतां नैति नोपैति । नितरां जिता आजयो येन तस्मिन्निर्जिताजिनि अनेकाऽऽजिविजयिन्यपि अनीके सैन्ये । 'वरूथिनी बलं सैन्यं चक्रं चाऽनीकमास्त्रियाम्' इत्यमरः । यातं योद्धुमागतं, दिवि स्वर्गेऽपि विदितं प्रख्यातं विगदं निरामयं तं हरिं गवि भुवि रोद्धारो जेतारः के । न केऽपीत्यर्थः । प्रातिलोम्येऽप्येत एव पदार्थवाक्यार्थाः । एतदपि श्लोकप्रातिलोमयमकमेव । पदपदार्थादिसंवादस्तु वैचित्रीविशेषः । लक्षणं तु 'निध्वन'दित्यत्रैवोक्तमनुसन्धेयम् ॥ ९० ॥

नियोक्ष्यमाणेन पुनः(१) कर्मण्यतिगरीयसि ॥
आरोप्यमाणोरुगुणं भर्त्रा कार्मुकमानमत् ॥ ९१ ॥

नियोक्ष्यमाणेनेति ॥ कार्मुकं धनुः अनमत् कुटिलमभवत् । किंलक्षणं कार्मुकं यतः भर्त्रा देवेन श्रीकृष्णेन आरोप्यमाणोरुगुणम् आरोप्यमाणः उत्क्षेप्यमाणः उरुर्दीर्घो गुणो जीवा यस्य तत्तथा, किंलक्षणेन भर्त्रा अतिगरीयसि कर्मणि अतिदुष्करे शत्रुवधाख्ये व्यापारे पुनः भूयोऽपि नियोक्ष्यमाणेन व्यापारयिष्यता । यः किलाऽतिगुरुणि व्यापारे भर्त्रा नियोक्तुमिष्यते, तस्यासौ गुणानारोपयति । स चाधिकार्थवचनवशीकृतहृदयो नमति ॥ ९१ ॥

नियुज्यमानेनेति ॥ पुरोऽग्रे अतिगरीयसि कर्मणि रणकर्मणि, अन्यत्र दुष्करे क्वाचित्कृत्यवस्तुनि नियुज्यमानेन व्यापारयिष्यता आज्ञापयिष्यता च भर्त्रा स्वामिना आरोप्यमाणोऽधिक्रियमाण उरुर्महान् गुणो ज्या यस्मिंस्तत्, अन्यत्र वर्ण्यमानसौन्दर्यादिकम् । कर्मणे प्रभवतीति कार्मुकं धनुः । कर्मण उकञ् । आनमत् गुणाकर्षणादाकुञ्चितकोटिकमभूत् । अन्यत्र प्रणत इत्यर्थः । अत्र प्रकृतकार्मुकविशेषणसाम्यादप्रस्तुतनियोज्यपुरुषप्रतीतेः समासोक्तिः ॥ ९१ ॥

तत्र बाणाः सुपरुषः समधीयन्त चारवः ॥
द्विषामभूत् सुपरुषस्तस्याकृष्टस्य चाऽऽरवः ॥ ९२ ॥

तत्रेति ॥ तत्र कार्मुके सुपरुषः चारुपर्वाणो बाणाः शराः समधीयन्त अयोज्यन्त सन्धिताः, किंलक्षणाः बाणाः चारवः रम्याः । च पुनः आकृष्टस्य आकृष्यमाणस्य तस्य कार्मुकस्य आरवः टङ्कारः द्विषां शत्रूणां सुपरुषः सुष्ठुपरुषः अतितरां कठिनोऽभूत् । कर्णकटुरभवदित्यर्थः, तत्कार्मुकध्वनिरेव शत्रूनभीषयतेत्यर्थः ॥ ९२ ॥

तत्रेति ॥ तत्र कार्मुके शोभनानि परूंषि येषां ते सुपरुषः सुपर्वाणः । अत एव चारवोऽतिरम्या बाणाः समधीयन्त निहिताः । आकृष्टस्य तस्य कार्मुकस्याऽऽरवश्च द्विषां सुष्ठु परुषः सुपरुषोऽतिकर्कशोऽभूत् । यमकविशेषालङ्कारः ॥ ९२ ॥

---

(१) नियुज्यमानेन पुरः ।

**पश्चात्कृतानामप्यस्य नराणामिव पत्रिणाम् ॥**
**यो यो गुणेन संयुक्तः स स कर्णान्तमागमत्(१) ॥ ९३ ॥**

**पश्चात्कृतानामिति ॥** पश्चात्कृतानामपि पृष्ठतः स्थापितानामपि पत्रिणां शराणां मध्ये यो यः पत्री शरः गुणेन संयुक्तः शिञ्जिन्या योगं गतः, स स पत्री अस्य भगवतः श्रीकृष्णस्य कर्णान्तम् आगमत् उपश्रोत्रं प्राप्तः, आकर्षणवशादिति भावः। केषामिव नराणामिव पुरुषाणामिव । यथा पश्चात्कृतानां तिरस्कृतानामपि नराणां मध्यात् यो यो नरः गुणेन शौर्यसौन्दर्यादिना संयुक्तः, स स कर्णान्तमागच्छति ढौकते ॥ ९३ ॥

पश्चात्कृतानामिति ॥ नराणां पुंसामिव पश्चात्कृतानां निषङ्गसङ्गितया पृष्ठस्थापितानामपि, अन्यत्रावधीरितानामपि पत्रिणामिषूणां मध्य इत्यर्थः, यो यः पत्री नरश्च गुणेन ज्यया दाक्षिण्यादिना च संयुक्तः सम्बद्धः, स स पत्री नरश्चाऽस्य हरेः कर्णान्तं कर्णसमीपमाययौ आगतः । गुणयोगादाकर्णमाकृष्टः, अन्यत्राऽन्तिकमागत इत्यर्थः। श्लेषसङ्कीर्णोपमा ॥ ९३ ॥

**॥ द्व्यक्षरः ॥**

**प्रापे रूपी पुराऽरेपाः परिपूरी परः परैः ॥**
**रोपैरपारैरुपरि पुपूरेऽपि पुरोऽपरैः ॥ ९४ ॥**

**प्रापे इति ॥** स भगवान् श्रीकृष्णः परैः विपक्षैः शत्रुभिः प्रापे आसेदे । किंलक्षणः पुरा रूपी पुरा पूर्वं रूपाणि आकृतयो विद्यन्ते यस्य सः तथा वराहनृसिंहवामनादिबहुरूपवान्, अपरं किंलक्षणः सः अरेपाः अव्यसनः, अपरं किंलक्षणो हरिः परिपूरी परि समन्ताद्भावेन पूरयति व्याप्नोतीति तथा सर्वव्यापी, अपरं किंलक्षणो हरिः परः उत्कृष्टः, किञ्च परैः रिपुभिः पुरोऽग्रे उपरि च अपारैः असङ्ख्यैः रोपैः पृषत्कैः पुपूरेऽपि प्रापूर्यत । कैश्चित् प्राप्तः कैश्चिच्च शरैश्छादितः इत्यपि शब्दार्थः । द्व्यक्षरः ॥ ९४ ॥

प्रापे इति ॥ पुरा पूर्वं रूपी मत्स्यकूर्माद्यनेकरूपवान् अरेपाः निष्पापः, परिपूरयति कामैर्भक्तानिति परिपूरी भक्तवरदः । पूरयतेर्णिनिः । परः परमपुरुषो हरिः परैः शत्रुभिः प्रापे प्राप्तः । अवरुद्ध इत्यर्थः । अपरैरन्यैः शत्रुभिः कर्तृभिः अपारैरनन्तैः रोपैरिषुभिः । 'पत्री रोप इषुर्द्वयोः' इत्यमरः । पुरोऽग्रे उपरि च पुपूरे पूरितः । पृणातेः कर्मणि लिट्(२) । द्व्यक्षरानुप्रासोऽलङ्कारः ॥ ९४ ॥

**दिङ्मुखव्यापिनस्तीक्ष्णान् ह्रादिनो मर्मभेदिनः ॥**
**चिक्षेपैकक्षणेनैव सायकानहितांश्च सः ॥ ९५ ॥**

**दिङ्मुखेति॥** स भगवान् श्रीकृष्णः एकक्षणेनैव युगपदेव सायकान् शरान् अहितान् अरींश्च चिक्षेप प्रैरयत् । किंलक्षणान् सायकान् दिङ्मुखव्यापिनः आशावदनप्रसृतान्, पुनः किंभूतान् सायकान् तीक्ष्णान् निशितान्, अपरं किंलक्षणान् ह्रादिनः कृतपक्षध्वनीन्, अपरं किंलक्षणान् सायकान् मर्मभेदिनः अरुन्तुदांश्च । द्विषोऽपि आशाव्यापिनः तीक्ष्णान् अन्तिगान् (?), अपरं किंलक्षणान् अरीन् ह्रादिनः सकलकलान्, अपरं किंलक्षणान् मर्मभेदिनः परुषवचनान् ॥ ९६ ॥

दिङ्मुखेति ॥ स हरिर्दिङ्मुखव्यापिनो दिगन्तव्यापकान् अतितीक्ष्णान्निशितान् क्रूरांश्च । ह्रादन्ते इति ह्रादिनः पक्षनादवतः, सिंहनादवतश्च । मर्मभेदिनो मर्मस्थानविदारकान् सायकानिषून्, अहितानरींश्च

---

( १ ) ०माययौ ।

( २ ) 'अस्माद्धातोर्लिटयोशि 'ऋच्छत्यृताम्' इति गुणस्य दुर्वारत्वात् 'पुपूरे' इति रूपाऽसिद्धिः । तस्मात् 'पूरी आप्यायने' इति धातुर्बोध्यः, निर्णयसागरस्थपुस्तकटिप्पणीयम् ।

एकक्षणेनैव विक्षेप निरास । अत्र सायकानामाहितानां च प्रकृतानामेव तुल्यधर्मयोगादौपम्योपगमात्तुल्य-योगिताभेदः ॥ ९५ ॥

॥ गूढचतुर्थः ॥

शरवर्षी महानादः स्फुरत्कार्मुककेतनः ॥
नीलच्छविरसौ रेजे केशवच्छलनीरदः ॥ ९६ ॥

शरवर्षीति ॥ असौ केशवच्छलनीरदः रेजे केशवच्छलेन हरिच्छद्मना नीरदो मेघः अद्युतत् । किंलक्षणः केशवच्छलनीरदः शरवर्षी इषुक्षेपी, अपरं किंलक्षणः महानादः सिंहध्वनिमान्, अपरं किंलक्षणः स्फुरत्कार्मुककेतनः स्फुरन्ती द्योतमाने कार्मुककेतने चाप-चिह्ने यस्य सः तथा, अपरं किंलक्षणः नीलच्छविः श्यामकान्तिः । जलदोऽपि शरं नीरं वर्षतीति शरवर्षी महानादो महागर्जितः, तथा स्फुरत्कार्मुककेतनः स्फुरत् द्योतत् कार्मुक-मिन्द्रधनुरेव केतनं लाञ्छनं यस्य सः तथा, तथा कृष्णवर्णश्च । उत्प्रेक्षाश्लेषसङ्करोऽलङ्कारः । अत्र चतुर्थपादाक्षराणि पादत्रितये एवाऽन्तर्भवन्तीति गुढचतुर्थोऽयं श्लोकः ॥ ९६ ॥

शरवर्षीति ॥ शरवर्षी बाणवर्षी नीरवर्षी च । 'शरं नीरे शरो बाणे' इति विश्वः । महानादः सिंह-नादो गर्जितं च यस्य स महानादः, स्फुरन्ती कार्मुककेतने धनुर्ध्वजौ यस्य सः । अन्यत्रेन्द्रचापचिह्न-इत्यर्थः । नीलच्छविः श्यामकान्तिः, अस्य केशवस्य छलं कपटं यस्य सः नीरदः केशवच्छलनीरदो हरिर्मेघोऽसौ रेजे । रणरङ्गे सर्वोत्कर्षेण दिदीपे इत्यर्थः । अत्र छलशब्देन हरित्वापह्नवेन मेघत्वारोपणाच्छला-दिशब्दैरसत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः । त्रिपाद्यन्तर्गतचतुर्थपादाक्षरत्वाद् गूढचतुर्थाख्यश्चित्रविशेषः शब्दालङ्कारश्चेति सङ्करः ॥ ९६ ॥

न केवलं जनैस्तस्य लघुसन्धायिनो धनुः ॥
मण्डलीकृतमेकान्ताद्बलमैक्षि द्विषामपि ॥ ९७ ॥

नेति ॥ लघुसन्धायिनः कृतहस्तस्य तस्य देवस्य श्रीकृष्णस्य जनैर्लोकैः धनुः का-र्मुकं केवलं मण्डलीकृतम् आकर्षवशात् वक्रीभूतं न ऐक्षि न ददृशे । अथ च एकान्तात् निश्चयात् द्विषामपि बलं शत्रूणामपि सैन्यं धनुश्च तेनाकृष्टम् । शत्रुसैन्यमपि भयात्पुञ्जीभूत-मेवाऽऽस्तेत्यर्थः । लघु शीघ्रं सन्दधाति इषुभिः संयोजयतीति लघुसन्धायी तस्य ॥ ९७ ॥

नेति ॥ लघु शीघ्रं सन्धत्ते यस्तस्य लघुसन्धायिनस्तस्य हरेः धनुरेव केवलं एकान्तात् मण्डलीकृतं शीघ्राकर्षान्नियमेन वलयीकृतं जनैर्नैक्षि । कर्मणि लुङ् । किन्तु द्विषां बलमपि मण्डलीकृतं त्रासादेकत्र पुञ्जी-कृतमैक्षि । अत्र धनुर्बलयोः प्रकृतयोरेव तुल्यधर्मयोगात्केवलप्रकृतास्पदा तुल्ययोगिता ॥ ९७ ॥

युग्मम्—

॥ द्व्यक्षरः ॥

लोकाऽऽलोकी कलोऽकलककलिलोऽलिकुलाऽलकः ॥
कालोऽकलोऽकलिः काले कोलकेलिकिलः किल ॥ ९८ ॥
अक्षितारासु विव्याध विद्विषः(१) स तनुत्रिणः ॥
दानेषु स्थूललक्षत्वं(२) न हि तस्य शरासने ॥ ९९ ॥

लोकालोकीत्यादि ॥ अक्षितारास्विति ॥ स भगवान् श्रीकृष्णः तनुत्रिणः कवचितान् विद्विषः अरीन् अक्षितारासु विव्याध नयनकनीनिकासु अभैत्सीत् । ननु देवः

(१) द्विषतः । (२) लक्ष्यत्वं ।

स्थूललक्षः, इह तत्कथमेवमित्याह—तस्य देवस्य दानेषु स्पर्शनविषये स्थूललक्षत्वं, न पुनः शराशने इषुक्षेपे वा स्थूललक्षत्वम् । प्रहरत्प्रवृत्तं धनुर्यस्य स्पष्टलक्ष्यं विधात्येव । किंलक्षणः सः लोकालोकी लोकान् आलोकयति इति तथा निखिलभुवनदर्शी न च कृच्छ्रात्, अपरं किंलक्षणः सः कलः मधुरभाषी, अपरं किंलक्षणः सः अकल्ककलिलः कल्केन दन्तेन कलिलो गहनः कल्ककलिलः न कल्ककलिलः अकल्ककलिलः । कलाविति पाठे कलौ युगे कल्केन मायया कलिलो गहनः दुर्निरीक्ष्य इति व्याख्येयम् । अपरं किंलक्षणः सः अलिकुलाऽलकः अलिकुलवत् कृष्णाः अलकाः यस्य सः तथा भृङ्गश्रेणीश्यामकेशः, अपरं किंलक्षणः सः कालः वर्णेन कृष्णः सकलजगत्क्षयङ्करो वा । यदुक्तम्—'कालोऽस्मि लोकक्षयकृत् प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः' इति । पुनः किंभूतः अकलः निष्कलः, ब्रह्मरूपत्वात् । अपरं किंलक्षणः सः अकलिः निर्वैरः, अपरं किंलक्षणः सः काले पूर्वसमये कोलकेलिकिलः कोलः शूकरः तस्य केलिः क्रीडा तया किलति क्रीडति इति तथा, किलेत्यागमे । द्व्यक्षरः । युग्मम् ॥ ९८ ॥ ९९ ॥

युग्मेनाह—

लोकालोकीति ॥ लोकानालोकते इति लोकालोकी त्रैलोक्यदर्शी कलो मधुरभाषी कल्केन पापेन दम्भेन वा कलिलो न भवतीत्यकल्ककलिलः । 'कल्कः पापाशये पापे दम्भे' इति विश्वः । अलिकुलाऽलकः, अलिकुलनीलमूर्धज इत्यर्थः । कालो नीलवर्णः कालात्मको वा, नास्ति कला यस्य सोऽकलः । निरंश इत्यर्थः । अकलिरकलहः । स्वयमकलहशील इत्यर्थः । काले प्रलयकाले कोलकेल्या वराहलीलया किलति क्रीडति कोलकेलिकिलः । किलशब्दस्तु खल्वर्थे । विव्याधेत्युत्तरेण सम्बन्धः । द्व्यक्षरानुप्रासः ॥ ९८ ॥

अक्षितारास्विति ॥ स पूर्वोक्तगुणविशिष्टो हरिः, तनुत्राणि एषां सन्तीति तनुत्रिणो वर्मिणः । 'तनुत्रं वर्म दंशनम्' इत्यमरः । तान् द्विषतः शत्रून् अक्षितारासु नेत्रकनीनिकासु विव्याध प्रजहार । तथा हि—तस्य हरेः दानेषु वितरणेष्वेव स्थूललक्ष्यत्वं विपुलविषयत्वम् । 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः । शरासने शरक्षेपे तु न, किन्तु सूक्ष्मलक्ष्यत्वमेव । अतोऽक्षितारावेधित्वमस्य युक्तमित्यर्थः । अतो वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ९९ ॥

॥ द्व्यक्षरः ॥

वररोऽविवरो वैरिविवारी वारिराऽऽरवः ॥
विववार वरो वैरं वीरो रविरिवौर्वरः ॥ १०० ॥

वरर इति ॥ स देवः वैरमनुशयं विववार व्याचख्यौ, जघानेत्यर्थः । किंलक्षणः स वररः वरमभीष्टम् अर्थात् भक्तेभ्यः राति ददातीति तथा, वरद इत्यर्थः । अपरं किंलक्षणः सः अविवरः अविद्यमानं विवरं छिद्रमस्येति अविवरः निर्दोषः, अपरं किंलक्षणः सः वैरिविवारी वैरिणः शत्रून् विशेषेण वृणोति युद्धार्थं प्रार्थयते इति वैरिविवारी । शत्रून् योद्धुं जिगमिषुरित्यर्थः । अपरं किंलक्षणः सः वारिराऽऽरवः वारि जलं राति ददातीति वारिरो मेघः तस्येव आरवो नादो यस्य सः तथा, अपरं किंलक्षणः सः वरः श्रेष्ठः, अपरं किंलक्षणः सः वीरः धीरः, विशेषेण ईरयति क्षेपयति शत्रूनिति वीरः एकपुरुषः, यदि वा धर्मवीरो दानवीरो दयावीरो युद्धवीरस्तथा । अपरं किंलक्षणः सः, उत्प्रेक्ष्यते—और्वरो भौमः रविरिव श्रीसूर्यो यथा, तेजस्वित्वात् । द्व्यक्षरः ॥ १०० ॥

वरर इति ॥ वरान् रातीति वररो वरप्रदः । रा दाने, आतोऽनुपसर्गे कः । अविवरो निर्विवरो नीरन्ध्रः । वैरिणः शत्रून् विवारयति वैरिविवारी, वारीणि रातीति वारिरः । पूर्ववत्कः । तस्येवाऽऽरवो यस्य स वारिराऽऽरवः । वरः श्रेष्ठो वीरः शूरः स कृष्णः । 'उर्वरा सर्वसस्याढ्यभूमौ स्याद् भूमिमात्रके' इत्यमरः । तस्यां भव और्वरः पृथ्वीभवः रविरिव वैरं वैरिणां वृन्दं विववार विवारयामास । जघानेत्यर्थः । द्व्यक्षरानुप्रासः ॥१००॥

**मुक्ताऽनेकशरं प्राणानहरद्द् भूयसां द्विषाम् ॥**
**तदीयं धनुरन्यस्य न हि सेहे सजीवताम् ॥ १०१**

**मुक्तेति** ॥ तदीयं धनुः तस्य भगवतः इदं शार्ङ्गं धनुः भूयसां बहूनां द्विषां शत्रूणां प्राणान् अहरत् असून् आददात्, किंलक्षणं धनुः मुक्ताऽनेकशरं क्षिप्ताऽसङ्ख्यविशिखम् । हि यस्मात् तदीयं धनुः अन्यस्य शत्रोः सजीवतां सस्फुरत्त्वं न सेहे न चक्षमे । मयि स्थिते कथमेते वराका जीवन्तीति । अथ सजीवतां समौर्वीकत्वं न सेहे । अथ वा अन्यस्य धनुषः इति भङ्गभणितिः । मयि ध्रियमाणे सति कथमन्यधनुषां जीवा बध्यन्ते इति । जीवया मौर्व्या सह वर्तते इति सजीवं, तस्य भावः सजीवता ताम् ॥ १०१ ॥

मुक्तेति ॥ मुक्ताऽनेकशरं क्षिप्तबहुबाणं तस्य हरेरिदं तदीयं धनुः भूयसां द्विषां प्राणानहरत् । तथा हि-अन्यस्य परस्य सजीवतां न सेहे । अथ वा अन्यस्य धनुषः सजीवतां सज्याकत्वं न सेहे । 'त्रिषु जीवति जीवः स्यान्मौर्व्यां स्त्री' इति वैजयन्ती । वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ १०१ ॥

**राजराजी रुरोजाऽऽजेरजिरेऽजोऽजरोऽरजाः ॥**
**रेजाऽरिजूरजोर्जाऽर्जी रराजर्जुरजर्जरः ॥ १०२ ॥**

**राजराजीरिति** ॥ स भगवान् श्रीकृष्णः आजेः अजिरे सङ्ग्रामस्य अङ्गणे राजराजीः नृपतिपङ्क्तीः रुरोज बभञ्ज, अत एव रराज शुशुभे । किंलक्षणः स अजः सनातनः, अपरं किंलक्षणः सः अजरः अक्षयः, अपरं किंलक्षणः सः अरजाः रजोगुणरहितः निर्गुणः, आत्मरूपत्वात् । रजोग्रहणं गुणत्रयस्योपलक्षणम् । राति ददातीति राः दाता, ईजानां कुत्सितानाम् अरीणां द्विषतां जूरो हिंसा, ततो जाता उत्पन्ना या ऊर्जा बलं तया अर्जयति इति ईजाऽरिजूरजोर्जाऽर्जी, ततः कर्मधारयः, राश्चासौ ईजारीजूरजोर्जाऽर्जी च रेजाजिजूरजोर्जाऽर्जी । ये तु-रेजृ दीप्तौ इत्यस्य धातोः रेज इति रूपम् । तत्रेज इति पाठं पठन्ति, तेषामेवं व्याख्येयम्—रेजतीन्ति रेजाः तेजस्विनः तान् अरीन् जूर्यते हिनस्ति इति रेजाऽरिजूः दीप्तरिपुघाती, अजात् शिवात् ऊर्जां बलम् अर्जितवान् इति अजोर्जार्जी, भवात् आत्तबलः । तथा च भगवान् पाराशर्यः—

मत्प्रसादान्मनुष्येषु देवगन्धर्वयोनिषु ।
अप्रमेयबलात्मा त्वं नारायण ! भविष्यसि ॥
अपि चेत्सागरं गत्वा भविष्यसि ममाऽधिकः ॥

अपरं किंलक्षणः सः ऋजुः अकपटः, अपरम् किंलक्षणः सः अजर्जरः अक्षीणः । युध्यमानोऽपि निर्बाध इत्यर्थः । द्व्यक्षरः ॥ १०२ ॥

राजराजीरिति ॥ न जायते इत्यजोऽनादिः । 'अन्येष्वपि दृश्यते' इति जनेर्डप्रत्ययः । न जीर्यते इत्यजरोऽनन्तः । पचाद्यच् । नास्ति रजो यस्येत्यरजा रजोगुणरहितः, रेजन्तीति रेजास्तेजिष्ठाः । रेजृ दीप्तौ, पचाद्यच् । ते च ते अरयश्च तेषां जूरो हिंसनं तेन जातं रेजाऽरिजूरजम् ; तदूर्जं बलम् अर्जयतीति

रेजारिजूरजोर्जार्जी । अर्जेर्णिनिः । ऋजुरार्जववान्, जर्जरो न भवतीत्यजर्जरो दृढः स हरिः आजेरजिरे रणाङ्गणे राजराजी राजश्रेणीः रुरोज बभञ्ज । रुजो भङ्गे, लिट् । अत एव रराज दिदीपे । द्व्यक्षरानुप्रासः ॥

**उद्धतान् द्विषतस्तस्य निघ्नतो द्वितयं पपुः(१) ॥**
**पानार्थे रुधिरं धातौ रक्षार्थे भुवनं शराः ॥ १०३ ॥**

**उद्धतानिति** ॥ तस्य श्रीकृष्णस्य उद्धतान् दुःशीलान् द्विषतः शत्रून् निघ्नतः विशसतः शराः विशिखाः द्वितयं द्वयं पपुः । पपुरिति पिबतेः पातेश्च तुल्यं रूपमतश्च ज्ञायते । किञ्च पीतं किञ्च पालितमिति विषयविभागमाह—पानार्थे पिबतौ धातौ शराः रुधिरं क्षतजं पपुः पीतवन्तः । पुनः रक्षार्थे च धातौ भुवनं विष्टपं पपुः ररक्षुः । शत्रून् निघ्नन् जगत् अपासीदित्यर्थः । उद्धतयानेन हि भुवनं रक्षितं भवति । यद्यपि शरा भुवनं पपुरित्येतावतैव विवक्षितोऽर्थः प्रतीयते, तथाऽपि वैचित्र्यार्थमेवमुक्तम् । विचित्रा हि कवीनामुक्तयः इति ॥

उद्धतानिति ॥ उद्धतान् दृप्तान् द्विषतः शत्रून्निघ्नतो हिंसतः । 'जासिनिप्रहण—' इति सूत्रे निप्रेति-सङ्घातविपर्यस्तव्यस्तग्रहणोपदेशान्निहन्तेरशेषकर्मणि द्वितीयैव । तस्य हरेः शराः, पानार्थे धातौ 'पा पाने' इति धातौ सति रुधिरं, रक्षार्थे धातौ 'पा रक्षणे' इति भुवनं जगच्चेति द्वितयं पपुः । रुधिरमपिबन् भुवन-मरक्षंश्चेति श्लेषार्थः । अत्र पानयोरभेदाध्यवसायेन रुधिरभुवनयोस्तुल्ययोगिताऽलङ्कारः । तत्र पानार्थ इत्यादि-वाक्यस्य शत्रुवधेन भुवनमरक्षन्निति सूक्ष्मार्थगर्भत्वात्सौक्ष्म्यं नाम गुणः । 'अन्तःसङ्कल्परूपत्वं शब्दानां सौक्ष्म्य-मुच्यते' इति लक्षणात् ॥ १०३ ॥

युग्मम्—

॥ द्व्यक्षरः ॥

**क्रूराऽरिकारी कोरेकः कारकः (२)कारिकाऽऽकरः ॥**
**कोरकाऽऽकारकरकः करीरः कर्कराऽर्क(३)रुक् ॥ १०४ ॥**
**विधातुमवतीर्णोऽपि लघिमानमसौ भुवः ॥**
**अनेकमरिसङ्घातमकरोद् भूमिवर्धनम् ॥ १०५ ॥**

**क्रूरेत्यादि ॥ विधातुमिति** ॥ असौ देवः श्रीकृष्णः अनेकं बहुम् अरिसङ्घातं रिपुनिवहं भूमिवर्धनं भूमिं वर्धयति स्थूलां करोतीति भूमिवर्धनः तम् अकरोत् मृतं चकार । बहूनरीनमीमरदित्यर्थः । किंलक्षणोऽसौ भुवः काश्यप्याः लघिमानं विधातुं (४)कुर्यात् । तद्वृद्ध्या हि भुवो निरन्तरं भारो भवेत् । अविरोधस्तु भूमिशब्दस्योपसम्पन्नार्थत्वात् । अपरं किंलक्षणोऽसौ क्रूराऽरिकारी क्रूरान् अरीन् किरति कृणाति वा क्रूराऽरिकारी । ताच्छील्ये णिनिः । चण्डाऽरातिनाशक इत्यर्थः । अपरं किंलक्षणोऽसौ कोः पृथिव्याः एकः केवलः कारकः कर्ता, पालक इत्यर्थः, पुनः किंभूतोऽसौ कारिकाऽऽकरः कारिकाणां क्रियाणां जग-दुत्पत्तिस्थितिव्यापाराणाम् आकरः स्थानम् । 'कारिका यातना कृत्ये'इत्यमरः । कारिका-शब्दे 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' इति ण्वुल् । पुनः किंभूतोऽसौ कोरकाऽऽकारकरकः कोरकाऽऽकारौ मुकुलनिभौ पाणी यस्य सः कोरकाकारकरः, ततः स्वार्थे कः प्रत्ययः, कलिकालोहितहस्तः । पुनः किंभूतोऽसौ करीरः करिणः गजान् ईरयति क्षेपयतीति तथा द्विपक्षेपकः, पुनः किंभूतोऽसौ कर्कराऽर्करुक् कर्करोऽतिकठिनो योऽर्कः श्रीसूर्यस्तस्येव रुक् दीप्तिर्यस्य सः तथा चण्डचण्डांशुचण्डः । युग्मम् ॥ १०४—१०५ ॥

---

(१) ययुः । (२) कोरेककारकः । (३) कर्करोऽर्क । (४) अत्र ग्रन्थस्त्रुटित इव लक्ष्यते ।

अथ युग्मेनाह—

क्रूरेति ॥ क्रूरानरीन् किरति विक्षिपति इति क्रूराऽरिकारी । किरतेर्णिनिप्रत्ययः । कोर्भूपे रेककारकः एककर्ता । करोतेर्ण्वुल् । कारिका यातनाः करोति दुष्टानामिति कारिकाकरः । 'कारिका यातनावृत्त्योः' इत्यमरः । 'कृञो हेतु-' इत्यादिना ताच्छील्ये टप्रत्ययः । कारिकाः क्रियाः । धात्वर्थनिर्देशे ण्वुल् । तत्कर इति केचित् । कोरकाकारौ करौ यस्य स कोरकाकारकरकः । कमलमुकुलरमणीयपाणिरित्यर्थः । शैषिकः कप्प्रत्ययः । करिणो गजानीरयति क्षिपतीति करीरः । कर्मण्यण् । कर्करो, रणकर्कश इत्यर्थः । 'कर्करो दर्पणे दृढे' इति शाश्वतः । अर्कस्येव रुग्यस्य सोऽर्करुगित्युपमा । द्व्यक्षरानुप्रासः ॥ १०४ ॥

विधातुमिति ॥ भुवो भूमेर्लघिमानं लघुत्वं भारावतरणं विधातुमवतीर्णोऽपि भुवि जातोऽप्यसौ पूर्वोक्तगुणो भगवान् हरिः अनेकं बहुमारिसङ्घातं भूमिवर्धनं भूभारमकरोदिति विरोधः । मृतमकरोदित्यविरोधः । अत एव विरोधाभासोऽलङ्कारः ॥ १०५ ॥

॥ द्व्यक्षरः ॥

दारी दरदरिद्रोऽरिदारूदारोऽद्रिदूरदः ॥
दूरादरादरोऽददरद्रोदोरुद्दारुरादरी ॥ १०६ ॥

दारीति ॥ स भगवान् श्रीकृष्णः दूरादेव विप्रकृष्टदेशादेव अरिदारु शत्रुकाष्ठम् अदरत् व्यदारयत् बिभेद । अरयः एव दारु, भेत्तव्यादरीणां दारुत्वम् । किंभूत सः दारी दुष्टान् दारयतीति दारी, यदि वा दारा बहवो विद्यन्ते यस्य स दारी बहुपत्नीकः, पुनः किंभूतः सः दरदरिद्रः दरेण भयेन दरिद्रो रहितः निर्भयः, अपरं किंभूतः सः उदारः मुक्तकरः, अद्रिदूरदः अद्रिवत् पर्वतवत् दुःखेन रद्यते विलिख्यते इति अद्रिदूरदः शैलकठिनः, अपरं किंभूतः सः अरौद्रः न रौद्रः अरौद्रः स्वभावसौम्यः, अपरं किंभूतः सः रोदोरुत् रोदसी द्यावापृथिव्यौ रुणद्धि व्याप्नोतीति रोदोरुत् सर्वव्यापी, अपरं किंभूतः सः दारुः ददाति तच्छीलो दारुः सर्वप्रदः, आदरी साधुष्वादरवान् । अददरदिति दारयतेर्लुङ्, अत्स्मृदृत्वरप्रथम्रदस्तस्पशाम् ॥ १०६ ॥

दारीति ॥ दारी बहुदारवान् । भूमार्थे मत्वर्थीयः । दरेण भयेन दरिद्रो निर्भीकः । 'दरोऽस्त्रियां भये श्वभ्रे' इत्यमरः । उदारो महान् दाता वा । 'उदारो दातृमहतोः' इत्यमरः । अद्रिवत् दुःखेन रद्यते दूरदो दुर्भेदोऽद्रिदूरदः । रद विलेखने, खल् प्रत्ययः । अरौद्रः साधूनां सौम्यः, रोदसी रुणद्धीति रोदोरुत् विश्वव्यापी । रुधेः क्विप् । ददातीति दारुर्दाता । ददातेरौणादिको रुप्रत्ययः । आदरोऽस्यास्तीत्यादरी सन्मार्गादरवान् स हरिः अरि रेव दारु काष्ठमरिदारु दूरादेव अददरत् दारयति स्म । दारयतेर्णौ चङि 'अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्' इत्यभ्यासस्यात्वम् । अरिदार्विति रूपकमर्थालङ्कारो द्व्यक्षरानुप्रासश्च ॥ १०६ ॥

एकेषुणा सङ्घतिथान् द्विषो भिन्दन् द्रुमानिव ॥
स जन्मान्तररामस्य चक्रे सदृशमात्मनः ॥ १०७ ॥

एकेषुणेति ॥ स देवः श्रीकृष्णः तरूनिव द्रुमानिव अक्लेशेन एकेषुणा एकशरेण सङ्घतिथान् बहून् अरीन् भिन्दन् दारयन् सन् आत्मनः स्वस्य सदृशं चक्रे स्वस्य तुल्यं कर्म चकार । किंभूतस्य आत्मनः जन्मान्तररामस्य जन्मान्तरे रामाभिधानस्य । श्रीनारायणांशेन दशरथिना किल पूर्वमेकेनेषुणा शरेण सप्त द्रुमास्ताला भिन्नाः इति कृत्वा उपमामाह-द्विषः कानिव द्रुमानिव वृक्षानिव । यथा स भगवान् श्रीरामरूपेण द्रुमान् सप्त तालान् एकेन् शरेण बिभेद । सङ्घस्य पूरणाः सङ्घतिथाः, बहुपूगगणसङ्घस्य तिथुक् ॥१०७॥

एकेषुणेति ॥ स हरिरेकेषुणा एकेनैव शरेण, सङ्ख्यानां पूरणान् सङ्ख्तिथान्। सङ्ख्यशः स्थितानित्यर्थः। 'बहुपूगगणसङ्घस्य तिथुक्' इति तिथुगागमादेव ज्ञापकादसङ्ख्यात्वेऽपि सङ्ख्याड्डट्प्रत्ययः। द्विषः शत्रून् द्रुमानिवेत्युपमा। भिन्दन् विदारयन् जन्मान्तरे रामस्य दाशरथेरात्मनः सदृशं चक्रे। एकशरेणाऽनेकारिद्रुमभेदस्तु जन्मान्तरभावनाय जात इति भावः। 'बिभेद च पुनस्तालान् सप्तैकेन महेषुणा' इति रामायणे ॥१०७॥

॥ द्व्यक्षरः ॥

शूरः शौरि(१)रशिशिरैराशाऽऽशैराशु राशिशः ॥
शरारुः श्रीशरीरेशः शुशूरेऽरिशिरः शरैः ॥ १०८ ॥

शूर इति ॥ शूरस्य यादवस्य गोत्रापत्यं शौरिः श्रीकृष्णः शरैर्बाणैः आशु शीघ्रम् अरिशिरः शत्रुमस्तकानि शुशूरे विचक्षणे जघान चकर्त। शूरी हिंसास्तम्भनयोः। कथं शुशूरे राशिशः बहुशः, किंभूतः शौरिः शूरः, शूरतीति शूरः पौरुषान्वितः, अपरं किंभूतः शरारुः घातकः दुष्टानां पोथकः। शॄवन्द्योरारुप्रत्ययः। अपरं किंभूतः श्रीशरीरेशः श्रीशरीरस्य लक्ष्मीवपुषः ईशः प्रभुः भोक्ता, किंभूतैः शरैः अशिशिरैः उष्णैः, उत्तापिभिरित्यर्थः। वाताऽग्न्यग्न्यादिरूपत्वात् तप्तैः। अपरं किंभूतैः आशाऽऽशैः आशा दिशः अश्नुवन्ति व्याप्नुवन्ति ते आशाऽऽशाः तैः विष्वग्व्यापिभिः। क्वचित्तु शरारुश्रीशरैरीश इति पाठे ईश ईश्वरो भगवान् कृष्णः, शरैस्तु किंभूतैः शरारुश्रीशरैः शरारूणां हिंसाकारिणां शत्रूणां श्रियं समृद्धिं शृणन्ति घ्नन्ति ये ते शरारुश्रीशराः तैः दुर्जनलक्ष्मीक्षेपकैः। शृणन्तीति शराः, पचादित्वादच्। शरारुश्रियः शरा इति षष्ठीसमासः। 'शरारुर्घातुके हिंस्रे' इत्यमरः। द्व्यक्षरः। एवमस्मिन् सर्गे द्वादश द्व्यक्षराः सन्ति ॥ १०८ ॥

शूर इति ॥ शृणातीति शरारुः दुष्टघातुकः। 'शरारुर्घातुको हिंस्रः' इत्यमरः। 'शॄवन्द्योरारुः' इति आरुप्रत्ययः। श्रीशरीरस्येशः श्रीशरीरेशः लक्ष्मीप्राणनाथः शूरो वीरः शौरिः कृष्णः अशिशिरैस्तीक्ष्णैः आशा दिशोऽश्नुवत इत्याशाशैर्दिगन्तव्यापकैः। अश्नोतेः कर्मण्यण्। शरैर्बाणैः अरिशिरः शत्रुशिरांसि। जातावेकवचनम्। राशिशः सङ्घशः आशु शीघ्रं शुशूरे जघान। 'शूरी हिंसास्तम्भनयोः' इति धातोर्लिट्। द्व्यक्षरानुप्रासः ॥ १०८ ॥

व्यक्ताऽऽसीदरिताऽरीणां यत्तदीयास्तदा मुहुः ॥
मनोहृतोऽपि हृदये लेगुरेषां न पत्रिणः ॥ १०९ ॥

व्यक्तेति ॥ अरीणां भगवद्द्विषां तदा तस्मिन् काले अरिता शत्रुता व्यक्ता आसीत् प्रकटा बभूव। कुत इत्यत आह—यत तदीया भगवत्सम्बन्धिनः पत्रिणः शराः मनोहृतोऽपि मनोहरा अपि एषामरीणां हृदये हृदि न लेगुः न लगिताः। अत्र शब्दच्छलेन किल मनोहार्यपि वस्तु शत्रोर्हृदये न लगति चित्तं नावर्जयति। ते च शरा मनोहारिणः, तेषां मनांसि हरन्ति प्राणान् मुष्णन्ति इति कृत्वा हृदि ते न लेगुः न लगन्ति स्म। वक्षो भित्त्वा निर्गतत्वादित्यर्थः ॥ १०९ ॥

व्यक्तेति ॥ तदा तस्मिन्समये एषाम् अरीणामरिता शत्रुता मुहुर्व्यक्ता आसीत्। यद् यस्मात्तस्य हरेरिमे तदीयाः पत्रिणो बाणाः मनो हरन्ति कायादुद्धरन्तीति मनोहृतः। मारका इत्यर्थः। हरतेः क्विप्। मनोज्ञाः प्रतीयन्ते। अत एव मनोहृतोऽपि हृदये मनसि न लेगुर्न लग्ना इति विरोधः। वक्षो निर्भिद्य निर्जग्मुरित्यर्थः। 'हृदयं वक्षसि स्वान्ते' इति विश्वः। विरोधाभासोऽलङ्कारः ॥ १०९ ॥

---

(१) अत्र प्रसिद्धाऽनुष्टुप्छन्दोभेदानुरोधेन वृत्तभङ्गे प्रतीयमानेऽपि तज्जातिभेदान्तर्गतत्वाददोषः।

॥ अतालव्यः ॥

**नामाऽक्षराणां मलना मा भूद्भर्तुरतः स्फुटम् ॥**
**अगृह्णत पराङ्गानामसूनस्रं न मार्गणाः ॥ ११० ॥**

**नामेति** ॥ मार्गणाः भगवच्छराः पराङ्गानाम् अरिशरीरेभ्यः स्फुटं निश्चितम् अतः एतस्मात्कारणात् असून् प्राणान् अगृह्णत आददिरे, न तु अस्रं न रुधिरम् अगृह्णत । कुत इत्यत आह—भर्तुः प्रभोः नामाक्षराणां संज्ञावर्णानां मलना मलिनता मा भूत् मा भवतु इति । शरा हि सर्वस्य नामाङ्किता भवन्ति, अस्राऽऽदानेन नामाऽक्षराणि नश्येयुरिति । तदग्रहणं तु तीक्ष्णत्वेन आशु भेदात् । इचुयशानामभावात् अतालव्योऽयम् ॥ ११० ॥

नामेति ॥ भर्तुः स्वामिनो नामाक्षराणां फलेषु लिखितानां मलिता मालिन्यं तिरोधानं मा भूदिति, बुद्ध्येत्यर्थः । अतः मार्गणाः हरिशराः पराङ्गानाम् अरिशरीराणामसून् प्राणानगृह्णत । ग्रहेर्लङ् । न अस्रं रक्तम् । रक्ताविलेपस्य आशुभावनिमित्तस्य स्वामिनामाऽक्षरमालिन्यपरिहारार्थत्वमुत्प्रेक्ष्यते—स्फुटमिति । अत्र तालव्यवर्णाभावादतालव्य इति चित्रभेदः । इचुयशानातालिविति इवर्णस्यापि तालुत्वेऽपि व्यञ्जनापेक्ष एवायं नियम इति न दोषः(१) ॥ ११० ॥

**आच्छिद्य योधसार्थस्य प्राणसर्वस्वमाशुगाः ॥**
**ऐकागारिकवद्भूमौ दूराज्जग्मुरदर्शनम् ॥ १११ ॥**

**आच्छिद्येति** ॥ आशुगाः विशिखाः योधसार्थस्य भटवृन्दस्य दूरादेव प्राणसर्वस्वम् असुरत्नानि आच्छिद्य मुषित्वा भूमौ पृथिव्याम् अदर्शनं जग्मुः पातालं विविशुः । अदृष्टा जाता इत्यर्थः । किंवत् ऐकागारिकवत् चौरा इव । यथा ऐकागारिकाः सार्थस्य सर्वस्वमाच्छिद्य दूरात् अदर्शनं यान्ति । 'चौरैकागारिकस्तेनदस्युतस्करमोषकाः'-इत्यमरः ॥ १११ ॥

आच्छिद्येति ॥ आशुगा बाणाः योधसार्थस्य वीरवर्गस्य प्राणसर्वस्वम् आच्छिद्य, ऐकागारिकाश्चौराः । 'चौरकागारिकस्तेन' इत्यमरः । 'ऐकागारिकट् चौरे' इत्यर्थे निपात्यते इत्येके । इकट् प्रत्यये वृद्धिश्च निपात्यते इत्यपरे । तैस्तुल्यमैकागारिकवत् । तुल्यार्थे वतिः । दूराद् भूमावदर्शनमदृश्यतां जग्मुः ॥ १११ ॥

**भीमास्त्रराजिनस्तस्य बलस्य ध्वजराजिनः ॥**
**कृतघोराऽऽजिनश्चक्रे भुवः सरुधिरा जिनः ॥ ११२ ॥**

**भीमास्त्रेति** ॥ सः जयतीति जिनः श्रीकृष्णः तस्य बलस्य अरिसैन्यस्य भुवः भूमीः सरुधिराः चक्रे साऽसृजो विदधे । रिपुरक्तेन उर्वीः निर्भरीचकारेत्यर्थः । किंभूतस्य बलस्य भीमाऽस्त्रराजिनः भीमा घोरा अस्त्राजयः आयुधपङ्क्तयः यस्य तत् भीमास्त्रराजि तस्य, अपरं किंभूतस्य कृता घोरा आजिर्येन तत्तस्य कृतघोराऽऽजिनः विहितभीषणसङ्ग्रामस्य । 'इकोऽचि विभक्तौ' इति नुम् । अपरं किंभूतस्य ध्वजराजिनः ध्वजैः केतुभिः राजते तत् ध्वजराजि तस्य चिह्नरम्यस्य ॥ ११२ ॥

भीमास्त्रेति ॥ जिनो हरिः, अवतारान्तरनाम्ना व्यपदेशः । भीमा अस्त्रराजयो यस्य तस्य भीमास्त्रराजिनः 'इकोऽचि विभक्तौ' इति नुमागमः । ध्वजैः राजते यस्तस्य ध्वजराजिनः । ताच्छील्ये णिनिः । कृता घोरा

---

(१) 'इयं पङ्क्तिष्टीकाकृताऽनवहितचेतसा व्यलेखि । अन्येन वा केनचित्प्रमत्तेन प्रक्षिप्ता'। इत्येषा टिप्पणी 'मलिता' इति पाठानुपलम्भात् 'मलना' इति पाठानुरोधाच्च निर्णयसागरमुद्रितपुस्तके भ्रमवशाद्दत्ता भवेत् ।

आजिर्युद्धं येन तस्य कृतघोराऽऽजिनः । पूर्ववन्नुमागमः । तस्य बलस्य सैन्यस्य सम्बन्धिनीर्भुवस्तद्रणभूमीः सरुधिराः साम्राः चक्रे । चतुष्पादयमकम् ॥ ११२ ॥

**मांसव्यधोचितमुखैः शून्यतां दधदक्रियम् ॥**
**शकुन्तिभिः शत्रुबलं व्यापि तस्येषुभिर्नभः ॥ ११३ ॥**

**मांसेति ॥ शत्रुबलम् अरिसैन्यं शकुन्तिभिः कङ्कगृध्रादिभिः पक्षिभिः व्यापि व्याप्तम्, तथा तस्य श्रीकृष्णस्येषुभिर्बाणैः नभ आकाशं व्यापि व्याप्तम् । शौरिशितशरशतहतरिपुनिवहजिघृक्षया गृध्राः घोररणाऽजिरे भ्रेमुरित्यर्थः । किंभूतैः शकुन्तिभिः इषुभिश्च मांसव्यधोचितमुखैः मांसव्यधे पिशितताडने उचितं योग्यं मुखं चञ्चुः शल्यं च येषां ते तथा तैः, किंभूतं शत्रुबलं नभश्च शून्यतां दधत् निःसंज्ञत्वं बिभ्रत्, अपरं किंभूत बलम् अत एव अक्रियं स्वकार्याऽक्षमम् । नभोऽपि शून्यमक्रियं च ॥ ११३ ॥**

मांसेति ॥ मांसव्यधो मांसखण्डनम् । 'व्यधजपोरनुपसर्गे' इत्यप्प्रत्ययः । तत्रोचितानि परिचितानि मुखानि चञ्चवः शल्यानि च येषां तैः शकुन्तिभिः कर्तृभिः शून्यतामचेतनत्वम्, अन्यत्र तुच्छत्वममूर्तत्वं वा दधत् अत एव अक्रियमस्पन्दं शत्रुबलं व्यापि व्याप्तम् । आप्नोतेः कर्मणि लुङ् । तस्य हरेरिषुभिः नभो व्यापि । अत्रेषुपक्षिणां नभोबलयोर्व्याप्तितुल्यधर्मयोगित्वात्तुल्ययोगिताभेदः ॥ ११३ ॥

**॥ एकाक्षरः ॥**

**दाददो दुद्दुद्दादी दाददो(१) दूददीददोः ॥**
**दुद्दादं दददे दुद्दे ददाऽददददोऽददः ॥ ११४ ॥**

**दादद इति ॥ पूर्वमुपक्रान्तो भगवान् श्रीकृष्णः दुद्दे दुद्दादं दददे शत्रौ शस्त्रं ददौ । तृतीयवाक्यार्थावगतिः । दुद्दे इति, टु दु उपतापे, दवनं दुत् उपतापः । क्विप् तुक् च । दुतं ददातीति दुद्दः शत्रुः । आतोऽनुपसर्गात् कः । तस्मिन् दुद्दे । दुद्दादमिति, दद दाने, दुत् पूर्वः । दुतं पीडां ददते राततीति दुद्दादमायुधम् । कर्मण्यण् । दददे इति दद दाने इत्यस्यैव लिटि तङि रूपम् । हरिः शत्रुषु अस्त्राणि निरासेत्यर्थः । इदानीं प्रकरणवशप्राप्तश्रीहरिविशेषणानि सर्वाणि । किंभूतः श्रीकृष्णः दाददः, ददनं दादः भावे घञ्, दद्यते इति वा दादः घञ्, दादं ददातीति दाददः उचितप्रदः, दा दाने, आतोऽनुपसर्गात् कः । अपरं किंभूतः श्रीकृष्णः दुद्दुद्दादी दुतमुपतापं ददते इति दुद्दाः अरुन्तुदाः तेषामपि दुतं पीडां ददते ददाति तच्छीलो दुद्दुद्दादी । जगदुपतापिनां तापद इत्यर्थः । ददेर्णिनिः । अपरं किंभूतः श्रीकृष्णः दाददः, देङ् रक्षणे, दानं दा रक्षा, सम्पदादित्वात् भावे क्विप् । प्रत्ययलक्षणस्याऽनित्यत्वात् 'घुमास्थागापे'तीत्वाऽभावः । दा ददत इति दाददः भुवनरक्षाविधायी । कर्मण्यण् । अपरं किंभूतः दूददीददोः, दूङ् परितापे दवनं दूः तापः तां ददतीति दूदाः दैत्यरक्षःप्रभृतयः तेषां, दीङ् क्षये दयनं दी हानिः तां ददतीति दीदाः । आतोऽनुपसर्गात्कः । दोरिति दमेर्डोस्, दूदानां राक्षसादीनां तापदायिनां दीदाः हानिदातारो दोषः भुजाः यस्य सः दूददीददोः जगत्कम्पक्षयकारिबाहुः । अपरं किंभूतः ददाऽददददः ददन्ते इति ददाः सर्वप्रदाः । पचाद्यच् । न ददन्ते इति अददाः लुब्धाः तेभ्यो ददातीति ददाऽददददः अभीष्टदः । 'ददातिदधात्योर्विभाषा' इति ददातेः शः ।**

---

(१) ०दादादो ।

स भगवान् श्रीहरिः सर्वेषां किल समवर्ती । तदाह—'न मे द्वेष्योऽस्ति न प्रियः' इत्यादि । अपरं किंभूतो हरिः अददः, अद भक्षणे, अदन्ति विश्वानि ते अदाः राक्षसाः तान् द्यति खण्डयतीति अददः, राक्षसहन्तेत्यर्थः । अदन्तीति अदाः हिंसकाः । पचाद्यच् । इत्वाद्यादेशं चापपूर्वस्य(?)स्मरन्ति । तान् द्यति खण्डयतीति अददः शत्रुघ्नः पूर्ववत्कः । एष तावत् प्रकटार्थोऽनवद्यत्वादस्माभिरादृतः । व्याख्यानान्तराण्यपि सर्वेऽत्र संस्कृतमतीनां न दुष्कराणि । किन्तु अतिगौरवं स्यात् । अपि च तानि कवेर्न विवक्षितानि । अनुप्रासोऽलङ्कारः ॥ ११४ ॥

दादद इति ॥ दद्यते इति दादः दानम् । 'दद दाने' इति कर्मणि घञ् । दादं ददातीति दाददो दानप्रदः । आतोऽनुपसर्गे कः । दुद्दुद्दादी, दुत् उपतापः । टुदु उपतापे, क्विप् । दुतमुपतापं ददाति साधूनामिति दुद्दाः खलाः । पूर्ववत्कः । तेषां दुतमुपतापं ददत इति दुद्दुद्दादी । 'दद दाने' इति धातोर्णिनिः । दादादः । दाः शुद्धिः । दैपू शोधने, क्विप् । तां ददत इति दादादः । दद दाने, कर्मण्यण् । दूददीददोः । दूः परितापः । दूङ् परितापे, क्विप् । तां ददतीति दूदा दुष्टाः । दीः क्षयः । दीङ् क्षये, क्विप् । तां दत्त इति दीदो नाशदौ । उभयत्राऽऽतोऽनुपसर्गे कः । दूदानां दीदौ दुष्टमर्दकौ दोषौ भुजौ यस्य सः दूददीददोः । दुष्टभञ्जकभुज इत्यर्थः । ददाऽददददः । ददन्ते इति ददाः दातारः न ददन्ते इति अददा अदातारः, तेषां द्वयानामपि ददो दाता ददाददददः । सर्वत्र दद दाने, पचाद्यच् । अदन्तीत्यदा बकासुरपूतनाप्रभृतयः । अदः पचाद्यच् । तान् द्यति खण्डयति इति अददः । दो अवखण्डने, आतोऽनुपसर्गे कः । एवंभूतो हरिः । दुतं ददातीति दुद्दः दुःखदः तस्मिन् दुद्दे शत्रौ । दुतं ददत इति दुद्दादं शस्त्रम् । दद दाने, कर्मण्यण् । दददे ददौ । प्रयुक्तवानित्यर्थः । दद दाने, कर्तरि लिट् । एकाक्षरानुप्रासोऽलङ्कारः ॥ ११४ ॥

प्लुतेभकुम्भोरसिजैर्हृदयक्षतिजन्मभिः ॥
प्रावर्तयन्नदीरस्रैर्द्विषां तद्योषितां च सः ॥ ११५ ॥

प्लुतेभेति ॥ स भगवान् श्रीकृष्णः द्विषां शत्रूणां तद्योषितां च द्विषन्नारीणां च अस्रैर्नदीः निम्नगाः प्रावर्तयत् अजनयत् । द्विषतामसृग्भिः नदीः कृतवान् । तद्योषितां शत्रुमहिलानां च अस्रैर्नयनाम्बुभिः निम्नगाश्च प्रवर्तयामास । भर्तृषु हतेषु ताः रुरुदुरित्यर्थः । किंभूतैरस्रैः प्लुतेभकुम्भोरसिजैः प्लुताः पूरिताः व्याप्ताः यथाक्रमम् इभकुम्भाः कुञ्जरशिरःपिण्डाः उरसिजाः कुचा यैस्तानि तैः, अपरं किंभूतैरस्रैः हृदयक्षतिजन्मभिः हृदयक्षतेः वक्षोघातात् जन्म उत्पत्तिर्येषां तानि तथा तैः । रुधिराणि हि वक्षसि भग्ने निर्यान्ति । अश्रूण्यपि हृदयदुःखात् प्रवर्तन्ते इत्यर्थः ॥ ११५ ॥

प्लुतेभेति ॥ स हरिः प्लुताः उक्षिताः इभकुम्भाः उरसि जाता उरसिजा इभकुम्भा इवोरसिजाश्च यैस्तैः हृदयक्षतिभिर्वक्षःप्रहारैः मनोभङ्गैश्च विषादाऽऽपादकैः जन्म येषां तैः । 'हृदयं वक्षसि स्वान्ते' इति विश्वः । द्विषां तद्योषितां च अस्रैः शोणितैरश्रुभिश्च । 'अस्रमश्रुणि शोणिते' इति विश्वः । नदीः प्रावर्तयत् प्रावाहयत् । अरिवधेन तन्नारीररोदयदित्यर्थः । अत्र द्वयानामप्यस्राणां प्रकृतत्वात्प्रकृतश्लेषः । तैरस्रैर्द्विषां तद्योषितां यथासङ्ख्यसम्बन्धाद्यथासङ्ख्याऽलङ्कारः । तदुपजीवनेन द्विषां तद्योषितां चास्रैः शोणितैः श्लेषमूलाऽभेदातिशयोक्तिमहिम्ना अस्ररूपतुल्यधर्मयोगित्वात्तुल्ययोगितेत्यङ्गाङ्गिभावेनैषां सङ्करः ॥ ११५ ॥

॥ अर्थत्रयवाची ॥

सदामदबलप्रायः समुद्धृत(द्धत)रसो बभौ ॥
प्रतीतविक्रमः श्रीमान् हरिर्हारिरिवाऽपरः ॥ ११६ ॥

सदेति ॥ हरिः श्रीकृष्णः बभौ रेजे । किंभूतो हरिः सदामदबलप्रायः सदा नित्यं

मदः क्षीवता यस्य सः सदामदः नित्यक्षीबो यो बलो हलधरः तं प्रीणाति आनन्दयति यः स सदामदबलप्रायः, वल्लभत्वात्। कर्मण्यण् । अपरं किंभूतः समुद्धतरसः समुद्धृता प्रोद्धृता रसा भूमिर्येन सः तथा । वराहरूपेण हि भगवता जलमध्ये मग्ना मही समुद्धृता इत्यागमः । अपरः किंभूतः प्रतीतविक्रमः प्रतीतः प्रसिद्धः विक्रमो यस्य सः तथा प्रसिद्धपराक्रमः, अपरं किंभूतः श्रीमान् लक्ष्मीवान्, अपरं किंभूतः अपरं न विद्यमानाः परे शत्रवो यस्य सः अविद्यमानशत्रुः, क इव बभौ हरिरिव देवेन्द्र इव, स यथा भाति। किंभूतः इन्द्रः सदामदबलप्रायः सन् उत्कृष्टः तथा आमं रोगं लोकपीडां ददातीति आमदो विश्वदुःखदो बलो बलासुरः तं प्रकर्षेण अयते गच्छत्यास्कन्दतीति आमदबलप्रायः, ततः कर्मधारयः, संश्चासौ आमदबलप्रायश्च सदामदबलप्रायः, पुनः किंभूतः इन्द्रः समुत् सह मुदा हर्षेण वर्तते इति तथा, अपरं किंभूतः हृतरसः हृतो निरस्तः अमृतभक्षणात् रसो विषं येन सः तथा, अपरं किंभूतः प्रतीतविक्रमः प्रति इताः योद्धुं संमुखमागता ये शत्रुवीराः तेषु न तु पलायमानेषु विक्रमः पौरुषं यस्य सः, पुनः किंभूतः श्रीमान् श्रीर्देवाधिपत्यलक्ष्मीर्विद्यते यस्य सः तथा, पुनः किंभूतः अपरः अः उपेन्द्रः विष्णुः परः अनुजो यस्य सः तथा, विष्णुपूर्वजन्मेत्यर्थः । एष एकोऽर्थः । द्वितीयश्च—स हरिर्बभौ । किंभूतो हरिः दामदबलप्रायः दाम रज्जुं द्यति दितवान् वा सः दामदः, तथा बलं सामर्थ्यं प्रायेण बाहुल्येन यस्य स बलप्रायः, ततः कर्मधारयः, दामदश्चासौ बलप्रायश्च दामदबलप्रायः । यस्य हि शाश्वतिकं बलं न स्यात्, स कथं शैशवे दाम छिन्द्यादिति । अपरं किंभूतः समुद्धतरसः समुद्धतेषु सदर्पेषु रसो रागो जिगीषा यस्य सः तथा, पुनः किंभूतः प्रतीतविक्रमः प्रतीताः सर्वत्र ख्याताः विशिष्टाश्च क्रमाः पादविक्षेपा यस्य सः तथा प्रसिद्धपराक्रमो वा, अपरं किंभूतः श्रीमान् नृपलक्ष्मीयुक्तः, पुनः किंभूतो हरिः अपरः न विद्यन्ते परे शत्रवो यस्य सः पूर्ववत्। यदि वा आप्यते आप्तुं काम्यते इति आपो मोक्षः, तं राति ददातीति आपरः मोक्षप्रदः। क इव हरिरिव सिंह इव, किंभूतः सिंहः सदामदबलप्रायः सदा अजस्रं मदो दानं येषां ते सदामदाः नित्यमदाः ये करिणः तान् बलेन शौर्येण प्रायते अभियुङ्क्ते इति सदामदबलप्रायः, पुनः किंभूतः समुद्धतरसः समुद्धतः उत्कटः चण्डो रसो रौद्राख्यो यस्य सः, पुनः किंभूतः प्रतीतविक्रमः प्रसिद्धपराक्रमः, यदि वा प्रतीतः ख्यातः वेरिव पक्षिणो गरुडस्येव क्रमः फालो यस्य सः प्रतीतविक्रमः, पुनः श्रीमान् मृगपतित्वात्, पुनः किंभूतः अपरः निःसपत्नः, महाबलत्वात्। एष द्वितीयोऽर्थः । तृतीयोऽपि—हरिर्बभौ। किंभूतः कृष्णः सदामदबलप्रायः दानं दा, सह तया वर्तते इति सदः, तथा अविद्यमानो मदः चेतोविकारो यस्य सः अमदः, सदश्चासावमदश्चेति सदाऽमदः, तथा बलं हलधरं प्राति पूरयति आप्यायतीति बलप्रः । आतोऽनुपसर्गात् कः । एतीति आयः आगमनपरः बलप्रो हलधरतोषयिता आयः सम्प्राप्तिर्यस्य सः बलप्रायः । भगवति ह्यागते बलभद्रो हृष्यतीति । सदाऽमदश्चासौ बलप्राऽऽयश्चेति । अपरं किंभूतः समुद्धतरसः समुदः सहर्षान् परितुष्टान् जहति त्यजन्ति क्षपयन्तीति समुद्धाः दुष्टाभिप्रायाः, अतिशयेन समुद्धाः समुद्धतराः तान् स्यति अन्तं नयति इति समुद्धतरसः अतिकण्टकक्षेपी, अपरं किंभूतः प्रतीतविक्रमः प्रसिद्धपौरुषः, यदि वा प्रतीतः प्रख्यातः विना पक्षिणा गरुडेन

क्रमो गतिर्यस्य सः, तथा पुनः किंभूतः श्रीमान् सर्वसमृद्धियुक्तः, पुनः किंभूतः अपरः न परः उत्कृष्टो यस्मादिति अपरः सर्वश्रेष्ठः, क इव बभौ हरिरिव श्रीसूर्य इव ।

कांऽशुगुर्विन्द्रचन्द्राऽर्ककपिभेकशुकोरगान् ।

यमवाय्वग्निसिंहाऽश्वश्यामवर्णान् हरीन् विदुः ॥

किंभूतो रविः सदामदबलप्रायः सतां जीवानाम् आमं रोगं द्यति लुनातीति सदामदः अत एव तेषामेव सतां यत् बलं तस्य प्रा पूरणं बहूकरणं च तत्र योऽनुकूलः । भगवान् श्रीसूर्यः किल रोगान् नाशयन् महद्बलं ददातीति । सदामदश्चासौ बलप्रायश्चेति कर्मधारयः । किंविशिष्टः रविः अत एव समुत् प्रीतिदाता, अपरं किंभूतः हतरसः हतः क्षपितः घर्मकाले रसो जलं येन सः तथा । भगवान् हि ग्रीष्मसमये करैः कृत्वा सर्वरसान् पिबति । यदुक्तं हि—'सहस्रगुणमुत्स्रष्टुमादत्ते हिं रसं रविः' इति । पुनः किंभूतः प्रतीतविक्रमः प्रतीताः प्रहृष्टाः प्रतिगता वा विक्रमा यस्य सः तथा, विक्रमन्ते अतिप्रचलन्तीति विक्रमाः अश्वाः, प्रहृष्टाऽश्वः । अश्वानां गतिविशेषो विक्रमो वा । अपरं किंभूतः श्रीमान् तेजोलक्ष्मीसम्पन्नः, पुनः किंभूतः आपरः आ समन्तात् जगन्ति पिपर्ति पालयतीत्यापरः । पचाद्यच् । एष तृतीयोऽर्थः । अत्र विविधाऽध्येतृमनोरुचिप्रतिपत्तिप्रसादनाय अर्थषट्कमस्माभिर्व्याख्यातम् । न तु कवेरेषोऽभिप्रायः । परमार्थतस्तु प्रकरणलब्धस्यैकत्वादुपमानयोश्च द्वित्वादर्थत्रयवाचित्वम् अत्राऽन्यत्र वापि मतम् । अर्थत्रयवाची ॥ ११६ ॥

सदेति ॥ सदा मदो यस्य सः सदामदः नित्यमत्तस्तं बलं बलभद्रं प्रीणातीति सदामदबलप्रायः । परत्वात्कर्मण्यण्प्रत्ययः । समुद्धृता रसा भूर्येन स समुद्धृतरसः । प्रतीताः प्रसिद्धा विक्रमाः पादन्यासा यस्य सः । त्रिविक्रम इत्यर्थः । श्रीमान् रमापतिः हरिः कृष्णोऽपरोऽन्यो हरिरिन्द्र इव बभौ । सोऽपि सतामामदो दुःखदो यो बलासुरस्तस्य प्रायो नाशस्तं करोतीति सदामदबलप्रायः । 'तत्करोति–' इति ण्यन्तात्पचाद्यच् । समुद्धृतरसः अमृतपानेन सम्यगपहृतविषः । 'शृङ्गारादौ विषे वीर्ये द्रवे रागे गुणे रसः' इत्यमरः । प्रतीतविक्रमः प्रसिद्धपराक्रमः श्रीमान् स्वाराज्यलक्ष्मीयुक्तः । तथा परोऽन्यो हरिः सूर्य इव बभौ । सोऽपि आमं रोगं द्यति खण्डयतीत्यामदः । बालं पृणातीति बलप्रः । मूलविभुजादित्वात्कः । सतां भक्तानामामदो बलप्रश्च अय उदयो यस्य सः सदामदबलप्रायः । स्वोदयेन सतामारोग्यबलकारीत्यर्थः । 'उद्यन्नद्य—' इत्यादिश्रुतेरिति भावः । समुद्धृतरसः घर्मकालसंशोषितसलिलः । प्रतीतविक्रमः प्रसिद्धखगगतिः ।

'यमानिलेन्द्रचन्द्रार्कविष्णु सिंहांशुवाजिषु ।

शुकाऽहिकपिभेकेषु हरिर्ना कपिले त्रिषु' ॥

इत्यमरः । तदेवमुपमानयोरुपमेये चार्थत्रयवचनादर्थत्रयवाच्येषु चित्रभेदः । एतावदेव कवेर्विवक्षितमतोऽन्यत्सुवाच्यं चोपेक्ष्यमेव । अत्राऽपरो हरिरिवेत्यपरशब्दप्रयोगादुत्प्रेक्षेयं नोपमा । अपरस्यन्द्रस्यार्कस्यैवाऽप्रसिद्धेः प्रसिद्धसादृश्यवर्णनमुपमा । प्रसिद्धतादूप्यारोपे रूपकम् । प्रसिद्धतादूप्यभावनमुत्प्रेक्षा । अत एव लक्षयन्ति—अप्रकृतगुणक्रियाऽभिसन्धानादप्रकृतत्वेन प्रकृतसम्भावनमुत्प्रेक्षेति । तस्मादपरशब्देन प्रकृतस्याऽप्रकृतत्वाध्यवसायप्रतीतेरिवशब्देन तस्य साध्यत्वप्रतीतेरुत्प्रेक्षैवेति सर्वस्वकारः । तस्मादिवशब्दमात्रप्रयोग एवोपमा । अपरशब्दमात्रप्रयोगेऽतिशयोक्तिः । उभयोः प्रयोगे तूत्प्रेक्षैवेति विवेकः । अत एवात्राऽनेकार्थवर्णनव्यवसायिभिरपरशब्दस्याऽन्यार्थताव्यतिरेकेणार्थान्तरकल्पनाऽपि नालङ्कारिकाणां पन्थाः । श्लेषस्तूत्प्रेक्षाबीजभूतसाधर्म्यनिर्वाहमात्रोपक्षीणतया तदङ्गमिति सङ्करः इत्यलमतिप्रसक्त्या ॥ ११६ ॥

द्विधा त्रिधा चतुर्धा च तमेकमपि शत्रवः ॥

पश्यन्तः स्पर्धया सद्यः स्वयं पञ्चत्वमाययुः ॥ ११७ ॥

द्विधेति ॥ शत्रवः अरयः तं कृष्णम् एकमपि द्विधा प्रकारद्वयेन, त्रिधा प्रकारत्रयेण, च पुनः चतुर्धा चतुःप्रकारेण पश्यन्तः अवेक्षमाणाः सन्तः स्वयमात्मना सद्यः तत्क्षणादेव पञ्चत्वमाययुः मरणं प्रापुः । भीताः किल सर्वत्र भयं पश्यन्तो म्रियन्ते इति द्विधात्वादिदर्शनम् । श्रीभगवतो वेगलाघवेनाऽपि वा अनेकरूपदर्शनम् । कया पञ्चत्वमाययुरित्याह, उत्प्रेक्ष्यते—स्पर्धयेव सङ्घर्षेणेव । एष किल चतुर्धात्वं यावत्प्राप्तः । वयमपि इदानीमेनमतिशयितुं कथं पञ्चत्वं पञ्चसङ्ख्यात्वं नाप्नुमः इति स्पर्धयेव स्वयं पञ्चत्वमाययुः ॥ ११७॥

द्विधेति ॥ शत्रवः एकमपि तं हरिं द्विधा द्वित्वेन त्रिधा त्रित्वेन चतुर्धा चतुष्ट्वेन पश्यन्तः, भयात्तथा भ्राम्यन्त इत्यर्थः । स्पर्धया मत्सरेण सद्यः स्वयं पञ्चत्वं पञ्चधाभावं मरणं चाऽऽययुः । मत्सरिणस्तदधिकमाचरन्तीति भावः ।

'स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ।
अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम्' ॥

इत्यमरः । पाञ्चभौतिकस्य शरीरस्य पञ्चधाभावः पञ्चता । अत्र स्पर्धयेति हेतोरुत्प्रेक्षणाद्धेतूत्प्रेक्षा । सा च व्यञ्जकाप्रयोगाद्गम्या । स्पर्धयेवेत्यर्थः ॥ ११७ ॥

॥ समुद्रः ॥

**सदैव सम्पन्नवपू रणेषु महोदधेस्तारि महानितान्तम् ॥**
**स दैवसम्पन्नवपूरणेषु महो दधेऽस्तारिमहा नितान्तम्(१) ॥ ११८ ॥**

सदैवेति ॥ स भगवान् श्रीकृष्णः रणेषु समरेषु नितान्तमतिशयेन महः दधे तेजो बभार । किंभूतेषु रणेषु दैवसम्पन्नवपूरणेषु दैवसम्पदां दैवसम्बन्धिसमृद्धीनां नवं प्रत्यग्रं पूरणं प्रसाधनं येषु तानि दैवसम्पन्नवपूरणानि तेषु देवसमृद्धिवर्धकेषु । रणेषु मृतैर्हि वीरैः देवभूयं प्राप्य स्वर्गः प्रसाध्यते इत्यागमः । किंभूतः स हरिः सदैव सम्पन्नवपुः सदैव नित्यमेव सम्पन्नं परिपूर्णं समृद्धियुक्तं वा वपुः शरीरं यस्य सः तथा, पुनः किंभूतः अस्ताऽरिमहाः अस्तं क्षिप्तम् अरीणामरातीनां महस्तेजो येन सः तथा नाशितशत्रुतेजाः, पुन किंभूतः महान् सर्वोन्नतः, किंभूतं महः महोदधेः समुद्रस्य इतान्तं प्राप्तावसानं सागरोत्तीर्णं, पुनः किंभूतं महः तारि तरति प्लवते इति तारि नभोव्यापि । सम्पुटयमकम् । यस्य पादोऽपरेण तृतीयेन चतुर्थेन सदृशः तत्सम्पुटयमकम्, समुद्रकाऽपरसंज्ञम् । उपेन्द्रवज्रा वृत्तम् ॥ ११८ ॥

सदैवेति ॥ सदैव सर्वदैव सम्पन्नं सर्वलक्षणसमग्रं वपुर्यस्य सः सम्पन्नवपुः । नित्यपरिपूर्णमूर्तिः । संहितायां, ढ्लोपे पूर्वस्य दीर्घो णः । अस्तं निरस्तमरीणां महस्तेजो येनासौ अस्ताऽरिमहाः महानधिकः स हरिः, दैवसम्पत् भाग्यसम्पत्तिः सैव नवं पूरणं प्रत्ययसाधनं येषां तेषु दैवसम्पन्नवपूरणेषु दैवसहायेषु रणेषु महोदधेर्महार्णवस्य इतान्तं प्राप्तपारं समुद्रपारगामि नितान्तं स्तारि विस्तीर्णं महस्तेजो दधे धारयामास । अर्धाभ्यासलक्षणसमुद्रयमकभेदः 'अर्धाभ्यासः समुद्रः स्यादस्य भेदास्त्रयो मताः' इत्युक्तं दण्डिना । उपेन्द्रवज्रा वृत्तम ॥ ११८ ॥

**इष्टं कृत्वाऽर्थं पत्रिणः शार्ङ्गपाणेरेत्याधोमुख्यं प्राविशन् भूमिमाशु ॥**
**शुद्ध्या युक्तानां वैरिवर्गस्य मध्ये भर्त्राक्षिप्तानामेतदेवाऽनुरूपम् ॥११९॥**

इष्टमिति ॥ शार्ङ्गपाणेः श्रीकृष्णस्य पत्रिणः शराः शरा इष्टम् अभिप्रेतम् अर्थं कृत्वा प्रयोजनं विधाय आधोमुख्यं च एत्य अधोमुखत्वं प्राप्य अधोमुखाः सन्तः आशु तूर्णं भूमिं प्राविशन् क्षितिं प्रविष्टाः । मुखेन हि इषवः पतित्वा रसातलं प्रविशन्ति ।

---

(१) मल्लिनाथव्याख्यायां मुद्रितपुस्तके तु प्रथमद्वितीययोस्तृतीयचतुर्थयोः पादयोः साम्यं दृश्यते ।

युक्तं चैतत्, यदधोमुखत्वं प्राप्य भूमिं प्राविशन्निति। यस्मात् शुद्ध्या युक्तानां शौचाऽन्वितानां गुणवताम्, अथ च वैरिवर्गस्य मध्ये द्विषः प्रत्यक्षमेव भर्त्राऽऽक्षिप्तानां स्वामिना तिरस्कृतानाम् एतदेव अनुरूपम् उचितं, यदधोमुखत्वं प्राप्य परिभवात् रसातलं प्रविशन्तीति। शरा हि भगवता वैरिवर्गस्य मध्ये क्षिप्ता शुद्धया युक्ता ऋजवश्च निर्विषत्वाच्च देवेन वैरिमध्ये क्षिप्ताः। वैश्वदेवी वृत्तम्। मौ यौ पञ्चाश्वैर्वैश्वदेवीति नाम्ना। अर्थान्तरन्यासोऽयम् ॥ ११९ ॥

इष्टमिति ॥ शार्ङ्गं पाणौ यस्य शार्ङ्गपाणेः कृष्णस्य। 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति पाणेः परनिपातः। पत्रिणो बाणाः इष्टमर्थं शत्रुवधात्मकं कृत्वा आधोमुख्यमधोमुखत्वमेत्य प्राप्य आशु भूमिमाविशन्। शुद्ध्या लोहशुद्ध्या पवित्रतया च युक्तानां तथापि भर्त्रा स्वामिना वैरिवर्गस्य मध्ये क्षिप्तानां पातितानाम् एतदेव आधोमुख्येन क्वचिन्निलयनमेवाऽनुरूपमुचितम्। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। जागतं वैश्वदेवीवृत्तम्। 'पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ' इति लक्षणात् ॥ ११९ ॥

कविकाव्यनामगर्भचक्रमिदम्—

॥ चक्रबन्धः ॥

सत्त्वं मानविशिष्टमाजिरभसादालम्ब्य भव्यः पुरो
लब्धाऽघक्षयशुद्धिरुद्धुरतरश्रीवत्सभूमिर्मुदा ॥
मुक्त्वा काममपास्तभीः परमृगव्याधः स नादं हरे-
रेकौघैः समकालमभ्रमुदयी रोपैस्तदाऽऽतस्तरे ॥ १२० ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये एकोनविंशतितमः सर्गः ॥ १९ ॥

सत्त्वमिति ॥ स भगवान् श्रीकृष्णः पुरोऽग्रेवर्ति अभ्रम् आकाशं तदा तस्मिन् काले समकालं युगपत् एकौघैः अविच्छिन्नैः एकप्रहारप्रवृत्तैः रोपैः शरैः आतस्तरे पिदधे। किं कृत्वा आजिरभसात् रणौत्सुक्यात् मानविशिष्टम् उन्नतिमत् सत्त्वं धैर्यम् आलम्ब्य गृहीत्वा। सम्पदाऽसम्पदयोर्निर्विकारता मनसः सत्त्वम्। तथा मुदा तोषेण हरेः सिंहस्य नादं ध्वनिं निकाममत्यर्थं मुक्त्वा सिंहवन्नदित्वा, किंभूतः श्रीकृष्णः भव्यः योग्यः अभिप्रेतानामर्थानां पात्रभूतः, पुनः किंभूतः लब्धाऽघक्षयशुद्धिः लब्धा प्राप्ता अघक्षयेण शुद्धिर्यस्मात् सः तथा, पुनः किंभूतः उद्धुरतरश्रीवत्सभूमिः श्रीवत्सस्य लक्षणविशेषस्य भूमिः स्थानं श्रीवत्सभूमिर्वक्ष उच्यते, उद्धुरतरा अत्युन्नता श्रीवत्सभूमिर्यस्य सः तथा, पीनवक्षा इत्यर्थः। पुनः किंभूतः अपास्तभीः त्यक्तभयः वीराऽधिवीरत्वात्, पुनः किंभूतः परमृगव्याधः शत्रुहरिलुब्धकः, पुनः किंभूतः उदयी उदर्कलक्ष्मीसंयुक्तः। कवेर्माघस्य काव्यस्य च श्रीशिशुपालवधाख्यस्य यन्नाम पदं तदन्तर्वर्तित्वात् गर्भो यस्य तत् कविकाव्यनामगर्भं चक्रं षडरम् अनेन श्लोकेन रच्यते। तत्र पादत्रितयस्य षडराः। प्रत्यरं तृतीयाऽक्षररचितं कवेर्नाम 'माघकाव्यमिदं'मिति। षष्ठाक्षररचितं काव्यनाम 'शिशुपालवधः' इति। रेफो नाभिस्थाने। एकौघैरिति व्याध इति वचा शरीरी वा(?)विसर्जनीयान्तावेव। चतुर्थस्तत्पादो नेमिस्थाने। अरमध्ये प्रत्यक्षरद्वयन्यासः। शार्दूलविक्रीडितं वृत्तमिदम्। चित्रमलङ्कारः। श्रीशब्दलक्ष्मत्वात् काव्यस्य सर्वसर्गसमाप्तौ श्रीशब्दप्रयोग इति भद्रम् ॥ १२० ॥

इति श्रीशिशुपालवधे महाकाव्ये दत्तकसूनोर्माघस्य कृतौ सन्देहविषौषध्यां सारटीकायां द्वन्द्वयुद्धं नामैकोनविंशः सर्गः।

'१७९९' मिते वैक्रमे वत्सरे '१६६४' मिते शालिवाहनशके लिखितस्य वल्लभदेव-कृतव्याख्यापुस्तकस्याऽनुरोधेन शिशुपालवधकाव्यस्थितानां चित्रबन्धानाम् आकृतयः।

## सर्वतोभद्रः ।

### स. १९ श्लो. २७

| स | का | र | ना | ना | र | का | स |
|---|---|---|---|---|---|---|---|
| का | य | सा | द | द | मा | य | का |
| र | सा | ह | वा | वा | ह | सा | र |
| ना | द | वा | द | द | वा | द | ना |
| ना | द | वा | द | द | वा | द | ना |
| र | सा | ह | वा | वा | ह | मा | र |
| का | य | सा | द | द | सा | य | का |
| स | का | र | ना | ना | र | का | स |



मुरजबन्धः ।
स. १९ श्लो. २९



गोमूत्रिकाबन्धः ।
स. १९ श्लो. ४६

## अर्धभ्रमकः ।

### स. १९ श्लो. ७२

| अ | भी | क | म | ति | के | ने | द्धे |
|---|---|---|---|---|---|---|---|
| भी | ता | न | न्द् | स्य | ना | श | ने |
| क | न | त्स | का | म | से | ना | के |
| म | न्द् | का | म | क | म | स्य | ति |

## षडरचक्रबन्धः ।

### स. १९ श्लो. १२०



सत्त्वमिति ॥ भव्यः कल्याणमूर्तिः, लब्धोऽघक्षयः शुद्धिश्च येन स लब्धाऽघक्षयशुद्धिः, श्रीवत्सस्य काञ्छनविशेषस्य भूमिर्वक्षः सा उद्धुरतरा उन्नततरा यस्य स उद्धुरतरश्रीवत्सभूमिः काममपास्तभीः निर्भीकः, परे शत्रवस्त एव मृगास्तेषां व्याधः मृगयुरित्यश्लिष्टरूपकम् । 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि च' इत्यमरः । उदयी नित्याभ्युदयवान् । नित्ययोगे मत्वर्थीयः । स हरिः पुरः पूर्वम् आजिरभसाद्रणरागात् मानविशिष्टमहङ्कारोद्धुरं सत्त्वं बलमालम्ब्याऽऽस्थाय मुदा उत्साहेन हरेः सिंहस्य नादं मुक्त्वा । सिंहनादं कृत्वेत्यर्थः । समकालमेककालम् । अत्यन्तसंयोगे द्वितीया । एक ओघो येषां तैरेकौघैः एकप्रहारैः शरैरिषुभिरभ्रमाकाशं तदा तस्मिन्काले आततैरे आच्छादयामास । 'ऋच्छत्यृताम्' इति गुणः । चक्रबन्धाख्योऽयश्चित्रविशेषोऽलङ्कारः पूर्वोक्तरूपकेण संसृज्यते । चक्रबन्धोद्धारस्तु—दशमण्डलरेखात्मके नवमण्डलान्तरालवति चक्रे नाभिस्थानेन सहैकोनविंशतिकोष्ठ प्रत्येकं द्व्यक्षरगतं पङ्क्तित्रयं समरेखया लिखित्वा तत्रैकस्यां पङ्क्तौ वामपार्श्वप्रक्रमेण आद्यपादमालिख्य तथा प्रादक्षिण्येन द्वितीयतृतीययोर्द्वितीयतृतीयौ लिखित्वा नेमिस्थाने बाह्यवलये साऽक्षरकोष्ठषट्केन सहाष्टादशकोष्ठवति तृतीयपादान्तकोष्ठवर्तिवर्णमारभ्य प्रादक्षिण्येन चतुर्थपादं लिखित्वा तत्रैव समापयेत् । तत्र तत्राद्यन्तवर्णैः सह चतुर्थपादोद्धारः । तत्र नाभिस्थाने आद्यपादत्रयदशमाक्षरसंवादः । तृतीयान्तकोष्ठे चतुर्थाद्यन्तवर्णयोः संवादः । तृतीयवलये 'माघकाव्यमिदं' षष्ठे 'शिशुपालवधः' इति कविकाव्यनामोद्धारः । शार्दूलविक्रीडितं वृत्तम् ॥ १२० ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां शिशुपालवधकाव्यव्याख्यायां
सर्वङ्कषाख्यायाम् एकोनविंशतितमः सर्गः ॥ १९ ॥

---

## विंशः सर्गः ।

**मुखमुल्लसितत्रिलेख(१)मुच्चैर्भिदुरभ्रूयुगभीषणं दधानः ॥**
**समिताविति विक्रमानमृष्यन् गतभीराह्वत चेदिराण्मुरारिम् ॥ १ ॥**

**मुखमिति** ॥ अथ चेदिराट् चैद्यः समितौ समरे मुरारिं कृष्णम् आह्वत आह्वास्त स्पर्धयाऽऽहूतवान् । किंभूतश्चेदिराट् इति पूर्वोक्तप्रकारेण मुरारेः विक्रमं पौरुषम् अमृष्यन् असहमानः, अत एव अपरं किंभूतः चैद्यः गतभीः निःसाध्वसः, पुनः किंभूतः मुखं दधानः बिभ्राणः, किंभूतं मुखम् उल्लसितत्रिलेखं स्फुरमाणत्रिराजिश्रि, अपरं किंभूतं मुखं भिदुरभ्रूयुगभीषणं कुटिलमुखरोमराजिभयानकम् । आह्वतेति 'स्पर्धायामाङः' इति तङ् । 'आत्मनेपदेष्वन्यतरस्या'मिति वा च्लेरङादेशः । चेदिषु राजते इति चेदिराट् सम्पदादिसूत्रेण क्विप् । अथ वा राजशब्दप्रकरणाऽऽहृतराट्शब्दोऽप्यस्ति । यदुक्तं–राजाऽथ पार्थिवो राट् भूक्षित् मूर्धाभिषिक्तश्च । एवं षष्ठीसमासः । औपच्छन्दसिकं वृत्तम् अत्र सर्गे । रणलुगे युन् प्राणयुगलस्याद्वेतालीयं गतमौपवेदम्(२) ॥ १ ॥

मुखमिति ॥ इतीत्थं समितावाजौ । 'समित्याजिसमिद्युधः' इत्यमरः । विक्रमान् मुरारेः पराक्रमान् अमृष्यन्नसहमानः अत एव तिस्रो रेखास्त्रिरेखाः । 'दिक्सङ्ख्ये संज्ञायाम्' इति समासः । ता उल्लसिता क्रोधादुद्भूता यस्मिंस्तदुल्लसितत्रिरेखम् । क्वचित् 'त्रिलोकम्' इत्यपि पाठः । तथा भिदुरेण ग्रन्थिलेन भ्रूयुगेन भीषणं भयङ्करम् उच्चैरुन्नतं मुखं दधानः चेदिषु राजते चेदिराट् । सम्पदादिभ्यः क्विप् । यद्वा चेदीनां राट् चेदिराट् । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । 'राजा राट् पार्थिवः क्ष्माभृत्' इत्यमरः । गतभीर्निर्भीकः सन्

---

(१) त्रिरेखं । (२) अनवस्थितान्यक्षराणि स्फुटमर्थमक्लेशेन न प्रकटयन्त्येतानि ।

मुरारिं हरिम् आह्वत । 'अयमहं, क्वासि मामभ्युपेहि' इति स्पर्धया अमर्षादाकारयामासेत्यर्थः ।विनाशकाले विपरीतबुद्धेर्दुर्वारत्वादिति भावः। 'स्पर्धायामाङः' इति ह्वयतेर्लुङि तङ् 'आत्मनेपदेष्वन्यतरस्याम्' इति च्लेरङादेशः। अत्रामर्षस्य विशेषणगत्या आह्वानहेतुत्वात्काव्यलिङ्गम् । सर्गेऽस्मिन्नौपच्छन्दसिकं वृत्तम् । वैतालीये गुर्वाधिक्यात् । तदुक्तं 'वैतालीये द्विः स्वरा अयुक् पादे युग्वसवोऽन्ते र्लगः। औपच्छन्दसिकम्' इति ॥ १ ॥

**शितचक्रनिपातसम्प्रतीक्षं वहतः स्कन्धगतं च तस्य मृत्युम् ॥**
**अभिशौरि रथोऽथ नादिताऽश्वः प्रययौ सारथिरूपया नियत्या ॥ २ ॥**

**शितेति ॥ अथाऽनन्तरं तस्य चैद्यस्य रथः स्यन्दनः अभिशौरि भगवत्संमुखं प्रययौ प्रतस्थे । किंभूतस्य तस्य स्कन्धगतं मृत्युम् अन्तिके स्थितं मरणं वहतः धारयतः । स्कन्धे चेत् अन्तकोऽस्य स्थितः, तत्कथमसौ न ममारेत्याह—किंभूतं मृत्युं शितचक्रनिपातसम्प्रतीक्षं शितचक्रस्य तीव्रचक्रस्य निपातं निपतनं सम्प्रतीक्षते प्रतिपालयतीति तथा तं तीक्ष्णसुदर्शनाभिघातं प्रतिपालयन्तं, किंलक्षणो रथः सारथिरूपया नियत्या नोदिताऽश्वः सूतरूपेण दैवेन प्रेरिततुरगः। सूतरूपमाश्रित्य दैवमेव तस्य मरणाय रणभुवं प्रति तुरगान् प्रेरयामासेत्यर्थः । चशब्दः उत्तरक्रियापेक्षया समुच्चयार्थः ॥ २ ॥**

शितेति ॥ अथ आह्वानाऽनन्तरं शितचक्रनिपातं शितसुदर्शनप्रहारं सम्प्रतीक्षत इति शितचक्रनिपातसम्प्रतीक्षम् । ईक्षतेः कर्मण्यण् । स्कन्धगतं मृत्युं वहतः तस्य चैद्यस्य रथः सारथिरूपया नियत्या विधिनेति रूपकम् । 'भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । नोदिताश्वः प्रेरिताश्वः सन् अभिशौरि शौरिमभि । आभिमुख्येऽव्ययीभावः । 'अव्ययादाप्सुपः' इति सुपो लुक् । प्रययौ प्रतस्थे ॥ २ ॥

**अभिचैद्यमगाद्रथोऽपि शौरेरवनिं जागुडकुङ्कुमाऽभिताम्रैः ॥**
**गुरुनेमिनिपीडनाऽवदीर्णव्यसुदेहस्रुतशोणितैर्विलिम्पन् ॥ ३ ॥**

**अभिचैद्यमिति ॥ शौरेः श्रीकृष्णस्य रथः अभिचैद्यम् अगात् चेदिपतिसंमुखम् जगाम। अपिशब्दः पूर्वापेक्षया समुच्चयं ब्रुवन् एककालत्वमाह। यदा चैद्यरथः अभिशौरि ययौ तदा श्रीकृष्णरथोऽपि चैद्याभिमुखमित्यर्थः । किंभूतः शौरेः रथः अवनिं पृथिवीं विलिम्पन् लिप्तां विदधत्, कैः गुरुनेमिनिपीडनाऽवदीर्णव्यसुदेहस्रुतशोणितैः गुरुः गुर्वी यासौ नेमिः प्रधिः तया यन्निपीडनं क्नोपनं तेनाऽवदीर्णा निष्पिष्टा ये व्यसुदेहाः मृतशरीराणि तेभ्यः स्रुतानि निर्यातानि यानि शोणितानि तैः, किंभूतैः व्यसुदेहस्रुतशोणितैः जागुडकुङ्कुमाभिताम्रैः जागुडो देशविशेषः तत्र भवं जागुडम्, एवंभूतं यत् कुङ्कुमं घुसृणं तद्वदभिताम्राणि अतिलोहितानि तैः। जागुडः काश्मीरश्च कुङ्कुमाऽऽकर इति भावः ॥ ३ ॥**

अभिचैद्यमिति ॥ अथ शौरेः कृष्णस्य रथोऽपि, जागुडो देशविशेषः तत्र यत्कुङ्कुमं तद्वदभिताम्रैररुणैरित्युपमा। यावकेति पाठे यावकश्च कुङ्कुमं च ताभ्यामभिताम्रैरित्यर्थः। गुरूणां नेमीनां चक्रधाराणां निपीडनेन नोदनेनाऽवदीर्णेभ्यो व्यसूनां विगतप्राणानां देहेभ्यः स्रुतैः शोणितैरसृग्भिरवनिं विलिम्पन्नुपदिहानः सन् अभिचैद्यं चैद्यमभि, समासो व्यासो वा विकल्पात्। अगात्। 'इणो गा लुङि' इति गादेशः॥३॥

**स निरायतकेतनांऽशुकान्तः कलनिक्वाणकरालकिङ्किणीकः ॥**
**विरराज रिपूद्धति(१)प्रतिज्ञामुखरो मुक्तशिखः स्वयं नु मृत्युः ॥ ४ ॥**

**सहेति ॥ स भगवद्रथो विरराज । किंभूतः सः निरायतकेतनांऽशुकान्तः निरायतः**

---

(१) रिपुक्षय।

सरलः केतनस्य ध्वजस्य अंशुकं वस्त्रं तस्य अन्तः प्रान्तः कोटिर्यस्य सः तथा लम्बमानवैजयन्तीकः, पुनः किंभूतः सः कलनिक्वाणकरालकिङ्किणीकः कलनिक्वाणा मधुरस्वराः करालाः सुस्वराः सशब्दा वा किङ्किण्यो घण्टिकाः यस्य सः तथा मधुरध्वनिभासुरघण्टाकः। पुनः किंभूतः सः, अतश्चोत्प्रेक्ष्यते—नु इति वितर्के, स्वयं मृत्युरिव अन्तक इव । किंभूतो मृत्युः रिपूद्धतिप्रतिज्ञामुखरः रिपूणां शत्रूणाम् उद्धतिर्मारणं तस्य प्रतिज्ञा सन्धा तस्यै मुखरः वाचालः, रिपून् हनिष्यामीति प्रतिज्ञया वदन्, अत एवाऽपरं किंभूतोऽन्तकः मुक्तशिखः मुक्तमूर्धजः । प्रतिजानता हि मुक्तमूर्धजेन भवितव्यमित्याचारः । किङ्किणीध्वनेर्वचनमुपमानं, वैजयन्त्याः शिखोपमानम् ॥ ४ ॥

स इति ॥ निरायतोऽतिदीर्घः केतनांशुकान्तः ध्वजपटाञ्चलो यस्य सः कलनिक्वाणैः मधुरस्वरैः करालाः कुशलाः प्रगल्भाः किङ्किण्यः क्षुद्रघण्टिका यस्य स तथोक्तः। 'नद्यृतश्च' इति कप् । 'किङ्किणी क्षुद्रघण्टिका' इत्यमरः । स कृष्णस्य रथः रिपुक्षयस्य शिशुपालवधस्य प्रतिज्ञया मुखरो वाचालः, अत एव मुक्तशिखो मुक्तकेशः विरराज । नाऽहमेनमहत्वा शिखाबन्धं करिष्यामीत्युद्घोषयन्नित्यर्थः। स्वयं साक्षान्नु मृत्युरन्तकः किमित्युत्प्रेक्षा ॥ ४ ॥

**सजलाम्बुधराऽऽरवानुकारी ध्वनिरापूरितदिङ्मुखो रथस्य ॥**
**प्रगुणीकृतकेकमूर्ध्वकण्ठैः शितिकण्ठैरुपकर्णयाम्बभूवे ॥ ५ ॥**

सजलेति ॥ रथस्य ध्वनिः स्यन्दनस्य चीत्कारः शितिकण्ठैर्मयूरैः उपकर्णयाम्बभूवे अश्रावि । किंभूतैः शितिकण्ठैः ऊर्ध्वकण्ठैः उद्ग्रीवैः, कथमश्रावि प्रगुणीकृतकेकं यथा भवत्येवं प्रगुणीकृता वर्षाभ्रान्त्या द्विगुणिता केका वाशितं यत्र तद्यथा भवत्येवम् । वर्षासु हि प्रहर्षान्नितरां बर्हिणः केकायन्ते । किंभूतो रथस्य ध्वनिः सजलाऽम्बुधराऽऽरवानुकारी सजलो जलनिर्भरो योऽम्बुधरो मेघः तस्य यः आरवः गर्जितं तमनुकरोति विडम्बयतीति तथा । निर्जलोऽपि मेघः अम्बुधरादिभिः शब्दैरुच्यते, यथा अपचन्नपि सूदः पाचकः इति सजलग्रहणम् । पुनः किंभूतो ध्वनिः आपूरितदिङ्मुखः व्याप्ताऽऽशाविवरः ॥ ५ ॥

सजलेति ॥ सजलोऽम्बुधरः तस्यारवं गर्जितमनुकरोतीति तथोक्तः । तद्वद्गम्भीर इत्यर्थः। उपमालङ्कारः । आपूरितदिङ्मुखो व्याप्तदिगन्तो रथस्य कृष्णरथस्य ध्वनिः, ऊर्ध्वाः कण्ठा येषां तैरूर्ध्वकण्ठैः । आकस्मिकघनरवलोभाद्विस्मयहर्षोन्नमितकन्धरैरित्यर्थः। शितिकण्ठैर्नीलकण्ठैः प्रगुणीकृता अतितारीकृताः केका यस्मिन्कर्मणि तद्यथा तथा । 'केका वाणी मयूरस्य' इत्यमरः । उपकर्णयाम्बभूवे । मेघारवभ्रान्त्या दत्तकर्णैरित्यर्थः । एतेन भ्रान्तिमदलङ्कारो व्यज्यत इति वस्तुनाऽलङ्कारध्वनिः ॥ ५ ॥

**अभिवीक्ष्य विदर्भराजपुत्रीकुचकाश्मीरजचिह्नमच्युतोरः ॥**
**चिरसञ्चितयाऽपि(१) चेदिराजः सहसाऽवाप रुषा तदैव योगम् ॥ ६ ॥**

अभिवीक्ष्येति ॥ चेदिराजः शिशुपालः चिरसञ्चितयाऽपि बहुकालार्जितयापि रुषा क्रुधा सहसा तत्क्षणं तदैव तदानीमेव योगमवाप सम्बन्धं भेजे । यद्यस्य नित्यस्थिता रुट्, तत् कस्मादसौ तदैव तया सह युयुजे इत्याह—किं कृत्वा अच्युतोरः श्रीभगवद्वक्षः एवंविधमभिवीक्ष्य दृष्ट्वा, योगं भेजे इति सम्बन्धः । किंभूतमच्युतोरः विदर्भराजपुत्रीकुचकाश्मीरजचिह्नं विदर्भराजस्य भीष्मकस्य या पुत्री रुक्मिणी तस्याः कुचौ पयोधरौ तयोः काश्मीरजस्य कुङ्कुमस्य चिह्नं लक्ष्म यत्र तत्तथा भीष्मकात्मजास्तनकुङ्कुमाऽङ्कितम् । भग-

(१) सेवितयाऽपि ।

वानपि किल रुक्मिणीमाश्लिष्य योद्धुं निरगमत्। सा च पूर्वं भ्रात्रा शिशुपालाय दत्ताऽभूत्। भगवताऽभ्यागत्य हृत्वा आदायि। तदारभ्याऽसौ श्रीकृष्णाय चुक्रोध। अतश्च चिरसञ्चितयाऽपि रुषा वैरकारणदर्शनादेवाऽसौ तया युज्यते स्म। योऽपि कामी, स कामुकाऽन्तरस्य नायिकायोगचिह्नान्यालोक्य निजया कान्तया युज्यते ॥ ६ ॥

अभिवीक्ष्येति ॥ चेदिराजः शिशुपालः। राजाऽहःसखिभ्यष्टच्। विदर्भराजपुत्र्या रुक्मिण्याः कुचयोर्यत्काश्मीरजं कुङ्कुमं तच्चिह्नं यस्य तदच्युतोरः कृष्णवक्षः अभिवीक्ष्य चिरसेवितया चिरोपयुक्तयाऽपि। रुक्मिणीहरणात्प्रभृति सम्भृतयाऽपीत्यर्थः। रुषा रोषेण तदैव तदानीमिवेत्युत्प्रेक्षा। सहसा योगं सम्बन्धमवाप। यथा कामी काम्यन्तरभोगचिह्नदर्शनोद्दीप्तः कान्तया संयुज्यते, तद्वदित्यर्थः। परमार्थस्वरूप एव कोपो वैदर्भीकुचकुङ्कुमदर्शनादुद्दीपित इत्यर्थः। अत्र प्रकृतरुड्विशेषणसाम्यादप्रकृतकान्ताप्रतीतेः समासोक्तिः। उक्तोत्प्रेक्षा त्वङ्गमस्याः ॥ ६ ॥

**जनिताऽशनिशब्दशङ्कमुच्चैर्धनुरास्फालितमध्वनन्नृपेण ॥**
**चपलाऽनिलबोध्यमान(१)कल्पक्षयकालाऽग्निशिखानिभस्फुरज्ज्यम् ॥७॥**

जनितेति ॥ नृपेण चेदिराजेन धनुश्चापम् आस्फालितम् आहतमाकृष्टं सत् उच्चैरतिशयेन अध्वनत् ननाद। किंभूतं धनुः जनिताऽशनिशब्दशङ्कं जनिता अशनिशब्दस्य शङ्का येन तत् विहितवज्रनिर्घोषभ्रान्ति, पुनः किंभूतं धनुः चपलाऽनिलबोध्यमानकल्पक्षयकालाग्निशिखानिभस्फुरज्ज्यं चपलेन वेगवता अनिलेन मारुतेन बोध्यमानः सन्धुक्ष्यमाणः यः कल्पक्षयकालाग्निः युगान्तसमयदहनः तस्य शिखा ज्वाला तन्निभा तत्सदृशी स्फुरन्ती कम्पमाना ज्या मौर्वी यस्य तत् तथा ॥ ७ ॥

जनितेति ॥ नृपेण चेदिपेन आस्फालितं सङ्घट्टितम् अत एव चपलानिलेन तीव्रानिलेन चोद्यमानस्य संवर्ध्यमानस्य कल्पक्षयकालाग्नेर्या शिखा ज्वाला तया समाना तन्निभा। इति नित्यसमासः। सा स्फुरन्ती दोधूयमाना ज्या मौर्वी यस्य तत्तथोक्तं धनुः, जनिता उत्पादिता अशनिशब्दशङ्का यस्मिन् कर्मणि तत्तथोक्तम् उच्चैस्तरामध्वनत्। अत्राग्निशिखानिभेत्युपमाया अशनिशब्दशङ्केति भ्रान्तिमतः आस्फालितमध्वनदिति पदार्थहेतुककाव्यलिङ्गस्य च सापेक्षत्वात्सङ्करः ॥ ७ ॥

**समकालमिवाऽभिलक्षणीयग्रहसन्धानविकर्षणाऽपवर्गः ॥**
**अथ साऽभिसरं शरैस्तरस्वी स तिरस्कर्तुमुपेन्द्रमभ्यवर्षत् ॥ ८ ॥**

समकालमिवेति ॥ अथाऽनन्तरं तरस्वी बलवान् चैद्यः उपेन्द्रं श्रीकृष्णं साऽभिसरं ससहायं शरैस्तिरस्कर्तुं विशिखैः प्रोर्णवितुम् अभिभवितुं वा अभ्यवर्षत् असिञ्चत्। किंभूतैः शरैः समकालमिव युगपदिव अभिलक्षणीयाः दृश्याः ग्रहसन्धानविकर्षणाऽपवर्गाः आदानाऽऽनयनाऽऽकर्षणक्षेपाः येषां ते तथा तैः। युगपद्दृश्यग्रहणसंयोजनाऽऽकर्षणमोक्षैरित्यर्थः। अभिसरन्तीत्यभिसराः भृत्याः तैः सह वर्तमानाः साऽभिसराः तं साऽभिसरम्। 'अनुसरमनुप्लव(?)सहायमनुजीवनं तथाऽभिसर'मिति हलायुधः ॥ ८ ॥

समकालमिवेति ॥ अथ धनुरास्फालनाऽनन्तरं तरस्वी बलवान् स चैद्यः समकालमिवेत्युत्प्रेक्षा। अत्यन्तसंयोगे द्वितीया। अभिलक्षणीया दृश्याः ग्रहो ग्रहणं सन्धानं मौर्व्या योजनं विकर्षणमाकर्षणमपवर्गो मोक्षश्च येषां तैः शरैः साऽभिसरं सानुचरमुपेन्द्रं हरिं तिरस्कर्तुमाच्छादयितुमभ्यवर्षत् ॥ ८ ॥

**ऋजुताफलयोग(२)शुद्धिभाजां गुरुपक्षाश्रयिणां शिलीमुखानाम् ॥**
**गुणिना नतिमागतेन सन्धिः सह चापेन समञ्जसो बभूव ॥ ९ ॥**

---

(१) चोद्यमान। (२) शुद्धियोगभाजामुरु।

ऋजुतेति ॥ शिलीमुखानां बाणानां चापेन सह धनुषा समं सन्धिः सन्धानं समञ्जसो बभूव समीचीनोऽभवत् । शरा धनुश्च सुदृढा मिलिता इत्यर्थः । किंभूतानां शिलीमुखानाम् ऋजुताफलयोगशुद्धिभाजाम् ऋजुता स्पष्टता सरलता वा फलयोगः शल्यसम्बन्धः शुद्धिर्निर्विषत्वं गतिनिर्दोषता वा, ऋजुता च फलयोगश्च शुद्धिश्च ताः ऋजुताफलयोगसिद्धयः ताः भजन्ते आश्रयन्ते तथा तेषाम्, अपरं किंभूतानाम् उरुपक्षाश्रयिणाम् उरूणां विस्तीर्णानां महतां पक्षाणां कङ्कपत्राणाम् आश्रयो विद्यते येषां ते तथा तेषां, किंभूतेन धनुषा गुणिना सज्येन, पुनः किंभूतेन धनुषा नतिमागतेन आकर्षकुटिलेन । अथ च समञ्जसोऽनुरूपः युक्तोऽभूत् इत्यर्थान्तरम् । ये किल ऋजवः स्पष्टाशया महाफलाश्च शुद्धाश्च सपक्षाश्च, तेषां गुणवता नम्रेण च सह सन्धिरनुरूपो भवति ॥ ९ ॥

ऋजुतेति ॥ ऋजुता अवक्रत्वम्, अकुटिलबुद्धित्वं च फलं शल्यं श्रेयश्च तेन योगः शुद्धिर्लोहशुद्धिर्निर्विषत्वं च, अन्यत्र बाह्याभ्यन्तरशुद्धिस्तां भजन्तीति तद्भाजां, गुरोर्महतः पक्षस्य कङ्कादिपत्रस्य सहायस्य चाश्रयः आश्रयणमेषामस्तीति गुरुपक्षाश्रयिणां शिलीमुखानां शराणाम् । गुणिना ज्यावता नतिमागतेन आकर्षणाकुञ्चितकोटित्वं विधेयत्वं च प्राप्तेन चापेन सह सन्धिः सम्बन्धः समञ्जसः साधीयान् बभूव। अबलवतां बलिना नम्रेण सन्धिरेवोचित इति भावः । अत्र प्रस्तुतचापशिलीमुखयोर्विशेषणसाम्यादप्रस्तुताऽरिविजिगीषुवस्तुप्रतीतेः समासोक्तिः । तच्च साम्यं वाच्यप्रतीयमानयोरभेदाध्यवसायात्सिद्धम् । न चाऽत्र समानाऽलङ्कारशङ्का कार्या । 'समानालङ्कृतिर्योगे वस्तुनोरनुरूपयोः' इत्यनुरूपयोरेव वस्तुनोर्योगेन तस्योपस्थानादित्यनुसन्धेयम् । विजिगीषुगुणयोगिनोरिह भेदात् ॥ ९ ॥

अविषह्यतमे कृताऽधिकारं वशिना कर्मणि चेदिपार्थिवेन ॥
अरसद्धनुरुच्चकैर्दृढार्तिप्रसभाकर्षणवेपमानजीवम् ॥ १० ॥

अविषह्यतमे इति ॥ धनुः कार्मुकम् उच्चकैस्तारम् अरसत् दध्वान । किंभूतं धनुः वशिना प्रभुणा चेदिपार्थिवेन शिशुपालेन अविषह्यतमे असहनीये दुष्करे कर्मणि रिपुवधरूपे कृताधिकारं कृतः अधिकारः प्रयोगो यस्य तत्तथा, नियुज्यमानमित्यर्थः । पुनः किंभूतं धनुः दृढाऽर्ति आकर्षवशात् भृशपीडं, यद्वा दृढा बलवती अर्तिः कोटिः यस्य तत्तथा, अपरं किंभूतं धनुः प्रसभाकर्षणवेपमानजीवं प्रसभं बलात्कारेण यदाकर्षणमास्फालनं तेन वेपमाना स्फुरन्ती जीवा शिञ्जिनी यस्य तत्तथा । अथ चोक्तिलेशः–यः किल वशिना दृढशासनेन पार्थिवेन दुःसहे व्यापारे राज्यस्थानादिके विहितनियोगः, स यदा केनचित् स्खलितेन प्रसभं सभायामाकृष्यते, तदाऽसौ वेपमानजीवः चलत्प्राणो भवति । अत एव दृढया आर्त्या उच्चै रसति फूत्कुरुते । जीवा ज्या असवश्च ॥ १० ॥

अविषह्यतमे इति ॥ वशिना स्वतन्त्रेण चेदिपार्थिवेन अविषह्यतमे दुष्करे कर्मण्यरिजयव्यापारे कृताधिकारं कृतनियोगं, नियुज्यमानमित्यर्थः । अत एव दृढयोरर्त्योः कोटयोः प्रसभाकर्षणेन वेपमाना दोधूयमाना जीवा ज्या यस्य तत्, अन्यत्र दृढयाऽऽर्त्या ताडनेन प्रसभाकर्षणेन च वेपमानः कम्पमानो जीवः प्राणो यस्येत्यर्थः । 'अर्तिः पीडाधनुष्कोटयोः' इत्यमरः ।

'जीवः प्राणेऽस्त्रियां ना तु जन्तावात्मनि गीष्पतौ ।
त्रिषु जीवति मौर्व्यां स्त्री'

इति वैजयन्ती । धनुरुच्चकैररसत् अध्वनदाक्रन्दत । यथा राज्ञा नियुक्तः पराधीनः बलादाकृष्यमाणः क्रोशति, तद्वदित्यर्थः । अत्रापि प्रकृतविशेषणसाम्यादप्रकृताऽपराध्याधिकृतपुरुषप्रतीतेः समासोक्तिः ॥ १० ॥

अनुसन्ततिपातिनः पटुत्वं दधतः शुद्धिभृतो गृहीतपक्षाः ॥
वदनादिव वादिनोऽथ शब्दाः क्षितिभर्तुर्धनुषः शराः प्रसस्रुः ॥ ११ ॥

अनुसन्ततीति ॥ अथाऽनन्तरं क्षितिभर्तुः पृथिवीपतेः शिशुपालस्य धनुषः कोदण्डात् शराः बाणाः प्रसस्रुः निरीयुः । किंभूताः शराः अनुसन्ततिपातिनः निरन्तरगामिनः, पुनः किंभूताः पटुत्वं दधतः कार्यसमर्थत्वं धारयन्तः, पुनः किंभूताः शुद्धिभृतः निर्विषाः सरलगामिनो वा, पुनः किंभूताः गृहीतपक्षाः धृतकङ्कादिपतत्राः, एवंविधाः शराः । के कस्मादिव प्रसस्रुरित्याह—वादिनः बौद्धादेर्वदनात् शब्दा इव । यथा शब्दाः घटपटादयः वादिनः वादकर्तुः मुखात् प्रसरन्ति । तेऽप्यनवरतप्रसारिणः पटवश्च अर्थप्रतिपादनचातुर्यात् शुद्धिभृतः व्याकरणसंस्कृतत्वात् । तथा गृहीतपक्षाश्च, गृहीतः स्वीकृतः पक्षः 'नित्यः शब्दोऽनित्यो वे'त्यादिकः यैस्ते तथा ॥ ११ ॥

अनुसन्ततीति ॥ अथाकर्षणानन्तरं क्षितिभर्तुश्चैद्यस्य धनुषः सकाशात् अनुसन्तत्या पतन्तीत्यनुसन्ततिपातिनोऽविच्छेदवर्तिनः पटुत्वं लक्ष्यभेदपाटवं वाचकत्वशक्तिं च दधतः शुद्धिभृतः लोहशुद्धिभृतः निर्विषा वा, अन्यत्र साधव इत्यर्थः । गृहीतपक्षाः स्वीकृतकङ्कादिपत्राः, अन्यत्र गृहीतनित्यत्वादिसाध्यार्थाः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती । शराः वादिनः कथकस्य वदनाच्छब्दाः प्रतिज्ञाहेत्वादय इव प्रसस्रुर्निर्जग्मुः । श्लिष्टविशेषणेयमुपमेति केचित् । श्लेष एव प्रकृताऽप्रकृतविषय इत्यन्ये ॥

गवलाऽसितकान्ति तस्य मध्यस्थितघोराऽऽयतबाहुदण्डनासम् ॥
ददृशे कुपिताऽन्तकोन्नमद्भ्रूयुगभीमाकृति कार्मुकं जनेन ॥ १२ ॥

गवलेति ॥ तस्य चेदिपतेः कार्मुकं चापं कुपिताऽन्तकोन्नमद्भ्रूयुगभीमाकृति जनेन सैन्यलोकेन ददृशे आलुलोके, कुपितः क्रुद्धो योऽन्तको मृत्युः तस्य उन्नमत् ऊर्ध्वीभवत् यद् भ्रूयुगं भ्रुकुटीयुगलं तस्येव भीमा भीषणा आकृतिराकारो यस्य तत्तथोक्तं रुषितमृत्युकुटिलभ्रुकुटीयुगलभयानकाऽऽकारम्, किंभूतं कार्मुकं यतः गवलाऽसितकान्ति गवलस्येव असिता कान्तिर्यस्य तत्तथा महिषविषाणकृष्णच्छवि, अपरं किंभूतं चापं मध्यस्थितघोरायतबाहुदण्डनासं मध्ये स्थितः अन्तरे वर्तमानो यो घोरो भयङ्करो बाहुदण्डः भुजरूपो दण्डः स एव नासा नासिका यस्य तत्तथोक्तम् । भ्रूयुगले हि नासिकया भवितव्यम् ॥

गवलेति ॥ 'गवलं माहिषं शृङ्गम्' इत्यमरः । तद्वदसितकान्ति कृष्णवर्णं मध्ये स्थिता घोरा भीमा आयता च बाहुदण्डो नासा नासिकेव यस्मिंस्तत्तथोक्तम् । कुपितस्याऽन्तकस्य मृत्योरुन्नतं यद् भ्रूयुगं तद्वद्भीमा आकृतिर्यस्य तत्तस्य चैद्यस्य कार्मुकं जनेन ददृशे दृष्टम् । सभयविस्मयामीति भावः । उपमालङ्कारः ।

तडिदुज्ज्वलजातरूपपुङ्खैः खमयःश्याममुखैरभिध्वनद्भिः ॥
जलदैरिव रंहसा पतद्भिः पिदधे संहतिशालिभिः शरौघैः ॥ १३ ॥

तडिदिति ॥ अथ शरौघैः रिपुविशिखपूगैः खं विष्णुपदं पिदधे व्यानशे, कैरिव जलदैरिव । यथा जलदैर्मेघैराकाशं पिधीयते, तद्वत् । अधुना श्लेषः—किंभूतैः शरौघैर्जलदैश्च, शरैस्तावत् तडिदुज्ज्वलजातरूपपुङ्खैः तडिद्वत् शम्पेव उज्ज्वला दीप्यमानाः जातरूपस्य सुवर्णस्य पुङ्खाः प्रान्तभागा येषां ते तथा तैः, पुनः किंभूतैः शरैः अयःश्याममुखैः अयसा शस्त्रेण श्यामं मुखं येषां ते तथा तैः लोहकृष्णमुखैः, पुनः किंभूतैः शरैः अभिध्वनद्भिः शब्दायमानैः, पुनः किंभूतैः शरैः यतो रंहसा पतद्भिः जवेन

व्रजद्भिः, पुनः किंभूतैः शरैः संहतिशालिभिः संहत्या संहतत्वेन शालन्ति यान्ति ते, अथ वा शालन्ते ते संहतिशालिनस्तैः नीरन्ध्रगामिभिः । मेघैरपि, तडिता उज्ज्वलं मनोहरं जातं रूपम् आकारो येषां ते तथा तैः, अयोवत् लोहवत् श्यामसुखैश्च तथा अभिध्वनद्भिः तथा रंहसा आटोपेन पतद्भिश्च, तथा संहतिशालिभिर्बाहुल्यगामिभिः खं पिधीयते । पिदधे इत्यत्र अपेरकारस्य लोपः, 'वष्टि भागुरिरल्लोप'मित्यनेन ।। १३ ।।

तडिदिति ॥ तडिद्वदुज्ज्वला दीप्ता जातरूपस्य हेम्नः पुङ्खाः कर्तर्यो येषां तः । अयोवत् श्याममुखैः श्यामाग्रैरभिध्वनद्भिर्ध्वनिभिः स्वनत्पक्षैर्गर्जद्भिश्च रंहसा वेगेन पतद्भिर्धावद्भिः संहतिशालिभिः सङ्घशालिभिः शरैर्घैर्जलदैरिव खमाकाशं पिदधे पिहितम् । कर्मणि लिट् । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यपेरकारलोपः । उपमालङ्कारः ॥ १३ ॥

शितशल्यमुखाऽवभिन्न(१)मेघक्षरदम्भःस्फुटतीव्रवेदनानाम् ॥
स्रवदस्र(२)ततीव चक्रवालं ककुभामौर्णविषुः सुवर्णपुङ्खाः ॥ १४ ॥

शितेति ॥ सुवर्णपुङ्खाः कनकप्रान्ताः शराः ककुभां चक्रवालं दिशां वलयम् और्णविषुः पृथुः । किंभूतं दिग्वलयं, शितेति । शितैस्तीव्रैः शल्यमुखैः फलप्रान्तैः अवभिन्ना विदीर्णा ये मेघा जलदाः तेभ्यः क्षरत् स्रवत् अम्भः पानीयं यस्य तत्तथा, अपरं किंभूतं दिशां चक्रवालम्, अतश्चोत्प्रेक्ष्यते—स्रवदस्रतति इव स्रवन्ती श्च्योतन्ती अस्रततिर्बाष्पसंहतिर्यस्य तत्तथा क्षरदश्रुधारमिव, किंभूतानां ककुभां यतः स्फुटतीव्रवेदनानां शरप्रहारात् स्फुटा प्रकटा तीव्रा दुःसहा वेदना पीडा यासां तास्तथा तासां प्रकटदुःसहपीडानाम् । यो हि शरप्रहारभिन्नः पीडितश्च, सोऽवश्यं बाष्पायते । और्णविषुरिति ऊर्णुञो लुङ्, च्लेः सिच् इडागमः ।'विभाषोर्णो'रित्यङित्त्वपक्षे 'ऊर्णोतेर्विभाषे'ति वृद्धिविकल्पः । आडजादीनाम्, आटश्च ।। १४ ।।

शितेति ॥ सुवर्णपुङ्खाः सुवर्णकर्तरीकाः शराः शितैर्निशितैः शल्यमुखैः फलाग्रैः अवदीर्णा अवभिन्ना ये मेघास्तेभ्यः क्षरता स्रवता अम्भसा स्फुटा व्यक्ता तीव्रा वेदना यासां ककुभां तासां सम्बन्धि, स्रवन्ती अस्रुततिरस्रुसन्ततिर्यस्य तदिव शरप्रहारवेदनया रुदादिव स्थितमित्युत्प्रेक्षा । चक्रवालं मण्डलमौर्णविषुराच्छादयामासुः । ऊर्णोतेर्लुङीडागमे तस्य 'विभाषोर्णोः' इति ङित्त्वाभावपक्षे 'ऊर्णोतेर्विभाषा' इति वृद्धिविकल्पात्पक्षे गुणः । अजादित्वात् 'आटश्च' इति वृद्धिः ॥ १४ ॥

अमनोहरतां यती जनस्य क्षणमालोकपथान्नभःसदां च(३) ॥
रुरुधे पिहिताऽहिमद्युतिर्द्यौर्विशिखैरन्तरिताऽच्युता धरित्री ॥ १५ ॥

अमनोहरतामिति ॥ विशिखैश्चैद्यबाणैः जनस्य लोकस्य नभःसदां च खेचराणां देवानां च आलोकपथाद्दर्शनमार्गात् यथाक्रमं द्यौर्व्योम धरित्री भूमिश्च क्षणं रुरुधे रुद्धा निवर्तिता । नभसि हि शरच्छन्ने जनाः तत् नाऽद्राक्षुः, धरां तु रणेक्षणलोला न नभःसदः । किंभूता द्यौः पिहिताऽहिमद्युतिः छादितदिनकरा, किंभूता धरित्री अन्तरिताऽच्युता स्थगितमाधवा च, अत एव किंभूता द्यौः धरित्री च अमनोहरतां यती अहृद्यत्वं प्राप्नुवती ॥

अमनोरमतामिति ॥ विशिखैश्चैद्यबाणैः कर्तृभिः पिहिताऽहिमद्युतिस्तिरोहितार्का अत एवाऽमनोरमतां यती प्राप्नुवती । इणः शतरि 'उगितश्च' इति ङीप् । द्यौराकाशं जनस्य भौमलोकस्य आलोकपथाद्दृष्टिमार्गात्क्षणं रुरुधे रुद्धा । । रुधेः कर्मणि लिट् । अत्र पथो रोधाऽपायत्वात् 'ध्रुवमपाये—' इति अपादानत्वे पञ्चमी ।

(१) वदीर्ण । (२) स्रवदस्रु । (३) अमनोरमता..........वा ।

तथाऽन्तरिता च्युता तिरोहिता नष्टा अत एवाऽमनोरमता यतो धरित्री नभःसदां वा आलोकपथादुरुधे। चकारो जनसमुच्चयार्थः। अत्र शुधरिग्योः प्रकृतयोरेव रोधाख्यतुल्यधर्मयोगात्तुल्ययोगिताभेदो, ताभ्यामेव जनस्य नभःसदां यथासङ्ख्यान्वयाद्यथासङ्ख्यालङ्कारः सापेक्षतया सङ्कीर्यते ॥ १९ ॥

**विनिवारितभानुतापमेकं सकलस्याऽपि मुरद्विषो बलस्य ॥**

**शरजालमयं समं समन्तादुरु सद्मेव नराधिपेन तेने ॥ १६ ॥**

**विनिवारितेति ॥** नराधिपेन चैद्येन सकलस्यापि सर्वस्यापि मुरद्विषो बलस्य शौरेः सैन्यस्य विनिवारितभानुतापं रुद्धरविकिरणम् एकं साधारणं समन्तात् समन्ततोऽखण्डं शरजालमयं सायकवृन्दरूपम् उरु महत् सद्म तेने इव भवनमिव कृतम् । तनोत्येवमादौ करोत्यर्थो विद्यते । यथा—

लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः

स्वच्छन्दस्य सुखं जनस्य वसतश्चिन्ताऽनलो वर्धितः ।

एषापि स्वयमेव तुल्यरमणाऽभावाद्वराकी हता

कोऽर्थश्चेतसि वेधसा ननु कृतस्तन्व्यास्तनुं तन्वता ॥ ॥ १६ ॥

विनिवारितेति ॥ नराधिपेन सकलस्यापि मुरद्विषो हरेर्बलस्य सैन्यस्य विनिवारितो भानुतापो येन तदेकमद्वितीयं शरजालमयं बाणवृन्दात्मकम् उरु महत्सद्मेव सदनमिवेत्युत्प्रेक्षा । समं युगपत्समन्तात् तेने । कृतमित्यर्थः । तनोतेः कर्मणि लिट् ॥ १६ ॥

**इति चेदिमहीभृता तदानीं तदनीकं दनुसूनुसूदनस्य ॥**

**वयसामिव चक्रमक्रियाकं परितोऽरोधि विपाटपञ्जरेण ॥ १७ ॥**

**इतीति ॥** चेदिमहीभृता शिशुपालेन तदानीं तस्मिन्नवसरे परितः समन्तात् दनुसूनुसूदनस्य दानवमर्दनस्य तदनीकं सैन्यं समन्तात् अरोधि रुद्धं व्याप्तम्, किंभूतम् कृष्णसैन्यम् अत एवाऽक्रियाकं निष्क्रियम्। किमिवाऽरोधि इत्याह–वयसां चक्रमिव पक्षिणां वृन्दमिव । यथा केनचित् पत्रिपूगपञ्जरेण जालेन पक्षिणां वृन्दं परितो रुध्यते निष्क्रियं च क्रियते । दनुसूनुसूदनादयो नन्द्यादिषु बोद्धव्याः । षत्वं सूदेर्निषिद्धम् ॥ १७ ॥

इतीति ॥ इतीत्थं चेदिमहीभृता चैद्येन तदानीं तत्काले दनुसूनुसूदनस्य दानवान्तकस्य हरेस्तदनीकं बलम् । 'वरूथिनी बलं सैन्यं चक्रं चाऽनीकमस्त्रियाम्' इत्यमरः । वयसां चक्रं पक्षिसङ्घ इव अक्रियाकं निश्चेष्टं यथा तथा विपाटयन्तीति विपाटाः शराः । पचाद्यच् । तैरेव पञ्जरेण परितः सर्वतः अरोधि रुद्धम् । रुधेः कर्मणि लुङ् । उपमा ॥ १७ ॥

**इषुवर्षमनेकमेकवीरस्तदरिप्रस्तुत(१)मच्युतः पृषत्कैः ॥**

**अथ वादिकृतं प्रमाणमन्यैः प्रनिरास प्रतिवादिवत्(२) प्रमाणैः ॥ १८ ॥**

**इषुवर्षमिति ॥** अथाऽनन्तरं तत् अरिप्रस्तुतं शत्रुचैद्यप्रारब्धम् अनेकं बहु इषुवर्षं शरदुर्दिनम् एकवीरो महावीरः अच्युतो भगवान् श्रीकृष्णः पृषत्कैर्बाणैः कृत्वा प्रनिरास प्रैरयत् । क इव निरासेत्याह–प्रतिवादिवत् प्रतिवादी इव । यथा वादिकृतं पूर्वपाक्षिकोद्ग्राहितं प्रमाणं हेतुम् अन्यैः प्रमाणैः बलवत्तरैः कृत्वा प्रतिवादी उत्तरपाक्षिको निरस्यति क्षिपति । एकश्चासौ वीरश्चेत्येकवीरः । 'पूर्वकालैके'ति समासः । एकशब्दः प्रधानार्थः । वीरश्रेष्ठ इत्यर्थः । वीरः सर्वगुणान्वितः । प्रकृतार्थसमर्थको हेतुरत्र प्रमाणम् ॥ १८ ॥

---

(१) प्रच्युत । (२) प्रतिवादीव निराकरोत् ।

इषुवर्षामिति ॥ अथाऽनीकरोधनाऽनन्तरम् एकवीरो महाशूरोऽच्युतो हरिः अरिप्रच्युतं शत्रुगलितं तदनेकमपरिमितमिषुवर्षं पृषत्कैर्बाणैः वादिकृतं वादिना प्रयुक्तं प्रमाणमनुमानम् अन्यैः प्रमाणैः प्रत्यनुमानैः प्रतिवादीव निराकरोत् । 'इवेन समासो विभक्त्यलोपश्च' इति समासात्समासगता श्रौती पूर्णोपमा ॥ १८ ॥

**परि(१)कुञ्चितकूर्परेण तेन श्रवणोपान्तिकनीयमानगव्यम् ॥**
**ध्वनति स्म धनुर्घनान्तमत्तप्रचुरक्रौञ्चरवाऽनुकारमुच्चैः ॥ १९ ॥**

परीति ॥ धनुः कार्मुकम् उच्चैस्तारं ध्वनति स्म ररास । किंभूतं धनुः तेन भगवता श्रवणोपान्तिकनीयमानगव्यं श्रवणोपान्तिकं कर्णसकाशं नीयमाना प्राप्यमाणा गव्या ज्या यस्य तत् तथा, किंभूतेन तेन परिकुञ्चितकूर्परेण वलितबाहुमध्येन, पुनः किंभूतं धनुः घनान्तमत्तप्रचुरक्रौञ्चरवाऽनुकारं घनान्ते शरदि मत्ताः क्षीबाः तथा प्रचुरा बहवो ये क्रौञ्चा हंसाः पक्षिविशेषा वा तेषां रवाऽनुकारं कूजितविडम्बकं, शरत्कालमाद्यमानक्रौञ्चकूजिततुल्यक्रेङ्कारमित्यर्थः ॥ १९ ॥

प्रतीति ॥ प्रतिकुञ्चितकूर्परेण कुञ्चितकफोणिना । 'स्यात्कफोणिस्तु कूर्परः' इत्यमरः । तेन हरिणा श्रवणोपान्तिकं नीयमाना आकृष्यमाणा गव्या ज्या यस्य तत् । 'गव्यं गवां हिते गव्या ज्यायां क्षीरादिके त्रिषु' इति विश्वः । धनुः शार्ङ्गं घनान्ते शरदि ये मत्ताः प्रचुरा भूयः क्रौञ्चास्तेषां रवमनुकरोतीति तदनुकारम् । क्रौञ्चकूजितसदृशं यथा तथेत्यर्थः । कर्मण्यण् । उच्चैस्तारं ध्वनति स्म दध्वान । 'लट् स्मे' इति भूते लट् । स्वभावोक्त्युपमयोः सङ्करः ॥ १९ ॥

**उरसा विततेन पातितांऽसः स मयूराञ्चितमस्तकस्तदानीम् ॥**
**क्षणमालिखितो नु सौष्ठवेन स्थिरपूर्वाऽपरमुष्टिराबभासे(२) ॥ २० ॥**

उरसेति ॥ तदानीं स भगवान् सौष्ठवेन प्रावीण्येन साध्ववस्थानेन क्षणमालिखित इव आबभासे चित्रन्यस्त इव बुबुधे ज्ञातः । किंभूतः सः विततेन विशालेन उरसा वक्षसा उपलक्षितः, पुनः किंभूतः सः पातितांसः नमितस्कन्धः, पुनः किंभूतः सः श्रीकृष्णः मयूराऽञ्चितमस्तकः बर्हरमणीयशिराः, उदग्रीव इत्यर्थः । पुनः किंभूतः सः स्थिरपूर्वाऽपरमुष्टिः स्थिरौ निश्चलौ पूर्वाऽपरौ ज्याग्राहसशरकार्मुकग्राहौ मुष्टी पाणिबन्धौ यस्य सः तथा, निष्पीडपाणिद्वयबन्धः निश्चलाऽऽकर्षः । लिखितोऽप्येवंविधो भवति ॥ २० ॥

उरसेति ॥ तदानीं धनुष्कर्षणसमये विततेन विस्तारितेनोरसा उपलक्षितः पातितांसो नमितस्कन्धः मयूरवदञ्चितं मनोहरं मस्तकं यस्य सः । उन्नमितमूर्धेत्यर्थः । स्थिरौ दृढौ पूर्वाऽपरौ अग्रिमचरमौ मुष्टी गृहीतलस्तकमौर्वीकौ पाणी यस्य स हरिः । सुष्ठु भावः सौष्ठवं तेन सौष्ठवेन स्थानकपाटवेन हेतुना क्षणमालिखितो नु लिखित इव आबभौ वा बभासे किम् । नुशब्दो वितर्कार्थे । 'नु पृच्छायां वितर्के च' इत्यमरः । वाशब्दोऽपि तादृश इत्युत्प्रेक्षाऽलङ्कारोऽयम् ॥ २० ॥

**स्वनतो(३) नितरां रयेण गुर्व्यस्तडिदाकारचलद्गुणादसङ्ख्याः ॥**
**इषवो धनुषः सशब्दमाशु न्यपतन्नम्बुधरादिवाऽम्बुधाराः ॥ २१ ॥**

स्वनत इति ॥ अथ धनुषः चापात् इषवः सायकाः आशु शीघ्रं रयेण न्यपतन् पेतुः निःसस्रुः । कस्मात् का इव अम्बुधरात् अम्बुधारा इव मेघात् अम्भोवृष्टय इव, किंभूताद्धनुषः मेघाच्च नितरां स्वनतः अत्यर्थं ध्वनतः, पुनः किंभूतात् तडिदाकारचलद्गुणात् विद्युत्संस्थानस्फुरन्मौर्वीकात् । मेघो हि तडित्वान् भवति । किंभूता इषवः अम्बुधाराश्च

(१) प्रति । (२) राबभौ वा । (३) ध्वनतो ।

गुर्व्यः महत्यः, पुनः किंभूता इषवः अम्बुधाराश्च असङ्ख्याः प्रभूताः । श्लेषः । इषुशब्दः स्त्रीपुंसयोः स्मर्यते ॥ २१ ॥

ध्वनत इति ॥ ध्वनतो गर्जतः तडित इवाकारो यस्य स तडिदाकारः चलनात्तेजोमयत्वाच्च अचिरप्रभाऽऽकारश्चलन् गुणो मौर्वी यस्य तस्मात् । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । धनुषः शार्ङ्गात् गुर्व्यो महत्यः असङ्ख्या अपरिमिता इषवोऽम्बुधरान्मेघादम्बुधारा यो इवाशु सशब्दं न्यपतन्। अत्रोपमानोपमेययोरेकलिङ्गताऽन्वयादिषुशब्दो द्विलिङ्गोऽपि स्त्रीलिङ्ग एव प्रयुक्त इति ज्ञापनाय गुर्व्य इति विशेषणम् ॥ २१ ॥

**शिखरोन्नतनिष्ठुरांऽसपीठः स्थगयन्नेकदिगन्तमायताऽन्तः ॥**
**निरवर्णि सकृत्प्रसारिताऽऽस्यः (१)क्षितिभर्तेव चमूभिरेकबाहुः ॥ २२ ॥**

शिखरेति ॥ अस्य देवस्य एकबाहुः एको भुजः चमूभिः सैन्यैः क्षितिभर्तेव पर्वत इव निरवर्णि वर्णितः अवगतः । किंभूतः एकबाहुः शिखरोन्नतनिष्ठुरांसपीठः शिखरवत् शृङ्गवत् उन्नतमुच्चं निष्ठुरं कर्कशं च अंसपीठं स्कन्धमण्डलं यस्य सः तथा शृङ्गोच्चकठिनस्कन्धमण्डलः, अपरं किंभूत एकबाहुः एकदिगन्तं स्थगयन् एकदिशाभागं पिदधत्, पुनः किंभूतः एकबाहुः आयताऽन्तः दीर्घाऽधोभागः, पुनः किंभूतः सकृदिव प्रसारिताऽऽस्यः एकवारमेव प्रसारितमुखः, इष्वादानाऽदर्शनात् सततं शरान् क्षिपन्नित्यर्थः । क्षितिभृदपि उच्चकठिनशिखरो भवति, स्थगितैकदिगन्तश्चाऽऽयतश्च ॥ २२ ॥

शिखरेति ॥ शिखरं शृङ्गमिवोन्नतं निष्ठुरं चांसपीठं यस्य स एकदिगन्तं एकदिग्भागं स्थगयन् आयतान्तो द्राघिष्ठस्वरूपः । 'अन्तोऽध्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति वैजयन्ती । सकृत्प्रसारितः न तु पुनः पुनरिति स्थैर्योक्तिः । अस्य हरेरेकबाहुः, चापरोपितो वामबाहुरित्यर्थः । चमूभिः क्षितिभर्तेव भूधर इव निरवर्णि । साधु निरीक्षित इत्यर्थः । 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः ॥ २२ ॥

**तमकुण्ठमुखाः सुपर्णकेतोरिषवः क्षिप्तमिषुव्रजं परेण ॥**
**विभिदामनयन्त कृत्यपक्षं नृपतेर्नेतुरिवाऽयथार्थवर्णाः ॥ २३ ॥**

तमिति ॥ तम् इषुव्रजं बाणपूगं परेण चैद्येन क्षिप्तं मुक्तं सुपर्णकेतोर्गरुडध्वजस्य इषवः शराः विभिदाम् अनयन्त भेदम् अनैषुः अभैत्सुः । किंभूता इषवः अकुण्ठमुखाः शितशल्याः, के इव यथा नेतुर्विजिगीषोः अयथार्थवर्णाः असत्याः नृपतेर्जेतव्यस्य राज्ञः कृत्यपक्षं भेद्यवर्गं भेदयन्ति । कृत्याः क्रुद्धलुब्धभीताऽपमानिताः । स च भेदः पूर्वम् उक्तस्वरूपः 'अज्ञातदोषैर्दोषज्ञै'रित्यनेन । तेऽपि चराः अकुण्ठमुखाः सप्रतिभाः । विभिदेत्यङन्तः । अयथार्थवर्णा इति तैलपाचिकावच्चरसंज्ञाः ॥ २३ ॥

तमिति ॥ अकुण्ठमुखाः निशिताग्राः प्रगल्भगिरश्च सुपर्णकेतोर्गरुडध्वजस्य हरेरिषवः परेणाऽरिणा क्षिप्तं मुक्तमिषुव्रजम् अयथार्थवर्णा असत्याश्चराः कपटवचनाः, उभयवेतना इत्यर्थः । 'कृत्यज्ञैयो यथावर्णश्चारः प्रणिधिरेव च' इत्युत्पलमाला । नेतुर्नायकस्य जिगीषोः नृपतेः कृत्यपक्षममात्यादिभेद्यवर्गमिव । 'कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः' इत्यमरः । विभिदां भेदम् । षिद्भिदादिभ्योऽङ् । अनयन्त । 'स्वरितञितः—'इत्यात्मनेपदम् ॥ २३ ॥

**दयितैरिव खण्डिता मुरारेर्विशिखैः संमुखमुज्ज्वलाऽङ्कलेखैः ॥**
**लघिमानमुपेयुषी पृथिव्यां विफला शत्रुशराऽऽवलिः पपात ॥ २४ ॥**

दयितैरिति॥ शत्रुशराऽऽवलिः चैद्येषुपरम्परा पृथिव्यां भूमौ पपात अपतत्। किंभूता

(१) प्रसारितोऽस्य ।

शत्रुशरावलिः यत् मुरारेः कृष्णस्य विशिखैः शरैः संमुखं खण्डिता अभिमुखं छिन्ना, पुनः किंभूता अतश्च विफला अकृतशरव्यवधलक्षणकार्या सत्यरहिता च, अत एव लघिमान-मुपेयुषी लाघवं प्राप्ता, किंभूतैर्विशिखैः दयितैः प्रियैः अर्थात् कृष्णस्य, पुनः किंभूतैः उज्ज्वलाऽङ्कलेखैः उज्ज्वला रम्या अङ्के मूर्तिलेखा राजयश्च येषां ते तथा तैः, कैरिव खण्डिता दयितैरिव कान्तैरिव। यथा काचिन्नायिका उज्ज्वलाऽङ्कलेखैः गौरैः प्रियैः खण्डिता विसंवादिता अत एव लाघवं प्राप्ता विफला निरर्थकलावण्या च सती भूमौ पतति । खण्डितालक्षणं च—

> निद्राकषायमुकुलीकृतताम्रनेत्रो
>
> नारीनखव्रणविशेषविशेषिताङ्गः ।
>
> यस्याः कुतोऽपि गृहमेति पतिः प्रभाते
>
> सा खण्डितेति कथिता कविभिः पुराणैः ॥ ॥ २४ ॥

दयितैरिति ॥ उज्ज्वलाः स्फुटा अङ्केषु लेखाश्चित्रलेखा नखरेखाश्च येषां तैः मुरारेर्विशिखैर्दयितैः प्रियैरिव संमुखं समक्षमेव खण्डिता नुन्ना, अन्यत्राऽवमानिता अत एव विफला विशल्या अलब्धकामा च । अत एव लघिमानमगुरुत्वम् अल्पतां चोपेयुषी शत्रुशरावलिः पृथिव्यां पपात । अत्र प्रकृतशरावलिविशेषण-साम्यादप्रकृतखण्डितानायिकाप्रतीतेः समासोक्तिः । दयितैरिवेत्युपमा खण्डिताविशेषणाऽन्तःपातित्वादङ्ग-मेव । अत एव तच्च विशेषणसाम्यं श्लिष्टतया साधारण्येनौपम्यगर्भत्वेन च भवतीत्युक्तं सर्वस्वकारैः—'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति । साऽप्येवं पृथिव्यां पततीति भावः ॥ २४ ॥

**प्रमुखेऽभिहताश्च पत्रवाहाः प्रसभं माधवमुक्तवत्सदन्तैः ॥**

**परिपूर्णतरं भुवो गतायाः परतः(१) कातरवत् प्रतीपमीयुः ॥ २५ ॥**

प्रमुखे इति ॥ पत्रवाहाः चैद्यशराः भुवो भूमितः परिपूर्णतरम् अत्यर्थं गतायाः अतिक्रान्तायाः अपि ततोऽनन्तरं प्रतीपम् ईयुः संमुखम् आयुः प्रत्याजग्मुः । यदि ते कृष्णसमीपं प्राप्ताः, तत्किमिति प्रत्याययुरित्याह—किंभूताः पत्रवाहाः माधवमुक्तवत्सदन्तैः शौरिप्रक्षिप्तभल्लैः प्रमुखे शल्याग्रे प्रसभं बलात् अभिहताः विद्धाः । के इव प्रतीपमीयु-रित्याह—कातरवत् त्रस्तवत्। यथा कातराः भीरवः परतः सपत्नात् प्रतीपं भयम् अयन्ते आक्रम्याऽपि समग्रां भु ंतेपि क्षया(२) समुच्चये ॥ २५ ॥

प्रमुखे इति ॥ पत्राणि वहन्तीति पत्रवाहाः पत्रिणश्चैद्यशराः । कर्मण्यण् । माधवमुक्तवत्सदन्तैः शौरि-क्षिप्तशरैः प्रसभं बलात्प्रमुखे शल्याग्रे वदने चाऽभिहताः खण्डिताः सन्तः अत एव कातरैः त्रस्तैस्तुल्यं कातरवत् । तुल्यार्थे वतिप्रत्ययः । परिपूर्णतरं गतायाः । यावद्गन्तव्यं गताया इत्यर्थः । भुवोऽन्तरालभूमेः परितः प्रतीपं प्रतिकूलमीयुः प्रापुः प्रत्यागताश्च । माधवाऽन्तिकात्प्रावृत्त्य जग्मुरित्यर्थः । चकारः पूर्वश्लोकोक्त-पतनसमुच्चयार्थः । केचित्खण्डितास्तत्रैव पेतुः । केचिन्मुखेषु प्रतिहताः । प्रतिनिवृत्ता इत्यर्थः । कातरव-दिति तद्धितगता श्रौती पूर्णोपमा ॥ २५ ॥

**इतरेतरसन्निघट्ट(३)जन्मा फलसङ्घट्टविकीर्णविस्फुलिङ्गः ॥**

**पटलानि लिहन् बलाहकानामपरेषु क्षणमज्वलत्कृशानुः ॥ २६ ॥**

इतरेतरेति ॥ अपरेषु अन्येषु इषुषु बाणेषु क्षणं क्षणमात्रं कृशानुर्वह्निरज्वलत् अज्वालीत् दिदीपे । किंभूतः कृशानुः इतरेतरसन्निघट्टजन्मा इतरेतरस्य सन्निघट्टेन सम्पेषणेन

---

( १ ) परितः । ( २ ) ग्रन्थोऽत्र स्खलितः । ( ३ ) सन्निकर्षे ।

जन्मोत्पत्तिर्यस्य सः तथा परस्परसम्पेषसमुत्थः, अपरं किंभूतः कृशानुः फलसङ्घट्टविकीर्णविस्फुलिङ्गः फलानां शल्यानां सङ्घट्टेन आस्फालनेन विकीर्णा विक्षिप्ताः विस्फुलिङ्गाः कणा येन सः तथा शल्याभिघातोदीर्णकणः, अपरं किंभूतः कृशानुः बलाहकानां पटलानि लिहन् मेघानां वृन्दानि लिहन् स्पृशन् क्षिपयन् ॥ २६ ॥

इतरेतरेति ॥ इतरेतरसन्निकर्षजन्मा शराणां मिथःसंश्लेषोत्थः। जन्मोत्तरपदत्वाद्व्यधिकरणोऽपि बहुव्रीहिरिष्यते। फलसघट्टनेन शल्यसङ्घट्टनेन विकीर्णा विस्फुलिङ्गा यस्य सः कृशानुरग्निर्बलाहकानां, वारि वहन्तीति बलाहकाः। पृषोदरादित्वात्साधुः। पटलानि लिहन्नास्वादयन् अपरेषु शत्रुषु। 'समरेषु' इति पाठे समरेषु युद्धेषु क्षणमज्वलददीप्यत। अत्र शत्रुबलाहकानामग्निदाहास्वादासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ २६ ॥

**शरदेव(१) शरश्रिया विभिन्ने विभुना शत्रुशिलीमुखाऽभ्रजाले ॥**
**विकसन्मुखवारिजाः प्रकाशं (२)बभुराशा इव यादवध्वजिन्यः ॥ २७ ॥**

शरदेवेति ॥ अथ यादवध्वजिन्यः कुकुरवाहिन्यः प्रकाशं बभुः प्रकटमशोभन्त। क सति विभुना देवेन कृष्णेन शरश्रिया सायकसमृद्ध्या कृत्वा शत्रुशिलीमुखाऽभ्रजाले चैद्यबाणवारिदपटले विभिन्ने नाशिते सति, अत एव किंभूताः यादवध्वजिन्यः विकसन्मुखवारिजाः प्रफुल्लवदनकमलाः। कया कस्मिन् विभिन्ने सति का यथा भान्ति इत्याह—शरदेव आशा इव। यथा शरदा घनात्ययेन अभ्रजाले मेघपटले क्षिप्ते सति विकसद्वारिजाः विकसत्पद्माः आशाः प्रकाशन्ते शोभन्ते। किंभूतया शरदा शरश्रिया शरैः काण्डतृणैः श्रीः शोभाः यस्याः सा तया। उपमानयोर्द्वित्वात् इवशब्दावपि द्वावेव युक्तावित्यलङ्कारविदः ॥ २७ ॥

शरदीवेति ॥ विभुना देवेन कर्त्रा शरश्रिया शरसम्पदा करणेन शरदीव शत्रुशिलीमुखा अभ्राणीव तेषां जाले विभिन्ने सति, विकसन्ति मुखानि वारिजानीव यासां ताः यादवध्वजिन्यः यदुसेना आशा दिश इव प्रकामं बभुः। अनेकैवेयमुपमा ॥ २७ ॥

**स दिवं समचिच्छदच्छरौघैः कृततिग्मद्युतिमण्डलाऽपलापाम्(३) ॥**
**ददृशेऽथ च तस्य चापयष्ट्यामिषुरेकैव जनैः सकृद्विकृष्टा(४) ॥ २८ ॥**

स इति ॥ स कृष्णः शरौघैः कृत्वा दिवमन्तरिक्षं समचिच्छदत् ऊर्णुनाव। किंभूतां दिवम् अत एव कृततिग्मद्युतिमण्डलाऽपलापां कृतो विहितः तिग्मद्युतिमण्डलस्य रविबिम्बस्य अपलापोऽदर्शनं यस्याः सा तथा तां विहितरविनिह्नवाम्। अथ च चापयष्ट्यां धनुर्लतायां जनैः सैनिकलोकैः एकैव इषुः सकृत् विकृष्टा ददृशे ऐक्षि, एक एव बाणः एकवारमाकृष्टः लक्ष्यते स्मेति लाघवोक्तिः। च इति विस्मये। न ह्येकेन शरेण नभश्छाद्यते ॥ २८ ॥

स इति ॥ कृतस्तिग्मद्युतिमण्डलस्याऽपलापो निह्नवो यैस्तैः। आच्छादितार्कमण्डलैरित्यर्थः। शरौघैर्दिवमाकाशं स हरिः समचिच्छददाच्छादयति स्म। छादेः णौ चङ्युपधाया ह्रस्वः 'सन्यतः' इत्यभ्यासस्येत्वम्। युक्तं चैतत्, लघुहस्तत्वादस्येत्याशयेनोत्प्रेक्ष्यते। अथास्मिन्नवसरे तस्य हरेश्चापयष्ट्यामिषुः सकृदेकदा विसृष्टा मुक्ता एकैव जनैर्ददृशे दृष्टा च। इषूणां पुङ्खानुपुङ्खगमनाद् द्राघीयानेक एवेषुरेकैव गच्छतीत्युत्प्रेक्षा। ईदृशलघुहस्तस्याकाशसंछादनं युक्तमिति भावः ॥ २८ ॥

**भवति स्फुटमागतो विपक्षान्न सपक्षोऽपि हि निर्वृतेर्विधाता।**
**शिशुपालबलानि कृष्णयुक्तः सुतरां तेन ततापं तोमरौघः ॥ २९ ॥**

---

(१) शरदीव। (२) प्रकामं। (३) पलापैः। (४) ०द्विसृष्टा।

भवतीति ॥ तेन हेतुना कृष्णमुक्तः तोमरौघः शरपूगः शिशुपालबलानि सुतरां ततताप अत्यर्थमतपत् अपीडयत् । तेन केन, येन हेतुना विपक्षान् आगतः सपत्नान् प्राप्तः सपक्षोऽपि स्ववर्ग्योऽपि निर्वृतेर्विधाता सुखस्य कारी हि निश्चितं न भवति न स्यात् । यदि हि स्यात्तोमरौघः सपक्षत्वान्न तापयेत् क्षिप्तत्वात् प्रकीर्येव(?) । अथ चोक्तिः—विपक्षाच्छत्रोरागतः सपक्षः सखाऽपि न सुखकारीति ॥ २९ ॥

भवतीति ॥ विपक्षाच्छत्रुकुलादागतः सपक्षः कङ्कादिपत्रवान् सुहृच्च निर्वृतेर्विधाता सुखकरो न भवति हि यतः स्फुटम् । तेन कारणेन कृष्णमुक्तस्तोमरौघः शिशुपालबलानि सुतरां ततताप ददाह । अतः शत्रुकुलादागतः स्वजनोऽपि न विश्वसनीय इत्यर्थः । सपक्षोऽप्यनिर्वर्तक इति विरोधेऽपिशब्दः । विपक्षादागत इत्यविरोधाद्विरोधाभासः ॥ २९ ॥

गुरुवेगविराविभिः पतत्रैरिषवः काञ्चनपिङ्गलाऽङ्गभासः ॥
विनतासुतवत्तलं भुवः स्म व्यथितभ्रान्तभुजङ्गमं विशन्ति ॥ ३० ॥

गुरुवेगेति ॥ इषवो भगवच्छराः भुवस्तलं विशन्ति स्म पातालं प्राविशन् । किंवत् विनतासुतवत् गरुडा इव, कथंभूतं पातालं व्यथितभ्रान्तभुजङ्गमं व्यथिताः दुःखिताः भ्रान्ताः भ्रमन्तः भुजङ्गमाः सरीसृपा यत्र तत्तथा । वैनतेयेषु भुवस्तलं प्रविष्टेषु सत्सु अहयो भीता भ्रमन्तश्च भवन्ति । किंभूताः इषवः पतत्रैः पक्षैरुपलक्षिताः, किंभूतैः पतत्रैः गुरुवेगविराविभिः सम्भूतजवशब्दायमानैः, पुनः किंभूताः इषवः काञ्चनपिङ्गलाऽङ्गभासः कनकपिङ्गलदेहद्युतयः । सुपर्णा अपि एवंविधा एव ॥ ३० ॥

गुरुवेगेति ॥ गुरुवेगविराविभिः गुरुणा वेगेन विरुवन्ति ध्वनन्तीति तथोक्तैः । रौतेर्णिनिः । शीघ्रवेगविरावद्भिः पतत्रैः पक्षैरुपलक्षिताः, काञ्चनेन पुङ्खलितेन पिङ्गलाऽङ्गभासः, अन्यत्र काञ्चनवदिति विग्रहः । इषवः शौरिशराः विनतासुतवद्वैनतेयैस्तुल्यं व्यथिता भीषिता अत एव भ्रान्ता मूढा भुजङ्गमा यस्मिंस्तत्तथा भुवस्तलं पातालं विशन्ति स्म । तद्धितगता श्रौती पूर्णोपमा पातालप्रवेशासम्बन्धातिशयोक्त्या सङ्कीर्यते ॥

शतशः परुषाः पुरोऽपशङ्कं(१) शिशुपालेन शिलीमुखाः प्रयुक्ताः ॥
परमर्मभिदोऽपि दानवारेरपराधा इव न व्यथां वितेनुः ॥ ३१ ॥

शतश इति ॥ शिशुपालेन पुरोऽग्रे अपशङ्कं निर्भयं यथा स्यात्तथैव प्रयुक्ताः प्रेरिताः शिलीमुखाः दानवारेः दैत्यरिपोः कृष्णस्य व्यथां न वितेनुः पीडां न अकार्षुः । किंभूताः शराः शतशः बहवः, पुनः किंभूताः परुषास्तीक्ष्णाः, पुनः किंभूताः परमर्मभिदोऽपि अरुन्तुदा अपि एवंभूता अपि न व्यथयन्तः, के इव अपराधा इव । यथा अनेन पुरोऽग्रेऽपि परुषाः कर्णकटुकाः परमर्मभिदः अरुन्तुदाः अपि अपराधाः निन्दावचनानि विशङ्कं प्रयुक्ता अपि श्रीकृष्णस्य व्यथां न वितेनुः कोपं नाऽजीजनन् ॥ ३१ ॥

शतश इति ॥ शिशुपालेन पुरोऽग्रे विशङ्कं निःशङ्कं शतशः प्रयुक्ताः क्षिप्ताः उच्चारिताश्च परुषाः निष्ठुराः परमर्मभिदोऽपि शिलीमुखाः शराः, शतशः अपराधाः पञ्चदशसर्गोक्ताः अभिशापा इव दानवारेर्हरेर्व्यथां दुःखं न वितेनुः । खलाऽपकारा महतामाकिञ्चित्करा इति भावः । समासगतोपमा ॥ ३१ ॥

विहिताऽद्भुतलोकसृष्टिमाये जयमिच्छन् किल मायया मुरारौ ॥
भुवनक्षयकालयोग्य(२)निद्रं नृपतिः स्वापनमस्त्रमाजहार ॥ ३२ ॥

विहितेति ॥ नृपतिः चैद्यः मुरारौ श्रीकृष्णे प्रस्वापनं नैद्रम् आयुधम् आजहार

---

(१) पुरो विशङ्कं ।    (२) योग ।

प्रयुयुजे । किंभूतः नृपतिः यतो मायया बलेन जयमिच्छन् जिगीषुः, किंभूते मुरारौ विहिताऽद्भुतलोकसृष्टिमाये विहिता कृता अद्भुता आश्चर्यरूपा लोकानां भुवनानां सृष्टिरूपा सर्गरूपा माया येन सः तथा तस्मिन्, पुनः किंभूते मुरारौ भुवनक्षयकालयोग्यनिद्रे भुवनक्षयकाले कल्पान्तसमये योग्या उचिता निद्रा प्रस्वापो यस्य तथा तस्मिन् । किलेत्युपहासे, यः किल आत्मना मायिकः तं मायया स जिगीषति, यश्च कल्पान्तसमये निद्रालुः तस्य स्वापनमस्त्रं मुञ्चति । मायावी मायिको मायी । स्वापयतीति स्वापनम् ॥ ३२ ॥

विहितेति ॥ नृपतिश्चैद्यो विहिता अद्भुता लोकसृष्टिरेव माया यस्मिंस्तस्मिन् भुवनक्षयकाले प्रलयकाले । न त्विदानीमिति भावः । उचिता योगनिद्रा यस्य तस्मिन्मुरारौ मायया जयमिच्छन् किल, न तु जेष्यतीति भावः । स्वापयतीति स्वापनमस्त्रमाजहार । प्रयुक्तवानित्यर्थः । अनादिमायाधारे सकलभुवनसृष्टिसंहारमहानाटकसूत्रधारे सर्वाऽद्भुतनिधाने सकलकलुषकषणपटुतराभिधाने पुराणैन्द्रजालिके भगवति हरावपि मायया जिगीषेत्यहो ! महानस्य व्यामोह इति भावः । अत्र हरिविशेषणैस्तस्य दुर्जयत्वसिद्धेः काव्यलिङ्गम्

सलिलाऽऽर्द्रवराहदेहनीलो विदधद्भास्करमर्थशून्यसंज्ञम् ॥
प्रचलायित(१)लोचनारविन्दं विदधे तद्बलमन्धमन्धकारः ॥ ३३ ॥

सलिलार्द्रेति ॥ अथ तद्बलं तस्य भगवतः बलं सैन्यं श्रीकृष्णसैन्यं कर्म अन्धकारः तमः अन्धं विदधे विदृष्टि चकार । किंभूतं तद्बलं यतः प्रचलायितलोचनारविन्दं प्रचलायितानि मुकुलायमानानि लोचनारविन्दानि नयनकमलानि यस्य तत्तथा निद्रायमाणनयनकमलं, किंभूतोऽन्धकारः सलिलार्द्रवराहदेहनीलः उदकप्लुतक्रोडकायकृष्णः, अपरं किंभूतोऽन्धकारः भास्करम् अर्थशून्यसंज्ञं विदधत् प्रभाकरम् अभिधेयरहितनामानं कुर्वन्, प्रवृत्तिनिमित्ताभावात्, अथ महिम्ना तमसो बलीयस्त्वात् ॥ ३३ ॥

सलिलार्द्रेति ॥ सलिलेनार्द्रो यो वराहदेहस्तद्वन्नीलः, भासं प्रकाशं करोतीति भास्करः । 'दिवाविभा-इत्यादिना टप्रत्ययः। तम्, अर्थशून्या भास्करत्वरूपप्रवृत्तिनिमित्तशून्या संज्ञा भास्कराख्या यस्य तं विदधत् । सौरलोकमभिभवन्नित्यर्थः । अन्धं करोतीत्यन्धकारः स्वापकाऽस्त्रप्रभवतमः । कर्मण्यण् । प्रचलानि निद्राघूर्णितानि आयतलोचनान्येवाऽरविन्दानि यस्मिन्कर्मणि तत्तथा, सूर्यतिरोधानेऽरविन्दमुकुलीभावस्यावश्यंभावादिति भावः । तद्बलं हरिसैन्यमन्धमपश्यं विदधे । निद्रां प्राविशदित्यर्थः । अत्राऽन्धमन्धेति सकृद्व्यञ्जनयुग्मपौनरुक्त्याद्वृत्त्यनुप्रासभेदः, तस्य वराहदेहनीललोचनारविन्देत्युपमारूपकयोः संसृष्टिः ॥ ३३ ॥

गुरवोऽपि निषद्य यन्निदद्रुर्धनुषि क्ष्मापतयो न वाच्यमेतत् ॥
क्षपिता(२)ऽऽपदि जाग्रतोऽपि नित्यं ननु तत्रैव हि तेऽभवन्निषण्णाः॥३४॥

गुरवोऽपीति ॥ नित्यं जाग्रतोऽपि जागरूका अपि ते भूपालाः क्षपिताऽऽपदि नाशितविपदि तत्रैव धनुषि एव निषण्णा अभवन् सक्ता बभूवुः । अतश्चाऽशयिता अपि ये धनुषि निषण्णाः, तेषां सुप्तानां तत्र निषदने का वाच्यता ॥ ३४ ॥

गुरवोऽपीति ॥ गुरवो धीराः क्ष्मापतयोऽपि धनुषि निषद्य शयित्वा निदद्रुः सुषुपुरिति यत्, एतत् धनुषि निद्राणं वाच्यं निन्द्यं न भवति । कुतः—हि यस्मात् ते क्ष्मापतयो जाग्रतोऽपि प्रबुद्धा अपि । जागर्तेः शतरि अस्य 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा 'नाभ्यस्ताच्छतुः' इति नुम्प्रतिषेधः । क्षयिताऽऽपदि , सर्वापन्निवारके इत्यर्थः । तत्रैव धनुषि नित्यं निषण्णाः संश्रिता अभवन्ननु । जागरेऽपि धनुरेकशरणानां स्वापे तदाश्रये न दोष इत्यर्थः । अत्र सदा धनुराश्रयवाक्यार्थस्याऽवाच्यताहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ३४ ॥

---

( १ ) प्रचलाऽऽयित । ( २ ) क्षयिता० ।

**श्लथतां व्रजतस्तदाऽपरेषा(१)मगलद्धारणशक्तिमुज्झतः स्वाम् ॥**
**सुगृहीतमपि प्रमादभाजां मनसः शास्त्रमिवाऽस्त्रमग्रपाणेः ॥ ३५ ॥**

श्लथतामिति ॥ तदा अपरेषामन्येषां राज्ञां प्रमादभाजां मूढानां सताम् अग्रपाणेः कराग्रात् अस्त्रमायुधं सुगृहीतमपि दृढाऽवष्टब्धमपि अगलदस्रस्यत् । किंभूतात् अग्रपाणेः यतो निद्रावशात् श्लथतां व्रजतः शिथिलतां प्राप्नुवतः, पुनः किंभूतादग्रपाणेः अतश्च स्वां निजां धारणशक्तिमवष्टम्भनसामर्थ्यम् उज्झतस्त्यजतः । कुतः किमिव अगलदित्याह— मनसः शास्त्रमिव । यथा प्रमादभाजां प्रमादिनां मनसः चित्तात् सुगृहीतमपि सुशिक्षितमपि शास्त्रम् गलति ग्रन्थसन्दर्भः अपयाति । मनसोऽपि श्लथतां व्रजतः स्वां धारणशक्तिमुज्झतश्च ॥ ३५ ॥

श्लथतामिति ॥ तथेति पूर्वोक्तधनुराश्रयणसमुच्चये । यथा तेषां धनुराश्रयणं तथाऽन्येषां धनुर्गलनं चाभूदित्यर्थः । श्लथतां प्रयत्नशैथिल्यं व्रजतः भजतः स्वां निजां धारणशक्तिं वाहनसामर्थ्यम् उज्झतः त्यजतः परेषां राज्ञाम् । अग्रं चासौ पाणिश्चेति समानाधिकरणसमासः, हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदादिति वामनवचनात् । तस्मादग्रपाणेः सुगृहीतं सुष्ठु धृतमपि अन्यत्र स्वभ्यस्तमपि प्रमादभाजां गुणनिकाद्यवधानरहितानां मनसश्चित्तात् शास्त्रं विद्येव अस्त्रमगलदभ्रश्यत् । निद्रापारवश्यादित्यर्थः । इवेन सह समासात्समासगता श्रौती पूर्णोपमा ॥ ३५ ॥

**उचितस्वपनोऽपि वारिराशौ बलयादोनिधि(२)मध्यगस्तदानीम् ॥**
**भुवनत्रयकार्यजागरूकः स परं तत्र परः पुमानजागः ॥ ३६ ॥**

उचितेति ॥ तत्र रणे स भगवान् परः पुमान् परमपुरुषः परं केवलम् अजागः जजागार, न सुष्वापेत्यर्थः । किंभूतः परः पुमान् बलयादोनिधिमध्यगः सैन्याऽर्णवान्तर्गतः । कदाचिदर्णवमध्येऽसौ न शयीतेत्याह—पुनः किंभूतो हरिः वारिराशौ जलनिधौ उचितस्वपनोऽपि अभ्यस्तनिद्रोऽपि, पुनः किंभूतः परः पुमान् भुवनत्रयकार्यजागरूकः जगत्त्रितयहितसावधानः, यतः किल तस्मिन् सुप्ते जगन्ति नश्यन्ति । अतिशयेन जागरणशीलो जागरूकः । 'स परस्तत्र पुमानजागरेकः' इति पाठान्तरम् ॥ ३६ ॥

उचितेति ॥ नीरराशौ समुद्रे उचितस्वपनोऽपि परिचितनिद्रोऽपि तदानीं सर्वनिद्रावसरे स्वबलाम्भोनिधिमध्यगः स्वसेनासागरमध्यगतः । 'बलपाथोनिधि' इत्यपि पाठः । भुवनत्रयकार्ये त्रैलोक्यरक्षाविधौ जागरूकः प्रबुद्धः । 'जागर्तेरूक' इत्यूकप्रत्ययः । परः पुमान् परमपुरुषः परं केवलं, हरिरेवेत्यर्थः । 'परमव्यवमिच्छन्ति केवले' इति विश्वः । तत्र निद्राणलोके अजागः जागर्ति स्म । सर्वाऽन्धकारहारिणो नित्यप्रकाशचिदात्मनः तत्रापि कार्यग्रस्तस्य कुतो निद्रेति भावः । जागर्तेर्लुङि तिप् । अदादित्वाच्छपो लुकि सार्वधातुकगुणे रपरे 'हल्ङ्याप्—' इति तिलोपे च रेफस्य विसर्जनीयः । अत्र समुद्रनिद्रालोस्तत्रैव जागरे विरोधपरिहारमुखेन कार्यजागरूकत्वपरमपुरुषत्वयोर्विशेषणगत्या तात्त्विकजागरणहेतुकत्वाद्विरोधाभाससङ्कीर्णं काव्यलिङ्गम् ॥ ३६ ॥

**अथ सूर्यरुचीव तस्य दृष्टावुदभूत्कौस्तुभदर्पणं गतायाम् ॥**
**पटु धाम ततो न चाऽद्भुतं तद्विभुतिन्द्वर्क(३)विलोचनः किलाऽसौ ॥ ३७ ॥**

अथेति ॥ अथाऽनन्तरं तस्य देवस्य श्रीकृष्णस्य दृष्टौ दृशि कौस्तुभमेव दर्पणं गतायां सत्यां कौस्तुभादर्शं प्राप्तायां, ततः कौस्तुभदर्पणात् पटु चण्डं धाम तेजः उदभूत् उदतिष्ठत् । कस्यामिव सूर्यरुचीव सूर्यस्य रुक् दीप्तिः तस्यां श्रीसूर्यदीप्तौ आदर्शबिम्बं गतायां

---

(१) तथा परेषा० । (२) नीरराशौ स्वबलाऽम्भोनिधि । (३) ०रर्केन्दु ।

सत्यां यथा तेज उद्भवति, तन्न अद्भुतम्। एवं मणेर्देवहशि। न चैतदद्भुतं न चाऽऽश्चर्यम्, यस्मादसौ देवः किल इन्द्वर्कविलोचनः चन्द्रार्कनयनो भवति। 'चन्द्रादित्यौ चक्षुषी' इति श्रीभागवतोक्तत्वात्। अथ यथोपमाने नाश्चर्यं, तथाऽत्रापि ॥ ३७ ॥

अथेति ॥ अथाऽन्धकारव्याप्त्यनन्तरं तस्य हरेर्दृष्टौ चक्षुषि। तेजसीत्यर्थः। सूर्यरुचीव सूर्यतेजसीव। कौस्तुभो दर्पण इवेत्युपमितसमासः, सूर्यरुचीवेति लिङ्गात्। तं कौस्तुभदर्पणं गतायां प्रविष्टायां सत्यां ततः कौस्तुभात् पटु सर्वान्धकारद्रावणे समर्थं धाम तेज उदभूदुदगात्। तद्धामोद्भवनं न चाऽद्भुतं, कुतः—असौ विभुर्भगवान् अर्केन्दू विलोचने यस्य, स किल खलु। अतस्तच्चक्षुषोः सूर्यात्मकत्वात्तदभिहतात्कौस्तुभादर्पणादेरेव धामप्रादुर्भावो व्यज्यत इत्यर्थः। अतो वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ३७ ॥

**महतः प्रणतेष्विव प्रसादः स मणेरंशुचयः ककुम्मुखेषु ॥**
**व्यकसद्विकसद्विलोचनेभ्यो ददालोकमनाविलं बलेभ्यः ॥ ३८ ॥**

महत इति ॥ सः मणेः अंशुचयः कौस्तुभस्य किरणनिकरः ककुम्मुखेषु दिङ्मुखेषु व्यकसत् प्रससार। किंभूतो मणेरंशुचयः विकसद्विलोचनेभ्यः उन्मिषन्नयनेभ्यः बलेभ्यः सैन्येभ्यः अनाविलमकलुषम् आलोकं दर्शनं ददत् वितरन्। पूर्वं हि तानि प्रचलायितलोचनानि अभवन्। क इव केषु विकसतीत्याह—महतः प्रसादः उत्तमस्य प्रसन्नता प्रणतेष्विव। यथा ह्युत्तमस्य प्रसादः प्रणतेषु सेवकेषु विकसति। सोऽपि नेत्रविकासं ददाति। तुष्टे हि प्रभौ लोचनानि प्रसरन्ति ॥ ३८ ॥

महत इति ॥ स पूर्वोक्तो मणेः कौस्तुभस्यांशुचयः, विकसन्ति उन्मीलन्ति विलोचनानि येषां तेभ्यो बलेभ्योऽनाविलं प्रसन्नमालोकं दर्शनं तत्त्वज्ञानं च ददत् प्रतियच्छन् महतो महात्मनः प्रसादोऽनुग्रहः प्रणतेषु भक्तेष्विव ककुम्मुखेषु ककुभामग्रेषु व्यकसदमूर्छत्। पूर्णोपमा ॥ ३८ ॥

**प्रकृतिं प्रतिपादुकैश्च पादैश्चक्लृपे भानुमतः पुनः प्रसर्तुम् ॥**
**तमसोऽभिभवादवाप्य(१) मूर्छामुदजीवत्सहसैव जीवलोकः ॥ ३९ ॥**

प्रकृतिमिति ॥ भानुमतः पादैः रवेः किरणैः पुनर्भूयः प्रसर्तुं चक्लृपे प्रसरणाय प्रवर्त्यते स्म प्रसृतम्। किंभूतैः पादैः यतः प्रकृतिं प्रतिपादुकैः स्वभावं तेजोरूपं प्रतिपन्नैः, अत एव जीवलोको जगत् सहसैव उदजीवत् तत्क्षणमेव प्राणितं उच्छ्वासितम्, किं कृत्वा तमसोऽन्धकारस्य अभिभवात् ध्वान्तकृतपरिभवात् मूर्छामवाप्य मोहं प्राप्य। चक्लृपे इति भावे, कृपो रो लः ॥ ३९ ॥

प्रकृतिमिति ॥ प्रकृतिं स्वभावं प्रतिपादुकैः प्रतिपद्यमानैः। 'लषपतपद—' इत्यादिना उकञ्प्रत्ययः। 'न लोक—' इत्यादिना षष्ठीप्रतिषेधः। भानुमतोऽशुमतः पादैः रश्मिभिश्च पुनर्भूयः प्रसर्तुं चक्लृपे शेके। क्लृपू सामर्थ्ये, भावे लिट्। 'कृपो रो लः' इति ऋकारस्थस्यापि रेफस्य लकारः। जीवलोकः प्राणिवर्गश्च तमसोऽन्धकारस्याभिभवात्। अभिभूतत्वादित्यर्थः। 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी। सहसैव मूर्छामपास्य उदजीवदुदश्वसीत्। अत्रोज्जीवनस्याऽर्ककरप्रसारहेतुकत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ३९ ॥

**गत(२)सन्तमसैर्जवेन भूयो यदुयोधैर्युधि रेधिरे द्विषन्तः ॥**
**ननु वारिधरौघ(३)रोधमुक्तः सुतरामुत्तपते पतिः प्रभाणाम् ॥ ४० ॥**

गतेति ॥ यदुयोधैः शौरिबलैः गतसन्तमसैर्नष्टमोहैः सद्भिर्भूयो जवेन वेगेन द्विषन्तोऽरातयो रेधिरे जघ्निरे। ननु यस्माद्धेतोः वारिधरौघरोधमुक्तः मेघपटलान्निर्गतः प्रभाणां

(१) ०दपास्य। (२) घन। (३) ०धरोपरोध।

पतिः भास्करः सुतराम् उत्तपते अत्यर्थं दीप्यते । 'उद्विभ्यां तप' इत्यात्मनेपदम् । रेधिरे इति कर्मणि, 'राधो हिंसायाम्' इत्येत्वाभ्यासलोपौ । ननु हेतौ ॥ ४० ॥

घनेति ॥ घनं सान्द्रं सन्तमसमन्धकारो येषु । 'अवसमन्धेभ्यस्तमसः' इति समासान्तोऽच् प्रत्ययः । 'गत' इति पाठे गतं सन्तमसं येषां तैः यदुयोधैर्यादवभटैर्भूयः पुनरपि जवेन युधि द्विषन्तो रेधिरे जिहिंसिरे । हता इत्यर्थः। राध्यतेः कर्मणि लिट् ।'राधो हिंसायाम्' इत्येत्वाभ्यासलोपौ ।तथा हि—वारिधरोपरोधात् मेघापवरणान्मुक्तः प्रभाणां द्युतीनां पतिरर्कः सुतरामुत्तपत एव ननु प्रकाशत एव खलु ।'उद्विभ्यां तपः' इत्यात्मनेपदम् । अत्र यदुयोधानां द्युतिपतेश्च वाक्यभेदेन प्रतिबिम्बकरणाद् दृष्टान्तालङ्कारः । न चोपमानोपमेययोर्भिन्नवचनत्वदोषः । लोके चन्द्रार्कादीनामुपमानानामबहुत्वेऽपि चन्द्रानना इतिवत्प्रत्येकमौपम्यात् ॥४०॥

व्यवहार इवाऽनृताऽभियोगं तिमिरं निर्जितवत्यथ प्रकाशे ॥
रिपुरुत्फण(१)भीमभोगभाजां भुजगानां जननीं जजाप विद्याम् ॥४१॥

व्यवहार इति ॥ अथाऽनन्तरं रिपुः अर्थात् श्रीकृष्णस्य शत्रुः चैद्यः भुजगानां जननीं सर्पाणामुत्पादयित्रीं विद्यां जजाप मन्त्रं जपितवान् । किंभूतानां भुजगानाम् उत्फणभीमभोगभाजाम् ऊर्ध्वकन्धरघोरशरीरजुषाम् । कदा जजापेत्याह—क सति प्रकाशे कौस्तुभालोके तिमिरमन्धकारं निर्जितवति सति जयिनि सति । कस्मिन्निव किं, व्यवहारे न्याये अनृताऽभियोगमिव अलीकयोगं यथा । निर्जितवति 'धनमयं मे धारयती'ति अलीकवादी साक्षिलेख्याभावात् बुद्ध्या जीयते । भिन्नविभक्तिकानामौपम्यं दुर्घटमिति व्यवहारशब्दात् प्रकाशानुरोधे सप्तम्युत्पत्तिः ॥ ४१ ॥

व्यवहार इति । व्यवहारे न्यायवादे अनृताभियोगं मिथ्याभिशंसनमिव प्रकाशे कौस्तुभतेजसि तिमिरं प्रस्वापनान्धकारं निर्जितवति निरस्तवति सति, अथैतन्निरसनाऽन्तरं रिपुश्चैद्य उल्बणान्महतो भीमांश्च भोगान् फणान् कायांश्च भजन्तीति तद्भाजः । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । भुजगानां जननीमुत्पादिकां विद्यां मन्त्रं जजाप जपति स्म । भुजगास्त्रमाजहारेत्यर्थः । उल्बणेत्यत्र क्वाचिदुत्फणेति पाठः । उपमालङ्कारः ॥ ४१ ॥

पृथुदर्विभृतस्ततः फणीन्द्रा विषमाशीभिरनारतं वमन्तः ॥
अभवन् युगपद्विलोलजिह्वायुगलीढोभयसृक्कभागमाविः ॥ ४२ ॥

पृथुदर्वीति ॥ ततः विद्याजपाऽनन्तरं फणीन्द्राः महाश्रेष्ठाः सर्पाः आविरभवन् उदपद्यन्त । किंभूताः फणीन्द्राः पृथुदर्विभृतः दीर्घभोगभाजः । दर्वी नासिकाकृकाटिकायावद्देहः। अपरं किंभूताः फणीन्द्राः आशीभिः दंष्ट्राभिः अनारतं सततं विषं वमन्तः गरलं मुञ्चन्तः। कथमाविरभवन्, युगपत् विलोलजिह्वायुगलीढोभयसृक्कभागं यथा भवत्येवं युगपत्समकालं विलोलेन चटुलेन जिह्वायुगेन रसनाद्वयेन लीढौ स्पृष्टौ उभौ द्वौ सृक्कभागौ आस्यपर्यन्तदेशौ यत्राऽऽविर्भावे । व्यवहितप्रयोगोऽत्र न तथा त्याज्यः ॥ ४२ ॥

पृथुदर्वीति ॥ ततो भुजगास्त्रप्रयोगानन्तरं पृथुदर्विभृतः, महाफणाधारिण इत्यर्थः। अत एव 'दर्वीकरो दीर्घपृष्ठ' इत्यत्र दर्वीरूपः फण एव करो हस्तो यस्य महारादाविति व्याख्यातम् । आशीभिर्दंष्ट्राभिः । 'आशीः उरगदंष्ट्रायाम्' इति वैजयन्ती। अनारतमश्रान्तं विषं वमन्त उद्गिरन्तः फणीन्द्रा महासर्पाः विलोलैश्चञ्चलैर्जिह्वायुगैर्लीढावास्वादितावुभौ सृक्कभागावोष्ठप्रान्तदेशौ यस्मिन्कर्मणि तत्तथा । 'प्रान्तावोष्ठस्य सृक्कणी' इत्यमरः । आविरभवन् । अत्र 'उभादुदात्तो नित्यम्' इति नित्यग्रहणसामर्थ्याद्वृत्तिविषये उभ-

(१) ०रुल्बण ।

शब्दस्य स्थानेऽपि उभयशब्दस्यैव प्रयोगः, उभयपुत्र इत्यादिप्रयोगसिद्धेरिति कण्ठ्युक्तमस्माभिः प्रकटितं बहुधा सञ्जीविन्यां घण्टापथे सर्वङ्कषायां च तत्र तत्र। स्वभावोक्तिरलङ्कारः ॥ ४२ ॥

**कृतकेशविडम्बनैर्विहायो विजयं तत्क्षणमिच्छुभिश्छलेन ॥**
**अमृताऽग्रभुवः पुरेव पुच्छं वडवाभर्तुरवारि काद्रवेयैः ॥ ४३ ॥**

**कृतेति** ॥ काद्रवेयैः कद्रूपुत्रैः नागैः विहायः खम् अवारि व्यानशे। किंभूतैः काद्रवेयैः कृतकेशविडम्बनैः कृतं विहितं केशानां कचानां विडम्बनमनुकरणं यैस्ते तथा तैः विहितकचानुकारैः। कार्ष्ण्यात् बालसदृशैरित्यर्थः। अपरं किंभूतैः काद्रवेयैः तत्क्षणं तत्काले छलेन मायया विजयमिच्छुभिः परपरिभवमभिलाषुकैः। किमिवाऽवारि पुरा पूर्वं वडवाभर्तुः हयापतेः अश्वस्य पुच्छमिव वालधिरिव। यथा पूर्वं वडवाभर्तुः पुच्छं काद्रवेयैः अवारि आवृतम्। कस्य वडवाभर्तुः अमृताऽग्रभुवः अमृतज्येष्ठस्य, उच्चैःश्रवस इत्यर्थः। अमृतस्याग्रे प्रथमं बभूव सः अमृताऽग्रभूस्तस्य। किंभूतैर्नागैः कृतं केशेषु विडम्बनं वालधिषु आलम्बो विच्छित्तिर्यैस्ते तथा तैः, पुनः किंभूतैः छलेन विजयमिच्छुभिः। एवं हि श्रूयते—पुरा हि दक्षप्रजापतेर्दुहितरौ कश्यपभार्ये कद्रूविनताख्ये देवेन्द्रस्य गच्छन्तमश्वं विलोक्य इति व्यवदेताम्। तत्र पूर्वा कद्रूराह—अहो! उच्चैःश्रवसः पुच्छं कृष्णमिति। अपरा तु श्वेतमित्याह। ततस्ताभ्यां विवदन्तीभ्यां(?) दासभावाय पणः कृतः। ततः कपटमाश्रिता कद्रूः विषण्णा नागान् सुतान् आहूयाऽऽह—हे पुत्राः! शारदपार्वणचन्द्रसन्निभमुच्चैःश्रवसमश्वराजं यूयं कृष्णवालधिं कुरुत। ततश्च शेषवासुकिप्रमुखा धर्मिष्ठा नागपञ्चशती तामाह—हे रभसकृतप्रतिज्ञे! कथमेवं विवादं चकार भवती। त्वं नो माता, सापि धर्मिष्ठा त्वत्स्वसा, किमत्र कर्तुमस्माकं शक्यम्। अपरे त्वाहुः—अम्ब! धीरा भव, वयमश्वेन्द्रस्य पुच्छं प्रविश्य कृष्णं कुर्म इत्युक्त्वा प्राविक्षन्निति ॥ ४३ ॥

कृतेति ॥ कृतकेशविडम्बनैः कार्ष्ण्याद्विहितकेशानुकारैः छलेन कपटेन विजयमिच्छुभिरभिलाषुकैः। 'विन्दुरिच्छुः' इति उप्रत्ययान्तो निपातितः, 'न लोका' इत्यादिना षष्ठीप्रतिषेधः। विहायः आकाशं तत्क्षणं काद्रवेयैः कद्रूपुत्रैः फणीन्द्रैः। 'स्त्रीभ्यो ढक्' इति ढक्। पुरा पूर्वमिव अमृताग्रभुवोऽमृताग्रजस्य वडवाभर्तुः उच्चैःश्रवसः पुच्छम् अवारि आवृतम्। वृञः कर्मणि लुङ्। पुरा किल कद्रूविनतयोः कश्यपभार्ययोरुच्चैःश्रवसः पुच्छस्य कार्ष्ण्यश्वैत्यविवादे दास्यपणे काद्रवेयैः स्वमातुर्विजयाय गृहीतबालाकारैरुच्चैःश्रवसः पुच्छाच्छादनं चक्रे इति कथा पुराणादनुसन्धेया। उपमा ॥ ४३ ॥

**दधतस्तनिमानमानुपूर्व्या बभुरक्षिश्रवसो मुखे विशालाः ॥**
**भरतज्ञकविप्रणीतकाव्यग्रथिताऽङ्का इव नाटकप्रपञ्चाः ॥ ४४ ॥**

**दधत इति** ॥ अक्षिश्रवसो नागा बभुः, अक्षीण्येव नयनान्येव आकर्णनात् श्रवांसि श्रोत्राणि येषां ते तथा ते शुशुभिरे। किंभूताः नागाः मुखे विशालाः वदने पृथुलाः, पुनः किंभूताः आनुपूर्व्या तनिमानं दधतः तानवं बिभ्रतः। पुनः किंभूताः, उत्प्रेक्ष्यन्ते—नाटकप्रपञ्चा इव नाटकविस्तारा इव। किंभूताः नाटकप्रपञ्चाः, भरतज्ञकविप्रणीतकाव्यग्रथिताङ्काः भरतज्ञेन नाटकशास्त्रसन्दर्भविदा कविना प्रणीतं रचितं यत्काव्यं कविकर्म तेन वस्तुना ग्रथिताः सम्बद्धा अङ्काः परिच्छेदा येषां ते तथा, नाटकशास्त्रविद्वद्विरचितश्लोकबद्धपरिच्छेदा इत्यर्थः। अत एव मुखे विशालाः मुखसन्धौ विस्तीर्णाः। सर्वस्य नाटकीयस्य वस्तुनः उपक्षितत्वात्ततः क्रमेण मुखप्रतिमुखगर्भविमर्शनिर्वहणसन्धिषु

तानवं दधतः, उत्क्षिप्तस्यार्थस्य समासत्वात् । ब्राह्मणादेराकृतिगणत्वात् काव्यशब्दः साधुः । अन्यथा हि 'इगन्ताच्च लघुपूर्वा'दित्यण् स्यात् ॥ ४४ ॥

दधत इति ॥ मुखे मुखभागे मुखसन्धौ च विशालाः विस्तृता आनुपूर्व्या अनुक्रमेण तनिमानं तनुत्वं मुखादन्यत्र शरीरे उत्तरोत्तरं तनुत्वं दधतः, अन्यत्र प्रतिमुखादिसन्धिषु गोपुच्छवत्संक्षिप्तत्वं दधानाः अक्षिश्रवसः सर्पाः, भरतज्ञो नाटकशास्त्रज्ञः । भरतो 'नाट्यशास्त्रेऽपि' इति विश्वः । तेन कविना प्रणीतं प्रकल्पितं यत्काव्यं कविकर्म, लक्षणया काव्यार्थः कथावस्तु । ब्राह्मणादित्वात् ष्यञ् प्रत्ययः । तेन ग्रथिता गुम्फिता अङ्काः परिच्छेदरूपा अवान्तरसन्दर्भविशेषा येषु ते तथोक्ता नाटकप्रपञ्चा नाटकविस्तारा इव बभुरित्युपमा । 'प्रबन्धा' इति क्वचित्पाठः ।

'प्रत्यक्षनेतृचारितो बिन्दुबीजपुरस्कृतः ।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः'॥

इति अङ्कलक्षणम् । 'मुखं प्रतिमुखं गर्भोऽवमर्श उपसंहृतिः । इति सन्धयः ॥ ४४ ॥

**सविषश्वसनोद्धतोरुधूमव्यवधिम्लानमरीचि पन्नगानाम् ॥**
**उपरागवतेव तिग्मभासा वपुरौदुम्बरमण्डलाऽऽभमूहे ॥ ४५ ॥**

सविषेति ॥ तिग्मभासा तीक्ष्णांशुना सूर्येण उपरागवतेव राहुग्रहगृहीतेनेव विधुन्तुदग्रस्तेनेव वपुः बिम्बम् औदुम्बरमण्डलाऽऽभम् ऊहे ताम्रचक्राभं धृतम् । किंभूतं वपुः पन्नगानां गूढपादानां नागानां सविषश्वसनोद्धतोरुधूमव्यवधिम्लानमरीचि सविषेण गरलवता श्वसनेन फूत्कारवातेन उद्धतस्तीव्र उरुर्महान् यो धूमः तेन यो व्यवधिः अन्तरं व्यवधानं तेन म्लाना निस्तेजस्का मरीचयः किरणा यस्य तत्तथोक्तम् । उपरागेऽप्येवंविधमेव भवति ॥ ४५ ॥

सविषेति ॥ तिग्मभासा सूर्येण उपरागवता राहुग्रासवतेव । राहुग्रस्तेनेवेत्यर्थः । 'उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च' इत्यमरवचनं ग्रासस्याप्युपलक्षणम् । पन्नगानां सविषैः श्वसनैः फूत्कारैरुद्धूतेनोरुधूमेन यो व्यवधिस्तिरोधानं तेन म्लाना निष्प्रभा मरीचयो यस्य तत् । अत एवौदुम्बरमण्डलाभं ताम्रपिण्डसच्छायम् ।

'अथ ताम्रकम् ।
शुल्बं म्लेच्छमुखद्व्यष्टवरिष्ठोदुम्बराणि च' ।

इत्यमरः । वपुरूहे ऊढम् । वहेः कर्मणि लिट्, यजादित्वात्सम्प्रसारणम् ॥ ४५ ॥

**शिखिपिच्छकृतध्वजाऽवचूल(१)क्षणसाशङ्कविवर्तमानभोगाः ॥**
**यमपाशवदाशुबन्धनाय न्यपतन् वृष्णिबलेषु(२) लेलिहानाः ॥ ४६ ॥**

शिखिपिच्छेति ॥ लेलिहानाः सर्पाः यमपाशवत् कालपाशा इव वृष्णिबलेषु यादवसैन्येषु बन्धनाय बन्धनार्थं क्षिप्ताः न्यपतन् निपेतुः, योधान् बद्धुं प्राविशन् । किंभूताः लेलिहानाः शिखिपिच्छकृतध्वजाऽवचूलक्षणसाशङ्कविवर्तमानभोगाः शिखिपिच्छैः मयूरपक्षैः कृता विहिता ये ध्वजाऽवचूलाः केतनावतंसाः तेभ्यः क्षणं किञ्चित्कालं साशङ्काः त्रस्ताः ते शिखिपिच्छकृतध्वजाऽवचूलक्षणसाशङ्काः, अत एव विवर्तमानोऽपराङ्मुखीभवन् भोगो देहो येषां ते तथा, ततः कर्मधारयः । शिखिनो हि सर्पान् भुञ्जत इति त्रस्तत्वे हेतुः । अत्यर्थं लिहन्तीति लेलिहानाः, यजनाललिहोविकटमानश्च(?) ॥ ४६ ॥

शिखिपिच्छेति ॥ पुनःपुनर्लेहनशीला लेलिहानाः सर्पाः । लिहेर्यङ्लुगन्ताच्ताच्छील्ये चानश्प्रत्यये

(१) ०वचूड । (२) गणेषु ।

'गुणोः यङ्लुकोः' इत्यभ्यासस्य गुणः। लिहेर्लिटः कानजिति वल्लभः। तदानीमभ्यासगुणाऽनुपपत्तिः भूतार्थाऽसङ्गतिश्च। शिखिपिच्छैर्मयूरबर्हैः कृतेभ्यो ध्वजानामवचूडेभ्यः प्रकीर्णेभ्यः क्षणं साशङ्काः जीवन्मयूर-भ्रान्त्या सभयाः अत एव विवर्तमानकायाः व्यावृत्तदेहाः सन्तः आशु वृष्णिगणेषु यादवसङ्घेषु बन्धनाय यमपाशैस्तुल्यं यमपाशवत् कालपाशवदित्युपमा। न्यपतन्। निपत्य बबन्धुरित्यर्थः॥ ४६॥

**पृथुवारिधिवीचिमण्डलाऽन्तर्विलसत्फेनवितानपाण्डुराणि॥**
**दधति स्म भुगङ्गमाऽङ्गमध्ये नवनिर्मोकरुचं (१)ध्वजांशुकानि॥ ४७॥**

**पृथुवारिधीति॥** ध्वजांशुकानि केतुपताकाः भुजङ्गमाऽङ्गमध्ये आशीविषदेहान्तरे नवनिर्मोकरुचं नूतनाऽहित्वक्कान्तिं दधति स्म बभ्रुः। सर्पैरेते हि निर्मोका उत्सृष्टा-इत्यज्ञायन्त इत्यर्थः। किंभूतानि ध्वजांशुकानि पृथुवारिधिवीचिमण्डलाऽन्तर्विलसत्फेन-वितानपाण्डुराणि पृथवश्च स्थूलाश्च ते वारिधिवीचयः समुद्रकल्लोलाश्च तेषां मण्डलं चक्र-वालं तस्याऽन्तर्मध्ये विलसन् स्फुरन् यः फेनः डिण्डीरः तस्य वितानानि पटलानि तद्वत् पाण्डुराणि धवलानि, स्थूलजलराशिकल्लोलवलयमध्यभ्राम्यड्डिण्डीरपटलधवलानीत्यर्थः। भुजङ्गमानां वीचय उपमानम्, अंशुकानां फेनः। 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः॥४७॥

पृथुवारिधीति॥ भुजङ्गमाऽङ्गमध्ये, पृथोर्वारिधिवीचिमण्डलस्यान्तर्मध्ये विलसन्तः फेना इव वितान-पाण्डुरद्युतीनि शुभ्रवर्णानीत्युपमा। ध्वजांशुकानि नवनिर्मोकरुचिं नवकञ्चुकशोभां दधाति स्म। 'समौ कञ्चु-कनिर्मोकौ' इत्यमरः। निर्मोकरुचिमित्यत्रान्यधर्मस्यान्यत्रासम्बन्धेन निर्मोकस्येवेति सादृश्याक्षेपादसम्भव-द्वस्तुसम्बन्धनिर्दशना फेनपाण्डुरोपमयाऽङ्गेन सङ्कीर्यते॥॥ ४७॥

**कृतमण्डलबन्धमुल्लसद्भिः शिरसि प्रत्युरसं विलम्बमानैः॥**
**व्यरुचज्जनता भुजङ्गभोगैर्दलितेन्दीवरमालभारिणीव॥ ४८॥**

**कृतेति॥** भुजङ्गभोगैर्दन्दशूकदेहैः जनता जनसमूहः, बहुमित्यर्थः, व्यरुचत् व्यद्योतिष्ट। किंभूतैर्भुजङ्गभोगैः शिरसि मूर्धनि उल्लसद्भिः शिलष्यद्भिः, कथं यथा भवति कृतमण्डल-बन्धं यथा भवति कृतः विहितः मण्डलबन्धो मण्डलिकाऽवस्थानं यत्र क्रियायां तद्यथा। वलयरूपेणेत्यर्थः। पुनः किंभूतैर्भुजङ्गभोगैः प्रत्युरसम् उरसि विलम्बमानैः स्रंसमानैः। प्रते-रुरसः सप्तमीस्थात्। किंभूता जनता, अतश्चोत्प्रेक्ष्यते-दलितेन्दीवरमालभारिणीव प्रफुल्ल-नीलोत्पलस्रग्धारिणी यथा। दलितामिन्दीवरमालां बिभर्तीति ताच्छील्ये णिनिः। 'इष्टके-षीकामालानां चिततूलभारिषु' इति ह्रस्वः॥४८॥

कृतेति॥ जनता जनसमूहः। 'ग्रामजन—' इत्यादिना सामूहिकस्तल्प्रत्ययः। शिरसि कृतो मण्डल-बन्धो वलयीभावो यस्मिन्कर्मणि तत्तथा उल्लसद्भिः प्रत्युरसम् उरसि उरसि। 'प्रतेरुरसः सप्तमीस्थात्' इति समासान्तोऽच्प्रत्ययः। विलम्बमानैर्विशेषेण लम्बमानैः भुजङ्गभोगैरहिकायैः दलितेन्दीवरमालभारिणी विकसितनीलोत्पलमालभारिणी वेत्युत्प्रेक्षा। व्यरुचद् व्यरोचिष्ट। 'द्युद्भ्यो लुङि' इति विकल्पात्परस्मैपदम्॥

**परिवेष्टिमूर्तयश्च मूलादुरगैराशिरसः सरत्नपुष्पैः॥**
**दधुरायतवल्लिवेष्टितानामुपमानं मनुजा महीरुहाणाम्॥ ४९॥**

**परिवेष्टितेति॥** मनुजाः पञ्चजनाः महीरुहाणामनोकहानाम् उपमानं दधुः साम्यमूहुः। किंभूताः मनुजाः यतः उरगैः पृदाकुभिः मूलात् बुध्नात् पादादारभ्य आशिरसः शिरो यावत् परिवेष्टितमूर्तयः अवबद्धदेहाः, किंभूतैरुरगैः सरत्नपुष्पैः सह रत्नैरेव पुष्पैः वर्तन्ते

(१) रुचिं।

ते तथा तैः सहमणिकुसुमैः, किंभूतानां महीरुहाणाम् आयतवल्लिवेष्टितानां दीर्घव्रततिवेल्लितानाम् ॥ ४९ ॥

परिवेष्टितेति ॥ किञ्चेति चार्थः । मूलात् । पादमारभ्येत्यर्थः । ल्यब्लोपे पञ्चमी । आशिरसः शिरोऽन्तम् । 'अभिविधावाङि'ति विकल्पादसमासः । रत्नैरेव पुष्पैः सह वर्तन्ते इति सरत्नपुष्पैः । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । उरगैः परि वेष्टितमूर्तयो वेष्टिताङ्गाः मनुजाः आयताभिर्वल्लीभिर्लताभि र्वेष्टितानां महीरुहाणामुपमानं सादृश्यं दधुरित्युपमा ॥ ४९ ॥

**बहुलाऽञ्जनपङ्कपट्टनीलद्युतयो देहमितस्ततः श्रयन्तः ॥**
**दधिरे फणिनस्तुरङ्गमेषु स्फुटपर्याण(१)निबद्धवर्ध्रलीलाम् ॥ ५० ॥**

बहुलेति ॥ फणिनः सर्पाः तुरङ्गमेषु वाजिषु स्फुटं नूनं पर्याणनिबद्धवर्ध्रलीलां दधिरे पल्ययनयोजितचर्मरज्जुविभ्रमम् आसनबद्धचर्मरज्ज्वनुकारं बिभराम्बभूवुः। किंभूताः फणिनः यतः बहुलाऽञ्जनपङ्कपट्टनीलद्युतयः प्रभूतकज्जलकर्दमकलापकृष्णच्छवयः, पुनः किंभूताः फणिनः इतस्ततः सर्वत्र देहं श्रयन्तः कायं वेष्टयन्तः । केचिच्च पट्टमंशुकमाहुः । तत्राऽञ्जने च विचार्यमेतत् ॥ ५० ॥

बहुलेति ॥ बहुलाऽञ्जनस्य सान्द्रकज्जलस्य पङ्कपट्टः पङ्कघनस्तद्वन्नीलद्युतयः श्याममासः देहं शरीरमितस्ततः पुच्छपार्श्वादिस्थानेषु श्रयन्तो भजतः फणिनस्तुरङ्गमेषु स्फुटान्युज्ज्वलानि यानि पल्याणेषु पल्ययनेषु निबद्धानि वर्ध्राणि वरत्राः । 'वर्ध्रे त्रपुवरत्रयोः' इति विश्वः । तेषां लीलां शोभां दधिरे दधुः । वर्ध्रलीलामित्यत्राऽसम्भवद्वस्तुसम्बन्धा निदर्शनोक्तलक्षणा ॥ ५० ॥

**प्रसृतं रभसादयोऽभिनीला प्रतिपादं परितोऽभिवेष्टयन्ती ॥**
**तनुरायतिशालिनी महाऽहेर्गजमन्दूरिव निश्चलं चकार ॥ ५१ ॥**

प्रसृतमिति ॥ महाहेस्तनुः महासर्पदेहः रभसात्प्रसृतं वेगाच्चलितं गजं मतङ्गजं निश्चलं चकार अक्रियं विदधे । बबन्धेत्यर्थः । किंभूता तनुः अयोऽभिनीला लोहवत्कृष्णा, अपरं किंभूता तनुः प्रतिपादं प्रतिचरणं, सर्वपादानित्यर्थः, परितः समन्तादभिवेष्टयन्ती आवृण्वती, पुनः किंभूता तनुः यतः आयतिशालिनी दैर्घ्यशोभिनी, अतिदीर्घेत्यर्थः । पुनः किंभूता तनुः, अतश्चोत्प्रेक्ष्यते–अन्दूरिव शृङ्खलातुल्या । अन्दूरप्यायसी नीला आयता च परितः पादेषु वेष्टिता च गजं निश्चलं करोति ॥ ५१ ॥

प्रसृतमिति ॥ अयसा अयोवत् अभिनीला, पादेषु प्रतिपादम् । विभक्त्यर्थेऽव्ययीभावः । अभिवेष्टयन्ती आयत्या आयतेन दीर्घेण शालते या सा आयतिशालिनी महाहेर्महोरगस्य तनुर्वपुः अन्दूः शृङ्खलेव । अन्दूस्तु शृङ्खलायां स्त्री' इति वैजयन्ती । रभसात्प्रसृतं प्रचरन्तं गजं निश्चलं चकार । उपमा ॥ ५१ ॥

**अथ सस्मितवीक्षितादवज्ञाललितैकौ(२)न्नमितभ्रु माधवेन ॥**
**निजकेतुशिरःश्रितः सुपर्णादुदपप्तन्नयुतानि पक्षिराजाम् ॥ ५२ ॥**

अथेति ॥ अथाऽनन्तरं सुपर्णात् गरुडात् पक्षिराजां गरुत्मताम् अयुतानि लक्षाणि उदपप्तन् उत्पेतुः निर्जग्मुः । किंभूतात् सुपर्णात् यतः माधवेन भगवता कृष्णेन सस्मितं वीक्षितात् सहासं विलोकितात् । 'अहो ! चैद्यो मां किल नागपाशैर्बद्धुं वाञ्छति' इति हासकारणम् । कथं वीक्षितात् अवज्ञाललितैकोन्नमितभ्रु यथा भवत्येवं अवज्ञया सावहेलं ललिता सविलासा एका केवला उन्नमिता उत्क्षिप्ता भ्रूः मुखरोमराजिर्यत्र तथथा

---

(१) पल्याण । (२) चालितैको० ।

भवत्येवम् । अक्षिसङ्कोचनेन प्रेरितादित्यर्थः । सुपर्णस्य कुतस्तत्रावसर इति चेत्तत्राह— पुनः किंभूतात् सुपर्णात् निजकेतुशिरःश्रितः निजकेतोः शिरः श्रयतीति निजकेतुशिरःश्रित् तस्मात् आत्मचिह्नध्वजस्तम्भशृङ्गसेविनः, यतः गरुडध्वजः किल भगवानिति । उदपप्त-न्निति लृदित्वादङ्, पतः पुम् । पक्षिराजामिति पूर्ववत् ॥ ५२ ॥

अथेति॥अथ नागपाशबन्धनाऽनन्तरं माधवेन कृष्णेनाऽवज्ञया अकिञ्चित्करत्वादनादरेण चलिता प्रेरिता एका उन्नमिता डाल्चिता च भ्रूर्यस्मिन्कर्मणि तत्तथा । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम् । सस्मितं चैद्यचापल्यदर्शनात्समन्दहासं वीक्षितात् निजकेतुशिरःश्रितः निजध्वजाग्रस्थितात् । श्रयतेः क्विप् । सुपर्णात्, पक्षिणां राजः राजानः तेषां पक्षिराजां पक्षिराजानां गुरुत्मताम् । 'राजा राट् पार्थिवः' इत्यमरः । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । अयुतानि अयुतसङ्ख्या उदपप्तन्नुत्पेतुः । 'पुषादि—' इति लुङि च्लेरङादेशः । 'पतः पुम्' इति पुमागमः । 'उदभूवन्' इति पाठे 'भुवो वुक्–' इति वुगागमः । माधवस्य सुपर्णवीक्षणावस्थोचितभ्रूविक्षेपादिचेष्टाविवरणात्स्वभावोक्तिः । तदुक्तं दण्डिना—

'नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती ।
स्वभावोक्तिश्च जातिश्च—'

इति,

'जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृशम्' ।

इति च ॥ ५२ ॥

**द्रुतहेमरुचः खगाः खगेन्द्रादलघूदीरितनादमुत्पतन्तः ॥**
**क्षणमैक्षिषतोच्चकैश्चमूभिर्ज्वलतः सप्तरुचेरिव स्फुलिङ्गाः ॥ ५३ ॥**

द्रुतेति ॥ खगाः सुपर्णाः चमूभिः सेनाभिः ऐक्षिषत दृष्टाः । किंभूताः खगाः द्रुतहेमरुचः गलितकनककान्तयः, पुनः किंभूताः खगाः खगेन्द्रात् पक्षिराजात् गरुडात् अलघूदीरितनादं गुरूत्पादितध्वानं यथा भवत्येवम् उत्पतन्त उद्गच्छन्तः, पुनः किंभूताः खगाः उच्चकैः उच्चाः, महान्त इत्यर्थः । पुनः किंभूताः, अत एवोत्प्रेक्ष्यन्ते–ज्वलतः देदीप्यमानात् सप्तरुचेः अयुग्मार्चिषः सप्तजिह्वस्य वह्नेः स्फुलिङ्गा इव कणा इव । अग्निकणा अप्येवंविधा भवन्ति । ऐक्षिषतेति ईक्षतेः कर्मणि लुङ्, च्लेः सिच्, झस्याऽदादेशः ॥ ५३ ॥

द्रुतेति ॥ द्रुतहेमरुचः प्रतप्तकाञ्चनभास इत्युपमा । अलघूच्चैरुदीरितनादमुच्चरितघोषं यथा तथा खगेन्द्राद्गरुत्मतः उत्पतन्तः उद्गच्छन्तः खगाः सुपर्णा ज्वलतः प्रज्वलतः सप्तरुचेः सप्तार्चिषोऽग्नेरुच्चकैरूर्ध्वं प्रसृताः स्फुलिङ्गा इव चमूभिः क्षणमैक्षिषत ईक्षिताः । ईक्षतेः कर्मणि लुङ् । अत्रोपमयोः सङ्करः ॥ ५३ ॥

**उपमानमलम्भि(१) लोलपक्षक्षणविक्षिप्तमहाऽम्बुवाहमत्स्यैः ॥**
**गगनाऽर्णवमन्तरा सुमेरोः कुलजानां गरुडैरिलाधराणाम् ॥ ५४ ॥**

उपमानमिति ॥ गगनार्णवमन्तरा गगनमेव आकाशमेव अपारत्वाद् व्याख्यास्यमानधर्मयोगाच्च अर्णवोऽब्धिः तम् अन्तरा मध्ये गरुडैः वैनतेयैः सुमेरोः कुलजानां हेमाद्रेः वंश्यानां इलाधराणां भूधराणाम् उपमानं सादृश्यम् अलम्भि प्रापि लब्धम् । किंभूतैः गरुडैः लोलपक्षक्षणविक्षिप्तमहाऽम्बुवाहमत्स्यैः लोलैः पक्षैः चटुलैः पतत्रैः क्षणं मुहूर्तमात्रं विक्षिप्ताः प्रेरिताः महाऽम्बुवाहाः महामेघा एव मत्स्याः पृथुरोमाणो यैस्ते तथा तैः। पर्वता हि पूर्वं पतनसमये महार्णवे महामत्स्यान् विचिक्षिपिरे । सुमेरुग्रहणं पक्षाणां सौवर्णत्वप्रतिपादनार्थम् । द्वित्वं यत्र न लक्ष्यते, तत्र अन्तराऽन्तरेणयुक्ते द्वितीया न भवतीति

(१) ०मलाभि ।

नास्ति निश्चयः, इति गगनार्णवात् द्वितीया भवत्येव । भट्टशङ्करस्तु गगनं चार्णवश्चेति द्वन्द्वमाह । तदसत्, उपमेयेनाऽर्णवस्य सम्बन्धाभावात् । न हि गरुडाः समुद्रमध्यस्थाः । पृथग्विभक्तिनिर्दिष्टयोरन्तराऽन्तरेण युक्तयोः द्वितीयेति स्मरणाच्चैवमपि स्यादेव ॥ ५४ ॥

उपमानमिति ॥ गगनमर्णव इव गगनाऽर्णवस्तमन्तरा । तस्य मध्ये इत्यर्थः । 'अन्तरान्तरेण युक्ते' इति द्वितीया । अत्रार्णवस्यैकत्वेऽपि तदेकदेशाऽपेक्षया भेदत्वेन मध्यमप्रतियोगित्वसम्भवान्न द्वितीयाऽनुपपत्तिः । लोलैः पक्षैः क्षणाद्विक्षिप्ता महाम्बुवाहा मत्स्या इव यैस्तैर्गरुडैर्गरुत्मद्भिः सुमेरोः कुलजानां हेमाद्रिवंश्यानाम् अन्येषामहिरण्मयतया गरुडसाम्यासम्भवादित्यर्थः । इलाधराणां भूधराणाम् । अर्णवान्तश्चराणामित्यर्थः । 'गौरिला कुम्भिनी क्षमा' इति कोषः । उपमानं सादृश्यमलाभि अलम्भि । लभेः । कर्मणि लुङि 'विभाषा चिण्णमुलोः' इति विकल्पान्नुमभावः । अत्र इलाधराणामुपमानामिति व्यस्तोपमाया अन्याभ्यां समासगताभ्यामङ्गाङ्गिभावेन सङ्करः ॥ ५४ ॥

**पततां परितः परिस्फुरद्भिः परिपिङ्गीकृतदिङ्मुखैर्मयूखैः ॥**
**सुतरामभवद् दुरीक्ष्यबिम्बस्तपनस्तत्किरणैरिवाऽऽत्मदर्शः ॥ ५५ ॥**

पततामिति ॥ तपनः सविता सुतरामतिशयेन दुरीक्ष्यबिम्बः अभवत् दुर्दृश्यमण्डलो बभूव । कैः पततां मयूखैः गरुडानां किरणैः, किंभूतैः मयूखैः परितः परिस्फुरद्भिः सर्वत्र प्रसरणशीलैः, पुनः किंभूतैर्मयूखैः परिपिङ्गीकृतदिङ्मुखैः पिशङ्गीकृतसर्वाऽऽशावदनैः, सौवर्णत्वात् स्वभावाच्च । क इव आत्मदर्श इव मुकर इव । यथा आत्मदर्शस्तेषां तस्य वा किरणैः पततां रवीणां किरणैः सुतरां दुर्दृश्यो भवति । तेऽपि पिञ्जरीकृतकाष्ठाः । आत्मा दृश्यतेऽस्मिन्निति आत्मदर्शः ॥ ५५ ॥

पततामिति ॥ परिस्फुरद्भिः स्वविषयसंक्रमात्समन्तादुल्लसद्भिः अत एव परिपिङ्गीकृतानि सौवर्णत्वात्पिशङ्गीकृतानि दिङ्मुखानि यैस्तैः पततां पक्षिणां मयूखैः, तपनः सूर्यस्तात्किरणैस्तपनाकिरणैः, संक्रान्तैरिति भावः । आत्मा स्वरूपं दृश्यतेऽत्र इत्यात्मदर्शो दर्पण इव सुतरां दुरीक्ष्यबिम्बोऽभवत् । स्वत एव दुर्दर्श इदानीमतिदुर्दर्शोऽभूदित्यर्थः । अत्र तपनस्य दुरीक्ष्यत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥५५॥

**दधुरम्बुधिमन्थनाऽद्रिमन्थभ्रमणाऽऽयस्तफणीन्द्रपित्तजानाम् ॥**
**रुचमुल्लसमानवैनतेयद्युतिभिन्नाः फणभारिणो मणीनाम् ॥ ५६ ॥**

दधुरिति ॥ फणभारिणः फणाधराः सर्पाः मणीनां रुचं दधुः रत्नानां दीप्तिमूहुः । किंभूताः फणभारिणः उल्लसमानवैनतेयद्युतिभिन्नाः उल्लसमानाभिः वैनतेयद्युतिभिर्भिन्नाः कर्बुरिताः स्फुरमाणसुपर्णकान्तिच्छुरिताः, किंभूतानां मणीनाम् अम्बुधिमन्थनाऽद्रिमन्थभ्रमणाऽऽयस्तफणीन्द्रपित्तजानाम् अम्बुधिर्मथ्यतेऽनेनेति अम्बुधिमन्थः अब्धिक्षोभको योऽद्रिमन्थः पर्वतवैशाखः मन्दराख्यः तस्य भ्रमेण परिवर्तनेन आयस्तः क्षुभितः यः फणीन्द्रः सर्पराजो वासुकिः तस्य पित्तं धातुविशेषः तस्माज्जायन्ते ते तथा तेषां समुद्राऽऽलोडनगिरिवैशाखपरिभ्रमणक्षुभितवासुकिमायुजातानाम् । 'मायुः पित्त'मित्यमरः । समुद्रे हि सुरासुरैर्मथ्यमाने वासुकिः क्षुभितः पित्तमुदवमत् । तत्पित्ताच्च बह्वयो मणीनां जातय उत्पन्ना इत्यागमः । तेषां च कातर्यात् मणीनामुपमानत्वम् । सर्पा हि नीलाः वैनतेयकान्तिच्छुरिताश्च कातराश्च । मथ्यतेऽनेनेति मन्थः क्षुब्धः ॥ ५६ ॥

दधुरिति ॥ उल्लसमानाभिर्दीप्यमानाभिर्वैनतेयानां द्युतिभिर्भिन्नाः संवलिताः फणभारिणः फणाभृतः अम्बुधिमन्थने समुद्रमन्थने अद्रेर्मन्दराद्रेरेव मन्थस्य मन्थनदण्डस्य भ्रमणेनाऽऽयस्तस्य फणीन्द्रस्य वासुकेः

पित्तात्पित्तधातोर्जातास्तज्जास्तेषाम् । 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डके' इत्यमरः । मथेर्मौवादिकस्येदित्त्वात्सर्वत्र नुमागमः । तेषां मणीनां मरकतानां रुचं दधुः । वैनतेयपीतिमसम्भेदात्कृष्णोरगा मरकतच्छायामार्च्छन्नित्यर्थः । अत्रान्यस्यान्यधर्माऽयोगेन रुचमिवेति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धान्निदर्शनालङ्कारः ॥

**अभितः क्षुभिताऽम्बुराशिधीरध्वनिराकृष्टसमूलपादपौघः ॥**
**जनयन्नभवद्युगान्तशङ्कामनिलो नागविपक्षपक्षजन्मा ॥ ५७ ॥**

**अभित इति ॥ नागविपक्षपक्षजन्मा गरुडपक्षसम्भवोऽनिलः नभस्वान् अभवत उत्तस्थौ । किंभूतोऽनिलः अभितः सर्वतः क्षुभिताऽम्बुराशिधीरध्वनिः क्षुभितः प्रचलितो योऽम्बुराशिरम्भोनिधिस्तस्येव धीरः गम्भीरः ध्वनिः फूत्कारो यस्य सः तथा उभयतटकम्पिताऽर्णवगम्भीराऽऽरवः, पुनः किंभूतोऽनिलः आकृष्टसमूलपादपौघः आकृष्टा आकर्षिताः समूलाः सबुध्नाः पादपौघाः तरुसमूहा येन सः तथा उन्मूलितसजटाऽनोकहपूगः, पुनः किंभूतोऽनिलः अत एव युगान्तशङ्कां जनयन् कल्पाऽवसानभ्रान्तिं कुर्वन् ॥ ५७ ॥**

**अभित इति** ॥ अभितः उभयतः क्षुभितो योऽम्बुराशिः उद्वेलाऽम्बुराशिस्तद्वद्धीरध्वनिर्गम्भीरध्वनिरित्युपमा । आकृष्टाः समूलाः पाटिताः पादपौघास्तरुसमूहा येन सः । अत्र पादपोन्मूलनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । युगान्तशङ्कां जनयन् कल्पक्षयोत्प्रेक्षां जनयन्नित्यपि सैवाऽतिशयोक्तिः । नागविपक्षपक्षजन्मा गरुडपक्षोद्भवोऽनिलोऽभवत् । उदभवदित्यर्थः ॥ ५७ ॥

**प्रचलत्पतगेन्द्रपत्रवातप्रसभोन्मूलितशैलदत्तमार्गः ॥**
**भयविह्वलमाशु दन्दशूकैर्विवशैराविविशे स्वमेव धाम ॥ ५८ ॥**

**प्रचलदिति** ॥ अथ दन्दशूकैः दृष्टविषैः सर्पैः भयविह्वलं त्रासाकुलं यथा भवत्येवं स्वयमेव धाम आत्मीयमेव स्थानं पातालमाविविशे प्रविष्टम्, यथागतमगामीत्यर्थः । किंभूतैः दन्दशूकैः प्रचलत्पतगेन्द्रपत्रवातप्रसभोन्मूलितशैलदत्तमार्गैः प्रचलतां भ्राम्यमाणानां पतगेन्द्राणां पक्षिराजानां गरुडाणां पत्रवातेन अङ्गरुहपृषदश्वेन प्रसभं बलात् उन्मूलिता उत्खाता ये शैला अहार्याः तैर्दत्तो मार्गोऽवतरणं पन्था येषां ते तथा तैः । उन्मूलिताऽद्रिविवरप्रविष्टैरित्यर्थः । अपरं किंभूतैर्दन्दशूकैः विवशैः किङ्कर्तव्यतामूढैः । गर्हितदंशनशीलाः दन्दशूकाः, 'लुपसदचरे'ति यङ्, 'जपजभे'ति नुक्, 'यजजपदशा'मित्यूकः ॥ ५८ ॥

**प्रचलदिति** ॥ प्रचलतां पतगेन्द्राणां ये पत्रवातास्तैः प्रसभम् उन्मूलितैराकृष्टरुत्पाटितैः शैलैर्दत्तो मार्गो रन्ध्रं येभ्यस्तैः विवशैः परवशैः । निश्चेष्टैरित्यर्थः । गर्हितं दशन्ति भृशमिति दन्दशूकैः सर्पैः । 'दन्दशूको बिलेशयः' इत्यमरः । 'लुपसदचर—' इत्यादिना दंशेर्भावगर्हायां यङ् । 'जपजभदहदशभञ्जपशां च' इत्यभ्यासस्य नुगागमः । 'यजजपदंशपद—' इति दंशेर्यङन्तादुकञ्प्रत्ययः । भयेन विह्वलं विक्षिप्तं विचित्रं यथा तथा स्वमेव धाम पातालमेव विविशे । तार्क्ष्यपत्रपवनोन्मूलितशैलरन्ध्रवर्त्म नैव पातालं प्रविष्टमित्यर्थः । विशेः कर्मणि लट् । दन्दशूकानां रन्ध्रप्रवेशासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ५८ ॥

**खचरैः क्षयमक्षयेऽहिसैन्ये सुकृतैर्दुष्कृतवत्तदोपनीते ॥**
**अयुगार्चिरिव ज्वलन् रुषाऽथो रिपुरौदर्चिषमाजुहाव मन्त्रम् ॥ ५९ ॥**

**खचरैरिति ॥ अथो अनन्तरं रिपुः चैद्यः औदर्चिषं मन्त्रम् आजुहाव आह्वत, आग्नेयीं विद्यां जजापेत्यर्थः । कथानायकस्य शत्रुः कवेरपि तथैवेति शत्रुरित्याह । तदा तस्मिन् काले अक्षये उग्रत्वात् क्षयरहिते अहिसैन्ये सर्पव्राते तदा खचरैः पक्षिभिः क्षयं नाशम् उपनीते प्रापिते नाशिते सति सुकृतैः पुण्यैः दुष्कृते पापे इव । यथा बह्वपि पापं पुण्यानि क्षपयन्तीति**

एकवचनं बहुवच ं च । किंभूतः रिपुः अयुगाऽर्चिरिवाऽग्निरिव रुषा क्रुधा ज्वलन्, अतिक्रुद्ध इत्यर्थः । आजुहावेति ह्वेञो लिट्, 'अभ्यस्तस्य चे'ति सम्प्रसारणम् ॥ ५९ ॥

खचरैरिति ॥ खे चरन्तीति खचरैर्वैनतेयैः । चरेष्टः । 'तत्पुरुषे कृति बहुलम्' इति लुग्विकल्पः । अक्षये अनन्ते अहिसैन्ये सर्पसङ्घे सुकृतैः हरिस्मरणादिपुण्यैर्दुष्कृतवद् ब्रह्महत्यादेनोवत् । 'तत्र तस्येव' इति तत्रार्थे वतिप्रत्ययः । क्षयमुपनीते नाशं गमिते सति, तदा तत्काले रुषा पौरुषवैफल्यरोषेण अयुगाऽर्चिः सप्तार्चिरिव ज्वलन् दीप्यमानः असौ रिपुश्चैद्यः । उदार्चिष इममौदर्चिषमाग्नेयं मन्त्रमाजुहाव आहूतवान् । जजापेत्यर्थः । ह्वयतेर्लिट् । 'अभ्यस्तस्य च' इति द्विर्वचनात्प्रागेव सम्प्रसारणम् । दुष्कृतवदिति ताद्धिगता श्रौती पूर्णोपमा ॥ ५९ ॥

**सहसा दधदुद्धताऽट्टहासश्रियमुत्त्रासितजन्तुना स्वनेन ॥**
**विततायतहेतिबाहुरुच्चैरथ वेताल इवोत्पपात वह्निः ॥ ६० ॥**

सहसेति ॥ अथाऽनन्तरं वह्निर्वैश्वानरः सहसा अशङ्कितम् उत्पपात उदयौ । किं कुर्वन् स्वनेन रावेण उद्धताऽट्टहासश्रियं दधत् प्रचण्डहासलक्ष्मीं धारयन् । चटचटाशब्दयुक्त इत्यर्थः । किंभूतेन स्वनेन उत्त्रासितजन्तुना भीषितप्राणिजातेन, पुनः किंभूतो वह्निः विततायतहेतिबाहुः विततः प्रसारिता आयता दीर्घा हेतयः ज्वालाः एव बाहवो भुजा यस्य सः तथा, तथा उच्चैः उन्नतः । क इवोदपतत् वेताल इव भूतविशेष इव । सोऽपि उद्धताऽट्टहासश्रियं धत्ते दीर्घान् भुजांश्च प्रसारयति जन्तुन् स्वनेन भीषयते उच्चश्च भवति ॥ ६० ॥

सहसेति ॥ अथाऽऽग्नेयास्त्राऽऽह्वानानन्तरम् उत्त्रासितजन्तुना भीषितप्राणिकेन स्वनेन ध्वनिना उद्धताऽट्टहासश्रियं महाऽट्टहाससम्पदं दधत् तेनैवाऽट्टहासवान् तत्तुल्यनादवानित्यर्थः । विततः प्रसारिताः आयता दीर्घाः हेतयो ज्वाला बाहव इव हेतिबाहवो यस्य स वह्निर्वेतालो भूतविशेषः स इव सहसा झटिति उच्चैरूर्ध्वमुत्पपात उत्तस्थौ । उपमा ॥ ६० ॥

**चलितोद्धतधूमकेतनोऽसौ रभसादम्बरोहिरोहिदश्वः(१) ॥**
**द्रुतमारुतसारथिः शिखावान् कनकस्यन्दनसुन्दरश्चचाल ॥ ६१ ॥**

चलितेति ॥ अम्बररोही नभोव्यापी चासौ रोहिदश्वश्च अम्बररोहिरोहिदश्वः गगनस्पृगग्निः चचाल प्रससार । कथं रभसात् वेगेन ।

> हर्यश्वं हरिदश्वं रोहिदश्वं च पण्डिताः ।
> वदन्ति पृषदश्वं वा शक्रसूर्याऽनलाऽनिलम् ॥

किंभूतोऽसौ रोहिदश्वः चलितोद्धतधूमकेतनः चलितः प्रसृतः उद्धतः उत्कटः धूमः धूम्र एव केतनं ध्वजो यस्य सः तथा, पुनः किंभूतोऽसौ द्रुतमारुतसारथिः शीघ्रसमीरणसहायः, वातवशात् किल वह्निर्दीप्यते । पुनः किंभूतोऽसौ शिखावान् सज्वालः, पुनः किंभूतोऽसौ कनकस्यन्दनसुन्दरः कनकस्यन्दनवत् सुवर्णरथवत् सुन्दरो रम्यः । स्यन्दनोऽपि रभसात् चलन् एवंविधो भवति—चलितोद्धतकेतनः अश्वारोही द्रुतसारथिः शिखावान् सपताकश्च ॥ ६१ ॥

चलितेति ॥ चलितश्चलंश्च उद्धत उन्नतश्च धूम एव केतनं केतुर्यस्य स रभसाद्वेगादम्बररोहिणो रोहिता वाहनमृगा अश्वा इव यस्य सः, द्रुतमारुताः शीघ्रवाता एव सारथिर्यस्य सः कनकस्यन्दनसुन्दरः कनकद्रववद्रम्य इत्युपमा । असौ, शिखा ज्वाला अस्य सन्तीति शिखावानाशुशुक्षणिश्चचाल ॥ ६१ ॥

---

(१) रोहिताश्वः ।

ज्वलदम्बरकोटराऽन्तरालं बहुलाऽऽर्द्राऽम्बुदपत्रबद्धधूमम् ॥
परिदीपितदीर्घकाष्ठमुच्चैर्वनव(१)द्विश्वमुवोष जातवेदाः ॥ ६२ ॥

ज्वलदिति ॥ जातवेदाश्चित्रभानुः विश्वम् उवोष जगत् ददाह । किंवत् वनवत् अरण्यमिव इत्यक्लेशकथनम् । किंभूतं विश्वं ज्वलदम्बरकोटरान्तरालं ज्वलत् देदीप्यमानम् अम्बरमेव आकाशमेव कोटरान्तरालं रन्ध्रमध्यं यस्य तत्तथा, पुनः किंभूतं विश्वं बहुलार्द्राम्बुदपत्रबद्धधूमं बहुलेषु बहुषु आर्द्राम्बुदेषु सजलमेघेषु एव पत्रेषु पात्रेषु बद्धो धूमो यस्य तत्तथा, पुनः किंभूतं विश्वं परिदीपितदीर्घकाष्ठम् परिदीपिताः दीप्ताः कृताः दीर्घाः प्रलम्बाः काष्ठा दिशो यत्र तत्तथा । दग्धं वनमप्येवंविधं भवति-ज्वलत्कोटरान्तरालं । बहुलपर्णबद्धधूमं दीप्तदिशं च भवति ॥ ६२ ॥

ज्वलदिति ॥ जातं वेदो धनं यस्माज्जातवेदास्तनूनपात् , अम्बरं कोटरमिव तस्यान्तरालमभ्यन्तरं ज्वलद् यस्य तत् । बहुलाः सान्द्रा आर्द्राऽम्बुदाः पत्राणीव तेषु बद्धधूमम् , परिदीपिताः प्रज्वलिताः काष्ठा दिशः काष्ठानीव यस्य तदुच्चैरुन्नतं विश्वं जगत् तरुणा तुल्यं तरुवत् । तरुमिवेत्यर्थः । तुल्यार्थे वतिप्रत्ययः । उवोष ददाह । उष दाहे लिट्, लघूपधगुणे पश्चाद् द्विर्भावः । 'अभ्यासस्याऽसवर्णे' इत्युवङादेशः। अनादिष्टादच इति गुणस्य स्थानिवत्त्वाभावात् । तरुवदिति स्पष्टोपमालिङ्गात् सर्वत्रोपमितसमासः ॥ ६२ ॥

गुरुतापविशुष्यदम्बुशुभ्राः क्षणमालग्नकृशानुताम्रभासः ॥
स्वमसारतया मषीभवन्तः पुनराकारमवापुरम्बुवाहाः ॥ ६३ ॥

गुरुतापेति॥ अम्बुवाहाः मेघाः पुनर्भूयोऽपि स्वम् आकारं निजं रूपमवापुः लेभिरे, कृष्णत्वासादनात् । किंभूताः अम्बुवाहाः गुरुतापविशुष्यदम्बुशुभ्राः गुरुणा महता तापेन परितप्त्या शुष्यत् विशुष्यत् क्षिप्यमाणम् अम्बु पानीयं येषां ते गुरुतापविशुष्यदम्बवः ते च ते शुभ्राः धवलाश्चेति कर्मधारयः । पुनः किंभूताः मेघाः क्षणं मुहूर्तम् आलग्नकृशानुताम्रभासः मनागालग्नेन वह्निना लोहितकान्तयः, पुनः किंभूताः मेघाः असारतया रिक्तत्वेन मषीभवन्तः कज्जलं सम्पद्यमानाः । अतश्च काष्र्ण्यासादनात् स्वाकारप्राप्तिः । अभ्राणि हि प्रकृत्या कृष्णानि ॥ ६३ ॥

गुरुतापेति ॥ गुरुतापेनाऽतिदाहेन विशुष्यदम्बवः क्षीयमाणोदकाः अत एव शुभ्राश्चेति विशेषणसमासः। ततः क्षणमालग्नेन कृशानुना ताम्रभासो रोहितवर्णाः, अथाऽसारतया जलशोषान्निःसारतया मषीभवन्तः अम्बुवाहाः पुनः स्वमाकारं नीलरूपमवापुः । अत्र मेघानां मषीभावायसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६३ ॥

ज्वलिताऽनललोलपल्लवाऽन्ताः स्फुरदष्टापदपत्रपीतभासः ॥
क्षणमात्रभुवा(२)मभावकाले सुतरामापुरिवाऽऽयतिं पताकाः ॥ ६४ ॥

ज्वलितेति ॥ पताकाः वैजयन्त्यः अभावकाले दाहसमये क्षणमात्रभुवां विद्युतामिव आयतिं दैर्घ्यं सुतरामतिशयेनाऽऽपुः लेभिरे, तडिन्निभा अलक्ष्यन्तेत्यर्थः । क्षणमात्रं भवन्ति तिष्ठन्ति दीप्यन्ते वा ताः क्षणमात्रभुवः अचिरांशवस्तासाम् । किंभूताः पताकाः यतः ज्वलिताऽनललोलपल्लवान्ताः ज्वलितेन दीपितेन अनलेन वह्निना लोलाः कम्प्राः पल्लवान्ताः वस्त्रप्रान्ता यासां तास्तथा, पुनः किंभूताः पताकाः स्फुरदष्टापदपत्रपीतभासः स्फुरद्भिः लसद्भिः अष्टापदपत्रैः सौवर्णपटैः तुल्याः पीतभासः पिङ्गकान्तयः यासां ताः, अभावापत्तेश्च

(१) ०द्रुस्तरुव० । (२) भवा० ।

क्षणमात्रस्थायिन्योऽपि विद्युतो लसत्कार्तस्वरनिभपीतभासः स्युः। अष्टापदशब्दे तु 'अष्टनः संज्ञाया'मिति दीर्घः ॥ ६४ ॥

ज्वलितेति ॥ ज्वलितेन प्रज्वलता अनलेन अनलतापेन लोलाः पल्लवाऽन्ता अञ्चलाग्राणि यासां ताः, स्फुरद्भिर्दीप्यमानैरष्टापदपत्रैः कनकरचनाभिः पीतभासः पिङ्गलवर्णाः पताका वैजयन्त्यः अभावकाले विनाशकाले क्षणमात्रभवा क्षणमात्रभाविनीम् । क्षणमात्रस्थायिनीमित्यर्थः । आपतिं दैर्घ्यं सुतरामापुरित्यर्थः । प्रदीपवदिति भावः । अष्टसु लोहेषु पदमस्येत्यष्टापदम् । 'अष्टनः संज्ञायाम्' इति दीर्घः । 'रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्' इत्यमरः ॥ ६४ ॥

**निखिलामिति कुर्वतश्चिराय द्रुतचामीकरशारितामिव(१) द्याम् ॥**
**प्रतिघातसमर्थमस्त्रमग्नेरथ मेघङ्करमस्मरन्मुरारिः ॥ ६५ ॥**

निखिलामिति ॥ अथाऽनन्तरं मुरारिः श्रीहरिः मेघङ्करम् अभ्रोत्पादकं वारुणम् अस्त्रम् अस्मरत् सस्मार जजाप। किंभूतमस्त्रम् अग्नेः आश्रयाशस्य प्रतिघातसमर्थं विनाशक्षमं, किंभूतस्याऽग्नेः इति अमुना प्रकारेण निखिलां द्यां समग्रां दिवं द्रुतचामीकरशारितामिव कुर्वतः द्रुतेन गलितेन चामीकरेण महारजतेन शारितामिव छुरितामिव चिराय चिरं विदधतः । मेघान् करोतीति मेघङ्करम्, 'मेघर्तिभयेषु कृञः' इति खच् ॥ ६५ ॥

निखिलामिति ॥ अथाऽनन्तरं मुरारिः इतीत्थं निखिलां द्यामाकाशं द्रुतचामीकरचारुतां प्रतप्तहेमकर्बुरामिवेत्युत्प्रेक्षा, चारुतामित्यत्र। चिराय कुर्वतोऽग्नेः प्रतिघातसमर्थं प्रशमनक्षमं, मेघान् करोतीति मेघङ्करं मेघजननम् । 'मेघर्तिभयेषु कृञः' इति खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । अस्त्रं वारुणास्त्रमस्मरत् दध्यौ आजहार ॥ ६५ ॥

**चतुरम्बुधिगर्भधीरकुक्षेर्वपुषः सन्धिषु लीनसर्वसिन्धोः ॥**
**उदगुः सलिलात्मनस्त्रिधाम्नो जलवाहाऽऽवलयः शिरोरुहेभ्यः ॥ ६६ ॥**

चतुरम्बुधीति ॥ त्रिधाम्नः त्रिलोकवासिनः श्रीकृष्णस्य शिरोरुहेभ्यः केशेभ्यः जलवाहाऽऽवलयः वारिधरमालाः उदगुः निरीयुः आविरभवन् । किंभूतस्य त्रिधाम्नः चतुरम्बुधिगर्भधीरकुक्षेः चत्वारोऽम्बुधयः समुद्रा गर्भे अभ्यन्तरे यस्य सः चतुरम्बुधिगर्भः तादृशः तथा धीरः गम्भीरः कुक्षिरुदरं यस्य सः चतुरम्बुधिगर्भधीरकुक्षिः तस्य, पुनः किंभूतस्य त्रिधाम्नः वपुषः शरीरस्य सन्धिषु मर्मस्थानेषु लीनसर्वसिन्धोः संलग्ननिखिलनदीकस्य, पुनः किंभूतस्य यतः सलिलात्मनः जलरूपस्य । यदुक्तम्—

> यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु ।
> कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥

इति । त्रिधामेति भगवतोऽनुसंज्ञा, त्रीणि स्वर्गमृत्युपाताललक्षणानि धामानि आस्पदानि यस्येति कृत्वा । क्वचित्तु 'सलिलात्मकत्रिधामे'ति पाठः । तदा सलिलात्मकानि जलरूपाणि त्रीणि धामानि कुक्षिस्थानानि यस्येति विग्रहः । उदगुरिति इणो गा लुङि, 'गातिस्थे'ति सिचो लुक् ॥ ६६ ॥

चतुरम्बुधीति ॥ चत्वारोऽम्बुधय एव गर्भास्तैः धीरो गम्भीरः कुक्षिर्यस्य तस्य वपुषः सन्धिषु लीनाः सर्वाः सिन्धवो नद्यो यस्य तस्य सलिलात्मनस्तोयात्मकस्य, त्रीणि धामानि स्थानानि भूरादीनि सत्त्वादीनि वा यस्य तस्य त्रिधाम्नो हरेः शिरोरुहेभ्यो जलवाहाऽऽवलयः मेघपरम्परा उदगुरुद्बभूवुः । 'इणो गा लुङि' इति गादेशे 'गातिस्था- ' इत्यादिना सिचो लुक् ।

---

(१) 'चारुता' इत्येष पाठो मल्लिनाथव्याख्यायामुपलभ्यते। परमत्र नाऽर्थानुकूल्यं दृश्यते ।

'यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु।
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः' ॥

इत्यागमोक्तं प्रमाणमिति भावः॥ ६६ ॥

**ककुभः कृतनादमास्तृणन्तस्तिरयन्तः पटलानि भानुभासाम् ॥**
**उदनंसिषुरभ्रमभ्रसङ्घाः सपदि श्यामलिमानमानयन्तः ॥ ६७ ॥**

**ककुभ इति ॥** अभ्रसङ्घाः मेघसमूहाः अभ्रमाकाशम् उदनंसिषुः उत्पेतुः । किं कुर्वन्तः कृतनादं सध्वानं यथा भवत्येवं ककुभः दश दिशः आस्तृणन्तः ऊर्णुवानाः, पुनः किं कुर्वन्तः भानुभासां पटलानि तिरयन्तः तरणिकान्तीनां जालानि स्थगयन्तः, अपरं किं कुर्वन्तः श्यामलिमानं कार्ष्ण्यम् आनयन्तः प्रापयन्तः, प्रकृतत्वात्तस्यैव । तिरस्करोति तिरयतीति, 'तत्करोतो'ति णिच् । णाविष्ठवत्, 'प्रातिपदिकाद्धात्वर्थे' इतीष्ठवत्त्वात् तुरिष्ठेमेयस्सु, 'टे'-रिति टिलोपः । उदनंसिषुरिति णम प्रह्वत्वे शब्दे च उत्पूर्वः, लुङ् च्लेः सिच्, 'यमरमे'ति इडागमः, मस्याऽनुस्वारः, 'सिजभ्यस्तविदिभ्यश्चे'ति झेर्जुस् । अभ्राणि विद्यन्ते यत्रेत्यभ्रं नभः, अर्शआदिभ्योऽच् । श्याम एव श्यामलः, श्यामं वा गुणं लाति आदत्त इति श्यामलः तद्भावः श्यामलिमा, वर्णादित्वादिमनिच् ॥ ६७ ॥

ककुभ इति ॥ कृतनादं कृतगर्जारावं यथा तथा ककुभ आस्तृणन्त आच्छादयन्तः । स्तृणातेर्लटः शत्रादेशः, 'श्नाऽभ्यस्तयोः—'इत्यकारलोपः । भानुभासामर्कांशूनां पटलानि तिरयन्तस्तिरस्कुर्वन्तः । तिरःशब्दात् 'तत्करोति' इति ण्यन्ताल्लटः शत्रादेशः । णाविष्ठवद्भावाट्टिलोपः । अभ्रमाकाशं श्यामलिमानमानयन्तः श्यामलत्वं प्रापयन्तः अभ्रसङ्घा मेघौघाः सपदि सद्य उदनंसिषुरुत्पेतुः । उत्पूर्वान्नमतेर्लुङि 'यमरमनमातां सक्च' इति सगिडागमौ, 'नेटि' इति वृद्धिप्रतिषेधः । स्वभावोक्तिः ॥ ६७ ॥

**तपनीयनिकाषराजिगौरस्फुरदुत्तालतडिच्छटाऽच्छ(१)हासम् ॥**
**अनुबद्धसमुद्धताऽम्बुवाहध्वनिताडम्बरमम्बरं बभूव ॥ ६८ ॥**

**तपनीयेति॥** अम्बरम् आकाशम् एवं विधं बभूव । किंभूतमम्बरम् तपनीयनिकाषराजिगौरस्फुरदुत्तालतडिच्छटाऽच्छहासं तपनीयस्य सुवर्णस्य यो निकाषः निकषणम् अश्मनि उल्लेखः तस्य तत्र राजिर्लेखा तद्वत् गौरी पीता स्फुरन्ती द्योतमाना उत्ताला उन्नता उल्बणा वा तडिच्छटा विद्युद्विच्छित्तिः सैव अच्छोऽनुपहतो हासो हास्यं यस्य तत्तथोक्तम् । हासस्य त्वन्योन्यजिगीषया युद्धेन सुखोत्पादनं हेतुः । अपरं किंभूतमम्बरम् अनुबद्धसमुद्धताऽम्बुवाहध्वनिताऽऽडम्बरम् अनुबद्धं सन्ततं समुद्धतानां महतामुत्कटानां वा अम्बुवाहानां ध्वनितं गर्जितं तदेव आडम्बरं तूर्यं यत्र तत्तथोक्तम् । तस्य द्वयमेव कारणम् । 'आडम्बरं तूर्यरवे गजेन्द्राणां च गर्जिते' इत्यमरः ॥ ६८ ॥

तपनीयेति ॥ तपनीयस्य हेम्नो निकर्षराजयः कर्षणलेखा इव गौर्यः पीताः । गौरोऽरुणे सिते पीते' इत्यमरः। स्फुरन्त्य उत्ताला उद्धतास्तडिच्छटा विद्युल्लता एवाऽट्टहासा यस्य तत्तथोक्तम्, अनुबद्धोऽनुस्यूतः समुद्धतस्तारोऽम्बुवाहानां ध्वनिताडम्बरो गर्जिताडम्बरो यस्य तदम्बरं बभूव । तदाऽम्बुवाहैर्विद्युत्प्रभाभिर्गर्जिताडम्बरैश्चाऽट्टहासं कुर्वद्भिरिवाऽम्बरं बभावित्यर्थः । व्यञ्जकाऽप्रयोगाद्गम्योत्प्रेक्षा ॥ ६८ ॥

**सवितुः परिभावुकैर्मरीचीनचिराऽभ्यक्तमतङ्गजाऽङ्गभाभिः ॥**
**जलदैरभितः स्फुरद्भिरुच्चैर्विदधे केतनतेव धूमकेतोः ॥ ६९ ॥**

---

( १ ) निकर्षराजि''च्छटाऽट्ट ।

सवितुरिति ॥ अभितः पार्श्वद्वये स्फुरद्भिरुल्लसद्भिः तथा उच्चैरनम्रैः जलदैः अभ्रैः धूमकेतोर्वैश्वानरस्य केतनतेव विदधे धूमत्वमिव कृतम् । यो हि धूमकेतुः तस्य धूम एव केतनम् । नीचास्तैर्जनितस्य वह्नेर्मेघा धूमरूपा अभवन्नित्यर्थः । किंभूतैर्जलदैः सवितुः हरिदश्वस्य मरीचीन् अभीषून् परिभावुकैः अभिभाविभिः, अपरं किंभूतैर्जलदैः अचिराऽभ्यक्तमतङ्गजाऽङ्गभाभिः अचिरं तत्क्षणम् अभ्यक्तं दत्तस्नेहं यत् मतङ्गजाऽङ्गं पीलुप्रतीकं तस्येव भाः दीप्तिर्येषां ते अचिराऽभ्यक्तमतङ्गजाऽङ्गभासः तैः, अतिकृष्णैरित्यर्थः । धूमोऽप्येवंविधः । परिभावुकैरिति 'लषपते'त्युकञ्, तत्प्रत्यये च मरीचिशब्दात् 'न लोकाव्ययनिष्ठे'ति कर्मणि कृत्षष्ठीनिषेधः ॥ ६९ ॥

सवितुरिति ॥ सवितुर्मरीचीन्मयूखान् परिभावुकैस्तिरस्कुर्वद्भिः । 'लषपत—'इत्यादिना उकञ्प्रत्यये 'न लोका—' इत्यादिना षष्ठीप्रतिषेधः । अचिराभ्यक्तस्य सद्यःकृताभ्यङ्गस्य मतङ्गजाऽङ्गस्य नागदेहस्येव भासो येषां तैस्तथोक्तैः । 'भोभगो—' इत्यादिना रेफयकारस्य 'हलि सर्वेषाम्' इति लोपः । अभितः स्फुरद्भिर्जृम्भमाणैरुच्चैरुन्नतैर्जलदैर्धूमकेतोरग्नेः केतनता केतुत्वं विदधे इव विहितेव । धूमकेतोः केतुत्वं प्राप्तमित्यर्थः । उत्प्रेक्षालङ्कारः ॥ ६९ ॥

ज्वलतः शमनाय चित्रभानोः प्रलयाऽऽप्लावमिवाऽभिदर्शयन्तः ॥
ववृषुर्वृषनादिनो नदीनामतटा(१)ऽऽरोपितवारि वारिवाहाः ॥ ७० ॥

ज्वलत इति ॥ वारिवाहाः जलधराः ज्वलतः देदीप्यमानस्य चित्रभानोराशुशुक्षणेः शमनाय निवारणाय वारि ववृषुः तोयं मुमुचुः।कथं नदीनां तरङ्गिणीनाम् अतटेषु तटेभ्योऽप्युपरि आरोपितम् उत्प्लावितं वारि पानीयं यत्र तद्यथा । नद्योऽप्यत्र स्थलान्याचक्रमुरित्यर्थः। वारिवाहाः किं कुर्वन्तः अत एव प्रलयाऽऽप्लावमिव कल्पान्तोदकपूरमिव अभिदर्शयन्तः ज्ञापयन्तः । युगान्ते किल सर्वमुदकं व्याप्तमासीत् । किंभूता वारिवाहाः वृषनादिनः वृषा इव दान्ता इव नदन्ति गर्जन्ति ते वृषनादिनः, 'कर्तर्युपमाने' इति णिनिः॥

ज्वलत इति ॥ ज्वलतश्चित्रभानोरग्नेः प्रशमनाय प्रलये कल्पान्ते य आप्लावो महापूरः तमभिदर्शयन्त इवेत्युत्प्रेक्षा । वृहवद् वृषभवन्नदन्ति गर्जन्तीति वृषनादिनः । 'कर्तर्युपमाने' इति णिनिः । अत एवोपमा । वारि वहन्तीति वारिवाहा मेघाः । कर्मण्यण् । नदीनां प्रतटेषु प्रतीरेषु आरोपितानि भावितानि वारीणि यस्मिन्कर्मणि तद्यथा ववृषुः । प्रलयकालमेघवद्वर्षन्नित्यर्थः ॥ ७० ॥

मधुरैरपि भूयसा स मेघ्यैः प्रथमं प्रत्युत वारिभिर्दिदीपे ॥
पवमानसखस्ततः क्रमेण प्रणयक्रोध इवाऽशमद्विवादैः ॥ ७१ ॥

मधुरैरिति ॥ पवमानसखः वातसखोऽग्निः मेघ्यैः अब्दसम्भवैः वारिभिः पानीयैः प्रथमं पूर्वं प्रत्युत वैपरीत्येन भूयसा अतिशयेन दिदीपे अज्वालीत् । किंभूतैर्वारिभिः प्रथमप्रवृत्तत्वाद्विरलैः, यदि वा माधुर्यगुणयुक्तैः । मेघ्यं हि जलं मधुरम् । अपि विस्मयपूर्वके विरोधे । मधुरं हि किल गुडादि न दीपकम्, अपि तु जाड्यकरम् । तीक्ष्णं हि दीपकम् इति वैद्याः । ततोऽनन्तरम् असावग्निः क्रमेण वेगवर्षवशात् अशमत् शशाम ननाश, क इव ननाश प्रणयक्रोध इव प्रीतिकोप इव, विवादैः कैः सान्त्ववचनैः मधुरैरपि अनुद्वेजकैरपि । यथा प्रणयक्रोधः प्रत्युत पूर्वं नितरां दीप्यते, ततः क्रमेण शाम्यति । एवंविधो ह्येष प्रणयस्वभावः । मेघेषु भवा मेघ्याः तैः, दिगा-

(१) नदीनां प्रतटा० ।

दिभ्यो यत्। पवते इति पवमानो वायुः, पूङ्यजोः शानन्। तस्य सखाऽग्निः सहचरत्वात्, 'राजाऽहःसखिभ्यष्टजि'ति टच्। ननु यत्राऽग्निस्तत्र वायुः, न तु यत्र वायुस्तत्राग्निः। अत्र वायोरग्निसहचरत्वं विवक्षितम्, अतो बहुव्रीहिरत्र वाक्यज इति कथं टजुत्पत्तिः। अत्राऽऽहोपाध्यायः प्रकाशवर्षः–षष्ठीसमासोऽप्यत्र बहुव्रीह्यर्थेऽन्तर्भवत्येव। यो हि यस्य सखा तस्याऽसावपि सखा भवत्येव। एवमत्रापि॥ यथाह भारविः—

'ओजसाऽपि खलु नूनमनूनं सत्सहायमुपयाति जयश्रीः।
यद्विभुः शशिमयूखसखः सन्नाददे विजयिचापमनङ्गः॥

इति॥ ७१॥

मधुरैरिति॥ इतीत्थं, पवत इति पवमानो वायुः। पूङ्यजोः शानन्। तस्य सखा पवमानसखः अग्निः। राजाऽहःसखिभ्यष्टच्। मैत्रीमात्रविवक्षायामयं निर्देशः। सहकारिणी मैत्रीति नियमात्सहकारित्वाऽविवक्षाया वैपरीत्याद्बहुव्रीहौ तु न समासान्तः। स्वामी तु 'रोहिताश्वो वायुसखः' इत्यसमासान्तपाठेन बहुव्रीहिमाह। अत्रापि तथा पाठे न कश्चिदुपद्रवः। सोऽग्निः मधुरैः प्रियैरपि विवादैर्विविधवाक्यैः प्रणयक्रोधः प्रणयप्रयुक्तकोप इव मधुरैः स्वादुभिः, अनुद्दीपकैरित्यर्थः। मेघ्यैर्मेघभवैः। दिगादिभ्यो यत्। वारिभिः प्रथमं वैपरीत्येनापि। 'प्रत्युतेति वैपरीत्ये' इति गणव्याख्याने। भूयसाऽत्यन्तं, भृशमित्यर्थः। दिदीपे प्रजज्वाल। ततः क्रमेणाऽशमच्छान्तोऽभूत्। शाम्यतेर्लुङि पुषादित्वाच्च्लेरङादेशः। जलाहतोऽग्निर्ज्वलितो नश्यति। प्रणयकोपोऽपि प्रियैः भृशायित्वा शाम्यतीति प्रसिद्धम्। उपमा॥ ७१॥

**परितः प्रसभेन नीयमानः शरवर्षैरवसायमाश्रयाऽऽशः॥**
**प्रबलेषु कृती चकार विद्युद्व्यपदेशेन घनेष्वनुप्रवेशम्॥ ७२॥**

परित इति॥ अभ्राणां सतडित्त्वेनाऽग्नेश्च शान्त्या कविरूहामास–शरवर्षैः तोयसेकैः प्रसभेन बलात् परितः अवसायमन्तं नीयमानः प्राप्यमाणः आश्रयाऽऽशः वह्निः प्रबलेषु महत्सु घनेषु विद्युद्व्यपदेशेन तडिद्व्याजेन अनुप्रवेशम् अन्तरवस्थानं चकार अकरोत्। किंभूतः वह्निः यतः कृती प्राज्ञः। एवं किलोक्तम्–'बलवताऽभिभूतस्य विदेशगमनं तदनुप्रवेशो वा घटते' इति। आश्रयं स्वाधारम् अश्नाति असौ आश्रयाऽऽशः कृष्णवर्त्मा॥ ७२॥

परित इति॥ परितः प्रसभेन बलात्कारेण शरवर्षैर्नीरसेकैः। 'शरं नीरे शरो बाणे' इति विश्वः। अवसायमवसादं नीयमानः कृती कुशलः, आश्रयमश्नातीत्याश्रयाशोऽग्निः। कर्मण्यण्। प्रबलेषु घनेषु मेघेषु विद्युद्व्यपदेशेन तडिच्छलेनाऽनुप्रवेशं चकार। अस्याग्निर्विद्युद्रूपेण मेघेष्वेव प्रविष्टः। बलवताऽभिभूतस्य विदेशगमनं तदनुप्रवेशो वेति नीतेरिति भावः। अत्र विशेषणसाम्यादग्नावप्रकृतदुर्बलत्वप्रतीतेः समासोक्तिः॥ ७२॥

**प्रयतः प्रशमं हुताशनस्य क्वचिदालक्ष्यत मुक्तमूलमर्चिः॥**
**बलभित्प्रहिताऽऽयुधाभिघातात् त्रुटितं पत्त्रिपतेरिवैकपत्त्रम्॥ ७३॥**

प्रयत इति॥ प्रशमं नाशं प्रयतः गच्छतः हुताशनस्य वह्नेः मुक्तमूलं त्यक्तसन्धिस्थानं क्वचिद्देशे अर्चिः अलक्ष्यत ज्वाला ददृशे। किंभूतमर्चिः, उत्प्रेक्ष्यते–पत्त्रिपतेः पक्षिराजस्य सुपर्णस्य एकपत्त्रमिव एकपक्ष इव। किंभूतमेकपत्त्रं बलभित्प्रहिताऽऽयुधाऽभिघातत्रुटितं बलभिदा शक्रेण प्रहितं विक्षिप्तं यत् आयुधं वज्रं तेन योऽभिघातः प्रहारः

तेन त्रुटितं छिन्नम् । वज्राभिघातात् किल गरुडेन भुवि माननार्थं वज्रस्य सफलीकरणार्थं च एकं पत्रमुत्सृष्टमासीदित्यागमः ॥ ७३ ॥

प्रयत इति ॥ प्रशमं नाशं प्रयतः गच्छतः, प्रैतीति प्रयन् तस्य प्रयतः । इणः शतरि यणादेशः । हुताशनस्याऽग्नेः सम्बन्धि मुक्तमूलं त्यक्ताश्रयमर्चिर्ज्वाला । 'ज्वालाभासोर्न पुंस्यर्चिः' इत्यमरः । बलभिदा शक्रेण प्रहितस्य प्रयुक्तस्याऽऽयुधस्य वज्रस्याभिघातात्प्रहारात् त्रुटितं छिन्नं पत्रिपतेः पक्षिराजस्य गरुत्मत एकं पत्रं पक्षमिव क्वचिदालक्ष्यत अदृश्यत इत्युपमा । पुरा मातृदास्यविमोकायाऽमृतमाहरता गरुडेनेन्द्रप्रयुक्तवज्रगौरवादेकं पत्रं त्यक्तमित्यागमः ॥ ७३ ॥

**व्यगमन् सहसा दिशां मुखेभ्यः शमयित्वा शिखिनं घनाघनौघाः ॥**
**उपकृत्य निसर्गतः परेषामुपरोधं न हि कुर्वते महान्तः ॥ ७४ ॥**

व्यगमन्निति ॥ घनाघनौघाः सजलजलधरसमूहाः दिशाम् आशानां मुखेभ्यः सहसा झटित्येव शिखिनं शमयित्वा वह्निं नाशयित्वा व्यगमन् यथागतं जग्मुः । घनाघनानाम् ओघाः घनाघनौघाः। 'वर्षुकाऽब्दो घनाघनः' । अत्राऽर्थान्तरन्यासः-ये हि महान्तः उत्तमाः, ते निसर्गतः स्वभावादेव उपकारं कृत्वा उपकृत्य परेषामन्येषाम् उपरोधं न कुर्वते तानावृत्य न हि तिष्ठन्ति । ये स्वभावोपकारिणः, ते उपकृत्याऽदर्शनं यान्ति । यदुक्तम्—

इयमुच्चधियामलौकिकी महतां कापि कठोरचित्तता ।
उपकृत्य निसर्गदूरतः परतः प्रत्युपकारशङ्कया ॥ •

मेघाश्च महान्तः। यदि च वर्षित्वा गच्छेयुः, न तेन दिशामुपरोधः स्थगनं भवेत् ॥

व्यगमन्निति ॥ घनाघनौघाः वर्षुकाऽब्दसमूहाः । 'शक्रघातुकमत्तेभवर्षुकाऽब्दा घनाघनाः' इत्यमरः। शिखिनमग्निं शमयित्वा सहसा दिशां मुखेभ्यो व्यगमन्नपसस्रुः । गमेर्लुङि 'पुषादि—' इति च्लेरङादेशः । तथा हि—महान्तो निसर्गतः स्वभावादेव परेषामुपकृत्य उपकारं कृत्वा उपरोधं न हि कुर्वते । महतां निष्फलावस्थानं परोपरोधायेति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७४ ॥

**कृतदाहमुदर्चिषः शिखाभिः परिषिक्तं मुहुरम्भसा नवेन ॥**
**विगताऽम्बुधरव्रणं प्रपेदे गगनं तापितपायिताऽसिलक्ष्मीम् ॥ ७५ ॥**

कृतदाहमिति ॥ गगनं नभः तापितपायिताऽसिलक्ष्मीं प्रपेदे पूर्वं तापितः अग्नितापं प्रापितः पश्चात् पायितः जलविशेषे क्षिप्तो योऽसिः निस्त्रिंशः तस्य लक्ष्मीः शोभा तां प्रापत् । किंभूतं गगनं यतः पूर्वम् उदर्चिषो वह्नेः शिखाभिर्ज्वालाभिः कृतदाहं दग्धम्, अपरं किंभूतं गगनं यतो नवेन नूतनेन अम्भसा नीरेण परिषिक्तं कृतसेकसुक्षितम्, अपरं किंभूतं गगनं विगताऽम्बुधरव्रणं विगतानि नष्टानि अम्बुधरा मेघा एव व्रणानि रसकर्कराणि यस्मात् तथा । खड्गेऽपि हि तापितपायिते व्रणानि नश्यन्ति । पातेर्णिच्, 'शाच्छासाह्वे'ति युकि पायितमिति रूपम् । अस्मिन् सर्गे औपच्छन्दसिकं वृत्तम् ॥ ७५ ॥

कृतदाहमिति॥उदर्चिषोऽग्नेः शिखाभिः ज्वालाभिः कृतदाहं विहिततपनं, ततो नवेनाऽम्भसा मुहुः परिषिक्तं विगता अम्बुधरा एव व्रणा दोषा यस्य तद्गगनं, सन्तापितस्तापं प्रापितः स चासौ पायितः पानं कारितः । पिबतेर्ण्यन्तात्कर्मणि क्तः । 'शाच्छासाह्वाव्यावेपां युक्' इति युगागमः । तस्य तापितपायितस्य तप्तसिक्तस्याऽसेः खड्गस्य लक्ष्मीं प्रपेदे प्राप । इति निदर्शनालङ्कारः अम्बुधरव्रणेति रूपकसङ्कीर्णः ॥ ७५ ॥

इति नरपतिरस्त्रं यद्यदाविश्चकार प्रकुपित इव रोगः क्षिप्रकारी विकारम् ॥
भिषगिव गुरुदोषच्छेदिनोपक्रमेणक्रमविदथ मुरारिः प्रत्यहंस्तत्तदाशु ॥ ७६ ॥

इतीति ॥ नरपतिः शिशुपालः क्षिप्रकारी चतुरः इतीत्थं यद्यत् स्वापनादिकम् अस्त्र-मायुधं प्रकुपितः क्रुद्धः सन् आविश्चकार प्रयुयुजे, अथाऽनन्तरं मुरारिः भगवान् श्रीकृष्णः आशु शीघ्रं तत्तदेव अस्त्रं प्रत्यहन् प्रतीपं जघान अनीनशत् । केन गुरुदोषच्छेदिना महा-विपद्विनाशकेन उपक्रमेण उपायेन, प्रत्यस्त्रैरित्यर्थः । यतः किंभूतो मुरारिः क्रमवित् परि-पाटीज्ञः । स हि इति जानीते, यदस्याऽस्त्रस्य इदं प्रत्यस्त्रमिति । यद्यदिति तत्तदिवेति वीप्सा अस्त्रपरम्पराख्या । क इव चैद्यः अस्त्रमाविश्चकार, क इव मुरारिः तत् प्रत्यहन्नि-त्याह–रोग इव विकारं भिषगिव क्षिप्रं द्राक् क्षणोति क्षिप्रकारी । कुपितो यथा रोगो व्याधिर्यं यं विकारम् आविष्करोति, दोषं तं तं यथा क्रमवशात् शास्त्राभिज्ञो भिषक् वैद्यो गुरुदोषच्छेदिना उपक्रमेण चिकित्साख्येन शीघ्रं प्रतिहन्ति आच्छिनत्ति । पूर्ववत् इव-शब्दयोर्द्विःप्रयोगः । प्रत्यहन्निति हन्तेर्लङ्, हल्ङ्यादिलोपः । मालिनी वृत्तम् ॥ ७६ ॥

इतीति ॥ इतीत्थं चिप्रं करोतीति क्षिप्रकारी शीघ्रप्रयोक्ता, अन्यत्र विकारकारी नरपतिश्चैद्यः प्रकुपितः प्रक्षुभितः सन् यद् यदस्त्रमाविश्चकार रोगो विकारमिव, अथ क्रमवित्परिपाटीवेदी मुरारिः भिषग्वैद्य इव गुरु-दोषच्छेदिना गुरुदोषप्रतिघातकेन दोषनिवर्तकेन चोपक्रमेणोपायेन । प्रत्यस्त्रप्रयोगेणेत्यर्थः । अन्यत्र महौ-षधप्रयोगेण तत्तदस्त्रम् आशु शीघ्रं, तद्विकारमिवेति भावः । प्रत्यहन् प्रतिजघान । हन्तेर्लङ् अदादित्वा-च्छपो लुक् 'हल्ङ्याप्' इति लोपः । उपमा ॥ ७६ ॥

शुद्धिं गतैरपि परामृजुभिर्विदित्वा बाणैरजय्यमविघट्टितमर्मभिस्तम् ॥
मर्माऽतिगैरनृजुभिर्नितरामशुद्धैर्वाक्सायकैरथ तुतोद तदा विपक्षः ॥ ७७ ॥

शुद्धिमिति ॥ विपक्षः शत्रुः शिशुपालः तं देवं बाणैः अजय्यं विदित्वा शरैरजेयं मत्वा अथाऽनन्तरं वाक्सायकैः वचनशल्यैः तुतोद अपीडयत् । अशक्तत्वादाचुक्रोशेत्यर्थः । किंभूतैर्बाणैः परामुत्कृष्टां शुद्धिं गतैः दोषाभावं प्राप्तैरपि, अपरं किंभूतैर्बाणैः ऋजुभिः सरलैः तथा अविघट्टितमर्मभिः न विघट्टितानि न क्षोभितानि मर्माणि अरूंषि येषां ते अविघट्टितमर्माणस्तैः अनरुन्तुदैः अपीडाकरैः, देवस्य दिव्यबलत्वात् । इतरैस्तु–मर्माण्यति-गच्छन्त्याक्रमन्तीति मर्मातिगैः अरुन्तुदैः, तथा अनृजुभिर्वक्रैः असतो दोषस्याऽऽरोपणात्, तथा अशुद्धैः कर्णकटुभिः अश्लीलत्वात् । अतस्तानतुतानादरे । न जेतुं शक्यः अजय्यः, 'क्षय्यजय्यौ शक्यार्थे' इति निपातः । वसन्ततिलका वृत्तम् ॥ ७७ ॥

शुद्धिमिति ॥ तदा तस्मिन्समये विपक्षोऽरिश्चैद्यः परामुत्कृष्टां शुद्धिं लोहशुद्धिं गतैर्ऋजुभिरप्यविघट्टित-मर्मभिरस्पष्टमर्मस्थानैः तं हरिमजय्यं जेतुमशक्यम् । 'क्षय्यजय्यौ शक्यार्थे' इति निपातः । विदित्वा, अथास्मिन्नवसरे मर्माणि अतिगच्छन्तीति मर्मातिगैर्मर्मभेदिभिरनृजुभिर्वक्रैः नितरामशुद्धैरपवित्रैः, वाच एव सायकास्तैः वाक्सायकैरिति रूपकम् । तुतोद व्यथयामास । चक्रप्रयोगस्याऽयमुपोद्घात इति भावः । अत्र वाक्सायकानां प्रसिद्धसाधनव्यतिरेकोक्तेर्व्यतिरेकरूपकयोः सङ्करः । वसन्ततिलका वृत्तम् ॥ ७७ ॥

राहुस्त्रीस्तनयोरकारि सहसा येनाऽश्लथालिङ्गन-
व्यापारैकविनोददुर्ललितयोः कार्कश्यलक्ष्मीर्वृथा ॥
तेनाऽऽक्रोशत एव तस्य मुरजित् तत्काललोलाऽनल-
ज्वालापल्लवितेन मूर्धविकलं चक्रेण चक्रे वपुः ॥ ७८ ॥

राहुस्त्रीति ॥ चैद्यस्य आक्रोशत एव निन्दत एव मुरजित् भगवान् श्रीकृष्णः तेन चक्रेण आयुधविशेषेण तस्य वपुः शरीरं सहसा झटित्येव मूर्धविकलं चक्रे शरोरहितं व्यधत्त । सुदर्शनेनाऽस्योत्तमाङ्गमच्छिनत् इत्यर्थः । तेन इत्यनेन चक्रयोधधर्मो विवक्षितः, तं वक्ति । तेन केनेत्यत आह–येन चक्रेण राहुस्त्रीस्तनयोः स्वर्भानुललनापयोधरयोः कार्कश्यलक्ष्मीः काठिन्यातिशयो वृथा अकारि निरर्थका विहिता । येन राहोः शिरः कृत्तमित्यर्थः। किंभूतयोः स्तनयोः अश्लथाऽऽलिङ्गनव्यापारैकविनोददुर्ललितयोः अश्लथो गाढो यः आलिङ्गनव्यापारः आश्लेषकर्म स एव एकः केवलो विनोदः केलिः तत्र दुर्ललितयोः हेवाकिनोः। आश्लेषवर्जं व्यापाराऽन्तरं ययोर्न विद्यते इत्यर्थः। अतश्च यदा राहुः शिरोऽवशेषः सम्पन्नस्तदा आलिङ्गनाऽभावात् कार्कश्यं तयोर्न केवलमेव । तथा तस्मिन् काले आक्रोशसमये लोलाः चटुलाः परिस्फुरन्त्यो या अनलज्वालाः वह्निहेतयः ताभिः पल्लवितेन निर्यात्स्वपत्रेण व्याप्तेन । अग्निज्वाला मुञ्चतेत्यर्थः। पर्यायप्रासो यमकालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥

राहुस्त्रीति ॥ येन चक्रेण सहसा झटिति अश्लथो दृढो य आलिङ्गनव्यापारः स एव एको मुख्यः । 'एके मुख्याऽन्यकेवलाः' इत्यमरः। विनोदस्तत्र दुर्लालितयोर्लोलुपयो राहुस्त्रीस्तनयो राहुरमणीकुचयोः कार्कश्यलक्ष्मीः काठिन्यशोभा वृथा व्यर्था अकारि कृता । शिरोमात्राऽवशेषितस्य राहोरालिङ्गनसुखासम्भवादिति भावः । मुराजित् हरिः तत्काले तस्मिन्समये लोलाभिश्चञ्चलाभिरनलज्वालाभिरग्निदीप्तिभिः पल्लवितेन सञ्जातपल्लवेन । तारकादित्वादितच् । तेन चक्रेण आक्रोशत एव शपमानस्यैव तस्य शिशुपालस्य वपुः मूर्धविकलं शिरोहीनं चक्रे चकार । शिरश्चिच्छेदेत्यर्थः । कर्तरि लिट् । राहोः शिरो वपुर्विकलमकारि, अस्य तु वपुः शिरोविकलं कृतमिति तात्पर्यम् । अत्र चक्रवर्णनेऽप्रस्तुताद्राहुस्त्रीकुचकार्कश्यवर्णनात् 'प्रस्तुतत्वेन सम्बन्धस्तत्पर्यायोक्तमुच्यते' इति पर्यायोक्तम् ॥ ७८ ॥

**श्रिया जुष्टं दिव्यैः सपटहरवैरन्वितं पुष्पवर्षै-**
**र्वपुष्टश्चैद्यस्य क्षणमृषिगणैः स्तूयमानं निरीय ॥**
**प्रकाशेनाऽऽकाशे दिनकरकरान् विक्षिपद्विस्मिताऽक्षै-**
**र्नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षाम्बभूवे ॥ ७९ ॥**

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये श्र्यङ्के शिशुपालवधो नाम विंशतितमः सर्गः ॥ १६ ॥

श्रियेति ॥ अथ शिरश्छेदाऽनन्तरं चैद्यस्य शिशुपालस्य वपुष्टः शरीरात् निरीय निर्गत्य औपेन्द्रम् उपेन्द्रस्य श्रीकृष्णस्येदं कार्ष्णं वपुः देहं विशत् विशमानं(?) धाम तेजो विस्मिताऽक्षैः विस्मयोत्फुल्लनयनैः नरेन्द्रैर्मूर्धाभिषिक्तैः वीक्षाम्बभूवे आलुलोके । तथा च भगवान् पाराशर्यः—

> तथा चेदिपतेर्देहात्तेजोऽग्र्यं ददृशुर्नृपाः ।
> उत्पतन्तं तदा राजन् ! गगनादिव भास्करम् ॥
> ततः कमलपत्राक्षं कृष्णं लोकनमस्कृतम् ।
> ववन्दे तत्तदा तेजो विवेश च नरोत्तमम् ॥
> तदद्भुतममन्यन्त दृष्ट्वा सर्वे महीक्षितः ।
> प्रविवेश महाबाहुं यत्तेजः पुरुषोत्तमम् ॥

इति । किंभूतम् औपेन्द्रं वपुः श्रिया जुष्टं लक्ष्म्या सेवितम्, अपरं किंभूतं वपुः दिव्यैः

आकाशपतितैः पुष्पवर्षैः कुसुमवृष्टिभिः सपटहरवैः दुन्दुभिध्वनियुक्तैः अन्वितमनुगतं, तथा ऋषिगणैः मुनिवृन्दैः स्तूयमानं स्तुतिभिः सेव्यमानं, तथा प्रकाशेन उद्द्योतेन देहभवेन आकाशे खे दिनकरकरान् अहर्पतिकिरणान् विक्षिपत् समीरयत् । यदुक्तम्—

दिवि सूर्यसहस्रस्य भवेद् युगपदुत्थिता ।
यदि भाः सदृशी सा स्यात् भासस्तस्य महात्मनः ॥

धामाऽप्येवंविधमेव भवति । स हि भगवदंशः । वपुषो वपुष्टः, पञ्चम्यास्तस् । 'ह्रस्वात्तादौ तद्धिते' इति षत्वं, ष्टुना ष्टुः । ईङो ल्यपि निरीयेति । वीक्षाम्बभूवे इति ईक्षेः कर्मणि लकारः, 'इजादेश्च गुरुमतोऽनृच्छ' इत्याम् प्रत्ययः, 'आम' इति लेर्लुक् । कृञ्चाऽनुप्रयुज्यते लिटि, 'भावकर्मणो'रिति तङ् । भुवो वुग्लुङ्लिटोः, द्वित्वं भू-ह्रस्वः । वामनमतेन इति निर्देशाद् 'भवतेर' इत्यत्वाभावः। स ह्येवमाह-भवतेरिति निर्देशः कर्तव्यः, इह न भवतीति । तन्मते नाऽत्राऽत्वं भवत्येव । वास्तवमध्यम(?) । श्लेषादिसङ्करोऽलङ्कारः। सुवृत्ता नाम वृत्तम्--सुवृत्तैः गौडं खं सदनुलघवः पञ्चस्वाङ्गपौ(१) । श्रीशब्दलक्ष्मत्वात काव्यस्य प्रतिसर्गसमाप्तौ श्रीशब्द इति भद्रम् ।

इति श्रीशिशुपालवधे महाकाव्ये आनन्ददेवायनिश्रीवल्लभदेवविरचितायां सन्देहविषौषध्यां सारटीकायां शिशुपालवधो नाम विंशतितमः सर्गः ।

---

श्रियेति ॥ अथ शिरश्छेदाऽनन्तरं श्रिया शोभया जुष्टं सेवितं दिव्यैर्दिवि भवैः सपटहरवैः सदुन्दुभिघोषैः पुष्पवर्षैरन्वितं क्षणम् ऋषिगणैः स्तूयमानं तथा चैद्यस्य वपुष्टः शरीरतः। पञ्चम्यास्तसिल् । निरीय निर्गत्य। 'इण् गतौ' इति धातोः समासेऽनञ्पूर्वे क्त्वो ल्यप् । प्रकाशेन आकाशे दिनकरकरान्करश्मीन् विक्षिपत् , उपेन्द्रस्येदमौपेन्द्रं वपुर्हरेर्विग्रहं विशत् प्रविशत् धाम शिशुपालतेजः विस्मितार्क्षैर्विकसितनयनैर्नरेन्द्रै राजन्यैः वीक्षाम्बभूवे ईक्षितम् । ईक्षतेः कर्मणि लिट् । 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम् । 'कृञ्चानुप्रयुज्यते लिटि' इति भुवोऽनुप्रयोगः, 'भावकर्मणोः' इत्यात्मनेपदम् । अत्र भगवान् व्यासः—

'ततश्चेदिपतेर्देहात्तेजोऽग्र्यं ददृशे नृपैः ।
उत्पपात यदा राजन् ! तदा तेजो विवेश च ॥
दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भा सदृशी सा स्यात् धाम्नस्तस्य महात्मनः' ॥

इति । एतेन भगवद्वपुषोऽपि तदासक्तवचनसा (?) तारक इत्यनुसन्धेयम् । यदाह नारदः—

कामाद्गोप्यो भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ।
सम्बन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं प्रभो' ॥

इति । सूर्यसहस्राऽभिभाविनः शिशुपालतेजसो हरिशरीरप्रवेशवृत्तान्तस्यालौकिकस्याऽद्भुतस्य प्रत्यक्षलक्ष्यमाणत्वाद्भाविकालङ्कारः । तदुक्तम्—'विनापराधेन कृतार्थक (?) पिना भाविकं तदुदाहृतम्' इति । मेघविस्फूर्जिता वृत्तम् । 'रसत्वैश्वैय्मौ न्सौ ररगुरुयुता मेघविस्फूर्जिता स्यात्' इति लक्षणात् ॥ ७९ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवधकाव्यव्याख्याने सर्वङ्कषाख्ये शिशुपालवधो नाम विंशतितमः सर्गः ॥ २० ॥

---

( १ ) प्रसिद्धेषु छन्दोग्रन्थेषु सुवृत्तानाम वृत्तं नोपलभ्यते । एतल्लक्षणमपि न पूर्णं, नापि शुद्धम् ।

# अथ कविवंशवर्णनम् ।

अधुना कविः श्रीमाघो निजवंशवर्णनं चिकीर्षुराह—(१)

**सर्वाधिकारी सुकृताऽधिकारः श्रीवर्मलाख्यस्य बभूव राज्ञः ॥**
**असक्तदृष्टिर्विरजाः सदैव देवोऽपरः सुप्रभदेवनामा ॥ १ ॥**

**सर्वाऽधिकारीति** ॥ श्रीवर्मलाख्यस्य राज्ञः श्रीवर्मलाभिधानस्य नृपतेः सर्वाऽधिकारी निखिलकर्मस्थानाधिकृतो महासेनाऽधिपतिः सुप्रभदेवनामा बभूव सुप्रभदेवाभिधानोऽभूत् । किंलक्षणः सुप्रभदेवनामा सुकृताधिकारः सुकृते पुण्ये कर्मण्यधिकारो व्यापारो यस्य सः तथा धर्मेऽवसक्तः। यश्च सुकृत एवाधिकृतः स कथं सर्वाधिकारी । तथा अपरो देवः द्वितीयो राजेव, तत्सादृश्यात् । राजा हि सर्वाधिकारी भवति । अथवा अपरो देवोदे वसदृशः । सुरा हि सुकृताऽधिकृताः असक्तदृष्टयोऽनिमिषाः विरजस्का निर्धूलयः । उपजातिवृत्तम् ॥ १ ॥

**काले मितं तथ्यमुदर्कपथ्यं तथागतस्येव जनः सचेताः ॥**
**विनाऽनुरोधात् स्वहितेच्छयैव महीपतिर्यस्य वचश्चकार ॥ २ ॥**

**काले इति** ॥ यस्य सुप्रभदेवस्य काले समये यद्वचनमुपदेशवाक्यं, तन्महीपतिर्वर्मलाख्यऽऽश्चकार अकरोत् । कः कस्येव वचश्चकारेत्याह—तथागतस्य बुद्धभट्टारकस्य वचो यथा सचेताः प्राज्ञो जनोऽन्वतिष्ठत । कथञ्चिन्मन्दादरश्चकार नेत्याह—कुतः अनुरोधाद्विना उपरोधभावम् ऋते । कथं चकारेत्याह—स्वहितेच्छयैव स्वस्यात्मनो हितेच्छयाऽनुकूलचिकीर्षया । यतोऽसौ सचेताः प्राज्ञः। किंलक्षणं वचः, हितहेतुत्वमाह—मितं स्वल्पाक्षरम् तथा तथ्यं सत्यम् , अपरं किंलक्षणं वचः उदर्कपथ्यमायत्यां हितम् । 'उदर्कः फलमुत्तरम्' इत्यमरः । तथागतस्य बुद्धभट्टारकस्य सचेताः प्राज्ञो जनो मितं तथ्यमुदर्कपथ्यं वचो यथा स्वहितेच्छयैव करोति, तत्राऽनुरोधात्कृत्वोभयतः किलेदमुक्तमिति ॥ २ ॥

**तस्याऽभवद्दत्तक इत्युदात्तः क्षमी मृदुर्धर्मपरस्तनूजः ॥**
**यं वीक्ष्य वैयासमजातशत्रोर्वचो गुणग्राहि जनैः प्रतीये ॥ ३ ॥**

**तस्येति** ॥ तस्य सुप्रभदेवस्य दत्तक इति दत्तकाख्यस्तनूजोऽभवत् पुत्रोऽभूत । किंलक्षणो दत्तकः उदात्तो विपुलचित्तः तथा क्षमी क्षमाशीलः, अपरं किंलक्षणो दत्तकः अत एव मृदुरकठोरः तथा धर्मपरः सुकृतैकसक्तः । यं दत्तकं जनैर्वीक्ष्य लोकैर्दृष्ट्वा, वैयासं व्यासस्येदं कृष्णद्वैपायनोक्तम् अजातशत्रोर्युधिष्ठिरस्य गुणग्राहि गुणग्राहकं वचः प्रतीये वचनं प्रतिपन्नमङ्गीकृतं भवति । सत्यं गुणिनः पुरुषाः। भगवता कृष्णद्वैपायनेन पार्थस्याऽधिकार्यस्य वचनं किञ्चिदुक्तम् । अत्र च दत्तकोऽयं निखिल्‌णभाजनं निदर्शनम् । अन्यथा कथमेवङ्गुणोऽयं स्यात् । क्षमीति शमादित्वाद्धिनुण् । व्यासस्येदं वैयासं वचो भारतम् । वृद्धायभवादित्वादन्यत्र नरस्यासुलभः(?) । गुणान् गृह्णातीति गुणग्राहि । आख्यानकी वृत्तम् ॥ ३ ॥

**सर्वेण सर्वाश्रय इत्यनिन्द्यमानन्दभाजा जनितं जनेन ॥**
**यश्च द्वितीयं स्वयमद्वितीयो मुख्यः सतां गौणमवाप नाम ॥ ४ ॥**

**सर्वेणेति** ॥ यश्च दत्तकः स्वयमात्मना सर्वाश्रय इत्येवंभूतं नाम संज्ञाऽन्तरमवाप लेभे । किंलक्षणं द्वितीयं नाम सर्वेणाऽखिलेन जनेन लोकेन आनन्दभाजा तुष्टेन सता जनितं कृतम् ,

---

(१) वंशवर्णनपरस्याऽस्य श्लोकपञ्चकस्य मल्लिनाथकृता व्याख्या नोपलभ्यत इति केवलं वल्लभदेवकृतैवाऽत्र सङ्गृह्यते ।

अपरं किंलक्षणं नाम गौणं गुणप्रवृत्तिनिमित्तभूतमागतमर्थानुगम् । सर्वेषामाश्रयत्वात् । यथा हि सर्वे तत्र द्विजदीनाऽनाथाऽतिथिमित्रबान्धवा विश्राम्यन्ति, तथाऽसौ सर्वाश्रयः । न तु तैलपायिकावन्नाममात्रेण । अत एवाऽनवद्यमनिन्द्यं प्रशस्यं श्लाघ्यम् । किंलक्षणो यः अद्वितीयः सर्वोत्कृष्टः, अविद्यमानोऽस्मादधिको गुणो यस्य(१) सोऽद्वितीयः इति कृत्वा । तथा सतां मुख्यः प्रधानोऽग्रणीः। सर्वं त्वेतद्विरुद्धमिवाऽवभासते। तथा हि–यस्य हि द्वितीयं नाम विद्यते कथमसावद्वितीयो भवेत् । यश्च मुख्यः स कथं गौणमप्रधानं स्यात्, यस्य च लोकैरपरं नाम जनितं स कथं तत्स्वयं लेभे । अविरोधस्तु मुख्यः स्यादेवेति। नामस्वरूपमात्राऽवस्थाप्यमानस्य सर्वाश्रयस्य प्रातिपदिकार्थमात्रे सति कर्मत्वाभावाद् द्वितीयाऽनुपपत्तिः। मुखमिव मुख्यः । शाखादिभ्यो यः। विरोधाऽलङ्कारः । इन्द्रवज्रा वृत्तम् ॥४॥

**श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्मलक्ष्मीपतेश्चरितकीर्तनमात्रचारु ॥**
**तस्याऽऽत्मजः सुकविकीर्तिदुराशयाऽदः काव्यं व्यधत्त शिशुपालवधाभिधानम्॥**

श्रीशब्देति ॥ तस्य दत्तकस्यात्मजोऽपत्यम् अदः शिशुपालवधाभिधानं शिशुपालवधनामकं काव्यं ग्रन्थरूपं व्यधत्त अरचयत् । शिशुपालवध इत्यभिधानं नाम यस्य तत्तथा । कया हेतुना सुकविकीर्तिदुराशया सुकवीनां श्रेष्ठविदुषां वररुचि-सुबन्धु-सोमनाथ-भवभूति-क्रीडाचन्द्र-कालिदास-बिह्लण-भारवि-बाण-मयूरादीनां या कीर्तिः ख्यातिर्यशस्तत्र या दुराशा दुरभिलाषस्तया । महाकविकीर्तिलिप्सयेत्यर्थः । दुष्टत्वं त्वाशायाः स्वल्पबुद्धित्वेन सुकविकीर्तेरप्राप्यत्वात् । तथा च **कालिदासः**—

> 'मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
> प्रांशुलभ्ये फले मोहादुद्बाहुरिव वामनः ॥

इति । किंलक्षणं काव्यम्, श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म श्रीरित्ययं शब्दो ध्वनिमङ्गलवाचकत्वात्, तेन रम्यं कृतं मनोहरं विहितं सर्गाणां समाप्तौ अर्थादध्यायानां समापने लक्ष्म चिह्नं यत्र तत्तथोक्तम्, अपरं किंलक्षणं काव्यम् लक्ष्मीपतेः श्रीनारायणस्य कीर्तनमात्रचारु कीर्तनमात्रेण वर्णनमात्रेण चारु मनोज्ञम्, न त्वलङ्कारादिनेत्यनौद्धत्यकथनम्। भङ्ग्या तु सर्वेऽत्र काव्यगुणाः सन्तीत्युक्तं भवति । श्रीरित्ययं शब्दः, मयूरव्यंसकादित्वात्समासः । यदि श्रीश्चासौ शब्दश्चेति कर्मधारयः केवलमेव। चरितकीर्तनमात्रमित्यस्वपदेन विग्रहः। सुप्सुपेति समासः। वसन्ततिलका वृत्तम् । उदात्तो मध्यमोऽलङ्कारः॥

इति कविवंशवर्णनम् ।

> सूनुरानन्ददेवस्य रणभून्योमतास्यवः(?) ।
> यधत्त टीकां काव्येऽस्मिन् वल्लभः सूरिवल्लभाम् ॥
> विवरणमन्यद् दृष्ट्वा बुधैस्ततो ज्ञास्यते विशेषोऽत्र ।
> प्रायेण येन भुक्तं तज्जानीयात् कुतोऽविशेषज्ञः(२) ॥

इति श्रीआनन्ददेवायनिवल्लभसूरिविरचिते माघकाव्ये वंशविवरणम् ।

**समाप्तमिदं माघकाव्यम् ।**

---

(१) "अविद्यमानो गुणादधिको गुणो यस्य(?)" इति 'निर्णयसागर'मुद्रितपुस्तके ।
(२) श्लोकद्वयमिदं मुद्रितपुस्तके नोपलभ्यते ।

॥ श्रीः ॥

# शिशुपालवधस्य. पद्यानामकाराद्यनुक्रमणिका ।

६४

## कविवंशवर्णनस्य पद्यानामकाराद्यनुक्रमणिका ।




सर्वविधपुस्तकप्राप्तिस्थानम्—

जयकृष्णदास हरिदास गुप्तः—

चौखम्भा संस्कृत सीरिज़ आफिस,

विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक, बनारस सिटी ।

## सन्देहविषौषध्यां प्रमाणितानां ग्रन्थानां ग्रन्थकाराणां च वर्णक्रमेण नामानि ।

अमरः
कामन्दकः
कालिदासः
कुमारसम्भवम्
किरातार्जुनीयम्
निघण्टुः
पद्मोपाख्यानम्
पाराशर्यः
प्रकाशवर्षः ( उपाध्यायः )
भट्टशङ्करः
भारविः
मनुः
महाभारतम्
रघुकाव्यम्
रुद्रटालङ्कारः
रुद्रटः
वररुचिः
वामनः
विश्वः
वैजयन्ती
व्यासः
शालिहोत्रम्
हलायुधः

## सर्वङ्कषायां प्रमाणत्वेनोल्लिखितानां ग्रन्थानां ग्रन्थकाराणां च वर्णक्रमेण नामानि ।

अगस्त्यः
अनेकार्थः
अभिधानचिन्तामणिः
अभिधानरत्नमाला
अमरः
अलङ्कारसर्वस्वकारः
आपस्तम्बः
उत्तरकाण्डम् (रामायणे)
उत्पलः
उत्पलमाला
कल्याणवर्मा
कामन्दकः
कामन्दकीयम्
कालिदासः
काव्यप्रकाशः
काव्यप्रकाशकारः
काशिका
किरातार्जुनीयटीका
केशवः
कैयटः
गणव्याख्यानम्
घण्टापथः
जैमिनिः
त्रिकाण्डः
त्रिकाण्डशेषः
दण्डी=आचार्यः
दशरूपकम्
दिवाकरः
नारदः
न्यासकारः
न्यासोद्द्योतः
पालकाप्य(व्य)म्
पिङ्गलनागः
भट्टः
भट्टमल्लः
भरतः
भविष्यपुराणम्
भागवतम्
भारविः
भाष्यम्
भाष्यकारः
भोजराजः
मनुः
महाभारतम्
मिताक्षरा
मिहिराचार्यः
मृगचर्मीयम्
मेदिनी
याज्ञवल्क्यः
यादवः
योगयात्रा
रङ्गराजः
रत्नप्रकाशः
रत्नाकरः
रससागरः
राजपुत्रीयम्
रामायणम्
रेवतोत्तरम्
वसन्तराजीयम्
वाग्भटः
वामनः
विश्वः
विश्वप्रकाशः
विष्णुपुराणम्
वृत्तरत्नाकरटीका
वैजयन्ती
व्यासः
शब्दार्णवः
शाश्वतः
सज्जनः
सञ्जीविनी
स्वामी
हयलीलावती
हरिः
हलायुधः
हेमचन्द्रः
हैमः

# काशीसंस्कृतसीरीज्-ग्रन्थमाला।

इयं काशी-संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति। एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति। अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते।

१ नलपाकः। नलविरचितः। संपूर्णः ( पाकशास्त्रम् १ ) रु० १—८

२ संक्षेपशारीरकम्। रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम्। ( वेदान्तं १ ) रु० ८—०

३ वैशेषिकदर्शनम्। पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यांसमन्वितम् ( वैशेषिकं १ ) रु० २—०

४ श्रीसूक्तम्। विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम्। ( वैदिकं १ ) रु० ०—६

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः-प्रथम भाग अव्ययीभावान्तः। ( व्याकरणं १ ) रु० ५—०

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः तत्पुरुषादि-समाप्तिपर्यन्तः। द्वितीय भाग। ( व्याकरणं १ ) रु० ८—०

६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुण निरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रि-कृतव्याख्यासहिता। ( न्यायं १ ) रु० ६—०

७ पञ्चीकरणम्। वार्तिकाभरणालङ्कृतवार्तिकटीकया-तत्त्वचन्द्रि-कासमवेतविवरणेन च समन्वितम्। ( वेदान्तं २ ) रु० ०—८

८ अलङ्कारप्रदीपः। श्रीविश्वेश्वरपाण्डेयनिर्मितः। ( काव्यं १ ) रु० ०—८

९ अनङ्गरङ्गः। महाकविकल्याणमल्लविरचितः। ( कामशास्त्रं १ ) रु० १—१२

१० जातकपारिजातः। श्रीवैद्यनाथशर्मणा विरचितः। ( ज्यो० १ ) रु० २—०

११ पारस्करगृह्यसूत्रम्। कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम्। ( कर्मकाण्डम् १ ) रु० ०—८

१२ पुरुषसूक्तम्। सायणभाष्य-महीधरभाष्य-मंगलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम्। ( वैदिकं २ ) रु० १—४

१३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम्। ( वेदान्तं ३ ) रु० १—४

१४ कुमारसंभवं महाकाव्यम्। महाकवि श्रीकालिदासवि०: सञ्जीवनी शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम्। ( काव्यं २ ) रु० १—८

१५ श्रुतबोधश्छन्दोग्रन्थः। आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः। ( छंदः १ ) रु० ०—

१६ कारिकावलि। मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा। ( न्याय २ ) रु० १—०